॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
२०५

महाकवि श्रीहर्षविरचितं

# नैषधमहाकाव्यम्

महामहोपाध्याय मल्लिनाथकृत 'जीवातु' व्याख्यायुत
'मणिप्रभा' नामक भाषाटीकासहितम् ।

भाषाटीकाकारः—
व्याकरण-साहित्याचार्य-साहित्यरत्न-रिसर्चस्कालर-मिश्रोपाह्व-
पण्डित श्री हरगोविन्द शास्त्री

प्राक्कथन लेखकः—
आचार्य श्री त्रिभुवन प्रसाद उपाध्याय एम० ए०
प्रिन्सिपल, गवर्नमेण्ट संस्कृत कालेज, बनारस



चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

# नैषधचरितम्

## द्वादशः सर्गः ।

प्रियाह्रियाऽऽलम्ब्य विलम्बमाविला विलासिनः कुण्डिनमण्डनायितम् ।
समाजमाजग्मुरथो रथोत्तमाः तमासमुद्रादपरे परे नृपाः ॥ १ ॥

अथास्मिन्नवसरे पुनरन्ये राजानः समायाता इत्याह—प्रियेति । अथो अनन्तरं 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। प्रियाभ्यः, स्वकान्ताभ्यः,या ह्रीः लज्जा, तासामकृत्रिमानुरागे कपटदाक्षिण्यप्रदर्शनमिति यावत्, तया विलम्बम् आलम्ब्य आविलाः कलुषाः,आलोडितहृदया इत्यर्थः, व्यग्राः इति यावत्, विलासिनो विलसनशीलाः,'वौ कषलसकत्थस्रम्भः' इति विणुन्-प्रत्ययः रथैरुत्तमाः रथोत्तमाः महारथाः; एतेन विलम्बे जातेऽपि शीघ्रगमनं सूचितम्; परे श्रेष्ठाः, अपरे अन्ये, नृपाः आसमुद्रात् समुद्रपर्यन्तात् 'अपादानात्' कुण्डिनस्य कुण्डिननामनगरस्य, मण्डनायितम् अलङ्कारभूतं, मण्डनशब्दादाचारक्यङन्तात् कर्त्तरि क्तः, तं समाजं राजसभाम्, आजग्मुः आपुः । अत्र विलाविलेत्यादौ माजमाजत्यादौ च नियमेन सकृत् व्यञ्जनयुग्मावृत्त्या छेकानुप्रासः, अन्यत्रानियमात् वृत्त्यनुप्रासः इत्युभयोः संसृष्टिः । 'सङ्ख्यानियमे पूर्वं छेकानुप्रासः, अन्यथा वृत्त्यनुप्रासः' इति लक्षणात् ॥ १ ॥

अनन्तर अपनी प्रियाओंके विषयमें लज्जासे विलम्ब होनेपर व्याकुल, विलासशील तथा उत्तम रथवाले दूसरे-दूसरे राजा कुण्डिनपुरी ( भीमकी राजधानी ) का भूषणभूत उस राजसमाज अर्थात् स्वयंवर मण्डपमें समुद्र तक ( बहुत दूर-दूर ) से आये । [ अपनी प्रियाओंमें अनुकूलता धारण करनेसे उन राजाओंको स्वयंवरमें पहुंचनेमें विलम्ब हो रहा था, फिर भी उत्तम रथवाले होनेसे ठीक समयपर ही वे स्वयंवर में पहुंच गये ] ॥ १ ॥

ततः स भैम्या ववृते वृते नृपैर्विनिःश्वसद्भिः सदसि स्वयंवरः ।
चिरागतैस्तर्किततद्विरागितैः स्फुरद्भिरानन्दमहार्णवैर्नवैः ॥ २ ॥

तत इति । ततो राजान्तरागमनानन्तरं; तर्किता तद्विरागिता भैमीवैराग्यं यैस्तैर्निश्चितभैम्यपरागैः, अत एव विनिःश्वसद्भिः विषादात् दीर्घं निःश्वसद्भिः, चिरागतैः पूर्वागतैः, नृपैः, तथा स्फुरद्भिः स्फूर्तिमापद्यमानैः, हर्षाधिक्यात् प्रसन्नमुखाकारैरित्यर्थः, आनन्दमहार्णवैः यतः पूर्वागता नृपा न वृताः, ततः समागतानस्मान् दमयन्ती नियतं वरिष्यतीति निश्चित्य परमानन्दभरितैः, नवैः तत्कालागतैः, नृपैर्वृते पूर्णे, सदसि सः प्रकृतः, स्वयंवरः ववृते प्रवृत्तः ॥ २ ॥

इस ( दूर-दूरसे उन राजाओंके स्वयंवरमें आने ) के बाद दमयन्तीके वैराग्यको ( अपने-अपने विषयमें ) निश्चितकर अधिक श्वास लेते हुए पहले आये हुए राजाओंसे ( अथवा—दमयन्ती द्वारा एकादश सर्गमें वर्णित अपना-अपना त्याग देखकर ) अधिक श्वास लेते हुए पहले आये हुए राजाओंसे और ( उन पूर्वागत राजाओंके अधिक श्वासको देखकर उनमें ) दमयन्तीके अनुराग न होनेका अनुमान किये हुए, ( अत एव स्मितादि चेष्टाओंसे ) प्रकाशमान, अगाध आनन्द समुद्रवाले ( दमयन्तीने अभीतक किसी राजाका वरण नहीं किया है, अब तो वह हमलोगों को ही वरण करेगी इस विचारसे ) अत्यन्त हर्षित नवीन राजाओंसे युक्त उस सभाके होनेपर दमयन्तीका स्वयंवर आरम्भ हुआ ॥ २ ॥

चलत्पदस्तत्पदयन्त्रणेङ्गितस्फुटाशयामासयति स्म राजके ।
श्रमं गता यानगतावपीयमित्युदीर्य धुर्यः कपटाज्जनीं जनः ॥ ३ ॥

चलदिति । चलत्पदः क्वचित् स्थितिकालेऽप्युत्तमाश्ववदेकत्रा नवस्थितचरणः, इति भारवाहिकस्वभावोक्तिः; धुरं वहतीति धुर्यो जनः शिविकावाहिजनः, 'धुरो यड्ढकौ' इति यत्-प्रत्ययः, तस्या भैम्याः, पदयन्त्रणेङ्गितेन पदेन शिविकापटान्तर्वर्त्तिचरणेन, यत् यन्त्रणं धुर्यजनस्य पीडनं, तदेव इङ्गितम् अवस्थापनार्थं हृद्गतभावः तेन, स्फुटः आशयः राजदर्शनार्थम् उपवेशनाभिप्रायो यस्यास्तां, जनीं वधूं दमयन्तीं 'जनी सीमन्तिनीवध्वोः' इति विश्वः, इयं बाला दमयन्ती, यानेन गतावपि गमने कृतेऽपि, श्रमं गता श्रान्ता, इति उदीर्य कपटात् श्रमव्याजात् , राजके राजसमूहमध्ये, आसयति स्म उपवेशयामास, णिजन्तादास्-धातोः स्मेन योगेऽतीते लट् ॥ ३ ॥

चलते हुए पैरवाले अर्थात् गमनशील ( अथवा—रुके रहनेपर भी पैर चलाते हुए ) भारवाहक लोगोंने 'सवारीसे चलनेमें भी यह ( दमयन्ती ) थक गयी है' ऐसा कपटपूर्वक कहकर उस ( दमयन्ती ) के पैरकी प्रेरणाकी चेष्टासे ( इस राजाको मैं देखना चाहता हूं, अतः सवारीको यहां रोको ) स्पष्ट आशयवाली उस दमयन्तीको राज-समूहमें स्थापित किया। [ एक स्थानमें खड़े रहनेपर भी पैरका चलाते रहना उत्तम भारवाहकोंका स्वभाव होता है। भारवाहकोंने दमयन्तीकी सवारीको राज-समूहके बीचमें रोका ] ॥ ३ ॥

नृपानुपक्रम्य विभूषितासनान् सनातनी सा सुषुवे सरस्वती ।
विगाहमारभ्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूत्थिताः ॥ ४ ॥

नृपानिति । सनातनी चिरन्तनी, सना-शब्दात् 'सायंचिरम्—' इत्यादिना ट्यु-प्रत्यये ङीप् , सा सरस्वती वाग्देवता, विभूषितासनान् अलङ्कृतसिंहासनान् , सिंहासनोपविष्टान् इत्यर्थः, नृपान् उपक्रम्य उद्दिश्य, सुधासरःसु अमृतसरसीसु, विगाहम् आरभ्य अवगाहं प्राप्य, अनु पश्चात् , अविलम्बेनेत्यर्थः, उत्थिताः तस्मान्निर्गताः, अत एव अतीवार्द्रतनूः अमृतार्द्रस्वाङ्गाः, सर्वाङ्गेष्वमृतवर्षिणीरित्यर्थः, सरस्वतीर्गिरः, सुषुवे उवाच । अत्र उत्प्रेक्षावाचकेवादिप्रयोगाभावात् , गम्योत्प्रेक्षा ॥

उस सनातनी सरस्वतीने आसनको अलङ्कृत किये ( बैठे ) हुए राजाको लक्षितकर, अमृतसरोवरोंमें अवगाहन को प्रारम्भकर बादमें अत्यन्त आर्द्र शरीर वाली ( सरस ) उत्पन्न हुई वाणियोंको उत्पन्न किया–अमृततुल्य सरस वाणी बोली ॥ ४ ॥

वृणीष्व वर्णेन सुवर्णकेतकीप्रसूनपर्णा[1]दृतुपर्णमादृतम्।
निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः ॥५॥

वृणीष्वेति। वर्णेन अङ्गकान्त्या, सुवर्णकेतकीप्रसूनस्य पर्णात् दलात्, अपीति शेषः, आदृतं ततोऽप्यधिकस्पृहणीयम्, ऋतुपर्णम् ऋतुपर्णाख्यं नृपं, वृणीष्व। अयं अवनीपतिः पृथिवीशः, भवती एव भवन्मयस्त्वदात्मकः सन्, स्वार्थे मयट्-प्रत्ययः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः, पावनीं पवित्रकारिणीं, निजां स्वायत्तां, पुरुषपरम्परागतामिति यावत्, अयोध्याम् अयोध्यानगरीमपि, मुक्तिदायिनीं पुरीमपीति भावः, न ध्यायति न चिन्तयति; परमानन्दस्वरूपत्वात् तव प्राप्तिर्मुक्त्यपेक्षयाऽधिकादरविषयेत्यतः त्वय्यधिकमनुरक्तोऽयम्, एनं वृणीष्वेति भावः ॥ ५ ॥

रंगसे सुवर्णकी केतकीके पुष्पके दल ( पत्ते ) को अपेक्षा ( पा०—पुष्पके समान वर्ण होनेके कारण ) आदर पाये हुए 'ऋतुपर्ण' को वरण करो, तुममें मग्न यह राजा अपनी पवित्र अयोध्याका भी स्मरण नहीं करता है ॥ ५ ॥

न पीयतां[2] नाम चकोरजिह्वया कथञ्चिदेतन्मुखचन्द्रचन्द्रिका।
इमां किमाचामयसे न चक्षुषी? चिरं चकोरस्य भवन्मुखस्पृशी ॥६॥

नेति। एतन्मुखचन्द्रचन्द्रिका एतस्य ऋतुपर्णस्य, मुखमेव चन्द्रस्तस्य चन्द्रिका प्रसन्नतारूपा ज्योत्स्ना, चकोरस्य जिह्वया कथञ्चिदपि न पीयतां नाम चकोरजिह्वया सत्यचन्द्रचन्द्रिकैव पीयते इयन्तु अलीकमुखचन्द्रचन्द्रिकेति पातुमशक्यत्वादिति भावः, तथाऽपि भवन्मुखस्पृशी भवन्मुखवर्त्तिनी, त्वच्चक्षुरात्मना परिणते इत्यर्थः, 'स्पृशोऽनुदके क्विन्' चकोरस्य चक्षुषी, कर्मणी, इमाम् एतन्मुखचन्द्रचन्द्रिकां, किं चिरं न आचामयसे? न पाययसे? चक्षुषा एतन्मुखचन्द्रचन्द्रिका किमिति न पीयते? किमित्येनं न पश्यसीत्यर्थः। अत्राचमेः प्रत्यवसानार्थत्वात् 'गतिबुद्धि—' इत्यादिना चक्षुषोरणिकर्तुः कर्मत्वं 'निगरणचलनार्थेभ्यश्च' इति चमेर्णिचि परस्मैपद-नियमात्, किन्तु 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषया अत्र परस्मैपदं न भवतीति, अत्र भवन्मुखस्पृशीः चकोरचक्षुषोः विषयनिगरणेन भैमीचकोरचक्षुषोः अभेदप्रतीतेः भेदे अभेदलक्षणातिशयोक्तिरलङ्कारः॥ ६ ॥

चकोरको जिह्वा इस ( ऋतुपर्ण राजा ) के मुखरूपी चन्द्रकी चाँदनी ( आह्लादक सौन्दर्य ) को किसी प्रकार पान न करे, किन्तु तुम्हारे मुखका स्पर्श करनेवाले ( तुम्हारे नेत्ररूपमें परिणत ) चकोरके नेत्रद्वयको इस ( 'ऋतुपर्ण' राजाके मुखचन्द्रकी चन्द्रिका )

---

१. 'वर्णा' इति पा०। २. 'निपीयताम्' इति पा०।

का चिरकाल तक क्यों नहीं आस्वाद कराती हो अर्थात् कराओ ( इसके मुखको देखो )। [ चकोरजिह्वा इस ऋतुपर्ण के मुखचन्द्रकी चन्द्रिकाका पान किसी प्रकार नहीं करे क्योंकि चकोरजिह्वा सत्य चन्द्रचन्द्रिकाका ही पान करती है असत्य चन्द्रचन्द्रिकाका नहीं और इस ऋतुपर्णके मुखचन्द्रकी चन्द्रिकाके असत्य होनेसे चकोरजिह्वा पान नहीं करती तो मुझे इस विषयमें कुछ नहीं कहना है, किन्तु इसकी मुख चन्द्रचन्द्रिकाके असत्य होनेसे चकोरजिह्वाके पान नहीं करनेपर भी अतिशय सुन्दर एवं हमारे द्वारा वर्णन करनेमें अशक्य होनेसे आह्लादक सौन्दर्यका नेत्रको प्रत्यक्ष रूपसे दिखलाना तुम्हें उचित है, अतः तुम वैसा करो । अथवा—जिह्वाके द्वारा थोड़ी-सी वस्तुका ही स्वाद लेना सम्भव होनेसे इस ऋतुपर्ण राजाको विशालतम मुखचन्द्रचन्द्रिकाका आस्वादन चकोरजिह्वा भले न लेवें, किन्तु छोटे नेत्रोंसे अतिशय विशाल वस्तुका ग्रहण करना ( देखना ) सरल है तो फिर तुम्हारे मुखगत विशालतम नेत्रों द्वारा इस विशालतम मुख चन्द्र-चन्द्रिकाका आस्वाद करना तो अत्यन्त सरल होगा, अत एव इसके मुखचन्द्रको चन्द्रिकाको तुम्हें दिखलानी चाहिये । चकोरके ही नेत्र तुम्हारे मुख का स्पर्श करते हैं अत एव वे तुम्हारे मुखगत नेत्र अत्यन्त रमणीय, चन्द्रिकापान करनेके योग्य तथा देखनेमें समर्थ हैं ] ॥ ६ ॥

अपां विहारे तव हारविभ्रमं करोतु नीरे पृषदुत्करस्तरन् ।
कठोरपीनोच्चकुचद्वयीतटे त्रुटत्तरः सारवसारवोर्मिजः ॥ ७ ॥

अपामिति । हे भैमि ! तव अपां विहारे अनेन सह जलक्रीडायां, जलक्रीडाकाले इत्यर्थः, नीरे जले, तरन् प्लवमानः, सारवेषु आरवसहितेषु, सारवेषु सरयूभवेषु, ऊर्मिषु जातः 'देविकायां सरय्वाञ्च भवे दाविकसारवौ' इत्यमरः । 'दाण्डिनायन—' इत्यादिना निपातनात् साधुः, पृषदुत्करो जलविन्दुसन्दोहः, कठोरे कठिने, पीने पीवरे, उच्चे उन्नते, कुचद्वयीतटे त्रुटत्तरः विशीर्यमाणः सन्, त्रुटदिति तौदादिक-त्रुटधातोः शतरि, हारविभ्रमं मुक्ताहारभ्रान्ति, करोतु जलक्रीडावशात् विच्छिन्नस्तव मुक्ताहार इव शोभमानः सन् पश्यतो लोकस्य भैमीहारश्छिन्नः किमयमिति भ्रान्ति जनयतु इति भावः । भ्रान्तिमदलङ्कारः ॥ ७ ॥

तुम्हारे जल-विहारमें जलपर तैरता हुआ तथा छिन्न-भिन्न होता हुआ शब्द ( कलकल ध्वनि ) करते हुए सरयू नदीके तरङ्गोंसे उत्पन्न जल-विन्दु-समूह ( तुम्हारे ) कठोर विशाल तथा उन्नत स्तनद्वयके किनारे पर हार ( मुक्तामाला ) के भ्रमको करे । ( पाठा०— कठोर………किनारेपर छिन्न-भिन्न होता हुआ सरयू…विन्दु-समूह हारके भ्रमको करे । ) [ जलक्रीडाके समय तुम्हारे कठोर, विशाल तथा ऊँचे स्तनोंसे टकराकर कलकल मधुर ध्वनि करती हुई सरयू नदीके तरङ्गसे उत्पन्न विन्दु-समूहको देखकर लोगोंको तुम्हारी मुक्ताहारकी विशिष्ट भ्रान्ति ( या विलास ) को पैदा करे । 'विहार' ( हारशून्य )

---

१. 'तरे' इति पा० ।

में 'हार' का विलास या विशिष्ट होना विरुद्ध है, अतः 'विहार' शब्दका 'क्रीडा' अर्थ करनेसे परिहार हो जाता है ॥ इस 'ऋतुपर्ण' राजाको वरणकर 'सरयू' नदीमें जलक्रीडा करो ] ॥ ७ ॥

अखानि सिन्धुः समपूरि गङ्गया कुले किलास्य प्रसभं स भंत्स्यते ।
विलङ्घ्यते चास्य यशःशतैरहो ! सतां महत्सम्मुखधावि पौरुषम् ॥८॥

अखानीति। अस्य ऋतुपर्णस्य, कुले वंशे, जातैः सगरसुतैरिति शेषः, सिन्धुः उदधिः, अखानि खातः, खनतेः कर्मणि लुङ्, इन्द्रहृतयज्ञीयाश्वान्वेषणार्थं पातालपर्यन्तं खनित्वा उत्पादित इत्यर्थः, तथा स सिन्धुः, गङ्गया भागीरथ्या, समपूरि पूरितः, अस्य कुले जातेन भगीरथेनेति भावः, पातालस्थकपिलमुनिशापदग्धानां तेषां सगरसुतानामुद्धारार्थं तद्वंशोद्भूतेन भगीरथेनानीतया गङ्गया स सागरः पूर्णः कृत इति निष्कर्षः। तथा स सिन्धुः, प्रसभं बलात्कारेण, भंत्स्यते एतत्कुल्येनैव रामेण बद्धः करिष्यते इति भावः ; कर्मणि लृट्, कृतयुगापेक्षया त्रेताया भावित्वात् भविष्यप्रयोगः ; किलेति पुराणप्रसिद्धमेतत्। इदानीं स सागरः अस्य ऋतुपर्णस्य, यशःशतैर्विलङ्घ्यते च। नन्वेतत्कुले सम्भूताः सर्वे समुद्रमेव पौरुषस्य प्रतिपक्षतां किमिति कृतवन्त इति शङ्कामुचितत्वेन निराकरोति, सतामित्यादिना। तथा हि, सतां सज्जनानां, पौरुषं महतां सम्मुखं धावति प्रसरतीति महत्सम्मुखधावि; सतामेवं स्वभावः यत् तेषां पौरुषविक्रमादि महान्तमेवाक्रामति न तु क्षुद्रमिति भावः। अत्रार्थान्तरन्यासालङ्कारः ॥ ८ ॥

इस ('ऋतुपर्ण' राजा) के वंशमें (उत्पन्न पूर्वजोंने) समुद्रको खोदा, गङ्गासे भरा (पूर्ण किया), और उसे बलात्कार पूर्वक बांधेंगे एवं इसके सैकड़ों यश पार करेंगे; अहो (आश्चर्य है); सज्जनोंका विशाल पुरुषार्थ आगे-आगे दौड़ता है (अथवा—सज्जनोंका पुरुषार्थ बड़े लोगोंके सामने दौड़ता (फैलता) है)। [ सगरके सौवें अश्वमेध यज्ञके घोड़ेको खोजते हुए सगर-पुत्रोंके द्वारा समुद्रका खोदा जाना, कपिल मुनिके शापसे उन सगरपुत्रोंके भस्म हो जानेपर उनके उद्धारार्थ कठोर तपश्चर्यासे ब्रह्मा तथा शिवजीको प्रसन्नकर रथके पीछे-पीछे अनुगमन करनेवाली गंगाके द्वारा भगीरथका उस समुद्रको भरना, भावी त्रेतायुगमें सीताहरण होनेपर लङ्का जाते समय रामसे उस समुद्रका बाँधा जाना पुराणोंमें वर्णित है; उस समुद्रको इस राजाके यश लांघते हैं। इसके वंशमें पूर्वकालमें सगर-पुत्र तथा भगीरथ-जैसे लोग उत्पन्न हो चुके हैं, भविष्यमें श्रीरामचन्द्र-जैसे महापुरुष उत्पन्न होंगे तथा वर्तमानमें स्वय यह राजा समुद्रपारगामी यश-समूहवाला है; अतः इस महाकुलीन राजाका वरण करो ] ॥ ८ ॥

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् ।
एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्त्तीः खटिकाः क्षिणोति ॥ ९ ॥

एतदिति । एतस्य राज्ञः, यश एव क्षीरधिः क्षीराब्धिः, तस्य पूरं प्रवाहं, गाहते इति तद्गाहि तद्वर्णनप्रवृत्तमित्यर्थः, कवीनां वचनम् अगाधे असीमे, अतलस्पर्शे स्थाने इत्यर्थः, पतति निमज्जति, न त्वस्य यशः निःशेषं वर्णयितुं शक्नोतीत्यर्थः। किञ्च एतद्गुणानाम् अस्य नृपतेः शौर्यादिगुणानां, गणनाङ्कपातः सङ्ख्यानरेखाविन्यासः, प्रत्यर्थिकीर्त्तीः शत्रुयशांसि एव, खटिकाः लेखनार्थकठिनीः क्षिणोति कर्शयति, एतद्गुणवृद्धेः प्रत्यर्थिकीर्तितिरोधायकत्वादित्थं निर्देशः। अत्र रूपकानुप्राणितातिशयोक्त्यलङ्कारः ॥ ९ ॥

इस ('ऋतुपर्ण' राजा) के यशोरूपी क्षीरसमुद्रके प्रवाहका अवगाहन (यशस्समूहका वर्णन) करनेवाला कवियोंका वचन अथाहमें गिर पड़ता है। अर्थात् इसके अवगाहक यशःसमूहका वर्णन कोई कवि नहीं कर सकता तथा इसके गुणों (शूरता, दयादि गुणों) की गणनाका अङ्क लिखना शत्रुओंकी कीर्ति रूपिणी खड़िया (चॉक) को क्षीण करता है अर्थात् अगणनीय इसके गुण घिसते-घिसते नष्ट हुई खड़ियाके समान शत्रु-कीर्तियोंको नष्ट करते हैं। [अन्य भी कोई व्यक्ति समुद्रप्रवाहमें गिरकर अथाहमें पड़ जाता है तथा अङ्क आदि लिखते-लिखते खड़िया घिसकर नष्ट हो जाती है ॥ यह 'ऋतुपर्ण' राजा महायशस्वी, महागुणी तथा महाशूरवीर है; अतः इसका वरण करो] ॥ ९ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यताम् ?
अध्युष्टापि हि कोटिरस्य समरे रोमाणि सत्त्वाङ्कुराः ।
नीतः संयति वन्दिभिः श्रुतिपथं यन्नामवर्णावली-
मन्त्रः स्तम्भयति प्रतिक्षितिभृतां दोःस्तम्भकुम्भीनसान् ॥ १० ॥

भास्वदिति । भास्वद्वंशकरीरतां सूर्यकुलाङ्कुरत्वम् उज्ज्वलवेण्वङ्कुरत्वञ्च, दधत् अतितेजस्वी 'द्वौ वंशौ कुलमस्करौ' 'वंशाङ्कुरे करीरोऽस्त्री' इति चामरः, वीरः शूरः, अयमृतुपर्णः, कथं कथ्यताम् ? वर्ण्यताम् ? कथयितुमशक्य इत्यर्थः; तथा हि समरे युद्धकाले युद्धक्षेत्रे वा, अस्य राज्ञः अध्युष्टा सार्द्धत्रिसङ्ख्याविशिष्टा कोटिः, सार्द्धत्रयकोटिरित्यर्थः, अध्युष्टेति सार्द्धत्रयस्य संज्ञा, 'तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे' इत्यादि स्मरणात्। 'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इति सङ्ख्येयेऽप्येकवचनम्, रोमाणि शरीरस्थानि तनुरुहाणि, सत्त्वं व्यवसायः, उत्साहिवीरस्य स्थायिभावः, तस्य अङ्कुरा इवाङ्कुरा वहिरुद्गताः वीररसाङ्कुरा इत्युत्प्रेक्षा 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः, वंशकरीरस्य समन्तात् लोमवदङ्कुरप्रादुर्भावो युक्त इत्यर्थः; अत एव संयति युद्धे, वन्दिभिर्वैतालिकैः, श्रुतिपथं कर्णपथं, नीतः श्रावित इत्यर्थः, यस्य ऋतुपर्णस्य, नामवर्णावली ऋतुपर्णेति नामाक्षरपङ्क्तिरेव, मन्त्रः प्रतिक्षितिभृतां शत्रुभूपानां दोःस्तम्भा एव कुम्भीनसाः क्रूरसर्पाः, क्रौर्याद्दैर्घ्याच्च इति भावः, तान्, 'कुम्भीनसः क्रूरसर्पे' इति मेदिनी, स्तम्भयति

प्रतिबध्नाति ; सर्पा हि मान्त्रिककृतगारुडमन्त्रोच्चारणेन यथा स्तम्भिताः भवन्ति तद्वदेतन्नाममात्राकर्णनात् भीतानां शत्रूणां बाहवो युद्धाय न प्रसरन्तीति भावः ॥१०॥

सद्वंकुल ( पक्षा०—मुक्तायुक्त होनेसे दीप्यमान वांस ) के अङ्कुरभावको धारण करते हुए इस वीर ( 'ऋतुपर्ण' ) को कैसे कहा जाय अर्थात् इसका वर्णन करना अशक्य है ( क्योंकि ) युद्धमें आधिक्यविशिष्ट इसके रोमोंकी कोटि अर्थात् साढ़े तीन करोड़ रोम सत्त्वके अङ्कुर होते हैं ( यह राजा युद्धमें हर्षसे रोमाञ्चित हो जाता है ), युद्धमें वन्दियोंके द्वारा सुनाया गया जिसके नामाक्षर-समूह-रूपी मन्त्र शत्रु राजाओंके बाहुस्तम्भरूपी सर्पोंको स्तम्भित ( युद्धव्यापारमें अशक्त, पक्षा०—दंशनव्यापारमें अशक्त ) कर देते हैं । [ वांसमें मुक्ता होनेका प्रमाण शास्त्रोंमें मिलता है । इस राजाके नाममात्र सुननेसे शत्रु युद्ध करनेमें अशक्त हो जाते हैं, जैसे मंत्राक्षर सुननेसे सांप काटनेमें अशक्त हो जाते हैं ]॥१०॥

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां
शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः ।
व्योमव्यापिविपक्षराजकयशस्ताराः पराभावुकः
कासामस्य न स प्रतापतपनः पारं गिरां गाहते ? ॥ ११ ॥

तादृगिति । तादृग्दीर्घस्य 'चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते' इत्युक्तमहापरिमाणस्य, विरिञ्चेः ब्रह्मणः, वासरस्य दिवसस्य, विधौ विधाने, यस्य प्रतापतपनस्य, न तु प्रसिद्धतपनस्येति भावः, कर्तृतां जानामि, कल्पान्तावस्थायी यस्य प्रताप इति भावः ; अम्बुधिपयःपूरस्य समुद्रजलराशेः, उदरे अभ्यन्तरे, वाडवो वडवानलः, यस्य प्रतापतपनस्य, प्रतिबिम्बमेव शङ्के उत्प्रेक्षे, व्योमव्यापिन्यो याः विपक्षस्य विरोधिनः, राजकस्य राजसमूहस्य, यशांस्येव तारा नक्षत्राणि, तद्यशसामल्पत्वात् नक्षत्ररूपत्वमिति भावः ; ताः पराभावुकः स्वतेजसा तिरोधायक इत्यर्थः, 'लषपत—' इत्यादिना उकञ् प्रत्यये 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् तारा इति कर्मणि द्वितीया, सः सर्वव्यापीत्यर्थः, अस्य राज्ञः प्रताप एव तपनः कासां गिरां पारं परभागं न गाहते ? सर्वासामपि गाहते इत्यर्थः, न कासामपि गिरां गोचरः वर्णयितुमशक्यत्वादिति भावः । अत्रोत्प्रेक्षालङ्कारद्वयम् ॥ ११ ॥

ब्रह्माके वैसे बड़े ( एक सहस्र दिव्य वर्ष प्रमाणके ) दिनको बनानेमें जिस ( इस राजाके प्रतापरूपी विशालतम एवं चिरस्थायी सूर्य ) को कर्ता मानता हूं तथा समुद्रके जलतरङ्ग-समूहमें वड़वानलको जिसका प्रतिबिम्ब मानता हूं; आकाशमें व्याप्त शत्रु राज-समूहको यशोरूपी ताराओंको पराभूत करनेवाला इसका प्रतापरूपी सूर्य किन वचनोंके पारको नहीं प्राप्त करता है ? अर्थात् इसके प्रतापका कोई भी वर्णन नहीं कर

---

१. करीन्द्रजीमूतवराहशंखमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥

सकता है । [ ३० घटीका दिन बनानेवाला आकाशमें दृष्टिगोचर होनेवाला यह सामान्यतम सूर्य एक सहस्र दिव्यवर्षपरिमित ब्रह्माके दिनको बनानेमें समर्थ नहीं हो सकता, अतः चिरस्थायी एवं अतिशय तेजस्वी होनेसे विलक्षण इसका प्रतापरूपी सूर्य ही ब्रह्माके इतने बड़े दिनको बनाता है । अग्निको जल बुझा देता है, अत एव समुद्रके जलमें बडवाग्निका रहना असम्भव होनेसे उस समुद्र जलमें प्रतिबिम्बित हुआ इस राजाका उक्त अतितेजस्वी प्रताप ही बडवानल है । और आकाशमें ये ताराएं नहीं हैं, किन्तु राजाके शत्रुओंकी कीर्ति फैली हुई है, और उन्हें इसका प्रतापरूपी सूर्य मिटा ( नष्ट कर ) देता है, ( सूर्योदय होनेपर ताराओंका नष्ट होना सर्वविदित है, इस राजाके ऐसे प्रतापका वर्णन कोई नहीं कर सकता है; अत एव इस महाप्रतापी राजाका तुम वरण करो ] ॥ ११ ॥

द्वेष्याकीर्त्तिकलिन्दशैलसुतया नद्याऽस्य यद्दोर्द्वयी-
कीर्त्तिश्रेणिमयी समागममगात् गङ्गा रणप्राङ्गणे ।
तत्तस्मिन् विनिमज्ज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥

द्वेष्येति । यत् यस्मात् , अस्य राज्ञः, दोर्द्वयीकीर्त्तिश्रेणिमयी भुजयुगजनितयशःपरम्परारूपा, गङ्गा भागीरथी, यशसां श्वेतत्वेन गङ्गारूपत्वमिति भावः, रणप्राङ्गणे युद्धक्षेत्रभूतप्रयागे इति यावत् , द्वेष्याणां द्विषाम्, अकीर्त्तिरयश इति यावत् शुक्लत्वेन वर्णितायाः कीर्त्तेर्विरुद्धत्वात् कृष्णवर्णेति भावः, सैव कलिन्दशैलसुता कालिन्दी, यमुनेत्यर्थः, तया, अकीर्त्तेः कृष्णत्वेन यमुनारूपत्वमिति भावः, नद्या समागमम् अगात् , तत् तस्मात् , तस्मिन् रणप्राङ्गणरूपगङ्गायमुनासङ्गमे इत्यर्थः, विनिमज्ज्य विशेषेण निमग्नो भूत्वा, तत्र देहं परित्यज्येति यावत् , बाहुजभटैः क्षत्रियवीरैः, एतत्प्रतिपक्षभूतैरिति भावः 'बाहुजः क्षत्रियो विराट्' इत्यमरः, रम्भायाः तदाख्यायाः प्रसिद्धायाः स्वर्वेश्यायाः, परीरम्भानन्दः आलिङ्गनसुखम्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः, तस्य निकेते स्थाने, नन्दनवने क्रीडादराडम्बरो विहारेच्छाविजृम्भणम्, आरम्भि आरब्धः, एतद्विरोधिनां मरणमवश्यम्भावि इति भावः । अत्र कीर्त्यकीर्त्योर्गङ्गायमुनारोपाद्रूपकालङ्कारः । 'सितासिते सरितौ यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥' इति श्रुतिरत्र प्रमाणम् ॥ १२ ॥

इस ( 'ऋतुपर्ण' राजा ) के बाहुद्वयसे उत्पन्न कीर्ति-परम्परारूपी गङ्गा जिस कारणसे शत्रुकी अकीर्तिरूपा यमुना नदीसे युद्धाङ्गणमें संगत हुई, उस कारणसे उस ( रणप्राङ्गणमें सङ्गत उक्त गङ्गायमुनाके सङ्गम स्थल ) में डूबकर अर्थात् मरकर क्षत्रिय शूरवीरोंने रम्भा ( रम्भा' नामकी स्वर्गीय अप्सरा ) के आलिङ्गनके स्थान नन्दनवनमें क्रीडा करनेमें अत्यधिक आसक्तिको आरम्भ कर दिया । [ पुराणोंमें उल्लेख है कि गङ्गा-यमुनाके सङ्गम

( तीर्थराज प्रयाग ) में स्नान करनेवाला व्यक्ति स्वर्गीय रम्भाके साथ आलिङ्गनादि सुखको पाता है, उसी प्रकार इस राजाके बाहुद्वयसे उत्पन्न श्वेतवर्ण कीर्ति रूपिणी गङ्गा तथा शत्रु की श्यामवर्ण अकीर्तिरूपिणी यमुनाके सङ्गम युद्धभूमिमें डूबने (स्नान करनेवाला, पक्षा०—मरनेवाला ) योद्धा रम्भाके आलिङ्गन सुखके स्थान नन्दनवनमें अत्यन्त आसक्तिके साथ क्रीडा करने लगता है। युद्धमें मारे गये योद्धाको स्वर्गप्राप्त, अप्सराओंका लाभ एवं नन्दन वनमें क्रीडा करना शास्त्रीय वचनोंसे प्रमाणित है। बाहुजन्य कीर्तिको श्वेत गङ्गा तथा शत्रुकी अकीर्तिको कृष्णवर्ण यमुना मानना उचित ही है। इस राजाने युद्धभूमिमें बहुत से क्षत्रिय शूरवीरोंको मारकर स्वर्ग पहुंचाया है अत एव वीर इस 'ऋतुपर्ण' राजाका वरण करो ]॥ १२॥

इति श्रुतिस्वादिततद्गुणस्तुतिः सरस्वतीवाङ्मयविस्मयोत्थया।
शिरस्तिरःकम्पनयैव भीमजा न तं मनोरन्वयमन्वमन्यत ॥ १३ ॥

इतीति। भीमजा भैमी दमयन्ती, इतीत्थं, श्रुतिस्वादिता श्रोत्रगृहीता, तस्य ऋतुपर्णस्य, गुणानां स्तुतिः यया तादृशी सती, सरस्वत्या देव्याः, वाङ्मये वाक्प्रपञ्चविषये, यो विस्मयः तदुत्थया शिरसस्तिरःकम्पनयैव अवज्ञासूचकमस्तकचालनेनैव, मनोः अन्वयं मनुवंशोद्भवं, मनुसन्तानमित्यर्थः, तम् ऋतुपर्णं, न अन्वमन्यत अनुमोदनं न कृतवती, न्यषेधीत् इति यावत्, विस्मयाभिनयशिरःकम्प एव प्रसङ्गान्निषेधार्थोऽपि संवृत्त इति भावः ॥ १३ ॥

भीमकुमारी ( दमयन्ती )ने इस प्रकार ( १२।५–१२ )कानसे सुनी गयी उस ( 'ऋतुपर्ण राज ) की प्रशंसावाली सरस्वतीके ( वाक्समूहमें ) ( या वाक्समूहसे ) होनेवाले आश्चर्यसे उत्पन्न शिरः कम्पनसे ही मनुवंशोत्पन्न उस ( 'ऋतुपर्ण' राजा ) को स्वीकृत नहीं किया। [ कानोंसे आदरपूर्वक ऋतुपर्णकी गुण-स्तुति सुनकर दमयन्ती आश्चर्यित होकर शिर कंपाकर उस मनुवंशोत्पन्न राजाको स्वीकृत नहीं किया। आश्चर्यजन्य शिरःकम्पनसे ही निषेध भी सूचित कर दिया। सोमवंशोत्पन्न 'नल' को चाहनेवाली दमयन्तीने अभिलषित आह्लादक गुण सूर्यवंशोत्पन्न उस 'ऋतुपर्ण' राजामें नहीं होनेसे उसका त्याग कर दिया। चन्द्रगत आह्लादक गुण सूर्यमें नहीं होने से चन्द्रवंशोत्पन्न नलको चाहनेवाली दमयन्तीका सूर्यवंशोत्पन्न अयोध्याधीश 'ऋतुपर्ण' को अस्वीकार करना उचित ही है ] ॥ १३ ॥

युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला।
शशंस संसक्तकरैव तद्दिशा निशाकरज्ञातिमुखीमिमां प्रति ॥ १४ ॥

युवेति। स्वर एवामृतं तेन न्यक्कृतस्तिरस्कृतः, मत्तः वसन्तकालहृष्टः, कोकिलो यया सा तादृशी, वचसामधीश्वरा वाग्देवता, सा सरस्वती, अन्यं युवानं युवान्तरं, सुप्सुपेति समासः, तस्य यूनः, दिशा दिग्भागेन, संसक्तकरा व्यापृतहस्ता, हस्तेन तं निर्दिशन्ती एवेत्यर्थः, निशाकरज्ञातिमुखीं चन्द्रसदृशमुखीमित्यर्थः, ज्ञातिसोदरव-

न्यायादिशब्दाः सादृश्यवाचका इत्याहुः, इमां भैमीं प्रति शशंस, दमयन्तीम् आमन्त्र्य आचख्यावित्यर्थः ॥ १४ ॥

स्वरामृतसे मत्त कोकिलको तिरस्कृत करनेवाली दूसरे युवकको हाथसे बतलाती हुई वह सरस्वती देवी चन्द्रमुखी ( दमयन्ती ) के प्रति बोली ॥ १४ ॥

न पाण्ड्यभूमण्डनमेणलोचने ! विलोचनेनापि नृपं पिपाससि ? ।
शशिप्रकाशाननमेनमीक्षितुं तरङ्गयापाङ्गदिशा दृशास्त्विषः ॥ १५ ॥

नेति । एणलोचने ! हे मृगाक्षि ! पाण्ड्यभूमण्डनं पाण्ड्यदेशस्य भूषणं, तद्देशस्य चूडामणिस्वरूपमिति यावत् नृपं विलोचनेनापि न पिपाससि ? पातुं न इच्छसि ? साग्रहदृष्टिदानेनापि एनं सुखयितुं न इच्छसि किम् ? इति भावः, शशिप्रकाशाननम् इन्दुसुन्दरास्यम्, एनम् अपाङ्गदिशा कटाक्षमार्गेणापि, नेत्रप्रान्तेनापि इत्यर्थः, ईक्षितुं दृशास्त्विषः चक्षुषोः ज्योतींषि, तरङ्गय प्रवर्त्तय, एनं साग्रहं द्रष्टुं नेच्छसि चेत् न पश्य, परन्तु कटाक्षविक्षेपेणापि सकृदेव एनं पश्येति भावः । अत्र एणलोचने इत्यस्य एणस्य लोचने इव लोचने यस्यास्तत्सम्बुद्धौ, अत एवात्र निदर्शनालङ्कारः । एवमुत्तरत्राप्येवंविधस्थले बोध्यः ॥ १५ ॥

हे मृगलोचने ( दमयन्ति ) ! पाण्ड्य ( देश ) की भूमि के भूषण राजाको नेत्रसे भी पान करना ( देखना ) नहीं चाहती ? ( अधरसे पान करना नहीं चाहती तो भले मत चाहो, किन्तु नेत्रसे भी पान करना ( देखना ) नहीं चाहती यह तो अनुचित है; अत एव ) चन्द्रके समान प्रकाशमान मुखवाले इसे देखनेके लिये नेत्रकान्तिको कटाक्षसे तरङ्गित करो अर्थात् अतिरमणीय इस राजाको देखो ॥ १५ ॥

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासपरम्परापरा ।
अहो ! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्त्तिनर्त्तकी ॥ १६ ॥

भुवीति । कीर्त्तिरेव नर्त्तकी लासिकी, 'शिल्पिनि ष्वुन्' इत्यत्र 'नृतिखनिरञ्जिभ्यः एव' इति नृत्यतेः ष्वुन्-प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीप्, भुवि भूतले, भ्रमित्वा भूचारिणी भूत्वेत्यर्थः, अथ अम्बरे आकाशे, अनवलम्बं निरालम्बं यथा स्यात् तथा, विहर्त्तुं विचरितुम्, अभ्यासानां परम्परा श्रेणिः, सैव परं प्रधानं यस्याः सा तादृशी सती, अम्बरदेशे नर्त्तनाभ्यासासक्ता सतीत्यर्थः, महावंशं महाकुलीनं महावेणुञ्च, 'वंशो वेणौ कुले वर्गे' इति विश्वः, अमुं पाण्ड्यं, समाश्रिता सती सकौतुकं यथा तथा नृत्यति अहो ! आश्चर्यम्; यथा काचित् नर्त्तकी प्रथमं भुवि भ्रमित्वा वियति निरालम्बं भ्रमणार्थं वेणुमाश्रित्य नृत्यति तद्वत् कीर्त्तिरपि नृत्यति इति निष्कर्षः । अत्र रूपकालङ्कारः ॥ १६ ॥

पृथ्वीपर घूमकर अवलम्बरहित आकाशमें विहार करनेके लिये अभ्यास-परम्परामें

---

१ 'दृशो-' इति पा० ।

तत्पर तथा महावंश ( श्रेष्ठ कुल, पक्षा०—ऊँचे बाँस ) का आश्रयकर ( इस राजाकी ) कीर्ति रूपिणी नटी कौतुकके साथ नाच रही है आश्चर्य है ? ( नटी जिस प्रकार पहले पृथ्वीपर घूमकर बादमें बड़े बांशपर चढ़कर निरवलम्ब आकाशमें भ्रमण करनेका अभ्यास करनेमें लगी हुई सी कौतुक के साथ नाचती है, उसी प्रकार इस राजाकी कीर्ति पृथ्वीमें घूमकर अर्थात् व्याप्त होकर उत्तम वंशवाले इस राजाका आश्रयकर निरवलम्ब आकाशमें विहार करनेमें तत्पर हो रही है ॥ इस राजाकी कीर्ति भूलोकव्याप्त होकर आकाशमें फैल रही है, अत एव कीर्तिमान् राजाका वरण करो ] ॥ १६ ॥

**इतो भिया भूपतिभिर्वनं वनात् अटद्भिरुच्चैरटवीत्वमीयुषी ।**
**निजाऽपि साऽवापि चिरात् पुनः पुरी पुनः स्वमध्यासि विलासमन्दिरम् ॥**

**इत इति । इतोऽस्मात् राज्ञः, भिया भयेन, वनात् वनम् अटद्भिः भ्रमद्भिः, भूपतिभिः प्रतिभूपैः, उच्चैरटवीत्वं चिरं जनहीनतया अवस्थानात् महाटवीत्वम्, ईयुषी प्राप्ता, सा पूर्वावासभूता, निजा स्वकीया, पुरी नगरी अपि, चिरात् वहोः कालात् परं, पुनरवापि वनान्तरभ्रमेण पुनः प्राप्ता, स्वं स्वकीयं, विलासमन्दिरं क्रीडागृहञ्च, पुनरध्यासि वनान्तरभ्रमेणैवाध्यासितम्, आसेरधिपूर्वात् कर्मणि लुङ् एतस्य राज्ञो भयात् पुरीं त्यक्त्वा पलायिताः प्रतिभूपाः वहोः कालादरण्यभूते स्वनगरे स्वविलासमन्दिरे च पुनःसमागताः तं वनान्तरं बुद्ध्वा स्वं गोपायन्तीति भावः। विलेषु आसते इति विलासा विलेशयाः, सर्पास्तेषां मन्दिरमिति विशेषणत्वेनापि योज्यम् । अत्रैकस्य अरिवर्गस्य अनेकासु अटवीषु अटवीभूतपुरीषु च क्रमात् वर्त्तमानत्वेन तथा पुरीष्वपि पुरीत्वाटवीत्वयोः क्रमसम्बन्धोक्त्या च 'एकम् अनेकस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्यायः' इत्युक्तलक्षणं पर्यायभेदद्वयं द्रष्टव्यम् ॥ १७ ॥**

इसके भयसे एक वनसे दूसरे वनमें घूमते हुए ( शत्रुभूत ) राजालोग बहुत समयके बाद महावन बनी हुई अपनी भी उस नगरीको प्राप्त किया, बादमें विलासमन्दिर ( अपने विलासके भवनों, पक्षा०—बिलमें सोनेवालोंके घरों ) को प्राप्त किया । [ इसके भयसे एक वनसे दूसरे वनमें घूमते हुए राजालोग बहुत समये के बाद बड़े वनरूपमें परिणत अपनी नगरीमें आये ( उसे अपनी नगरी समझकर नहीं, किन्तु 'यह भी कोई एक वन ही है, ऐसा समझकर आये ) तथा बादमें अपने विलासभवनोंको प्राप्त किये वे विलासभवन इतने लम्बे समयके बाद पूर्वरूपमें नहीं रह गये हैं, किन्तु महावनमें परिणत नगरीके समान वे भी बिलमें रहनेवाले खरगोश आदि जानवरों के घरके रूपमें परिणत हो गये थे, उन्हें वे राजा प्राप्त किये अर्थात् इस राजाने शत्रुओंकी नगरी ( राजधानी ) को उजाड़कर वन तथा उनके महलोंको बिलमें रहनेवाले खरगोश आदिका घर बना दिया है ] ॥ १७ ॥

**आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः**
**सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः ।**

देवत्व को प्राप्त थे 'ये' इस राजाके भयङ्कर संग्रामको देखनेके लिये अन्य देवोंके साथ आकर इस राजाके विशालकाय हाथियोंको चलता-फिरता पर्वत समझ कर थे पर्वत फिर घूमने-फिरने लगे, अतः इन्हें फिर धनुष्कोटिसे मुझे फेंकना चाहिये' ऐसा विचार करने लगे ॥ यह पाण्ड्य राजा बड़ा भयङ्कर युद्ध करता है तथा इसके हाथी पर्वतवत् विशालकाय एवं अगणित हैं; अतएव ऐसे शूरवीर का वरण करो ] ॥ २० ॥

**शशंस दासीङ्गितविद् विदर्भजामितो ननु स्वामिनि ! पश्य कौतुकम् ।**
**यदेप सौधाग्रनटे पटाञ्चले चलेऽपि काकस्य पदार्पणग्रहः ॥ २१ ॥**

शशंसेति । इङ्गितवित् दमयन्त्यभिप्रायज्ञा, दासी किङ्करी, विदर्भजां दमयन्तीं, शशंस बभाण; किमिति ? ननु हे स्वामिनि ! इतः अस्यां दिशि, कौतुकम् आश्चर्यं, पश्य, किं तत् ? तदाह, सौधाग्रे सुधाधवलितगृहोर्द्ध्वदेशे वर्त्तमाने, नटे चञ्चलत्वात् नर्त्तकतुल्ये, अत एव चले वायुवशात् चलत्यपि, पटाञ्चले ध्वजाञ्चले, काकस्य एष पदार्पणग्रहः पादन्यासाभिनिवेशः, इति यत् तत् कौतुकमिति पूर्वेणान्वयः । एतेन भैम्याः तस्मिन् पाण्ड्ये महान् अनादरः इति सख्या सूचितम् ॥ २१ ॥

( दमयन्ती ) के अभिप्रायको जाननेवाली दासीने दमयन्तीसे कहा—हे स्वामिनि ( दमयन्ति ) ! 'महलके ऊपर नटरूप चञ्चल ( ध्वजाके ) वस्त्रके आगे कौवा पैर रखनेका हठ करता है' यह कौतुक देखो । [ दासीने स्वामिनी दमयन्तीके अभिप्रायको समझकर अन्योक्तिसे कहा कि—सुधाधवलित महल के ऊपर ध्वजाके वस्त्रके वायुचञ्चल अग्रिम भागमें कौवेके पैर रखनेके समान यह नीच राजा दूसरे अर्थात् नल को चाहनेवाली तुम्हें श्रृङ्गार चेष्टाओंसे प्राप्त करने का दुराग्रह रखता है, अत एव यह कौतुक विषय है, इसे तुम देखो । इस प्रकार कह कर सरस्वती देवीके द्वारा किये जानेवाले राजाके वर्णनके बीचमें ही रोक दिया । उस राजा को 'काक' बतलाकर दासीने उसमें अत्यन्त अनादर प्रकट किया ] ॥ २१ ॥

**ततस्तदप्रस्तुतभाषितोत्थितैः सदस्तदश्वेति हसैः सदःसदाम् ।**
**स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेः सुलक्षता ॥**

तत इति । ततोऽनन्तरं, तदप्रस्तुतभाषितेन उत्थितैः सदःसदां सभासदां, हसैर्हासैः, 'स्वनहसोर्वा' इति विकल्पात् अ-प्रत्ययः, तत् सदः संसत्, सभा इत्यर्थः, अश्वेति सितीकृतं, शुभ्रीकृतम् इति यावत् ; श्वितिधातोर्ण्यन्तात् कर्मणि लुङ् अतः सदःश्वैत्यात् हेतोः, अस्य पाण्ड्यस्य, भूपतेः म्लानिः विवर्णता, स्फुटा व्यक्ता, अजनि जाता, कर्त्तरि लुङ् 'दीपजन—'इत्यादिना विकल्पाच्चिण्-प्रत्ययः, तथा हि सिते धवलिम्नि, शितेर्नीलिम्नः 'अशितिः शितिकृष्णे च कालं नीलञ्च मेचकम्' इति हलायुधः, सुलक्षता सुग्रहत्वं, जायेत हि स्फुटं दृश्यते इत्यर्थः । अर्थान्तरन्यासोऽलङ्कारः ॥२२॥

इस ( दासीके वैसा ( १२, २१ ) उपहास पूर्वक बोलने ) के बाद उस ( दासी ) के अप्रासंगिक बोलनेसे उत्पन्न, सदस्योंकी हंसीसे वह सभा श्वेत वर्ण वाली हो गयी, इस ( सभा

के श्वेत वर्ण होने ) से इस ( पाण्ड्य ) राजा की मलिनता ( दमयन्तीके नहीं मिलनेसे उदासीनता ) स्पष्ट हो गयी; क्योंकि श्वेतमें कालिमा स्पष्ट मालूम होती है। [ उस दासीके उपहास करने पर और सभासदोंके हंसने पर वह पाण्ड्य राजा अधिक उदास हो गया ] ॥२२॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरे[1] सा जगदेकवन्द्यया ।
तदार्जवावर्जिततर्जनीकया जनी कयाचित् परचित्स्वरूपया ॥ २३ ॥

ततोऽन्विति । ततोऽनु तदनन्तरं, महेन्द्रभूपुरन्दरे महेन्द्रपर्वताधीश्वरे विषये, तं लक्षीकृत्येत्यर्थः, तदार्जवेन तस्य महेन्द्राधिपस्य, आर्जवेन सरलतया, आवर्जिता नमिता, तर्जनी प्रदेशिनी यया तथा तादृक्तर्जनीकया, तम् अङ्गुल्या निर्दिश्येत्यर्थः, 'नद्यृतश्च' इति कप्, कयाचित् अनिर्वाच्यया, परचित्स्वरूपया परज्योतिरात्मिकया, जगदेकवन्द्यया देव्या सरस्वत्या, सा जनी वधू, जगदे गदिता ॥ २३ ॥

इसके बाद संसारमें एक ( मुख्य ) वन्दनीया, अनिर्वचनीया, उत्तम ज्ञान (या ज्योतिः) स्वरूपा ( सरस्वती ) देवी महेन्द्रभूमिके राजाके विषयमें ( पाठा०—को लक्षित कर ) उसकी ओर तर्जनी अङ्गुलिसे सङ्केत कर उस ( दमयन्ती ) से बोली ॥ २३ ॥

स्वयंवरोद्वाहमहे वृणीष्व हे ! महेन्द्रशैलस्य महेन्द्रमागतम् ।
कलिङ्गजानां स्वकुचद्वयश्रिया कलिं गजानां शृणु तत्र कुम्भयोः ॥२४॥

स्वयंवरोद्वाहमहे इति । हे ! इति सम्बोधने, 'अथ सम्बोधनार्थकाः। स्युः पाट् प्याडङ्ग हे है भोः' इत्यमरः, हे भैमि ! स्वयंवरेण स्वयंवरकर्मणा, य उद्वाहमहो विवाहोत्सवः तस्मिन्, आगतं महेन्द्रशैलस्य महेन्द्रपर्वतस्य, महेन्द्रम् अधीशं, वृणीष्व; तत्र महेन्द्रशैले, कलिङ्गजानां कलिङ्गदेशोद्भवानां, गजानां कुम्भयोः, स्वस्य आत्मनः कुचद्वयश्रिया सह कलिं कलहं, तव कुचद्वयम् अधिकं पीनोन्नतं गजानां कुम्भद्वयं वा अधिकं पीनोन्नतमिति मीमांसार्थमेव इति भावः, शृणु; तद्देशस्य गजप्रायत्वात् कुचकुम्भयोः करिकुम्भयोश्च साम्यं व्यक्तीभविष्यतीति निष्कर्षः ॥२४॥

हे दमयन्ति ! स्वयंवर द्वारा किये जानेवाले विवाहरूप यज्ञमें आये हुए, महेन्द्रपर्वतके राजाको वरण करो, और वहां कलिङ्ग देशमें उत्पन्न हाथियोंके कुम्भद्वय का अपने स्तनद्वयकी शोभासे ( होनेवाले ) विवादको सुनो। [ इस महेन्द्र पर्वतके राजाके यहां कलिङ्ग देशोत्पन्न हाथी हैं, जिनका कुम्भद्वय तुम्हारे स्तनद्वय का शोभा पाना चाहता है, परन्तु पाता नहीं, विवाहके समान इस विषय को तुम इस महेन्द्राधीश का वरण कर अच्छी तरह देख सकोगी, अतएव इसे वरण करो ] ॥ २४ ॥

अयं किलायात इतीरिपौरवाग्भयाद्दयादस्य रिपुर्वृथा वनम् ।
श्रुतास्तदुत्त्रापगिरस्तदक्षराः पठद्भिरत्रासि शुकैर्वनेऽपि सः ॥ २५ ॥

---

१ 'पुरन्दरम्' इति पा० ।

अयमिति । अयं महेन्द्रनाथः, आयातः किल पुरोवर्तिनाम् इतिवादिनां, पौराणां वाक्यो जनपदैकैः, भयात् अन्य रिपुपुंसा गतम् आगतम्; शुकाश्रितवाक्—शुकाः आकर्णिताः, शुकैरिति भावः, तान्येव अक्षराणि अवलम्बनाः स्थितैर्वचनानि याश्रु ताः तद्गुराः, तस्य पुनर्यापरिपेः, उपतापगिरो नायनायानान्, उन्नयन्तापिनमलापान्, पठद्भिः उच्चारयद्भिः, शुकैर्वनेऽपि ततः विद्रुः, पलायितः प्राप्तिताः, अरेर्वचनात् कर्मणि लुङ् । अत्र सत्यपि आत्मनिवृत्तिकारणे शुकवाक्यनिमित्तेन तद्रूपः, कर्मनिमित्तत्वो विशेषोक्तिभेदः अलङ्कारः, 'कारणसामग्र्यां कार्यानुत्पत्तिर्विशेषोक्तिः' इति सामान्यलक्षणात् ॥ २५ ॥

'यह (कलिङ्गराज राजा) आ गया' ऐसे कहनेवाले नागरिकोंके वचनसे शत्रु वनको चले ही गये (क्योंकि) वहां भी उन शत्रुओं के दुर्भाग्य (अर्थात्—शीघ्रके समयमें बोलना) कि वनके उन अक्षरों 'यह कलिङ्गराज आ गया' को तोतोंसे सुनकर तोतोंसे वनमें भी वे शत्रु डर गये । [ नागरिकोंके कहनेसे यद्यपि शत्रु वनमें भाग गये; तथापि वहां आपस सोते समय 'यह कलिङ्गराज आ गया' इस प्रकार स्वप्नमें बार बार कहे गये शत्रुओंके वचनोंको तोते भी कहने लगे, जिसे सुन कर वे शत्रु इस कलिङ्गराजको वास्तविकमें आया समझकर वहां भी डर गये, अत एव उनका वनमें भागना व्यर्थ ही हुआ ] ॥ २५ ॥

इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाऽद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥२६॥

इत इति । इतः अस्मात् महेन्द्रनाथात्, त्रसता बिभ्यता, अत एव विद्रुतेन पलायितेन, भूभृता प्रतिपक्षभूभुजा, उज्झिता वने त्यक्ता, प्रिया तत्कान्ता वनमानवीजनैः किरातीजनैः, दृष्टा; अथ दर्शनानन्तरम्, आत्मदेशजम् अद्भुतं त्वद्देशे किमद्भुतमस्तीति पृष्टा सती, अप्रधाने दुहादीनामित्यप्रधाने कर्मणि क्तः, शशित्विषः चन्द्रिकायाः, शीतलशीलतां शिशिरस्वभावतां, शशंस किल कथयामास खलु; अभिनवप्रासविरहाया मुग्धायाः चन्द्रकिरणानां विरहे दुःसहत्वमजानन्त्याः स्वदेशे शीतलत्वमत्र वने च उष्णत्वमिति भ्रान्तिरिति भावः ॥ २६ ॥

इस ( कलिङ्गराज ) से डरकर भगे हुए राजासे छोड़ी गयी ( उसकी ) प्रियाको किरातपत्नियोंने देखा और अपने देशको अद्भुत वस्तुको पूछा तो उस ( पति-विरहित रानी ) ने चन्द्रकिरणकी शीतलता को बतलाया । [ भगने हुए पति से छोड़े जाने के कारण चन्द्र-किरण सन्ताप दे रही थी, अतः किरातियोंके पूछनेपर उसने चन्द्र-किरणको अपने देशका अद्भुत पदार्थ बतलाया ] ॥२६॥

इतोऽपि किं वीरयसे ? न कुर्वतो नृपान् धनुर्बाणगुणैर्वशंवदान् ।
गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयोर्वशी वशम् ॥ २७ ॥

१. 'निर्भयम्' इति पा० ।

इतोऽपीति । हे भैमि! उर्वीवलयोर्वशी भूलोकाप्सरोविशेषा, त्वं शुद्धेन अनवद्येन, गुणेन सौन्दर्यगुणेन मौर्व्या च, एकेनैवेति भावः, तमेनं महेन्द्रनाथं, निर्भरं नितान्तं, वशं विधाय वशीकृत्य, धनुर्बाणगुणैः त्रिभिः साधनभूतैः, नृपान् वशंवदान् वश्यान्, 'प्रियवशे वदः खच्' कुर्वतः कुर्वाणात्, इतोऽस्मादपि, महेन्द्रनाथादपीत्यर्थः, 'पञ्चमी' किं न वीरयसे? न पराक्रमसे? 'वीरशूरविक्रान्तौ' इति चौरादिकाल्लट्, व्यतिरेकालङ्कारः ॥ २७ ॥

भूतलकी उर्वशी तुम शुद्ध गुण (सौन्दर्य, पक्षा०—धनुषकी डोरी) से प्रसिद्ध इस (महेन्द्रनाथ) को अत्यन्त वशमें करके धनुष, वाण और गुण (धनुषकी डोरी); इन तीन साधनोंसे राजाओंको वशमें करते हुए इस (महेन्द्रनाथ) से भी वीर नहीं हो क्या? अर्थात् अवश्य हो (अथवा—क्यों नहीं वीर बनती हो) अर्थात् तुम्हें वीर बनना चाहिये। [यह राजा तो धनुष, वाण तथा गुण (मौर्वी)—इन तीन साधनोंसे शत्रु राजाओंको वशमें करके वीर हो रहा है, और ऐसे वीर राजाको तुम केवल गुण (सौन्दर्य गुण, पक्षा०—धनुष तथा वाणसे रहित केवल मौर्वी) से ही वशमें कर रही हो; अतएव इससे अधिक तुम ही वीर हो तीन साधनोंके द्वारा काम करनेवालेकी अपेक्षा एक साधनके द्वारा वही काम करनेवाले व्यक्तिको ही श्रेष्ठ मानना उचित है] ॥ २७ ॥

एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा ।
आक्रन्दत् भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीन्न्यश्वसीच्च ॥२८॥

एतदिति । एतस्मात् भीतस्य अरेर्नारी गिरिबिलेषु पर्वतगुहासु, विगलन् वासरो यस्याः सा, तत्रैव नीतदिवसेत्यर्थः, निःसरन्ती सायं बिलाद्बहिः निष्क्रामन्ती, स्वक्रीडाहंसमोहेन मदीयः क्रीडाहंसोऽयमिति भ्रान्त्या, ग्रह आग्रहः तद्वान् ग्रहिलः, पिच्छादित्वादिलच्-प्रत्ययः, तेन साग्रहेण, शिशुना बालकेन, भृशम् अत्यर्थं, प्रार्थितो धृत्वा दीयतामिति याचितः, उन्निद्रः परिपूर्ण इत्यर्थः, चन्द्रो यस्याः सा सती, भूरि भूयिष्ठं यथा तथा, आक्रन्दत् क्रन्दितवती, यत् यस्मादाक्रन्दनात्, तस्या मातुः, नयनजले मिलन् सङ्क्रामन्, चन्द्र एव हंसः तस्य योऽनुबिम्बः प्रतिबिम्बः, तस्य प्रत्यासत्त्या समीपप्राप्त्या, प्रहृष्यतः तनयस्य विहसितैः मध्यमहासैः, किञ्चिदुच्चहास्यैरित्यर्थः, 'मध्यमः स्याद् विहसितम्' इत्यमरः, आश्वसीत् तस्याग्रहशान्त्या आश्वासं प्राप्तवती, किन्तु न्यश्वसीच्च शोकेन दीर्घनिश्वासं परित्यक्तवती च इति दुर्दशानुभवसूचकोक्तिः। 'ह्मयन्तक्षणश्वस—' इत्यादिना वृद्धिप्रतिषेधः, अत्र नारीशिशोः चन्द्रबिम्बे तत्प्रतिबिम्बे च हंसगतसादृश्यात् हंसभ्रान्तिनिबन्धनाद् भ्रान्तिमदलङ्कारः ॥ २८ ॥

पर्वतकी गुफाओंमें दिनको बितानेवाली, सायंकालके बाद बाहर निकलती हुई इस राजासे डरे हुए शत्रुकी स्त्रीसे अपने क्रीडा हंस ( खिलौना हंस ) के भ्रमसे हठी बालकने आकाशोदित चन्द्रमाको बार बार मांगा, ( यह देख दुःखसे ) वह बहुत रोया और उस स्त्रीकी आँखमें प्रतिबिम्बित चन्द्ररूप हंसके प्रतिबिम्बको पानेसे प्रसन्न होते हुए बालकके हंसनेसे ( वह स्त्री ) प्रसन्न हुई और ( अपविकशतागय दुःखसे ) लम्बा श्वास लिया। [ इस राजासे डरे हुए शत्रुकी स्त्री दिनमें पर्वतकी गुफामें छिपी रहती थी और रातमें बाहर निकली तो उसके बालकने आकाशमें उदित चन्द्रको हंसरूप खिलौना समझकर 'मेरा खिलौना हंस दो' इस प्रकार हठ करने लगा और उसे किसी प्रकार शान्त नहीं कर सकनेके कारण वह स्त्री बहुत रोयी, किन्तु उसकी आँसुओंकी बूंदोंमें प्रतिबिम्बित चन्द्रको समीपमें देखकर 'यह मेरा खिलौना हंस ही है' ऐसा समझकर प्रसन्न होता हुआ बालक हँसने लगा, उसे देख किसी प्रकार इस दुराग्रही बालकसे छुटकारा पानेसे वह हँसी और छोड़ी गई पूर्व सम्पत्तिके स्मरण आनेसे 'तुम्हारा खिलौना हंस यहां कहां ? व्यर्थमें भ्रान्त हो गये हो' ऐसा विचार आनेपर उसने लम्बा श्वास लिया ]॥ २८ ॥

अस्मिन् दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति
कम्पं सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा ।
अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं निजः
पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २९ ॥

अस्मिन्निति । अस्मिन् महेन्द्रनाथे, दिग्विजयोद्यते सति, रिपुक्षोणीन्द्राणां दाराः कलत्रभूताः, धरा अयं महेन्द्रनाथ एव, मे मम, पतिः स्तात् अस्तु, अस्तेर्लोटि 'तुह्योस्तातङ्' इति तु स्थाने तातङादेशः 'श्नसोरल्लोपः' इति अकारलोपः, इति ध्यायति सङ्कल्पयति, कम्पं कम्पाख्यं सात्त्विकभावम् , अञ्चति प्राप्नोति, औत्पातिके भूकम्पे सात्त्विकोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या; किञ्चास्यैव समरे अभिमुखं निपत्य आगत्य, ऊर्ध्वम् ऊर्ध्वलोकं, यास्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्यमण्डले, बिलमयः छिद्ररूपः, निजः पन्था दृश्यते; आसन्नमृत्योः आदित्यमण्डलं सच्छिद्रमिव दृश्यते इत्यागमः। अत्र आत्मीयोर्ध्वगमनमार्गत्वोत्प्रेक्षा पूर्ववत् गम्या। 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति ॥२९॥

इस ( महेन्द्रनाथ ) के दिग्विजयके लिए तैयार होनेपर 'यह मेरा स्वामी हो' ऐसा ध्यान करती हुई शत्रु राजाकी स्त्री ( वशीभूता ) पृथ्वी कम्परूप सात्त्विक भाव ( पक्षा०— दूसरे स्वामी होनेका सूचक भूकम्प ) को प्राप्त करती है ( दूसरे नवीन पतिको चाहनेवाली स्त्रीमें कम्परूप सात्त्विक भाव ( पक्षा०—राजपरिवर्तनादि उत्पातसूचक भूकम्प ) होना शास्त्रोंमें वर्णित है ) युद्धमें इसीके ( अथवा—इसीके युद्धमें ) सामने गिर ( मर ) कर ऊपर ( स्वर्गलोक ) को जाते हुए शत्रु राजा लोग सूर्यमें बिलरूप अपना ( अपने जानेका ) मार्ग

देखते हैं। [ इसी प्रकार 'समरमें सामने मरने पर सूर्यलोकका भेदनकर वीर स्वर्गको प्राप्त करते हैं' ऐसा शास्त्रीय वचन होनेसे वे सूर्यमें विलरूप अपना मार्ग देखते हैं। पक्षा०— आसन्न मृत्युवाले व्यक्तिको सूर्यमें विल दिखलायी पड़ता है, यह भी शास्त्रीय वचन होनेसे युद्धमें मारे जानेवाले शत्रुराजाओंको सूर्यमें विल दिखलायी देना उचित ही है ]॥ २९॥

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात् कोऽपि निवर्त्तते यदि भटः कीर्त्या जगत्युद्भटः।
आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ
द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः॥ ३०॥

विद्राणे इति। समस्ते अरिगणे त्रस्ते रणचत्वरात् रणाङ्गणात्, विद्राणे विद्रुते सति, विद्रातेः कर्त्तरि क्तः, 'संयोगादेरातो धातोर्यण्वितः' इति निष्ठा-तकारस्य नत्वम्, कीर्त्या जगति उद्भटः प्रसिद्धः, कोऽपि तेषामरिगणानां मध्ये कोऽपीत्यर्थः, भटः कोपात् पुनर्निवर्त्तते यदि, तदा सम्मुखम् अभिमुखम्, आगच्छन् अपि असौ भटः, द्राक् सपदि, एतस्य छुरिकायाः शस्त्रविशेषस्य, रयेण ठणिति कश्चिदनुकरण-शब्दः, तद्यथा तथा छिन्नम् अपसर्पत् अपगच्छत्, शिरो यस्य स तादृशः सन् विमुखतां पराङ्मुखत्वमेव, अधिगच्छति। अत्र सम्मुखागतस्य विमुखत्वमिति विरोधः, विगतमुखत्वमिति तदर्थतया विरोधपरिहाराद्विरोधाभासोऽलङ्कारः॥ ३०॥

डरने तथा रणाङ्गणसे समस्त शत्रु-समूहके भगने पर फिर क्रोधसे कीर्तिके द्वारा संसारमें प्रसिद्ध अर्थात् जगत्प्रसिद्ध कीर्तिवाला यदि कोई शूरवीर लौटता है तो आता हुआ भी वह ( शत्रु शूरवीर राजा ) इसके कटारसे झट 'ठन्' शब्द करते एवं कटे तथा नीचे गिरते हुए मस्तकवाला वह ( शूरवीर शत्रु ) विमुखता ( पक्षा०—मुखहीनता ) को ही प्राप्त करता है। [ लोक प्रसिद्ध शूरवीरका भी झट शिर काट कर विमुख ( मुखहीन ) करनेवाले इस महाशूर महेन्द्रनाथ का वरण करो ]॥ ३०॥

ततस्तदुर्वीन्द्रगुणाद्भुतादिव स्ववक्त्रपद्मेऽङ्गुलिनालदायिनी।
विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितैव ताम्॥ ३१॥

तत इति। ततस्तद्दर्शनानन्तरं, तस्य उर्वीन्द्रस्य महेन्द्रनाथस्य, गुणेषु अद्भुतात् आश्चर्यावेशादिव, वस्तुतस्तु अनादरादिति भावः, स्ववक्त्रपद्मे अङ्गुलिमेव नालं पद्मदण्डं ददातीति तद्दायिनी, पद्मस्य नालाविनाभावादिति भावः; सा दमयन्ती, वैदग्ध्यमयं चातुर्यप्रचुरम्, इङ्गितं चेष्टितं यस्याः सैव सती, तां सरस्वतीम्, आनन-मुद्रणा मौनं, विधीयतामिति जगाद, वाक्यमन्तरेणैव मुखे अङ्गुलिदानरूपा निज-मुखमुद्रैव तस्याः सरस्वतीं प्रति मौनोपदेशोऽभूदित्यर्थः; विदग्धा हि स्वेङ्गितेनैव परं बोधयन्तीति भावः। वचननिषेधार्थं आश्चर्यरसाभिनयार्थञ्च लोकैर्मुखेऽङ्गुलिर्दीयते।

सरस्वत्यास्तद्वर्णननिषेधार्थं भैम्याः स्वमुखेऽङ्गुलिदानं तद्गुणाद्भुतादिवेति उत्प्रेक्षितं लोकैरिति भावः। अत्रोत्प्रेक्षालङ्कारः ॥ ३१ ॥

इस ( सरस्वतीके ऐसा ( १२।२४-३० ) वर्णन करने ) के बाद मानो उस ( महेन्द्राधिपति ) राजाके गुणसे उत्पन्न आश्चर्यसे अपने मुखरूपी कमलपर अङ्गुलिरूपी कमलनाल स्थापित की हुई तथा चातुर्यपूर्ण चेष्टावाली उस दमयन्तीने 'मुख बन्द कर लो' ऐसा उस सरस्वती देवीसे कहा। [ लोकमें भी आश्चर्यित या किसीको चुप रहनेके लिए सङ्केत करनेवाला व्यक्ति मुख पर अङ्गुलि रखता है, अत एव दमयन्तीका वैसा करना सरस्वतीके लिए ' बहुत गुणवाले इस राजाके गुणोंका वर्णन नहीं किया जा सकता, अतः चुप रहो' ऐसा सङ्केत हुआ तथा दर्शकोंके लिये इस राजाके अधिक गुणोंसे दमयन्तीका आश्चर्यित होना उचित हुआ। कमलमें नालका होना उचित ही है। उक्त सङ्केतसे सरस्वती देवीको चुप होनेका सङ्केत कर दमयन्तीने उस महेन्द्रके राजामें अपनी अरुचि प्रकट की ] ॥ ३१ ॥

अनन्तरं तामवदन्नृपान्तरं तदध्वदृक्तारतरङ्गरिङ्गिणा ।
तृणीभवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलम् ॥ ३२ ॥

अनन्तरमिति। अनन्तरं तद्वर्णननिषेधावगत्यनन्तरं सरस्वती तस्य नृपान्तरस्य, अध्वनि दिशि, दृशोः तारतरङ्गरिङ्गिणा नयनव्यापारप्रौढोर्मिरचना यस्याः सा सती, नृपान्तरं दृशा निर्दिशन्तीत्यर्थः, तां दमयन्तीं, तृणीभवन् पुष्पशरो यस्य तं तृणीकृतमन्मथं, स्वस्य तीव्रेण तेजसा परिभूतं भूतलं येन तं, नृपान्तरम् अन्यं नृपं, लक्षीकृत्य इति शेषः, अवदत्। ब्रुविसामानार्थकत्वात् द्विकर्मकत्वम् ॥ ३२ ॥

इस ( मन्दरस्वामीमें दमयन्तीके अनिच्छा प्रकट करने ) के बाद उस ( दूसरे राजा ) की ओर नेत्रसे सङ्केत करती हुई सरस्वती ( शरीर-शोभासे ) तृण ( के समान अतिशय हीन ) होते हुए कामदेववाले तथा अपने तीव्र तेजसे भूतलको तिरस्कृत किये हुए दूसरे राजाको लक्षितकर उस ( दमयन्ती ) से बोली ॥ ३२ ॥

तदेव किन्नु[1] क्रियते न ? का क्षतिः ? यदेष तद्दूतमुखेन काङ्क्षति ।
प्रसीद काञ्चीमयमाच्छिनत्तु ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥ ३३ ॥

तदिति। हे भैमि ! एष काञ्चीपुरभूपुरन्दरः काञ्चीनगरालङ्कृतदेशाधीश्वरः, तस्य त्वां प्रति प्रेषितस्य, दूतस्य मुखेन यत् त्वद्वरणादिकं, काङ्क्षति, तत् काङ्क्षितमेव, किं नु कथं, न क्रियते ? त्वयेति शेषः, अपि तु कर्त्तव्यमेव तदित्यर्थः, का क्षतिः ? तत्करणे तव का हानिः ? प्रत्युत श्रेय एवेति भावः ; अथ तत्काङ्क्षितमेव विज्ञापयति, अयं काञ्चीपतिः, ते नवसङ्गमे लज्जितायाः तव इति भावः, काञ्चीं वसनबन्धदाढ्यार्थं बद्धां मेखलां, प्रसह्य बलात्, आच्छिनत्तु आच्छिद्य गृह्णातु,

1. 'किन्न क्रियते नु' इति पा० ।

काञ्चीपतेः वलपूर्वकं काञ्चीग्रहणस्य उचितत्वादिति भावः, अत एव प्रसीद प्रसन्ना भव, अनुमन्यस्वेत्यर्थः ॥ ३३ ॥

वही क्यों नहीं करती हो ? जो यह उस ( पहले भेजे हुए ) दूतके मुखसे चाहता है, क्या हानि है ? अर्थात् कोई हानि नहीं, अपितु लाभ ही है। प्रसन्न होवो ( इसे वरण करो, जिससे ) यह काञ्चीपुरीका राजा तुम्हारी काञ्ची ( करधनी ) को ( रतिकालमें ) ढीला करे ( अथवा—अधीरताके कारण गांठ खोलनेके विलम्बको नहीं सह सकनेसे तोड़े ) [ काञ्चीपतिका 'काञ्ची' पर पूर्णाधिकार होनेसे वैसा करना उचित ही है ] ॥ ३३ ॥

मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते ।
इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद् द्विषः ॥ ३४ ॥

मयीति । अयं काञ्चीपतिः, चापं दधत् आशुगं वाणं, क्षिपन् सन् द्विषः शत्रून्, मयि मत्समीपे, नम्रतयैव अवनतया एव प्रणतया च, स्थितिः अवस्थानं, स्वराज्ये प्रतिष्ठा इत्यर्थः, लभ्यते, स्तब्धतया अनम्रतया तु, दिगेव विलङ्घ्यते अतिक्रम्यते, स्वराज्यं त्यक्त्वा दिगन्तरं गम्यते इत्यर्थः, इति नयं नीतिं, सम्यक् उपादिशदिव, ब्रुव्यर्थत्वात् द्विकर्मकः, उभयत्रापि युष्माभिरिति शेषः। धनुर्वाणदृष्टान्तेन द्विषां नम्रत्वे स्वराज्ये स्थितिः, अन्यथा स्वराज्यं त्यक्त्वा दिगन्तरगमनमिति वचनं विनैवोपादिशदिवेत्युत्प्रेक्षा ॥ ३४ ॥

मुझमें अर्थात् मेरे पासमें नम्रभावसे ही स्थिति ( अपने राज्यमें निवास ) हो सकती है, स्तब्धता ( कठोरता—नहीं झुकने ) से दिशा ही लांघनी पड़ेगी धनुषको धारण करते हुए और वाणको फेंकते हुए इस ( काञ्चीपुरीनरेश ) ने शत्रुओंको मानो नीतिका उपदेश दिया। [ जिस प्रकार मैं झुकनेवाले धनुषको अपने पास रखता तथा कठोर होनेवाले वाणको दिशाके अन्त अर्थात् बहुत दूर तक फेंक देता हूं, उसी प्रकार जो राजा मेरे सामने नम्र होगा ( प्रणामकर मेरी आज्ञा मानेगा ), वहीं अपने राज्यमें ठहर सकेगा और जो कठोर होगा ( अकड़ दिखायेगा ) उसे मैं दिशाके अन्तमें फेंक दूंगा अर्थात् कहीं शरण नहीं मिलनेसे उसे दिगन्तमें ( बहुत दूर ) भागना पड़ेगा, ऐसी अपनी नीतिको यह काञ्चीपुरीका राजा नम्र धनुषको पासमें रखना तथा स्तब्ध रहनेवाले वाणको सुदूर फेंकता हुआ शत्रुओंको उपदेश-सा दिया है ] ॥ ३४ ॥

अदःसमित्सम्मुखवीरयौवतत्रुटद्भुजाकम्बुमृणालहारिणी ।
द्विषद्व्रणक्षैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ ३५ ॥

अद इति । अस्य काञ्चीपतेः, यशसामेव मरालानां हंसानाम्, आवलिः श्रेणी, अमुष्य भूपतेः, समित्सु युद्धेषु, सम्मुखानां वीराणां यानि यौवतानि युवतीसमूहाः, 'गार्भिणं यौवतं गणे' इत्यमरः। 'भिक्षादिभ्योऽण्' इति युवतिशब्दस्य भिक्षादिपाठात् समूहार्थेऽण्-प्रत्ययः, 'भस्याढे तद्धिते' इति पुंवद्भावश्च, तेषां वैधव्यवशात् त्रुट्यन्ति

अरयन्ति, भुजाभ्यः यानि कम्बूनि शङ्खवलयानि, 'शङ्खः स्यात् कम्बुरस्त्रियाम्' इत्यमरः, तान्येव मृणालानि तानि हरतीति तद्धारिणी सती द्विषद्गणस्य तदीयारिवर्गस्य, स्त्रैणे स्त्रीसम्बन्धिनि, दृगम्बुनिर्झरे नेत्रजलप्रवाहे, खेलति क्रीडति। 'स्त्रीणां पुंसाञ्च यत्किञ्चित् स्त्रैणं पौंस्नमिति क्रमात्' इति कोषः। 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्। रूपकालङ्कारः ॥ ३५ ॥

इस ( काञ्चीनरेश ) के युद्धके संमुख आये हुए वीरोंकी स्त्रियोंके समूहके ( पतियोंके मारे जानेसे विवश होनेके कारण ) टूटते हुए भुजाओंके शङ्खवलयरूप मृणालको हरण ( नष्ट—दूर ) करनेवाली इस राजाकी कीर्तिरूपी मरालपङ्क्ति शत्रुसमूहके स्त्रीसम्बन्धी आँसुओंके ( या आँसूरूपी ) झरनेमें क्रीडा करती है। [ जिस प्रकार हंसपङ्क्ति मृणालको खाकर नष्ट तथा झरनेमें क्रीडा करती है, उसी प्रकार इस राजाकी कीर्ति युद्धमें शत्रुओंको मारकर उनकी विधवा स्त्रियोंको शङ्खभूषण-कङ्कणको नष्ट ( दूर ) करती तथा उन्हें रुलाकर आँसुओंका निरन्तरप्रवाह करनेके समान बहवाती है, यह राजा महापराक्रमी है, अत एव इसका वरण करो ] ॥ ३५ ॥

सिन्दूरद्युतिमुग्धमूर्द्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति ।
जानीमोऽनु यदि प्रदोषतिमिरव्यामिश्रसन्ध्याधियै-
वास्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ ३६ ॥

सिन्दूरेति। सिन्दूरं 'सिन्दूरं नागसम्भवम्' इत्यमरः। तस्य द्युतिभिः मुग्धमूर्द्धनि सुन्दरमस्तके, धृता स्कन्धोऽवधिः यस्याः सा श्यामिका येन तस्मिन्, स्कन्धपर्यन्तश्यामले तत उपरि सिन्दूराल्ले इत्यर्थः, व्योमान्तस्पृशि उच्चतया अभ्रङ्कषे, अस्य काञ्चीपतेः, सिन्धुरे गजे, समरारम्भेषु उद्धुरे निर्भरे, अनर्गले इत्यर्थः, 'ऋक्पूरब्धूः—' इत्यादिना समासान्तः, धावति अभिमुखागते सति, अनु अनन्तरं, समस्तबाहुजानां समस्तक्षत्रियाणां, भुजातेजांसि भुजप्रतापा एव, सहस्रांशवः सूर्याः, प्रदोषतिमिरेण सह व्यामिश्रसन्ध्यायाः मिलितसन्ध्यायाः, धिया बुद्धया एव, भ्रान्त्या एव इत्यर्थः, अस्तं यान्ति इति जानीमः यदि, यदि शब्दः सम्भावनायां, श्यामारुणसिन्धुरे तिमिरमिश्रसन्ध्याभ्रान्त्यैव ते अस्तं यान्ति इति सम्भावयामः किम्? इति उत्प्रेक्षालङ्कारः ॥ ३६ ॥

सिन्दूरकी ( पक्षा०—सिन्दूरके समान, अरुण वर्ण ) कान्तिसे मनोहर मस्तकवाले, स्कन्धतक काले वर्णवाले और आकाशस्पर्शी अर्थात् अत्यन्तविशालकाय, इस ( 'काञ्ची' नरेश ) के समरके आरम्भमें उत्कट ( या निर्भय ) हाथीके दौड़ते रहने पर यदि सम्पूर्ण क्षत्रियोंके बाहु ( के प्रताप ) तेजोरूप सूर्य अस्त अर्थात् नष्ट होते ( पक्षा०—अस्ताचलको जाते ) हैं तो हम जानते हैं कि वे सायङ्कालके अन्धकारसे युक्त सन्ध्याके भ्रमसे अस्त (नष्ट)

होते ( पक्षा०—अस्ताचलको जाते ) हैं। [ सायङ्कालमें अरुण वर्णसे मिश्रित अन्धकार फैलने पर सूर्य अस्त हो जाता है; प्रकृतमें इस राजाके हाथियोंके मस्तकमें सिन्दूर लगा है, बहुत बड़े-बड़े तथा काले हाथी युद्धारम्भमें दौड़ने लगते हैं तो सम्पूर्ण राजाओंके बाहुजन्य तेज नष्ट हो जाते हैं—वे राजा उक्तरूप हाथियोंको देखकर युद्धभूमिसे भाग जाते या इस राजाके शरणमें आ जाते हैं ] ॥ ३६ ॥

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-
सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम् ।
उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥ ३७ ॥

हित्वेति । श्रीः लक्ष्मीः, स्वभवनं निजनिवासं, दैत्यरिपोः विष्णोः, उरः शून्यत्वदोषेण लक्ष्म्यास्त्यागजन्यरिक्ततादोषेण, स्फुटमासीदन्तः प्रत्यासीदन्तः, ये मर्कटकीटास्तन्तुवायकीटाः,'लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' इत्यमरः, तेषां सम्बन्धि यत् कृत्रिमसितच्छत्रं सितच्छत्राकारं लूतातन्तुवितानमण्डलं, तथाभवन् तद्रूपीभवन्, कौस्तुभः तदाख्यो मणिः यस्मिन् कर्मणि तद्यथा भवति तथा हित्वा, निजसद्म नित्यनिवासभवनं, तत् प्रसिद्धं, पद्ममपि लूतातन्तुभिः व्यक्तम् अवनद्धीकृतं बद्धं यथा तथा, उज्झित्वा अद्य सम्प्रति, अस्य भुजयोरन्तर्विश्राम्यति । अत्रैकस्याः श्रियः क्रमेणानेकाधारवृत्त्याक्त्या पर्यायालङ्कारभेदः, तेनैव तद्भुजयोः श्रीरञ्जने विष्णूरःपद्माभ्यामप्यधिकं वस्तु व्यज्यते ॥ ३७ ॥

आज लक्ष्मी शून्य ( लक्ष्मी रहित ) होनेसे स्पष्ट रूपसे स्थिर होते हुए मकड़ीके जालेके बने श्वेतच्छत्रके समान कौस्तुभ मणिवाले विष्णुके हृदय तथा मकड़ियोंके जालोंसे स्पष्टरूपसे बँधे हुए कमल—इन दोनों अपने घरों ( निवासस्थानों ) को छोड़कर इस 'काञ्चीपति' के बाहुद्वयमें विश्रामकर रही है। [ लक्ष्मीके रहनेके दो स्थान प्रसिद्ध हैं—एक विष्णुका हृदय तथा दूसरा कमल; किन्तु अतिशय दूरस्थ तथा भिन्न-भिन्न स्थानों में निवास करनेमें अधिक प्रयास होनेके कारण लक्ष्मीने उन दोनों स्थानोंको छोड़कर आज इस काञ्चीनरेशके बाहुद्वयमें विश्राम ( सुखपूर्वक निवास ) कर रही है। उन दोनों पूर्व निवास स्थानोंमें-से प्रथम विष्णुका वक्षःस्थल लक्ष्मीरहित होनेसे मकड़ीके जालेके बने सफेद छातेसे कौस्तुभ मणिवाला है तथा द्वितीय कमल मकड़ीके जालोंसे स्पष्ट ही व्याप्त हो रहा है। जिस स्थानको वहांका रहनेवाला छोड़कर चला जाता है वह मकड़ीके जालोंसे भर जाता है यह अनुभव सिद्ध बात है। प्रकृतमें लक्ष्मीने विष्णुके हृदयरूप अपने प्रथम निवासस्थानको छोड़ दिया, अत एव वहां कौस्तुभमणिके किरण श्वेतच्छत्राकार हो रहे हैं उन्हें मकड़ीका जाला माना गया है तथा द्वितीय निवासस्थान कमलको लक्ष्मीने छोड़ दिया है वहां कमल में प्राकृतिक रूपसे रहनेवाले तन्तुको मकड़ीका जाला माना गया है। विष्णुके हृदय

तथा कमलका लक्ष्मी द्वारा त्याग करनेसे इस राजाका महाप्रतापी होना व्यक्तकर सरस्वती देवीने दमयन्तीसे उसका वरण करनेका सङ्केत किया है ] ॥ ३७ ॥

सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः ? ।
यद्विन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो
यस्यासौ जलदेवतास्फटिकभूर्जागर्त्ति यागेश्वरः ॥ ३८ ॥

सिन्धोरिति । अयं काञ्चीपतिः, सिन्धोरब्धे, जैत्रं जेतृ, जयशीलमित्यर्थः, ततोऽप्यधिकमिति भावः, जेतृशब्दात् तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण्-प्रत्ययः, पवित्रं पावनं, तत्तथा प्रसिद्धं, कीर्त्तिरेव पूर्त्तं खातं, 'न ध्याख्यापृमूर्च्छिमदाम्' इति निष्ठातस्य नत्वप्रतिषेधः तदेवाद्भुतमसृजत्, यत्र पूर्त्ते, जगन्ति लोकाः, स्नान्ति, यत्र यस्मिन् विषये, के वा कवयः कवयितारः, वाचं यच्छन्तीति वाचंयमाः नियतवाचः, न सन्ति ? सर्वेऽपि मौनिनो भवन्ति वर्णयितुमशक्यत्वादित्यर्थः 'वाचि यमो व्रते' इति खच्-प्रत्ययः। 'वाचंयमपुरन्दरौ च' इति निपातनात्मुमागमः, इन्दुः यस्य पूर्त्तस्य, बिन्दुश्रियमञ्चति प्राप्नोति, तदपेक्षया अल्पत्वात् इन्दुः यदीयो बिन्दुरिवेति भावः, असौ इन्दुः, यस्य जलञ्चाविश्य दृश्येतरः सावर्ण्याददृश्यः, जलदेवता आप्यशरीरदेवताविशेषश्चासौ स्फटिकाद्भवतीति स्फटिकभूः स्फटिकोद्भवः, यागेश्वरः सन् जागर्त्ति; स्फटिकलिङ्गे यागेश्वर इति प्रसिद्धिः ॥ ३८ ॥

यह ( काञ्चीनरेश ) समुद्रको जीतनेवाला तथा पवित्र कीर्तिरूपी जो तडाग-तद्रूप आश्चर्यका निर्माण किया, जिस ( कीर्तिरूपी तडाग ) में संसार स्नान करते ( श्वेत होते ) हैं और कौन कवि ( वर्णन करनेमें असमर्थ होनेसे ) मौन नहीं होते अर्थात् सभी मौन हो जाते हैं ( अथवा—जिसमें जलमें पक्षी तथा कौन से तपस्वी नहीं हैं अर्थात् उस कीर्तिरूपी तडागमें सभी पक्षी तथा तपस्वी हैं ), चन्द्र जिस ( कीर्तिरूपी तडाग ) को बूँदकी शोभाको पाता है, यह ( चन्द्र ) जलमें प्रवेशकर अदृश्य होकर ( जलमें प्रवेश किये हुएका ( अथवा कीर्ति तथा चन्द्रका समान वर्ण होनेसे कीर्ति तडागमें चन्द्रका ) अदृश्य हो जाना उचित ही है ) जलदेवता ही स्फुरित होता है और स्फटिक रचित यागेश्वर ( शिवविशेष ) ही स्फुरित होता है । ( अथवा—जिस कीर्ति-तडागकी बिन्दुशोभाको चन्द्र प्राप्त करता है अर्थात् बिन्दु ही चन्द्र है । अथवा—जलमें प्रवेशकर अदृश्य होकर स्फटिक भूमिवाला ( कैलाश ) ही ( स्फटिकरूप ) यागेश्वररूप जलदेवता ही स्फुरित होता है ( जलके भीतर डूबनेपर स्फटिक दिखलाई नहीं पड़ता, अतः स्फटिक भूमिवाले कैलासका भी दिखलायी नहीं पड़ना उचित ही है, यागेश्वर स्फटिकके हैं ऐसा शास्त्रवचन है ) । अथवा—जलमें प्रवेशकर चन्द्र ही स्फटिक निर्मित जलदेवता यागेश्वर ही स्फुरित होता है । अथवा—यह ( प्रसिद्ध नाम ) जलदेवता स्फुरित होती है जो स्फटिक भूमिवाला अगेश्वर ( पर्वतराज

अर्थात् कैलास है)। [ 'समुद्रं पर्वणि स्पृशेत्' अर्थात् 'समुद्रका स्पर्श पर्वदिनमें करे' इस शास्त्रीय वचनके अनुसार समुद्र पर्वातिरिक्त दिनोंमें अपवित्र तथा इस राजाका कीर्तितडाग सदा पवित्र है, समुद्रमें पृथ्वीपर निवास करनेवाले कुछ ही अर्थात् समुद्रतटवासी या वहां जानेका प्रयास करनेवाले ही व्यक्ति स्नान कर सकते हैं, किन्तु इस राजाके कीर्तितडागके सर्वत्र व्याप्त होनेसे लोकत्रयके निवासी अनायास ही स्नान करते हैं, समुद्रका वर्णन शक्य है और इसके कीर्तितडागका वर्णन अशक्य है, समुद्रसे एक ही चन्द्र निकलता है और इसके कीर्तितडागमें प्रत्येक विन्दु चन्द्र है, समुद्रमें श्यामवर्ण श्रीविष्णुरूप जलदेवता सुप्त रहते हैं, इसके कीर्तितडागमें श्वेतवर्ण यागेश्वररूप जलदेवता जागते रहते हैं; अतएव समुद्रकी अपेक्षा इस काञ्चीनरेशका बनाया गया कीर्तितडाग उत्तम तथा आश्चर्यजनक है। ऐसा कीर्तिमान् कोई नहीं है, अत एव इसको वरण करो ]॥ ३८॥

**अन्तःसन्तोषवाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्यन्**
**नाङ्गेनानस्तिलोमाऽऽरचयति पुलकश्रेणिमानन्दकन्दाम्।**
**न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः**
**शृण्वन्नेतस्य कीर्त्तीः कथमुरगपतिः प्रीतिमाविष्करोति ?॥ ३९॥**

अन्तरिति। एतस्य राज्ञः, कीर्त्तीः शृण्वन् उरगपतिः शेषः, ताभिः दृग्भिः, आकर्णयिष्यन् श्रोष्यन्, अत एवान्तःसन्तोषवाष्पैः दृशः न स्थगयति नाच्छादयति, अन्यथा चक्षुःश्रवसोऽस्य रूपग्रहणवच्छब्दग्रहणस्यापि तैः प्रतिबन्धसम्भवादिति भावः; यतः सः अङ्गेन वपुषा, 'येनाङ्गविकारः' इति तृतीया, अङ्गे नेति पाठे—यतः सः अङ्गे वपुषि; अस्तिलोमा न भवतीति अनस्तिलोमा अविद्यमानलोमा; अस्तीत्यव्ययं विद्यमानपर्यायः, तस्य सम्बन्धि अस्तिक्षीरादिवचनात् बहुव्रीहिः, अत एव आनन्दकन्दाम् आनन्द एव कन्दो मूलं यस्याः ताम् आनन्दजनितां, पुलकश्रेणिं न आरचयति, तथा क्षोणीभङ्गभीरुः पृथिवीपतनभीतः, शिरःकम्पनञ्च, सन्तोषसूचकमिति भावः, न कलयति, तत्तस्मात्, कथं केन प्रकारेण, प्रीतिमाविष्करोति ? उरगपतिरिति शेषः, इति न विद्मः, वाक्यार्थः कर्म॥ ३९॥

इस (काञ्चीनरेश) की कीर्तिओंको सुनते हुए शेषनाग हार्दिक सन्तोषजन्य अश्रुओंसे नेत्रोंको नहीं बन्द करते, क्योंकि उन्हीं (नेत्रों) से कीर्तिओंको सुनना है, रोमरहित वे शरीरमें आनन्दाङ्कुररूप रोमाञ्च-समूहको नहीं धारण करते और पृथ्वीके गिरनेसे भयभीत वे शिरको नहीं कँपाते; अत एव वे किस प्रकार अपना प्रेम प्रकट करते हैं यह हम नहीं जानते। [ हर्षाश्रु-रोमाञ्च तथा शिरःकम्पन—ये तीन चिह्न हर्ष-सूचक हैं, किन्तु सर्पोंको कान नहीं होता, वे नेत्रसे ही सुनते भी हैं, कर्णरहित नेत्रसे सुननेवाले शेषनाग इसकी कीर्तिको सुननेके लोभसे नेत्रोंसे आंसू नहीं गिराते, सर्वशरीर रोमरहित होता है अतः वे

१. 'नङ्गे तानस्तिरोमा रचयति' इति० पा०।

रोमाञ्च नहीं धारण करते और मस्तकपर पृथ्वी रखे हुए वे भूमिके गिरनेके भयसे मस्तक भी नहीं कँपाते, इस प्रकार हर्षसूचक तीनों चिह्नोंके न कर सकनेके कारण वे शेषनाग इस राजाकी कीर्ति सुनकर किस प्रकार हर्ष प्रकट करते हैं सो हम नहीं समझपाते ] ॥३९॥

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यकाण्डानयं
संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
सा सेवाऽस्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत्कुच-
स्पर्द्धागर्द्धिषु तेषु तान् धृतवते दण्डान् प्रचण्डानपि ? ॥ ४० ॥

आचूडेति । जये पटुः समर्थः, अयं राजा, संरम्भे सङ्ग्रामे, रिपुराजकुञ्जरघटानां प्रतिपक्षभूपहस्तिसमूहानां, कुम्भस्थलेषु स्थिरान् दृढान्, शल्यकाण्डान् शरकाण्डान्, आचूडाग्रम् आपुङ्खमुखम्, अमज्जयत् निखातवान्, इति यत् सा अस्य राज्ञः कर्त्तुः, पृथुर्महती, सेवा, तवेति शेषः; तया सेवया, त्वत्कुचाभ्यां सह स्पर्द्धागर्द्धिषु साढरयात् मत्सरगृध्नुषु, तेषु कुञ्जरकुम्भेषु अपराधिषु, प्रचण्डान् उग्रान्, तान् दण्डान् धृतवतेऽपि अस्मै राज्ञे, कुतो न प्रसादसि ? एनं वृणीष्व इति भावः ॥ ४० ॥

युद्धमें विजयचतुर इस ( काञ्चीनरेश ) ने शत्रु राजाओंके हाथियोंके समूहके ( मस्तकस्थ ) कुम्भस्थलमें स्थिर बाणरूप दण्डोंको जो पुङ्खाग्रतक मग्नकर ( घुसा ) दिया, वह इस ( काञ्चीनरेश ) की ( तुम्हारे लिए की गयी ) बड़ी सेवा है, उस ( सेवा ) से तुम्हारे स्तनों के साथ स्पर्द्धा करनेमें लोभी अर्थात् अधिक स्पर्द्धा करने वाले उन ( कुम्भस्थलों ) में प्रचण्ड दण्डोंको धारण करते ( कठोर दण्ड देते ) हुए इस ( काञ्चीनरेश ) के लिये तुम क्यों नहीं प्रसन्न होती हो ? अर्थात् तुम्हें प्रसन्न होना चाहिये । [ लोकमें भी प्रतिस्पर्द्धी व्यक्तिको दण्डित करनेवाले व्यक्तिपर प्रसन्नता होती है । यह काञ्चीनरेश महाशूर है, अतः इसका वरण करो ] ॥ ४० ॥

स्मितश्रिया सृक्कणि लीयमानया वितीर्णया तद्गुणशर्मणेव सा ।
उपाहसत् कीर्त्यमहत्त्वमेव तं गिरां हि पारे निषधेन्द्रवैभवम् ॥ ४१ ॥

स्मितेति । सा भैमी तस्य काञ्चीपतेः, गुणशर्मणा इव गुणश्रवणजन्यसुखेनेव, वस्तुतस्तु अनादरादिति भावः; वितीर्णया विसृष्टया, सृक्कणि अधराञ्चले, लीयमानया सङ्कुचन्त्या, स्मितश्रिया मन्दहासप्रभया, कीर्त्यं वर्णयितुं शक्यं, महत्त्वं यस्य तमेव वाच्यमानमहत्त्वमेव, तं काञ्चीपतिम्, उपाहसत् उपहसितवती; हि यतः, निषधेन्द्रवैभवं नलमाहात्म्यम्, गिरां पारे वागविषयो न भवतीत्यर्थः; नलमाहात्म्यं वर्णनातीतम् अस्य तु वर्णनासाध्यम्, अतो नलापेक्षया न्यूनत्वात् तमुपहसितवतीति भावः । अत्र नलानुरागाख्येन कारणेन एतदपरागरूपकार्यसमर्थनात् तद्रूपार्थान्तरन्यासः ॥

वह दमयन्ती मानो उस ( काञ्चीनरेश ) के गुणोंके ( सुननेसे उत्पन्न ) सुखसे की गयी तथा ओष्ठप्रान्तमें लीन होती हुई स्मित-शोभासे वर्णनीय महत्त्ववाले उस ( काञ्चीनरेश )

को हंसी अर्थात् उसका उपहास किया; क्योंकि निषधराज (नल) का ऐश्वर्य वचनातीत (नहीं वर्णन करसकने योग्य) है । [वर्णनमें अशक्य ऐश्वर्यवाले निषधराज नलसे वर्णन किये जा सकनेवाले इस काञ्चीनरेशके हीन होनेके कारण सरस्वती-वर्णित काञ्चीनरेशका दमयन्तीने उपहास कर दिया ] ॥ ४१ ॥

**निजाक्षिलक्ष्मीहसितैणशावकामसावभाणीदपरं परन्तपम् ।**
**पुरेव[1] तद्दिग्वलयश्रियो भुवा भ्रुवा विनिर्दिश्य सभासभाजितम् ॥४२॥**

**निजेति । असौ सरस्वती, सभासु सभाजितं पूजितं, परन्तपं रिपुतापकं, 'द्विषत्परयोस्तापेः' इति खच्-प्रत्ययः, 'खचि ह्रस्वः' इति ह्रस्वः, 'अरुर्द्विषदजन्तस्य-' इति मुम् , अपरमन्यं नृपं, पुरेव पूर्ववत् , तस्य राज्ञः, दिशो वलये या श्रीः तस्या भुवा स्थानेन, तद्दिग्वलितयेत्यर्थः, भ्रुवा दृशः ऊर्ध्वावयवेन, 'ऊर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ' इत्यमरः, विनिर्दिश्य निजाक्षिलक्ष्म्या स्वनेत्रशोभया, हसितैणशावकाम् उपहसितमृगशावकां, विशालतया अधःकृतमृगाक्षीमित्यर्थः, भैमीमिति शेषः, अभाणीत् बभाण ॥**

वह सरस्वती देवी पहलके समान (पाठा०—पहले ही) उस (दिखाये जानेवाले राजा) की ओर सञ्चालित भ्रूसे सभामें श्रेष्ठ एवं शत्रुको सन्तप्त करनेवाले दूसरे राजाको निर्देश करके अपने नेत्रोंकी शोभासे मृगके बच्चे (की आंख) को हंसनेवाली अर्थात् मृगके बच्चेके नेत्रोंसे सुन्दर नेत्रवाली उस (दमयन्ती) से बोली ॥ ४२ ॥

**कृपा नृपाणामुपरि क्वचिन्न ते नतेन हाहा शिरसा रसादृशाम् ।**
**भवन्तु तावत्तव लोचनाञ्चला निपेयनेपालनृपालपालयः ॥ ४३ ॥**

**कृपेति । हे भैमि ! नतेन अवनतेन, शिरसा रसां भुवं पश्यन्तीति तेषां रसादृशाम् अधःपश्यतां, त्वत्कृतप्रत्याख्यातात् लज्जया अधोमुखानामित्यर्थः, नृपाणामुपरि ते तव, क्वचित् कुत्रापि, कृपा न, हाहेति खेदे; तव लोचनाञ्चलाः कटाक्षाः, निपेया ग्राह्या, नेपालनृपालस्य नेपालभूपतेः, पालिः कोटिः, तद्दिग्भाग इत्यर्थः, येषां तादृशाः, तावत् साकल्येन, सर्वथा इत्यर्थः, भवन्तु, कटाक्षदृष्ट्या तं पश्येत्यर्थः 'स्त्रियां पाल्यश्रिकोटयः' इत्यमरः ॥ ४३ ॥**

(तुम्हारे द्वारा वरण न किये जाने पर लज्जित एवं) नतमस्तक होकर पृथ्वीको देखनेवाले किसी राजाके ऊपर तुम्हारी कृपा नहीं है हाय ! हाय !! अर्थात् महान् कष्ट है (किसीको) तुम नहीं देखती यह उचित नहीं है । अस्तु, फिर भी तुम्हारे नेत्रप्रान्त (कटाक्ष) अत्यन्त पान करनेयोग्य नेपाल नरेशके पान करनेवाले भ्रमर हों अर्थात् तुम कटाक्षसे नेपाल नरेशको देखो ॥ ४३ ॥

**ऋजुत्वमौनश्रुतिपारगामिता यदीयके[2] सन्ति परं विहिंसितुम् ।**
**अतीव विश्वासविधायि चेष्टितं बहुर्महानस्य स दाम्भिकः शरः ॥४४॥**

---

१. 'पुरैव' इति पाठः । २. 'यदीयमेतत्परमेव हिंसितुम्' इति पा० ।

ऋजुत्वेति । यदीयके शरे, ऋजुत्वम् अवक्रता परच्छन्दानुकूलता च, मौनं निःशब्दता वाचंयमत्वञ्च, श्रुतिपारगामिता कर्णान्तगामित्वं वेदपारगत्वञ्च, ताः सन्ति, तथा परं शत्रुम् अन्यञ्च, विहिंसितुं हन्तुम् अनपकर्त्तुं च, अतीव अत्यन्तं, विश्वासं विगतश्वासं, विगतासून् इत्यर्थः, अथ च विश्वासं प्रत्ययं, विधत्ते इति विश्वासविधायि, चेष्टितं चरित्रम्, अस्ति, अस्य राज्ञः, बहुरनेकः, जातावेकवचनम्, महानधिकः अतिदीर्घश्च, दम्भः कपटं प्रयोजनमस्येति दाम्भिको लोकवञ्चकः, स तादृग्गुणविशिष्टः, शरः, अस्तीति शेषः, 'कपटोऽस्त्री व्याजदम्भो–' इत्यमरः, दाम्भिकेन यद्यत् क्रियते एतस्य शरेण तत्तत् क्रियते इत्यर्थः। अत्र शरे दाम्भिकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या॥

जिसकी सीधा रहना ध्वनिहीन होना, कानके पार तक जाना, अतिशय श्वास-हीन करना अर्थात् मार देना—( पक्षा० क्रमशः—दूसरेके अनुकूल रहना, चुप रहना, वेदपारगामी होना, अतिशय विश्वासयोग्य होना ) चेष्टा शत्रु ( पक्षा०—दूसरे ) को मारने ( पक्षा०—अपकार करने ) के लिए ही है, वह इस 'काञ्चीनरेश' का बाण अनेक ( बहुत पक्षा०—महान् ) दाम्भिक अर्थात् कपटपटु है । [ जिस प्रकार लोकवञ्चक कपटी व्यक्ति ऊपरसे तो दूसरेके अनुकूल, मौन, वेदज्ञाता तथा विश्वास योग्य होकर दूसरे अनुपकार करनेके लिये होता है; उसी प्रकार इसका शत्रुनश्वक कपटी बाण सीधा, ध्वनिरहित, खैंचने पर कानके पार तक पहुंचनेवाला तथा महाहिंसक शत्रुको मारनेके लिये ही है ]॥४४॥

**रिपूनवाप्यापि गतोऽवकीर्णितामयं न यावज्जनरञ्जनव्रती ।**
**भृशं विरक्तानपि रक्तवत्तरान् निकृत्य यत्तानसृजाऽसृजद्युधि ॥४५॥**

रिपूनिति । यावज्जनानां सकलजनानां, रञ्जनमेव व्रतमस्यास्तीति तद्व्रती, सर्वधन्वीतिवदिन्नन्तो बहुव्रीहिः, अयं नेपालभूपः, रिपून् अवाप्य प्राप्य अपि, अवकीर्णितां क्षतव्रतत्वं, न गतः; कुतः ? यत् यस्मात्, भृशं विरक्तान् प्रतिपक्षनृपे विद्वेषसम्पन्नान्, अथवा युद्धकाले स्वशरीरादिरक्षणविषयेऽननुरक्तानपि, अथ च एनं दृष्ट्वा भयात् विगतरुधिरानपि, रिपून् शत्रून्, युधि समरे, निकृत्य छित्त्वा, कृन्ततेः क्त्वो ल्यप्, असृजा रक्तवत्तरान् अतिशयेन रक्तवर्णान् अनुरक्तांश्च, रञ्जेः क्तवत्वन्तात्तरप्, असृजत् अकरोत्; रिपूनपि रक्तेन रञ्जयतः कुतोऽपि न रञ्जनव्रतभङ्ग इति भावः ॥

समस्त जनोंको रक्त ( अनुरक्त पक्षा०—रंगयुक्त ) करनेका व्रती यह ( नेपालनरेश ) शत्रुओंको प्राप्तकर भी नष्ट व्रतवाला नहीं हुआ, क्योंकि ( इसने ) अत्यन्त विरक्त ( अनुरागरहित, पक्षा०—रंगरहित ) भी उन ( शत्रुओं ) को युद्धमें काटकर ( बाणों से मारकर ) रुधिरसे अत्यन्त रक्त ( अनुरक्त, पक्षा०—रंगयुक्त ) कर किया । [ शत्रुको भी रक्तरञ्जित करनेसे सम्पूर्ण लोगोंको रञ्जित करनेके व्रतवाले इस नेपालनरेशका व्रतभङ्ग नहीं हुआ । यह नेपालनरेश प्रजानुरञ्जक तथा शत्रुनाशक होनेसे तुम्हारे वरण करने योग्य है ] ॥ ४५ ॥

पतत्येतत्तेजोहुतभुजि कदाचिद् यदि तदा
पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः ।
यशोऽमुष्यैवोपार्जयितुमसमर्थेन विधिना
कथञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥

पततीति । पतङ्गः सूर्यः, एतस्य राज्ञः, तेजोहुतभुजि प्रतापाग्नौ, कदाचित् पतति यदि तदा अङ्गीकृततमो भृशं स्वीकृतः, पतङ्गस्य शलभस्य, आपदुदयः देहदाहात्मकविपत्प्राप्तिः येन तथाभूतः स्यात् शलभताम् इयादित्यर्थः, 'पतङ्गः शलभे साधौ मार्जारेऽर्के खगेश्वरे' इति वैजयन्ती, किञ्च अमुष्य राज्ञः, यश उपार्जयितुम् असमर्थेनेव विधिना ब्रह्मणा, कथञ्चिदपि, न तु सम्यगिति भावः, तस्य यशसः, प्रतिनिधिः प्रतिरूपकः, क्षीराम्भोनिधिः क्षीरसमुद्रः, कृतः, क्षीरसमुद्रस्तदनुकल्पत्वेन सम्पादित इत्यर्थः; मुख्यापेक्षया प्रतिनिधिवस्तुनो न्यूनत्वेन न तु तादृग्यशो लब्धमिति भावः। सूर्यादधिकप्रतापः विधेरपि अधिकयशाश्चेति निष्कर्षः ॥ ४६ ॥

सूर्य यदि कभी इस ( नेपालनरेश ) के तेजोरूप अग्निमें गिर जाय तो फतिङ्गोंके देहदाहरूप आपत्तिको प्राप्त कर ले तथा इसके यशको किसी प्रकार प्राप्त करनेमें असमर्थ ब्रह्माने उस ( यश ) का प्रतिनिधि क्षीरसमुद्रको बनाया है ( अथवा—इसके यशको प्राप्त करनेमें असमर्थ ब्रह्माने उसका प्रतिनिधि क्षीरसमुद्रको किसी प्रकार अर्थात् अतिशय कठिनतासे बनाया है )। [ अग्निमें गिरे हुए फतिङ्गोंके समान इस राजाके तेजमें गिरे हुए सूर्यका पता भी नहीं चले अर्थात् सूर्य इसके तेजसे अत्यन्त तुच्छ है और इसका यश दुग्धसे भी स्वच्छ है, अथच एकद्वीपव्यापी क्षीरसमुद्रसे सर्वद्वीपव्यापी इसका यश बहुत बड़ा है। इस नेपालनरेशके प्रताप तथा यश अत्यन्त महान् हैं, अत एव इसे वरण करो ]॥ ४६ ॥

यावत् पौलस्त्यवास्तूभवदुभयहरिल्लोमरेखोत्तरीये
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्त्तिः ।
यावत् प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा-
वद्री सन्ध्यापताकारुचिररचितशिखाशोणशोभावुभौ च ॥४७॥

यावदिति । पौलस्त्ययोर्विभीषणवैश्रवणयोः, वास्तूभवन्त्यौ वेश्मभूमिभूते, गृहभूते इत्यर्थः, 'वेश्मभूर्वास्तुरस्त्रियाम्' इत्यमरः, उभे च ते हरितौ उभयहरितौ दक्षिणोत्तरदेशावित्यर्थः, 'उभादुदात्तो नित्यम्' इत्यत्र 'पृथक् योगकरणादेवायजादेशस्य नित्यत्वे सिद्धे पुनर्नित्यग्रहणं वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगनियमज्ञापनार्थम्' इति कैयटः, तयोर्यथासङ्ख्यं श्यामत्वात् शुभ्रत्वाच्च लोमरेखा लोमराजिः, उत्तरीयञ्च ते सन्तौ सेतुप्रालेयशैलौ यावत् यावद्दूरं, स्थिताविति शेषः, किञ्च प्राक्प्रत्यगाशे प्राचीप्रतीच्यौ दिशौ, 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः

तयोः परिवृढौ प्रभू, इन्द्रावरुणौ इति यावत्, 'प्रभौ परिवृढः' इति निपातः, तयोर्नगरयोरारम्भणे यौ स्तभौ मूलस्तम्भौ, तयोरिव मुद्रा सन्निवेशो ययोस्तौ स्तम्भसदृशाकारौ इत्यर्थः, सन्ध्ययोरेव सायं-प्रातःसन्ध्यारूपयोः द्वयोः, पताकयाः रुचिभिः रक्तभाभिः, रचितयोः, शिखयोरग्रयोः, शोणशोभा रक्तशोभा ययोः तावुभौ अद्री उदयास्तशैलौ, यावत् यावत्पर्यन्तं, तिष्ठतः इति शेषः, तावत्पर्यन्तम् एतस्य नरपतेः कीर्त्तिश्चरति चतुर्दिगन्तविश्रान्तकीर्त्तिरयमित्यर्थः ॥ ४७ ॥

पुलस्त्य-सन्तान ( रावण तथा कुबेर ) के गृह बनती हुई दोनों ( क्रमशः दक्षिण तथा उत्तर ) दिशाओंके ( क्रमशः श्याम तथा श्वेत वर्ण होनेसे )' रोमावलि और दुपट्टारूप रामेश्वर पुल और हिमालय पर्वत जहां तक हैं; तथा पूर्व और पश्चिम दिशाओंके स्वामी ( क्रमशः इन्द्र तथा वरुण ) के नगरके आरम्भमें खम्भेके आकृतिवाले अर्थात् खम्भेके समान एवं सन्ध्या ( क्रमशः प्रातःकाल तथा सायंकालकी सन्ध्या ) रूपी पताकाकी कान्तिसे रचित अग्रभागमें रक्तवर्णवाले दोनों पर्वत ( क्रमशः उदयाचल तथा अस्ताचल ) जहां तक हैं; वहां तक इस ( नेपालनरेश ) की कीर्ति विचरण करती है। [ हिमालयसे रामेश्वर तक तथा उदयाचलसे अस्ताचल तक अर्थात् चारों दिशाओंमें इस राजाकी कीर्ति व्याप्त हो रही है ] ॥ ४७ ॥

युद्ध्वा चाभिमुखं रणस्य चरणस्यैवादसीयस्य वा
बुद्ध्वाऽन्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः ।
छिन्नं वाऽवनतीभवन्निजभियः खिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥

युद्ध्वेति । अदसीयस्य अमुष्यायम् अदसीयं तस्यामुष्य सम्बन्धिन इत्यर्थः, अभिमुखं मुखं प्रारम्भम्, अभि लक्षीकृत्य इत्यर्थः, रणस्याभिमुखं युद्धप्रारम्भे, बाणावलीः शरसमूहान्, उन्मुच्य युद्धार्थं निःक्षिप्य, युद्ध्वा युद्धं कृत्वा, निपततां निहतानां, वा अथवा, अन्तः अन्तकरणे, स्वस्य आत्मनः, परस्य शत्रोश्च, अन्तरं न्यूनाधिकतया पार्थक्यं, बुद्ध्वा ज्ञात्वा, अदसीयस्य चरणस्यैवाभिमुखं बाणावलीरुन्मुच्य त्यक्त्वा, निपततां निरायुधीभूय एतच्चरणसमीपे नम्रीभवतामित्यर्थः, अरीणां शत्रूणां, छिन्नं बाणैः कर्त्तितं सत्, वा अवनतीभवत् भूमौ पतितं सदित्यर्थः, अथवा निजभियः भरेण स्वीयभयातिशयेन, खिन्नं सत् अवनतीभवत् नम्रीभवत्, शिरो मस्तकम्, अनेन राज्ञा हठात् बलात्कारेण, भूमौ विलोठितं पुनः पुनः परावर्त्तितम्, अभूत्; एतस्य राज्ञः शत्रवो यदि युध्यन्ते तदा म्रियन्ते एव, अथवा ये शत्रवः विवेचकाः भीरवश्च ते एतमेव शरणं गच्छन्ति तेषां नान्या गतिरिति भावः॥

इस ( नेपालनरेश ) के युद्धके सम्मुख लड़कर अपने तथा शत्रु ( इस राजा ) के अन्तर ( भेद—न्यूनाधिक बल ) को जानकर बाण-समूहों को छोड़कर अर्थात् बाणसमूहोंसे

प्रहारकर कटे तथा गिरे हुए शत्रुके मस्तकको यह राजा हठपूर्वक भूमिमें लिटा देता है, पक्षा०—इसके सामने लड़कर ( और वादमें, अथवा—विना लड़े ही ) अपना तथा दूसरे ( इस राजा ) का अन्तर जानकर वाण-समूहों को अलग रखकर इसी राजाके चरणके सामने गिरते हुए अर्थात् शरणमें आकर नमस्कार करते हुए एवं अपने भयाधिक्यके भारसे खिन्न अत एव झुके हुए अर्थात् शरणमें आकर नमस्कार करते हुए शत्रुमस्तक को इस राजाने हठपूर्वक भूमिमें लोटा दिया अर्थात् 'इस महापराक्रमी राजासे हीनशक्ति हो कर भी मैंने युद्ध किया, इस राजासे अपने अपराध को क्षमा करा लेनेमें ही कल्याण है' इस विचारसे इसके चरणके सामने पृथ्वी पर अपना मस्तक टेकने लगे। [ जो राजा आद्यन्त युद्धनिरत रहे उनके शिरको काटकर इस नेपालनरेशने भूमि पर लिटा दिया तथा जो राजा युद्ध करके ( या विना युद्ध किये भी ) निःशस्त्र होकर अपने अपराधके भयसे नम्र मस्तक हो इसके चरणोंमें पड़ गये' उनके मस्तकों को क्षमा करने से भूमिपर लिटा अर्थात् झुका दिया। यह राजा शत्रुविजेता तथा शरणागतवत्सल है, अत एव इसका वरण करो] ॥

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि।
नृणां पश्यत्यस्य क्वचन विशिखान् किन्तु पतित-
द्विषद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति ॥ ४९ ॥

नेति। नृणां रणद्रष्टृणां पुंसां, 'नृ च' इति विकल्पात् 'नामि' इति दीर्घप्रतिषेधः, दृष्टिः, अस्य राज्ञः, विशिखान् शरान्, क्वचन कस्मिन्नपि, इत्यस्य सर्वत्र सम्बन्धः; तूणात् निषङ्गात्, उद्धारे उद्धरणकाले, न पश्यतीति सर्वत्र सम्बध्यते; गुणो मौर्वी, 'मौर्वी गुणो ज्या' इति धनञ्जयः, तेन घटने सन्धाने, न, आश्रुतिशिखम् आकर्णान्तं, समाकृष्टौ गुणाकर्षणे, न, वियति मोचनानन्तरम् आकाशे, न, लक्ष्ये वेध्ये, न, भुवि शत्रून् विद्ध्वा ततो निर्गत्य प्रवेशाश्रये भूप्रदेशे, च क्वचन कुत्रापि, न पश्यति, किन्तु पतितानां युद्धहतानां, द्विषतां वक्षःसु श्वभ्रैः शरवेधजन्यरन्ध्रैः, 'रन्ध्रं श्वभ्रं वपा सुषिः' इत्यमरः, अनुमितिरानुमानिकज्ञानम्, अमून् विशिखान्, गोचरयति विषयीकरोति, एतद्राजनिःक्षिप्तवाणानां विद्यमानत्वे कुत्रापि प्रत्यक्षप्रमाणाभावेऽपि शत्रु-वक्षसि दृष्टच्छिद्रस्य अन्यथाऽनुपपत्त्या तद्दर्शनेनैव वाणानामनुमितिर्भवतीति भावः। इत्थञ्च वाणानां वेगातिशयोक्तिः ॥ ४९ ॥

( इस नेपालनरेशके युद्धकौतुक-दर्शकों की ) दृष्टि इसके वाणों को कहीं भी—तरकस से निकालनेमें नहीं, मौर्वी ( धनुष की डोरी ) पर रखनेमें नहीं, कर्णाग्र तक खींचनेमें नहीं, आकाशमें नहीं, लक्ष्य ( निशाना ) में नहीं और पृथ्वी पर नहीं देखती हैं; किन्तु गिरे हुए शत्रुओंके हृदय ( पाठा०—नेत्रों ) के छिद्रोंसे ( किया गया ) अनुमान इन (वाणों) को गोचर कराता ( दिखलाता ) है। [यह नेपालनरेश इतनी तीव्र गतिसे वाणों को शत्रुओं

पर छोड़ता है कि वे वाण उनके हृदय ( पाठा०—नेत्रों ) में छिद्रकर अदृश्य हो जाते हैं और उन्हें युद्ध कौतुक को देखनेवाले कहीं भी ( तरकससे निकालने आदि में ) नहीं देख पाते; किन्तु मरे हुए शत्रुओंके हृदय ( पाठा०—नेत्रों ) में उन वाणों द्वारा किये गये छिद्रों से—'इस नेपालनरेशने ही इसपर वाण को छोड़कर इसके हृदय ( पाठा०-नेत्रों ) में छिद्र कर दिया है' ऐसे अनुमानकर वाणों को लक्षित करते हैं। प्रत्यक्षमें नहीं देखी गयी वस्तुका अनुमान द्वारा सिद्ध करना उचित ही है। यह नेपालनरेश वहुत तीव्र गतिसे शत्रुओं पर वाण चलाता है ]॥ ४९ ॥

**दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वक्ष्यसि ? ।**
**भण प्रभूते[1] जगति स्थिते[2] गुणैरिहाप्यते सङ्कटवासयातना ॥५०॥**

**दमस्वसुरिति। हासयतीति हासिका हासयित्री, काचित् चेटीति शेषः, दमस्वसुश्चित्तमवेत्य बुद्ध्वा देवीं, सरस्वतीं, जगाद, किमिति? हे देवि! अस्य राज्ञः सम्बन्धि, कियद्वक्ष्यसि ? कियत् प्रपञ्चयसीत्यर्थः, निखिलगुणाधारस्यास्य गुणानां प्रत्येकं कथं वर्णयितुं शक्नोषि ? इति भावः; प्रभूते महति, जगति स्थितेऽपि विशाले जगति विद्यमानेऽपि, गुणैः सौन्दर्यादिभिः, इह अस्मिन्नेव राज्ञि, सङ्कटवासेन सङ्कीर्णस्थित्या, आधाराल्पतया अतिकृच्छ्रेणावस्थानात्, यातना तीव्रवेदना, आप्यते अनुभूयते, इति भण; सर्वे गुणाः सर्वं जगत् परित्यज्यास्मिन् एकस्मिन्नेव राजनि परस्परसङ्घर्षेण निरवकाशं निवसन्तीत्येकयोक्त्या वद इति भावः। सर्वगुणाकरम् अपि एनं दमयन्ती न वृणुते इति निष्कर्षः॥ ५० ॥**

हँसनेवाली ( दमयन्तीकी सामान्यतया दासी ) दमयन्तीके चित्त ( यह इस नेपालनरेशको वरण करना नहीं चाहती ऐसे भाव ) को जानकर बोली—'( सरस्वती देवि ! ) इसका कितना वर्णन करोगी ?' विशाल संसारके रहनेपर भी गुण ( सौन्दर्य आदि ) इस ( नेपालनरेश ) में सङ्कट ( गुणोंके अधिक तथा वासस्थानके कम होनेके कारण दुःख ) से निवास करते हैं' ऐसा कहो। ( पाठा०—संसारमें स्थित वहुत गुण इसमें ……… )। [ यह नेपालनरेश इतना गुणी है कि विशाल संसारके रहते भी समस्त गुण इसी नेपालनरेश में स्थान ( आधार ) की कमी होनेसे वड़ी संकीर्णतासे निवास करते हैं, अतः इसके प्रत्येक गुणका पृथक्-पृथक् वर्णन करना अशक्य होनेसे उक्त वचन कहना ही तुम्हें उचित है, इस प्रकार वहुत गुणवान् भी इस नेपालनरेशको स्वामिनी दमयन्ती नहीं वरण करना चाहती अतः इसका वर्णन करना व्यर्थ है। अथवा—विशाल संसारके रहनेपर भी इस नेपालनरेशमें ही सब गुण राजाकी अयोग्यताके कारण दुःखपूर्वक निवास करते हैं, अत एव इसके गुणोंको कितना वर्णन करोगी ? वास्तविकताको समझनेवाली स्वामिनी दमयन्ती

---

१. 'प्रभूतैः' इति पा०। २. 'स्थितैः' इति पा०।

तुम्हारे अधिक वर्णन करनेपर भी इसे नहीं वरण करना चाहती, अत एव तुम अब इसका गुण-वर्णन करना समाप्त करो ] ॥ ५० ॥

ब्रवीति[1] दासीह किमप्यसङ्गतं ततोऽपि नीचेयमतिप्रगल्भते ।
अहो ! सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगाञ्जनः ॥५१॥

ब्रवीतीति । इह सभायां, दासी भैम्याः किङ्करी, किमपि असङ्गतं ब्रवीति प्राक् 'चलेऽपि काकस्य' इत्यादि अभाषत, वर्त्तमानसामीप्ये भूते लट् , ततो दासीतोऽपि, नीचा तुच्छा, इयं चेटी, अतिप्रगल्भते इदानीं पुनरपि उच्छृङ्खलतया ब्रूते, अहो ! आश्चर्यं, सभा साधुः, आश्चर्येति सोल्लुण्ठोक्तिः; इतीरयन्तीति इतीरिणः स्वस्वामिगुण-वर्णनप्रतिबन्धात् आक्रोशतः, एतस्य क्षितिपस्य अनुगान् अनुचरान् , जनः तटस्थ-जनः, क्रुधा क्रोधेन, न्यषेधत् निवारयामास ॥ ५१ ॥

'यहांपर ( इस सभामें ) दासी कुछ असंगत (१२।२१ आदि) बोलती है ( पाठा०—बोली है ), नीच यह दासी ( १२।२१ श्लोक द्वारा बोलनेवाली उक्त दासी, अथवा—सभामें बोलनेकी अधिकारिणी बनायी गयी सरस्वती देवी ) से भी उच्छृङ्खल बोलती है, आश्चर्य है कि यह अच्छी सभा है अर्थात् उचित-अनुचितका विचार नहीं होनेसे यह बहुत बुरी सभा है', ऐसा क्रोधसे कहनेवाले नेपालराजके अनुचरोंको ( दर्शक ) लोगोंने रोका । अथवा—सभामें.........ऐसा कहनेवाले नेपालराजके अनुचरोंको ( दर्शक ) लोगोंने क्रोधसे रोका । [ नेपालनरेशके वर्णनके बीचमें ही दासीके बोलनेसे अपने स्वामीके अपमानको नहीं सहनेवाले अनुचर क्रुद्ध होकर व्यङ्ग्यपूर्वक सभाको बुरा कहने लगे तो उन्हें दर्शकलोगों ने ही मना कर दिया ] ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा ।
दमस्वसारं वदति स्म देवता गिरामिलाभूवदतिस्मरश्रियम् ॥ ५२ ॥

अथेति । अथ कृपामयी सा गिरां देवता इलाभुवा ऐलेन पुरूरवसा तुल्यम् इलाभवत् , 'तेन तुल्यं क्रिया चेद्वतिः' क्रियाऽत्र स्मरातिक्रमः, अतिस्मरश्रियम् अतिक्रान्तमदनलावण्यम् , अन्यं नृपमुद्दिश्य तस्य नृपस्य, दिङ्मुखसम्मुखेन तद्दि-ग्भागाभिमुखेन, मुखेन करणेन, तेन उपलक्षिता सती वा, दमस्वसारं दमयन्तीं, वदति स्म ॥ ५२ ॥

कृपालु वाग्देवी पुरुरवाके समान कामदेवकी शोभाको अतिक्रमण करनेवाले अर्थात् कामसे भी अधिक सुन्दर दूसरे राजाको लक्षितकर उसके ओर मुख करके दमयन्तीसे बोली ॥ ५२ ॥

विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः ।
त्रपामपाकृत्य निभान्निभालय क्षितिक्षितं मालयमालयं रुचः ॥५३॥

---

1. 'प्रशंस' इति पा० ।

पर छोड़ता है कि वे वाण उनके हृदय ( पाठा०—नेत्रों ) में छिद्रकर अदृश्य हो जाते हैं और उन्हें युद्ध कौतुक को देखनेवाले कहीं भी ( तरकससे निकालने आदि में ) नहीं देख पाते; किन्तु मरे हुए शत्रुओंके हृदय ( पाठा०—नेत्रों ) में उन वाणों द्वारा किये गये छिद्रों से—'इस नेपालनरेशने ही इसपर वाण को छोड़कर इसके हृदय ( पाठा०-नेत्रों ) में छिद्र कर दिया है' ऐसे अनुमानकर वाणों को लक्षित करते हैं। प्रत्यक्षमें नहीं देखी गयी वस्तुका अनुमान द्वारा सिद्ध करना उचित ही है। यह नेपालनरेश बहुत तीव्र गतिसे शत्रुओं पर वाण चलाता है ] ॥ ४९ ॥

**दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वक्ष्यसि ?।**
**भण प्रभूते[1] जगति स्थिते[2] गुणैरिहाप्यते सङ्कटवासयातना ॥५०॥**

**दमस्वसुरिति। हासयतीति हासिका हासयित्री, काचित् चेटीति शेषः, दमस्वसुश्चित्तमवेत्य बुद्ध्वा देवीं, सरस्वतीं, जगाद, किमिति? हे देवि! अस्य राज्ञः सम्बन्धि, कियद्वक्ष्यसि ? कियत् प्रपञ्चयसीत्यर्थः, निखिलगुणाधारस्यास्य गुणानां प्रत्येकं कथं वर्णयितुं शक्नोषि ? इति भावः; प्रभूते महति, जगति स्थितेऽपि विशाले जगति विद्यमानेऽपि, गुणैः सौन्दर्यादिभिः, इह अस्मिन्नेव राज्ञि, सङ्कटवासेन सङ्कीर्णस्थित्या, आधाराल्पतया अतिकृच्छ्रेणावस्थानात्, यातना तीव्रवेदना, आप्यते अनुभूयते, इति भण; सर्वे गुणाः सर्वं जगत् परित्यज्यास्मिन् एकस्मिन्नेव राजनि परस्परसङ्घर्षेण निरवकाशं निवसन्तीत्येकयोक्त्या वद इति भावः। सर्वगुणाकरम् अपि एनं दमयन्ती न वृणुते इति निष्कर्षः ॥ ५० ॥**

हँसनेवाली ( दमयन्तीकी सामान्यतया दासी ) दमयन्तीके चित्त ( यह इस नेपालनरेशको वरण करना नहीं चाहती ऐसे भाव ) को जानकर बोली—'( सरस्वती देवि ! ) इसका कितना वर्णन करोगी ?' विशाल संसारके रहनेपर भी गुण ( सौन्दर्य आदि ) इस ( नेपालनरेश ) में सङ्कट ( गुणोंके अधिक तथा वासस्थानके कम होनेके कारण दुःख ) से निवास करते हैं' ऐसा कहो। ( पाठा०—संसारमें स्थित बहुत गुण इसमें········· )। [ यह नेपालनरेश इतना गुणी है कि विशाल संसारके रहते भी समस्त गुण इसी नेपालनरेश में स्थान ( आधार ) की कमी होनेसे बड़ी संकीर्णतासे निवास करते हैं, अतः इसके प्रत्येक गुणका पृथक्-पृथक् वर्णन करना अशक्य होनेसे उक्त वचन कहना ही तुम्हें उचित है, इस प्रकार बहुत गुणवान् भी इस नेपालनरेशको स्वामिनी दमयन्ती नहीं वरण करना चाहती अतः इसका वर्णन करना व्यर्थ है। अथवा—विशाल संसारके रहनेपर भी इस नेपालनरेशमें ही सब गुण राजाकी अयोग्यताके कारण दुःखपूर्वक निवास करते हैं, अत एव इसके गुणोंको कितना वर्णन करोगी ? वास्तविकताको समझनेवाली स्वामिनी दमयन्ती

---

१. 'प्रभूतैः' इति पा०। २. 'स्थितैः' इति पा०।

तुम्हारे अधिक वर्णन करनेपर भी इसे नहीं वरण करना चाहती, अत एव तुम अब इसका गुण-वर्णन करना समाप्त करो ] ॥ ५० ॥

ब्रवीति[1] दासीह किमप्यसङ्गतं ततोऽपि नीचेयमतिप्रगल्भते ।
अहो ! सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगाञ्जनः ॥५१॥

ब्रवीतीति । इह सभायां, दासी भैम्याः किङ्करी, किमपि असङ्गतं ब्रवीति प्राक् 'चलेऽपि काकस्य' इत्यादि अभाषत, वर्त्तमानसामीप्ये भूते लट्, ततो दासीतोऽपि, नीचा तुच्छा, इयं चेटी, अतिप्रगल्भते इदानीं पुनरपि उच्छृङ्खलतया ब्रूते, अहो ! आश्चर्यं, सभा साधुः, आश्चर्येति सोल्लुण्ठोक्तिः; इतीरयन्तीति इतीरिणः स्वस्वामिगुणवर्णनप्रतिबन्धात् आक्रोशतः, एतस्य क्षितिपस्य अनुगान् अनुचरान्, जनः तटस्थजनः, क्रुधा क्रोधेन, न्यषेधत् निवारयामास ॥ ५१ ॥

'यहांपर ( इस सभामें ) दासी कुछ असंगत (१२।२१ आदि) बोलती है ( पाठा०—बोली है ), नीच यह दासी ( १२।२१ श्लोक द्वारा बोलनेवाली उक्त दासी, अथवा—सभामें बोलनेकी अधिकारिणी बनायी गयी सरस्वती देवी ) से भी उच्छृङ्खल बोलती है, आश्चर्य है कि यह अच्छी सभा है अर्थात् उचित-अनुचितका विचार नहीं होनेसे यह बहुत बुरी सभा है', ऐसा क्रोधसे कहनेवाले नेपालराजके अनुचरोंको ( दर्शक ) लोगोंने रोका । अथवा—सभामें.........ऐसा कहनेवाले नेपालराजके अनुचरोंको ( दर्शक ) लोगोंने क्रोधसे रोका । [ नेपालनरेशके वर्णनके बीचमें ही दासीके बोलनेसे अपने स्वामीके अपमानको नहीं सहनेवाले अनुचर क्रुद्ध होकर व्यङ्ग्यपूर्वक सभाको बुरा कहने लगे तो उन्हें दर्शकलोगों ने ही मना कर दिया ] ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा ।
दमस्वसारं वदति स्म देवता गिरामिलाभूवदतिस्मरश्रियम् ॥ ५२ ॥

अथेति । अथ कृपामयी सा गिरां देवता इलाभुवा ऐलेन पुरूरवसा तुल्यम् इलाभवत्, 'तेन तुल्यं क्रिया चेद्वतिः' क्रियाऽत्र स्मरातिक्रमः, अतिस्मरश्रियम् अतिक्रान्तमदनलावण्यम्, अन्यं नृपमुद्दिश्य तस्य नृपस्य, दिङ्मुखसम्मुखेन तद्दिग्भागाभिमुखेन, मुखेन करणेन, तेन उपलक्षिता सती वा, दमस्वसारं दमयन्तीं, वदति स्म ॥ ५२ ॥

कृपालु वाग्देवी पुरुरवाके समान कामदेवकी शोभाको अतिक्रमण करनेवाले अर्थात् कामसे भी अधिक सुन्दर दूसरे राजाको लक्षितकर उसके ओर मुख करके दमयन्तीसे बोली ॥ ५२ ॥

विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः ।
त्रपामपाकृत्य निभान्निभालय क्षितिक्षितं मालयमालयं रुचः ॥५३॥

---

1. 'प्रशंस' इति पा० ।

विलोचनेति । विलोचने एव इन्दीवरे नीलोत्पले, तयोर्मध्ये वासेन स्थित्या, वासितैः सुरभितैः, नयननीलिम्ना नीलीकृतैरित्यर्थः, सितैः स्वभावात् अवदातैः, नीलश्वेतकान्तिविशिष्टैरिति यावत्, अपाङ्गाध्वगाया नेत्रप्रान्तरूपमार्गवर्त्तिन्याः, चन्द्रिकायाः नेत्रमध्यस्थनीलगोलकस्य, अञ्चलैः प्रान्तभागैः, कटाक्षैरिति यावत्, करणैः रुचः कान्तेः, आलयम् आकरं, मालयं मलयदेशीयं, क्षितिक्षितं क्षितीशं, तदाख्यदेशस्य राजानमित्यर्थः, क्षितिं क्षिणोतीति क्षितिक्षित् क्षितीशः क्षिधातोरैश्वर्यार्थात् क्विप्, निभात् वस्त्वन्तरदर्शनव्याजात्, त्रपां लज्जाम्, अपाकृत्य त्यक्त्वा, निभालय विलोकय, निभालय इत्यस्य चौरादिकात्मनेपदिभलधातोः रूपत्वात् परस्मैपदं चिन्तनीयम्; अथवा निभालः निभालनं तद्वान् निभालवान् तादृशं कुरु 'तत् करोति-' इति णिचि मतुपो लोपेन साधनीयम् ॥ ५३ ॥

नेत्ररूपी नीलकमलमें निवास करनेसे वासित ( नील वर्ण किये गये ) तथा ( स्वभावतः ) श्वेत नेत्रप्रान्तमार्गगामी चन्द्रिकाप्रान्तों अर्थात् नीलश्वेत कटाक्षोंसे कान्तिके आकर 'मालय' नामक ( अथवा—मा = लक्ष्मीके आलय, अथवा—'मलय' देशके राजा, अथवा—म = शिवजी हैं निवास जिसका ऐसे अर्थात् चन्द्ररूप ) राजाको लज्जा दूरकर व्याज ( दूसरी वस्तुके देखनेके बहाने ) से देखो । [ यह राजा 'मालय' नामक है, ( या—शिवका निवास चन्द्ररूप ही अर्थात् अतिसुन्दर है, या—लक्ष्मीका आलय है, या—'मलय' देशका है ), इसे यदि देखनेमें लज्जा आती है तो दूसरी वस्तुको देखनेके बहानेसे इसे देखो क्योंकि उस प्रकार देखनेमें लज्जा नहीं होगी और कान्तिके आकर इसे तुम अच्छी तरह देखकर इसके वरणके विषयमें यथावत् निर्णय कर सकोगी, अतः तुम दूसरी वस्तुको देखनेके बहानेसे नीलश्वेत कटाक्षोंसे इस राजाको निस्सङ्कोच होकर देखो ] ॥ ५३ ॥

**इमं परित्यज्य परं रणादरिः स्वमेव भग्नः शरणं मुधाऽविशत् ।**
**न वेत्ति यत्त्रातुमितः कृतस्मयो न दुर्गया शैलभुवाऽपि शक्यते ॥५४॥**

इममिति । अरिः एतच्छत्रुः, रणात् समरात्, भग्नः सन्, परम् अरिं श्रेष्ठं वा, इमं नृपं, परित्यज्य शरणं न प्राप्य, मुधा वृथा, स्वं स्वकीयं, शरणं गृहमेव, शरणं रक्षकम्, अविशत् प्रविष्टः; शरणस्य द्विरावृत्त्या सम्बन्धः कथं वृथा ? इति तदाह, यत् यस्मात्, कृतस्मयः कृताहङ्कारः, सोऽरिरिति शेषः, दुर्गया दुर्गमया, शैलभुवा शैलप्रदेशेन, गिरिदुर्गेणापीत्यर्थः, अथ च शैलभुवा पर्वतकन्यया, दुर्गया दुर्गादेव्याऽपि, पार्वत्याऽपि इत्यर्थः, इतोऽस्माद्राज्ञः, त्रातुं न शक्यते, किं पुनः स्वगृहेण अन्येन वा पुरुषेणेत्यपिशब्दार्थः; इति न वेत्ति; यो गिरिदुर्गप्रविष्टमपि शत्रुं हन्तुं शक्नोति स स्वगृहप्रविष्टमरिं कथं न हन्तु इति स्वप्राणरक्षार्थं स्वगृहप्रवेशो व्यर्थ इति भावः ॥ ५४ ॥

युद्धसे भगा हुआ शत्रु श्रेष्ठ ( या-शत्रुरूप ) इसे छोड़कर अपने ही घरमें ( या—अपने ही बड़े घर में, या—अपने ही रक्षकके यहां, या—अपने ही दूसरे रक्षकके यहां, या—अपने

ही बड़े रक्षकके यहां ) व्यर्थ गया; क्योंकि अभिमानी वह ( शत्रु राजा ) यह नहीं जानता है कि—'इस ( मालय नरेश ) से दुर्गम पर्वतीय भूमि ( पक्षा०—पर्वतकुमारी दुर्गा अर्थात् पार्वती ) भी नहीं बचा सकती है'। [ 'जिससे शरणागतको पर्वतपुत्री पार्वती ( पक्षा०—दुर्गम पर्वतीय भूमि भी ) नहीं बचा सकती, उससे अन्य कोई बड़ा घर ( पक्षा०—रक्षक ) कैसे बचा सकता है ?' इस बातको नहीं जाननेवाला अभिमानी वह शत्रु युद्धसे भगकर अपने बड़े घर ( किला, पक्षा०—रक्षक ) के पास व्यर्थ ही गया। आत्मरक्षार्थ युद्धसे भगकर दुर्गम पहाड़में घुसे हुए या बड़े नीजी रक्षकके शरणमें गये हुए भी शत्रुको यह मालय राजा मार डालता है ] ॥ ५४ ॥

**अनेन राज्ञाऽर्थिषु दुर्भगीकृतो भवन्[1] घनध्वानजरत्नमेदुरः।**
**तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलताम् ॥५५॥**

**अनेनेति। अनेन राज्ञा अर्थिषु विषये दुर्भगीकृतः तुच्छीकृतः, यथेच्छम् अर्थिभिः उपादीयमानरत्नोऽपि यः अनेन राज्ञा उपेक्षितः इत्यर्थः, तथा घनध्वानजैः नवमेघशब्दोत्थैः, रत्नैः वैदूर्यैः, मेदुरः पूर्ण एव, भवन् अतिव्ययेऽपि अक्षीणरत्न एव तिष्ठन् इत्यर्थः, विदूराद्रिः वैदूर्याचलः, तथा तेन प्रकारेण, अदूरताम् आसन्नतां, गमी गमिष्यन्, तथा सोऽद्रिः, तव केलिशैलतां गामी गमिष्यन्, 'भविष्यति गम्यादयः' इति गमिगाम्योः साधुत्वम्। 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया, अस्य राज्ञः नगर्याः अतिसान्निध्यात् बहुरत्नयुतः वैदूर्याचलः ते क्रीडाशैलो भविष्यति इति तात्पर्यम् ॥ ५५ ॥**

इस राजासे याचकोंके विषयमें दरिद्र किया गया अर्थात् उपेक्षित ( अत एव ) मेघध्वनिसे उत्पन्न रत्नोंसे पूर्ण होता हुआ ( पाठा०—होती हुई मेघध्वनियोंसे उत्पन्न रत्नोंसे पूर्ण ) विदूर ( अत्यन्त दूरस्थ, पक्षा०—'विदूर' अर्थात् 'रोहण' नामक ) पर्वत उस प्रकार समीपस्थ होगा, जिस प्रकार वह तुम्हारा क्रीडापर्वत बन जायेगा। [ 'विदूर' पर्वतमें मेघके गर्जनेसे उत्पन्न होनेवाले रत्नोंको पहले लोग इच्छानुसार वहांसे रत्न लाते थे, किन्तु अब यह 'मालय' राजा याचकोंको इच्छानुसार दान दे देता है, अत एव कोई भी 'विदूर' पर्वतसे रत्न लानेका कष्ट नहीं करता, इस कारण मेघके गर्जनेसे उस 'विदूर' पर्वतमें रत्नोंकी उत्पत्ति तो सर्वदा होती रही किन्तु उसमें—से रत्नोंका व्यय नहीं हुआ और अत्यन्त दूरस्थ भी वह पर्वत बढ़ते-बढ़ते इतना समीप हो जायेगा कि तुम इस राजाका वरणकर वहां पर क्रीडाकरने लगोगी॥ यह राजा बहुत दानी है, अत एव इसका वरण करो ] ॥५५॥

**नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात-**
**च्छायान्तःपातचन्द्रायितचरणनखश्रेणिरैणेयनेत्रे!।**

---

1. 'भवद्धत' इति पा०।

दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन पीनं
भूलोकस्यैष भर्त्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥५६॥

नम्रेति। एण्या इमे ऐणेये 'ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' इत्यमरः, एण्या ढक्, ते च ते नेत्रे च, ते इव नेत्रे यस्याः तस्याः सम्बुद्धिः, ऐणेयनेत्रे! हे मृग-शावाक्षि !, उपमान-पूर्वपदबहुव्रीहावुत्तरपदलोपः, नम्राणां पादप्रान्ते अवनतानां, प्रत्यर्थिपृथ्वीपतीनां पराजितशत्रुभूपानां, मुखान्येव कमलानि तेषु या म्लानता अप-मानजनितवैवर्ण्यं, सैव भृङ्गजातस्य भ्रमरसमूहस्य, छाया नीलभाः, तस्या अन्तः-पातेन मध्यगतत्वेन, स्वच्छनखे प्रतिफलनादिति भावः, चन्द्रायिता चन्द्रवदाचरिता मलिनमुखच्छायारूपकलङ्कसम्पत्तेरिति भावः, चरणनखश्रेणिर्यस्य तादृशः, भूलोकस्य भर्त्ता एषः राजा, दृप्तारिप्राणवाताः गर्वितशत्रुप्राणवायवः एव, अमृतरसस्य लहर्यः ऊर्मयः, तासां भूरिणा भूयसा, पानेन पीनं मांसलम् , अत एव संयुगे युद्धे, साधु सांयुगीनं युद्धे अपराजेयं, भुजभुजगयुगं हस्तरूपपन्नगयुगलं, बिभर्त्तीति, रूपकाल-ङ्कारः। वायुपानेन यथा सर्पाः स्थूला जायन्ते तथा अस्य राज्ञः हस्तौ शत्रूणां प्राण-वायुपानेन स्थूलौ सञ्जातौ इत्यर्थः; चरणपतितान् शत्रुनृपान् रक्षति गर्वितांश्च तान् मारयति इति भावः ॥ ५६ ॥

हे मृगनयनी ( दमयन्ती )! नम्र शत्रु राजाओंके मुखकमलकी मलिनतारूपी भ्रमरसे उत्पन्न ( अथवा—भ्रमर-समूहकी छाया अर्थात् शोभाके प्रतिबिम्बित ) होनेसे चन्द्रमाके समान आचरण करनेवाला है चरण-नखोंकी श्रेणी जिसकी ऐसा, भूलोकका रक्षक यह राजा अभिमानी शत्रुओंकी प्राणवायुरूप अमृतरसके तरङ्गोंके अधिक पान करनेसे मोटा तथा युद्धमें श्रेष्ठ ( तीव्र शस्त्रप्रहार करनेवाला ) बाहुरूप सर्पद्वयको धारण करता है। [ युद्धमें हारकर मलिन मुख किये हुए शरणागत शत्रु राजा लोग इसके चरणों पर नम्र होकर प्रणाम करते हैं तो उनके मुखकी मलिनकान्ति कमलपर बैठे हुए भ्रमरों-जैसी मालूम पड़ती है और वह इसके चरणोंके नखोंमें चन्द्रकलङ्क-जैसी शोभती है तथा इसके दोनों हाथ ( शस्त्र-प्रहारसे ) अभिमानी शत्रु राजाओंके प्राणोंका हरण करते ( उन्हें मारते ) हैं तो वे दो सर्प अमृत-रस-तरङ्गोंको पी रहे हैं ऐसा मालूम पड़ता है। सर्प का वायुरूपी अमृत-रसका पानकर मोटा ( पुष्ट ) होना उचित ही है। यह राजा शरणागत शत्रुका रक्षक तथा अभिमानी शत्रुका प्राणनाशक है ] ॥ ५६ ॥

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयः फणसमुचितः काययष्टीनिकायः।
दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्त्यदः कीर्त्तिपूरः ? ॥ ५७ ॥

अध्याहार इति। स्मरहरशिरसि, चन्द्रशेषस्य कलामात्रावशिष्टचन्द्रस्य, अध्याहारः शेषपूरकः, पञ्चदशकलासम्पादकः इति यावत्, एतेन कीर्त्तिपूरस्य स्वर्गव्यापित्वमायातम्; शेषस्य अहेः अनन्तोरगस्य, शुभ्रकायस्येति भावः, भूयसां सहस्रसङ्ख्यकानां, फणानां समुचितः योग्यः, काययष्टीनां सहस्रसङ्ख्यकानां शरीराणां निकायः समूहभूतः इति यावत्; फणसङ्ख्यकैः कायैः भवितुमौचित्यात् अवशिष्टशरीरसम्पादक इति भावः, एतेन पातालव्यापित्वमायातम्; दुग्धाम्भोधेः क्षीराम्भोधेः, मुनेः अगस्त्यस्य, चुलुकनात् गण्डूषेण ग्रहणात्, त्रासस्य नाशे अभ्युपाय उपायभूतः, कायव्यूहः कायसङ्घातः, क्षीराब्धेः प्रतिनिधिरित्यर्थः, पूर्वं क्षीराब्धेरेकाकित्वेन चुलुकग्रहणात् भयमासीत्, इदानीमेतत्कीर्त्तिपूरस्य पृथिवीव्यापित्वात् तच्छौक्ल्येन सर्वजलानां शुक्लतया दुग्धवत् प्रतीयमानत्वात् इदं क्षीराब्धेः वारि अन्यत् वारि वा इति निश्चेतुमशक्यत्वेन नास्ति अगस्त्यगण्डूषात् तादृशभयमिति भावः; अदःकीर्त्तिपूरः अमुष्य यशोराशिः, क्व जगति न जागर्त्ति? त्रैलोक्ये एव जागर्त्तीत्यर्थः। अत्र कीर्त्तिपूरस्य त्रैलोक्यव्यापित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः तद्रूपातिशयोक्तिः, सा च अस्य चन्द्रशेषाध्याहारत्वादिरूपकोत्थापितेति सङ्करः॥ ५७॥

कामनाशक शिवजीके मस्तकस्थ चन्द्रके शेष का अध्याहार, शेषनाग बहुत सी फणाओं के योग्य (अतिविशाल या सहस्र संख्यावाला) शरीर-यष्टि का समूह और मुनि (अगस्त्य ऋषि) के चुल्लूमें लेकर पान करने से उत्पन्न भयके सर्वतोमुखी उपाय क्षीर-समुद्र का शरीर-समूहरूप; इस राजा का कीर्ति-प्रवाह किस लोकमें नहीं जागरूक (व्याप्त) है? अर्थात् तीनों लोकों (क्रमशः स्वर्ग, पाताल और मृत्यु लोक) में जागरूक है। [इस राजा का कीर्ति-प्रवाह तीनों लोकोंमें व्याप्त हो रहा है। क्रमशः यथा—इसका कीर्ति-समूह शिवजीके मस्तकस्थ चन्द्रके शेष भाग (पन्द्रह तिथि होने से उनके अतिरिक्त सोलहवां भाग) का अध्याहार है। जिस प्रकार किसी अपूर्ण वाक्य की पूर्ति दूसरे पदका अध्याहारकर की जाती है, वैसे ही इसके कीर्ति-समूहका अध्याहार कर शिव-मस्तकस्थ चन्द्रके शेष भाग की पूर्ति (१६ कलाओं की पूर्णता) की जाती है, अतः स्वर्गमें इसका कीर्ति-समूह व्याप्त है। शेषनागकी सहस्र फणा और एक शरीर है, किन्तु सहस्र फणाओंके लिए सहस्र शरीर-यष्टिका होना उचित है, अतः इस राजाका कीर्ति-समूह उस शेषनागकी सहस्र शरीर यष्टिके योग्य हो रहा है, इस प्रकार वह पातालमें भी व्याप्त है। मुनि अगस्त्यने चुल्लूमें समुद्र को लेकर पी लिया था, अत एव एक क्षीरसमुद्र को भी भय हो गया कि कहीं वे मुनि मुझे भी न पी जावें, किन्तु इस राजाके कीर्ति-समूह अनेकों क्षीरसमुद्र बनकर एक व्यक्तिद्वारा अनेक समुद्रों का पीना अशक्य होनेसे (अथवा—उक्त कीर्ति-समूह द्वारा नीरक्षीरको एक रूप बना देनेसे 'कौन नीर है? तथा कौन क्षीर है?' इसका यथावत् निर्णय नहीं होनेसे) क्षीरसमुद्रके उक्त भयको सर्वतोमुखी (सर्वदा सफल) उपाय बनकर दूर कर दिया, अतः उक्त कीर्ति-समूह भूलोकमें भी व्याप्त हो रहा है]॥ ५७॥

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं ? कृतं
लक्षैर्लक्षभिदो दृशैव जयतः पद्मानि पद्मैरलम् ।
कर्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्द्धेन वा
तत् सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्वतैतद्द्विषाम् ॥ ५८ ॥

राज्ञामिति । शतघ्नीं नाम हेतिम् आयुधं, 'शतघ्नी तु चतुःशत्या लौहकण्टकसञ्चिता' इति यादवः; शतं हन्तीति शतघ्नीति च गम्यते 'अमनुष्यकर्तृके च' इति ठक्प्रत्यये ङीप् । कलयतो धारयतः, अस्य नृपतेः, राज्ञां शतेन किम् ? न काऽपि क्षतिरित्यर्थः; शतमारणसमर्थमस्त्रं गृह्णतोऽस्य शतसङ्ख्यकैः शत्रुभिर्न किमपि कर्त्तुं शक्यते इति भावः । लक्षभिदो लक्षभेदिनः, लक्षं लक्षसङ्ख्या, तद्विशिष्टशत्रुहन्तुश्च, 'लक्षं शरव्ये सङ्ख्यायाम्' इति च विश्वः, कुत्रचिदप्यप्रतिहतशायकस्य अस्य इत्यर्थः, राज्ञां लक्षैः कृतम् अलम्; कृतम् इति शब्दः अलमित्यर्थेऽव्ययम् । दृशा दृष्ट्यैव, पद्मानि अब्जानि, तत्सङ्ख्यकशत्रूंश्च; 'पद्मं स्यात् पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे' इति विश्वः, जयतोऽस्य राज्ञः पद्मः पद्मसङ्ख्यकैः शत्रुभिः, अलम्; किं बहुना ? सर्वपरच्छिदः समस्तशत्रुच्छिदोऽस्य राज्ञः, राज्ञां परार्द्धेन वात तत्सङ्ख्यकराजभिर्वा, परेषाम् अरीणाम् अर्द्धेन वा, किमपि कर्त्तुं नो शक्यम्; तत् तस्मात्, वत खेदे, एतद्द्विषाम् अस्य शत्रूणां, सङ्ख्याया अपगमम् अपगमसङ्ख्यत्वम्, असङ्ख्यत्वमिति यावत्, अथ च सङ्ख्यात् युद्धात्, अपगमम् अवसरणं, विना काचित् गतिर्नास्ति; 'सङ्ख्यं समिति सङ्ख्या स्यादेकत्वादिविचारयोः' इति मेदिनी, अत्रैव द्विपद्गतिमत्वस्य सङ्ख्यापगमतदपगमयोः उभयोः प्राप्तस्य पूर्वत्र निषेधस्य उत्तरत्र नियमनात् परिसङ्ख्या; तथा च सूत्रम्—'एकस्य अनेकप्राप्तावेकत्र नियमनं परिसङ्ख्या' इति ॥ ५८ ॥

'शतघ्नी' नामक (तोप, पक्षा०–सौ व्यक्तियों को मारनेवाला) शस्त्र-विशेष धारण करते हुए इस राजाके सौ राजाओंसे क्या ? (सौ शस्त्र इसका क्या कर सकते हैं अर्थात् कुछ नहीं)। लक्ष्मभेदी (निशाना मारने वाले, पक्षा०—लाख व्यक्तियों को मारनेवाले) इसके लाख शत्रु भी व्यर्थ हैं। दृष्टि (नेत्र, पक्षा०–देखने) से ही पद्मों (कमलों, पक्षा०—'पद्म' परिमित संख्यावालों) को जीतते हुए इसके 'पद्म' परिमित शत्रु भी व्यर्थ हैं। तथा सम्पूर्ण (पक्षा०–अखण्ड) को छिन्न करनेवाले इसका परार्द्ध (शत्रुका आधा भाग, पक्षा०–'परार्द्ध' (चरम) संख्या) परिमित भी शत्रु कुछ नहीं कर सकते, इस कारण सङ्ख्या अर्थात् गणना (गत, लक्ष, पद्म, परार्द्ध आदि पक्षा०—सङ्ख्य अर्थात् युद्ध)के छोड़नेके विना इसके शत्रुओंकी कोई गति नहीं है। [उक्त कारणोंसे इस राजाके सौ, लाख, पद्म और परार्द्ध-संख्यक शत्रु भी कुछ नहीं कर सकते; अत एव सङ्ख्यात्याग (पक्षा०–युद्धत्याग) के अतिरिक्त कोई उपाय उनके वचने का नहीं है] ॥ ५८ ॥

वयस्यया ऽऽकूतविदा दमस्वसुः स्मितं वितत्याभिदधेऽथ भारती ।
इतः परेषामपि पश्य याचतां भवन्मुखेन स्वनिवेदनत्वराम् ॥ ५९ ॥

वयस्ययेति । अथ दमस्वसुः आकूतविदा अभिप्रायज्ञया, वयस्यया सख्या, स्मितं वितत्य हास्यं कृत्वा, भारती वाग्देवी, अभिदधे अभिहिता, किमिति ? भवन्मुखेन त्वन्मुखेन, याचतां स्ववर्णनं प्रार्थयमानानाम्, इतोऽस्मात् राज्ञः, परेषाम् अन्येषामपि राज्ञां, स्वनिवेदने आत्मपरिचयकथने, त्वरां द्रुतकथनत्वं कालविलम्बासहत्वं वा, पश्य, एतद्वर्णनात् विरम्य परान् वर्णयेत्यर्थः ॥ ५९ ॥

इसके बाद दमयन्तीके अभिप्राय ( यह इसे वरण करना नहीं चाहती ऐसे भाव ) को जाननेवाली सखी मुस्कुराकर सरस्वतीसे बोली—इस ( राजा ) के अतिरिक्त राजाओंकी भी तुम्हारे मुखसे अपने वर्णनकी शीघ्रताको देखो । [ इसके अतिरिक्त अन्यान्य राजा भी तुम्हारे मुखसे अपना वर्णन करानेके लिये शीघ्रता कर रहे हैं, अत एव तुम इस राजाके वर्णनको समाप्तकर अन्य राजाओंका भी वर्णन करो ] ॥ ५९ ॥

कृताऽत्र देवी वचनाधिकारिणी त्वमुत्तरं दासि ! ददासि का सती ? ।
इतीरिणस्तन्नृपपारिपार्श्विकान् स्वभर्त्तुरेव भ्रुकुटिर्न्यवर्त्तयत् ॥ ६० ॥

कृतेति । हे दासि ! अत्र स्वयम्वरे, देवी वाग्देवी; वचने नृपतिवर्णने, अधिकारिणी कर्त्री, कृता नियुक्ता, त्वं का सती का भवन्ती, केन प्रयुक्ता सतीत्यर्थः, असती कुलटा, का त्वामति च गम्यते; उत्तरं ददासि ? इति ईरिणः एवं ब्रुवाणान्, तस्य नृपस्य, परिपार्श्वं वर्त्तन्ते इति पारिपार्श्विकान् सेवकान्, 'परिमुखञ्च' इति ठक् चकारात् पारिपार्श्विकः, स्वभर्त्तुः स्वस्वामिन एव, भ्रुकुटिः न्यवर्त्तयत् तेषां स्वामी एव तान् भ्रूभङ्गेण निवारितवान् इत्यर्थः ॥ ६० ॥

हे दासि ! यहांपर ( इस राजसभामें ) देवी ( सरस्वती देवी ) बोलने ( राजाओंका परिचय देने ) में अधिकारिणी बनायी गयी है, तुम कौन होकर ( अथवा—असती अर्थात् दुराचारिणी कौन होकर ) उत्तर दे रही हो ?' ऐसा कहनेवाले राजा ( वर्ण्यमान 'मालय' राजा ) के पार्श्ववर्तियोंको अपने स्वामीकी भ्रुकुटिने ही मनाकर दिया अर्थात् उक्त वचन कहनेवाले अपने अनुचरोंको उक्त राजाने ही भ्रुकुटिके सङ्केतसे रोक दिया ॥ ६० ॥

धराधिराजं निजगाद भारती तत्सम्मुखेषद्वलिताङ्गसूचितम् ।
दमस्वसारं प्रति सारवत्तरं कुलेन शीलेन च राजसूचितम् ॥ ६१ ॥

धरेति । भारती सरस्वती, कुलेन वंशमर्यादया, शीलेन सद्वृत्तेन च, राजसु मध्ये उचितं योग्यं, सर्वलोकपरिचितमित्यर्थः, सारवत्तरं श्रेष्ठम्, अतिवलिष्ठं वा, तस्य वर्णनीयनृपस्य, सम्मुखं यथा तथा ईषद्वलितेन वक्रितेन, अङ्गेन वपुषा, सूचितं निर्दिष्टं, धराधिराजं भूपतिं, प्रति लक्षीकृत्य, दमस्वसारं निजगाद तस्यै कथयामासेत्यर्थः ॥ ६१ ॥

सरस्वतीने कुल तथा शील ( सदाचार ) से राजाओं में योग्य ( प्रसिद्ध या श्रेष्ठ ) और अत्यन्त वलवान् ( अथवा—कुल तथा शीलसे अत्यन्त वलवान् अर्थात् श्रेष्ठ और राजाओंमें योग्य ) एवं उस ( राजा या दमयन्ती ) के सम्मुख कुछ तिर्यक् किये हुए अङ्ग ( नेत्रादि या हस्तादि ) से सूचित ( दूसरे ) राजाको दमयन्तीसे वतलाया ॥ ६१ ॥

कुतः कृतैवं नवलोकमागतं प्रति प्रतिज्ञाऽनवलोकनाय वा ?।
अपीयमेनं मिथिलापुरन्दरं निपीय दृष्टिः शिथिलाऽस्तु ते वरम् ॥६२॥

कुत इति । हे भैमि ! आगतं स्वयंवरार्थमुपस्थितं, नवलोकम् अपूर्वजनं प्रति, एवं परिदृश्यमानप्रकारेण, अनवलोकनाय वा अनवलोकितुमेव, अवधारणार्थो वा-शब्दः; कुतः कस्मात् कारणात्, प्रतिज्ञा कृता ? न युक्तमेतदिति भावः; भवतु तावत् एनं पुरोवर्त्तिनं, मिथिलापुरन्दरमपि मिथिलापतिमपि, निपीय सम्यक् निरीक्ष्य, सकृदपीति भावः, ते तव, इयम् दृष्टिः शिथिला शिथिलादरा, एतस्य रूपवत्तायामिति भावः, अस्तु, वरम् इत्यपि श्रेष्ठं, वीक्ष्य उपेक्षणम् अपि अदर्शनात् किञ्चित् प्रियमित्यर्थः ॥ ६२ ॥

आये हुए नवीन ( पाठा०—वर अर्थात् दुल्हा या श्रेष्ठ ) लोगोंको नहीं देखनेके लिए ही इस प्रकार ( पाठा०—तुमने नहीं देखनेके लिए ) क्यों प्रतिज्ञा की है ? ( ऐसा करना उचित नहीं है )। इस मिथिलानरेशको पान ( देख ) कर तुम्हारी दृष्टि शिथिल ( आदर वाली ) होवे यह श्रेष्ठ है । (अथवा—श्रेष्ठ इस मिथिलानरेशको……शिथिल हो)। [यद्यपि तुमने पूर्व वर्णित राजाओंको देखा तक नहीं है, किन्तु ऐसा करना अनुचित होनेसे इस मिथिला-नरेशको एक वार देख लो फिर भले ही वरण मत करो, क्योंकि आये हुए किसीको नहीं देखनेकी अपेक्षा देखकर उपेक्षा कर देना श्रेष्ठ है ]॥ ६२ ॥

न पाहि पाहीति यदब्रवीरमुं मदोष्ठ ! तेनैवमभूदिति क्रुधा ।
रणक्षितावस्य विरोधिमूर्द्धभिर्विदश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३ ॥

नेति । मदोष्ठ ! हे मदीयाधर ! यत् यस्मात्, पाहि पाहि इति अमुं राजानं, न अब्रवीः, दुरभिमानादिति शेषः, तेन पाहि पाहीति अवचनेनैव, एवमीदृशी मे दशा, अभूदिति हेतोः, क्रुधा क्रोधेन, रणक्षितौ अस्य 'विरोधिमूर्द्धभिः शत्रुशिरोभिः कर्त्तृभिः, दन्तैः करणैः निजमोष्ठमधरम् ; ओष्ठशब्दस्य अधरार्थकत्वमपि दृश्यते, विदश्य, आस्यते स्थीयते; अस्य राज्ञः शत्रूणामेतच्चरणमेव शरणम्, अन्यथा मरणमेवेति भावः। अत्र शत्रुशिरसां प्रत्यर्थिविषयक्रोधहेतुकस्य ओष्ठदंशनस्योष्ठविषयक्रोधहेतुकत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ६३ ॥

'हे मेरे ओष्ठ ! जो तुमने 'पाहि, पाहि' अर्थात् 'रक्षा करो, रक्षा करो' ऐसा इस ( मिथिला नरेश ) से नहीं कहा; इस कारण ऐसा ( हम मस्तकोंका कटकर भूमिमें लोटना )

१. 'वर' इति पा० । २. 'ते' इति पा० ।

हुआ', इस प्रकार इस ( मिथिलानरेश ) के शत्रुओंके मस्तक युद्ध भूमिमें दाँतोंसे अपने ओष्ठोंको काटकर रह जाते हैं। [ 'पवर्ग' का उच्चारण-स्थान ओष्ठ होनेसे 'पाहि' शब्दके उच्चारण नहीं करनेसे मुख्यापराधी ओष्ठ ही है, अत एव अपराधीको दण्डित करना उचित है। जिस प्रकार शवकी मूठ नहीं खुलती, उसीप्रकार युद्धभूमिमें क्रोधसे मरनेके समय दांतोंसे ओष्ठ काटते हुए वैरियोंके मस्तक ज्योंके त्यों ( वैसी ही अवस्थामें ) रह जाते हैं॥ यह मिथिलानरेश शरणागत शत्रुका रक्षक तथा उद्धत शत्रुको मारनेवाला है ] ॥ ६३ ॥

भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरःप्रसर्पिणे ।
धनुः परीरम्भमिवास्य सम्मदान्महाहवे दित्सति वामबाहवे ॥६४॥

भुजे इति । महाहवे महारणे, अस्य राज्ञः, धनुः कर्तृ, दक्षिणे अपसव्ये, अथ च सरले, अनुकूलेऽपीत्यर्थः, भुजे हस्ते, इषुणा सह गुणं ज्याम्, आदाय अपसर्पति अपगच्छति, कर्णपश्चाद्देशं गच्छति सत्यपीत्यर्थः, अथ च रणस्थलात् पलायनं कुर्वत्यपि, पुरःप्रसर्पिणे पुरोगामिने, गुणसहायाभावेऽपि रिपुसम्मुखयायिने इति भावः, वामबाहवे वामहस्ताय, अथ च प्रतिकूलायापि भुजाय, सम्मदात् रिपुविनाशाय रणक्षेत्रपुरोभागगमनजन्यसन्तोषात्, परीरम्भम् आलिङ्गनम्, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः, दित्सतीव दातुमिच्छतीव इत्युत्प्रेक्षा, ददातेः सनन्ताल्लट् 'सनि मीमा—' इत्यादिना इदादेशः अभ्यासलोपश्च, मध्यस्थः सुवंशजो जनः गुणिनि अनुकूलेऽपि जने स्वजनमादाय सङ्ग्रामात् पलायिते सति सङ्ग्रामं कर्तुं पुरोगामिने प्रतिकूलायापि जनाय निपुणोऽयमिति मत्वा हर्षादालिङ्गनं ददाति इति निष्कर्षः। वामहस्तस्थितधनुषः दक्षिणहस्तेनाकर्णान्तगुणाकर्षणात् वामहस्ते कोटिद्वयनमनमेवालिङ्गनत्वेनोत्प्रेक्षितम्। जिगीषुभिः दक्षिणोऽपि भीरुः न समाद्रियते वामोऽपि रणोत्साही शूरः समाद्रियते इति भावः॥ ६४ ॥

महायुद्धमें इस राजाका धनुष बाणके साथ गुण ( मौर्वी, पक्षा०—श्रेष्ठ गुण ) को लेकर दहने ( पक्षा०—अनुकूल ) हाथके पीछे हटते रहनेपर ( पक्षा०—कान तक पहुंचने पर ) आगे बढ़नेवाले वाम ( बाएं, पक्षा०—प्रतिकूल ) हाथके लिए मानो हर्षसे आलिङ्गन ( अथवा—हर्षसे मानो आलिङ्गन ) देता है। [ जिसप्रकार गुणको सहायक सहित लेकर भगनेवाले अनुकूल व्यक्तिका भी आदर नहीं होता, किन्तु आगे बढ़नेवाले असहाय या प्रतिकूल व्यक्तिका भी आदर होता है; उसी प्रकार इस राजाका धनुष भी युद्धभूमिसे पीछे हटनेवाले दहने बाहुका आलिङ्गन कर आदर नहीं करता, अपितु आगे बढ़नेवाले बायें बाहुका आलिङ्गन कर आदर करता है। युद्धभूमिमें यह मिथिलानरेश धनुषको अच्छी तरह पकड़नेवाला तथा बाणको कान तक खैंचनेवाला है ] ॥ ६४ ॥

अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् ।

तत् कम्बुप्रतिबिम्बितं किमु ? शरत्पर्जन्यराजिश्रियः
पर्यायः किमु ? दुग्धसिन्धुपयसां सर्वानुवादः किमुः ? ॥६५॥

अस्येति । अस्य उर्वीरमणस्य भूपतेः सम्बन्धि, पर्वणि भवः पार्वणः तादृशस्य विधोः राकाचन्द्रस्य, द्वैराज्यं द्वयो राज्ञोरिदं कर्म द्वैराज्यं राजद्वयसम्बन्धि कर्मेत्यर्थः, चन्द्रद्वयसम्बन्धि धावल्यमिति भावः, द्विराजशब्दात् बहुव्रीह्यन्तात् ब्राह्मणादित्वात् ष्यञ्प्रत्ययः, तत्र सज्जं सन्नद्धं, तत्कार्यकारकमित्यर्थः, पार्वणविधुसदृशमिति समुदितार्थः, सर्वाङ्गे उज्ज्वलस्य धवलस्य, शर्वपर्वतस्य कैलासस्य, सितः सितिमा, धावल्यमित्यर्थः, 'गुणे शुक्लादयः पुंसि' इत्यमरः, तस्य श्रिया सम्पदा, यो गर्वस्तं निर्वासयति लुम्पतीति तन्निर्वासि, कैलासस्य शुभ्रताया अपि अधिकं शुभ्रमित्यर्थः, यत् यशः, तत् कम्बूनां शङ्खानां, प्रतिबिम्बितं प्रतिबिम्बं, प्रतिच्छाया इत्यर्थः, किमु ? किं वा शरत्पर्जन्यराजिश्रियः शरन्मेघावलिधावल्यसम्पदः, पर्यायो रूपान्तरं किमु ? अथवा दुग्धसिन्धोः क्षीराब्धेः, पयसां क्षीराणां, सर्वानुवादः सर्वस्यापि पुनरुक्तिः किमु ? कृत्स्नं तत् क्षीरमेवेदं किमित्यर्थः । उत्प्रेक्षात्रयस्य संसृष्टिः ॥ ६५ ॥

इस पृथ्वीपति ( मिथिलानरेश ) का पूर्णिमाचन्द्रके दो राजाओंके कर्ममें तत्पर अर्थात् पूर्णिमाचन्द्रके समान और सम्पूर्ण अङ्गों ( भागों ) में श्वेत वर्ण कैलास पर्वतकी श्वेतकान्तिके गर्वको नष्ट करनेवाला अर्थात् कैलास पर्वतसे भी अधिक श्वेत जो यश है; वह शङ्खका प्रतिबिम्ब है क्या ?, शरत्कालीन मेघ-समूहकी शोभा ( श्वेतिमा ) का पर्याय ( रूपान्तर ) है क्या ? और क्षीरसागरके जलका सर्वानुवाद ( पुनरुक्ति ) है क्या ? । [ इस मिथिलानरेशका यश चन्द्रादिके समान तथा श्वेत शङ्खका प्रतिबिम्ब, किसी शब्दके पर्यायवाची शब्दान्तरद्वारा कथनके समान शरत्कालीन मेघ-समूहकी श्वेतिमाका पर्याय तथा किसी वाक्यादिके प्रत्यक्षर अनुवादके समान क्षीरसमुद्रका सम्पूर्णरूपसे अनुवाद होनेसे उक्त शङ्ख आदिके समान श्वेत है । दूसरा भी दो राजकर्ममें स्थित व्यक्ति विपक्षीका निराकरण करता ही है । यह मिथिलानरेश महायशस्वी है ] ॥ ६५ ॥

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः ।
उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशःक्षोणीजबीजव्रजम् ? ॥ ६६ ॥

निस्त्रिंशेति । निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति निस्त्रिंशः त्रिंशदङ्गुल्यधिकः खड्गः इत्यर्थः, डच्प्रकरणे 'सङ्ख्यायास्तत्पुरुषस्य—' इति डच्-प्रत्ययः, तेन त्रुटितेषु खण्डितेषु अरिवारणघटाकुम्भेषु शत्रुगजसमूहकुम्भेषु, अस्थिकूटानाम् अस्थिसङ्घातानाम्, अवटस्थानेषु गर्त्तप्रदेशेषु, स्थायुकाः स्थायिनः, 'लषपत—' इत्यादिना उकञ्-प्रत्ययः, तेषां मौक्तिकोत्कराणां मुक्तासमूहानां, किरतीति किरः क्षेपकः, 'इगुपधज्ञा—' इति कः, अस्य

नृपस्य, अयं करः चत्वार्यङ्गानि हस्त्यादीनि येषां तादृशानां सन्यानां समरेषु त्वङ्गतां सञ्चरतां, तुरङ्गाणां क्षुरैः करणैः, क्षुण्णासु कृष्टासु, क्षितिषु यशःक्षोणीजस्य कीर्त्तिवृक्षस्य, वीजानां व्रजं समूहं, क्षिपन् किरन्, वपन्निव इत्यर्थः, स्थित इति शेषः, इति कैः जनैः न उन्नीतः ? न उत्प्रेक्षितः ? गजकुम्भस्थमुक्तानां श्वेतत्वात् क्षुद्रत्वाच्च यशोवृक्षवीजस्वरूपत्वेन तेषाञ्च रणभूमौ निपातनात् वपनत्वेन चोत्प्रेक्षणादत्रोत्प्रेक्षाद्वयम् ॥

किन लोगोंने इस ( मिथिलानरेश ) के इस ( प्रत्यक्ष दृश्यमान ) तलवारसे काटी गयी शत्रुओंके गज-समूहके कुम्भस्थित हड्डियोंके समूहरूप गड्ढेमें स्थित मोतियोंके समूहको फेंकनेवाले हाथको चतुरङ्गिणी ( गजदल, हयदल, रथदल और पैदल ) सेनावाले युद्धमें दौड़नेवाले घोड़ोंके ( क्षुर अस्त्र-विशेष ) के समान तीक्ष्ण खुरोंसे क्षुण्ण अर्थात् जोती गयी भूमिमें यशोरूपी वृक्षोंके वीज-समूहको वोते हुएके समान नहीं तर्क किया है । [ जिस प्रकार कोई किसान खेतको जोतकर उसमें पेड़ोंके वीजोंको वोता है, उसी प्रकार यह मिथिलानरेश युद्धमें चतुरङ्गिणी सेनावाले युद्धमें दौड़ते हुए घोड़ोंके तीक्ष्ण खुरोंसे कटनेसे जोती हुई-सी भूमिमें तलवारसे कटकर शत्रुगज-समूहोंके कुम्भोंसे निकलते हुए मोतियोंको युद्धदर्शक लोग ऐसा मानते हैं मानो इस राजाके हाथ यशोरूप पेड़ोंके वीजोंको वो रहे हैं । अतिशय श्वेत मोतीरूपी वीजोंसे अतिशय श्वेत यशोरूपी पेड़ोंका उत्पन्न होना उचित ही है । शत्रुओंके गज-समूहके कुम्भस्थल पर तलवार का प्रहार करने पर उनसे गजमुक्ताएं निकलती हैं और इससे इस मिथिलानरेशका यश वढ़ता है ] ॥ ६६ ॥

अर्थिभ्रंशवहूभवत्फलभरव्याजेन कुब्जायितः
सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।
आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ? ॥ ६७ ॥

अर्थीति । अस्मिन् राज्ञि, अतिदानभाजि अतिदानशौण्डे सति, मनसा अकल्पितमप्यर्थं ददति सतीत्यर्थः, सः प्रसिद्धः, कल्पद्रुमः मनःकल्पितार्थमात्रप्रदः कल्पवृक्षः, अर्थिनां भ्रंशेन असद्भावेन, वहूभवतः व्ययाभावादुपचीयमानस्य, फलभरस्य व्याजेन छलेन, कुब्जायितः कुब्जीभूतः सन्, वस्तुतस्तु लज्जयैवेति भावः, लोहितादेराकृतिगणत्वात् क्यषि कर्त्तरि क्तः, कथमपि कृच्छ्रेण, आस्तां निम्नतया अन्यैरदृष्टत्वात् कथमपि लज्जावरणसम्भवादिति भावः; किन्तु निर्व्ययाणां व्ययरहितानां, रत्नसम्पदाम् उदयेन वृद्ध्या, उदग्रः उच्छ्रितः, उच्चशिखरः इति भावः, रत्नाचलो रोहणाद्रिस्तु, याचकश्रेणीभिः कर्त्रीभिः, वर्जनेन परिहारेण, यत् दुर्यशः तेन निविडितव्रीडो घनीकृतलज्जः सन्, कथमास्ते ? कथं तिष्ठति ? उच्चतया स्थित्या सर्वैर्दृष्टत्वात् लज्जासंवरणोपायासम्भवादिति भावः । अत्र द्रुमशैलयोः लज्जाऽसम्वन्धेऽपि सम्वन्धोक्तेरतिशयोक्तिभेदः ॥ ६७ ॥

महादानी ( कल्पनातीत दान करनेवाले ) इस राजाके रहनेपर याचकोंके अभावसे अधिक होते हुए फलोंके भारके बहानेसे कुबड़ा ( नम्र ) बना हुआ कल्पवृक्ष किसी प्रकार रहे, किन्तु व्ययरहित रत्नसम्पत्तिसे उन्नत तथा याचक-समूहके निषेधसे ( उत्पन्न ) अपयशरूपी बड़ी हुई लज्जावाला रत्नाचल अर्थात् 'रोहण' नामक पर्वत कैसे रहता है ? । [ यह राजा याचकों को कल्पनातीत दान देता है, अतः कल्पित दान देनेवाले तथा स्वर्गमें होनेसे दूरस्थ कल्पवृक्षके पास याचकोंने जाना छोड़ दिया, इस कारण उसके फल इतने अधिक हो गये कि वह उनके भारसे झुक गया, परन्तु वास्तविकमें 'यह राजा मुझसे भी अधिक दान देता है इस लज्जाके कारण ही वह कल्पवृक्ष झुका ( नम्रमुख ) हुआ है, यह किसी प्रकार अर्थात् स्वर्गस्थ एवं नम्रमुख होनेसे वैसा होकर रहना उचित भी है; किन्तु कभी व्यय न करनेके कारण 'रोहण' पर्वतके रत्न बढ़ते गये और उसका शिखर ऊंचा हो गया और भूलोकमें रहकर भी याचकों को निषेध करने ( दान न देने ) से उसका बहुत अपयश हुआ जो महालज्जाकर था, अतः भूलोकस्थ अर्थात् समीपस्थ होने पर भी याचकोंको दान नहीं देनेसे लज्जाकर अपयशवाला 'रोहण' पर्वत व्ययाभावके कारण बढ़े हुए रत्नोंसे उन्नत शिखर होकर रहता है अर्थात् निर्लज्ज होकर मस्तक ऊंचा किये रहता है, यह उसके लिये अनुचित है । यह मिथिलानरेश कल्पवृक्ष एवं रत्नाचलसे भी अधिक दानी है ] ॥ ६७ ॥

**सृजामि किं विघ्नमिदन्नृपस्तुताविती‍ङ्गितैः पृच्छति तां सखीजने ।**
**स्मिताय वक्त्रं यदवक्रयद् वधूस्तदेव वैमुख्यमलक्षि[1] तन्नृपे ॥ ६८ ॥**

**सृजामीति । अथ सखीजने तां भैमीम्, इदन्नृपस्य एतन्नृपस्य, स्तुतौ विघ्नं सृजामि किम् ? इतीङ्गितैः चेष्टितैः, पृच्छति सति वधूः भैमी, स्मिताय स्मितं कर्त्तुं, क्रियार्थेत्यादिना चतुर्थी, वक्त्रं अवक्रयत् वक्रीचकार, इति यत् तत् वक्रीकरणमेव, तन्नृपे तस्मिन् नृपे, वैमुख्यं नैस्पृह्यम्, अलक्षि लक्षितम् ॥ ६८ ॥**

'इस राजाकी प्रशंसामें विघ्न करूं क्या ?' यह सङ्केतके द्वारा दमयन्तीसे सखीके पूछने पर दमयन्तीने मुस्कुरानेके लिए जो मुख फेरा उसे ही उस राजा ( मिथिलानरेश ) में ( वहांके दर्शक, राज-समूह, सखी-समूह या उस राजाने ) विमुखता ( अनादरसे मुख फेरना ) लक्षित किया । ( पाठा०—उसे ही'''उस राजामें अनादरजन्य मुखमलिनता लक्षित किया ) । [ दमयन्तीके मुख फेरनेसे लोगोंने 'इस मिथिलानरेशको भी यह नहीं चाहती' ऐसा समझ लिया ] ॥ ६८ ॥

**दृशाऽथ निर्दिश्य नरेश्वरान्तरं मधुस्वरा वक्तुमधीश्वरा गिराम् ।**
**अनूपयामास[1] विदर्भजाश्रुतौ निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥६९॥**

**दृशेति । अथ मधुस्वरा मधुरकण्ठी, गिरामधीश्वरा सरस्वती, नरेश्वरान्तरं राजा-**

---

१. 'वैलक्ष्य' इति पा० । १. 'अपूपुरद्भीमभुवः श्रुती पुनः' इति पा० ।

न्तरं, वक्तुं वर्णयितुं, दृशा निर्दिश्य निरूप्य, विदर्भजाया वैदर्भ्याः, श्रुतौ श्रोत्रे, निजास्यचन्द्रस्य सुधाभिः उक्तिभिः वचनामृतैरित्यर्थः, अनूपयामास सरसीचकार, वचनामृतवर्षणेन भैम्याः श्रोत्रद्वयमत्यर्थमार्द्रीचकारेत्यर्थः, 'जलप्रायमनूपं स्यात्' इत्यमरः। अनुगता आपो यस्येति अनूपम् 'ऋक्पूरब्धूः—' इत्यादिना समासान्तः, 'ऊदनोर्देशे' इत्यूकारः, तस्मात् 'तत्करोति—' इत्यादिना ण्यन्ताल्लिट् ॥ ६९ ॥

इस ( उक्त प्रकारसे मिथिलानरेशमें अनादर प्रकट करने ) के बाद मधुरभाषिणी वचनाधिष्ठात्री ( सरस्वती ) देवीने दूसरे राजाको कहने ( वर्णन ) करनेके लिए नेत्र ( के सङ्केत ) से दिखलाकर दमयन्तीके दोनों कानोंको अमृतरूपी वचनोंसे सरस किया अर्थात् दमयन्तीसे बोली ॥ ६९ ॥

स कामरूपाधिप एष हा ! त्वया न कामरूपाधिक ईक्ष्यतेऽपि यः ।
त्वमस्य सा योग्यतमा हि वल्लभा सुदुर्लभा यत्प्रतिमल्लभा परा ॥७०॥

स इति । एष पुरोवर्त्ती, यः कामात् कन्दर्पादपि रूपेणाधिकः, सः प्रसिद्धः, कामरूपाधिपः कामरूपदेशाधीश्वरोऽपि, त्वया नेक्ष्यते हा ! तव नैतद्युक्तमिति भावः; कुतः? यस्याः तव इति भावः; प्रतिमल्ला प्रतिद्वन्द्विनी, भाः कान्तिर्यस्याः सा यत्प्रतिमल्लभा यत्सदृशसौन्दर्यशालिनीत्यर्थः, परा अन्या रमणी, सुदुर्लभा अतिदुर्लभा, एवम्भूता सा त्वमस्य राज्ञः, योग्यतमा हि अत्यन्तानुरूपैव, वल्लभा दयिता, समानसौन्दर्यतया समागमयोग्योऽयं त्वया वीक्षितव्य एवेत्यर्थः ॥ ७० ॥

वह अर्थात् अतिप्रसिद्ध यह (सामने स्थित) कामरूप ('कामरूप' नामक देश, पक्षा०—कामदेवके रूप अर्थात् सौन्दर्य ) का राजा कामदेवके रूपसे अधिक अर्थात् कामदेवसे अधिक सुन्दर है ( अथवा—कामदेवके रूपसे अधिक नहीं है ? अर्थात् है ही ), जिसे तुम देखती भी नहीं हो ( इसे वरण करनेके विषयमें फिर क्या कहना है ? ), हाय ! ( कष्ट है ) अर्थात् इसे देखना चाहिये । ( क्योंकि ) जिन ( तुम दोनों ) के समान सौन्दर्यवाला दूसरा व्यक्ति अत्यन्त दुर्लभ है, वह तुम इस ( कामरूपनरेश ) के अत्यन्त योग्य प्रियतमा हो । ( अथवा जिसके अर्थात् तुम्हारे समान श्रेष्ठ ( या दूसरी ) कान्ति अत्यन्त दुर्लभ है । अथवा—जिसके ( तुम्हारे ) समान कान्तिवाली दूसरी ( स्त्री ) अत्यन्त दुर्लभ है अर्थात् तुम्हारे समान सुन्दरी दूसरी कोई स्त्री नहीं है ) ॥ ७० ॥

अकर्णधाराशुगसम्भृताङ्गतां गतैररित्रेण विनाऽस्य वैरिभिः ।
विधाय यावत्तरणोर्भिदामहो ! निमज्ज्य तीर्णः समरे भवार्णवः ॥७१॥

अकर्णेति । कर्ण इव कर्णः प्रतिमुखशल्यं तद्रहितः अकर्णः, न कर्णिभिर्नापि दिग्धैरिति निषेधादिति भावः, अकर्णा धारा यस्य स अकर्णधारः, स चासौ आशुगः विशिखः, तैः सम्भृतानि सम्पूरितानि, अङ्गानि येषां ते तदङ्गाः तत्तां, गतैः अस्य वैरिभिः शत्रुभिः, आरम्यः त्रायते इत्यरित्रं वर्मादि तेन, विना तद्विहाय, समरे निम-

ज्ज्य पतित्वा, तरणेः सूर्यस्य, भिदां भेदं, विधाय कृत्वा, यावत्, सूर्यमण्डलं भित्त्वैव, भवः संसार एव, अर्णवः समुद्रः, तीर्णः, अहो ! आश्चर्यम्। 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥' इति दर्शनादिति। कर्णधारः नाविकः, तस्य अभावात् आशुगेन पवनेन, सम्भृताङ्गतां चाल्यमानदेहत्वं, गतैः प्राप्तैः, जनैः अरित्रेण केनिपातेन, नौकापश्चाद्भागावद्धकाष्ठदण्डविशेषेणेत्यर्थः, विना तरणेः नौकायाः, भिदां भेदं, विधाय कृत्वा, समुद्रे निमज्ज्य भवार्णवः तीर्णः उत्तीर्णः इति च गम्यते ॥ ७१ ॥

विना कर्णाकार लोहकण्टकवाली धारावाले बाणों से परिपूर्ण ( बिधे हुए ) शरीरवाले इस राजाके शत्रुलोग शत्रु ( इस राजा ) से बचानेवाले ( इसकी अपेक्षा अधिक शूरवीर अन्य राजा, अथवा—कवच ) के विना युद्धमें मरकर तथा सम्पूर्ण सूर्यमण्डलका भेदन कर संसारको पार कर लिया, यह आश्चर्य है। पक्षा०—कर्णधार ( पतवार पकड़नेवाला नाविक ) तथा वायुसे पूर्ण अङ्ग ( नाव खेनेके रस्सी-पाल आदि साधन ) से रहित, इसके शत्रु डाँड़े ( नाव खेनेवाले बांस ) के विना सम्पूर्ण नावको तोड़कर तथा डूबकर ( अत्यन्त दुस्तर विशाल ) समुद्रको पार कर गये, यह आश्चर्य है। [ युद्धमें मरनेवाले वीर सूर्यमण्डलका भेदनकर मुक्त हो जाते हैं। तथा पक्षा०—कर्णधार, अनुकूल वायु, डाँड़ा आदिके विना नाव टूटनेपर भी अथाह समुद्रमें डूबकर उसे पार करना आश्चर्य ही है। यह राजा युद्धमें शत्रुओंको मार डालता है ]॥ ७१ ॥

अमुष्य भूलोकभुजो भुजोष्मभिस्तपर्त्तुरेव क्रियतेऽरिवेश्मनि ।
प्रपां न तत्रारिवधूस्तपस्विनी ददाति नेत्रोत्पलवासिभिर्जलैः ? ॥७२॥

अमुष्येति। यस्मात् अमुष्य भूलोकभुजः पृथिवीलोकस्थितस्य राज्ञः, न तु सूर्यवत् आकाशमार्गचारिण इति तात्पर्यम्; भुजोष्मभिः भुजप्रतापैः, अरिवेश्मनि शत्रुगृहे, तपर्त्तुः ग्रीष्मर्त्तुरेव, क्रियते नित्यसन्तापः क्रियते इत्यर्थः, तस्मात् तत्र अरिवेश्मनि, तपस्विनी शोच्या धर्मशीला च, अरिवधूर्नेत्रोत्पलयोर्वसन्तीति तद्वासिभिः जलैरश्रुभिः, उत्पलवासनावद्भिश्च जलैः, प्रपीयते अस्यामिति प्रपा पानीयशालिका, 'पाधातोः अङ्' तां न ददाति ? इति काकुः, ददातीत्यर्थः, धार्मिका हि ग्रीष्मकाले वासितोदकप्रायाः प्रपाः प्रवर्त्तयन्तीति। एतेन राज्ञा शत्रुमारणात् सर्वाः शत्रुस्त्रियो निरन्तरं रुदन्तीति भावः ॥ ७२ ॥

इस राजाके बाहुप्रताप ( पक्षा०—बाहुजन्य गर्मी ) शत्रुके घरमें जो ग्रीष्म ऋतु करते हैं, इससे वहांपर ( शत्रुके घरमें ) तपस्विनी ( दुखिया, पक्षा०—तपस्या करनेवाली अर्थात् साध्वी ) शत्रुस्त्री नेत्र-कमलस्थित जल अर्थात् आँसू ( पक्षा०—नेत्ररूप कमलोंसे सुवासित जलों ) से प्याऊ ( पौसरा ) नहीं देवे ? अर्थात् अवश्य देवे। [ ग्रीष्म ऋतुमें साध्वी स्त्रीका कमल आदिसे सुगन्धित जलसे पौसरा चलाना उचित है। इसके द्वारा शत्रुके मारे जानेपर उसकी पतिव्रता स्त्री उसके घरमें रोती है ]॥ ७२ ॥

एतद्दत्तासिघातस्रवदसृगसुहृद्वंशसार्द्रेन्धनैत-
द्दोरुद्दामप्रतापज्वलदनलमिलद्भूमधूमभ्रमाय ।
एतद्दिग्जैत्रयात्राऽसमसमरभरं पश्यतः कस्य नासी-
देतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ? ॥ ७३ ॥

एतदिति । आजिस्थलीषु रणभूमिषु, एतस्य राज्ञः, नासीरे सेनामुखे, वाजिव्रजानां खुरैः जाता रजसां राजिः पङ्क्तिः, एतस्य राज्ञः, दिशो जैत्रासु, तृन्नन्तत्वात् षष्ठीसमासनिषेधः, यात्रासु दिग्विजययात्रासु, असमम् असदृशम्, अतुलनीयमित्यर्थः, समरभरं समरव्यापारं, पश्यतः अवलोकयतः, कस्य जनस्य, एतेन राज्ञा, दत्तैः प्रयुक्तैः, असिघातैः खड्गप्रहारैः, स्रवदसृजः क्षरद्रक्ताः, असुहृदः शत्रुवर्गाः एव, वंशाः वेणवः, 'वंशो वर्गे कुले वेणौ' इति विश्वः, त एव सार्द्रेन्धनानि सरसानि दाह्यकाष्ठानि, यस्य एतादृशो यः एतस्य राज्ञः, दोष्णोः भुजयोः, उद्दामः प्रचण्डः, प्रताप एव ज्वलदनलः तस्मिन् मिलतां सङ्गच्छमानानां, वर्त्तमानानामिति यावत् भूम्नां बहूनां, धूमानां भ्रमाय भ्रान्त्यै, न आसीत् ? सर्वस्यापि आसीदेवेत्यर्थः । अत्र रजोराजौ कविसम्मतसादृश्यात् धूमभ्रमोक्त्या भ्रान्तिमान् अलङ्कारः ॥ ७३ ॥

इस राजाके सेनाग्रमें अश्व-समूहके खुरोंसे उत्पन्न धूलि-समूह इस राजाके दिग्विजयकी यात्रामें अतुलनीय युद्धव्यापारको देखनेवाले किस (व्यक्ति) के इस (राजा) के द्वारा किये गये खड्गप्रहार (तलवारकी चोट) से बहते हुए खूनवाले शत्रुवंश (शत्रु-समूह, पक्षा०—शत्रुरूपी वांस) रूपी गीले इन्धनवाली इस राजाकी गम्भीर (महान्) प्रतापरूपी जलती हुई अग्निमें होनेवाले धूम-समूहके भ्रमके लिए नहीं होता ? अर्थात् सबके भ्रमके लिए होता है । [ इस राजाकी दिग्विजययात्रामें सेनाके आगे दौड़नेवाले अश्वसमूहके खुरसे उड़ी धूलि-समूहको देखकर इस राजाके अनुपम युद्धव्यापार देखनेवाले लोगोंको यह भ्रम हो जाता है कि इसने शत्रुओंपर जो तलवारका प्रहार किया है, उससे रक्त बहाते हुए शत्रु-समूह (पक्षा०—शत्रुरूप वांस) ही गीले इन्धन हैं और उन (उक्तरूप गीले इन्धन) के इस राजाके विशाल प्रतापरूपी जलती अग्निमें पड़नेसे धूम-समूह निकल रहा है । गीले इन्धनके अग्निमें पड़नेपर धूम-समूहका निकलना उचित ही है ॥ सब शत्रु इसके प्रतापरूपी अग्निमें जल गये हैं ] ॥ ७३ ॥

क्षीरोदन्वदपाः प्रमथ्य मथितादेशेऽमरैर्निर्मिते
स्याक्रन्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् ।
केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत-
स्रोतःप्रोतपिपासुकर्णकलसीभाजाऽभिषेकोत्सवः ? ॥ ७४ ॥

क्षीरोदन्वदिति । अमरैः देवैः, क्षीराणाम् उदन्वतः क्षीराब्धेः, आपः दुग्धरूपजलानि, क्षीरोदन्वदपाः 'ऋक्पूः—' इत्यादिना समासान्तः, ताः प्रमथ्य विलोड्य,

मथितं तक्रं, मथनोद्भूतो निर्जलोदधिक्षीरविकारः इत्यर्थः, 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बुनिर्जलम्' इत्यमरः, तद्भूते आदेशे इवादेशे रूपान्तरे, निर्मिते सम्पादिते सति, रूपान्तरापादनेन क्षीराब्धौ अभावं गमिते सतीत्यर्थः, अथवा द्रवोपरि अवस्थानासम्भवात् दुग्धरूपे तज्जले अतिघने कृते सतीत्यर्थः, तत् तथा, क्षीरत्वेन प्रसिद्धम् उदकं यस्य स क्षीरोदः क्षीराब्धिः, 'उदकस्योदः संज्ञायाम्' इत्युदादेशः, तद्रूपं सिंहासनं स्वेन आत्मना, सु सुखेन वा, आक्रम्यम् उपवेशनयोग्यं, सृजतः कुर्वतः, घनीभूतं क्षीरसमुद्रमुपविशतः इत्यर्थः; यशसो विशेषणमेतत् बोध्यम्; अस्य राज्ञः, यशसः एतस्य राज्ञः सम्बन्धि, कवित्वम् एतद्रचितं काव्यम्, अथवा कविनिर्मितम् एतत्सम्बन्धि कीर्त्तिवर्णनरूपं काव्यमित्यर्थः, तदेवामृतं कर्णरसायनत्वादमृतरूपमित्यर्थः, तस्य स्रोतसा प्रवाहेण, प्रोते पूरिते, पिपासूनां पातुमिच्छूनाम्, अत्यादरेण कवित्वामृतशुश्रूषूणां जनानामित्यर्थः, कर्णाविव कलस्यौ अभिषेचनकुम्भौ, भजतीति तद्भाजा, केषां वा जगतां भुवनानां सम्बन्धिना, जनेन अभिषेकोत्सवः अभिषेकजन्यः आनन्दोत्सवः, न अजनि ? न जनितः ? जनेर्ण्यन्तात् कर्मणि लुङ्, भुवनान्तरस्था अपि कवयः आ-क्षीराब्धिप्रसृतमेतद्यशः सर्वत्र आनन्दकरं वर्णयन्ति स्म इत्यर्थः; एतद्यशः लोकपरम्परया क्षीरसमुद्रपर्यन्तगामीति भावः । देवैः क्षीरोदसमुद्रे मथिते सति तत्र जलाभावात् अधुना क्षीरोदसमुद्ररूपसिंहासनम् अधिकृतवति एतद्राजयशसि एतद्यशः क्षीरोदस्य वर्णयितारः अखिलाः कवय एव अभिषेक्तारः कवित्वमेव जलं श्रोतृजनकर्णा एव कलसाः तत्सम्भवायाः सरितः प्रसर्पणात् स्तुतिः एवाभिषेक इति रूपकालङ्कारः । अथवा लोके यथा कस्मिंश्चित् राजनि केनचित् मथिते तदीयं सिंहासनम् आक्रम्याधितिष्ठतोऽन्यस्य जनैर्जलपूर्णकलसेनाभिषेकः क्रियते तद्वदिति भावः ॥ ७४ ॥

देवोंके द्वारा क्षीरसमुद्रके जलको मथनकर 'मथित' आदेश करने ( मथन किया हुआ निर्जल दधि-विशेष ( छिनुई दही ) बनाये जाने ) पर क्षीरसमुद्रके जलको अपने आक्रमण करने ( बैठने ) योग्य बनानेवाले इस राजाके यशका—इस (द्युतिमान् राजाकी ) कवितारूपी अमृतके प्रवाहसे पूर्ण किये गयेको पान करने ( सुनने ) के इच्छुकोंके कानरूपी दो कलशोंको धारण किये हुए किस संसारके लोगोंका अभिषेकोत्सव नहीं हुआ ? अपि तु सभी संसारके लोगोंका अभिषेकोत्सव हुआ । [ 'मित्रवदागमः, शत्रुवदादेशः' सिद्धान्तके अनुसार क्षीरसमुद्रके जलको देवोंने 'मथित' ( निर्जल मथा गया दधि-विशेष ) बना दिया ( आदेश होनेके कारण क्षीरसमुद्रके जलका नाश होना उचित ही है ) और उसे इसके यशने अपने बैठने योग्य सिंहासन बनाया अर्थात् क्षीरसमुद्रतक इसका यश फैल गया तथा इस राजाकी कवितारूपी अमृत प्रवाहसे पूर्ण किये गये उसको पीने ( पक्षा०—इसकी प्रशंसा सुनने ) के इच्छुक लोगोंके दोनों कान दो कलश हुए उनके द्वारा उस ( क्षीरसमुद्रको मथित बनाकर तद्रूप सिंहासनारूढ ) यशका अभिषेक किस जगत्के निवासियोंने नहीं किया ?

अर्थात् सबने किया ( सब लोकोंके निवासियोंने इसके यशको सुनकर उत्सव मनाया )। अभिषेकके लिये सिंहासनारूढ होना तथा दो कलशोंका रहना उचित ही है। यहां पर मथित क्षीरसमुद्रका जल सिंहासन, उसपर आरूढ ( फैला हुआ ) इस राजाके यशको अभिषेच्य, क्षीरसमुद्रके कवियोंको अभिषेक करनेवाले, कवितामृतको जल, श्रोताओंके कानोंको कलश तथा इनसे पूर्ण होकर इसके यशके सर्वत्र फैलनेसे की गयी प्रशंसाको ही अभिषेक समझना चाहिये ] ॥ ७४ ॥

**समिति पतिनिपाताकर्णनद्रागदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु ।**
**रचितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्त्तिप्रशस्तिः ॥ ७५ ॥**

**समितीति । अस्य राज्ञः, कीर्त्तेः प्रशस्तिः प्रशंसा, समिति आजौ, पतिनिपातस्य भर्तृमरणस्य, आकर्णने श्रवणेऽपि, द्राक् सद्य एव, अदीर्णासु अभिन्नासु, अक्षरविन्यासयोग्यासु इति यावत्, प्रतिनृपतिमृगाक्षीलक्षाणाम् अरिराजस्त्रीलक्षसङ्ख्यकानां, वक्षःशिलासु पाषाणकठिनवक्षःस्थलेषु, पतिमरणश्रवणक्षणे एवाविदीर्णत्वात् वक्षसः शिलात्वं बोध्यम्, उरस्ताडने वक्षस्ताडने व्यस्तानां व्यापृतानां, सवेगं पातितानामिति यावत्, हस्तानां च प्रखरनखाः तीक्ष्णनखाः, तैरेव टङ्कैः पाषाणदारकद्रव्यविशेषैः 'टङ्कः पाषाणदारणः' इत्यमरः रचितलिपिरिव कृताक्षरविन्यासा इव, भाति इति शेषः। दुःखातिरेकात् वक्षःकृतनखालेखनेषु कीर्त्तिप्रशस्तेः अक्षरत्वोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ॥ ७५ ॥**

इस ( राजा ) की कीर्ति-प्रशस्ति युद्धमें पतियोंका गिरना ( मरना ) सुननेसे तत्काल नहीं विदीर्ण हुए लाखों शत्रुमृगनयनियों ( स्त्रियों ) के हृदयरूप पत्थरोंपर छाती पीटनेमें व्यस्त ( संलग्न ) हाथोंके तीव्र नखरूप टाँकियों ( छेनियों ) से लिखी गयी लिपिके समान है। [ युद्धमें इस राजा द्वारा मारे गये लाखों शत्रुओंकी स्त्रियोंके छाती पीट-पीटकर रोते समय उनके नखोंसे जो चिह्न पड़ जाते हैं, वे पत्थरोंपर तीक्ष्ण टाँकियोंसे खोदे गये इस राजाकी कीर्तिके शिलालेख हो रहे हैं। इसने लाखों शत्रुओंको युद्धमें मारकर गिरा दिया है और उनकी स्त्रियां छाती पीट-पीटकर रोती हैं ] ॥ ७५ ॥

**विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूलकरङ्कवाहिनी ।**
**दमस्वसुर्भावमवेत्य भारतीं नयानया वक्त्रपरिश्रमं शमम् ॥ ७६ ॥**

**विधायेति । ताम्बूलकरङ्कवाहिनी ताम्बूलपात्रधारिणी, दमस्वसः दमयन्त्याः, भावं तद्राजवर्णननिषेधरूपमभिप्रायम्, अवेत्य ज्ञात्वा, ताम्बूलपुटीं ताम्बूलवीटिकां, कराङ्कगां करतलसंस्थां, विधाय कृत्वा अनया वीटिकया, वक्त्रपरिश्रमं बहुक्षणं व्याप्य एतद्राजगुणकथनजन्यम् आस्यशोषं, शमं शान्तिं, नय इति भारतीं बभाण; अम्ब ! नायमस्यै रोचते कृतं वृथा एतद्वर्णनश्रमेणेति तात्पर्यम् ॥ ७६ ॥**

पानदानको ले चलनेवाली ( दासी ) ने दमयन्तीके अभिप्राय ( इस राजाको यह वरण

करना नहीं चाहती ऐसे भाव ) को जानकर पानका बीड़ा हाथमें लेकर ( सरस्वती देवीके सामने करती हुई ) सरस्वतीसे बोली कि—'इस ( पानके बीड़े ) से मुखके परिश्रमको दूर करो' अर्थात् तुमने इस राजाका बहुत वर्णन किया जिससे मुख थक गया होगा, अतः यह पानका बीड़ा खाकर उसे विश्राम दो । [ तुम इस कामरूपाधिपका वर्णन करना इस पानके बीड़ा खानेके व्याजसे भी बन्द करो ] ॥ ७६ ॥

**समुन्मुखीकृत्य बभार भारती रतीशकल्पेऽन्यनृपे निजं भुजम् ।**
**ततस्त्रसद्बालपृषद्विलोचनां शशंस संसज्जनरञ्जनीं जनीम् ॥ ७७ ॥**

समुन्मुखीति । अथ भारती सरस्वती, रतीशकल्पे कामतुल्ये, अन्यनृपे नृपान्तरे विषये, निजं भुजं समुन्मुखीकृत्य सम्यगभिमुखीकृत्य, बभार धारयामास, दमयन्त्यै तं दर्शयितुं तदभिमुखं कृतवतीत्यर्थः । ततो हस्तोद्यमानन्तरं, त्रसद्बालपृषद्विलोचनां चकितमृगशावाक्षीं, संसज्जनरञ्जनीं सभास्थजनमनोहारिणीं, जनीं वधूं, दमयन्तीमिति यावत्, शशंस उवाचेत्यर्थः ॥ ७७ ॥

( इसके बाद ) सरस्वतीने कामदेव तुल्य दूसरे राजाकी ओर अपना हाथ किया, तदनन्तर डरते हुए बालमृगके ( नेत्रके ) समान ( चञ्चल ) नेत्रवाली तथा सभासदोंके चित्तको अनुरक्त करनेवाली वधू ( दमयन्ती ) से कहा—॥ ७७ ॥

**अयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसोत्कलोचनः ।**
**स्पृशन्तु रूपामृतवापि ! नन्वमुं तवापि दृक्तारतरङ्गभङ्गयः ॥७८॥**

अयमिति । ननु हे ! रूपामृतवापि सौन्दर्यसुधारसदीर्घिके ! गुणौघैः सौन्दर्यादिभिः, अनुरज्यन्तः अनुरक्ताः, उत्कलाः तद्देशीयलोकाः यस्मिन् स तादृशः, अयं राजा, भवत्याः तव, मुखस्य आस्यस्य, आलोकरसेन आलोकनकौतुकेन, उत्कलोचनः उत्सुकाक्षः, भवतीति शेषः; तवापि दृशोःताराः विशालाः, तरङ्गभङ्गयः पुनःपुनर्निक्षेपरूपवीचिविन्यासाः, अमुम् उत्कलाधिपतिं, स्पृशन्तु, स्वानुरागिणि अनुराग उचित इति कटाक्षैरेनं पश्येति भावः ॥ ७८ ॥

गुण-समूहसे अनुरक्त हो रहे हैं उत्कल ( उड़िया लोग, पक्षा०—उत्कृष्ट ६४ कलाएं ) जिसमें ऐसा यह राजा तुम्हें देखनेमें उत्कण्ठित नेत्रवाला अर्थात् तुम्हें देखनेके लिए उत्सुक है, ( इस कारण ) हे रूप ( सौन्दर्य ) रूपी अमृतकी वापी ( दमयन्ती ) ! इसे तुम्हारे भी नेत्रोंके विशाल ( बड़े-बड़े या चञ्चल ) तरङ्गोंके विलास स्पर्श करें अर्थात् तुम भी इस उत्कलनरेशको चञ्चल नेत्र-कटाक्षोंसे देखो । [ उत्कलवासियोंका अनुरक्त होनेसे इस राजामें सौन्दर्याधिक्य होना देवीने सूचित किया है । वापी में बड़े-बड़े तरङ्गोंका होना उचित ही है ] ॥ ७८ ॥

**अनेन सर्वार्थिकृतार्थताकृता हृतार्थिनौ कामगवीसुरद्रुमौ ।**
**मिथः पयः सेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥**

अनेनेति । सर्वार्थिनां सर्वयाचकानां, कृतार्थताकृता पूर्णकामत्वकारिणा, अनेन राज्ञा, हृतार्थिनौ स्वयं सर्वार्थदानादर्थिहरणेनार्थिरहितौ कृतौ इत्यर्थः, कामानां दात्री गौः कामगवी कामधेनुः, 'गोरतद्धितलुकि' इति समासान्तष्टच्, सा च सुरद्रुमः कल्पवृक्षश्च तौ, मिथोऽन्योऽन्यं प्रति, पयःसेचनं क्षीरसेकं, पल्लवाशनं पल्लवभोजनञ्च, प्रदाय दत्त्वा, दानव्यसनं दानासक्तिं, समाप्नुतः समापयतः। याचकान्तराभावाद अन्योऽन्यं प्रति सम्प्रदानीयपयःपल्लवमात्रदानेन कथञ्चिद्दानकण्डूत्यपनोदनं कुरुत इति तात्पर्यम् ॥ ७९ ॥

सब याचकोंको ( अभीष्ट दान देकर ) कृतार्थ ( कृतकृत्य ) करनेवाले इस ( राजा ) से आहरण करलिये गये हैं याचक जिनके ऐसे कामधेनु तथा कल्पवृक्ष ( अन्य याचकोंके अपने पास याचना करनेके लिए नहीं जानेके कारण क्रमशः ) परस्परमें दुग्धका सिञ्चन तथा पल्लवका भोजन देकर दानके व्यसनको पूरा करते हैं। [ कामधेनु तथा कल्पवृक्षको नित्य दान देनेका व्यसन है, किन्तु इस राजा द्वारा सब याचकोंकी याचना पूरा कर देनेसे उन ( कामधेनु तथा कल्पवृक्ष ) के पास कोई भी याचक नहीं जाता, अतएव कामधेनु अपने दूधसे कल्पवृक्षको सींचकर तथा कल्पवृक्ष अपने पल्लवोंको कामधेनुके भोजनार्थ देकर परस्पर में ही दानके व्यसनको पूरा करते हैं ] ॥ ७९ ॥

नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान् पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥

नृप इति । अयं नृपः निजे पदद्वये पततः प्रणमतः, यान् नृपान् कराभ्यां हस्ताभ्याम्, उदतोलयत् उत्तोलयामास, कृपयेति शेषः, तदीयासु तेषां राज्ञां सम्बन्धिनीषु, चूडासु किरीटेषु, ये कुरुविन्दाः पद्मरागाः, 'कुरुविन्दस्तु मुस्तायां कुल्माषव्रीहिभेदयोः। हिङ्गुले पद्मरागे च' इति विश्वः, तेषां रश्मिभिः एतस्य राज्ञः, करपादयोः करयोः पादयोश्च, रञ्जना प्रणामेन चरणयोस्तेषामुत्तोलनेन च करयोः रक्तिमत्वं बोध्यम्, इयं स्फुटा, लक्ष्यते इति शेषः। स्वाभाविककरपादरागे राजकिरीटमाणिक्यमयूखरञ्जनत्वोत्प्रेक्षणेनास्यानेकराजविजयित्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

इस राजाने अपने दोनों चरणोंपर ( प्रणाम करनेके समयमें ) गिरते हुए राजाओं ( के मस्तकों ) को जो दोनों हाथोंसे उठाया, उन ( विनम्र राजाओं ) के मुकुटके माणिक्योंकी किरणोंसे ही इस ( राजा ) के हाथ–पैर में यह लालिमा स्पष्ट ( दीख रही ) है ॥ ८० ॥

यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद् घनकाननैकशरणप्राप्तेन दावाग्निना ।
एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक् तं वाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥ ८१ ॥

यदिति । भानुमान् भास्वान् सूर्यः, कस्याम् अपि ककुभि कुत्रापि दिशि, स्थेमानं स्थिरत्वं, स्थिरशब्दस्य दृढादिपाठात् 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच् । 'प्रिय स्थिर-' इत्यादिना स्थादेशः, न आलम्बते इति यत्, तथा दावाग्निना घनं निविडं, काननमेव एकशरणम् एकमात्ररक्षितारं, प्राप्तेन 'द्वितीया श्रित-' इत्यादिना समासः, जातम् इति यत्, जातमिति भावे क्तः, एषा एतदुभयमपीत्यर्थः, विधेयप्राधान्यात् स्त्रीलिङ्गता, एतस्य राज्ञः, भुजतेजसा भुजप्रतापेन, विजितयोः तयोर्भानुदावाग्न्योः, औचिती तावत् औचित्यमेव, भीतस्य व्याकुलत्वादेकत्रानवस्थानं वनाश्रयणञ्च युक्तमिति भावः; किन्तु तं वाडवं वडवाग्निं, धिक्, येन वाडवेन, पुनः भिया भयेन, द्विषि स्वस्य सहजद्वेषिणि, अम्भसि जले, प्रविष्टम् भावे क्तः स्वशत्रुसंश्रयणात् अन्यत्र पलायनमपि वरमिति भावः । अत्र स्वाभाविकस्य सूर्यादिपर्यटनादेः एतद्भीहेतुकत्वोत्प्रेक्षणात् उत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या ॥ ८१ ॥

जो सूर्य किसी भी दिशामें स्थिर नहीं रहते और जो दावाग्निने सघन वनरूपी एक ( मुख्यतम ) रक्षकको प्राप्त किया है, वह ( वैसा करना ) इस राजाके बाहु-प्रतापसे जीते गये उन दोनों ( सूर्य तथा दावाग्नि ) के लिये कथञ्चित् उचित है; किन्तु उस वडवाग्निको धिक्कार है जो इसके भयसे शत्रुभूत पानी ( समुद्रके जल ) में फिर घुस गया है । [ इस राजाके बाहुप्रतापसे जीते गये सूर्यका किसी दिशामें स्थिर नहीं रहना तथा दावाग्निका सघन वनमें छिपकर रहना तो उचित है, किन्तु वडवाग्निका इसके भयसे जो अपने शत्रु ( जलके द्वारा अग्निके बुझ जानेसे जलको अग्निका शत्रु मानना उचित ही है ) पानीमें आत्मरक्षार्थ फिर घुस गया अतएव ( एक शत्रुसे डरकर आत्मरक्षार्थ दूसरे शत्रुके शरणमें जानेसे ) उस नीच वड़वाग्निको धिक्कार है । अपने शत्रुकी शरणमें जानेकी अपेक्षा भाग जाना या किसी वनमें छिप जाना श्रेष्ठ है ] ॥ ८१ ॥

अमुष्योर्वीभर्त्तुः प्रसृमरचमूसिन्धुरभवै[1]-
रवैमि प्रारब्धे वमथुभिरवश्यायसमये ।
न कम्पन्तामन्तः प्रतिभटनृपाः ? म्लायतु न तद्-
वधूवक्त्राम्भोजं ? भवतु न स तेषां कुदिवसः ? ॥ ८२ ॥

अमुष्येति । अमुष्य उर्वीभर्त्तुः प्रसृमराः प्रसारिणः, 'सृघस्यदः क्मरच्' तेभ्यः चमूसिन्धुरेभ्यः सेनागजेभ्यः, भवैः वमथुभिः करशीकरैः, 'वमथुः करशीकरः' इत्यमरः, अवश्यायसमये नीहारकाले प्रारब्धे सति, अवैमि जानामि, मन्ये इत्यर्थः, वक्ष्यमाणवाक्यार्थः कर्म, प्रतिभटनृपाः शत्रुभूपाः, अन्तः अन्तःकरणे, न कम्पन्ताम् ? न कम्पेरन् ? अपि तु कम्पन्तामेवेत्यर्थः, इति काकुः, एवमुत्तरत्र । तद्वधूनां शत्रुभूपस्त्रीणां, वक्त्रमेवाम्भोजं पद्मं, न म्लायतु ? म्लायतु एव इत्यर्थः । स सेनागजवम-

१. 'भरैः' इति पा० ।

थुकृतावश्यायाच्छन्नदिवसः, तेषां प्रतिभटनृपाणां तद्वधूनाञ्च, कुदिवसो दुर्दिनञ्च, न भवतु ? भवेदेवेत्यर्थः । अत्र करशीकरादौ नीहारादिरूपणाद्रूपकालङ्कारः ॥ ८२ ॥

इस भूपतिकी फैलती हुई सेनाके हाथियोंसे उत्पन्न (पाठा०—हाथियोंके समूह) हेमन्तकालके आरम्भ करनेपर, शत्रु राजा लोग हृदयमें (पक्षा०—उस हेमन्तकालमें) नहीं कम्पित होवें अर्थात् (इस राजाके भयसे) अवश्य कम्पित होवें (पक्षा०—हेमन्तकालमें शीतसे कम्पित होना उचित ही है), उन (शत्रु राजाओं) की स्त्रियोंका मुखरूपी कमल मलिन नहीं होवे अर्थात् इस राजाके युद्धमें पतिमरणकी आशङ्कासे उनका मुखकमल अवश्य मलिन होवे (पक्षा०—हेमन्तकालमें कमलोंका मलिन होना उचित ही है) और वह (युद्धदिवस) उन (शत्रु राजाओं तथा उनकी स्त्रियों) का कुदिन (अनिष्ट दिन, पक्षा०—दुर्दिन अर्थात् मेघाच्छन्न दिन) नहीं होवे अर्थात् इस राजाके भयसे उन शत्रु राजाओं तथा उनकी स्त्रियोंके लिए उक्त युद्ध-दिवस अवश्य अनिष्ट दिन होवे (पक्षा०—बादल घिरा हुआ दुर्दिन होना उचित ही है)। [इस राजाके सेना-गजोंके हेमन्तकालके कुहरेके समान सूड़ोंसे छोड़े जाते हुए जलकणोंको देख उनकी अगणनीयताका अनुमानकर शत्रुओंका हृदयमें कँपना, उनकी स्त्रियोंके मुखका पतिमरणकी अशङ्कासे मलिन होना तथा उस युद्धदिनका अशुभ दिन होना (पक्षा०—क्रमशः हेमन्तकालमें मनुष्योंका हृदयसे कँपना, कमलका मलिन होना तथा मेघसे घिरनेके कारण दुर्दिन होना) उचित ही है। इस राजाकी सेनामें अगणित हाथी हैं] ॥ ८२ ॥

आत्मन्यस्य समुच्चितीकृतगुणस्याहोतरामौचिती
यद्गात्रान्तरवर्जनादजनयद्भूजानिरेष द्विषाम् ।
भूयोऽहङ्क्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्
तन्मर्माणि दलं दलं समिदलंकर्मीणबाणव्रजः ॥ ८३ ॥

आत्मनीति । आत्मनि स्वस्मिन्नेव, समुच्चितीकृतगुणस्य समाहृतसौन्दर्यादिनिखिलगुणस्य, अस्य राज्ञः, औचिती औचित्यम्, अहोतराम् अत्याश्चर्यं, 'किमेतत्—' इत्यादिना अव्ययादाम्-प्रत्ययः औचित्यमेवाह, समिति युद्धे, कर्मणे क्रियायै अलम् अलंकर्मीणः कर्मक्षमः, 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति कृतसमासादलंकर्मशब्दात् 'अपडक्षाशितंग्वलंकर्म—' इत्यादिना ख-प्रत्ययः । समिदलंकर्मीणो युद्धकर्मपटुः, बाणव्रजो यस्य स तथोक्तः अमोघबाण इत्यर्थः, एष भूर्जाया यस्येति भूजानिः भूपतिः, जायाया जानिरादेशः द्विषां शत्रूणां, येन च हृदा हृदयेन, भूयो भूयिष्ठम्, अहङ्क्रियते स्म अहङ्करोतेर्भावे लट् 'लट् स्मे' इति भूते लट् यश्च स्कन्धो भुजशिरः, न अनमत् न प्राणमत्, 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः गात्रान्तराणाम् अवयवान्तराणां, हृत्स्कन्धेतराणामित्यर्थः, वर्जनात् वर्जनं कृत्वेत्यर्थः, तेषाम् अनपराधित्वादिति भावः, ल्यब्लोपे पञ्चमी तानि हृदयस्कन्ध-

रूपाणि, मर्माणि जीवस्थानानि, दलं दलं भृशं दलयित्वा, 'आभीक्ष्ण्ये णमुल् च' इति णमुल्प्रत्ययः । 'आभीक्ष्ण्ये द्वे भवतः' इत्युपसङ्ख्यानात् द्विर्भावः यत् अजनयत् यद्दण्डनमकरोदित्यर्थः, तदेतद्दण्ड्यमात्रदण्डनं राज्ञ उचितमाश्चर्यतरञ्चेत्यर्थः; अहङ्कारात् अनम्रम् अरिं समूलघातं हन्त्ययमिति भावः ॥ ८३ ॥

अपनेमें गुण-समूहको एकत्रित किये हुए इस राजाका औचित्य ( उचित भाव ) अत्यन्त आश्चर्यकारक है, जो युद्ध में कर्मसमर्थ ( अमोघ ) बाण-समूहवाला यह राजा, शत्रुओंका जो हृदय बार-बार अहङ्कार करता है और जो ( स्कन्ध ) नम्र नहीं हुआ, ( अतः ) दूसरे अङ्गोंको छोड़कर उन ( हृदय तथा स्कन्ध ) के मर्मोंको खण्ड-खण्ड कर दिया । [ यह राजा शत्रुओंके अहङ्कारी हृदय तथा अनम्र स्कन्ध देशको ही खण्डशः करता है, अतः शरणमें नहीं आनेवालेका समूल नष्ट करनेवाला महाशूरवीर है ] ॥ ८३ ॥

दूरं गौरगुणैरहङ्कृतिमतां जैत्राङ्ककारे चर-
त्येतद्दोर्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि ।
धम्मिल्ले तव मल्लिकासुमनसां माला भिया लीयते
पीयूषस्रवकैतवाद् धृतदरः शीतद्युतिः स्विद्यति ॥ ८४ ॥

दूरमिति । एतस्य राज्ञः, दोष्णो भुजस्य, यशसि गौरधावल्यैरेव गुणैः, 'गुणे शुक्लादयः पुंसि' इत्यमरः दूरमत्यन्तम् , अहङ्कृतिमताम् असाधारणाभिमानवतां कुमुदादिधवलवस्तूनां, जैत्राङ्ककारे जैत्रञ्च तत् अङ्ककारश्चेति तस्मिन् कर्मधारयः; तदहङ्कारखण्डनाय जित्वरयुद्धकारिणि, चरति भ्रमति सति 'अङ्क इत्यनुवृत्तौ च चित्रयुद्धे विभूषणे' इति विश्वः कुमुदं बिभ्यत् भीतं सत् , निशि निद्रां स्वापं मुकुलनञ्च, न प्रयाति न प्राप्नोति । मल्लिकासुमनसां माला भिया तव धम्मिल्ले संयतकेशपाशे, 'धम्मिल्लाः संयताः कचाः' इत्यमरः लीयते अन्तर्द्धत्ते । शीतद्युतिः चन्द्रोऽपि, धृतदरः प्राप्तत्रासः सन् , पीयूषस्रवकैतवात् अमृतस्रावव्याजात् , स्विद्यति स्वेदं त्यजति, निद्रापरिहारादीनि भीतिचिह्नानीति भावः । अत्र दोर्यशःप्रभृतीनाम् अहङ्काराद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिभेदः ॥ ८४ ॥

श्वेत गुणों ( हम सर्वाधिक श्वेत हैं इस गुण ) से अधिक अहङ्कार करनेवाले, इस राजा के बाहुओंसे उत्पन्न यशके ( संसारमें ) फैलते ( पक्षा०—अपना प्रतिमल्ल ढूंढ़ते ) रहनेपर ( इस राजासे ) डरता हुआ कुमुद रातमें नहीं सोता ( पक्षा०—सङ्कुचित नहीं होता ) है, ( इसके ) भयसे मल्लिकाके फूलोंकी माला तुम्हारे ( काले ) केश-समूहमें लीन हो जाती ( अदृश्य हो जाती, पक्षा०—अन्धकारयुक्त स्थानमें छिप जाती ) है तथा ( इस राजासे ) डरा हुआ चन्द्रमा अमृतस्रावके छलसे स्वेदयुक्त हो रहा है । [ कुमुद, मल्लिका-पुष्प तथा चन्द्रमा अपनेमें अधिक श्वेत गुण होनेका अभिमान करते थे; किन्तु इस राजाके बाहुजन्य यशके संसारमें फैलनेपर इस राजाके बाहुयशके भयसे उनमेंसे कुमुद रातमें सोता

नहीं (बन्द नहीं होता), मल्लिका-पुष्प काले (पक्षा०—अन्धकारयुक्त) तुम्हारे केशोंमें छिपकर अदृश्य हो जाते हैं तथा चन्द्रमा अमृतक्षरणके छलसे पसीना-पसीना हो जाता है। शत्रुसे डरनेपर कुमुदका रातमें नहीं सोना, मल्लिका पुष्पका काले होनेसे अन्धकारपूर्ण स्थानमें छिप जाना तथा चन्द्रमाका अमृतक्षरणके छलसे पसीना-पसीना होना उचित ही है। इस राजाका बाहुजन्य यश अर्थात् प्रताप कुमुद, मल्लिका-पुष्प तथा चन्द्रमासे भी अधिक उज्ज्वल है ] ॥ ८४ ॥

एतद्गन्धगजस्तृषाऽम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्द्धिभिः।
दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ८५ ॥

एतदिति। तृषा पिपासया, अम्भसि जले, भृशं कण्ठान्तं कण्ठपर्यन्तं, मज्जन्ती तनुः शरीरं यस्य सः, स्वेन आत्मना, दिक्करीणां जयेन या क्रीडा तस्याः तज्जनितानि इत्यर्थः, यशांसि स्पर्द्धन्ते ये तैः तादृशैः तत्स्पर्द्धिभिः तत्सदृशैः, फेनैः पाण्डुरितः पाण्डुवर्णीकृतः, दन्तद्वन्द्वस्य जले अनुबिम्बनेन प्रतिबिम्बपातेन, चतुर्दन्तो दन्तचतुष्टयवान्, एतस्य राज्ञः, गन्धगजो दुष्टगजः, कराम्भसां वमिर्वमथुः, करशीकर इत्यर्थः, 'प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः' इत्यमरः। 'वमथुः, पुंसि वमने गजस्य करशीकरे' इति मेदिनी तस्या व्याजात् अम्बुधेः समुद्रस्य, अभ्रमुवल्लभेन ऐरावतेन, स्वपुत्रेणेति भावः, विरहं विरहतापं, निर्वापयति शमयतीति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ८५ ॥

प्याससे जलमें अतिशय (अथवा—अधिक प्याससे जलमें) कण्ठ तक शरीरको डुबाया हुआ, दिग्गजोंकी अनायास विजयसे उत्पन्न अपने यशसे स्पर्द्धा करनेवाले अर्थात् उक्त यशके समान फेनों (के पानीके ऊपरी भागवाले शरीरमें लगने) से श्वेतवर्ण और दोनों दाँतोंके पानीमें प्रतिबिम्बित होनेसे चार दाँतोंवाला इस राजाका गन्धगज (दुष्ट हाथी या अपने मद-मल-मूत्र आदिके गन्धसे दूसरे गजोंको जीतनेवाला हाथी या दूसरे हाथीके गन्धको नहीं सहनेवाला हाथी) सूंड़के वमथु (बाहर फेंके हुए जलकण) के व्याजसे समुद्रके ऐरावत (समुद्रोत्पन्न होनेसे पुत्ररूप पूर्व दिग्गज) के विरहको शान्त कर रहा है। [ऐरावत समुद्रमें रहनेवाला, श्वेत वर्णवाला और चार दांतोंवाला था; अतः प्याससे कण्ठ तक समुद्रमें डूबा हुआ, फेनोंसे श्वेत वर्णवाला तथा जलमें अपने ही दो दाँतोंके प्रतिबिम्बित होनेसे चार दाँतोंवाला इस राजाका गन्धगज सूंड़से जलकण छोड़ता हुआ समुद्रके पुत्र (ऐरावत)-विरहको शान्त करता हुआ-सा ज्ञात होता है। हाथीसे समुद्र पर्यन्त विजय करनेवाला यह राजा है]

अथैतदुर्वीपतिवर्णनाद्भुतं न्यमीलदास्वादयितुं हृदीव सा।
मधुस्रजा नैषधनामजापिनी स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥

अथेति । अथ सा दमयन्ती, मधुस्रजा वरणार्थया मधुद्रुममालया, मधूकपुष्पमालया इत्यर्थः, तथैवाक्षमालयेति भावः; 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे' इति मेदिनी नैषधस्य नलस्य, नाम जपतीति तज्जापिनी, अत एव स्फुटीभवता साक्षात्कारपरिणामिना, प्रत्यक्षीकरणसाधनेनेत्यर्थः, ध्यानेन पुरोऽग्रे, स्फुरन् प्रत्यक्षीभवन्, नलो यस्याः तादृशी सती, एतस्य उर्वीपतेः उत्कलेश्वरस्य, वर्णनमेव अद्भुतम् आश्चर्यरसं, हृदि हृदये, आस्वादयितुम् अनुभवितुमिव, न्यमीलत् निमीलिताक्षी जाता, परमार्थतस्तु नलसाक्षात्कारसुखास्वादनायैवेत्यर्थः ॥ ८६ ॥

इस ( सरस्वतीके उक्त ( १२।७८—८५ ) वर्णन करने ) के बाद ( वरण-सम्बन्धिनी ) महुएकी मालासे नलके नामको निरन्तर जपती हुई ( अत एव ) स्पष्ट होते हुए ध्यानसे प्रत्यक्षमें भासमान होते हुए नलवाली वह ( दमयन्ती ) इस राजा ( उत्कलनरेश ) के वर्णनरूप अद्भुतरसको मानो हृदयमें आस्वादन करनेके लिए नेत्रोंको बन्द कर लिया [ किन्तु वास्तविकमें तो नलके साक्षात्कारका आस्वादन करनेके लिए ही उसने नेत्रोंको बन्द कर लिया । नलानुरक्त उस दमयन्तीने उस राजाके वर्णन कालमें नेत्रोंको बन्द कर उसको अस्वीकार कर दिया ] ॥ ८६ ॥

**प्रशंसितुं संसदुपान्तरञ्जिनं श्रिया जयन्तं जगतीश्वरं[1] जिनम् ।**
**गिरः प्रतस्तार पुरावदेव ता दिनान्तसन्ध्यासमयस्य देवता ॥ ८७ ॥**

प्रशंसितुमिति । दिनान्तसन्ध्यासमयस्य सायंसन्ध्याकालस्य, देवता अधिदेवता सरस्वती, सन्ध्याविध्यर्थे सरस्वतीति श्रुतेः; संसदुपान्तरञ्जिनं सभास्थानैकप्रान्तरञ्जकमित्यर्थः, श्रिया सौन्दर्येण, जिनं जिनाख्यं देवं, सोऽतिसुन्दर इति प्रसिद्धेः, जयन्तं ततोऽपि सुन्दरम् इत्यर्थः, जगतीश्वरं पृथिवीपतिं प्रशंसितुं स्तोतुं, पुरावदेव पूर्ववदेव, ताः प्रसिद्धाः, गिरः प्रतस्तार प्रपञ्चयामास ॥ ८७ ॥

सायङ्कालीन सन्ध्याकी देवी ( सरस्वती ) ने सभाके दोनों भागोंको अनुरञ्जित करनेवाले तथा ( अतिप्रसिद्ध सुन्दर ) जिन ( 'जिनेन्द्र देव, या 'बुद्धदेव' ) को शोभासे जीतते हुए राजाकी प्रशंसा करनेके लिए पहलेके ही समान ( सरस एवं मधुर ) वचनको कहा— ( अथवा—शोभासे सभाके दोनों पार्श्वोंको अनुरक्त करते हुए, 'जयन्त' नामक बौद्ध राजाको''' । पाठा०—जगदीश्वर 'जिन' को''' ) ॥ ८७ ॥

**तथाऽधिकुर्या रुचिरे ! चिरेप्सिता यथोत्सुकः सम्प्रति सम्प्रतीच्छति ।**
**अपाङ्गरङ्गस्थललास्यलम्पटाः कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥**

तथेति । रुचिरे ! हे सुन्दरि ! उत्सुकः उत्कण्ठितः कीकटाधिपो मगधेश्वरः, चिरेप्सिताः चिरात् प्रभृति आकाङ्क्षिताः, अपाङ्गो नेत्रप्रान्तः, स एव रङ्गस्थलं, तत्र लास्ये नर्त्तने लम्पटाः लालसाः, तव कटाक्षधाराः कटाक्षपरम्पराः, यथा सम्प्रति

1. 'जगदीश्वरम्' इति पा० ।

इदानीं, सम्प्रतीच्छति सम्यक् लब्धुमर्हतीत्यर्थः, तथा अधिकुर्याः प्रसारयेत्यर्थः, कटाक्षदृष्ट्याऽपि एनं पश्येति भावः ॥ ८८ ॥

हे सुन्दरि ( दमयन्ति ) ! उत्कण्ठित मगधेश्वर नेत्रप्रान्तरूप रङ्गभूमि ( नाट्यशाला ) में मन्दविलास पूर्वक गमन ( या नृत्य ) में तत्पर, तुम्हारी चिरकालसे अभिलषित कटाक्ष परम्पराओंको इस समय जैसे प्रतीक्षा कर रहा है, वैसा तुम करो, ( अथवा—चिरकालसे अभिलषित तुम······ ) । [ यह मगधेश्वर तुम्हारी कटाक्ष-परम्पराओंको चिरकालसे चाहता है, अतएव इसे तुम कटाक्षसे देखो ] ॥ ८८ ॥

इदंयशांसि द्विपतः सुधारुचः किमङ्कमेतद्द्विषतः किमाननम् ।
यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मसी ॥८९॥

इदमिति । अखिललोकान् धावन्ति गच्छन्तीति तादृशैः अखिललोकधाविभिः त्रिलोकव्यापिभिः, अस्य कीकटेश्वरस्य, यशोभिः विभीषिता वित्रासिता, तमस इयं तामसी मसी तमोमालिन्यम्, इदंयशांसि एतत्कीर्त्तीः, द्विपतो विरुन्धानस्य, 'द्विषोऽमित्रे' इति शतृप्रत्ययः 'द्विषः शतुर्वा' इति विकल्पात् षष्ठीप्रतिषेधे कर्मणि द्वितीया सुधारुचः सुधांशोः, अङ्कं कलङ्कं सन्निधिञ्च, किं धावति ? गच्छति किम् ? तथा एतद्द्विषतः एतच्छत्रोः, आननञ्च धावति किम् ? एतद्यशश्चन्द्रिकाभयात् तमः चन्द्रे कलङ्करूपेण एतच्छत्रुमुखञ्च मालिन्यरूपेण प्रविष्टमित्युत्प्रेक्ष्यते अन्यथा कथमनयोः अजस्रम् ईदृङ्मालिन्यमिति भावः ॥ ८९ ॥

सम्पूर्ण लोकोंमें दौड़नेवाली अर्थात् तीनों लोकोंमें व्याप्त इसकी कीर्तियोंसे अत्यन्त डरी हुई कृष्णपक्षकी रात्रिकी कालिमा इसकी कीर्तियोंको रोकते हुए चन्द्रमाके पास ( पक्षा०—मध्य ) में दौड़ती है क्या ? अथवा इस ( मगधेश्वर ) के शत्रुके मुखके पास दौड़ती है क्या ?। [ इस मगधेश्वरकी कीर्ति तीनों लोकोंमें फैलने लगी तो उसके भयसे भगी हुई कृष्णपक्षकी रात्रिकी कालिमा श्वेत वर्ण होनेसे इसकी कीर्तिके विरोधी चन्द्रके अङ्क ( मध्य ) में चली गयी, अथवा इस राजाके शत्रुके मुखमें चली गयी क्या ? लोकमें भी किसी वैरीके भयसे भगा हुआ वैरी उसके वैरीके पास जाकर शरण पाता है, अत एव इसकी कीर्तिके भयसे भगी हुई तामसी कालिमाका इसके शत्रु चन्द्र या किसी राजाके पास जाकर शरण लेना उचित ही है। अथवा—रात्रि-सम्बन्धिनी कालिमाका रात्रिपति चन्द्रके शरणमें जाना उचित ही है, क्योंकि लोकमें भी किसीके भयसे भगी हुई स्त्री अपने पतिके अङ्कमें जाकर शरण पाती है। यह राजा महायशस्वी है ॥ यहांपर सरस्वती देवीने 'अखिललोकधाविभिः' तथा 'धावति' इन दो पदोंके द्वारा इस राजाकी कीर्ति अभी सब लोकोंमें व्याप्त हो रही है अर्थात् पूर्णतः व्याप्त नहीं हुई है, अत एव यह नवीन एवं कम कीर्तिवाला होनेसे तुम्हारे वरण करने योग्य नहीं है, यह सङ्केत किया है ] ॥ ८९ ॥

इदन्नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः ।
कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥ ९० ॥

इदमिति । इदन्नृपप्रार्थिभिः इमं नृपमेव प्रार्थयमानैः, अर्थिभिः याचकैः, उज्झितः परित्यक्तः, अनेन नृपेणैव सकलाभीष्टपूरणात् इति भावः, रोहणो रोहणाद्रिः सुमेरुः, मणिप्ररोहेण नवरत्नाङ्कुरोद्भेदेन, विवृध्य अव्ययीभावात् वर्द्धित्वा, कियद्दिनैः कतिपयं-दिनैः एव, अम्बरम् आकाशम्, आवरिष्यते आच्छादयिष्यति, मुनिः अगस्त्यः मुधा वृथैव, विन्ध्यं भूधरम् अरुद्ध स्तम्भयामास, रोहणस्य तत्कार्यकारित्वादिति भावः । अत्र रोहणाद्रेः ईदृग्विधत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ९० ॥

( अतिशय वदान्य ) इस ( मगधेश्वर ) से याचना करनेवाले याचकोंसे ( इस राजासे ही अभिलषित दान मिल जानेके कारण आवश्यकता नहीं होनेसे ) छोड़ा गया 'रोहण' पर्वत अर्थात् 'रत्नाचल' मणियोंके अङ्कुरोंसे अत्यन्त बढ़कर कुछ दिनोंमें आकाशको रोक लेगा, ( अत एव ) मुनि (अगस्त्यजी[1]) ने विन्ध्य पर्वतको व्यर्थमें रोका ॥ ९० ॥

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमात्
एतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः ?
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदै-
रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥ ९१ ॥

भूशक्रस्येति । भूशक्रस्य भूदेवेन्द्रस्य, एतस्य राज्ञः सम्बन्धीनि, विक्रमभरेण पराक्रमातिशयेन, क्रमात् उपार्जितानि महेभदशनस्पर्द्धीनि गजेन्द्रदन्तसवर्णानि, अतिशुभ्राणीति भावः, यशांसि कैः अक्षरैः अकारादिभिर्वर्णैः, स्तुमहे ? वर्णयामः ? एतस्य यशसामानन्त्यात् वर्णानान्तु पञ्चाशन्मात्रत्वात्[2] स्तोतुं न शक्यन्ते इत्यर्थः । तथा हि, लिम्पद्भिः स्वर्णगिरिमेव रञ्जद्भिः, राज्ञाम् अरिनृपाणां, यशोभिरेव पारदैः रसैः, 'रसः सूतश्च पारदे' इत्यमरः, कृतकं कृत्रिमं, रजतं कृतोऽपि स्वर्णगिरिः हेमाद्रिः, अस्य प्रतापदहनैः प्रतापरूपैरग्निभिः, पुनः स्वर्णं निर्मितः कृतः, पारदलिप्तसुवर्णं रजतवत् श्वेतीभवति तत् पुनरग्निदाहात् प्रकृतिस्थं भवतीति प्रसिद्धमेव । अत्राप्युक्तरूपासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ ९१ ॥

पृथ्वीपति इस ( मगधेश्वर ) के अतिशय पराक्रमकी बहुलतासे क्रमशः उपार्जित यशकी प्रशंसा ( हम ) किन अक्षरों ( शब्दों ) से करें ( अक्षर संख्याके परिमित अर्थात् केवल पचास[2] तथा इसके यशके अपरिमित होनेके कारण उतने अक्षरोंसे इसके यशकी प्रशंसा करना अशक्य है, तथापि कुछ वर्णन करती हैं ), राजाओं ( दूसरे राजाओं ) के ( सुमेरुको ही ) लुप्त करते हुए यशोरूपी पारदसे कृत्रिम ( बनावटी ) चांदी बनाया गया स्वर्णपर्वत ( सुमेरु ) इस ( मगधेश्वर ) की प्रताप रूपी अग्निसे फिर सोना बना दिया गया है । [ पारदके लेपसे सोना आदि धातु कृत्रिम चाँदी ( चाँदी-से श्वेतवर्ण ) हो

१. एतत्पौराणिकी कथा प्राक् ( ५।१३० ) 'मणिप्रभा' यामेव द्रष्टव्या।
२. पाणिनिमते वर्णानां त्रिषष्टित्वञ्चतुष्षष्टित्वं वा बोध्यम् ( द्र०पा०शि०श्लो०२ )।

जाते हैं, किन्तु अग्निमें डालनेपर अग्निसंयोगसे पारदके उड़ जानेसे वे पुनः सोना ही हो जाते हैं। इस राजाके प्रतापसे दूसरे राजाओंके यश नष्ट हो जाते हैं॥ यह मगधेश्वर महायशस्वी तथा महाप्रतापी है, अतः इसे वरण करो ]॥ ९१॥

यद्भर्त्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं
दिग्दाहैरिव भस्मभिर्मघवता सृष्टैर्धृतोद्धूलना।
शम्भोर्मा बत सान्धिवेलनटनं भाजि व्रतं द्रागिति
क्षौणी नृत्यति मूर्त्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया॥ ९२॥

यदिति। भुवः शक्रो भूदेवेन्द्रः, अयं राजा, यस्याः क्षौण्याः, भर्त्तुः अभिषेणनं सेनया अभियानं, कुरुते 'यत् सेनयाऽभिगमनमरौ तदभिषेणनम्' इत्यमरः अष्टवपुषः अष्टमूर्त्तेः शिवस्य, मूर्त्तिरष्टान्यतमा मूर्त्तिः, सा क्षौणी मघवता इन्द्रेण, सृष्टैर्दिग्दाहैः औत्पातिकदिग्दाहोद्भवैः, भस्मभिरिव धृतोद्धूलना धृतभस्मानुलेपना सती शिवस्य भस्मलिप्तत्वेन तन्मूर्त्तेः क्षौण्या अपि भस्मनि अनुरागस्य औचित्यादिति भावः; अत्र सेनापदोत्थधूलिपटलाच्छन्नक्षौण्याः भस्मलिप्तत्वोत्प्रेक्षा, असृग्वृष्टौ सत्याम् औत्पातिकरक्तवर्षणे सति, सन्ध्याधिया सायंसन्ध्याभ्रान्त्या, शम्भोर्महादेवस्य, सन्धिवेलायां भवं सान्धिवेलं 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' तच्च तन्नटनञ्च सान्धिवेलनटनं, व्रतं सन्ध्यानर्त्तनरूपनियमः, मा भाजि भग्नं मा भूत्, भजेः कर्मणि लुङ् 'भञ्जेश्च चिणि' इति विकल्पान्नलोपे उपधावृद्धिः इति, मत्वेति शेषः; इतिकरणादेव गम्यमानार्थत्वादप्रयोगः; द्राक् सपदि, नृत्यति कम्पते, ध्रुवमित्युत्प्रेक्षा, बतेति विस्मयसूचकमव्ययम्; सन्ध्यासमये भस्मलिप्तो महादेवो नृत्यति, अतः तन्मूर्त्तेः क्षौण्या अपि नर्त्तनं बोद्धव्यम्। एतद्यातव्यराष्ट्रेषु दिग्दाहपांशुवर्षणरक्तवृष्टिभूकम्पादयो जायन्ते इति भावः॥ ९२॥

यह भूपति ( मगधेश्वर ) जिस ( देशकी पृथ्वी ) के पतिके प्रति सेना लेकर चढ़ाई करता है, दिशाओंके दाहके समान इन्द्रके द्वारा किये ( उड़ाये या बरसाये ) गये ( इस राजाकी सेनाके इन्धनादिके ) भस्मोंसे अङ्गलेप की हुई अर्थात् मटमैली ( मलिन ), अष्टमूर्ति[1] ( शङ्करजी ) की ( आठ मूर्तियोंमें-से अन्यतम ) मूर्ति वह पृथ्वी रक्तवृष्टिरूप सन्ध्याकी

१. शिवस्याष्टमूर्तयो यथा—क्षितिमूर्तिः शर्वः १, जलमूर्तिर्भवः २, अग्निमूर्तिः रुद्रः ३, वायुमूर्तिरुग्रः ४, आकाशमूर्तिर्भीमः ५, यजमानमूर्तिः पशुपतिः ६, चन्द्रमूर्तिर्महादेवः ७, सूर्यमूर्तिरीशानश्च ८, इति तन्त्रशास्त्रम्। एताः शरभरूपिणः शिवस्याष्ट पादा इति कालिकापुराणम्। अन्यत्रोक्ताः शिवस्याष्टमूर्तयो यथा—
'अथाग्नी रविरिन्दुश्च भूमिरापः प्रभञ्जनः।
यजमानः खमष्टौ च महादेवस्य मूर्तयः॥'
इति शब्दमाला' इति शब्दकल्पद्रुमः ( पृ० १४९ )।

बुद्धिसे अर्थात् रक्तवृष्टिको ही सन्ध्या काल समझकर शङ्करजीका सायङ्कालीन सन्ध्यामें नृत्त करनेके नियमका भङ्ग न हो इस कारण नाचने ( कम्पित होने ) लगती है । [ यह मगधेश्वर जहां सेना लेकर चढ़ाई करता है, वहां दिग्दाह, भूकम्प, भस्म तथा रक्तकी वृष्टि आदि अशुभसूचक उत्पात होने लगते हैं, और यही राजा विजयी होता है । अष्टमूर्ति शङ्करजीकी अन्यतमा मूर्ति पृथ्वीका शङ्करजीके नृत्तके समयमें नृत्त करना ( कंपना ) उचित ही है ] ॥ ९२ ॥

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां
कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा
शेषः केशमयः किमन्धतमसां स्तोमैस्ततो निर्मितः ? ॥९३॥

प्रागिति । प्राक् प्रथमं, सर्गाद्यकाले इत्यर्थः, एतस्य राज्ञः, वपुः आमुखेन्दु मुखेन्दुपर्यन्तमित्यर्थः, आभिमुख्यार्थेऽव्ययीभावः सृजतः रचयतः, स्रष्टुः ब्रह्मणः सम्बन्धी, अगाधजगतीशिल्पेऽपि अखिलजगन्निर्माणेऽपि, अनल्पायितः अनल्पीभूतः, अक्षीणः इत्यर्थः, लोहितादेराकृतिगणत्वात् क्यङि कर्त्तरि क्तः, समग्रः त्विषां कोशः तेजोराशिः, शोषं रिक्तताम्, अगात्, ततो निःशेषद्युतिमण्डलव्ययवशात् समग्रतेजोराशिनाशवशात्, ईषल्लभैः सुलभैः, तेजःसामान्याभावस्यैव न्यायमते तमोरूपतया सुप्रापैरिति भावः, 'ईषद्दुः—' इत्यादिना अकृच्छ्रार्थे खल्-प्रत्ययः, अन्धयन्तीत्यन्धानि तमांसि अन्धतमांसि गाढान्धकाराः, 'अवसमन्धेभ्यस्तमसः' इति समासान्तः, तेषां स्तोमैरेष केशमयः केशपाशात्मकः, शेषो वपुशेषः, निर्मितो वा? निर्मितः किम् ? इत्युत्प्रेक्षालङ्कारः, तेन चास्य लोकातिशयतेजो व्यज्यते ॥ ९३ ॥

पहले ( सृष्टिके प्रारम्भमें ) मुख तक इस राजाके शरीरकी रचना किये हुए ब्रह्माका, सम्पूर्ण पृथ्वी अर्थात् संसारकी रचनामें भी कम नहीं पड़ा हुआ समस्त कान्तियोंका कोष ( खजाना ) समाप्त हो गया, तब ( ब्रह्माने ) सम्पूर्ण कान्ति-समूहके व्यय ( समाप्त ) हो जानेसे सुलभ ( सरलतासे मिलने योग्य ) गाढ-अन्धकार-समूहोंसे बाँकी केश-समूहको रचा है क्या ? । [ लोकमें भी उत्तम वस्तुके समाप्त हो जानेपर सरलतासे प्राप्य सामान्य वस्तुओंसे भी शेष काम पूरा किया जाता है ॥ इस राजाके पैरसे मुखतक समस्त अङ्ग अत्यन्त गौरवर्ण तथा केश अत्यन्त काले हैं ] ॥ ९३ ॥

तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं
निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः ।
भूगोलच्छायमायामयगणितविदुन्नेयकायो भियाऽभूत्
एतत्कीर्त्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥ ९४ ॥

तत्तदिति । एष राजा तासां तासां दिशां प्राच्यादीनां, जैत्रासु यात्रासु उद्धुराणाम् उच्छृङ्खलानां, तुरगाणाम् अश्वानां, खुराग्रैः उद्धतैः रजोभिः धूलिभिः करणैः, निर्वाणात् शान्तात्, अरिप्रतापानलात् जातं तज्जमिव शत्रुप्रतापाग्निनिर्वाणजन्यमिव स्थितमित्यर्थः, तदभावहेतुकत्वादन्धकारस्येति भावः; अन्धकारं सृजति रात्रिं कल्पयतीत्यर्थः । एतस्य कीर्त्तिप्रतानैः कीर्त्तिपटलैरेव, विधुभिः चन्द्रैः, युधे युद्धाय, आहूयमान इव राहुः सैंहिकेयः, भिया भयेन, भूगोलस्य भूबिम्बस्य, छाया तच्छायं 'विभाषा सेनासुरा—' इत्यादिना नपुंसकत्वम् तदेव माया कपटं, तन्मयः स चासौ गणितविदुन्नेयो गणितशास्त्रैकवेद्यः, कायो यस्य सोऽभूत् । ज्योतिःशास्त्रप्रमाणकं यत् राहोः भूच्छायात्मकत्वं तदेतत्कीर्त्तिचन्द्रभियेत्युत्प्रेक्षा, तया च राहुभीषकत्वेन कीर्त्तिचन्द्राणां प्रसिद्धचन्द्रात् आधिक्येन व्यतिरेकालङ्कारः व्यज्यते ॥ ९४ ॥

यह ( मगध नरेश ) उन-उन ( पूर्वादि ) दिशाओंके जैत्र ( विजयशील ) यात्राओंमें उत्साहयुक्त घोड़ोंके खुराग्रोंसे उड़ी हुई धूलियोंसे बुझी ( पक्षा०—नष्ट ) हुई शत्रुओंके प्रतापरूपी अग्निसे उत्पन्न हुएके समान अन्धकार कर देता है तथा इसकी कीर्तियोंके समूहरूप चन्द्रोंके द्वारा युद्धके लिए ललकारा जाता हुआ राहु भयसे भूगोलकी छायाके कपटमय शरीरवाला हो गया, जिसे गणितज्ञ ( ज्यौतिष शास्त्रके विद्वान् ) लोग अनुमान द्वारा जानते हैं । [ लोकमें धूलिसे अग्निका बुझ जाना और अग्निके बुझनेपर अन्धकार हो जाना अनुभव-सिद्ध है । इस राजाकी दिग्विजय यात्रामें इसकी सेनाके घोड़ोंके खुरसे उड़ी धूलियोंसे किये गये अधिक अन्धकारको देखकर उन-उन दिशाओंके राजा इसके घोड़ोंकी असङ्ख्यतासे भयभीत हो जाते हैं और उनका प्रताप नष्ट हो जाता है । अथ च पहले एक चन्द्रको राहु पराजितकर चन्द्रग्रहण-कालमें ग्रस लेता था, किन्तु अब इस राजाके प्रतापरूपी अनेक चन्द्रोंने युद्धके लिए राहुको ललकारा तो वह भयभीत होकर मुझे कोई पहचान न सके इस विचारसे भूगोलकी छाया बन गया और उसे ज्यौतिष शास्त्रके विद्वान् अनुमान द्वारा पहचानने लगे । लोकमें भी बहुतसे शत्रुओंसे डरा हुआ कोई अकेला शत्रु दूसरा रूप-धारणकर अपनेको छिपा लेता है। ज्यौतिष शास्त्रके सिद्धान्तसे राहु सूर्य आदि सात ग्रहोंके अतिरिक्त अन्य कोई ग्रह नहीं है, किन्तु भूमण्डलकी छायामात्र है ] ॥ ९४ ॥

आस्ते दामोदरीयामियमुदरदरीं याऽधिशय्य त्रिलोकी
सम्मातुं शक्तिमन्ति प्रथिमभरवशात्तत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९५ ॥

आस्ते इति । या इयं त्रिलोकी दामोदरस्य इमां दामोदरीयां वैष्णवीम्, उदरदरीं कुक्षिकुहरम्, अधिशय्य अधिष्ठाय, आस्ते, तानि प्रसिद्धानि, द्विपदशनसना-

भीनि गजदन्तसन्निभानि, एतद्यशांसि प्रथिमभरवशात् महिमातिशयवशात्, मात्राबाहुल्यादिति भावः, तत्र विष्णोरुदरस्थितायां त्रिलोक्यां, सम्मातुं वर्त्तितुं, सुखेन स्थातुमित्यर्थः, न शक्तिमन्ति अशक्तानि सन्ति, ताम् एतां दामोदरोदरदरीं, पूरयित्वा मधुध्वंसिनो विष्णोः, पाण्डुपद्मच्छद्मापन्नानि नाभिपुण्डरीकव्याजापन्नानि सन्ति, नाभीपथेन नाभिविवरेण, निरगुरिव बहिः निर्गतानि इव रेजुरिति शेषः, विष्णोरुदरे सङ्कटवासयातनाभयात् नाभिरूपमार्गेण बहिर्निर्गतानीवेत्यर्थः। अत्र पद्मच्छद्मना निरगुरिवेति सापह्नवोत्प्रेक्षा, सा च त्रिलोकीयशसोः आधाराधेययोः आनुरूप्यवैलक्षण्यात् विलक्षणालङ्कारश्च इत्यनयोः सङ्करः॥ ९५॥

यह त्रिलोकी विष्णु भगवान्‌की जिस उदररूपी गुहामें निवास करती है, उस (विष्णु भगवान्‌के उदररूपी गुहा) में अधिक होनेके कारण नहीं समाते हुए सुप्रसिद्ध, श्वेतकमलके कपटको प्राप्त अर्थात् श्वेत कमल बने हुए एवं हाथीके दाँतके समान (श्वेत वर्ण) इस राजाके यश विष्णु भगवान्‌की उस (उदररूपी गुहा) को परिपूर्ण करके मानो (बाहर) निकल गये हैं। [विराट्रूप विष्णु भगवान्‌के उदरमें त्रिलोकी वास करती है, किन्तु इस राजाके विशाल यश उसमें नहीं समा सकनेके कारण मानो श्वेत कमलके छलसे बाहर निकल गये हैं। लोकमें भी किसी छोटे पात्रमें जो कोई पदार्थ नहीं समाता, वह बाहर निकल जाता है। श्वेत यश ही विष्णु भगवान्‌के नाभिकमलके रूपसे बाहर निकला हुआ है। इस राजाके यश बहुत विशाल तथा त्रिलोकीसे भी बाहर व्याप्त हैं]॥९५॥

अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कृष्णिमा
कम्पोन्मीलदराललीलवलनस्तेषां भिये भूभुजाम्।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बिता॥ ९६॥

अस्येति। स्वकोशात् चर्ममयनिजपिधानादेव, विवरात् बिलात्, आकृष्ट उद्धृतः स्फुरत्कृष्णिमा व्यक्तकृष्णवर्णः, कम्पेन धूननेन, उन्मीलन्ती प्रकाशमाना, अराललीला वक्रविलासा, यस्य तादृशं वलनं गमनविशेषः यस्य सः प्रकटकुटिलगतिः इत्यर्थः, अस्य असिः एव भुजगः तेषां भूभुजां राज्ञां, भिये भीतये, भवति इति शेषः, यैर्नाम यैः नृपतिभिः किल, सङ्ग्रामेषु युद्धेषु, निजाङ्गुलीमयी स्वाङ्गुलीरूपा, महती सिद्धा अमोघा, ओषधीवीरुत् ओषधिलता तस्याः, ओषधी इति जातिविषयत्वात् स्त्रीत्वे वा ङीप् पर्व ग्रन्थि, 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः आस्ये मुखे, विनिवेश्य निधाय, जाङ्गुलिकता विषवैद्यता, 'विषवैद्यो जाङ्गुलिकः' इत्यमरः न आलम्बिता न स्वीकृता; यथा मुखान्तर्गतौषधं गारुडिकं सर्पो न हन्ति तदादेशे मौनमवलम्ब्य प्रणिपाताञ्जलिम् अकुर्वतः शत्रुनृपान् असौ नृपतिः हन्ति इति भावः। रूपकालङ्कारो व्यज्यते एव॥ ९६॥

अपने म्यानरूपी बिलसे खैंचा ( तत्काल निकाला ) गया, चमकती हुई कालिमावाला, हाथमें लेकर कँपानेसे स्पष्ट कुटिल गतिवाला इस राजाका खड्ग उन राजाओंके भयके लिए होता है; जिन्होंने युद्धमें अपनी अङ्गुलिरूपी सिद्ध ( विषनाशनमें सर्वथा सफल ) महौषधि लताके गांठ ( पक्षा०—अङ्गुलिके=पोर ) को अपने मुखमें डालकर विषवैधत्व का अवलम्बन नहीं किया है। [ जिस प्रकार कोई व्यक्ति सिद्ध महौषधिकी गांठको मुखमें डाल लेता है तो उसे बिलसे निकला हुआ कुटिल चलनेवाला काला साँप नहीं डँसता, उसी प्रकार जो राजालोग युद्धमें शस्त्र-त्यागकर मुखमें अङ्गुलि डाल करके इस राजाके शरणमें नहीं आते उन्हींको यह म्यानसे निकाले हुए उत्तम लोहा होनेसे चमकते हुए श्याम वर्णवाले हिलते हुए खड्ग से मारता है। यह राजा सङ्ग्राममें लड़नेवाले शत्रुओंको खड्ग से मारनेवाला तथा शस्त्र त्यागकर मुखमें अङ्गुलि डाल करके शरणमें आये हुए शत्रुओंकी रक्षा करनेवाला है ] ॥ ९६ ॥

य: पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-
मस्मिन्नेव बिभर्त्ति यश्च किरति क्रूरध्वनिं निष्ठुरः।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥ ९७ ॥

य इति। यः चापः कश्चित् सैन्यश्च, युधि अरिभटश्रेणीषु शत्रुवीरसमूहेषु विषये, पृष्ठं पश्चाद्भागं, दर्शयति, धनुष आकर्षणेन सैन्यस्य च रणस्थलात् पलायनेन पृष्ठदर्शनं सम्भवतीति भावः, यः अस्मिन्नेव नृपे स्वस्वामिन्येव च विषये, वक्रतां ज्याकर्षणेन कोटिद्वयस्य वक्रत्वं, कृतघ्नत्वादिरूपानार्जवञ्च, बिभर्त्ति, यश्च अस्मिन्नेव निष्ठुरः कठिनो निर्दयश्च सन् क्रूरध्वनिं शत्रूणां भयावहटङ्कारशब्दम् अनेन सहाप्रियवाक्यञ्च, किरति विस्तारयतीत्यर्थः, दोषं भुजं, भजत आश्रयतः, 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, दोषमकार्यमाचरतश्च, तथाविधस्य तस्य चापस्य तथाविधस्य तस्यसैन्यस्य च, गुणं ज्यां, पूर्वप्रदर्शितशौर्यजैत्रत्वादिकञ्च, गृह्णन् आकर्षन् वर्णयंश्च, एष नृपतिः कीकटेन्द्रः, एक एव गुणग्राहिणां मौर्वीग्राहिणां, धनुर्द्धारिणामित्यर्थः, दोषं परित्यज्य गुणमात्रग्राहिणां सज्जनानामित्यर्थश्च, सीमा अवधिः, श्रेष्ठ इति यावत्, स्फुटं व्यक्तं, विख्यातः प्रसिद्धः। अत्र गुणग्राहिसीमात्वस्य पूर्ववाक्यार्थहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् अलङ्कारः ॥ ९७ ॥

जो युद्धमें शत्रु शूरवीरोंके समूहोंमें पीठ दिखलाता ( पक्षा०—युद्धसे भगता ) है, जो इसीमें कुटिलता ग्रहण करता अर्थात् दूसरेसे नहीं झुकाया जा सकता ( पक्षा०—इसीके साथ कपटाचरण ) करता है, और निष्ठुर होकर क्रूर ध्वनि ( पक्षा०—कटु भाषण ) करता है; दोष ( बाहु, पक्षा०—दुर्गुण ) धारण करनेवाले वैसे धनुष ( पक्षा०—उस प्रकारके दोषी ) के गुण ( मौर्वी, पक्षा०—उत्तम गुण ) को ग्रहण करता हुआ एकमात्र

यही ( मगध नरेश ही ) गुणग्राहियोंमें अवधि प्रसिद्ध है । यह मगधेश्वर दोषियोंके भी गुणको ग्रहण करनेवाला तथा सब धनुर्धरोंमें मुख्य है ] ॥ ९७ ॥

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ
सीत्कारञ्च न सम्मुखौ रचयतः कम्पञ्च न प्राप्नुतः ।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयो-
रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्‍भुतम् ॥ ९८ ॥

अस्येति । अस्य नृपतेः अरिप्रकरः शत्रुसङ्घः, शरश्च एतौ उभौ सङ्ख्ये युद्धे, सम्मुखौ युगपत् एतदभिमुखं पराभिमुखञ्च, पतन्तौ सन्तौ, सीत्कारञ्च दुःखव्यञ्जकं दन्तमध्यनिर्गतं पवनवायुजन्यञ्च शब्दविशेषं, यत् न रचयतः, कम्पञ्च यत् न प्राप्नुतः, बाणपतनक्षणे एव मरणेन दुःखानुभवसमयाभावात् सीत्कारकम्पासम्भवः दृढ़मुष्टितया मुक्तबाणस्य दुर्निर्गतत्वाभावात् सीत्कारकम्पासम्भवश्चेति भावः, किञ्च मुक्तयोः एकत्र–संसारात् , अन्यत्र–चापाच्चेति भावः, उभयोः परशरयोः, यत् न पुनर्निवृत्तिः पुनर्जन्म प्रत्यागमनञ्च, जागर्त्ति तत् सर्वं युक्तं तयोरेव समानधर्मत्वात् इति भावः; किन्तु तत्र तयोः मध्ये, एकोऽरिसङ्घः, मित्रं सूर्यम् , भिनत्ति, अपरः शरश्च, अमित्रं शत्रुं, भिनत्ति इति अद्भुतम् , अत्र अमित्रं भिनत्तीत्युक्त्या मित्रं न भिनत्तीति च प्रतीयते असूर्यम्पश्येतिवत् नञः प्रसज्यप्रतिषेधार्थकत्वात् ; इत्थञ्च तुल्यकर्मणोस्तयोर्मित्रभेद–मित्रभेदाभावरूपविरुद्धकर्मकारित्वादद्भुतम् । 'द्वावेतौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः' इति स्मृतेः। मित्रपदेन सूर्यमण्डलभेदनस्य वीरपुरुषायत्तत्वेन सम्भवात् अमित्रपदेन च शत्रून् भिनत्तीत्यविरोधात् विरोधाभासोऽलङ्कारः ॥ ९८ ॥

इस राजाके युद्धमें ( अथवा—युद्धमें इस राजाके ) सम्मुख गिरते हुए शत्रु–समूह तथा बाण ( अथवा—इस राजाके सम्मुख गिरता हुआ शत्रु–समूह तथा शत्रु–समूहके सम्मुख गिरता हुआ इसका बाण ) सीत्कार ( दुःखजन्य 'सी–सी' ध्वनि, पक्षा०—पङ्खसे उत्पन्न ध्वनि ) नहीं करते तथा कम्पित नहीं होते ( डरते नहीं, पक्षा०—हिलते–डोलते नहीं, अपितु वेगसे सीधे चले जाते हैं ); फिर नहीं लौटनेवाले ( युद्धमें शत्रु द्वारा मारे जानेके कारण संसारमें पुनर्जन्म नहीं पानेवाले, पक्षा०—धनुषसे फेंके जानेपर फिर वापस नहीं आनेवाले ) तथा मुक्त ( संसार त्यागकर मुक्तिको प्राप्त, पक्षा०—धनुषसे फेंके गये ) उन दोनोंको यह उचित ही है, किन्तु उनमें अर्थात् शत्रु–समूह तथा बाणमें एक ( शत्रु–समूह ) मित्र अर्थात् सूर्यका भेदन करता है तथा दूसरा ( बाण ) अमित्र अर्थात् शत्रुका भेदन करता है ( पक्षा०—सूर्यका भेदन नहीं करता ) यह आश्चर्य है । [ युद्धमें शत्रुके भयसे सीत्कार एवं कम्पन न कर वीरगति प्राप्त करनेवाले योद्धाका सूर्यमण्डल–भेदनकर ऊर्ध्व लोकमें जाना एवं पुनर्जन्म नहीं लेना शास्त्रवचनोंसे प्रमाणित है । दृढमुष्टि होकर

छोड़ा गया बाण न कम्पित होता है और न ध्वनि ही करता है, अत एव यह राजा दृढ-मुष्टि होकर बाण छोड़ता है, जिससे शत्रु-समूह तत्काल मर जाता है और उसे 'सी-सी' शब्द करने या कम्पित होनेका अवसर तक नहीं मिलता। शूरवीर यह मगधनरेश युद्धमें शत्रु-समूहको एक प्रहारमें ही मार डालता है ]॥ ९८ ॥

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन्।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाऽधिष्ठितः
सान्द्रोत्फालमिषात् विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम्॥९९॥

धूलीभिरिति। संयति युद्धे, खुराणां धूलीभिः दिवम् अन्धयन् अन्तरिक्षचारिणां दृष्टीः प्रतिबध्नन्नित्यर्थः, रवैः शब्दैः, खुराणामेवेति शेषः, आशाः दिशः, तत्रत्यान् प्राणिन इत्यर्थः, बधिरयन् बधिरीकुर्वन्, जवजयैः वेगजयैः करणैः इत्यर्थः, अनिलानामिति भावः, वातं वायुं, खञ्जयन् पङ्गूकुर्वन्, वायोरप्यधिकवेग इत्यर्थः, गुणैः दयादाक्षिण्यादिभिः गुणसमूहैः, स्तोतॄन् मूकयन् मूकीकुर्वन्, गुणाधिकतया स्तोतुमशक्य इत्यर्थः, धर्माराधनसन्नियुक्तजगता जगतो धर्मैकसाधनकारिणा, अमुना राज्ञा अधिष्ठितः आरूढः, तुरगोऽपि अश्वोऽपि, सान्द्रोत्फालमिषात् वेगातिशयत्वात् निरन्तरम् ऊर्ध्वचरणनिक्षेपव्याजात्, पदा एकेनापि चरणेन, इति वेगातिशयोक्तिः, गां भुवं धेनुञ्च, स्प्रष्टुं विगायति निन्दति, न स्पृशति इति यावत्; 'गोब्राह्मणानलान् भूमिं गोच्छिष्टं न पदा स्पृशेत्' इति निषेधात् अयं राजा पापकारिणः उदासीनानपि दण्डयति अतः अहमस्य वाहको भूत्वा यदि पदा गोस्पर्शरूपं पापं कुर्यां तदा अहमपि दण्डनीयः स्यामिति बुद्ध्या एतदीयाश्वः पदा भुवं न स्पृशतीवेति भावः। अयं राजा धार्मिको जवनाश्वशाली चेति तात्पर्यम्॥ ९९॥

युद्धमें धूलियोंसे आकाशको अन्धा (आकाशमें चलनेवालोंको दर्शनासमर्थ) करता हुआ, खुरोंकी ध्वनियोंसे दिशाओं (में रहनेवालों) को बहरा करता हुआ, तीव्र वेग (गति) से वायुको भी लंगड़ा करता हुआ अर्थात् वायुसे भी अधिक तीव्रगतिवाला तथा गुणों (शालिवाहन शास्त्रोक्त शुभ लक्षणों) से प्रशंसा करनेवालोंको (सब शुभ लक्षणोंके वर्णन करनेमें असमर्थ होनेसे) मूक करता हुआ धर्माचरणमें संसारको सम्यक् प्रकारसे लगानेवाले इस राजासे अधिष्ठित (सवारी किया गया पशु भी) घोड़ा अत्यधिक उछलनेके व्याजसे (एक) पैरसे भी पृथ्वी (पक्षा०--गौ) का स्पर्श करनेमें (अपनी) निन्दा मानता है। [धर्माचरण नहीं करनेवालोंको यह राजा दण्डित करता है, अतएव यदि मैं एक पैरसे भी गौ (पक्षा०--पृथ्वी) का स्पर्श करूंगा तो यह मुझे भी कठोर दण्ड देगा इस भयसे उक्त घोड़ा वैसा नहीं करता (पक्षा०--इतनी तीव्र गतिसे चलता है कि एक पैरसे भी पृथ्वी का स्पर्श करता हुआ नहीं प्रतीत होता)। धार्मिक इस राजाने समस्त प्राणियोंको धर्माचरणमें लगा दिया है ]॥ ९९ ॥

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां
कष्टं द्रष्टैव नाभूत् भुवि समरसमालोकिलोकास्पदेऽपि ।
अश्वैरस्वैरवेगैः कृतखुरखुरलीमङ्क्षुसङ्क्षुभ्यमान-
क्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधारान्धकारात् ॥ १०० ॥

एतेनेति । समरसमालोकिलोकास्पदे युद्धप्रेक्षकजनालयेऽपि, भुवि युद्धभूमौ, अस्वैरवेगैः अमन्दवेगैः, 'मन्दस्वच्छन्दयोः स्वैरः' इत्यमरः, अश्वैः कृताभिः खुरखुरलीभिः खुरसञ्चारैः, मङ्क्षु सपदि, 'द्राक् मङ्क्षु सपदि द्रुते' इत्यमरः, सङ्क्षुभ्यमानात् सञ्चूर्ण्यमानात्, क्ष्मापृष्ठात् भूतलात्, उत्तिष्ठताम् उत्पतताम्, अन्धाः क्रियन्ते एभिरित्यन्धङ्करणाः दृष्टिशक्तिरोधिनः तेषाम्, 'आढ्यसुभग—' इत्यादिना ख्युन्-प्रत्ययः रणस्य युद्धक्षेत्रस्य, धूरग्रं रणधुरा, 'ऋक्पूः—' इत्यादिना समासान्तः । तस्यां रेणूनां धूलीनां धारा सन्ततिः, सैवान्धकारः तस्माद्धेतोः, एतेन राज्ञा, उत्कृत्तकण्ठैः छिन्नकण्ठैः, प्रतिसुभटैः परवीरैः एव, नटैर्नर्त्तकैः, कबन्धरूपैरिति यावत्, आरब्धानाम् आचरितानां, नाट्याद्भुतानां विस्मयावहनाटकप्रबन्धानाम् इत्यर्थः, द्रष्टैव दर्शक एव न अभूत् द्रष्टुं न समर्थ एव इत्यर्थः, कष्टम् एतद्दुःखकरम् ॥१००॥

युद्ध-दर्शकोंके स्थानभूत पृथ्वीपर ( अथवा—पृथ्वीपर तथा युद्धदर्शक ( देव )-समूह स्थान अर्थात् स्वर्ग में ) तीव्रगति घोड़ोंके खुरोंके बार-बार रखनेसे शीघ्र सञ्चूर्णित होते हुए भूतलसे उड़ते हुए अन्धा ( दर्शन-शक्ति नष्ट ) करनेवाली धूलियोंके समूहसे उत्पन्न अन्धकारसे इस ( राजा ) के द्वारा काटे गये कण्ठवाले शत्रु योद्धारूप नटोंके द्वारा प्रारम्भ किये गये विचित्र नृत्य अर्थात् धड़के नाचनेको देखनेवाला ही नहीं हुआ । [ इस राजाके घोड़ोंके खुरसे इतनी अधिक धूलि उड़ी कि उससे भूतल तथा आकाशमें अन्धकार हो जानेसे युद्धभूमिमें इसके शत्रुओंके नाचते हुए धड़को कोई भी नहीं देख सका ] ॥ १०० ॥

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्द्विजालीगरुदुदितमरुत्स्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः ॥ १०१ ॥

उन्मीलदिति । उन्मीलल्लीलानां स्फुरद्विलासानां, नीलोत्पलदलानां दलनेन विकासेन, य आमोदस्तेन मेदस्विनि परिपुष्टे, तद्बहुले इत्यर्थः, पूरक्रोडे जलराशेः उत्सङ्गे क्रीडन्तीनां द्विजालीनां पक्षिगणानां, गरुदुदितस्य पक्षोत्थस्य, मरुतः वायोः स्फालेन आस्फालनेन, वाचालः मुखरः, वीचिः तरङ्गः यस्य सः, शाखानिवहेन नवैर्हरिद्भिः हरितैः, नीलपीतमिश्रितवर्णैरित्यर्थः, पर्णैः पत्रैः, पूर्णाभिः द्रुमालीभिः तरुश्रेणीभिः, व्यालीढैः व्याप्तैः, उपान्तैः समीपवर्त्तितरप्रदेशैः, शान्तव्यथानां

शमितसन्तापानां, पथिकदृशां दत्तरागो जनिताह्लादः, तडाग एतेन राज्ञा, अखानि निखानितः; इति अस्य धर्मकार्येषु अनुरागः सूचितः॥ १०१॥

इस ( मगधनरेश ) ने स्फुरित विलासवाले नीलकमलोंके दलोंके फूलने ( विकसित होने ) से उत्पन्न सुगन्धिसे परिपूर्ण प्रवाहके ऊपर क्रीड़ा करनेवाले पक्षि-समूहके पङ्खोंसे उत्पन्न वायुके स्फालन ( तीव्र स्पर्श ) से ध्वनियुक्त तरङ्गोंवाला तथा शाखा-समूहके नये एवं हरे पत्तों से परिपूर्ण वृक्ष-समूहोंसे व्याप्त पार्श्व भागसे शान्त श्रमवाले पथिकोंकी दृष्टिको अनुरक्त करनेवाला तडाग खोदा है। [ इसका वनवाया हुआ तडाग नीलकमल एवं क्रीडा-शील पक्षिओं तथा हरे-भरे वृक्षोंसे व्याप्त होनेसे श्रान्त पथिकोंके श्रमको ( सुगन्धित जल, पक्षियोंके कलरव, शीतलवायु तथा हरे-भरे पेड़ोंकी छायासे ) दूर करनेवाला है। इस मगधेश्वरने वैसा तडाग खुदवाकर पूर्तधर्मका पालन किया है ]॥ १०१॥

वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोबंहिमा।
बिभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्मिकशिरोनत्याऽपि नित्यादृतः॥१०२॥

पुनस्तत्तडागमेव वर्णयति वृद्ध इति। तरङ्गैर्वलिभं वलियुक्तं, 'तुन्दिवलिवटेर्भः' इति मत्वर्थीयो भ-प्रत्ययः, हंसाल्येव पलितं शुक्लकेशत्वं तेन, 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः, पाण्डुरं शुभ्रं, वपुर्बिभ्रत्, यष्टिः प्रणालीस्तम्भः, जलपरिमाणार्थं जलमध्ये निक्षिप्तस्तम्भरूपा वा, अवलम्बनदण्डश्च, तया कलितोऽवष्टब्धः, तावान् यष्टिसङ्ख्यातः, यष्ट्या अनुमितश्चेत्यर्थः, वयोबंहिमा पक्षिबाहुल्यं, वयोबाहुल्यञ्च यस्य सः, 'प्रियस्थिर—' इत्यादिना बहुलशब्दस्य बंहादेशः। 'खगबाल्यादिनोर्वयः' इत्यमरः। विकचया स्फुटया, विलुप्तकेशया च, चन्द्रिकया ज्योत्स्नया, शिरोरोगवि-शेषेण च, सह योग्यं स्फुरच्च सङ्गतं सम्बन्धो यस्य तत्, एकत्र—तत्सदृशनिर्मलम्, अन्यत्र—तद्युक्तञ्चेत्यर्थः, कं जलं, शिरश्च, बिभ्रत् स्नानविधायिनां स्नानाद्यनुष्ठातॄणां, धार्मिकाणां धर्मचारिणाञ्च, स्त्रीपुंसामिति शेषः, धर्मं चरतीति ठक्, शिरसां नत्या नमनेनापि, निमज्जनेन नमस्कारेण चेत्यर्थः, नित्यमादृतोऽसौ अयं, वार्द्धिः वार् वारि धीयते अस्मिन्निति वार्द्धिः तडागः, वृद्धः स्थविरोऽतिपूर्णश्च, स्थाने युक्तम्, 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। रूपकालङ्कारः॥ १०२॥

तरङ्गोंसे वलियों ( पक्षा०—तरङ्गरूप वलियों अर्थात् वृद्धावस्थाके कारण सिकुड़े हुए चर्मो ) वाले तथा हंस-समूहरूप पलित ( पके हुए बाल पक्षा०—हंस-समूहके समान पके हुए बालों ) वाले श्वेत शरीर ( पक्षा०—प्रवाह ) को धारण करता हुआ यष्टि ( तडाग खुदवानेवाले इस राजाके वंशादि परिचायक कीर्ति स्तम्भ, पक्षा०—सहाराके लिए ली हुई छड़ी ) से युक्त, बहुत-सी पक्षियों ( पक्षा०—बहुत अवस्था लम्बी उम्र, अथवा—

कुमार युवा आदि अनेक अवस्थाओं) वाला, विकसित (पक्षा०—केसरहित) चन्द्रिका (चांदनी, पक्षा०—खल्वाटपना अर्थात् चण्डुलपना ) से योग्य विलसित संगत ( मैत्री ) वाले ( समुद्रसे उत्पन्न चन्द्रकी चाँदनीसे समुद्रका योग्य सङ्गत होना उचित ही है ) जल ( पक्षा०—मस्तक ) को धारण करता हुआ और स्नान करनेवाले धर्मात्माओंसे ( स्नान करनेके समय डुबकी लगानेके लिए ) मस्तक झुकानेसे ( अथवा—नमस्कार करनेसे ) सर्वदा आदर पाया हुआ वृद्ध ( बढ़ा हुआ अर्थात् विशाल, पक्षा०—बूढ़ा ) यह ( इस राजाका खुदवाया हुआ उक्त ) तडाग ( पक्षा०—समुद्र ) है। [ जिस प्रकार सिकुड़े हुए चमड़ेवाला पके श्वेत बालोंसे युक्त शरीरवाला, सहारेके लिए छड़ी लिया हुआ, अधिक उम्रवाला, केशरहित खल्वाटपनासे युक्त मस्तकवाला बूढ़ा मनुष्य धर्मात्मा पुरुषोंके द्वारा नमस्कार करनेसे सदा आदर पाता है, उसी प्रकार टेढे तरङ्गोंवाला, हंस-समूहसे श्वेत प्रवाहरूप शरीरवाला, खुदवानेवाले इस राजाके वंशादि-परिचायक कीर्तिस्तम्भ ( जाठ ) वाला, बहुत पक्षियोंवाला, श्वेत चांदनीके समान निर्मल जलवाला ( अथवा—श्वेत चांदनीसे चञ्चल जलवाला ) और स्नानार्थी धार्मिकोंसे झुककर प्रणाम कर ( अथवा—डुबकी लगाते समय मस्तक झुकाकर ) सर्वदा आदृत ( इस राजाका ) विशाल तडाग है। पूर्णिमा तिथिको ही समुद्रके स्पर्श एवं उसमें स्नान करनेका शास्त्रीय विधान है, अत एव उस समुद्रकी अपेक्षा भी उक्त तडाग स्नानार्थी धर्मात्माओंसे सर्वदा नमस्कृत होनेके कारण श्रेष्ठ है ] ॥ १०२ ॥

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु बाले !
नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र नीलोत्पलानाम् ।
तत्पाथोदेवतानां विशतु तव तनुच्छायमेवाधिकारे
तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥ १०३ ॥

तस्मिन्निति। हे बाले ! तस्मिन् तडागे, यूना एतेन राज्ञा सह, विहर क्रीडां कुरु, पयःकेलिवेलासु जलक्रीडाकालेषु, तत्र तडागे, नीलोत्पलानां त्वदक्ष्णोः प्रतिफलनात् प्रतिबिम्बनात्, भिदा भेदः, 'षिद्भिदादिभ्योऽङ्' नालेनास्तु नालमेव त्वन्नेत्रप्रतिबिम्बसदृशनीलोत्पलानां भेदकमस्तु इत्यर्थः, तव तनोः छाया तनुच्छायं कायकान्तिः, शरीरप्रतिबिम्बं वा, 'विभाषा सेना—' इत्यादिना नपुंसकत्वम्, तस्य तडागस्य, पाथोदेवतानां जलदेवतानाम्, अधिकारे आधिपत्ये, विशतु आधिपत्यं करोतु इत्यर्थः, भवदीयाननस्य तस्य तडागस्य, फुल्लाम्भोजानां विकचपद्मानां, राज्ये आधिपत्ये, अभिषेकश्च भवतु, त्वन्नेत्रादिकं तदीयोत्पलादिकम् अतिशय्य वर्त्तिष्यते इत्यर्थः ॥ १०३ ॥

हे बाले ( दमयन्ति ) ! उस तडागमें इस युवक ( मगधेश्वर ) के साथ विहार करो तथा उसमें जलक्रीडाके समयों अर्थात् प्रत्येक ग्रीष्म ऋतुमें नीलकमलोंके नाल ( डण्ठल ) से तुम्हारे नेत्रके प्रतिबिम्बसे भेद हो ( नीलकमलोंमें नाल होनेसे तथा तुम्हारे नेत्रोंमें उसके

नहीं होनेसे भेद बना रहे अर्थात् नील कमल एवं तुम्हारे नेत्रोंके समान होनेपर भी तुम्हारे नेत्रोंके जलमें प्रतिबिम्बित होनेपर नील कमलोंमें नाल रहनेसे दोनों पृथक् पृथक् मालूम पड़ें), उस (तडाग) की जलदेवताओंके अधिकार (व्यापार या स्वामित्व) में तुम्हारे शरीरके प्रतिबिम्बका हो अर्थात् उस तडागके जलमें प्रतिबिम्बित तुम्हारा शरीर उसके जलदेवताओंके समान ज्ञात हो और उस (तडाग) के विकसित कमलोंके समूह (पक्षा०—स्वामित्व) में तुम्हारे मुखका अभिषेक हो अर्थात् तुम्हारा मुख उसमें विकसित कमलोंसे अतिशय सुन्दर एवं सुगन्धित होनेके कारण उन कमलोंका राजा बने। [तुम्हारे नेत्र, शरीर तथा मुख क्रमशः नील कमल, जलदेवता तथा विकसित कमलोंसे भी अधिक श्रेष्ठ हैं]॥ १०३॥

एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जरतां श्यामैः समग्रैरपि।
जज्ञे कीर्त्तिमयादहो! भयभरैरस्मादकीर्त्तेः पुनः
सा यत्रास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम्॥१०४॥

एतदिति। एतस्य राज्ञः, कीर्त्तिविवर्त्तैः यशोविस्तारैः, धौतात् क्षालितात्, निखिलत्रैलोक्यात् निर्वासितैः निष्कासितैः, समग्रैः समस्तैरपि, श्यामैः श्यामवस्तुभिः, जरतां वृद्धानां, पुरुषाणामिति शेषः, 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि' इत्यमरः। 'जीर्यतेरतृन्' इत्यतृन्-प्रत्ययः कथासु विश्रान्तिः अवस्थानं, कलिता स्वीकृता; एतद्यशोव्याप्तया श्यामवस्तुजातं प्राचीनजनानां कथामात्रेषु शेष-मासादित्यर्थः; अकीर्त्तेः अपकीर्त्तेः, पुनः कीर्त्तिमयात् कीर्त्यात्मकात्, अस्मान्नृपात्, भयभरैः भयराशिभिः, जज्ञे जातं, भावे लिट् कीर्त्यकीर्त्योर्विरोधेन अकीर्त्तिः कीर्त्तिमयात् अस्मात् सुतराम् अभैषीदित्यर्थः, कुतः? यत् यस्मात्, मलिनच्छाया सा अकीर्त्तिः, अस्य कथापथेऽपि एतत्सम्बन्धिवाङ्मार्गेऽपि, स्थितिं न बबन्ध अवस्थितिं न प्राप, अकीर्त्तिलेशोऽप्यस्य नास्तीत्यर्थः; यत एतत्कथोदये अकीर्त्तिकथाऽपि न श्रूयते इति भावः॥ १०३॥

इस (मगधेश्वर) को कीर्तिके विवर्त (विशेष स्थिति या परिणाम) से धोये गये तीनों लोकोंसे निकाले गये, संसारके सब श्याम (काले वर्णवाले कज्जल आदि) पदार्थ वृद्धजनोंकी कथाओंमें विश्रान्ति पा लिये अर्थात् बड़े बूढ़ोंके कहनेसे लोगोंको ज्ञात होता था कि पहले संसारमें काले पदार्थ भी थे, किन्तु वर्तमान समयमें कोई काला पदार्थ नहीं रह गया तथा कीर्तिबहुल अर्थात् महाकीर्तिमान् इस राजासे अकीर्तिको अत्यधिक भय हो गया (बहुत कीर्तिवालेसे एक कीर्तिका भय होना उचित ही है), क्योंकि मलिन कान्तिवाली वह (अकीर्ति) इस (मगधनरेश) के कथामार्ग (वर्णन-प्रसङ्ग) में भी आश्रय नहीं पायी यह आश्चर्य है अर्थात् इसके वर्णनके समयमें अकीर्तिके सर्वथा अभाव होनेसे कीर्तिका ही वर्णन

किया जाता है। [ लोकमें भी जो जिससे अधिक डरता है, वह उसके वर्णनके आरम्भमें ही मलिनमुख होकर अन्यत्र चला जाता है, अतः अकीर्ति भी इसके वर्णनके आरम्भसे ही नहीं सुनायी पड़ती। अविद्यमान भी शशशृङ्ग, आकाशपुष्प, वन्ध्यासुत आदिका शब्दसे वर्णन किया जाता है, किन्तु इसके वर्णनमें भी अकीर्तिकी चर्चा तक नहीं होती यह आश्चर्य है। अथवा—तीनों लोकोंका धोया जाकर श्वेत होना तथा अचेतन भी अकीर्तिको भय उत्पन्न होना आश्चर्य है ] ॥ १०४ ॥

अथावदद्भीमसुतेङ्गितात् सखी जनैरकीर्त्तिर्यदि वाऽस्य नेष्यते ।
मयाऽपि सा तत् खलु नेष्यते परं सभाश्रवःपूरतमालवल्लिताम् ॥

अथेति। अथ सखी भीमसुताया इङ्गितात् अनभिमतसूचकचेष्टितं परिज्ञाय, अवदत्, किम्? इत्याह, अस्य अकीर्त्तिर्जनैर्नेष्यते नाङ्गीक्रियते, इषेः कर्मणि लट्, यदि वा तत्तर्हि, मया सा एतदकीर्त्तिः, सभायाः श्रवःपूरः कर्णावतंसः, या तमालवल्लिता तां, परं भृशं नेष्यते अपि? परन्तु प्रापयिष्यते खलु, नयतेः कर्मणि लृट् अहमस्य अपकीर्त्तिं सभायां श्रावयिष्यामि इत्यर्थः ॥ १०५ ॥

इस ( सरस्वती देवीके उक्त ( १२।८८—१०४ ) वर्णन करने ) के बाद भीमकुमारी ( दमयन्ती ) की चेष्टा (इशारा-सङ्केत) से सखीने कहा—लोग यदि इसकी अकीर्तिको नहीं चाहते तो मैं भी उस अकीर्तिको सभासदोंके कर्णाभरणकी तमालवल्लिके भाव प्राप्त कराती हूँ अर्थात् इस राजाकी अकीर्ति सभासदोंको सुनाती हूँ। ( अथवा—मैं भी उसे ( इसकी अकीर्तिको ) नहीं चाहती, किन्तु सभासदोंके…… ) ॥ १०५ ॥

अस्य क्षौणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधेः रोधसि ॥ १०६ ॥

स्वयं श्रावयति, अस्येति। परार्द्धं चरमा सङ्ख्या, ततोऽपि परया अधिकया, सङ्ख्यया लक्षीकृता विषयीकृताः, तत्सङ्ख्याता इत्यर्थः, प्रज्ञैव चक्षुर्येषां ते प्रज्ञाचक्षुषो जात्यन्धाः, तैरवेक्ष्यमाणं तदेकग्राह्यं, यत्तिमिरं तत्प्रख्याः तत्सङ्काशाः, अतिकृष्णाः इत्यर्थः, अस्य क्षौणीपतेः अकीर्त्तयः अष्टमं स्वरं निषादादिसप्तस्वरात् अतिरिक्तं स्वरं, कलयता प्रयुञ्जानेन, वन्ध्याया अनपत्यायाः, उदरात् जातेन मूकानां प्रकरेण सङ्घेन, कूर्मरमणीनां कूर्मस्त्रीणां, दुग्धानि क्षीराणि, तेषामुदधेः अब्धेः, रोधसि तीरे, गीयन्ते किल, तत् कथं जनैर्नाकर्ण्यन्ते इत्यर्थः; एतेनास्य अकीर्त्तयः सन्ति जनैरपि श्रुता इत्यर्थः प्रथमं प्रतीयते पर्यवसाने तु सङ्ख्यादीनां परार्द्धपरत्वादिकं यथा अलीकं तथा एतस्याकीर्त्तयोऽपि खपुष्पादिवत् अलीका इति स्तुतिरेव गम्यते। अत्र निन्दया स्तुतिप्रतीतिर्व्याजस्तुतिभेदालङ्कारः ॥ १०६ ॥

परार्ध ( अन्तिम सङ्ख्या ) से भी अधिक सङ्ख्यासे लक्षित अर्थात् गिनी गयी ( अथवा लाखसे गिनी गयी ), जन्मसे अन्धे लोगोंसे देखे जाते हुए अन्धकारके तुल्य अर्थात् अत्यन्त काली, इस मगधेश्वरकी अकीर्तिको अष्टम स्वर ( षड्ज, मध्यम आदि सात ही स्वरोंके होनेपर भी अष्टम स्वर ) को ग्रहण किये हुए, वन्ध्याओंके उदरसे उत्पन्न मूकों ( गूंगेलोगों ) के समूह कच्छपीके दूधके समुद्रके तीरपर गाते हैं। [ जिस प्रकार परार्द्धसे अधिक सङ्ख्या, जन्मान्धोंकी दर्शनशक्ति, अष्टम स्वर, वन्ध्याके गर्भसे बच्चेकी उत्पत्ति, मूकोंका गाना, कच्छपीका दूध—ये सब सर्वथा असम्भव हैं, उसी प्रकार इस राजाकी अकीर्तिका होना भी सर्वथा असम्भव है, अतएव यह महाकीर्तिमान् है। अथवा—'किलकीर्तयः' यहांपर 'किल + आकीर्तयः' सन्धिच्छेद करके इस राजाकी आकीर्ति ( समन्तात् व्याप्त कीर्ति ) को उक्त प्रकारसे गाया करते हैं अर्थात् उन परार्द्धसे अधिक सङ्ख्या आदिके सर्वथा नहीं होनेके समान इस राजाकी समन्तात् ( सब तरफ ) व्याप्त कीर्ति भी नहीं है, अतः यह राजा कीर्तिमान् नहीं होनेसे स्वामिनी दमयन्तीके वरण करने योग्य नहीं है ] ॥ १०६ ॥

**तदक्षरैः सस्मितविस्मिताननां निपीय तामीक्षणभङ्गिभिः सभाम् ।**
**इहास्य हास्यं किमभून्न वेति तं विदर्भजा भूपमपि न्यभालयत् ॥ १०७ ॥**

**तदिति । विदर्भजा वैदर्भी, तस्याः सख्याः, अक्षरैरुपक्रमे अकीर्त्तेर्विधिरूपैः पर्यवसाने तु निषेधरूपैर्वाक्यैः, सस्मितानि हास्ययुक्तानि, विस्मितानि च इति विरोधः, आश्चर्यरसयुक्तानीति तत्परिहारः, आननानि यस्यास्तादृशीं, तां सभाम् ईक्षणभङ्गिभिर्दृष्टिविशेषैः, निपीय सस्पृहं दृष्ट्वा, इह एतद्वाक्ये, अस्य कीकटेश्वरस्यापि, हास्यं स्मितम्, अभूत् किम्? न वा अभूत् इति तं भूपम् अपि न्यभालयत् आलोकयत् ॥ १०७ ॥**

दमयन्तीने उस सखीके वचनोंसे स्मितसहित आश्चर्यित मुखवाली उस सभा अर्थात्··· मुखवाले उस सभाके सदस्योंको दृष्टि भङ्गियोंसे अच्छी तरह पानकर अर्थात् बार-बार देखकर इस सभामें 'इस ( मगधनरेश ) को भी हँसी आयी या नहीं' इस विचारसे उस राजा ( मगधनरेश ) को भी देख लिया। [ सखीके वैसी विचित्र बात कहनेपर सभासद्गण आश्चर्यसे मुस्कुरा दिये, उन्हें देखती हुई दमयन्तीने उस राजाको भी इस विचारसे देखा कि ऐसी विचित्र बात सुनकर भी अन्य सभासदोंके समान इस राजाको भी हंसी आयी या नहीं? किन्तु अनुरागसे नहीं देखा। इस श्लोकमें स्मितसहित मुखवालेका विस्मित अर्थात् स्मितरहित मुखवाला होना विरुद्ध है, अतः 'विस्मित' शब्दका 'आश्चर्यित' अर्थ करके उक्त विरोधका परिहार करना चाहिये ] ॥ १०७ ॥

**नलान्यवीक्षां विदधे दमस्वसुः कनीनिकाऽऽगः खलु नीलिमालयः ।**
**चकार सेवां शुचिरक्ततोचितां मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥**

**कीकटेश्वराद्यवलोकनात् दमयन्त्याः पातिव्रत्यभङ्गं परिहरति, नलेति । खलु**

यस्मात्, दमस्वसुः दमयन्त्याः, कनीनिका तारका, 'तारकाऽक्ष्णः कनीनिका' इत्यमरः, नीलिम्नो नैल्यस्य मालिन्यस्य च, आलयः आश्रयः, अत एव नलादन्यस्य पुंसः, वीक्षां वीक्षणं, 'गुरोश्च हलः' इति स्त्रियाम् अ-प्रत्यये टाप्, तदेवागोऽपराधं पापञ्च, 'पापापराधयोरागः' इत्यमरः विदधे, मलिनात्मानो हि मलिनकृत्यमेवाचरन्तीति भावः; अपाङ्गस्तु कटाक्षः पुनः सविधे समीपस्थे, नैषधे सत्यनले, मिलन् संसक्तः, शुचिरक्तः श्वेतरक्तो निर्मलानुरक्तश्च तस्य भावस्तत्ता तदुचितां सेवां रञ्जनं, चकार, साधवः साध्वेवाचरन्तीति भावः। एतेन कीकटपतावृजुदृष्टिपातादनुरागाभावो नैषधे कटाक्षपातादनुरागश्चेति गम्यते; अत एव ऋजुदृष्ट्या कीकटवीक्षणम् अपि सखीवाक्यनिमित्तस्यानुसन्धानलौल्यात्; अपाङ्गेनान्यदर्शने एव दोषः न तु ऋजुदृष्ट्या इत्यदोषः ॥ १०८ ॥

नीलिमा ( नीलापन, पक्षा०—मलिनता ) का आश्रय, दमयन्तीकी नेत्रकी पुतलीने नलसे भिन्न राजाका दर्शनरूप अपराध किया ( मलिन व्यक्ति मलिन ही कार्य करता है ), किन्तु समीपस्थ ( द्वितीय पङ्क्तिमें नलरूपधारी इन्द्रादि चारों देवोंके बादमें अथवा पासमें स्थित ) नलमें मिलते हुए कटाक्षने श्वेतिमा तथा रक्तता ( सफेदी और लालिमा, पक्षा०—शुद्ध हृदयता तथा अनुरागयुक्तता ) के योग्य सेवा की। [ पतिव्रता दमयन्तीने कनखीसे अर्थात् अनुरागरहित सामान्य भावसे ही दूसरे राजाओंको देखा तथा पासमें स्थित सत्य नलको कटाक्षसे अनुरागपूर्वक देखा, अतएव परपुरुषदर्शनजन्य दोष दमयन्तीको नहीं लगा। काले ( मलिन ) कनीनिकाका दुर्जनोचित मलिन तथा श्वेत एवं रक्त ( पक्षा०—शुद्ध हृदय एवं अनुरक्त ) कटाक्षका नलको ही देखकर सज्जनोचित व्यवहार करना उचित ही है। लोकमें भी शुद्ध हृदय एवं अनुरक्त सेवक योग्य सेवा तथा मलिन हृदयवाला निन्दित कार्य करता है ] ॥ १०८ ॥

दृशा नलस्य श्रुतिचुम्बिनेषुणा करेऽपि चक्रच्छलनम्रकार्मुकः ।
स्मरः पराङ्गैरनुकल्प्य धन्वितां जनीमनङ्गः स्वयमार्दयत्ततः[1] ॥ १०९ ॥

तदा नलोऽपि तां सानुरागम् अवैक्षत इत्याह, दृशेति। स्वयम् अनङ्गोऽङ्गरहितः, अत एव स्मरो नलस्य दृशा दृष्ट्यैव, कटाक्षरूपयेति भावः, श्रुतिचुम्बिना कर्णान्ताकृष्टेन, इषुणा करणेन, तथा करेऽपि नलस्यैव करेऽपि, चक्रच्छलेन राजलक्षणचक्ररेखाव्याजेन, नम्रः अत्यन्ताकर्षणात् कोटिद्वयसंलग्नः, कार्मुकः कोदण्डो यस्य सः, पराङ्गैः परस्य नलस्य, अङ्गैः दृगादिभिः, परकीयसाधनैरेवेत्यर्थः, धन्वितां धानुष्कत्वम्, अनुकल्प्य, मुख्याभावे प्रतिनिधिरपि अङ्गत्वेन कल्प्यते इति शास्त्रात् कुशकाशवत् धानुष्कत्वेन सम्पाद्य, ततो जनीं वधूम्, आर्दयत् अपीडयत्; दमयन्त्यपि नलकटाक्षेण कामपीडिता अभूदिति तात्पर्यम् ॥ १०९ ॥

---

1. 'स्वयमादिदृत्ततः' इति पा० ।

स्वयं अनङ्ग अर्थात् अङ्गहीन कामदेव कानतक स्पर्श करनेवाली अर्थात् विशाल (पक्षा०—कानतक खैंचे हुए) नलकी दृष्टिरूपी वाणसे, (तथा नलके ही) हाथमें चक्र (चक्राकार रेखा) रूप नम्र (झुके हुए) धनुपवाला होता हुआ दूसरे (नलके) अङ्गों (नेत्र तथा हाथकी चक्राकार हस्तरेखा) से धनुर्धर वनकर वधू (दमयन्ती) को पीडित कर दिया। [जिस प्रकार लोकमें किसी वस्तु आदिके अप्राप्य होनेपर उसके स्थानमें दूसरी वस्तुसे काम चलाया जाता है, यथा—कुशके अभावमें काश से; उसी प्रकार अङ्ग, वाण तथा धनुषसे हीन कामदेवने क्रमशः नलके अङ्ग, दृष्टि तथा करस्थ चक्रकार रेखाके द्वारा अङ्ग, वाण तथा धनुपका अनुकल्पकर दमयन्तीको पीडित किया। नलके देखनेपर दमयन्ती काम-पीडित हो गयी] ॥ १०९ ॥

**उत्कण्टका विलसदुज्ज्वलपत्रराजिरामोदभागनपरागतराऽतिगौरी।**
**रुद्रक्रुधस्तदरिकामधिया नले सा वासार्थितामधृत काञ्चनकेतकीव ॥११०॥**

उत्कण्टकेति। उत्कण्टका उद्गतपुलका, अन्यत्र—उदग्रसूचिका, विलसन्ती शोभमाना, उज्ज्वला नीलपीतादिवर्णदीप्ता, कान्तिमती च, पत्रराजिः पत्ररचना, अन्यत्र—दलपङ्क्तिः यस्याः सा, आमोदं हर्षं, परिमलञ्च भजतीति आमोदभाक् भजो ण्विः। 'आमोदो गन्धहर्षयोः' इति विश्वः, अतिशयेन अपगतरागा न भवतीत्यनपरागतरा अतिशयानुरागवती अन्यत्र—नास्ति परागः पुष्परजो यस्यामिति अपरागा, अतिशयेन सा न भवतीति अनपरागतरा अतिशयपरागयुक्ता इत्यर्थः, उभयत्राप्यतिशयार्थे तरप्, गौरीं पार्वतीम् अतिक्रान्ता गुणैरित्यतिगौरी अत्यन्तगौरवर्णेति चोभयत्रापि योज्यम्; सा दमयन्ती, रुद्रक्रुधः रुद्रे महादेवे, क्रुधः शापाधीनस्वपरित्यागजन्यक्रोधात्, तदरिकामधिया अयं रुद्रशत्रुः काम इति भ्रान्त्या, आगता इति शेषः, काञ्चनकेतकीवेत्युत्प्रेक्षा, नले वासार्थितां स्वयंवरेण निवासाकाङ्क्षाम्, अधृत धृतवती, धरतेः कर्त्तरि लुङ्, स्वरितत्वात्तङ्; दमयन्ती नलाभिलाषुका आसीत् इति तात्पर्यम् ॥ ११० ॥

कण्टकों (सूचीके समान काँटों, पक्षा०—रोमाञ्चों) से युक्त, विलसित अर्थात् शोभमान श्वेत पत्रसमूहवाली (पक्षा०—शोभमान श्वेत वर्ण या अनेक वर्ण होने से सुन्दर) स्तन कपोलादिमें चन्दनादिसे वनाये गये मकरी आदिके आकारवाली (पत्ररचना वाली), स्वभावतः सुगन्धवाली (पक्षा०—चन्दनादिके लेपसे शरीरमें तथा पान वीडा आदिसे मुखमें सुगन्धिवाली) अत्यन्त अनपराग अर्थात् वहुत पराग (पुष्परज) से युक्त (पक्षा०—अत्यधिक वैराग्यसे रहित अर्थात् अतिशय अनुरक्त) और अत्यन्त गौर वर्णवाली (अथवा—पार्वतीको अतिक्रान्त) उस दमयन्तीने काञ्चनमयी केतकीके समान शिवजीके क्रोधसे नलमें उस (शिवजीके) शत्रुरूप कामदेवकी वुद्धिसे निवास करनेकी इच्छा की अर्थात् वह नलके कटाक्षसे देखनेपर उनमें आसक्त हो गयी। [जिस प्रकार शत्रुके क्रोध करनेपर कोई व्यक्ति उसके शत्रुका आश्रय करता है, अतः उत्कण्टक आदि गुणों से युक्त केतकीने शङ्करजीके

त्याग करनेपर उनके शत्रु कामदेवका ( पुष्प होनेसे बाणरूप होकर ) आश्रय किया, उसी प्रकार रोमाञ्चादिसे युक्त काञ्चनकेतकीके तुल्य दमयन्तीने नलको ही कामदेव समझकर शिवजीके क्रोधसे उस नलका ही आश्रय चाहा अर्थात् दमयन्ती नलासक्त हो गयी। अथवा—जिस प्रकार केतकी शिवजीके क्रोधका निवासार्थिनी बनी अर्थात् शिवजीका कोप स्थान बनी, उसी प्रकार दमयन्ती भी नलको नलवैरी कामदेव ही नलके सम्बन्धसे मुझे पीडित कर रहा है इस बुद्धिसे शिवजीके क्रोधका स्थान बन गयी अर्थात् कामदेवपर क्रोधित हो गयी। शिवजीके कामदेव तथा केतकीके साथ विरोध होनेकी पौराणिकी कथा पहले लिखी जा चुकी है ] ॥ ११० ॥

तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभू-
दप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान्[1] ।
आनन्दाम्बुनिधौ निमज्ज्य नितरां दूरं गता तत्तला-
लङ्कारीभवनाज्जनाय[2] ददती पातालकन्याभ्रमम् ॥ १११ ॥

तदिति । सा दमयन्ती तत् तस्मिन्, नालीकनले अलीकनलो न भवतीति नालीकनलस्तस्मिन् सत्यनले इत्यर्थः, चलेतरमना अदृष्टवशात् निश्चलचित्ता सती, तत्रैव दृढानुरागिणी सतीत्यर्थः, आनन्दाम्बुनिधौ निमज्ज्य नितरां दूरं गता आनन्दस्य चरमसीमां गता, अन्यत्र—समुद्रस्य तलं प्राप्ता, तस्य तलस्य अलङ्कारीभवनात् आभरणीभावात्, अन्यत्र—तत्रावस्थानादित्यर्थः, जनाय आलोकयितृजनाय, पातालकन्याभ्रमं नागकन्याभ्रमं, ददती सौन्दर्यातिशयात् आनन्दातिशयजनितनिमेषरहितत्वात् समुद्रतलगमनाच्च किमियं नागकन्येति बुद्धिं जनयन्ती सती अग्रे स्थितानपि चतुरो नैषधान् इन्द्रादिमायानलान्, साम्यात् सत्यनलसादृश्यात्, मनागीषत् अपि, दृशा कटाक्षेण, पातुं द्रष्टुं, 'शकधृष—' इत्यादिना अस्त्यर्थयोगात्तुमुन् चतुरा निपुणा, नाभूत्; सा दमयन्ती व्यवहितमपि सत्यनलं प्राक्तनादृष्टवशात् कटाक्षैः पश्यति स्म इन्द्रादिमायानलांस्तु सम्मुखस्थान् ऋजुदृष्ट्यैव पश्यति स्मेति तात्पर्यम् ॥ १११ ॥

उस सत्य नलमें स्थिर चित्तवाली, आनन्दसमुद्रमें अच्छी तरह डूबकर ( अत्यन्त हर्षित होकर ) अत्यन्त दूर गयी हुई हर्षकी परम सीमाको प्राप्त ( पक्षा०—आनन्दसमुद्रके बहुत अगाध तलमें गयी हुई ) और उसके तल अर्थात् समुद्रके अगाध तल ( पाताल ) का अलङ्कार बननेसे लोगों ( वहांके निवास करनेवालों ) के लिए पातालकन्या अर्थात् नागकन्याकी भ्रान्ति उत्पन्न करती हुई चतुरा दमयन्ती सामने बैठे हुए भी चार असत्य नल अर्थात् कपटसे नलका रूप ग्रहण कर स्वयंवरमें सामने बैठे हुए इन्द्र, वरुण, यम और अग्निरूप चारों देवों को थोड़ी दृष्टिसे भी पान करनेके लिए नहीं समर्थ हुई। ( अथवा पाठा०—उस

१. 'तन्नला' इति पा० । २. 'भवते जनाय' इति पाठान्तरम् ।

नेत्र होनेके कारण देखनेमें अशक्त होनेसे उस (दमयन्ती) के द्वारा किये गये अनेक भावोंसे पूर्ण कटाक्षोंको व्यर्थ कर दिया अर्थात् दमयन्तीके किञ्चित् मुख फेरकर कटाक्षपूर्वक देखनेसे ही अमृतधारासे आप्लुत नल हर्षाश्रुपूर्ण होकर कामपीडित हो दमयन्तीके साभिप्राय अन्य कटाक्षोंको नहीं देख सके। [ अन्य भी कोई व्यक्ति प्रसन्न होकर किसीके लिये हृदयके सर्वस्वको पारितोषिकमें दे देता है तथा अभीष्ट अतिथिको पाकर आनन्दजन्य अश्रुओंसे नेत्रोंको भर लेता है। नलके द्वारा सानुराग देखी गयी दमयन्तीने नलको पुनः देखा, जिससे कामपीडित उनके नेत्र हर्षाश्रुसे पूर्ण हो गये अत एव उन्होंने फिर दमयन्तीके द्वारा साभिप्राय ( अनेक भावपूर्ण ) किये गये कटाक्षोंको नहीं देखा ]॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ ११३ ॥

श्रीहर्षमिति । मातृचरणाम्भोजयोः अलिमौलेः भृङ्गायमाणमौलेरित्यर्थः ॥ ११३ ॥

इति मल्लिनाथविरचिते 'जीवातु' समाख्याने द्वादशः सर्गः समाप्तः ।

कवीश्वर-समूहके···उत्पन्न किया, माता ( वागीश्वरी देवी, अथवा—जननी मामल्ल देवी ) के चरण-कमलोंमें भ्रमरतुल्य बने हुए मस्तकवाले। ( अथवा—माताके चरणोंके ( पूजार्थ चढ़ाये गये ) कमल-समूह युक्त मस्तकवाले अर्थात् माताके चरण पर चढ़ाये गये कमलपुष्प-समूहको मस्तक पर लिये हुए ) उसके रचित 'नल चरित'···यह द्वादश सर्ग समाप्त हुआ॥

शेष व्याख्या चतुर्थ सर्गके समान समझनी चाहिये।

यह 'मणिप्रभा' टीकामें 'नैषधचरित' का द्वादश सर्ग समाप्त हुआ ॥ १२ ॥

# त्रयोदशः सर्गः ।

कल्पद्रुमान् परिमला इव भृङ्गमालामात्माश्रयां निखिलनन्दनशाखिवृन्दात् ।
तां राजकादपगमय्य विमानधुर्या निन्युर्नलाकृतिधरानथ पञ्च वीरान् ॥१॥

कल्पद्रुमानिति । अथ नले कटाक्षपातानन्तरं, विमानधुर्याः शिबिकाभृतः आत्माश्रयाम् आत्मा स्वम् , आश्रयोऽधिकरणं यस्याः तां स्वाधारां, स्ववाह्यविमानावस्थितत्वेन परम्परया धुर्याश्रितामित्यर्थः, तां दमयन्तीं, परिमलाः, सौरभविशेषाः, आत्माश्रयां स्वोपजीविनीं, परिमलाश्रितामित्यर्थः, भृङ्गमालां निखिलात् नन्दनशाखिवृन्दात् अपगमय्य कल्पद्रुमान् पञ्चामरतरूनिव, राजकात् राजसमूहात् , 'गोत्रोक्षोष्ट्रोरभ्रराज-' इत्यादिना समूहार्थे वुञ् , अपगमय्य अपनीय, नलाकृतिधरान् नलरूपधारिणः; यस्य या आकृतिस्तद्धारित्वं तस्यापि सम्भवतीति नलस्यापि नलाकृतिधारित्वं सङ्गच्छते; पञ्च वीरान् नलसहितान् इन्द्रादीन् , निन्युः प्रापयामासुः ॥ १ ॥

जिस प्रकार मनोहर गन्ध स्वोपजीविनी भ्रमरपङ्क्तिको नन्दनवन ( इन्द्रोद्यान ) के वृक्षसमूहोंसे हटाकर कल्पद्रुमों ( कल्पद्रुम आदि पांच देववृक्षों ) के पास ले जाती है, उसी प्रकार विमानवाहक आत्माश्रयिणी ( अपने कन्धेपर स्थित पालकी पर सवार हुई ) उस ( दमयन्ती ) को राज-समूहसे हटाकर नलके आकार को ग्रहण किये हुए पांच वीरों ( इन्द्र, अग्नि, यम, वरुण और नल ) के पास ले गये । [ मनोभिलाषके पूरक होनेसे मन्दार, पारिजात, हरिचन्दन और सन्तान वृक्षोंके लिए भी 'कल्पद्रुम' शब्दका ही प्रयोग किया गया है । मन्दार, पारिजात, हरिचन्दन, सन्तान और कल्पवृक्ष, ये पांच देववृक्ष हैं तथा स्वयंवरमें इन्द्रादि चार देव एवं नल; ये पांच वीर हैं । नलके आनेका निश्चय विमानवाहकोंको नहीं होनेसे यहां सभीको नलरूपधारी कहा गया है ] ॥ १ ॥

साक्षात्कृताखिलजगज्जनताचरित्रा तत्राधिनाथमधिकृत्य दिवस्तथा सा ।
ऊचे यथा स च शचीपतिरभ्यधायि प्राकाशि तस्य न च नैषधकायमाया ॥२॥

साक्षादिति । अथ पञ्चवीरप्रापणानन्तरं साक्षात्कृतम् अखिलजगत्सु जनताया जनसमूहस्य, चरित्रं यया तादृशी, सा सरस्वती, तत्र पञ्चसु मध्ये, दिवोऽधिनाथम् इन्द्रम्, अधिकृत्य निर्दिश्य, तथा तेन प्रकारेण, ऊचे उवाच, यथा येन प्रकारेण, स च शचीपतिः इन्द्रः, अभ्यधायि अभिहितो भवति, तस्य इन्द्रस्य, नैषधकायमाया नलरूपकल्पना च, न प्राकाशि न प्रकाशिता भवति ॥ २ ॥

सम्पूर्ण संसारके जन-समूहके चरित्रका साक्षात्कार करनेवाली उस ( सरस्वती देवी ) ने उन ( नलाकृतिधारी पांच वीरों ) में स्वर्गाधीश ( इन्द्र ) को लक्षितकर वैसा कहा अर्थात् वर्णन किया, जिससे इन्द्र कहे गये अर्थात् इन्द्रका ज्ञान हो गया और उसकी नलके शरीर ( धारण करने ) का कपट प्रकट नहीं हुआ ॥ २ ॥

**ब्रूमः किमस्य वरवर्णिनि ! वीरसेनोद्भूतिं द्विषद्बलविजित्वरपौरुषस्य ? ।**
**सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभी रणश्रीः ॥ ३ ॥**

अथ लोकपालान् नलञ्च प्रत्येकं चतुर्भिः श्लोकैः श्लेषभङ्ग्या वर्णयति, ब्रूम इत्यादि। **वरवर्णिनि ! हे उत्तमाङ्गने ! 'उत्तमा वरवर्णिनी' इत्यमरः, द्विषतः शत्रोः, वलस्य वलासुरस्य, अन्यत्र—द्विषतो बलानां, 'वलोऽसुरे वलं सैन्ये' इति वैजयन्ती, विजित्वरपौरुषस्य जित्वरपराक्रमस्य, अस्य वरस्य, इन्द्रनलयोः सामान्यनिर्देशः, वीरसेनानां पराक्रान्तसैनिकानाम्, उद्भूतिम् उज्जृम्भणं शौर्यप्रकाशनमित्यर्थः, अन्यत्र—वीरसेनात् तदाख्यनृपात्, उद्भूतिम् उत्पत्तिं, किं ब्रूमः ? कथं वर्णयामः ? यस्य वीरस्य, रणश्रीः सेनाचरीभवतोः सैनिकायमानयोः, इभाननदानवार्योः विनायकविष्ण्वोः, वासेनाधिष्ठानेन, जनिता असुराणां भीर्यया सा तादृशी, जातेति शेषः। अन्यत्र—सेनाचरीभवतां सेनासञ्चारिणाम्, इभानां गजानाम्, आननेषु दानवारीणां मदजलानां, वासेन वासनया, सुरभिः जनिता सुगन्धिः कृता। 'ढ्लोपे पूर्वस्य दीर्घोऽणः' ॥ ३ ॥**

**इन्द्रपक्षमें**—हे वरवर्णिनि ( उत्तमे दमयन्ति ) ! शत्रुभूत वल ( नामक दैत्य ) को जीतनेवाला है पुरुषार्थ जिसका ऐसे इसके वीर सेनाओंके विशिष्ट ऐश्वर्य ( या सामर्थ्य या बाहुल्य ) का हम कैसे वर्णन करें ( वागगोचर होनेसे उसका वर्णन अशक्य है ), जिसकी सेनामें चलते ( रहने ) वाले गजानन ( गणेशजी ) तथा दानवारि ( विष्णु भगवान् ) के रहनेसे असुरोंसे जो देवताओंको भय था, उसके क्षेपण ( नष्ट होने ) से शोभा हो गयी है ( अथवा—जिसकी रणभूमिकी शोभा सेनामें चलनेवाले गणेशजी तथा विष्णु भगवान्‌के रहनेसे असुरोंको भय देनेवाली हो गयी है )

**नलपक्षमें**—हे वरवर्णिनि ! शत्रुओं की सेना ( अथवा—शारीरिक बल ) को जीतने वाला है पुरुषार्थ जिसका ऐसे इसकी 'वीरसेन' ( नामक राजा ) से उत्पत्ति का हम क्या ( अथवा-कैसे ) वर्णन करें ? ( क्यों कि जो स्वयं प्रसिद्ध नहीं रहता है, उसी का वर्णन उसके पिता आदि का नाम बतला कर किया जाता है, परन्तु इस 'नल' के स्वयं जगत्प्रसिद्ध होनेसे इसके पिता 'वीरसेन' का नाम बतलाकर वर्णन करना व्यर्थ एवं अनुचित भी है )। जिसकी युद्धभूमिश्री सेनामें चलनेवाले ( अथवा—अचल अर्थात् पर्वतवत् स्थिर रहनेवाले ) हाथियोंके मुख के दानजलके गन्धसे सुगन्ध युक्त हो गयी है। [ इस श्लोकसे लेकर 'अत्यानि–' ( १३।२७ ) के पूर्वतक इन्द्र, अग्नि, यम और वरुण का ४-४ श्लोकोंसे वर्णन पहले तथा नलका वर्णन बादमें किया गया है और वहां ( १३।२८ ) से 'किं ते तथा' (१३।३१) तक चारों श्लोकोंसे नलका वर्णन पहले तथा उन्हीं ४ श्लोकोंमें से १-१ श्लोकों से

---

१. **'यौवनोष्मवती शीते शीतस्पर्शा च याऽऽतपे ।**
**भर्तृभक्ता च या नारी सोच्यते वरवर्णिनी ॥'** इति वृद्धाः ।

क्रमशः इन्द्र, अग्नि, यम और वरुण का वर्णन बाद में किया गया है। अन्तमें 'देवः पतिः' ( १३।३४ ) इस एक श्लोकसे ही क्रमशः इन्द्र, अग्नि, यम, वरुण और नल इन पांचोंका वर्णन किया गया है ] ॥ ३ ॥

शुभ्रांशुहारगणहारिपयोधराङ्कचुम्बीन्द्रचापखचितद्युमणिप्रभाभिः ।
अन्वास्यते समिति चामरवाहिनीभिर्यात्रासु चैष वहुलाभरणार्चिताभिः॥

शुभ्रेति । एष वीरः, इन्द्रनलयोः सामान्यनिर्देशेऽपि अत्र इन्द्र इत्यर्थः, शुभ्रांशुः चन्द्रः, हरस्येमे हाराः, गणाः प्रथमाः, हरस्यापत्यं पुमान् हारिः स्कन्दः, पयोधराङ्कचुम्बिना मेघोत्सङ्गसङ्गिना, इन्द्रचापेन खचिताः मिश्रिताः, द्युमणिप्रभाः सूर्यतेजांसि यत्र तादृशीभिः, बहुरनेकः, लाभः त्रिलोकविजयादिः यस्मिन् तादृशे रणे अर्चिताभिः पूजिताभिः, अर्च पूजायां कर्मणि क्तः अमरवाहिनीभिः सुरसेनाभिः, समिति रणे च, युद्धक्षेत्रे च इत्यर्थः, यात्रासु रणयात्रासु च, अन्वास्यते अनुगम्यते उपास्यते च । अन्यत्र तु—एषः नलः, शुभ्रांशुभिः उज्ज्वलमयूखैः, हारगणैः मुक्ताहारजालैः, हारिपयोधराङ्कचुम्बिभिः मनोहरकुचोत्सङ्गसङ्गिभिः, इन्द्रचापैः तत्तुल्यविविधवर्णविशिष्टभूषणदीप्तिभिरित्यर्थः खचिता मिश्रिताः, द्युमणेः सूर्यस्य, सूर्यकान्तमणेरित्यर्थः प्रभाः यासां तादृशीभिः, वहुलैः आभरणैः अलङ्कारैः, अर्चिताभिः भूषिताभिः, चामरवाहिनीभिः चामरधारिणीभिः, समिति सभायां, यात्रासु देवतामहोत्सवेषु च, अन्वास्यते ॥ ४ ॥

इन्द्रपक्ष में—युद्धमें तथा यात्राओं ( विलासयात्राओं, या दण्डयात्राओं ) में चन्द्रमा, शिवजीके गण ( प्रमथ आदि ग्यारह, या नन्दी आदि ), शिव-पुत्र ( स्कन्द या गणेश जी ) तथा मेघके ( स्वामी होनेसे ) मध्यवर्ती जो इन्द्र उनके धनुषसे खचित (मिश्रित या सम्बद्ध) सूर्य कान्तिवाली तथा बहुत लाभवाले युद्धमें पूजित ( अथवा—दैत्य-विजय करनेसे अधिक कान्तिसे पूजित ) देवसेना इसके पीछे चलती है। ( अथवा—युद्धमें·······शिवजीके गण का हरण करने ( अपने साथ ले चलने ) वाले अर्थात् शिवजीके गणसे युक्त जो मेघ······। अथवा—युद्धमें·····शिवजीके गणसे मनोहर मेघके मध्यगत इन्द्र धनुषसे खचित······। अथवा—उक्त प्रकारके इन्द्रधनुषसे आकाशमें वृद्धिङ्गत सूर्यकान्तिवाली······। अथवा—युद्ध में चन्द्र आदि तथा इन्द्रधनुषसे आकाशमें वृद्धिङ्गत······ )।

नलपक्षमें—सभामें तथा उत्सव-सम्बन्धिनी यात्राओंमें शुभ कान्तिवाले मुक्ताहारसे सुन्दर वक्षःस्थलपर इन्द्रधनुषखचित सूर्य प्रभाके समान प्रभावाली तथा बहुत आभरणोंसे अलङ्कृत चामर धारिणी अङ्गनाएँ इसकी सेवा करती हैं ॥ ४ ॥

भूमीभृतः समिति जिष्णुमपव्यपायं जानीहि न त्वमघवन्तममुं कथञ्चित्
गुप्तं घटप्रतिभटस्तनि ! बाहुनेत्रं नालोकसेऽतिशयमद्भुतमेतदीयम् ॥

भूमीति । घटप्रतिभटस्तनि ! घटस्य प्रतिभटौ प्रतिस्पर्द्धिनौ, स्तनौ यस्यास्तथा-

भूते, हे घटप्रमितकुचे ! समिति संयति, भूमीभृतः पर्वतान्, जिष्णुं जेतारम् 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया अविद्यमानः पवेः वज्रस्य, अपायो यस्य तम् अपव्यपायं नित्यवज्रहस्तम्, अमुं वीरं, कथञ्चित् अपि अमघवन्तं मघवत इन्द्रादन्यं, न तु जानीहि नैव विद्धि, इन्द्रमेवामुं विद्धि इत्यर्थः। इन्द्रश्चेद् चिसहस्रं क्व गतम्? तत्राह, गुप्तं नलरूपधारणार्थमेव निगूहितम्, अतिशयम् अद्भुतम् एतदीयं व। ङ्त्रं बहुनेत्रत्वम् युवादित्वादण्-प्रत्ययःनालोकसे न पश्यसि। अन्यत्र तु—समिति भूमिभृतो राज्ञः, जिष्णुं जेतारम्, अपव्यपायम् अपगतः व्यपायः रणात् पलायनं यस्य तं रणादपलायमानम्, अमुं वीरं नलं, त्वं कथञ्चिदपि अघवन्तं पापवन्तं, न जानीहि, पुण्यश्लोकत्वादस्येति भावः। गुप्तं रक्षितम्, अक्षतम् इत्यर्थः, बहूनां नेता तस्य भावस्तं वाहुनेत्रं राजाधिराजत्वं, पूर्ववदण्-प्रत्ययः हे दमयन्ति ! नालोकसे किम्? इति काकुः। अन्यत् समानम् ॥ ५ ॥

**इन्द्रपक्ष में**—'वल' ( नामक दैत्य ) से वलवान् ( या—श्रेष्ठ वलवाले ) इसने अत्युन्नत तथा कठोर शरीरवाले और अत्यन्त दर्पयुक्त सिंहों तथा हाथियोंवाले पर्वतोंके पङ्खोंको काटकर आपत्ति रूपी समुद्रमें डूबते हुए संसार का उद्धार किया है।

**पौराणिक कथा**—पूर्वकालमें पङ्खसहित होनेसे उड़नेवाले पर्वत जहां बैठते थे, वहां का विशाल भूभाग उनके नीचे दबकर नष्ट हो जाता था, अतः देवोंकी प्रार्थनासे इन्द्रने उन-पर्वतों का पङ्ख काटकर उन्हें 'अचल' बना दिया और संसार को बचा लिया।

**नलपक्षमें**—अतिशय वलवान् ( अथवा—अधिक सेनावाले ) इसने अतुलनीय अर्थात् अनुपम श्वेत घोड़ों को मारनेवाला शरीर ( या विरोध ) है जिनका ऐसे तथा अतिशय दर्प-युक्त करोड़ों घोड़ों एवं हाथियोंको धारण करनेवाले राजाओंका पक्ष ( सहायकों ) का नाश करके ( शत्रुकृत ) आपत्ति-समुद्रमें डूबे हुए संसारका उद्धार किया है॥

**इन्द्रपक्ष में**—हे घड़ेके प्रतिद्वन्द्वी अर्थात् समान ( विशाल ) स्तनोंवाली ( दमयन्ति )! तुम संग्राममें पर्वतोंके विजयी तथा वज्रके अभावसे रहित अर्थात् सदा वज्र धारण करनेवाले इसे किसी प्रकार इन्द्रभिन्न मत जानो अर्थात् इन्द्र ही जानो। [ 'इस इन्द्रने अपने सहस्र नेत्रोंको छिपा लिया है, अतः उनके दृष्टि गोचर नहीं होनेसे इन्द्रभिन्न ( नल ) मत समझो इस वातको सरस्वती उत्तरार्द्धसे स्पष्ट करती है ] विस्तृत ( अथवा—तलहत्थीमें नहीं होने-वाले, अथवा—अत्यन्त ) आश्चर्यकारी गुप्त बहुनेत्रत्व ( अथवा—बहुनेत्र-समूह ) को नहीं देखती ( या-कथञ्चित् नहीं देखती ) हो। ( अथवा—इसके बहुत नेत्रोंवाले अतिशयको नहीं देखती हो, यह आश्चर्य है। अथवा—इसके बहुत नेत्रोंवाले आश्चर्य कारक अतिशयको किसी प्रकार नहीं देखती हो )।

**नलपक्ष में**—हे घटके प्रतिद्वन्द्वी स्तनोंवाली (दमयन्ति)! तुम युद्धमें शत्रुओंके विजयी, ( युद्धसे ) नहीं भगनेवाले इसे किसी प्रकार सदोष मत जानो। इसके सुरक्षित अर्थात् अक्षीण आश्चर्य कारक, विशिष्ट बहुनेतृत्व ( बहुतोंके नेता होनेके भाव अर्थात् राजाधिराज

भाव ) को नहीं देखती हो ? अर्थात् अवश्य ही देखती हो। ( अथवा—नहीं देखती हो यह आश्चर्य है अर्थात् अवश्य तुम्हें देखना चाहिये। अथवा—हाथके परिमाणसे अधिक, आश्चर्य कारक ( ओढ़ने के कारण ) वाहुपर स्थित सूक्ष्मतम वस्त्र को गुप्तरूप ( दूसरी वस्तु को देखनेके व्याज ) से नहीं देखती हो, उसे देखना चाहिये। अथवा—अतिशय ( हस्त परिमाणसे अधिक ) वाहुओं तथा अतिशय ( 'परस्पर' से अधिक वड़े ) नेत्रोंको नहीं······। अथवा—अत्यन्त दानशील हाथों ( तलहत्थियों ) वाले वाहुओं तथा हाथों ( तलहत्थियों ) को अतिक्रमण किये हुए अर्थात् हाथोंसे भी वड़े नेत्रों को[1]······अथवा—अनेकोंके नेताओंके समूह······ )॥ ५॥

**लेखा नितम्बिनि ! बलादिसमृद्धराज्यप्राज्योपभोगपिशुना दधते सरागम्।**
**एतस्य पाणिचरणं तदनेन पत्या सार्द्धं शचीव हरिणा मुदमुद्वहस्व ॥ ६ ॥**

लेखा इति। नितम्बिनि ! हे प्रशस्तनितम्बे ! प्रशंसायामिनिः बलादीनां बलाद्यसुराणां, यानि समृद्धानि राज्यानि तेषां प्राज्योपभोगस्य प्रभूतसुखानुभवस्य, पिशुनाः खलाः, द्वेष्टार इत्यर्थः, तदसहमानाः इति यावत्, लेखाः देवाः 'अमरा निर्जरा देवा लेखा अदितिनन्दनाः' इत्यमरः एतस्य वीरस्य, इन्द्रस्येत्यर्थः, पाणिचरणं पाणिचरणौ, प्राण्यङ्गत्वादेकवद्भावः सरागं सानुरागं, दधते शिरसा धारयन्ति, प्रणमन्तीत्यर्थः, धाञः कर्त्तरि लट् तङि बहुवचनम् तत्तस्मात्, अनेन हरिणा देवेन्द्रेण, पत्या सार्द्धं शचीव मुदम् उद्वहस्व, शच्याः सपत्नी भवेत्यर्थः; इत्येकोऽर्थः। अन्यस्तु—सरागम् आताम्रम्, एतस्य वीरस्य, नलस्येत्यर्थः पाणिचरणं कर्तृ, बलादीनि राज्याङ्गानि, 'स्वाम्यमात्यसुहृत्कोश–राष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः—' इत्यमरः तैः समृद्धस्य राज्यस्य यः प्राज्योपभोगः तस्य पिशुनाः सूचकाः, लेखाः चक्रध्वजादिरेखाः, दधते दध धारणे इति धातोर्भौवादिकाल्लट् तङ्येकवचनम् तदनेन वीरेण, नलेनेत्यर्थः, पत्या सार्द्धं हरिणा शचीव मुदम् उद्वहस्व ॥ ६ ॥

इन्द्रपक्षमें—हे विशाल नितम्बोंवाली ( दमयन्ति ) ! बल आदि ( वृत्र, नमुचि, जम्भ, पाक आदि दैत्य ) के समृद्ध ( ऐश्वर्यशाली ) राज्यके विस्तृत उपभोगके वैरी देवलोग इस ( इन्द्र ) के हाथ-पैरों ( हस्तावलम्बन देकर हाथ तथा नमस्कार करनेके लिये चरण ) को प्रेमपूर्वक धारण करते हैं, अतः इस इन्द्रके साथ इन्द्राणीके समान हर्ष प्राप्त करो अर्थात् इसके साथ विवाह करके इन्द्राणीकी सपत्नी ( सौत ) बनो।

नलपक्षमें—रक्तवर्णयुक्त इसके हाथ-पैर बल ( स्वामी-मन्त्री आदि राज्याङ्ग, अथवा-सेना ) से ऐश्वर्यशाली राज्यके अधिक अर्थात् भरपूर उपभोग करनेके सूचक रेखा (सामुद्रिक

---

१. 'बाहू अतिशयितौ वदान्यौ शयौ ययोस्तावतिशयौ। नेत्रे च शयमतिक्रान्ते ( अतिशये )। अतिशयौ च अतिशये चेति' नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम् ( पा० सू० १।२।६९ ) इति नपुंसकत्व एकत्वे चेदं व्याख्यानम्।

शास्त्रमें वर्णित कमल-मत्स्य-चक्र आदि रेखारूप चिह्न-विशेष ) को धारण करते हैं अर्थात् इसके हाथ-पैरोंमें कमल चक्र मत्स्य आदि की रेखाओंसे मालूम होता है कि यह राजा बल आदि से समृद्धिमान् राज्यका अधिक परिमाणमें भोग करेगा, इस कारण से इन्द्रके साथ इन्द्राणीके समान इसके साथ ( विवाह करके ) हर्षित होवो ॥ ६ ॥

आकर्ण्य तुल्यमखिलां सुदती लगन्ती-
माखण्डलेऽपि च नलेऽपि च वाचमेताम् ।
रूपं समानमुभयत्र विगाहमाना
श्रोत्रान्न निर्णयमवापदसौ न नेत्रात् ॥ ७ ॥

आकर्ण्येति । सुदती शोभना दन्ता यस्याः सा, अत्र दन्तस्य दत्रादेशलक्षणाभावात् 'अग्रान्त—' इत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् दत्रादेश इत्येके । सुदत्यादिशब्दानां स्त्र्यभिधायितया योगरूढत्वात् 'स्त्रियां संज्ञायाम्' इति विकल्पात् दत्रादेश इति केचित् । एतदेवाभिप्रेत्य 'सुदत्यादयः प्रतिविधेयाः' इत्याह वामनः । उगितश्चेति ङीप् असौ भैमी, आखण्डलेऽपि च इन्द्रेऽपि च, नलेऽपि च, तुल्यम् अविशेषेण, लगन्तीं सम्बध्नतीम्, एताम् अखिलां वाचम् आकर्ण्य उभयत्र इन्द्रनलयोः, समानं निर्विशेषं, रूपम् आकारं, विगाहमाना अग्रे दर्शं दर्शम् आलोचयन्ती, श्रोत्रात् श्रवणेन्द्रियात्, निर्णयं न अवापत् सरस्वतीकृतवर्णनाया व्यक्तिविशेषाबोधकत्वादयम् इन्द्रो नलो वेति निश्चयं न लेभे । आप्नोतेः लुङि ऌदित्वात् 'पुषादिद्युत—' इत्यादिना च्लेरङादेशः नेत्रात् चक्षुरिन्द्रियाच्च, न निर्णयमवापत् इन्द्रनलयोः समानाकारतया पुनः पुनर्दृष्ट्वाऽपि न निश्चेतुं शशाकेत्यर्थः ॥ ७ ॥

उस सुन्दर दांतोंवाली ( दमयन्ती ) ने इन्द्र तथा नलमें समान रूपसे लगती ( घटती ) हुई इस बात ( सरस्वतीकृत वर्णन ) को सुनकर दोनों ( नलरूप धारी इन्द्र तथा वास्तविक नल ) में समान रूप को देखती हुई ( क्रमशः ) कान तथा नेत्र से ( कानसे सरस्वतीकृत वर्णन सुनकर तथा नेत्रसे रूप देखकर वर्णन तथा रूप-दोनोंके समान होनेके कारण ) निर्णय को नहीं प्राप्त किया अर्थात् 'यह इन्द्र हैं या नल ?' यह निश्चय नहीं कर सकी ॥७॥

शक्रः किमेष निषधाधिपतिः स वेति ? दोलायमानमनसं परिभाव्य भैमीम् ।
निर्दिश्य तत्र पवनस्य सखायमस्यां भूयोऽसृजद्भगवती वचसां स्रजं सा ॥८॥

शक्र इति । अथ सा भगवती सरस्वती, भैमीम् एष वीरः, शक्रः किम् ? स स्वप्राणनाथः, निषधाधिपतिः नलः, वेति दोलायमानमनसं देव्याः श्लेषोक्त्या आकारसाम्याच्च सन्दिहानचित्तां, परिभाव्य समवेक्ष्य, तत्र पञ्चवीरमध्ये, पवनस्य सखायम् अग्निं, निर्दिश्य हस्तेन प्रदर्श्य, अस्यां भैम्यां विषये, भूयो वचसां स्रजं वाक्यपरम्पराम्, असृजत् जगादेत्यर्थः ॥ ८ ॥

( यह इन्द्र है क्या ? अथवा वह ( दूतरूपमें पूर्वकालमें दृष्ट ) नैषधराज नल है ?' इस

प्रकार दोलायमान ( सन्देह युक्त ) चित्तवाली दमयन्ती को विचारकर उस भगवती ( सरस्वती देवी ) ने वायुके मित्र अर्थात् अग्निको सङ्केत कर इस ( दमयन्ती ) से वचनमालाकी सृष्टि की अर्थात् बोली ॥ ८ ॥

**एष प्रतापनिधिरुद्गतिमान् सदाऽयं किं नाम नार्जितमनेन धनञ्जयेन ? ।**
**हेम प्रभूतमधिगच्छ शुचेरमुष्मान्नास्त्येव[1] कस्यचन भास्वररूपसम्पत् ॥९॥**

एष इति । एष वीरः, प्रतापस्य तेजसः, निधिः, अयं सदा उद्गतिमान् ऊर्ध्वज्वलनवान्, धनानि विचित्रवस्तूनि जयतीति धनञ्जयो धनञ्जयसंज्ञकः पार्थः, अर्जुनः इति यावत्, 'संज्ञायां भृतॄवृजि—' इत्यादिना खचि मुमागमः तेन कर्त्रा, अनेन अग्निना कारणेन, किं नाम किं किल, नार्जितम् ? न लब्धम् ? खाण्डवदहनकाले सन्तुष्टस्याग्नेः सकाशात् रथाक्षयतूणगाण्डीवादिकं प्राप्य पार्थेन विजित्य सर्वञ्च उपलब्धमेवेत्यर्थः; केचित्तु—धनञ्जयेन अग्निना, 'धनञ्जयः सर्पभेदे ककुभे देहमारुते । पार्थेऽग्नौ' इति मेदिनी, अनेन कर्त्रा, किं नाम अग्निर्वैश्वानरो वह्निरित्यादिकं किं नामधेयमिति व्याचक्षते; हेम सुवर्णं, शुचेः शुचिनामकात्, अमुष्मात् अग्नेः, 'शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति मेदिनी, प्रभूतम् उद्भूतम्, अधिगच्छ विद्धि; 'अग्नेरपत्यं सुवर्णम्' इति स्मरणादिति भावः । भास्वररूपस्य रूपान्तरप्रकाशकरूपस्य, सम्पत् समृद्धिः, कस्यचन इतोऽन्यस्य कस्यचिदपि, नास्त्येव । अन्यत्र तु—एषः प्रतापस्य कोषदण्डजतेजोविशेषस्य, निधिः, 'स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्' इत्यमरः, अयं नलः, सदा उद्गतिमान् उदयवान्, नित्याभ्युदयशील इत्यर्थः; अनेन कर्त्रा, जयेन करणेन, किं नाम धनं नार्जितम् ? जयेनैव सर्वं सम्पादितम् इत्यर्थः, 'क्षत्रियस्य विजितम्' इति स्मरणादिति भावः; शुचेः पवित्रात्, अमुष्मात् नलात् प्रभूतं प्राज्यं, हेम सुवर्णम्, अधिगच्छ प्राप्नुहि, एतत्परिग्रहात् आढ्या भवेत्यर्थः; भाः कान्तिः, स्वरः कण्ठध्वनिः, रूपं सौन्दर्यं, तेषां सम्पत् कस्यचन इतोऽन्यस्य कस्यापि, नास्त्येव ॥ ९ ॥

अग्निपक्षमें—यह प्रताप ( तेज या उष्णता ) के निधि, सदा ऊर्ध्व गमनशील अर्थात् ऊपरकी ओर जलनेवाला है । अर्जुनने इससे किस धनको नहीं पाया अर्थात् खाण्डववनमें अग्निकी रक्षा करके अर्जुनने सन्तुष्ट इस अग्निसे रथ, अक्षय तरकस और गाण्डीव आदि बहुत धनको पाया है । ( अथवा—इस धनञ्जय अर्थात् अग्निने किस नाम ( अग्नि, वैश्वानर, वह्नि,……संज्ञा ) को नहीं पाया है ? अर्थात् बहुतसे नामोंको पाया है । अथवा—इसने क्या नहीं पाया ? अर्थात् सब कुछ पाया है । अथवा—'धनञ्जय' इस सार्थक नामसे इसने किस नामको नहीं पाया ? अर्थात सब नामों को पाया है ) 'शुचि' ( संज्ञक ) इससे सुवर्ण की उत्पत्ति जानो ( अथवा—'शुचि' अर्थात् निर्दोष इससे ( विवाह करके ) अधिक परि-

1. 'नास्त्वेव' इति पाठान्तरम् ।

शास्त्रमें वर्णित कमल-मत्स्य-चक्र आदि रेखारूप चिह्न-विशेष ) को धारण करते हैं अर्थात् इसके हाथ-पैरोंमें कमल चक्र मत्स्य आदि की रेखाओंसे मालूम होता है कि यह राजा बल आदि से समृद्धिमान् राज्यका अधिक परिमाणमें भोग करेगा, इस कारण से इन्द्रके साथ इन्द्राणीके समान इसके साथ ( विवाह करके ) हर्षित होवो ॥ ६ ॥

आकर्ण्य तुल्यमखिलां सुदती लगन्ती-
माखण्डलेऽपि च नलेऽपि च वाचमेताम् ।
रूपं समानमुभयत्र विगाहमाना
श्रोत्रान्न निर्णयमवापदसौ न नेत्रात् ॥ ७ ॥

आकर्ण्येति । सुदती शोभना दन्ता यस्याः सा, अत्र दन्तस्य दत्रादेशलक्षणाभावात् 'अग्रान्त—' इत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् दत्रादेश इत्येके । सुदत्यादिशब्दानां स्त्र्यभिधायितया योगरूढत्वात् 'स्त्रियांसंज्ञायाम्' इति विकल्पात् दत्रादेश इति केचित् । एतदेवाभिप्रेत्य 'सुदत्यादयः प्रतिविधेयाः' इत्याह वामनः । उगितश्चेति ङीप् असौ भैमी, आखण्डलेऽपि च इन्द्रेऽपि च, नलेऽपि च, तुल्यम् अविशेषेण, लगन्तीं सम्बध्नतीम्, एताम् अखिलां वाचम् आकर्ण्य उभयत्र इन्द्रनलयोः, समानं निर्विशेषं, रूपम् आकारं, विगाहमाना अग्रे दर्शं दर्शम् आलोचयन्ती, श्रोत्रात् श्रवणेन्द्रियात्, निर्णयं न अवापत् सरस्वतीकृतवर्णनाया व्यक्तिविशेषाबोधकत्वादयम् इन्द्रो नलो वेति निश्चयं न लेभे । आप्नोतेः लुङि लृदित्वात् 'पुषादिद्युत—' इत्यादिना च्लेरङादेशः नेत्रात् चक्षुरिन्द्रियाच्च, न निर्णयमवापत् इन्द्रनलयोः समानाकारतया पुनः पुनर्दृष्ट्वाऽपि न निश्चेतुं शशाकेत्यर्थः ॥ ७ ॥

उस सुन्दर दाँतोंवाली ( दमयन्ती ) ने इन्द्र तथा नलमें समान रूपसे लगती ( घटती ) हुई इस बात ( सरस्वतीकृत वर्णन ) को सुनकर दोनों ( नलरूप धारी इन्द्र तथा वास्तविक नल ) में समान रूप को देखती हुई ( क्रमशः ) कान तथा नेत्र से ( कानसे सरस्वतीकृत वर्णन सुनकर तथा नेत्रसे रूप देखकर वर्णन तथा रूप-दोनोंके समान होनेके कारण ) निर्णय को नहीं प्राप्त किया अर्थात् 'यह इन्द्र हैं या नल ?' यह निश्चय नहीं कर सकी ॥७॥

शक्रः किमेष निषधाधिपतिःस वेति ? दोलायमानमनसं परिभाव्य भैमीम् ।
निर्दिश्य तत्र पवनस्य सखायमस्यां भूयोऽसृजद्भगवती वचसांस्रजं सा ॥८॥

शक्र इति । अथ सा भगवती सरस्वती, भैमीम् एष वीरः, शक्रः किम् ? स स्वप्राणनाथः, निषधाधिपतिः नलः, वेति दोलायमानमनसं देव्याः श्लेषोक्त्या आकारसाम्याच्च सन्दिहानचित्तां, परिभाव्य समवेक्ष्य, तत्र पञ्चवीरमध्ये, पवनस्य सखायम् अग्निं, निर्दिश्य हस्तेन प्रदर्श्य, अस्यां भैम्यां विषये, भूयो वचसां स्रजं वाक्यपरम्पराम्, असृजत् जगादेत्यर्थः ॥ ८ ॥

( यह इन्द्र है क्या ? अथवा वह ( दूतरूपमें पूर्वकालमें दृष्ट ) नैषधराज नल है ?' इस

प्रकार दोलायमान ( सन्देह युक्त ) चित्तवाली दमयन्ती को विचारकर उस भगवती ( सरस्वती देवी ) ने वायुके मित्र अर्थात् अग्निको सङ्केत कर इस ( दमयन्ती ) से वचनमालाकी सृष्टि की अर्थात् बोली ॥ ८ ॥

**एष प्रतापनिधिरुद्गतिमान् सदाऽयं किं नाम नाऽर्जितमनेन धनञ्जयेन ? ।**
**हेम प्रभूतमधिगच्छ शुचेरमुष्मान्नास्त्येव कस्यचन भास्वररूपसम्पत् ॥९॥**

एष इति । एष वीरः, प्रतापस्य तेजसः, निधिः, अयं सदा उद्गतिमान् ऊर्ध्वज्वलनवान्, धनानि विचित्रवस्तूनि जयतीति धनञ्जयो धनञ्जयसंज्ञकः पार्थः, अर्जुनः इति यावत्, 'संज्ञायां भृतॄवृजि—' इत्यादिना खचि मुमागमः तेन कर्त्रा, अनेन अग्निना कारणेन, किं नाम किं किल, नार्जितम् ? न लब्धम् ? खाण्डवदहनकाले सन्तुष्टस्याग्नेः सकाशात् रथाक्षयतूणगाण्डीवादिकं प्राप्य पार्थेन विजित्य सर्वञ्च उपलब्धमेवेत्यर्थः; केचित्तु—धनञ्जयेन अग्निना, 'धनञ्जयः सर्पभेदे ककुभे देहमारुते । पार्थेऽग्नौ' इति मेदिनी, अनेन कर्त्रा, किं नाम अग्निर्वैश्वानरो वह्निरित्यादिकं किं नामधेयमिति व्याचक्षते; हेम सुवर्णं, शुचेः शुचिनामकात्, अमुष्मात् अग्नेः, 'शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति मेदिनी, प्रभूतम् उद्भूतम्, अधिगच्छ विद्धि; 'अग्नेरपत्यं सुवर्णम्' इति स्मरणादिति भावः । भास्वररूपस्य रूपान्तरप्रकाशकरूपस्य, सम्पत् समृद्धिः, कस्यचन इतोऽन्यस्य कस्यचिदपि, नास्त्येव । अन्यत्र तु—एषः प्रतापस्य कोषदण्डजतेजोविशेषस्य, निधिः, 'स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्' इत्यमरः, अयं नलः, सदा उद्गतिमान् उदयवान्, नित्याभ्युदयशील इत्यर्थः; अनेन कर्त्रा, जयेन करणेन, किं नाम धनं नार्जितम् ? जयेनैव सर्वं सम्पादितम् इत्यर्थः, 'क्षत्रियस्य विजितम्' इति स्मरणादिति भावः; शुचेः पवित्रात्, अमुष्मात् नलात् प्रभूतं प्राज्यं, हेम सुवर्णम्, अधिगच्छ प्राप्नुहि, एतत्परिग्रहात् आढ्या भवेत्यर्थः; भाः कान्तिः, स्वरः कण्ठध्वनिः, रूपं सौन्दर्यं, तेषां सम्पत् कस्यचन इतोऽन्यस्य कस्यापि, नास्त्येव ॥ ९ ॥

अग्निपक्षमें—यह प्रताप ( तेज या उष्णता ) के निधि, सदा ऊर्ध्व गमनशील अर्थात् ऊपरकी ओर जलनेवाला है । अर्जुनने इससे किस धनको नहीं पाया अर्थात् खाण्डववनमें अग्निकी रक्षा करके अर्जुनने सन्तुष्ट इस अग्निसे रथ, अक्षय तरकस और गाण्डीव आदि बहुत धनको पाया है । ( अथवा—इस धनञ्जय अर्थात् अग्निने किस नाम ( अग्नि, वैश्वानर, वह्नि,""""संज्ञा ) को नहीं पाया है ? अर्थात् बहुतसे नामोंको पाया है । अथवा—इसने क्या नहीं पाया ? अर्थात् सब कुछ पाया है । अथवा—'धनञ्जय' इस सार्थक नामसे इसने किस नामको नहीं पाया ? अर्थात सब नामों को पाया है ) 'शुचि' ( संज्ञक ) इससे सुवर्ण की उत्पत्ति जानो ( अथवा—'शुचि' अर्थात् निर्दोष इससे ( विवाह करके ) अधिक परि-

---

१. 'नास्त्वेव' इति पाठान्तरम् ।

माण में सोने को प्राप्त करो ) चमकीले रूपकी सम्पत्ति अर्थात् शोभा किसी ( दूसरे ) की ( इसके समान ) नहीं ही है ( पाठा०—इसके समान चमकीली रूप सम्पत्ति किसी की नहीं है ) ।

**नलपक्षमें**—प्रताप ( कोप-दण्ड आदिसे उत्पन्न तेजो-विशेष ) का निधि तथा सदा उन्नतिशील है, इसने जय ( शत्रु विजय ) से किस धनको ( अथवा—सर्वदा शुभकारक विधिवाले किस धनको ) नहीं पाया ? अर्थात् सब धनको पाया । पवित्र अर्थात् स्वधर्मतत्पर इससे ( विवाह करके ) पर्याप्त सोना प्राप्त करो अर्थात् इससे विवाह कर बहुत धनवती हो जावो । कान्ति, कण्ठस्वर और रूपकी शोभा ( इसके समान ) किसी की नहीं ही है अर्थात् इसके समान उपस्थित कोई राजा तेजस्वी, मधुर कण्ठस्वर वाला तथा रूपवान् नहीं है । ( अथवा—चमकीले रूप की शोभा······ ) ॥ ९ ॥

**अत्यर्थहेतिपटुताकवलीभवत्तत्तत्पार्थिवाधिकरणप्रभवस्य[2] भूतिः ।**
**अप्यङ्गरागजननाय महेश्वरस्य सञ्जायते रुचिरकर्णि ! तपस्विनोऽपि ॥१०॥**

**अत्यर्थेति । रुचिरकर्णि ! हे कमनीयकर्णे ! 'नासिकोदर—' इत्यादिना विकल्पात् ङीप्, अत्यर्थया अतिमात्रया, हेतिपटुतया ज्वालापाटवेन, कवलीभवत् ग्रासीभवत्, इन्धनीभवदिति यावत्, तत्तत् पार्थिवं तृणकाष्ठादिपार्थिवद्रव्यमेव, अधिकरणम् आश्रयः, तदेव प्रभवत्यस्मादिति प्रभवः कारणं यस्य एवम्भूतस्य अग्नेः सम्बन्धिनी, भूतिर्भस्मापि, तपस्विनो महेश्वरस्याप्यङ्गरागजननाय अनुलेपसम्पादनाय, सञ्जायते भवति । अन्यत्र तु—अत्यर्थं हेतिपटुता आयुधसामर्थ्यं, 'हेतिः स्यादायुधज्वाला-सूर्यतेजःसु योषिति' इति मेदिनी, तस्याः कवलीभवद्भिः तैः तैः पार्थिवै राजभिः सह, अधिको रणः स एव प्रभवः कारणं यस्य तादृशस्य, रणात् राज्यलाभेन रणस्य राज्यकारणत्वेऽपि राजकारणत्वमुपचर्यते इति बोध्यम्; नलस्येति शेषः, भूतिः विजयलब्धा सम्पत्, 'भूतिर्भस्मनि सम्पदि' इत्यमरः महेश्वरस्य महैश्वर्यशालिनोऽपि, तपस्विनः अपि निवृत्तरागस्यापि जनस्य, रागजननाय अनुरागोत्पादनाय, आकर्षणायेत्यर्थः, सञ्जायते, अङ्गेत्यामन्त्रणे ॥ १० ॥**

**अग्निपक्षमें**—हे मनोहर कानोंवाली (दमयन्ति) ! अत्यधिक ज्वाला सामर्थ्यसे (इन्धन रूप बनकर ) नष्ट होते हुए वे वे पार्थिव ( पृथ्वी-सम्बन्धी काष्ठ, कपडा, घास आदि द्रव्य ) ही आश्रय तथा उत्पत्ति-स्थान है जिसका ऐसे इस अग्निका भस्म ( पाठा०······द्रव्य रूप जो आश्रय अर्थात् आधार उससे उत्पन्न होनेवाला इस अग्नि का भस्म ) तपस्वी महादेवजीके भी अङ्गरागोत्पत्ति ( शरीरमें लेप करने ) के लिए होता है । [ जिसके निःसार भस्म को भी तपस्वी शङ्करजी भी शरीरमें लेप करते हैं, उसके अन्य सम्पत्तिके विषयमें क्या कहना है ? अर्थात् वह अवश्य ही अत्यधिक ऐश्वर्यवान् होगा । 'सुन्दर कानोंवाली' विशेषण देकर

२. '·····प्रभवाऽस्य' इति पाठान्तरम् ।

सरस्वती देवीने दमयन्ती को सङ्केत किया है कि तुम श्लेषोक्ति ज्ञानमें चतुर हो, अतः सावधान होकर समझो कि इस अग्निमें केवल भस्म ही है, अन्य कुछ सारभूत पदार्थ नहीं इस कारण इसे वरण मत कर लेना ]।

**नलपक्षमें**—हे अङ्ग ! हे सुन्दर कानोंवाली (दमयन्ति) ! अत्यधिक शस्त्रचातुर्यके कवल (ग्रास, अर्थात् शस्त्र-सामर्थ्यसे नष्ट) होते हुए इन राजाओंके साथ होनेवाला अधिक युद्ध ही है कारण जिसका ऐसे इस (नल) की सम्पत्ति अर्थात् विजयमें प्राप्त श्री अत्यन्त ऐश्वर्यवान् तथा तपस्वीके भी अर्थात् भोग-विलास करनेवाले ऐश्वर्यवान् धनिकवर्ग तथा निःस्पृह तपस्विवर्ग-दोनोंके लिये भी अनुरागोत्पादन करनेवाली होती है अर्थात् भोग-विलासयुक्त ऐश्वर्यवान् धनिक तथा निःस्पृह तपस्वी-ये दोनों ही इस (नल) की सम्पत्तिके लिए आकृष्ट होते (उसे चाहते) हैं ॥ १० ॥

**एतन्मुखा त्रिबुधसंसदसावशेषा माध्यस्थ्यमस्य यमतोऽपि महेन्द्रतोऽपि ।**
**एनं महस्विनमुपैहि सदारुणोच्चैर्येनामुना पितृमुखि ! ध्रियते करश्रीः ॥११॥**

**एतदिति । पितुर्मुखमिव मुखं यस्याः तस्याः सम्बुद्धिः हे पितृमुखि !, 'धन्या पितृमुखी कन्या धन्यो मातृमुखः सुतः' इति सामुद्रिकवचनात्, अशेषा समग्रा, असौ विबुधसंसत् देवसभा, एष अग्निः एव मुखमास्यं यस्याः सा एतन्मुखा, 'अग्निमुखा वै देवाः' इति श्रुतेः, वह्निमुखः क्रतुभुजः' इत्यभिधानाच्च अस्य अग्नेः, यमतो महेन्द्रतोऽपि यमस्य महेन्द्रस्य च, षष्ठ्यर्थे सार्वविभक्तिकस्तसिल्, माध्यस्थ्यं मध्यस्थानवर्त्तित्वं, मध्यदिग्वर्त्तित्वमित्यर्थः, अग्निकोणस्थितत्वमिति यावत्, अग्निकोणाधिपस्याग्नेः दक्षिणपूर्वदिगधिपयोः यमेन्द्रयोः मध्यवर्त्तित्वादिति भावः, महस्विनं तेजस्विनम्, एनम् उपैहि प्राप्नुहि, सदारुणा दारुसहितेन, सेन्धनेनेत्यर्थः, येनामुना अग्निना, उच्चैर्महती, करश्रीः अंशुसम्पत्, ध्रियते धार्यते । अन्यत्र तु—अशेषा असौ विबुधसंसत् विद्वत्सभा, एतन्मुखा एतत्प्रधाना, एतदेकशरणेत्यर्थः, तथा अस्य नलस्य, यमतो यमात्, महेन्द्रतो महेन्द्राच्च, पञ्चम्यास्तसिल्, माध्यस्थ्यम् औदासीन्यं, शत्रुमित्रयोः समानदण्डदानादपक्षपातित्वेन समदर्शित्वमित्यर्थः, महस्विनं तेजस्विनम् उत्सववन्तं वा, 'महस्तूत्सवतेजसोः' इत्यमरः, एनमुपैहि, सदा सर्वदा, येनामुना नलेन, अरुणा आताम्रा, उच्चैः करश्रीर्हस्तशोभा, 'बलिहस्तांशवः कराः' इत्यमरः, ध्रियते ॥ ११ ॥**

**अग्निपक्षमें**—हे पिताके समान मुखवाली (दमयन्ति) ! इस सम्पूर्ण देवसभा (देवसमूह) का यही मुख है, यम तथा इन्द्र की अपेक्षा भी इसका माध्यस्थ्य है अर्थात् दक्षिण दिक्पाल यम तथा पूर्वदिक्पाल इन्द्रके भी मध्यमें अग्नि कोण का दिक्पाल यह (अग्नि) बीचमें रहता है (अथवा—इस स्वयंवर सभामें यह (अग्नि) इन्द्र तथा यमके बीचमें बैठा है)। इस तेजस्वी को प्राप्त करो, काष्ठ अर्थात् दाह्य इन्धनके साथ जो सर्वदा लाल अधिक

किरणशोभा अर्थात् ज्वालाकान्तिको ग्रहण करता है ( इन्धनके से जिसकी सर्वदा लाल ज्वाला निकलती है ) । [ अग्निमें हवन करनेसे ही यज्ञभाग देवोंको प्राप्त होता है, अत एव यहां अग्निको ही देवोंका मुख कहा गया है ] ।

नलपक्षमें—हे पिताके तुल्य मुखवाली ( दमयन्ति ) ! यह समस्त विद्वत्सभा एतत्प्रधान है ( समवर्ती सबको दण्डित करनेवाले ) यम तथा ( समस्त देवरक्षक ) इन्द्रसे भी इसका माध्यस्थ्य है अर्थात् शासक होनेसे शत्रुरूप यम तथा पालक होनेसे मित्ररूप इन्द्र ( शत्रु एवं मित्र—दोनों ) से भी यह तटस्थ है इन दोनों—शत्रु-मित्रोंसे निरपेक्ष रहकर समस्त प्रजाका शासन तथा पक्षपात हीन होकर न्यायपूर्वक पालन करता है । तुम इस तेजस्वी अर्थात् महाप्रतापी (अथवा—उत्सववान्, तेजस्वी राजाओंमें श्रेष्ठ) इसे प्राप्त करो ( अथवा—'सु+इनम्, अर्थात् सुन्दर प्रभु, अथवा अति श्रेष्ठ इसका पूजन करो ), जो यह सर्वदा रक्त वर्ण और अत्यधिक ( अथवा—अत्यधिक रक्तवर्ण ) हस्तशोभाको धारण करता है ( अथवा—जो यह सर्वदा रक्तवर्ण हस्तशोभाको अत्यधिक धारण करता है ) । [ सामुद्रिक शास्त्रके अनुसार कन्याका पिताके समान तथा पुत्रका माताके समान मुख होना शुभ लक्षण माना गया है, अत एव यहां पर सरस्वतीने दमयन्तीको 'पितृमुखि' शब्दसे सम्बोधित किया है] ॥

**नैवाल्पमेधसि पटो रुचिमत्त्वमस्य मध्येसमिन्निवसतो रिपवस्तृणानि ? ।**
**उत्थानवानिह पराभवितुं तरस्वी शक्यः पुनर्भवति केन विरोधिनाऽयम् ? ॥ १२ ॥**

नेति । पटोर्दाहसमर्थस्य, अस्य वीरस्य अग्नेः, एधसि इन्धने, रुचिमत्त्वं दाहाभिलाषित्वं दीप्तिशालित्वं वा, अल्पं नैव अनल्पमेव इत्यर्थः; समिधां काष्ठानां मध्ये मध्येसमित्, 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः, निवसतः, अस्येति शेषः, तृणानि रिपवः विद्विषः, किम् ? इति काकुः, काष्ठानि दहतोऽस्य तृणानि न गण्यानीत्यर्थः; उत्थानवानूर्ध्वगतिमान्, तरस्वी वेगवान्, प्रबलवेगेन प्रज्वलित इत्यर्थः, अयम् अग्निः, पुनरिह सृष्टौ, विरोधिना केन अम्बुना, 'कं शिरोऽम्बुनोः' इत्यमरः, पराभवितुं शक्यो भवति किम् ? इति काकुः, नैव शक्य इत्यर्थः, दिव्यस्य अस्य अनिर्वाणत्वादिति भावः । अन्यत्र—पटोः अतिप्रगल्भस्य, वाग्मिन इत्यर्थः, अस्य नलस्य, अल्पमेधसि मन्दप्रज्ञे, 'नित्यमसिच् प्रजामेधयोः' इत्यत्र नित्यग्रहणसामर्थ्यात् 'मन्दाल्पाभ्याञ्च मेधायाः' इति वृत्तिकारवचनाच्च नञादिभ्योऽन्यत्राप्यसिच् प्रत्ययः; रुचिमत्त्वमादरः, नैव; मध्येसमित् युद्धमध्ये, 'समित्याजिसमिद्युधः' इत्यमरः, निवसतः अस्य रिपवः तृणानि तृणप्राया इत्यर्थः; उत्थानवान् पौरुषसम्पन्नः, उद्यमशीलो वा, 'उत्थानमुद्यमे तन्त्रे पौरुषे पुस्तके रणे' इति मेदिनी, तरस्वी शूरः, 'वेगि-शूरौ तरस्विनौ' इत्यमरः, अयं पुनः केन विरोधिना पराभवितुं शक्यो भवति ? न केनापीत्यर्थः । भवतीति दमयन्त्याः सम्बोधनं वा ॥ १२ ॥

अग्निपक्षमें—( दाहमें ) समर्थ इसकी काष्ठ ( इन्धन ) में कम रुचि ( दीप्ति अर्थात्

ज्वाला ) नहीं है अर्थात् काष्ठको प्राप्तकर यह अत्यधिक जलता है ( अथवा—काष्ठमें समर्थ अर्थात् इन्धन पाकर बढ़नेवाले इसकी रुचि ( ज्वाला ) कम नहीं है। समिधाओं ( काष्ठों, या प्रादेश परिमाण हवनीय काष्ठों ) के बीचमें रहते हुए तृण शत्रु हैं क्या ? अर्थात् नहीं। ( काष्ठसे जाज्वल्यमान इस ( अग्नि ) में तृण क्षणमात्रमें जल जानेसे कुछ नहीं कर सकते अर्थात् यह जिस प्रकार युद्धमें शत्रुनाश शीघ्र करता है, उसी प्रकार तृण दाह भी क्षणमात्रमें ही कर डालता है )। इस लोकमें उत्थानशील ( ऊपरकी ओर धधकते हुए ) वेगवान् इसका पराभव विरोधी ( बुझानेका इच्छुक ) कोई व्यक्ति जलसे कर सकता है क्या ? अर्थात् नहीं ( ऊपरकी ओर धधकती हुई ज्वालाके साथ बढ़ती हुई अग्निको कोई बुझानेवाला विरोधी आदमी पानीसे भी नहीं बुझा सकता। अथवा—कौन विरोधी पराभव कर सकता है अर्थात् कोई नहीं। अथवा—विरोधी पानीसे पराभव कर ( बुझा ) सकता है क्या ? अर्थात् नहीं—धधकती एवं बढ़ी हुई अग्निको पानीसे भी नहीं बुझाया जा सकता। अथवा—'काकु' (प्रश्न) पक्षका त्यागकर 'ऊपरकी ओर धधकती हुई अग्निका पराभव विरोधी ( बुझानेवाला ) व्यक्ति पानीसे कर सकता है, अर्थात् पानीसे बुझा सकता है। रहित इस पक्षमें भी उक्त अन्य अर्थोंकी कल्पना पूर्ववत् करनी चाहिये )।

**नलपक्षमें**—शब्द-अर्थको तत्काल ग्रहण करनेमें चतुर ( तीव्र बुद्धि ) इस ( नल ) की रुचि अल्पबुद्धियोंमें नहीं है। युद्धमें स्थित हुए इसके शत्रु तृण ( के तुल्य अर्थात् अकिञ्चित्कर ) हैं ( युद्धमें इसे कोई भी शत्रु नहीं जीत सकता )। उदय ( या—उन्नति ) शील वेगवान् ( या—बलवान् ) इसका पराभव यहां पर ( इस युद्धस्थलमें, या—इस संसारमें ) भला कौन विरोधी कर सकता है ? अर्थात् कोई नहीं॥ १२॥

**साधारणीं गिरमुषर्बुधनैषधाभ्यामेतां निपीय न विशेषमवाप्तवत्याः।**
**ऊचे नलोऽयमिति तं प्रति चित्तमेकं ब्रूते स्म चान्यदनलोऽयमितीदमीयम्॥**

साधारणीमिति। उषसि बुध्यते इत्युषर्बुधोऽग्निः, 'अग्निर्वैश्वानरो वह्निः शोचिष्केश उषर्बुधः' इत्यमरः। 'इगुपध—' इति कः, 'अहरादीनां पत्यादिषु वा रेफः' इति रेफादेशः, स च नैषधो नलश्च ताभ्यां, साधारणीं समानाम् 'आग्नीध्र-साधारणादञ्' इति वक्तव्यादञि 'टिड्ढाणञ्—' इत्यादिना ङीप्, एतां गिरं निपीय आकर्ण्य, विशेषं परस्परभेदकधर्मं, नावाप्तवत्याः अप्राप्तवत्याः, भैम्याः इति शेषः, एकं चित्तं दमयन्तीसम्बन्धिनी एका बुद्धिः, तं पुरोवर्त्तिपुरुषं प्रति, अयं नल इत्यूचे; इदमीयं दमयन्ती सम्बन्धि, अन्यदपरं चित्तम्, अयमनलोऽग्निः, इति ब्रूते स्म; अनलनलकोटिद्वयावलम्बी संशयो न निवृत्त इत्यर्थः॥ १३॥

अग्नि तथा नलके साथ समान ( एकार्थक ) इस वचनको सुनकर विशेष ( निर्णय ) को नहीं पाती हुई अर्थात् 'यह अग्नि है या नल' यह निश्चय नहीं करती हुई ( दमयन्तीका ) एक मन उस ( सामने स्थित पुरुष ) के प्रति 'यह नल है' ऐसा कहा तथा दूसरा चित्त

'यह अनल अर्थात् अग्नि ( पक्षा०—नलभिन्न ) है ऐसा कहा। [ दमयन्तीने सरस्वती कृत वर्णन को सुनकर अग्नि तथा नल—दोनोंमें समानार्थक वर्णन होनेसे उस पुरःस्थित पुरुषको पहले नल समझा और बादमें नलभिन्न ( या—अग्नि ) समझा अर्थात् कुछ निर्णय नहीं कर सकी कि यह नल है या अग्नि ? ] ॥ १३ ॥

**एतादृशीमथ विलोक्य सरस्वती तां सन्देहचित्रभयचित्रितचित्तवृत्तिम्[1] ।**
**देवस्य सूनुमरविन्दविकासिरश्मेरुद्दिश्य दिक्पतिमुदीरयितुं प्रचक्रे ॥ १४ ॥**

**एतादृशीमिति । अथ सरस्वती तां भैमीम्, एतादृशीम् ईदृशीं, सन्देहः प्रागुक्तः, चित्रं देव्यास्तादृशश्लिष्टवाक्यश्रवणात् उभयोः समानरूपदर्शनाच्च आश्चर्यं, भयं नलनिश्चयाभावेन नलप्राप्तौ नैराश्यात् त्रासः, एतैर्भावैश्चित्रिता विस्मिता, विस्मयविमूढा इत्यर्थः, चित्तवृत्तिर्यस्यास्तादृशीं, विलोक्य अरविन्दानि विकासयन्ति ये तादृशा रश्मयो यस्य तस्य पद्मिनीमुद्राभञ्जनस्य, देवस्य सूर्यस्य, सूनुं पुत्रं, दिक्पतिं यमम्, उद्दिश्य उदीरयितुं व्याहर्त्तुं, प्रचक्रे प्रस्तावं चक्रे, प्रचक्रमे इत्यर्थः ॥ १४ ॥**

सन्देह ( यह पुरःस्थित पुरुष नल है या अग्नि ? इस प्रकारकी शङ्का ), आश्चर्य ( दोनों के समान रूप होनेसे आश्चर्य ) तथा भय ( नल-प्राप्तिकी आशा नहीं होनेसे भय ) से चित्रित चित्तवृत्तिवाली उसे ( दमयन्तीको ) देखकर सरस्वती देवीने कमलोंको विकसित करनेवाले किरणवाले देव अर्थात् सूर्यके पुत्र दिक्पाल ( दक्षिण दिशाके पति ) यमको लक्ष्य कर कहना आरम्भ किया ॥ १४ ॥

**दण्डं बिभर्त्त्ययमहो! जगतस्ततः स्यात् कम्पाकुलस्य सकलस्य न पङ्कपातः ।**
**स्वर्वैद्ययोरपि मदव्ययदायिनीभिरेतस्य रुग्भिरमरः खलु कश्चिदस्ति ? ॥**

**दण्डमिति । अयं यमः, दण्डं दुष्टदमनं स्वकीयास्त्रं, आलम्बनयष्टिञ्च, बिभर्त्ति, ततो दण्डधारणात्, कम्पाकुलस्य सकलस्य जगतः पङ्के पापे, कर्दमे च, पातो न स्यात् अहो ! अन्यस्य दण्डधारणादन्यस्य अपतनमित्याश्चर्यम् । अन्यत्र—नलस्य यथापराधदण्डनाज्जगतो निष्पापत्वमित्यर्थः; 'गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः' इति स्मरणात्; तथा, 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इत्युभयोर्दण्डधारणस्मरणादिति भावः । किञ्च, स्वर्वैद्ययोः अश्विनीकुमारयोरपि, मदव्ययदायिनीभिः अहङ्कारहारिणीभिः, कर्मजरोगाणां चिकित्सासाध्यत्वाभावात् तयोरप्यसाध्याभिरित्यर्थः, अन्यत्र—सौन्दर्येण प्रसिद्धयोस्तयोः सौन्दर्यगर्वहारिणीभिः, एतस्य यमस्य नलस्य च, रुग्भिः कर्मविपाकानुसारेण एतत्सम्पादितरोगैः, 'स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः' इत्यमरः । रुजेर्धातोः क्विप्, अन्यत्र—शरीरशोभाभिः, दैहिकसौन्दर्येणेत्यर्थः, 'रुक् स्त्री शोभाद्युतीच्छासु'**

---

1. 'चित्तभित्तिम्' इति पाठान्तरम् ।

इति मेदिनी, न म्रियते मृतप्रायो न भवतीत्यमरः, पचाद्यच्, कश्चिदस्ति खलु? अपि तु न कोऽपि अमरोऽस्ति, सर्वे एव मृतप्राया भवन्तीत्यर्थः, अन्यत्र च—तादृशशरीर-कान्तिभिरुपलक्षितः, अमरः देवः, कश्चिदस्ति खलु? अपि तु न कोऽप्यस्ति, देवेषु सुन्दरतमयोस्तयोर्जितत्वादिति भावः ॥ १५ ॥

**यमपक्षमें**—यह (पुरःस्थित पुरुष 'यम') दण्ड (अपना शस्त्र-विशेष, पक्षा०—छड़ी) धारण करता है, उस (के भय) से कम्पनाकुलित (व्याकुल होकर कम्पायमान) सम्पूर्ण संसारका पङ्कमें पतन नहीं होता अर्थात् इसके दण्डके भयसे कम्पमान संसार पापमें प्रवृत्त नहीं होता (पक्षा०—कीचड़में नहीं गिरता) आश्चर्य है [जो छड़ी ग्रहण करता है वही व्यक्ति कीचड़में गिरने से बचता है; किन्तु इसके छड़ी ग्रहण करनेसे दूसरेका कीचड़में नहीं गिरना आश्चर्यजनक है]। स्वर्गके वैद्यद्वय अर्थात् अश्विनीकुमारोंके भी (चिकित्सा-सम्बन्धी, पक्षा०—सौन्दर्यसम्बन्धी) मदको नष्ट करनेवाले इसके रोगोंसे कोई (व्यक्ति) अमर (मरणसे बचा हुआ) है? (पक्षा०—इसकी कान्तिके समान कोई देवता हैं?) अर्थात् नहीं। [अन्यान्य रोगों की चिकित्सा तो वैद्यमात्र करके रोगीको रोगसे बचा लेते हैं, किन्तु यमके रोग अर्थात् मृत्युसे स्वर्गवैद्य अश्विनीकुमार भी किसी व्यक्तिको नहीं बचा सकते फिर अन्य वैद्योंकी बात ही क्या है?]।

**नलपक्षमें**—यह (पुरःस्थित 'नल') दण्ड धारण करता है अर्थात् अपराधीको दण्डित करता है (अथवा—सेना धारण करता है), उससे कम्पाकुल सम्पूर्ण संसार पापकर्ममें नहीं गिरता अर्थात् 'यह नल अपराध करनेपर हमें दण्डित करेगा' इस भयसे कांपता हुआ संसारमें कोई भी व्यक्ति या शत्रु अपराध नहीं करता। अश्विनीकुमारोंके भी (सौन्दर्य) मदको नष्ट करनेवाली इसकी (शरीर) शोभाके समान कोई देव भी है क्या? अर्थात् कोई देव भी इस नलके समान सुन्दर नहीं है [यहां तक कि देवोंमें सर्वसुन्दर अश्विनीकुमारोंका भी सौन्दर्यमद इसकी शरीर-कान्तिको देखकर नष्ट हो जाती है, फिर मनुष्योंमें इसके समान किसीका सुन्दर होना कैसे सम्भव है?] ॥ १५ ॥

मित्रप्रियोपजननं प्रति हेतुरस्य संज्ञा श्रुतासुहृदयं न जनस्य कस्य ? ।
छायेदृगस्य च न कुत्रचिदध्यगामि[1] तप्तं यमेन नियमेन तपोऽमुनैव ॥१६॥

मित्रेति। संज्ञा संज्ञादेवीति, श्रुता प्रसिद्धा, मित्रप्रिया अर्कदयिता, अस्य यमस्य, उपजननम् उत्पत्ति, प्रति हेतुः कारणं, जननीत्यर्थः; अयं यमः, कस्य जनस्य असून् हरतीति असुहृत् प्राणहरः, न? सर्वस्यैवासुहृत् सर्वान्तकत्वादिति भावः; छाया च छायाख्या मित्रप्रिया च, अस्य यमस्य, ईदृक् ईदृशी, उत्पत्तिहेतुर्जननीत्यर्थः, इति कुत्रचित् क्वापि शास्त्रे, नाध्यगामि न अधिगता, सूर्यस्य द्वे भार्ये संज्ञा छाया च, तत्र संज्ञैव अस्य जननीति श्रूयते न छायेत्यर्थः; यमेन यमाख्येन, अमुना

1. 'दध्यगायि' इति पाठान्तरम्।

नियमेनैव इन्द्रियनिग्रहेणैव, तपस्तप्तम् । अन्यत्र तु—अस्य वीरस्य, संज्ञा हस्तादिचेष्टा, नलेति नाम वा, 'संज्ञाऽर्कभार्या चैतन्यं हस्ताद्यैः सूचनाभिधा' इति वैजयन्ती, मित्राणां सुहृदां, 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः, प्रियोपजननम् इष्टसम्पादनं, प्रति हेतुः श्रुता; अयं कस्य जनस्य सुहृत् सखा, न ? अपि तु सर्वस्यैव सुहृत्; अस्येदृक् छाया कान्तिः, 'छाया सूर्यप्रिया कान्तिः' इत्यमरः, कुत्रचित् क्वापि पुरुषान्तरे, न अध्यगामि न अधिगता, अमुना नलेन, यमेन नियमेन च यमनियमाभ्यां, तपस्तप्तमेव, अन्यथा कथमयं महिमेति भावः ॥ १६ ॥

**यमपक्षमें**—'संज्ञा' नामसे प्रसिद्ध सूर्यकी प्रिया ( स्त्री ) इसकी उत्पत्तिके प्रति कारण है अर्थात् सूर्यप्रिया 'संज्ञा' देवी इसकी माता है। यह 'यम' किसके प्राणोंको हरण नहीं करता ? अर्थात् सबके प्राणोंको हरण करता है। 'छाया' नामसे प्रसिद्ध सूर्यप्रिया कहीं ( किसी शास्त्रमें ) भी ऐसी ( इसकी उत्पत्तिका कारण अर्थात् माता ) नहीं सुनी गयी है अर्थात् सूर्यकी 'संज्ञा' तथा 'छाया' नामक दो पत्नियोंमें 'संज्ञा' ही इसकी माता कही गयी हैं 'छाया' नहीं। इन्द्रिय-निग्रहसे इसीने तप किया है अत एव इसका 'धर्मराज' नाम सार्थक है। [ यहां पर 'यम' को सरस्वती देवीने सबका प्राणहरण करनेवाला कह कर उसे वरण करनेके अयोग्य होनेका सङ्केत दमयन्तीसे किया है ]।

**नलपक्षमें**—सुना गया इसका नाम मित्रोंके प्रियोत्पत्तिके प्रति कारण है ( अथवा—इसका नाम मित्रोंके प्रियोत्पत्तिके प्रति कारण सुना गया है ) अर्थात् इस 'नल' के नाम सुननेसे मित्रोंका प्रिय होता है। यह किस आदमीका मित्र नहीं है ? अर्थात् सर्वप्रियकारक होनेसे यह सभीका मित्र है। इसकी ऐसी छाया ( शरीरशोभा अथवा—शासन-प्रणाली या दयादाक्षिण्यादि गुण ) कहीं ( किसी व्यक्तिमें ) भी नहीं मिलती, इसीने यम ( ब्रह्मचर्यादि ) तथा नियम ( नक्तव्रतोपवासादि ) के द्वारा ( तुम्हारी प्राप्तिके लिए ) तप किया है, अत एव तुम्हें इसका वरण करना चाहिये ( अथवा…के द्वारा तप किया है, अतः इसकी इतनी बड़ी महिमा है ) ॥ १६ ॥

किञ्च प्रभावनमिताखिलराजतेजा
देवः पिताऽम्बरमणी रमणीयमूर्त्तिः ।
उत्क्रान्तिदा न कमनु प्रतिभाति शक्तिः ?
कृष्णत्वमस्य च परेषु गदान्नियोक्तुः ॥ १७ ॥

किञ्चेति । किञ्च प्रभाभिः अवनमितम् अधःकृतं, अखिलं राज्ञः चन्द्रस्य, तेजो येन सः, रमणीयमूर्त्तिः देवः अम्बरमणिः सूर्यः, 'ढ्लोपे पूर्वस्य दीर्घोऽणः' अस्य पिता; अस्य शक्तिः कासूनामायुधं, कमनु कं जनं प्रति, उत्क्रान्तिदा प्राणोत्क्रमणप्रदा, न प्रतिभाति ? अपि तु प्रतिभात्येव; परेषु अन्येषु, गदान् रोगान्, नियोक्तुः कर्मविपाकानुसारेण प्रेरयितुः, तृन्नन्तत्वात् 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि

द्वितीया अस्य कृष्णत्वं कृष्णवर्णत्वं, परपीडाजनकत्वेनास्य दुर्यशसा कृष्णत्वमित्यर्थः। अन्यत्र—देवः देवतुल्यः, अम्बरमणी सूर्यः, 'कृदिकारात्—' इति विकल्पात् ङीप्, तद्वत् रमणीयमूर्त्तिः अस्य पिता वीरसेनः, प्रभावेण प्रतापेन, नमितान्यखिलानां राज्ञां तेजांसि येन सः, 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ' इति मेदिनी, अस्य शक्तिः प्रभावमन्त्रोत्साहलक्षणं सामर्थ्यं, 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः, परेषु शत्रुषु, गदाम् आयुधविशेषं, नियोक्तुः निक्षेपयितुः, अस्य नलस्य, कृष्णत्वं विष्णुत्वं, गदाधरत्वादिति भावः। शेषं पूर्ववत् ॥ १७ ॥

**यमपक्षमें**—प्रभाव ( धूप ) से पूर्णचन्द्रके तेजको कम करनेवाले तथा रमणीय मूर्तिवाले सूर्यदेव इसके पिता हैं। इसकी शक्ति किसके प्रति अर्थात् किसका प्राणहारण में समर्थ नहीं है ? ( अथवा—इसकी 'उत्क्रान्तिदा' नामकी शक्ति अर्थात् शस्त्रविशेष किसके प्रति समर्थ नहीं है ) अर्थात् सबके प्रति समर्थ है। दूसरोंमें रोगों ( अथवा—गदा ) को नियुक्त करनेवाले अर्थात् कर्मविपाकानुसार दूसरोंको रुग्ण या शासित करनेवाले इसका वर्ण कृष्ण है ( अथवा—परपीडाजनक होनेसे इसका अपयश है )। [ यहां पर सरस्वती देवीने 'यम' को चन्द्रप्रतापनाशक सूर्यका पुत्र बतलाकर चन्द्रवंशोत्पन्न नलका द्वेषी होनेसे तथा सबके प्राणहर्ता एवं रोगनियोजक होनेसे दमयन्तीके लिए 'यम'को अवरणीय होनेका सङ्केत किया है ] ॥

**नलपक्षमें**—प्रभाव ( अपने क्षात्रतेज ) से सम्पूर्ण राजाओंके तेजको कम करनेवाले तथा वस्त्र और रत्नोंसे रमणीय आकृतिवाले देव ( कान्तिमान् राजा वीरसेन ) इसके पिता हैं। ( अथवा'''तथा सूर्य और कामदेवके समान रमणीय''''''। अथवा—हे अम्ब ( पुण्यचरिता होनेसे मातृवत् जगद्वन्द्य दमयन्ति )! रमणियोंके लिये रमणीय आकृतिवाले,''')। इसकी सामर्थ्य किस शत्रुके प्राणहारिणी सिद्ध नहीं हुई है अर्थात् सबके प्रति प्राणहारिणी सिद्ध हुई है ( इसने समस्त शत्रुओंके प्राणहरण किये हैं। अथवा—इसकी सामर्थ्य यमके प्रति प्राणहारिणी अर्थात् यम-भयकारिणी नहीं होती ? अर्थात् सर्वभयकारक यमको भी इससे भय उत्पन्न होता है )। शत्रुओंमें गदाको नियुक्त ( गदाप्रहार ) करनेवाले इसका कृष्णत्व अर्थात् कृष्णभाव ( कृष्ण भगवान् की समानता ) है, ( अथवा—श्रेष्ठ बाणपीडाको नियुक्त करनेवाले ) शत्रुओंकी बाणप्रहारद्वारा अतिशय पीडित करनेवाले इसका कृष्णत्व (अर्जुनभाव अर्थात् अर्जुनकी समानता) है अर्थात् बाणप्रहारमें यह अर्जुनके समान है ॥१७॥

एकः प्रभावसयमेति परेतराजौ तज्जीवितेशधियमत्र विधेहि मुग्धे ! ।
भूतेषु यस्य खलु भूरि यमस्य वश्यभावं समाश्रयति दस्रमहोदरस्य ॥ १८ ॥

एक इति। अयमेकः परेतानां प्रेतानां, 'परेतप्रेतसंस्थिताः' इत्यमरः, राजौ पङ्क्तौ, प्रभावं प्रभुत्वम्, एति, दस्रसहोदरस्य अश्विनीभ्रातुः, यस्य यमस्य भूतेषु प्राणिषु, मध्ये 'भूतं प्राणिपिशाचादौ' इति वैजयन्ती, भूरि अनेकं भूतं, वशं गतो वश्यः तस्य भावं वश्यत्वं, समाश्रयति खलु। हे मुग्धे ! तत् तस्मात्, अत्र अस्मिन्

पुंसि, जीवितेशधियं यमबुद्धिं, विधेहि । अन्यत्र तु—अयमेकः परेषां शत्रूणाम्, इतरेषाञ्च आजौ युद्धे, प्रभावं सामर्थ्यम्, एति, दस्रसहोदरस्य अश्विसदृशस्य, यस्य अस्य नलस्य, भूतेषु क्ष्मादिषु, पृथिव्यादिषु मध्ये इत्यर्थः, 'क्ष्मादौ जन्तौ च भूतं क्लीबम्' इति वैजयन्ती, इयं भूर्वश्यभावं समाश्रयति खलु, तत् तस्मात्, अत्रास्मिन् नले जीवितेशधियं कान्तबुद्धिं, प्राणेश्वरबुद्धिमित्यर्थः, 'जीवितेशो यमे कान्ते' इति विश्वः, विधेहि ॥ १८ ॥

**यमपक्षमें**—अकेला यह ( यम ) प्रेतोंकी पङ्क्तिमें प्रमुत्वको प्राप्त करता है अर्थात् यह प्रेतोंका पति है ( या—प्रेतोंमें अधिक समर्थ्यवान् है ), अश्विनीकुमारोंके सहोदर ( भाई ) जिस यम का भूतों ( मृतकों ) में वहुत-से भूत वशीभूत रहते हैं, ( अथवा—भूतों अर्थात् प्राणियोंमें वहुतसे भूत ( प्राणी ) जिस यमके वशी होते हुए अभाव अर्थात् नाशको प्राप्त करते हैं ); अत एव हे मुग्धे ( 'यम एवं नलमें से यह कौन है ?' ऐसा निश्चय नहीं करनेवाली दमयन्ति ) ! इसमें यमबुद्धि करो अर्थात् इसे 'यम' जानो । [ वहुत थोड़े व्यक्तियोंके मुक्त होनेके कारण अधिक प्राणियोंका यमका वशवर्ती होना कहा गया है तथा 'संज्ञा' नामकी सूर्यपत्नीके गर्भसे यम तथा अश्विनीकुमारोंका जन्म होनेसे यहां पर यमको अश्विनीकुमारोंका सहोदर ( सगा भाई ) कहा गया है ] ।

**नलपक्षमें**—शत्रुओं तथा आत्मीयों ( अथवा—वड़े २ तेजस्वियोंको भी छोटा करनेवालों, अथवा—श्रेष्ठ शत्रुओं ) के युद्धमें यह ( नल ) अकेला ही प्रभावको प्राप्त करता है अर्थात् उनकी अपेक्षा अधिक प्रभावशील रहता है । पृथ्वी आदि पांच महाभूतोंमेंसे यह पृथ्वी अश्विनीकुमारोंके सदृश ( सौन्दर्यवाले ) जिस इस ( नल ) की वशवर्तिनी रहती है अर्थात् यह पृथ्वीपति है, अत एव हे मुग्धे ( सुन्दरी दमयन्ति ) ! इस ( नल ) में प्राणनाथ की बुद्धि करो अर्थात् इसे वरण कर अपना प्राणपति वनावो ॥ १८ ॥

**गुम्फो गिरां शमननैषधयोः समानः शङ्कामनेकनलदर्शनजातशङ्के ।**
**चित्ते विदर्भवसुधाधिपतेः सुताया यन्निर्ममे खलु तदेष पिपेष पिष्टम् ॥१९॥**

**गुम्फ इति । शमननैषधयोः यमनलयोः, समान एष गिरां गुम्फः सन्दर्भः, अनेकेषां नलानां दर्शनेन जातशङ्के विदर्भवसुधाऽधिपतेः सुतायाः वैदर्भ्याः, चित्ते शङ्कां निर्ममे इति यत् तत् पिष्टं पिपेष खलु प्रागेव साशङ्के पुनः शङ्कोत्पादनं पिष्टपेषणप्रायम् इत्यर्थः । अत्र साशङ्कशङ्कोत्पाद-पिष्टपेषणवाक्यार्थयोः एकत्रासम्भवेन सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धो वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥ १९ ॥**

यम तथा नलके विषयमें समान ( सरस्वती देवीके ) वचन-समूहने विदर्भराजकुमारी ( दमयन्ती ) के अनेक नलोंके देखनेसे शङ्कायुक्त चित्तमें जो शङ्का उत्पन्न की, वह पिष्ट-पेषण हुआ । [ चूर्ण-चूर्णनके समान, अनेक अर्थात् पांच नलोंको देखकर पहलेसे ही सन्देहयुक्त दमयन्तीके चित्तमें यम तथा नलके विषयमें समानरूपसे कहा गया सरस्वती-

देवीका वचन-समूह उन दोनोंके विषयमें वैसी ही शङ्का उत्पन्न कर चूर्ण-चूर्णनके समान ही हुआ अर्थात् सरस्वती देवीके 'यम-नल' विषयक वचन-समूहसे दमयन्तीके सन्देहयुक्त चित्तमें एक और सन्देह उत्पन्न हो गया, उस वचन-समूहसे कोई लाभ नहीं हुआ ] ॥१९॥

तत्रापि तत्रभवती भृशसंशयालोरालोक्य सा विधिनिषेधनिवृत्तिमस्याः।
पाथःपतिं प्रति धृताभिमुखाङ्गुलीकपाणिः क्रमोचितमुपाक्रमताभिधातुम्॥

तत्रेति। सा भवती तत्रभवती पूज्या, 'इतराभ्योऽपि दृश्यन्ते' इति त्रल-प्रत्ययः, सा सरस्वती, तत्रापि तस्मिन् पुरुषेऽपि, यमेऽपीत्यर्थः, भृशं संशयालोः सांशयिक्याः, 'शीङो वाच्यः' इत्यालुच्, अस्या दमयन्त्याः, विधिनिषेधयोः प्रवृत्तिनिवृत्त्योः, निवृत्तिमभावम्, औदासीन्यमिति यावत्, आलोक्य क्रमोचितं क्रमप्राप्तं, पाथः-पतिम् अप्पतिं वरुणं प्रति, धृताः प्रसारिताः, अभिमुखा अङ्गुल्यो यस्य स धृताभि-मुखाङ्गुलीकः, 'नद्यृतश्च' इति कप्, तादृशः पाणिर्यस्याः सा तादृशी सती, अभिधातुम् उपाक्रमत उपक्रान्तवती, क्रमेर्लङ् 'प्रोपाभ्यां समर्थाभ्याम्' इति तङ्॥ २०॥

उस ( यम ) में भी अत्यन्त सन्देहयुक्त इस ( दमयन्ती ) के विधि तथा निषेध अर्थात् स्वीकृति या त्यागके अभावको देखकर पूज्य सरस्वती देवीने जलाधीश ( वरुण ) के सामने हाथकी अङ्गुलि रखकर ( वरुणकी हाथकी अङ्गुलिसे दिखाकर ) क्रमके योग्य ( क्रमानुसार ) कहना आरम्भ किया॥ २०॥

या सर्वतोमुखतया व्यवतिष्ठमाना यदोरणैर्जयति नैकविदारका या।
एतस्य भूरितरवारिनिधिश्चमूः सा यस्याः प्रतीतिविषयः परतो न रोधः॥

येति। या चमूः सेना, सर्वतोमुखतया सर्वतो मुखं यस्येति सर्वतोमुखं जलं तस्य भावः तत्तया जलत्वेनेत्यर्थः, 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्। पुष्करं सर्वतोमुखम्' इत्यमरः, व्यवतिष्ठमाना व्यवस्थितस्वरूपा, जलरूपेत्यर्थः, नैके अनेके, नञर्थस्य न-शब्दस्य सुप्सुपेति समासः, विदारकाः कूपकाख्याः शुष्कनदादेर्जलधारणयोग्याः कूपप्रतिकृतयो गर्त्ता यस्यां तादृशी, 'कूपकास्तु विदारकाः' इत्यमरः, या चमूः, वारिनिधिरूपेत्यर्थः, यादसां जलजन्तूनां, रणैः शब्दैः, जयति प्रकाशते, यस्याः वारिनिधिरूपायाः चम्वा इत्यर्थः, परतो रोधः परं तीरं, सार्वविभक्तिकस्तसिल्, प्रतीतिविषयो न अदृश्यम् इत्यर्थः, एतस्य वरुणस्य, सा चमूर्भूरितरो महत्तरः, वारिनिधिः समुद्रः। अन्यत्र तु—या चमूः सर्वतोमुखतया सार्वपथिकतया, व्यवतिष्ठमाना वर्त्तमाना, नैकान् अनेकान् विदारयन्तीति नैकविदाराः अनेकरिपु-नाशकाः, कर्मण्यण्, काया विग्रहा यस्यां सा तादृशी, या चमूर्दोष्णां रणैः दोरणैः बाहुयुद्धैः, 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, जयति, यस्याः परतः परेभ्यः, रोधः प्रति-रोधः, प्रतीतिविषयो ज्ञानविषयीभूतः, न या केनापि प्रतिरोद्धुं न शक्यते इत्यर्थः, एतस्य नलस्य, सा चमूः भूरीणां तरवारीणाम् आयुधविशेषाणां, निधिः आकारः॥

**वरुणपक्षमें**—जो ( सेना ) जलभावसे स्थित अर्थात् जलमयी है, अनेक विदारकों ( सूखे हुए जलाशयोंमें पानी इकट्ठा करनेके लिए बनाये गये गर्ढों ) वाली जो ( सेना ) जलचर जीवों ( मेढक आदि ) के शब्द ( या युद्ध ) से विजयिनी होती है अर्थात् जिस सेनामें विदारकोंमें स्थित अनेक जलजन्तु शब्द ( या युद्ध ) कर रहे हैं ( अथवा—अनेक विदारयुक्त शरीरवाली जो जलचर जीवों ""अथवा—अनेकोंको विदारण ( नाश ) करने वाले जलवाली जो जलचर जीवों""अथवा—अनेकोंका विदारण करनेवाले जलका आय ( आगमन ) वाली जो जलचर जीवों"" )। जिसका दूसरा किनारा नहीं देखा गया है, ( अथवा—जिसका दूसरे ( या—शत्रु ) से रुकना नहीं जाना गया है। अथवा—जिसके परप्रदेशके सम्मुख गमन करनेवाला मनुष्य नीचे है अर्थात् पानीके बहावमें बहता हुआ मनुष्य नीचेकी ओर ही बहता चला जाता है ); वह विशाल ( या—अनेक ) समुद्र इस ( वरुण ) की सेना है।

**नलपक्षमें**—जो ( सेना ) सब ओर फैली हुई है ( अथवा—जो सबमें प्रधानतया स्थित है, अथवा—जो सब तरफ मुख करके स्थित है अर्थात् सब तरफ जानेके लिये तैयार है ), जो बाहुयुद्ध अर्थात् मल्लयुद्ध ( अथवा—इस ( नल ) के युद्धों या सिंहनादों से विजयिनी है अर्थात् सेनाके द्वारा यह शत्रुओं पर विजयी नहीं होता किन्तु स्वयं युद्ध करके विजयी होता है ), जो अनेकोंका विदारण ( नाश ) करनेवाली है, ( अथवा—जो अनेकों नाशकारक योद्धाओंवाली है, अथवा—अनेकोंका नाशक शरीरवाली जो बाहुयुद्ध ( या—बाहुयुद्धजन्य ध्वनि ) से विजयिनी ( सर्वश्रेष्ठ ) होती है, जिसका शत्रुसे रुकना नहीं जाना गया है अर्थात् जिसे शत्रु कभी नहीं रोक सके हैं ) बहुत-सी तलवारोंकी निधि ( स्थान ) वह सेना इस ( नल ) की है ॥ २१ ॥

**नासीरसीमनि घनध्वनिरस्य भूयान् कुम्भीरवान् समकरः सहदानवारिः ।**
**उत्पद्मकाननसखः सुखमातनोति रत्नैरलङ्करणभावमितैर्नदीनः ॥ २२ ॥**

नासीरेति । नासीरसीमनि पुरोभागे, तटसमीपे इति यावत्, घनध्वनिः महाघोषः, मध्ये निस्तरङ्गत्वादिति भावः, भूयान् महान्, कुम्भीरवान् नक्रवान्, 'नक्रस्तु कुम्भीरः' इत्यमरः, समकरो मकरसहितः, दानवारिणा विष्णुना, क्षीरोदशायिनेति भावः, सह वर्त्तते इति सहदानवारिः, 'वोपसर्जनस्य' इति सहशब्दस्य सभावविकल्पः, उत्पद्मकाननानाम् उत्पद्मानाम् उदितपद्मानाम्, उत्फुल्लपद्मानामित्यर्थः, उत्-शब्दोऽत्र उदयार्थकः; काननानां विकशितपद्मवनानां, सखा विकसितपद्मवनसहित इत्यर्थः, 'राजाहःसखिभ्यष्टच्' नदीनाम् इनः पतिः नदीनः समुद्रः, अलमत्यर्थं, करणभावम् उपकरणत्वम्, इतः प्राप्तैः, रत्नैः श्रेष्ठवस्तुभिः; 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इत्यमरः, अस्य वरुणस्य, सुखम् आतनोति। अन्यत्र तु—घनस्य मेघस्येव, ध्वनिः बृंहितं यस्य सः भूयाननेकः, समकरः समानशुण्डः, ह्रस्वदीर्घस्थूला-

णुरहितशुण्डः इत्यर्थः, सहृदानवारिः मदजलसहितः, उत्पद्मकस्य उद्भूतविन्दुजालकस्य, आननस्य सखा तद्युक्तः, पद्मकालङ्कृतानन इत्यर्थः, 'पद्मकं विन्दुजालकम्' इत्यमरः, अलङ्करणभावम् इतैः अलङ्कारत्वं प्राप्तैः, रत्नैः मणिभिः, न दीनो न शून्यः, तद्युक्त इत्यर्थः, अस्य नलस्य, कुम्भो दन्ती, हस्ती इत्यर्थः, 'कुम्भी कलशदन्तिनोः' इति वैजयन्ती, सुखं यथा तथा नासीरसीमनि सेनामुखभागे, रवान् बृंहणानि, आतनोति ॥ २२ ॥

वरुणपक्षमें—इसके सेना ( तट ) समीपमें गम्भीर ध्वनिवाला, विशाल ( अथवा—क्षीरसागर आदि सात समुद्रोंके होनेसे बहुत ), नक्रयुक्त, मकरयुक्त, विष्णुयुक्त और खिले हुए कमलोंके वनोंसे युक्त अथवा—श्रेष्ठ शोभावाले काननों ( वनों ) से युक्त, अथवा—उत्कृष्ट लक्ष्मी ( स्वकन्या ) तथा जलवाला समुद्र अत्यन्त उपकरणत्व ( साधन सामग्रीत्व ) को प्राप्त रत्नोंके द्वारा ( अथवा—देहमें स्थितिको प्राप्त अर्थात् स्वदेहोत्पन्न, अथवा—भूषण होनेसे ( वरुणके ) देहमें स्थित, अथवा—भूषणत्वको प्राप्त अर्थात् भूषण बने हुए रत्नोंसे ) इस ( वरुण ) के सुखको बढ़ाता है।

नलपक्षमें—इसके सेनाविभागमें ( या—सेनाके आगे ) मेघतुल्य शब्द करनेवाले, समान ( यथोचित आरोहावरोहयुक्त ) सूंड़वाले, मदजलसे युक्त, पद्मक ( कुम्भस्थलके पास पद्माकार ( विन्दु ) युक्त मुखवाले, भूषणत्वको प्राप्त अर्थात् भूषण बने हुए रत्नोंसे अदीन रहित ( सहित ) बहुत-से हाथी सुखपूर्वक ध्वनि करते ( गरजते ) हैं ॥ २२ ॥

**सस्यन्दनैः प्रवहणैः प्रतिकूलपातं का वाहिनी न तनुते पुनरस्य नाम ? ।**
**तस्या विलासवति ! कर्कशताश्रिता या ब्रूमः कथं बहुतया सिकता वयं ताः ? ॥**

सस्यन्दनैरिति । विलासवति ! हे भैमि ! अस्य वरुणस्य सम्बन्धिनी, का पुनर्वाहिनी, नदी, सस्यन्दनैः स्रुतिसहितैः, अविच्छेदेन प्रवर्त्तनशीलैः इत्यर्थः, प्रवहणैः प्रवाहैः, तरङ्गैरिति यावत्, प्रतिकूलं कूले कूले, पातं, न तनुते नाम ? सर्वाऽपि सर्वं कूलं पातयतीत्यर्थः; किञ्च तस्या वाहिन्याःसम्बन्धिन्याः, कर्कशतां कार्कश्यं, श्रिता याः सिकता वालुकाः,ता बहुतया अपरिमितत्वेन, वयं कथं ब्रूमः ? कथं सङ्ख्यातुं शक्नुमः इत्यर्थः, नैव शक्नुम इति भावः । अन्यत्र तु—सस्यन्दनैः सरथैः, प्रवहणैः कर्णीरथः उपलक्षिता, 'कर्णीरथः प्रवहणम्' इत्यमरः, अस्य नलस्य, का वाहिनी सेना प्रतिकूलानां प्रत्यर्थिनां, पातं नाशं, न तनुते ? किञ्च कर्काणां श्वेताश्वानां, 'कर्कः कर्केतने वह्नौ शुक्लाश्वे दर्पणे घटे' इति मेदिनी, शतैः आश्रितायाः तस्या वाहिन्याः, ताः प्रसिद्धाः, असिकताः असिः प्रहरणमेषामस्तीति असिकाः तेषां भावः असिकताः ताः खड्गिकत्वानि, 'प्रहरणम्' इति ठक्, बहुतया वयं कथं ब्रूमः ? ॥ २३ ॥

वरुणपक्षमें—हे विलासवति ( दमयन्ति ) ! भला कौन नदी बहावयुक्त ( अथवा—झरनोंसे युक्त ) प्रवाहोंसे तीरके प्रति गमन नहीं करती अर्थात् सभी करती हैं ( अथवा—प्रत्येक तीरको नहीं गिराती अर्थात् सभी नदियां प्रत्येक तीरको गिराती हैं )। हम उसके

उन वालुओं ( रेतों ) की अधिकताको किस प्रकार कहें अर्थात् वालुओंके अत्यधिक होनेसे हम उसका परिमाण कैसे बतलावें, जो ( वालू ) कठिनता अथवा—सैकड़ों केकड़ाओं ( जलजन्तु-विशेष ) से युक्त है ।

नलपक्षमें—इस ( नल ) की कौन सेना रथसहित वाहनों ( घोड़े हाथी ) आदि से ( अथवा—वेगयुक्त रथोंसे ) शत्रुओंके प्रति गमन ( अथवा-शत्रुओंका नाश ) नहीं करती है ? तथा कौन सेना इसके नाम ( प्रसिद्धि ) को नहीं बढ़ाती ? ( अथवा—कौन सेना शत्रुओं पर अभियान ( चढाई = गमन ) पूर्वक ( या शत्रुओंका नाश करके ) इसके नामको नहीं नहीं बढ़ाती ? ) । हे विलासवति ! सैकड़ों श्वेत घोड़ोंपर चढ़ी हुई उस सेनाकी अपेक्षा उन वालुओं ( रेतों ) को हम अधिक कैसे कहें अर्थात् वालुओंकी गणना कथञ्चित् सम्भव हो सकती है, परन्तु इसकी सेनाकी नहीं; अतः उस सेनासे वालुओंको अधिक कहना उचित नहीं ( अथवा—सैकड़ों श्वेत घोड़ोंपर चढ़े हुए खड्ग-प्रहार करनेवालोंकी अधिकताको हम कैसे कहें ? ) अर्थात् श्वेताश्वशताधिरूढ खड्गप्रहारकर्ताओंकी गणना अशक्य होनेसे उनका हम वर्णन नहीं कर सकती । ( अथवा—सैकड़ों श्वेत घोडों पर चढ़े हुए तथा बहुतों के प्रति गमन करनेवाले ( या बहुतों की रक्षा करनेवाले ) खड्ग-प्रहारकर्ताओंके भावको हम कैसे कहें ? अर्थात् उनका वर्णन करना अशक्य होनेसे हम उसे नहीं कह सकती ) ॥ २३ ॥

**शोणं पदप्रणयिनं गुणमस्य पश्य किञ्चास्य सेवनपरैव सरस्वती सा ।**
**एनं भजस्व सुभगं भुवनाधिनाथं के वा भजन्ति तमिमं कमलाशया न ?॥**

**शोणमिति । अस्य वरुणस्य, पदप्रणयिनं पादोपसर्पिणं, गुणं गुणिनं, रक्तवर्णजलविशिष्टमित्यर्थः, शोणं शोणाख्यं नदं, पश्य, किञ्च सा सरस्वती नदी, अपीति शेषः, अस्य वरुणस्य, सेवनपरैव, सकलनदीनदनायकोऽयम् इत्यर्थः; ततः कारणात् भुवनाधिनाथं जलाधिपतिं 'सलिलं कमलं जलम् । पयः कीलालममृतं जीवनं भुवनं वनम् ॥' इत्यमरः, सुभगम् एनं वरुणं, भजस्व समाश्रय, तमिमं सुभगं वरुणं, के वा कमलाशया जलाधाराः, न भजन्ति ? अपि तु सर्वेऽपि भजन्तीत्यर्थः; अथवा—के वा प्राणिनः, कमलाशया जलाकाङ्क्षया, न भजन्ति ? अन्यत्र तु—अस्य नलस्य, पदप्रणयिनं पादतलगतं, शोणं रक्तं, गुणं पश्य, भाग्यलक्षणत्वादिति भावः; किञ्च सा सरस्वती वाग्देवता, 'सरस्वती सरिद्भेदे गोवाग्देवतयोर्गिरि' इति विश्वः, अस्यैव नलस्यैव, सेवनपरा, लक्ष्मीसरस्वत्योरयमेकाधिकरणमिति भावः; ततो भुवनाधिनाथं लोकनाथं, नराधिपमित्यर्थः, 'भुवनं विष्टपे लोके सलिले पथि यद्यपि' इति विश्वः, सुभगं सुन्दरम्, एनं नलं, भजस्व समाश्रय, के वा जनास्तमिमं नलं, कमलाशया लक्ष्म्याकाङ्क्षया, धनाकाङ्क्षयेत्यर्थः, 'कमला श्रीः जलं पद्मः कमलं कमला मृगः' इति विश्वः, न भजन्ति ? ॥ २४ ॥**

वरुणपक्षमें—हे सुभगे ( दमयन्ति ) ! जलाधीश इसको वरण करो, गुण ( अप्रधान अर्थात् सेवक ) इस ( वरुण ) के चरणसेवक 'शोण' नामक महानदको देखो, अथवा वह

( सुप्रसिद्ध ) सरस्वती नामकी नदी इसकी सेवामें लगी ही है, अथवा कौन-से जलाशय ( छोटे पल्वलसे लेकर बड़े क्षीरसमुद्र आदि तक, अथवा—कमलाकर ) उस सुप्रसिद्ध इस ( वरुण ) को नहीं सेवा करते अर्थात् क्षीरसागर पर्यन्त जलाशयमात्र इसकी सेवा करते हैं तब शोणभद्र या सरस्वती नदी इसकी सेवा करती है इसमें क्या आश्चर्य है ? ( अथवा—जलके इच्छुक कौन लोग उस प्रसिद्ध इस वरुणकी सेवा नहीं करते अर्थात् वर्षादि-जलाभिलाषी प्रणिमात्र इस प्रसिद्ध जलाधीश्वर वरुणकी सेवा ( स्तुति ) करते हैं। ) [ शोण, सरस्वती तथा अन्य जलाशयोंसे उन-उनके अधिष्ठात्री देवताओंका ग्रहण होनेसे उनका इस वरुणकी सेवा करना युक्तिसङ्गत होता है ]।

**नलपक्षमें**—हे सुभगे! ( तुम ) इस जगत्पति ( नल ) को वरण करो, लालिमा गुण इसका पदप्रणयी ( चरणसेवक ) है अर्थात् इसके चरण लाल हैं यह तुम देखो। अथच—वह सुप्रसिद्धा सरस्वती देवी इसकी सेवामें तत्पर ही है अर्थात् इसके मनमें स्थित ही है। धन ( पानेकी ) आशासे अथवा—धनिक कौन लोग इसकी सेवा ( या स्तुति ) नहीं करते? अर्थात् सभी करते हैं। [ यहां पर सरस्वती देवीने नलके चरणको लाल बतलाकर उनका सौन्दर्य, सरस्वतीसेवन बतलाकर उसकी कलाकौशल-दक्षता तथा याचककृत स्तुति बतलाकर उसकी उदारताका तथा सरस्वती एवं लक्ष्मी दोनोंका अधिष्ठान होना सङ्केत किया है ]॥२४॥

**शङ्कालताततिमनेकनलावलम्बां वाणी न वर्द्धयतु तावदभेदिकेयम्।**
**भीमोद्भवां प्रति नले च जलेश्वरे च तुल्यं तथाऽपि यदवर्द्धयदत्र चित्रम्॥**

**शङ्केति। जलेश्वरे वरुणे च, नले च तुल्यं यथा तथा प्रयुक्तेति शेषः, अत एव भीमोद्भवां भैमीं प्रति, अभेदिका अविशेषा, अन्यतरार्थापरिच्छेदिका इति यावत्, इयं वाणी सरस्वतीवाक्, अनेके पञ्च, नलाः नैषधाः, पोटगलाख्याः दुश्छेद्यास्तृणविशेषाश्च, अवलम्बो विषयः आधारश्च यस्याः तादृशीं, 'नलः पोटगले राज्ञि' इति विश्वः, शङ्का एव लताः तासां ततिं परम्परां, न वर्द्धयतु तावत् न छिनत्तु एव, समान धर्मदर्शनात् संशयो भवत्येव अतः समानार्थिका वाणी एषु कः सत्यनल इति भैम्याः संशयं कथं छिनत्तु इत्यत्र न चित्रमिति भावः, 'वृधु च्छेदनपूरणयो'रिति चौरादिकाल्लोट्, किन्तु तथाऽपि अवर्द्धयत् अच्छिनदिति यत् तदत्र चित्रं, छेदनार्थत्वे या न छेदिका सैव अच्छिनत् इति विरोधात् चित्रं, वर्द्धयामास इति वृद्ध्यर्थत्वे त्वविरोध इति विरोधाभासोऽलङ्कारः। 'वृधु वर्द्धने' इति भौवादिकात् णिच्, नलाख्यतृणमिश्रलताततिमिवानेकनलावलम्बिनीम् अयं नलः अयं नलो वेति सन्देहततिम् इयं वाणी नैवाच्छिनत् प्रत्युत वृद्धिं प्रापयदेवेत्यहो कष्टम् इत्यर्थः॥ २५॥**

भेदरहित अर्थात् नल तथा वरुणमें अर्थवाली यह ( सरस्वतीकी ) वाणी दमयन्तीके अनेक नलाश्रित शङ्कारूपी लतासमूहको नहीं बढ़ावे ? अर्थात् अवश्य बढ़ावे, ( इसमें आश्चर्य नहीं है ) तथापि नल तथा वरुणमें समानरूपमें ही जो शङ्कारूपी लता-समूहको बढाया

( या-पूरा किया ) यह आश्चर्य है। [ नल तथा वरुणमें श्लेषद्वारा समान अर्थवाली वाणीसे दमयन्तीके शङ्का-लता-समूहका बढ़ना आश्चर्यजनक नहीं है, किन्तु नल तथा वरुणके शङ्का-लता-समूहका बढ़ना अवश्य आश्चर्यजनक है, क्योंकि दूरमें खड़े पुरुषको देखकर 'यह स्थाणु है या पुरुष ?' ऐसी शङ्का तटस्थ किसी अन्य व्यक्तिको तो होती है, किन्तु जो पुरुष खड़ा है उसे ही अपने विषयमें यह शङ्का नहीं होती कि 'मैं स्थाणु हूं या पुरुष ?' अत एव नल तथा वरुणको अपने-अपने विषयमें निश्चित ज्ञान होनेसे अनेक नलाश्रित शङ्का होना विरुद्ध होनेसे आश्चर्यजनक है। इसका परिहार यह है कि—] नलमें शम अर्थात् सुख तथा जलाधिप ( वरुण ) में कालतातति अर्थात् कालिमा-समूह समान हुआ। [ 'यदि यह सरस्वती देवी वरुणका वर्णन श्लेषोक्ति द्वारा नहीं करके केवल वरुणार्थक श्लोकोंसे ही करती तो दमयन्ती अवश्य ही वरुण का वरण कर लेती और वह मुझे प्राप्त नहीं होती' इस विचारसे नलको सुख हुआ तथा 'यदि यह सरस्वती देवी मेरा वर्णन श्लेषोक्तिद्वारा नलका भी नहीं करके केवल मदर्थक ( वरुणार्थक ) श्लोकोंसे करती तो दमयन्ती मुझे ही वरण करती, नलको नहीं, किन्तु अब वैसा नहीं करनेसे दमयन्ती मुझे छोड़कर नलका भी वरण कर सकती है' इस विचारसे वरुण निराश होकर काले पड़ गये ]। ( अथवा—नलने सोचा कि 'सरस्वती देवीने श्लेषोक्तिद्वारा मेरा तथा वरुण-दोनोंका वर्णन किया है केवल वरुण का ही वर्णन नहीं किया है; अतः दमयन्ती कहीं मेरे ( नलके ) सन्देहसे वरुणका ही वरण न कर ले' तथा वरुणने सोचा कि सरस्वती देवीने श्लेषोक्तिद्वारा मेरा तथा नल—दोनोंका वर्णन किया है, केवल नलका ही वर्णन नहीं किया है; अत एव दमयन्ती कहीं नल जानकर मेरा वरण कर लेगी क्या ? ( अथवा—वरुण जानकर मेरा त्याग कर देगी क्या ? ); इस प्रकार नल तथा वरुण—दोनोंके सन्देह-लता-समूहको सरस्वती देवीके विशेष प्रतिपादन नहीं करनेवाले अर्थात् समानार्थक वचनने बढ़ा दिया। अथवा—विशेष प्रतिपादन नहीं करनेवाला ( पक्षा०—समानार्थक ) सरस्वती देवीका वचन दमयन्तीके अनेक नलाश्रित शङ्का-लता-समूहको नहीं काटा ( यह आश्चर्यजनक नहीं, क्योंकि जो छूरी आदि लतादिको नहीं काट सकती, उसका नहीं काटना आश्चर्यजनक नहीं है ) तथापि दमयन्तीके प्रति नल तथा जलाधिप ( वरुण ) के शङ्का-लता-समूहको एक साथ ही काट दिया यह आश्चर्य है ( क्योंकि जो छूरी आदि लतादिको नहीं काट सकती, उसका काटना आश्चर्यजनक है। ) प्रकृतमें—'मेरे सन्देहसे दमयन्ती वरुणका वरण कर ले' यह नलका सन्देह तथा 'नलके सन्देहसे दमयन्ती मेरा वरण कर ले' यह वरुणका सन्देह था, किन्तु 'सरस्वती देवीने मद्रूपधारी वरुणके वर्णनमें केवल मेरा ( नलका ) ही नाम नहीं लिया है, परन्तु वरुणका वर्णन भी श्लेषोक्ति द्वारा कर दिया है अतः श्लेषोक्तिज्ञानचतुरा दमयन्ती इसे वरुण जानकर वरण नहीं करेगी अपितु मुझे ही वरण करेगी' ऐसे विचारसे नलके सन्देहका नाश हुआ तथा 'सरस्वती देवीने नलरूपधारी मेरे ( वरुण ) के वर्णनमें केवल मेरा ( वरुणका ) ही नाम नहीं लिया है, परन्तु नलका वर्णन भी श्लेषोक्तिद्वारा कर दिया है, अतः श्लेषोक्तिज्ञात-

चतुरा दमयन्ती उस वर्णनमें मेरा (वरुणका) भी नाम रहनेसे मेरा वरण नहीं करेगी' ऐसे विचारसे वरुणके सन्देहका नाश हुआ। अथवा—'सरस्वतीने मेरा नाम लेकर वर्णन कर दिया है अतः नलानुरक्ता दयमन्ती मुझे वरण करेगी या नहीं' इस प्रकार वरुणके तथा 'सरस्वती देवीने वरुणका भी नाम लेकर वर्णन कर दिया है। अतः मुझमें अनुरक्त दमयन्ती वरुणका वरण नहीं करके अन्तमें मेरे ही शेष रह जानेसे मेरा ही वरण करेगी' इस प्रकार नलके सन्देहका नाश (दूर) होना समझना चाहिये)॥ २५॥

**बालां विलोक्य विबुधैरपि मायिभिस्तैरच्छद्मितामियमलीकनलीकृतस्वैः।**
**आह स्म तां भगवती निषधाधिराजं निर्दिश्य राजपरिषत्परिशेषभाजम्॥२६॥**

बालमिति। अथेयं भगवती सरस्वती, तां बालां भैमीं, मायिभिर्मायाविभिः, 'व्रीह्यादिभ्यश्च' इति इनिः' अत एवालीकनलीकृतानि मायानलीकृतानि, स्वानि आत्मनो यैस्तादृशैः, तैः विबुधैः देवैरपि, अच्छद्मिताम् अप्रतारितां, नलबुद्ध्या तेषामवरणादिति भावः, छद्मशब्दात् 'तत्करोति—' इति ण्यन्तात् कर्मणि क्तः, विलोक्य राजपरिषदि राजसभायां, परिशेषभाजम् अवशिष्टतां गतं, निषधाधिराजं नलं, निर्दिश्य हस्तेन प्रदर्श्य, आह स्म उवाच। 'परिशेष' इत्यत्र 'परिवेष' इति पाठे तु—राजपरिषदः परि सर्वतोभावेन, वेषमलङ्कारं, भजतीति तादृशं राजसभालङ्कारभूतमित्यर्थः। राजपरिषद्रूपपरिधिभाजमित्यर्थस्यापि बोधनात् नलस्य चन्द्रत्वं ध्वन्यते॥ २६॥

भगवती (सरस्वती देवी) असत्य नल बने हुए अत एव कपटी उन देवों (इन्द्रादि चार देवों, पक्षा०—विशिष्ट विद्वानों) से भी नहीं ठगी गयी बाला भी उस दमयन्तीको देखकर राज-सभाके अलङ्कार बने हुए (अथवा—राज-सभाके अन्तमें स्थित, या राज-सभामें अवशिष्ट) निषधेश्वर (नल) को दिखलाकर बोली-[यहां पर राज (चन्द्र) सभाके परिवेष धारण करनेवाला कहनेसे नलका चन्द्र होना ध्वनित होता है]॥ २६॥

**अत्याजिलब्धविजयप्रसवस्त्वया किं विज्ञायते रुचिपदं न महीमहेन्द्रः?।**
**प्रत्यर्थिदानवशताऽऽहितचेष्टयाऽसौ जीमूतवाहनधियं न करोति कस्य?॥**

अथ नलमेकैकश्लोकेन क्रमात् इन्द्राद्येकैकश्लेषेणाह, अत्याजीति। अत्याजिषु महायुद्धेषु, लब्धो विजयप्रभवो जयरूपफलं येन सः, रुचिपदं त्वदनुरागास्पदं, महीमहेन्द्रो भूदेवेन्द्रः, त्वया किं न विज्ञायते? अर्थिषु विषये प्रत्यर्थि, विभक्त्यर्थेऽव्ययीभावः, दानस्य वशतया तन्निष्ठतया, आहितया कृतया, चेष्टया वितरणव्यापारेण, असौ नलः, कस्य जीमूतवाहनः तन्नामा महात्यागी कश्चित् विद्याधरराजः; तद्धियं तद्बुद्धिं, जीमूतवाहनभ्रान्तिमित्यर्थः, न करोति? न जनयति? तस्मात् नलोऽयमिति भावः। अन्यत्र तु—लब्धो विजयः पार्थ एव, 'विजयस्तु जये पार्थे' इति विश्वः,

१. 'परिवेष' इति पाठान्तरम्। २. 'प्रसरस्त्वया' इति पाठान्तरम्।

प्रसवोऽपत्यं येन सः, रुचीनां तेजसां, पदं स्थानं, मह उत्सवः तद्वान् मही नित्योत्सव इत्यर्थः, महेन्द्रः देवेन्द्रः, त्वया अत्याजि त्यक्तः, किं न विज्ञायते? अपि तु विज्ञेय एव; प्रत्यर्थिनां प्रतिपक्षाणां, दानवानां शतेषु आहितया कृतया, चेष्टया शत्रुनाशानुकूलपौरुषेण, असौ कस्य जीमूतवाहनः मेघवाहनः, इन्द्रः इत्यर्थः, 'इन्द्रो मरुत्वान् मघवा, तुराषाण्मेघवाहनः' इत्यमरः, तद्धियम् इन्द्रोऽयमिति बुद्धिं, न करोति? अपि तु करोत्येव ॥ २७ ॥

( यहांसे चार श्लोकोंसे ( १३।२७-३० ) नलका तथा उन्हीं चार श्लोकोंमें से एक-एक श्लोकसे क्रमशः इन्द्र अग्नि यम वरुणका वर्णन श्लेष द्वारा सरस्वती देवीने किया है ) **नलपक्षमें**—बहुत ( या बड़े-बड़े ) युद्धमें विजयफल ( पाठा०—विजयाधिक्य ) को पानेवाले तथा रुचि ( शोभा या अनुराग ) के स्थान भूपति ( नल ) को तुम क्यों नहीं जानती अर्थात् तुम्हें नलको जानना ( पहचानना ) चाहिये । प्रत्येक याचकोंमें दानके वशपरायणताके द्वारा की गयी चेष्टासे यह ( नल ) किसे जीमूतवाहनकी बुद्धिको नहीं उत्पन्न करता है अर्थात् प्रत्येक याचकोंके लिये दानतत्परताकी चेष्टासे इसे सभी लोग जीमूतवाहन मानते हैं। ( अथवा—दानसे याचकके प्रति वशता ( जितेन्द्रियभाव ) के द्वारा की गयी चेष्टा से…… अथवा—प्रत्यर्थियों ( शत्रुओं ) को खण्डन करनेवाले हैं प्राण जिनके ऐसे ( अत्यन्त शूर वीरों ) की अधीनतासे की गयी चेष्टासे यह किसे जीमूतवाहन ( इन्द्र ) की बुद्धि नहीं उत्पन्न करता है ? अर्थात् वशीभूत शत्रुहन्ता शूरवीरोंके विषयमें इसके कार्यको देखकर सभी लोग इसे इन्द्र समझते ( इन्द्र-सा मानते ) हैं । इन्द्रके समान यह नल भी शत्रुओंको वशमें करनेवाला है ) ॥

पौराणिक कथा—पर्यायक्रमसे समयबद्ध होकर १-१ सर्पका आहार प्रतिदिन ग्रहण करनेवाले गरुडके लिये 'शङ्खचूड' नामक नागका स्थानापन्न होकर जीमूतवाहनने अपना शरीर अर्पण कर दिया और उनकी—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥'

वीरता एवं दयापूर्ण उक्तिसे प्रसन्नचित्त गरुड़ने अमृतवर्षाकर भक्षित सब सर्पोंको जीवित कर दिया तथा सदाके लिए पर्यायक्रमसे नागोंका भक्षण करना छोड़ दिया । ( नागानन्द )

**इन्द्रपक्षमें**—बहुत ( या बड़े-बड़े ) युद्धों ( में विजयपाने ) वाला, विजय अर्थात् अर्जुन ( या जयन्त ) नामक पुत्र ( पाठा०—विजय-विस्तार ) को पाये हुए, तेजःस्थान ( कान्तिमान् या अनुरागवान् ) तथा उत्सववान् महेन्द्रको तुम नहीं जानती ( पहचानती ) हो ? अर्थात् जानती ही हो ( अथवा—नहीं जानती हो अर्थात् जानना चाहिये ) । यह ( इन्द्र ) शत्रुभूत सैकड़ों दानवोंमें की गयी चेष्टा ( व्यापार ) से मेघवाहन ( इन्द्र ) की बुद्धि किसको नहीं करता अर्थात् सैकड़ों दानवोंमें इसके कार्यको देखकर सभी लोग इसे इन्द्र जानते हैं । ( अथवा—विजय-पुत्रको पाए हुए महेन्द्रको तुमने क्यों छोड़

दिया ?, यह विज्ञ ( विद्वान् ) के समान नहीं आचरण करता ( विज्ञ नहीं ) है ? अर्थात् विज्ञ ही है । रुचिका स्थान ( रुचिकर ) नहीं है ? अर्थात् रुचिका स्थान है ही, उत्सववान् नहीं है ? अर्थात् उत्सववान् भी है ही । आशय यह है कि इन गुणोंसे युक्त इस इन्द्रके त्यागमें कोई उचित कारण नहीं मालूम होता है । अथवा—वि ( पक्षी अर्थात् गरुड ) से जयको प्राप्त अर्थात् अमृतको स्वर्गसे लेजानेवाले गरुडसे पराजित, महेन्द्रको तुमने जानकर छोड़ दिया ? अर्थात् ठीक ही किया, यह तुम्हारी रुचिका स्थान ( रुचिकर ) नहीं है अर्थात् तुम्हें नहीं रुचता और उत्सववान् नहीं है । अर्थात् दैत्यभयसे सदा उत्सवहीन है [ इस पक्षमें 'न' का दोनों ओर अन्वय करना चाहिये ] अथवा— उक्त गुणवाले इन्द्रको तुम नहीं जानती ? अर्थात् तुमने जान ही लिया है ( क्योंकि इसे ) छोड़ दिया है । अथवा—महायुद्ध में ( गरुड ) से पराजित महेन्द्रको……) [ उत्तरार्द्धकी व्याख्या इन वैकल्पिक पक्षोंमें भी पूर्ववत् ही समझनी चाहिये ] ॥ २७ ॥

**पौराणिक कथा**—सपत्नीसे पराजित होकर उसकी दासी बनी हुई माता 'विनता'को दासीत्वसे मुक्त करनेके लिये गरुड स्वर्गमें जाकर वहांसे अमृत ले जाने लगे तो इन्द्रने मना किया और युद्ध में उन्हें पराजितकर गरुड अमृतको ले जाकर माता को दास्यत्वसे मुक्त किया। ( नागानन्द )

**येनामुना बहुविगाढसुरेश्वराध्वराज्याभिषेकविकसन्महसा बभूवे ।**
**आवर्जनं तमनु ते ननु साधु नामग्राहं मया नलमुदीरितमेवमत्र ॥ २८ ॥**

**येनेति । येनामुना नलेन, बहु यथा तथा, विगाढः क्षुण्णः, आचरित इत्यर्थः, सुरेश्वरस्य इन्द्रस्य, अध्वा लोकपालनरूपमार्गो यत्र तादृशे राज्ये अभिषेकाद्विकसन्ति वर्द्धितानि, महांस्युत्सवाः तेजांसि वा यस्य तादृशेन, बभूवे भूतम् । अत्र सभायां, मया नामग्राहं नाम गृहीत्वा, 'नाम्न्यादिशिग्रहोः' इति णमुल्-प्रत्ययः, एवं पूर्वोक्तप्रकारेण, उदीरितम् उक्तं, नलं नलनामानं, तमेतम् , अनु लक्ष्यीकृत्य, ते तव, आवर्जनमाकर्षणं, साधु ननु युक्तं खलु, अयमेव सत्यो नल एतद्वरणं युक्तमेवेत्यर्थः । अन्यत्र तु—येनामुना अग्निना, बहु वारं वारं, विगाढा आहूताः इति यावत्; सुरेश्वराः इन्द्रादयो देवश्रेष्ठाः येषु तादृशेषु अध्वरेषु यज्ञेषु, आज्यानां घृतानाम्, अभिषेकात् अन्तःसेकात् करणात् , विकसन्महसा वर्द्धमानतेजसा, बभूवे । मया अनलम् अग्निम्, अन्यत् समानम् ॥ २८ ॥**

**नलपक्षमें**—जो यह ( नल ) देवेन्द्रके ( लोकपालनरूप ) मार्गके अधिक सेवन तथा राज्याभिषेकसे बढ़े हुए तेजवाला हुआ ( अथवा—अनेक बार देवेन्द्रद्वारा सेवन किया गया है लोकपालनरूप मार्ग जिसका ऐसा ) है यहांपर ( इस सभामें, या इन पांच नलोंमें ) नाम ग्रहण कर मुझसे कहे गये उस ( नल ) को लक्ष्यकर तुम्हारा आकर्षण ( या पतिभावसे वरण करना ) उचित है, अर्थात् मैंने यहां पर नलका नाम लेकर कह दिया, अत एव तुम्हें इसके प्रति आकृष्ट होना सर्वथा उचित ही है ।

अग्निपक्ष में—जो यह ( अग्नि ) अनेक वार बुलाये गये हैं इन्द्रादि देव श्रेष्ठ जिनमें ऐसे यज्ञोंमें घृताभिषेक ( घृताहुति ) से बढे हुए तेज ( ज्वाला ) वाला हुआ ( अथवा—अनेक वार किये गये सुरेश्वर ( इन्द्र ) यज्ञोंमें किये…… )। यहां पर ( इन पांच नलोंमें, या इस स्वयम्वर सभामें ) मुझसे नाम लेकर बतलाये गये 'अनल' ( नलभिन्न, पक्षा०—अग्नि ) के प्रति तुम्हारा आकर्षण उचित है ( अथवा—उचित है क्या ? अर्थात् उचित नहीं है । अथवा—……के प्रति तुम्हारा वर्जन ( निषेध ) उचित है क्या ? अर्थात् नहीं अपितु इसे स्वीकार करना चाहिये । अथवा—……के प्रति तुम्हारा वर्जन उचित है अर्थात् तुमने मेरे द्वारा नाम लेकर 'अनल' बतलाये जानेपर जो इसका त्याग किया वह ठीक ही किया 'आ' ( हर्ष ) है । अथवा—……के प्रति तुम्हारा सर्वभावेन त्याग उचित नहीं है क्या ? अर्थात् उचित ही है ।) [ इस पक्षमें—'ननु' को दो पद मानकर 'नु' शब्द दमयन्ती का सम्बोधनार्थक तथा 'न' शब्द निषेधार्थक मानना चाहिये ]। अथवा—……के प्रति तुम्हारा सर्वभावेन त्याग उचित ही है । [ इस पक्षमें 'ननु' शब्द निश्चयार्थक मानना चाहिये ] ॥ २८ ॥

**यच्चण्डिमा रणविधिव्यसनञ्च तत्त्वं बुद्ध्वाऽऽशयाश्रितममुष्य च दक्षिणत्वम् ।**
**सैषा नले सहजरागभरादमुष्मिन् नात्मानमर्पयितुमर्हसि धर्मराजे ? ॥२९॥**

**यदिति । अमुष्य नलस्य, चण्डस्य भावः चण्डिमा रणेषु अतिकोपनत्वं, 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः, पृथ्वादित्वादिमनिच्-प्रत्ययः, रणविधौ युद्धकर्मणि, व्यसनमासक्तिश्च, 'व्यसनन्त्वशुभे भक्तौ' इति विश्वः, आशयाश्रितं चित्ताश्रितं, दक्षिणत्वं दाक्षिण्यञ्च, इति यत् तत् सर्वं चण्डिमादिकं, 'नपुंसकमनपुंसकेन' इत्यादिना यत्तदिति नपुंसकैकनिर्देशः, बुद्ध्वा विचार्य, सैषा त्वम् अमुष्मिन् धर्मप्रधानो राजा तस्मिन् धर्मराजे, नले नलनामनि वीरे, सहजरागभरात् अकृत्रिमानुरागातिरेकात्, आत्मानम् अर्पयितुं न अर्हसि ? किमिति शेषः, अपि तु अर्हस्येव, एतद्वरणमेव तव योग्यमिति भावः । अन्यत्र तु—चण्डि ! हे कोपने !, गौरादित्वात् ङीष्, अमुष्य यमस्य, यत् मारणविधिव्यसनं मारणकर्मासक्तिम्, आशया दिशा निमित्तेन, श्रितं प्राप्तं, दक्षिणत्वं दक्षिणदिक्पतित्वञ्च, तत् सर्वं तत्त्वं यथार्थं, बुद्ध्वा सैषा त्वम्, अनले नलात् अन्यस्मिन्, अमुष्मिन् धर्मराजे यमे, इत्यादि पूर्ववत् ॥ २९ ॥**

नलपक्षमें—जिस ( नल ) की चण्डिमा ( अत्यधिक क्रोध ) युद्धकार्यमें व्यसन ही है अर्थात् उसमें क्रोधसे शत्रुओं को मारने का इसे व्यसन है ( सब शत्रुओं को युद्धमें मारता है ), अथवा—जिसकी चण्डिमा तथा युद्धकार्यमें व्यसन ( निर्भय होकर शत्रुके साथ निरन्तर युद्ध करना ) तत्त्व ( सारभूत कार्य है ) सो तुम इसके आशय ( मन ) में स्थित तथा सरलता ( अथवा—इसके शय ( हाथ ) में स्थित दक्षिणता ( दानशूरता या युद्धशूरता ) को जानकर धर्मात्मा ( या धर्म से शोभमान ) इस नलमें स्वाभाविक स्नेहातिशयसे आत्मसमर्पण करनेके योग्य नहीं हो ? अर्थात् अवश्य ही हो । ( इस शौर्यादिगुणयुक्त नलको तुम आत्मसमर्पण करके पतिरूपमें स्वीकार कर लो )।

**यमपक्षमें**—हे चण्डि ( कोपनशीला दमयन्ति ) ! इस ( यम ) का जो मारण कार्यमें व्यसन तथा दिशा ( के निमित्त ) से दक्षिणत्व आश्रित है अर्थात् दक्षिण दिशा का आश्रय ( स्वामी होनेसे दक्षिण दिशामें निवास ) करता है; वह सब तुम मालूम कर स्वाभाविक स्नेहातिशयसे इस धर्मराज अर्थात् यममें आत्मसमर्पण करनेके लिए योग्य हो अर्थात् यह सबको मारता है तथा स्वामी होनेसे दक्षिण दिशामें रहता है, यह सब जानकर तुम इसे स्वाभाविक प्रेमातिशयसे आत्मसमर्पणकर पति बनावो । ( अथवा—हे चण्डि ! 'नल' भिन्न व्यक्ति का नाम मात्र सुननेसे कोप करनेवाली दमयन्ति ) ! इस ( यम ) के मारण कार्य का व्यसन ( सर्वदा मारनेका ही कार्य ) तथा दिशाके द्वारा आश्रित दक्षिणता ( सरलता या अनुकूलता, किन्तु स्वयं दक्षिणताशून्य )—यह सब ( इसका ) तत्त्व ( वास्तविक रूप ) जान कर वह ( कर्तव्याकर्तव्यज्ञानसम्पन्न होनेसे सुप्रसिद्ध ) तुम अनल अर्थात् नलभिन्न यममें स्वाभाविक प्रेमातिशयसे आत्मसमर्पण करनेके लिए योग्य नहीं हो अर्थात् इसे तुम पति-रूपमें स्वीकृतकर आत्मसमर्पण मत करो । अथवा—इसका मारण कार्यमें व्यसन ( नित्य संलग्न रहना ) तो तत्त्व अर्थात् सत्य है, परन्तु दक्षिणता ( सरलता या अनुकूलता ) तो दिङ्मात्रसे आश्रित है अर्थात् दक्षिण दिशाका स्वामी होनेसे उसको दक्षिणत्वाश्रित कहते हैं स्वयं दक्षिण होनेके कारण नहीं, यह सब जानकर......। अथवा—उक्त यमको जानकर अस्वाभाविक प्रेमातिशयके कारण इस यमको आत्मसमर्पण करनेके लिए तुम योग्य नहीं हो, ( ऐसे असद्गुणयुक्त व्यक्तिमें अस्वाभाविक प्रेम होनेसे आत्मसमर्पण करना तुम्हें उचित नहीं है, क्योंकि जहां हार्दीक प्रेम नहीं वहां आत्मसमर्पण-जैसा महत्त्वपूर्ण कार्य करना कदापि उचित नहीं कहा जा सकता, अत एव तुम इसे कदापि वरण मत करो ) ॥ २९ ॥

**किं ते तथा मतिरमुष्य यथाऽऽशयः स्यात्त्वत्पाणिपीडनविनिर्मितयेऽनपाशः।**
**कान्मानवानवति नो भुवनं चरिष्णुर्नासावमुत्र न रता भवतीति युक्तम् ? ॥**

किमिति । हे वत्से ! त्वत्पाणिपीडनविनिर्मितये तव पाणिग्रहणकरणाय, अमुष्य नलस्य, आशयोऽभिप्रायः, यथा अपाशः अपगताशो न भवतीत्यनपाशः साभि-लाषः, ते तव, मतिरपि तथा अनपाशा, स्यात् किम् ? साभिलाषा चेत् तत् युक्त-मित्यर्थः। असौ नलः, भुवनं लोकम् , अत्यन्तसंयोगे द्वितीया, चरिष्णुः सन् कान् मानवान् मनुष्यान् , नो अवति ? न रक्षति ? अपि तु सर्वानेव रक्षति इत्यर्थः, भवता त्वम् , अमुत्र अमुष्मिन् नले, रता अनुरक्ता, न इति न युक्तम् , ईदृशे पुरुषे सर्वदा त्वया अभिरन्तव्यमिति भावः। अन्यत्र—अमुष्य वरुणस्य सम्बन्धी शयः पाणिः, त्वत्पाणिपीड़नविनिर्मितये नास्ति पाशो यत्रेति नपाशः पाशास्त्रशून्यः, यथा स्यात् तथा ते मतिः किम् ? पाशास्त्रं त्यक्त्वा त्वत्पाणिग्रहणं किं तेऽभिमतम् ? इत्यर्थः। मानवान् समुन्नतचित्तः, 'मानश्चित्तसमुन्नतिः' इत्यमरः, असौ वरुणः, भुवनं

१. 'चरिष्णून्नासावमुत्र' इति पाठान्तरम् ।

**जलं, 'सलिलं कमलं जलं, जीवनं भुवनं वनम्' इत्यमरः, चरिष्णुः जलरूपेण सञ्चरन्, कान् नो अवति? जलस्यैव सर्वेषां जीवनस्वरूपत्वादिति भावः; अमुत्र वरुणे, नरता नरत्वं, न भवति नास्ति, इति युक्तं, तस्य देवत्वादिति भावः ॥**

**नलपक्षमें**—इस ( नल ) का आशय तुम्हारे साथ विवाह करनेके लिए जिस प्रकार आशान्वित है क्या तुम्हारी बुद्धि भी ( इसके साथ विवाह करनेके लिए ) उसी प्रकार आशान्वित है ? ( अथवा—······जिस प्रकार आशान्वित है, तुम्हारी बुद्धि भी उसी प्रकार की है क्या ? ) । संसारमें गमनशील यह किन मनुष्योंका ( अथवा—मानवान् अर्थात् कुल-शीलादिका मानी तथा संसार में गमनशील यह किनका । पाठा०—यह संसारमें गमनशील किन मनुष्यों का ) रक्षण नहीं करता अर्थात् सभी का रक्षण करता है । इसमें आप अनुरक्त हुई हो यह युक्त ( उचित ) नहीं है ? अर्थात् उचित ही है ( अथवा—यह मनुष्य है, इसमें आप अनुरक्त नहीं हैं यह युक्त है ? अर्थात् नहीं। अथवा—यह मनुष्य ( पुरुषश्रेष्ठ ) है ( अत एव ) इसमें नरता ( मनुष्यता—पुरुषश्रेष्ठता ) होती है यह युक्त होता है अर्थात् इन इन्द्रादि देवोंमें नरता ( मनुष्यता ) युक्त नहीं होती । अथवा—हे भवति !, शेष अर्थ पूर्ववत् जानना चाहिये ) ॥

**वरुणपक्षमें**—इस ( वरुण ) का हाथ तुम्हारे पाणिपीडन ( विवाहमें हस्तग्रहण ) के लिए पाशरहित जैसे होगा वैसी तुम्हारी बुद्धि है क्या ? यह विवाह—कालमें तुम्हारा हाथ पाश-रहित होकर ग्रहण करेगा । अथवा—इसका हाथ तुम्हारे पाणिपीडनके लिए ( होगा ) पाश ( इसका अस्त्र-विशेष ) नहीं । ( अतएव तुम्हें भय छोड़ देना चाहिये ) । जलमें चलनेवाला यह किन मनुष्यों का ( डूबने आदि से ) रक्षण नहीं करता ? अर्थात् जलमें प्रविष्ट मनुष्यको डूबने आदिसे यह वरुण ही रक्षा करता है ( पाठा०—जलमें सञ्च-रणशील किन मनुष्यों का यह रक्षण नहीं करता ? अपि तु यह सब मनुष्यों का रक्षण करता है । अथवा—जलमें सञ्चरणशील यह जलसे मनुष्यों की रक्षा करता है । इसमें आप नहीं अनुरक्त हैं यह युक्त नहीं है अर्थात् इसमें आपको अनुरक्त होना चाहिये, इसमें नरता ( मनुष्यभाव, पक्षा०—'रलयोरभेदः' के नियमसे 'नलता'=नलभाव) नहीं होती यह युक्त ( ठीक ) है अर्थात् यह मनुष्य नहीं किन्तु देव ( वरुण ) है । अथवा-यह ना (मनुष्य) नहीं है ( अत एव ) इसमें आप अनुरक्त हैं यह युक्त है ? अर्थात् आपका इस ( वरुण ) में अनुरक्त होना युक्त नहीं है । अथवा—इस ( वरुण ) में आप अनुरक्त नहीं हैं यह युक्त नहीं है ? अर्थात् आपका इसमें अनुरक्त नहीं होना युक्त ही है ) ॥ ३० ॥

**श्लोकादिह प्रथमतो हरिणा द्वितीयाद्धूमध्वजेन शमनेन समं तृतीयात् ।**
**तुर्यान्नलस्य वरुणेन समानभावं सा जानती पुनरवादि तया विमुग्धा ॥**

श्लोकादिति । इह श्लोकचतुष्टये, प्रथमतः प्रथमात्, श्लोकात् हरिणा इन्द्रेण समं, द्वितीयात् श्लोकात्, धूमध्वजेन अग्निना समं, तृतीयात् श्लोकात्, शमनेन

हुई दमयन्तीने किसी ( पांच नलमें-से किसी एक ) में भी निश्चयको नहीं प्राप्त कर सकी ( पांचोंमें-से किसीको भी सत्य नल होनेका उस दमयन्तीने निश्चय नहीं किया ) । अनन्तर परितापसे आनन्दरहित इसका मुख सूर्यसे पराभूत ( कान्तिहीन किये गये ) चन्द्रकी निन्दा करने लगा अर्थात् दमयन्तीका परितापयुक्त मुख दिनके चन्द्रसे भी अधिक निस्तेज हो गया ॥ ५४ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
स्वादूत्पादभृति त्रयोदशतयाऽऽदेश्यस्तदीये महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ५५ ॥

श्रीहर्षमित्यादि । स्वादूत्पादभृति मधुरार्थधारिणि । त्रयोदशतया आदेश्यः त्रयोदशत्वेन सङ्ख्येयः । गतमन्यत् ॥ ५५ ॥

इति मल्लिनाथविरचिते 'जीवातु' समाख्याने त्रयोदशः सर्गः समाप्तः ॥ १३ ॥

कवीश्वर-समूहके.........किया, उसके रचित सुन्दर नैषधचरित नामक महाकाव्यमें ( सहृदयाह्लादक होनेसे ) स्वादुरसोत्पत्तिसे युक्त अर्थात् अत्यन्त मधुर अर्थवाला यह त्रयोदश सर्ग समाप्त हुआ । शेष व्याख्या चतुर्थसर्गवत् जाननी चाहिये ॥ ५५ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित'का त्रयोदश सर्ग समाप्त हुआ ॥ १३ ॥

---

## चतुर्दशः सर्गः ।

अथाधिगन्तुं निषधेश्वरं सा प्रसादनामाद्रियतामराणाम् ।
यतः सुराणां सुरभिर्नृणान्तु सा वेधसाऽसृज्यत कामधेनुः ॥ १ ॥

अथेति । अथ चिन्तानन्तरं, सा भैमी, निषधेश्वरं नलम्, अधिगन्तुं लब्धुम्, अमराणाम् इन्द्रादीनां, प्रसादनाम् अभिमुखीकरणं, पूजादिना सन्तोषसम्पादनमित्यर्थः, आद्रियत अमोघसाधकत्वेन अवलम्बतेत्यर्थः । अमोघसाधकत्वमेव समर्थयते—यतः पुरा वेधसा सुराणां कामानां धेनुः कामधेनुः कामदुघा, सुरभिः काचन गौः, असृज्यत, नृणान्तु सा सुरप्रसादनैव, कामधेनुः असृज्यत, या यस्य कामान् दुग्धे गौरगौर्वा सैवास्य कामधेनुरिति भावः । अत्र अमरप्रसादनायाः कामधेनुत्वेन रूपणाद्रूपकालङ्कारः ॥ १ ॥

इस ( प्रकार विकल्प या चिन्ता करने ) के बाद उस ( दमयन्ती ) ने निषधराज (नल) को पानेके लिए देवोंके पूजनका आदर किया अर्थात् देवोंको षोडशोपचार पूजनसे

उन्हें प्रसन्न कर नलको पानेमें श्रेयस्कर समझा, क्योंकि ब्रह्माने देवोंके लिए सुरभि (गो-विशेष) को कामधेनु (मनोरथको पूरा करनेवाली) बनाया है और मनुष्योंके लिए तो उस (देव-पूजा) को ही कामधेनु बनाया है। [ देवोंकी इच्छाको पूर्ण करनेवाली 'सुरभि' नामक गौ तथा मनुष्योंकी इच्छाको पूर्ण करनेवाली 'देव-पूजा' ही है, अतएव दमयन्तीका उक्त विचार करना परमोत्तम मार्ग था ] ॥ १ ॥

[1]प्रदक्षिणप्रक्रमणालवालविलेपधूपावरणाम्बुसेकैः।
इष्टञ्च मृष्टञ्च फलं सुवाना देवा हि कल्पद्रुमकाननं नः ॥ २ ॥

प्रदक्षिणेति। प्रदक्षिणप्रक्रमणं प्रदक्षिणरूपेण परिक्रमणम् एव, आलवालं वृक्षमूले जलधारणार्थं सेतुविशेषः, तथा विलेपश्चन्दनादिचर्चा, स एव विलेपः पिण्याकादिलेपः, धूपो दशाङ्गादिर्धूपः, स एव दोहदधूपश्च, आवरणमङ्गदेवतापरिवेष्टनं, तदेव शाखावरणम्, अम्बुसेकोऽभिषेकः, स एव मूलेषु जलसेकः, तेषां द्वन्द्वः तैः करणैः, इष्टञ्च प्रियञ्च, मृष्टञ्च अवदातञ्च, फलमीप्सितं वस्तु, तदेव फलं सस्यं, 'सस्ये हेतुकृते फलम्' इत्यमरः, सुवाना जनयन्तः, सूतेः कर्त्तरि लटः शानजादेशः, देवा हि देवा एव, नोऽस्माकं नृणां, कल्पद्रुमाणां काननं वनम्। अत्र प्रदक्षिणप्रक्रमणाद्यालवालाद्यवयवरूपणाद्देवेषु कल्पद्रुमरूपणाच्च समस्तवस्तुविवर्त्तिसावयवरूपकम् ॥२॥

प्रदक्षिणामें भ्रमणरूप थाला, चन्दनादि-चर्चारूप खली आदिका लेप, (दशाङ्ग) धूपरूप दोहद धूप, अङ्ग-प्रत्यङ्ग देवताका परिवेष्टन (या वस्त्रादि पहनाना) रूप चौतरफा रक्षार्थ घेरा डालना (बाढ़ बनाना) और जलाभिषेकरूप सींचना-अथवा-प्रदक्षिणमें भ्रमण रूप थालेमें चन्दनचर्चन दशाङ्गधूप तथा अङ्ग-प्रत्यङ्ग देवताका परिवेष्टन (पाठा०—...... धूपोंका आचरण)—रूप जलसिञ्चनसे अभीष्ट तथा स्वभावसुन्दर फल अर्थात् मनोरथ (पक्षा०—अभिलषित तथा स्वादिष्ट फल आम आदि) को उत्पन्न करते हुए देव हमलोगोंके (लिए) कल्पद्रुमोंके वन हैं। [ जब एक भी कल्पद्रुम सबका मनोरथ पूरा करता है तो कल्पद्रुमोंका वन होनेपर मनोरथके पूरा होनेमें क्या सन्देह है ?, अतः पूजाद्वारा देवरूप कल्पद्रुमवनसे नलको पानेके लिए प्रयत्न करनेका दमयन्तीने बहुत सुन्दर उपाय सोचा ]॥२॥

---

१. अस्मात्पूर्वं 'प्रकाश' व्याख्यायां वक्ष्यमाणश्लोकः क्षेपकरूपेण दृश्यते। स यथा—

'अथाधिगन्तुं निषधेशमेषां प्रसादनं दानवशात्रवाणाम्।
अचेष्टतासौ महतीष्टसिद्धिराराधनादेव हि देवतानाम् ॥' इति।

अत्र 'सुखावबोध'व्याख्याकारः—'पूर्वोक्त एवार्थो भङ्ग्यन्तरेण निबद्धः, अत एव पाठान्तरम्। केचिदादर्शपुस्तकेषु त्वयं श्लोको नास्त्येव' इत्याह।

२. 'चरणाम्बु' इति पाठान्तरम्।

श्रद्धामयीभूय सुपर्वणस्तान् ननाम नामग्रहणाग्रकं सा ।
सुरेषु हि श्रद्दधतां नमस्या सर्वार्थनिष्प्यङ्गमिथःसमस्या ॥ ३ ॥

श्रद्धेति । सा दमयन्ती, श्रद्धा विश्वासः, तन्मयी तद्युक्ता भूत्वा श्रद्धामयीभूय 'अभूततद्भावे च्वौ समासे क्त्वो ल्यबादेशः' तान् सुपर्वणो देवान्, नामग्रहणाग्रकम् अमुकदेवाय नम इत्यादि नामोच्चारणपूर्वकं यथा तथा, ननाम प्रणामं कृतवती । हि यतः, सुरेषु विषये श्रद्दधतां विश्वसतां, नमस्या नमस्कारः, श्रद्धापूर्वकनमस्कार इत्यर्थः, नमस्यतेः क्यजन्तात् 'अ प्रत्ययात्' इति स्त्रियाम् अ-प्रत्यये टाप्, सर्वेषाम् अर्थानां निधौ पूरणविषये, यान्यङ्गानि साधनानि, तेषां मिथः रहसि, अन्यानपेक्षमेवे त्यर्थः, किमपि आडम्बरमकृत्वैवेति यावत्, समस्या समासार्था, संयोजनकारिका इत्यर्थः, सर्वार्थसाधिका इति यावत्, समस्यते सङ्क्षिप्यते अनयेति समस्या, संपूर्वा-दस्यतेः क्यवन्तात् 'अ प्रत्ययात्' इति स्त्रियाम् अ-प्रत्यये टाप्, 'मिथोऽन्योन्यं रहस्यपि', 'समस्या तु समासार्था' इति चामरः, सति नमस्कारे सर्वसाधनं फलदं नान्यथेति सा नमश्चकारेति निष्कर्षः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ३ ॥

विश्वासयुक्त ( या-बहुत आस्तिक्यवाली ) होकर उस ( दमयन्ती ) ने पहले नामोच्चारणकर ( 'इन्द्राय नमः' इत्यादि कहकर ) उन ( इन्द्रादि ) देवोंको नमस्कार किया, क्योंकि देवोंमें श्रद्धालुलोगोंका नमस्कार सब प्रयोजनोंकी पूर्तिमें दूसरेकी अपेक्षाके विना संयोजक ( पाठा०—सब प्रयोजनोंकी सिद्धिके अङ्गोंके परस्पर पूरणका कारण ) है । [ जिस प्रकार समस्या सब अर्थको पूर्ण पद्यरूप बनकर पूरा करती है, उसी प्रकार श्रद्धापूर्वक किया गया देव-नमस्कार भी नमस्कर्ताओंके सब प्रयोजनोंको दूसरे किसी आडम्बरके विना पूरा करती है ] ॥ ३ ॥

यत्तान्निजे सा हृदि भावनाया बलेन साक्षादकृताखिलस्थान् ।
अभूदभीष्टप्रतिभूः स तस्या वरं हि दृष्टा ददते परं ते ॥ ४ ॥

यदिति । सा भैमी, भावनाया बलेन ध्यानदार्ढ्येन, अखिलस्थान् सर्वगतान्, तान् देवान्, निजे हृदि साक्षादकृत साक्षात् कृतवती, करोतेः कर्त्तरि लुङ् तङ्, 'ह्रस्वादङ्गात्' इति सिचो लोपः, इति यत्, स साक्षात्कार एव, तस्या भैम्याः, अभीष्टे इष्टार्थसिद्धौ, प्रतिभूर्लग्नकः, अभूत्; हि यतः, ते देवाः, दृष्टाः प्रत्यक्षीभूताः, चेत् तदा इति पदद्वयमत्राध्याहरणीयम्; परमवश्यं, वरं ददते । 'न दातुं देवा वरमर्हन्ति न प्रत्यक्षदृष्टा मनुष्येभ्यः' इति श्रुतिः । अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ४ ॥

---

१. 'सिद्ध्यङ्ग' इति पाठान्तरम् ।

उस ( दमयन्ती ) ने सर्वत्र विद्यमान उन देवोंका ध्यानके सामर्थ्य ( या दृढता ) से जो साक्षात्कार किया, वह ( साक्षात्कार, ही ) उसके अभीष्ट का प्रतिभू ( जमानतदार या दानका निश्चायक ) हुआ । क्योंकि ( ध्यान आदिके द्वारा ) देखे गये वे ( देव ) उत्तम वरको देते हैं अर्थात् देवदर्शन कदापि निष्फल नहीं होता ॥ ४ ॥

सभाजनं तत्र ससर्ज तेषां सभाजने पश्यति विस्मिते सा ।
आमुद्यते यत् सुमनोभिरेवं फलस्य सिद्धौ सुमनोभिरेव ॥ ५ ॥

सभाजनमिति । सा भैमी, तत्र सभायां, विस्मिते अकस्मादत्यादरेण देवानां पूजारम्भदर्शनादाश्चर्यान्विते, सभाजने सभ्यजने, पश्यति पश्यन्तं तम् अनादृत्येत्यर्थः, 'षष्ठी चानादरे' इति चकारादनादरे सप्तमी, तेषां देवानां, सभाजनम् आनन्दनं, पूजादिना सन्तोषसम्पादनमित्यर्थः, 'अथ द्वे आनन्दनसभाजने । आप्रच्छनम्' इत्यमरः, मालत्यादिपु संस्कारश्च इत्यपि गम्यते; ससर्ज चकारेत्यर्थः । किमर्थं सुरार्चनमित्याशङ्क्य सन्तुष्टा एव ते फलं ददतीत्यर्थान्तरं न्यस्यति, यत् यस्मात् सभाजनात्, सुमनोभिः उदारचित्तैः पण्डितैः वा, मालत्यादिभिश्च, सुमनोभिर्देवैः पुष्पैश्च, 'मालत्यां पण्डिते पुष्पे देवे च सुमनोऽभिधा' इति विश्वः, फलं हेतुसाध्यं सस्यञ्च, 'सस्ये हेतुकृते फलम्' इत्यमरः, तस्य सिद्धौ सिद्धिप्रसङ्गे, फलदानविषये इत्यर्थः, एवम् इत्थम्, आमुद्यते एव सन्तुष्यते एव, सद्गन्धविशिष्टीभूयते च, मुद्यतेर्भावे लट् । 'आमोदो हर्षगन्धयोः' इत्यमरः, सुमनसां मालत्यादीनां फलपुष्पदानदर्शनात् सुरे सुमनस्त्वेन तथात्वनिश्चयात्तदामोदार्थं तत्सभाजनमन्वतिष्ठदित्यर्थः । अत्रोभयेषाम् अपि सुमनसाम् उभयोरप्यामोदयोश्च फलयोरभेदाध्यवसायेनायमर्थान्तरन्यासालङ्कारः ॥ ५ ॥

उस ( दमयन्ती ) ने वहां पर अर्थात् स्वयम्वर सभामें ( तत्काल देव-पूजन आरम्भ करनेके कारण ) आश्चर्यित सदस्योंके देखते रहनेपर ( या-उन सदस्योंका अनादर कर ) उन ( इन्द्रादि देवों ) का पूजन ( या-प्रसादन, अथवा-मालती आदिका संस्कार ) आरम्भ कर दिया; क्योंकि फल ( मनोरथ, पक्षा०—आम आदिके फल ) की सिद्धिमें प्रशस्त मनवालों ( या पण्डितों, या सज्जनों ) से ही देव प्रसन्न ( पक्षा०—पुष्प विकसित या सुगन्धियुक्त ) होते हैं । ( अथवा —क्योंकि……से इसी प्रकार देव प्रसन्न……) । [ फल लगनेमें पुष्पके विकसित होनेके समान मनोरथ-सिद्धिमें देवोंका प्रसन्न होना आवश्यक होनेसे दमयन्तीने उन्हें प्रसन्न किया ] ॥ ५ ॥

वैशद्यहृद्यैर्म्रदिमाभिरामैरामोदिभिस्तानथ जातिजातैः ।
आनर्च गीत्यन्वितषट्पदैः सा स्तवप्रसूनस्तवकैर्नवीनैः ॥ ६ ॥

वैशद्येति । अथ पूजानन्तरं, सा दमयन्ती, तान् देवान्, वैशद्यमर्थव्यक्तिः, अन्यत्र—विकासश्च, तेन हृद्यैः हृदयप्रियैः, 'हृदयस्य प्रियः' इति यत्-प्रत्ययः, 'हृद-

यस्य हृल्लेखयदणलासेषु' इति हृदादेशः, अदिमा शब्दार्थमाधुर्यम्, अन्यत्र—सौकुमार्यं, तेनाभिरामैः, आमोदयन्तीत्यामोदिनः 'मुदेर्ण्यन्तात्ताच्छील्ये णिनिः' अन्यत्र—आमोदः सौरभमेषामस्तीत्यामोदिनः 'मत्वर्थीय इनिः' तैरामोदिभिः प्रीतिजननैः सुगन्धिभिश्च, जातयः आर्यादीनि छन्दांसि मालत्यश्च, तज्जातैः तदुद्भवैः, आर्यादिजातिच्छन्दोनिबद्धैः मालत्यादिग्रथितैश्च, गीत्यन्विता गीतिच्छन्दोनिबद्धाः, षट्पदाः गाथाविशेषा येषु तैः, अन्यत्र—झङ्कारयुक्तभ्रमरैः, नवीनैः अभिनवैः, स्तोत्रैः, प्रसूनस्तवकैः कुसुमगुच्छैश्च, आनर्च अर्चयामास, स्तवैः पुष्पाञ्जलिभिश्च पूजयामासेत्यर्थः। अर्चभौवादिकाल्लिटि, 'अत आदेः' इत्यभ्यासदीर्घः तस्यानच्। अत्र स्तवानां प्रसूनस्तवकानाञ्चोभयेषाम् अपि अर्चनसाधनत्वेन प्रकृतानामेकार्चनक्रियाभिसम्बन्धात् केवलप्रकृतविषया तुल्ययोगिता, लक्षणन्तु उक्तं प्राक्॥ ६॥

इस (देव-सभाजन) के बाद उस (दमयन्ती) ने विशदता (प्रसादगुण, अथवा—शब्दार्थालङ्कारके होने तथा अपशब्द-भावशून्यतादि दोष रहित होने, पक्षा०—शुभ्रता) से हृदयग्राही, मृदुता (निष्ठुर वर्णादिसे रहित होनेके कारण शब्द-माधुर्य, पक्षा०—कोमलता) से मनोहर, हर्षजनक (पक्षा०—सुगन्धियुक्त), जाति (२६ अक्षरोंके चरणोंवाले छन्दों या अनुष्टुप् आदि) से रचित (पक्षा०—मालतीसे बने हुए), 'गीति' नामक छन्दोविशेषमें रचित छः चरणोंकी गाथाओंवाले (पक्षा०—गूंजते हुए भ्रमरोंवाले) नये (तत्काल बनाये अर्थात् रचे (पक्षा०—गुथे) गये स्तुतिरूप पुष्पोंके गुच्छोंसे उन (देवों) की पूजा की॥

([1]हृत्पद्मसद्मन्यधिवास्य बुद्ध्या दध्यावथैतानियमेकताना।
सुपर्वणां हि स्फुटभावना या सा पूर्वरूपं फलभावनायाः॥ १॥

हृदिति। अथ पूजानन्तरमियमेकतानाऽनन्यवृत्तिस्तत्परा सती हृद्येव पद्मे तद्रूपे गृहे एतानिन्द्रादीन् बुद्ध्याऽधिवास्याधिष्ठाप्य दध्यौ। सर्वगतानामपि देवानां हृदये बुद्ध्या समारोपितं रूपं ध्यानेन साक्षादकृतेति यावत्। हि यस्मात्सुपर्वणां देवानां या स्फुटा भावना ध्यानबलेन प्रत्यक्षता सा फलभावनायाः कार्यसिद्धेः पूर्वरूपं प्रथमं स्वरूपम्। कारणस्य कार्यापेक्षया नियतप्राग्भावित्वाद्देवानां प्रत्यक्षतायाः कार्यमात्रं प्रति कारणत्वात्कार्यकारणसामग्रीरूपां देवताप्रत्यक्षतां ध्यानेनाकृतेत्यर्थः। पूजायाः पूर्वमनन्तरञ्च ध्यानस्येष्टत्वात् 'यत्तान्-' (१४।४) इत्यस्यास्य (१४।७) च श्लोकस्य न पौनरुक्त्यम्[2]। 'उपान्वध्याङ् वसः' इत्यत्राण्यन्तस्य वसेर्ग्रहणात् 'स्वहस्तदत्ते

१. अयं श्लोको म. म. मल्लिनाथेन न व्याख्यात इत्यतो मयाऽसौ 'नारायणभट्ट' कृत 'प्रकाश' व्याख्यया सार्धमिहोपन्यस्तः।

२. 'सुखावबोधव्याख्यायान्तु' यत्तान्—(१४।४) इति श्लोकोत्तरमेतमपि व्याख्याय 'पूर्वोक्तार्थं एवायं निबद्धः। अत एव पाठान्तरम्' इत्युपसंहृतम्। अत एव 'जीवातौ' न व्याख्यायि इति म. म. शिवदत्तशर्माणः।

मुनिमासने-' ( माघ १।१५ ) इतिवण्ण्यन्तस्य वसेः अकृत्यन्तरत्वात् 'हृत्पद्मसद्मनी' त्याधारस्य न कर्मत्वम् ॥

इस ( देव-पूजन ) के बाद इस ( दमयन्ती ) ने एकाग्र चित्त होकर हृत्पद्मरूप गृहमें इन ( इन्द्रादि देवों ) को वसा ( स्थापित ) कर ( पुनः ) ध्यान अर्थात् ध्यानसे साक्षात्कार किया; क्योंकि देवोंकी जो स्पष्ट भावना ( ध्यानादिके द्वारा साक्षात्कार ) है, वह फलभावना ( कार्यसिद्धि ) का पूर्वरूप है। [ कार्यके पहले कारणका होना अत्यावश्यक होनेसे यहांपर देवोंके साक्षात्कारका समस्त कार्योंके प्रति कारण होनेसे दमयन्तीने पहले कारण-सामग्री-रूप देव-प्रत्यक्षताको ध्यानसे किया। पूजाके आरम्भ तथा अन्तमें ध्यान करना आवश्यक होनेसे पूर्वोक्त 'यत्तान्-' ( १४।४ ) तथा इस श्लोक की पुनरुक्तिका दोष नहीं होता ] ॥६॥

भक्त्या[1] तयैव प्रससाद तस्यास्तुष्टं स्वयं देवचतुष्टयं तत् ।
स्वेनानलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात् ? ॥७॥

भक्त्येति । स्वयं स्वत एव, सेवादिकं विनाऽपि पूर्वं तच्चारित्र्यदार्ढ्यादेवेत्यर्थः, तुष्टं सन्तुष्टं, तत् प्रकृतं, देवचतुष्टयम् इन्द्रादिदेवचतुष्कं, तस्या भैम्याः, तया भक्त्या एव क्षणकालकृतसेवयैव, प्रससाद अनुजग्राह, एवकारस्त्वविलम्बसूचनार्थः। तथा हि, स्वेन स्वत एव, स्फुटतां व्यक्ततां, प्रज्ज्वलितत्वमित्यर्थः, यियासोः यातुमिच्छोः, अनलस्य वह्नेः, फूत्कृतेः फूत्कृतस्य, फूत्कारमारुतस्य इत्यर्थः, अपेक्षा कियती खलु स्यात् ? नात्यन्तम् अपेक्षते इत्यर्थः; स्वत एव प्रसन्नस्य देवगणस्य तत्कृता भक्तिः स्वत एव प्रज्ज्वलिष्यतोऽग्नेः फूत्कृतिरिव झटिति कार्यप्रादुर्भावमात्रफला अन्यथाऽपि प्रज्वलनवत् प्रसादावश्यम्भावादिति भावः। अत्र वाक्यद्वये भक्तिफूत्कृत्योः कार्यानपेक्षितत्वलक्षणसमानधर्मस्यैव फूत्कार-कियच्छब्दाभ्यां बिम्बप्रतिबिम्बतया उक्तेर्दृष्टान्तालङ्कारः; 'बिम्बानुबिम्बन्यायेन निर्देशे धर्मधर्मिणाम् । दृष्टान्तालङ्कृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया ॥' इति विद्याचक्रवर्त्तिलक्षणात् ॥ ७ ॥

( स्वयंवरसे पहले दमयन्तीद्वारा की गयी पूजादिके द्वारा पहलेसे ) स्वयं प्रसन्न वे इन्द्रादि चारों देव उस ( दमयन्ती ) की उस ( तत्कालकी गयी थोड़ी ही ) भक्तिसे ही प्रसन्न हो गये। स्वयं स्पष्ट होनेवाली ( जलनेवाली ) अग्निको फूंकने की कितनी अपेक्षा होती है अर्थात् बहुत कम होती है। ( पङ्खा आदिके द्वारा हवा करनेके कारण शीघ्र जलनेवाली अग्नि बहुत थोड़ा फूंकनेसे जलने लगती है, अतः स्वयं प्रसन्न उन इन्द्रादि चारो देवोंका दमयन्ती की थोड़ी भक्तिसे प्रसन्न होना उचित ही है ] ॥ ७ ॥

प्रसादमासाद्य सुरैः कृतं सा सस्मार सारस्वतसूक्तिसृष्टेः ।
देवा हि नान्यद् वितरन्ति किन्तु प्रसद्य ते साधुधियं ददन्ते ॥ ८ ॥

---

१. 'तस्याश्चरित्रादथ ते पवित्रात्प्रागेव हृष्टा झटिति प्रसेदुः' इत्यपि पाठः स्पष्टार्थः' इति नारायणभट्टाः ।

प्रसादमिति । सा भैमी, सुरैः कृतं प्रसादमनुग्रहम्, आसाद्य सरस्वत्या इयं सारस्वती तस्याः सूक्तिसृष्टेः 'अत्याजि' इत्यादेः पूर्वसर्गोक्तश्लिष्टोक्तिगुम्फस्य, सस्मार तदर्थतत्त्वं जज्ञावित्यर्थः 'अधीगर्थ—' इत्यादिना कर्मणि शेषे षष्ठी । तस्याः नलप्राप्तौ देवानां कोऽयमनुग्रहो यत् सारस्वतसूक्तिपरिज्ञानमात्रम् ? तत्राह,—हि यतः, ते देवाः प्रसद्य अनुगृह्य, सदेः क्त्वो ल्यप् , अन्यत् बुद्धेरन्यत् किञ्चित् देयमित्यर्थः, न वितरन्ति, किन्तु साधुधियं फलप्राप्त्युपायपरिज्ञानं, ददन्ते प्रयच्छन्ति, 'दद दाने' इति धातोर्भौवादिकाल्लट् तङ् , तदाहुः,—'न देवा दण्डमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्धया संयोजयन्ति तम् ॥' इति ॥ ८ ॥

उस ( दमयन्ती ) ने देवोंके द्वारा की गयी प्रसन्नताको प्राप्तकर अर्थात् इन्द्रादि देवोंके प्रसन्न होनेपर सरस्वती देवीके श्लेषमयी सुन्दर उक्तियोंके समूह ( या-रचना ) का स्मरण किया अर्थात् सरस्वतीके कहे हुए श्लेषयुक्त वचनोंसे उत्पन्न सन्देहको छोड़कर वास्तविक अर्थका स्मरण होनेसे वास्तविक नलको पहचान लिया, यह निश्चित है कि देव दूसरा कुछ नहीं देते, किन्तु वे प्रसन्न होकर अच्छी ( ग्राह्याग्राह्यज्ञानयुक्त ) बुद्धि देते हैं। [ उस देवप्रदत्त सद्बुद्धिके द्वारा ही दमयन्तीने सरस्वतीके श्लिष्ट वचनोंके द्वारा कहे गये अनेक अर्थोंको छोड़कर स्वाभीष्टसाधक अर्थका ज्ञान होनेसे वास्तविक नलको पहचान लिया ] ॥ ८ ॥

शेषं नलं प्रत्यमरेण गाथा या या समार्था खलु येन येन ।
तां तां तदन्येन सहालगन्तीं तदा विशेषं प्रति सन्दधे सा ॥ ९ ॥

शेषमिति । या दमयन्ती शेषं पञ्चमं परमार्थं, नलं प्रति, विरचितेति शेषः, या या गाथा 'अत्याजिलब्ध' इत्यादिको यो यः श्लोकः, येन येन अमरेण देवेन, समार्था समानाभिधेया, खलु, अत एव तदन्येन तत ततः, मुख्यार्थरूपात् इन्द्रादेरित्यर्थः, अन्येन श्लेषमहिम्ना प्रतीयमानेन सत्येन नलेन, सह अलगन्तीम् असङ्गतां, तत्परत्वेनानिश्चितामिति यावत् , तां तां गाथां, तदा देवतानुग्रहलब्धमत्युद्बोधकाले, विशेषं प्रति सत्यनलं प्रति, सन्दधे नलपरत्वेन योजयामसेत्यर्थः ; इन्द्रादिपरत्वशङ्कां विहाय नलपरत्वं निश्चिकायेति तात्पर्यार्थः ॥ ९ ॥

उस ( दमयन्ती ) ने शेष ( इन्द्रादि चारों देवोंसे बाकी बचे हुए ) नलके प्रति ( सरस्वती देवीके द्वारा कही गयी ) जो-जो गाथा ( 'अत्याजि-' इत्यादि चार १३।२७-३० श्लोक ) जिस-जिस ( देव अर्थात् क्रमशः इन्द्र, अग्नि, यम तथा वरुण ) के साथ समान अर्थवाली थी, अत एव उस-उस ( मुख्यार्थरूप इन्द्र आदि ) से भिन्न ( श्लेषद्वारा प्रतीयमान वास्तविक ) नल, अथवा—अग्नि आदि ) के साथ नहीं लगती हुई अर्थात् असङ्गत उस-उस गाथाको तब ( इन्द्रादिके प्रसन्न हो जानेपर ) विशेष अर्थात् वास्तविक नलके प्रति लगाया अर्थात् श्लेष द्वारा प्रतीयमान इन्द्रादि चारों देवोंको छोड़कर इस गाथाको वास्तविक नलके लक्ष्यसे सरस्वती देवीद्वारा कही गयी मानकर उस ( वास्तविक नल ) का निश्चय किया। ( अथवा—शेष इन्द्रादिसे पांचवें स्थानपर बैठे हुए वास्तविक नलको लक्ष्यकर जो-जो गाथा

जिस-जिस इन्द्रादिके साथ ('ब्रूमः किमस्य-' आदि चार गाथाएं (१३।३-६) इन्द्रके साथ, 'एष प्रतापनिधिः-' आदि चार गाथाएं (१३।९-१२) अग्निके साथ, 'दण्डं बिभर्ति-' आदि चार गाथाएं (१३।१५-१८) यमके साथ तथा 'या सर्वतो-' आदि चार गाथाएं (१३।२१-२४) वरुणके साथ) तुल्य अर्थवाली थीं, उस (दमयन्ती) ने तब (इन्द्रादि देवोंके प्रसन्न होकर सद्बुद्धि देनेके बाद) उस-उस इन्द्रादिरूप मुख्यार्थसे श्लेषशक्तिके सामर्थ्यसे प्रतीयमान नलरूप अर्थके साथ निश्चित रूपसे नहीं लगती अर्थात् असम्बद्ध अर्थवाली होती हुई उस-उस गाथा को विशेष (अपने-अपने आकार धारण करनेसे भिन्न इन्द्रादि देवों) के प्रति संयुक्त किया अर्थात् ('ब्रूमः किमस्य-' (१३।३) से लेकर 'शोणं पदप्रणयिनं-' (१३।२४) तक श्लेषार्थयुक्त चार-चार गाथाओंको इन्द्रादिके तथा सब गाथाओंको नलके साथ सम्बद्ध होनेसे इन्द्रके लक्ष्यसे कही गयी 'ब्रूमः किमस्य-' आदि चार गाथाओं (१३।३-६) को केवल इन्द्रविषयक, 'एष प्रतापनिधि-' आदि चार गाथाओं (१३।९-१२) को अग्नि-विषयक, 'दण्डं बिभर्ति-' आदि चार गाथाओं (१३।१५-१८) को यम-विषयक और 'या सर्वतो-' आदि चार गाथाओं (१३।२१-२४) को वरुण-विषयक ही समझा-इन गाथाओं को नल-विषयक नहीं समझा अर्थात् जो चार गाथाएं इन्द्र तथा नल दोनोंका वर्णन श्लेषशक्तिके द्वारा करती थीं उन्हें-उन्हें केवल इन्द्रविषयक ही समझा नल-विषयक नहीं, इसी प्रकार अग्नि, यम तथा वरुणके साथ नलका भी श्लेषशक्तिके द्वारा वर्णन करनेवाली ४-४ गाथाओंको अग्नि-यम-वरुण-विषयक ही समझा; नल-विषयक नहीं) ॥ ९ ॥

**एकैकवृत्तेः पतिलोकपालं पतिव्रतात्वं जगृहुर्दिशां याः।**
**वेद स्म गाथा मिलितास्तदाऽसावाशा इवैकस्य नलस्य वश्याः ॥१०॥**

एकैकेति। या गाथाः 'अत्याजि' इत्यादयः श्लोकाः, एकैकस्मिन् लोकपाले वृत्तेः वर्त्तमानाद्धेतोः, प्रतिलोकपालं प्रत्येकदिक्पालं प्रति, दिशां पूर्वादीनां, पतिव्रतात्वं जगृहुः तत्साम्यात् प्राच्यादिदिश इव इन्द्राद्येकैकलोकपालपरा बभूवुरित्यर्थः, तदा देवताप्रसादकाले, असौ भैमी, मिलिताः समस्ताः, गाथा आशा दिश इव, एकस्य नलस्य वश्याः वशङ्गताः, नलमात्राभिधायिनीरित्यर्थः, वशं गत इति यत् प्रत्ययः, वेद स्म 'लट् स्मे' इति भूते लट्, 'विदो लटो वा' इति णलादेशः, आशानां प्रत्येकम् इन्द्राद्येकैकलोकपालपरत्वेऽपि सर्वासां पूर्वादिदिशां यथा चक्रवर्त्तिनलैकवश्यत्वात् नलपरत्वं तथा गाथा अपि आपातत एकैकश एकैकलोकेशपरतया प्रतीता अपि सामस्त्येन नलपरा एवेति विवेदेत्यर्थः; तस्य सर्वाशाविजयित्वादाशानां तत्परत्वं गाथानान्तु देव्याः चतुरोक्तिभङ्गिपर्यालोचनयेति भावः ॥ १० ॥

जो ('अत्याजि-' इत्यादि चार (१३।२७-३०) गाथाएं एक-एक (इन्द्रादि चारों देवोंमें-से प्रत्येक गाथा क्रमशः इन्द्र, अग्नि, यम तथा वरुण) में वर्तमान रहनेसे प्रत्येक लोकपाल (इन्द्रादि चारो देवों) के प्रति दिशाओं (पूर्व, अग्नि कोण, दक्षिण तथा पश्चिम)

के पातिव्रत्य को ग्रहण करती अर्थात् कहती थीं, मिली हुई उन ( चारो ) गाथाओंको तब ( इन्द्रादि चारो देवोंके प्रसन्न होनेपर ) इस ( दमयन्ती ) ने मिलित दिशाओं ( दश दिशाओं ) के समान केवल नलके वशीभूत समझा। [ पहले उक्त चारो गाथाओंमें-से एक-एक गाथाओंद्वारा समानार्थक होनेसे नलके बोधके साथ-साथ क्रमशः इन्द्रादि चारों देवोंके पूर्व, अग्निकोण, दक्षिण तथा पश्चिम दिशाओंके पति होनेका बोध होता था; किन्तु इन्द्रादिके प्रसन्न हो जानेपर उन चारो गाथाओंको दमयन्तीने चक्रवर्ती नलको सब दिशाओंका स्वामी होनेसे नलार्थक ही समझा ] ॥ १० ॥

या[1] पाशिनैवाशनिपाणिनैव गाथा यमेनैव समाग्निनैव ।
तामेव मेने मिलितां नलस्य सैषा विशेषाय तदा नलस्य ॥ ११ ॥

येति। 'किं ते—' ( १३।३० ) इत्यादिर्या गाथा पाशिनैव वरुणेनैव समा तुल्यार्था न त्वन्येनेन्द्रादिना, या च 'अत्याजि—' ( १३।२७ ) इत्यादिर्गाथा अशनिपाणिनेन्द्रेणैव समा न त्वन्येन देवेन, या च 'यच्चण्डिमा—'( १३।२९ ) इत्यादिर्गाथा यमेनैव समा न त्वन्येन, या च 'येनामुना—' ( १३।२८ ) इत्यादिरग्निनैव तुल्या न त्वन्येन, नलस्य सम्बन्धिनीं मिलितां समुदितां चतुष्टयरूपां तां गाथामेव तदा देवप्रसादानन्तरं सैषा भैमी नलस्य विशेषायेन्द्रादिभ्यो भेदज्ञानाय मेने। इन्द्रादीनामेकैकस्यामेव गाथायां वर्तमानत्वात्, नलस्य तु सर्वत्रानुगतत्वात् 'अत्याजि—' इत्यादिगाथाचतुष्टय ( १३।२७-३० ) प्रतिपाद्यो यः, स एव नल इति तामेव गाथां मिलितां नलस्य भेदज्ञापिकामज्ञासीदिति भावः। या नलस्य गाथेति वा सम्बन्धः। या पाशिनैवेन्द्रेणैव, यमेनैवाग्निनैव समा गाथा नलस्य सम्बन्धिनीं मिलितां तामेवानलस्य नलव्यतिरिक्तस्येन्द्रादेर्भेदाय मेने। मिलितया तया कृत्वा नले निश्चिते सति नान्तरीयकत्वात्तदितरे देवा अपि तथैव निश्चिता इति भाव इति वा। मिलितां तामेव गाथां नलस्य विशेषाय तथा नलेतरस्येन्द्रादेर्भेदाय मेने इति वा व्याख्येयम्। या पाशिनैवेत्यादेरेवकारान् परस्परसमुच्चयार्थानप्यङ्गीकृत्य या नलसम्बन्धिनी गाथा पाशिनाऽपि, इन्द्रेणापि, यमेनापि, अग्निनापि तुल्यार्थाऽभूत् तां 'देवः पतिः—' ( १३।३३ ) इत्यादि मिलितां पञ्चार्थां गाथां देवप्रसादादनन्तरं नलस्यैव विशेषाय मेने। देवैः प्रसन्नैः स्वीयस्वीयाकारेषु धृतेषु पञ्चार्थत्वेन प्रतिभातामपीदानीमेकस्य नलस्यैव प्रतिपादिकामज्ञासीदिति भाव इति। 'देवः पतिः—' ( १३।३३ ) इतीयमेव गाथा विषय इति ज्ञेयम्। अवधारणार्थेष्वप्येवकारेष्वियमेव गाथा विषय इति व्याख्येयम्। अयं श्लोकः 'शेषं नलं—' ( १४।९ ) 'एकैकवृत्तेः—' ( १४।१० ) इति श्लोकाभ्यां समानार्थः[2]। अनलस्येति प्रत्येकपर्यवसायित्वादेकवचनम् ॥

१. अयं श्लोको म० म० मल्लिनाथेन न व्याख्यात इत्यतो मया नारायणभट्टकृतया 'प्रकाश'व्याख्यया सहेहोपन्यस्त इत्यवधेयम्।

२. अत्र म० म० शिवदत्तशर्माणः—' केषुचिदादर्शेषु 'शेषं नलं—' ( १४।९ )

जो ( 'किं ते—' ( १३।३० ) गाथा वरुणके साथ ही समान अर्थ रखती थी, ( इन्द्र, अग्नि और यमके नहीं ), जो ( 'अत्याजि—' १३।२७ ) गाथा इन्द्रके साथ ही समान अर्थवाली थी ( अग्नि, यम और वरुणके नहीं ); जो ('यच्चण्डिमा—' १३।२९) गाथा यमके साथ ही समान अर्थवाली थी ( इन्द्र, अग्नि और वरुणके नहीं ) तथा जो ( 'येनामुना—'१३।२८ ) गाथा अग्निके साथ ही समान अर्थ रखती थी ( इन्द्र, यम और वरुणके नहीं ); नल-सम्बन्धिनी सम्मिलित उन चारो ( १३।२७—३० ) गाथाओंको इन्द्रादि देवोंके प्रसन्न हो जानेपर दमयन्तीने नलके विशेष अर्थात् इन्द्रादिसे भेदज्ञानके लिए समझा ( इन्द्रादि-सम्बन्धी अर्थ क्रमशः एक-एक गाथामें तथा नल-सम्बन्धी अर्थ चारो गाथाओं ( १३।२७—३० ) में होनेसे उन चारो गाथाओंको इन्द्रादि चारो देवोंसे नलके भेदको बतलानेवाली माना। अथवा—उन चारो गाथाओंसे नलका निश्चय हो जानेपर 'नान्तरीयक' न्यायसे उसीसे अन्य देवोंका भी निश्चय ( ज्ञान ) किया। अथवा—सम्मिलित चार गाथाओंको नल-भिन्न इन्द्रादिके भेदके लिए माना। अथवा—जो ( 'देवः पतिः—' १३।३३ ) गाथा वरुणके साथ भी, इन्द्रके साथ भी, यमके साथ भी और अग्निके साथ भी समान अर्थवाली मिलित पांच अर्थोंवाली उस गाथाको इन्द्रादि देवोंके प्रसन्न हो जानेपर दमयन्तीने नलके विशेषके लिए माना अर्थात् पहले पञ्चनलीके साथ समान अर्थवाली भी उस गाथाको तब ( इन्द्रादि देवोंके प्रसन्न होकर दमयन्तीको सद्बुद्धि देने, या अपना-अपना रूप धारण कर लेनेपर ) दमयन्तीने केवल नलका अर्थ बतानेवाली माना )॥ १ ॥

**निश्चित्य शेषं तमसौ नरेशं प्रमोदमेदस्वितराऽऽन्तराऽभूत्।**
**देव्या गिरां भावितभङ्गिराख्यच्चित्तेन चिन्तार्णवयादसेदम्॥ ११॥**

निश्चित्येति। असौ दमयन्ती, शेषं पञ्चमं, तं प्रसिद्धं, नरेशं नैषधं, निश्चित्य प्रमोदमेदस्वितरम् आनन्दमेदुरतरम्, आन्तरम् अन्तरङ्गं यस्याः सा तादृशी अभूत्। अथ देव्याः गिरां भाविता परिज्ञाता, भङ्गिः प्रयोगचातुरीविशेषः यया सा तादृशी सती, चिन्तार्णवयादसा नलप्राप्त्युपायचिन्तासागरजलग्राहभूतेन, चित्तेन इदं वक्ष्यमाणम्, आख्यत् अवोचत्। ख्यातेर्लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः। अत्र चित्ते यादस्त्वारोपणात् रूपकालङ्कारः॥ ११॥

वह ( दमयन्ती ) शेष इन्द्रादि चारो देवोंसे भिन्न पांचवें ) उस ( सुप्रसिद्ध ) नरेश मनुष्योंका राजा नल, अथवा—'र-ल' का अभेद मानकर 'नलेश' अर्थात् राजा-नल का निश्चयकर अत्यन्त हर्षसे उल्लसित हृदयवाली अर्थात् अतिशय प्रसन्न हुई। (फिर सरस्वती) देवीके वचनोंके श्लेषोक्ति क्रम ( अथवा—वाग्देवीके भङ्गी ( श्लेषमय रचना-प्रकार ) को विचार करनेवाली इस ( दमयन्ती ) ने ( पहले देवों तथा नलके विषयमें सन्देह रहनेकी

---

'एकैकवृत्तेः—' ( १४।१० ) इति गाथाद्वयेन गतार्थत्वादियं गाथा नास्त्येव इति सुखावबोधा। अत एव जीवातौ न व्याख्याता इति।

अवस्थामें ) चिन्ता-रूपी समुद्रका जलजन्तु ( अथवा—( अब निश्चय हो जानेपर भी उसके प्राप्त्युपायरूप— ) चिन्ता-समुद्रके जलजन्तुरूप चित्तसे यह ( १३।१२-१५ ) कहने लगी अर्थात् मनमें ही सोचने लगी ॥ ११ ॥

**सा भङ्गिरस्याः खलु वाचि काऽपि यद् भारती मूर्त्तिमती मतीयम् ।**
**श्लिष्टं निगद्याऽऽदृत वासवादीन् विशिष्य मे नैषधमप्यवादीत् ॥१२॥**

**अथ चित्तेन यदाख्यत् तदेवाह, सेति । अस्याः देव्याः, वाचि सा वक्ष्यमाणा, काऽपि अपूर्वा, भङ्गिः प्रयोगप्रकारः, खलु, यत् यस्मात् भङ्गिविशेषात्, इयं पुरोवर्त्तिनी, मूर्त्तिमती विग्रहवती, सती सत्यवादिनी भारती वाग्देवता, श्लिष्टं श्लिष्टार्थं यथा तथा, निगद्य उक्त्वा, वासवादीन्, इन्द्रादीन्, आदृत आदृतवती, तानेव उपाचरदेवेत्यर्थः, दृङो लुङि 'ह्रस्वादङ्गात्' इति सलोपः, अथ च नैषधं नलमपि, मे मह्यं, विशिष्य इन्द्रादिभ्यो विशेषं कृत्वा, अवादीत्, किन्तु अहमेव न वेद्मीति भावः ॥**

इस ( सरस्वती देवी ) के वचनमें वह ( विलक्षण ) कोई ( अनिर्वचनीय ) भङ्गी ( रचनाशैली ) है, क्योंकि शरीरिणी एवं सत्यवादिनी इस सरस्वतीने श्लेषयुक्त ( 'अत्याजि—' इत्यादि १३।२७—३० श्लोकों ) को कहकर इन्द्रादिका आदर किया और विशेषकर ( इन्द्रादिसे अधिक, या इन्द्रादिसे भिन्नकर ) मुझसे नलको भी कह दिया। ( अथवा—वह जगत्प्रसिद्ध ) शरीरिणी सरस्वती देवी यही है, क्योंकि इसके वचनमें कोई ( अनिर्वचनीय अर्थात् अलौकिक रचनाशैली है,.......... ) ॥ १२ ॥

**जग्रन्थ सेयं मदनुग्रहेण वचःस्रजः स्पष्टयितुं चतस्रः ।**
**द्वे ते नलं लक्षयितुं क्षमेते ममैव मोहोऽयमहो ! महीयान् ॥ १३ ॥**

**जग्रन्थेति । सा इयं देवी, मदनुग्रहेण मयि अनुग्रहबुद्ध्या, स्पष्टयितुं नलं [illegible], चतस्रः वचःस्रजः वचनमालिकाः, जग्रन्थ ग्रथितवती, तत्र ते इन्द्राग्नि- [illegible], द्वे आद्ये द्वे एव वचःस्रजौ, नलं लक्षयितुम् अभिव्यञ्जयितुं, क्षमेते शक्नुतः, ताभ्यामेव स्फुटतरं प्रतीतेरन्ये द्वे वृथेति भावः; किन्तु ममैव अयं महीयान् महत्तरः, मोहः, अहो ! आश्चर्यं यत् चतसृभिरपि न वेद्मीति भावः ॥ १३ ॥**

उस ( जगत्प्रसिद्ध ) इस ( सरस्वती देवी ) ने मेरे ऊपर अनुग्रहसे ( नलको ) स्पष्ट करनेके लिए जिन चार वचनमालाओं ( अत्याजि—' १३।२७।३० ) को गूथा अर्थात् जिन चार श्लोकोंको रचा, ( उनमें ) वे दो ('...महीमहेन्द्रः' ( १३।२७ ), '...नलमुदीरितमेव' ( १३।२८ ), अथवा—'...नामग्राहं मया नलमुदीरितमेवमत्र' ( १३।२८ ), '...नले सहजरागभरात्' ( १३।२९ ) वचनमाला ( श्लोक ) नलको लक्षित ( स्पष्ट ) करनेके लिए समर्थ थीं उसके लिए चारकी आवश्यकता नहीं थी, खेद है कि मेरा ही यह बड़ा भारी मोह था ( कि मैं इतना स्पष्ट सरस्वती देवीके कहनेपर भी नलका निश्चय नहीं कर सकी। अथवा—पूर्वोक्त उन चार वचनमालाओंको स्पष्ट करनेके लिए जो दो ('त्वं याऽर्थिनी' ( १३।३२ ), 'देवः पतिः' ( १३।३३ ), वचनमालाओंको सरस्वती देवीने रचा, वे दो नलको

स्पष्ट करनेके लिए समर्थ थीं। 'त्वं याऽर्थिनी' ( १३।३२ ) इससे प्रथम व्याख्यानमें नलका ही स्पष्ट प्रतिपादन करनेसे दूसरे व्याख्यान द्वारा देवोंको सन्तुष्टकर (या-छोड़कर) 'नलको ही तुम स्वीकार करो' इस प्रकार नलका ही प्रतिपादन करनेसे 'देवः पतिः' ( १३।३३ ) इसके द्वारा भी लोकपालोंका अंश होनेके कारण नलके ही पांचोंका सम्भव होनेसे तथा 'यद्येनमुज्झसि वरः कतरः परस्ते' ( १३।३३ ) के द्वारा भी नलको स्वीकार करनेके लिए ही बार-बार सरस्वती देवीके प्रेरणा करनेपर भी मैंने बहुत बड़े मोहमें पड़कर उस देवीके अभिप्रायको नहीं समझा यह आश्चर्य है ॥ १३ ॥

**श्लिष्यन्ति वाचो यदमूरमुष्याः कवित्वशक्तेः खलु ते विलासाः ।**
**भूपाललीलाः किल लोकपालाः समाविशन्ति व्यतिभेदिनोऽपि ॥१४॥**

अत्याजीत्यादिश्लोकचतुष्टयं नलमेवाचष्टे, किन्तु भङ्ग्या इन्द्रादिचतुष्टयमपि स्पृशतीत्याह, श्लिष्यन्तीति । अमुष्याः देव्याः, अमूः वाचः अत्याजीत्यादयो गाथाः, श्लिष्यन्ति नलमिवेन्द्रादीनपि स्पृशन्ति, इति यत्, ते तच्छ्लेषणमित्यर्थः, विधेयीभूतविलासस्य प्राधान्यात्तल्लिङ्गसङ्ख्यानिर्देशः; कवित्वशक्तेः काव्यरचनानैपुण्यस्य, विलासाः विकासाः, खलु, कवित्वधर्मोऽयं यदन्यपरेणापि शब्देन श्लेषभङ्ग्या अर्थान्तरप्रत्यायनम्, अलङ्कारत्वान्न तु तात्पर्यमिति भावः । तथा च श्लेषमहिम्ना तेषां नलसारूप्याच्च तत्परत्वभ्रान्तिरित्याह—भूपालस्य नलस्य, लीला इव लीला येषां ते तद्रूपधारिणः, लोकपालाः व्यतिभेदिनः नलात् भेदवन्तोऽपि, समाविशन्तिः श्रोतृबुद्धौ लगन्ति किल; ततो ममैवायं व्यामोह इति भावः ॥ १४ ॥

इस ( सरस्वती देवी ) के ये वचन ( "अत्याजि-" इत्यादि चार श्लोक १३।२७-३० ) अनेकार्थक होनेसे ) जो श्लिष्ट ( नलार्थक होते हुए भी इन्द्रादि-देवार्थक भी ) होते हैं, वे ( देवीकी ) कवित्वशक्ति के विलास ( विस्तार ) हैं ( उच्चतम कवित्व शक्तिके विना किसी एकके लक्ष्यसे कहे गये श्लोक उससे भिन्नको लक्षित नहीं कर सकते ); क्योंकि राजा नलकी लीलावाले अर्थात् नलका रूप धारण किये हुए लोकपाल ( इन्द्रादि चारो देव, बुद्धिमें ) प्रविष्ट होते समझमें आते ) हैं । अथवा—परस्पर ( या-नलसे ) भेद वाले भी लोकपाल राजा ( नल ) के आकारको धारण करनेवाले श्लोकोंमें श्लेष शक्तिके द्वारा मूर्तिमान् होकर दिखलायी पड़ते हैं ।

[ परस्परमें आकृति, कर्म, स्थानादिके कारण भिन्न भी ये इन्द्रादि चारो लोकपाल अंश द्वारा राजा नल बनकर एक ही रहे हैं, अतः लोकपालोंका अंश होनेसे नलके लिए ही प्रयुक्त किये गये सरस्वती देवीके वचन श्लेषको कहते हैं यह कवित्वशक्तिका प्रभाव है ] ॥

**त्यागं महेन्द्रादिचतुष्टयस्य किमभ्यनन्दत् क्रमसूचितस्य ? ।**
**किं प्रेरयामास नले च तन्मां का सूक्तिरस्या मम कः प्रमोहः ? ॥**

स्वव्यामोहमेव प्रकटयति-त्यागमिति । इयं देवी क्रमसूचितस्य क्रमनिर्दिष्टस्य,

महेन्द्रादिचतुष्टयस्य त्यागं पुराकृतं परिहारं, किं किमर्थम्, अभ्यनन्दत्? अन्वमोदत? माञ्च किं किमर्थं, नले विषये प्रेरयामास? यद्यस्याः मदनुजिघृक्षा न स्यादिति भावः। तत् तस्मात्, अस्याः देव्याः, सूक्तिः साधूक्तिः, 'अत्याजीत्यादि सत्योपदेशः इत्यर्थः, का? मम प्रमोहः कः? अहो घण्टापथे स्खलितमिति भावः ॥ १५ ॥

( इस सरस्वती देवीने 'अत्याजि-' इत्यादि चार ( १३।२८-३० ) श्लोकोंसे या 'त्वं यार्थिनी-' इत्यादि दो ( १३।३२-३३ ) श्लोकोंसे इन्द्रादि चारोंके त्यागका क्यों अनुमोदन किया? और नलमें ( या-नलमें ही ) मुझको क्यों प्रेरित किया? ( एक ही वाक्यसे उक्त दोनों कार्य किया यह आश्चर्य है ), इस कारण इस ( सरस्वती देवी ) की वह कौन-सी सूक्ति है? अर्थात् यह लोकोत्तर वर्णन करने की चतुरता है तथा मेरा कौन-सा मोह है अर्थात् यह मेरा मोह भी लोकोत्तर है? [ इस प्रकार सरस्वती देवीके स्पष्ट कहने पर भी मुझे मोहमें पड़ना नहीं चाहता था। अथच—सरस्वतीने इन्द्रादिके त्याग का अनुमोदन क्यों किया? तथा नलके लिए मुझे प्रेरित क्यों किया? अर्थात् दोनों ही कार्य मेरे ऊपर अनुग्रह होनेसे किये ]॥ १५ ॥

**परस्य दारान् खलु मन्यमानैरस्पृश्यमानाममरैर्धरित्रीम् ।**
**भक्त्येव भर्त्तुश्चरणौ दधानां नलस्य तत्कालमपश्यदेषा ॥ १६ ॥**

अथ भूमिस्पर्शादिभिः षड्भिः चिह्नैः सा नलज्ञानप्रकारमाह,-परस्येत्यादि। परस्य दारान् मन्यमानैरिव परभार्या इति बुध्यमानैरिवेत्युत्प्रेक्षा, राजदारत्वात् भुव इति भावः; 'भार्या जायाऽथ पुं भूम्नि दाराः' इत्यमरः, अमरैः अस्पृश्यमानां, पराङ्गनास्पर्शनिषेधादिति भावः, भक्त्येव पतिभक्त्या इवेत्युत्प्रेक्षा, भर्त्तुः पत्युः, नलस्य चरणौ दधानां धरित्रीम् एषा दमयन्ती, तत्कालं तस्मिन् काले, अत्यन्तसंयोगे द्वितीया अपश्यत्; देवा हि भूमिं न स्पृशन्ति अयन्तु स्पृशतीत्येतदेकं तावच्चिह्नमिति भावः ॥ १६ ॥

उस समय ( इन्द्रादिके प्रसन्न होने पर इस ( दमयन्ती ) ने मानो दूसरेकी स्त्री मानते हुए देवोंसे अस्पृष्ट ( नहीं स्पर्श की गयी ) तथा भक्तिसे ही पति नलके चरणोंको धारण करती हुई पृथ्वीको देखा [ यहां पर नलको पृथ्वीपति होनेके कारण नलपत्नी पृथ्वीको देवोंद्वारा परपत्नी-स्पर्श धर्मविरुद्ध होनेसे स्पर्श नहीं करने तथा पृथ्वीद्वारा अपने पति नलके चरणोंको धारण अर्थात् स्पर्श करनेकी उत्प्रेक्षा की गयी है। दमयन्तीने देवोंको भूमिसे कुछ ऊपर तथा नलको भूमि पर स्थित देखा ]॥ १६ ॥

**सुरेषु नापश्यदवेक्षताक्ष्णोर्निमेषमुर्वीभृति सम्मुखे सा ।**
**इह त्वमागत्य नले मिलेति संज्ञानदानादिव भाषमाणम् ॥ १७ ॥**

सुरेष्विति। सा दमयन्ती, सुरेषु इन्द्रादिषु, अक्ष्णोः निमेषं न अपश्यत्, सम्मुखे स्वाभिमुखस्थिते, उर्वीभृति नृपे नले तु, हे दमयन्ति! त्वम् इह आगत्य इतः एत्य,

नले मिल सङ्गच्छस्व, इति संज्ञानदानात् संज्ञाकरणात्, आह्वानसूचकचक्षुश्चेष्टाविशेषकरणादित्यर्थः, भाषमाणं ब्रुवाणमिव स्थितमित्युत्प्रेक्षा, निमेषम् अवैक्षत, इदमपरं चिह्नमिति भावः ॥ १७ ॥

सामने स्थित उस ( दमयन्ती ) ने देवोंमें निमेष ( पलकका गिरना ) नहीं देखा तथा राजा नलमें 'तुम यहां आकर ( मुझसे ) मिलो' ऐसे सङ्केतसे भाषण करते हुएके समान निमेषको देखा ॥ १७ ॥

नाबुद्ध बाला विबुधेषु तेषु क्षोदं क्षितेरैक्षत नैषधे तु ।
पत्ये सृजन्त्याः परिरम्भमस्याः सम्भूतसम्भेदमसंशयं सा ॥ १८ ॥

नेति । सा बाला भैमी, तेषु विबुधेषु देवेषु क्षितेः क्षोदं रजः, धूलिमित्यर्थः, न अबुद्ध न ऐक्षतेत्यर्थः, तैजसेषु देवेषु भूस्पर्शाभावेन तदसङ्क्रमादिति भावः; बुध्यतेर्लुङि तङि 'झलो झलि' इति सिचः सलोपः । नैषधे नले तु, पत्ये स्वभर्त्रे, पृथिवीस्वामिने नलाय इत्यर्थः, परिरम्भं सृजन्त्याः आलिङ्गनं ददत्याः, अस्याः क्षितेः सकाशात्, असंशयं यथा तथा, सम्भूतसम्भेदं सञ्जातसंश्लेषम्, असंशयमिति पदम् उत्प्रेक्षावाचकम्, आलिङ्गनसङ्क्रान्तमिव स्थितमित्यर्थः, क्षोदमिति पूर्वेणान्वयः, ऐक्षत; रजःसम्भेदोऽपरं चिह्नमिति भावः ॥ १८ ॥

बाला ( दमयन्ती ) ने उन देवोंमें पृथ्वीकी धूलिको नहीं देखा तथा नलमें पति ( नल ) के वास्ते मानो आलिङ्गन करती हुई ( पृथ्वीके ) उत्पन्न संसर्गको देखा ॥ १८ ॥

स्वेदः स्वदेहस्य वियोगतापं निर्वापयिष्यन्निव संसिसृक्षोः ।
हीराङ्कुरश्चारुणि हेमनीव नले तयाऽलोकि न दैवतेषु ॥ १९ ॥

स्वेद इति । तया दमयन्त्या, संसिसृक्षोः संस्रष्टुं नलेन सङ्गन्तुमिच्छोः, स्वदेहस्य वियोगतापं नलविरहसन्तापं, निर्वापयिष्यन् शमयिष्यन् इव उद्गतः इत्युत्प्रेक्षा; स्वेदः चारुणि शुद्धिमति, श्यामिकारहिते इति भावः, हेमनि सुवर्णे, हीराङ्कुरः वज्राङ्कुरः इव, 'वज्रो हीरश्च कथ्यते' इति हलायुधः । नले आलोकि दृष्टः, दैवतेषु सुरेषु, न, आलोकि इति पूर्वेणान्वयः । अत्र प्रथमार्द्धे उत्प्रेक्षा, द्वितीयार्द्धे च हेम्नो नलशरीरतुल्यत्वात्, हीराङ्कुरस्य च स्वेदतुल्यत्वात् तयोः सम्बन्धस्य च प्रसिद्धत्वादुपमालङ्कार इत्यनयोः संसृष्टिः ॥ १९ ॥

उस ( दमयन्ती ) ने नलमें ( नलका ) आलिङ्गनेच्छुक अपने ( दमयन्तीके ) शरीरके ( अथवा—दमयन्तीका आलिङ्गनेच्छुक अपने ( नलके ) शरीरके ( विरहजन्य ) सन्तापको भविष्यमें शान्त करनेवाले पसीनेको अत्युत्तम सुवर्णमें हीरेके अङ्कुर ( जड़े गये हीरे ) के समान देखा तथा देवोंमें नहीं देखा । [ प्रथम पक्षमें नलके सुवर्णवत् गौर वर्ण शरीरमें हीरेके समान स्वच्छ चमकते हुए पसीने की बूंदोंको देखकर दमयन्तीको विश्वास हो गया कि अब नलको पाकर उनके आलिङ्गनसे मेरा शरीरसन्ताप दूर हो जायेगा । दूसरे पक्षमें—

दमयन्तीके विरहसे उत्पन्न सन्तापंको सुवर्णवत् गौर वर्ण शरीरमें हीरेके समान स्वच्छ चमकता हुआ स्वेद दूर कर देगा, क्योंकि इसी स्वेदके द्वारा दमयन्ती स्वेदका मानवगुण होनेसे नलको पहचानकर निर्णय करेगी। नलके शरीरमें दमयन्तीने पसीना देखा तथा देवोंके शरीरमें नहीं ]॥ १९॥

**सुरेषु मालाममलामपश्यन्नले तु बाला मलिनीभवन्तीम् ।**
**इमां किमासाद्य नलोऽद्य मृद्वीं श्रद्धास्यते मामिति चिन्तयैव ॥ २० ॥**

**सुरेष्विति।** बाला दमयन्ती, सुरेषु मालां स्रजम्, अमलाम् अम्लानाम्, अपश्यत्, नले तु अद्य स्वयंवराहे, नलः मृद्वीं मदपेक्षयाऽपि सुकुमाराम्, इमां दमयन्तीम्, आसाद्य किं किमर्थं, मां श्रद्धास्यते? आदरिष्यते? कथञ्चिदपि नादरिष्यते, इति चिन्तया एव, मलिनीभवन्तीं म्लायन्तीं, मालामिति पूर्वानुबन्धः, अपश्यत्। म्लानकुसुमत्वमन्यचिह्नमिति भावः। अत्र मालायास्तादृशचिन्तासम्बन्धासम्भवादुत्प्रेक्षालङ्कारः॥ २०॥

बाला ( दमयन्ती ) ने देवोंमें मालाको निर्मल ( मलिन नहीं होती हुई ) देखा तथा नलमें 'सुकुमारी इस ( दमयन्ती ) को पाकर नल क्या मुझमें श्रद्धा अर्थात् मेरा आदर करेंगे?' अर्थात् नहीं करेंगे' इस चिन्तासे ही ( पाठा०—मानो इस चिन्तासे ) मलिन होती हुई मालाको देखा॥ २०॥

**श्रियं भजन्तां कियदस्य देवाश्छाया नलस्यास्ति तथाऽपि नैषाम् ।**
**इतीरयन्तीव तया निरैक्षि सा नैषधे न त्रिदशेषु तेषु ॥ २१ ॥**

**श्रियमिति।** देवाः इन्द्रादयः, अस्य नलस्य, श्रियं सौन्दर्यं, कियत् अल्पं यथा तथा, भजन्तां, तथाऽपि नलसौन्दर्यस्य किञ्चित् ग्रहणे कृतेऽपि, नलस्य छाया प्रतिबिम्बं, प्रतिच्छाया इत्यर्थः। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। एषाम् इन्द्रादीनां, नास्ति, नलरूपधराणामपि देवानां तेजोमयत्वेन भूस्पर्शाभावात् तादृशप्रतिबिम्बरूपच्छायाया असम्भवादिति भावः; इतीरयन्ती कथयन्तीव स्थिता, सा छाया, प्रतिबिम्बमित्यर्थः, तया दमयन्त्या, नैषधे नले, निरैक्षि दृष्टा, ईक्षतेः कर्मणि लुङ्। तेषु त्रिदशेषु इन्द्रादिषु, न, निरैक्षि इति पूर्वेणान्वयः; तेषां तैजसत्वात् न छत्रादिवदेहच्छाया क्षितितले लग्ना, नलस्य तु लग्ना इत्येकं चिह्नमिति भावः। अत्र श्रियमिव श्रियं छायेव छायेति सादृश्याक्षेपान्निदर्शने, ताभ्यामङ्गाभ्यामितीरयन्तीवेत्युत्प्रेक्षायाः सङ्करः॥ २१॥

उस ( दमयन्ती ) ने 'देव इस ( नल ) की शोभाको कितना धारण करें? नलकी वैसी ( अतिशय प्रसिद्ध ) छाया ( शोभाका लेश ) भी इन ( देवों ) की नहीं है' ऐसी कहती हुईके समान नलमें छाया ( परछाईं ) को देखा और देवोंमें ( परछाईंको ) नहीं देखा।

---

१. 'चिन्तयेव' इति पाठान्तरम्।

[ जो इन्द्रादि देव नलकी छाया ( शोभाका लेश, अथवा—दर्पण आदिमें नलका प्रतिविम्ब ) अर्थात् प्रतिविम्बगत शोभाको नहीं धारण करते तो भला वे नलकी शोभाको कहां तक धारण कर सकते हैं ? अर्थात् किसी प्रकार नहीं धारण कर सकते। अथवा—देव नलकी कुछ सम्पत्तिको धारण कर लें, किन्तु इस नलकी शोभाको ये नहीं पा सकते, अथवा—देव नलकी श्रीको अच्छी तरह प्राप्त कर लें, किन्तु वैसी नलकी-सी परछाईं तो इन देवोंकी नहीं है ] ॥ २१ ॥

चिह्नैरमीभिर्नलसंविदस्याः संवादमाप प्रथमोपजाता।
सा लक्षणव्यक्तिभिरेव देवप्रसादमासादितमप्यबोधि ॥ २२ ॥

**चिह्नैरिति। अस्याः दमयन्त्याः, प्रथमोपजाता 'इतरनलतुलाभागेषु 'शेषः' इत्यादिपूर्वसर्गोक्तविकल्पोत्पन्ना, नलसंवित् अयं शेष एव नल इति बुद्धिः, अमीभिः एभिः, चिह्नैः पूर्वोक्तैः भूस्पर्शादिभिः, संवादम् ऐकमत्यम्, आप दार्ढ्यं प्रापेत्यर्थः; सा दमयन्ती, लक्षणानां पूर्वोक्तचिह्नानां, व्यक्तिभिः, प्रकाशैरेव, अभिव्यक्तिलक्षणकार्यैरेवेत्यर्थः, देवप्रसादं देवतानुग्रहरूपकारणमपि, आसादितं प्राप्तम्, अबोधि, मत्सेवया देवताः, प्रसन्नाः, कथमन्यथा भूस्पर्शादिमानुषसुलभचिह्नानि एतावन्तं कालं न दृष्टानि अधुना वा दृश्यन्ते, कारणं विना कार्यानुत्पत्तेरिति ज्ञातवतीति भावः। बुध्यतेः कर्त्तरि लुङ् 'दीपजन—' इत्यादिना विकल्पात् चिण् ॥ २२ ॥**

इन ( पूर्वोक्त १४।१६-२१ ) चिह्नोंसे इस ( दमयन्ती ) का पूर्व ('इतरनल—' १३।५२, इससे या नलके दूत बनकर आने पर या—सरस्वती देवीके श्लिष्ट वचनोंसे उत्पन्न 'यह पञ्चम आसन पर स्थित ही नल हैं' ऐसा ज्ञान संवादको पा लिया अर्थात् अविरुद्धभासित हो गया ( 'यही नल हैं' ऐसा मैंने पहले जो समझा था, वह ठीक ही था ऐसा उसने निश्चय कर लिया ) । इसके बाद उस ( दमयन्ती ) ने लक्षणों ( देवों तथा मनुष्योंके पूर्वोक्त ( १४-१६-२१ ) विभिन्न चिह्नोंसे देवोंकी प्रसन्नताको भी जाना अर्थात् पहले इन इन्द्रादि देवोंमें देवगत 'भूस्पर्श, निमेष, रजःस्पर्श, स्वेद, मालामालिन्य तथा छाया' का अभाव नहीं दीखता था; किन्तु अब इनमें इन भूस्पर्शादि चिह्नोंका अभाव स्पष्ट दीखता है, अत एव ये देव अब मेरे ऊपर प्रसन्न हो गये हैं, ऐसा समझा ] ॥ २२ ॥

नले विधातुं वरणस्रजं तां स्मरः स्म रामां त्वरयत्यथैनाम्।
अपत्रपा तां निषिषेध तेन द्वयानुरोधं तुलितं दधौ सा ॥ २३ ॥

**नले इति। अथ शेषोऽयं नल इति निश्चयानन्तरं, स्मरः तां करस्थां, वरणस्रजं नले विधातुम् एनां रामां दमयन्तीं, त्वरयति स्म त्वरयामास, अपत्रपा सर्वसमक्षे कथमेनं माल्यदानेन वृणे इति लज्जा तु, तां कामेन त्वर्यमाणां भैमीं, निषिषेध निवारयामास, 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति धात्वभ्याससकारयोः षत्वम्। तेन कारणद्वयेन, सा भैमी, द्वयानुरोधं स्मरलज्जोभयानुरोधं, तुलितं समीभूतं यथा तथा,**

दधौ रचयामासेत्यर्थः, वरणमाल्यप्रदानविपयकप्रवृत्तिनिवृत्तिविषये कर्त्तव्यविमूढा आसीदिति भावः। एतेनास्या मध्यमानायिकात्वमुक्तम्; 'तुल्यलज्जास्मरा मध्या' इति लक्षणात् ॥ २३ ॥

इस ( देवोंकी प्रसन्नतासे नलका निश्चय हो जाने ) के बाद कामदेवने उस वरणमाला को नलमें पहनानेके लिए प्रेरित किया और लज्जाने उसे मना किया अर्थात् कामवशीभूत दमयन्तीने नलको वरणमाला पहनाना चाहा, किन्तु 'इतने लोगोंके सामने मैं नलको माला कैसे पहनाऊँ ?' इस भावसे उत्पन्न लज्जाके कारण वह रुक गयी। इस कारणसे उस ( दमयन्ती ) ने दोनों ( कामदेव तथा लज्जा ) के अनुरोधको समानभावसे धारण किया अर्थात् भाव-सन्धिके वशीभूत दमयन्ती नलको माला पहनाने तथा नहीं पहनानेमें दोलायित चित्तवाली हुई। [ समान एवं परस्पर विरुद्ध दो कार्योंके आनेपर मनुष्य दोलायित चित्त होकर उनमें-से एक कार्य भी नहीं करता, अपि तु सन्देह में पड़कर तटस्थ बन जाता है, वैसा ही इस दमयन्तीने भी किया ] ॥ २३ ॥

स्रजा समालिङ्गयितुं प्रियं सा रसादधत्तैव बहुप्रयत्नम् ।
स्तम्भत्रपाभ्यामभवत्तदीये स्पन्दस्तु मन्दोऽपि न पाणिपद्मे ॥ २४ ॥

स्रजेति। सा भैमी, रसात् रागात्, प्रियं नलं, सृज्यते इति स्रक् वरणमाला, 'ऋत्विग्दधृक्स्रक्–' इत्यादिना क्विन् अमागमश्च। तया समालिङ्गयितुं समाश्लेषयितुं, बहुप्रयत्नं महोद्योगमेव, अधत्त, तु किन्तु, तदीये तस्याः सम्बन्धिनि, पाणिपद्मे स्तम्भः निष्क्रियत्वलक्षणः सात्त्विकभावविशेषः, स च त्रपा च ताभ्यां हेतुभ्यां, मन्दः अल्पोऽपि, स्पन्दः कम्पनव्यापारः, न अभवत् ॥ २४ ॥

उस ( दमयन्ती ) ने अनुरागसे वरणमालासे प्रियको आलिङ्गित कराने अर्थात नलको वरणमाला पहनानेके लिए बहुत उद्योग किया ही, उसके हस्त-कमलमें स्तम्भ ('जड़ता' नामक सात्त्विक भाव ) तथा लज्जासे थोड़ा भी स्पन्दन नहीं हुआ अर्थात् जड़ता तथा लज्जासे अभिभूत दमयन्तीके हाथ थोड़ा भी नहीं हिले ( माला डालनेके लिये आगे नहीं बढ़े ) कि वह माला नलके गलेमें पहना सके ॥ २४ ॥

तस्या हृदि व्रीडमनोभवाभ्यां दोलाविलासं समवाप्यमाने ।
श्रितं[1] धृतैणाङ्ककुलातपत्रे शृङ्गारमालिङ्गदधीश्वरश्रीः ॥ २५ ॥

तस्या इति। व्रीडमनोभवाभ्यां लज्जास्मराभ्यां, दोलाविलासं प्रेङ्खणलीलां, समवाप्यमाने नीयमाने, वरणविषये प्रवृत्तिनिवृत्तिसङ्घर्षेण दोदुल्यमाने इत्यर्थः, एणाङ्ककुलं सोमवंशः, सोमवंशोत्पन्नः नल इति यावत्, तदेव आतपत्रं छत्रं, नलाप्राप्तिजनितसन्तापप्रशमकत्वादिति भावः, धृतम् एणाङ्ककुलातपत्रं येन तस्मिन् सन्तापनिवारकनलरूपातपत्रवति, तस्याः दमयन्त्याः, हृदि हृदये, श्रितम् आश्रित्य स्थितं,

१. 'स्थितम्' इति पाठान्तरम् ।

शृङ्गारं शृङ्गाररसम्, अधीश्वरश्रीः अधीश्वरस्य हृदयेश्वरस्य नलस्य, श्रीः सौन्दर्यम्, आलिङ्गत् दोलनजनितपतनभयनिवारणार्थमाश्लिषत्, प्रबलतया दोदुल्यमानदोलाधिरूढम् अत एव पतनशङ्कया भीतं कमपि पुमांसं पार्श्वस्थः नरो वा नारी वा यः कोऽपि यथा अवलम्बनं दत्त्वा स्थिरीकरोति तद्वत् इति भावः। नलसौन्दर्यं वरणायैव हृदयस्य स्थैर्यं सम्पाद्य प्रवृत्तिनिवृत्तिसङ्कल्पजनितं दोलनं निवारयामासेति समुदितार्थः। अत्र भैमीहृदयं दोलासनं, शृङ्गाररसो राजा, नल एव सन्तापनिवारकत्वात् छत्रं, दोलासनान्दोलनार्थं स्थितौ लज्जाकामौ, एतेन नलाधिष्ठिते हृदि भैमी शृङ्गाररसस्य परां कोटिम् आरूढा इति निष्कर्षः॥ २५॥

लज्जा तथा कामदेवके द्वारा झूलेके विलासको प्राप्त करते हुए तथा चन्द्रकुल अर्थात् चन्द्रकुलोत्पन्न नलरूप छत्रको धारण किये हुए उस ( दमयन्ती ) के हृदयमें आश्रयकर स्थित शृङ्गार रसको स्वामी ( नल ) की लक्ष्मी अर्थात् सुन्दरता ( अथवा—अधिक सुन्दरता, अथवा—किसी अन्य राजाकी सुन्दरता ) ने आलिङ्गित ( ग्रहण ) किया। [ जिस प्रकार अत्यन्त हिलते झूलेपर चढ़े हुए पुरुषको गिरनेके भयसे कोई स्त्री या पुरुष पकड़कर उसे स्थिर करता है उसी प्रकार यहां समझना चाहिये। यहां पर शृङ्गार रसको राजा, दमयन्तीके हृदयको झूलेका आसन ( बैठनेका काष्ठविशेष पटा आदि ), सन्तापनिवारक होनेसे नलको छत्र, लज्जा तथा कामदेवको झूले पर आरूढ़ व्यक्ति समझना चाहिये। प्रथम अर्थमें—लज्जा एवं कामदेवसे अस्थिर चित्तवाली दमयन्तीको देखकर खिन्न नलने पहले विप्रलम्भ शृङ्गारको प्राप्त किया, तदनन्तर दमयन्तीने भी नलको वैसा देखकर उनकी शोभाके स्वीकार करनेसे वैसी ही हो गयी। अन्यपक्षमें—उस दमयन्तीका भावमिश्रित शृङ्गार रस राजा नलके समान बढ़ गया। जिस प्रकार झूले पर चढ़ी हुई स्त्रियां गिरनेके भयसे पतिका आलिङ्गन करती हैं ]॥ २५॥

करः स्रजा सज्जतरस्तदीयः प्रियोन्मुखीभूय पुनर्व्यरंसीत्।
तदाननस्यार्द्धपथं ययौ च प्रत्याययौ चातिचलः कटाक्षः॥ २६॥

कर इति। स्रजा वरणमाल्येन करणेन, सज्जतरः अतिशयेन सम्भृतः, अत्यर्थं शोभित इत्यर्थः, तदीयो दमयन्तीसम्बन्धी, करः प्रियस्य नलस्य, उन्मुखीभूय अभिमुखीभूय, पुनः व्यरंसीत् विरराम, रमेर्लुङि 'व्याङ्परिभ्यो रमः' इति परस्मैपदं, 'यमरमनमातां सक् च' इति सगिडागमौ, 'अस्ति सिचोऽपृक्ते' इतीडागमे 'इट ईटि' इति सलोपे च सवर्णदीर्घः। तथा अतिचलः अत्यन्तचञ्चलः, कटाक्षः तदाननस्य नलमुखस्य, अर्द्धः पन्था इति विशेषणसमासे समासान्तः। 'अर्द्धं नपुंसकम्' इति नैकदेशी समासः पथः समविभागे प्रमाणाभावात्। तम् अर्द्धपथं, ययौ च प्रत्याययौ च प्रत्यावृत्तश्च, उभयत्र लज्जयेति भावः॥ २६॥

वरणमालासे शोभित ( नलके कण्ठमें वरण-माला डालनेके लिए तैयार अर्थात् ऊपर

उठा हुआ ) उस ( दमयन्ती ) का हाथ प्रिय ( नल ) के सम्मुख होकर ( लज्जासे ) हट गया और अत्यन्त चञ्चल कटाक्ष उस ( नल, पाठा०—प्रिय = नल ) के मुखके आधे ( नलको देखने की इच्छासे ) मार्गमें गया और ( लज्जासे ) लौट आया। [ दमयन्तीने नलके कण्ठमें जयमाल डालनेके लिए हाथ बढ़ाया, परन्तु लज्जासे उसे आगे नहीं बढ़ा सकी तथा नलको कटाक्ष ( नेत्रप्रान्त ) से देखना चाहा, किन्तु नलके आधे मुखको ही देखकर लज्जासे दृष्टिको हटा ली ] ॥ २६ ॥

तस्याः प्रियं चित्तमु[1]देतुमेव प्रभूबभूवाक्षि न तु प्रयातुम् ।
सत्यीकृतः स्पष्टमभूत्तदानीं तयाऽक्षिलज्जेति जनप्रवादः ॥ २७ ॥

तस्या इति । तस्याः दमयन्त्याः, चित्तमेव प्रियं नलम्, उदेतुं प्राप्तुं, द्रष्टुमिति यावत्, प्रभूबभूव शशाकेत्यर्थः, अक्षि तु प्रयातुं नलं प्राप्तुं, द्रष्टुमित्यर्थः, न, प्रभूबभूव इत्यनुषङ्गः; प्रभुशब्दादभूततद्भावे 'च्वौ' दीर्घः। चित्तमध्ये अनुक्षणं सा नलं ददर्श, किन्तु पुरःस्थितमपि तं लज्जावशात् चक्षुरुत्तोल्य द्रष्टुं न शशाकेत्यर्थः, अत एव अक्षिणि चक्षुषि लज्जा, न तु चेतसि इति भावः, इति जनप्रवादः तया भैम्या, तदानीं नलवरणकाले, स्पष्टं यथा तथा सत्यीकृतोऽभूत्। अयं भावः—लज्जायाः चित्तधर्मत्वं वास्तवं न तु नेत्रधर्मत्वं, एवञ्च लज्जावशात् दमयन्त्याश्चित्तस्य नलप्राप्तिः नोचिता, वरं नेत्रस्यैव लज्जाधर्मकत्वाभावात् नलप्राप्तिरुचिता, इत्थञ्च अक्षिलज्जेति प्रवादोऽपि असत्य एव, किन्तु दमयन्त्याश्चित्तनेत्रयोस्तद्विपरीतकार्योत्पत्त्या अक्षिलज्जेति प्रवादः तया सत्यीकृत एवेति ॥ २७ ॥

उस ( दमयन्ती ) का चित्त प्रिय ( नल ) को प्राप्त करने अर्थात् देखनेमें समर्थ हुआ ही ( पाठा०—प्रियको प्राप्त कर ही लिया ) किन्तु नेत्र प्रिय ( नल ) को पाने अर्थात् देखनेमें समर्थ नहीं हुआ; उस समय उस ( दमयन्ती ) ने 'नेत्रमें लज्जा होती है' इस लोकोक्तिको सत्य करके स्पष्ट कर दिया। [ लज्जाका चित्त-सम्बन्धी धर्म होनेसे दमयन्तीके चित्तको नलके पास नहीं जाना चाहिये था और नेत्र-सम्बन्धी धर्म नहीं होनेसे उसके नेत्रको नलके पास जाना अर्थात् नलको देखना चाहिये था; किन्तु ऐसा होने पर 'नेत्रमें लज्जा रहती है' यह लोकोक्ति असत्य प्रमाणित होती, अत एव दमयन्तीने चित्तसे नलका साक्षात्कार करने तथा लज्जावशीभूत नेत्रसे नलका साक्षात्कार ( दर्शन ) नहीं करनेसे उक्त लोकोक्तिको बिलकुल सत्य कर दिया। दमयन्तीने मनसे ही नलका साक्षात्कार किया, नेत्रसे वह नहीं देख सकी ] ॥ २७ ॥

कथंकथञ्चिन्निषधेश्वरस्य कृत्वाऽऽस्यपद्मं दरवीक्षितश्रि ।
वाग्देवताया वदनेन्दुबिम्बं त्रपावती साऽकृत सामिदृष्टम् ॥ २८ ॥

कथंकथञ्चिदिति । त्रपावती लज्जावती, सा भैमी, निषधेश्वरस्य नलस्य, आस्य-

1. 'चित्तमुपेतमेव' इति पाठान्तरम् ।

पद्मं मुखारविन्दं, कथंकथञ्चिदतिकृच्छ्रेण, दरवीक्षिता ईषद्दृष्टा, श्रीः यस्य तत् तादृशम् । शैषिक-क-प्रत्ययस्य वैभाषिकत्वादभावः, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः । 'ईषदर्थे दराव्ययम्' इति वैजयन्ती । कृत्वा लज्जावशात् लेशतो दृष्ट्वेत्यर्थः, वाग्देवतायाः सरस्वत्याः, वदनेन्दुबिम्बं सामिदृष्टम् अर्द्धदृष्टम्, 'सामि त्वर्द्धे जुगुप्सिते' इत्यमरः । अकृत अकार्षीत्, तत्रापि लज्जेति भावः । नाहं शक्नोमि त्वया कारयितव्यमिति देवीमुखवीक्षणे तात्पर्यमवधार्यम् ॥ २८ ॥

सलज्जा उस ( दमयन्ती ) ने किसी-किसी तरह अर्थात् बड़ी कठिनाईसे नलके मुखको (लज्जावश) थोड़ा-सा देखकर सरस्वतीके मुखरूप चन्द्रबिम्बको ( लज्जावश ) आधा देखा। [ लज्जावती दमयन्तीने अतिशय लज्जाके कारण नलके मुखको तो बहुत ही थोड़ा देखा और तदनन्तर 'मैं लज्जावश वरणमालाको नलके कण्ठमें नहीं डाल सकती, अतः तुम इस कार्यको शीघ्र करो ( या-करावो )' इस अभिप्रायसे सरस्वतीके मुख भी उसी लज्जाके कारण पूरा नहीं किन्तु आधा ही देखा ] ॥ २८ ॥

न[1] जानतीवेदमवोचदेनामाकूतमस्यास्तदवेत्य देवी ।
भावस्त्रपोर्मिप्रतिसीरया ते वितीर्यते लक्षयितुं न मेऽपि ॥ २९ ॥

न जानतीति । देवी वाग्देवी, अस्याः भैम्याः, तत् पूर्वोक्तम्, आकूतम् अभिप्रायम्, अवेत्य ज्ञात्वा, न जानतीव अबुध्यमानेव, एनां भैमीम्, इदं वक्ष्यमाणम्, अवोचत्, ब्रूधातोर्लुङि 'ब्रुवो वचिः' इति वचादेशे 'वच उम्' इति उमागमः । तदेवाह—त्रपायाः ऊर्मिरेव तरङ्ग एव, प्रतिसीरा जवनिका, 'प्रतिसीरा जवनिका स्यात्तिरस्करणी च सा' इत्यमरः, तया कर्त्र्या, ते तव, भावः अभिप्रायः, मे ममापि, लक्षयितुं ज्ञातुं, तुमुन् प्रयोगस्तूदीच्यानाम् न वितीर्यते न दीयते, लज्जान्तर्हितो भावोऽयं कण्ठोक्तिमन्तरेण दुर्ज्ञेय इत्यर्थः ॥ २९ ॥

देवी ( सरस्वती देवी ) इस ( दमयन्ती ) के उस ( १४।२८ ) भावको समझकर नहीं समझती हुई के समान बोली—'लज्जा-समूहरूप पर्दा तुम्हारे भावको मुझे लक्षित करने ( मालूम होने ) नहीं देता । [ पर्देके भीतरकी वस्तुको जैसे कोई नहीं देख सकता, वैसे ही लज्जा-समूहसे तुम्हारे भावको मैं नहीं देख ( समझ ) सकती अर्थात् जब तक तुम लज्जा-समूहरूप पर्देको दूर कर अपने भावको नहीं कहोगी, तब तक मैं तुम्हारा भाव नहीं समझ सकती, अत एव तुम अपने भावको स्पष्ट कहो ] ॥ २९ ॥

देव्याः[2] श्रुतौ नेति नलार्द्धनाम्नि गृहीत एव त्रपया निपीता ।
अथाङ्गुलीरङ्गुलिभिः स्पृशन्ती दूरं शिरः सा नमयाञ्चकार ॥३०॥

देव्या इति । अथ सरस्वतीवाक्यानन्तरं, देव्याः सरस्वत्याः, श्रुतौ कर्णे, 'न'

---

१. 'अजानती-' इति 'प्रकाश' कारसम्मतं पाठान्तरम् ।
२. 'देव्या' इति तृतीयान्तं पाठान्तरम् ।

इति एवं, नलस्य अर्द्धनाम्नि नाम्नोऽर्द्धे, अर्द्धनामधेये इत्यर्थः, 'अर्द्धं नपुंसकम्' इत्येकदेशिसमासः, दमयन्त्या उच्चारिते इति भावः, गृहीते एव प्रविष्टे सत्येव, कर्ण॰ गोचरीभूते एवेति यावत्, सा भैमी, त्रपया निपीता ग्रस्ता सती, 'ल' इति शेषा-र्द्धोच्चारणेऽसमर्था सतीत्यर्थः, अङ्गुलिभिः अङ्गुलीः स्पृशन्ती परामृशन्ती, मोटयन्ती-त्यर्थो वा, लज्जासङ्कोचसूचकभावोऽयम्; दूरम् अत्यन्तं, शिरः नमयाञ्चकार ननाम, लज्जातिरेकात् कथननैराश्याच्च इतिकर्त्तव्यतामूढा केवलं नता एव स्थितेत्यर्थः। यद्वा—देव्याः सरस्वत्याः सम्बन्धिनि,'देव्या[१] इति तृतीयान्तपदो (दं) वा, तथात्वे देव्या, उच्चारिते इति शेषः, 'न' इति नलार्द्धनाम्नि श्रुतौ कर्णे, दमयन्त्या इति भावः, अन्यत् समानम्; लोके यथा कश्चित् गुरुजनसमीपे किमपि वक्तुकामोऽपि लज्जा-सङ्कोचवशात् वक्तुमसमर्थः सन् शिरोनमनपूर्वकम् अङ्गुलिभिरङ्गुलीः मोटयति तद्वदिति भावः ॥ ३० ॥

सरस्वती देवीके कानमें 'न' ऐसा (केवल एक अक्षर) नलके आधे नामको ग्रहण करने (सुनने) पर (अथवा—'''नामको ही ग्रहण करनेपर) लज्जासे व्याप्त उस (दमयन्ती) ने (नलके नामका द्वितीय अक्षर 'ल' को उच्चारण करनेमें असमर्थ होकर) बादमें अपनी अङ्गुलियोंसे अपनी अङ्गुलियों (अथवा—अपनी अङ्गुलियोंसे सरस्वती देवीकी अङ्गुलियों) को ममोड़ती (या दबाती) हुई शिरको अत्यन्त झुका लिया। (पाठा॰—देवी द्वारा कहे गये नलके नामके प्रथमाक्षर 'न' को अपने (दमयन्तीके) कानसे ग्रहण करने अर्थात् सुननेपर लज्जासे''''''')। [अधिक लज्जाके कारण अपने भावको कहनेमें असमर्थ होनेसे अङ्गुलियोंसे अङ्गुलियोंको ममोड़ती (या दबाती) हुई दमयन्तीने अपने मस्तकको नीचे कर लिया। सभी व्यक्ति लज्जाके कारण अपनी अभिलाषाको प्रकट नहीं कर सकनेपर अङ्गुलियोंको ममोड़ते और मस्तकको नीचे झुका लेते हैं] ॥ ३० ॥

करे विधृत्येश्वरया गिरां सा पान्था पथीन्द्रस्य कृता विहस्य ।
वामेति नामैव बभाज सार्थं पुरन्ध्रिसाधारणसंविभागम् ॥३१॥

करे इति । सा भैमी, गिराम् ईश्वरया वाग्देवतया, 'स्थेशभासपिसकसो वरच्', विहस्य करे विधृत्य तां करे गृहीत्वा, इन्द्रस्य पथि, पन्थानं गच्छति नित्यमिति पान्था नित्यपथिकी, 'पन्थो ण नित्यम्' इति ण-प्रत्यये पथः पन्थादेशे च टाप्, कृता इन्द्रसमीपं नीता सतीत्यर्थः, पुरन्ध्रीणां सर्वयोषितां, साधारणः संविभागः सर्वस्त्री-नामत्वेन संविभज्य ग्रहणं यस्य तत् तादृशं सर्वयोषिद्वाचकमित्यर्थः, वामा इति नामैव सार्थं प्रतीपत्वेनार्थवत् यथा तथा, बभाज बभार, प्रतिकूला एव अभूदित्यर्थः, देव्या इन्द्रवरणमुद्दिश्य नीयमाना भैमी तत्प्रतिकूलाचारिणी अभूदिति निष्कर्षः।

---

१. एवं तृतीयान्तपाठाभ्युपगमे 'त्वत्तः श्रुतं नेति (१४।२२) इति श्लोकस्थ त्वत्तः इत्येतत्पदस्वारस्यविरोधोऽत्त इदं पाठान्तरमुपेक्ष्यम् ।

'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियाम्' इति मेदिनी ॥ २१ ॥

( मानो दमयन्तीके भावको नहीं समझती हुई ) उस वागीश्वरी ( सरस्वती देवी ) के द्वारा हाथमें पकड़कर इन्द्रके मार्गमें पथिक ( वरणार्थ इन्द्रके सम्मुख ) की गयी उस दमयन्ती स्त्रीमात्रका वाचक 'वामा' ( प्रतिकूल रहनेवाली ) ने इस नामको सार्थक ही ग्रहण किया [ अर्थात् सरस्वती देवी द्वारा इन्द्रके सम्मुखकी गयी दमयन्तीने उसके प्रतिकूल होकर सर्व स्त्रीवाचक 'वामा' नामको सार्थक किया ] ॥ २१ ॥

( विहस्य हस्तेऽथ विकृष्य देवी नेतुं प्रयाताभि महेन्द्रमेताम् ।[1]
भ्रमादियं दत्तमिवाहिदेहे ततश्चमत्कृत्य करं चकर्ष ॥ १ ॥ )

विहस्येति । वाम्यानन्तरं देवी विहस्य किञ्चिद्धसित्वा एतां भैमीं स्वहस्तेन विकृष्य महेन्द्रमभि लक्षीकृत्य प्रस्थिता इन्द्रं प्रापयितुं निर्गता । तत इन्द्रादिगमनोद्योगानन्तरमियं भैमी चमत्कृत्य किमियमिन्द्रवरणे मां प्रवर्तयतीति बुद्ध्या भीत्वा करं स्वहस्तं चकर्ष आचकर्ष । किम्भूतमिव करम् ?—भ्रमाद्रज्जुभ्रान्तेरहिदेहे सर्पशरीरे दत्तमिव स्थापितमिवेत्युत्प्रेक्षा । सर्पदेहे भ्रमाद्दत्तं हस्तं यथा कश्चित्कर्षति तथेत्युपमा वा । ततो देवीकरादिति वा ॥ १ ॥

इस (दमयन्तीके इन्द्रके प्रतिकूल होने) के बाद सरस्वती देवी कुछ हँसकर (दमयन्तीको) हाथमें पकड़कर इन्द्रको प्राप्त करानेके लिए चली, तब सरस्वतीके इन्द्रवरणार्थ उद्योग करनेके बाद ( अथवा—सरस्वती देवीके हाथसे ) इस ( दमयन्ती ) ने भ्रमसे अर्थात् रस्सी जानकर सर्पके शरीरपर रखे हुएके समान हाथको चमककर ( क्या यह देवी इन्द्रको वरण करानेके लिए मुझे खींचकर ले जा रही है, इस विचारसे डरकर ) हाथको खींच लिया ॥ १ ॥

भैमीं निरीक्ष्याभिमुखीं मघोनः स्वाराज्यलक्ष्मीरभृताभ्यसूयाम् ।
दृष्ट्वा ततस्तत्परिहारिणीं तां व्रीडां विडौजःप्रवणाऽभ्यपादि ॥२२॥

भैमीमिति । भैमीं मघोनः इन्द्रस्य, अभिमुखीं निरीक्ष्य स्वः स्वर्गस्य राज्यं, "स्वरव्ययं स्वर्गनाक—' इत्यमरः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' तस्य लक्ष्मीः अभ्यसूयाम् इन्द्रे भैम्याश्चेर्ष्याम्, अभृत बभार, भृङ्-धातोः लुङ् तङ् 'ह्रस्वादङ्गात्' इति सिचो लोपः । ततः असूयानन्तरं, तां भैमीं, तत्परिहारिणीम् इन्द्रपरित्यागिनीं, दृष्ट्वा विडौजः प्रवणा पुनरिन्द्रानुरक्ता सती, व्रीडाम् अभ्यपादि अभिपेदे, अन्यायं मया आशङ्कितम् इति विचिन्त्य सा ललज्जे इत्यर्थः । पद्यतेः कर्त्तरि लुङि तङि 'ह्रस्वादङ्गात्' इति सिचो लोपः, 'चिण् ते पदः' इति चिण्, 'चिणो लुक्' इति प्रत्ययस्य लुक् ॥

दमयन्तीको इन्द्रके सामने ( वरणार्थ आयी हुई समझकर ) स्वर्गश्रीने ईर्ष्या की, ( किन्तु

---

[1] अयं श्लोकः पूर्वोक्तार्थतया म० म० मल्लिनाथेन न व्याख्यात इति मया नारायणभट्टकृतया 'प्रकाश' व्याख्यया सहेहोपन्यस्त इत्यवधेयम् ।

बादमें ) इन्द्रका त्याग करती हुई उसे ( दमयन्तीको ) देखकर इन्द्रमें अनुरागवती होती हुई लज्जित हो गयी । [पहले तो स्वर्गलक्ष्मीने दमयन्तीको सरस्वती देवीके द्वारा इन्द्रके सामने लानेपर समझा कि यह मेरे पति इन्द्रके वरणार्थ आ रही है अत एव उसके साथ ईर्ष्या की, किन्तु उसे इन्द्रका त्याग करती हुई देखकर 'मैंने इसे इन्द्रके वरणार्थ आती हुई समझकर इसके साथ व्यर्थ ही ईर्ष्या की' इस भावसे ( अथवा—इन्द्रको सुन्दर नहीं होनेसे मानवी भी दमयन्ती छोड़ रही हैं और मैं स्वर्गलक्ष्मी होकर भी इसमें अनुरक्त हो रही हूँ' इस भावसे ) लज्जित हुई ] ॥ ३२ ॥

त्वत्तः श्रुतो नेति नले मयाऽतः परं वदस्वेत्युदिताऽथ देव्या ।
ह्रीमन्मथद्वैरथरङ्गभूमिर्भैमी दृशा भाषितनैषधाऽभूत् ॥ ३३ ॥

**त्वत्त इति । अथ नले नलवरणविषये, मया नेति निषेधार्थकं नलनामार्द्धबोधकं वा 'न' इति पदमित्यर्थः, त्वत्त एव श्रुतः; अतः नलात्, परम् अन्यं, वदस्व नृपान्तरं ब्रूहीत्यर्थः, अथवा—अतः नकारपदात्, परमनन्तरं पदं, वदस्व इति देव्या वाग्देवतया, उदिता सपरिहासं कथिता, ह्रीमन्मथद्वैरथरङ्गभूमिः लज्जाकामरथिद्वयप्रवृत्तयुद्धनाट्यशाला इव, भैमी दृशा दृष्ट्या इव, भाषितः नैषधः नलः यया सा तादृशी, अभूत् ह्रिया कुण्ठेन वक्तुमशक्ता कटाक्षदृष्ट्या नलं सानुरागम् ऐक्षतेत्यर्थः ॥ ३३ ॥**

इस ( इन्द्रका त्याग करने ) के बाद 'तुमसे मैंने नलके विषयमें 'न' अर्थात् नहीं ( निषेध अथवा—नलका आधा नाम ) सुना अब इससे (नलसे) भिन्न अभीष्ट वर (अथवा—नलके नामके द्वितीय अक्षर 'ल' ) को कहो' इस प्रकार सरस्वती देवीसे कही गयी ( अत एव ) लज्जा तथा कामदेवके दो रथोंकी रङ्गभूमि ( नृत्तस्थान अर्थात् युद्धभूमिरूप ) दमयन्ती दृष्टिसे ( देखकर ही ) नलका नाम कहा अर्थात् दूसरे किसीका नाम अथवा नलके नामका दूसरा अक्षर 'ल' का उच्चारण नहीं किया ,किन्तु नलको देखकर ही 'इस नलमें वरणमाला पहनावो' ऐसा सङ्केत किया ] ॥ ३३ ॥

हसत्सु भैमीं दिविषत्सु पाणौ पाणिं प्रणीयाप्सरसां रसात् सा ।
आलिङ्ग्य नीत्वाऽकृत पान्थदुर्गा भूपालदिक्पालकुलाध्वमध्यम् ॥३४॥

**हसत्स्विति । दिवि सीदन्तीति दिविषदः देवाः, 'अमरा निर्जरा देवा, आदितेया' ५५' इत्यमरः । 'सत्सूद्विष—' इत्यादिना क्विप् । 'हृद्द्युभ्याञ्च' इति उपसङ्ख्यानात् सप्तम्यलुक्, 'सुषामादिषु च' इति षत्वम्, 'अविहितलक्षणमूर्द्धन्याः सुषामादिषु द्रष्टव्याः' इति वचनात् । तेषु रसात् अनुरागात्, अप्सरःसु इति भावः, अप्सरसां पाणौ पाणिं प्रणीय निधाय, अप्सरसां हस्तं धृत्वेत्यर्थः, हसत्सु अहो नरासक्ता इति परिहसत्सु सत्सु, सा सरस्वती, भैमीम् आलिङ्ग्य भूपालानां दिक्पालानाञ्च कुलयोः वर्गयोः, अध्वा तस्य मध्यं नीत्वा पान्थदुर्गा पथिकजनैः सिन्दूरादिभिः**

---

१. 'रङ्गभूमी' इति पाठान्तरम् ।

पूजितां मार्गमध्यस्थदुर्गादेवीमित्यर्थः, अकृत तद्वदलङ्घ्याम् एकलक्ष्यां कृतवतीत्यर्थः, कृञः कर्त्तरि लुङि 'ह्रस्वादङ्गात्' इति सिचः सकारलोपः ॥ ३४ ॥

( अप्सराओंमें ) अनुराग होनेके कारण अप्सराओंके हाथमें ( अपना ) हाथ रखकर अर्थात् उनका हाथ पकड़कर ( अथवा—दोनों ( सरस्वती देवी तथा दमयन्ती ) के आशय जानने ( या-प्रसन्नता ) के कारण अप्सराओंके हाथमें ( अपना ) हाथ रखकर अर्थात् ताली बजाकर ) देवोंके हँसते रहनेपर सरस्वती देवीने दमयन्तीका आलिङ्गनकर अर्थात् उसे अङ्कपाली ( अँकवार = गोद ) में पकड़कर राजा ( नल, या-समस्त राज-समुदाय ) तथा देव-समूहके मार्गके बीचमें ले जाकर उसे जुलूसका दुर्गा बना दिया । [ जिस प्रकार चल दुर्गाका जुलूस निकालकर उसे मार्गके बीचमें ले जाकर घुमाते हैं, उसी प्रकार सरस्वती देवीने इस दमयन्तीको गोदमें पकड़कर राजाओं तथा देवोंके बीचमें ले जाकर घुमाया] ॥३४॥

अदेशितामप्यवलोक्य[1] मन्दं मन्दं नलस्यैव दिशा चलन्तीम् ।
भूयः सुरानर्द्धपथादथासौ तानेव तां नेतुमना नुनोद ॥ ३५ ॥

अदेशितामिति । अथ असौ देवी, तां भैमीम्, अदेशितां नलं प्रति गच्छेत्यचोदितामपि, दिशेश्चौरादिकात् कर्मणि क्तः । मन्दं मन्दं नलस्यैव दिशा चलन्तीं गच्छन्तीं, 'चलेरात्मनेपदमनित्यज्ञापनात्' इति वामनः । अवलोक्य भूयः पुनरपि, तान् इन्द्रादीन्, सुरान् एव नेतुं मनो यस्याः सा सती । 'तुम् काममनसोरपि' इति मकारलोपः । अर्द्धपथात् नलसमीपगामिपथार्द्धात्, पथार्द्धसकाशात् परावर्त्य इत्यर्थः, नुनोद इन्द्रादीन् प्रति प्रेरयामास ॥ ३५ ॥

इसके बाद इस ( सरस्वती ) ने ( 'इन्द्रादि देवोंके सामने चलो' इस प्रकार ) आज्ञापित न होनेपर भी ( पाठा०—आज्ञापित होनेपर भी ) नलकी ओर ही धीरे-धीरे चलती हुई दमयन्तीको आधे मार्गसे नलको छोड़कर फिर उन देवोंकी ओर ही ले जानेकी इच्छुक होकर उसे प्रेरित किया ॥ ३५ ॥

मुखाब्जमावर्त्तनलोलनालं कृत्वाऽऽलिहुंहुंरवलक्षलक्ष्यम्[2] ।
भीमोद्भवा तां नुनुदे[3]ऽङ्कपालीं देव्या नवोढेव वृथा विवाढुः ॥ ३६ ॥

मुखेति । भीमोद्भवा भैमी, मुखाब्जं स्वमुखारविन्दम्, आवर्त्तनेन दिग्वलनेन, लोलनालं व्यावृत्तकण्ठनालं, तथा आलीनां सखीनां, हुंहुंरवाणां हुंहुमिति निवारणशब्दानाम्, अन्यत्र—अलीनां भृङ्गाणां, हुंहुंरवाणां झङ्कारशब्दानां, लक्षैः लक्षसङ्ख्याविशेषैः, लक्ष्यं दर्शनीयञ्च, कृत्वा नवोढा नववधूः, विवोढुः परिणेतुः इव, देव्याः सम्बन्धिनीं वृथा ताम् अङ्कपालीं परिरम्भणबन्धनम्, 'अङ्कपाली स्मृता धात्र्यां वेदिका-परिरम्भयोः' इति विश्वः । नुनुदे तत्याज ॥ ३६ ॥

---

१. 'आदेशिता—' इति पाठान्तरम् । २. 'लक्ष्यलक्ष्यम्' इति, 'लक्ष्मलक्ष्यम्' इति च पाठान्तरम् । ३. 'मुमुचे' इति पाठान्तरम् ।

भीमनन्दिनी ( दमयन्ती ) ने घुमानेसे चञ्चल कण्ठरूप नामवाले तथा सखियोंके 'हूँ हूँ' इस प्रकारके ( परिहासवश नलके पास जानेमें निषेध करते हुए ) लाखों अर्थात् अत्यधिक वचनों ( भ्रमरोंके अत्यधिक 'हूँ हूँ' रूप गुञ्जन ) से लक्षित ( या-सुन्दर ) मुखरूपी कमलको करके देवी ( सरस्वती देवी ) के उस अङ्कपालीको उस प्रकार छोड़ा, जिस प्रकार नववधू सखियोंके लाखों वार मना करनेपर भी पतिके अङ्कपाली ( आलिङ्गन ) को छोड़ती है । [ कमलके सञ्चालनसे कमलनाल ( डण्ठल ) का हिलना तथा भ्रमरोंके बहुत गुञ्जनसे लक्षित ( या-सुन्दर ) होनेके समान इन्द्रकी ओरसे मुखको मोड़नेसे दमयन्ती कण्ठनाल हिला तथा परिहास करती हुई सखियोंने इन्द्रकी ओरसे मुखको मो ते समय निषेधसूचक जो 'हूँ हूँ' शब्द किया उससे उसका मुख बहुत सुन्दर दीखने लगा, ऐसी दमयन्तीने इन्द्रकी ओरसे मुख मोड़कर सरस्वती देवीके आलिङ्गन ( कसकर अङ्कमें पकड़ने ) को उस प्रकार छुड़ा लिया, जिस प्रकार नई बहू सखियोंके मना करते रहनेपर भी पतिके आलिङ्गनको छुड़ा लेती है ] ॥ ३६ ॥

**देवी कथञ्चित् खलु तामदेवद्रीचीभवन्तीं[1] स्मितसिक्तसृक्का ।**
**आह स्म तां मय्यपि[2] ते भृशं का शङ्का ? शशाङ्कादधिकास्यबिम्बे ! ॥**

**देवीति । देवी तां भैमीं, कथञ्चित् खलु कथञ्चिदपि, देवान् अञ्चतीति देवद्रीची देवानुवर्त्तिनी, 'देवानञ्चति देवद्र्यङ्' इत्यमरः । 'ऋत्विग्दधृक्-' इत्यादिना अञ्चतेः क्विन्-प्रत्ययः, 'विश्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेरद्र्यादेशः, 'उगितश्च' इति सूत्रे उगित्वात् ङीप् 'अञ्चतेश्चोपसङ्ख्यानाम्' इति वा ङीप् । सा न भवन्तीम् इति अदेवद्रीचीभवन्तीं देवान् अनभिगच्छन्तीमित्यर्थः, दृष्ट्वेति शेषः, स्मितेन सिक्ते सृक्कणी ओष्ठप्रान्तौ यस्याः सा तादृशी सती, 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः । हे शशाङ्कात् अधिकम् उत्कृष्टम्, आस्यबिम्बं मुखस्वरूपं यस्यास्तस्याः सम्बुद्धिः, सापेक्षत्वेऽपि गमकत्वात् समासः । मयि मम समीपेऽपि, ते तव, का शङ्का ? अविश्वासः ? न काचिदित्यर्थः, इति तां भैमीं, भृशम्, आह स्म उवाच, 'लट् स्मे' इति भूते लट् , 'ब्रुवः पञ्चानाम्' इत्यादिना णलाहादेशः ॥ ३७ ॥**

सरस्वती देवीने, किसी प्रकार ( बड़ी कठिनाईसे ) देव ( इन्द्र ) के सम्मुख नहीं होती हुई उस ( दमयन्ती ) से बोली—'हे चन्द्रसे भी अधिक सुन्दर मुखबिम्बवाली (दमयन्ति) ! मेरे विषयमें ( पाठा०—मेरे प्रति ) भी अधिक (पाठा०—फिर) कोई शङ्का है क्या ? अर्थात् परम हितैषिणी मुझमें तुम्हें किसी प्रकारका ( 'यह सरस्वती मुझे इन्द्रके पास वरण करनेके लिये पकड़कर ले जा रही है' ऐसा ) सन्देह नहीं करना चाहिये ॥ ३७ ॥

---

१. 'तामदेवद्रीचीं भवन्तीम्' इति पाठान्तरम् ।
२. 'मां प्रत्यपि ते पुनः का' इति पाठान्तरम् ।

एषामकृत्वा चरणप्रणाममेषामनुज्ञामनवाप्य[1] सम्यक्।
सुपर्ववैरे तव वैरसेनिं वरीतुमीहा कथमौचितीयम्[2]? ॥ ३८ ॥

एषामिति। हे वत्से! एषाम् इन्द्रादीनां, चरणप्रणामम् अकृत्वा, एषामनुज्ञां नलवरणे सम्मतिं, सम्यक् अनवाप्य अप्राप्य च, सुपर्ववैरे अवज्ञाकरणात् देवताद्वेषे सति, तव वीरसेनस्य अपत्यं वैरसेनिः नलः तं, वरीतुम् 'वृतो वा' इति विकल्पादिटो दीर्घः। इयम् ईहा स्पृहा, कथम् औचिती औचित्यम्? न कथञ्चिदित्यर्थः॥ ३८॥

('तब तुम मुझे देवोंके सम्मुख वरण करनेके लिए पकड़कर क्यों लिये जा रही हो' इस शङ्काका निवारण करती हुई सरस्वती देवी आगे फिर कहती हैं कि—) इन (इन्द्रादि देवों) के चरणोंमें प्रणाम नहीं करके तथा इनकी आज्ञाको अच्छी तरह नहीं प्राप्त करके (अपना वरण त्याग कर नलको वरण करनेके कारण उत्पन्न होनेवाले) देवोंके विरोध रहने पर वीरसेनके पुत्र (नल) को वरण करनेकी तुम्हारी यह इच्छा उचित है क्या? अर्थात् कदापि नहीं; (अतएव मैं तुम्हें इनके सामने वरण करनेके लिए नहीं ले जाना चाहती, किन्तु 'तुम इनके चरणोंमें प्रणामकर प्रसन्न होकर अपना-अपना रूप धारण करनेसे नल-वरणार्थ इनकी आज्ञाके मिल चुकने पर भी उक्त प्रणाम द्वारा इन्हें अतिशय प्रसन्नकर शिरः-कम्प या वचनादिसे स्पष्टरूपमें आज्ञा पाकर नलका वरण करे' इस अभिप्रायसे मैं तुम्हें इनके सम्मुख ले जाना चाहती हूँ, अतएव तुम्हें मेरे विषयमें कोई शङ्का नहीं करनी चाहिये]।

इतीरिते विश्वसितां पुनस्तामादाय पाणौ दिविषत्सु देवी।
कृत्वा प्रणम्रां वदति स्म सा तान् भक्तेयमर्हत्यधुनाऽनुकम्पाम्॥ ३९॥

इतीति। सा देवी इतीरिते सति विश्वसितां प्रतीतां, तां भैमीं, पुनः भूयः, पाणौ हस्तौ, आदाय तत्पाणिं गृहीत्वेत्यर्थः, दिविषत्सु देवेषु, देवतानां समीपे इत्यर्थः, प्रणम्रां प्रणतां, कृत्वा तान् इन्द्रादिदेवान्, वदति स्म उक्तवती, 'लट् स्मे' इति भूते लट्। किमिति? भक्ता युष्मद्भक्ता, इयं दमयन्ती, अधुना इदानीम्, अनुकम्पां भवत्कृपाम्, अर्हति; निजवरणाशां विहाय नलवरणार्थमनुग्रहं कुरुतेति भावः॥ ३९॥

सरस्वती देवी ऐसा (१४।३८) कहने पर विश्वासकी हुई उस (दमयन्ती) को फिर हाथमें लेकर (ग्रहणकर) देवोंमें प्रणत करके 'भक्ता' यह (दमयन्ती) इस समय आप-लोगोंकी (नल वरणकी स्वीकृतिरूपी) दयाके योग्य है अर्थात् अब आपलोग इस दमयन्ती पर दयाकर नलवरणार्थ इसे स्वीकृति दें॥ ३९॥

युष्मान् वृणीते न बहून् सतीयं शेषावमानाच्च भवत्सु नैकम्।
तद्वः समेतं नृपमंशमेनं वरीतुमन्विच्छति लोकपालाः!॥ ४०॥

युष्मानिति। हे लोकपालाः! सती साध्वी, एकभर्तृका इति यावत्, इयं भैमी,

1. 'मनिशम्य' इति पाठान्तरम्।
2. 'कतमौचिती' इत्यपि पाठः, इति 'प्रकाश'-कारः।

युष्मान् बहून् न वृणीते, पातिव्रत्यभङ्गभयादिति भावः, शेषाणाम् अवशिष्टानाम्, अवमानात् अवमानप्रसङ्गात्, भवत्सु मध्ये एकञ्च न, वृणीते इति पूर्वानुषङ्गः, तत् तस्मात्, वः युष्माकं सम्बन्धिनं, समेतं मिलितम्, अंशं सर्वांशसमष्टिरूपम्, 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति स्मरणात्, एनं नृपं वरीतुम् अन्विच्छति, 'एकवरणापेक्षया सर्वांशनिर्मितस्य नलस्य वरणेनैव सर्वेषां सम्मानं भवति' इति भावः॥

हे लोकपाल ! पतिव्रता यह (दमयन्ती) बहुत (गणनामें चार) आपलोगोंको वरण नहीं करती; तथा शेष तीन देवोंका अपमान होनेसे आपलोगोंमें-से एकको भी वरण नहीं करती; अत एव आपलोगोंके सम्मिलित अंशवाले इस राजा (नल) को वरण करना चाहती है। [इस कारण अब आपलोगोंको यह आशङ्का नहीं करनी चाहिये कि स्वयं वरण करानेकी इच्छासे आये हुए हमलोग दूसरेको वरण करनेकी स्वीकृति इसके लिए कैसे दें ?] ॥ ४० ॥

भैम्याः स्रजः सञ्जनया पथि प्राक् स्वयंवरं संवरयाम्बभूव ।
सम्भोगमालिङ्गनयाऽस्य वेधाः शेषन्तु कं हन्तुमियद्यतध्वम् ? ॥४१॥

किञ्च भैम्या नलवरणसम्भोगौ तत्र प्रागेव ब्रह्मणेव निर्वर्त्तितौ किमपरमवशिष्यते यद्विघातार्थमयं वः प्रयासः ? इत्याह, भैम्या इति । किञ्च, वेधाः स्रष्टैव, प्राक् युष्मद्दौत्यानुसन्धानकाले, पथि अन्तःपुरमार्गे, स्रजः माल्यस्य, सञ्जनया कण्ठे योजनया, 'ण्यासश्रन्थो युच्' इति ण्यन्तत्वात् युच्-प्रत्ययः, भैम्याः स्वयंवरं नलवरणं, संवरयाम्बभूव निर्वर्त्तयामास, तथा अस्य नलस्य, आलिङ्गनया आश्लेषणया, पूर्ववत् युच्, सम्भोगं, संवरयाम्बभूव इति पूर्वानुषङ्गः; एतच्चोभयं षष्ठसर्गे 'प्रसूप्रसादाधिगता' 'अन्योन्यमन्यत्रवत्' इति श्लोकद्वये अनुसन्धेयम्; शेषम् इतोऽवशिष्टन्तु 'अथ शेषं त्रिष्वन्यस्मिन् उपयुक्तेतरेऽपि च। स्वनिर्माल्यप्रदाने स्त्री ना नागेशप्रधानयोः ॥' इति वैजयन्ती, कं सम्भोगं, हन्तुं व्याघातयितुम्, इयत् एतावत् यथा तथा नलरूपधारणादिना इत्यर्थः, यतध्वं यत्नं कुरुत ? सम्प्रश्ने लोट्, ब्रह्मसृष्टेरलङ्घ्यत्वात् वृथा वः प्रयासः, अतः अनुज्ञादानमेव कर्त्तव्यम् इति भावः ॥ ४१ ॥

ब्रह्माने पहले (आपलोगोंका दूत बनकर दमयन्तीके अन्तःपुरमें नलके जानेपर) मार्गमें (माताकी सेवा करनेके उपरान्त अपने महलको लौटते समय) मालाके सङ्ग करने अर्थात् पहनानेसे ('प्रसूप्रसादाधिगता—' ६।४९) दमयन्तीका स्वयंवर कर दिया है तथा इस (नल) के आलिङ्गनसे ('अन्योन्यमन्यत्र—' ६।५१) सम्भोग (बाह्य रति) को पूरा कर दिया है, फिर बाकी बचे हुए किस सम्भोगको नष्ट करनेके लिए आपलोग इतना (स्वरूपका त्यागकर नलरूपको ग्रहण करना, दूती भेजना तथा नलतकको दूत बनाकर भेजना आदि) उपाय कर रहे हैं ? (अर्थात् उक्त प्रकारसे नलके कण्ठमें मालार्पणरूप स्वयंवर तथा नलका आलिङ्गनरूप बाह्यसम्भोग कराकर ब्रह्माने ही दमयन्तीको नलकी पत्नी

बना दिया है, अत एव अब आपलोग ब्रह्माके किये हुए कार्यका उल्लङ्घन न करके नलवरणार्थ दमयन्तीको आज्ञा-प्रदान करें ] ॥ ४१ ॥

**वर्णाश्रमाचारपथात् प्रजाभिः स्वाभिः सहैवास्खलते नलाय ।**
**प्रसेदुषो वेदृशवृत्तभङ्ग्या दित्सैव कीर्त्तेर्भुवमानयद् वः ? ॥ ४२ ॥**

यद्वा, किमेषां देवानां दोषग्रहणेन येनेत्थमुपालभ्यन्ते ? किन्तु गुणग्रहणेनैव तान् प्रसादयामीत्याशयेनाह, वर्णेति । वर्णानां ब्राह्मणादीनाम्, आश्रमाणां ब्रह्मचर्यादीनाम्, आचारपथात् सद्वृत्तमार्गात्, स्वाभिः स्वकीयाभिः, प्रजाभिः सहैव अस्खलते अचलते, नलाय प्रसेदुषः प्रसन्नान्, 'भाषायां सदवसश्रुवः' इति सदेः क्वसुरादेशः । वः युष्मान्, ईदृश्या अकपटदूत्यकृत्यप्रकाशितया, वृत्तभङ्ग्या चरित्रवैचित्र्येण, तद्व्याजेनेत्यर्थः 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः, कीर्त्तेः दित्सा नलाय कीर्त्तिं दातुम् इच्छैव कर्त्री, ददातेः 'सनि मीमा-' इत्यादिना इसादेशेऽभ्यासलोपः, 'अः प्रत्ययात्' इत्यकार-प्रत्यये टाप्, भुवम् आनयद्वा ? युष्मान् पृथिवीमानीतवती किम् ? 'नीवह्योः—' इत्यादिना नयतेर्द्विकर्मकता । नलस्य कीर्त्तिम् अलङ्कर्त्तुम् अयं वः प्रयासो न तु भैमीं पीडयितुमिति भावः ॥ ४२ ॥

अथवा अपनी प्रजाओंके साथ वर्णों ( ब्राह्मण, क्षत्रिय, वैश्य तथा शूद्रों ) और आश्रमों ( ब्रह्मचर्य, गृहस्थ, वानप्रस्थ तथा संन्यास ) के आचारमार्गसे स्खलित नहीं होनेवाले अर्थात् प्रजाओंके साथ ही वर्णाश्रमाचरित मार्ग पर चलनेवाले नलके लिए, प्रसन्न आपलोगोंको ऐसे व्यवहार ( नलके अकपटदूतभावसे प्रकाशित विचित्र कार्य ) के द्वारा कीर्तिको देनेकी इच्छा ही भूलोक पर लायी है, ( अथवा—ऐसे व्यवहारसे प्रसन्न आपलोगोंको कीर्ति देनेकी इच्छा ही…… ) । [ 'इन्द्रादि दिक्पालोंके स्वयंवरमें अपने वरणके लिए उपस्थित होनेपर भी दमयन्तीने उनको छोड़कर नलको ही वरण किया' ऐसी नलकी कीर्ति उत्पन्न करनेके लिए ही आपलोग इस भूलोकमें आये हैं, अप्सराओंके साथ सम्भोग करनेवाले आपलोगोंकी मानवीके साथ सम्भोग करनेकी इच्छा भला कैसे हो सकती है ? अत एव अब नलवरणार्थ दमयन्तीको आपलोग आज्ञा दें ] ॥ ४२ ॥

**इति श्रुतेऽस्या वचने च हास्यात् कृत्वा सलास्याधरमास्यबिम्बम् ।**
**भ्रूविभ्रमाकूतकृताभ्यनुज्ञेष्वेतेषु तां साऽथ नलाय निन्ये ॥ ४३ ॥**

इतीति । किञ्चेति चार्थः, अस्याः देव्याः, इति इत्थम्भूते, वचने श्रुते सति हास्यात् प्रसन्नताजनितहासाद्धेतोः, आस्यबिम्बं सलास्याधरं चलदोष्ठमिति यावत्, कृत्वा, एतेषु देवेषु, भ्रूविभ्रम एव भ्रूचेष्टैव, आकूतम् अभिप्रायः तेन अभिप्रायव्यञ्जकभ्रूचेष्टयेत्यर्थः, कृता अभ्यनुज्ञा यैः तेषु सत्सु, अथ अनुज्ञाप्राप्त्यनन्तरं, सा देवी, तां भैमीं, नलाय निन्ये नलसमीपं निनायेत्यर्थः । क्रियाग्रहणाच्चतुर्थी ॥ ४३ ॥

१. 'दित्सेव' इति पाठान्तरम् । २. 'वचसैव' इति 'प्रकाश' कारसम्मतः पाठः ।

इस प्रकार ( १४।४०-४२ ) इस ( सरस्वती देवी ) के वचन सुनने पर प्रसन्नताजन्य हास्यसे मुखबिम्बको विलासयुक्त कर अर्थात् प्रसन्नतापूर्वक सविलास हंसकर इन ( इन्द्रादि चारो देवों ) के भ्रूचालनके अभिप्रायसे आज्ञा अर्थात् भ्रुकुटि द्वारा नलवरणार्थ स्वीकृति देनेपर वह ( सरस्वती देवी ) उस ( दमयन्ती ) को नलके पास ले गयी ॥ ४३ ॥

**मन्दाक्षनिष्पन्दतनोर्मनोभूदुष्प्रेरमप्यानयति स्म तस्याः ।**
**मधूकमालामधुरं करं सा कण्ठोपकण्ठं वसुधासुधांशोः ॥ ४४ ॥**

मन्दाक्षेति । सा सरस्वती, मन्दाक्षनिष्पन्दतनोः लज्जानिश्चलाङ्ग्याः, तस्याः भैम्याः, मनोभुवा कामेनापि, दुष्प्रेरं प्रेरयितुमशक्यं, मधूकमालया मधुरं रम्यं, करं वसुधासुधांशोः भूचन्द्रस्य नलस्य, कण्ठोपकण्ठं कण्ठसमीपम्, आनयति स्म प्रापयामास; तदा अस्याः स्मरादपि लज्जा बलीयसी अभूदिति भावः ॥ ४४ ॥

उस ( सरस्वती ) ने लज्जासे निश्चल शरीरवाली उस ( दमयन्ती ) के कामदेवसे भी कठिनतासे प्रेरणीय तथा महुएकी मालासे सुन्दर हाथको पृथ्वीचन्द्र ( नल ) के कण्ठके पास पहुंचाया ॥ ४४ ॥

**अथाभिलिख्येव समर्प्यमाणां राजिं निजस्वीकरणाक्षराणाम् ।**
**दूर्वाङ्कुराढ्यां नलकण्ठनाले वधूर्मधूकस्रजमुत्ससर्ज ॥ ४५ ॥**

अथेति । अथ वधूः कन्या भैमी, अभिलिख्य लिखित्वा, समर्प्यमाणां दीयमानां, निजस्य आत्मीयस्य, यत् स्वीकरणं विवाहेन परिग्रहणं, तस्य अक्षराणां तद्वाचकवर्णानां, मां पत्नीं कुरु इत्यक्षराणामित्यर्थः, अहं त्वां वरयामि इत्यक्षराणामित्यर्थो वा, राजिं श्रेणीमिव, दूर्वाङ्कुराढ्यां दूर्वाप्ररोहभूयिष्ठां, मधूकस्रजं मधुद्रुमकुसुममालां, 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । नलकण्ठनाले उत्ससर्ज अर्पयामास ॥ ४५ ॥

इसके ( नल-कण्ठके पास हाथ पहुंचानेके ) बाद वधू ( दमयन्ती ) ने लिखकर समर्पित की जाती हुई अपने स्वीकार ( 'मैंने तुम्हें निश्चितरूपमें पति स्वीकृत किया' ऐसा, अथवा— 'तुम मुझे अपनी पत्नी स्वीकृत करो' ऐसा ) के अक्षरोंकी पङ्क्ति ( समूह ) के समान दूर्वाङ्कुरोंसे भरी हुई उस महुएकी माला अर्थात् वरणमाला ( जयमाला ) को नलके कण्ठनालमें डाल दिया । [ दूर्वाङ्कुर श्यामवर्ण होनेसे अक्षरतुल्य तथा महुएके फूलोंको अक्षरोंके सन्धितुल्य और कण्ठको नाल ( कमलका डण्ठल ) कहनेसे नलके मुखको कमलतुल्य समझना चाहिये ] ॥ ४५ ॥

**तां दूर्वया श्यामलयाऽतिवेलं शृङ्गार-भा-सन्निभया सशोभाम् ।**
**मालां प्रसूनायुधपाशभासं कण्ठेन भूभृद्बिभराम्बभूव ॥ ४६ ॥**

तामिति । अतिवेलं भृशं, श्यामलया हरितवर्णया, अत एव शृङ्गार-भा-सन्निभया शृङ्गाररसप्रभासदृश्या, 'श्यामो भवति शृङ्गारः' इति भरतवचनात् इति भावः

---

१. '-निस्पन्द-' इति दन्त्यमध्यं पाठान्तरम् ।

दूर्वया सशोभां शोभमानां, प्रसूनायुधस्य कन्दर्पस्य, यः पाशः पाशायुधं, मालाया मदनोद्दीपकत्वादिति भावः, तस्येव भा यस्याः तादृशीं, मालां भूभृत् नलः, कण्ठेन बिभराम्बभूव धारयामास 'भीह्रीभृहुवां श्लुवच्च' इति विकल्पादाम्-प्रत्यये श्लुवद्भावाद् धातोर्द्विर्भावः, 'कृञ्चानुप्रयुज्यते लिटि' इति भुवोऽनुप्रयोगः ॥ ४६ ॥

राजा नलने अत्यन्त श्याम वर्ण ( अत एव ) शृङ्गारशोभाके समान दूर्वासे सुन्दर ( अथवा—श्याम वर्ण ( अत एव ) शृङ्गारशोभाके समान दूर्वासे ( अत्यन्त सुन्दर ) तथा पुष्पायुध ( कामदेव ) के पाशके समान उस मालाको कण्ठसे धारण कर लिया ॥ ४६ ॥

दूर्वाग्रजाग्रत्पुलकावलिं तां नलाङ्गसङ्गाद् भृशमुल्लसन्तीम् ।
मानेन मन्ये नमितानना सा सासूयमालोकत पुष्पमालाम् ॥ ४७ ॥

दूर्वाग्रेति । सा भैमी, दूर्वाग्राण्येव जाग्रती उद्गच्छन्ती, पुलकावलिः यस्याः तां स्पर्शेन सञ्जातपुलकामिव स्थितामित्यर्थः, नलाङ्गसङ्गात् भृशम् अत्यर्थम्, उल्लसन्तीम् शोभमानाम्, आनन्दयुक्ताञ्च, तां पुष्पमालां मानेन मालायाः साफल्यदर्शनात् प्रणयकोपेन, नमितानना सती सासूयम् आलोकतेति मन्ये । अत्र दूर्वाग्रेत्यादिप्रस्तुतमालाविशेषणसाम्यादप्रस्तुतसपत्नीप्रतीतेः समासोक्तिः, तदुपजीवनेन लज्जाहेतुक-नलाननालोकेन मानकृतासूयाहेतुकत्वोत्प्रेक्षणादनयोरङ्गाङ्गिभावेन सङ्करः ॥४७॥

वह ( दमयन्ती ) दूर्वाङ्कुररूप उत्पन्न रोमाञ्च-समूहवाली तथा नलके शरीरसंसर्गसे अत्यन्त शोभमान (पक्षा०—हर्षयुक्त) पुष्पमालाको मान ( प्रणयकोप ) से मुखको नीचे करके ईर्ष्यासे देखा, ऐसा मैं मानता हूं । [ जिस प्रकार अपने प्रियके शरीर–सम्पर्कसे रोमाञ्चयुक्त शरीरवाली एवं हर्षित दूसरी स्त्रीको मानसे मुखको नीचा करके ईर्ष्यापूर्वक देखती है, उसी प्रकार नलशरीर-सम्पर्कसे दूर्वाङ्कुररूप रोमाञ्चयुक्त तथा शोभती हुई मालारूप सपत्नीको मानो दमयन्तीने मानसे अधोमुखी होकर देखा ] ॥ ४७ ॥

सा निर्मले तस्य मधूकमाला हृदि स्थिता च प्रतिबिम्बिता च ।
कियत्यमग्ना कियती च मग्ना पुष्पेषुबाणालिरिव व्यलोकि ॥ ४८ ॥

सेति । तस्य नलस्य, निर्मले स्वच्छे, हृदि वक्षसि, स्थिता च बहिरवस्थिता च, प्रतिबिम्बिता च हृदयस्य स्वच्छत्वेन अन्तः प्रतिफलिता च, सा मधूकमाला कियती स्वल्पा, अमग्ना बहिरवस्थिता, कियती स्वल्पा, मग्ना अन्तः प्रविष्टा च, अर्द्धमग्ना चेत्यर्थः, पुष्पेषोः कामस्य, बाणालिरिव बाणपङ्क्तिरिव, व्यलोकि दृष्टा, तत्रत्यजनैरिति शेषः । इत्युत्प्रेक्षा ॥ ४८ ॥

उस ( नल ) के निर्मल हृदय ( छाती ) में ( बाहर ) स्थित तथा ( दर्पणतुल्य स्वच्छ होनेसे ) अन्तःकरणमें प्रतिबिम्बित वह महुएकी माला कुछ भीतर प्रविष्ट तथा कुछ बाहर स्थित कामबाणसमूहके समान देखी गयी ॥ ४८ ॥

---

१. इमौ श्लोकौ ( १४।४८-४९ ) 'प्रकाश' कृता व्यत्यासेन पठित्वा व्याख्यातौ ।

काऽपि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम् ।
सैवाननेभ्यः पुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार ॥ ४९ ॥

काऽपीति । प्रमोदेन हर्षातिरेकेण, अस्फुटं यथा तथा निर्जिहानाः निर्गच्छन्तः, वर्णाः यस्याः तादृशी एव हर्षपारवश्यात् अस्फुटाक्षरैवेत्यर्थः, आसां स्वयंवरदर्शनार्थमागतानां, पुरसुन्दरीणाम् आननेभ्यः काऽपि अपूर्वा, या मङ्गलगीतिः, उच्चचार उच्चरिता, सैव अस्फुटाक्षरा मङ्गलगीतिरेव, उच्चैः तारम्, उलूलुध्वनिः, अभूदिति शेषः । अनुकारिशब्दोऽयम् उलूलुरित्येवंरूपः कश्चित् हर्षणात्मको मुखोच्चार्यो ध्वनिविशेषः उत्सवादौ स्त्रीभिरुच्चार्यते इत्युदीच्यानामाचारः । पुरसुन्दरीणां यत् उत्सवादौ मङ्गलसूचकं गानं तदेव हर्षपारवश्यादस्फुटाक्षरत्वात् उलूलुध्वनिकल्पमभूदित्यर्थः ॥

अत्यधिक हर्षसे कहे जाते हुए अस्पष्ट अक्षरोंवाला जो ( स्वयम्वर देखनेके लिए आयी हुई ) नगरकी स्त्रियोंके मुखसे मङ्गल-गान निकला अर्थात् गाया गया, वही 'उलूलु' ध्वनि ( विवाहादि मङ्गल कार्योंके अवसरपर स्त्रियों द्वारा किया जानेवाला 'उलूलु' रूप अस्पष्ट ध्वनि-विशेष ) उल्लसित हुआ । [ अब भी बङ्गदेशकी स्त्रियोंको मङ्गल-कार्योंमें 'उलूलु...' रूप अस्पष्ट शब्दोच्चारण करते देखा जाता है ] ॥ ४७ ॥

रोमाणि सर्वाण्यपि बालभावाद् वरश्रियं वीक्षितुमुत्सुकानि ।
तस्यास्तदा कण्टकिताङ्गयष्टेरुद्ग्रीविकादानमिवान्वभूवन् ॥ ५० ॥

अथास्यास्त्रिभिः पुलकोदयमाह, रोमाणीत्यादि । तदा तत्काले, कण्टकिताङ्गयष्टेः पुलकितशरीरायाः, तस्याः भैम्याः, सर्वाण्यपि रोमाणि बालभावात् कचत्वात्, शिशुत्वाच्च, 'बालः कचे शिशौ मूर्खे' इति विश्वः । वरस्य वोढुः नलस्य, श्रियं सौन्दर्यं, वीक्षितुं द्रष्टुम्, उत्सुकानि सन्ति, उद्ग्रीविका उन्नमितग्रीवीकरणं, ग्रीवोन्नमनमिति यावत् । उद्ग्रीवयतेः 'तत्करोति—' इति ण्यन्ताद्धात्वर्थनिर्देशेऽपि ण्वुल्प्रत्ययः तस्याः आदानं स्वीकारम्, अन्वभूवन्निवेत्युत्प्रेक्षा । बाला ह्युद्ग्रीवा भृशं पश्यन्तीति भावः ॥

उस समय रोमाञ्चित शरीरयष्टिवाली उस ( दमयन्ती ) के, बालभाव ( केशत्व, पक्षा०—बचपन ) के कारण वर ( दुल्हा नल ) की शोभाको देखनेके लिए उत्कण्ठित सभी रोम ऊपरकी ओर गर्दन किये हुएके समान हो गये । [ दमयन्तीके रोमाञ्चयुक्त शरीरमें खड़े हुए रोम ( रोंगटे ) ऐसे मालूम पड़ते थे कि मानो वे बचपन होनेसे वरकी शोभा देखनेके लिए उत्सुक होकर ऊपर गर्दन किये हों । बच्चोंका दुल्हेको शोभा देखने के लिए उत्कण्ठित होना तथा छोटा होनेके कारण अच्छी तरह नहीं दीखनेसे गर्दनको ऊपर उठाना स्वभाव होता है । प्रकृतमें 'ब' और 'व' में अभेद मानकर 'बालत्व' ( बचपन ) तथा 'वालत्व' ( केशभाव ) होनेसे उक्त कल्पना की गयी है ] ॥ ५० ॥

रोमाङ्कुरैर्दन्तुरिताखिलाङ्गी रम्याधरा सा सुतरां विरेजे ।
शरव्यदण्डैः श्रितमण्डनश्रीः स्मारी शरोपासनवेदिकेव ॥ ५१ ॥

रोमाङ्कुरैरिति । रोमाङ्कुरैः पुलकैः, दन्तुरितं विषमितम्, अखिलाङ्गं यस्याः सा, रम्यौ अधरौ दन्तवसने, ओष्ठौ इत्यर्थः, अन्यत्राधोभागश्च यस्याः सा, 'अधरो दन्तवसने हीनेऽनूर्ध्वेऽधरोऽन्यवत्' इति विश्वः। सा भैमी, शरव्यदण्डैः निखातलक्ष्यभूतयष्टिभिः, श्रिता प्राप्तेत्यर्थः, मण्डनश्रीः प्रसाधनशोभा यस्याः सा तादृशी, रोमाङ्कुराणां शरव्यदण्डसादृश्यं बोध्यम्; स्मरस्येयं स्मारी कन्दर्पसम्बन्धिनी, शरोपासनस्य शराभ्यासस्य, वेदिकेव सुतराम् अत्यर्थं, विरेजे शुशुभे; सञ्जातपुलकां तां दमयन्तीं कामः स्वशरैः पुनः पुनः विव्याध इति भावः। शराभ्यासिनो व्याधप्रमुखा निखातलक्ष्ययष्टिकां वेदीं कुर्वन्तीति प्रसिद्धिः ॥ ५१ ॥

रोमाङ्कुरोंसे उच्चावच ( विषमित ) सम्पूर्ण शरीरवाली तथा सुन्दर ओष्ठोंवाली वह ( दमयन्ती ) लक्ष्य ( निशाने ) के दण्डोंसे अलङ्कार–शोभाको पायी हुई कामदेवकी बाणाभ्यासको वेदीके समान अत्यन्त शोभने लगी । [ बाणाभ्यास करनेवाले व्यक्ति दण्डा गड़ी हुई वेदी बनाकर उसे निशाना बनाकर बाण मारते हैं । रोमाञ्चित दमयन्तीको कामदेवने अपने बाणोंसे बार–बार निशाना बनाकर पीड़ित किया ] ॥ ५१ ॥

**चेष्टा व्यनेशन्निखिलास्तदाऽस्याः स्मरेषुपातैरिव ता विधूताः ।**
**अभ्यर्थ्य नीताः कलिना मुहूर्त्तं लाभाय तस्या बहु चेष्टितुं वा ॥५२॥**

चेष्टा इति । तदा तत्काले, अस्याः भैम्याः, ताः प्रागनुभूताः, निखिलाः चेष्टाः कटाक्षवीक्षणाङ्गविक्षेपादयः, स्मरस्येषुपातैः बाणप्रहारैः, विधूताः निरस्ता इवेत्युत्प्रेक्षा, व्यनेशन् विनष्टाः, नशेर्लुङि पुषादित्वादङ्, 'नशिमन्योरलिटि एत्वं वक्तव्यम्' इत्येत्वम्[2]। 'विनेशु'रिति पाठे—लिट्यनादेशादित्वात् 'अत एकहल्मध्येऽनादेशादेर्लिटि'

---

१. 'विनेशुर्नि–' इति पाठान्तरम् ।

२. एतदग्रे 'प्रकाश' कृता 'भाष्यकारस्य, वार्तिककारस्य, पदमञ्जरीकारस्यापि मते छन्दस्येवैत्त्वं नशिमन्योर्न भाषायाम् । 'अनेशन्नस्येषवः' इत्युदाहरणात् नशेरप्येत्वं छन्दस्येव' इत्यवसीयते । वृत्तिकृता तु नशिमन्योर्भाषाविषयत्वमङ्गीकृत्य अमिपच्योश्छन्दोविषयत्वमङ्गीकृत्यैत्त्वं समर्थितम् ।' इत्युक्तम् । अत्र पक्षद्वयस्यायमाशयः–नशिमन्योर्भाषायामेत्वानङ्गीकारपक्षे भाष्यप्रदीपोद्द्योतकृतो नागेशभट्टस्य अत एव 'चेष्टा व्यनेशन्निखिलास्तदास्याः' इति श्रीहर्षस्य प्रमादः' इत्युक्तिर्मानम् । तयोर्भाषायामप्येत्वाङ्गीकारपक्षे तु 'नशिमन्योरमिपचोश्छन्दस्येत्वमलिट्यपि' इत्येवमानुपूर्वीं परित्यज्य 'नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि' इत्येवमानुपूर्व्या वार्तिककृतः पाठः तथा 'नशिमन्योरलिट्येत्वं छन्दसि', 'अमिपचोरपि' इत्येवम्भूतं 'छन्दसी'ति नशिमनिभ्यां सम्बध्यते, अपिना उत्तरत्रामिपचिभ्यामपि' इत्यभिप्रायकं विभागमविधाय 'नशिमन्योरलिट्येत्वम्,' 'छन्दस्यमिपचोरपि'इत्येवम्भूतं नशिमन्योः सामान्येनैत्वमुक्त्वाऽनन्तरमुत्तरस्थाभ्याममिपचिभ्यामेव छन्दसी'ति सम्बध्यत इत्यभिप्रायको भाष्यकृत्कृतो विभागो मानमित्यवधेयम् ।

इति एत्वाभ्यासलोपौ। प्रकारान्तरेणोत्प्रेक्षते—वा अथवा, तस्याः भैम्याः, लाभाय प्राप्तये, वहु वहुविधं, चेष्टितुं विलसितुं, कलिना कलिपुरुषेण, अभ्यर्थ्य 'कटाक्षवीक्षणादिविलासा मयि तिष्ठन्तु' इति दमयन्तीं प्रार्थ्य, मुहूर्त्तम् ईषत्कालं, नीताः; दमयन्तीप्सया पापिष्ठस्य कलेरप्यागमित्वात्तस्य विकृतरूपस्य चतुरचेष्टानभिज्ञत्वाच्च दमयन्तीलाभोपयोगिवहुविलासप्रदर्शनार्थं भैमीविलासा एव प्रार्थ्य नीता इवेत्युत्प्रेक्षा। एतेन अस्याः स्तम्भाख्यसात्विकभाव उक्तः, 'स्तम्भः स्यान्निष्क्रियाङ्गत्वम्' इति लक्षणात् ॥ ५२ ॥

उस समय कामबाणोंके गिरने (प्रहार, पाठा०—वायु) से दूर हुईके समान तथा उसे (दमयन्तीको) पानेके लिए अनेक प्रकारसे विलासार्थ (दमयन्तीसे ही) मांगकर मुहूर्तभर (क्षणमात्र, या-दो घटी तक) कलिकालके द्वारा ग्रहणकी गयी (अथवा—··· ग्रहणकी गयीके समान) इस दमयन्तीकी सम्पूर्ण चेष्टाएँ (अङ्गविक्षेप, कटाक्षदर्शन आदि) नष्ट हो गयीं। दमयन्तीका कामुक कलि स्वयं साधारणतम विलासी तथा चतुर चेष्टाओंका अनभिज्ञ (अज्ञानी) होनेसे दमयन्तीको नहीं पानेके कारण थोड़े समय तक अपनेको अलङ्कृत करनेके लिए उसके विलासोंको उसीसे मंगनी मांग लिया था, अत एव कुछ समय तक दमयन्ती विलास-चेष्टासे रहित हो गयी थी। [लोकमें भी जव कोई व्यक्ति किसीसे कोई अलङ्कार आदि मंगनी मांगकर ले लेता है तो उससे अपनेको थोड़ी देर तक अलङ्कृत कर लेता है तथा उस अलङ्कारको देनेवाला व्यक्ति उतने समय तक उक्त अलङ्कारसे शून्य रहता है। स्तम्भनामक सात्त्विक भाव उत्पन्न होनेसे दमयन्तीके सम्पूर्ण विलासमय चेष्टाएँ रुक गयीं] ॥ ५२ ॥

तन्न्यस्तमाल्यस्पृशि तस्य[1] कण्ठे स्वेदं करे पञ्चशरश्चकार।
भविष्यदुद्वाहमहोत्सवस्य हस्तोदकं तज्जनयाम्बभूव ॥ ५३ ॥

अथ चतुर्भिर्नलस्यापि सात्विकोदयमाह, तदिति। तया भैम्या, न्यस्तम् अर्पितं, माल्यं स्पृशतीति माल्यस्पृक्, 'स्पृशोऽनुदके क्विन्' तस्मिन्, तस्य नलस्य, कण्ठे करे च पञ्चशरः स्मरः, स्वेदं सात्त्विकं घर्मजलं, चकार जनयामास, तत् स्वेदजलं, भविष्यतः उद्वाहमहोत्सवस्य सम्वन्धि हस्तोदकम् अर्घ्यजलं, जनयाम्बभूवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ५३ ॥

दमयन्ती द्वारा डाली गयी मालासे युक्त उस (नल) के कण्ठ हाथमें (पाठा०—······ युक्त नलके हाथमें जो) कामदेवने पसीना उत्पन्न कर दिया, वह भावी विवाह महोत्सवका हस्तोदक (कन्यादानके समय सङ्कल्प करके वरके हाथमें दिया गया जल) हुआ। [दमयन्तीके जयमाल पहनानेपर नलको भी 'स्वेद' नामक सात्त्विक भाव उत्पन्न हो गया]॥

१. 'यन्नलस्य' इति पाठान्तरम्।

तूलेन तस्यास्तुलना मृदोस्तत् कम्प्राऽस्तु सा मन्मथबाणपातैः[1]।
चित्रीयितं तत्तु नलो यदुच्चैरभूत् स भूभृत् पृथुवेपथुस्तैः॥ ५४॥

तूलेनेति। मृदोः मृद्व्याः, कोमलाङ्ग्या इत्यर्थः, 'वोतो गुणवचनात्' इति विकल्पादनीकारः। तस्याः भैम्याः, तूलेन कार्पासादिना, तुलना लघुतायां साम्यं, यतः तत्तस्मात्, सा भैमी, मन्मथबाणपातैः कम्प्रा चला, अस्तु, तूलानां लघुतया सामान्यकारणेनैव चलत्वात् तत्सदृशानामपि सामान्येनैव चलत्वं युक्तमिति भावः; तु किन्तु, उच्चैः महान्, भूभृत् महीपालः गिरिश्च, 'भूभृत् गिरौ महीपाले' इति शाश्वतः। स नलः तैः बाणपातैः, पृथुवेपथुः महाकम्पः, अतीव कम्पित इत्यर्थः, 'ट्वितोऽथुच्' अभूदिति यत् तत् चित्रीयितं चित्रीकरणं, 'नमोवरिवश्चित्रङः क्यच्', 'क्यचि च' इत्यकारस्येत्वं, क्यजन्तत्वाद्भावे निष्ठा। अल्पवायुना तूलचलने किं चित्रम्? शैलचलनन्तु चित्रीयते इत्यर्थः; धीरः राजा नलोऽपि चलति इत्येव चित्रं भीरुर्भैमी चलतीति न चित्रमिति भावः॥ ५४॥

चूंकि सुकुमारी उस दमयन्तीकी तुलना रूई (अत्यन्त हलके पदार्थ) के साथ है, अत एव कामदेवके बाणोंके गिरने (पाठा०—बाणोंकी हवा) से वह (दमयन्ती, भले ही) कम्पित हो जाय; किन्तु उन्नत अर्थात् अतिशय धीरप्रकृति राजा नल (पक्षा०—अत्यन्त विशाल पर्वत) भी उन (कामबाणके गिरने, पाठा०—कामबाणकी हवा) से अधिक कम्पित हो गये यह आश्चर्य है'। [रूई या रूईके सदृश हलके पदार्थका थोड़ी हवासे भी कम्पित होना तो उचित है, किन्तु विशाल पर्वतका हवासे कम्पित होना आश्चर्यजनक है। प्रकृतमें कोमलाङ्गी दमयन्तीका कामबाणसे कम्पित होना उचित होने पर भी अतिशय गम्भीर प्रकृति राजा नलका कामबाणसे कम्पित होना आश्चर्यजनक है। '……बाणपातैः' पाठमें 'कामबाणके गिरने (के समय उसमें लगे हुए पङ्खोंकी हवा) से रूईतुल्य कोमल (पक्षा०—हलकी) दमयन्तीका कम्पित होना समझना चाहिये, '……बाणवातैः' पाठा०—'प्रकाश' टीकासम्मत है तथा इस पाठमें अर्थ स्पष्ट है॥ दमयन्ती तथा नल—दोनोंको ही कम्परूप सात्त्विक भाव हो गया]॥ ५४॥

दृशोरपि न्यस्तमिवाऽऽस्त राज्ञां रागाद् दृगम्बुप्रतिबिम्बि माल्यम्।
नृपस्य तत्पीतवतोरिवाक्ष्णोः प्रालम्बमालम्बत[2] युक्तमन्तः॥ ५५॥

सात्त्विकानां सर्वरससाधारणत्वात् अन्येषां राज्ञां रोषादश्रूद्गमः, नलस्य तु हर्षादित्याश्रित्य उत्प्रेक्षते, दृशोरिति। राज्ञां नलव्यतिरिक्तभूपानां, रागात् मात्सर्यात्, 'रागोऽनुरक्तौ मात्सर्ये' इति विश्वः। यत् दृगम्बु बाष्पः, सापेक्षत्वेऽपि गमकत्वात् समासः। तत्र प्रतिबिम्बते प्रतिफलतीति दृगम्बुप्रतिबिम्बि, तत्र प्रतिफलितं सदित्यर्थः, माल्यं वरणस्रक्, दृशोः अक्ष्णोरपि, न्यस्तमिव आस्त स्थितमित्युत्प्रेक्षा। आसे-

1. 'बाणवातैः' इति पाठान्तरम्। 2. 'प्रालम्ब्य—' इति पाठान्तरम्।

लँङ् । अपि सम्भावनायां, नलस्य यथोरसि नृपान्तराणां तथा दृशोरपि न्यस्तमिति सम्भावयामीत्यर्थः, कथमन्यथा तेषामश्रूद्गमः ? नृपस्य नलस्य तु, रागाद् दृगम्बुप्रतिबिम्बि अनुरागोत्थाश्रुप्रतिबिम्बितं, तन्माल्यं कर्तृ, पीतवतोः तृष्णया तन्माल्यं सादरं गिलतोरिव स्थितयोः, अक्ष्णोः प्रालम्बम् ऋजुभावेन लम्बमानं सत् 'प्रालम्बमृजुलम्बि स्यात् कण्ठात्' इत्यमरः । अन्तः मध्ये, 'अन्तर्मध्ये तथा प्रान्ते स्वरूपे च दृश्यते' इति विश्वः । युक्तम् आलम्बत अवलम्बते स्म । अत्रापि राज्ञां द्वेषात् अरूच्या तत्प्रतिबिम्बि माल्यं युक्तम् अक्षिगतमेव कृतमित्युत्प्रेक्षा; नलस्य तु रागातिरेकाव अक्षिभ्यां तत् तृष्णया पीतमित्युत्प्रेक्षितस्यैव बाह्यबिम्बिमाल्याध्यवसायभेदेन मध्ये प्रालम्बितया लम्बनमित्युत्प्रेक्ष्यते ॥ ५५ ॥

( नलभिन्न ) राजाओंके मात्सर्यसे उत्पन्न अश्रुमें प्रतिबिम्बित वरणमाला (उन नलभिन्न) राजाओं की आँखमें स्थित-सी हो ( कुश-सी ) गयी, तथा ( स्वयंवरमें दमयन्तीके स्वीकार करनेके कारण ) हर्षसे उत्पन्न नलके अश्रुमें प्रतिबिम्बित वह वरणमाला पान करती ( प्रेमपूर्वक सादर देखती ) हुई नलकी आँखमें सरलतासे लटकती हुई सीधी मालाके रूपमें स्थित हुई, यह उचित ही है । ( अथवा—दमयन्तीने नल-विषयक अनुरागसे उनके कण्ठमें जिस प्रकार वरणमालाको पहनाया, उसी प्रकार नल-भिन्न राजाओंके प्रति द्वेष होनेसे मानो उनके नेत्रोंमें मालाको डाल दिया ( इसी वास्ते उन राजाओंके नेत्र लाल हो गये हैं, आँसू निकलने लगे हैं तथा उस आंखमें ( प्रतिबिम्बित ) वह वरणमाला दीख रही है ) । [लोकमें भी कोई व्यक्ति किसीके प्रति द्वेष होने पर उसकी आँखोंमें अङ्गुली आदि डाल देता है तो उसकी आँखें लाल हो जाती हैं उनसे आँसू आने लगते हैं और वह व्यक्ति मुख फेर लेता है । राजाओंने भी नलके कण्ठमें वरणमाला पड़नेपर दमयन्तीकी प्राप्ति नहीं होनेके कारण नल-विषयक द्वेष होनेसे उस मालाका नलके कण्ठमें पड़ना नहीं सहन किया और मात्सर्यसे उनके नेत्र आँसूसे भर गये तथा लाल हो गये और उन्होंने मुख फेर लिया । पाठा०—नलके नेत्रके भीतरी भागने हर्षसे विस्फार ( वृद्धि ) को स्वीकृत किया अर्थात् वरणमालाके कण्ठमें पड़नेपर नल उसे आँख फाड़कर अच्छी तरह देखने लगे, यह उचित ही है । किसी दुर्लभ वस्तुके प्राप्त होनेपर उसे आँख फाड़कर देखना लोक-प्रसिद्ध है । नलके नेत्र हर्षसे तथा दूसरे राजाओंके नेत्र मात्सर्यसे अश्रुपूर्ण हो गये ] ॥ ५५ ॥

स्तम्भस्तथाऽलम्भितमां नलेन भैमीकरस्पर्शमुदः प्रभावः[1] ।
कन्दर्पलक्षीकरणार्पितस्य स्तम्भस्य दम्भं स चिरं यथाऽऽपत् ॥५६॥

स्तम्भ इति । नलेन भैमीकरस्पर्शेन माल्यप्रदानकाले दमयन्तीपाणिस्पर्शेन, या मुत् आनन्दः तस्याः, प्रभावः तदनुभावजात इत्यर्थः, स्तम्भः निष्क्रियाङ्गत्वलक्षणः सात्त्विकविशेषः, तथा तेन प्रकारेण, अलम्भितमाम् अतिशयेन अलम्भि, लभेः

१. 'प्रसादः' इति पाठान्तरम् ।

कर्मणि लुङि चिणि 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमागमः, 'तिङश्च' इति तमप्-प्रत्यये 'किमेत्तिङव्यय-' इत्यादिना आमुः। यथा स नलः, कन्दर्पस्य लक्षीकरणाय अर्पितस्य शराभ्यासकाले शरव्यत्वेन स्थापितस्य, स्तम्भस्य स्थूणायाः, 'स्तम्भो स्थूणाजडीभावौ' इत्यमरः। दम्भं व्याजत्वं, भावप्रधानो निर्देशः। 'व्याजदम्भोपधयः' इत्यमरः। चिरम् आपत् प्रापत् ॥ ५६ ॥

नलने (वरमालाके पहनानेके समयमें) दमयन्तीके हाथके स्पर्शसे उत्पन्न हर्षके अनुभावसे पैदा हुए (पाठा०—हर्षके प्रसादरूप) स्तम्भ (क्रियाशून्यताजनक 'स्तम्भ' नामक भाव) को उस प्रकार प्राप्त किया, जिस प्रकार वे (नल) लक्ष्यवेधके अभ्यासके लिए कामदेवके द्वारा गाड़े गये खम्भेके व्याजको बहुत देर तक प्राप्त कर लिये। (वरमाला पहनाते समय दमयन्तीके हाथके स्पर्शसे नलका शरीर स्तम्भवत् क्रियाशून्य होनेसे कामदेवके द्वारा लक्ष्यवेधके लिए गाड़े गये खम्भेके समान हो गया। वे दमयन्तीके हाथके स्पर्शसे अत्यन्त कामपीडित हो गये] ॥ ५६ ॥

**उत्सृज्य साम्राज्यमिवाथ भिक्षां तारुण्यमुल्लङ्घ्य जरामिवारात्।**
**तं चारुमाकारमुपेक्ष्य यान्तुं निजां तनूमादधिरे दिगिन्द्राः ॥ ५७ ॥**

उत्सृज्येति। अथ नलवरणानन्तरं, दिगिन्द्राः इन्द्रादिदिक्पालाः, यातुं गन्तुं, स्वर्गमिति शेषः, सम्राजतीति सम्राट् महाराजविशेषः, 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राड्' इत्यमरः। 'सत्सूद्विष-' इत्यादिना क्विप्, 'मो राजि समः क्वौ' इति समो मकारस्य मकारत्वान्नानुस्वारः। तस्य भावः कर्म वा साम्राज्यं चक्रवर्त्तिपदम्, उत्सृज्य त्यक्त्वा, क्षीणपुण्यत्वादिति भावः, भिक्षां याच्ञामिव, तारुण्यं यौवनम्, उल्लङ्घ्य अतिक्रम्य, जरामिव आरात् नलसमीपे, स्वयंवरसभायामेवेत्यर्थः, तं चारुं सुन्दरम्, आकारं नलरूपम्, उपेक्ष्य हित्वा, निजां तनूं सहस्रनेत्रादिविशिष्टाकारम्, आदधिरे स्वीचक्रुः ॥ ५७ ॥

इस (नल-वरण) के बाद दिक्पालों (इन्द्रादि चारों देवों) ने साम्राज्यको छोड़कर भिक्षाके समान तथा यौवनावस्थाको छोड़कर वृद्धावस्थाके समान स्वर्ग जानेके लिये (पाठा०—स्वर्गको जाते हुये) उस सुन्दर आकार (नलके रूप) को छोड़कर अपने शरीर (सहस्रनेत्रत्व आदि) को नलके समीपमें ग्रहण कर लिया। [नलके सुन्दर आकारको साम्राज्य तथा युवावस्थाके साथ और इन्द्रादिके शरीरको भिक्षा और वृद्धावस्थाके साथ उपमा देकर यहां पर नलाकारकी अपेक्षा इन्द्रादिके शरीरको अत्यन्त तुच्छ तथा साम्राज्यका त्यागकर भिक्षावृत्तिको तथा यौवनावस्थाका त्यागकर वृद्धावस्थाको पानेवाले व्यक्तिके समान इन्द्रादि दिक्पालोंको नलके आकारका त्याग करनेमें अत्यन्त दुःख हुआ, यह बतलाया गया है। अथ च—लोकमें भी कोई विद्वान् मनुष्य दूसरेको अत्युत्तम वस्तुको छोडकर अपनी तुच्छ

२. 'यान्तोः' इति पाठान्तरम्।

वस्तुको ही ग्रहण करना प्रशस्त मानता है, अतः इन्द्रादि का वैसा करना भी उचित ही है]॥

मायानलत्वं त्यजतो निलीनैः पूर्वैरहम्पूर्विकया मघोनः ।
भीमोद्भवासात्त्विकभावशोभादिदृक्षयेवाऽऽविरभावि नेत्रैः ॥५८॥

मायेति । मायानलत्वमलीकनलत्वं, त्यजतो मघोनः इन्द्रस्य, निलीनैः देवशक्त्या सङ्गोपितैः, पूर्वैः स्वरूपावस्थायामवस्थानकालिकैः, नेत्रैः सहस्रसङ्ख्यकैरिति भावः, भीमोद्भवायाः भैम्याः, सात्त्विकभावानां नलाङ्गसङ्गजनितरोमाञ्चादीनाम्, शोभायाः दिदृक्षया द्रष्टुमिच्छयेव, इति फलोत्प्रेक्षा द्योत्या आविर्भावस्य शोभादर्शनफलकत्वात्; अहं पूर्वोऽहं पूर्वं इति योऽभिमानः क्रियायां साऽहंपूर्विका तया अहमहमिकया, मयूरव्यंसकादित्वात् समासः । स्वार्थे मत्वर्थे वा ठन् प्रत्ययः । आविरभावि आविर्भूतम् । भावे लुङ् । 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः' ॥ ५८ ॥

असत्य नलाकारको छोड़ते हुए इन्द्रके ( माया शक्तिसे ) गुप्त नेत्र 'मैं पहले उत्पन्न होऊं, मैं पहले उत्पन्न होऊं' ऐसी प्रतिस्पर्द्धासे मानो दमयन्तीके सात्त्विकभाव ( रोमाञ्च, स्वेदोद्गम आदि ) की शोभाको देखनेकी इच्छासे प्रकट हो गये । [ दूसरे भी व्यक्ति किसी अपूर्व कार्यको देखने की स्पर्द्धासे शीघ्र प्रकट होते ( बाहर निकलते ) हैं । इन्द्रने अपने सहस्र नेत्रोंको झट प्रकट कर लिया ] ॥ ५८ ॥

गोत्रानुकूल्यप्रभवे विवाहे तत्प्रातिकूल्यादिव गोत्रशत्रुः ।
पुरश्चकार प्रवरं वरं यमायन् सखायं ददृशे तया सः ॥ ५९ ॥

गोत्रेति । गोत्रानुकूल्यप्रभवे वंशवर्द्धनार्थं प्रवृत्ते, विवाहे तत्प्रातिकूल्यादिव तद्विरोधित्वादिव, गोत्रशत्रुत्वादिवेत्यर्थः, न हि यो यस्य शत्रुः स तदनुकूलकार्यं सहते इति भावः; आयन् स्वयंवरसभायामागच्छन् । इणो लटः शतरि यणादेशः । गोत्रशत्रुः गोत्रं कुलश्चाचलश्च, 'गोत्रं नाम्नि कुलेऽचले' इति विश्वः । तच्छत्रुः गोत्रभित् इन्द्रः, यं प्रवरं श्रेष्ठं, वरं वोढारं, सखायं पुरश्चकार दूत्येन सहायत्वेन स्वीचकारेत्यर्थः, स नल एव, तया भैम्या, ददृशे; देवानां नलरूपपरिहारेण स्वरूपपरिग्रहणात् केवलं सत्यनलस्यैव तत्रावस्थानादिति भावः । केचित्तु प्रवरनामा कश्चिदिन्द्रेण सहायत्वेनानीत इति व्याचक्षते तत्तु अमूलं चिन्त्यं भारतादिषु अदर्शनादिति ॥ ५९ ॥

गोत्रकी अनुकूलता अर्थात् वंशवृद्धिके लिए होनेवाले विवाहमें ( गोत्र अर्थात् पर्वतोंका, पक्षा०—गोत्र अर्थात् वंशका शत्रु होनेसे ) मानो उस ( विवाह ) की प्रतिकूलतासे (स्वयंवरमें) आते हुए गोत्रशत्रु (गोत्र =पर्वतोंका शत्रु इन्द्र, पक्षा०—वंशका शत्रु ) ने श्रेष्ठ जिस वर अर्थात् विवाहकर्ता ( दुल्हा नल ) को मित्र अर्थात् दूतकर्म करनेमें सहायक बनाकर आगे किया ( दमयन्तीके पास पहले भेजा ) था, उस ( नल ) को उस ( दमयन्ती ) ने देखा । 'प्रकाश' व्याख्या सम्मत द्वितीय अर्थ—गोत्र ( वंशके आदि पुरुष वसिष्ठ तथा

कश्यप ) की अनुकूलतासे ( अथवा—गोत्र अर्थात् जन्मकालीन राशिनामोंकी अनुकूलता (तृतीय, एकादश, चतुर्थ और दशम आदि ज्योतिःशास्त्रोक्त श्रेष्ठभकूट होने से ) होनेवाले विवाहके लिए ( स्वर्गसे स्वयंवरसभामें ) आते हुए जिस श्रेष्ठ 'प्रवर' नामक मित्रको मानो गोत्रकी प्रतिकूलतासे गोत्रशत्रु ( इन्द्र ) ने आगे किया ( पक्षा०—सत्कार किया ); उस ('प्रवर' नामक इन्द्र-मित्र) को उस दमयन्तीने देखा। [ 'जीवातु' व्याख्याकार 'मल्लिनाथ' का अभिमत है कि महाभारतादि ग्रन्थोंमें इन्द्रके 'प्रवर' नामक मित्रकी चर्चा नहीं आनेसे द्वितीय अर्थ ( इन्द्रके द्वारा 'प्रवर' नामक मित्रको अपना सहायक बनाकर आगे भेजना ) निराधार होनेसे चिन्त्य है। अत एव दूतकर्म करनेके लिए इन्द्रादि देवोंने जो नलको आगे भेजा था, देवोंके प्रसन्न होनेसे अपना अपना रूप धारण कर लेनेपर दमयन्तीने वास्तविक नलको देखा। द्वितीय अर्थमें—दमयन्ती तथा नलके अनुकूल गोत्र होनेसे नलके साथ गणना ठीक थी तथा दमयन्तीका मनुष्य एवं अपना देव गोत्र होनेसे परस्पर भिन्न गोत्र होनेके कारण गोत्रशत्रु इन्द्रने मनुष्य गोत्रवाले 'प्रवर' नामक अपने मित्रको अपने विवाहमें बाधा उपस्थित करनेके लिए जो आगे किया था, उस 'प्रवर' नामक श्रेष्ठको अब प्रकट होनेपर दमयन्तीका देखना उचित ही है। अथवा—दमयन्ती तथा नलके गोत्रकी अनुकूलताके कारण होनेवाले विवाहमें गोत्र शत्रु ( इन्द्र ) ने 'प्रवर' को सहायक आगे किया, क्योंकि समान 'प्रवर' होनेपर भी वधू-वरका विवाह नहीं होता॥ वधू-वरके जन्मराशिके नामके प्रथमाक्षरके आधारपर गणना बननेपर ही विवाह योग्य होता है, यह ज्यौतिषशास्त्रका सिद्धान्त है ] ॥ ५९ ॥

**स्वकामसम्मोहमहान्धकारनिर्वापमिच्छन्निव दीपिकाभिः।**
**उद्गत्वरीभिश्छुरितं वितेने निजं वपुर्वायुसखः शिखाभिः ॥६०॥**

**स्वेति। अथ वायुसखः अग्निः, दीपिकाभिः दीपैः, स्वः स्वीयः, कामेन सम्मोहः, अज्ञानमेव, महान्धकारः तस्य निर्वापं प्रशान्तिम्, इच्छन्निव उद्गत्वरीभिः उद्गमनशीलाभिः, 'गत्वरश्च' इति क्वरवन्तो निपातः। शिखाभिः ज्वालाभिः, छुरितं व्याप्तं, निजं वपुः वितेने प्रकाशयामास॥ ६०॥**

अपने कामजन्य सम्मोहनरूप महान्धकारको दीपकोंसे शान्तिको चाहते हुएके समान अग्निने ऊपर बढ़ती हुई अपनी ज्वालाओंसे अपने शरीरको प्रकाशित ( या व्याप्त ) किया। [ पहले दमयन्तीको पत्नीरूपमें पानेके लिए कामजन्य संमोह (अज्ञान) युक्त अग्निदेव स्वयंवरमें नलरूप धारणकर आये थे, किन्तु अब दमयन्तीकी स्तुतिसे प्रसन्न होकर अपना वास्तविक रूप ग्रहण कर लिया ] ॥ ६० ॥

**पत्यौ वृते भीमजया न वह्नावह्ना स्वमह्नाय निजुह्नवे यः।**
**जनादपत्रप्य स हा सहायस्तस्य प्रकाशोऽभवदप्रकाशः ॥६१॥**

१. 'महान्धकारं निर्वापयिष्यन्निव' इति पाठान्तरम्।

पत्याविति । भीमजया भैम्या, पत्यौ स्वामिनि, वह्नौ अग्नौ, न वृते सति, यः प्रकाशः द्योतः, दीप्तिरित्यर्थः 'प्रकाशो द्योत आतपः' इत्यमरः । जनात् अपत्रप्य लज्जित्वा, 'लज्जा साऽपत्रपाऽन्यतः' इत्यमरः । 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति पञ्चमी । अह्नाय शीघ्रम्' अह्ना दिवसेन करणेन, स्वं निजम्, आत्मस्वरूपमित्यर्थः, निजुह्नुवे अपह्नुतवान्, अहनि दीप्तेरप्रकाशादिति भावः; ह्नुतेः कर्त्तरि लिट् । तस्य वह्नेः, सहायः अनुचरः, सः प्रकाशः अप्रकाशः अनुज्ज्वलः, वह्निना दीप्तशिखाभिः स्वरूपप्रकाशे कृतेऽपि दिवालोके तस्य क्षीणप्रभत्वादिति भावः, अभवत्, हा ! कष्टम्; प्रयासवैयर्थ्यादग्निरपत्रपया निस्तेजा इवासीदिति तात्पर्यम् । यद्वा—तस्य प्रकाशस्य, सहायः आत्मनिह्नवे साहाय्यकारी, सः अप्रकाशः दीप्त्यभावः, प्रकाशः पुनरुद्दीपितः, वह्नौ उद्गत्वरीभिः शिखाभिः निजरूपेण प्रकाशमाने सति इति भावः, अभवत्, हा ! कष्टम्; स्वामिनि आत्मप्रकाशे कृते अनुचरस्य तद्गोपनचेष्टावैयर्थ्यादिति भावः ॥ ६१ ॥

दमयन्तीके द्वारा अपने स्वामी अग्निको पति नहीं स्वीकार करनेपर, लोगोंसे लज्जित-सा जो प्रकाश वह शीघ्र ही अपनेको दिनसे छिपा लिया (दिन होनेसे अग्निका प्रकाश फीका ही बनारहा तीक्ष्ण नहीं हुआ), उस अग्निका सहायक वह प्रकाश अप्रकाश (प्रदीप्त लवसे अपना प्रकाश अग्निके करनेपर भी दिनके कारण मन्द) ही रहा, हाय ! खेद है । अथवा—उस प्रकाशका ( अपने छिपानेमें ) सहायक वह अप्रकाश ( दीप्त्यभाव, अग्निकी ज्वालाओंके ऊपर निकलने लगनेपर ) प्रकाश ( प्रकट ) हो गया हाय ! खेद है । [ प्रथम अर्थमें—दमयन्तीने अग्निको अपना पति नहीं बनाया तो अग्नि-सहायक प्रकाश भी लज्जित होकर अपनेको प्रकाशित ( प्रकट ) नहीं किया, अतएव स्वामीके मान-नाशमें सहायकका अप्रकट ( मन्द ) होना उचित ही है । दिनके कारण अग्निका प्रकाश मन्द ही रहा, तीव्र नहीं हुआ । द्वितीय अर्थमें—जब अग्निदेव अपना वास्तविक रूप धारणकर स्वयं प्रकट हो गये, तब उनके सहायक प्रकाशका उनको छिपानेकी चेष्टा करना व्यर्थ ही है ] ॥६१॥

सदण्डमालक्तकनेत्रचण्डं तमःकिरं कायमधत्त कालः ।
तत्कालमन्तःकरणं नृपाणामध्यासितुं कोप इवोपनम्रः ॥ ६२ ॥

सदण्डमिति । अथ कालः यमः, तत्कालं तस्मिन् स्वयंवरकाले, अत्यन्तसंयोगे द्वितीया, नृपाणाम् अन्तःकरणम् अध्यासितुम् अधिष्ठातुम्, उपनम्रः उपागतः, कोपः दमयन्त्यनादरोत्थक्रोधः इव, सदण्डं दण्डहस्तम्, आलक्तके रक्ते, 'तेन रक्तं रागात्' इत्यण्-प्रत्ययः, कषायौ गर्दभस्य कर्णाविितिदलक्तके इत्युपमानाप्रयोगः; ताभ्यां नेत्राभ्यां चण्डं क्रूरं, किरति उद्गिरतीति किरः, 'इगुपधज्ञाप्रीकिरः—' इति कः तमसः किरः तं तमःश्यामं, कायं देहम्, अधत्त, कालोऽपि स्वरूपं प्रादर्शयदित्यर्थः ॥६२॥

उस समय राजाओंके अन्तःकरणमें स्थित होनेके लिए उपस्थित क्रोध ( दमयन्तीके

अनादरजन्य कोप ) के समान यमराजने लोहदण्डयुक्त, लाल नेत्रोंसे क्रूर तथा अन्धकारको फैलाते ( या—अतिशय अधिक काला होनेसे अन्धकारको भी फेंकते अर्थात् तिरस्कार करते ) हुए शरीरको धारण किया। [ यम भी अपना रूप धारणकर प्रकट हो गये। क्रोधयुक्त मनुष्य भी दण्डयुक्त, लाल नेत्रोंसे क्रूर एवं काला—सा बन जाता है ] ॥ ६२ ॥

दृग्गोचरोऽभूदथ चित्रगुप्तः कायस्थ उच्चैर्गुण एतदीयः ।
ऊर्द्ध्वञ्च पत्रस्य मषीद एको मषेर्दधच्चोपरि पत्रमन्यः ॥ ६३ ॥

दृगिति । अथ यमस्य स्वरूपप्रकाशानन्तरम् एतदीयः कालसम्बन्धी, उच्चैः महान्, गुणः प्रधानशेषभूतः, चित्रगुप्तः चित्रगुप्ताख्यः, कायस्थः लेखकः, तदाख्य-जातिविशेष इत्यर्थः, 'लेखकः स्याल्लिपिकरः कायस्थोऽक्षरजीविकः' इति हलायुधः । दृग्गोचरः दृश्यः, अभूत् ; अन्यत्र—चित्रं यथा तथा गुप्तः पूर्वं निगूहितः, कायस्थः कायनिष्ठः, एतदीयः कालसम्बन्धी, उच्चैः महान्, गुणः नीलगुणः, दृग्गोचरः अभूत् । एकः चस्त्वर्थः, चित्रगुप्तनीलगुणयोः एकः चित्रगुप्तस्तु, पत्रस्य ऊर्ध्वम् उपरितले, मषीं ददातीति मषीदः मषीमयलिपिकरः, लेखक इत्यर्थः, अन्यश्च पूर्ववच्चार्थः, अन्यः नीलगुणस्तु, मषेः मषिद्रव्यस्य, 'कृदिकारादक्तिनः' इति ङीषो विकल्पादुभ-यथा प्रयोगः, उपरि, पत्रं मषेरपि अहं काल एवेति पत्रालम्बनं, दधत् दधानः, 'नाभ्यस्ताच्छतुः' इति नुमोऽभावः, अभूत्, मषितोऽपि अधिको नीलिमेत्यर्थः । अत्र मषेरुपरि पत्रमिति प्रतीतेराभासीकरणात् विरोधाभासोऽलङ्कारः ॥ ६३ ॥

इसके बाद इस ( यम ) का कायस्थ जातीय श्रेष्ठ गुणवाला चित्रगुप्त ( नामका लेखक । पक्षा०—विचित्र रूपसे गुप्त एवं शरीरमें वर्तमान श्रेष्ठगुण अर्थात् कालिमा ) प्रकट हुआ; इन ( चित्रगुप्त तथा कालिमा गुण ) में-से एक ( चित्रगुप्त नामकका लेखक ) तो कागजके ऊपर स्याही देने अर्थात् लिखनेवाला था और दूसरा ( कालिमा गुण ) स्याहीके ऊपर पत्रालम्बन धारण करने ( पाठा०—देने ) वाला अर्थात् स्याहीसे भी अधिक काला था । [ यमने अत्यन्त कृष्णवर्ण शरीर धारणकर लिया ] ॥ ६३ ॥

तस्यां मनोबन्धविमोचनस्य कृतस्य तत्कालमिव प्रचेताः ।
पाशं दधानः करबद्धवासं विभुर्वभावाप्यमवाप्य देहम् ॥ ६४ ॥

तस्यामिति । विभुः प्रभुः, प्रचेताः वरुणः, तत्कालं तस्मिन् काले, नलवरणकाले इत्यर्थः, अत्यन्तसंयोगे द्वितीया, तस्यां दमयन्त्यां विषये, कृतस्य विहितस्य, मनो-बन्धविमोचनस्य चित्तबन्धनोन्मोचनस्य, पाशेन मनः संयस्य भैम्यां पुरा निक्षिप्त-वान्, ततश्च नले वृते सति तत् बन्धनं तत्क्षणमेव प्रचेता उन्मुमोचेति तद्बन्धनस-

---

१. 'मषेर्ददच्चोपरि' इति पाठान्तरम् ।

ग्रन्थि इव स्थितमित्यर्थः उत्प्रेक्षा, अत एव करे बद्धवासं कृतस्थितिं, करगतमित्यर्थः, पाशं बन्धनरज्जुं स्वीयास्त्रञ्च, दधानः सन् अपां विकारम् आप्यम् अम्मयम्, 'आप्यञ्चे'ति चान्द्रव्याकरणसूत्रात् साधुः, देहम् अवाप्य बभौ ॥ ६४ ॥

सर्वसमर्थ प्रचेता ( प्रकृष्ट चित्तवाला अर्थात् वरुण ) ने उस समय (नल-वरण करनेपर) उस दमयन्तीमें ( पहले पाश द्वारा बांधे गये ) मनके बन्धनको खोले गये ( तथा अब ) हाथमें स्थित पाश ( अपने अस्त्रविशेष ) को धारण करते हुए जलमय शरीरको प्राप्तकर शोभने लगे । [ वरुणने हाथमें पाश लिए जब अपना जलमय शरीर धारण किया, तब वह पाश ऐसा मालूम पड़ता था कि पहले स्वयंवरमें दमयन्तीको पत्नीरूपमें पानेके लिए आते हुए वरुणने अपने मनको जिस पाससे बांधकर दमयन्तीके विषयमें स्थिर किया था, अब नलके दमयन्ती द्वारा वरण किये जानेपर उसने दमयन्तीके विषयमें पहले ८ शसे बंधे हुए ( स्थिर ) मनको खोल लिया अर्थात् दमयन्तीसे मनको हटा लिया वही पाश उनके हाथमें दृष्टिगोचर हो रहा है । लोकमें भी जब कोई व्यक्ति किसी बछवे आदिके बन्धनको खोलता है तो उसके हाथमें वह रस्सी दृष्टिगोचर होती है । वरुणने भी हाथमें पास लिये अपना जलमयरूप प्रकटकर लिया ] ॥ ६४ ॥

सहद्वितीयः स्त्रियमभ्युपेयाद्देवं स दुर्बुध्य नयोपदेशम् ।
अन्यां सभार्यः कथमृच्छतीति जलाधिपोऽभूदसहाय एव ॥ ६५ ॥

सहेति । जलाधिपः अपां पतिः, लडयोरभेदात् जडाधिपः मूढाग्रणीश्च, स वरुणः, स्त्रियं कान्तामपि, द्वितीयेन केनचित् सहचरेण सह वर्त्तते इति सहद्वितीयः ससहायः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति विकल्पान्न सहस्य सभावः, अभ्युपेयात् अभिगच्छेत्, एवं नयोपदेशं नीतिवाक्यं, सभार्यः सस्त्रीकः सन्, अन्यां स्त्र्यन्तरं कथम् ऋच्छति प्राप्नुयात्, इति एवं, दुर्बुध्य ससहायार्थे प्रयुक्तस्य सहद्वितीय इति शब्दस्य द्वितीयया भार्यया सह वर्त्तते इति सहद्वितीयः 'द्वितीया सहधर्मिणी । भार्या जाया' इत्यमरः, सभार्य इति विपरीतं बुद्ध्वा, 'समासेऽनञ्पूर्वे' इति क्त्वो ल्यबादेशः. असहायः एव अभूत्, अस्त्रीकः एव अभूदित्यर्थः, दमयन्तीलोभात् सर्वत्र ससहाय एवोपेयादिति नीतिमुल्लङ्घ्य स्वदाराणामप्यनादरे सम्प्रति साऽपि दुर्लभेत्यहो ! वरुणस्य दुर्बुद्धिरिति भावः ॥ ६५ ॥

जलाधिप अर्थात् वरुण (पक्षा०—'डलयोरभेदः' इस वचनसे जडाधिप अर्थात् महामूर्ख) 'सहायक अर्थात् दूसरे किसी व्यक्तिके साथ ( ही ) स्त्रीके पास जावे, ( फिर दूसरेकी स्त्रीके विषयमें क्या कहना है ? )' इस नीतिवचनका 'स्त्रीसहित पुरुष दूसरी स्त्रीको किस प्रकार प्राप्त कर सकता है ? अर्थात् कदापि नहीं प्राप्त कर सकता' ऐसा प्रतिकूल अर्थ लगाकर असहाय ही हो गये । [ इन्द्रिय-समूह एकान्तमें स्त्रीके पास जानेसे विकृत हो सकता है,

अतएव दूसरेके साथ ही स्त्रीके पास भी जाना चाहिये' ऐसी नीति है, किन्तु जडाधिप वरुणने 'द्वितीयेन सहेति सहद्वितीयः' अर्थात् दूसरेके साथ, इस अर्थवाले 'सहद्वितीय' शब्दका 'द्वितीयया (अर्थात् भार्यया) सहेति सहद्वितीयः' अर्थात् भार्याके साथ' ऐसा अर्थ लगाकर 'जो पुरुष भार्याके साथ दूसरी स्त्रीके पास जायेगा, वह उसे (दूसरी स्त्रीको) कैसे पायेगा, क्योंकि अन्य स्त्रीसे अनुगत पुरुषको कोई स्त्री भला कैसे वरण कर सकती है? अर्थात् कदापि नहीं वरण कर सकती' ऐसा विपरीत आशय उस नीतिका समझकर असहाय (भार्याहीन) ही रह गये अर्थात् 'सर्वत्र दूसरेके साथ ही जाना चाहिये' इस नीतिका उक्त विपरीताशय समझकर पहले दमयन्तीको प्राप्त करनेकी आशासे अपनी भार्याको छोड़कर स्वयंवरमें उपस्थित हुए, किन्तु दमयन्तीके नलका वरण कर लेनेपर यहां असफल होनेसे अनादरकर छोड़ी गयी अपनी स्त्रीका लाभ भी अशक्य मानकर वे वरुण असहाय (भार्यारहित, पक्षा०—अकेला) हीं रहे]॥ ६५॥

देव्याऽपि दिव्या स्वतनुः[2] प्रकाशीचक्रे मुदश्चक्रभृतः सृजन्त्या[3]।
अनिह्नुतैस्तामवधार्य चिह्नैस्तद्वाचि बाला शिथिलाऽद्भुताऽभूत् ॥६६॥

देव्येति। अथ इन्द्रादीनां स्वरूपधारणानन्तरं, चक्रभृतः गगनगतस्य विष्णोः, मुदः हर्षान्, सृजन्त्या उत्पादयन्त्या, देव्या सरस्वत्याऽपि, दिव्या स्वतनुः प्रकाशीचक्रे वाणी अपि मानुषीवेषमुत्सृज्य निजरूपमाविश्चकारेत्यर्थः, तदा बाला दमयन्ती, अनिह्नुतैः प्रकाशितैः, चिह्नैः वीणांशुकपुस्तकादिभिः, ताम् अवधार्य सरस्वतीति सम्यक् निश्चित्य, तस्याः वाचि श्लेषवक्रोक्तिव्यञ्जकवागुपन्यासे, शिथिलाद्भुता देव्यां मानुषीत्वबुद्ध्या तादृशोक्तिविषये प्राक् साश्चर्या आसीत्, स्वरूपप्रकाशानन्तरं सरस्वत्यास्तादृशोक्तौ न किमपि आश्चर्यम् इति शिथिलितविस्मया, अभूत् ॥ ६६ ॥

विष्णु भगवान्का हर्ष बढ़ाती हुई (सरस्वती) देवीने भी अपने दिव्य (श्वेत वस्त्र; वीणा-पुस्तक-अक्षमाला और अभयमुद्रायुक्त हाथ, एवं हंसवाहनवाले) शरीरको प्रकट किया, (पाठा०—अनन्तर देवीने भी विष्णु भगवान्को हर्षित करते हुए अपने दिव्य शरीरको प्रकट किया)। (उस समय) बाला दमयन्तीने प्रकट (उक्त वीणादि) चिह्नोंसे उसको पहचानकर उसके (श्लेषादिपूर्ण) वचनमें होनेवाले अपने आश्चर्यको शिथिल कर दिया। [जब तक सरस्वतीने अपना दिव्यरूप धारण नहीं किया था, तबतक उसके श्लेषादि पूर्ण वचनोंको सुनकर दमयन्तीको बहुत आश्चर्य हो रहा था कि 'ऐसे वचनोंको कोई

---

१. तदुक्तम्—'मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥' इति मनुः। (२।२१५)
अपरञ्च—'कामिनी कामयेदेव निर्जने पितरं सुतम्।
सद्वितीयोऽभ्युपेयात्तामतः परिणतामपि॥' इति।
२. 'नु तनुः' इति पाठान्तरम्। ३. 'सृजन्ती' इति पाठान्तरम्।

सामान्य मानवी नहीं कह सकती', किन्तु सरस्वतीके अपने दिव्यरूप प्रकट करनेपर वीणा-पुस्तकादि चिह्नोंसे उसे पहचानकर दमयन्तीका आश्चर्य मन्द हो गया, क्योंकि उसने विचारा कि सरस्वती देवीके लिए ऐसे श्लेषादिपूर्ण वचनोंका कहना कोई आश्चर्यजनक बात नहीं है ] ॥ ६६ ॥

**विलोकके नायकमेलकेऽस्मिन् रूपान्यथा[1]कौतुकदर्शिभिस्तैः ।**
**बाधा बतेन्द्रादिभिरिन्द्रजालविद्याविदां वृत्तिवधाद् व्यधायि ॥ ६७ ॥**

**विलोकके इति । अस्मिन् पुरोवर्त्तिनि, नायकमेलके नृपतिसमूहे, विलोकके विलोकनकारिणि सति, रूपान्यथा रूपनानात्वं, सैव कौतुकं विनोदः, तद्दर्शिभिः तत्प्रदर्शकैः, दृशेर्ण्यन्तात्ताच्छील्ये णिनिः तैः इन्द्रादिभिः इन्द्रजालविद्याविदाम् ऐन्द्रजालिकानाम्, वृत्तिवधात् जीविकोच्छेदात् हेतोः, बाधा पीडा, व्यधायि विहिता, बतेति खेदे, एतन्महेन्द्रजालाद्भुतावलोकिनां राज्ञाम् इन्द्रजालान्तरेषु अरुच्या स्वयंवरसभागतानां तदुपजीविनां तेषां वृत्तिविच्छेदः प्राप्त इत्यहो ! सेयं देवमायेति भावः ॥ ६७ ॥**

इस राज-समूहके देखते रहनेपर स्वरूपके परिवर्तनरूप कौतूहलको दिखलानेवाले उन लोगों ( इन्द्रादि चार देव तथा सरस्वती देवी ) ने ऐन्द्रजालिक विद्याके जानकारों अर्थात् जादूगरोंकी जीविकाकी हानि करनेसे बाधा की, यह खेद ( या-आश्चर्य ) है। [ इन्द्रादिके स्वरूपपरिवर्तनको देखनेसे वहां उपस्थित राजा लोग वहां जीविकार्थ आये हुए ऐन्द्रजालिकोंका इन्द्रजाल देखनेके इच्छुक नहीं रह गये, अतएव उन ऐन्द्रजालिकोंकी जीविकामें इन्द्रादिने यह बाधा डाल दी। इन्द्रजाल देखने समान इन्द्रादिके स्वरूपपरिवर्तनको देखकर वहां उपस्थित राजा लोग आश्चर्यचकित हो गये ] ॥ ६७ ॥

**विलोक्य तावाप्तदुरापकामौ परस्परप्रेमरसाभिरामौ ।**
**अथ प्रभुः प्रीतमना बभाषे जाम्बूनदोर्वीधरसार्वभौमः ॥६८॥**

**विलोक्येति । अथ साक्षात्कारानन्तरं, जाम्बूनदोर्वीधरस्य स्वर्णमयसुमेरुभूधरस्य, सार्वभौमः सर्वस्याः भूमेरीश्वरः, सर्वाध्यक्ष इत्यर्थः, 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्-प्रत्ययः, 'अनुशतिकादीनाञ्च' इत्युभयपदवृद्धिः, प्रभुः महेन्द्रः आप्तदुरापकामौ प्राप्तदुर्लभमनोरथौ, परस्परप्रेम अन्योऽन्यानुरागः, स एव रसः तेन अभिरामौ, तौ दमयन्तीनलौ, विलोक्य प्रीतमनाः सन्तुष्टचित्तः सन्, बभाषे ॥ ६८ ॥**

इसके बाद सुवर्णपर्वत अर्थात् सुमेरुके चक्रवर्ती ( अतएव ) सर्वसमर्थ एवं प्रसन्नचित्त ( इन्द्र ), दुर्लभ मनोरथको प्राप्त किये हुए ( अतएव ) पारस्परिक प्रेमरस ( स्तम्भ-स्वेदादि सात्त्विक भाव ) से सुन्दर उन दोनों ( दमयन्ती तथा नल ) को देखकर बोले—[ यहांपर इन्द्रके 'जाम्बूनदोर्वीधरसार्वभौम' और 'प्रभु' विशेषण वरदान देनेमें पूर्णरूपसे इन्द्रका

---

१. 'रूपान्यता—' इति पाठान्तरम् ।

सामर्थ्यवान् होना तथा 'प्रीतमनाः' विशेषण उनका नल-दमयन्तीकी याचना किये बिना वरदान देनेसे प्रतारण नहीं करना सूचित करते हैं ] ॥ ६८ ॥

**वैदर्भि ! दत्तस्तव तावदेष वरो दुरापः पृथिवीश एव ।**
**दूत्यन्तु यत्त्वं कृतवाननमायं नल ! प्रसादस्त्वयि तन्मयाऽयम् ॥ ६९ ॥**

तौ बभाषे इत्युक्तं तत्र वैदर्भीं तावदाह, वैदर्भीति ।—हे वैदर्भि ! तव तावत् एषः पृथिवीशः नलः एव, दुरापः अस्मदनुग्रहं विना दुर्लभः, वरः दत्तः, आपाततस्तावदेष वरः, उभयसाधारण्येन तु वरान्तरञ्च भविष्यतीति भावः । नलञ्चाह, हे नल ! त्वं तु यत् यस्मात्, अमायम् अकपटं, दूत्यं दमयन्तीविषये दूतकर्म, 'दूतस्य भागकर्मणी' इति यत्प्रत्ययः कृतवान्, तत् तस्मात्, त्वयि विषये, मया अयं वक्ष्यमाणः, प्रसादः वरः, दत्तः इति पूर्वानुषङ्गः ॥ ६९ ॥

हे दमयन्ति ! ( मैंने ) पहले इस दुर्लभ राजा ( नल ) को ही वर ( पति, पक्षा०—वरदान रूपमें तुम्हारे लिए ) दे दिया । ( तथा ) हे नल ! तुमने जो निष्कपट मेरा दूत-कार्य किया, उस कारण तुम्हारे विषयमें मेरा यह ( वक्ष्यमाण—१४।७०—७२ ) प्रसाद अर्थात् वरदान है ॥ ६९ ॥

**प्रत्यक्षलक्ष्यामवलम्ब्य मूर्त्तिं हुतानि यज्ञेषु तवोपभोक्ष्ये ।**
**संशेरतेऽस्माभिरवीक्ष्य भुक्तं मखं हि मन्त्राधिकदेवभावे ॥ ७० ॥**

प्रत्यक्षेति । हे नल ! तव यज्ञेषु प्रत्यक्षेण लक्ष्यां दृश्यां, मूर्त्तिं विग्रहम्, अवलम्ब्य हुतानि हवींषि, उपभोक्ष्ये अनुभोक्ष्ये, 'भुजोऽनवने' इत्यात्मनेपदम् ईदृशवरेण मम को लाभः ? इति चेत् तत्राह, संशेरते इति ।—हि यतः मखं यज्ञम्, अस्माभिः भुक्तम् अवीक्ष्य प्रत्यक्षेण अदृष्ट्वा, मन्त्राधिकदेवभावे शब्दातिरिक्तदेवसद्भावे, संशेरते सन्दिहते, जना इति शेषः । 'अशरीरा देवता' इति मीमांसकाः, तत्सन्देहनिवृत्त्यर्थं ते विग्रहं दर्शयिष्यामि, तेन भवतस्तादृशसंशयनिरासरूपलाभो भविष्यतीति भावः ॥ ७० ॥

( इन्द्र नलको वरदान देते हैं कि—हे नल ! ) तुम्हारे यज्ञोंमें प्रत्यक्ष शरीरको धारण कर हम ( अन्य देवताओंके साथ मैं, अग्निमें हवन किये गये ) हविष्योंको ग्रहण करेंगे, क्यों कि हम लोगोंसे यज्ञको भोग किया हुआ नहीं देखकर ( यजमान, याजकसमूह ) मन्त्रातिरिक्त देवत्वमें सन्देह करते हैं । [ मीमांसक लोग मन्त्रसे अतिरिक्त कर्मसमवायी देवत्वको नहीं मानते हैं, अतएव जब हमलोग तुम्हारे यज्ञमें सशरीर प्रत्यक्ष होकर हविष्य भोजन करेंगे, तब लोगोंका उक्त सन्देह दूर हो जायेगा और यह सन्देह-निवारण ही तुम्हारे लिए महान् लाभ होगा ] ॥ ७० ॥

**भवानपि त्वद्दयिताऽपि शेषे सायुज्यमासादयतं शिवाभ्याम् ।**
**प्रेत्यास्मि कीदृग्भवितास्मि चिन्ता सन्तापमन्तस्तनुते हि जन्तोः ॥ ७१ ॥**

अथोभयसाधारणं वरमाह, भवानिति । भवानपि त्वञ्च, त्वद्दयिताऽपि दमयन्त्यपि च, शेपे आयुरवसाने, शिवा च शिवश्च ताभ्यां शिवाभ्यां पार्वतीपरमेश्वराभ्यां सह, 'पुमान् स्त्रिया' इत्येकशेषः, सयुजो भावः सायुज्यं तादात्म्यम्, आसादयतं प्राप्नुतम् । आमुष्मिकफलोक्तौ कारणमाह—हि यतः, प्रेत्य लोकान्तरं गत्वा, अस्मि अहं, कीदृक् भवितास्मि कीदृशो भविष्यामि, इति चिन्ता जन्तोः अन्तः मनसि, सन्तापं तनुते, तन्निवृत्त्यर्थेयमुक्तिरिति भावः ॥ ७१ ॥

आप तथा आपकी प्रियतमा अर्थात् दमयन्ती भी ( भूलोक-भोगनिमित्तक कर्मके ) अन्तमें शिव तथा पार्वतीके साथ तादात्म्यको प्राप्त करें, क्योंकि मरनेके बाद '( मैं ) क्या होऊंगा अर्थात् मैं किस योनिमें जाऊंगा ?' यह चिन्ता प्राणीके अन्तःकरणमें सन्ताप बढ़ाती है । [ अत एव मुझसे यह वरदान पाकर तुम्हें भावी जन्मके लिए सन्देह-निवृत्ति होनेसे मनके तापकी शान्तिरूप श्रेष्ठ लाभ होगा ] ॥ ७१ ॥

तवोपवाराणसि नामचिह्नं वासाय पारेऽसि पुरं पुराऽऽस्ते ।
निर्वातुमिच्छोरपि तत्र भैमीसम्भोगसङ्कोचभियाऽधिकाशि ॥ ७२ ॥

तवेति । किञ्च, तव वासाय निवासाय, उपवाराणसि वाराणस्याः समीपे, 'अव्ययं विभक्ति—' इत्यादिना सामीप्यार्थे अव्ययीभावः, पारेऽसि असिनाम नदी तस्याः पारे, 'पारे मध्ये षष्ठ्या वा' नामचिह्नं त्वन्नामाङ्कितं, पुरं नलपुरं, पुरा आगामिनि, सत्वरमित्यर्थः, 'निकटागामिके पुरा' इत्यमरः, आस्ते आसिष्यते, भविष्यतीत्यर्थः, आसेर्भविष्यदर्थे 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् तव पुरं, निर्वातुं मोक्तुम्, इच्छोः मुमुक्षोरपि, तवेति शेषः, भैमीसम्भोगस्य सङ्कोचात् प्रतिबन्धात्, भिया अधिकाशि काश्यां, न, भविष्यति शेषः । मुमुक्षुरपि त्वं यावज्जीवं भैम्या सह नलपुरे विहर, अन्ते काश्यां शिवसायुज्यमाप्नुहीत्यर्थः ॥ ७२ ॥

तुम्हारे निवासके लिए काशीके समीप 'असी' ( नामकी नदी ) के पारमें तुम्हारे नामसे चिह्नित पुर अर्थात् 'नलपुर' भविष्यमें होगा । मुक्तिके इच्छुक भी तुम्हारे उस पुर ( नल पुर ) को दमयन्तीके साथ सम्भोगके सङ्कोचके भयसे ( मैंने ) काशी में नहीं किया है । [ यद्यपि वर्तमानमें तुम्हारा निवासस्थान अन्यत्र है, किन्तु भविष्यमें काशीके पास असी-नदीके पारमें 'नलपुर' नामक तुम्हारी राजधानी होगी मुक्त्यभिलाषी तुमको दमयन्तीके साथ सम्भोग करनेमें सङ्कोच ( कभी ) करनेका भय होगा इस कारणसे मैंने काशीमें तुम्हारी राजधानी नहीं बनाकर काशीके पास ही असी नदीके पारमें बनायी है, अतः उस राजधानीमें दमयन्तीके साथ पूर्णतः सम्भोग-सुख करके अन्तमें तुम दोनों दम्पति क्रमशः शिव-पार्वतीके सायुज्यको प्राप्त करना ] ॥ ७२ ॥

धूमावलिश्मश्रु ततः सुपर्वा मुखं मखास्वादविदां तमूचे ।
कामं मदीत्तामयकामधेनोः पयायतामभ्युदयस्त्वदीयः ॥ ७३ ॥

धूमेति । ततः इन्द्रवाक्यानन्तरं, धूमावलिरेव श्मश्रूणि यस्य तत्, मखास्वादविदां यज्ञरसज्ञानां, मुखं मुखभूतः, सुपर्वा देवः अग्निः, 'अग्निमुखा वै देवाः' इति श्रुतेः; तं नलम्, ऊचे ; तदेवाह—हे नल ! त्वदीयः अभ्युदयः वृद्धिः, मदीक्षामयी मद्दृष्टिरेव कामधेनुः तस्याः कामं पयायतां क्षीरायतां, मत्कटाक्षमात्रेण ते सर्वार्थसिद्धिर्भविष्यतीति भावः । 'कर्त्तुः क्यङ् सलोपश्च' इति पयःशब्दादाचारार्थे क्यङ्प्रत्ययो वैभाषिकः सलोपश्च, 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति वचनात् ॥ ७३ ॥

इस (इन्द्रके वर देने) के बाद धूम-समूहरूपी दाढ़ीवाले तथा यज्ञ (हविष्य) के स्वादज्ञ अर्थात् देवोंके मुखरूप देव (अग्नि) उस (नल) से बोले-तुम्हारी समृद्धि मेरी दृष्टिरूपिणी कामधेनुके दुग्धके समान आचरण करे अर्थात् जिस प्रकार कामधेनु का दुग्ध अनन्त एवं सर्वार्थसाधक है उसी प्रकार तुम्हारी समृद्धि भी अनन्त एवं सर्वार्थसाधिका होवे ॥ ७३ ॥

या दाहपाकौपयिकी तनुर्मे भूयात्त्वदिच्छावशवर्त्तिनी सा ।
तया पराभूततनोरनङ्गात्तस्याः प्रभुः सन्नधिकस्त्वमेधि ॥ ७४ ॥

येति । दाहः भस्मीकरणं, पाकः तण्डुलविक्लेदनादि तयोः औपयिकी उपायभूता, 'विनयादिभ्यष्ठक्' इति स्वार्थे ठकि ङीप् उपायात् ह्रस्वत्वञ्च या मे तनुः सा त्वदिच्छाया वशवर्त्तिनी भूयात् । किञ्च, त्वं तस्याः तनोः, प्रभुः स्वामी, नियामकः सन् इति यावत्, तया शिवनेत्रस्थया तन्वा, पराभूततनोः दग्धाङ्गात्, हरभ्रष्टान्यतममूर्त्तित्वात् अस्येति भावः, अनङ्गात् अधिकः एधि भव, न केवलं रूपादेवानङ्गादधिकः, किन्तु तज्जेतुरग्नेरपि नियामकत्वेन अधिको भव इति भावः । अस्तेर्लोटि सिपि हेधिः 'घ्वसोरेद्धौ' इत्यादिना एत्वम् ॥ ७४ ॥

(काष्ठादिको) जलाने तथा (चावल-दाल आदिको) पकानेका साधनभूत जो मेरा शरीर अर्थात् पाकाग्नि है, वह तुम्हारे वशीभूत होवे और उस (पाकाग्नि) के स्वामी तुम (शिवनेत्रसम्बन्धी) उस अग्निसे जले हुए शरीरवाले कामदेवसे अधिक (श्रेष्ठ या सुन्दर) होवो। [जहां अग्नि नहीं हो, वहां भी तुम्हारी इच्छामात्रसे अग्नि उत्पन्न हो जाय तथा पहलेसे ही तुम कामाधिक सुन्दर थे, किन्तु अब कामदेवके विजयी उस अग्निको भी वशीभूत करनेसे अब उस कामदेवसे और भी अधिक श्रेष्ठ होवो ] ॥ ७४ ॥

अस्तु त्वया साधितमन्नमीनरसादि पीयूषरसातिशायि ।
तद्भूप ! विघ्नस्तव सूपकारक्रियासु कौतूहलशालि शीलम्[1] ॥ ७५ ॥

अस्त्विति । किञ्च, हे भूप ! त्वया साधितं पक्वम्, अन्नं शाल्यादि, मीनरसः मत्स्यादीनां रसः, मीनेति मांसोपलक्षणं, तौ आदिः यस्य, आदिशब्दात् सूपशाका-

1. 'चित्तम्' इति पाठान्तरम् ।

दीनां ग्रहणं, तत् सर्वं, पीयूषरसम् अमृतस्वादम्, अतिशेते इत्यतिशायि ततो-ऽप्युत्कृष्टम्, अस्तु । ईदृग्वरदाने कारणमाह, तदिति ।—तत् तस्मात्, त्वत्पक्वान्ना-दीनाममृतादप्यधिकस्वादुत्वादित्यर्थः, तव शीलं स्वभावं, सूपं द्विदलादिव्यञ्जन-पाकं, कुर्वन्तीति सूपकाराः सूदाः, 'सूपकारास्तु वल्लवाः। आरालिका आन्धसिकाः सूदा औदनिका गुणाः ॥' इत्यमरः। कर्मण्यण्, तेषां क्रियासु पाकक्रियासु, सुष्ठूपका-रक्रियासु च, कौतूहलेन शालते इति तच्छालि कौतूहलि, पाककर्मणि सदा उत्सुक-मित्यर्थः, विद्मः। 'अस्मदो द्वयोश्च' इति बहुवचनम्, अतः तवेयं सूपविद्या दत्तेति भावः॥

हे राजन् ( नल )! तुम्हारा पकाया हुआ भात तथा मछली आदिका रस ( स्वाद ) अमृत रससे भी अधिक स्वादिष्ट होवे, उससे अर्थात् तुम्हारे पकाये हुए अन्नादिके अमृतरसा-धिक स्वादिष्ट होनेसे पाचकों ( भोजन बनानेवाले रसोइयादारों, पक्षा०—सुन्दर उपकार ) के कार्योंमें हमलोग कौतुकयुक्त तुम्हारे शील ( पाककला ) को जानेंगे तो अर्थात् अमृतरससे भी स्वादिष्ट भोजनसामग्री पकानेमें तुम्हें सर्वदा उत्कण्ठित जानेंगे ॥ ७५ ॥

वैवस्वतोऽपि स्वत एव देवस्तुष्टस्तमाचष्ट नराधिराजम्[1] ।
वरप्रदानाय तवावदानैश्चिरं मदीया रसनोद्धुरेयम् ॥ ७६ ॥

वैवस्वत इति । देवः वैवस्वतः यमोऽपि, स्वतः एव अप्रार्थितः एव, तुष्टः सन्, तं नराधिराजं नलम्, आचष्ट अब्रवीत्; तदेवाह—हे नृप! तव अवदानैः दौत्यादि-रूपैरद्भुतकर्मभिः, इयं मदीया रसना चिरं चिरात् प्रभृति, वरप्रदानाय उत् उद्गता, धूः वरदानभारः यस्याः सा उद्धुरा दृढसङ्कल्पेत्यर्थः। 'ऋक्पूर्—' इत्यादिना समासान्तः॥ ७६ ॥

यम देव भी स्वयं ही प्रसन्न होकर उस नरपति ( पाठा०—भूपति अर्थात् नल से ) बोले—तुम्हारे ( निष्कपट दौत्य आदि ) कर्मोंसे यह मेरी जीभ देरसे वर देनेके लिये उत्कण्ठित है अर्थात् मैं भी तुम्हारे किये गये दौत्यादि कार्योंसे सन्तुष्ट होकर स्वयं ( विना याचना किये ही ) तुम्हें वरदान देता हूं ॥ ७६ ॥

सर्वाणि शस्त्राणि सहाङ्गचक्रैराविर्भवन्तु त्वयि शत्रुजैत्रे ।
अवाप्यमस्मादधिकं न किञ्चिज्जागर्त्ति वीरव्रतदीक्षितानाम् ॥ ७७ ॥

सर्वाणीति । हे नल! सर्वाणि शस्त्राणि आयुधानि, अङ्गचक्रैः प्रयोगोपसंहारादि-मन्त्ररूपस्वाङ्गकलापैः सह शत्रून् जेतरि एव जैत्रे जयशीले, शत्रुजैत्रे शत्रुजयकारिणि, जेतृशब्दात्ताच्छील्ये तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण्-प्रत्ययः, 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया, योगविभागात् समस्यते, त्वयि विषये, आविर्भवन्तु। एतावता को लाभः? तत्राह—वीरव्रतम् आहवेषु अनिवर्त्तित्वं, तत्र दीक्षितानां कृतसङ्कल्पानां त्वादृशां शूराणाम्, अस्मात् अस्त्रलाभात्, अधिकम् उत्कृष्टम्,

---

१ 'धराधिराजम्' इति पाठान्तरम् ।

अवाप्यं लभ्यं, किञ्चित् न जागर्त्ति न स्फुरति, न विद्यते इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७७ ॥

सम्पूर्ण शस्त्रसंहार तथा विक्षेपादिके अङ्गों ( मन्त्रादि-प्रयोगों ) के साथ शत्रुओं पर सर्वदा विजय पानेवाले तुम्हें प्राप्त होवें। वीर-व्रतके लिए कृतसङ्कल्प ( योद्धाओं ) को इस ( समन्त्रक संहार-विक्षेपके सहित अप्रयास प्राप्त शस्त्रों ) से अधिक प्राप्त करने योग्य कोई पदार्थ नहीं है ॥ ७७ ॥

कृच्छ्रं गतस्यापि दशाविपाकं धर्मान्न चेतः स्खलतात्त्वदेम्[1] ।
अमुञ्चतः पुण्यमनन्यभक्तेः स्वहस्तवास्तव्य इव त्रिवर्गः ॥ ७८ ॥

कृच्छ्रमिति । किञ्च, कृच्छ्रं कष्टं, दशाविपाकम् अवस्थापरिणामं, गतस्यापि प्राप्तस्यापि, दुर्दशापन्नस्यापीत्यर्थः, तव इदं चेतः धर्मात् न स्खलतात् न स्खलतु । तोस्तातङादेशः ततः किम् ? तत्राह—पुण्यं धर्मम्, अमुञ्चतः अत्यजतः, न विद्यते अन्यस्मिन् अधर्मे भक्तिः यस्य तस्य अनन्यभक्तेः अधर्मविमुखस्य, त्रयाणां धर्मकामार्थानां वर्गः त्रिवर्गः 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः'. इत्यमरः, स्वहस्ते वसतीति स्वहस्तवास्तव्यः इव हस्तस्थप्राय इवेत्यर्थः । 'वसेस्तव्यत् कर्त्तरि णिच्च' इति वक्तव्यात् तव्यत् । अत्र त्रिवर्गसिद्धिलक्षणकार्येण धर्मात्यागरूपकारणसमर्थनात् कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७८ ॥

कष्टप्रद दशामें पड़े हुए भी तुम्हारा यह चित्त धर्मसे कभी भी स्खलित नहीं होवे । ( इससे लाभ यह होगा कि ) पुण्य अर्थात् धर्मकृत्यको नहीं छोड़नेवाले अधर्मसे पराङ्मुख तुम्हारा त्रिवर्ग ( अर्थ, धर्म और काम रूप पुरुषार्थत्रय ) तुम्हारे हस्तस्थित-सा रहेगा । [ कष्टावस्थामें मनुष्यका चित्त प्रायः धर्मसे स्खलित हो जाता है, किन्तु तुम्हारा चित्त उस समयमें भी धर्मपरायण ही बना रहे, इससे तुम अर्थ, धर्म और कामकी प्राप्ति अनायास ही करते रहोगे ] ॥ ७८ ॥

स्मिताञ्चितां वाचमवोचदेनं प्रसन्नचेता नृपतिं प्रचेताः ।
प्रदाय भैमीमधुना वरौ ते ददामि तद्यौतककौतुकेन ॥ ७९ ॥

स्मितेति । अथ प्रसन्नचेताः प्रचेता वरुणः, एनं नृपतिं नलं स्मिताञ्चितां मन्दहासमधुरां, वाचम् अवोचत् । तदेवाह—अधुना ते तुभ्यं, भैमीं प्रदाय तद्यौतककौतुकेन तस्मिन् प्रदाने, यत् यौतकं युतकयोः वधूवरयोः देयं, युते विवाहकाले यत् लभ्यते तत् इति वा, विवाहकाले प्राप्यद्रव्यमित्यर्थः 'यौतकादि तु यद् देयं सुदायो हरणञ्च तत्' इत्यमरः । अण्-प्रत्ययः कण्-प्रत्ययो वा तत्र यत् कौतुकम् इच्छा उत्सवो वा आनन्दो वा तेन, 'कौतुकं नर्मणीच्छायामुत्सवे कौतुके मुदि' इति मेदिनी, यौतकदानेच्छया यौतकदानानन्देन वा, वरौ वक्ष्यमाणौ, ददामि यौतकत्वेन दास्यामीत्यर्थः ॥

1. 'त्वदीयम्' इति पाठान्तरम् ।

प्रसन्नचित्त प्रचेता अर्थात् वरुण (पक्षा०—उन्नत चित्तवाला) इस राजा (नल से) मन्दहाससे शोभमान वचन बोले—'इस समय दमयन्तीको देकर उसके दहेजके कौतूहलसे तुमको मैं दो वर देता हूं ॥ ७९ ॥

**यत्राभिलाषस्तव तत्र देशे नन्वस्तु धन्वन्नपि तूर्णमर्णः ।**
**आपो वहन्तीह हि लोकयात्रां यथा न भूतानि तथाऽपराणि ॥८०॥**

**तावेव वरावाह, यत्रेत्यादि । ननु भो नल ! यत्र देशे तव अभिलाषः जलेच्छा, तत्र धन्वनि मरुस्थलेऽपि, 'समानौ मरुधन्वानौ' इत्यमरः। तूर्णम् आशु, अर्णः अम्भः, अस्तु उद्भवतु । अस्य वरस्य श्लाघ्यतामाह—इह लोके, यथा आपः लोकस्य जनस्य, यात्रां जीवनं, 'गमने जीवने यात्रा' इति वैजयन्ती । वहन्ति प्रापयन्ति, तथा अपराणि अन्यानि, भूतानि पृथिव्यादीनि, न हि, वहन्ति इति पूर्वानुषङ्गः; यदाह वाग्भटः— 'पानीयं प्राणिनां प्राणा विश्वमेतच्च तन्मयम्' इति । अतः श्लाघ्योऽयं वर इति भावः॥**

जहां पर तुम्हारी इच्छा हो, उस मरुस्थलमें भी शीघ्र ही पानी हो जावे, क्यों कि पानी लोगोंके जीवनका जैसा कारण है, वैसा अन्य कोई भूत (पृथ्वी, वायु, तेज तथा आकाश—इनमेंसे कोई द्रव्य) कारण नहीं है (इसी वास्ते मरुस्थल-जैसे देशमें भी शीघ्र ही पानी प्राप्त कर सकनेका यह प्रथम वर मैं तुमको देता हूं) ॥ ८० ॥

**प्रसारितापः शुचिभानुनाऽस्तु मरुः समुद्रत्वमपि प्रपद्य ।**
**भवन्मनस्कारलवोद्गमेन क्रमेलकानां निलयः पुरेव ॥ ८१ ॥**

**प्रसारितेति । किञ्च, मरुः निर्जलस्थलं, भवतः मनस्कारः चित्ताभोगः, समनः सुखतत्परता इत्यर्थः, सुखलाभेच्छा इति यावत्, 'अतः कृकमि—' इत्यादिना सत्वम् तस्य लवः लेशः, तस्य उद्गमे सति, इति सप्तम्यन्तच्छेदः; नक्राणां जलजन्तुविशेषाणां, मेलाः एव मेलकाः सङ्घाः, तेषां निलयः आवासः, तथा शुचिभानुना शुभ्रांशुना चन्द्रेण, प्रसारिताः संवर्द्धिताः, आपः यस्य स तादृशः प्रसारितापश्च सन्, 'ऋक्पूर्—' इत्यादिना समासान्तः । समुद्रत्वं प्रपद्यापि प्राप्यापि, भवन्मनस्कारलवोद्गमेनेति तृतीयान्तच्छेदः; पुनश्च त्वदिच्छामात्रेणैवेत्यर्थः, क्रमेलकानाम् उष्ट्राणां, निलयः सन्, 'उष्ट्रा मरुप्रिया' इति प्रसिद्धिः; तथा शुचिभानुना ग्रीष्मसूर्येण 'शुचिः शुभ्रेऽनुपहते ग्रीष्मे हुतवहेऽपि च' इति विश्वः । प्रसारितापः अपसारितोदकश्च सन्, प्रखरसन्तापः सन् इति वा, पुरेवास्तु पूर्ववत् निर्जल एव भवतु ॥ ८१ ॥**

तुम्हारे सुखेच्छाके लेशमात्र होने पर (थोड़ा भी सुख प्राप्तिकी इच्छा होने पर) मरुस्थल मगर-समूहोंका निवास स्थान, चन्द्रमासे बढ़ते हुए जलवाले समुद्रत्वको प्राप्तकर अर्थात् समुद्र बनकर भी तुम्हारी थोड़ी-सी इच्छासे ऊँटोंका निवासस्थान सूर्य किरणसे सुखाये गये जलवाला (अथवा—वडवाग्निकी ज्वालासे विस्तृत सन्तापवाला) पहलेके समान मरुस्थल हो जावे । [ प्रथम अर्थ करते समय 'भवन्मनस्कारलवोद्गमे, नक्रमेलकानाम्' इस

प्रकार तथा द्वितीय अर्थ करते समय 'भवन्मनस्कारलवोद्गमेन, क्रमेलकानाम्' इस प्रकार पदच्छेद करना चाहिये। चन्द्रोदय होनेपर समुद्रके जलका बढ़ना तथा उसमें मगरोंका निवास होना और मरुभूमिको सम्पूर्ण किरणोंसे सन्तप्त होना तथा ऊँटोंका अतिशय प्रिय होना सर्वविदित है॥ तुम्हारी सुखेच्छामात्रसे ही मरुभूमि समुद्र बनकर अर्थात् बहुत जलसे परिपूर्ण होकर भी पुनः इच्छामात्रसे मरुस्थल बन जावे ]॥ ८१॥

**अम्लानिरामोदभरश्च दिव्यः पुष्पेषु भूयाद्भवदङ्गसङ्गात्।**
**दृष्टं प्रसूनोपमया मयाऽन्यन्न धर्मशर्मोभयकर्मठं यत्॥ ८२॥**

**द्वितीयं वरमाह, अम्लानिरिति। हे नल! भवतः अङ्गसङ्गात् करस्पर्शात् एव, पुष्पेषु अम्लानिः अम्लानता, दिव्यः स्वर्गीयः, आमोदभरश्च सौरभातिशयश्च, भूयात्। अस्य वरस्य श्लाघ्यतामाह—यत् यस्मात्, प्रसूनोपमया पुष्पसाम्येन, धर्मशर्मणोः सुकृतसुखयोः, उभयस्मिन् द्वयेऽपि, कर्मणि घटते इति कर्मठं कर्मशूरं, कर्मक्षममित्यर्थः, 'कर्मशूरस्तु कर्मठः' इत्यमरः। 'कर्मणि घटोऽठच्' इति अठच्-प्रत्ययः, अन्यत् धनपुत्रादिवस्तु, मया न दृष्टम्; सुरार्चनस्वोपभोगाभ्यामिहामुत्र च पुष्पस्योपयोगाच्छ्लाघ्योऽयं वर इति भावः॥ ८२॥**

( दूसरा वर यह है कि— ) तुम्हारे शरीरके संसर्गसे पुष्पों ( पुष्पमालाओं ) में अम्लानता तथा दिव्य अतिशय सुगन्धि होवे अर्थात् तुम्हारे शरीरकी माला आदिके फूल कभी नहीं मुरझावें और उनमें कल्पवृक्षके फूलोंके समान दिव्य अधिक सुगन्धि होवे, क्योंकि पुष्पके समान धर्म ( देवादि पूजनादिरूप पुण्यकार्य ) तथा शर्म ( स्वशरीरसंस्कारादिरूप सुखसम्पादन कार्य )—इन दोनोंमें कर्मठ ( कर्मशूर अर्थात् काम पूरा करनेमें सर्वदा समर्थ ) अन्य कोई वस्तु मैंने नहीं देखी। [ पुष्प ही देवपूजनादि धर्मसम्बन्धी तथा शरीरसंस्कारादि सुख सम्बन्धी कार्योंके साधनेमें समर्थ होते हैं, उनके समान धर्म-शर्म-साधक दूसरा कोई पदार्थ नहीं है, इसी कारण मैंने अपने अनुभवके द्वारा तुम्हारे शरीरके संसर्गसे पुष्पोंके म्लान नहीं होनेका तथा उनसे दिव्य अतिशय सुगन्धि निकलनेका दूसरा वर दिया है ]॥८२॥

**वाग्देवताऽपि स्मितपूर्वमुर्वीसुपर्वराजं रभसाद्बभाषे।**
**त्वत्प्रेयसीसम्मदमाचरन्त्या मत्तो न किञ्चिद् ग्रहणोचितं ते?॥८३॥**

**वागिति। वाग्देवताऽपि उर्वीसुपर्वराजं भूदेवेन्द्रं नलं, रभसात् हर्षात् 'रभसो वेगहर्षयोः' इति विश्वः। स्मितपूर्वं यथा तथा बभाषे। अथ स्वस्याः आप्तत्वोक्तिपूर्वकं स्वदेयस्य वरस्य अपरिहार्यत्वं तावत् सार्द्धश्लोकेनाह, त्वदिति। त्वत्प्रेयस्याः दमयन्त्याः, सम्मदं हर्षं, त्वद्वरणरूपं प्रियमित्यर्थः, 'प्रमदसम्मदौ हर्षे' इति अप् निपातः, आचरन्त्याः कुर्वन्त्याः, अत एव मत्तो मत्सकाशात्, 'पञ्चम्यास्तसिल्' इति पञ्चम्यर्थे तसिल् प्रत्ययः, ते तव, किञ्चित् ग्रहणोचितमाप्तत्वेन स्वीकारार्हम्, अथच ग्रहणोचितं ज्ञानयोग्यं, न? अपि तु ग्रहणमुचितमेव, अतो मत्तः किञ्चित् ग्राह्यमित्यर्थः॥**

सरस्वती देवी भी मन्दहासपूर्वक हर्षसे भूपति ( नल ) के प्रति बोली-तुम्हारी परमप्रिया ( दमयन्ती ) के अत्यधिक हर्षका सम्पादन करती हुई मुझसे तुम्हें कुछ ( वरदान ) ग्रहण करना उचित नहीं है ? अर्थात् तुम्हारी परमप्रिया दमयन्तीकी अतिशय हर्षकार्य करनेवाली मुझसे भी तुम्हें कुछ वरदान ग्रहण करना ही चाहिये ( अथवा—जब मैंने तुम्हें ही तुम्हारी परमप्रिया दमयन्तीके लिए देकर उसका परमानन्द सम्पादन किया तो अब मुझसे कोई वस्तु तुमको नहीं लेनी चाहिये )। [ ऐसा परिहास दमयन्तीकी सखी बनी हुई सरस्वतीने किया, दुलहिन दमयन्ती की सखी सरस्वती देवीका दुलहे नलसे उक्त परिहास करना उचित ही है । परन्तु अग्रिम श्लोकार्थकी सङ्गतिके लिये प्रथम अर्थ ही सुसङ्गत है ]

**अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः ।**
**मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहु मन्तुमर्हः ॥८४॥**

अर्थ इति । किञ्च, अर्थनया याच्ञादन्येन, विनैव उपसीदन् उपनमन्, अल्पः अपि अर्थः हितार्थः, धीरैः प्रेक्षावद्भिः, अवधीरणीयः उपेक्ष्यः, न, परन्तु स्वीकरणीय एव; कथं नावधीरणीयः ? इत्याह—अत्र यस्मात् इति पदमूहनीयम्; यस्मात् मान्येन पूज्येन, विधिना ब्रह्मणा एव, वितीर्णः दत्तः, दीयते इति दायः कर्मणि घञ् प्रत्ययः, 'आतो युक् चिण्कृतोः' इति युगागमः, प्रीत्या दायः 'कर्तृकरणे कृता—' इति समासः, प्रीतिदानरूपः, सः अर्थः, बहु अधिकः, इति मन्तुम् अवगन्तुम्, अर्हः इत्यहं मन्ये ॥ ८४ ॥

विद्वानोंको विना याचना किये ही मिलनेवाले छोटे-से भी फल ( हितकर कार्य ) की उपेक्षा नहीं करनी चाहिये, ( किन्तु उसे स्वीकार ही करना चाहिये, क्योंकि ) माननीय दैव ( या ब्रह्मा ) के दिये हुए प्रेमपूर्वक दानको 'बहुत है' ऐसा मानना चाहिये । [ विना याचना किये ही प्रेमपूर्वक दी गयी जो छोटी भी वस्तु भाग्यसे प्राप्त होती हो, उसका छोटी होनेसे त्याग न कर उसे बहुत उत्तम मानकर स्वीकार करना चाहिये ] ॥ ८४ ॥

**अवामा वामार्द्धे सकलमुभयाकारघटनाद्-**
**द्विधाभूतं रूपं भगवदभिधेयं भवति यत् ।**
**तदन्तर्मन्त्रं मे स्मर हरमयं सेन्दुममलं-**
**निराकारं शश्वज्जप नरपते ! सिध्यतु स ते ॥ ८५ ॥**

अथ वरस्वरूपमेव पञ्चभिः प्रपञ्चेनाह, अवामेत्यादि । नरपते ! हे नरेन्द्र ! अर्द्धे एकभागे, अवामा अस्त्री, पुमानित्यर्थः, पुनः अर्द्धे अर्द्धभागान्तरे, वामा स्त्री, अत एव द्विधाभूतं स्त्रीपुंसात्मकम्, उभयाकारघटनात् उभयोः आकारयोः मेलनात्, सकलं सम्पूर्णं भगवदभिधेयं भगवच्छब्दवाच्यं यत् रूपं भवति विद्यते, सेन्दुम् इन्दुकलासमेतम्, अमलं निर्मलं, निराकारं परमार्थतः निरंशं, मन्त्रं मन्त्रात्मकं, तद्वत् गोप्यं वा हरमयम् ईश्वरात्मकं, मे मम, तत् रूपं, स्वरूपमित्यर्थः, अन्तः अन्तःकरणे, स्मर

चिन्तय, शश्वत् निरन्तरं, जप मन्त्रात्मकत्वात् जपरूपेण च उपासस्व, स मन्त्रमूर्त्तिः भगवान् अर्द्धनारीश्वरः, ते तव, सिध्यतु प्रसीदतु, फलतु इत्यर्थः। मन्त्रपक्षे तु—अर्द्धे प्रथमभागे, अवा ओकारेण, मा मकारेण, प्रणवेन इत्यर्थः, तथा अवामाऽर्द्धे अर्द्धे उत्तरभागेऽपि, अवा ओकारेण, मा मकारेण चोपलक्षितं, प्रणवद्वयसम्पुटितमित्यर्थः, एवमुभयाकारघटनात् उभयाभ्याम् अकाराभ्यां घटनात् संयोगात्, द्विधाभूतं ह र इति द्विधा विभक्तम् अथवा उभयाभ्यामाकाराभ्यां, प्रणवस्वरूपायां, घटनात् सम्पुटीकरणात्, द्विधाभूतं द्व्याकारं, भगवदभिधेयं भगवान् शिवः, अभिधेयो वाच्यो यस्य तत् शिववाचकं, यत् रूपं भवति ओं हर ओम् इति यत् स्वरूपं निष्पद्यते, तत् हरमयं हकाररेफात्मकं, निराकारम् अश्च अश्च तौ औ, तयोराकारं स्वरूपं, निर्गतौ रहितौ, अकारद्वयौ यस्मात् तादृशं, हकाररकारयोरुच्चारणार्थं यत् अकारद्वयं तच्छून्यम्, अत एव 'ह्र' इति व्यञ्जनवर्णमात्रात्मकमित्यर्थः, तथा ई च इन्दुश्च ताभ्याम् ईन्दुभ्यां सह वर्त्तते इति तादृशं सेन्दुं तुरीयस्वरविन्दुसहितम्, अमलं निर्दोषं, सकलं कलया अर्द्धचन्द्रेण सहितं, मे मदीयं, मन्त्रं प्रणवद्वयसम्पुटितं ओं ह्रीँ ओम् इत्याकारकं सारस्वतचिन्तामणिमन्त्रमित्यर्थः, तदुक्तं पारमेश्वरे,—'उद्धारस्तु परोक्षेण परोक्षप्रियताश्रुतेः। शिवान्त्यवह्निसंयुक्तो ब्रह्मद्वितयमन्तरा ॥ तुरीयस्वरशीतांशु-रेखातारासमन्वितः। एष चिन्तामणिर्नाम मन्त्रः सर्वार्थसाधकः ॥ जगन्मातुः सरस्वत्या रहस्यं परमं मतम् ॥' इति। शिवशब्देन हकारः, वह्निशब्देन रकारः, ब्रह्मद्वितयमन्तरा प्रणवद्वितयमध्ये, तुरीयस्वरेण ईकारः, शीतांशुरेखया अर्द्धचन्द्रः, ताराशब्देन विन्दुः इत्यर्थः। अन्तरित्यादि पूर्ववत्। यन्त्रपक्षे—भगवत् योनीव, अभिधेयं दृश्यं, यत् रूपं त्रिकोणाख्यम्, उभयाकारघटनात् त्रिकोणद्वयमेलनात्, सकलं सम्पूर्णं, षट्कोणमित्यर्थः, भवति, तदन्तः तस्य षट्कोणस्यान्तर्मध्ये, मन्त्रम् ओं ह्रीं ओम् इत्याकारकम्। अनन्तरोक्तं, नरपते इत्यादि पूर्ववत्। अत्र देवतामन्त्रयन्त्राणां त्रयाणामपि प्रकृतत्वात् केवलप्रकृतश्लेषोऽलङ्कारः। शिखरिणी वृत्तम् ॥ ८५ ॥

आधे अर्थात् दहने भागमें पुरुष तथा आधे अर्थात् बायें भाग में स्त्री, (अतएव स्त्री-पुरुषात्मक) दो भागवाला, (परन्तु वास्तवमें) दोनों आकारोंके मिलनेसे सम्पूर्ण, भगवद्वाच्य ('शिव' नामसे कहा जानेवाला) जो रूप होता है; हे राजन् (नल)! चन्द्रयुक्त, निर्मल (शुभ्रवर्ण), निराकार (दो भाग प्रतीत होनेपर भी वास्तविकमें अवयवहीन), मन्त्रतुल्य गोपनीय (या-मन्त्ररूप), ईश्वरा-(शिवा-)त्मक मेरे उस रूपको अन्तःकरणमें चिन्तन (ध्यान) करो, जपो अर्थात् जपरूपसे उपासना करो; मन्त्रमूर्ति वह (भगवान् शिव) तुम्हें सिद्ध (फलदाता) हों। **मन्त्रपक्षमें**—आधे (पूर्व) भागमें ओकार तथा मकारसे तथा उत्तर भागमें ओकार तथा मकारसे उपलक्षित अर्थात् आदि और अन्तमें 'ओम्' रूप प्रणवसे युक्त; दो अकारोंके घटना (संयोग) से द्विधाभूत ('ह् र' इस प्रकार विभक्त। अथवा—दोनों आकार अर्थात् प्रणवके सम्पुटीकरणसे दो आकारवाला), शिववा-

चक, ( 'ओं हर ओम्' ऐसा ) जो रूप होता है; वह 'हर' मय अर्थात् हकार-रेफात्मक ( 'ह्, र' रूप ), निराकार अर्थात् दोनों अकारोंसे रहित ( ह् र् अर्थात् ह्=केवल व्यञ्जन हकाररेफस्वरूप ), ई और इन्दु ( चन्द्र अर्थात् गोलाकृति ( अनुस्वार ) से युक्त ) अर्थात् 'ह्रीं' ऐसे रूपवाला, कलायुक्त अर्थात् 'ह्रीँ' ( इस प्रकार 'ओं ह्रीँ ओं' स्वरूप ) मेरे मन्त्र ( 'चिन्तामणि' नामक सारस्वत मन्त्र ) का मनमें नित्य जप करो अर्थात् मानसिक जप करो, वह 'चिन्तामणि' नामक सारस्वत मन्त्र तुम्हें सिद्ध होवे। यन्त्रपक्षमें—भग अर्थात् योनिके समान दृष्टिगोचर होनेवाला अर्थात् त्रिकोण, दो आकृतियोंकी घटनासे सम्पूर्ण अर्थात् षट्कोणस्वरूप और उस ( षट्कोण ) के बीचमें उक्त मन्त्र ( ॐ ह्रीँ ॐ ) से युक्त मेरे सारस्वत यन्त्रकी नित्य उपासना करो, वह यन्त्र तुम्हें सिद्ध होवे ( शेष अर्थ पूर्ववत् जाना चाहिये ) ॥ ८५ ॥

सर्वाङ्गीणरसामृतस्तिमितया वाचा स वाचस्पतिः
स स्वर्गीयमृगीदृशामपि वशीकाराय मारायते ।
यस्मै यः स्पृहयत्यनेन स तदेवाप्नोति किं भूयसा
येनायं हृदये कृतः सुकृतिना मन्मन्त्रचिन्तामणिः ॥ ८६ ॥

सम्प्रति श्लोकद्वयेन मन्त्रमाहात्म्यमाह, सर्वाङ्गीणेत्यादि । येन सुकृतिना पुण्याधिकेन, अयं पूर्वोक्तः, मन्मन्त्रः एव चिन्तामणिः चिन्तामात्रेण चिन्तितवस्तुदायकः मणिस्वरूप इत्यर्थः, हृदये कृतः अनुस्मृतः, सः अनुस्मरणकारी, सर्वाङ्गीणेन सर्वाङ्गव्यापिना, 'तत् सर्वादेः—' इत्यादिना ख-प्रत्ययः, रसः शृङ्गारादिरेव, अमृतं तेन स्तिमितया भरितया, वाचा काव्यादिरूपवाग्वैदग्ध्येन, वाचस्पतिः बृहस्पतिः, तत्सदृशो भवतीत्यर्थः । 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुक्, कस्कादित्वात् सत्वम् । 'षष्ठ्याः पतिपुत्र—' इत्यादिना विसर्जनीयस्य सत्वमिति स्वामी, तन्न,

---

१. तदुक्तं हारीतेन—
'त्रिविधो जपयज्ञः स्यात् तस्य तत्त्वं निबोधत ॥
वाचिकश्चाप्युपांशुश्च मानसश्च त्रिधाऽऽकृतिः ।
त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः ॥
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा जपयज्ञस्तु वाचिकः ॥
शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् ।
किञ्चिच्छ्रवणयोग्यः स्यात्स उपांशुर्जपः स्मृतः ॥
धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् ।
शब्दार्थचिन्तनाभ्यां तु तदुक्तं मानसं स्मृतम् ॥'
इति । ( हारीतस्मृतिः ४।४०—४४ )

अस्य छन्दोविषयत्वादिति । एवं स स्वर्गे भवाः स्वर्गीयाः, 'वा नामधेयस्य—' इति वृद्धत्वाच्छप्रत्ययः । तासां मृगीदृशां स्त्रीणामपि, वशीकाराय वशीकरणाय, मारायते मारः कन्दर्प इव आचरति, न केवलं विदग्धवाक् स्त्रीवशीकरणसमर्थोऽपि चेत्यर्थः । यद्वा, भूयसा बहुतरोक्तेन, किम् ? यः यस्मै स्पृहयति यत् कामयते, 'स्पृहेरीप्सितः' इति सम्प्रदानत्वाच्चतुर्थी । स कामी, अनेन मन्त्रेण, तदेव तत् सर्वमेव आप्नोति, यतोऽयं चिन्तामणिरिति भावः ॥ ८६ ॥

इस (पूर्वोक्त) 'चिन्तामणि' नामक मेरे मन्त्रको (अथवा—'चिन्तामणि' (चिन्तित फल देनेवाले रत्नविशेष) रूप मेरे मन्त्रको; अथवा—मेरे मन्त्ररूप चिन्तामणिको) जिस पुण्यात्मा (या—पुरश्चरणादि सत्कर्मकर्ता) ने हृदयमें (चित्तमें, पक्षा०—छातीपर) किया; वह सम्पूर्ण शरीरमें व्याप्त (शृङ्गारादि नव) रसरूपी अमृतसे आर्द्र (सुमधुर, या सरस) वचन (काव्यादि) से बृहस्पति अर्थात् बृहस्पतितुल्य (या—बृहस्पति ही) होता है, वह स्वर्गीय मृगलोचनाओंको वशीभूत करनेके लिए कामदेवतुल्य आचरण करता है अर्थात् उसे देखकर उर्वशी-मेनकादि स्वर्गीय देवाङ्गनाएं कामाधीन हो जाती हैं। अधिक (अन्यान्य मन्त्रों, या बहुत कहने) से क्या प्रयोजन है ? जो जिसको चाहता है, वह उसे ही प्राप्त करता है। [अत एव हे नल ! तुम इसी 'चिन्तामणि' नामक मेरे पूर्वोक्त (१४।८५) मन्त्रको हृदयमें धारण करो] ॥ ८६ ॥

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारु हंसेन मां चेत्-
निर्यान्तीं मन्त्रमूर्त्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः ।
सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकं दृश्यमस्य ॥ ८७ ॥

पुष्पैरिति । किञ्च, मयि भक्तः भक्तियुक्तः सन्, मय्येव मतिं न्यस्य मनो निधाय, हंसेन वाहनभूतेन, चारु सम्यक्, निर्यान्तीं सञ्चरन्तीं, मन्त्रमूर्त्तिं मन्त्ररूपां, मां सुभगैः मनोज्ञैः, पुष्पैः तथा गन्धादिभिरपि चन्दनादिसुरन्धिद्रव्यैः, आदिशब्दात् धूपाद्युपचारैश्च, अभ्यर्च्य जपति चेत् तर्हि वत्सरान्ते सम्प्राप्ते सति असौ जपिता, यस्य कस्य अनक्षरस्यापि, शिरसि करं धत्ते निधत्ते, सः अनक्षरः अपि, अकाण्डे अकस्मात्, रुचिरान् श्लोकान् रचयति, अस्य मन्त्रस्य, एतत् कौतुकम् अद्भुतं, दृश्यं द्रष्टव्यम् ॥

सुन्दर हंसगामिनी एवं मन्त्ररूपिणी अर्थात् षट्कोणाकृति यन्त्रमध्यवर्तिनी, या मन्त्रमध्यगत शरीरवाली मुझको सुन्दर फूलों तथा गन्धादि (चन्दन धूपादि सुगन्धियों) से पूजा करके मुझमें बुद्धि लगाकर अर्थात् चित्तको एकाग्रकर तथा मेरा ही भक्त होकर अर्थात् सब प्रकार मेरा ही सेवन करता हुआ (साधक मेरे मन्त्रको) जपता है, तब एक वर्षके बाद वह जपकर्ता जिस किसी (मूक, मूर्ख आदि) के भी मस्तक पर हाथ रखता है, वह (मूक, मूर्ख आदि जन) भी अकस्मात् (रसरीतिगुणालङ्कारादि) मनोहर श्लोकोंकी रचना

करने लगता है; अत एव ( इस मन्त्रको जपकर तुम ) इसके कौतूहलको देखो ॥ ८७ ॥

गुणानामास्थानीं नृपतिलक ! नारीतिविदितां
रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः ।
भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं
परीरम्भक्रीडाचरणशरणामन्वहमहम् ॥ ८८ ॥

अथ श्लोकद्वयेन नलं प्रत्युपयोगविशेषमाह, गुणानामित्यादि । नृपतिलक ! हे नृपश्रेष्ठ ! गुणानां रूपलावण्यादीनां, श्लेषप्रसादादीनाञ्च, आस्थानीम् आधारभूतां, नारी उत्तमस्त्री, इति विदितां विश्रुताम्, अन्यत्र—रीतिषु गौडीपाञ्चाल्यादिषु, विदिता प्रसिद्धा, सा न भवतीति अरीतिविदिता, नञ्समासः । साऽपि न भवतीति तां नारीतिविदितां रीतिषु विदितामित्यर्थः, नञर्थस्य न-शब्दस्य सुप्सुपेति समासः । अन्तः मनसि, श्लोकमध्ये च, रसस्फीतां रसेन नलविषयकानुरागेण, स्फीतां परिपूर्णाम्, अन्यत्र—शृङ्गारादिरसाढ्यां, 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । वैदर्भीं दमयन्तीं, वैदर्भरीतिञ्च, यथा सङ्ख्यं तव च नलस्य च, तव वृत्ते च चरित्रविषये च, कवितुः वर्णयितुः, श्रीहर्षादिकवेरित्यर्थः, 'कवृवर्णने' इति धातोस्तृच् । अधिकण्ठं कण्ठे, विभक्त्यर्थेऽव्ययीभावः । परीरम्भक्रीडाचरणम् आलिङ्गनविनोदाचरणमेव, शरणं प्राणत्राणं यस्याः तां तदेकजीविताम्, अन्वहम्, अनुदिनम् । याथार्थ्येऽव्ययीभावः, 'नपुंसकादन्यतरस्याम्' इति समासान्तष्टच्, 'अह्नष्टखोरेव' इति टिलोपः । अधिकम् अत्यर्थं, रचयितुं कर्त्तुम्, अहं भवित्री भविष्यामीत्यर्थः॥८८॥

हे राजश्रेष्ठ ( नल ) ! सौन्दर्यादि गुणोंके आधारभूत, 'नारी' ऐसी प्रसिद्ध अर्थात् 'लोकमें यही एक श्रेष्ठ नारी है' ऐसा प्रसिद्ध, हृदयमें रस ( त्वद्विषयक अनुराग ) से परिपूर्ण दमयन्तीको ( पक्षा०—श्लेषादि तथा प्रासादादि गुणोंके आधारभूत, अरीति ( वैदर्भी गौडी पाञ्चाली रीतिसे भिन्न ) नहीं अर्थात् उक्त रीतित्रयसे सुप्रसिद्ध, ( श्लोक—पद्य ) के मध्यमें शृङ्गारादि नव रसोंसे परिपूर्ण 'वैदर्भी' ( स्वल्पसमासवाली, या असमासवाली तीन रीतियोंमें-से प्रसिद्ध रीति-विशेष) को तुम्हारे तथा तुम्हारा चरितकी कविता करने वाले ( श्रीहर्षादि कवियों ) के कण्ठमें आलिङ्गन ( चुम्बनादि ) क्रीडाको करना ही जिसका जीवन है ऐसी ( अथवा—आलिङ्गन ( चुम्बनादि ) क्रीडाके लिये, तुम्हारा चरण ही है शरण जिसका ऐसी अर्थात् आलिङ्गनादि क्रीडार्थ तुम्हारे चरणोंकी सेवाको शरण माननेवाली, पक्षा०—परीरम्भ ( श्लेषालङ्कार ) तथा क्रीडा ( वक्रोक्ति-विलास ) का यथावत् ज्ञान ही जिसका शरण ( आधार ) है ऐसी कविता ) करनेके लिए अर्थात् करानेवाली प्रतिदिन होऊंगी । [ उक्त सौन्दर्यादि गुणविशिष्ट दमयन्ती तुम्हारे कण्ठमें आलिङ्गनादि क्रीडा जिस प्रकार करे वैसा मैं प्रतिदिन करनेमें प्रयत्नशील रहूंगी, पक्षा०—उक्त श्लेषादि गुणयुक्त वैदर्भी रीतिवाली तुम्हारे चरित्रकी कविताको करनेवाले कविके कण्ठमें श्लेष-

वक्रोक्ति आदिसे परिपूर्ण ज्ञानको करनेके लिए मैं प्रतिदिन प्रयत्नशील रहूंगी ॥ इस पद्यसे कविकुलशिरोमणि ग्रन्थकार 'श्रीहर्ष' महाकविने यहां पर अपनी रचना को प्रासादादि गुणयुक्त, रीतियोंसे प्रसिद्ध, शृङ्गारादि रसाप्लावित, मुख्यतः 'वैदर्भी' रीतियुक्त श्लेष वक्रोक्ति आदि ज्ञान का आधारभूत रचना करनेमें साक्षात् सरस्वतीदेवीने सहायताकी है यह सूचित किया है ] ॥ ८८ ॥

भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु-
र्मुखात् पुण्यैः श्लोकैस्त्वयि घनमुदेयं जनमुदे ।
ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता
भवानाख्यातः सन् कलिकलुषहारी हरिरिव ॥ ८९ ॥

भवदिति । किञ्च, हे नल ! मया उपहितकण्ठस्य, अधिष्ठितकण्ठनालस्य, भवतः वृत्तस्य चरित्रस्य, स्तोतुः स्तावकस्य, कवितुः कवेः, मुखात् त्वयि विषये, पुण्यैः पवित्रैः चारुभिर्वा, 'पुण्यन्तु चार्वपि' इत्यमरः । श्लोकैः पद्यैः, जनमुदे लोकहर्षाय, घनं निरन्तरम्, उदेयम् उदेतव्यम्, उदीयतामित्यर्थः । एतेः 'अचो यत्' इति यत्-प्रत्ययः । ततः को मे लाभः ? तत्राह, तत इति । ततः पुण्यश्लोकोदयात् , भवान् पुण्यश्लोकः पुण्यकीर्त्तिः, इति आख्यातः कीर्त्तितः सन् , हरिः जनार्दनः इव, क्षिति-भुवनलोकस्य भूलोकस्य, कलिकलुषहारी कलिकालकल्मषनाशनः, भविता भवि-ष्यति, भवतेर्लुटि 'शेषे प्रथमः' । अत्राहुः,—'पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥' 'कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनम् ॥' इति ॥ ८९ ॥

मुझसे अधिष्ठित कण्ठवाले ( जिसके कण्ठमें मैं ( सरस्वती देवी ) वास करती हूं ऐसे ) तथा तुम्हारे चरित्र की स्तुति ( प्रशंसा ) करनेके लिए कविता करनेवाले ( कवि ) के मुखसे त्वद्विषयक सुन्दर श्लोक लोगोंके हर्षके लिए अत्यन्त ( या निरन्तर ) उदित होवें, ( अथवा—लोगोंके अत्यधिक हर्षके लिए उदित होवें ) अर्थात् तुम्हारी प्रशंसाके सुन्दर श्लोक अत्यधिक लोगोंको हर्षप्रद हों और उस कारण ( अथवा—उसके बाद ) तुम कलिकालके पापको हरण करनेवाले विष्णुके समान ( अथवा—विष्णुके समान कलिकालके पापका हरण करनेवाले तुम ) भूतलनिवासी लोगोंके 'पुण्यश्लोक' ( पवित्र श्लोक या कीर्तिवाला ) ऐसा प्रसिद्ध होवोगे । ( अथवा—'पुण्यश्लोक' ऐसा प्रसिद्ध तुम कलिकालके पापहर्ता विष्णुके समान भूतलनिवासी लोगोंके होवोगे । अथवा—'पुण्यश्लोक' ऐसा प्रसिद्ध तुम विष्णुके समान भूतलनिवासी लोगोंके कलिकाल के पापनाशक होवोगे ॥ ८९ ॥

देवी च ते च जगदुर्जगदुत्तमाङ्गरत्नाय ते कथय कं वितराम कामम् ? ।
किञ्चित्त्वया न हि पतिव्रतया दुरापं भस्मास्तु यस्तव व्रतलोपमिच्छुः ॥

अथ ते सर्वे दमयन्तीं प्रति आहुः, देवीति । देवी सरस्वती च, ते देवाश्च, जगदुः, जगदुत्तमाङ्गरत्नाय त्रैलोक्यशिरोमणिभूतायै, 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । ते तुभ्यं, कं काम्यते इति कामम् ईप्सितं, कर्मणि घञ् । वितराम ? प्रयच्छाम ? सम्प्रश्ने लोट् । कथय । पत्यौ व्रतं नियमः, अस्खालित्यरूपमित्यर्थः, यस्याः, तादृशया त्वया किञ्चित् किमपि, दुरापं दुष्प्रापं, न हि नैव, अस्तीति शेषः, पातिव्रत्यतेजसोऽप्रतिहतशक्तिकरत्वादिति भावः; तथाऽपि यः पापी; तव व्रतं पत्यौ अस्खालित्यरूपं, तस्य लोपं नाशम्, इच्छुः अभिलाषुकः, । 'विन्दुरिच्छुः' इत्युप्रत्ययान्तो निपातः, 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । स भस्मास्तु भस्मीभवतु, वतेति खेदे; तथा चास्मद्वरप्रसादादेव तत्प्रतीकारात् तव ततो भयं न भविष्यतीति भावः । एतच्चोत्तरत्र वनमध्ये अजगरग्रस्तां दमयन्तीमजगरादुन्मोच्य पुनस्तां कामयमानस्य पापिष्ठस्य व्याधस्य वधे फलिष्यतीति भारती कथा अत्र अनुसन्धेया॥९०॥

सरस्वती देवी तथा वे ( इन्द्रादि चारो देव ) बोले कि—( हे दमयन्ति ! ) संसारके शिरोभूषण तुमको हमलोग किस मनोरथको दें अर्थात् पूरा करें क्योंकि पतिव्रता तुमको कोई वस्तु दुर्लभ नहीं है, तथापि जो कोई तुम्हारे व्रत ( पातिव्रत्य ) को भङ्ग ( नष्ट ) करना चाहे, वह भस्म हो जाय, खेद है [ इस वरदानसे कविने भविष्यमें होनेवाली कथाका भी सङ्केत कर दिया है ] ॥ ९० ॥

कूटकायमपहाय नो वपुर्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता ।
आप्तुमाकृतिमतो मनीषितां विद्यया हृदि तवाप्युदीयताम् ॥ ९१ ॥

अथ वरान्तरञ्च, कूटेति । कूटकायं कपटदेहं, नलाकारमिति यावत्, अपहाय वपुः निजविग्रहं, बिभ्रतः बिभ्राणान्, नः अस्मान्, वीक्ष्य त्वं विस्मिता विस्मयाविष्टा, असि, तेन, स्वेच्छया रूपान्तरपरिग्रह-परिहारकामा त्वमिति प्रतिभासीति भावः; अतः हेतोः, मनीषिताम् अभिलषिताम्, आकृतिं शरीरम्, आप्तुं तवापि हृदि हृदये, विद्यया कामरूपसम्पादकविद्यया, उदीयताम् उद्भूयताम्, उत्पूर्वादिणो भावे लोट् ॥ ९१ ॥

कपटशरीर ( कृत्रिम नलशरीर ) को छोड़कर ( अपना ) शरीर धारण किये हुए हम लोगोंको देखकर तुम आश्चर्यित हो गयी हो, ( अतः ) अभिलषित शरीर पानेके लिए तुम्हारे भी ( 'अपि' शब्दसे नलके भी ) हृदयमें विद्या ( शरीरपरिवर्तिनी मन्त्रादिशक्ति ) प्रादुर्भूत होवे ॥ ९१ ॥

इत्थं वितीर्य वरमम्बरमाश्रयत्सु तेषु क्षणादुदलसद्विपुलः प्रणादः ।
उत्तिष्ठतां परिजनालपनैर्नृपाणां स्ववासिवृन्दहतदुन्दुभिनादसान्द्रः ॥९२॥

इत्थमिति । तेषु देवेषु, इत्थं वरं वितीर्य दत्त्वा, अम्बरम् आकाशम्, आश्रयत्सु सत्सु, उत्तिष्ठताम् आसनेभ्यः उच्चलतां, नृपाणां प्रणादः हर्षोत्थध्वनिः 'प्रणादस्तु

शब्दः स्यादनुरागजः' इत्यमरः। परिजनानाम् आलपनैः आभाषणैः, विपुलः सन्, तथा स्ववासिनां दिव्यजनानां, वृन्देन हतानां ताडितानां, दुन्दुभीनां नादेन सान्द्रः निरन्तरः सन्, निरवच्छिन्नभावेनेत्यर्थः, क्षणात् उदलसत् उत्थितः ॥ ९२ ॥

ऐसा (१४।७०-९१) वरदान देकर उन (इन्द्रादि चारों देव तथा सरस्वती देवी) के आकाशमें जानेके लिए तत्पर होनेपर (अपने-अपने शिविर आदिमें जानेके लिए) उठते हुए राजाओंके परिजनोंके भाषण (जय, जीव इत्यादि राजस्तुतिवचनों) से देवगणोंके द्वारा बजायी गयी दुन्दुभियोंके शब्दोंसे गम्भीर क्षणमात्रमें महान् (बड़े जोरोंका) शब्द (कोलाहल) हुआ। [वरदान देकर इन्द्रादि देव तथा सरस्वती देवी स्वर्गको जानेके लिए उद्यत हुए, अपने अपने शिविरोंको जानेके लिए राजा लोग उठने लगे तो वन्दी उनके यशोगान करने लगे तथा दमयन्ती और नलके परस्पर संयोगसे सन्तुष्ट देवगण स्वर्गमें दुन्दुभियां बजाने लगे, इन सबका बडा कोलाहल क्षणमात्रमें होने लगा] ॥ ९२ ॥

न दोषं विद्वेषादपि निरवकाशं गुणमये
वरेण प्राप्तास्ते न समरसमारम्भसदृशम्।
जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः
स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ॥ ९३ ॥

नेति। प्राप्ताः स्वयंवरागताः, ते नृपतयः गुणमये गुणैकनिलये, नले इति शेषः, निरवकाशमवर्त्तमानं, दोषं विद्वेषात् अपि दमयन्तीलाभजनितद्वेषे सत्यपीत्यर्थः, न जगुः नोचुः, न उद्घाटयामासुरित्यर्थः, 'गै शब्दे' इति धातोर्लिट्। तादृशगुणसम्पत्तिः अदोषता चास्येति भावः। किञ्च, वरेण शचीदत्तेन हेतुना, पुण्यश्लोकं नलं प्रति, समरसमारम्भस्य युद्धोद्योगस्य, सदृशम् अनुकूलञ्च किञ्चित्, न, जगुरिति क्रियानुषङ्गः 'सान्निध्ययोगात् किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः' (रघुवंशे ७।३) इति भावः; किन्तु स्वनिश्वासैः दुःखोत्थैः स्वेषां निश्वासैः, भैमीहृदयं दमयन्तीचेतः, उदयन्ती जनयन्ती, निर्भरा अतिमात्रा, दया यस्य तत् तथाभूतं, तद्दुःखदुःखितं, विदधुः चक्रुः, परदुःखासहिष्णुर्दमयन्ती स्वप्रत्याख्यानदुःखितान् राज्ञो दृष्ट्वा तद्दुःखप्रशमनेच्छुरासीदित्यर्थः ॥ ९३ ॥

(स्वयंवरमें) आये हुए वे राजालोग सौन्दर्यादि बहुगुणयुक्त (नलमें) नहीं रहनेवाले दोषोंको (दमयन्तीकी अप्राप्तिरूपी) वैरसे भी नहीं कहा और (उस स्वयंवरमें प्रच्छन्न-रूपसे उपस्थित इन्द्राणीके) वरदानसे युद्धारम्भके समान अर्थात् योग्य भी कोई वचन नहीं कहा; किन्तु (दमयन्तीके नहीं पानेसे उत्पन्न अपने) निःश्वासोंसे दमयन्तीके हृदय अथवा—दमयन्तीके हृदय (भूत नल) को अत्यन्त दयालु बना दिया। (पा०—

१. 'प्राप्तास्ते' इति पाठान्तरम्। २. 'पुण्यश्लोके प्रतिनृपतयः' इति पाठान्तरम्।

( दमयन्तीके नहीं पानेसे ) प्रतिपक्षी राजालोग ( सौन्दर्यादि ) गुणोंसे पूर्ण नलमें अवर्तमान ( नहीं रहनेवाले ) दोषको विद्वेष ( दमयन्तीको प्राप्त करनेसे नलके प्रति उत्पन्न वैर ) से भी नहीं कहा तथा ( इन्द्रादि ) ( अथवा—यमराज—१४।७७ ) के दिये वरदानसे अस्त्रोंको प्राप्त किये हुए नलमें युद्धके योग्य कोई वचन नहीं कहा, किन्तु.........दयालु बना दिया) [ दमयन्ती राजाओंकी स्थितिको देखकर अत्यन्त दयायुक्त हो गयी ] ॥ ९३ ॥

भूभृद्भिर्लम्भिताऽसौ करुणरसनदीमूर्त्तिमद्देवतात्वं
तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः ।
वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छां निजघ्नुः
सख्याः संशिक्ष्य विद्यां सततधृतवयस्यानुकाराभिराभिः ॥ ९४ ॥

भूभृद्भिरिति । भूभृद्भिः भूपालैः, करुणरसनद्याः करुणाख्यरसप्रवाहस्य, मूर्त्तिमत् शरीरि, देवतात्वम् अधिदेवतात्वं, लम्भिता प्रापिता, स्वस्वदुःखेन दुःखीकृता इत्यर्थः, असौ दमयन्ती, सपदि तत्क्षणमेव, अभ्यर्थ्य सम्प्रार्थ्य, पितरमिति शेषः; यद्वा—तातेन राज्ञा इति शेषः, तातेन पित्रा भीमेन, योग्याः कुलशीलसौन्दर्यादिना राजार्हाः, निजसखीः तेभ्यः भूभृद्भ्यः, सम्प्रदाने चतुर्थी । दापयामास, ते भूभृतोऽपि, वैदर्भ्याः अलाभात् हेतोः, कृतं गमनं निष्क्रमणेच्छा इत्यर्थः, यैः तादृशानां मनःप्राणानां वाञ्छां निष्क्रमणेच्छारूपकर्माणि, अथवा—कृतं गमने देहपरित्यागे, मनो यैस्तादृशानां प्राणानां वाञ्छां निष्क्रमणेच्छामित्यर्थः, सख्याः भैम्याः, 'आख्यातोपयोगे' इति अपादानत्वात् पञ्चमी विद्यां कामरूपधारणविद्याम् इन्द्राद्युक्तां, संशिक्ष्य अभ्यस्य, सततं नित्यं, धृतः वयस्यानुकारः भैमीसादृश्यं याभिः तादृशीभिः, आभिः सखीभिः साधनैः, निजघ्नुः निरोधयामासुः, राजानोऽपि दमयन्त्यलाभेन निष्क्रमणेच्छून् मनःप्राणान् भैमीसखीलाभेन निष्क्रमणात् निवर्त्तयामासुः, अन्यथा सद्यो म्रियेरन्निति अहो दमयन्त्या दयालुत्वं विवेचकत्वञ्चेति भावः ॥ ९४ ॥

( दमयन्तीके अलाभसे दुःखितः ) राजाओंसे करुणरसकी नदी ( पक्षा०—करुणरस-प्रवाह ) की अधिदेवता बतायी गयी ( उन राजाओंके दुःखको देखकर अतिशय करुणावाली ) इस दमयन्तीने ( अपने पितासे ) प्रार्थना करके शीघ्र ही योग्य ( रूप शील आदिसे उन राजाओंकी पत्नी बननेके योग्य ) अपनी सखियोंको उन राजाओंके लिए पिता ( राजा भीम ) से दिलवा दिया ( और ) वे ( राजा लोग ) भी दमयन्तीके नहीं मिलनेसे निर्गमन ( मरने ) के लिए तैयार अपने प्राणोंकी इच्छाको, सखी ( दमयन्ती ) से विद्या ( वरदानसे प्राप्त इच्छानुकूल रूप धारण करने आदिका ज्ञान ) अच्छी तरह सीखकर निन्तर सखी ( दमयन्ती ) के समानताको प्राप्त की हुई उन सखियोंसे अर्थात् उन सखियोंके पानेसे रोका । [ राजाओंके अपार दुःखको समझकर करुणापूर्ण दमयन्तीने अपने पिता राजा भीमसे प्रार्थना करके उन राजाओंके योग्य अपनी सखियोंको दिलवा दिया तथा दमयन्तीके

नहीं मिलनेसे मरनेको तैयार वे राजालोग, दमयन्तीसे वरदान प्राप्त स्वेच्छानुसार रूप ग्रहण करनेकी विद्याको अच्छी तरह सीख लेनेसे उस दमयन्तीके समान ही बनी हुई उन सखियोंको पाकर मरनेका विचार छोड़ दिये ॥ दमयन्ती यदि उन सखियोंको नहीं दिलवाती तो वे राजा लोग अवश्य प्राणत्याग कर देते ] ॥ ९४ ॥

**अहह सह मघोना श्रीप्रतिष्ठासमाने निलयमभि नलेऽथ स्वम्प्रतिष्ठासमाने ।**
**अपतदमरभर्त्तुर्मूर्त्तिबद्धेव कीर्त्तिर्गलदलिमधुबाष्पा पुष्पवृष्टिर्नभस्तः ॥९५॥**

अहहेति । अथेन्द्रप्रस्थानानन्तरं, मघोना इन्द्रेण सह, श्रीप्रतिष्ठया ऐश्वर्यगौरवेण, समाने सदृशे, नले स्वं निलयम् अभि शिबिरं प्रति, 'अभिरभागे' इति लक्षणार्थे कर्मप्रवचनीयत्वात् तद्योगे द्वितीया प्रतिष्ठासमाने प्रस्थातुम् इच्छति सति, प्रपूर्वात्तिष्ठतेः सनन्ताल्लटः शानजादेशः 'समवप्रविभ्यः—' इत्यात्मनेपदत्वात् 'पूर्ववत् सनः' इत्यात्मनेपदम् गलन् स्रवन्, अलियुक्तं मधु मकरन्दः एव, बाष्पः अश्रु यस्याः सा तादृशी साञ्जनबाष्पयुक्ता इत्यर्थः, मूर्त्तिबद्धा बद्धमूर्त्तिः, मूर्त्तिमतीत्यर्थः, 'वाऽहिताग्न्यादिषु' इति निष्ठायाः परनिपातः। अमरभर्त्तुः इन्द्रस्य, कीर्त्तिः इव पुष्पवृष्टिः नभस्तः नभसः, पञ्चम्यास्तसिल् । अपतत् पतिता, अहह इत्यद्भुते, कीर्त्तिः स्वामिदुर्व्यसनदुःखात् भ्रश्यतीवेत्युत्प्रेक्षा । पुष्पाणां धवलतया कीर्त्तित्वं दमयन्त्या चावृतत्वेन इन्द्रस्य कीर्त्तिः सुतरां भ्रष्टा, नारीणां बाष्पञ्च सकज्जलं भवतीति भावः ॥

प्रतिष्ठामें इन्द्रके समान नलके अपने स्थान अर्थात् शिविरमें जानेकी इच्छा करनेपर देवेन्द्रकी मूर्तिमती गिरते हुए भ्रमरयुक्त मकरन्दरूप अश्रुवाली कीर्तिके समान पुष्पवृष्टि आकाशसे गिरी ( हुई ) आश्चर्य है । [ दमयन्तीको पानेसे इन्द्रतुल्य ऐश्वर्यवाले नल अपने शिविरमें जाने लगे तब प्रसन्न देवगणने आकाशसे पुष्पवृष्टिकी उन पुष्पोंके साथ सुगन्धिसे आकृष्ट भ्रमर तथा पुष्पोंके मधु गिर रहे थे, वे उस मूर्तिमती कीर्तिके अञ्जनाविल बाष्पके समान प्रतीत होते थे ॥ इन्द्रको छोड़कर नलका वरण करनेसे रोती हुई देवेन्द्रकीर्तिका स्वर्गसे गिरना और रोनेमें अञ्जनयुक्त होनेसे बाष्पका कृष्णवर्ण होना उचित ही है । यहां भ्रमरको अञ्जन, मकरन्दको आंसू, श्वेत पुष्पोंको मूर्तिमती देवेन्द्र की कीर्ति समझना चाहिये ] ॥ ९५ ॥

**स्वस्यामरैर्नृपतिमंशमसुं त्यजद्भि-**
**रंशच्छिदाकदनमेव तदाऽध्यगामि ।**
**उत्का स्म पश्यति निवृत्य निवृत्य यान्ती**
**वाग्देवताऽपि निजविभ्रमधाम भैमीम् ॥ ९६ ॥**

स्वस्येति । स्वस्य आत्मनः, इन्द्रादेरित्यर्थः, अंशम् अंशसम्भवम्, 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति स्मरणात्; असुं नृपतिं नलं, त्यजद्भिः अमरैः इन्द्रादिभिः, अंशच्छिदा अवयवच्छेदः, 'षिद्भिदादिभ्योऽङ्' तया यत् कदनं दुःखं

तदेव, तदा अध्यगामि अधिगतम्; स्वांशोद्भूतजनवियोगः स्वावयवच्छेदवत् भवतीति भावः। किञ्च, निजम् आत्मीयं, विभ्रमधाम विहारभवनं, यान्ती वाग्देवता सरस्वती अपि उत्का उन्मनाः, उत्सुका सतीत्यर्थः, 'उत्क उन्मनाः' इति निपातः। निवृत्य निवृत्य पुनः पुनः परावृत्य, भैमीं पश्यति स्म, 'सन्धत्ते भृशमरतिं सुहृद्वियोगः' इति भावः ॥ ९६ ॥

अपने अंशभूत इस राजा (नल) को छोड़ते (छोड़कर स्वर्ग जाते) हुए देवों (इन्द्रादि चारों देवों) ने उस समय अपने अंश (हाथ-पैर आदि अवयव) के काटनेके समान ही दुःखको प्राप्त किया तथा अपने विलासभवनको जाती हुई सरस्वती देवी भी उत्कण्ठित हो घूम घूमकर अर्थात् पीछे की ओर मुड़-मुड़कर दमयन्तीको देखती थी। (अथवा—जाती हुई सरस्वती देवी भी उत्कण्ठित हो घूम-घूमकर अपने विलासके स्थानभूत दमयन्तीको देखती थी।) [राजाका लोकपालांश होनेसे नल भी इन्द्रादि लोकपालोंके अंशोत्पन्न थे, अतः नलको छोड़कर स्वर्ग जाते समय इन्द्रादिको अपने अवयव (हाथ-पैर आदि अङ्ग) को काटकर अलग करनेके समान कष्ट हुआ तथा दमयन्तीको छोड़कर जाती हुई सरस्वती देवीको भी अधिक कष्ट हुआ, इसी कारण जाती हुई वह लौट-लौटकर उसे (दमयन्ती) को देखती थी। अन्य भी किसी व्यक्तिको अपने अंश (अवयव) के अलग होनेसे दुःख होता ही है। पुरुष इन्द्रादिका पुरुष नलमें तथा स्त्री सरस्वतीका स्त्रीनलमें 'स्वगणे परमा प्रीतिः' नीतिके अनुसार अनुराग होना उचित ही है। अथ च—दमयन्ती सरस्वती देवी का क्रीडास्थान (पक्षा०—अत्यन्त विदुषी) थी अत एव सरस्वतीका अपने क्रीडास्थान दमयन्तीको छोड़ते उत्कण्ठित होना तथा जाते समय लौट-लौटकर देखना उचित ही है] ॥ ९६ ॥

सानन्दं तनुजाविवाहनमहे भीमः स भूमीपति-
र्वैदर्भीनिषधाधिपौ नृपजनानिष्टोक्तिसम्मृष्टये ।
स्वानि स्वानि धराधिपाश्च शिविराण्युद्दिश्य यान्तः क्रमा-
देको द्वौ बहवश्चकार सृजतः स्मातेनिरे मङ्गलम् ॥ ९७ ॥

सानन्दमिति। तनुजायाः दुहितुः दमयन्त्याः, विवाहनं परिणयनम् विपूर्वात् वहतेर्ण्यन्ताद्भावे ल्युट्, तदेव महः उत्सवः तस्मिन्, भूमीपतिः भूपतिः, स भीमः तथा वैदर्भीनिषधाधिपौ दमयन्तीनलौ, तथा स्वानि स्वानि शिविराणि उद्दिश्य यान्तः धराधिपाश्च एकः द्वौ बहवः एते त्रितयेऽपि, नृपाणां दमयन्त्यवृतभूपानां, ये जनाः परिजनाः, तेषां या अनिष्टोक्तिः स्वस्वप्रभोरवमाननाजनितश्रुतिकटुवाक्यानि, तासां सम्मृष्टये तद्दोषपरिहाराय अश्रवणाय वा, सानन्दं यथा तथा मङ्गलं नगरसंस्कारेष्टदेवतानुस्मरणतूर्यघोषादिमङ्गलाचरणं, क्रमात् एकः भीमः चकार,

द्वौ दमयन्तीनलौ सृजतः स्म असृजतां, चक्रतुः इत्यर्थः, आतेनिरे यहवो धराधिपा भैमीसखीलाभात् मङ्गलतूर्यध्वनिं चक्रुरित्यर्थः । क्रमालङ्कारः ॥ ९७ ॥

पुत्री ( दमयन्ती ) के विवाहोत्सवमें एक उस राजा भीमने हर्षपूर्वक मङ्गल ( मङ्गल-जनक वाद्यादिवादन ) किया, राजा लोगों ( या-राजाओंके अनुचरों ) के अनिष्ट कथन ( दमयन्तीके नहीं मिलनेसे कटूक्ति ) की शान्ति अर्थात् उसे नहीं सुननेके लिए दो ( दमयन्ती तथा नल ) ने हर्षपूर्वक मङ्गल ( गीत, नृत्य, वादन आदि मङ्गलजनक कार्य ) किया तथा अपने-अपने शिविरोंको लक्षितकर जाते हुए बहुत राजाओंने ( दमयन्तीके तुल्य उसकी सखियोंको स्त्रीरूपमें प्राप्त करनेसे ) हर्षपूर्वक मङ्गल ( पटह-भेर्यादिका वादनरूप मङ्गल ) किया । [ इस प्रकार एक राजा भीमने, दो दमयन्ती तथा नलने और बहुत राजाओंने हर्षपूर्वक मङ्गल कार्य किया; अर्थात् सभीने हर्षपूर्वक मङ्गल मनाया ] ॥ ९७ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातस्तस्य चतुर्दशः शरदिजज्योत्स्नाच्छसूक्तेर्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ ९८ ॥

श्रीहर्षमिति । शरदि भवा शरदिजा 'सप्तम्यां जनेर्डः' । 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक् या ज्योत्स्ना तद्वदच्छा मृष्टाः, सूक्तयः यस्य तादृशस्य । गतमन्यत् ॥ ९८ ॥

इति मल्लिनाथविरचिते 'जीवातु' समाख्याने चतुर्दशः सर्गः समाप्तः ॥ १४ ॥

कवीश्वर समूहके⋯⋯किया, शरत्कालीन चाँदनीके समान निर्मल ( पक्षा०—निर्दोष ) सूक्तिवाले उसके रचित नलके चरित⋯⋯यह चतुर्दश सर्ग समाप्त हुआ । ( शेष व्याख्या चतुर्थ सर्गवत् जाननी चाहिये,) ॥ ९८ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित'का चतुर्दश सर्ग समाप्त हुआ ॥ १४ ॥

---

# पञ्चदशः सर्गः

अथोपकार्यां निषधावनीपतिर्निजामयासीद्वरणस्रजाऽन्वितः ।
वसूनि वर्षन् सुबहूनि वन्दिनां विशिष्य भैमीगुणकीर्त्तनाकृताम् ॥१॥

अथेति । अथ स्वयंवरानन्तरं, निषधावनीपतिः नलः, वरणस्रजा अन्वितः सन् वन्दिनां स्तुतिपाठकानाम्, अपरेषामिति भावः, तत्रापि भैमीगुणकीर्त्तनां कुर्वन्तीति

१. 'वर्णनाकृताम्' इति पाठान्तरम् ।

तत्कृतां भैमीगुणकीर्त्तनकारिणां वन्दिनाम् करोतेः क्विप् । विशिष्य अन्यवन्द्यपेक्षया अतिशय्य, सुबहूनि भूयिष्ठानि, वसूनि धनानि, वर्षन् वितरन्, निजाम् आत्मीयाम्, उपकार्याम् उपकारिकां, सदनमित्यर्थः, शिबिरमिति यावत्, 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरः । अयासीत् अगमत् । यातेर्लुङि 'यमरमनमातां सक् च' इति सगिडागमौ; 'अस्तिसिचोऽपृक्ते' इतीडागमः । वंशस्थविलं वृत्तम् ॥ १ ॥

इस ( देवोंको प्रसन्नकर दमयन्तीके वरण करने तथा नल-दमयन्तीके लिए वर देकर उन चारों देवोंके स्वर्गलोकको जानेके लिए तत्पर होने ) के बाद निषधराज ( नल ) भी वन्दिजनोंके लिए ( स्ववरणजन्य हर्षके उपलक्ष्यमें ) बहुत धनोंकी वृष्टि करते ( दान देते ) हुए तथा दमयन्तीके गुणकीर्तन करनेवाले वन्दिजनोंके अधिक दान देते हुए अपने शिविरको गये ॥ १ ॥

तथा पथि त्यागमयं[1] वितीर्णवान् यथाऽतिभाराधिगमेन मागधैः ।
तृणीकृतं रत्ननिकायमुच्चकैश्चिकाय लोकश्चिरमुञ्छमुत्सुकः[2] ॥ २ ॥

तथेति । अयं नलः, पथि स्वनिवेशमार्गे, तथा तेन प्रकारेण, त्यज्यते इति त्यागं धनम् कर्मणि घञ् । वितीर्णवान् दत्तवान्, यथा येन प्रकारेण, अतिभारस्य अतिगुरुत्वस्य, अधिगमेन प्राप्त्या, मागधैः वन्दिभिः, तृणीकृतं वोढुमशक्यत्वेन तृणवत् त्यक्तम्, उच्चकैः उच्छ्रितं, रत्नानां निकायं समूहं, लोकः साधारणो जनः, उत्सुकः आग्रहान्वितः सन्, चिरं बहु कालम्, उञ्छं चिकाय भुवि त्यक्तं रत्ननिकायम् उञ्छत्वेन सञ्चितवान्; यद्यपि धान्यानां कणश आदानमेव उञ्छस्तथाऽपि रत्नानामादाने औपचारिको बोध्यः । 'विभाषा चेः' इति चिञः कुत्वम् । 'उञ्छः कणश आदाने कणिशाद्यर्जनं शिलम्' इति यादवः ॥ २ ॥

इस ( नल ) ने मार्गमें इतना दान दिया कि अत्यधिक भार ( बोझ ) होनेसे बन्दिजनोंके द्वारा ( भाराधिक्यके कारण या अपेक्षा नहीं रहनेके कारण ) तृण किये अर्थात् तृणवत् तुच्छ समझकर भूमिपर छोड़े गये श्रेष्ठ रत्न-समूहको उत्सुक लोगोंने बहुत देर तक उञ्छ किया ( एक २ रत्नको चुंगते ( उठा उठा लेते ) रहे ) । ( अथवा—छोड़े गये रत्न-समूहको बहुत उत्कण्ठित लोगोंने······ ) । [ नलने चारण-भाट आदि वन्दिजनोंके लिए इतने अधिक रत्नोंको दिया कि वे सब अधिक बोझ या इच्छापूर्ति हो जानेके कारण उन रत्नोंको भूमिपर ही पड़ा छोड़ दिया और मार्गमें चलनेवाले दूसरे लोग उन रत्नोंको उत्कण्ठित होकर अन्नके दानोंके समान बहुत देर तक चुंगते रहे ] ॥ २ ॥

---

१. 'वितेतिवान्' इति पाठान्तरम् । २. 'मुञ्छकः' इति पाठान्तरम् ।
३. 'स्वकृता' इति पाठान्तरम् ।

त्रपाऽस्य न स्यात् सदसि प्रियाऽन्वयात्? कुतोऽतिरूपः सुखभाजनं जनः?।
अमूदृशी तत्कविवन्दिवर्णनैरपाकृता राजकरञ्जिलोकवाक् ॥ ३ ॥

त्रपेति। सदसि सभायां, प्रियाऽन्वयात् प्रियासमागमात्, अस्य नलस्य, त्रपा अनुचिताचरणजनितलज्जा, न स्यात्? न भवेत्? इति काकुः, भवितुमुचितमेवेत्यर्थः, तथा अतिरूपः अतिमात्रसौन्दर्यशाली, जनः कुतः कुत्र, सुखभाजनं रामसीतादिवत् सुखास्पदं, भवेत्? न कुत्रापीत्यर्थः, नलस्य इदं लोकातिशायि रूपमेव दुःखनिदानं भवेदिति भावः, असौ इव दृश्यते इति अमूदृशी एतादृशी, उक्तरूपा इत्यर्थः, अदः—शब्दोपपदात् दृशेः 'त्यदादिषु दृशोऽनालोचने कञ् च' इति कञ्, 'टिड्ढाणञ्'—इत्यादिना ङीप्, 'आ सर्वनाम्नः' इत्यात्वे 'अदसोऽसेर्दादु दो मः' इत्यूत्वमत्वे। राजकं दमयन्त्यवृतराजसमूहं रञ्जयतीति तेषां राजकरञ्जिनां तदिच्छानुकूलवादिनां, लोकानां जनानां, वाक् पूर्वोक्ता निन्दोक्तिः, तस्य नलस्य, कवीनां वन्दिनाञ्च वर्णनैः अहो! निखिलं राजकम् अवधूय त्वया स्त्रीरत्नं लब्धं सर्वोत्तरोऽसीत्यादिस्तवैः, अपाकृता न्यक्कृता तादृशकविवन्दिभिस्तारस्वरेण नलगुणवर्णनात् पूर्वोक्तनिन्दावाक् तिरोहितत्वेन न श्रुतिगोचरीभूतेति भावः ॥ ३ ॥

'सभा (अनेक देशोंसे आये हुए राजाओंसे भरी हुई स्वयंवर सभा) में स्त्री (दमयन्ती) के साथसे इस (नल) को लज्जा नहीं आती (अर्थात् सभामें स्त्रीके सम्बन्धसे नलको लज्जा आना उचित है, परन्तु वैसा नहीं होनेसे यह निर्लज्ज है और) अत्यन्त सुन्दर आदमी कहां सुखी होता है अर्थात् कहीं भी सुखी नहीं होता।' ऐसी दमयन्तीको नहीं पानेवाले राज-समूहको प्रसन्न करनेवाले वन्दियोंकी स्तुतिको उस (नल, अथवा—उन अर्थात् नल-दमयन्ती) के कवियों तथा वन्दियोंके वर्णनों (स्तुति-वचनों) ने दबा दिया (पाठा०—दबा दिया, अथवा—प्रसन्न करनेवाले वन्दियोंकी वाणीको···वर्णनोंने अवाणीकर दिया) अर्थात् नलके वन्दियोंके द्वारा किये गये उच्च स्वरयुक्त वर्णनसे उक्त नलकी निन्दा करनेवाले वन्दियोंके वचन स्पष्ट नहीं सुनायी पड़े, किन्तु ये भी कुछ बोल रहे हैं ऐसी ध्वनिमात्र सुनाई पड़ी। ['अत्यन्त सुन्दर व्यक्ति कहांसे सुख पाता है' अर्थात् अत्यन्त सुन्दर होनेके कारण सीता तथा रामचन्द्रने जिस प्रकार बहुत दुःख भोगे, उसी प्रकार इन्हें (नल तथा दमयन्तीको) भी दुःख भोगने पड़ेंगे' ऐसे भविष्यकी ओर सङ्केत किया है। अथवा—'अत्यन्त सुन्दर व्यक्ति कहांसे सुख पाता है' अर्थात् आपलोग अत्यन्त सुन्दर हैं, यह नल अधिक सुन्दर नहीं हैं, इसी (अत्यन्त सुन्दर होने) के कारण आपलोगोंको अगुणज्ञा दमयन्तीने वरण नहीं किया और आपलोग दुःख पारहे हैं अर्थात् पति-पत्नी दोनोंका सुन्दर होना असम्भवप्राय है, इत्यादि असत्य स्तुतियोंसे दमयन्तीके वरण नहीं करनेसे उदासीन नलेतर राजाओंको प्रसन्न करनेके लिए वन्दी नलकी उक्त प्रकारसे निन्दा कर रहे थे, वह वचन नलप्रशंसक कवियों एवं वन्दीलोगोंके द्वारा उच्चस्वरसे की गयी स्तुतियोंसे सुनायी नहीं पड़ा] ॥ ३ ॥

अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणाः ।
न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥ ४ ॥

अदोषतामिति । द्विषां शत्रुभिः, अधिरोपणेति कृद्योगे कर्त्तरि षष्ठी । मृषादोषक णाधिरोपणाः अलीकदोषलवारोपाः सतां सज्जनानाम्, अदोषतां निर्दोषताम् एव विवृण्वते प्रकाशयन्ति, शूरे कलङ्कारोपणवत् इति भावः । तत्र हेतुमाह, नेति । सत्ये दूषणे दोषे, सति वर्त्तमाने, अलीकम् असत्यम्, अवद्यं दूषणम् । 'अवद्यपण्य-' इत्या दिना निपातः । आधातुम् आरोपयितुं, जातु कदाचिदपि, उद्यमः द्विषाम् उद्योगः, न भवेत्, शशाङ्के कलङ्कारोपणवदिति भावः, तथा च सत्यदोषस्य वर्त्तमानत्वे मिथ्यादो षारोपे शत्रूणामुद्यमादर्शनात् सत्यदोषाभावे सत्येव मिथ्यादोषारोपे उद्यमोऽनुगम्यते इत्थञ्च नले मिथ्यादोषारोपदर्शनात् सत्यदोषाभावः प्रतीयते इति भावः ॥ ४ ॥

शत्रुओंके द्वारा किया गया झूठे थोड़े-से दोषका भी आरोप सज्जनोंके दोषाभाव ( निर्दोष ) को ही प्रकाशित करता है ( जैसे—शूरवीरमें शत्रुके मारनेपर निर्दय होनेका झूठा दोष लगाना ), क्योंकि—वास्तविक दोषके विद्यमान रहनेपर अवास्तविक दोषको प्रकाशित करनेके लिए शत्रुलोग कभी प्रयत्न नहीं करते ( जैसे—चन्द्रमामें वर्तमान कलङ्क दोषको कहना ) । [ किन्तु वास्तविक दोषके नहीं रहनेपर ही अवास्तविक दोषको प्रकाशित ( झूठा आरोपित ) करनेमें शत्रुलोगोंका प्रयत्न देखा जाता है, अतः नलमें उक्त ( १५।२ ) दोष नहीं रहनेपर भी विपक्षियोंके बन्दियों द्वारा किया गया दोषप्रकाशन नल का दोषाभाव ही प्रकट करता है । अथवा—सत्य परब्रह्मस्वरूप भगवान् रामचन्द्रमें 'दूषण' नामक राक्षस द्वारा किया गया अप्रिय उद्योग जिस प्रकार अकिञ्चित्कर हुआ, उसी प्रकार विपक्ष बन्दियों द्वारा किया गया नल ( या नल और दमयन्ती—दोनों ) के विषयमें असत्याक्षेपरूप अप्रिय वचन अकिञ्चित्कर ही हुआ । अथवा—अग्निपरीक्षादिके द्वारा सुपरिक्षित सीताके सम्बन्धको लेकर भगवान् रामचन्द्रके विषयमें किये गये असत्य दोष कथनने जिस प्रकार प्रजारञ्जनादि गुणको प्रकाशित किया उसी प्रकार दमयन्तीके सम्बन्धको लेकर नलके विषयमें किया गया उक्त ( १५।२ ) असत्य दोषारोप नलके गुण-प्रकाशनके लिए ही हुआ ] ॥ ४ ॥

विदर्भराजोऽपि समं तनूजया प्रविश्य हृष्यन्नवरोधमात्मनः ।
शशंस देवीमनु जातसंशयां प्रतीच्छ जामातरमुत्सुके ! नलम् ॥५॥

विदर्भेति । अथ विदर्भराजो भीमोऽपि, हृष्यन् सर्वोत्कृष्टजामातृलाभेनानन्दितः सन्, तनूजया दुहित्रा भैम्या, समम् आत्मनः अवरोधम् अन्तःपुरं, प्रविश्य जात-संशयां, दमयन्ती सर्वगुणाकरं नलं वरिष्यति निर्गुणमन्यं वेति इष्टवरलाभे सन्दि-हानां, देवीं निजमहिषीम्, अनु लक्ष्यीकृत्य, उत्सुके ! हे इष्टवरोद्युक्ते ! 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । नलं जामातरं दुहितुः पतिं, प्रतीच्छ विजानीहीत्यर्थः, इति शशंस कथयामास । सिद्धं नः समीहितमिति भावः ॥ ५ ॥

(अभीष्ट जामाताके लाभसे) प्रसन्न होते हुए विदर्भनरेश (राजा भीम) भी पुत्री (दमयन्ती) के साथ रनिवासमें प्रवेशकर ('मेरी पुत्री दमयन्ती गुणी नलको वरेगी या अन्य किसी गुणहीन राजाको' इस प्रकार) संशय करती हुई पटरानीसे 'हे उत्सुके (जामाताके विषयमें जाननेके लिए उत्कण्ठित प्रिये)! नलको जामाता जानो अर्थात् दमयन्तीने गुणी नलका ही वरण किया दूसरेको नहीं' यह जानो ऐसा कहा ॥ ५ ॥

**तनुत्विषा यस्य तृणं स मन्मथः कुलश्रिया यः पविताऽस्मदन्वयम् ।**
**जगत्त्रयीनायकमेलके वरं सुता परं वेद विवेक्तुमीदृशम् ॥ ६ ॥**

**तन्विति । किञ्च, यस्य नलस्य, तनुत्विषा कायकान्त्या, सः प्रसिद्धः, मन्मथः तृणं तृणतुल्यः, अतिनिकृष्ट इत्यर्थः । यः कुलश्रिया अभिजनसम्पदा, कौलीन्येन इत्यर्थः, अस्मदन्वयं अस्माकं कुलं, पविता पवित्रीकर्त्ता, पुनातेस्तृन्, 'न लोका—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया । किञ्च, जगत्त्रय्यां ये नायकाः तेषां मेले एव मेलके सङ्घे, वरसमूहानां मध्ये इत्यर्थः । मेलात् घञन्तात् स्वार्थे कः । ईदृशम् इदृग्गुणोपेतं, वरं विवेक्तुं निर्वाचयितुं, परं केवलं, सुता त्वत्सुतैव, वेद वेत्ति, 'विदो लटो वा' इति लट्-स्थाने णलादेशः । अहो भाग्यात् सर्वानुकूलत्वमिति भावः ॥ ६ ॥**

जिसकी शरीर शोभासे वह (अतिप्रसिद्ध) कामदेव तृण अर्थात् तृणवत् तुच्छ है तथा जिसकी वंशकी विशुद्धि हमारे वंशको भी पवित्र करेगी; तीनों लोकोंके राजाओंके समूहमें ऐसे श्रेष्ठ वरको छांटना (निर्णय करना) पुत्री (दमयन्ती) जानती है (अथवा—केवल पुत्री ही जानती है)। [तीनों लोकके राजा स्वयंवरमें आये थे, उनमेंसे इतने उत्कृष्टगुणोंसे युक्त नल-जैसे वरको चुनना गुणज्ञा पुत्री दमयन्तीने ही किया है यह कार्य दूसरी किसी कन्यासे नहीं हो सकता था] ॥ ६ ॥

**सृजन्तु पाणिग्रहमङ्गलोचिता मृगीदृशः स्त्रीसमयस्पृशः क्रियाः ।**
**श्रुतिस्मृतीनान्तु वयं विदध्महे विधीनिति स्माह च निर्ययौ च सः ॥ ७ ॥**

**सृजन्त्विति । स भीमः, मृगीदृशः पुरन्ध्र्यः, पाणिग्रहमङ्गलोचिताः विवाहमङ्गलयोग्याः, स्त्रीसमयं स्त्र्याचारं स्पृशन्तीति तत्स्पृशः स्त्रीसमाचारप्राप्ता इत्यर्थः । 'स्पृशोऽनुदके क्विन्' । क्रिया मङ्गलकर्माणि, सृजन्तु विदधतु । वयन्तु श्रुतिस्मृतीनां सम्बन्धिनः तद्विहितान्, विधीन् कर्माणि, विदध्महे कुर्महे, इत्याह स्म च उवाच च, 'लट् स्मे' इति भूते लट् । निर्ययौ च अन्तःपुरात् निर्जगाम च । चकारद्वयं क्रिययोः यौगपद्यसूचनार्थकम्, उक्त्वैव निर्ययौ, न तु क्षणमपि विलम्बमकरोदिति भावः ॥७॥**

'विवाह-मङ्गलके योग्य (सधवा) मृगलोचनी स्त्रियां स्त्रियोंके आचारसम्बन्धिनी क्रियाको करें (अथवा—हे मृगलोचनी स्त्रियां! आपलोग विवाह-मङ्गलके योग्य स्त्रियोंके आचार-सम्बन्धिनी क्रियाओंको करें। अथवा—मृगलोचनी स्त्रियां विवाह……)। और हमलोग वेद तथा धर्मशास्त्रोंमें प्रतिपादित विधियोंको करते हैं' ऐसा कहे और चले भी गये।

[इससे विवाह-सम्बन्धी बाहरी एवं भीतरी कार्योंको शीघ्र पूरा करनेके लिए राजा भीमकी त्वरा सूचित होती है] ॥ ७ ॥

निरीय भूपेन निरीक्षितानना शशंस मौहूर्त्तिकसंसदंशकम्।
गुणैररीणैरुदयास्तनिस्तुषं तदा स दातुं तनयां प्रचक्रमे ॥ ८ ॥

निरीयेति। भूपेन निरीय अन्तःपुरात् निर्गत्य, ईङ् गताविति धातोः समासात् क्त्वो ल्यबादेशः। निरीक्षितानि आननानि यस्याः सा लग्नकथनाय मुखनिरीक्षणे नैव कृतसङ्केता इति भावः। मुहूर्त्तं तत्प्रतिपादकं शास्त्रं विदन्तीति मौहूर्त्तिकाः ज्यौतिषिकाः, 'तदधीते तद्वेद' इति ठक्, तेषां संसत् ज्यौतिषिकपरिषत्, अरीणैः अक्षीणैः, समग्रैरित्यर्थः, री गताविति धातोः कर्त्तरि क्तः, 'ल्वादिभ्यः' इति निष्ठानत्वम्, गुणैः शुभग्रहवीक्षणादिभिः उपलक्षितम्, उदयास्ताभ्यां ग्रहविशेषाणामुदयास्तमयनिबन्धनदोषाभ्यां, निस्तुषं तद्रहितम्, अंशमेव अंशकं वैवाहिकलग्नं, शशंस कथयामास, तदा तस्मिन् लग्ने, स भूपः, तनयां दातुं प्रचक्रमे उद्युक्तवानित्यर्थः ॥ ८ ॥

(अन्तःपुरसे) निकलकर राजा भीमके द्वारा मुख्यनिरीक्षणमात्रसे सङ्केतित ज्योतिषियोंके समुदायने सम्पूर्ण गुणों (जामित्र गुणों) से युक्त तथा शुक्र-बृहस्पति आदि ग्रहोंके उदयास्तादि दोषोंसे वर्जित लग्नको बतलाया, तब उस (राजा भीम) ने पुत्री (दमयन्ती) को देने अर्थात् कन्यादान करनेके लिए (पूर्वकालिक वैदिक तथा स्मार्त विधियोंको) आरम्भ कर दिया ॥ ८ ॥

अथावदद्दूतमुखः स नैषधं कुलञ्च बाला च ममानुकम्प्यताम्।
सपल्लवत्वद्य[2] मनोरथाङ्कुरश्चिरेण नस्त्वच्चरणोदकैरिति ॥ ९ ॥

अथेति। अथ लग्नस्थिरीकरणानन्तरं, दूतः एव मुखं यस्य स तादृशः, स भीमः, मम कुलञ्च बाला भैमी च, अनुकम्प्यताम् अनुगृह्यतां, चिरेण बहुकालीनः, नः अस्माकं, मनोरथाङ्कुरः प्रागङ्कुरितः त्वया सह भैमीविवाहरूपमनोरथः, त्वच्चरणोदकैः तव पादोदकैः, अद्य पल्लवेन सह वर्त्तते इति सपल्लवः सः इव आचरतु सपल्लवतु अपल्लवः पल्लववान् इवास्त्वित्यर्थः। 'सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः' इति सपल्लवशब्दादाचारार्थे क्विप्, ततः क्विबन्तधातोः प्रार्थनायां लोट्। इति नैषधं नलम्, अवदत्, दूतमुखेन नलमिदं निवेदितवानित्यर्थः ॥ ९ ॥

इस (वैवाहिक लग्नके निश्चित होने) के बाद (राजा भीमने) दूतके द्वारा नलके प्रति कहलवाया कि—'मेरे कुल तथा पुत्रीको स्वीकार कीजिये, बहुत दिनोंके बाद हमलोगोंका मनोरथरूप अङ्कुर आज आपके चरणोदकसे पल्लवित-सा होवे।' [भीमने दूतसे नलके पास सन्देश भेजा कि 'आप मेरी पुत्रीको ग्रहणकर मेरे वंशपर अनुग्रह करें, इससे

१. 'मुहूर्तं वेद इत्यर्थे 'क्रतूक्थादि—' इत्युक्थादि त्वाट्ठक्' इति नारायणश्चिन्त्यः, उक्थादौ तदपाठात्। २. 'स पल्लवत्वद्य' इति पाठान्तरम्।

चिरकृत मेरा मनोरथाङ्कुर आपके चरण-प्रक्षालनके जलसे सिञ्चित होकर पल्लवितके समान अर्थात् सफल हो जावे ]॥ ९॥

तथोत्थितं भीमवचःप्रतिध्वनिं निपीय दूतस्य स वक्त्रगह्वरात्।
व्रजामि वन्दे चरणौ गुरोरिति ब्रुवन् प्रदाय प्रजिघाय तं बहु ॥१०॥

तथेति। स नलः, दूतस्य वक्त्रम् आस्यम् एव, गह्वरं गुहा तस्मात्, तथा पूर्वोक्तप्रकारेण, उत्थितम् उदितं, भीमवचसः प्रतिध्वनिम् अनुरूपशब्दं, निपीय दूतमुखात् भीमवचनं श्रुत्वेत्यर्थः, व्रजामि अधुनैव गच्छामि, गुरोः श्वशुरस्य, चरणौ वन्दे। व्रजामि वन्दे इत्यत्र 'वर्त्तमानसामीप्ये-' इति भविष्यदर्थे लट्, स्वयम् अहम् आगच्छामि गुरुपादवन्दनायेत्यर्थः, इति ब्रुवन् तं दूतं, बहु बहुधनं, पारितोषिकमिति यावत्, प्रदाय दत्त्वा, प्रजिघाय प्राहिणोत्। 'हि गतौ' वृद्धौ चेति धातोः लिटि 'हेरचङि' इति हस्य कुत्वम् ॥ १० ॥

उस (नल) ने दूतके मुखरूपी गुफासे उस प्रकार निकली हुई राजा भीमके वचनकी प्रतिध्वनिको अच्छी तरह पानकर अर्थात् दूतसे राजा भीमका सन्देश सुनकर 'चलता हूं' गुरु अर्थात् श्वशुरके चरणद्वयको प्रणाम करता हूँ, ऐसा कहते हुए बहुत (पारितोषिक) देकर उस दूतको लौटाया ॥ १० ॥

निपीतदूतालपितस्ततो नलं विदर्भभर्त्ताऽऽगमयाम्बभूव सः।
निशावसाने श्रुतताम्रचूड़वाक् यथा रथाङ्गस्तपनं धृतादरः ॥ ११ ॥

निपीतेति। ततो दूतप्रत्यावर्त्तनानन्तरं, निपीतदूतालपितः श्रुतदूतावाक्यः, स विदर्भभर्त्ता भीमः, निशावसाने श्रुता ताम्रचूडवाक् प्राभातिकं कुक्कुटकूजितं येन सः तादृशः 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः। रथाङ्गः चक्रवाकः, 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः। रथाङ्गपर्यायाणां चक्रवाकनामत्वाभिधानात् पुंल्लिङ्गता। तपनं यथा सूर्यमिव, इति श्रौती उपमा 'इव-वत्-वा-यथाशब्दानां प्रयोगे श्रौती' इति लक्षणात्, धृतादरः सञ्जाताग्रहः सन्नित्यर्थः, नलम् आगमयाम्बभूव साग्रहः सन् नलागमनं प्रतीक्षितवानित्यर्थः, तादृगुपमासामर्थ्यादिति ॥११॥

इस (दूतके लौटने) के बाद दूतकी बातको अच्छी तरह सुने हुए विदर्भराज भीम आदरपूर्वक (नलकी) उस प्रकार प्रतीक्षा करने लगे, जिस प्रकार प्रातःकालमें मुर्गेकी बोली सुनकर चकवा सूर्य (के उदय) की प्रतीक्षा करता है ॥ ११ ॥

का[1]चित्तदाऽऽलेपनदानपण्डिता कमप्यहङ्कारमगात् पुरस्कृता।
अलम्भि तुङ्गासनसन्निवेशनादपूपनिर्माणविदग्धयाऽऽदरः ॥ १२ ॥

काचिदिति। तदा तत्काले, आलेपनदानपण्डिता तण्डुलपिष्टक्रिया गृहकुट्टिमादौ

---

१. 'क्वचित्' इति पाठान्तरम्।

चित्रीकरणक्रियादक्षा, काचित्, पुरन्ध्रीति शेषः, पुरस्कृता आलेपनकर्मणि प्राधान्येन नियुक्ता सती, कमपि अवाच्यम्, अहङ्कारं गर्वम्, अगात्। अपूपानां पिष्टकाख्यभक्ष्यभेदानां निर्माणे विदग्धया दक्षया, कयाचित् पुरन्ध्र्या इति शेषः। तुङ्गासने उच्चासने, सन्निवेशनात् उपवेशनात्, पिष्टकभर्जनार्थमिति भावः। आदरः आत्मनि अभिमानः, अलम्भि प्रापि 'लभेश्च' इति नुमागमः ॥ १२ ॥

उस समय चौक पुरने ( हल्दीसे मिश्रित चावलके चून अर्थात् चौरठसे आंगनमें बनाये जानेवाले चित्र-विशेषके निर्माण करने ) में चतुर ( अतएव उस कार्यको करनेके लिए ) नियुक्त की गयी किसी स्त्रीने किसी अनिर्वचनीय अहङ्कारको प्राप्त किया तथा पूआ पकानेमें चतुर किसी स्त्रीने ऊंचे आसन ( छोटी चौकी या मचिया आदि ) पर बैठनेसे ( अपनेमें ) गौरवको प्राप्त किया। ( अथवा—उवटन लगानेमें चतुर कोई स्त्री दमयन्तीको उवटन लगानेमें पुरस्कृतकी ( प्रधान बनायी ) गयी अनिर्वचनीय अहङ्कारको प्राप्त किया...... )। [ कोई स्त्री चौक पुरनेमें लग गयी और कोई मचियापर बैठकर पूआ पकाने लगी ] ॥१२॥

मुखानि मुक्तामणितोरणात्तदा[1] मरीचिभिः पान्थविलासमाश्रितैः ।
पुरस्य तस्याखिलवेश्मनामपि प्रमोदहासच्छुरितानि रेजिरे ॥ १३ ॥

मुखानीति। तदा तत्काले, आसन्नपरिणयमहोत्सवे इत्यर्थः। तस्य पुरस्य सम्बन्धिनाम् अखिलवेश्मनाम् अपि सर्वेषामेव गृहाणां, मुखानि द्वाराणि वक्त्राणि च, इति श्लेषः। मुक्तामणीनां तोरणात् तन्मयबहिर्द्वारात्। अपादानात्। 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः। पान्थविलासं नित्यपथिकविभ्रमम्, आश्रितैः अधिगतैः, निरन्तरनिःसृतैरित्यर्थः। पान्थविलासस्य मरीचिषु असम्भवात् तद्विलास इव विलास इति निदर्शना। मरीचिभिः किरणैः। 'द्वयोर्मरीचिः किरणो भानुरुस्रः करः पदम्' इति शब्दार्णवः। प्रमोदहासच्छुरितानि अट्टहास्यरञ्जितानीव, रेजिरे शुशुभे। सुखत्वात् शुभ्रत्वाच्च इयमुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ १३ ॥

उस समय ( विवाह-समयके समीप आ जानेपर ) उस नगरके तथा उस नगरके भवनोंके भी मुख अर्थात् मुखस्थानीय द्वार मोतियों तथा मणियोंके तोरणोंसे ( निकलकर ) पथिकविलासको प्राप्त किये हुए ( बहुत दूरतक फैलनेवाले किरणोंसे ( उक्त विवाहोत्सवजन्य ) अतिशय हर्षयुक्त हाससे युक्त ) के समान शोभने लगे। [ नगर तथा महलोंके द्वारोंपर लगाये गये मोतियों तथा मणियोंके तोरणोंकी दूरतक फैलनेवाली कान्ति ऐसी मालूम पड़ती थी कि मानो यह नगर तथा इस नगरके भवन भी अतिशय हर्षसे हंस रहे हों॥ सर्वत्र मोतियों और मणियोंके तोरणोंसे नगर तथा भवनोंको सुसज्जित किया गया] ॥

पथामनीयन्त तथाऽधिवासनान्मधुव्रतानामपि दत्तविभ्रमाः ।
वितानतामातपनिर्भयास्तदा पटच्छिदाऽकालिकपुष्पजाः स्रजः ॥१४॥

---

१. 'तोरणोद्गतैः' इति पाठान्तरम्।

पथामिति । तथा तेन प्रकारेण, यथा केनापि कृत्रिमत्वेन नावबुध्यते तादृशरूपेणेत्यर्थः, अधिवासनात् कृत्रिमपुष्पनिर्मितमालासु चम्पकादिसुगन्धिपुष्पैः संस्कारसाधनात्, 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इत्यमरः, मधुव्रतानां मधुलिहाम् अपि, किमुतान्येषामिति भावः, दत्तविभ्रमाः कृताकृत्रिमपुष्पनिर्मितस्रक्भ्रान्तयः, इति भ्रान्तिमदलङ्कारः, आतपनिर्भयाः आतपेऽपि अम्लानाः इत्यर्थः, पटच्छिदा पटकर्त्तनेन, चेलखण्डेनेत्यर्थः, कृतानि यानि अकालिकानि अकालोद्भवानि पुष्पाणि तेभ्यः जाताः तज्जाः, स्रजः मालिकाः, तदा आसन्नविवाहमहोत्सवकाले, पथां नगरमार्गाणां, वितानताम् उल्लोचतां, चन्द्रातपत्वमित्यर्थः 'अस्त्री वितानमुल्लोचः' इत्यमरः, अनीयन्त नीताः, नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि लङ्, 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति वचनात् । रचनापाटवेन सर्वत्र पुष्पवितानभ्रान्तिता बद्ध्वा इत्यर्थः ॥ १४ ॥

उस प्रकार ( विशेष विचार करनेपर भी अकृत्रिम ही मालूम पड़ने योग्य ) सुवासित करनेसे नित्य मधुपान करनेवाले भौरोंको भी भ्रान्त ( 'ये कपड़ेके बने सुवासित किये गये बनावटी फूल नहीं हैं, किन्तु वास्तविक फूल ही हैं, ऐसा सन्देह ) करनेवाली, धूपमें भी निर्भय अर्थात् नहीं मुर्झानेवाली, कपड़ोंको काटकर बनायी गयी, असामयिक फूलोंकी मालाएं मार्गोंमें चँदोवा बन गयीं, [ कपड़ोंको काटकर फूल बनाये गये और उनको उन्हीं-उन्हीं फूलों की सुगन्धिसे ऐसा सुवासित किया गया कि सुगन्धिके सच्चे पारखी भौंरे भी उन्हें वास्तविक फूल समझकर गन्धपान करते थे, उन कृत्रिम फूलोंकी सघन मालाओंसे मार्गोंको ऐसा सजाया गया कि वे मालाएं मार्गोंको चँदोवा-सी बन गयीं ] ॥ १४ ॥

विभूषणैः कञ्चुकिता बभुः प्रजा विचित्रचित्रैः स्नपितत्विषो गृहाः ।
बभूव तस्मिन्मणिकुट्टिमैः पुरे वपुः स्वमुर्व्याः[1] परिवर्त्तितोपमम् ॥ १५ ॥

विभूषणैरिति । तस्मिन् पुरे प्रजाः जनाः, 'प्रजाः स्यात् सन्ततौ जने' इत्यमरः, विभूषणैः अलङ्कारैः, कञ्चुकिताः सञ्जातकञ्चुकाः, सर्वाङ्गीणाभरणाः सत्यः इति भावः, तथा गृहाः विचित्रचित्रैः विविधालेख्यैः, स्नपितत्विषः विशुद्धकान्तयः, शोभनदर्शनाः सन्त इत्यर्थः, 'ग्लास्नावनुवमाञ्च' इति स्नातेरनुपसर्गस्य मित्त्वविकल्पात् ह्रस्वत्वम्, बभुः विरेजुः । उर्व्याः तत्रत्यभूमेः, स्वं वपुः निजस्वरूपं, मणीनां कुट्टिमैः मणिबद्धप्रदेशैः, कुट्टेन बन्धेन निर्वृत्तं कुट्टिमं 'भावप्रत्ययान्तादिमप् वक्तव्यः' । 'कुट्टिमोऽस्त्री निबद्धा भूः' इति स्वामी, परिवर्त्तितोपमम् अन्यादृशोपमानं, बभूव, पूर्वं नगरस्य यादृशी उपमा आसीत् इदानीमलङ्कृतत्वात् तादृशी उपमा नासीत् इति भावः ॥

उस नगरमें प्रजा ( नागरिक जन ) विशिष्ट भूषणोंसे सुसज्जित सम्पूर्ण शरीरवाली होकर शोभने लगी, ( निर्जीव होनेपर भी सजीव मालूम पड़नेवाले अनेक रंगोंसे बनाये

---

१. 'स्वरुर्व्याः' इति पाठान्तरम् ।

गये ) आश्चर्यकारक चित्रोंसे स्वच्छतम कान्तिवाले भवन शोभने लगे, ( इस प्रकार जङ्गम नागरिक लोगों तथा स्थावर भवनों और ) मणियोंकी बनी हुई भूमिसे ( अथवा—इस प्रकार मणिजटित भूमिसे उपलक्षित ) उस नगरमें पृथ्वीका अपना ( सहज = प्राकृतिक ) शरीर परिवर्तित-सा ( बदले हुएके समान ) हो गया । ( अथवा—उलटे हुएके समान (ब्रह्माने पृथ्वीके सहज शरीरको उलट दिया है); अतएव मणिमयी भूमि आदिसे शोभमान नीचेका पाताल लोक ऊपर आ गया है और ऊपरका साधारण शोभावाला भाग नीचे चला गया है ऐसा ) मालूम पड़ता था । अथवा—परिवर्तित ( बदली गयी ) है उपमा जिसकी ऐसा पृथ्वीका स्वरूप हो गया है अर्थात् पहले स्वर्ग उपमा और पृथ्वी उपमेय थी; किन्तु अब पृथ्वी उपमा तथा स्वर्ग उपमेय हो गया है यानी स्वर्गसे पृथ्वी ही श्रेष्ठ शोभावाली हो गयी है ऐसा मालूम पड़ता था । ( पाठा०—स्वर्गसे परिवर्तित ( बदली गयी ) उपमावालेके समान पृथ्वीका स्वरूप हो गया ) ॥ १५ ॥

तदा निसस्वानतमां घनं घनं ननाद तस्मिन्नितरां ततं ततम् ।
अवापुरुच्चैः सुषिराणि राणितामभानमानद्धमियत्तयाऽध्वनीत् ॥१६॥

तदेति । तदा आसन्नविवाहमहोत्सवकाले, तस्मिन् पुरे, घनं कांस्यतालादिवाद्यं, घनं निरन्तरं यथा स्यात् तथा, निसस्वानतमाम् अतिशयेन दध्वान 'किमेत्तिङव्ययघादामु—' इत्यादिना आमु-प्रत्ययः । ततं वीणादिकं वाद्यं, नितराम् अतिशयिकम्, पूर्ववदामु-प्रत्ययः, ततं विस्तृतं यथा तथा, ननाद । सुषिराणि वंशादिवाद्यानि, उच्चैः उच्चैस्तरां, राणितां राणनं, ध्वननमित्यर्थः 'रणतेर्ण्यन्ताद्भावे क्तः' अवापुः । आनद्धं मुरजादिवाद्यम्, इयत्तया केनचित् मानेन, अमानं मानरहितं यथा तथा, अध्वनीत् दध्वान, ध्वनतेर्लुङ् । 'अतो हलादेर्लघोः' इति विकल्पात् वृद्धिप्रतिषेधः । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥' इत्यमरः ॥ १६ ॥

उस समय उस नगरमें कांसेके बने ( झाल, मँजीरा, घण्टी आदि ) बाजे अत्यधिक बजने लगे; तारोंवाले ( वीणा, सारंगी, बेला, सितार आदि ) बाजे बहुत झंकार करने ( बजने ) लगे; छिद्रवाले ( बांसुरी आदि ) बाजे उच्च स्वरसे ध्वनि करने लगे और चमड़ेसे मढ़े हुए ( नगाड़े, पखावज, ढोलक आदि ) बाजे प्रमाणरहित अर्थात् अत्यधिक बजने लगे । [ नलके आनेके समय उस कुण्डिनपुरमें 'घन, तत, सुषिर तथा आनद्ध'—ये चारों प्रकारके बाजे अत्यधिक बजने लगे ] ॥ १६ ॥

विपञ्चिराच्छादि न वेणुभिर्न ते प्रणीतगीतैर्न च तेऽपि झर्झरैः ।
न ते हुडुक्केन न सोऽपि ढक्कया न मर्दलैः साऽपि न तेऽपि ढक्कया ॥

विपञ्चिरिति । विपञ्चिः वीणा 'विपञ्चिर्वल्लकी वीणा' इति वैजयन्ती । 'कृदिकारात्—' इति विकल्पादीकाराभावः । वेणुभिः वेणुवाद्यैः, न आच्छादि न छादिता, न

तिरोहितेत्यर्थः, छादयतेः कर्मणि लुङ्, ते वेणवः, प्रणीतगीतः प्रयुक्तगानैः, गायकैरित्यर्थः। गीतनिःस्वनैरिति यावत्, न, आच्छादिषत इति विभक्तिविपरिणामेनान्वयः, एवमुत्तरत्रापि योज्यम्। तेऽपि च गायकध्वनयश्च, झर्झरैः वाद्यविशेषैः, तद्ध्वनिभिरित्यर्थः। न, आच्छादिषत, ते झर्झरध्वनयः, हुडुक्केन वाद्यविशेषेण, न, आच्छादिषत, सोऽपि हुडुक्कोऽपि, ढक्कया वाद्यविशेषेण, न, आच्छादि, साऽपि ढक्काऽपि, मर्दलैः मृदङ्गध्वनिभिः, न, आच्छादि, तेऽपि मर्दलानां ध्वनयोऽपि, ढक्कया न, आच्छादिषत, वादकजनानां तथा वादननैपुण्यं, यथा विपञ्च्यादिध्वनयः प्रत्येकमसंश्लिष्टं श्रुता इति भावः॥ १७॥

वीणा (की ध्वनि) वंशी (की ध्वनि) से नहीं दबी, (इसी प्रकार) वंशी (गायकोंके) गानोंसे, गायकोंके गाने झांझोंसे, झांझ हुडुकसे, हुडुक नगाड़ेसे, नगाड़ा मृदङ्ग (या मशक बाजे) से और वे (मृदङ्ग या मशक बाजे) नगाड़ेसे नहीं दबे। [उक्त सबोंकी ध्वनि बजानेवालोंकी निपुणताके कारण एक दूसरेसे नहीं दबती थी, अपि तु पृथक्-पृथक् स्पष्ट सुनायी पड़ती थी]॥ १७॥

विचित्रवादित्रनिनादमूर्च्छितः सुदूरचारी जनतामुखारवः।
ममौ न कर्णेषु दिगन्तदन्तिनां पयोधिपूरप्रतिनादमेदुरः॥ १८॥

विचित्रेति। विचित्राणि नानाविधानि, वादित्राणि ततादिवाद्यानि 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः, तेषां निनादैः ध्वनिभिः, मूर्च्छितः प्रवृद्धः सुदूरचारी अतिदूरव्यापी, जनतानां जनसमूहानां, मुखेषु आरवः शब्दः, लोकालापकोलाहलः इत्यर्थः। पयोधीनां पूरेषु लहरीषु, प्रतिनादेन प्रतिध्वनिना, मेदुरः मेदस्वी, प्रवृद्धः सन् इत्यर्थः। 'भञ्जभासमिदो घुरच्' इति मिदधातोर्घुरच्प्रत्ययः। दिगन्तदन्तिनां दिग्गजानां, कर्णेषु न ममौ न माति स्मेति अतिशयोक्तिः। वधूमङ्गलस्नानार्थं महान्तं मङ्गलतूर्यघोषणमकार्षुरित्यर्थः। उच्चैर्वादितविविधवाद्यनिनादेन सह मिश्रितः तत्रत्यजनानां महान् कलकलः कर्णवधिरकारी अभूदिति भावः॥१८॥

अनेक प्रकारके बाजओंकी ध्वनिसे बढ़ा तथा बहुत दूर तक गया हुआ जन-समूहके मुखका शब्द अर्थात् कोलाहल समुद्रतरङ्गोंमें प्रतिध्वनित होकर बढ़ता हुआ दिग्गजोंके कानोंमें नहीं आ सका अर्थात् अत्यधिक होनेसे उन दिग्गजोंके कानोंसे बाहर निकल आया। [जन-समूहका कोलाहल दिगन्ततक फैल गया]॥ १८॥

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे।
यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्॥ १९॥

उदस्येति। अथ मङ्गलतूर्यघोषणानन्तरं, पुरन्ध्रिवर्गः पुरवासिनीसङ्घः, शातकुम्भजाः सौवर्णीः, कुम्भीः पूर्णकलशीः, उदस्य उन्नमय्य, अथ तदनन्तरं, मङ्गल

1. 'यथाविधानं नरनाथनन्दिनीम्' इति पाठान्तरम्।

यथा तथा मङ्गलगीतपूर्वं यथा तथा वा इत्यर्थः । 'मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । चतुष्केण चतुःस्तम्भमण्डपेन, चारुश्विपि अतिशयशोभे वेदिकोदरे वेदिमध्ये, यथाकुलाचारम् कुलाचारम् अनतिक्रम्य इत्यर्थः, ताम् अवनीन्द्रजां भैमीं, स्नपयाम्बभूव स्नानं कारयामास । 'ग्लास्नावनु—' इत्यादिना स्नातेर्मित्वविकल्पात् ह्रस्वत्वम् ॥ १९ ॥

इस ( अनेकविध बाजाओंके बजने लगने ) के बाद स्त्री-समूहने चौक ( या—चार खम्भोंके मण्डप ) से सुन्दर कान्तिवाले वेदीके बीचमें, सुवर्णके कलशियोंको उठाकर (उनसे) राजकुमारी उस दमयन्तीको कुलाचारके अनुसार स्नान कराया ॥ १९ ॥

विजित्य दास्यादिव वारिहारितामवापितास्तत्कुचयोर्द्वयेन ताः ।
शिखामवाक्षुः सहकारशाखिनस्त्रपाभरम्लानिमिवानतैर्मुखैः ॥ २० ॥

विजित्येति । तत्कुचयोः द्वयेन भैमीस्तनद्वयेन, विजित्य दास्यात् दासीकरणादिव, वारिहारितां जलवाहिनीत्वम् , अवापिताः प्रापिताः, आपेर्ण्यन्तादणिकर्त्तुः कर्मणि क्तः, 'ण्यन्ते कर्त्तुश्च कर्मणः' इति वचनात् । ताः कुम्भाः, आनतैः अवनतैः, मुखैः द्वारैः, द्वाराधोदेशे इत्यर्थः । आननैश्च, सहकारशाखिनः शिखां चूतपल्लवं, त्रपाभरेण या म्लानिः म्लानता तामिव, चूतपल्लवरूपम्लानतामेव, दास्यजनितलज्जयेति भावः । अवाक्षुः अधार्षुः, वहेर्लुङि सिचि 'वदव्रज—' इत्यादिना वृद्धिः, 'हो ढः' इति ढः, 'षढोः कः सि' इति कत्वे 'इण्कोः' इति षत्वं, 'सिजभ्यस्त—' इत्यादिना झेर्जुसि अडागमः । प्रतिगृहद्वारप्रान्ते सहकारशाखाच्छादितमुखपूर्णकुम्भ्यः संस्थापिता अभूवन् इति भावः । लोके दासीकृताः स्त्रियो नतानना म्लानमुखकान्तयः जलाहरणादिकर्म कुर्वन्तीति दृश्यते । अत्र दास्यादिवेति हेतूत्प्रेक्षा, म्लानिमिवेति गुणस्वरूपोत्प्रेक्षा, तयोरङ्गाङ्गिभावेन सजातीयसङ्करः ॥ २० ॥

उस ( दमयन्ती ) के दोनों स्तनोंसे पराजित होकर [ मानो दासीत्वको प्राप्त होनेके कारण पानी भरनेवाली ( दासी ) बनी हुई वे सुवर्ण-कलशियां नम्र ( नीचे झुके हुए ) मुखोंसे आम्रवृक्षके पल्लवको लज्जाके भारसे ग्लानिके समान धारण करती थीं । [ जिस प्रकार किसीसे हारी हुई कोई स्त्री उसकी दासी बनकर लज्जासे नम्रमुखी हो मलिनताको धारण करती हुई जल भरती है, उसी प्रकार दमयन्तीके विशाल एवं गौरवर्ण स्तनद्वयसे पराजित सुवर्ण-कलशियां मानों उसकी दासी बनकर नीचे मुख किये पानी भरती तथा आम्रपल्लवरूप मलिनताको मुखपर धारण करती हैं॥ मङ्गलाचारके लिए सुवर्ण-कलशियोंमें पानी भरकर उनके मुखपर श्यामवर्णके आम्रपल्लव रखे गये हैं ] ॥ २० ॥

असौ मुहुर्जातजलाभिषेचना क्रमाद्दुकूलेन सितांशुनोज्ज्वला ।
द्वयस्य वर्षाशरदां सदातनीं सनाभितां साधु बबन्ध सन्धया ॥ २१ ॥

१. 'तदातनीम्' इति पाठान्तरम् ।

असाविति । असौ भैमी, मुहुः जातं जलाभिषेचनं यस्याः सा तादृशी जलाभिषिक्ता सती, तथा सितांशुना शुभ्रसूत्रघटितेन, दुकूलेन पट्टवस्त्रेण, सितः शुभ्रः अंशुः किरणो यस्य तेन चन्द्रेण च, उज्ज्वला शोभिता सती, क्रमात् वर्षाशरदोः द्वयस्य सन्धया सन्धिस्थलेन, वर्षर्त्तुशेष-शरदृतुप्रारम्भरूपर्तुद्वयमध्यवर्त्तिकालेनेत्यर्थः। सदातनीं सनातनीं, सनाभितां तुल्यत्वं, साधु यथा तथा ववन्ध दधार । वर्षर्त्तुरपि जलाभिषिक्तः, शरच्च शीतांशूज्ज्वलो भवतीत्युपमा ॥ २१ ॥

फिर स्नान की हुई यह ( दमयन्ती ) स्वच्छ सूत्रोंवाले रेशमी वस्त्र ( पक्षा०—स्वच्छ किरणोंवाले चन्द्रमा ) से उज्ज्वल अर्थात् शोभित होकर वर्षा ( के अन्तिमकाल ) तथा शरद् ( के प्रारम्भ काल )—दोनोंके तात्कालिक सन्ध्याकी समानताको प्राप्त किया। [ पहले स्नानकर बादमें स्वच्छ सूत्रवाले रेशमी कपड़ेको पहनकर दमयन्ती उस प्रकार उज्ज्वल वेषवाली शोभित हुई, जिस प्रकार पहले वर्षाऋतुसे स्नानकर शरद् ऋतुके प्रारम्भमें स्वच्छ किरणोंवाले चन्द्रमासे उस समय ( वर्षाके अन्त तथा शरद्के प्रारम्भ ) की सन्ध्या ( दोनों ऋतुओंका सन्धिकाल ) उज्ज्वल होती ( शोभती ) है ] ॥ २१ ॥

असौ [1]प्रभिन्नाम्बुददुर्दिनीकृतां निनिन्द चन्द्रद्युतिसुन्दरीं दिवम् ।
शिरोरुहौघेण घनेन संयुता तथा दुकूलेन सितांशुनोज्ज्वला ॥२२॥

असाविति । घनेन सान्द्रेण, शिरोरुहौघेण केशपाशेन, घनेन मेघेन च, संयुता विशिष्टा, इति वर्षासाम्योक्तिः, तथा सितांशुना शुभ्रसूत्रघटितेन दुकूलेन पट्टवस्त्रेण, उज्ज्वला शोभिता, शीतांशुना चन्द्रेण च, उज्ज्वला, इति शरत्साम्योक्तिः, असौ भैमी, प्रभिन्नैः वर्षुकैः, अम्बुदैः गाढकृष्णवर्णमेघैः, दुर्दिनीकृताम् अभिवृष्टामित्यर्थः। तथा चन्द्रद्युत्या चन्द्रकान्त्या, सुन्दरीं दिवं नभःस्थलीं, निनिन्द तदुपमा अभूदित्यर्थः । कदर्थयति निन्दतीति सादृश्यवाचकेषु दण्डी इति उपमालङ्कारः ॥ २२ ॥

सघन केश-समूह ( पक्षा०--मेघ ) से युक्त ( पाठा०--कहीं पर वरसते हुए केश-समूहरूप मेघोंसे युक्त ) तथा स्वच्छ सूत्रवाले रेशमी वस्त्र ( पक्षा०--चन्द्रमा ) से उज्ज्वल इस दमयन्तीने ( पाठा०--पहले ) वरसे हुए मेघसे जलप्लावित ( तथा बादमें ) चन्द्रकान्तिसे सुन्दर नभस्थलीको निन्दित कर दिया अर्थात् उसके समान शोभित हुई। [ यहां पर मेघके स्थानपर कृष्ण वर्ण केश-समूह, चन्द्रिकाके स्थानपर स्वच्छ रेशमी वस्त्र, जल बरसनेके स्थानपर स्नान की समानता की गयी है ] ॥ २२ ॥

विरेजिरे तच्चिकुरोत्कराः किराः क्षणं गलन्निर्मलवारिविप्रुषाम् ।
तमःसुहृच्चामरनिर्जयार्जिताः सिता वमन्तः खलु कीर्त्तिमौक्तिकाः॥२३॥

विरेजिरे इति । क्षणं क्षणमात्रं, गलन्त्यः स्रवन्त्यः, निर्मलाः स्वच्छाश्च, याः वारिविप्रुषः तोयबिन्दवः तासां, कृद्योगात् कर्मणि षष्ठी । किरन्तीति किराः विक्षेपकाः,

१. 'पुरा' इति पाठान्तरम् । २. 'वर्षता क्वचित्' इति पाठान्तरम् ।

स्वच्छजलविन्दुस्त्राविण इत्यर्थः। 'इगुपधज्ञाप्रीकिरः कः' इति कः। तस्याः भैम्याः, चिकुरोत्कराः केशनिकराः, तमःसुहृदः तमोनिभस्य, चामरस्य वालव्यजनस्य, कृष्णवर्णचामरस्येत्यर्थः। निर्जयेन पराजयेन, अर्जिताः, सम्पादिताः, सिताः शुभ्राः, शुक्ताः एव मौक्तिकाः, 'अभाषितपुंस्काच्च—' इति कात् पूर्वस्य विकल्पादिकारः। कीर्त्तय एव मौक्तिकाः मुक्ताफलानि, वमन्तः उद्गिरन्त इव, इत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या, अथवा खलुशब्द एव इवार्थे प्रयुक्तः, तेन वाच्योत्प्रेक्षैव, विरेजिरे खलु। 'फणाञ्च सप्तानाम्' इत्येत्वाभ्यासलोपौ ॥ २३ ॥

थोड़े समय तक गिरते हुए पानीके बूंदोंको टपकानेवाले उस दमयन्तीके केश-समूह ऐसे मालूम पड़ते थे कि अत्यन्त काले चामरोंको पराजित करनेसे प्राप्त श्वेत कीर्तिरूपी मोतियोंको वमन कर ( गिरा ) रहे हों। [ कृष्ण वर्णवाले चामरसे भी सुन्दर दमयन्तीका केश-समूह था ] ॥ २३ ॥

म्रदीयसा स्नानजलस्य वाससा प्रमार्जनेनाधिकमुज्ज्वलीकृता।
अदभ्रमभ्राजत साऽश्मशाणनात् प्रकाशरोचिः प्रतिमेव हेमजा॥२४॥

म्रदीयसेति। म्रदीयसा मृदुतरेण, वाससा गात्रमार्जनवस्त्रेण, स्नानजलस्य स्नानहेतोः अङ्गसङ्गिनः जलस्य, प्रमार्जनेन अपाकरणेन, अधिकम् उज्ज्वलीकृता विमलीकृता, सा भैमी, अश्मशाणनात् अश्मना उत्तेजनोपलेन, शाणनात् उद्घर्षणात्, प्रकाशम् उज्ज्वलं, रोचिः दीप्तिः यस्याः सा तादृशी, हेमजा हैमी, प्रतिमा इव अदभ्रं बहुलम्, अभ्राजत अराजत ॥ २४ ॥

अतिशय मुलायम कपड़े ( तौलिया ) से स्नानके पानीको पोंछनेसे अधिक स्वच्छ की गयी दमयन्ती पत्थरपर शान देनेसे प्रकाशित ( चमकती ) कान्तिवाली सोनेकी प्रतिमा ( मूर्ति ) के समान अधिक शोभने लगी ॥ २४ ॥

तदा तदङ्गस्य बिभर्त्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः।
दरस्फुटत्काञ्चनकेतकीदलात् सुवर्णमभ्यस्यति सौरभं यदि ॥ २५ ॥

तदेति। सुवर्णं कर्तृ, दरस्फुटतः ईषद्विकसतः। 'ईषदर्थे दराव्ययम्' इति शाश्वतः। काञ्चनकेतकीदलात् काञ्चनवर्णकेतकीपत्रात्। 'आख्यातोपयोगे' इत्यपादानत्वात् पञ्चमी। सौरभम् आमोदम्, अभ्यस्यति यदि अधीते चेत्, गृह्णाति चेदित्यर्थः। तदा तर्हि, विलेपनेन अङ्गरागेण, यः आमोदः मनोज्ञगन्धः, तं मुञ्चति किरतीति तन्मुचः, स्फुरद्रुचः उज्ज्वलकान्तेः, तदङ्गस्य चन्दनादिसुगन्धिद्रव्यचर्चितदमयन्तीकलेवरस्य, विभ्रममिव विभ्रमं शोभाम्। 'विभ्रमः संशये भ्रान्तौ शोभायाम्' इति वैजयन्ती। बिभर्त्ति। तथा च तदङ्गस्य सौरभगुणेन तद्रहितात् सुवर्णादाधिक्यकथनाद्व्यतिरेकस्तावदेकः, यदिशब्देन सुवर्णस्य सौरभासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदः, विभ्रममिव विभ्रममिति सादृश्याक्षेपादसम्भवद्वस्तु-

सम्बन्धरूपो निदर्शनाभेदः, तदङ्गोपमानसुवर्णस्योपमेयत्वकल्पनात् प्रतीपालङ्कारः, तेन चाङ्गिनाङ्गत्वेन तेषां सङ्कर इति विवेकः ॥ २५ ॥

यदि सुवर्ण ईषद्विकसित सुवर्णकेतकी-दलकी सुगन्धिका अभ्यास ( शिक्षा-ग्रहण ) करे तब वह ( चन्दनादिके ) लेपकी सुगन्धको फैलाते हुए कान्तिमान् दमयन्तीके शरीरके विलास ( पक्षा०--विशिष्ट भ्रम ) को पा सकता है। [ दमयन्तीके गौरवर्ण शरीरसे स्नानके बाद चन्दनादिका लेप लगानेपर ऐसा सुगन्ध निकलने लगा जैसा कि सुवर्णमयी थोड़ी विकसित केतकीके फूलमें सुगन्ध निकलता हो, परन्तु सुवर्णमय केतकीके फूलमें सुगन्ध नहीं होनेसे दमयन्तीका स्नानोत्तर अनुलिप्त शरीर अनुपम था ]॥ २५ ॥

**अवापितायाः शुचि वेदिकान्तरं कलासु तस्याः सकलासु पण्डिताः ।**
**क्षणेन सख्यश्चिरशिक्षणस्फुटं प्रतिप्रतीकं प्रतिकर्म निर्ममुः ॥ २६ ॥**

अवापिताया इति । सकलासु कलासु शिल्पविद्यासु, 'कला शिल्पे कालभेदेऽपि' इत्यमरः, पण्डिताः कुशलाः, सख्यः शुचि शुद्धं, वेदिकाऽन्तरं स्नानवेदेः अन्यां वेदिम्, अवापितायाः नीतायाः, तस्याः दमयन्त्याः, प्रतिप्रतीकं प्रत्यवयवम् , 'अङ्गं प्रतीकोऽवयवः' इत्यमरः, प्रतिकर्म प्रसाधनं, 'प्रतिकर्म प्रसाधनम्' इत्यमरः । चिरशिक्षणेन चिराभ्यासेन, क्षणेन क्षणकालेनैव, स्फुटं, सुस्पष्टं, निर्ममुः चक्रुरित्यर्थः ॥ २६ ॥

सम्पूर्ण कलाओंमें निपुण सखियोंने दमयन्तीको दूसरी स्वच्छ (या--गोवर आदिसे लिपने तथा सर्वतोभद्र चिह्नादिसे शुद्ध अर्थात् माङ्गलिक ) वेदीपर ले जाकर दमयन्तीके प्रत्येक अङ्गोंको चिरकालसे प्राप्त शिक्षाके कारण झटपट अलंकृत कर दिया ॥ २६ ॥

**विनाऽपि भूषामवधिः श्रियामियं व्यभूषि विज्ञाभिरदर्शि चाधिका ।**
**न भूषयैषाऽतिचकास्ति किन्तु साऽनयेति कस्यास्तु विचारचातुरी ? ॥**

विनेति । भूषां विनाऽपि अलङ्कारमन्तरेणाऽपि, श्रियां शोभानाम् , अवधिः सीमाभूता, इयं भैमी, विज्ञाभिः अलङ्करणे निपुणाभिः 'प्रवीणे निपुणाभिज्ञ-विज्ञनिष्णातशिक्षिताः' इत्यमरः, व्यभूषि विभूषिता, तथा अधिका पूर्वावस्थातोऽप्युत्कृष्टा, अदर्शि दृष्टा च, तादृशी अमानीत्यर्थः । वस्तुतस्तु एषा भैमी, भूषया नातिचकास्ति नात्यर्थं शोभते, किन्तु सा भूषव, अनया भैम्या, अतिचकास्तीति विचारचातुरी विमर्शनकौशल, भूषैव भैम्या अतिचकास्तीति निश्चयनैपुण्यमित्यर्थः, कस्यास्तु ? न कस्यापीत्यर्थः। अनयैव भूषणं भूषितं, न तु भूषणेनेयम् इति निश्चेतुं सामर्थ्याभावादेव भूषणानामधिकशोभाकारित्वमिति सर्वासां भ्रान्तिरिति भावः ॥ २७ ॥

बिना भूषणोंके भी शोभाओंकी परमसीमा अर्थात् सर्वाधिक शोभनेवाली दमयन्तीको ( अलंकृत करनेमें सुनिपुण ) सखियोंने विशेषरूपसे अलंकृत किया तथा अधिक ( अनलंकृतावस्थासे अधिक ) शोभावाली देखा । परन्तु 'वह दमयन्ती भूषणके द्वारा ही अधिक नहीं

१. 'धिचकास्ति' इति पाठान्तरम् ।

शोभती है अपितु वह भूषण ही इस दमयन्तीके द्वारा अधिक शोभता है' ऐसी विचार (वास्तविकताका ज्ञान) की निपुणता किसको हुई अर्थात् किसीको नहीं। [दमयन्तीकी शोभा भूषणोंके विना ही चरम सीमापर पहुंची थी, फिर भी चतुर सखियोंने उसे विशेषरूपसे अलंकृत किया तथा 'यह अब अधिक शोभती है' ऐसा समझा, किन्तु किसीने इस वास्तविक तत्त्वको नहीं समझा कि 'दमयन्तीके शरीरसंसर्गसे ये भूषण ही शोभित हो रहे हैं, भूषणोंसे दमयन्ती नहीं शोभती'। अथवा--शोभाकी परमावधि दमयन्तीको भूषणोंसे विज्ञ सखियोंने अलंकृतकर वारम्वार देखा, ऐसा वास्तविक विचारचातुर्य किसी सखीमें नहीं हुआ जो यह समझे कि 'दमयन्ती भूषणोंसे नहीं शोभती, अपितु भूषण ही दमयन्तीके शोभते हैं' (अथवा--"""वारम्वार देखा, किन्तु 'ये भूषण व्यर्थ हैं? साधारण हैं? या अधिक शोभाकारक हैं?' यह विचारचातुर्य (निर्णय-क्षमता) किसीको हुआ अर्थात् किसीको नहीं, अपितु सब सखियां विज्ञ होती हुई भी इसके निर्णय करनेमें असमर्थ ही रहीं। अथवा--""""उक्त विचारचातुर्य किसीको ही हुआ, सबको नहीं। अथवा--उक्त विचारचातुर्यक अर्थात् ब्रह्माको (या--मुझे = ग्रन्थकर्ता श्रीहर्ष कविको) ही हुआ, और दूसरे किसीको नहीं] ॥ २७ ॥

**विधाय बन्धूकपयोजपूजनं कृतां विधोर्गन्धफलीबलिश्रियम् ।**
**निनिन्द लब्धाधरलोचनार्चनं मनःशिलाचित्रकमेत्य तन्मुखम् ॥२८॥**

**विधायेति। लब्धम् अधिगतम्, अधराभ्यामोष्ठाभ्यां, लोचनाभ्याञ्च अर्चनं येन तत् तादृशम् अधरलोचनाभ्यां रमणीयमित्यर्थः। तन्मुखं भैमीवदनं कर्तृ मनःशिलया पीतवर्णधातुविशेषेण, चित्रकं तिलकम् 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः, एत्य प्राप्य, विधोः चन्द्रस्य, बन्धूकेन बन्धूजीवकाख्यरक्तवर्णकुसुमेन, पयोजाभ्यां नीलोत्पलाभ्याञ्च, पूजनं विधाय कृत्वा, कृतां गन्धफल्या पीताभचम्पककलिकया 'अथ चाम्पेयश्चम्पको हेमपुष्पकः। एतस्य कलिका गन्धफली स्यात्' इत्यमरः, बलेः पूजनस्य, श्रियं शोभां, निनिन्द, अधराद्यञ्चितं तन्मुखं बन्धूकाद्यञ्चितं चन्द्रबिम्बमिव बभौ इत्यर्थः ॥ २८ ॥**

अधर तथा नेत्रोंसे रमणीय उस (दमयन्ती) का मुख मैनसिलके तिलकको प्राप्तकर अर्थात् मैनसिलके तिलक लगाने पर दुपहरिया तथा कमलके फूलोंसे पूजितकर चम्पाकी कलीसे दी गयी बलिवाले चन्द्रमाकी शोभाको निन्दित किया अर्थात् उक्त चन्द्रसे अधिक शोभित हुआ। [दो दुपहरियाके फूल और दो कमलके फूलोंसे चन्द्रमाकी पूजाकर चम्पाकी कली ऊपर रखनेपर जो शोभा चन्द्रमाकी होगी, उससे अधिक शोभा दोनों ओठ तथा दोनों नेत्रोंसे रमणीय दमयन्ती के मुखकी मैनसिलके तिलक लगाने पर हुई। यहांपर ओष्ठोंका दुपहरियाके फूल, नेत्रोंका कमलके फूल, मुखका चन्द्रमा और मैनसिल-तिलकका चम्पाकी कलीके साथ उपमानोपमेयभाव समझना चाहिये] ॥ २८ ॥

महीमघोनां मदनान्धतातमीतमःपटारम्भणतन्तुसन्ततिः।
अबन्धि तन्मूर्द्धजपाशमञ्जरी कयाऽपिधूपग्रहधूमकोमला ॥ २९ ॥

महीति। महीमघोनां भूदेवेन्द्राणां, या मदनान्धता काममूढता, सैव तमी रजनी 'रजनी यामिनी तमी' इत्यमरः। तस्याः तमः एव पटः वस्त्रं, तस्य आरम्भणे निर्माणविषये, तन्तुसन्ततिः तदर्थं तन्तुपुञ्जवत् स्थिता इत्युत्प्रेक्षा, धूपग्रहस्य धूमग्रहणसाधनीभूतपात्रविशेषस्य, यः धूमः दह्यमानकर्पूरचन्दनादिजन्यसुगन्धिधूमः, तेन कोमला रम्या, तन्मूर्द्धजपाशमञ्जरी दमयन्तीकेशपाशवल्लरी, कयाऽपि सख्या, अबन्धि बद्धा ॥ २९ ॥

राजाओंकी काममूढता-रूपिणी रात्रिके अन्धकाररूप वस्त्रके निर्माण (बुनने) में सूत्र-समूहके समान तथा धूपदानीके धूंएंसे कोमल (कुछ सखनेसे मृदु) उस (दमयन्ती) के केश-समूहरूपिणी मञ्जरीको किसी (केश-रचनामें निपुण सखी) ने बाँधा। [स्नान कर वस्त्रालङ्कार पहननेके बाद केश बांधनेमें चतुर किसी सखीने दमयन्तीके (लम्बे तथा सुगन्धयुक्त होनेसे) मञ्जरीके समान केशोंको धूपसे सुगन्धितकर बांधा, वे केश ऐसे थे कि नलपरायण दमयन्तीको समझते हुए भी राजालोग उन्हें देखकर काम-मोहित हो रहे थे, अत एव वे केश उनकी काममूढतारूपिणी रात्रिके अन्धकाररूपी वस्त्र बनानेके सूत (धागे) के समूहके समान थे। राजालोग काला वस्त्र पहनकर रात्रिमें निकलते हैं, अतः उस काले वस्त्रको बनानेमें वे केशसमूह सूतसमूह अर्थात् निमित्तकारणभूत थे] ॥ २९ ॥

पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंयमम्।
सखीस्मितैस्तर्कितत‍न्निजभ्रमा बबन्ध तन्मूर्द्धजचामरं चिरात् ॥३०॥

पुनः पुनरिति। कचच्छटाधिया भैमीकेशपाशभ्रान्त्या, धूपजधूमस्य पुनः पुनः संयमं बन्धनं, कुर्वती इति भ्रान्तिमदलङ्कारः। काचन काऽपि सखी, सखीनां स्मितैः तर्कितः ऊहितः, सः पूर्वोक्तः, निजभ्रमः यया सा तादृशी सती, चिरात् बहुकालेन, तस्या मूर्द्धजाः चामरमिव तत्, बबन्ध ॥ ३० ॥

केश-समूहके भ्रमसे बार-बार धूपके धूंएँको बांधती हुई किसी सखीने (समीपस्थ सखियोंके) हँसनेसे अपने भ्रमका तर्ककर उस (दमयन्ती) के केशरूप (श्याम) चामरको देरसे बाँधा ॥ ३० ॥

बलस्य कृष्टेव हलेन भाति या कलिन्दकन्या घनभङ्गभङ्गुरा।
तदाऽर्पितैस्तां करुणस्य कुड्मलैर्जहास तस्याः कुटिला कचच्छटा ॥३१॥

बलस्येति। या कलिन्दकन्या कालिन्दी, बलस्य बलभद्रस्य, हलेन लाङ्गूलेन, कृष्टेव अद्यापि आकर्षणविशिष्टेव, घनैः निरन्तरैः, भङ्गैः तरङ्गैः, भङ्गुरा कुटिला, भाति, तस्याः दमयन्त्याः, कुटिला वक्रा, कचच्छटा केशपाशः, तदा प्रसाधनकाले, अर्पितैः शिरसि न्यस्तैः, करुणस्य वृक्षविशेषस्य, 'करुणस्तु रसे वृक्षे' इति विश्वः। कुड्मलैः

मुकुलैः, तां कालिन्दीं, जहास उपहसितवतीवेत्यर्थः । व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । यमुना बलरामस्य हलाकर्षणजन्यभङ्गेन भङ्गुरा पुष्पशून्या च, किन्तु भैमीकचच्छटा स्वभाववक्रा पुष्पार्चिता चेति उपहासो युक्त इति भावः ॥ ३१ ॥

बलरामके हलसे आकृष्ट के समान ( अत एव ) सघन ( अत्यधिक ) तरङ्गोंसे टेढ़ी जो यमुना नदी शोभती है, उसको उस दमयन्तीके टेढ़े बाल इस ( केशरचनाके ) समय करुणनामक वृक्ष-विशेषके पुष्पोंसे हंस रहे थे अर्थात् कृष्णवर्णवाली कुटिल तरङ्गयुक्त यमुनासे भी अधिक शोभते थे । [ यमुना नदी बलरामके हलसे आकृष्ट होनेपर काले-काले कुटिल तरङ्गोंवाली होकर शोभती थी, फिर भी पुष्पोंसे रहित थी, अतः काले-काले तथा स्वतः कुटिल एवं करुण-पुष्पयुक्त बालोंका अन्यकृत कार्यसे शोभनेवाली यमुनाको हँसना उचित ही है ] ॥ ३१ ॥

धृतैतया हाटकपट्टिकाऽलिके बभूव केशाम्बुदविद्युदेव सा ।
मुखेन्दुसम्बन्धवशात् सुधाजुषः स्थिरत्वमूहे नियतं तदायुषः[1] ॥ ३२ ॥

धृतेति । एतया भैम्या, अलिके ललाटे 'ललाटमलिकं गोधिः' इत्यमरः । धृता सा अतीव रम्यदर्शना, हाटकपट्टिका सुवर्णपट्टः, केश एव अम्बुदः मेघः, तस्य विद्युदेव बभूव । विद्युच्चेव कथं स्थिरत्वम् ? तत्राह—मुखेन्दुसम्बन्धवशात् मुखचन्द्रेण सह संस्पर्शात्, सुधाजुषः अमृतपायिनः, तस्याः विद्युतः सम्बन्धिनः, आयुषः जीवितकालस्य, नियतं स्थिरत्वं चिराय स्थायित्वम्, ऊहे उत्प्रेक्षे अमृतपानात् विद्युदायुषः स्थिरत्वकथनेन विद्युतोऽपि स्थिरत्वमिति भावः । 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इत्यात्मनेपदम् ॥ ३२ ॥

इस ( दमयन्ती ) के द्वारा ललाटमें धारणकी गयी सुवर्णपट्टिका (ललाटभूषण) केशरूपी मेघकी बिजली ही हो गयी । ( बिजलीके स्थिरप्रभा होनेका यह कारण है कि—दमयन्तीके ) मुखरूपी चन्द्रमाके अमृतका सेवन ( भोजन ) करनेवाली उस ( बिजली ) की आयु अवश्य ही स्थिर ( चिरस्थायी ) हो गयी—ऐसा मैं तर्क करता हूं । [ चन्द्रामृत पान करके बिजलीकी आयु ( प्रभा ) का स्थिर होना उचित ही है ] ॥ ३२ ॥

ललाटिकासीमनि चूर्णकुन्तला बभुस्तमां भीमनरेन्द्रजन्मनः ।
मनःशिलाचित्रकदीपसम्भवा भ्रमीभृतः कज्जलधूमवल्लयः ॥ ३३ ॥

ललाटिकेति । भीमनरेन्द्रात् जन्म यस्याः तस्याः भैम्याः, 'अवज्र्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे' इति वामनः । ललाटिका ललाटस्य अलङ्कारः, 'कर्णललाटात् कनलङ्कारे' इति कन् प्रत्ययः । तस्याः सीमनि प्रान्ते, चूर्णकुन्तलाः अलकाः, मनःशिलायाः धातुविशेषस्य, चित्रकं तिलकं, स एव दीपः प्रदीपः, मनःशिलायाः पिङ्गलवर्णत्वात् तथा नलस्य कामोद्दीपकत्वात् चित्रके दीपत्वारोपणमिति भावः । ततः

1. 'यदायुषः' इति पाठान्तरम् ।

सम्भवाः जाताः, भ्रमौ भ्रमं बिभ्रतीति भ्रमीभृतः भ्रमन्त्यः, कज्जलस्य धूमः कज्जलोत्पादकधूमः, तस्य वल्लयः लताः इव, श्रेज्य इवेत्यर्थं इत्युत्प्रेक्षा, बभुस्तमाम् अतिशयेन बभुः 'तिङश्च' इति तमप्प्रत्यये 'किमेत्तिङव्ययघात्–' इत्यनेनामुप्रत्ययः॥

ललाटभूषणके पासमें भीमनरेन्द्रनन्दिनी ( दमयन्ती ) के कुण्डलाकृति टेढ़े-टेढ़े केश मैनसिलसे रचित तिलकरूपी दीपकसे उत्पन्न टेढ़े-टेढ़े काली धूमलताके समान शोभते थे। [ दीपकके लौका धूँआ काला एवं टेढा होता है, अतएव यहां मैनसिलके तिलकको दीपक तथा ललाटभूषणके समीपस्थ कुटिल कृष्णवर्ण बालोंको उक्त दीपकके लौ ( ज्वाला ) की धूम्रश्रेणि कहा गया है। मैनसिलको पीलावर्णवाला तथा नलका कामोद्दीपक होनेसे यहां दीपक माना गया है और उस दीपकसे टेढ़ी एवं काली धूम्रश्रेणिका निकलना उचित ही है ]॥

अपाङ्गमालिङ्ग्य तदीयमुच्चकैरदीपि रेखा जनिताऽञ्जनेन या।
अपाति सूत्रं तदिव द्वितीयया वयःश्रिया वर्द्धयितुं विलोचने॥ ३४॥

अपाङ्गमिति। अञ्जनेन जनिता या रेखा तदीयं दमयन्तीयम्, अपाङ्गं नेत्रप्रान्तम्, आलिङ्ग्य स्पृष्ट्वा, उच्चकैर्नितराम्, अदीपि आयतत्वात् नेत्राद्बहिः अपाङ्गपर्यन्तं प्रसारिता सती रराज, तत् सा रेखेत्यर्थः। विधेयसूत्रापेक्षया नपुंसकनिर्देशः, अथवा तत् रेखारूपमञ्जनमित्यर्थः। द्वितीयया वयःश्रिया यौवनसम्पदा कर्त्र्या, विलोचने वर्द्धयितुं बाल्यकालापेक्षया दीर्घीकर्तुं, सूत्रम् अपातीव पातितमिव इत्युत्प्रेक्षा पततेर्ण्यन्तात् कर्मणि लुङ्, एतावत् मे क्षेत्रमिति निश्चित्य पातितं सीमासूत्रमिव सा अञ्जनरेखा विरराजेत्यर्थः॥ ३४॥

अञ्जनसे बनायी गयी जो रेखा उस ( दमयन्ती ) के अपाङ्ग ( नेत्रप्रान्त ) का स्पर्शकर अत्यन्त शोभित हुई, द्वितीय ( यौवन ) अवस्थाकी शोभाने नेत्रोंको बढ़ानेके लिए वही सूत्रपात किया हो ऐसा जान पड़ता था। [ जिस प्रकार कोई कारीगर किसी स्थानको बढ़ानेके लिए पहले नापके सूत्रसे मापकर सीमा निश्चित करता है, उसी प्रकार दमयन्तीके नेत्रप्रान्ततक फैली हुई कृष्णवर्ण अञ्जनरेखा 'यौवनावस्थारूपी कारीगरने नेत्रोंको बढ़ानेके लिए नापनेका सूत गिराया हो' ऐसा जान पड़ती थी। यद्यपि नेत्र बचपनकी अपेक्षा युवावस्थामें बढ़ते नहीं हैं, तथापि कटाक्ष-विक्षेपादि विलाससंयुक्त होनेसे उनके बढ़नेकी यहां कल्पना की गयी है ]॥ ३४॥

अनङ्गलीलाभिरपाङ्गधाविनः कनीनिकानीलमणेः पुनः पुनः।
तमिस्रवंशप्रभवेण रश्मिना स्वपद्धतिः सा किमरञ्जि नाञ्जनैः?॥३५॥

अनङ्गेति। अनङ्गलीलाभिः कटाक्षपातरूपस्मरविलासैः हेतुभिः, पुनः पुनः अपाङ्गधाविनः नेत्रान्तगामिनः, कनीनिका तारका, सा एव नीलमणिः इन्द्रनीलोपलः तस्य सम्बन्धि, तमिस्रवंशप्रभवेण तमःकुलसम्भवेन, असितेनेत्यर्थः, रश्मिना

प्रभया, सा कज्जलरेखारूपा, स्वपद्धतिः रश्मिमार्गः, अरञ्जि रञ्जिता किम् ? अञ्जनैः कज्जलैः, न ? अरञ्जीति सापह्नवोत्प्रेक्षा ॥ ३५ ॥

(कटाक्ष-विक्षेपादिरूप) काम-विलासोंसे नेत्रप्रान्ततक दौड़ने अर्थात् पहुंचनेवाली (नेत्रकी) पुतलीरूपी इन्द्रनीलमणिके अन्धकारकुलमें उत्पन्न किरणोंसे अपने (गमनागमनका) मार्ग रंग (कृष्णवर्ण बना) लिया है क्या ? अञ्जनोंसे नहीं रंगा है । ['दमयन्तीकी आखोंकी नीली पुतली कामविलाससे बार-बार कटाक्ष करती हुई नेत्रप्रान्ततक जो गमनागमन करती थी, उसीसे वह कृष्णवाली रेखा बन गयी है, अञ्जनसे नहीं बनी है, ऐसा मानता हूं । नित्य गमनागमन करनेसे कृष्णवर्ण रेखारूप मार्गका बन जाना सर्वविदित है ] ॥ ३५ ॥

असेविषातां सुषमां विदर्भजादृशावचाप्याञ्जनरेखयाऽन्वयम् ।
भुजद्वयज्याकिणपद्धतिस्पृशोः स्मरेण बाणीकृतयोः पयोजयोः ॥ ३६ ॥

असेविषातामिति । विदर्भजादृशौ वैदर्भीनेत्रे, अञ्जनरेखया सह अन्वयं सम्बन्धम्, अवाप्य प्राप्य, भुजद्वये ये ज्याकिणपद्धती ज्याघातरेखे, तत्स्पृशोः तद्युक्तयोः, एतेन स्मरस्य सव्यसाचित्वं गम्यते । स्मरेण बाणीकृतयोः पयोजयोः नीलोत्पलयोः, सुषमामिव सुषमां परमशोभाम्, असेविषातां प्राप्नुताम् । साञ्जनरेखे तद्दृशौ ज्याघातरेखास्पृशौ स्मरसन्धितनीलोत्पलबाणौ इव रेजतुरित्यर्थः । असम्भवद्वस्तुसम्बन्धरूपो निदर्शनाभेदः ॥ ३६ ॥

दमयन्तीके दोनों नेत्र अञ्जन-रेखाके सम्बन्धको प्राप्तकर दोनों बाहुओंमें धनुर्गुणके (धनुषकी डोरी) के (निरन्तर आघातसे उत्पन्न) घट्ठेके रेखाओंसे युक्त तथा कामदेवके द्वारा (नलको लक्ष्यकर) बाण बनाये गये दो कमलोंकी परमोत्कृष्ट शोभाको प्राप्त किये। [नलको लक्ष्यकर कामदेव निरन्तर—दहने बायें-दोनों हाथोंसे कमल-पुष्पको बाण बनाकर छोड़ रहा था, अत एव उसके दोनों बाहुओंमें धनुषकी डोरीको कानतक तान-तान कर बाणोंको छोड़नेसे काले वर्णके घट्ठे (रेखाकार चिह्नविशेष) पड़ गये, उनसे युक्त कमलकी जो परमोत्कृष्ट शोभा होती है, वही शोभा अञ्जनरेखाङ्कित दमयन्तीके दोनों नेत्रोंकी हुई । यहांपर दमयन्तीके नेत्रद्वयको कमलतुल्य होनेसे बाण तथा अञ्जनरेखाद्वयको कामबाहुमें सतत ज्याघातसे उत्पन्न कृष्णवर्ण घट्ठा समझना चाहिये ] ॥ ३६ ॥

तदक्षितत्कालतुलागसा नखं निखाय कृष्णस्य मृगस्य चक्षुषी ।
विधिर्यदुद्धर्त्तुमियेष तत्तयोरदूरवर्त्तिक्षतता स्म शंसति ॥ ३७ ॥

तदिति । तस्याः दमयन्त्याः, अक्षिभ्यां सह मृगनेत्रापेक्षया श्रेष्ठाभ्यां नेत्राभ्यां सहेति भावः । तत्काले चक्षुःप्रसाधनकाले, तुला मृगनेत्रयोः सादृश्यं, तदेव आगः अपराधः, तेन हेतुना, विधिः वेधाः, कृष्णस्य मृगस्य कृष्णसाराख्यहरिणस्य, चक्षुषी नखं निखाय निक्षिप्य, उद्धर्त्तुं नखेन उत्पाटयितुम्, इयेष ऐच्छदिति यत्, तद

तद्दारैपणं कर्म, तयोः मृगचक्षुषोः, अदूरवर्त्तिक्षतता निकटवर्त्तिक्षतत्वं कर्त्री, शंसति स्म शशंस । मृगस्य ईक्षणसमीपस्थस्वाभाविकक्षताकारचिह्ने पूर्वोक्तापराधप्रयुक्तविधिनखोत्पाटनक्षतत्वमुत्प्रेक्ष्यते ॥ ३७ ॥

ब्रह्माने दमयन्तीके नेत्रद्वय (मृगनेत्रोंसे अत्यधिक सुन्दर दोनों नेत्रों) की उस (नेत्र-प्रसाधनके) समयमें समानता करनेके अपराधसे कृष्णसार मृगके दोनों नेत्रोंको नख गड़ाकर जो निकालना चाहा, वह ब्रह्माकी इच्छा ही (उस मृगके) उन दोनों नेत्रोंके पासमें क्षतभाव (काले चिह्न) को बतलाती थी। [दमयन्तीके नेत्रोंमें अञ्जन लगाते समय उनके साथ अतितुच्छ अपने नेत्रोंको समानता करते हुए कृष्णसार मृगने बड़ा भारी अपराध किया है, अत एव उसे दण्डित करनेके लिए ब्रह्माने उसके नेत्रोंको अङ्गुलिके नख गड़ाकर निकालना चाहा, उस निकालनेके कार्यको ही उन नेत्रोंके समीपमें उत्पन्न क्षतका काला चिह्न कहता था। अत्युत्तम दमयन्तीनेत्रद्वयके साथ तुच्छतम कृष्णसारनेत्रद्वयकी समानता करना महान् अपराध था, अतः ब्रह्माका उसके नेत्रोंको अंगुलिसे निकालकर उसे दण्डित करनेकी इच्छा करना उचित ही है॥ कृष्णसार मृगके नेत्रोंसे दमयन्तीके नेत्र अत्यधिक सुन्दर थे ] ॥ ३७ ॥

विलोचनाभ्यामतिमात्रपीडितेऽवतंसनीलाम्बुरुहद्वयीं खलु ।
तयोः प्रतिद्वन्द्विधियाऽधिरोपयाम्बभूवतुर्भीमसुताश्रुती ततः ॥ ३८ ॥

विलोचनाभ्यामिति । भीमसुताश्रुती भैमीश्रोत्रद्वयं, विलोचनाभ्याम् अतिमात्रं पीडिते आकर्णविस्तारितया अत्यन्तमाक्रान्ते सत्यौ, ततः स्वपीडनरूपकारणात्, अवतंसनीलाम्बुरुहद्वयीं कर्णभूषणीकृतनीलोत्पलयुगलं, तयोः विलोचनयोः, प्रतिद्वन्द्विधिया प्रतिपक्षबुद्ध्या, अधिरोपयाम्बभूवतुः आरोपयामासतुः खलु इत्युत्प्रेक्षा, बलिना पीडितस्तुल्यबलं तत्प्रतिपक्षमाश्रयते इति भावः ॥ ३८ ॥

दमयन्तीके कर्णद्वय (कर्णपर्यन्त विस्तृत अर्थात् विशाल) नेत्रद्वयसे अत्यन्त पीडित होकर कर्णभूषणरूप नीलकमलद्वयको उस नेत्रद्वयके प्रतिद्वन्द्वी (समान बलवाले) होनेकी भावनासे स्थापित किया (रक्खा)। [लोकमें भी प्रबल व्यक्तिसे अतिशय पीडित व्यक्ति उस प्रबल व्यक्तिके प्रतिस्पर्धी समान बलवाले दूसरे व्यक्तिको अपने समीपमें स्थापित करता (रखता) है। नीलकमलद्वयके कर्णशोभोत्पादनरूप कार्यको नेत्रद्वयने ही सम्पादित कर दिया था (कान तक विशाल नेत्रोंसे ही वे कान शोभित होते थे), अत एव कर्णभूषण बने हुए नीलकमलोंने अधिक कुछ नहीं किया॥ नीलकमलको कर्णभूषण बनाकर दमयन्तीके कानोंमें सखियोंने पहना दिया ] ॥ ३८ ॥

धृतं वतंसोत्पलयुग्ममेतया व्यराजदस्यां पतिते दृशाविव ।
मनोभुवाऽऽन्ध्यं गमितस्य पश्यतः स्थिते लगित्वा रसिकस्य कस्यचित् ॥

धृतमिति । एतया भैम्या, धृतं वतंसोत्पलयुग्मं कर्णभूषणीकृतनीलोत्पलद्वयम्,

अस्यां भैम्यां, पतिते निक्षिप्ते, तथा लगित्वा तत्रैव आसज्य स्थिते च, पश्यतः भैमीं तत्कर्णौ वा विलोकयतः, अत एव मनोभुवा कामेन, आन्ध्यं गमितस्य तदेकासक्तीकृतस्य इत्यर्थः। स्थानान्तरे नेत्रगमनादेवास्य अन्धत्वं बोद्धव्यम्। कस्यचित् रसिकस्य रसवतः, रागिणः इत्यर्थः। 'अत इनिठनौ' इति ठक्-प्रत्ययः। दृशौ इव व्यराजत् विरराज इत्युत्प्रेक्षा ॥ ३९ ॥

इस ( दमयन्ती ) के द्वारा ( कानोंके ऊपर ) धारण किये गये तथा कर्णभूषण बने हुए दो नीलकमल दमयन्तीमें गिरकर अर्थात् आसक्त होकर स्थित हो ( दमयन्तीको, या-उसके कानोंको ) देखते हुए ( अत एव ) कामदेवसे अन्धे किसी रसिक पुरुषके नेत्रद्वयके समान शोभते थे। [ अन्धा व्यक्ति अन्यत्र जानेमें असमर्थ होता है, यहां पर दमयन्तीको या उसके दोनों सुन्दर कानोंको आसक्तिपूर्वक देखते हुए तथा सुन्दरतम उसीको तन्मय होकर देखते रहनेसे अन्यत्र नहीं जाने अर्थात् दूसरा कुछ नहीं देखनेसे यहां उस रसिक पुरुषको कामान्ध होनेकी कल्पना की गयी है ] ॥ ३९ ॥

विदर्भसुभ्रूश्रवणावतंसिकामणीमहःकिंशुककार्मुकोदरे ।
उदीतनेत्रोत्पलबाणसम्भृतिर्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

विदर्भेति। स्मरः विदर्भसुभ्रुवः वैदर्भ्याः, श्रवणावतंसिका कर्णावतंसीभूता, या मणी, 'कृदिकारात्—' इतीकारः। तस्या महः प्रभा एव, किंशुककार्मुकं पलाशकुसुमचापं, तस्य उदरे मध्ये, उदीता उद्गता, प्रतिफलितेत्यर्थः। नेत्रस्य एव उत्पलबाणस्य सम्भृतिः सम्भरणं, नेत्ररूपनीलोत्पलबाणसम्भारः इत्यर्थः। यस्य स तादृशः सन्, पलाशकुसुमधनुषि समारोपितनीलोत्पलशरः सन्नित्यर्थः। नलं परं नलमेव, लक्ष्यम् अवैक्षत प्रतीक्षते स्म। नल आगत्य भैम्या विभूषितकर्णनेत्रसौन्दर्यदर्शनमात्रेणैव कामबाणविद्धो भविष्यतीति भावः ॥ ४० ॥

विदर्भराजकुमारी ( दमयन्ती ) के कर्णभूषण-रत्नोंकी कान्तिरूप जो पलाशपुष्प, तद्रूप धनुषके मध्यमें प्रतिबिम्बित नेत्रकमलरूप बाण ( प्रतिबिम्बित दो नेत्र तथा दो कर्णोत्पन्न—इस प्रकार चार बाणों, या नेत्ररूप जो नीलकमल तद्रूप बाणों ) की सामग्रीवाला होकर केवल ( या—श्रेष्ठ ) लक्ष्य नलको ही देख ( प्रतीक्षा कर ) रहा था। [ इन नीलोत्पलके कर्णभूषणोंमें प्रतिबिम्बित दमयन्तीके कज्जलसुन्दर नेत्रोंको देखकर ही नल अवश्य मेरे ( कामदेवके ) वशीभूत हो जायेंगे ऐसा कामदेव समझ रहा था ] ॥ ४० ॥

अनाचरत्तथ्यमृषाविचारणां तदाननं कर्णलतायुगेन किम् ।
बबन्ध जित्वा मणिकुण्डले विधू द्विचन्द्रबुद्ध्या कथितावसूयकौ ? ॥

अनाचरदिति। तथ्यमृषाविचारणाम् अनाचरत् सौन्दर्यमदात् सत्यासत्यविमर्शम् अकुर्वत्, तदाननं कर्तृ, द्विचन्द्रबुद्ध्या द्वौ चन्द्रौ इमौ इति भ्रान्त्या, कथितौ सूचितौ, असूयकौ स्वद्वेषिणौ, आननस्योत्कर्षमसहमानावित्यर्थः। मणिकुण्डले एव

**विधू चन्द्रौ, जित्वा कर्णलतयोः युगेन बबन्ध किम् ? इति मिथ्याचन्द्रयोरेव बन्धनमुत्प्रेक्षते । जितस्य शत्रोर्बन्धनमुचितमिति भावः ॥ ४१ ॥**

(अपने सर्वाधिक सुन्दर होनेके कारण उन्मत्त अत एव) सत्यासत्यका विचार नहीं करते हुए दमयन्तीके मुखने (दमयन्तीकी, या—उसके मुखकी) स्पर्द्धा करनेवाले बतलाये गये रत्नजटित दो मणिकुण्डलोंको दो चन्द्रमा समझकर दो कर्णलताओंसे बांध लिया है क्या ? । [ दमयन्तीका मुख अपने सौन्दर्यमदसे उन्मत्त होनेके कारण सत्यासत्यका विवेक करनेमें असमर्थ हो गया है, अत एव 'ये दो चन्द्रमा तुम्हारे (मुखके) साथ ईर्ष्या कर रहे हैं' ऐसी ही चन्द्रमाकी भ्रान्तिसे रत्नजड़े हुए दो मणिकुण्डलोंको ही जीतकर कर्णलतासे बांध लिया है । अन्य भी मदोन्मत्त व्यक्ति वास्तविक बातका विचार नहीं करके दूसरेके अपराधसे तदितर व्यक्तिको दण्डित कर देता है ॥ दमयन्तीने रत्नोंसे जड़े हुए कुण्डलोंको कानमें धारण किया ]॥ ४१ ॥

**अवादि भैमी परिधाप्य कुण्डले वयस्ययाऽऽभ्यामभितः समन्वयः ।**
**त्वदाननेन्दोः प्रियकामजन्मनि श्रयत्ययं दौरधुरीं धुरं ध्रुवम् ॥ ४२ ॥**

**अवादीति । वयस्यया सख्या, कुण्डले मणिकुण्डले, परिधाप्य आरोप्य, भैमी अवादि गदिता । किमिति ? हे भैमि ! आभ्यां मणिकुण्डलाभ्यां सह, अभितः उभयतः, त्वदाननेन्दोः तव मुखचन्द्रस्य, अयं समन्वयः समायोगः, प्रियस्य नलस्य, कामजन्मनि त्वयि रागोदये, दौरधुरीं दुरधुराख्ययोगसम्बन्धिनीं, धुरं भारं, श्रयति फलदानभारं वहति, ध्रुवमित्युत्प्रेक्षा । चन्द्रस्यार्कातिरिक्तोभयग्रहमध्यगते दौरधुरयोगः; यदाह वराहमिहिरः—'हित्वाऽर्कं सुनयानयाद्दुरधुरा स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः' इति ॥ ४२ ॥**

दो कुण्डलोंको पहनाकर सखीने दमयन्तीसे कहा कि—इन (कुण्डलों) के साथ दोनों ओर तुम्हारे मुखचन्द्रका सम्बन्ध होना प्रिय (नल) के कामोत्पादनमें अवश्य ही 'दुरधुरा' नामक योगके भारको ग्रहण करता है । [ ज्यौतिषशास्त्रके अनुसार सूर्यभिन्न दो ग्रहोंकी राशिके मध्यमें चन्द्रमाके रहनेपर 'दुरधरा' नामक योग होता है, उस योगमें उत्पन्न पुत्र जिस प्रकार बहुत दिनों तक जीवित रहता है, उसी प्रकार इन कुण्डलद्वयरूपी दो ग्रहोंके बीचमें स्थित तुम्हारे मुखरूपी चन्द्रके सुन्दर संयोगमें उत्पन्न नलप्रेम दिनोदिन बढ़ता हुआ बहुत दिनों तक स्थित रहेगा । 'नारायण' भट्टने 'गुरु और शुक्रके मध्यगत चन्द्रके होने पर उक्त योग होता है" ऐसा कहा है ]॥ ४२ ॥

**निवेशितं यावकरागदीप्तये लगत्तदीयाधरसीम्नि सिक्थकम् ।**
**रराज तत्रैव निवस्तुमुत्सुकं मधूनि निर्धूय सुधासधर्मिणि ॥ ४३ ॥**

---

१. तदुक्तम्—'गुरुभार्गवयोर्योगश्चन्द्रेणैव यदा भवेत् ।
तदा दुरुधराख्यः स्यात्' इति ज्योतिःशास्त्रादवगन्तव्यम् ।

निवेशितमिति । तदीयाधरस्य दमयन्तीयाधरस्य; सीम्नि सीमप्रदेशे, यावकरागस्य अलक्तकरागस्य, दीप्तये स्फुरणाय, निवेशितं न्यस्तम्, अत एव लगत् दृढभावेन संसजत्, सिक्थकं मधूच्छिष्टं, मधुकोपजमिति यावत्। मधूनि क्षौद्राणि, निर्धूय निरस्य, सुधया समानः धर्मः स्वादुतारूपः यस्याः सा सुधासधर्मा । 'नामगोत्ररूपस्थानवर्णवयोवचनधर्मजातीयेषु समानस्य सभावः' इति वर्द्धमानसूत्रम्। 'समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु' इत्यत्र 'समानस्येति योगो विभज्यते, तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिका'। 'धर्मादनिच् केवलात्' इत्यनिच्। 'मनः' इति सन्नन्तान्न ङीप्। तस्यां सुधासधर्मिणि अमृतसदृश्यां, तत्र एव तदीयाधरसीम्नि एव, निवस्तुं स्थायिभावेन अवस्थातुम्, उत्सुकम् आग्रहान्वितं सत्, रराज। मधूच्छिष्टसम्बन्धिक्षौद्रापेक्षया तदीयाधरस्योत्कृष्टत्वादिति भावः। अन्यथा कथम् अत्रैव लगेदित्युत्प्रेक्षा। अन्योऽपि उत्कृष्टस्थानलाभे चिरपरिचितमपि स्वस्थानमुत्सृजति इति दृश्यते ॥ ४३ ॥

उस ( दमयन्ती ) के अधरके अन्तमें महावर ( या—अधरकी लालिमाके लिए लगाया जानेवाला राग-विशेष ) के चमकने ( या स्थिरता ) के लिए लगाया गया मोम संसक्त होकर मधु ( शहद ) को छोड़कर अमृततुल्य वहीं ( उस अधरसीमामें ही ) रहनेके लिए उत्कण्ठित होकर ( उत्कण्ठित-सा ) शोभता था। [ ओष्ठमें रंगकी स्थिरताके लिए शृङ्गार करनेवाली सखीने पहले दमयन्तीके अधरान्तमें मोम लगा दिया, वह ऐसा मालूम पड़ता था कि उसने अपने चिरपरिचित स्थान मधुको छोड़कर निरन्तर निवास करनेके लिए उत्कण्ठित होकर यहां दमयन्तीके अधरमें बसा हो। लोकमें भी कोई व्यक्ति चिरपरिचित साधारण स्थानको छोड़कर उत्तम स्थानमें निवास करनेके लिए उत्कण्ठित होकर जा बसता है ॥ दमयन्तीका अधर मधुकी अपेक्षा भी अधिक स्वादु ( मधुर ) था ] ॥ ४३ ॥

**स्वरेण वीणेत्यविशेषणं पुराऽस्फुरत्तदीया खलु कण्ठकन्दली ।**
**अवाप्य तन्त्रीरथ सप्त मौक्तिकासरानराजत् परिवादिनी स्फुटम् ॥४४॥**

स्वरेणेति । तदीया दमयन्तीया, कण्ठकन्दली कण्ठनालः, कण्ठस्य कलध्वनिरिति वा। 'कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः' इति मेदिनी। पुरा पूर्वं, स्वरेण ध्वनिना, वीणेत्यविशेषणं साधारणतः वीणेति निर्विशेषं, नामरूपविशेषशून्यं यथा तथा इत्यर्थः। अस्फुरत् वीणा इत्येव अबोधीत्यर्थः। खलु इति निश्चये। अथ वीणेवेति स्फुरणानन्तरं, सप्त मौक्तिकासरान् सप्त मुक्तायष्टीरेव, तन्त्रीः वीणागुणान्; अवाप्य परिवादिनी परिवादिन्याख्या वीणा सती। 'वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः। अराजत्, स्फुटम् इत्युत्प्रेक्षायाम् ॥ ४४ ॥

उस ( दमयन्ती ) का कण्ठनाल पहले ( मुक्तामाला धारण करनेके पूर्व मधुर ) स्वरसे विशेषण-रहित 'वीणा' इसी सामान्य नामसे अवश्य ही स्फुरित होता ( शोभता ) था। अब वह सात लड़ियोंवाली मुक्तामालारूप तारोंको पाकर ( सात लड़ियोंवाले मोतियोंके

हारको पहनकर ) स्पष्टरूपसे परिवादिनी ( सात तारोंसे बजनेवाली 'परिवादिनी' नामकी विशिष्ट वीणा ) होकर शोभने लगा । [ दमयन्तीका कण्ठ मोतियोंका हार पहननेके पहले मधुर स्वरसे सामान्यतः 'वीणा' तुल्य शोभता था किन्तु अब सात लड़ियोंकी मुक्ताहार पहनकर सात तारोंसे बजनेवाली 'परिवादिनी' नामकी विशिष्ट वीणाके समान शोभने लगा ] ॥

**उपास्यमानाविव शिक्षितुं ततो मृदुत्वमप्रौढमृणालनालया ।**
**विरेजतुर्माङ्गलिकेन संयुतौ भुजौ सुदत्या वलयेन कम्बुनः ॥ ४५ ॥**

**उपास्यमानाविति । ततः कण्ठभूषणानन्तरं, माङ्गलिकेन मङ्गलार्थेन । 'प्रयोजनम्' इति ठञ् । कम्बुनः शङ्खस्य, 'शङ्खः स्यात् कम्बुरस्त्रियाम्' इत्यमरः । वलयेन संयुतौ, सुदत्याः तस्याः दमयन्त्याः भुजौ अप्रौढमृणालनालया बालबिसकाण्डदण्डेन, मृदुत्वं मार्दवं, शिक्षितुम् अभ्यसितुम्, उपास्यमानौ सेव्यमानौ इव, विरेजतुः इत्युत्प्रेक्षा ॥ ४५ ॥**

मङ्गलार्थक शङ्खके कङ्कणोंसे संयुक्त ( विभूषित ), सुन्दर दाँतोंवाली ( दमयन्ती ) के दोनों बाहु ऐसे शोभते थे, कि मानो उन ( बाहुओं ) से कोमलता सीखनेके लिये बाल ( नवाङ्कुरित ) मृणालदण्ड उनकी सेवा कर रहे हों । [ बालकको शिक्षा ग्रहण करना तथा तदर्थ गुरुको सेवा करना लोकप्रसिद्ध है ॥ दमयन्तीके बाहु नवाङ्कुरित मृणालदण्डसे भी अधिक कोमल हैं ] ॥ ४५ ॥

**पदद्वयेऽस्या नवयावरञ्जना जनैस्तदानीमुदनीयतार्पिता ।**
**चिराय पद्मौ परिरभ्य जाग्रती निशीव विश्लिष्य नवा रविद्युतिः ॥ ४६ ॥**

**पदेति । तदानीं प्रसाधनकाले, अस्याः भैम्याः, पदद्वये अर्पिता नवयावस्य नवालक्तस्य । 'यावोऽलक्तो द्रुमामयः' इत्यमरः । रञ्जना रागः, निशि रात्रौ, विश्लिष्य वियुज्य, पद्मादिति भावः । चिराय दीर्घकालानन्तरं, प्रभाते इत्यर्थः । पद्मौ पद्मे 'वा पुंसि पद्मं नलिनम्' इत्यमरः । परिरभ्य आलिङ्ग्य, प्राप्य इत्यर्थः । जाग्रती प्रकाशमाना, नवा प्रत्यग्रा, रविद्युतिः इव बालार्कप्रभेव, स्थितेति जनैः उदनीयत उन्नीता, उत्प्रेक्षितेत्यर्थः ॥ ४६ ॥**

उस समयमें इस ( दमयन्ती ) के दोनों चरणोंमें महावरको लोगोंने ऐसा तर्क किया ( समझा ) कि रात्रिमें ( कमलसे ) पृथक् होकर बहुत देर ( पूरी रात्रि बीतने ) के बाद ( चरणरूप ) दो कमलोंको आलिङ्गन कर अर्थात् प्राप्तकर प्रकाशमान होती हुई वह सूर्यकी नवीन ( प्रातःकालीन ) कान्ति हो । [ जिस प्रकार सायंकालमें कमलोंसे पृथक् होकर रात्रिके व्यतीत होनेके बाद कमलोंको पाकर सूर्यकी अरुणवर्ण कान्ति शोभित होती है, उसी प्रकार दमयन्तीके चरणोंको पाकर लाल रंगका महावर शोभता था । लोकमें भी चिरविरहित व्यक्ति पूर्वपरिचित मित्रादिको प्राप्तकर आलिङ्गन करता और अनुरक्त होता है ॥ दमयन्तीके चरण कमलतुल्य थे ] ॥ ४६ ॥

**कृतापराधः सुतनोरनन्तरं विचिन्त्य कान्तेन समं समागमम् ।**
**स्फुटं सिषेवे कुसुमेषुपावकः सरागचिह्नश्चरणौ न यावकः ॥ ४७ ॥**

**कृतेति । सुतनोः भैम्याः, कृतापराधः पूर्वं विरहकाले सापराधः, कुसुमेषुपावकः कामाग्निः, अनन्तरम् इदानीं, कान्तेन समं नलेन सह, समागमं विचिन्त्य सरागचिह्नः पावकस्य लौहित्यचिह्नयुक्तः सन् अनुरागचिह्नयुक्तः सन् इति वा, अन्यथा कुत एष राग इति भावः । चरणौ सिषेवे इति स्फुटं स्वापराधमार्जनार्थं सेवयामासेव। यावः एव यावकः 'यावादिभ्यः कन्' इति स्वार्थे कन्-प्रत्ययः । अलक्तस्तु, न, इति सापह्नवोत्प्रेक्षा ॥ ४७ ॥**

( पहले अर्थात् विरहावस्थामें ) सुतनु ( सुन्दर शरीरवाली—दमयन्ती ) का अपराध करनेवाला कामरूप अग्नि बादमें प्रिय ( नल ) के साथ समागम को विचारकर लालचिह्न ( पक्षा०—अनुराग-चिह्न ) से युक्त हो दोनों चरणोंकी सेवा करता है ( अथवा—विचारकर दोनों चरणोंकी सेवा करता है ), ( क्योंकि ) वह ( कामरूप अग्नि ) राग ( लाल, पक्षा०—अनुराग अर्थात् स्नेह चिह्नवाला है ), यह महावर नहीं है । [ प्रोषितपतिकाको पीडित करनेवाला अपराधी व्यक्ति उसके पतिका समागम समीप जानकर उसके चरणोंकी सेवा करके अपने अपराधोंका परिमार्जन करता है । दमयन्तीके महावर लगे हुए चरणोंको देखकर नलकी कामवृद्धि हो जायेगी ] ॥ ४७ ॥

**स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च ।**
**किमूचिरे[1]ऽलङ्करणानि तानि तत् वृथैव तेषां करणं बभूव यत् ? ॥४८॥**

**स्वयमिति । स्वयं स्वभावत एव, चारुतां गतेषु, तथा परस्परेण अन्योऽन्येनैव, विभूषितेषु समलङ्कृतेषु च, परस्परमेलनात् भूषणं विनैव प्रत्यवयवं कस्यचित् कमनीयताविशेषस्य स्फुरणादिति भावः । तदङ्गेषु भैमीगात्रेषु, तेषां पूर्वोक्तहेमपट्टादीनां, यत् करणम् अर्पणं, तत् वृथा एव निष्प्रयोजनमेव, बभूव इति तानि वास्तवानि, अलङ्करणानि कर्त्तृणि, ऊचिरे किम् ? अलङ्काराणां भैमीचारुताकरणासामर्थ्यात् स्वकरणस्य निष्प्रयोजनकत्वेन करणम् अलमिति स्वनाम सान्वयमभूदिति भावः ॥ ४८ ॥**

स्वयं ( स्वभावतः तथा परस्परानपेक्ष ) उस दमयन्तीके अङ्गोंके ( प्रत्येकमें अपने-अपने सौन्दर्य एव तारुण्यके कारण ) सुन्दरता प्राप्त करनेपर तथा परस्पर ( की शोभा ) से ही विभूषित होनेपर ( अथवा—स्वयं सुन्दरताको प्राप्त तथा परस्पर ( की शोभा ) से विभूषित दमयन्तीके अङ्गोंमें ) उन ( मैनसिलके तिलक आदि ( १४।२८–४७ तक वर्णित ) अलङ्करणों या भूषणों ) ने क्या कहा ? अर्थात् स्वयं शोभासम्पन्न दमयन्तीके अङ्गोंको अधिकसुन्दर नहीं बनानेके कारण निष्प्रयोजनभूत उन अलङ्कारोंने कुछ नहीं कहा, क्योंकि उनका करना ( साधन ) व्यर्थ हो गया, अत एव उन्होंने अपने 'अलङ्करण' ( 'अलम् = व्यर्थ' है 'करण=

1. 'किमूहिरे' इति पाठान्तरम् ।

साधन' जिनका ऐसे विग्रहसे ) नामको सार्थक किया । [ 'अलङ्करण' शब्दमें प्रथम 'अलम्' शब्द 'भूषणार्थक' था, किन्तु अब वह 'व्यर्थार्थक' हो गया । पाठा०—'वे अलङ्करण क्यों पहने गये ?' यह मैं नहीं समझ सका ]॥ ४८ ॥

**क्रमाधिकामुत्तरमुत्तरं श्रियं पुपोष यां भूषणचुम्बनैरियम् ।**
**पुरः पुरस्तस्थुषि रामणीयके तया बबाधेऽवधिवुद्धिधोरणिः ॥ ४९ ॥**

**क्रमेति । इयं दमयन्ती, भूषणचुम्बनैः आभरणसम्बन्धैः, उत्तरम् उत्तरम् उपर्युपरि, परं परमित्यर्थः । 'उपर्युदीच्यश्रेष्ठष्वप्युत्तरः स्यात्' इत्यमरः । क्रमेण पारम्पर्येण, पूर्वपूर्वभूषणापेक्षया उत्तरोत्तरभूषणेन इत्यर्थः । अधिकां पूर्वापेक्षयाऽतिरिक्तां, यां श्रियं शोभां, पुपोष, तया श्रिया, पुरः पुर उत्तरोत्तरं, रामणीयके कमनीयत्वे । मनोज्ञादित्वात् वुञ् प्रत्ययः । तस्थुषि स्थितिशीले सति, अवधिवुद्धिधोरणिः रामणीयकस्य इयमेव सीमा इयमेव सीमा इत्याकारिका इत्यत्ताधीपरम्परा, बबाधे बाधिता । पूर्वपूर्वरामणीयकस्य स्थितिजन्यतदियत्तावुद्धिपरम्पराया उत्तरोत्तरवर्द्धितशोभया निराकृतौ सत्याम् इयत्तारहिता सा शोभासम्पत्तिरासीदिति भावः । धोरणिशब्दः, पङ्क्तौ देशीये इति सम्प्रदायः ॥ ४९ ॥**

इस ( दमयन्ती ) ने भूषणोंके ग्रहण करनेसे उत्तरोत्तर अधिक जिस शोभाको प्राप्त किया, उससे आगे-आगे रमणीयताके स्थिरतर होनेपर शोभाकी इतनी ही अवधि होती है अर्थात् अधिकसे अधिक इतनी ही शोभा हो सकती है ऐसी विचारधारा बाधित हो गयी । [ दमयन्तीके भूषण-भूषित किसी एक अङ्गको देखकर 'शोभाकी यह अन्तिम अवधि है' ऐसा विचार होता था, किन्तु उस अङ्गकी अपेक्षा दूसरे विभूषित अङ्गको देखकर पहले देखे गये अङ्गसे इस अङ्गमें अधिक शोभाको देखकर पूर्वकृत विचार बदलना पड़ता था, इसी प्रकार उत्तरोत्तर शोभाधिक्यसे विचार बदलते रहना पड़ता था । भूषणोंके पहननेसे दमयन्तीके अङ्गोंकी निरवधि शोभा हुई ] ॥ ४९ ॥

**मणीसनाभौ मुकुरस्य मण्डले बभौ निजास्यप्रतिबिम्बदर्शिनी ।**
**विधोरदूरं स्वमुखं विधाय सा निरूपयन्तीव विशेषमेतयोः ॥ ५० ॥**

**मणीति । मणीसनाभौ रत्नप्रख्ये, मुकुरस्य मण्डले दर्पणतले, निजास्यप्रतिबिम्बदर्शिनी सा भैमी, स्वमुखं विधोः चन्द्रस्य, दर्पणरूपचन्द्रस्येत्यर्थः, दर्पणे प्रतिबिम्बतचन्द्रस्येत्यर्थो वा । अदूरं समीपगतं, विधाय सम्पाद्य, एतयोः स्वमुख-चन्द्रयोः, विशेषं तारतम्यं, निरूपयन्ती परीक्षमाणा इव, बभौ परीक्षका हि उभयमेकत्र अवस्थाप्य परीक्षन्ते इति भावः । अत्रोत्प्रेक्षा ॥ ५० ॥**

मणितुल्य दर्पणमें अपने मुखके प्रतिबिम्बको देखती हुई यह ( दमयन्ती ) चन्द्रमा ( दर्पणरूप, या—प्रतिबिम्बरूप चन्द्रमा ) के पासमें अपने मुखको रखकर इन दोनों ( चन्द्रमा और अपने मुख ) के तारतम्यको निरूपण करती हुईके समान शोभित हुई ।

[ लोकमें भी दो पदार्थोंके तारतम्य ज्ञानके लिए उन्हें समीपमें रखकर परीक्षण किया जाता है ॥ दमयन्ती भूषण-भूषित होकर दर्पणमें अपना सौन्दर्य देखने लगी ] ॥ ५० ॥

जितस्तदास्येन कलानिधिर्दधे द्विचन्द्रधीसाक्षिकमायकायताम् ।
तथापि जिग्ये युगपत् सखीयुगप्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥

जित इति । कलानिधिः चन्द्रः । 'शिल्पे कला विधोरंशे' इत्यभिधानात् । तदास्येन भैमीमुखेन, जितः सन् द्वौ चन्द्रौ इति धीरेव कार्यभूता साक्षी प्रमाणं यस्याः सा तत्साक्षिका माया कारणभूता यस्य स तादृशः द्विचन्द्रधीसाक्षिकमायः कायः यस्याः तस्याः भावः तत्ता तां, दधे दधार । एकाकिना तन्मुखस्य दुर्जयत्वादेकोऽपि चन्द्रो मायया द्वावभूत् इत्यर्थः । तन्मुखन्तु स्वयमपि कपटादेव त्रित्वमापद्य पुनस्तं जिगायेत्याह—तथापि द्विभूतोऽपि, युगपत् समकालं, सखीयुगेन सहचरीद्वयेन, प्रदर्शिताभ्याम् आदर्शाभ्यां दर्पणाभ्यां, तद्गतप्रतिबिम्बद्वयवशेन इत्यर्थः । 'दर्पणे मुकुरादर्शौ' इत्यमरः । बहूभविष्णुना बहूभवित्रा, प्रतिबिम्बद्वयेन आत्मना च त्रित्वमापन्नेन तन्मुखेनेत्यर्थः । 'भुवश्च' इति इष्णुच् प्रत्ययः । जिग्ये जितः । त्रिभिर्द्वौ सुजयाविति भावः ॥ ५१ ॥

उस ( दमयन्ती ) के मुखसे जीते गये कलाओंके निधि ( अनेक कलाओंको धारण करनेमें चतुर ) अर्थात् चन्द्रमाने ( आँखको अङ्गुलिसे दबाने आदिके कारण ) दो चन्द्रमा बननेकी मायाको धारण किया ( कि 'मैं दो होकर दमयन्तीके एक मुखको सरलतया जीत लूँ' किन्तु ) तथापि उसको एक साथ दो सखियोंके द्वारा दिखलाये गये ( दो ) दर्पणोंमें बहुत ( तीन, अथवा—एक दमयन्तीके हस्तस्थ तथा दो सखियोंके हस्तस्थ—इस प्रकार तीन दर्पणोंमें एक दूसरेमें मुखका प्रतिबिम्ब पड़नेसे पांच-छः ) होनेवाले ( दमयन्तीके मुखने ) जीत ही लिया । [ पहले दमयन्तीको एक मुखने एक चन्द्रमाको जीत लिया, अत एव चन्द्रमाने आंख दबाने आदिसे दो चन्द्रमा बनकर उस मुखको जीतना चाहा, किन्तु दो सखियाँ दो और दर्पण लेकर दमयन्तीको दिखलाने लगीं, इस प्रकार तीनों दर्पणोंमें प्रतिबिम्बित दमयन्तीके मुखने बहुत रूप धारण कर दो चन्द्रमाको भी जीत ही लिया । लोकमें भी एकसे हारता हुआ व्यक्ति मायासे दो बनकर उसे जीतना चाहता है, किन्तु उसकी मायाको समझकर प्रथम विजेता अनेकरूप धारणकर उसे पराजित ही कर देता है ॥ दमयन्तीका मुख चन्द्रमासे भी अधिक सुन्दर है ] ॥ ५१ ॥

किमालियुग्मार्पितदर्पणद्वये तदास्यमेकं बहु चान्यदम्बुजम् ।
हिमेषु निर्बाध्य निशासमाधिभिस्तदास्यसालोक्यमितं व्यलोकयत ? ॥

किमिति । आलियुग्मेन सखीद्वयेन, अर्पिते दर्पणद्वये एकम् एकत्वसङ्ख्याविशिष्टं मुखञ्च, तदास्यं बिम्बभूतं भैमीमुखम्, अन्यत् तन्मुखप्रतिबिम्बरूपञ्च, बहु अनेकम्, अम्बुजं पद्मम्, एकार्कप्रतिबिम्बितानेकार्कवत् ब्रह्म चैकम् अनेकाविद्याप्रतिबिम्बित-

ब्रह्मवचेति भावः । निशासु समाधिभिः तन्मुखध्यानैः, मुकुलभावलक्षणैः उपलक्षितं सत्, हिमेषु शिशिरर्तुषु, निर्वाप्य निर्वाणं विनाशं प्राप्य, तदास्यस्य भैमीमुखस्य, आलोकेन दर्शनेन सह वर्त्तते इति सालोकं तस्य भावः सालोक्यम् आलोकनीयत्वं, रम्यत्वम् इति यावत्, तदाननसालोक्यं तदाननसमानालोकत्वं सालोक्यरूपमुक्तिञ्च, इतं प्राप्तं सत्, इणः कर्त्तरि क्तः । व्यलोक्यत किम् ? दृष्टं किम् ? इत्युत्प्रेक्षा । निर्वाणकाले यां देवतां ध्यायन्ति तत्सालोक्यं लभन्ते इत्यागमः । भैमीमुखस्य दर्पणस्थप्रतिविम्बानाञ्च परस्परसान्निध्यात् दर्पणस्थंप्रतिविम्बानि किं शिशिरर्तुषु नष्टानि तन्मुखसदृशानि तत्समीपस्थानि पद्मानि ? इति लोकैरुत्प्रेक्षितमिति भावः ॥ ५२ ॥

दो सखियोंके द्वारा दिखलाये गये दो दर्पणोंमें दमयन्तीका मुख ( विम्वरूप मुख ) एक ( पक्षा०—मुख्य ) है तथा दूसरे ( प्रतिविम्वरूप ) वहुत कमल हैं, जिन्हें लोग हिम ( शिशिर ऋतु, पक्षा०—केदारादि तीर्थके वर्फ ) में नष्ट होकर ( पक्षा०—मुक्ति पाकर ) रात्रियोंमें समाधियों ( मुकुलित होने, पक्षा०—परमात्माका दर्शनादिके उपायों ) से उस ( दमयन्ती, पक्षा०—परमात्मा ) की सालोक्य ( सौन्दर्य, पक्षा०—सालोक्य मुक्ति ) को प्राप्त हुएके समान देखते हैं । [ जिस प्रकार ब्रह्म एक एवं मुख्य होता है, उसे अनेक योगी आदि लोग अपने शरीरको केदारादि शीतप्रधान तीर्थोंमें नष्टकर समाधिके द्वारा उस मुख्य एक ब्रह्मके साथ सालोक्य मुक्ति पा लेते हैं, उसी प्रकार दमयन्तीका मुख एक तथा मुख्य है, उसकी समानताको शिशिर ऋतुमें नष्ट होकर तथा रात्रियोंमें मुकुलित होकर इन दर्पणप्रतिविम्वित मुखरूप इन वहुतसे कमलोंने पा लिया है; ऐसा लोग समझते हैं ॥ दमयन्तीका मुख कमलोंसे भी अधिक सुन्दर है ] ॥ ५२ ॥

पलाशदामेति मिलच्छिलीमुखैर्वृता विभूषामणिरश्मिमण्डलैः ।
अलक्षि लक्षैर्धनुषामसौ तदा रतीशसर्वस्वतयाऽभिरक्षिता ॥ ५३ ॥

पलाशेति । पलाशदाम इयं किंशुकमाला, इति, विचिन्त्येति शेषः । मिलन्तः सङ्गच्छमानाः, शिलीमुखाः अलयः, वाणाश्च येषु तैः तादृशैः, इति भ्रान्तिमदलङ्कारः । विभूषामणिरश्मिमण्डलैः आभरणरत्नकान्तिपलैः, वृता वेष्टिता, असौ भैमी, तदा प्रसाधनानन्तरसमये इत्यर्थः । रतीशस्य कामस्य, सर्वस्वतया सर्वधनत्वेन, धनुषां धनुर्धारिणाम् । कुन्ताः प्रविशन्तीतिवदिति भावः । लक्षैः शतसहस्रैः, अभिरक्षिता समन्तात् रक्षितेव, इति अलक्षि उत्प्रेक्षिता । लोकैरिति शेषः । कार्मुकरूपतादृशरश्मिमण्डलैर्वेष्टितायास्तस्या धनुर्लक्षैः रक्षितत्वमुत्प्रेक्षितमिति व्यञ्जकाप्रयोगात् गम्योत्प्रेक्षा । राजधनं शस्त्रिभिः अभिरक्ष्यते इति भावः ॥ ५३ ॥

इसे ( दमयन्तीको ) पलाश-पुष्पोंकी माला समझकर आते हुए भ्रमरों ( पक्षा०—धनुषाकृति पलाशपुष्पोंमें सङ्गत होते हुए वाणों ) वाले विशिष्ट भूषणरूप मणि-किरणरूप धनुषोंसे परिवेष्टित इस ( दमयन्ती ) को उस समय ( अलङ्कार धारण करनेपर ) कामदेवके सर्वस्व ( परमोत्कृष्ट सम्पत्ति ) होनेके कारण लाखों धनुर्धारी रक्षा कर रहे हैं, ऐसा

( लोगोंने ) लक्षित ( तर्क ) किया । [ जिस प्रकार परमोत्कृष्ट राजसम्पत्तिकी रक्षा बहुत धनुर्धारी धनुषसे करते हैं, उसी प्रकार कान्तिसाम्यसे नलमित्र कामदेव दमयन्तीकी रक्षा कर रहा है, अथवा—कामदेवके परमोत्कृष्ट सम्पत्तिरूप दमयन्तीकी उसके धनुषधारी रक्षा कर रहे हैं, ऐसा लोगोंने समझा ] ॥ ५३ ॥

**विशेषतीर्थैरिव जह्नुनन्दना गुणैरिवाजानिकरागभूमिका ।**
**जगाम भाग्यैरिव नीतिरुज्ज्वलैर्विभूषणैस्तत्सुषमा महार्घताम् ॥ ५४ ॥**

**विशेषेति । विशेषतीर्थैः प्रयागादिषु यमुनासरस्वतीप्रमुखैः, जह्नुनन्दना जाह्नवी इव, नन्द्यादित्वाल्ल्यु-प्रत्यये टाप् । गुणैः विद्याविनयादिभिः, अजनात् जनभिन्नात् उत्पन्नः आजानिकः सहजः, शैषिकष्ठञ्-प्रत्ययः । तादृशस्य रागस्य प्रेम्णः, भूमिः एव भूमिका इव आस्पदमिव, विनयादिभिः गुणैः सहजस्नेहास्पदपुत्रादिरिव इति यावत् भाग्यैः अनुकूलदैवैः नीतिः इव, उज्ज्वलैः विभूषणैः तस्याः भैम्याः, सुषमा परमा शोभा, कान्तिरित्यर्थः । महार्घतां महामूल्यताम्, अत्यन्तोत्कृष्टतामित्यर्थः । जगाम तीर्थान्तरसम्मेलनेन जाह्नव्याः पावनत्वोत्कर्ष इव विनयगुणैः पुत्रादौ स्नेहोत्कर्ष इव तथा दैवानुकूल्येन नीतेः फलप्राप्तिः इव तस्याः सुषमायास्तु लोकोत्तरचमत्कारित्वमिति भावः ॥ ५४ ॥**

विशिष्ट ( 'प्रयाग' आदि ) तीर्थोंसे गङ्गाके समान, विनयादि गुणों ( या—विनयादि गुणसम्पन्न पुत्रादिकों ) से सहज स्नेहके उत्पत्तिस्थानके समान तथा भाग्यसे नीतिके समान निर्मल ( चमकीले ) विशिष्ट भूषणोंसे उस ( दमयन्ती ) की परमोत्कृष्ट शोभाने अत्यन्त श्रेष्ठताको पा लिया । [ अथवा—'उज्ज्वल' पदको 'विशिष्ट तीर्थ' गुण तथा भाग्यका भी विशेषण मानकर 'उत्तम विशिष्ट तीर्थोंसे' इत्यादि अर्थयोजना करना चाहिये ) । [ जिस प्रकार स्वयं पवित्र गङ्गा का माहात्म्य प्रयागादि श्रेष्ठ तीर्थोंके सम्बन्धसे निष्कपट पुत्रादि स्वजनोंमें होनेवाला सहजस्नेह उनके निष्कपट विनयादि गुणोंसे तथा स्वतः फलदायिनी नीति अनुकूल भाग्योंसे अधिक प्रशस्त हो जाती हैं; उसी प्रकार दमयन्तीकी सहज उत्कृष्ट शोभा विशिष्ट भूषणोंके धारण करनेसे और भी अधिक बढ़ गयी ] ॥ ५४ ॥

**नलात् स्ववैश्वस्त्यमनाप्तुमानता नृपस्त्रियो भीममहोत्सवागताः ।**
**तदङ्घ्रिलाक्षामदधन्त मङ्गलं शिरःसु सिन्दूरमिव प्रियायुषे ॥ ५५ ॥**

**नलादिति । नलात् नलसकाशात्, स्वस्य वैश्वस्त्यं वैधव्यम् । 'विश्वस्ताविधवे समे' इत्यमरः । अनाप्तुम् अप्राप्तुम्, आनताः प्रणताः, अन्यथा नलः स्वभर्तॄन् वैरायमाणान् हनिष्यतीति भयात् भैमीं प्रणताः इति भावः । भीमस्य महोत्सवे भैमीविवाहे इति यावत् आगताः नृपस्त्रियः अन्यराजपत्न्यः, राजकान्ताः इति यावत् । प्रियायुषे स्वभर्तृजीवनार्थं, न केवलं प्रणामेन मङ्गलाचरणादपि स्वभर्तृजीवनाय**

---

१. 'जह्नुनन्दनी' इति पाठान्तरम् ।

इति भावः, मङ्गलं मङ्गलकरम्, अवैधव्यसूचकमिति भावः, सिन्दूरमिव तस्याः भैम्याः, अङ्घ्र्योः पादयोः, लाक्षां प्रणामात् संसक्तम् अलक्तकं, शिरःसु स्वस्वसीमन्तेषु, अदधन्त अधारयन् 'दध धारणे' इति धातोः लङि तङ्। स्त्रीणां ललाटे सिन्दूरधारणम्, अवैधव्यसूचकम् इति भावः ॥ ५५ ॥

नलसे अपने वैधव्यको नहीं पानेके लिए ( दमयन्तीके चरणोंमें ) नत्र, राजा भीमके उत्सवमें आयी हुई राजपत्नियोंने (अपने) पतिके जीलानेके लिए सिन्दूरके समान दमयन्तीके चरणोंके महावरको मस्तकोंमें धारण किया। [राजपत्नियोंने सोचा कि यदि हमलोग दमयन्तीके विवाहमें नहीं सम्मिलित होंगी तो नल हमलोगोंके पतियोंको युद्धमें मारकर हमें विधवा कर देंगे, इस भयसे उस विवाहोत्सवमें वे राजपत्नियां आयीं तथा दमयन्तीके चरणोंमें प्रणाम करनेसे उनके मस्तकोंमें दमयन्तीके चरणोंका गीला महावर लग गया, वह ऐसा मालूम पड़ता था कि राजपत्नियोंने अपने-अपने पतियोंके आयुष्यके लिए मङ्गलकारक लालसिन्दूर[1] लगा लिया हो। सधवा स्त्रियोंका मङ्गलार्थ मस्तकमें सिन्दूर धारण करना आचार है ] ॥ ५५ ॥

अमोघभावेन सनाभितां गताः प्रसन्नगीर्वाणवराक्षरस्रजाम् ।
ततः प्रणम्याधिजगाम सा ह्रिया गुरुर्गुरुब्रह्मपतिव्रताशिषः ॥ ५६ ॥

अमोघेति । ततः प्रसाधनानन्तरं, ह्रिया लज्जया, गुरुः भारवती, अतिलज्जितेत्यर्थः, सा भैमी, प्रणम्य गुर्वादीन् अभिवाद्य, अमोघभावेन अवैफल्यगुणेन, प्रसन्नानां गीर्वाणानाम् इन्द्रादिदेवतानां, वराक्षरस्रजां वरदानरूपवाग्गुम्फानां, सनाभितां सादृश्यं, गताः प्राप्ताः, तद्वदमोघ इत्यर्थः, गुरूणां पित्रादीनां, ब्रह्मणां ब्राह्मणानां, पतिव्रतानां च आशिषः आशीर्वादान्, अधिजगाम लेभे ॥ ५६ ॥

इस ( प्रसाधन-कार्य ) के बाद लज्जासे अतिशय भारवती ( दबी हुई-सी ) उस (दमयन्ती) ने सफलता अर्थात् सत्यताके कारण, प्रसन्न देवों ( इन्द्र, अग्नि, यम और वरुण ) के वरोंके अक्षरमालाओंके समानताको प्राप्त ( इन्द्रादि देवोंके वरदानके समान सफल होनेवाले), माता-पितादि गुरुजनों, ब्राह्मणों तथा पतिव्रताओंके आशीर्वादोंको प्राप्त किया ॥

तथैव तत्कालमथानुजीविभिः प्रसाधनासञ्जनशिल्पपारगैः ।
निजस्य पाणिग्रहणक्षणोचिता कृता नलस्यापि विभोर्विभूषणा ॥ ५७ ॥

तथैवेति । अथ अस्मिन् अवसरे इत्यर्थः, सः एव कालः यस्मिन् कर्मणि तत् तत्कालं भैमीप्रसाधनसमकालमित्यर्थः, तथैव यथा भैम्याः तथैव, प्रसाधनासञ्जनं प्रसाधनकरणं, तत् एव शिल्पं विद्याविशेषः, तस्य पारगैः पारदर्शिभिः 'अन्तात्यन्ता-

1. 'हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा । कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता ॥' इति स्कान्दवचनम्, इति नारायणभट्टः ।

इत्यादिना ड-प्रत्ययः । अनुजीविभिः सेवकैः, निजस्य आत्मीयस्य, विभोः स्वामिनः, नलस्यापि पाणिग्रहणक्षणोचिता विवाहकालोचिता, विभूषणा प्रसाधना, कृता ॥५७॥

इसके बाद उस समयमें उसीप्रकार ( दमयन्तीके स्नान एवं भूषणादि प्रसाधनके समान ही ) शृङ्गार करनेकी कलामें पारङ्गत नौकरोंने सर्वसमर्थ अपने स्वामी नलका विवाहोचित प्रसाधन ( शृङ्गार ) किया ॥ ५७ ॥

नृपस्य तत्राधिकृताः पुनः पुनर्विचाय तान् बन्धमवापयन्[1] कचान् ।
कलापलीलोपनिधिर्गरुत्त्यजः स यैरपालापि कलापिसंसदः ॥ ५८ ॥

नृपस्येति । तत्र प्रसाधने, अधिकृताः नियुक्ताः, तान् वक्ष्यमाणान्, नृपस्य नलस्य, कचान् केशान्, विचार्य अपराधम् अनुचिन्त्य, पुनः पुनः बन्धं संयमनविशेषम्, अवापयन् प्रापितवन्तः, 'अवापिपन्' इति पाठे तु—आपेर्णौ चङ् द्वितीयस्यैकाचो द्विर्भावः । यैः कचैः केशैः, गरुतः पत्नान्, त्यजतीति गुरुत्यग् तस्याः शरदि मयूराणां पक्षपतनं भवतीति प्रसिद्धिः कलापिसंसदः मयूरसङ्घस्य, सः पक्षत्यागकाले कृत इत्यर्थः, कलापस्य बर्हभारस्य, लीला विलासः, स एव उपनिधिः न्यासः, बर्हमोचनकालकृतो निक्षेप इत्यर्थः, 'पुमानुपनिधिर्न्यासः' इत्यमरः, अपालापि अपलपितः, पुनः बर्होदयेऽपि न प्रत्यर्पित इत्यर्थः, अतो बन्धनमुचितमिति भावः ॥

राजा ( नल ) के केशप्रसाधनमें दत्ताधिकार लोगोंने बार-बार विचारकर ( 'किस केशका कितना अपराध है' यह बार-बार विचारकर, अथवा—धूपके धूँएँ तथा केशोंका एक रंग होनेसे 'कौन केश है ? तथा कौन धूँआँ है ?' यह बार-बार विचारकर, अथवा—'केशोंमें लगाया जानेवाला कौन फूल किस स्थानपर अधिक शोभित होगा ?' यह बार-बार विचारकर ) उन केशोंको बांधा, शरदृतुमें पङ्खोंको छोड़ने ( गिराने ) वाले मयूर-समूहके जिन केशोंने कलाप-विलासके न्यास ( धरोहर ) को नहीं वापस किया था । [ शरदृतुमें मोरोंके पंख गिरते हैं । जिन मयूर-समुदायके केशोंने नलके केश-समूहसे प्राप्त न्यास ( धरोहर, थाती ) को पुनः पङ्ख होने पर भी वापस नहीं दिया, उनका अपराधानुसार बार-बार बांधना उचित ही है, क्योंकि राजाके द्वारा अधिकृत व्यक्ति न्यास वापस नहीं देनेवाले व्यक्तिको उसके अपराधका बार-बार विचारकर बांधते हैं ॥ नलके केश-समूह मयूरोंके कलापसे अतिशय अधिक सुन्दर थे ] ॥ ५८ ॥

पतत्रिणां द्राघिमशालिना धनुर्गुणेन संयोगजुषां मनोभुवः ।
कचेन तस्यार्जितमार्जनश्रिया समेत्य सौभाग्यमलम्भि कुड्मलैः ॥५९॥

पतत्रिणामिति । कुड्मलैः अर्द्धविकशितकुसुमैः कर्त्तृभिः, द्राघिमशालिना दैर्घ्यशोभिना 'प्रियस्थिर—' इत्यादिना दीर्घशब्दस्य द्राघिमादेशः । अर्जितमार्जनश्रिया सम्पादितकङ्कतिकादिसंस्कारसम्पदा, तस्य नलस्य, कचेन केशपाशेन, समेत्य

[1] 'बन्धमवापिपन्' इति पाठान्तरम् ।

मिलित्वा, द्राघिमशालिना अर्जितमार्जनश्रिया सम्पादितसिक्थकादिघर्षणसम्पदा, धनुर्गुणेन अलिमालारूपमौर्व्या, संयोगजुषां सन्धानभाजां, मनोभुवः कुसुमेषोः, पतत्रिणां बाणानां, सौभाग्यम् इव सौभाग्यं सौन्दर्यम्, अलम्भि लब्धम् इति निदर्शनाभेदः ॥ ५९ ॥

अतिशय लम्बाईसे शोभमान तथा ककहीसे झाड़े गये नलके केशोंके साथ संयुक्त अर्थात् केशोंमें लगाये गये (अर्द्धविकसित कुन्दादि पुष्पोंकी) कलियोंने अतिशय लम्बाईसे शोभमान तथा मोम आदिसे घर्षित कर चिकनी की गयी ( कामदेवके ) धनुषकी (कृष्णवर्ण भ्रामररूपी) डोरीसे संयुक्त बाणोंकी शोभाको प्राप्त किया। [ यहांपर नलके केशसमूहकी भ्रमरश्रेणिरूपिणी कामदेवके धनुषकी डोरीसे, पुष्पकलियोंकी कामबाणोंसे तथा नलकी कामदेवसे समानता की गयी है ] ॥ ५९ ॥

अनर्घ्यरत्नौघमयेन मण्डितो रराज राजा मुकुटेन मूर्द्धनि ।
व[1]नीयकानां स हि कल्पभूरुहस्ततो विमुञ्चन्निव मञ्जुमञ्जरीम्[2] ॥६०॥

अनर्घ्येति। हि यस्मात्, स राजा नलः, वनीयकानाम् अर्थिनां 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः, कल्पभूरुहः कल्पवृक्षः, ततः अर्थिकल्पवृक्षत्वात्, अनर्घ्यरत्नौघमयेन अमूल्यमणिनिचयप्रचुरेण, मुकुटेन मूर्द्धनि मण्डितः अलङ्कृतः सन्, मञ्जुं फलदां मनोहराञ्च, मञ्जरीं सकलिकां बालशाखां, विमुञ्चन् अर्थिनां त्यजन् इव, रराज इत्युत्प्रेक्षा ॥ ६० ॥

बहुमूल्य ( दिव्य ) रत्नजटित मुकुटको मस्तक पर धारण किये हुए राजा ( नल ) याचकोंके कल्पवृक्ष होनेसे उस ( कल्पवृक्ष ) से मनोहर ( रत्नमयी ) मञ्जरियोंको छोड़ते हुएके समान शोभने लगे। [ सामान्य वृक्षके पल्लव मञ्जरी आदि पार्थिव होते हैं, किन्तु कल्पवृक्षके वे रत्नमय होते हैं, अत एव याचकोंके लिए अभीष्ट दान देनेवाले नलरूप कल्पवृक्षका बहुमूल्य रत्न-समूह रचित मुकुटसे रत्नमयी मञ्जरियोंका छोड़ना उचित ही है ॥ मस्तकपर धारण किये गये बहुमूल्य दिव्य रत्नरचित मुकुटसे ऊपरकी ओर छिटकते हुए कान्ति-समूहसे नल शोभित हो रहे थे ] ॥ ६० ॥

नलस्य भाले मणिवीरपट्टिकानिभेन लग्नः परिधिर्विधोर्बभौ ।
तदा शशाङ्काधिकरूपतां गते तदानने मा[3]तुमशक्तिमुद्वहन् ॥ ६१ ॥

नलस्येति। विधोः इन्दोः, परिधिः परिवेषः, नलस्य भाले ललाटे, मणिवीरपट्टिकानिभेन मणिमयवीरधार्यपट्टमिषेण, लग्नः सन्, तदा प्रसाधनकाले, शशाङ्कात् अधिकं रूपं स्वरूपं सौन्दर्यं वा यस्य तस्य भावः तत्तां, गते प्राप्ते, चन्द्रापेक्षया बृहत्परमिते अधिकसुन्दरे वा इत्यर्थः, तदानने नलमुखे, मातुम् अभिव्याप्तुम्

१. 'वनीपकानाम्' इति पाठान्तरम् । २. '—मञ्जरीः' इति पाठान्तरम् ।
३. 'मातुमशक्नुवन्निव' इति पाठान्तरम् ।

अशक्तिम् उद्वहन् अशक्य इव, बभौ। परिवेषः चन्द्रं परिवेष्ट्य शोभते, किन्तु अत्रैकदेशवर्त्तित्याधाराधेययोः आनुरूप्याभावात् अधिकालङ्कारः 'आधाराधेययोरानुरूप्याभावादधिको मतः' इति लक्षणात्। वस्तुतोऽत्र मणिवीरपट्टिकापह्नवेन चन्द्रपरिधेर्नलमुखैकदेशवर्त्तित्वोत्प्रेक्षणात् सापह्नवोत्प्रेक्षालङ्कारः, तत्रोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ६१ ॥

रत्नोंसे जड़े हुए वीरपट्टिकाके कपटसे नलके ललाटपर लगा हुआ चन्द्रमाका परिधि (घेरा) उस समय (प्रसाधना-कालमें, या निकट भविष्यमें भावी प्रियासङ्गमकालमें) चन्द्रमासे अधिक सौन्दर्य (या—परिमाण) को प्राप्त उस (नल) के मुखमें सर्वत्र व्याप्त होनेमें असमर्थ होते हुएके समान शोभता था। [ चन्द्रमाके चारों ओर परिधि रहता है, किन्तु नलका मुख चन्द्रमासे अधिक सुन्दर (या—परिमाणमें विशाल) था, अतः वह परिधि उस नलके सम्पूर्ण मुखको घेरनेमें असमर्थ होकर उसके एक भाग (केवल ललाट) को ही घेरकर शोभित होता था। जो परिणाममें छोटा रहता है, उसीके सम्पूर्ण भागको अलङ्कृत किया जा सकता है, अधिक परिमाणवालेके सम्पूर्ण भागको अलङ्कृत करना अशक्य होनेसे उसके किसी एक भागको ही अलङ्कृत किया जाता है; इसी कारण लघुपरिमाणवाले चन्द्रके चारों ओर परिधि रहता है और महापरिमाण नल-मुखके एक भाग (ललाट मात्र) में ही मणिजटित वीरपट्टिकाके व्याजसे वह परिधि रहा॥ नलका मुख चन्द्रमाकी अपेक्षा अधिक सुन्दर (एवं परिमाणमें अधिक) है ] ॥ ६१ ॥

बभूव भैम्याः खलु मानसौकसं जिघांसतो धैर्यभरं मनोभुवः।
उपभ्रु तद्वर्त्तुलचित्ररूपिणी¹ धनुःसमीपे गुलिकेव सङ्गता ॥ ६२ ॥

बभूवेति। भैम्याः मानसं स्वान्तं सरोविशेषश्च 'मानसं सरसि स्वान्ते' इति ·। तत् ओकः स्थानं यस्य तं मनोनिष्ठं हंसञ्च, 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः' इत्यमरः, धैर्यभरं धैर्यातिशयं, धैर्यधनमिति यावत् जिघांसतः हन्तुमिच्छतः हन्तेः सन्नन्ताल्लटः शत्रादेशः, 'सन्यङोः' इति द्विर्भावः 'अभ्यासाच्च' इति हस्य कुत्वम्, 'अज्झनगमां सनि' इति दीर्घः, मनोभुवः कामस्य, धनुःसमीपे गुलिका या पक्षिवेधगुटिका सा, उपभ्रु भ्रूसमीपे, सामीप्यस्याव्ययीभावे नपुंसकह्रस्वत्वम्, नलस्येति शेषः, सङ्गता मिलिता, तस्य नलस्य, यत् वर्त्तुलं चित्रं तिलकं, तद्रूपिणी इव, 'चित्रं स्यादद्भुतालेख्यतिलकेषु' इति विश्वः, बभूव खलु इत्युत्प्रेक्षा, नलः सद्यः भैमीचित्ताकर्षकं तिलकं दधार इति भावः। 'त्रिपुण्ड्रं सुरविप्राणां वर्त्तुलं नृपवैश्ययोः। अर्द्धचन्द्रन्तु शूद्राणामन्येषामूर्द्ध्वपुण्ड्रकम् ॥' इति स्मरणाद्वर्त्तुलेत्युक्तम् ॥ ६२ ॥

दमयन्तीके मानस (हृदय, पक्षा०—मानसरोवर ह्रद) में रहनेवाले (हंसरूप) धैर्यातिशयको मारनेकी इच्छा करनेवाले कामदेवके धनुषके पासमें सज्जीकृत दोनों भौंहोंके

1. '—रूपता' इति पाठान्तरम्।

इसमें उस ( नल ) के गोलाकार तिलकरूपिणी गोली ( पक्षीको मारनेके लिए मिट्टीकी बनायी गयी छोटी-सी गोली ) के समान शोभती थी। [ नलके दोनों भौंहोंके मध्यमें लगाया गया गोलाकार तिलक ऐसा मालूम पड़ता था कि दमयन्तीके हृद्गत धैर्यातिशयरूप हंसको मारनेके लिए इच्छुक कामदेवने धनुषपर गोली चढ़ायी हो॥ यहांपर दमयन्ती धैर्यातिशयको हंस, नलभ्रूद्वयको कामधनुष तथा तिलकको गोलीकी उत्प्रेक्षा की गयी है॥ दमयन्ती नलके तिलकको देखकर अपने मानसवासी धैर्याधिक्य को छोड़ अर्थात् अधीर होकर तत्काल कामवशीभूत हो जायेगी ] ॥ ६२ ॥

**अचुम्बि या चन्दनबिन्दुमण्डली नलीयवक्त्रेण सरोजतर्जिना।**
**श्रियं श्रिता काचन तारका सखी कृता शशाङ्कस्य तयाऽङ्कवर्त्तिनी॥**

अचुम्बीति। सरोजतर्जिना पद्मधिक्कारिणा, नलस्य इदं नलीयम्। 'वा नामधेयस्य—' इति वृद्धसंज्ञायां वक्तव्यत्वात् 'वृद्धाच्छः' इति छ प्रत्ययः, वक्त्रं तेन नलमुखचन्द्रेण इत्यर्थः। सरोजतर्जिविशेषणसामर्थ्यात् वक्ष्यमाणतारायोगसामर्थ्याच्च; या चन्दनबिन्दोः मण्डली बिम्बं, पूर्वोक्तवर्त्तुलतिलकमित्यर्थः। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। अचुम्बि चुम्बिता धृता, इत्यर्थः। तया चन्दनबिन्दुमण्डल्या, शशाङ्कस्य चन्द्रस्य, अङ्कवर्त्तिनी, समीपवर्त्तिनी, श्रियं श्रिता श्रीधारिणी सती, काचन तारका दिनकृतसमागमा काचिदश्विन्यादीनाम् अन्यतमा तारका, सखी कृता सहचरी कृता। चन्दनबिन्दुतिलकेन तु नलमुखं दिवसे तारायुक्तचन्द्रवच्चकासामास इति भावः। उत्प्रेक्षा, सा च इवाद्यप्रयोगात् गम्या॥ ६३ ॥

कमलको वर्जित ( गोलाकार या अधिक सुगन्धित होनेसे, अथवा—चन्द्ररूप होनेसे तिरस्कृत ) करनेवाले नलके मुखने जिस गोलाकार चन्दन-तिलकको लगाया, उसने चन्द्रमाके मध्यमें ( या—समीपमें ) रहनेवाली शोभासम्पन्न किसी तारा ( अश्विनी आदि ताराओंमेंसे किसी एक तारा ) को सखी बना लिया अर्थात् उसके समान शोभित हुई। [ चन्दन-बिन्दुके तिलकसे नलका मुख दिनमें तारायुक्त चन्द्रमाके समान शोभित हुआ, अथवा—यदि कमलको तर्जित करनेवाले चन्द्रमाके बीचमें रोहिणी आदि कोई तारा हो तो वह चन्द्राकार नल-मुखके मध्यगत गोलाकार चन्दन-तिलककी समानता प्राप्त कर सकती है, किन्तु ऐसा सम्भव नहीं होनेसे नलका तिलकयुक्त मुख कमल तथा चन्द्रमा—दोनोंसे सुन्दर अधिक हुआ ] ॥ ६३ ॥

**न यावदग्निभ्रमसेत्युदूढतां नलस्य भैमीति हरेर्दुराशया।**
**स बिन्दुरिन्दुः प्रहितः किमस्य सा न वेत्ति भाले पठितुं लिपीमिव॥**

नेति। सः पूर्वोक्तः, बिन्दुर्वर्त्तुलचन्दनतिलकः, अग्निभ्रमं यावत् यावदग्निभ्रमं, वैवाहिकाग्निप्रदक्षिणीकरणपर्यन्तमित्यर्थः। 'पतित्वं सप्तमे पदे' इति स्मृतेः, वैवाहिका-

१. 'काञ्चन' इति पाठान्तरम्।

ग्निसमीपे यावत् सप्तपदीगमनं न भवेत् तावत् भैमी नलस्य भार्या न भवेदिति तादृशाग्निप्रदक्षिणीकरणपर्यन्तमिति भावः। 'यावदवधारणे' इत्यव्ययीभावः। भैमी नलस्य उदूढताम् उद्वाहसंस्कृतत्वं, भार्यात्वमित्यर्थः। न एति न प्राप्नोति, इति हरेः इन्द्रस्य, दुराशया वृथाभिलापेण हेतुना, सा भैमी, अस्य नलस्य, किं, भवेत्? इति शेषः, न वा? इति भाले नलस्य ललाटे, लिपीं ब्रह्मकर्तृकललाटलिखितम्, 'कृदिकारात्—' इतीकारः। पठितुं वाचयितुं, प्रहितः इन्द्रेण प्रेषितः, इन्दुः इव, आभातीति शेषः। उत्प्रेक्षा ॥ ६४ ॥

नलके ललाटमें चन्द्ररूप वह गोलाकार चन्दनतिलक ऐसा मालूम पड़ता था कि 'जब तक दमयन्ती अग्निकी प्रदक्षिणा करके नलकी भार्या नहीं बन जाती, तब तक अर्थात् उसके पहले ही नलके ललाटमें ब्रह्माने दमयन्तीको लिखा है या नहीं' इस ब्रह्मलिखित नलके ललाटरेखामें ब्रह्मलिपिको पढ़नेके लिए इन्द्रने दुरभिप्रायसे चन्द्रमाको भेजा हो। [ यद्यपि दमयन्तीका स्वयम्वर समाप्त हो गया और उसने हमलोगोंको छोड़कर नलका वरण कर लिया, किन्तु 'नलके ललाट ( भाग्य ) में दमयन्तीको ब्रह्माने लिखा है या नहीं' इस बातको जब तक दमयन्ती अग्निकी प्रदक्षिणा ( सप्तपदी कर्म ) करके नलकी भार्या नहीं बन जाती, उसके पहले ही नलकी भाग्य-लिपिको पढ़नेके लिए चन्द्रमाको इन्द्रने भेजा हो। उस ( इन्द्र ) का दुरभिप्राय यह था कि सप्तपदी कर्म हो जानेके बाद दमयन्ती नलकी भार्या हो जायेगी, अतः उसके पहले ही चन्द्रमासे नलके भाग्यकी ब्रह्म-लिपि पढ़वाकर यदि नलके भाग्यमें दमयन्तीको ब्रह्माने नहीं लिखा होगा तो सम्भव है, अब ( स्वयम्वर समाप्त हो जानेपर ) भी प्रयत्न करनेपर हमें दमयन्ती भार्यारूपमें प्राप्त हो जाय॥ नलके ललाटमें गोलाकार चन्दन-तिलक पूर्णचन्द्रके समान शोभित हो रहा था ] ॥ ६४ ॥

कपोलपालीजनितानुबिम्बयोः[1] समागमात् कुण्डलमण्डलद्वयी।
नलस्य तत्कालमवाप चित्तभूरथस्फुरच्चक्रचतुष्कचारुताम् ॥ ६५ ॥

कपोलेति। नलस्य कुण्डलमण्डलद्वयी कर्णवेष्टनभूषणयुगली, कपोलपाल्यां जनितयोः स्वच्छगण्डमण्डलसङ्क्रान्तयोः, अनुबिम्बयोः स्वप्रतिबिम्बयोः, समागमात् मेलनात्, तत्कालं तस्मिन् काले, चित्तभुवः कामस्य, रथे स्फुरतः चक्रचतुष्कस्य चारुताम् अवाप। रथस्य चतुश्चक्रत्वात् मण्डलाकारकुण्डलद्वयी स्वप्रतिबिम्बद्वयेन सह चतुष्टयत्वं प्राप्य रथचक्रचतुष्टयत्ववती इव भातीत्यर्थः। अत्र रथचक्रचारुतायाः कुण्डलेऽसम्भवात् तच्चारुतामिव चारुतामिति निदर्शनालङ्कारः ॥ ६५ ॥

नलके दोनों कुण्डलोंने ( स्वच्छ ) कपोलमण्डलमें उत्पन्न अपने प्रतिबिम्बके सम्बन्धसे उस ( प्रसाधन-) समयमें कामदेवके रथके सुन्दर चार पहियोंकी शोभाको प्राप्त किया। [ गोलाकार दो कुण्डल तथा स्वच्छ कपोलमण्डलमें पड़े हुए उनके दो प्रतिबिम्ब—इस प्रकार

---

१. 'जनिजानु—' इति पाठान्तरम्।

कामदेवके रथकी सुन्दर चार पहियोंके समान वे नलके कुण्डल शोभने लगे ] ॥ ६५ ॥

श्रिताऽस्य कण्ठं गुरुविप्रवन्दनाद् विनम्रमौलेश्चिबुकाग्रचुम्बिनी ।
अवाप मुक्तावलिरास्यचन्द्रमःस्रवत्सुधातुन्दिलबिन्दुवृन्दताम् ॥ ६६ ॥

श्रितेति । गुरूणां मातापित्रादीनां, विप्राणाञ्च वन्दनात् प्रणामात्, विनम्रमौलेः नम्रशिरसः, अस्य नलस्य, चिबुकं मुखाधोभागः, मुखस्य 'अधस्ताच्चिबुकम्' इत्यमरः । तस्य अग्रं चुम्बति स्पृशति इति तच्चुम्बिनी, कण्ठं श्रिता मुक्तावलिः मौक्तिकमाला, आस्यचन्द्रमसः मुखचन्द्रात्, स्रवन्त्याः सुधायाः तुन्दिलानां स्थूलानां, बिन्दूनां वृन्दतां समूहत्वम्, अवाप तदिव बभौ इति भावः । अत्र गम्योत्प्रेक्षा ॥ ६६ ॥

गुरुजनों एवं ब्राह्मणोंकी वन्दनासे नम्र मस्तकवाले इस ( नल ) की ठुड्ढीको स्पर्श करती हुई कण्ठमें पहनी गयी मुक्तामाला मुखरूपी चन्द्रमासे बहते हुए अमृतके बड़ी-बड़ी बूँदोंके भावको प्राप्त किया अर्थात्......बूँदोंके समान शोभित हुई । [ मालाके मोती बड़े-बड़े, स्वच्छतम तथा गोलकार थे ॥ चन्द्रमाके दर्शनके समान प्रणाम-नम्र नलके देखनेसे गुरुजनों एवं ब्राह्मणोंको आह्लाद हुआ ] ॥ ६६ ॥

यदुद्धता श्रीर्बलवान् बलं द्विषन् बभूव यस्याजिषु वारणेन सः ।
अपूपुरत् तान् कमलार्थिनो घनान् समुद्रभावं स बभार तद्भुजः ॥ ६७ ॥

यदिति । श्रीः सम्पत्तिः लक्ष्मीश्च 'शोभासम्पत्तिपद्मेषु लक्ष्मीः श्रीरिव कथ्यते' इति विश्वः । यदुद्धता यस्मात् भुजात् समुद्राच्च उद्भूता, यद्वा यदिति भिन्नं पदम् अव्ययं पञ्चम्यर्थे योज्यम् । बलं सैन्यं, द्विषन् विरुन्धन्, सः नलः, आजिषु युद्धेषु, यस्य भुजस्य कर्तृकेण, वारणेन शत्रुनिवारणेन, बलवान् प्रबलः, बभूव, अन्यत्र— सः प्रसिद्धः, बलं द्विषन् बलासुरस्य द्विट् इन्द्रः । 'द्विषोऽमित्रे' इति शतृप्रत्यये तस्य लादेशत्वाभावात् 'तृन्' इति प्रत्याहारात् 'न लोका—' इत्यादिना षष्ठीप्रतिषेधे 'द्विषः शतुर्वा' इति वैकल्पिकषष्ठीविधानात् पक्षे कर्मणि द्वितीया । यस्य समुद्रस्य सम्बन्धिना, वारणेन ऐरावतगजेन साधनेन, आजिषु बलवान् बभूव, 'बलं सैन्यं बलं स्थौल्यं बलं शक्तिर्बलोऽसुरः' इति शाश्वतः । यः भुजः घनान् सान्द्रान्, निरन्तरमागतानित्यर्थः । तान् दारिद्र्येण प्रसिद्धान्, कमलार्थिनः लक्ष्मीकामान्, याचकानित्यर्थः । अन्यत्र—यः समुद्रः, तान् कमलार्थिनः, जलार्थिनः; 'कमला श्रीर्जलं पद्मं कमलं कमलो मृगः' इति शाश्वतः । घनान् अम्बुदान्, मेघानित्यर्थः । 'घनं सान्द्रं घनं वाद्यं घनो मुस्ता घनोऽम्बुदः' इति शाश्वतः । अपूपुरत् पूरयामास, धनैर्जलैश्चेति शेषः । पूरयतेर्लुङि 'णौ चङि' इति ह्रस्वे 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घः । सः तद्भुजः

१. 'यतोऽजनि' इति पाठान्तरम् । २. 'पपार यस्तान्, इति पाठान्तरम् ।

नलबाहुः, मुद्रया अङ्गुरीयकेण सह वर्त्तते इति समुद्रः साङ्गुरीयकः, सम् उनत्तीति समुद्रः सागरश्च । सा विपञ्चीत्यादिना जलधेः कारणादिकः ट-प्रत्ययः । तस्य भावं समुद्रत्वं, बभार मुद्रिताभरणम् आमुमोचेति प्रकृतार्थः । सागरार्थस्तु ध्वनिरेव विशेषणविशेष्ययोरुभयोरपि श्लिष्टत्वादिति ॥ ६७ ॥

उस ( नल ) के बाहुने अंगूठियोंको पहना ( अथवा—दण्डनीयोंको दण्ड देने तथा सज्जनोंको रक्षासे राजधर्मके पालन करनेसे नियमके युक्तत्व ( सहितत्व ) को प्राप्त किया, अथवा—समुद्रत्वको प्राप्त किया ); जिस ( नल-बाहु, पक्षा०—समुद्र ) से सम्पत्ति ( या शोभा, पक्षा०—लक्ष्मी ) उत्पन्न हुई है तथा युद्धोंमें जिस ( नल-बाहु ) के निवारण ( शत्रुमर्दन ) करनेसे शत्रु-सेनासे विरोध ( युद्ध ) करते हुए वे न बलवान् हुए, ( अथवा—जिसके निवारण करनेसे 'बलवान् होते हुए वे नल शत्रुका पराभव किये। अथवा—युद्धोंमें शत्रुसे विरोध करते ( लड़ते ) हुए वे ( नल ) जिस ( बाहु ) के युद्धसे बलवान् हुए । अथवा—शत्रुसे विरोध करता ( लड़ता ) हुआ वह ( अति प्रसिद्ध भी ) शत्रु युद्धोंमें जिस ( नल-बाहु ) के रोकनेमें बलवान् ( समर्थ ) नहीं हुआ । अथवा—युद्धोंमें शत्रुसे विरोध करता हुआ वह शत्रु जिस ( नल-बाहु ) के युद्धमें बलवान् ( समर्थ ) नहीं हुआ । अथवा—गजराज वह ( सुप्रसिद्ध ) ऐरावत जिस ( नल-बाहु ) के बलका द्वेष अर्थात् जिसकी सामर्थ्यके साथ स्पर्द्धा करता हुआ युद्धोंमें बलवान् ( समर्थ ) हुआ अर्थात् हीन बलवाला होकर भी 'वरं विरोधोऽपि समं महात्मभिः ( किरात १।८ ) अर्थात् बड़ोंके साथ विरोध करना भी अच्छा है' इस भारवि महाकविकी उक्तिके अनुसार जिस (नलबाहु) के साथ स्पर्द्धा करनेसे लोकमें बलवान् कहलाया । अथवा—युद्धोंमें बलको जीतनेवाले वे ( सुप्रसिद्ध ) इन्द्र भी जिस ( नल-बाहु ) के साथ युद्धमें बलवान् ( समर्थ ) नहीं हुए । अथवा—( 'ब' तथा 'व' का अभेद मानकर ) युद्धोंमें बलको जीतनेवाले भी वह इन्द्र जिस ( नल-बाहु ) के साथ युद्धमें बलवान् हुए अर्थात् भाग गये[1] ।······इत्यादि अर्थोंकी कल्पना करनी चाहिये ); और जिस ( नल-बाहु ) ने धनाभिलाषी बहुतसे याचकोंको ( अभिलषित धन देकर ) पूर्ण किया, ( अथवा—जिस ( नल-बाहु ) ने सुन्दर वधुओंके इच्छुक बहुतोंको पूर्ण किया अर्थात् बहुतोंका सुन्दर स्त्रियोंके साथ विवाह कराया । अथवा समुद्रपक्षमें—जिस ( समुद्र ) से उत्पन्न ऐरावतसे बलके शत्रु ( इन्द्र ) बलवान् ( सामर्थ ) हुए, जिस (समुद्र ) ने जलाभिलाषी मेघोंको पूर्ण किया ) ॥ ६७ ॥

कृतार्थयन्नर्थिजनाननारतं बभूव तस्यामरभूरुहः करः ।
तदीयमूले निहितं[2] द्वितीयवद् ध्रुवं दधे कङ्कणमालवालताम् ॥ ६८ ॥

कृतार्थयन्निति । तस्य नलस्य, करः हस्तः, अनारतम् अश्रान्तम्, अर्थिजनान्

---

१. अत्र 'वलनं वलस्तद्वान्' इति विग्रहो बोध्यः ।

२. अत्र 'विनिवेशितं तदा' इति पाठः साधुः इति प्रकाशः ।

कृतार्थयन् सार्थान् कुर्वन्, अमरभूरुहः कल्पवृक्षः, बभूव। तदीये करकल्पवृक्षसम्बन्धिनि, मूले मणिबन्धे, निहितम् अर्पितं, द्वितीयवत् सद्वितीयं, वैवाहिकसूत्रमयमाङ्गलिककङ्कणान्तरशालित्वात् द्वितीयकङ्कणसहितमित्यर्थः। कङ्कणं कनकवलयम्, आलवालतां दधे दधार, ध्रुवम् इत्युत्प्रेक्षायाम्। वृक्षमूलेऽपि आलवालद्वयं भवति, अतस्तदीयकरमूलेऽपि कङ्कणद्वयं वर्त्तते इति भावः॥ ६८॥

याचकोंको सर्वदा कृतार्थ करता हुआ उस (नल) का हाथ कल्पवृक्ष बन गया और उसके मूल (जड़, पक्षा०—मणिबन्ध) में पहना गया (विवाह-सम्बन्धी माङ्गलिक सूत्ररूप) दूसरे कङ्कणसे युक्त सुवर्णकङ्कण मानो आलवालभावको धारण किया अर्थात् हाथरूप कल्पवृक्षकी जड़में वे दोनों कङ्कण उस कल्पवृक्षके दो थालेके समान हुए। (पाठा०—उसके मूलमें पहना गया कङ्कण उस (प्रसाधन-) कालमें मानो आलवालभावको धारण किया)॥६८॥

रराज दोर्मण्डनमण्डलीजुषोः स वज्रमाणिक्यसितारुणत्विषोः।
मिषेण वर्षन् दशदिङ्मुखोन्मुखौ यशःप्रतापाववनीजयार्जितौ ॥६९॥

रराजेति। सः नलः, दोर्मण्डने बाहुभूषणे, मण्डलीजुषोः श्रेणीभाजोः, वज्राणां हीराणां, माणिक्यानां पद्मरागाणाञ्च, यथासङ्ख्यं सितारुणयोः श्वेतलोहितयोः, त्विषोः कान्त्योः, मिषेण छलेन, दशदिङ्मुखोन्मुखौ दशदिगन्तव्यापिनौ, अवनीजयार्जितौ भूविजयसम्पादितौ, यथासङ्ख्यं यशःप्रतापौ वर्षन् विस्तारयन्, रराज। अत्र त्विषोर्मिषेणेतिच्छलादिशब्दैः असत्यत्वप्रतीतिरूपाऽपह्नवालङ्कारभेदः, तस्य पूर्वसूचितयथासङ्ख्यद्वयभेदेन सङ्करः; वर्षन्निवेत्युत्प्रेक्षा गम्यते सा च सापह्नवेति सङ्करः॥

बाहुभूषण (अङ्गद आदि) के समूहोंको प्राप्त तथा हीरा, माणिक्य रत्नोंकी (क्रमशः) श्वेत और अरुण कान्तियोंके कपटसे दशोदिशाओंमें फैकनेवाले पृथ्वीकी विजयसे प्राप्त हुए (क्रमशः) यश तथा प्रतापको वरसाते हुएके समान वे (नल) शोभने लगे। [हीरेसे उत्पन्न श्वेत कान्तिको यश तथा माणिक्यसे उत्पन्न अरुण कान्तिको प्रताप समझना चाहिये। हीरे और माणिक्यसे जड़े हुए अङ्गद आदि भूषणोंको बाहुओंमें धारणकर वे नल शोभित होने लगे]॥ ६९॥

घने समस्तापघनावलम्बिनां विभूषणानां मणिमण्डले नलः।
स्वरूपरेखामवलोक्य निष्फलीचकार सेवाचणदर्पणार्पणम् ॥ ७०॥

घन इति। नलः समस्तापघनावलम्बिनां सर्वावयवगतानाम्। 'अङ्गं प्रतीकोऽवयवोऽपघनः' इत्यमरः। विभूषणानां सम्बन्धिनि, घने सान्द्रे, मणिमण्डले रत्नसमूहे, स्वरूपरेखाम् आत्मसौन्दर्यप्रतिबिम्बमित्यर्थः। अवलोक्य, सेवया वित्ताः सेवाचणाः सेवाकुशलाः, 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्प्रत्ययः। तेषां दर्पणार्पणं दर्पणसन्निधापनं, निष्फलीचकार। काकतालीयन्यायतः मणिमण्डलेनैव दर्पणकार्यस्य कृतत्वादिति भावः। अत एव समाध्यलङ्कारोऽयम्, 'एकस्मिन् कारणे कार्यसाधनेऽन्यस-

मागतिः। काकतालीयनयतः स समाधिरुदीयते ॥' इति लक्षणात् ॥ ७० ॥

नलने सम्पूर्ण अङ्गोंमें धारण किये गये विशिष्ट ( उत्तमोत्तम ) भूषणोंके सघन रत्न-समूहमें अपनी उत्कृष्ट शोभाको देखकर सेवकोंके लाये हुए दर्पणको ( स्वरूप दर्शनरूप कार्यके भूषण-रत्नोंसे ही पूरा हो जानेसे ) निष्फल कर दिया ॥ ७० ॥

व्यलोकि लोकेन न केवलं चलन्मुदा तदीयाभरणार्पणद्युतिः।
अदर्शि विस्फारितरत्नलोचनैः परस्परेणैव[1] विभूषणैरपि ॥ ७१ ॥

व्यलोकीति। तदीयानां नलीयानाम्, आभरणानाम् अर्पणेन नलाङ्गे विन्यासेन, या द्युतिः शोभा सा, चलन्मुदा चलन्ती प्रवहन्ती, निरन्तरेत्यर्थः। मुत् हर्षो यस्य तादृशेन, लोकेन जनेन, केवलं न व्यलोकि विलोकिता, किन्तु विस्फारितानि विस्तारितानि, रत्नानि एव लोचनानि यैः तादृशैः, विभूषणैरपि अचेतनैरपीति भावः। परस्परेणैव अदर्शि, किमुत चेतनलोकेनेति भावः। अर्थापत्तिरलङ्कारः, सा च रत्नलोचनेति रूपकोत्थेति सङ्करः, तेन विभूषणानि रत्नलोचनैरन्योऽन्यं पश्यन्ति इव दृश्यन्ते इत्युत्प्रेक्षा व्यज्यते ॥ ७१ ॥

उस ( नल ) के भूषणोंको धारण करनेसे उत्पन्न शोभाको निरन्तर हर्षित लोगों ( मनुष्यों ) ने ही नहीं देखा, ( किन्तु ) विस्तारित ( बढ़ाये गये या चमकते हुए, पक्षा०—अच्छी तरह खोले हुए ) रत्नरूपी नेत्रोंवाले (जड़) आभूषणोंने भी परस्परमें ही देखा ॥७१॥

ततोऽनु वार्ष्णेयनियन्तृकं रथं युधि क्षतारि[2]क्षितिभृज्जयद्रथः।
नृपः पृथासूनुरिवाधिरूढवान् स जन्ययात्रामुदितः किरीटवान् ॥७२॥

ततोऽन्विति। ततोऽनु तदनन्तरं, प्रसाधनानन्तरमित्यर्थः। युधि युद्धे, क्षत अरिक्षितिभृतः शत्रुभूपाः येन सः, जयन् रथः यस्य सः जयद्रथः जैत्ररथ इत्यर्थः अन्यत्र—क्षतौ विध्वस्तौ, अरिक्षितिभृत् चासौ जयद्रथः सिन्धुराजश्चेति तौ येन स तथोक्तः। जन्यानां वरस्निग्धानां, स्वकीयस्नेहभाजनानामित्यर्थः। यात्रया विवाहयात्रया, मुदितः हृष्टः, अन्यत्र—संग्रामयात्रया मुदितः। 'जन्यं हट्टे परीवादे संग्रामे च नपुंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् ॥ त्रिपूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः। वरस्निग्धे—' इति मेदिनी। किरीटवान् किरीटयुक्तः,अन्यत्र—किरीटवान् किरीटी इति नाम्ना प्रसिद्धः, सः नृपः नलः, पृथासूनुः अर्जुनः इव वार्ष्णेयः वार्ष्णेयनामा, अन्यत्र—वृष्णेः अपत्यं पुमान् वार्ष्णेयः कृष्णश्च 'इतश्चानिञः' इति ढक्। नियन्ता सारथिः यत्र तं वार्ष्णेयनियन्तृकं, 'नद्यृतश्च' इति कप्। रथम् अधिरूढवान् अध्यरोहत। श्लिष्टविशेषणेयं पूर्णोपमा ॥ ७२ ॥

इस ( भूषण पहनने ) के बाद युद्धमें शत्रु राजाओंको पराजित करने ( या—मारने

1. 'परस्परेणेव' इति पाठान्तरम्। 2. 'क्षितारि—' इति पाठान्तरम्।

वाले, विजयशील रथवाले (अथवा—युद्धमें शत्रुभूत राजाओंके विजयी रथको नष्ट करनेवाले, अथवा—युद्धमें शत्रुभूत रथस्थ विजयी राजाओंको मारनेवाले। पक्षा०—(अभिमन्युका वध करनेसे) शत्रुभूत राजा जयद्रथको मारनेवाले); वरातियोंकी यात्रा (विवाहमें सम्मिलित होनेके लिए साथ चलना, पक्षा०—युद्धयात्रा) से प्रसन्न, मुकुट पहने हुए (पक्षा०—सहज मुकुटधारी) अर्जुनके समान वे राजा (नल) कृष्ण भगवान् (पक्षा०—वार्ष्णेय नामक) सारथिवाले रथपर सवार हुए ॥ ७२ ॥

**विदर्भनाम्नस्त्रिदिवस्य वीक्षितुं रसोदयादप्सरसस्तमुज्ज्वलम्।**
**गृहात् गृहादेत्य धृतप्रसाधना व्यराजयन् राजपथानथाधिकम् ॥७३॥**

**विदर्भेति। अथ विदर्भनाम्नः विदर्भदेशाख्यस्य, त्रिदिवस्य स्वर्गस्य सम्बन्धिन्यः अप्सरसः तत्कल्पाः पौराङ्गनाः, उज्ज्वलं वरवेशेन दीप्यमानं, तं नलं, वीक्षितुं रसोदयात् रागातिरेकात्, धृतं प्रसाधनं याभिः ताः अलङ्कृताः सत्यः, गृहात् गृहात्, वीप्सायां द्विर्भावः। एत्य आगत्य, राजपथान् राजमार्गान्, अधिकम् अत्यर्थं, व्यराजयन् अशोभयन् ॥ ७३ ॥**

इस (नलके रथारूढ़ होने) के बाद विदर्भ (कुण्डिनपुरी)—नामक स्वर्गकी अप्सराओं अर्थात् स्वर्गतुल्य कुण्डिनपुरकी अप्सराओंके तुल्य अङ्गनाओंने (वरवेष धारण करनेसे अतिशय) शोभमान उस (नल) को अनुरागके उत्पन्न होनेसे देखनेके लिए भूषणोंको पहनकर घर-घरसे अर्थात् प्रत्येक घरसे निकलकर (पहलेसे ही शोभित) राजमार्गोंको अधिक सुशोभित किया। [कुण्डिनपुर स्वर्ग और नगरवासिनी अङ्गनाएं देवाङ्गनारूप थीं। स्त्रियों का वरको देखनेके लिए अधिक उत्कण्ठित हो घर-घरसे बाहर निकलकर देखना लोक विदित है] ॥ ७३ ॥

**अजानती काऽपि विलोकनोत्सुका समीरधूतार्द्धमपि स्तनांशुकम्।**
**कुचेन तस्मै चलतेऽकरोत् पुरः पुराङ्गना मङ्गलकुम्भसम्भृतिम् ॥७४॥**

**अथ पौराङ्गनानां तात्कालिकीः शृङ्गारचेष्टा नवभिर्वर्णयति, अजानतीत्यादि। विलोकनोत्सुका नलदर्शनासक्ता, अत एव समीरेण धूतम् अपसारितम्, अर्द्धं यस्य तादृशमपि अर्द्धापसृतमपि, स्तनांशुकं स्तनावरणवस्त्रम्, अजानती अविदन्ती, व्यासङ्गात् एवेति भावः। काऽपि पुराङ्गना, कुचेन स्रस्तांशुकेन कुचकुम्भेन इति यावत्। चलते गृहात् निर्गच्छते, तस्मै नलाय, 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वम्। पुरः अग्रे, मङ्गलकुम्भसम्भृतिं मङ्गलार्थं पूर्णकुम्भसम्भरणं, पूर्णकुम्भस्थापनमिति यावत्; अकरोत्। प्रायेण उत्सवेषु नववस्त्रवेष्टितं पूर्णकलशमग्रे स्थापयतीत्याचारः। शुभसूचकशकुनरूपतया मङ्गलकुम्भसम्भृतेर्यात्रायामुपयोगित्वात् तस्य च कुचतादात्म्येनारोपात् परिणामालङ्कारः, तेन च पूर्णकुम्भदर्शनस्य भाविशुभसूचकत्वरूपवस्तुध्वनिः ॥ ७४ ॥**

(नलको) देखनेके लिए उत्कण्ठित (अत एव) हवासे आधा हटाये गये भी स्तना-

च्छादक वस्त्रको नहीं जानती हुई नगरवासिनी किसी स्त्रीने चलते ( शिविरसे बाहर निकलते ) हुए नलके ( गमनको सफल बनानेके लिए मानो ) स्तनके द्वारा मङ्गलरूप घटको सामने रख दिया । [-यात्रामें वस्त्रसे ढके हुए घटको यात्रीके सामने रखना मङ्गलकारक होत है ऐसा लोकाचार है। नलको देखनेके लिए कोई स्त्री इतनी अनन्यमनस्का हो गयी वि स्तनसे उड़े हुए वस्त्रका भी ज्ञान उसे नहीं रहा। वायुने उस स्त्रीके स्तनसेव स्त्रको उड़ाकर हटा दिया, इससे नलके प्रस्थानको सफल बनानेके लिए स्तनरूप मङ्गलघटर खनेमें अचेतन वायुके भी भाग लेनेसे नलकी यात्राकी अवश्यम्भाविनी सफलता सूचित होती है ] ॥ ७४ ॥

सखीं[1] नलं दर्शयमानयाऽङ्कतो जवादुदस्तस्य करस्य कङ्कणे ।
विषज्य हारैस्त्रुटितैरतर्कितैः कृतं कयाऽपि क्षणलाजमोक्षणम् ॥ ७५ ॥

सखीमिति। अङ्कतः कुतश्चित् श्वेतच्छत्रादिचिह्नात्, 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। सखीं प्रति नलं दर्शयमानया सखी नलं पश्यति, तां सखीं नलं दर्शयन्त्येत्यर्थः। 'णिचश्च' इत्यात्मनेपदम् ; ततः शानचि 'हृक्रोरन्यतरस्याम्' इत्यत्र 'अभिवादिदृशोरात्मने पदे वा' इति वक्तव्यादणिकर्त्र्याः सख्याः वैकल्पिकं कर्मत्वम्। कयाऽपि पुराङ्गनया, जवात् वेगात्, उदस्तस्य नलं दर्शयितुम् उत्क्षिप्तस्य, करस्य सम्बन्धिनि कङ्कणे विषज्य लगित्वा, अतर्कितैः अचिन्तितैः, सहसैवेत्यर्थः। नलदर्शनव्यासङ्गादलक्षितैरित्यर्थो वा। त्रुटितैः छिन्नैः, हारैः क्षणं लाजमोक्षणं क्षणस्य उत्सवसम्बन्धि, लाजमोक्षणं वा, कृतं, तदेव माङ्गलिकं लाजावकिरणं जातमिति भावः। आवश्यकश्चायमाचारः। यथोक्तं रघुवंशेऽपि-'अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः' इति ॥७५॥

सखीके लिए ( 'देखो, ये नल आ रहे हैं' इस प्रकार सखीसे ) नलको दिखलाती हुई किसी स्त्रीने अङ्क ( नलके छत्रादि चिह्न, या-अपने आगे ) से जल्दी उठाये गये हाथके कङ्कणमें अँटककर टूटे हुए तथा ( नलके देखनेकी उत्सुकताके कारण ) अज्ञात हारों ( के स्वच्छ मोतियों ) से क्षणमात्र खीलोंको बिखेरा। [ जल्दीसे हाथ उठाकर सखीसे नलको दिखलाते समय हाथके कङ्कणमें अँटककर टूटे हुए मोतियोंके हारोंको वह नहीं देख सकी। अत एव उनसे गिरते हुए मोती क्षणमात्र ऐसे मालूम पड़े मानो वह स्त्री नलकी यात्राको शुभ बनानेके लिए धानके खीलोंको गिरा रही हो। यात्राके समय महिलाओंका धानके खीलोंका गिराना लोकाचारमें यात्राका शुभसूचक माना जाता है[2] ]

लसन्नखादर्शमुखाम्बुजस्मितप्रसूनवाणीमधुपाणिपल्लवम् ।
यियासतस्तस्य नृपस्य जज्ञिरे प्रशस्तवस्तूनि तदेव यौवतम् ॥ ७६ ॥

---

१. 'सखी' इति पाठान्तरम् ।

२. तदुक्तं महाकविना कालिदासेन—

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ ( रघुवंशः २।१० )

लसदिति । नखाः एव आदर्शाः, मुखानि एव अम्बुजानि, स्मितानि एव प्रसूनानि, वाण्यः एव मधूनि माक्षिकाणि, पाणयः एव पल्लवाः, तेषां द्वन्द्वः, ते लसन्तः यस्मिन् तत्तादृशं, तत् यौवतं युवतिसमूहः एव । 'गार्भिणं यौवतं गणे' इत्यमरः । 'भिक्षादिभ्योऽण्' इति अण् । युवतिशब्दस्य गणे ग्रहणसामर्थ्यादेव 'भस्याढे तद्धिते' इति पुंवद्भावः यियासतः । अभिजिगमिषतः । यातेः सनन्ताल्लटः शत्रादेशः । तस्य नृपस्य नलस्य, प्रशस्तवस्तूनि तत्कालोचितमङ्गलद्रव्याणि, जज्ञिरे जातानि जनेर्लिटि 'गमहन—' इत्यादिना उपधालोपः । अत्र तादृशपाणिपल्लवमुद्दिश्य प्रशस्तवस्तूनां विधेयतयाऽऽरोपणात् विधेयप्राधान्यादेव जज्ञिरे इत्यत्र बहुवचनम् । अत्रारोप्यमाणप्रशस्तवस्तूनां तादृशपाणिपल्लवतादात्म्यस्य प्रकृते गमनारम्भे उपयोगात् परिणामालङ्कारः, स च रूपकानुप्राणितः ॥ ७६ ॥

शोभमान नखरूप दर्पण, मुखरूप कमल, स्मितरूप पुष्प, वचनरूप मधु ( शहद ) और हस्तरूप पल्लववाला वह युवतियोंका समूह ही (विवाहके लिए जानेके इच्छुक) उस राजा ( नल ) के ( यात्राकी सफलतासूचक ) माङ्गलिक पदार्थ हुआ । [ नलके दर्शनाभिलाषिणी स्त्रियोंके समूहके सुन्दर नख दर्पणतुल्य स्वच्छ, मुख कमलतुल्य सुगन्धादियुक्त, स्मित कुन्दादिके पुष्पतुल्य निर्मल, वचन मधुतुल्य मधुर तथा हस्त पल्लवतुल्य कोमल थे; अत एव वे ही यात्राभिलाषी नलके लिए माङ्गलिक पदार्थ हो गये । यात्राके समय उक्त दर्पणादि पदार्थोंका देखना शुभसूचक माना जाता है ] ॥ ७६ ॥

करस्थताम्बूलजिघत्सुरेकिका विलोकनैकाग्रविलोचनोत्पला ।
मुखे निचिक्षेप मुखद्विराजतारुषेव लीलाकमलं विलासिनी ॥ ७७ ॥

करस्थेति । विलोकने नलदर्शने, एकाग्रे एकासक्ते, विलोचनोत्पले यस्याः सा तादृशी, एका एव एकिका काचित् , विलासिनी स्त्री, करस्थताम्बूलं जिघत्सुः अत्तुमिच्छुः सती । अदो घसादेशात् सन्नन्तादुप्रत्ययः । मुखस्य द्वितीयः राजा द्विराजः । वृत्तिविषये संख्याशब्दस्यापूरणार्थत्वं त्रिभागेत्यादिवत् । तस्य भावः द्विराजता, कमले मुखसादृश्यस्य कविभिर्वर्णनीयत्वादिति भावः । तत्र रुषा रोषेण इव, लीलाकमलं मुखे निचिक्षेप विदधे । ताम्बूलचर्वणेच्छुः काचित् स्त्री अन्यमनस्कतया लीलापद्मं वदने अर्पितवती इति भावः । लीलाकमलस्य मुखप्रतिद्वन्द्वित्वेन एव रुषा मुखे चर्वणार्थमर्पणम् इति उत्प्रेक्षालङ्कारः । एतेन विभ्रमाख्यश्रेष्टानुभाव उक्तः, 'विभ्रमस्त्वरयाऽस्थाने भूषास्थानविपर्ययः' इति लक्षणात् ॥ ७७ ॥

( नलको ) देखनेमें एकाग्र ( तन्मय ) नेत्ररूप कमलवाली एक स्त्रीने हाथमें लिये हुए पान ( के बीड़े ) को खाना चाहती हुई ( पानके स्थानमें ) नीलकमलको ही मुखमें डाल दिया, वह ऐसा मालूम हुआ कि 'मुखके राजा रहनेपर यह कमल दूसरा राजा क्यों बन रहा है ?' इस क्रोधसे उसने नीलकमलको मुखमें डाल लिया हो । [ श्रेष्ठ मेरे मुखके साथ यह कमल स्पर्द्धा करता है, इस क्रोधसे उसे नष्ट करनेके लिए मुखमें डाल लिया हो ऐसा

मालूम पड़ा । नलको देखनेमें तन्मय होनेसे पानके स्थानमें कमलको खानेसे उस स्त्री का 'विभ्रम' नामक भाव सूचित होता है ] ॥ ७७ ॥

कयाऽपि वीक्षाविमनस्कलोचने समाज एवोपपतेः समीयुषः ।
घनं सविघ्नं परिरम्भसाहसैस्तदा तदालोकनमन्वभूयत ॥ ७८ ॥

कयाऽपीति । कयाऽपि कान्तया, वीक्षया अनिमेषदर्शनेन, विमनस्के नलदर्शनलालसेन विषयान्तरविमुखे, लोचने यस्य तादृशे, समाजे जनसमूहे एव, समीयुषः समेतस्य, उपपतेः जारस्य, घनं गाढं यथा तथा, परिरम्भसाहसैः आलिङ्गनरूपसाहसकृत्यैः, तदा तत्काले, तदालोकनं नलविलोकनं, सविघ्नं यथा तथा अन्वभूयत अनुभूतं, जारकर्तृकालिङ्गनेन व्यवधानात् निरन्तरदर्शनं न जातमित्यर्थः । कामान्धाः किं न कुर्वन्तीति भावः ॥ ७८ ॥

किसी ( पुंश्चली ) स्त्रीने ( नलको ) देखनेमें अतिशय आसक्त नेत्रवाले जन-समूहमें ही आये हुए जारके गाढालिङ्गनरूप साहस ( अनवसर में विचारशून्य होकर किये गये आलिङ्गन ) से उस समय उस ( नल ) के दर्शनको सविघ्न अनुभव किया ( अथवा—...... जारके आलिङ्गनरूप साहससे उसके दर्शनको अत्यन्त सविघ्न अनुभव किया । अथवा—... साहससे तब-तब अर्थात् कभी-कभी दर्शन किया अर्थात् निरन्तर दर्शन नहीं कर सकी ) । [ जारके द्वारा किये गये आलिङ्गनसे बीचमें व्यवधान होनेसे नलको निरन्तर नहीं देख सकनेके कारण उसे विघ्नयुक्त माना ] ॥ ७८ ॥

दिदृक्षुरन्या विनिमेषवीक्षणा नृणामयोग्यां दधती तनुश्रियम् ।
पदाग्रमात्रेण यदस्पृशन्महीं न तावता केवलमप्सरोऽभवत् ॥ ७९ ॥

दिदृक्षुरिति । दिदृक्षुः नलं द्रष्टुमिच्छुः, अत एव विनिमेषवीक्षणा अनिमेषदृष्टिः, नृणाम् अयोग्याम् अमानुषीं, तनुश्रियम् अङ्गसौन्दर्यं, दधती अन्या काचित् सुन्दरी, पदाग्रमात्रेण पदाङ्गुल्यग्रेण भरं कृत्वेत्यर्थः । महीं यत् अस्पृशत्, तावता केवलं महीतलस्पर्शेनैव, न अप्सरोऽभवत्, अन्यथा अप्सरसोऽस्याश्च को भेदः ? इति भावः । अत्र 'कृभ्वस्तियोगे—' इत्यादिना अभूततद्भावार्थे अप्सरःशब्दात् च्वि-प्रत्ययः । प्रकृतिविकृतिस्थले क्रियया प्रकृतिसङ्ख्याग्रहणनियमात् अन्या इत्यस्यैकवचनान्तत्वेन अभवदित्यत्राप्येकवचनम् । अत्र महीमस्पृशदित्युपमेयस्योपमानादीषदल्पत्वकथनेन भेदप्रधानसादृश्योक्तिव्यतिरेकालङ्कारभेदः; 'भेदप्रधानं साधर्म्यमुपमानोपमेययोः । आधिक्यात्पत्वकरणात् व्यतिरेकः स उच्यते ॥' इति लक्षणात् ॥ ७९ ॥

( नलको ) देखनेकी इच्छुक ( अत एव ) निर्निमेष ( एकटक ) नेत्रवाली, ( तथा निर्निमेष दृष्टि होनेसे ) मनुष्योंके अयोग्य अर्थात् दिव्य शरीरशोभाको धारण करती हुई दूसरी स्त्री ( भीड़में नलको अच्छी तरह देखनेके लिए ) जो केवल चरणाग्र ( पैरके चौवे या अँगूठे ) से पृथ्वीका स्पर्श किया, केवल उतनेसे ही वह अप्सरा नहीं हुई । [ किसीको

भीड़में देखनेके लिए एड़ी उठाकर पैरके चौवेके बलपर खड़ा होकर देखना दर्शकमात्रका स्वभाव होता है, अत एव वह भीड़में नलको अच्छी तरह देखनेके लिए एड़ी उठाकर पैरके चौवे ( या अंगूठे ) के सहारे भूमिपर खड़ी हुई, इतनेसे ही वह अप्सरा नहीं हुई, अन्यथा निमेषरहित नेत्र तथा दिव्य शरीरशोभा होनेसे वह साक्षात् अप्सरा ही थी ] ॥ ७९ ॥

विभूषणस्रंसनशंसनार्पितैः करप्रहारैरपि धूननैरपि ।
अमान्तमन्तः प्रसभं पुरा परा सखीषु सम्मापयतीव सम्मदम् ॥८०॥

विभूषणेति । परा अन्या काचित् , सखीषु अन्तः अन्तःशरीरे, अमान्तमत्याधिक्यात् उल्लसन्तं, सम्मदं हर्षं, विभूषणानां स्रंसनस्य स्थानभ्रंशस्य, शंसनाय यथास्थानं निवेशय इति कथनाय, अर्पितैः प्रयुक्तैः, प्रसभं बलात् , करप्रहारैः पाणिघातैरपि, तथा धुननैरपि तदीयगात्रकम्पनैरपि, पुरा सम्मापयतीव सम्मापयामासेवेत्युत्प्रेक्षा । 'पुरि लुङ् चास्मे' इति भूते लट् । यथा तण्डुलादिसम्मापनाय प्रस्थादिकं मुष्टिभिर्बध्नन्ति धुवन्ति च तद्वदिति भावः ॥ ८० ॥

दूसरी ( किसी स्त्री ) ने सखियोंमें भीतर नहीं समाते ( अँटते ) हुए ( नलदर्शनजन्य ) अत्यधिक हर्षको भूषणके गिरनेके पर किये गये करप्रहारोंमें कम्पनोंसे तथा बलात्कारसे समवाया । [ सखियां नलको देखनेमें इतना एकाग्रचित्त हो गयी थीं कि भूषणके स्थानच्युत होनेपर भी उन्हें अपने भूषणका गिरना मालूम नहीं पड़ा, तो दूसरी सखीने 'तुम्हारा भूषण गिर गया' ऐसा कहकर उसे सचेत किया, फिर भी उसने नहीं सुना तो हाथसे उसके शरीरपर मारकर ( हल्का थपका देकर ) सचेत किया और इतना करनेपर भी उसने भूषणको नहीं सम्हाला तो उसके शरीरको कम्पित ( हिला ) कर उसे सचेत किया और उसने अपने भूषणको यथास्थान धारणकर सम्हाला; वह कार्य ऐसा मालूम पड़ता था कि मानो नलके देखनेसे उत्पन्न अत्यधिक हर्ष उसके शरीरमें नहीं समा रहा है और बाहर गिर रहा है, उसे दूसरी सखीने पहले कहकर बादमें हाथसे ठोंककर और इतना करनेपर भी नहीं समाया तो उसे हिलाकर बलात्कारसे उसप्रकार भीतर समवा दिया, जिस प्रकार छोटा बर्तन होनेसे उसमें नहीं समाते एवं बाहर गिरते हुए अन्न आदिको पहले कहकर बादमें हाथसे ठोककर और तब भी नहीं समाता है तो उस बर्तनको पकड़कर हिलाकर उसी बर्तनमें अन्नादिको बलात्कारसे समवा दिया जाता है ॥ नलको देखनेमें अत्यासक्त सखियोंके गिरते हुए भूषणोंको किसी स्त्रीने पहले कहकर, फिर सावधान होकर नहीं सम्हालनेपर हाथसे उसके शरीरपर ठोककर और इतनेपर भी नहीं सम्हालनेपर उसके शरीरको हिलाकर बलात्कारसे उसे सचेतकर उस भूषणको यथास्थान धारण करवाया ] ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा विलोकमाने विमनीबभूवतुः ? ।
अपि श्रुती दर्शनसक्तचेतसां न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

वतंसेति । दर्शनसक्तचेतसां नलविलोकनासक्तचित्तानां, मृगीदृशां स्त्रीणां, श्रुती

कर्णौ अपि, वतंसनीलाम्बुरुहेण कर्णभूषणीकृतनीलोत्पलेन, दृशा चक्षुषा, इति व्यस्तरूपकं, विलोकमाने नलं पश्यन्त्यौ, अविमनसौ विमनसौ बभूवतुः मनःसम्बन्धरहिते इव किम् ? इत्युत्प्रेक्षा । 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्विप्रत्ययः सलोपश्च, 'अस्य च्वौ' इतीकारः । तेन विमनीभावेन, ते श्रुती, न शुश्रुवतुः विभूषणस्रंसनमिति सखीकर्तृकयथास्थाननिवेशनशंसनमिति वा शेषः, मृगीदृशः चक्षुर्भ्यां नलविलोकनासक्तचित्ताः सत्यः यथा विमनीवभूवुः तथा तासां कर्णावपि कर्णावतंसनीलोत्पलरूपदृशा नलं पश्यन्तौ सन्तौ विमनीवभूवतुः किम् ? तत एव तासां श्रुती भूषणभ्रंशशब्दं सखीकर्तृकतच्छंसनं वा न शुश्रुवतुः ? इति तात्पर्यम् । अत्रोत्प्रेक्षालङ्कारः ॥ ८१ ॥

नलको देखनेमें सलग्न चित्तवाली मृगनयनियोंके दोनों कान कर्णभूषण बने हुए नील कमलरूपी नेत्रसे ( नलको ) देखते हुए मानो विमनस्क ( मानसिक सम्बन्धसे हीन अर्थात् नलदर्शनासक्त होनेसे सुननेमें जड़ ) हो गये थे; इस कारणसे उन्हों ( दोनों कानों ) ने भी ( पूर्व श्लोकोक्त विभूषणोंके गिरना तथा उस सखीका कहना ) नहीं सुना । [ नल-दर्शनैकाग्र सखियोंके नेत्र जिस प्रकार विमनस्क अन्य पदार्थोंको प्रत्यक्ष करने ( देखने में असमर्थ ) हो गये, उसी प्रकार कर्णावतंसभूत कमलरूप नेत्रोंसे नल-दर्शनैकाग्र दोनों कान भी दूसरे शब्दोंको प्रत्यक्ष करने ( सुनने ) में विमनस्क ( जड़ ) हो गये ] ॥ ८१ ॥

काश्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं तास्वशङ्कन्त कान्ता
मौग्ध्यादाचूडमोघैर्निचुलितमिव तं भूषणानां मणीनाम् ।
साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किं
ज्योतिष्टोमादियज्ञश्रुतफलजगतीसार्वभौमभ्रमेण ? ॥ ८२ ॥

काश्चिदिति । तासु पौरकान्तासु मध्ये, काश्चित् का अपि, कान्ताः सुन्दर्यः, भूषणानां सम्बन्धिनां, मणीनाम् ओघैः समूहैः, आचूडम् आशिखण्डकं, शिखापर्यन्तमित्यर्थः, अभिविधावव्ययीभावः । निचुलितं छादितमिव स्थितम्, सर्वावयवेष्वेव मणिघटितभूषणसत्त्वात् मणिभिराच्छादितमिव स्थितमित्यर्थः तं नलं, चक्षुर्भ्यामिव प्रसृतिभ्यां निकुब्जपाणिभ्याम् 'पाणिर्निकुब्जः प्रसृतिः' इत्यमरः, चुलुकितं चुलुकेन पीतं, निर्माय विधाय, गण्डूषीकृत्येत्यर्थः, साग्रहं दृष्ट्वेति भावः, मौग्ध्यात् मोहात्, अशङ्कन्त । शङ्काप्रकारमेवाह—अयं पुमान्, ज्योतिष्टोमादियज्ञैः श्रुतम् अवगतम्, ज्योतिष्टोमादियज्ञानुष्ठानजन्यप्राप्तमित्यर्थः, फलं फलभूता, जगती स्वर्गलोकः, तस्याः सार्वभौमः सर्वभूमेः ईश्वरः इन्द्रः 'सर्वभूमीपृथिवीभ्यामणञौ' इति अण्प्रत्ययः । इति भ्रमेण अयं नल इन्द्रः, इति भ्रान्त्या, निमेषाकृतमतिभिः निमेषेऽकृतबुद्धिभिः, अनिमेषाभिरित्यर्थः साहस्रीभिः सहस्रसङ्ख्यकाभिः, 'अण् च' इति मत्वर्थीयोऽण्-प्रत्ययः, दृग्भिः नेत्रैः, आलिङ्गितः स्पृष्टः, आश्रित इत्यर्थः, किम् ? इति आशङ्कन्त

इत्येकान्वयो वा, मणिभूषितम् एनं दृष्ट्वा पौरकान्ताः अस्मिन् इन्द्रभ्रान्त्या नेत्रसहस्रम् एनं नलं प्राप्तं किम् ? इति उत्प्रेक्षितवत्यः इत्यर्थः। भ्रान्तिमत्सङ्कीर्णेयमुत्प्रेक्षा। स्रग्धरा वृत्तम् ॥ ८२ ॥

( नलको ) देखती हुई उन ( स्त्रियों ) मेंसे कुछ स्त्रियोंने मणिमय भूषण-समूहोंसे नख-शिख अच्छादितके समान उस नलको नेत्ररूपी पसर ( आधी अञ्जलि ) से चुल्लुमें लेकर पानकर अर्थात् अत्यन्त आदरपूर्वक देखकर मुग्धतासे ऐसी शङ्का की कि—'पलक नहीं गिरनेवाली सहस्रों आँखोंने ज्योतिष्टोम आदि यज्ञोंके- वेदोंमें सुने गये फलसे प्राप्त स्वर्गके सम्राट् अर्थात् इन्द्रके भ्रमसे इस नलको आलिङ्गन किया है क्या ?'। [ अचेतन भी रत्नरूपी नेत्रोंसे ऐश्वर्याधिक्यके कारण इन्द्र समझकर इसे हमलोगोंके निर्निमेष सहस्रों नेत्रोंने प्राप्त किया है क्या ? ऐसा शङ्का मुग्धताके कारण कुछ स्त्रियोंने की॥ मणिकान्तिसे नख-शिख व्याप्त नलको मुग्धतावश इन्द्र समझकर निर्निमेष हो देख रही थीं ] ॥ ८२ ॥

भवन् सुद्युम्नः स्त्री नरपतिरभूत् यस्य जननी
तमुर्वश्याः प्राणानपि विजयमानस्तनुरुचा।
हरारब्धक्रोधेन्धनमदनसिंहासनमसौ
अलङ्कर्मीणश्रीरुदभवदलङ्कर्त्तुमधुना ॥ ८३ ॥

भवन्निति। सुद्युम्नो नाम नरपतिः राजा, स्त्री भवन् ईश्वरशापात् इलाख्या स्त्री सन्, यस्य पुरूरवसः, जननी माता, अभूत्, उर्वश्याः प्राणान् प्राणभूतम्, अप्सरोमनोहारिरूपमित्यर्थः, तमपि तस्याम् इलायां बुधात् उत्पन्नम् ऐलं पुरूरवसमपीत्यर्थः, तनुरुचा अङ्गलावण्येन विजयमानः अतिशयानः, पराभावुक इत्यर्थः, असौ नलः, हरेण आरब्धस्य आवेशितस्य, क्रोधस्य क्रोधाग्नेः, इन्धनस्य दाह्यस्य, मदनस्य अनङ्गस्य, सिंहासनं हरकोपानलदग्धत्वात् शून्यं मदनस्य सिंहासनमित्यर्थः, अलङ्कर्त्तुम् अधिष्ठातुम्, अलं कर्मणे अलङ्कर्मीणः, 'कर्मक्षमोऽलङ्कर्मीणः' इत्यमरः। 'अषडक्ष—' इत्यादिना खप्रत्ययः। अलङ्कर्मीणा कर्मक्षमा, श्रीः शोभा यस्य सः, मदनसिंहासनयोग्यः सन् इत्यर्थः, अधुना उदभवत् उत्पन्नः, ततोऽपि सुन्दर इत्यर्थः, इति आलेपुरिति परेणान्वयः। अत्र सूर्यस्य नप्ता मनोः पुत्रः सुद्युम्नो नाम राजा मृगयासक्तो हिमवत्पार्श्वे पार्वतीवनं प्रविष्टः ईश्वरशापात् स्त्रीत्वं प्राप्य बुधात् पुरूरवसमतिसुन्दरमिन्दुवंशप्रवर्त्तकं जनयामासेति पौराणिकी कथा अत्रानुसन्धेया। शिखरिणी वृत्तम् ॥ ८३ ॥

( शङ्कर भगवान्के शापसे 'इला' नामकी ) स्त्री बने हुए 'सुद्युम्न' नामक राजा जिस ( पुरूरवा ) की माता हुए, 'उर्वशी'के प्राणभूत ( अप्सराके प्राणवत् मनोहर रूप ) उस ( पुरूरवा ) की शरीर-शोभासे पराजित करते हुए यह नल शिवजीके द्वारा किये गये क्रोध ( रूपी अग्नि ) का इन्धनभूत अर्थात् क्रोधाग्निमें जले हुए ( अत एव ) कामदेवके

( सूने ) सिंहासनको सुशोभित करनेके लिए समर्थ इस समय उत्पन्न हुए हैं (ऐसा कहती थीं, इस पूरक क्रियापदका सम्बन्ध अग्रिम श्लोक (१५।९२) से कहना चाहिये )। [शङ्करजीकी क्रोधाग्निमें जले हुए कामदेवके सूने ( रिक्त ) सिंहासनको अलङ्कृत करनेके लिए सर्वसुन्दर पुरूरवका विजेता यह नल उत्पन्न हुआ है, ऐसा परस्परमें स्त्रियां कहती थीं ]॥ ८३ ॥

पौराणिक कथा—'सत्ययुगमें सूर्यके नाती मनुपुत्र 'सुद्युम्न' ( इल ) नामक राजा शिकार खेलता हुआ शङ्करजीसे रोके गये पार्वतीवनमें अकेला प्रवेश करनेपर क्रुद्ध शङ्करजीके शापसे 'इला' नामकी स्त्री बन गया। उसे अकेली देखकर कामातुर चन्द्रपुत्र बुधने अपने आश्रममें ले जाकर उसमें 'पुरूरवा' नामक अतिशय सुन्दर पुत्रको उत्पन्न किया' ऐसी कथा भविष्योत्तर पुराणमें आयी है।

अर्थी सर्वसुपर्वणां पतिरसावेतस्य यूनः कृते
पर्यत्याजि विदर्भराजसुतया युक्तं विशेषज्ञया।
अस्मिन्नाम तया वृते सुमनसः सन्तोऽपि यन्निर्जरा
जाता दुर्मनसो न सोढुमुचितास्तेषान्तु साऽनौचिती ॥ ८४ ॥

**अर्थीति। विशेषज्ञया गुणानां तारतम्याभिज्ञया, विदर्भराजसुतया वैदर्भ्या, अर्थी भैमीं परिणेतुम् अर्थित्वं गतः; असौ प्रसिद्धः, सर्वसुपर्वणां पतिः देवेन्द्रः, एतस्य यूनः पूर्णतारुण्यवतः, कृते निमित्तं, नललाभार्थमित्यर्थः पर्यत्याजि नलात् हीनगुणत्वात् परित्यक्तः, इति युक्तम्, अन्यथा अज्ञत्वं स्यादिति भावः, किन्तु अस्मिन् नले, तया वैदर्भ्या, वृते सति निर्जरा देवाः इन्द्रादयः, सुष्ठु मन्यन्ते जानन्तीति सुमनसः सर्वज्ञाः, सुज्ञोऽजाणादिकोऽसुन्प्रत्ययः, शोभनचित्ताश्च, सन्तोऽपि, दुर्मनसः दून-मनसः, जाता नाम इति यत्, नामेति सम्भावनायां, तेषां देवानां, सा तु दुर्मनी-भावरूपा, दुःखितमानसरूपेत्यर्थः, विधेयप्राधान्यात् स्त्रीलिङ्गनिर्देशः। अनौचिती अनौचित्यम्, अनुचितकार्यकारित्वमित्यर्थः, सोढं न उचिता, अस्माभिरिति शेषः। विशेषज्ञानाम् उत्कृष्टवस्तुस्वीकरणम् उचितमेव, किन्तु सुमना इति नामधारिणामपि देवतानाम् दमयन्तीकर्त्तृकनलवरणे दुर्मनस्त्वमनुचितमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥**

विशेषज्ञा विदर्भराजकुमारी ( दमयन्ती ) ने परम युवक इस ( नल ) के लिए याचना करते हुए सम्पूर्ण देवाधीश इन्द्रको भी छोड़ दिया, यह उचित ही किया; किन्तु उस ( दमयन्ती ) के द्वारा इस ( नल ) के वरण करनेपर 'सुमनस्' ( सुन्दर = अच्छे मनवाले, पक्षा०—देव ) शब्दसे प्रसिद्ध भी वे ( इन्द्रादि ) देव जो 'दुर्मनस्' (बुरे मनवाले, पक्षा०—दुःखित ) हो गये, यह उनका अनुचित कार्य सहन करने योग्य नहीं है ('ऐसा स्त्रियोंने परस्परमें कहा' इस पूरक क्रियापदका सम्बन्ध अग्रिम श्लोक ( १४।९२ ) से करना चाहिये)। [ विशेषज्ञा दमयन्तीने देवराज इन्द्रका त्यागकर नलको वरण किया यह उचित किया,

किन्तु वे 'सुमनस्' (देव) होते हुए भी 'दुर्मनस्' (दुःखित) हो गये यह उन्होंने अनुचित एवं नहीं सहन करने योग्य काम किया ]॥ ८४॥

अस्योत्कण्ठितकण्ठलोठिवरणस्रक्साक्षिभिर्दिग्धवैः[1]
स्वं वक्षः स्वयमस्फुटन्न किमदः शस्त्रादपि[2] स्फोटितम्।
व्यावृत्योपनतेन[3] हा! शतमखेनाद्य प्रसाद्या कथं
भैम्यां व्यर्थमनोरथेन च शची साचीकृताऽऽस्याम्बुजा? ॥८५॥

अस्येति। अस्य नलस्य, उत्कण्ठिते बहुदिनाद् भैमीवरमाल्यलाभार्थमुत्सुके, कण्ठे लुठतीति तादृश्याः लोठिन्याः, वरणस्रजः वरमालायाः, साक्षिभिः साक्षाद्द्रष्टृभिः, दिग्धवैः इन्द्रादिभिः दिक्पतिभिः, स्वयं स्वतः एव, अस्फुटत् अपि लज्जाविरहादविदीर्णमपि, अदः स्वं वक्षः शस्त्रादपि नलस्यास्त्रप्रहारादपि, स्वयं छुरिकादिघातादपि वा, किं न स्फोटितम्? भैमीलाभार्थं नलेन सह युद्धं कृत्वा तदीयास्त्रेण वा स्वयं प्रयुक्तच्छुरिकादिना वा तावत् विस्फोटयितव्यमेवेत्यर्थः। च किञ्च, अद्य भैम्यां व्यर्थमनोरथेन विफलाभिलाषेण, अत एव व्यावृत्योपनतेन प्रत्यावृत्य शचीमुपनतेन, स्वापराधमार्जनार्थं शचीसमीपे प्रणतेनेत्यर्थः। शतमखेन इन्द्रेण, साचीकृतं तिर्यक्कृतम्, अस्याम्बुजं यया सा तादृशी पराङ्मुखी, शची कथं प्रसाद्या? प्रसादयितव्या? न कथञ्चिदपीत्यर्थः, हा! विषादे। शची क्रोधवशात् वक्रास्यतया सन्मुखस्थानवलोकनात् इन्द्रकृतप्रणामाञ्जल्यादिकं नावलोकयिष्यतीति कथं प्रसाद्येति भावः

इस (नल) के (दमयन्तीको प्राप्त करनेके लिए चिरकालसे) उत्कण्ठित कण्ठमें लटकती हुई वरणमालाको देखते हुए (इन्द्रादि दिक्पालों अथवा—पाठा०—दिगन्ततक प्रसिद्ध शूरवीरों) ने (निर्लज्जताके कारण) स्वयं विदीर्ण नहीं होती हुई अपनी छातीको (अपने ही) शस्त्र (पाठा०—इस नलके शस्त्र) से क्यों नहीं विदीर्ण कर लिया? (अथवा दिगन्ततक प्रसिद्ध शूरवीर मनुष्यों या दिक्पाल अग्नि आदि तीनों देवोंकी बात छोड़ो), सैकड़ों यज्ञोंसे ख्याति प्राप्त एवं दमयन्तीके विषयमें असफल मनोरथवाला सैकड़ों यज्ञोंसे ख्याति प्राप्त इन्द्र भी (यहांसे निराश) लौटकर (इन्द्राणीको प्रसन्न करनेके लिये प्रणत, पाठा०—समीपमें गया हुआ) क्रोधसे मुखकमलको फेरी हुई इन्द्राणीको कैसे प्रसन्न करेगा? हाय! (यह बड़े खेदका विषय है। ऐसा नलको देखनेवाली स्त्रियोंने कहा, ऐसे क्रियापूरक वाक्यका अग्रिम श्लोक (१५।९२) से अध्याहर करना चाहिये)। जो सच्चा शूरवीर होता है, वह अपने प्रतिद्वन्द्वीसे पराजित होकर लज्जाके कारण अपनी छातीको अपने ही शस्त्रसे विदीर्णकर मर जाता है, या उस प्रतिद्वन्द्वीके ही शस्त्रसे छातीको विदीर्ण

---

१. 'दिग्भटैः' इति 'प्रकाश' सम्मतं पाठान्तरम्।
२. 'किमदःशस्त्रादपि' इति पाठान्तरम्। ३. 'गतेन' इति पाठान्तरम्।

(चीर) कर मर जाता है, किन्तु ये स्वयम्वरमें उपस्थित दिगन्ततक प्रसिद्ध शूरवीर राजा लोगों की या इन्द्रादिकी छाती निर्लज्जताके कारण स्वयं विदीर्ण नहीं हुई तो इन्हें अपने या नलके शस्त्रसे अपनी छातीको विदीर्णकर मर जाना उचित था, किन्तु ऐसा नहीं होनेसे ये सभी निर्लज्ज मालूम पड़ते हैं। इसके अतिरिक्त एक बड़ा खेदका विषय यह है कि दमयन्तीको नहीं पानेसे निराश होकर यहांसे स्वर्गको इन्द्र जायेगा तो इन्द्राणी क्रोधसे मुखको फेर लेगी और प्रसन्न करनेके लिए प्रणत इन्द्रको नहीं देख सकेगी तो यह इन्द्र उसे किस प्रकार प्रसन्न कर सकेगा ? अर्थात् नहीं कर सकेगा, हाय ! देवाधिपति इन्द्रकी भी जब यह दशा है तो दूसरेके विषयमें कहना ही क्या है ? ] ॥ ८५ ॥

मा जानीत विदर्भजामविदुषीं[1] कीर्तिर्मुदः[2] श्रेयसी
सेयं भद्रमचीकरत् मघवता न स्वं द्वितीयां शचीम् ।
कः शच्या रचयाञ्चकार चरिते काव्यं स नः कथ्यताम्
एतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः ? ॥ ८६ ॥

मेति । हे प्रियसख्यः ! विदर्भजां वैदर्भीम्, अविदुषीम् अविशेषज्ञां, मा जानीत मा मन्यध्वं, यूयमिति शेषः, देवानन्दं विहाय मानुषानन्दे प्रवृत्ता कथं विदुषी ? इति शङ्कां निरस्यति यतः मुदः आनन्दात्, कीर्त्तिः श्रेयसी प्रशस्यतरा ततः किं तत्र ? इति आह—सा इयं दमयन्ती, ( प्रयोजिका ) मघवता इन्द्रेण, ( प्रयोज्येन ) स्वम् आत्मानं, द्वितीयां शचीं न अचीकरत् न कारितवती, इन्द्रं यदि वृणुयात् तदा तत्पत्नीत्वेन शचीत्वप्राप्त्या स्वयं द्वितीया शची स्यादिति न इन्द्रं वव्रे इत्यर्थः, करोतेर्णौ चन्युंधाया ह्रस्वः 'चङि' इति द्विर्भावे सन्वद्भावे 'सन्यतः' इत्यभ्यासस्य इत्वे 'दीर्घो लघोः' इति दीर्घः । इति भद्रम्, इन्द्रस्यावरणम् एव साधु कीर्त्तिकरत्वादिति भावः । कथं शचीत्वमेव न साधु ? इत्याह—कः कविः, शच्याः चरिते काव्यं रचयाञ्चकार ? सः कविः, नः अस्मभ्यं, कथ्यतां, न कोऽपीत्यर्थः, एतस्यास्तु दमयन्त्याः पुनः सम्बन्धिनी, रसधुनी रसवती तटिनी 'तटिनी ह्रदिनी धुनी' इत्यमरः । तस्याः पात्रे कूलद्वयमध्ये, प्रवाहस्थाने इत्यर्थः, 'पात्रन्तु भाजने योग्ये वित्ते कूलद्वयान्तरे' इति वैजयन्ती। विविधसुरसाधारे इत्यर्थः। चरित्रे विषये, कैः कविभिः, न करिष्यते ? काव्यमिति शेषः । सर्वैरपि स्वत एव करिष्यते इत्यर्थः, स्वयमेव दृष्टान्तः इति कवेः तात्पर्य. तस्मात् कीर्त्तिकरत्वात् नलवरणमेव भद्रमिति भावः ॥ ८६ ॥

( हे सखियां ! तुमलोग ) दमयन्तीको अपण्डिता मत जानो ( पण्डिता जानो, देवोंकी भार्या बननेके आनन्दका त्याग करनेपर भी इसके पण्डिता होनेमें यह कारण है कि ) हर्ष ( पाठा०—स्वर्ग ) से कीर्ति श्रेष्ठ है । ( अथवा पाठा०—......दमयन्तीको 'हर्ष ( इन्द्रादिके वरणसे प्राप्य स्वर्गप्राप्तिरूप प्रसन्नता, पाठा०—स्वर्ग ) से कीर्ति श्रेष्ठ है' ( इस बातको )

१. 'कीर्ति मुदः श्रेयसीम्' इति पाठान्तरम् । २. 'दिवः' इति पाठान्तरम् ।

नहीं जाननेवाली मत जानो; ( क्योंकि ) सुप्रसिद्ध इस ( दमयन्ती ) ने इन्द्रके द्वारा अपनेको दूसरी इन्द्राणी नहीं बनवाया अर्थात् इन्द्रको यदि यह वरण करती तो वह इसे दूसरी इन्द्राणी बना लेता ) यह अच्छा किया। ( हर्ष ( पाठा०—स्वर्ग ) से कीर्ति श्रेष्ठ इस कारण है कि—) इन्द्राणीके चरितके विषयमें ( चरितका आश्रयकर ) किस ( कवि ) ने काव्य ( एक भी काव्य ) को रचा? यह हमसे कहो अर्थात् किसी एक कविने भी इन्द्राणीका चरित वर्णन करने के लिए एक भी काव्य नहीं बनाया और इसके विपरीत इस ( दमयन्ती ) रस-नदी-प्रवाहरूप चरितमें अर्थात् चरितका आश्रय लेकर कौन-से कवि काव्यकी रचना नहीं करेंगे अर्थात् केवल 'श्रीहर्ष' कवि ही 'नैषध' महाकाव्यकी रचना नहीं करेंगे, किन्तु व्यास आदि प्राचीनतम महाकवि भी महाभारत आदि काव्योंमें इस दमयन्तीके चरितका वर्णन करेंगे ( 'ऐसा नलको देखनेवाली स्त्रियोंने कहा' ऐसे क्रियापूरक वाक्यका अग्रिम श्लोक ( १५।९२ ) से अध्याहार करना चाहिये )। [ दमयन्तीने सोचा कि यदि मैं इन्द्रका वरणकर दूसरी इन्द्राणी बन भी जाती हूं तो मुझे स्वर्ग सुखजन्य प्रसन्नता तो अवश्य मिल जायेगी, किन्तु नलके वरण करनेसे होनेवाली कीर्ति नहीं मिलेगी, अत एव स्वर्गसुखजन्य प्रसन्नताको अपेक्षा कीर्तिको ही श्रेष्ठतर मानकर दमयन्तीने इन्द्रका त्यागकर नलका वरण किया यह बहुत पाण्डित्यपूर्ण कार्य किया है। उसका ऐसा सोचना इस कारण उचित है कि इन्द्राणीके चरितका वर्णन करनेके लिए आज तक किसी एक कवि ने भी कोई काव्य नहीं बनाया और पुण्यश्लोक नलके वरण करनेसे इसके चरितका वर्णन व्यास आदि बहुतसे कवि महाभारतादि महाकाव्योंमें करेंगे, इस कारण इस दमयन्तीके समान दूरदर्शिनी विदुषी कोई दूसरी स्त्री नहीं है ॥ ८६ ॥

वैदर्भीबहुजन्मनिर्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवाऽयमवनीवासः प्रसूनायुधः।
गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुष्प्रापया
योगं भीमजयाऽनुभूय भजतामद्वैतमद्य त्विषाम् ॥ ८७ ॥

वैदर्भीति। अवन्यां वासः यस्य सः तादृशः, प्रसूनायुधः पुष्पेषुः, भूलोकमन्मथः इति यावत्, अयं युवा नलः, वैदर्भ्याः दमयन्त्याः, बहुषु जन्मसु निर्मितेन कृतेन, तपसा तपस्यालब्धेनेत्यर्थः, शिल्पेन कलाकौशलेन, दमयन्तीतपःफललब्धकलाकौशलस्वरूपयेत्यर्थः, देहश्रिया कायकान्त्या, नेत्राभ्यां स्वदते रोचते, पश्यन्तीनामस्माकं नेत्रानन्दं करोतीत्यर्थः, 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी। अत एव गीर्वाणालयसार्वभौमसुकृतप्राग्भारैः नाकनायकपुण्यराशिभिः अपि, दुष्प्रापया दुर्लभया, इन्द्रादिभिरपि दुरधिगम्यया इत्यर्थः, भीमजया भैम्या सह, योगं मिलनम्, अनुभूय अद्य त्विषां कान्तीनाम्, अद्वैतम् अद्वितीयत्वम्, असाधारण्यमित्यर्थः, भजतां गच्छतु अयं युवेति पूर्वेणान्वयः ॥ ८७ ॥

भूलोकवासी कामदेव यह युवक ( नल ) दमयन्तीके बहुत जन्मोंमें की गयी तपस्याके शिल्प ( कारीगरी ) रूप देहशोभासे हमारे नेत्रोंको रूचता है, वह नल देवालय ( स्वर्ग ) के चक्रवर्ती ( इन्द्र ) के पुण्याधिक्यसे भी अप्राप्य भीमजा ( राजा भीमकी कन्या दमयन्ती, पक्षा०—भीम = शिवजीके प्रसादसे प्राप्त विद्या-विशेष ) से युक्त होकर तेजःसमूहके अद्वैत (अधिक कान्ति-समूह, पक्षा०—परमात्मा ) को प्राप्त करे'। ( ऐसा 'नलको देखनेवाली स्त्रियोंने कहा' इस क्रियापूरक वाक्यका अध्याहार अग्रिम श्लोक ( १५।९२ ) से करना चाहिये )। [ पहले कामदेव स्वर्गमें रहता था एवं शरीरहीन था, किन्तु वही दमयन्तीके अनेक जन्मकृत तपस्याओंसे सदेह होकर भूलोकमें वास करनेवाला यह युवा नल हो गया है, ऐसा यह नल देवलोकके चक्रवर्ती बननेके कारण अधिक पुण्यशाली इन्द्र भी जिस दमयन्तीको पूर्वकृत अपने पुण्योंसे नहीं पा सका उस दमयन्तीका योग पाकर आज सर्वाधिक कान्तिमान् होवे। देवलोकवासी तथा अशरीरी कामदेवको भूलोकवासी तथा सशरीर बनाकर युवक नलके रूपमें हमलोगोंके सामने उपस्थित करनेसे दमयन्तीका पुण्याधिक्य; तथा जिस पुण्यसे स्वर्गका चक्रवर्ती बननेवाला इन्द्र भी दमयन्तीको नहीं पा सका और इस नलने उसे पा लिया अतएव इन्द्रकी अपेक्षा नलका पुण्याधिक्य सूचित होता है। लोकमें भी तपोबलसे युक्त व्यक्ति स्वर्गवासी अदेहधारी देवको भूलोकवासी एवं देहधारी मनुष्य बना लेता है, ऐसा दमयन्तीने किया है। तथा अष्टाङ्ग योगको करके बहुत तपसे अप्राप्य भी विद्याको शिवजीके प्रसादसे प्राप्तकर कोई महापुण्यशाली व्यक्ति अद्वैत परमात्माको भजता है, वैसा नल भी करे। दमयन्ती तथा नल-दोनोंके ही पूर्व जन्मार्जित पुण्य अत्यधिक हैं, अतएव इनका सम्बन्ध बहुत उत्तम हुआ ]॥ ८७॥

स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभूत्
अभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये ?।
आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडयाऽ-
प्येतज्जम्पतिगाढरागरचनात् प्राकर्षि चेतोभुवः ॥ ८८॥

स्त्रीपुंसेति। स्त्री च पुमांश्च स्त्रीपुमांसौ 'अचतुर—' इत्यादिना निपातनात् साधुः। तयोः व्यतिषञ्जनं जनयतः सङ्घटनं कुर्वतः, प्रजानां पत्युः स्रष्टुः, परिपाकेण निर्वृत्तः परिपाकिमः परिपक्वः इत्यर्थः; 'भावप्रत्ययान्तादिमप् वक्तव्यः' इति इमप्प्रत्ययः। अभ्यासः पुनः पुनः स्त्रीपुंससंयोजनकरणरूपावृत्तिः, अनयोः नलदमयन्त्योः, दाम्पत्यस्य जायापतित्वस्य, सम्पत्तये सम्पादनाय, अभूत् किम् ? नो चेत् तस्य कथमीदृगनुरूपसङ्घटकत्वमिति भावः। तथा अभ्यासं विना कथम् ईदृगन्योऽन्यानुरागजननचातुरीभावः? इति तात्पर्यम्। किञ्च, चेतोभुवः कामस्य अपि, आसंसारं संसारम् आरभ्य अभिविधावव्ययीभावः। पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोः, मिथः अन्योऽन्यं, प्रेम्णोऽर्पणम् अनुरागोत्पादनम् एव, क्रीडा तयाऽपि, एतज्जम्पत्योः एतयोर्नल-

दमयन्तीरूपयोः दम्पत्योः 'दम्पती जम्पती जायापती' इत्यमरः । जायाशब्दस्य दम्भावो जम्भावश्च निपातितः । गाढः बद्धमूलः, रागः प्रेम, तस्य रचनात् सम्पादनात्, प्राकर्षि प्रकृष्टया जातम् इत्यर्थः । परस्परानुरागोत्पादनक्रीडाया उत्कर्षः एतयोर्नलभैम्योरेव विश्रान्त इति भावः । कृषेर्भावे लुङ् ॥ ८८ ॥

स्त्री-पुरुषोंको विशेषरूपसे अत्यन्त ( सर्वदा ) मिलाते हुए प्रजापति ( ब्रह्मा ) का अभ्यास इन दोनोंको दम्पती बनानेकी श्रेष्ठताके लिए परिपक्व हो गया है क्या ? ( अथवा- ......प्रजापतिका परिपक्व अभ्यास अर्थात् निरन्तर कार्य करते रहनेसे अच्छी तरह अभ्यस्त शिक्षण ) इन दोनोंको दम्पती बनानेके लिए उत्कृष्ट हुआ है क्या ? । तथा कामदेवकी संसारके प्रारम्भसे स्त्री-पुरुषके लिए परस्पर प्रेमदान ( अनुरागोत्पादन ) रूप क्रीडा भी इन दोनों दम्पती ( नल-दमयन्तीरूप स्त्री-पुरुष ) के परस्पर प्रेमरचनाको बढ़ा दिया है । [ क्योंकि विना सतत अभ्यास किये ब्रह्मा इतना सुन्दर स्त्री-पुरुषकी जोड़ी बनानेमें कदापि समर्थ नहीं होते, अतएव मालूम पडता है कि जिस प्रकार सतत कार्य करता हुआ व्यक्ति अभ्यासके परिपक्व होनेपर सर्वोत्तम कार्य करनेमें समर्थ होता है, उसी प्रकार ब्रह्मा भी स्त्री-पुरुषोंकी जोड़ियोंको सर्वदा मिलाते रहनेसे उस कार्यमें निपुणता पाकर इन दोनोंकी प्रशस्त जोड़ी बनानेमें समर्थ हुए हैं । इसी प्रकार कामदेव भी जो सृष्टिके आरम्भ कालसे स्त्री-पुरुषोंमें परस्परमें अनुराग पैदा करनेकी क्रीडा करता है, वही निरन्तरकृत अभ्यास इन दोनों ( नल तथा दमयन्ती ) के परस्पर अनुरागको बढ़ानेमें समर्थ हुआ है । इन दोनोंको श्रेष्ठतम दाम्पत्य एवं परस्परानुरागका उदाहरण सृष्टिके आरम्भसे एक भी नहीं है ]॥८८॥

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे मन्महे
यद्दृग्भिः पुरुषोत्तमः परिचितः प्राक् मञ्चमञ्चन् कृतः ।
सा स्त्रीराट् पतयालुभिः शितिसितैः स्यादस्य दृक्चामरैः
सस्ने माघमघाभिघातियमुनागङ्गौघयोगे यया ॥ ८९ ॥

ताभिरिति । ताभिः स्त्रीभिः, पथि राजपथे, यान् गच्छन्, यातेर्लटः शत्रादेशः । एष नलः, दृश्यतेः, यासां दृग्भिः नेत्रैः, प्राक् पूर्वस्मिन् जन्मनि, ज्येष्ठया नक्षत्रेण युक्ता पौर्णमासी, ज्यैष्ठी 'नक्षत्रेण युक्तः कालः' इति ङीप् । महती पूज्या, ज्यैष्ठी ज्येष्ठपौर्णमासी, तस्यां यो महः उत्सवः तस्मिन्, मञ्चं पर्यङ्कम्, अञ्चन् गच्छन् मञ्चस्थ इत्यर्थः, 'मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः, पुरुषोत्तमः नारायणः, परिचितः दृष्टः कृतः, नेत्रैः उपासितः इत्यर्थः, तादृक् सुकृतं विना कथमीदृङ्महाभागदर्शनं लभ्यते इति भावः यथाऽऽहुः, दोलारूढञ्च गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते ॥' इति । तथा पतयालुभिः उपरिपातुकैः 'स्पृहिगृहिपति—' इत्यादिना चौरादिकात् पतेरालुचि 'अयामान्तालु-' इत्यादिना णेरयादेशः । शितिभिः श्यामवर्णैः, तथा सितैः शुभ्रैश्च, अस्य नलस्य,

दृग्भिः दृष्टिभिः एव, चामरैः व्यजनैः, सा स्त्रीणां राट् स्त्रीराट् स्त्रीणां राज्ञी, स्त्रीषु श्रेष्ठेत्यर्थः स्यात् भवेत्, 'सत्सूद्विष-' इत्यादिना क्विप्। राजचिह्नत्वात् चामराणामिति भावः, यया स्त्रिया अघानि अभिहन्तीति अघाभिघाती पापविनाशी, ताच्छील्ये णिनिः, 'हो हन्तेः—'इति कुत्वं 'हनस्तोऽचिण्णलोः' इति नकारस्य तकारः। तस्मिन् यमुनागङ्गयोः ओघयोगे प्रवाहसंयोगसमीपे, गङ्गायमुनासङ्गमे प्रयागादौ इत्यर्थः, सामीप्ये अव्ययीभावः, 'तृतीयासप्तम्योर्बहुलम्' इति विकल्पादम्भावाभावः। मघाभिर्नक्षत्रेण युक्ता पौर्णमासी माघी 'नक्षत्रेण युक्तः कालः' इत्यण्। सा माघी अस्मिन् इति माघः। 'साऽस्मिन् पौर्णमासीति' इति संज्ञायामण्-प्रत्ययः। तं माघं माघमासं व्याप्य, अत्यन्तसंयोगे द्वितीया। सस्ने स्नातम् स्नातेर्भावे लिट्। यया प्रयागे स्नातं सैव नलेन अवलोक्यते, अन्यथा कथमीदृङ्महालाभ इति भावः। अत्राप्याहुः—'सितासितेषु यैः स्नातं माघमासे युधिष्ठिर!। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि॥' इति मन्महे विवेचयामि, वाक्यद्वयार्थः कर्मपदम् ॥ ८९ ॥

मार्गमें जाते हुए, पुरुषश्रेष्ठ तथा रथपर सवार इस नलको वे ही स्त्रियां देखती हैं, ज्येष्ठ मासकी पूर्णिमाके श्रेष्ठ उत्सव ( अथवा-श्रेष्ठ ज्येष्ठमासकी पूर्णिमाके उत्सव ) में जिनके नेत्रोंने पूर्व जन्ममें ( या-पहले ) मार्गमें जाते हुए रथारूढ विष्णु भगवान्‌को देखा ( या-बार-बार देखा, या पहले ( अर्थात् सर्वप्रथम देखा ) है। अथवा—मार्गमें जाते हुए इस नलको वे ही ( स्त्रियां ) देखती हैं, जिनके नेत्रोंने…… )। तथा पतनशील कृष्णमिश्रित श्वेत वर्णवाले इनकी दृष्टिरूपी चामरोंसे वही स्त्री रानी ( या-वही स्त्रियोंमें रानी ) है, जिसने पापको सर्वथा नष्ट करनेवाले यमुना तथा गङ्गाके प्रवाहके सङ्गम ( तीर्थराज प्रयागमें गङ्गा-यमुना-सरस्वतीके सम्मिलन स्थान ) में माघ मास तक स्नान किया है, ऐसा हमलोग मानती हैं, ( ऐसा 'नलको देखनेवाली स्त्रियोंने कहा' इस क्रिया पूरक वाक्यका अध्याहार अग्रिम श्लोक (१५।९२) से करना चाहिये )। [ महाज्येष्ठी महोत्सवमें रथपर विराजमान विष्णु भगवान्‌को पहले जन्ममें देखनेवाली स्त्रियां ही उस पुण्यातिशयसे मार्गमें जाते हुए इस नलको देख सकती हैं, अतः हमलोग मार्गमें जाते हुए इस नलको देख रही हैं, यह अपना बड़ा पुण्यातिशय मानना चाहिये, उडिसामें लोग ज्येष्ठ मासकी पूर्णिमा तिथिको इन्द्र-नीलगिरि-निवासी पुरुषोत्तम भगवान्‌का महोत्सव मनाते हैं, उसमें श्रीकृष्ण, बलभद्र आदिकी प्रतिमा को विराजमानकर सात भूमिकावाले रथको-अलग अलग निकलते हैं, उनके दर्शन करनेसे महापुण्य प्राप्त होता है, ऐसा पौराणिक कहते हैं। तथा ये दमयन्तीको कृष्ण-श्वेत कटाक्षसे देखेंगे; अतएव वह स्त्रियोंमें रानी है तथा पूर्वजन्ममें पूरे माघमासमें तीर्थराज प्रयागके गङ्गा-यमुनाके प्रवाहके सङ्गम ( त्रिवेणी ) में पूरे माघ मासमें स्नान किया है, अतएव उसे यह उत्तम वर प्राप्त हुआ है ] ॥ ८९ ॥

वैदर्भीविपुलानुरागकलनासौभाग्यमत्राखिल-
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः ।

किञ्चास्माकनरेन्द्रभूसुभगतासम्भूतये लग्नकं
देवेन्द्रावरणप्रसादितशचीविश्राणिताशीर्वचः ॥ ९० ॥

वैदर्भीति। अखिलक्षौणीचक्रशतक्रतौ अखिलभूलोकदेवेन्द्रे, अत्र अस्मिन् नले, वैदर्भीविपुलानुरागकलना दमयन्तीगाढानुरागलाभः, सा एव सौभाग्यं वाल्लभ्यम् (कर्म) तस्याः भैम्याः, वृत्तवृत्तक्रमैः अतीतचरित्रप्रकाशैः इन्द्रप्रतिषेधादिभिः (कर्तृभिः) 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः, निजगदे गदितं, तादृगनुरागाभावे कथमिन्द्रादिप्रतिषेध इति भावः। किञ्च, देवेन्द्रस्य अवरणेन वरणाकरणेन, प्रसादितया सन्तोषितया, शच्या विश्राणितं दत्तम्, आशीर्वचः एव अस्माकमियम् आस्माकी 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति चकारादण् 'तस्मिन्नणि च युष्माकास्माकौ' इति अस्माकादेशः। तस्याः नरेन्द्रभुवः राजपुत्र्याः भैम्याः, सुभगतायाः पतिवाल्लभ्यस्य, सम्भूतये लाभाय, लग्नकं प्रतिभूः 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः। अभूत् इति शेषः। स्त्रीणां सौभाग्यस्य शचीप्रसादलभ्यत्वादिति भावः ॥ ९० ॥

उस ( दमयन्ती ) के भूतपूर्व चरितों ( इन्द्रादिका त्यागकर नलका वरण करना आदि ) के क्रमोंने पृथ्वीमण्डलके इन्द्र इस ( नल ) में दमयन्तीके गाढ स्नेहरूप सौभाग्यको कह दिया ( अथवा—हमलोगोंसे पढ़े गये नलके चरित-सम्बन्धी पद्य-समूहोंने दमयन्तीमें अधिक स्नेहरूप सौभाग्यको इस भूलोकके इन्द्र नलमें कह दिया। अन्यथा यह दमयन्ती स्वर्गाधीश देवेन्द्रादिका त्यागकर नलका वरण कैसे करती, इससे सूचित होता है कि नलमें ही दमयन्तीका प्रगाढ स्नेह है )। और इन्द्रके वरण नहीं करनेसे प्रसन्न की गयी इन्द्राणीके दिये गये आशीर्वाद ( पाठा०—आशीर्वादरूप वेद अर्थात् वेदतुल्य सत्य वचन ) 'हमलोगोंके राजा ( भीम ) की कन्या ( दमयन्ती ) के सौभाग्यकी उत्पत्तिके लिए उत्तरदायी ( जिम्मेदार ) हो गया। [ दमयन्ती स्वयंवरमें आये हुए इन्द्रको वरण कर लेती तो इन्द्राणी सपत्नी ( सौत ) होनेसे दुःखित होती, अतः वैसा ( इन्द्रका वरण ) नहीं करनेसे इन्द्राणीने प्रसन्न हो कर दमयन्तीके लिए जो आशीर्वाद दिया है, वही दमयन्तीके सौभाग्य-समुपत्तिके लिए उत्तरदायी हो गया है; क्योंकि इन्द्राणीकी प्रसन्नता स्त्रियोंके सौभाग्यकी वृद्धिका कारण माना जाता है ] ॥ ९० ॥

आसुत्रामममपासनान्मखभुजां भैम्यैव राजव्रजे
तादर्थ्यागमनानुरोधपरया युक्ताऽऽर्जि लज्जामृजा।
आत्मानं त्रिदशप्रसादफलितं पत्ये विधायानया
हीरोषापयशःकथानवसरः सृष्टः सुराणामपि ॥ ९१ ॥

आसुत्राममिति। राज्ञां भूभुजां व्रजे राजव्रजे स्वयंवरगतराजसमाजे, तादर्थ्येन

१. '—ताशीःश्रुतिः' इति पाठान्तरम्। 'अयन्तु पाठः साधीयान्' इति प्रकाशः।
२. 'पत्ये नयन्त्यानया' इति पाठान्तरम्।

स नलः अर्थः प्रयोजनं यस्य तस्य भावः तादर्थ्यं नलप्रयोजनकत्वं, तेन हेतुना यत् आगमनं स्वयंवरप्रवेशनं, तस्य अनुरोधः अनुवर्त्तनमेव, परं प्रधानं यस्याः तया नलैकपरया, भैम्या आसुत्रामम् इन्द्रपर्यन्तम्, अभिविधावव्ययीभावः। 'अनश्च' इति समासान्तष्टच्। 'सुत्रामा गोत्रभिद् वज्री' इतीन्द्रपर्याये अमरः, मखभुजां देवानाम्, अपासनात् प्रत्याख्यानात् हेतोः, लज्जायाः मृजा प्रमार्जनं, युक्ता योग्या एव आर्जि अर्जिता, 'आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्' इति न्यायादिति भावः। अनया भैम्या, त्रिदशप्रसादेन देवानुग्रहेण, फलितं सफलम्, आत्मानं पत्ये वराय नलाय, विधाय दत्त्वा, सुराणां ह्रीरोषापयशसां प्रत्याख्यानजनितलज्जाक्रोधदुष्कीर्त्तिप्रसक्तानां, कथानाम् अनवसरोऽपि सृष्टः अनवकाशः कृतः, तदनुज्ञयैव प्रकृते वरणम् इति अत्र कश्चिदपयशः कथानवकाश इति भावः॥ ९१॥

राजसमूहमें उस ( नल ) के लिए ( स्वयंवरमें ) आनेके अनुरोधकी प्रधानतावाली अर्थात् नल-वरणार्थ ही मुख्यतः स्वयंवरमें आयी हुई दमयन्तीने ही इन्द्रपर्यन्त देवोंका त्याग करनेसे जो लज्जाका मार्जन किया वह उचित ही किया ( अथवा—उस दमयन्ती ) के लिए ( राजाओंके ) आनेके अनुरोध ( अनुकूलता ) में तत्पर दमयन्तीने ही इन्द्र पर्यन्त देवोंका त्यागकर राज-समूहमें अर्थात् राजाओंके विषयमें लज्जाका जो मार्जन ( राजाओंकी लज्जाको दूर ) किया वह उचित ही किया। [ प्रथम अर्थमें—दमयन्ती राज-समूहमें नलको वरण करनेका अपना मुख्य लक्ष्य बनाकर स्वयंवर सभामें आयी थी, अतः लज्जाको छोड़कर उसने इन्द्रतक देवोंका त्याग कर अभीष्ट वरको प्राप्त किया, अन्यथा यदि वह लज्जा नहीं करती अर्थात् नलको छोड़कर इन्द्रादि देवों या राजाओंमें-से किसीका वरण कर लेती तो अपने अभीष्ट नलको नहीं पाती, अतः 'आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्' अर्थात् 'आहार तथा व्यवहार में लज्जाको छोड़नेवाला व्यक्ति सुखी होता है' नीतिके अनुसार दमयन्तीने ही लज्जाका त्यागकर उचित कार्य किया, अन्य कोई स्त्री ऐसा नहीं कर सकती। द्वितीय अर्थमें—दमयन्तीको पानेके उद्देश्यसे बहुत-से राजा लोग स्वयंवरमें आये थे, अतः दमयन्तीने उन राजाओंका ही नहीं अपितु इन्द्रपर्यन्त देवोंतकका त्यागकर राजाओंकी लज्जाको जो बचा लिया वह उचित ही किया। राजालोग दमयन्तीके उद्देश्यसे स्वयंवरमें आये थे, अतः दमयन्तीने उनकी लज्जा बचाकर उचित कार्य किया, अन्यथा वे बहुत लज्जित होते कि हमें दमयन्तीने वरण नहीं किया। अब जब कि दमयन्तीने इन्द्रतकका त्यागकर नलका वरण किया तो 'जब इन्द्रपर्यन्त देवोंको दमयन्तीने छोड़कर नलका वरण कर लिया तो इन्द्रादि देवोंके सामने मेरी क्या गणना है?' इस विचारसे राजालोग अब लज्जित नहीं होंगे, अत एव दमयन्तीने ही यह उचित कार्य किया दूसरी वधू ऐसा नहीं कर सकती थी। इस प्रकार राज-समूहकी लज्जाका निवारण करने पर भी इन्द्रादि देवोंका त्यागकर मनुष्य नलका वरण करनेसे उन्हें ( इन्द्रादि देवोंको ) लज्जा हो सकती है, किन्तु दमयन्तीने उनकी भी लज्जाका मार्जन ( निवारण ) किया इस

बातको श्लोकके उत्तरार्द्धसे कहते हैं—] पति (नल) के लिए अपनेको (इन्द्रादि चार) देवोंकी प्रसन्नताका फल बनाकर अर्थात् देवताओंको प्रसन्नकर नलको पति बनाकर देवोंके लज्जा, क्रोध तथा अपकीर्ति (बदनामी-अयश) होनेकी बातका (दमयन्तीने) अवसर ही नहीं दिया। ('ऐसा नलको देखनेवाली स्त्रियोंने कहा' इस क्रियापूरक वाक्यका अध्याहार अग्रिम श्लोक (१५।९२) से करना चाहिये)। [यदि दमयन्ती इन्द्रादि चारों देवोंको बिना प्रसन्न किये ही नलका वरण कर लेती तो उन्हें 'इस दमयन्तीने हम लोगों (देवों) को छोड़कर नलका वरण किया' इस विचारसे अन्यान्य देवों तथा अपनी अपनी पतियोंके प्रति लज्जा होती, हम लोगोंको स्वयमेव उपस्थित रहने पर भी मनुष्य नलका वरण कर हम लोगोंका त्याग किया' इस विचारसे उन्हें (इन्द्रादि चारो देवोंको) क्रोध आता और 'हमलोगोंका त्यागकर मनुष्य नलका वरणकर हमलोगोंको अपमानित किया' इस विचारसे वे अपना अपयश मानते; किन्तु दमयन्तीने पहले उन्हें स्तुतिद्वारा प्रसन्नकर उनके आदेशसे ही नलको पति बनाया, अत एव अब लोग ऐसा समझेंगे कि ये इन्द्रादि देव दमयन्तीके लिए नलको पतिरूपमें देनेके लिए ही स्वयंवरमें पधारे थे, दमयन्तीको पानेके लिए नहीं' इससे उन्हें लज्जित, क्रोधित तथा अपयशसे युक्त (बदनाम) होनेका अवसर ही नहीं रहा। इस प्रकार सब कार्य इन दोनोंके लिए मङ्गलप्रद हो रहे हैं] ॥ ९१ ॥

इत्यालेपुरनुप्रतीकनिलयालङ्कारसारश्रिया-
ऽलङ्कुर्वत्तनुरामणीयकममूरालोक्य पौरस्त्रियः।
सानन्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं
तस्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दोरिव ॥ ९२ ॥

इतीति। कुरुविन्दः पद्मरागः 'कुरुविन्दस्तु मुस्तायां कुलमापव्रीहिभेदयोः। हिङ्गुले पद्मरागेऽपि मुकुलेऽपि समीरितः ॥' इति विश्वः। तद्वत् सुन्दरौ करौ हस्तौ यस्य तस्य; अन्यत्र सुन्दराः कराः अंशवः यस्य तस्य, आनन्दयतीति आनन्दनम् आनन्दकरम्, नन्द्यादित्वाल्ल्युः। स्यन्दनं रथम्, अध्यास्य अधिष्ठाय, यतः गच्छतः, इणो लटः शत्रादेशः। तस्य नलस्य, शतक्रतुहरितः प्राच्याः दिशः, क्रीडाद्रिं क्रीडा-पर्वतम्, उदयाद्रिमिति यावत्, अध्यास्य यतः गच्छतः, इन्दोः इव अनुप्रतीकनिलयानां प्रत्यवयवसंश्रयाणाम्, अलङ्कारसाराणाम् उत्कृष्टाभरणानां, श्रिया शोभया साधनेन, अलङ्कुर्वत्या आत्मानं प्रसाधयन्त्याः, तनोः मूर्त्तेः, रामणीयकं रमणीयत्वम्। 'योपधात् गुरुपोत्तमात् वुञ्' इति वुञ्प्रत्ययः, आलोक्य अमूः पौरस्त्रियः इति पूर्वोक्त-रीत्या, सानन्दं यथा तथा आलेपुः आलपन्। आलपेर्लिट्, अत एव एत्वाभ्यासलोपौ ॥

पद्मराग मणिके समान अरुणवर्ण (लाल) हाथ वाले तथा आनन्दकारक रथपर चढ़कर जाते हुए (पक्षा०—पद्मराग मणिके समान अरुण वर्ण किरणोंवाले तथा नन्दनवन तक

१ 'पौरप्रियाः' इति प्रकाशसम्मतं पाठान्तरम्।

( व्याप्त होकर ) पूर्व दिशाके क्रीडापर्वत अर्थात् उदयाचल पर चढ़कर जाते ( उदय होते हुए ) चन्द्रमाके समान उस ( नल ) की प्रत्यङ्गमें धारण किये अलङ्कारोंकी सारभूता ( अतिशय श्रेष्ठ ) शोभासे अभिमान करते हुए ) अथवा—अपनी-अपनी शोभाको अहमहमिकापूर्वक श्रेष्ठ बताते हुए शरीरकी शोभाको देखकर सानन्द नागरिक स्त्रियों ( पाठा०—नागरिकोंकी प्रियाओं ) ने इस प्रकार ( १५।८३-९१ ) कहा। [ 'करसौन्दर्यसे मेरा सौन्दर्य श्रेष्ठतर है' ऐसा बाहुके, 'बाहुसौन्दर्यसे मेरा सौन्दर्य श्रेष्ठतर है' ऐसा करके, इसी प्रकार नलके प्रत्येक अङ्ग अपनी शोभाको परस्परमें श्रेष्ठ बतला रहे थे, अथवा—'मद्भिन्न सब अङ्गोंसे मेरी शोभा श्रेष्ठतम है' ऐसा नलके प्रत्येक अङ्ग अपनी-अपनी शोभाको दूसरे सभी अङ्गोंसे श्रेष्ठतम बतला रहे थे अर्थात् नलके प्रत्येक अङ्गकी शोभा दूसरे अङ्गोंसे बढ़ी-चढ़ी थी, उसे देखकर आनन्दित स्त्रियोंने परस्परमें उक्त बातें ( १५।८३-९१ ) कहीं ] ॥ ९२ ॥

**श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं**
**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।**
**यातः पञ्चदशः कृशेतररसस्वादाविहायं महा-**
**काव्ये तस्य हि वैरसेनिचरिते सर्गो निसर्गोज्ज्वलः ॥ ९३ ॥**

श्रीहर्षमिति । कृशेतरेण अकृशेन, निर्भरेण इत्यर्थः, रसेन श‍ृङ्गारेण, स्वादौ रुचिरे इह स्वस्य कृतौ काव्ये, पञ्चदशानां पूरणः पञ्चदशः 'तस्य पूरणे डट्' इति डट् अयं सर्गो यातः गतः, समाप्तः इति यावत् ॥ ९३ ॥

इति 'मल्लिनाथ' विरचिते 'जीवातु' समाख्याने पञ्चदशः सर्गः समाप्तः ॥ १५ ॥

कवीश्वर-समूहके ...... किया, उसके रचित अत्यधिक रससे स्वादिष्ट ( अमृतमय ) नलीयचरित अर्थात् 'नैषधचरित' नामक ...... यह पञ्चदश सर्ग समाप्त हुआ । ( शेष व्याख्या चतुर्थ सर्गके समान जाननी चाहिये ) ॥ ९३ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित' का पञ्चदश सर्ग समाप्त हुआ ॥ १५ ॥

## षोडशः सर्गः ।

**वृतः प्रतस्थे स रथैरथो रथी गृहान् विदर्भाधिपतेर्धराधिपः ।**
**पुरोधसं गौतममात्मवित्तमं द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥**

वृत इति । अथो प्रसाधनानन्तरं, गृहीतमङ्गलः स्वीकृतमङ्गलाचारः, रथः अस्य अस्तीति रथी रथिकः, स धराधिपः नलः, आत्मवित्तमम् आत्मतत्त्वज्ञानिनां श्रेष्ठं, गौतमं गौतमाख्यम् ऋषिं, पुरोधसं पुरोहितं, द्विधा प्रकारद्वयेन, पुरस्कृत्य पूजयित्वा अग्रे कृत्वा च 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते' इत्यमरः। रथैः रथिभिः पुरुषैः, 'कुन्ताः प्रविशन्ति' इतिवत् रथशब्दस्य रथिषु लक्षणा । वृतः वेष्टितः सन्, विदर्भा-

धिपतेः भीमस्य, गृहान् प्रति प्रतस्थे प्रस्थितः। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। वंशस्थविलं वृत्तम् ॥ १ ॥

इस ( प्रसाधन कार्य, या—रथारोहणकार्य ) के अनन्तर मङ्गलाचार ( दही अक्षत दूर्वादि मङ्गल द्रव्योंके यथाशास्त्र दर्शन, स्पर्शन तथा भक्षणादि द्वारा ) को ग्रहण किये हुए, रथवाले ( रथ पर सवार ), वे राजा ( नल ) आत्मज्ञानियोंमें अतिशय श्रेष्ठ 'गौतम' नामक पुरोहितको दो प्रकारसे पुरस्कृतकर ( पूजाकरने तथा सबसे आगे गमन करानेसे सत्कृतकर ) रथवालों अर्थात् रथपर चढ़े हुए पार्श्वचरोंसे परिवेष्टित होकर विदर्भराज ( भोज ) के महलोंको चले ॥ १ ॥

**स्वभूषणांशुप्रतिबिम्बितैः स्फुटं भृशावदातैः स्वनिवासिभिर्गुणैः।**
**मृगेक्षणानां समुपासि चामरैर्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥**

स्वेति। सः प्रभुः नलः, स्वभूषणानाम् अंशुषु प्रभासु, प्रभाशालिमणिषु इति यावत्, प्रतिविम्बितैः प्रतिफलितैः, विधूयमानैः कम्प्यमानैः, विधोः चन्द्रस्य, प्रभा इव प्रभा येषां तैः, अत्र निदर्शनाविशेषः, मृगेक्षणानां हरिणलोचनानां, चामरग्राहिणीनां सम्बन्धिभिरिति भावः चामरः चामरव्यजनेनेत्यर्थः, भृशावदातैः अतिशुभ्रैः, स्वनिवासिभिः स्वनिष्ठैः, अत एव स्वभूषणांशुप्रतिविम्बितैः, गुणैः नलस्य श्रुतशीलादिगुणैः एव, समुपासि उपासितः, स्फुटम्। प्रतिविम्बितचामरेषु स्वामिसेवार्थम् आविर्भूतस्वीयशीलसौन्दर्यादिगुणत्वस्योत्प्रेक्षालङ्कारः॥ २ ॥

उस राजा ( नल ) की अपने ( पाठा०—विशिष्ट ) भूषणोंकी किरणोंमें प्रतिविम्बित, डोलाये जाते हुए, चन्द्रप्रभातुल्य प्रभावाले और अतिशय श्वेतवर्णवाले ( चामरधारिणी ) मृगनयनियोंके चामरोंने उपासना ( सेवा ) की, अर्थात् चामरधारिणी मृगनयनी स्त्रियोंने जो चामर डोलाया, वह ऐसा मालूम पडता था कि नलमें वास करने ( सर्वदा रहने ) वाले अतिशय निर्मल ( दया, दाक्षिण्य, शूरता आदि ) गुण उनकी सेवा कर रहे हों। [ उक्तरूप चञ्चल चामर ऐसे जान पडते थे कि उस नलमें जो दया-दाक्षिण्यादि अतिशय निर्मल गुण हैं, वे ही चामररूपमें साकार होकर नलकी उपासना कर रहे हैं। लोकमें भी जो जिस स्वामीके यहां सर्वदा निवास करता है, वह उत्सवादिके अवसरोंपर बड़ी लगनके साथ उसकी सेवामें करनेमें लग जाता है, अतएव नलमें नित्य रहनेवाले गुणोंका भी अपने स्वामी नलकी सेवामें लगना उचित ही है ] ॥ २ ॥

**परार्द्ध्यवेशाभरणैः पुरःसरैः सहाऽऽजिहाने निषधावनीभृति।**
**दधे सुनासीरपदाभिधेयतां स रूढिमात्रात् यदि वृत्रशात्रवः ॥ ३ ॥**

परार्द्ध्येति। निषधावनीभृति नले, परार्द्ध्यानि श्रेष्ठानि। 'परावराधमोत्तमपूर्वाच्च' इति यत्प्रत्ययः। वेशाः आकल्पाः, वस्त्राभरणादिशोभाः इति यावत् 'आकल्प-

१. '—वेषा—' इति पाठान्तरम्। २. 'समं जिहाने' इति पाठान्तरम्।

वेशौ नेपथ्यम्' इत्यमरः। ते च आभरणानि च कटकमुकुटादीनि च येषां तैः, पुरःसरैः सुनासीरैः, अग्रगामिभिः वरपक्षीयैः लोकैरिति यावत्, सह आजिहाने गच्छति सति, स प्रसिद्धः, वृत्रशात्रवः इन्द्रः, रूढिमात्रात् अश्वकर्णादिवत् समुदायशक्त्या अर्थप्रतीतिमात्रात्, सु शोभनाः, 'सु पूजायाञ्च सुरे' इति स्वामी। नासीरा अग्रेसराः यस्य सः सुनासीरः इन्द्रः, इति पदस्य शब्दस्य, अभिधेयतां वाच्यत्वं, यदि सम्भावनायां, दधे दधार, न तु सु शोभनाः, नासीराः अग्रेसरा यस्येति योगलभ्यार्थप्रतीतितः, यौगिकतया सुनासीरशब्दप्रतिपाद्यत्वस्य नले एव वर्त्तमानत्वात् न तु इन्द्रे। नलस्य नासीरदर्शनादयमेव सुनासीरः न तु इन्द्र इति प्रतीयते, नलपुरःसराणाम् इन्द्रपुरःसरेभ्यो देवेभ्योऽपि श्रेष्ठत्वात् इति भावः ॥ ३ ॥

निषधराज ( नल ) के, श्रेष्ठतम वेषभूषाधारी आगे चलनेवाले लोगोंके साथ आते ( पाठा०—चलते ) रहनेपर उस ( लोक-प्रसिद्ध ) इन्द्रने 'सुनासीर' पदवाच्यत्वको धारण किया अर्थात् 'सुनासीर' नामको प्राप्त किया तो केवल रूढिमात्रसे ही प्राप्त किया। [ नलके 'नासीर' से निकलकर सुन्दर वेष-भूषणावाले लोग आगे-आगे चल रहे थे, अतएव नल ही अवयवार्थयुक्त 'सुनासीर' ( सुन्दर नासीर वाले ) थे और इन्द्रका 'सुनासीर' नाम तो केवल रूढिमात्रसे मण्डपादि शब्दोंके समान ही हुआ, क्योंकि वे इन्द्र सुन्दर नासीर ( शिविर ) वाले नहीं होनेसे पाठक, अध्यापक आदि शब्दोंके समान अवयवार्थयुक्त नामवाले नहीं थे ॥ नल इन्द्रसे तथा उनके आगे चलनेवाले लोग देवोंसे भी श्रेष्ठ थे ] ॥ ३ ॥

नलस्य नासीरसृजां महीभुजां किरीटरत्नैः पुनरुक्तदीपया।
अदीपि रात्रौ वरयात्रया तया चमूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥

नलस्येति। चमूरजोभिः सैन्यपदोत्थधूलिभिः, मिश्राः घनीभूताः, तमिस्रसम्पदः यस्यां तया, चमूपदोत्थितरजोहेतुना गाढान्धकारयेत्यर्थः, तथाऽपि नलस्य नासीरसृजाम् अग्रेसरत्वसम्पादकानाम्, अग्रयायिनामित्यर्थः। महीभुजां राज्ञां, किरीटरत्नैः मुकुटस्थितमणिभिः, पुनरुक्ताः रत्नकिरणैरेवान्धकारापसारणात् निष्प्रयोजनतया अधिकार्थकाः, दीपाः यस्यां तादृशया, तया प्रकृतया, वरस्य वोढुः यात्रया वैवाहिकगृहयात्रया, रात्रौ अदीपि दीप्तं, शोभितमित्यर्थः। ( भावे लुङ् ) रत्नदीपप्रकाशेन सा यात्रा गाढान्धकारेऽपि दीपवती इत्यर्थः ॥ ४ ॥

सेना ( के घोड़े रथ आदि ) को धूलसे अधिक अन्धकार युक्त ( होनेपर भी ) सेनाके अग्रेसर राजाओंके मुकुटोंके रत्नों ( की कान्ति ) से व्यर्थ किये गये दीप ( मसालों, या वर्तमान कालानुसार गैस आदि रोशनियों ) वाली नलकी बारात रातमें प्रकाशमान हुई। [ यद्यपि सेनाके रथ घोड़े पैदल आदिके चलने से उड़ी हुई धूलसे बहुत अन्धकार हो गया तथापि सेनाग्रगामी राजाओंके मुकुटों में जड़े गये रत्नोंकी किरणोंसे इतना अधिक प्रकाश हुआ कि जलते हुए दीपक ( गैस या मसाल ) भी अनावश्यक मालूम पड़ने लगे, इस कारण वह नलकी वरयात्रा ( बारात ) रात्रिमें अधिक शोभित हुई। रात्रिमें दीपक या रत्नों

का अधिक प्रकाशित होना उचित भी है । वर्तमान कालमें भी दरवाजे लगानेके लिए जाती हुई बारातको मसाल गैस डायनुमासे जलनेवाले बिजलीके बल्ब आदिके प्रकाशसे प्रकाशित करना वरपक्षका गौरव माना जाता है । नलकी बारातमें राजाओंको सेनाके आगे-आगे चलनेसे नलका चक्रवर्ती होना सूचित होता है। दीपकोंसे आलोकपूर्ण नलकी बारात दरवाजे लगनेके लिए चली ] ॥ ४ ॥

विदर्भराजः क्षितिपाननुक्षणं शुभक्षणासन्नतरत्वसत्वरः ।
दिदेश दूतान् पथि यान् यथोत्तरं चमूममुष्योपचिकाय तच्चयः ॥ ५ ॥

विदर्भेति । विदर्भराजः भीमः, शुभक्षणस्य विवाहमुहूर्त्तस्य, आसन्नतरत्वेन समीपवर्त्तित्वेन, सत्वरः सन् अनुक्षणं प्रतिक्षणं, मुहुर्मुहुरित्यर्थः । यान् क्षितिपान् एव दूतान्, उत्तरोत्तरं यथा यथोत्तरं परं परं यथा स्यात् तथा । याथार्थ्ये वीप्सायाम-व्ययीभावः । दिदेश आज्ञापयामास, नलं सत्वरमानयितुं प्रेषितवान् इत्यर्थः । तच्चयः तेषां प्रेषितानां राज्ञां, चयः समूहः, पथि मार्गे, अमुष्य नलस्य, चमूं सैन्यम्, उपचि-काय वर्द्धयामास । चिञ् धातोः लिटि 'विभाषा चेः' इति कुत्वम् । दूतत्वेन राज्ञां बहूनां प्रेषणया लग्नातिक्रमभीरोः राज्ञस्त्वरातिशयोक्तिः ॥ ५ ॥

शुभ समय ( विवाहके शुभ लग्न ) के अत्यन्त समीप आनेसे शीघ्रता करनेवाले विदर्भ-राज ( भोज ) ने जिन राजाओंको दूत बनाकर ( नलको जल्दी लिवा लानेके लिए ) प्रत्येक क्षणमें ( एकके बाद दूसरेको, उसके बाद तीसरेको—इस प्रकार बहुतोंको ऐसा ) भेजा, जिससे मार्गमें जाते हुए उन ( भोजके द्वारा नलको शीघ्र लिवा लानेके लिए दूत रूपमें भेजे गये राजाओं ) के समूहने इस ( नल ) की सेनाको बढ़ा दिया । [ बारातको शीघ्र दरवाजे लगा-नेके लिए कन्यापक्षका बार, बार दूत ( नाई आदि ) या अत्यन्त शीघ्रता या वरपक्षका समा-दर करनेके लिए स्वजनोंको भेजकर वरको जल्दी आनेकी प्रार्थना करने पर भी वरपक्षका अपनी शानसे ही धीरे-धीरे आगे बढता वर्तमानमें भी देखा जाता है । प्रकृतमें राजा भोजके राजाओंको दूत बनाकर बार-बार भेजनेसे वरपक्षका अत्यन्त आदर तथा शीघ्रता करना सूचित होता है ] ॥ ५ ॥

हरिद्विपद्वीपिभिरंशुकैर्नभोनभस्वदाध्मापनपीनितैरभूत् ।
तरस्वदश्वध्वजिनीध्वजैर्वनं विचित्रचीनांशु[1]कवल्लिवेल्लितम् ॥ ६ ॥

हरीति । नभः अन्तरिक्षं, नभस्वता वायुना, आध्मापनेन पूरणेन, पीनितैः स्थू-लितैः, वायुवेगेन स्फीततां गतैरित्यर्थः । अत एव सजीवसिंहादिवत् प्रतीयमानैरिति भावः । 'पीनपीव्नी न स्थूलपीवरे' इत्यमरः । अंशुकैः वस्त्रनिर्मितैः, हरिद्विपद्वीपिभिः सिंहगजव्याघ्रैः, तदाकारैः ध्वजैः इत्यर्थः । 'सिंहो मृगेन्द्रः पञ्चास्यः हर्यक्षः केशरी हरिः' इति, 'मतङ्गजो गजो नागो द्विरदोऽनेकपो द्विपः' इति, 'शार्दूलद्वीपिनौ व्याघ्रे'

1. '-रांशुकै-' इति प्रकाशाभिमतं पाठान्तरम् ।

इति चामरः। तथा तरस्विनां वेगवताम्, अश्वानां ध्वजिनीषु अश्वारोहिसेनासु, ये ध्वजाः पताकाः तैः करणैः, विचित्राणि नानारूपाणि, चीनांशुकानि ध्वजसम्बन्धीनि चीनदेशभवसूक्ष्मवस्त्राणि, तैः एव वल्लिभिः तलाभिः, वेल्लितं वेष्टितं सत्, वनम् वनतुल्यम्, अभूत्, वनकल्पम् अभूदित्यर्थः। वनं यथा सिंह–हस्ति–व्याघ्र–वृक्षादिभिः वेष्टितं भवति, तथा तद्देशावच्छिन्नं नभोऽपि वस्त्रनिर्मितसिंहहस्तिव्याघ्रचिह्नितध्वजैर्वेष्टितमभूदिति भावः॥ ६॥

आकाश वायुसे परिपूर्ण ( स्थूल बने हुए ) कपड़ेके बनाये गये घोड़ों, हाथियों और बाघों ( की आकृतिवाली पताकाओं ) से तथा वेगवान् ( तेज चलनेवाले ) घोड़ोंवाली सेनाकी पताकाओंसे अनेक वर्णवाले चीनदेशके बने महीन ( पक्षा०—'चीन' जातिके विचित्र वर्णवाले मृगविशेष ) वस्त्ररूपिणी लताओंसे युक्त वन ( के समान ) हो गया। ( अथवा— तेज घोड़ोंवाली ( नलकी ) सेना आकाशमें वायुसे परिपूर्ण अर्थात् फैलायी गयी पताकाओंसे, घोड़ों, हाथियों और अन्य द्विपनिवासी ( नलकी ) सेनामें सम्मिलित हुए राजाओंसे उपलक्षित ( युक्त ) होकर अनेक वर्णके चीनदेशोत्पन्न वस्त्ररूपिणी लताओंसे युक्त ( पक्षा०— 'चीन' जातीय मृगविशेष तथा ऊपरमें फैली हुई लताओंसे युक्त ) वन अर्थात् वनके समान हो गयी )। [ वनमें भी बाघ, 'चीन' जातीयमृग, लता, तथा वृक्ष होते हैं, अत एव उक्तरूपा नलकी सेना भी वनके समान हो गयी ]॥ ६॥

भ्रुवाऽऽह्वयन्तीं निजतोरणस्रजा गजालिकर्णानिलखेलया ततः।
ददर्श दूतीमिव भीमजन्मनः स तत्प्रतीहारमहीं महीपतिः॥ ७॥

भ्रुवेति। ( ततः प्रस्थानानन्तरम् )[1] सः महीपतिः नलः, गजालीनां द्वारस्थितगजघटानां, कर्णानिलैः कर्णसञ्चालनोत्थवातैः, खेलतीति तादृशया खेलया चञ्चलया, निजया तोरणस्रजा तोरणलम्बिमालया एव, भ्रुवा आह्वयन्तीं 'शीघ्रम् आगच्छ' इति भ्रूसङ्केतेन आकारयन्तीं, भीमजन्मनः भैम्याः, दूतीम् इवेत्युत्प्रेक्षा। तस्य भीमस्य, प्रतीहारमहीं द्वारभूमिं, द्वारदेशमित्यर्थः। प्रतिपूर्वकात् ह्वधातोर्घञि 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति उपसर्गस्य दीर्घः। 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः। ददर्श॥ ७॥

इस ( प्रस्थान करने ) के बाद उस राजा ( नल ) ने ( द्वारपर खड़े ) गज-समूहके कानोंकी हवाके चञ्चल ( हिलती हुई ) अपनी तोरणमालारूपी भौंहोंसे बुलाती हुई दमयन्ती दूतीके समान उस ( भीम राजा ) के द्वारभूमि अर्थात् द्वारको देखा। [ द्वारपर बँधे या खड़े हुए हाथियोंके समूहके कानोंकी हवासे हिलती हुई फूलों एवं पल्लवोंसे बनी हुई तोरणमाला ऐसी मालूम पड़ती थी कि मानो वह दमयन्तीकी द्वारभूमिरूपिणी दूती अपने भ्रूचालनके संङ्केतसे नलको शीघ्र पहुंचनेके लिये कह रही हो॥ नलने राजा भीमके द्वारको देखकर शीघ्रतापूर्वक आगे बढ़े ]॥ ७॥

---

१. ( ) एतत्कोष्ठान्तर्गतः पाठो मूलानुरोधान्मया वर्द्धित इत्यवधेयम्।

श्लथैर्दलैः स्तम्भयुगस्य रम्भयोश्चकास्ति चण्डातकमण्डिता स्म सा।
प्रियासखीवास्य मनः स्थितिस्फुरत्सुखागतप्रश्नितनूर्यनिस्वना॥ ८॥

श्लथैरिति। रम्भयोः स्तम्भयुगस्य द्वारशोभार्थं स्थापितकदलिस्तम्भयुगलस्य, श्लथैः शिथिलैः, दलैः पर्णैः, तद्रूपेणेत्यर्थः। चण्डातकेन अर्द्धोरुकेण, वराङ्गनापरिधेयवस्त्रविशेषेणेत्यर्थः। 'अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्' इत्यमरः। मण्डिता भूषिता, सा तत्प्रतीहारमही, मनसि नलस्य चित्ते, स्थितिः सर्वदा चिन्तया अवस्थानं, तया नलमनोगतत्वेनेत्यर्थः। स्फुरन् सर्वदा मनसि अवस्थानात् निर्गच्छन्, यः सुखागतस्य प्रश्नः सुखेनागमनविषयकप्रश्नः, स कृतः सुखागतप्रश्नितः सुखागमनप्रश्नरूपतासम्पादितः। 'तत् करोतेः—' इति णिजन्तात् कर्मणि क्तः। तूर्यनिस्वनः यया सा सती, अस्य नलस्य, प्रियासखी भैमीसखी इव, चकास्ति स्म चकासामास। कदलीदलरूपसुवसना तत्प्रतीहारभूमिः तूर्यनिस्वनयोगात् स्वागतं पृच्छती भैमीसखीव बभौ इत्युत्प्रेक्षा॥ ८॥

केलेके दो खम्भोंके शिथिल (नीचे लटकते हुए) पत्तोंसे लहँगा (या बुर्का) से सुशोभित वह (द्वारभूमि) अन्तःकरणमें (नलके सदा) रहनेसे उल्लासित होते हुए सुखपूर्वक आगमनके प्रश्नको करनेवाले वाजेके शब्दवाली इस (नल) की प्रिया (दमयन्ती) सखीके समान शोभती थी। [मङ्गलार्थ द्वारके दोनों ओर रखे गये केलेके खम्भोंके नीचेतक लटकते हुए पत्तोंसे सुशोभित और वाजाओंकी ध्वनिसे युक्त वह द्वारभूमि ऐसी मालूम पड़ती थी कि लहँगा या बुर्का पहनी हुई दमयन्ती-सखी नलके सुखपूर्वक आनेका कुशल-प्रश्न कर रही हो। यहां खम्भोंको द्वारभूमिरूपिणी सखीकी जङ्घाएं, लटकते हुए पत्तोंको लहँगा या बुर्का, वाजाओंकी ध्वनिको कुशल-प्रश्नकी उत्प्रेक्षा की गयी है॥ बहुत दिनके बाद मिलनेवाले दूरदेशसे आये हुए पतिसे लज्जावश स्वयं सुखपूर्वक आनेके कुशल-प्रश्नको नहीं कर सकनेके कारण स्त्री अपनी सखीको उस कार्यमें नियुक्त करती है और वह लँहगा या बुर्का पहनी हुई द्वारपर आकर कुशल-प्रश्न करती है]॥ ८॥

विनेतृभर्तृद्वयभीतिदान्तयोः परस्परस्मादनवाप्तवैशसः।
अजायत द्वारि नरेन्द्रसेनयोः समागमः स्फारमुखारवोद्गमः॥ ९॥

विनेत्रिति। विनेत्रोः नियामकयोः, भर्त्रोः नलभीमरूपयोः स्वामिनोः, द्वयं तस्मात् भीत्या भयेन, दान्तयोः शान्तयोः, नरेन्द्रसेनयोः भीमनलवाहिन्योः, परस्परस्मात् अन्योऽन्यस्मात्, अनवाप्तम् अप्राप्तं, वैशसं हिंसनं यस्मिन् स तादृशः, स्फारः तारः, मुखारवोद्गमः मुखकलकलोदयः यस्मिन् स तादृशः, समागमो मेलनं, द्वारि राजभवनद्वारे, अजायत जातः॥ ९॥

नियामक दोनों स्वामियों (नल तथा भीम) के भयसे शान्त (युद्धादि नहीं करती हुई दोनों) राज-सेनाओं (नल तथा भीमकी सेनाओं) का आपसमें (आघात प्रत्याघात

आदि ) क्रूर भावसे रहित तथा बढ़ते हुए कोलाहलवाला समागम ( राजा भीमके ) द्वारपर हुआ । [ राजा नल तथा भीमकी सेनाएं राजा भीमके द्वारपर परस्परमें मिल गयीं और प्रेमभावके कारण युद्ध आदि नहीं हुआ, किन्तु सबोंके बोलनेसे बड़ा कोलाहल हुआ ] ॥९॥

निवेश्य[1] बन्धूनित इत्युदीरितं दमेन गत्वाऽर्द्धपथे कृतार्हणम् ।
विनीतमा[2]-द्वारत एव पद्गतां गतं तमैक्षिष्ट मुदा विदर्भराट् ॥ १० ॥

निवेश्येति । दमेन भीमात्मजेन, गत्वा प्रत्युद्गम्य, बन्धून् जामातृबन्धून्, निवेश्य उपवेश्य, इत इति उदीरितम् अस्यां दिशि आगम्यताम् इति प्रार्थितम्, अर्द्धपथे अर्द्धमार्गे, कृतार्हणं कृतपूजनं, विनीतम् अनुद्धतम्, आ-द्वारतः द्वारम् आरभ्य, पादाभ्यां गच्छति इति पद्गः, तत्तां पद्गतां द्वारदेशे रथादवतीर्य पादचारित्वम् । 'पादस्य पदाज्यातिगोपहतेषु' इति पादस्य पदादेशः । गतं तं नलं, विदर्भराट् भीमः, मुदा हर्षेण, ऐक्षिष्ट अद्राक्षीत् ॥ १० ॥

विदर्भनरेश ( भीम ) ने ( भीम-कुमार ) दमके द्वारा अगवानी करके ( नलके ) बन्धुओंको बैठाकर ( पाठा०—भीमके द्वारा ही सामने ) जाकर अपने या नलके बन्धुओंको निर्देशकर अर्थात् भेजकर 'इधरसे आइये' ऐसा कहे गये तथा दम ( भीमकुमार ) के द्वारा आधे मार्गमें अर्घ्य पाद्य आदिसे पूजित, विनीत और द्वारकी सीमासे ही पैदल चलते हुए उस ( नल ) को हर्षसे देखा ॥ १० ॥

अथायमुत्थाय विसार्य दोर्युगं मुदा प्रतीयेष तमात्मजन्मनः ।
सुरस्रवन्त्या इव पात्रमागतं धृताभितोवीचिगति[3]: सरित्पतिः ॥ ११ ॥

अथेति । अथ नलेक्षणानन्तरम्, अयं विदर्भराट्, उत्थाय दोर्युगं बाहुद्वयं, विसार्य प्रसार्य, आगतं सम्मुखमुपस्थितम्, आत्मजन्मनः आत्मजायाः भैम्याः, पात्रं योग्यं वरं, तं नलं, धृता अवलम्बिता, अभितः उभयपार्श्वतः वीचिगतिः तरङ्गप्रसारः यस्य सः तादृशः, सरित्पतिः समुद्रः, सुरस्रवन्त्याः सुराणां देवानां, स्रवन्त्याः नद्याः, भागीरथ्याः इत्यर्थः । 'अथ नदी सरित् स्रवन्ती निम्नगाऽपगा' इत्यमरः । आगतं पात्रं तीरद्वयमध्यवर्त्ति प्रवाहम् इव । 'पात्रं स्रुवादौ पर्णे च भाजने राजमन्त्रिणि । तीरद्वयान्तरे योग्ये' इति मेदिनी । मुदा हर्षेण, प्रतीयेष प्रत्यैच्छत्, आलिलिङ्गेत्यर्थः ॥

इस ( नलको देखने ) के बाद इस ( राजा भीम ) ने दोनों भुजाओंको फैलाकर आये हुए पुत्री ( दमयन्ती ) के योग्य उस ( नल ) को उस प्रकार आलिङ्गन किया, जिस प्रकार दोनों ओर तरङ्गोंवाला समुद्र आये हुए गङ्गाके प्रवाहका आलिङ्गन करता है ॥ ११ ॥

यथावदस्मै पुरुषोत्तमाय तां स साधुलक्ष्मीं बहुवाहिनीश्वरः ।
शिवामथ स्वस्य शिवाय नन्दिनीं[4] ददे पतिः सर्वविदे महीभृताम् ॥१२॥

---

१. 'निवेश्य' इति पाठान्तरम् । २. 'आ द्वारतः' पदद्वयम्, इति 'प्रकाशः' ।
३. '-ततिः' इति पाठान्तरम् । ४. 'नन्दनाम्' इति पाठान्तरम् ।

यथावदिति। अथ वरालिङ्गनानन्तरं, बहुवाहिनीश्वरः बहुसेनाधीश्वरः, महीभृतां राज्ञां, पतिः राजराजः, सः भीमः, पुरुषोत्तमाय पुरुषश्रेष्ठाय, शिवाय भद्रमूर्त्तये, सर्वविदे सर्वज्ञाय, अस्मै नलाय, साधुलक्ष्मीं समीचीनशोभां, शिवां भद्रमूर्त्तिं, स्वस्य नन्दिनीं दुहितरं, तां दमयन्तीं, यथावत् यथार्हं, विधिवत् इत्यर्थः। 'तदर्हम्' इति वति प्रत्ययः। ददे दत्तवान्। अन्यत्र—बहुवाहिनीश्वरः बहुनदीपतिः, स समुद्रः, पुरुषोत्तमाय विष्णवे, लक्ष्मीं यथावत् ददे ददौ, तत् साधु। तथा महीभृतां पर्वतानां पतिः हिमवान्, स्वस्य नन्दिनीं शिवां। गौरीं, सर्वविदे शिवाय शम्भवे। 'शिवं भद्रं शिवः शम्भुः शिवा गौरी शिवाऽभया' इति सर्वत्र शाश्वतः। ददौ, तच्च साधु। विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थबोधनेनोपक्षीणत्वात् वाच्यार्थानुपपत्त्यभावेन लक्षणाया असम्भवाच्च व्यञ्जनया अर्थान्तरप्रतीतेः ध्वनिरेवौपम्यपर्यवसायी[1] ॥ १२ ॥

बहुत सेनाओंके स्वामी तथा राजाओंके पति ( राज–राज भीम ) ने सुन्दर शोभावाली, मङ्गलरूपिणी अपनी कन्या ( दमयन्ती ) को पुरुषश्रेष्ठ, ( पुण्यश्लोक होनेसे ) मङ्गलस्वरूप, सब ( कला, विद्या आदि ) के ज्ञाता इस ( नल ) के लिए विधिपूर्वक दे दिया ( पक्षा०—बहुत नदियोंके पति ( समुद्र ) ने अपनी कन्या लक्ष्मीको पुरुषोत्तम ( विष्णु ) के लिए विधिपूर्वक दे दिया यह ठीक हुआ तथा पर्वतोंके स्वामी ( हिमालय ) ने अपनी कन्या पार्वतीको सर्वज्ञ शिवजीके लिये विधिपूर्वक दे दिया, यह भी ठीक हुआ। अथवा—मैनाक आदि पर्वतोंके रक्षक समुद्रने शिव ( मङ्गल ) स्वरूप विष्णुके लिए अपनी पुत्री लक्ष्मीको विधिपूर्वक दे दिया, यह ठीक हुआ तथा बहुत नदियोंसे युक्त हिमालयने पुरुषोत्तमरूप शिवजीके लिए अपनी कन्या पार्वतीको विधिपूर्वक दे दिया यह भी ठीक हुआ )। [ प्रकृतमें नलको विष्णु तथा शिवके समान, दमयन्तीको लक्ष्मी तथा पार्वतीके समान और राजा भीमको समुद्र तथा हिमालय पर्वतके समान माना गया है ]॥ १२ ॥

असिस्वदद्यन्मधुपर्कमर्पितं स तद्व्यधात्तर्कमुदर्कदर्शिनाम्[2]।
यदेष पास्यन्मधु भीमजाऽधरं मिषेण पुण्याहविधिं तदाऽकरोत्॥१३॥

असिस्वददिति। सः नलः, अर्पितं भीमेन दत्तं, मधुपर्कं कांस्यपात्रस्थं दधिमधुघृतात्मकं त्रिमधुरम्, असिस्वदत् स्वादितवान्, स्वादेर्णौ चङ्युपधाह्रस्वः। इति यत्, तत् मधुपर्कस्वादनम्, उदर्कदर्शिनां विवाहोत्तरभाविफलाभिज्ञानाम्[3]। 'उदर्कः

1. अत्र 'अर्थान्तरं प्रति विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थोपक्षीणत्वात् वाच्यार्थानुपपत्त्यभावलक्षणाच्च ध्वनिरेवौपम्यपर्यवसायी' इति जीवातुः, इति म० म० शिवदत्तशर्माणः। 2. '—दर्शिने' इति पाठान्तरम्।

3. अत्र 'उदर्कदर्शिनामागामिफलज्ञान(ना)म्' इति जीवातुः, इति म० म० शिवदत्तशर्माणः।

फलमुत्तरम्' इत्यमरः । तर्कं कञ्चित् रहस्यं, व्यधात् अकार्षीत् । तं तर्कमेवाह—यत् यतः, एषः नलः, भीमजायाः भैम्याः, अधरमेव मधु माक्षिकं, पास्यन् धास्यन्, अधरमधुपानं करिष्यति इत्यर्थः । तत एव तदा तस्मिन् काले, मिषेण मधुपर्कपान-व्याजेन, पुण्याहविधिं कर्मादौ कर्त्तव्यं पुण्याहकर्म एव, अकरोत् । विवाहदिनरूप-पुण्याहे मधुपर्कपानच्छलेन भाविन्या अधरमधुपानक्रियायाः शुभारम्भं चकारेत्यर्थः । माङ्गल्यकृत्येषु आदौ पुण्याहक्रिया प्रसिद्धा एव । अत्र सापह्नवोत्प्रेक्षा ॥ १३ ॥

उस ( नल ) ने ( राजा भीमके द्वारा ) दिये गये मधुपर्कका जो आस्वादन किया, वह ( मधुपर्कास्वादन कार्य ) ( भविष्यकालके ) परिणामको देखनेवालोंके लिए यह तर्क कराया कि—'यह नल भविष्यकाल ( विवाहके बाद ) में जो दमयन्तीके अधरका पान करेंगे, इसीसे उस समयमें ( मधुपर्क पान करनेके ) छलसे पुण्याह कर्मको किया है । [ किसी कार्यकी सिद्धिके लिए उसके प्रारम्भमें ( मधु दही और घी मिले हुए मधुरत्रयरूप ) मधुपर्कका पान करना शास्त्रोक्त विधि है, अत एव विवाह कार्यके आरम्भमें राजा भोजके दिये हुए मधुपर्कका पान करते हुए नलको देखनेवालोंने तर्क किया कि—भविष्यमें दमयन्तीके अधर-पानरूपी कार्यकी सिद्धिके लिए नलने उस कार्यके आरम्भमें मधुपर्कपानके बहानेसे पुण्याह विधिको किया है ] ॥ १३ ॥

**वरस्य पाणिः परघातकौतुकी वधूकरः पङ्कजकान्तितस्करः ।**
**सुराज्ञि तौ तत्र विदर्भमण्डले ततो निबद्धौ किमु कर्कशैः कुशैः ॥१४॥**

वरस्येति । वरस्य नलस्य, पाणिः परघातकौतुकी शत्रुवधलम्पटः परहिंसालोलु-पश्च, वधूकरः भैमीपाणिः, पङ्कजकान्तेः पद्मश्रियः, तस्करः चौरश्च । 'तद्बृहतोः करपत्योः—' इत्यादिना सुट् तलोपश्च । ततः पूर्वापराधात्, एको हिंस्रः अपरस्त-स्कर इत्यपराधात् हेतोरित्यर्थः । तौ वधूवरकरौ, शोभनो राजा यस्य तस्मिन् सुराज्ञि राजन्वति, तत्र तस्मिन्, विदर्भमण्डले विदर्भराज्ये, कर्कशैः कुशैः निबद्धौ संयतौ, किमु ? धार्मिकराज्ये दुष्टा बध्यन्ते इति भावः । देशाचारप्राप्तस्य वधूवरयोः कुश-सूत्रेण करबन्धनस्य अपराधहेतुकत्वमुत्प्रेक्ष्यते ॥ १४ ॥

वर ( नल ) का हाथ दूसरों अर्थात् शत्रुओंको मारनेका कुतूहली ( शत्रुओंका घातक ) है, तथा वहू ( दमयन्ती ) का हाथ कमलकी शोभाको चुरानेवाला है, इस कारण ( क्रमशः हिंसक तथा चोर होनेसे ) उन दोनोंको अच्छे राजावाले विदर्भराज्यमें कर्कश कुशाओंसे बाँधा गया है क्या ? । [ जो किसीकी हिंसा या चोरी करते हैं, उन्हें अच्छे राजावाले राज्यमें कठिन बेड़ियोंसे बांधकर दण्डित किया जाता है, अत एव श्रेष्ठ राजावाले इस निषध देशमें परघातक नलबाहु तथा परसम्पत्तिचौर दमयन्तीबाहुको कर्कश कुशाओंसे बांधकर दण्डित करनेकी कल्पना की गयी है । देशाचारानुसार नल तथा दमयन्तीकी भुजाओंमें कुश बांधे गये ] ॥ १४ ॥

**विदर्भजायाः करवारिजेन यन्नलस्य पाणेरुपरि स्थितं किल ।**
**विशङ्क्य सूत्रं पुरुषायितस्य तद्भविष्यतोऽस्मायि तदा तदालिभिः॥१५॥**

विदर्भजाया इति । विदर्भजायाः वैदर्भ्याः, करवारिजेन पाणिकमलेन, नलस्य पाणेः उपरि स्थितं किलेति यत् । भावे क्तः । तत् उपरि अवस्थानं, भविष्यतः पुरुषायितस्य विपरीतसुरते पुरुषवदाचरितस्य, सूत्र्यते सूच्यते अनेन इति सूत्रं सूचकं, विशङ्क्य विभाव्य, तदा तदालिभिः भैमीसखीभिः, अस्मायि मन्दम् अहासि । स्मयतेर्भावे लुङ्, चिणि वृद्धया अयादेशः । विपरीतसुरते पुरुषोपरि स्त्रियः शयनेन पुरुषकरोपरि स्त्रीकरः सम्भवति इति पुंभावमुत्प्रेक्ष्य स्मितं कृतमिति भावः ॥ १५ ॥

दमयन्तीका करकमल जो नलके हाथके ऊपर रखा गया, उसे उस समय भविष्यमें ( विवाहके बाद ) पुरुषाचरणके सूत्र (सूचित करनेवाला) मानकर हम दमयन्तीकी सखियोंने मुस्कुरा दिया । [ विपरीत रतिमें पुरुषके हाथके ऊपर स्त्रीका हाथ रहता है, अत एव दमयन्तीके हाथको नलके हाथके ऊपर रखा हुआ देखकर उसकी सखियोंने उसी विपरीत रतिकालकी अवस्थाका स्मरणकर मुस्कुरा दिया ॥ दमयन्तीने अपने हाथको नलके हाथ पर रक्खा ] ॥ १५ ॥

**सखा यदस्मै किल भीमसंज्ञया स यक्षसख्याधिगतं ददौ भवः ।**
**ददे तदेष श्वशुरः सुरोचितं[1] नलाय चिन्तामणिदाम कामदम् ॥ १६ ॥**

अथ एकविंशतिश्लोक्या यौतकदानं वर्णयति, सखेत्यादि । सः प्रसिद्धः, भवः भगवान् ईश्वरः, यक्षसख्याधिगतं यक्षेण सह यत् सख्यं बन्धुत्वं, तेनाधिगतं प्राप्तं कुबेरमैत्रीलब्धं, कुबेरात् लब्धमित्यर्थः। 'कुबेरस्त्र्यम्बकसखः यक्षराड्' इत्यमरः । यत् चिन्तामणिदाम चिन्तामणिघटितमाल्यं, भीम इति संज्ञया नाम्ना हेतुना, सखा स्वनामसादृश्यात् मित्रमिति बुद्धया इत्यर्थः । 'व्योमकेशो भवो भीमः' इत्यमरः । अस्मै भीमनृपाय, ददौ स्वकीयभीमनामधारणात् बन्धुत्वसूत्रेणेति भावः । सुरोचितं देवतायोग्यं, कामदं कामदुघं, तत् चिन्तामणिदाम, श्वशुरः पत्न्याः पिता, एष भीमभूपतिः, नलाय जामात्रे, ददे ॥ १६ ॥

( अब यहांसे 'न तेन वाहेषु—' ( १६।३४ ) तक दहेज देनेका वर्णन करते हैं—) 'भीम' नामसे मित्र शिवजीने यक्ष अर्थात् कुबेरकी मित्रतासे मिली हुई जिस ( चिन्तामणि-माला ) को इस ( 'भीम' राजा ) के लिए दिया था, इस श्वशुर ( राजा भीम ) ने कामना को देने अर्थात् पूर्ण करनेवाले देवों ( पाठा०—पुत्री दमयन्ती ) के योग्य उस 'चिन्तामणि' नामक मालाको नलको लिए दिया । [ शिवजीका नाम 'भीम' है तथा दमयन्तीके पिताका भी नाम 'भीम' है, अतएव नाममात्र की मित्रताके कारण शिवजीने मित्र कुबेरसे प्राप्त देवधार्य 'चिन्तामणि' नामक मालाको मित्रभूत इस 'भीम' राजाके लिए दिया था, उसे

1. 'सुतोचितम्' इति पाठान्तरम् ।

भीम राजाने दहेजमें नलके लिए दे दिया; मित्र कुवेरसे प्राप्त जिसको शिवजीने मित्र राजा 'भीम' के लिए दिया, उसको राजा 'भीम' ने दामाद नलके लिए दिया ] ॥ १६ ॥

बहोर्दुरापस्य वराय वस्तुनश्चितस्य दातुं प्रतिबिम्बकैतवात् ।
बभौतरामन्तरवस्थितं दधद्यदर्थमभ्यर्थितदेयमर्थिने ॥ १७ ॥

तत् मणिदामैव वर्णयति बहोरिति । यत् चिन्तामणिदाम, वराय दातुं चितस्य राशीकृतस्य, दुरापस्य दुर्लभस्य, बहोः अनेकस्य । भाषितपुंस्कत्वात् पुंवद्भावः । वस्तुतः पदार्थजातस्य, प्रतिबिम्बस्य प्रतिच्छायायाः, कैतवात् मिषात्, अन्तः अभ्यन्तरे, अवस्थितम् अर्थिने याचकाय, अभ्यर्थितः याचितः सन्, देयः देयत्वेन निश्चितः तम् अभ्यर्थितदेयम्, अर्थं वस्तुजातं, दधत् धारयन्निव, बभौतराम् अतिशयेन बभौ । 'किमेत्तिङव्ययघादा—' इत्यादिना आमुप्रत्ययः । प्रार्थनामात्रेणैव याचकाय तत्तद्वस्तूनां दानार्थं प्रतिबिम्बव्याजात् तत्तद्वस्तुजातमन्तर्धारयतीवेति भावः । अत्र सापह्नवोत्प्रेक्षा सा च व्यञ्जकाप्रयोगाद्गम्या ॥ १७ ॥

जो 'चिन्तामणि' माला वर ( नल ) को देनेके लिए एकत्रित बहुत-सी दुर्लभ वस्तुओं ( अन्यान्य रत्न, सुवर्ण, वस्त्र, सवारी, दास, दासी आदि ) के अपनेमें प्रतिबिम्बित होनेके कपट ( व्याज ) से याचना करने पर देने योग्य निश्चित किये गये वस्तु-समूहको धारण करती थी, ( उस 'चिन्तामणि' नामक मालाको नलके लिए राजा भीमने दिया ) । [ नलको दहेजमें देनेके लिए जो बहुत-सी दुर्लभ वस्तुएँ एकत्रित की गयी थीं, उन सबके उस दिव्य चिन्तामणि मालामें प्रतिबिम्बित होनेसे वह माला ऐसी मालूम पड़ती थी कि याचित इन वस्तुओंको मैं नलके लिए दे दूंगी, अत एव इन वस्तुओंको प्रतिबिम्बित होनेके व्याजसे मैं अपनेमें धारण कर रही हूं ] ॥ १७ ॥

असिं भवान्याः क्षतकासरासुरं वराय भीमः स्म ददाति भासुरम् ।
ददे हि तस्मै धवनामधारिणे स शम्भुसम्भोगनिमग्नयाऽनया ॥१८॥

असिमिति । भीमः क्षतकासरासुरं हतमहिषासुरं, 'लुलापो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । भासुरं भास्वरं, भवान्याः दुर्गायाः, असिं खड्गं, भवान्या भीमाय दत्तमिति भावः । वराय नलाय, ददाति स्म । किमर्थं दुर्गया अस्मै दत्तः ? तत्राह—हि यतः, शम्भुसम्भोगनिमग्नया महिषासुरादिमर्दनानन्तरं निवृत्तरणरागया केवलसुरतसुखासक्तया, अनया दुर्गया, धवस्य स्वप्रियस्य शम्भोः, नामधारिणे 'भीम' इति नामान्तरधराय, इति प्रीतिकरणोक्तिः । 'धवः प्रियः पतिर्भर्त्ता' इत्यमरः । तस्मै भीमभूभुजे, सः असिः, ददे दत्तः, शत्रुवधानन्तरं निष्प्रयोजनकत्वबुद्ध्या इति भावः । ददातेः कर्मणि लिट् ॥ १८ ॥

भीमने महिषासुरको काटने ( मारने ) वाले दुर्गा ( पार्वती ) के चमकते हुए खड्गको वर ( नल ) के लिए दिया, उसे 'पति ( 'भीम' अर्थात् 'शिव' ) के नाम धारण करनेवाले

उस ( राजा 'भीम' ) के लिए शिवजीके साथ सम्भोगमें आसक्त उस ( दुर्गा ) ने दिया था। [ जिस खड्गसे दुर्गाने महिषासुरको मारा था, उसे सम्भोग में आसक्त दुर्गा ( पार्वती ) ने असुरोंके अभावसे तथा सम्भोगकालमें खड्ग ग्रहण करना अनावश्यक होनेसे पतिके नामवाले राजा 'भीम' के लिए दे दिया था; उसी चमकते हुए खड्गको उस ( राजा भीम ) ने वर (दुल्हा नल) के लिए दिया। राजा भीमने नलके लिए चमकते हुए खड्गको दिया ]॥

अधारि यः प्राङ्महिषासुरद्विषा कृपाणमस्मै तमदत्त कूकुदः ।
अहायि[1] तस्या हि धवार्द्धमज्जिना स दक्षिणार्द्धेन पराङ्गदारणः[2] ॥१९॥

अधारीति । यः कृपाणः, महिषासुरद्विषा दुर्गया, प्राक् पूर्वम् , अधारि धृतः, तं कृपाणम् असिं, कूकुः कन्या, 'कूकुरित्युच्यते कन्या' इति स्मरणात् । तां ददातीति कूकुदः कन्याप्रदः भीमः, 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः' इत्यमरः । अस्मै नलाय, अदत्त दत्तवान् । दुर्गायाः कृपाणस्य भीमहस्तगतत्वे कारणान्तरमाह— हि यतः, धवस्य प्रियस्य, भीमापराख्यशम्भोरिति यावत् , अर्द्धं वामर्द्धं, मज्जति प्रविशतीति तन्मज्जिना अर्द्धनारीश्वरत्वात् प्रियार्द्धाङ्गप्रविष्टेन, तस्याः दुर्गायाः सम्बन्धिना, दक्षिणार्द्धेन दक्षिणाङ्गेन कर्त्रा, परेषां संसर्गिणामन्येषाम् , अङ्गदारणः गात्रविदारकः, स कृपाणः, अहायि अत्याजि, खड्गसहितदक्षिणार्द्धेन स्वामिशरीरप्रवेशे स्वामिनोऽङ्गविदारणं स्यादिति धिया स परित्यक्तः इति भावः । हातेः कर्मणि लुङ् , चिणि युगागमः ॥ १९ ॥

महिषासुरवैरिणी ( दुर्गा अर्थात् पार्वती ) ने पहले जिस खड्गको धारण किया था, उसको वस्त्र-भूषण आदिसे अलङ्कृतकर कन्याका दान करनेवाले ( राजा भीम ) ने इस ( जामाता नल ) के लिए दिया; क्योंकि पति ( शिवजी ) के आधे शरीरमें प्रविष्ट उस ( पार्वती ) के दक्षिणार्द्ध ( आधा दहना अङ्ग ) ने दूसरे ( पक्षा०—शत्रुके शरीरको विदारण करनेवाले ) उस खड्गको छोड़ दिया ( पाठा०—उस 'भीम' राजाके लिए दिया ) था। [ पार्वती महिषासुरको मारते समय शिवजीसे पृथक् पूर्ण शरीरवाली थी, किन्तु जब वह अपने पति शिवजीके वामार्द्ध भागमें प्रविष्ट करने लगी तो सोचा कि हमारे दहने हाथमें स्थित तथा दूसरेके शरीरको विदीर्ण करनेवाला यह खड्ग पतिके वामार्द्ध भागमें मेरे प्रविष्ट होनेपर उनके शरीरको विदीर्ण कर देगा, अत एव उस खड्गको छोड़ दिया ( पाठा०—राजा भीमके लिए दे दिया था, उसी दुर्गाके दिये हुए खड्गको आज कन्यादानकर्ता राजा भीमने जामाता इस नलके लिए दिया ) ]॥ १९ ॥

उवाह यः सान्द्रतराङ्ककाननः स्वशौर्यसूर्योदयपर्वतव्रतम् ।

---

१. 'अदायि' इति पाठेऽनर्थो न । तस्या दक्षिणार्द्धेन तस्मै यस्माददायीत्यर्थः । 'अयं पाठः साधीयान्' इति 'प्रकाशः' । २. 'परार्द्ध—' इति क्वाचित्कं पाठान्तरम् ।

सनिर्भरः शाणनधौतधारया[1] समूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥

उवाहेति । सान्द्रतरः शुष्कत्वादतिशयेन घना इत्यर्थः, अङ्काः कृष्णवर्णरक्तचिह्नानि एव, काननानि अरण्यस्वरूपाणि यस्य सः, खड्गलग्नशुष्करक्तचिह्नानां कृष्णत्वात् तत्र काननत्वारोपणमिति बोध्यम्, शाणनेन उत्तेजनेन, शाणघर्षणेनेत्यर्थः, धौतया उज्ज्वलीकृतया, धारया निशितमुखेन, सनिर्झरः सप्रवाहः, निर्झरयुक्तवत् परिदृश्यमान इत्यर्थः, क्षतेभ्यः प्रहृतेभ्यः, शत्रुभ्यः, जातं निर्गतं, तादृशेन असृजा रक्तेन, कृपाणलग्नेनेति भावः । समूढा धृता, प्रकटिता इत्यर्थः, सन्ध्या प्रातःसन्ध्याकालिकशोभा इत्यर्थः, येन सः तादृशः, सन्ध्याकालीनाकाशस्य रक्तवर्णत्वादिति भावः, यः कृपाणः, स्वशौर्यमेव शत्रुहननरूपं शूरत्वमेव सूर्यः तस्य उदयपर्वतः उदयाचलः, तस्य व्रतं नियमं, नित्यसूर्योदयकारित्वरूपमित्यर्थः, नित्यमेव शत्रुदमनेन स्वपराक्रमप्रकाशरूपव्रतमिति समुदितार्थः, उवाह वहति स्म । खड्गस्याङ्कादिषु काननत्वाद्यारोपणाद्रूपकालङ्कारः ॥ २० ॥

सघन शरीर-( सूखनेसे काली पड़ी हुई रक्तरेखा ) रूप वनवाला ( अथवा—सूक्ष्म मुद्गपत्नीलतारूप शरीरका जीवनभूत अर्थात् जीवित रखनेवाला; पक्षा०—शरीरोंमें सघन वनोंवाला ), शाणपर घिसनेके कारण स्वच्छ धारसे झरनेके समान ( चमकता हुआ, पक्षा०—झरनोंसे युक्त ), कटे हुए शत्रुसे उत्पन्न ( वह कर निकले हुए ) रक्तसे सन्ध्या ( सायंकालकी लालिमा ) को प्राप्त हुआ ( अथवा—कटे हुए शत्रुसे उत्पन्न रक्तसे मूठतक प्राप्त हुआ अर्थात् शत्रुके शरीरमें मूठतक घुसा हुआ, पक्षा०—सन्ध्याकालको प्राप्त ) जो खड्ग अपने पराक्रमरूपी सूर्यके उदयाचल व्रतको ग्रहण करता है; ( उस खड्गको राजा भीमने नलके लिए दिया ) । [ जिस प्रकार घने वनोंवाला, स्वच्छ निर्झरोंसे युक्त, सन्ध्यारुण उदयाचल नित्य ही सूर्योदय के नियमको धारण करता है, उसी प्रकार सूखी हुई रक्तकी धारारूप वनवाला, शाण चढ़ानेसे स्वच्छ होकर चमकता हुआ और आहत शत्रु शरीरोत्पन्न रक्तसे सन्ध्यावत् अरुणवर्ण वह खड्ग सर्वदा अपने पराक्रमरूपी सूर्योदयके नियमको धारण करता अर्थात् सदा अपने पराक्रमको दिखलाता है ] ॥ २० ॥

यमेन जिह्वा प्रहितेव या निजा तमात्मजां याचितुमर्थिना भृशम् ।
स तां ददेऽस्मै परिवारशोभिनीं करग्रहार्हामसिपुत्रिकामपि ॥२१॥

यमनेति । भृशमत्यर्थम्, अर्थिना याचकेन, यमेन अन्तकेन, तं भीमम्, आत्मजां भैमीं, याचितुं प्रार्थयितुं, निजा जिह्वा नियतप्राणनाशकत्वाद्यमरसना इव स्थिता, इत्युत्प्रेक्षा, या असिपुत्रिका, प्रहिता भीमप्रीत्यर्थं दूतीप्रेरणसमये प्रेषिता, परिवारेण कोशेन परिजनेन च 'परिवारः परिजने खड्गकोशे परिच्छदे' इति विश्वः ।

[1] 'शाणनिधौतधारया' इति पाठः । 'शाणन—' इति पाठश्चिन्त्य इति 'सुखावबोधा' इति म० म० शिवदत्तशर्माणः ।

शोभिनीं, करग्रहस्य हस्तेन धारणस्य विवाहस्य च, अर्हां योग्यां, तामसिपुत्रिकां छुरिकामपि, तथा असिरूपां कन्याञ्च 'स्याच्छस्त्री चासिपुत्री च च्छुरिका चासिधेनुका' इत्यमरः । सः भीमः भूपतिः, अस्मै नलाय, ददे । शस्त्रपुत्रिकयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ २१ ॥

अतिशय याचना करनेवाले यमने उस (राजा भीम) से कुमारी दमयन्तीको मांगनेके लिए अपनी जिह्वाके समान जिसे भेजा था, उस (राजा भीम) ने परिवार—(म्यान, पक्षा०—सखी आदि) से शोभनेवाली तथा हाथमें लेने (पक्षा०—विवाह) के योग्य (अथवा—सुन्दर मूठसे योग्य) उस छुरिका अर्थात् कटारको भी इस (नल) के लिए दिया। ['अपि' शब्दसे केवल खड्को ही राजा भीमने नलके लिए नहीं दिया, अपि तु कटारको भी दिया; अथवा—केवल पुत्री (दमयन्ती) को ही नहीं दिया अपितु कटारको भी दिया। दमयन्ती सखियोंसे तथा कटार कोष (म्यान) से शोभती थी और दमयन्ती विवाहके तथा कटार हाथमें लेनेके योग्य थी; तथा वह कटार यमराजकी जिह्वाके समान पर प्राणोंका हरण करनेवाली थी] ॥ २१ ॥

यदङ्गभूमौ बभतुः स्वयोषितामुरोजपत्त्रावलिनेत्रकज्जले ।
रणस्थलस्थण्डिलशायिताव्रते गृहीतदीक्षैरिव दक्षिणीकृते ॥ २२ ॥

यदिति । यस्याः असिपुत्रिकायाः, अङ्गभूमी प्रान्तदेशौ, रणस्थलमेव स्थण्डिलमनिम्नोन्नता परिष्कृता भूः, तत्र शेरते इति तच्छायिनः 'व्रते' इति णिनिः । तस्य भावः तच्छायिता, सा एव व्रतं नियमविशेषः तत्र, गृहीतदीक्षैः रणस्थले छुरिकाघातेन मृत्युशय्यायां शयनरूपव्रतदीक्षितैः शत्रुभिरित्यर्थः, दक्षिणीकृते तादृशव्रतोपदेशिन्यै ऋत्विक्स्वरूपायै असिपुत्रिकायै दक्षिणारूपेण प्रदत्ते इत्यर्थः । स्वयोषितां निजस्त्रीणाम्, उरोजयोः स्तनयोः, पत्त्रावलिः मृगमदादिरचितपत्रभङ्गिः नेत्रकज्जलञ्च ते इव, बभतुः विरेजतुः शत्रुस्त्रीभिः वैधव्यवशात् पत्त्रावलिनेत्रकज्जले परित्यक्ते इति भावः । भाधातोर्भावे लिटि अतुसादेशः । कृष्णवर्णयोश्छुरिकाप्रान्तदेशयोः स्तनपत्त्रवल्लीत्वनेत्रकज्जलत्वाभ्यामुत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ २२ ॥

जिस कटारके दोनों भाग ऐसे शोभते थे कि रणस्थलमें भूमिपर सोनेके व्रतकी दीक्षा ग्रहण किये हुए राजाओंने अपनी स्त्रियोंके स्तनोंकी (कस्तूरी आदिसे रची गयी) पत्त्ररचना तथा नेत्रोंके कज्जलोंको उक्त व्रतकी दीक्षा (मन्त्रोपदेश) देनेवाली उस कटारके लिए दक्षिणा दे दी हो। [लोकमें दीक्षा देनेवालों ऋत्विक् आदिके लिए दक्षिणा दी जाती है, अत एव उस कटारने राजाओंको रणस्थलमें भूमिपर सोनेके व्रतकी दीक्षा (मन्त्रोपदेश) दिया था, अत एव उन्होंने अपनी स्त्रियोंके स्तनोंकी पत्त्ररचना तथा नेत्रोंके कज्जलोंको उक्त व्रतकी दीक्षा देनेवाली उस कटारके लिये दक्षिणा दे दी थी, अत एव श्यामवर्ण उसके दोनों भाग शोभित होते थे। शत्रुओं के मरनेपर उनकी विधवा स्त्रियां स्तनोंपर पत्त्ररचना

तथा नेत्रोंमें कज्जल करना छोड़ देती हैं, इस वास्ते उनको दक्षिणारूपमें देनेकी कल्पनाकी गयी है। उस कटारके श्यामवर्ण दोनों भाग शोभते थे ॥ २२ ॥

पुरैव तस्मिन् समदेशि तत्सुताऽभिकेन यः सौहृदनाटिनाऽग्निना।
नलाय विश्राणयति स्म तं रथं नृपः सुलङ्घ्याद्रिसमुद्रकापथम् ॥ २३ ॥

पुरेति। तत्सुताऽभिकेन भैमीकामुकेन 'कामुके कमिताऽनुकः। कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः॥' इत्यमरः। अत एव सुहृदो भावः सौहृदं सौहार्दम्, युवादित्वादण् 'हृद्भगसिन्ध्वन्ते—' इत्यादिनोभयपदवृद्धिः। अत एव 'सौहृददौर्हृदशब्दावपि हृद्भावात्' इति, वामनः। तत् नाटयति प्रकाशयतीत्यर्थः। यः तेन सौहृदनाटिना, अग्निना अनलेन, यः रथः, पुरा एव स्वयंवरात् प्रागेव, दूतीप्रेरणसमये एव इत्यर्थः। तस्मिन् भीमे, समदेशि सन्दिष्टः, दत्तः इत्यर्थः। सुलङ्घ्याः सुखेन अतिक्रम्याः, अद्रयः पर्वताः, समुद्राः सागराः, कापथाः उन्नतानतकुत्सितपथाश्च येन तादृशं, 'का पथ्यक्षयोः' इति कोः कादेशः। तमग्निदत्तं, रथं नृपः भीमः, नलाय विश्राणयति स्म वितताार, ददौ इत्यर्थः। 'विश्राणनं वितरणम्' इत्यमरः॥ २३ ॥

उस भीमकी पुत्री ( दमयन्ती ) के कामुक ( अत एव उनके साथ ) मित्रताको प्रकाशित करनेवाले अग्निने पहले ( दूती भेजनेके समयमें ) ही जिस रथको उन ( भीम ) के लिए दिया था; पर्वत, समुद्र तथा ऊँचे नीचे मार्गको सरलतासे पार करनेवाले अर्थात् सर्वत्र जानेवाले उस रथको राजा भीमने नलके लिए दिया। [ स्वयंवरमें आनेके पहले ही अग्निने राजा भीमसे अपनी मित्रताको प्रकाशित करनेके लिए उपहारमें रथ भेजा था कि 'मैं दमयन्तीका कामुक होनेके कारण नहीं, अपितु मित्र होनेके कारण इस रथको आपके लिए उपहार देता हूं,' सर्वत्र गमन करनेवाले उस रथको भीमने नलके लिए दिया ] ॥ २३ ॥

प्रसूतवत्ताऽनलकूबरान्वयप्रकाशिताऽस्यापि महारथस्य यत्।
कुबेरदृष्टान्तबलेन पुष्पकप्रकृष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥

प्रसूतवत्तेति। यत् यस्मात्, अस्यापि महारथस्य महतः रथस्य, अन्यत्र—'एको दशसहस्राणि योधयेद् यस्तु धन्विनाम्। अस्त्रशस्त्रप्रवीणश्च विज्ञेयः स महारथः॥' इत्युक्तलक्षणरथिकविशेषस्य, प्रसूतवत्ता प्रकृष्टसारथिमत्ता, 'सूतः क्षत्ता च सारथिः' इत्यमरः। मत्वन्तत्वात् तल्प्रत्ययः। अन्यत्र—प्रसूतवत्ता प्रजनयितृता, प्रकृष्टपुत्रवत्ता इत्यर्थः, कुबेरवदिति भावः। प्रपूर्वात् सूतेः क्तवत्वन्तत्वात् तल्प्रत्ययः। अनलेन रथप्रदात्रा अग्निना, कूबरेण युगन्धरेण च, रथस्य युगकाष्ठबन्धनस्थानेनेत्यर्थः। 'कूबरस्तु युगन्धरः' इत्यमरः। अन्यत्र—नलकूबरेण तदाख्येन कुबेरपुत्रेण, अन्वयात् योगात्, प्रकाशिता प्रकटिता, ततः कारणात्, एतस्य महारथस्य, कुबेरः एव दृष्टान्तः निदर्शनं, तद्बलेन तत्प्रभावेण, पुष्पकप्रकृष्टता पुष्पकात् प्रकृष्टता

१. '—वत्ता नल' इति पाठः 'प्रकाश' व्याख्यासम्मतः।

वेगाधिक्येनोत्कृष्टता, अन्यत्र—पुष्पकेण विमानविशेषेण, प्रकृष्टता देवतान्तरापेक्षयोत्कृष्टता, अनुमीयते अयं महारथः पुष्पकप्रकृष्टो भवितुमर्हति प्रसूतवत्तादिधर्मसहितमहारथत्वात् कुवेरवदिति अनुमातुं शक्यत्वात् इति भावः। ।नलकूवरेति पाठे तु—प्रसूतवत्ता प्रकृष्टसारथिमत्ता इत्यर्थः। नलेन नैषधेन सह, कूबरस्य रथयुगन्धरस्य, अन्वयात् सम्बन्धात्, प्रकाशिता नलापेक्षया उत्कृष्टसारथेरभावात् तादृशसारथिमत्त्वेनैवास्य रथस्य पुष्पकापेक्षया प्रकृष्टत्वमनुमितमिति भावः। अत[1] एवानुमानालङ्कारः, 'साध्यसाधननिर्देशस्त्वनुमानमुदीरितम्' इति लक्षणात्। रूपहेतुत्वेन तर्कानुमानेन वलक्षण्यं रूपकञ्च प्रसूतवत्तादिप्रकाशितैः तत्प्रकाशितेति श्लिष्टरूपकं द्रष्टव्यम्॥ २४॥

जिस कारण इस महारथ (वड़े रथ, पक्षा०—दश सहस्र वीरोंको युद्ध करानेवाला तथा अस्त्र-शस्त्रमें प्रवीण शूरवीर) की श्रेष्ठ सारथिमत्ता (श्रेष्ठ सारथिवालेका भाव, पक्षा०—श्रेष्ठ पुत्रवत्ता) और तथा फड़ (जुवा बांधनेका काष्ठ) के सम्बन्ध (पक्षा०—नलकूवरके योग) से प्रकाशित (पक्षा०—शोभित) है; उस कारण इस (महारथ) का कुवेरके दृष्टान्तके प्रभावसे पुष्पक (नामक कुवेरके विमान-विशेष) से (अधिक वेग होनेसे) श्रेष्ठता (पक्षा०—'पुष्पक' नामक विमानके कारण अन्यान्य देवोंसे श्रेष्ठता) का अनुमान होता है। (पाठा०—''''''श्रेष्ठ सारथिवालेका भाव निषधेश्वर नलके साथ''''''का (या कुवेर''के साथ नलका) सम्बन्ध होनेसे प्रकाशित है, उस कारण नलकी अपेक्षा श्रेष्ठ सारथि नहीं हो सकनेसे वैसे परमोत्तम सारथिसे युक्त होनेसे ही इस विशाल रथकी 'पुष्पक' नामक कुवेररथकी अपेक्षा भी श्रेष्ठताका अनुमान होता है)। ['पुष्पक' नामक रथका सारथि नल नहीं हैं, अत एव इस रथके साथ उसकी समानता नहीं है और इस रथका सारथि नल हैं, अत एव यह रथ रमणीय है]॥ २४॥

महेन्द्रमुच्चैःश्रवसा प्रतार्य्य यन्निजेन पत्याऽकृत सिन्धुरन्वितम्।
स तद्ददेऽस्मै हयरत्नमर्पितं पुरानुबद्धुं वरुणेन बन्धुताम्॥ २५॥

महेन्द्रमिति। सिन्धुः समुद्रः, उच्चैःश्रवसा तन्नामकाश्वेन, महेन्द्रं देवराजं, प्रतार्य वञ्चयित्वा, यत् हयरत्नम् उच्चैःश्रवसोऽपि श्रेष्ठमित्यर्थः, निजेन पत्या स्वामिना, वरुणेनेत्यर्थः, अन्वितं दानेन संयुतम्, अकृत वरुणाय ददौ इत्यर्थः। पुरा स्वयंवरात् पूर्वमेव, वन्धुतां बान्धवत्वम्, अनुवद्धुं प्रवर्त्तयितुं, वरुणेन अर्पितं भीमाय दत्तं, तत् हयरत्नं, सः भीमः, अस्मै नलाय, ददे दत्तवान्॥ २५॥

समुद्रने उच्चैःश्रवाः (ऊपर उठे हुए कानोंवाला होनेसे सुलक्षण, पक्षा०—वड़े वड़े कानोंवाला होनेसे कुलक्षण) नामक घोड़ेसे महेन्द्रको ठगकर जिस घोड़ेको अपने स्वामी (वरुण) के लिए दिया, पहले (स्वयंवरके आरम्भ होनेसे पूर्व) वन्धुत्व स्थिर करनेके

1. 'अत्रानुमाना—' इति म० म० शिवदत्तशर्माणः।

लिए वरुणसे ( भीमके लिए ) दिये गये उस घोड़ेको उस ( राजा भीम ) ने इस ( नल ) के लिए दिया । [ समुद्रमथनके समय समुद्रसे 'उच्चैःश्रवाः' नामक अश्वरत्न निकला, जिसे इन्द्रने प्राप्त किया, किन्तु उक्त उच्चैःश्रवासे भी श्रेष्ठ घोड़ेको छिपाकर 'उच्चैःश्रवाः' नामक साधारणतर घोड़ा इन्द्रको देकर ठग दिया और उस छिपाये हुए घोड़ेको अपने स्वामी वरुणके लिए दिया तथा वरुणने भीम राजाके साथ वन्धुत्वको स्थिर रखनेके वहानेसे उसी घोड़ेको भीम राजाके लिए दिया, उस वरुणसे प्राप्त घोड़ेको राजा भीमने नलके लिए दिया। राजा भीमने नलके लिए जो घोड़ा दिया वह उच्चैःश्रवासे भी श्रेष्ठ था ] ॥ २५ ॥

जवादवारीकृतदूरदृक्पथस्तथाऽक्षियुग्माय ददे मुदं न यः ।
ददद्दिदृक्षादरदासतां[1] यथा तथैव[2] तत्पांशुलकण्ठनालताम् ॥ २६ ॥

जवादिति । अक्षियुग्माय द्रष्टुः दृष्टियुगलाय, दिदृक्षायां दर्शनेच्छायां, यः आदरः आस्था, तस्य दासतां वश्यत्वं, ददत् अत्यन्तदिदृक्षामेव सम्पादयन्, यः हयः, जवात् वेगात्, तथा तेन प्रकारेण, अवारीकृतः अर्वाक्कृतः, द्राक् अदूरीकृतः इति इति यावत्, निर्जलीकृतश्च गम्यते । 'पारावारे परार्वाची तीरे' इत्यमरः । दूरदृक्पथः दूरप्रसारिदृष्टिमार्गः, अश्वदिदृक्षूणां वहुयोजनदूरे प्रेरितदृष्टिपथः इत्यर्थः । येन तथाभूतः सन्, अथवा–वारो वारणं, णिजन्तात् वृधातोः घञ् । अवारः वारः कृत इति वारीकृतः, अभूततद्भावे च्विः । स न भवतीति अवारीकृतः अप्रतिरोधीकृतः, दूरदृक्पथो येन सः, तथा च द्रष्टव्यवस्तुना दिदृक्षूणां दूरदृक्पथस्य प्रतिरोधो भवति, किन्तु प्रकृतेऽश्वस्य सवेगगमनादेव दूरदृक्पथस्य प्रतिरोधाभाव इत्यर्थः, यथा मुदं हर्षं, न ददे न ददौ, अश्वस्य सवेगगमनात् द्रष्टॄणां दर्शनावकाशाभावेन नयनतृप्तिर्नाभूत्, अतः केवलं तृष्णामेव वर्द्धयति इति भावः । तथा तेन प्रकारेणैव, तत् तेन अश्वेन, पांशुलः पांशुमान्, अश्वखुरोत्थरजसा धूलियुक्तः शुष्कश्च, कण्ठनालः यस्य द्रष्टुर्नेत्रयुग्मस्य वा, तस्य भावः तत्ता तां, ददत् लक्षणया उत्कण्ठितत्वं ददानः, मुदं न ददे, कण्ठशोषकारी कथं मुदं दद्यादिति भावः । अक्षियुग्मस्य पांशुलकण्ठनालत्वं नाम दूरोद्धतधूलीधूसरप्रान्तत्वमुत्कण्ठाचरितत्वञ्च । अजस्रदर्शनीयवेगोऽयमश्व इति तात्पर्यम् । अत्र अवारीकृतेति पांशुलकण्ठनालेति शब्दशक्त्या पिपासोः दृष्टिपथे निर्जलीकरणात् शुष्ककण्ठनालत्वकरणाच्च हर्षाजननरूपं वस्तु व्यञ्जनया वोध्यते इति ध्वनिः । अवारीकरणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ २६ ॥

दर्शकोंके दोनों नेत्रोंके लिए, देखनेकी इच्छामें आदरके परवश करता हुआ अर्थात् दर्शनेच्छाको वढ़ाता हुआ जो घोड़ा वेगके कारण उस प्रकार समीपमें ( अथवा—इस पारमें, अथवा—जल रहित, अथवा—अवरोध रहित ) कर दिया है दूरस्थ ( वहुत योजनों तक

---

१. '—दासतां यथा—' इति पाठान्तरम् ।
२. 'तयैव' इति, 'तृपैव' इति च पाठान्तरम् ।

गये हुए ) दृष्टिमार्गको जिसने ऐसा होता हुआ जिस प्रकार हर्ष नहीं दिया; उसी प्रकार उस ( घोड़े ) से धूलियुक्त ( पक्षा०—सूखे हुए ) कण्ठनालवाला अर्थात् लक्षणसे उत्कण्ठित करता हुआ जो घोड़ा हर्ष नहीं दिया ( अथवा पाठा०—उस दर्शनेच्छाके विषयमें आदरके वशीभूत करनेसे ही रेणुयुक्त कण्ठनालताको देता अर्थात् उत्कण्ठित करता हुआ उसी प्रकार हर्ष नहीं दिया। [ दूरस्थ उस घोड़ेको देखनेके लिए बहुत उत्कण्ठित होकर दर्शक बहुत दूर तक नेत्रद्वयको फैलाये हुए था, किन्तु वह घोड़ा वेगके कारण दृष्टिके समीप आकर ( या—समीप आनेसे दृष्टि प्रतिरोध रहित कर भी ) नेत्रोंसे ओझल हो जानेसे उन्हें (दोनों नेत्रोंको) हर्ष नहीं दिया अर्थात् उस घोड़ेको अच्छी तरह नहीं देख सकने के कारण नेत्रद्वय हर्षित नहीं हुए; किन्तु दर्शकने सोचा कि यद्यपि इस बार घोड़ा वेगके कारण नेत्रोंसे ओझल हो गया और मेरे नेत्र उसे अच्छी तरह नहीं देख सके, तथापि लौटती बार यह घोड़ा अपनेको अच्छी तरह दिखाकर मेरे नेत्रोंको हर्षितकर देगा किन्तु इस बार भी उस घोड़ेकी खुरसे उड़ी हुई धूलिसे नेत्रोंके भर जानेके कारण वह घोड़ा दर्शकके नेत्रद्वयको फिर भी हर्षित नहीं किया अर्थात् दर्शकको घोड़ा देखनेकी उत्कण्ठा पूर्ववत् ही बनी रही। पक्षा०—जल रहित कर दिया है दूर तक दृष्टिमार्गको जिसने ऐसा वह पिपासु ( प्यासे हुए ) के लिए नहीं ही देगा, किन्तु उस पिपासुके कण्ठको धूलियुक्त अर्थात् सूखा ही कर देता है, क्योंकि उसे ( प्यासे हुएको ) तो जलसहित मार्ग हर्ष दे सकता है, जलरहित नहीं। जिस घोड़ेको दर्शक वेगके कारण दूरसे समीप आकर नेत्रसे ओझल होनेसे तथा लौटते समय उससे उड़ी हुई धूलिसे नेत्रको भर जानेसे अच्छी तरह नहीं देख सके और उसके देखनेके लिए उत्कण्ठित ही रह गये; ऐसे घोड़ेको राजा भीमने नलके लिए दिया ऐसा पूर्व श्लोक ( १६।२५ ) से सम्बन्ध समझना चाहिये ] ॥ २६ ॥

**दिवस्पतेरादरदर्शिनाऽऽदरादढौकि यस्तं प्रति विश्वकर्मणा।**
**तमेकमाणिक्यमयं महोन्नतं पतद्ग्रहं ग्राहितवान् नलेन सः ॥ २७ ॥**

**दिवस्पतेरिति। दिवस्पतेः इन्द्रस्य, दमयन्तीरागिणः इति भावः। 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुकि कस्कादित्वाद् विसर्जनीयस्य सत्वम्। आदरदर्शिना भीमं प्रति समादरं पश्यता, विश्वकर्मणा देवशिल्पिना, तं भीमं प्रति, आदरात् स्वप्रभोरिन्द्रस्य भैम्यामनुरागित्वात् भीमे आदरदर्शनात् स्वस्यापि तत्पितरि भीमे समादरदर्शनमुचितमिति भीमे आदरप्रदर्शनाद्धेतोरित्यर्थः। यः पतद्ग्रहः, अढौकि उपहाररूपेण प्रेरितः ढौकतेर्गत्यर्थे ण्यन्तात् कर्मणि लुङ्। तं विश्वकर्मदत्तम्, एकमाणिक्यमयम् एकमात्रपद्मरागाख्यमणिनिर्मितं, महती उन्नतिः यस्य तम् अत्युन्नतम् अत्युत्कृष्टमित्यर्थः, पतत् मुखादिभ्यः स्रवत् ताम्बूलादिकं गृह्णातीति तं पतद्ग्रहं प्रतिग्राहं, 'पिकदानी' इति ख्यातं निष्ठ्यूतताम्बूलभाजनमित्यर्थः, 'प्रतिग्राहः पतद्ग्रहः' इत्यमरः। 'विभाषा ग्रहः' इति ण-प्रत्ययाभावपक्षे 'नन्दिग्रहिपचादिभ्यः—**

इत्यादिना अच् प्रत्ययः । सः भीमः, नलेन ग्राहितवान् अग्राहयत्, नलाय ददौ इत्यर्थः ॥ २७ ॥

स्वर्गाधीश ( इन्द्रका दमयन्तीमें अनुराग होनेके कारण उस दमयन्तीके पिता राजा भीममें ) आदरको देखनेवाले विश्वकर्माने आदरसे उस ( राजा भीम ) के लिए जिस ( पिकदानी—उगलदान ) को भेजा था, इस राजा भीमने एक माणिक्यके बने हुए अत्यन्त बड़े उस पिकदानको नलसे ग्रहण कराया अर्थात् नलके लिए दिया। [ अपने प्रभु इन्द्रका दमयन्तीमें अनुरागी होनेसे उसके पिता राजा भीममें आदर करना होनेसे दधीनस्थ विश्वकर्माका दमयन्ती-पिता राजा भीममें आदर करना उचित ही है ] ॥ २७ ॥

नलेन ताम्बूलविलासिनोज्झितैर्मुखस्य यः पूगकणैर्भृतो न वा ।
इति व्यवेचि स्वमयूखमण्डलादुदञ्चदुच्चारुणतारुचा चिरात् ॥ २८ ॥

नलेनेति । यः पतद्ग्रहः प्रतिग्राहः, 'पिकदानी' इति ख्यात इत्यर्थः, स्वमयूखमण्डलात् स्वकीयकिरणसमूहात्, उदञ्चन्ती उद्गच्छन्ती, उच्चा महती, या अरुणता अरुणत्वं, रक्तवर्णता इति यावत् । तस्याः रुचा कान्त्या, ताम्बूलविलासिना ताम्बूलप्रियेण, नलेन उज्झितैः निष्ठ्यूतैः, मुखस्य सम्बन्धिभिः पूगकणैः गुवाकशकलैः, भृतः पूर्णः, न वा इति, सन्दिह्य इति शेषः, चिरात् बहुकालेन, व्यवेचि विविक्तः, पूगकणैः भृतः इति निश्चित इत्यर्थः । निश्चयान्तः सन्देहालङ्कारः ॥ २८ ॥

जिस ( पिकदानी—उगलदान ) को ( लोगोंने ) अपने किरण-समूहसे निकलती हुई अत्यधिक लालिमाकी कान्तिसे ताम्बूल-विलासी ( पानके रसमात्रको लेकर शेष भाग—सीठीको थूक देनेवाले ) नलके द्वारा छोड़े अर्थात् थूके गये सुपारीके ( रक्तवर्ण ) टुकड़ोंसे 'यह भर गयी है या नहीं' ( ऐसा सन्देह करके ) बहुत देरके बाद ( भर गयी है ऐसा ) निश्चय किया। (पाठा०—फैलते हुई अत्यधिक लालिमासे ( अथवा—उदित होते हुए सूर्य, या अरुणके समान ) सुन्दर अपने किरणसमूह होनेके कारणसे ताम्बूल विलासी''' ) । [ अभी उसी पिकदानीमें नलके थूकनेका प्रसङ्ग नहीं होनेपर भी भावी कार्यकी दृष्टिसे उक्त सन्देह उत्पन्न होनेपर लोगोंने निश्चय किया, अथवा—माणिक्यमय उस पिकदानीके ही अत्यधिक लाल होनेसे यह किरण-समूह है या सुपारीके टुकड़े हैं ऐसा सन्देह होनेपर लोगोंने देरसे निश्चय किया कि यह इस पिकदानीका किरण-समूह ही है। राजा भीमने ऐसे माणिक्यकी बनी हुई पिकदानीको नलके लिए दिया ] ॥ २८ ॥

मयेन भीमं भगवन्तमर्चता नृपेऽपि पूजा प्रभुनाम्नि या कृता ।
अदत्त भीमोऽपि स नैषधाय तां हरिन्मणेर्भोजनभाजनं महत् ॥२९॥

मयेनेति । भगवन्तं भीमम् महादेवम् , अर्चता पूजयता । अर्चतेर्भौवादिकाल्लटः, शत्रादेशः । मयेन तदाख्यदैत्यशिल्पिना, प्रभोः शिवस्य, नाम भीम इति संज्ञा अस्ति यस्मिन् तस्मिन् प्रभुनाम्नि स्वामिनामधारिणि, नृपे भीमेऽपि, या पूजा कृता, उप-

हारत्वेन यन्मरकतभाजनं दत्तमित्यर्थः। सः भीमः हरिन्मणेः गारुत्मतमणेः सम्बन्धि, मरकतमणिमयमित्यर्थः। भोजनद्रव्यमिश्रितविषनाशयोग्यमिति भावः। महत् भोजनभाजनं भोजनपात्रं, भोजनपात्ररूपामित्यर्थः, तामपि मयकृतपूजामपीत्यर्थः, नैषधाय नलाय अदत्त ॥ २९ ॥

भगवान् भीम ( शङ्करजी ) की पूजा करते हुए 'मय' नामक दानवने प्रभु ( शङ्करजी ) के नामवाले राजा ( भीम ) की भी जो पूजा की अर्थात् जिस पन्ना मणिके बने हुए विषदोष-नाशक भोजनपात्र ( थाल ) को दिया, उस हरिन्मणि ( पन्ना ) के बने हुए बड़े भोजनपात्र ( थाल ) को राजा भीमने भी नलके लिए दे दिया ॥ २९ ॥

छदे सदैवच्छविमस्य बिभ्रतां न केकिनां सर्पविषं प्रसर्पति।
न नीलकण्ठत्वमधास्यदत्र चेत् स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

छदे इति। अस्य गारुत्मतभाजनस्य, छविं नीलां कान्तिं, सदा सर्वदा एव, छदे पक्षे, बिभ्रतां दधतां, केकिनां मयूराणां सम्बन्धे, सर्पविषं न प्रसर्पति न तच्छरीरं व्याप्नोति। सः भगवान् ईश्वरः अपि, अत्र गारुत्मतभाजने, कालकूटं हलाहलम्, अभोक्ष्यत चेत् भुञ्जीत यदि, क्रियातिपत्तौ लृङ् 'भुजोऽनवने' इति तङ्। तदा नीलकण्ठत्वं न अधास्यत्, तदभावात् कालकूटविषस्य कण्ठव्यापित्वेन नीलकण्ठत्वं जातमस्येत्यर्थः। यत्सावर्ण्यात् केकिनः विषभयशून्याः, तत्पात्रे भोजने किं वक्तव्यम् इति भावः ॥ ३० ॥

जिस ( विष-दोषनाशक हरिन्मणिनिर्मित भोजनपात्र ) की कान्ति अर्थात् हरापनको सदैव अपने पङ्खमें धारण करनेवाले मयूरोंपर सर्पविष नहीं आक्रमण ( असर ) करता ( हानि पहुंचाता—मारता ) है; इस भोजनपात्रमें यदि वह शङ्करजी कालकूट ( समुद्रमथन के समय निकला हुआ अतीव तीव्र विष) पीते तो वे नीलकण्ठ नहीं होते। [ जिस भोजन-पात्रके कान्तिमात्रको पङ्खमें धारण करनेसे सांपका विष मोरोंको कुछ हानि नहीं पहुंचाता, उस भोजनपात्रमें कालकूट विषको पान करनेसे शङ्करजीका कण्ठ भी उसके दोषसे नीला नहीं पड़ता, किन्तु शङ्करजीने कालकूट विषको इस भोजनपात्रमें रखकर नहीं पीया, अत एव उस विषके दोषसे उनका कण्ठ नीला हो गया ॥ भीमने विषदोषनाशक वह हरिन्मणिमय भोजनपात्र नलके लिए दिया ] ॥ ३० ॥

विरोध्य दुर्वाससमस्खलद्दिवः स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः ?।
अदत्त तस्मै स मदच्छलात् सदा यमभ्रमातङ्गतयेव[1] वर्षुकम् ॥ ३१ ॥

विरोध्येति। अभ्रमातङ्गतया ऐरावतत्वेनेव, ऐरावतत्वहेतुकमिव इत्यर्थः। 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः। अथवा—अभ्रवत् श्यामवर्णत्वात् जलधरसदृशः मातङ्गः हस्ती, तस्य भावस्तत्ता तयेव तद्धेतुकमिव, मदच्छलात् दानजल-

1. '—तयैव' इति पाठान्तरम्।

स्रावमिषात्, सदा वर्षुकं वर्षणशीलमिति सापह्नवोत्प्रेक्षा। 'लषपत—' इत्यादिना उकञ्प्रत्ययः। यं सिन्धुरं, सः भीमः, तस्मै नलाय, अदत्त दत्तवान्, यत्तदोर्नित्यसम्बन्धादत्र स इति पदमूहनीयम्। सः नलसात्कृतसिन्धुरः, दुर्वाससं विरोध्य: मालात्यागादेव क्रोधयित्वा, अस्य दुर्वाससः सम्बन्धिनीं, दुर्वाससा इन्द्राय दत्ताम् इन्द्रेणापि ऐरावतकुम्भे स्थापितामित्यर्थः। स्रजं माल्यं, त्यजन् शुण्डया भुवि क्षिपन्, इन्द्रसिन्धुरः इन्द्रगजः, ऐरावतः इत्यर्थः। दिवः स्वर्गात्, अस्खलत् तदभिशापवशात् भ्रष्टः, किम्? स्वदत्तस्रक्त्यागापराधनिमित्तात् दुर्वाससः शापात् दिवश्च्युतऐरावत एवायं किमित्युत्प्रेक्षा ॥ २१ ॥

मानो ऐरावत ( इन्द्र-गज ) होनेके कारण ( पाठा०—ऐरावत होनेके कारण ही ) मदके बहानेसे सर्वदा वर्षणशील अर्थात् निरन्तर मदवृष्टि करनेवाले जिस हाथीको उस ( राजा भीम ) ने उस ( नल ) के लिए दिया, मालाका त्याग करता हुआ वह इन्द्र-गज (ऐरावत) दुर्वासा मुनिसे विरोधकर स्वर्गसे स्खलित हुआ अर्थात् भूलोकमें आ गया है क्या? ॥२१॥

पौराणिकी कथा—किसी समय ऐरावत हाथी पर चढ़कर जाते हुए इन्द्रके लिए प्रसन्न दुर्वासा ऋषिने मन्दारपुष्पोंकी माला दी, उस मालाको इन्द्रने ऐरावतके मस्तकमें पहना दिया और उसने उसको सूंडसे निकालकर नीचे फेंक दिया, इस कार्यसे सुलभकोप क्रुद्ध दुर्वासा ऋषिने उस ऐरावतको शाप दिया कि 'मेरी दी हुई मन्दारमालाको तुमने नीचे फेंक दिया है, अत एव तुम भी नीचे गिरो'।

**मदान्मदग्रे भवताऽथवा भिया परं दिगन्तादपि यात जीवत ।**
**इति स्म यो दिक्करिणः ! स्वकर्णयोर्विनाऽऽह वर्णस्रजमागतैर्गतैः ? ॥**

**मदादिति। दिक्करिणः! भो दिग्गजाः! मदात् बलगर्वात्, मदग्रे ममाग्रे, भवत योद्धुं तिष्ठत इत्यर्थः। अथवा भिया बलाभावजनितभयेन, दिगन्तात् अपि दिक्प्रान्तादेव, दूरादेवेत्यर्थः। परं दूरं, यात गच्छत, जीवत पलायित्वा यथा कथञ्चित् प्राणान् धारयत, सर्वत्र यूयमिति शेषः। यः गजः, इति इत्थं, वर्णस्रजम् अक्षरपङ्क्तिं, विनैव वाग्जालमन्तरेणैवेत्यर्थः। स्वकर्णयोः आगतैर्गतैः यातायातैः, केवलं कर्णसञ्चालनैरेवेत्यर्थः। आह स्म ब्रूते स्म किम्? इत्यर्थः। गम्योत्प्रेक्षा। 'लट् स्मे' इति भूते लट्, 'ब्रुवः पञ्चानामादित—' इत्यादिना णलाहादेशौ ॥२२॥**

जो हाथी अक्षर-समूहके विना ही कानोंके गमनागमन अर्थात् हिलानेसे 'हे दिग्गजो! ( यदि तुम लोगोंको मदाभिमान है तो ) मदसे मेरे सामने ( युद्ध करनेके लिए ) आवो, अथवा ( यदि मदाभिमान नहीं है तो मेरे ) भयसे दिगन्तके भी पार अर्थात् बहुत दूर जावो ( और इस प्रकार ) जीवो अर्थात् अपने प्राणोंकी रक्षा करो' ऐसा कह रहा था। ( उस हाथीको राजा भीमने नलके लिए दिया, ऐसा पूर्व ( १६।२१ ) श्लोकसे सम्बन्ध समझना चाहिये ) ॥ २२ ॥

अधत्त बीजं निजकीर्त्तये रदौ द्विषामकीर्त्यै खलु दानविप्रुषः ?[1] ।
श्रवश्रमैः कुम्भकुचां शिरःश्रियं मुदे[2] मदस्वेदवतीमुपास्त यः ? ॥३३॥

अधत्तेति । यः गजः, निजकीर्त्तये स्वयशसे, कीर्त्तिप्ररोहायेत्यर्थः । रदौ दन्तौ एव, बीजम् अङ्कुरोद्गमकारणं, तथा द्विषां शत्रूणाम्, अकीर्त्यै अयशसे, अकीर्त्तिप्ररोहाय इति भावः । दानविप्रुषः मदविन्दून् एव, बीजम् अधत्त खलु ? धारयामास किम् ? दन्ताभ्यां परेषां विदारणात् निजकीर्त्युत्पत्तिरिति तथा मदगन्धेनैव परगजानां भीत्या पलायनात् तेषामकीर्त्युत्पत्तिरिति च भावः । कीर्त्यकीर्त्योः सितासितत्वात् सितासितयोरेव दन्त-दानकणयोः कीर्त्यकीर्त्तिबीजत्वेनोत्प्रेक्षा । किञ्च, कुम्भावेव कुचौ यस्यास्ताम्, अन्यत्र—कुम्भौ इव कुचौ यस्याः तां, मदस्वेदवतीं मदजलरूपधर्मोदकवतीम्, अन्यत्र—मदजलवत् स्वेदवतीमिति सात्त्विकोक्तिः, शिरःश्रियं शिरःशोभां, श्रवसोः कर्णयोः, श्रमैः व्यापारैः, कर्णतालैरेव व्यजनवातैरिति भावः । मुदे स्वेदापहरणात्तस्याः हर्षाय, उपास्त असेवत किम् ? इत्युत्प्रेक्षात्रयस्य संसृष्टिः ॥ ३३ ॥

जो हाथी अपनी कीर्तिके लिए ( श्वेत ) दो दाँतरूप बीजको तथा शत्रुओंको अकीर्तिके लिए ( कृष्ण ) मदजलके बूँदोंको धारण करता था क्या ? और कुम्भरूपी ( पक्षा०—कुम्भके समान विशाल ) स्तनोंवाली तथा मदजलरूप ( पक्षा०—मदजलके समान ) पसीनेवाली शिरःशोभा ( पक्षा०—शिरकी शोभारूपिणी नायिका ) को हर्ष अर्थात् प्रसन्न करनेके लिए ( पाठा०—हर्षके साथ ) कानोंके प्रयाससे अर्थात् कानोंको सञ्चालितकर पंखेसे हवाकरके सेवा करता था ( 'उस हाथीको राजा भीमने नलके लिए दिया' ऐसा पूर्व ( १६।२१ ) श्लोकसे सम्बन्ध समझना चाहिये ) । [ शत्रुओंको दन्तप्रहारसे मारकर विजय प्राप्त करनेसे कीर्ति उत्पन्न होनेके कारण श्वेत कीर्तिका श्वेत वर्ण बीजरूप दाँतका होना उचित ही है । तथा मद-जलके अतितीव्र गन्धको सूंघते ही शत्रुओंके हाथियोंको युद्धभूमिसे भाग जानेके कारण शत्रुओंको अकीर्ति होनेके कारण कृष्ण वर्ण अकीर्तिका कृष्णवर्ण बीजरूप मदजलका होना भी उचित ही है । और जिस प्रकार कोई नायक कुम्भके समान विशाल स्तनोंवाली रतिश्रान्त होनेसे पसीनेसे युक्त नायिकाकी पंखोंसे हवा करके सेवा करता है, उसी प्रकार यह हाथी मस्तकस्थ कुम्भरूप स्तनोंवाली तथा मदजलरूप स्वेदसे युक्त मस्तक-शोभारूपिणी नायिकाको प्रसन्न करनेके लिए कानरूप पंखेसे हवा करता है, इस प्रकार यहां तीन उत्प्रेक्षाएँ की गयी हैं ] ॥ ३३ ॥

न तेन वाहेषु विवाहदक्षिणीकृतेषु सङ्ख्यानुभवेऽभवत् क्षमः ।
न शातकुम्भेषु न मत्तकुम्भिषु प्रयत्नवान् कोऽपि न रत्नराशिषु ॥३४॥

नेति । तेन भीमेन, विवाहे दक्षिणीकृतेषु वराय दक्षिणास्वरूपेण दत्तेषु इत्यर्थः,

1. 'बभार' इति पाठान्तरम् । 2. 'मुदा' इति पाठान्तरम् ।

वाहेषु वाजिषु विषये 'वाजिवाहार्वगन्धर्व—' इत्यमरः । सङ्ख्यानुभावे इयत्तापरिच्छेदे, प्रयत्नवान् उद्योगवानपि, कोऽपि जनः, क्षमः शक्तः, न अभवत्, तथा शातकुम्भेषु स्वर्णेषु, 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्' इत्यमरः । न, मत्तकुम्भिषु मदस्राविगजेषु, न, रत्नराशिषु रत्नसमूहेषु च, न, सर्वत्र सङ्ख्यानुभवे क्षमः अभवत् इत्यनुषङ्गः । विवाहकालप्रदत्ताश्वादिषु सङ्ख्यासम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ३४ ॥

उन ( राजा भीम ) के द्वारा विवाहमें दक्षिणा ( दहेज ) दिये गये घोड़ों ( या-रथादि सवारियों ), ( आभूषणादि वनाये गये तथा विना आभूषण वनाये ही दिये गये ) सुवर्णों, मतवाले हाथियों और रत्नों की ढेरोंकी गणना करनेमें प्रयत्नशील भी कोई व्यक्ति समर्थ नहीं हुआ ॥ ३४ ॥

करग्रहे वाम्यमधत्त यस्तयोः प्रसाद्य भैम्याऽनु च दक्षिणीकृतः ।
कृतः पुरस्कृत्य ततो नलेन सः प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥

करेति । यः आशु शोषितुम् इच्छतीति आशुशुक्षणिः अग्निः 'अग्निर्वैश्वानरो वह्निः शिखावानाशुशुक्षणिः' इत्यमरः । 'आङि शुषेः सनश्छन्दसि' इत्यौणादिकसूत्रेणाङ्पूर्वाच्छुषेर्धातोः सन्नन्तादनिप्रत्ययः । अयञ्च शिष्टप्रयुक्तोऽपि भाषायामपीष्यते तयोर्भैमीनलयोः, करग्रहे पाणिग्रहे विषये, वाम्यं वामभावं, वक्रतामिति वामभागवर्त्तित्वमिति चार्थः । 'वामं सव्ये प्रतीपे च' इति विश्वः । अधत्त भैमीकामुकतया पूर्वं प्रतिकूल आसीदित्यर्थः । अनु पश्चात्, वाम्यानन्तरमित्यर्थः । भैम्या प्रसाद्य स्तुत्यादिना प्रसन्नीकृत्य, दक्षिणीकृतश्च अदक्षिणः दक्षिणः कृतः इति दक्षिणीकृतः अनुकूलीकृतः इत्यर्थः । दक्षिणभागवर्त्ती कृतः इत्यर्थश्च । 'दक्षिणः दक्षिणोद्भूतसरलच्छन्दानुवर्त्तिषु । अवामे—' इति विश्वः । ततस्तदनन्तरं, नलेन सः आशुशुक्षणिः, तत्क्षणं सः एव क्षणः यस्मिन् कर्मणि तत् इति क्रियाविशेषणं, सः चासौ क्षणश्चेति कर्मधारये वाऽत्यन्तसंयोगे द्वितीया । विवाहसमये, पुरस्कृत्य उल्लेखनादिसंस्कारपूर्वकम् अग्रतः कृत्वा च, प्रदक्षिणः अत्यन्तानुकूलः दक्षिणभागवर्त्ती च, दक्षिणभागे वलयाकारेण वेष्टित इति वा, कृतः । पूर्वं प्रतिकूलोऽप्यग्निः प्रार्थनया अनुकूलितः इत्येकोऽर्थः । अग्निप्रदक्षिणीकृत्येत्यादिशास्त्रार्थोऽनुष्ठितः इत्यपरार्थः ॥ ३५ ॥

जो ( अग्नि ) उन दोनों ( नल तथा दमयन्ती ) के विवाहके विषयमें प्रतिकूल ( दमयन्तीका कामुक होनेसे नलरूप धारणकर स्वयंवरमें उपस्थित होनेसे विरुद्ध । पक्षा०—वामभागस्थ ) था, वाद दमयन्तीने ( नलवरणकाल ) में ( स्तुति आदिके द्वारा ) प्रसन्नकर अनुकूल ( पक्षा०—दक्षिण भागस्थ ) किया; उसी अग्निको वाद नलने विवाहके समयमें ( उल्लेखन आदि संस्कारके साथ ) आगे करके प्रदक्षिण ( अतिशय अनुकूल, पक्षा०—दक्षिण

---

१. 'विवाहादिषु''''' इति म० म० शिवदत्तशर्माणः ।

भागस्थ अर्थात् दहने भागमें स्थित, अथवा—फेरा देकर प्रदक्षिण ) किया । [ पहले विवाहमें जो अग्नि प्रतिकूल ( पक्षा०—वामभागस्थ ) था, उसे दमयन्तीने तथा बादमें नलने प्रदक्षिणा ( फेरा देते समय दहने भागमें, पक्षा०—अत्यन्त अनुकूल ) किया अर्थात् उनने अग्निको प्रदक्षिणा की । लोकमें भी विवाहसे पहले प्रतिकूल रहनेवाले व्यक्तिको विवाहकालमें स्तुति आदिसे प्रसन्नकर तथा आगे कर ( या—पुरस्कृतकर ) अत्यन्त अनुकूल बना लिया जाता है ] ॥ ३५ ॥

**स्थिरा त्वमश्मेव भवेति मन्त्रवागनेशदाशास्य किमाशु तां ह्रिया ? ।**
**शिला चलेत् प्रेरणया नृणामपि स्थितेस्तु नाचालि बिडौजसाऽपि सा ॥**

**स्थिरेति । त्वम् अश्मा पाषाणखण्ड इव, स्थिरा निश्चला, भव तिष्ठेत्यर्थः इति मन्त्रवाक् तां दमयन्तीम्, आशास्य स्वाक्षरैः प्रकाश्यां 'शिलावत् अचला भव' इति एवंरूपाम् आशिषं वितीर्य, ह्रिया हीनोपमाकरणहेतुकलज्जया इवेत्युत्प्रेक्षा-गम्या, आशु सपदि, अनेशत् अदृश्यतां गता, किम् ? वर्णानाम् उच्चरितानन्तरप्र-ध्वंसित्वादिति भावः, नशेर्लुङि पुषादित्वादङि 'नशिमन्योरलिट्येत्वं वक्तव्यम्' इति एत्वम् । हीनोपमात्वं व्यनक्ति शिला अश्मा, नृणां मनुष्याणाम् अपि, प्रेरणया व्यापार-विशेषेण, चलेत्, तु पुनः, सा दमयन्ती, बिडौजसा देवेन्द्रेण अपि, स्थितेः पतिव्रता-मार्गात्, न अचालि न चालिता, न चालयितुं शक्तेत्यर्थः, चलेर्ण्यन्तात् कर्मणि लुङ् । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुकत्वात् काव्यलिङ्गमलङ्कारः ॥ ३६ ॥**

( हे दमयन्ति ! 'इममश्मानमारोह' अर्थात् 'इस पत्थरपर पैर रक्खो' ऐसा मन्त्रोच्चा-रणकर ) 'तुम पत्थरके समान स्थिर होवो' ऐसा ( नलके द्वारा कथित ) मन्त्रवाक् उसे ( दमयन्तीको, 'तुम पत्थरके समान स्थिर होवो' ऐसा ) आशीर्वाद देकर लज्जाके कारण शीघ्र ही नष्ट हो गयी क्या ? ( उसके लज्जित होनेमें यह कारण है कि—) पत्थर तो ( साधारणतम शक्तिवाले ) मनुष्योंकी भी प्रेरणा ( हाथ-पैर आदिके व्यापार ) से चलाय-मान हो जाता है, किन्तु वह ( दमयन्ती ) परमशक्तिशाली इन्द्रके द्वारा भी मर्यादा ( मनो-व्यापारमात्रसे पतिरूपमें स्वीकृत नलवरणरूप सतीत्व ) से नहीं चलायमान हुई । [ यद्यपि नलोक्त मन्त्रवाक् वर्णरूप होनेसे स्वभावतः नष्ट हो गयी थी, किन्तु उसके शीघ्र नष्ट होनेमें 'पत्थर साधारण शक्तिवाले मनुष्यादिके हाथ आदिके व्यापारसे चञ्चल हो जाता है और दमयन्ती महाशक्तिशाली इन्द्रके अनेक प्रयत्न करनेपर भी अपने पातिव्रत्यरूपी मर्यादापर स्थिर बनी रही, अत एव इस दमयन्तीको उपमेय तथा पत्थरको उपमा बनाकर 'तुम पत्थरके समान स्थिर होवो' ऐसा आशीर्वचन कहना अनुचित होनेसे उस वचनको लज्जित होकर शीघ्र नष्ट होनेकी उत्प्रेक्षा कविने की है । लोकमें भी हीन व्यक्तिको बड़े व्यक्तिसे उच्च श्रेष्ठ कहा जाता है तो वह हीन व्यक्ति लज्जित होकर छिप जाता है ॥ दमयन्तीने विधिप्राप्त अश्मारोहण कार्य किया ] ॥ ३६ ॥

प्रियांशुकग्रन्थिनिबद्धवाससं तदा पुरोधा विदधद्[1] विदर्भजाम् ।
जगाद विच्छिद्य पटं प्रयास्यतः नलादविश्वासमिवैष विश्ववित् ॥३७॥

प्रियेति । तदा तत्काले, विदर्भजां वैदर्भीं प्रियस्य नलस्य, अंशुके उत्तरीये, 'अंशुकं श्लक्ष्णवस्त्रे स्याद् वस्त्रमात्रोत्तरीययोः' इति मेदिनी । ग्रन्थिना बन्धविशेषेण, निबद्धवाससं ग्रथितांशुकां, विदधत् कुर्वन् , देशाचारप्राप्तत्वादिति भावः । विश्ववित् सर्वज्ञः, त्रिकालज्ञ इत्यर्थः । एष पूर्वोक्तः, पुरोधाः पुरोहितः, गौतमः इति यावत् । पटं वस्त्रं, विच्छिद्य द्वेधा विपाट्य, प्रयास्यतः वने भैमीं परित्यज्य गमिष्यतः, नलात् अविश्वासम् अप्रत्ययं, जगादेव उवाचेव, ज्ञापयामासेवेत्यर्थः । आगाम्यर्थज्ञापनार्थमिवानयोरविच्छेदेनावस्थानार्थं वस्त्राञ्चलद्वयं जग्रन्थेति उत्प्रेक्षा । भारते आरण्यपर्वणि नलोपाख्याने श्लोकः,—'ततोऽर्द्धं वाससश्छित्त्वा विवस्य च परन्तप ! । सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥' इति ॥ ३७ ॥

उस ( विवाहके ) समयमें प्रिय ( नल ) के कपड़ेकी गांठमें बाँधे गये कपड़ेवाली दमयन्तीको करते हुए सर्वज्ञ इस पुरोहित ( गौतम ) ने भविष्यमें कपड़ा काटकर जानेवाले नलसे मानों अविश्वासको कह दिया । [ विवाहकालमें गौतमके द्वारा किये गये ग्रन्थिबन्धनकर्मको कविने यहांपर उत्प्रेक्षा की है कि—भविष्यमें नल कपड़ा काटकर तुम्हें छोड़कर चले जायेंगे, अतः इनका विश्वास मत करो और इनके कपड़ेसे अपना कपड़ा बांध लो, जिससे ये तुमको छोड़कर चले न जावें । लोकमें भी किसीके कहीं चले जानेकी आशङ्का होती है तो उसके कपड़ेके साथ अपने कपड़ेमें गांठ बांध लेते हैं । पुरोहित गौतमने विधिप्राप्त दोनोंका ग्रन्थिबन्धनकर्म किया ] ॥ ३७ ॥

पौराणिक कथा—महाभारतमें यह कथा आयी है कि नल कलिसे पराजित हो अपनी सम्पूर्ण सम्पत्ति हारकर वनमें दमयन्तीके साथ चले गये, वहां पक्षीका रूप धारणकर आये हुए कलिपर उसे पकड़नेके लिये नलने अपना वस्त्र फेंका और पक्षिरूपधारी वह कलि वस्त्र लेकर उड़ गया, बादमें वस्त्रहीन नलने दमयन्तीके आधे वस्त्रको स्वयं पहना और सोई हुई दमयन्तीके आधे वस्त्रको फाड़कर उसे सोई हुई छोड़कर चल दिये ।

ध्रुवावलोकाय तदुन्मुखभ्रुवा
निदिश्य पत्याऽभिदधे विदर्भजा ।
किमस्य न स्यादणिमाऽक्षिसाक्षिकः ?
तथाऽपि तथ्यो महिमाऽऽगमोदितः ॥ ३८ ॥

ध्रुवेति । ध्रुवावलोकाय दमयन्तीं ध्रुवनक्षत्रप्रदर्शनाय, 'विवाहे ध्रुवमरुन्धतीञ्च दर्शयेत्' इति शास्त्रात् । तदुन्मुखभ्रुवा तदुन्मुखी ध्रुवाभिमुखी भ्रूः यस्य तादृशेन, पत्या नलेन, निदिश्य ध्रुवं पश्येति आदिश्य, विदर्भजा वैदर्भी, अभिदधे अभिहिता,

---

[1] 'विदधे' इति पाठान्तरम् ।

कर्मणि लिट् । किं तत् ? इत्याह—अस्य ध्रुवस्य, अणिमा अणुत्वं, क्षुद्रपरिमाणत्वमित्यर्थः । अक्षिसाक्षिकः चक्षुःप्रमाणकः, न स्यात् किम् ? चक्षुषा न लक्ष्यते किमित्यर्थः, तथाऽपि अस्य क्षुद्रपरिमाणवत्त्वे चक्षुष एव प्रमाणत्वे सत्यपीत्यर्थः । आगमोदितः ज्योतिःशास्त्रोक्तः, महिमा महत्ता एव, बृहत्परिमाणत्वमेवेत्यर्थः । तथ्यः प्रामाणिकः, दूरत्वदोषेण अणुत्वग्राहिप्रत्यक्षस्य आगमापेक्षया दुर्बलत्वात् हस्तार्द्धमितचन्द्रप्रत्यक्षवदिति भावः । महदपि दूरात् अणु प्रतीयते इति प्रसिद्धिः ॥ ३८ ॥

ध्रुवको दिखानेके लिए उसके उन्मुख भ्रूवाले निर्देशकर पति (नल) ने दमयन्तीसे कहा कि—'इस (ध्रुव) की सूक्ष्मता नेत्रगोचर नहीं है क्या ? अर्थात् यद्यपि नेत्रगोचर है ही, तथापि वेदोक्त महिमा सत्य है अर्थात् यद्यपि इस सूक्ष्म ध्रुवको स्वयं तुम देख सकती हो तथापि 'ध्रुवमुदीक्षस्व' (ध्रुवको देखो) ऐसा पतिके कहनेपर 'ध्रुवं पश्यामि, प्रजां विन्देय' (ध्रुवको देखती हूं, प्रजा अर्थात् सन्तानको प्राप्त करें) ऐसा वधू कहे' ऐसा श्रुतिवचन ही सत्य है (पक्षा०—यद्यपि ध्रुवतारा अत्यन्त सूक्ष्म है, तथापि ज्यौतिष शास्त्रमें इसका प्रमाण जो वहुत वड़ा कहा गया है, वह ज्यौतिष शास्त्रोक्त वचन सत्य है)। दमयन्तीको नलने विधिप्राप्त ध्रुवदर्शन कराया ॥ ३८ ॥

धवेन साऽदर्शि वधूररुन्धतीं सतीमिमां पश्य गतामिवाणुताम् ।
कृतस्य पूर्वं हृदि भूपतेः कृते तृणीकृतस्वर्गपतेर्जनादिति[1] ॥ ३९ ॥

धवेनेति । पूर्वं विवाहात् प्रागेव, हृदि कृतस्य पतित्वेन मनसि निश्चितस्य, भूपतेः नलस्य, कृते निमित्तं, नलवरणार्थमित्यर्थः । तादर्थ्येऽव्ययम् । तृणीकृतस्वर्गपतेः अगणितमहेन्द्रात्, जनात् त्वत्तः इति यावत् । 'पञ्चमी विभक्ते' इति पञ्चमी । अणुतां सूक्ष्मतां, पातिव्रत्यगुणेन न्यूनताञ्च, गतामिव स्थितां, सतीं साध्वीम्, इमाम् अरुन्धतीम् अरुन्धतीनक्षत्रं, पश्य इति, उक्त्वेति शेषः । सा वधूः नवोढा भैमी, धवेन भर्त्रा नलेन, अदर्शि दर्शिता । दृशेर्ण्यन्तादात्मनेपदिनः कर्मणि लुङ् । 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति अणिकर्तुः कर्मत्वम्, अत्र च तस्याभिहितत्वात् न द्वितीया ॥ ३९ ॥

'(विवाहसे) पहले ही हृदयमें (पतिरूपमें निश्चित) किये गये राजा (नल) के लिए तृणवत् किये (तृणके समान तुच्छ मानकर छोड़े गये) इन्द्र हैं जिससे ऐसे आदमी अर्थात् तुमसे लज्जित होनेके कारणसे दुर्बलता (पक्षा०—अतिशय सूक्ष्मता) को प्राप्त हुई पतिव्रता इस अरुन्धतीको देखो' (ऐसा कहकर) पति (नल) ने वधू (दमयन्तीको) से अरुन्धतीको दिखलाया । [मैंने तो विवाहके वाद पतिव्रत धर्मका पालन करती हुई परपुरुष होनेसे इन्द्र तकको तुच्छ समझकर त्याग किया, किन्तु इस दमयन्तीने विवाहके पहले ही केवल मनमें पतिरूपसे वरण किये गये राजा नलके लिए स्वयंवरमें स्वयं आये

---

1. '—दितः' इति सुखावबोधस्थपाठः' इति म० म० शिवदत्तशर्माणः ।

हुए इन्द्र तकको तृणवत् तुच्छ समझकर त्याग करती हुई सतीधर्मका पालन किया, अत एव यह दमयन्ती मुझसे भी अधिक श्रेष्ठ पतिव्रता है, इस कारणसे उत्पन्न लज्जाके कारण मानो दुर्बल हुई अरुन्धतीको बतलाकर नलने दमयन्तीको दिखलाया। नलने दमयन्तीको आचार-प्राप्त अरुन्धती-दर्शन कराया ] ॥ ३९ ॥

प्रसूनता तत्करपल्लवस्थितैरुडुच्छविर्व्योम्नि विहारिभिः पथि ।
मुखेऽमराणामनले रदावलेरभाजि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥

प्रसूनतेति । तत्करपल्लवस्थितैः होमार्थं भैम्याः पाणिकिशलयधृतैः इत्यर्थः। लाजैः भृष्टशालिभिः परिवापकापरपर्यायैः, 'लाजाः पुम्भूम्नि परिवापके' इति वैजयन्ती । प्रसूनता पुष्पत्वम् , अभाजि प्रापि, तत्सादृश्यं प्राप्तम् इत्यर्थः। लाजा दमयन्तीकरकमले पुष्पवत् परिदृश्यमाना अभूवन् इति निष्कर्षः। भजतेः कर्मणि लुङ् । अथ अनया वध्वा, उज्झितैः अग्निं लक्ष्यीकृत्य त्यक्तैः, अत एव पथि मध्ये मार्गे, व्योम्नि विहारिभिः व्योमचारिभिः, खेचरैः सद्भिरित्यर्थः, उडुच्छविः नक्षत्रकान्तिः, तत्सदृशशोभा इत्यर्थः । अभाजि, ततश्च अमराणां देवानां, मुखे आस्यभूते, अनले अग्नौ, 'अग्निमुखा वै देवाः' इति श्रुतेः । रदावलेः दन्तपङ्क्तेः, द्युतिः शोभा, तत्सदृशकान्तिरित्यर्थः अभाजि । अत्र एकस्य लाजद्रव्यस्य क्रमेण करपल्लवाद्यनेकाधारवृत्तित्वकथनात् पर्यायभेदः तथा लाजानां प्रसूननक्षत्रदन्तशोभासादृश्यान्निदर्शनाभेदः इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

दमयन्तीके हाथरूप पल्लवमें स्थित खीलोंने पुष्पत्व अर्थात् पुष्पशोभाको प्राप्त किया, इस ( दमयन्ती ) से छोड़ी गयी तथा आकाश ( दमयन्तीके करपल्लव तथा भूमिष्ठ अग्निके मध्यभाग ) में विहार करने ( गिरने ) वाली खीलोंने नक्षत्रोंकी शोभाको प्राप्त किया और ( 'अग्निमुखा वै देवाः' अर्थात् 'देव अग्निमुख हैं' इस श्रुतिवचनके अनुसार ) देवोंके मुख अग्निमें ( दमयन्तीके द्वारा हुत = हवनकी गयी ) उन खीलोंने दन्तपङ्क्तिकी शोभाको प्राप्त किया। [ हस्तपल्लवमें पुष्पका, आकाशमार्गमें नक्षत्रोंका और मुखमें दन्तपङ्क्तिका होना उचित ही है । दमयन्तीने विध्यनुक्रमसे प्राप्त लाजाहुति की ] ॥ ४० ॥

तया गृहीता[1]ऽऽहुतिधूमपद्धतिर्गता कपोले मृगनाभिशोभिताम् ।
ययौ दृशोरञ्जनतां श्रुतौ श्रिता तमाललीलामलिकेऽलकायिता ॥४१॥

तयेति । तया वध्वा, गृहीता स्वीकृता, आहुतेः लाजाहोमस्य, धूमपद्धतिः धूमरेखा, कपोले गण्डदेशे, मृगनाभिः कस्तूरी इव शोभते इति मृगनाभिशोभिनी, तस्या भावः तत्ता तां मृगनाभिशोभितां, 'कर्त्तर्युपमाने' इति णिनिः । 'त्वतलोः' इति पुंवद्भावः । गता प्राप्ता, तथा दृशोः नयनयोः, अञ्जनतां कज्जलतां, ययौ प्राप, तत्सादृश्यं गता इत्यर्थः । तथा श्रुतौ श्रोत्रे, तमालस्य तमालावतंसस्य, लीलां विलासं,

---

१. 'प्रतीष्टा—' इति पाठान्तरम् ।

श्रिता प्राप्ता, अलिके ललाटे च, 'लकाटमलिकं गोधिः' इत्यमरः । अलकायिता अलकवत् आचरिता, चूर्णकुन्तलत्वं गतेत्यर्थः । उपमानादाचारक्यङन्तात् कर्मणि क्तः । अत्रापि एकस्यैव धूमस्य क्रमात् अनेकाधारसम्बन्धात् पर्यायः, तदुपजीविनामुत्तरेषां यथायोगमुपमानिदर्शनाभ्यां पूर्ववत् सङ्करः ॥ ४१ ॥

उस (दमयन्ती) के द्वारा ( अञ्जलिसे ) गृहीत ( लाजा ) आहुतिके धूम-समूहने कपोल में कस्तूरीकी शोभाको प्राप्त किया, ( उससे ऊपर जाकर ) नेत्रद्वयमें कज्जलताको प्राप्त किया, ( उससे भी ऊपर जाकर ) दोनों कानोंमें तमाल ( पत्र ) की शोभाको प्राप्त किया और ( उससे भी ऊपर जाकर ) केशोंमें केशकी शोभाको प्राप्त किया । [ कपोलमें कस्तूरी, नेत्रोंमें अञ्जन, कानोंमें तमालपत्र और केशोंमें केशकी शोभाका होना उचित है । क्रमप्राप्त विधिके अनुसार दमयन्तीने अञ्जलिसे लाजाहुतिके धूमको ग्रहण किया ] ॥ ४१ ॥

अपहुतः स्वेदभरः करे तयोस्त्रपाजुषोर्दानजलैर्मिलन्मुहुः ।
दृशोरपि प्रोद्गतमश्रु सात्त्विकं घनैः समाधीयत धूमलङ्घनैः ॥ ४२ ॥

अथानयोस्त्रिभिः सात्त्विकोदयमाह—अपहुत इत्यादिभिः । त्रपाजुषोः लज्जाभाजोः, तयोः वधूवरयोः, करे पाणौ, स्वेदभरः सत्त्विकभावोदयसूचकघर्मजलातिशयः, मुहुः पुनः पुनः, दानजलैः तत्कालोचितदानार्थमुदकैः, मिलन् मिश्रीभवन्, अपहुतः आच्छादितः, आत्मानं गोपायितवान् इत्यर्थः । दृशोः अक्ष्णोः अपि, प्रोद्गतम् आविर्भूतं, सात्त्विकं सत्त्वसमुद्भूतम्, अश्रु नेत्रोदकं, घनैः सान्द्रैः, पुञ्जीभूतैरित्यर्थः । धूमलङ्घनैः धूमपीडनैः, समाधीयत समाहितः, परिहृतः इति यावत् । अत्र स्वेदाश्रुणोः सहजयोरागन्तुकदानोदकधूमाभिभवाभ्यां तिरोधानान्मीलनभेदः, 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् ॥ ४२ ॥

उन दोनों ( नल तथा दमयन्ती ) के लज्जायुक्त हाथमें ( परस्पर स्पर्शजन्य सात्त्विकभावसे ) वार वार उत्पन्न अधिक स्वेद ( पसीने ) को ( ब्राह्मणोंके द्वारा दिये गये ) दानार्थ जलने छिपा दिया ( अथवा—......हाथमें उत्पन्न अधिक स्वेदको वार-वार ( ब्राह्मणोंके द्वारा दिये गये ) दानार्थ जलने छिपा दिया ) और उन दोनोंके सलज्ज नेत्रोंमें उत्पन्न सात्त्विक आँसूको भी अधिक धूमाक्रमणने छिपा दिया । [ वधूवरके परस्पर हाथका स्पर्श होनेपर लज्जाके कारण उनके हाथोंमें सात्त्विक भावसे उत्पन्न पसीना दानके लिए ब्राह्मणोंसे दिये गये जलसे लोगोंको लक्षित नहीं हुआ अर्थात् स्वेदयुक्त हाथमें वार-वार दान जल देनेसे लोगोंने यह समझा यह दान-जल ही है । तथा नेत्रोंमें भी सात्त्विक भावसे आँसू आया, किन्तु उसे भी धूम-समूहसे ही यह नेत्रोंमें आँसू आरहा है ऐसा लोगोंने समझा; इस प्रकार सात्त्विकभावसे उन दोनोंके हाथों तथा नेत्रोंमें उत्पन्न स्वेद तथा आँसू क्रमशः दानार्थ जल तथा धूम-समूहसे छिप गये ] ॥ ४२ ॥

बहूनि भीमस्य वसूनि दक्षिणां प्रयच्छतः सत्त्वमवेद्य तत्क्षणम् ।

जनेषु रोमाञ्चमितेषु मिश्रतां ययुस्तयोः कण्टककुड्मलश्रियः ॥ ४३ ॥

वहूनीति । तयोः वधूवरयोः, कण्टककुड्मलश्रियः पुलकाङ्कुरसम्पदः कर्त्र्यः, बहूनि प्रचुराणि, वसूनि धनानि, दक्षिणां दक्षिणारूपेण, प्रयच्छतः ददतः, भीमस्य सत्त्वं सत्त्वगुणं स्वभावं वा, दानशौण्डीरत्वमित्यर्थः । अवेक्ष्य दृष्ट्वा, तत्क्षणं तत्काले, अत्यन्तसंयोगे द्वितीया । रोमाञ्चं पुलकाञ्चितत्वम्, इतेषु गतेषु, जनेषु दर्शकलोकसमूहेषु, मिश्रतां मेलनं, ययुः । दक्षिणादर्शनजन्यविस्मयात् सर्वेषां रोमाञ्चे सति वधूवरयोः सात्त्विकभावोद्भूतानि रोमाञ्चान्यपि तादृशविस्मयोद्भूतत्वेनैव तिरोहितानि इत्यर्थः । पूर्ववदलङ्कारः ॥ ४३ ॥

बहुत धनोंको दक्षिणा देते हुए भीमकी दानशूरताको देखकर उस समय रोमाञ्चित हुए ( दर्शक ) लोगोंमें उन दोनों ( नल तथा दमयन्ती ) का रोमाञ्च भी मिल गया अर्थात् एकताको प्राप्त हो गया । [ परस्पर स्पर्शसे नल तथा दमयन्तीको जो सात्त्विक भावजन्य रोमाञ्च हुआ, वह भी बहुत दान देते हुए भीमकी दानशूरताको देखनेसे रोमाञ्चित अन्य दर्शकोंके बीचमें ही सम्मिलित हो गया अर्थात् जिस प्रकार हमलोगोंको भीमके अत्यधिक धन दान करनेसे आश्चर्यके कारण रोमाञ्च हो रहा है, उसी प्रकार इन वधू-वरोंको भी उसी कारण से रोमाञ्च हो रहा है, लोगोंके ऐसा समझनेसे सात्त्विक भावोत्पन्न नल दमयन्तीके रोमाञ्च अन्य दर्शकोंके रोमाञ्चकी समान कोटिमें ही माने गये । परस्पर स्पर्शसे वधू-वरको 'रोमाञ्च' नामक सात्त्विक भाव उत्पन्न हुआ और राजा भीमके अत्यधिक दानको देखकर दर्शक लोगोंको आश्चर्यसे रोमाञ्च हो गया ] ॥ ४३ ॥

बभूव न स्तम्भविजित्वरी तयोः श्रुतिक्रियारम्भपरम्परात्वरा ।
न कम्पसम्पत्तिमलुम्पदग्रतः स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥

बभूवेति । तयोः वधूवरयोः, श्रुतिक्रियाणां वेदोक्तकर्मणाम्, आरम्भपरम्परायां त्वरा उत्तरोत्तरप्रयोगरूपशीघ्रता, स्तम्भस्य सात्त्विकभावोदयजन्यनिष्क्रियाङ्गत्वलक्षणस्य, विजित्वरी विजेत्री, 'इण् नशजिसर्त्तिभ्यः क्वरप्' इति क्वरप् प्रत्यये 'टिड्ढाणञ्' इत्यादिना ङीप् । न बभूव न अपह्नोतुं शशाक इत्यर्थः । श्रुत्युक्तकर्मजातानां शीघ्रसम्पादनेच्छायां सत्यामपि सात्त्विकस्तम्भवशात् तौ वधूवरौ किमपि कर्म शीघ्रं सम्पादयितुं न समर्थौ इति भावः । तथा समिधा इन्धनेन, समेधितः प्रदीपितः, वह्निः अग्निः, अग्रतः स्थितोऽपि कम्पसम्पत्तिं वेपथूद्रेकं, न अलुम्पत् निरोद्धुं न अशकदित्यर्थः । समिद्धोऽग्निः शीतजकम्पमेव शमयितुं समर्थः न तु सात्त्विकं कम्पं गाढानुरागविकाराणां दुर्वारवेगत्वादिति तयोः स्तम्भकम्पौ सर्वे ज्ञातवन्त इति भावः । अत्र कर्मत्वरा-समिद्धवह्निरूपकारणसद्भावेऽपि स्तम्भकम्पनिवृत्तिरूपकार्यानुत्पत्तेर्विशेषोक्तिरलङ्कारः, 'सत्यां तत्सामग्र्यां तदनुत्पत्तिर्विशेषोक्तिः' इति लक्षणात् ॥ ४४ ॥

---

१. 'अवर्ततास्तम्भ—' इति पाठान्तरम् ।

वेदोक्त कर्मके आरम्भ-समूहकी शीघ्रता उन दोनों ( नल तथा दमयन्ती ) के स्तम्भको नहीं जीत सकी, अर्थात् सात्त्विक भावजन्य स्तम्भके कारण वे दोनों वेदोक्त वैवाहिक कार्य-समूहको जल्दी २ नहीं कर सके और समिधा ( हवनकाष्ठ ) से वढ़ी अर्थात् जलती हुई आगे स्थित भी अग्नि ( सात्त्विक भावजन्य उन दोनोंके ) कम्पवेगको नहीं रोक सकी अर्थात् आगे जलती हुई अग्निसे सात्त्विक भावोत्पन्न उनके कम्पनका वेग नहीं दवा। [ स्तम्भके कारण शीघ्रता रहनेपर भी वे दोनों वेदोक्त वैवाहिक कार्य-समूहको शीघ्रतासे नहीं कर सके तथा अग्नि शीतजन्य कम्पन ( कँपकँपी ) को ही दूर कर सकती है, सात्त्विक भावजन्य कम्पनको नहीं। अत एव यद्यपि उन दोनोंके सात्त्विक भावजन्य स्वेद, अश्रु तथा रोमाञ्चको दर्शक लोग पूर्वोक्त ( १६।४२-४३ ) कारणोंसे लक्षित नहीं कर सके, किन्तु स्तम्भ तथा कम्पको सव दर्शकोंने लक्षित कर ही लिया ] ॥ ४४ ॥

**दमस्वसुः पाणिममुष्य गृह्णतः पुरोधसा संविदधेतरां विधेः।**
**महर्षिणेवाङ्गिरसेन साङ्गता पुलोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥**

**दमस्वसुरिति। दमस्वसुः दमयन्त्याः, पाणिं करं, गृह्णतः आददानस्य, ताम् उद्वहत इत्यर्थः। अमुष्य नलस्य, पुलोमजां शचीम्, उद्वहतः परिणयतः, शतक्रतोः इन्द्रस्य, महर्षिणा आङ्गिरसेन बृहस्पतिना इव, पुरोधसा गौतमेन, विधेः श्रुत्युक्तवैवाहिकानुष्ठानस्य, साङ्गता साङ्गत्वं, समाप्तिरिति यावत्, संविदधेतराम् अतिशयेन सम्पादिता, 'किमेत्तिङव्ययघादा—' इत्यादिना आमुप्रत्ययः ॥ ४५ ॥**

इन्द्राणिके साथ विवाह करते हुए इन्द्रके समान दमयन्तीके साथ विवाह करते हुए इस ( नल ) के ( वेदोक्त ) विधिकी साङ्गताको बृहस्पतिके समान पुरोहित गौतमने अच्छी तरह पूरा किया ॥ ४५ ॥

**स कौतुकागारमगात् पुरन्ध्रिभिः सहस्ररन्ध्रीकृतमीक्षितुं ततः।**
**अधात् सहस्राक्षतनुत्रमित्रतामधिष्ठितं यत् खलु जिष्णुनाऽमुना ॥ ४६ ॥**

**स इति। ततः विवाहविधिसम्पादनानन्तरं, सः नलः, ईक्षितुं द्रष्टुं, वधूवरविश्रम्भालापमिति शेषः, सहस्ररन्ध्रीकृतम् अनेकच्छिद्रीकृतम्। बहुव्रीहावभूततद्भावे च्विः। कौतुकागारं कुतूहलवर्द्धकं मङ्गलगृहं, पुरन्ध्रिभिः पुरनारीभिः सह। 'वृद्धो यूना' इति ज्ञापकात् सहाप्रयोगे सहार्थे तृतीया। अगात् प्राविशत्। यत् अगारं, जिष्णुना जयशीलेन, अमुना नलेन, जिष्णुना इन्द्रेण इत्यपि गम्यते, अधिष्ठितम् अधिरूढं सत्, सहस्राक्षतनुत्रमित्रताम् इन्द्रकवचतुल्यताम्, इन्द्रस्य सहस्राक्षैर्दर्शनार्थं सहस्रच्छिद्रीकृतकवचसादृश्यमिति यावत्। अधात् खलु निश्चितं धारयामासेत्यर्थः ॥ ४६ ॥**

इस ( विवाहविधि ) के वाद वे ( नल, वधूवरकी चेष्टा एवं विश्रम्भपूर्वक भाषण आदि कार्यको ) देखनेके लिए ( तृण-काष्ठादिसे ) हजारों छिद्र किये हुए नगर-नारियोंके साथ

( अथवा—नगरनारियोंके द्वारा वधूवरकी चेष्टाओं एवं विश्रम्भपूर्वक भाषणादि कार्यको देखने हजारों छिद्र किये ) कौतुकागार ( कोहबर ) में प्रवेश किये; विजयशील इस ( नल पक्षा०—इन्द्र ) से युक्त होते हुए जिसने मानो इन्द्रके कवचकी शोभाको धारण कर लिया था अर्थात् हजारों छिद्र होनेसे इन्द्रके कवचके समान शोभता था ॥ ४६ ॥

**अथाशनाया निरशेषि नो ह्रिया न सम्यगालोकि परस्परक्रिया ।**
**विमुक्तसम्भोगमशायि सस्पृहं वरेण बध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥**

अथेति । अथ कौतुकागारप्रवेशानन्तरं, वरेण नलेन, वध्वा दमयन्त्या च, यथाविधि यथाशास्त्रं, त्र्यहं त्रिदिनम् । अत्यन्तसंयोगे द्वितीया । 'तद्धितार्थ—' इत्यादिना समाहारे द्विगुः, 'राजाहः सखिभ्यष्टच्' इत्यनेन टच्, 'न सङ्ख्यादेः समाहारे' इति अह्नादेशाभावः, 'द्विगुरेकवचनम्' इत्येकवचनान्तता, 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता । अशनमिच्छतीति अशनाया बुभुक्षा, 'अशनायोदन्यधनायाबुभुक्षापिपासागर्द्धेषु' इति क्यजन्ततया निपातनात् साधुः । नो निरशेषि न निःशेषीकृता, न पर्याप्तम् अभोजि इत्यर्थः । ह्रिया लज्जया, परस्परक्रिया अन्योऽन्यचेष्टा, सम्यक् यथेच्छं, न आलोकि न वीक्षिता, तथा विमुक्तसम्भोगं सम्भोगपराङ्मुखं यथा तथा, सस्पृहं साभिलाषम् एव, अशायि शयितम् । भावे लुङ् । यथाह आपस्तम्बः—'त्रिरात्रमुभयोरधःशय्या ब्रह्मचर्यमक्षारलवणाशित्वञ्च तयोः शय्यामन्तरेण दण्डोपलिप्तवाससा सूत्रेण परिवीतयोरवस्थानत्वम्' ॥ ४७ ॥

इस ( कौतुकागारमें प्रवेश करने ) के बाद वधू-वर ( नल तथा दमयन्ती ) ने तीन दिन तक लज्जासे अच्छी तरह भोजन नहीं किया, पारस्परिक चेष्टादिको नहीं देखा और सम्भोग रहित ( किन्तु ) स्पृहायुक्त विधिपूर्वक शयन किया । [ उन दोनोंने कौतुकागारमें प्रवेशकर तीन दिनतक यद्यपि भोजन किया, परस्परमें एक दूसरेके कार्यको देखा और सोया; किन्तु लज्जासे न तो अच्छी तरह भोजन ही किया, न एक दूसरेके कार्य (चेष्टाओं) को ही देखा और न तो सम्भोगपूर्वक शयन ही किया; अपितु विधिके पालन करनेके लिए साधारणतः भोजन किया, नेत्रप्रान्तसे ( कनखी ) से ही एक दूसरेके कार्यको देखा और चुम्बनालिङ्गनादि रतिवर्जित परन्तु उस रतिकी चाहना रखते हुए सोया । शास्त्रोक्तविधिके अनुसार वधू-वरने उसी कौतुकागारमें ब्रह्मचर्यपूर्वक तीन रात एकत्र निवास किया ] ॥४७॥

**कटाक्षणाज्जन्यजनैर्निजप्रजाः क्वचित् परीहासमचीकरत्तराम् ।**
**धराऽप्सरोभिर्वरयात्रयाऽऽगतानभोजयत् भोजकुलाङ्कुरः क्वचित् ॥ ४८ ॥**

कटाक्षणादिति । भोजकुलाङ्कुरः भोजवंशकुमारः दमः, क्वचित् कस्मिंश्चित् प्रदेशे, निजाः प्रजाः स्वजनान् । 'हृक्रोरन्यतरस्याम्' इति अण्यन्तकर्त्तुः कर्मत्वम् । 'प्रजा स्यात् सन्ततौ जने' इत्यमरः । कटाक्षणात् कटाक्षकरणात्, कटाक्षसङ्केतेन इत्यर्थः । कटाक्षयतेः 'तत् करोति—' इति ण्यन्ताद्भावे ल्युट् । जन्यजनैः वरपक्षीयस्निग्धजनैः

सह । 'जन्याः स्निग्धाः वरस्य ये' इत्यमरः । परीहासं द्रवम्, उपहासमिति यावत् । 'द्रवकेलिपरिहासाः' इत्यमरः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । अचीकरत्तराम् अतिशयेन कारयामास । करोतेर्णौ लुङि चङ्, सन्वद्भावादभ्यासस्य दीर्घः, 'किमेत्तिङव्ययघादा—' इत्यादिना आमुप्रत्ययः । तथा क्वचित् कस्मिंश्चित् प्रदेशान्तरे, वरस्य यात्रया गमनेन उत्सवेन वा, 'यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । सह आगतान् उपस्थितान्, जनानिति शेषः । धराऽप्सरोभिः क्षितिसुन्दरीभिः करणैः, अभोजयत् भोजयामास, तत्काले परिहासकरणसौकर्यादिति भावः । 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदं, 'गतिबुद्धि—' इत्यादिना अणिकर्त्तुः कर्मत्वम् ॥ ४८ ॥

भोजकुलके अङ्कुर (बालक अर्थात् नलके शाले 'दम') ने कहींपर (राजा भीमके परोक्षमें) प्रजाओंको नेत्र-सङ्केतसे प्रेरितकर वरातियोंके साथ अधिक हँसी-मजाक करवाया और कहींपर वारातमें आये हुए लोगोंको पृथ्वीकी अप्सराओं अर्थात् दासी, सैरन्ध्री, वाराङ्गना आदि सुन्दरियोंसे परोसवाकर भोजन करवाया । [ वरातियोंके साथ कन्यापक्षवालोंका छोटे शालेका हँसी-मजाक करना-कराना लोकाचार-सा माना जाता है, 'क्वचित्' पदसे राजा भीम या बड़े-बूढ़ोंके परोक्षमें उक्त परिहास करानेसे 'दम'की शिष्टता सूचित होती है ] ॥ ४८ ॥

**स कञ्चिदूचे रचयन्तु तेमनोपहारमत्राङ्ग ! रुचेर्यथोचितम् ।**
**पिपासतः काश्चन सर्वतोमुखं तवार्पयन्तामपि काममोदनम् ॥ ४९ ॥**

तात्कालिकमेव परीहासं बहुधा वर्णयति—स इत्यादि । सः दमः, कञ्चित् वरपक्षीयं कमपि जनम्, ऊचे उवाच, किमिति ? अङ्ग ! भोः !, अत्र अस्मिन् प्रदेशे, काश्चन का अपि, स्त्रियः इति शेषः । पिपासतः तृष्यतः । पिबतेः सनन्ताल्लटः शत्रादेशः । तव सर्वतोमुखम् उदकं, 'कवन्धमुदकं पाथः पुष्करं सर्वतोमुखम्' इत्यमरः । तथा रुचेः अभिलाषस्य, यथोचितम् अनुरूपं, तेमनस्य निष्ठानापराख्यस्य व्यञ्जनस्य, 'स्यात् तेमनन्तु निष्ठानम्' इत्यमरः । 'तेमनं व्यञ्जने क्लेदे' इति हेमचन्द्रः । उपहारं समर्पणं, रचयन्तु कुर्वन्तु, तथा कामं यथेष्टम्, ओदनम् अन्नमपि, अर्पयन्तां प्रयच्छन्तु इति । रहस्यपक्षे—अत्र आसु परिवेशिकासु मध्ये, काश्चन का अपि स्त्रियः, अङ्गरुचेः आसामङ्गसौन्दर्यदर्शनजन्याभिलाषवतः, ते तव, यथोचितं यथायोग्यं, मनः अपहरतीति मनोऽपहारं स्वाङ्गप्रदर्शनेन मनोहरणं, रचयन्तु कुर्वन्तु, तथा पिपासतः मुखचुम्बनेच्छोः, तव कामस्य स्मरस्य, मोदनं हर्षकारकम्, उद्बोधकमिति यावत् । मुखम् आस्यं, सर्वतः सर्वथा इत्यर्थः । सम्पूर्णभावेनेति यावत्, अर्पयन्ताम् इत्यूचे इत्यन्वयः । अत्रोभयोरप्यर्थयोर्विवक्षितत्वेन प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ ४९ ॥

उस ('दम' नामक नलके शाले) ने किसी (वराती आदमी) से कहा कि—हे अङ्ग !

इस भोजनपात्रमें ( अथवा—परोसनेवाली इन स्त्रियोंमें-से ) कोई स्त्री रुचि ( तुम्हारी चाहना ) के अनुसार यथायोग्य तेमन अर्थात् कढ़ी ( या दहीवड़े ) को लावे, या तुम्हारे रुचिके अनुसार कढ़ी या दही-वड़े को लावे क्या ? प्यासे हुए तुम्हारे लिए जल दे ( या जल दे क्या ? ) और भात भी दे ( या भात भी दे क्या ? ) ।' **परिहासपक्षमें**—'परोसने वाली इन स्त्रियोंमेंसे कोई स्त्री स्तन-जघनादि शरीरशोभाको देखनेकी अभिलाषाके अनुसार तुम्हारे मनका अपहरण करे अर्थात् शरीरशोभासे तुम्हारे मनको आकृष्ट करे अधर-चुम्बनके लिए पिपासु (प्यासे हुए) तुम्हारे लिए सब तरहसे नेत्रादिके चुम्बनस्थानों के मुखमें रहनेसे देखनेमात्रसे कामहर्षप्रद मुखको अर्पित करे अथवा—मुखके पिपासु ( अधरचुम्बनाभिलाषी ) तुम्हारे लिए कामहर्षकारक वराङ्ग ( गुह्यप्रदेश ) अर्पित करे ॥४९॥

**मुखेन तेऽत्रोपविशत्वसाविति प्रयाच्य सृष्टानुमतिं खलाऽहसत् ।**
**वराङ्गभागः स्वमुखं मतोऽमुना स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥**

**मुखेनेति । हे जन्य ! अत्र अस्यां पङ्क्तौ, असौ अयं जनः, ते तव, मुखेन साम्मुख्येन वक्त्रेण च, अधिकरणे साधनत्वनिर्देशः । सम्मुखे इत्यर्थः । उपविशतु आस्तां प्रार्थनायां लोट् । भोजनार्थमिति शेषः । इति प्रयाच्य प्रार्थ्य, सृष्टानुमतिं श्लिष्टार्थमबुद्ध्वा 'मुखेनोपविशतु' इति सृष्टा प्रदत्ता, अनुमतिः सम्मतिर्येन तं तादृशं कृताङ्गीकारं, कश्चित् जन्यमिति शेषः । खला काचित् धूर्त्ता स्त्री, अहसत् परिजहास । किमिति ? येन वराङ्गेण, उपविश्यते आस्यते किल, सः वराङ्गभागः गुह्यप्रदेशः, 'वराङ्गो मूर्द्धगुह्ययोः' इत्यमरः । अमुना जनेन, स्फुटं स्पष्टं यथा तथा, स्वमुखं मतः हि स्ववक्त्रसदृशत्वेन अनुमतः इत्यर्थः । मुखोपवेशनाङ्गीकारो नान्तरीयकः सिद्धः इति भावः । अत्रापि पूर्ववत् श्लेषः ॥ ५० ॥**

'( हे बराती महाशय ! ) यहांपर ( इस पङ्क्तिमें ) यह सखी ( या पुरुष ) आपके सामने मुख करके, ( या मुखके सहारे, भोजन करनेके लिए ) बैठ जाय ?' ( ऐसा किसी धूर्त सखी या पुरुष या 'दम'के पूछनेपर उसके श्लेषयुक्त दूसरे अर्थको नहीं समझनेवाले बराती-के 'हां बैठ जाय' ऐसा ) स्वीकार करनेपर उस ( बराती ) को उस धूर्त ( श्लेषार्थज्ञानमें चतुर ) स्त्रीने हँस दिया ( हँसनेका कारण यह था कि— ) जिस वराङ्ग अर्थात् मदन-मन्दिर ( गुह्याङ्ग ) से उपवेशन किया ( प्रवेश कराया ) जाता है, उस वराङ्गको इस बरातीने श्लेषार्थ नहीं समझनेसे अपना मुख मानकर 'हाँ' कह दिया है । ( अतः उस अवसरपर उसका परिहास करना उचित रहा ) ॥ ५० ॥

**युवामिमे मे स्त्रितमे इतीरिणी गले तथोक्ता निजगुच्छमेकिका ।**
**न भास्यदस्तुच्छगलो वदन्निति न्यधत्त जन्यस्य ततः पराऽऽकुषत् ॥ ५१ ॥**

**युवामिति । इमे युवां भवत्यौ, मे मम, स्त्रितमे अतिशयेन स्त्रियौ, अन्यापेक्षया प्रियतमे इत्यर्थः । 'नद्याः शेषस्यान्यतरस्याम्' इति विकल्पात् ह्रस्वः । इति ईरिणः**

एवं वादिनः। ईरतेर्णिनिः। जन्यस्य कस्यचित्, वरपक्षस्य, गले कण्ठे, [illegible] प्रकारेण, उक्ता कथिता, एकैव एकिका तयोःअन्यतरा स्त्री, '[illegible]' इति इकारः। हे जन्य ! अदः इदं, युवाम् इमे मे स्त्रियौ इति [illegible] वदन् कथयन्, त्वमिति शेषः। तुच्छगलः रिक्तकण्ठः, हारशून्यकण्ठः सन् [illegible] भासि न शोभसे, इति, उक्त्वेति शेषः। गम्यमानार्थत्वादप्रयोगः। निजम्, आत्मीयम्, गुच्छं द्वात्रिंशद्यष्टिकहारम्। 'हारभेदा यष्टिभेदात् गुच्छगुच्छार्द्धगोस्तनाः' इत्यमरः। न्यधत्त निदधे। ततः गुच्छनिधानानन्तरं, परा अपरा स्त्री तु, अदः मे मे इति शब्दं शब्दमित्यर्थः। वदन् छगलः छागः, न भासि ? न प्रतीयसे ? अपि तु आत्मानं छगलमेव स्वीकरोषि, इति आकृपत् आचकर्ष। कृपेस्तौदादिकाल्लङ्। 'स्तभच्छागबस्तच्छगलका अजे' इत्यमरः। अत्रापि पूर्ववत् श्लेषः॥ ५१॥

'ये तुम दोनों मेरी श्रेष्ठ स्त्रियां हों अर्थात् तुम दोनों मेरी प्रियतमा हो ( अथवा—मेरे मतसे श्रेष्ठ स्त्रीरत्न हो )' इस प्रकार कहते ( स्तुति या परिहास ) करते हुए किसी बरातीके गलेमें उक्त प्रकारसे कही गयी ( अथवा—जैसा तुम कहते हो वैसा ठीक है ऐसा कहती हुई ) उन दोनोंमें-से एक स्त्रीने 'ऐसा कहते हुए शून्य गलेवाले बकरीरूप; तुम नहीं शोभते हो ?' अर्थात् 'मे मे' कहते हुए तुम बकरी-जैसा ही शोभते हो ( अथवा—स्तन-शून्य गलेवाले, तुम नहीं शोभते हो; क्योंकि बकरीके गलेमें स्तन रहता है और तुम्हारे गलेमें वह स्तन नहीं है, अथवा—बांधनेकी रस्सीसे शून्य गलेवाले तुम नहीं शोभते हो, क्योंकि बकरेके गलेमें रस्सी रहती है और तुम्हारे गलेमें वह रस्सी नहीं है; अथवा— इस प्रकार मेरी प्रशंसा करते हुए हारशून्य गलेवाले तुम नहीं शोभते हो। इस प्रकार कहकर ) अपने हार ( बत्तीस लड़ीवाले मोतियोंकी माला ) को ( बकरेके स्तनरूपमें, अथवा—बांधनेकी रस्सीरूपमें, अथवा—उपहाररूपमें ) डाल दिया और उससे भिन्न दूसरी स्त्री 'यह ( 'मे मे' ) कहते हुए 'बकरारूप तुम नहीं शोभते हो अर्थात् बकरे-जैसा ही शोभते हो' ऐसा कहकर उसे बकरा मानकर ( या-स्तुतिपक्षमें रमणार्थ ) खींचने लगी। ( अथवा—शून्य कण्ठवाले अर्थात् बकरेका मुख खाद्यपल्लवसे शून्य नहीं शोभता है, अत एव अपने हाथमें क्रीडार्थ लिए हुए पल्लव-गुच्छको उसके कण्ठ ( मुख ) में डाल दिया और दूसरी स्त्री उसे बकरा मानकर खींचने लगी, अथवा—ऐसी स्तुति करते हुए तुम वरण करनेके योग्य हो इस प्रकार कहकर उसके गलेमें अपना हार स्वयंवरमालाकी जगह डाल दिया और दूसरी स्त्री उस पुरुषको रमणार्थ खींचने लगी )॥ ५१॥

**नलाय बालव्यजनं विधुन्वती दमस्य दास्या निभृतं पदेऽर्पितात्।**
**अहासि लोकैः सरटात् पटोज्झिनी भयेन जङ्घायतिलङ्घिरंहसः॥ ५२॥**

नलायेति। नलाय बालव्यजनं चामरं, विधुन्वती कम्पयन्ती, चामरेण नलं वीजयन्ती इत्यर्थः, काचित् स्त्रीति शेषः, दमस्य दमयन्तीभ्रातुः, दास्या परिचारिकया, निभृतं निगूढं यथा तथा, पदे अर्पितात् विसृष्टात्, अत एव जङ्घायतिलङ्घिरंहसः

जङ्घाया ऊर्ध्वभागाक्रमिवेगात्, वेगेन जङ्घामारोहत इत्यर्थः, सरटात् कृकलासात्, 'सरठः कृकलासः स्यात्' इत्यमरः। भयेन पटोज्झिनी वस्त्रत्यागिनी, विवस्त्रा सतीत्यर्थः, लोकैः जनैः, अहासि परिहसिता ॥ ५२ ॥

नलके लिए चामर ( या–मोरपंखी ) से हवा करती हुई किसी स्त्रीके पैरपर दमकी दासीके द्वारा चुपचाप ( आकर ) छोड़े गये तथा जङ्घके ऊपर चढ़ते हुए गिरगिटके भयसे कपड़ेको खोली हुई अर्थात् नग्न हुई उस चामर डुलानेवाली स्त्रीको लोगोंने हँस दिया ॥५२॥

पुरःस्थलाङ्गूलमदात् खला वृषीमुपाविशत् तत्र ऋजुर्वरद्विजः ।
पुनस्तमुत्थाप्य निजामतेर्वदाऽहसच्च पश्चात्कृतपुच्छतत्प्रदा ॥ ५३ ॥

पुरःस्थेति। खला काचित् धूर्त्ता स्त्री, वृषीम् आसनम् 'यतीनामासनं वृषी' इत्यमरः। तस्य टीकायां 'ब्रुवन्तः सीदन्त्यस्यामिति पृषोदरादित्वात् साधु। अतसी वृसी मांसी स्वसृ नासेति चन्द्रगोमी दन्त्येष्वपि पठति' पुरःस्थलाङ्गूलं पुरोभागस्थपुच्छं यथा तथा, अदात् दत्तवती, वरद्विजायेति शेषः, ददातेर्लुङि 'गातिस्थाघुपा—' इत्यादिना सिचो लुक्। तत्र तस्यां वृष्याम्, ऋजुः सरलः, अकुटिलबुद्धिरित्यर्थः, तस्याः कौतुकचातुर्यमजानन्निति भावः, वरद्विजः वरपक्षीयः कश्चित् ब्राह्मणः, उपाविशत् उपविष्टः, पुनः अनन्तरं, निजामतेः स्वाज्ञानस्य, वदतीति वदा अज्ञानात् मया वैपरीत्येनासनं दत्तमितिवादिनीत्यर्थः, पचाद्यच्। 'वदो वदावदो वक्ता' इत्यमरः। सा खलेति शेषः। तं द्विजम्, उत्थाप्य उत्तोल्य, पश्चात्कृतपुच्छां तां वृषीं प्रददातीति पश्चाद्देशस्थापितलाङ्गूलासनप्रदा सती, प्रदेति प्रपूर्वाद्ददातेः कर्मोपपदात् 'प्रेदा ज्ञः' इति कप्रत्ययः। अहसत् जहास च, पुच्छस्य सन्मुखस्थत्वे द्विजस्य प्रकाशितमेहनत्वप्रतीतेः, पृष्ठत उपस्थाने पशुत्वप्रतीतेश्चेति भावः ॥ ५३ ॥

धूर्ता ( हँसी करनेमें चतुर ) किसी स्त्रीने अग्रिम भागमें पूंछवाले यतिके आसनको (वरपक्षीय ब्राह्मणको बैठनेके लिए) दिया, उस अग्रिम भागमें पुच्छयुक्त कूर्माकृति यत्यासन पर सरल ( हँसीकी बातको नहीं समझनेवाला सीधी बुद्धिवाला ) एवं श्रेष्ठ ( या–वरपक्षीय ) ब्राह्मण बैठ गया, फिर 'अज्ञानसे मैंने इस प्रकार उल्टा ( आगेकी ओर पूँछवाले ) यत्यासन बिछा दिया' ऐसा कहकर उसे ( वरपक्षीय ब्राह्मणको ) उठा कर उस आसनकी पूँछको पीछेकी ओर करके बिछा दिया ( और उसपर उस सरल बुद्धि वरपक्षीय ब्राह्मणके बैठनेपर ) हँसने लगी। [ अग्रिम भागमें पूँछयुक्त कूर्माकृति उस आसनपर उस ब्राह्मण के बैठनेसे वह पूंछ उस ब्राह्मणके शिश्न ( लिङ्ग ) के समान मालूम पड़ता था, यह सीधी बुद्धिवाला ब्राह्मण मेरी हँसीको नहीं समझनेसे इस पर चुपचाप बैठ गया, अत एव यह पशुतुल्य है और पशुके पिछले भागमें पूंछ होती है, पशुतुल्य इस ब्राह्मणके लिए मुझे यह आसन इस प्रकार बिछाना चाहिये था कि इसकी पूँछ पीछे की ओर रहे, ऐसा सोच कर अपनी भूल बताती हुई उस धूर्त स्त्रीने ब्राह्मणको उठाकर उस आसनको घुमाकर इस प्रकार

बिछा दिया कि उसकी पूँछ ब्राह्मणके बैठनेपर पीछे की ओर हो और फिर वह ब्राह्मण उसपर बैठ गया तो उसको ( देखकर ) उस स्त्रीने हँस दिया ] ॥ ५३ ॥

**स्वयं कथाभिर्वरपक्षसुभ्रुवः स्थिरीकृतायाः पदयुग्ममन्तरा ।**
**परेण पश्चान्निभृतं न्यधापयद्ददर्श चादर्शतलं हसन् खलः ॥ ५४ ॥**

**स्वयमिति ।** खलः कश्चित् धूर्त्तः, स्वयम् आत्मना, कथाभिः इष्टालापः, स्थिरीकृतायाः तत्कथाश्रवणासाक्तत्वेन निश्चलीकृतायाः, वरपक्षसुभ्रुवः वरयात्रसम्बन्धिन्याः कस्याश्चित् स्त्रियाः, पदयुग्मम् अन्तरा पादयुगलस्य अन्तराले, 'अन्तराऽन्तरेण युक्ते' इति द्वितीया । परेण पुरुषान्तरेण प्रयोज्येन, पश्चात् पृष्ठतः, निभृतं निगूढं यथा तथा आदर्शतलं दर्पणम्, उत्तानीभूतदर्पणमित्यर्थः, न्यधापयत् निधापयामास, हसन् ददर्श च । वराङ्गप्रतिबिम्बदर्शनात् हासः इति भावः ॥ ५४ ॥

( परिहास चतुर किसी ) धूर्तने स्वयं ( मनोनुकूल हास्यादि सम्बन्धिनी ) कथाओंसे ( उनके सुननेमें अत्यन्त आसक्त होनेसे निश्चयकी गयी ) वरपक्षीय (अथवा—नलके बगलमें बैठी हुई ) सुन्दरीके दोनों पैरोंके बीचमें दूसरे ( पुरुष ) से पीछेकी ओरसे चुपचाप दर्पणको रखवा दिया और हँसता हुआ ( उस स्त्रीके ऊरु, जघन, भगादिके प्रतिबिम्बयुक्त दर्पणको ) देखने लगा ॥ ५४ ॥

**अथोपचारोद्धुरचारुलोचनाविलासनिर्वासितधैर्यसम्पदः ।**
**स्मरस्य शिल्पं वरवर्गविक्रिया विलोककं लोकमहासयन् मुहुः ॥ ५५ ॥**

**अथेति ।** अथ अनन्तरम्, उपचारेषु सेवाकार्येषु, उद्धुरा उदूढभारा, तत्परा इत्यर्थः 'ऋक्पूर—' इत्यादिना समासान्तः । तथाविधानां चारुलोचनानां मनोज्ञनयनानां, स्त्रीणामिति शेषः, विलासैः कटाक्षपातादिभिः साधनैः, निर्वासिता निष्कासिता, धैर्यसम्पत् येन तादृशस्य, स्मरस्य कन्दर्पस्य, शिल्पं सृष्टिः, स्मरकृता इत्यर्थः, तादृशविलासैर्निर्वासिता धैर्यसम्पत् आत्मदमनसामर्थ्यं याभिस्तादृश्यः इति वरवर्गविक्रियाया विशेषणं वा वरवर्गस्य जन्यजनसमूहस्य, विक्रियाः वक्ष्यमाणस्मरविकाराः कर्त्र्यः, विलोककं तद्विकारद्रष्टृजनं, मुहुः अहासयन् परिचारिकाविलासदर्शनादेव जन्यजनस्य जनहासकरः स्मरविकारो जातः इत्यर्थः ॥ ५५ ॥

इस ( काम-रहित केवल परिहास कर्म ) के बाद परोसने आदिमें तत्पर सुलोचनाओंके ( कटाक्षादि ) विलाससे धैर्यहीन कामदेवकी सृष्टिरूप वरपक्षीयों ( बरातियों ) के कामविकारने दर्शक लोगोंको बार-बार हँसा दिया अर्थात् परोसने आदिमें तत्पर सुलोचनाओंके कटाक्षादिको देखकर धैर्यरहित अर्थात् शीघ्रतम किये गये बरातियोंकेम नोविकारको देखकर ( इन दासियोंके कटाक्षादि विलासको देखनेसे ही इन बरातियोंको कामजन्य मनोविकार हो गया, यह समझकर ) दर्शक लोग हँसने लगे । ( अथवा—वरपक्षियोंके मनोविकारको उत्पन्न करनेवाली तथा कटाक्षादिविलाससे ( विलासियोंके ) धैर्यको छुड़ानेवाली और

कामदेवकी शिल्प अर्थात् अतिशय सुन्दरीके उपचार (कटाक्षादिद्वारा अपने अनुरागको सङ्केतित करनेवाले प्रेमपूर्वक देखने) में उत्कण्ठित सुन्दर नेत्रोंवाली वराङ्गना आदिने दर्शकोंको वार-वार हँसाया)। [ यहां तक (१६।४९-५४) कामरहित परिहास का वर्णन किया गया है, अब यहांसे 'न षड्विधः'"(१६।१०८)' श्लोक तक कामसहित परिहासका वर्णन किया जारहा है ]॥ ५५॥

**तिरोवलद्वक्त्रसरोजनालया स्मिते स्मितं यत् खलु यूनि बालया।**
**तया तदीये हृदये निखाय तत् व्यधीयतासम्मुखलक्ष्यवेधिता ॥ ५६॥**

**तिर इति। तिरोवलन् तिर्यक्प्रेरयन्, वक्त्रसरोजनालः मुखकमलमृणालः, कण्ठः इति यावत्, यया तादृशया, तिर्यक् परिवर्त्तितकन्धरया, बालया कयाचित् युवत्या, यूनि कस्मिंश्चित् तरुणे, स्मिते स्मितवति सति, कर्त्तरि क्तः। यत् स्मितं खलु हसितं किल, लज्जया पराङ्मुखीभूय यत् हास्यमकारि इत्यर्थः, भावे क्तः। तया बालया, तदीये हास्यकारियुवसम्बन्धिनि, हृदये चेतसि, तत् स्मितं, निखाय गाढं प्रवेश्य, असम्मुखम् अनभिमुखं, पार्श्वदेशावस्थितमिति यावत्, यत् लक्ष्यं वेध्यं, तद्वेधिता तद्वेधित्वं, स्वस्या इति शेषः। व्यधीयत विहिता, तत् स्मितं तस्य पार्श्वावस्थितलक्ष्यवेधी शरो जातः इत्यर्थः॥ ५६॥**

(वरपक्षीय) युवकके मुस्कुरानेपर अपने मुखकमलनाल (गर्दन) को घुमाकर बालाने जो मुस्कुराया, उस बालाने उस युवकके हृदयमें वह मुस्कुराना ही मानो असम्मुख (पराङ्मुख या-पार्श्वभागस्थ) निशानेको मारनेवाला बना दिया। [ जोपराङ्मुख हो निशानेको मारता है, वह चतुर निशाना मारनेवाला समझा जाता है। प्रकृतमें पराङ्मुखी होती हुई भी उस बालाने मुस्कुरानेवाले युवकको देख लज्जासे गर्दनको फेरकर जो मुस्कुरा दिया, उससे वह युवक 'यह मुझपर अनुराग करती है, इसी कारण अपने प्रेमप्रदर्शनार्थ मेरे मुस्कुरानेपर लज्जावश मुख फेरकर इसने मुस्कुराया है क्योंकि मुस्कुराना तथा लज्जित होना ये ही दो कार्य अनुरागके सूचक होते हैं' ऐसा समझ उसपर आसक्त होकर कामपोडित हो गया। वह बाला नायिका होनेके कारण ही मुखनाल (कण्ठ) को फेरकर मुस्कुराय, यदि प्रौढा नायिका होती तो सामने मुख करके ही मुस्कुराती; क्योंकि बाला नायिकामें लज्जाका भाव रहता है और प्रौढा नायिकामें वह नहीं रहता ]॥ ५६॥

**कृतं यदन्यत् करणोचितत्यजा दिदृक्षु चक्षुर्यदवारि बालया।**
**हृदस्तदीयस्य तदेव कामुके जगाद वार्त्तामखिलां खले[1] खलु ॥ ५७॥**

**कृतमिति। करणोचितं क्रियार्हं, त्यजतीति तादृशया करणोचितत्यजा कर्त्तव्यमकुर्वन्त्या इत्यर्थः, त्यजे क्विप्। बालया पूर्वोक्तया तरुण्या, अन्यत् अकर्त्तव्यं, यत् कृतम् अनुष्ठितं, तथा दिदृक्षु दर्शनोत्सुकं, चक्षुः स्वदृष्टिः, यत् अवारि वारितं, द्रष्टव्यात्**

1. 'खलम्' इति पाठान्तरम्।

परावर्तितमित्यर्थः, तदेव अकार्यकरणचक्षुर्निवारणरूपद्वयमेव, तदीयस्य वालासम्बन्धिनः, हृदः हृदयस्य, अखिलां समग्रां, वार्त्तां वृत्तान्तं, खले धूर्त्ते, इङ्गितदर्शनादभिप्रायज्ञानचतुरे इति यावत्, कामुके विषये, जगादख लु तस्मै निःसंशयम् उवाच इत्यर्थः, अकर्त्तव्यकरणरूपेङ्गितेन वालाया अन्यासक्तचित्तता, दर्शनप्रवृत्तचक्षुःपरावर्त्तनेङ्गितेन तस्या लज्जायाःप्रकाशनात् धूर्त्तो 'मयि आसक्ता लज्जिता चेयमि'ति विवेद इति भावः ॥ ५७ ॥

कर्तव्य ( परोसने आदिका कार्य ) को छोड़नेवाली वालाने जो व्यापारान्तर किया तथा दर्शनेच्छुक नेत्रको जो फेर लिया अर्थात् देखनेकी इच्छा होनेपर भी जो नहीं देखा, वही ( उस वालाका व्यापारान्तर करना तथा नेत्रको फेर लेना ही ) धूर्त ( अपने आशयको समझनेमें चतुर ) कामुकमें उस (वाला) के हृदयकी वातको वतला दिया अर्थात् उस वालाके उक्त दोनों कार्योसे धूर्त कामुकने उसके हृद्गत अपनेमें अनुरागको समझ लिया। [ पाठा०—वही''कामुकमें''वतला दिया, क्योंकि वह खल अर्थात् दुष्ट था, लोकमें भी जो खल होता है, वह दूसरेके हृदयकी वातको दूसरेसे कह देता है । प्रकृतमें उस वालाके वे दोनों कार्य खल ( दुष्ट=बुरे ) थे, अत एव उन्होंने उस वालाके हृदयकी वातको उस कामुकसे वतला दिया, ऐसा मैं मानता हूं ] ॥ ५७ ॥

जलं ददत्याः कलितानतेर्मुखं व्यवस्यता साहसिकेन चुम्बितुम् ।
पदे पतद्वारिणि मन्दपाणिना प्रतीक्षितोऽन्येक्षणवञ्चनक्षणः ॥ ५८ ॥

जलमिति । जलं ददत्या आवर्जयन्त्याः, अत एव कलिता कृता इत्यर्थः, आनतिः ऊर्ध्वदेहस्य अवनमनं यया तादृश्याः जलदानार्थं न्युब्जीकृतशरीराया इत्यर्थः, कस्याश्चित् स्त्रिया इति शेषः, मुखं चुम्बितुं व्यवस्यता उद्युञ्जानेन, व्यवस्यतेर्लटः शत्रादेशः । अत एव मन्दपाणिना जलग्रहणे श्लथहस्तेन, सहसा वलात्कारेण वर्त्तते यः स तेन, अथवा—सहसा अविवेचनेन कृतं यत् तत् साहसं,तत्र प्रवृत्तः साहसिकः तेन साहसिकेन अविमृश्यकारिणा इत्यर्थः । 'ओजःसहोऽम्भसा वर्त्तते' इति ठक् । केनचित् कामुकेनेति शेषः, पदे स्वीयचरणे, पतत् श्लथहस्तात् विगलत्, वारि यस्मिन् तस्मिन् सति, चुम्बनौत्सुक्यात् स्वीचरणोपरि शिथिलहस्तात् जले विगलति सतीत्यर्थः, अन्येक्षणवञ्चनक्षणः परदृष्टिवञ्चनसमयः, तत्रत्यजनान्तराणां विषयान्तरे दृष्टिप्रेरणावसरः इत्यर्थः, प्रतीक्षितः अपेक्षितः इत्यर्थः ; कामान्धाः किं न कुर्वन्तीति भावः ॥ ५८ ॥

पीने ( या—पैर धोने ) के लिए पानी देती हुई ( अत एव ) झुकी हुई ( किसी स्त्री ) के मुखको चूमनेके लिए तत्पर ( इसी कारण जल लेनेमें ) हाथको शिथिल ( पानी पीनेके पक्षमें अङ्गुलियोंको विरल=छिद्रयुक्त ) किये हुए किसी साहसिक ( वलात्कारपूर्वक या—अविवेकपूर्वक चुम्बन करनेवाले कामान्ध पुरुष ) ने पैरपर पानी गिरते रहनेपर दूसरोंसे नहीं देखनेके अवसरकी प्रतीक्षा करने लगा । ( पैर धोनेके पक्षमें—पानी गिरते हुए पैरपर

शिथिल हाथ किये हुए…')। [ पानी देनेके लिए झुकी हुई किसी स्त्रीके मुखको चुम्बन करनेके लिए किसी साहसिक व्यक्तिने चुम्बनासक्त होनेसे हाथकी अङ्गुलियोंको ढीला कर दिया और इस प्रकार उसके पैरपर पानी गिरने लगा और वह अवसर देखने लगा कि उस पङ्क्तिमें बैठे हुए या वहां घूमनेवाले लोगोंकी दृष्टि इधर-उधर हो तो मैं इस स्त्रीके मुखका चुम्बन कर लूं। 'प्रकाश' के अनुसार उक्त अवसरको देखकर उस स्त्रीके मुखका चुम्बन कर लिया। ठीक ही है—कामान्ध पुरुष क्या नहीं करते ? अर्थात् कामान्ध व्यक्ति अत्यधिक अनुचित कार्य भी कर सकते हैं ] ॥ ५८ ॥

युवानमालोक्य विदग्धशीलया स्वपाणिपाथोरुहनालनिर्मितः ।
श्लथोऽपि सख्यां परिधिः कलानिधौ दधावहो ! तं प्रति गाढबन्धताम् ॥

युवानमिति । विदग्धशीलया प्रगल्भस्वभावया, कयाचित् तरुण्येति शेषः। युवानं कमपि तरुणम्, आलोक्य दृष्ट्वा, कलानिधौ कलानां शिल्पानां, चतुःषष्टिप्रकारगीतवाद्यादिरूपाणामित्यर्थः। निधौ आधारभूतायां, सख्यां सहचर्याम्, अन्यत्र—सख्यां सखीरूपे, कलानिधौ चन्द्रे। 'कला शिल्पे विधोरंशे' इत्यभिधानात्। स्वपाणिपाथोरुहनालाभ्यां निजभुजरूपपद्मनालाभ्यां, निर्मितः कृतः, उक्तयुवकालिङ्गनाभिलापरूपनिजभावसूचनार्थमिति भावः। परिधिः परिवेष्टनं, सखीपरिरम्भ इति यावत्। अन्यत्र—परिधिः परिवेपः, श्लथः शिथिलः सन्नपि, तं युवानं प्रति, गाढबन्धतां सुदृढालिङ्गनतामिति यावत्। दधौ पुपोष, तस्य यूनः गाढालिङ्गनसुखं तस्मादभूदित्यर्थः। अहो ! सख्यालिङ्गनात् तस्य यूनः गाढालिङ्गनसुखोत्पादेन कार्यकरणयोर्वैयधिकरण्यात् शिथिलालिङ्गनात् विरुद्धस्य गाढबन्धत्वस्योत्पादाच्च आश्चर्यम्। अत एवासङ्गतिविषमालङ्कारयोः सङ्करः। 'कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः। विरुद्धकार्यस्योत्पत्तिः' इति च लक्षणात्। अत्र रतिरहस्योक्तिः,—'उत्सङ्गसङ्गताऽपि प्रियसख्यां विविधविभ्रमं तनुते। भावादङ्कगतं शिशुमालिङ्गति चुम्बति ब्रूते च ॥' इति ॥ ५९ ॥

प्रगल्भ स्वभाववाली ( या चतुर, किसी स्त्रीने किसी ) युवकको देखकर ६४ कलाओंके निधि अर्थात् जाननेवाली सखीमें पक्षा०—सखीरूप चन्द्रमामें अपने बाहुरूप कमलनाल रचे गये शिथिल भी परिधि ( आलिङ्गन, पक्षा०—घेरे ) को उस युवकके प्रति ( लक्ष्य करके ) गाढ बन्धनयुक्त कर लिया, अहो ! ( आश्चर्य है )। [ चन्द्रमामें परिधि = घेरेका होना उचित है। मुझे गाढालिङ्गन करनेकी अभिलाषावाली इसने सखीका गाढालिङ्गन किया, अत एव इसने मेरा ही गाढालिङ्गन किया ऐसा जानकर उस सखीको गाढालिङ्गन करनेसे उस युवकको गाढालिङ्गन करनेका सुख मिला। सखीको गाढालिङ्गन करनेसे युवकको गाढालिङ्गनका सुख मिलनेसे काय-कारणका समानाधिकरण नहीं होनेसे तथा शिथिल आलिङ्गनके विरुद्ध गाढालिङ्गनके उत्पन्न होनेसे आश्चर्य है ] ॥ ५९ ॥

नतभ्रुवः स्वच्छनखानुबिम्बनच्छलेन कोऽपि स्फुटकम्पकण्टकः।
पयो ददत्याश्चरणे भृशं क्षतः स्मरस्य बाणैः शरणे न्यविक्षत ॥ ६० ॥

नतेति। स्मरस्य कामस्य, बाणैः शरैः, भृशम् अत्यर्थं, क्षतः पीडित इव, अत एव स्फुटौ व्यक्तौ, कम्पकण्टकौ सात्त्विकवेपथुरोमाञ्चौ यस्य तादृशः। 'रोमाञ्चेऽपि च कण्टकः' इत्यमरः। कोऽपि युवा, पयः दुग्धं जलं वा, ददत्याः परिवेषयन्त्याः, नतभ्रुवः कस्याश्चित् स्त्रियाः, स्वच्छनखेषु शुभ्रचरणनखरेषु, अनुबिम्बनच्छलेन प्रतिबिम्बव्याजेन, चरणे पादे एव। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरोक्तेश्चरणे इति द्वितीयाद्विवचनान्तम्, 'अभिनेर्विशः' इति कर्मसंज्ञा। शरणे रक्षयितारौ, रक्षयितृरूपे चरणे इत्यर्थः। 'शरणं गृहरक्षित्रोः' इत्यमरः। न्यविक्षत प्रविष्टः। अत्र सापह्नवोत्प्रेक्षा, व्यञ्जकाप्रयोगाद् गम्या। 'नेर्विशः' इति लुङि तङ् 'शलः इगुपधादनिटः क्सः' इति अनिटश्च्लेः क्सादेशः ॥ ६० ॥

कामवाणोंसे अत्यन्त पीडित (अत एव) स्पष्ट दृष्टिगोचर होते हुए (सात्त्विक-भावजन्य) कम्प तथा रोमाञ्चवाला कोई (कामी पुरुष) स्वच्छ नखोंमें प्रतिबिम्बित होनेके बहानेसे पानी (या—दूध) देती हुई झुके हुए भौंहोंवाली (किसी स्त्री) के चरणरूप शरणमें प्रवेश किया अर्थात् कामपीडाकी शान्तिके लिए बहुत समय तक चरण देखनेके बहानेसे प्रार्थना एवं नमस्कारका सङ्केत किया। [लोकमें भी जो व्यक्ति डरता, कम्पित होता या बाण आदिसे पीडित होता है, वह आत्मरक्षार्थ दूसरेकी शरणमें प्रवेश करता है] ॥ ६० ॥

मुखं यदस्मायि विभज्य सुभ्रुवा ह्रियं यदालम्ब्य नतास्यमासितम्।
अवादि वा यन्मृदु गद्गदं युवा तदेव जग्राह तदाप्तिलग्नकम् ॥ ६१ ॥

मुखमिति। सुभ्रुवा सुवङ्किमभ्रूशालिन्या, कयाचित् योषिता इति शेषः, मुखं विभज्य कुटिलीकृत्य, किञ्चित् विकृत्येत्यर्थः। यत् अस्मायि हसितं स्मयतेर्भावे लुङि चिणि वृद्ध्यायादेशौ। तथा ह्रियं लज्जाम्, आलम्ब्य आश्रित्य, यत् नतास्यं नम्रमुखं यथा तथा, आसितं स्थितम्, आसेर्भावे क्तः। तथा मृदु अनुच्चैः, गद्गदम् अस्पष्टाक्षरं, यत् अवादि वा उदितञ्च, वदेः कर्मणि लुङ्। युवा पूर्वोक्तस्तरुणः, तदेव तच्चेष्टात्रयमेव, तदाप्तौ तस्याः प्राप्तौ, लग्नकं प्रतिभुवं तत्प्राप्तिविषये 'जामिन' इत्याख्यप्रतिनिधिस्वरूपमित्यर्थः, जग्राह मेने, तादृशानुरागप्रकाशनात् इयं मयि गाढानुरक्ता अत एव सुलभेति निश्चिकायेति भावः ॥ ६१ ॥

सुन्दर भ्रूवाली उस (या—अन्य किसी) स्त्रीने मुखको फेरकर जो मुस्कुराया, लज्जित होकर जो मुखको नीचे कर लिया तथा गद्गद होकर जो धीरेसे कहा, (वह पूर्वोक्त या अन्य किसी) युवकने उसीको अर्थात् उस स्त्रीके द्वारा किये गये उन्हीं तीनों कार्योंको उसकी प्राप्ति में 'जमिन्दार' मान लिया। [यह स्त्री मुखको फेरकर मुस्कुराती है, लज्जासे मुख

१. 'चरणौ' इति च पाठः, इति 'प्रकाशः'। २. 'शरणम्' इति पाठान्तरम्।

नीचे कर लेती है और गद्गद होकर धीरेसे बोलती है 'अत एव यह मुझमें अनुरक्त होनेसे मुझे अवश्य मिल जायेगी' ऐसा उस युवकने निश्चय कर लिया ] ॥ ६१ ॥

विलोक्य यूना व्यजनं विधुन्वतीमवाप्तसत्त्वेन भृशं प्रसिष्विदे ।
उदस्तकण्ठेन मृषोष्मनाटिना विजित्य लज्जां ददृशे तदाननम् ॥ ६२ ॥

विलोक्येति । व्यजनं तालवृन्तकं, विधुन्वतीं चालयन्तीं, काञ्चित् स्त्रियमिति शेषः । विलोक्य दृष्ट्वा, अवाप्तसत्त्वेन उद्रिक्तसात्त्विकभावेन, यूना केनचित् तरुणेन, भृशम् अत्यर्थं, प्रसिष्विदे स्विन्नं, सञ्जातसात्त्विकभावेनाभावि इत्यर्थः, स्विद्यतेर्भावे लिट् । मृषोष्मनाटिना मृषा मिथ्या उष्माणं स्वेदकारणं ग्रीष्मादिकं, नाटयति अभिनयतीति तादृशेन सात्त्विकभावोत्थस्वेदगोपनार्थं मिथ्या सन्तापादिकं प्रकाशयतेत्यर्थः, अत एव उदस्तकण्ठेन उद्ग्रीवेण सता, तेन यूनेति शेषः, लज्जां विजित्य विसृज्येत्यर्थः । तदाननं तस्याः वदनं, ददृशे दृष्टम्, व्यजनपवनापेक्षयेति भावः । दृशेः कर्मणि लिट् । अत्र आगन्तुकेन घर्मस्वेदेन सहजसात्त्विकस्वेदगूहनान्मीलनालङ्कारः; 'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणात् ॥ ६२ ॥

पङ्खा करती हुई ( किसी को ) देखकर सात्त्विक भावयुक्त युवकको बहुत पसीना हो गया ( तब ) झूठे गर्मीका अभिनय करनेवाला ( अत एव पंखे की अधिक हवा लेनेके बहानेसे ) गर्दनको ऊपर उठाया हुआ ( वह युवक ) लज्जाको छोड़कर उस ( पङ्खा करनेवाली स्त्री ) का मुख देखने लगा ॥ ६२ ॥

स तत्कुचस्पृष्टकचेष्ट[2]दोर्लताचलद्दलाभव्यजनानिलाकुलः ।
अवाप नानानल[3]नालशृङ्खलानिबद्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

स इति । सः पूर्वोक्तः, युवा, तस्याः व्यजनं विधुन्वत्याः स्त्रियः, कुचयोः स्तनयोः, स्पृष्टमेव स्पृष्टकं घर्षणं, तदेव चेष्टा कुचस्पर्शनरूपव्यापारविशेषः यस्याः तादृश्याः, [illegible]याः बाहुवल्ल्याः, चलद्दलः कम्पमानपत्रम् इव, अभातीति चलद्दलाभं [illegible] इत्युत्प्रेक्षा, लतायाः पत्रेण भवितव्यत्वादिति भावः, तादृशस्य, [illegible] तालवृन्तस्य, अनिलेन तच्चालनजवायुना, आकुलः विवशः, तत्कुचालिङ्गिभुजस[illegible] चञ्चलः सन्नित्यर्थः, नानानलनालेन नानाविधतृणकाण्डेन, या शृङ्खला निगडः बन्धनहेतुत्वात् तन्निर्मितशृङ्खलमित्यर्थः, तया निबद्धस्य संयतस्य, नीडोद्भवस्य पक्षिणः 'शकुन्तिपक्षिशकुनिः नीडोद्भवा गरुत्मन्तः' इत्यमरः, विभ्रमं तत्सदृशविलासम्, अवाप प्राप तत्कुचालिङ्गिभुजसन्दर्शनेन कामातुरया

---

१. 'प्रसिस्विदे' इति पाठश्चिन्त्यः, इति 'प्रकाशः' ।
२. '—चेष्टि—' इति 'प्रकाश' सम्मतं पाठान्तरम् ।
३. '—नलजाल—' इति 'गलनाल—' इति च पाठान्तरम् ।

तदालिङ्गितुकामोऽपि सर्वजनसमक्षं यथेष्टं चेष्टितुमशक्तः सन् शृङ्खलाबद्धपक्षिविभ्रममिवानुबभूवेति निष्कर्षः ॥ ६३ ॥

वह युवक (पंखा करनेवाली) उस स्त्रीके स्तनोंके स्पर्श करनेकी चेष्टा (पाठा०— 'सूचक' नामक आलिङ्गन करनेकी चेष्टा करने) वाली बाहुलताके चञ्चल अर्थात् हिलते हुए पत्तेके समान पंखेकी हवासे व्याकुल होकर अर्थात् स्तनको स्पर्श करनेवाले बाहुसे चञ्चल पंखेके देखनेमात्रसे उत्पन्न अनुरागसे व्याकुल होकर अनेक सरपञ्चेकी (अथवा—अनेकविध तृणोंकी) शृङ्खलामें फँसे हुए पक्षीके विलास (पक्षा०—तद्रूप पिंजड़ेमें ही विशिष्ट भ्रमण—बहुत घूमना) को प्राप्त किया। [पङ्खा करते समय उस स्त्रीके बाहुसे स्तनके स्पर्श करनेको देख कामातुर होकर उस स्त्रीके आलिङ्गन करनेका इच्छुक होता हुआ भी युवक सब लोगोंके सामने वैसा करनेमें असमर्थ होनेके कारण पिंजड़ेमें फँसे हुए पक्षीके समान व्याकुल हो गया। बाहुरूपिणी लतामें पल्लवका होना तथा पङ्खा करनेके व्याजसे चञ्चल बाहुका 'सूचक' नामक आलिङ्गन करना उचित ही है] ॥ ६३ ॥

**अवच्छटा काऽपि कटाक्षणस्य सा तथैव भङ्गी वचनस्य काचन ।**
**यया युवभ्यामनुनाथने मिथः कृशोऽपि दूतस्य न शेषितः श्रमः ॥६४॥**

अवच्छटेति । सा तात्कालिकीत्यर्थः, काऽपि अनिर्वचनीया, कटाक्षणस्य, कटाक्षकरणस्य, अपाङ्गदर्शनस्य इति यावत्, 'तत् करोति—' इति ण्यन्तात् ल्युट्। अवच्छटा भङ्गी परम्परा वा, तथा वचनस्य परस्परभाषणस्य, काचन एव कापि एव, भङ्गी वक्रोक्त्यादिरूपा इत्यर्थः, जाता इति शेषः, यया कटाक्षच्छटया वचनभङ्ग्या च करण्या, युवभ्यां युवत्या यूना च, 'पुमान् स्त्रिया' इत्येकशेषः। मिथः अनुनाथने परस्परप्रार्थने, नाथतेर्याचनार्थत्वात् ल्युट्। दूतस्य वार्तावहस्य, कृशः अल्पोऽपि, श्रमः प्रयासः, न शेषितः शेषतया न रक्षित इत्यर्थः, स्वयमेव तत्कार्यकारित्वात् परस्परमिलनार्थं दूतो नापेक्षित इति भावः ॥ ६४ ॥

उस समयकी कोई अनिर्वचनीय [illegible] भङ्गी ([illegible]) तथा अनिर्वचनीय कोई वक्रोक्ति आदि [illegible] ([illegible] वचनकी भङ्गी) से युवक तथा युवतीने [illegible] नहीं छोड़ा। [युवक तथा युवतीने [illegible] मैं आऊंगा' इत्यादि [illegible] परस्पर [illegible] ॥ ६४ ॥

**पपौ न कश्चित् [illegible]**
**चुचुम्ब तत्र [illegible]**

पपाविति । [illegible] स्मरस्य [illegible]

आस्येन मुखेन, मीलितं मिश्रितं, मुखस्य प्रतिबिम्बयुक्तमिति भावः, जलस्य गण्डू पानार्थं करधृतं गण्डूषितजलमित्यर्थः, क्षणं क्षणामात्रं, गण्डूषे जलदानकाले इति यावत्, न पपौ न पीतवान्, अन्यथा प्रतिबिम्बादिकार्यायोगादिति भावः, किन्तु तत्र जले, प्रतिबिम्बितं प्रतिफलितं, तस्या मुखं चुचुम्ब चुम्बितवान् ॥ ९५ ॥

उत्पन्नानुराग किसी युवकने आगे स्फुरित होती (शोभती) हुई कामधनुषके समान सुन्दर भौंहोंवाली पानी पिलाती हुई किसी स्त्रीके मुखके प्रतिबिम्बयुक्त (अथवा पाठा०—अपने मुखके पास चुल्लू या अञ्जलिमें लिये हुए) पानीके गण्डूषको क्षणभर नहीं पिया किन्तु उस (पानीके गण्डूष) में प्रतिबिम्बित (उस स्त्रीके) मुखको चूम लिया (और बादमें—जलमें प्रतिबिम्बित उसके मुखको चूमनेके पश्चात् जलको पिया)। [उस कामुक युवकने सोचा कि 'यदि मैं चुल्लू या अञ्जलिमें लिए हुए जलको पी लूंगा तो इस स्त्रीके प्रतिबिम्बित मुखको चुम्बन नहीं कर सकूंगा, क्योंकि पानीके अभावमें मुखप्रतिबिम्ब भी नहीं रहेगा, अत एव पहले उसके जलप्रतिबिम्बित मुखको चूमा और बादमें जलको पिया अथवा—भोजनपङ्क्तिमें बैठे हुए लोगोंने जब तक उसके इस जलमें प्रतिबिम्बित स्त्रीमुखका चुम्बन करना नहीं देखा तब तक थोड़ी देरतक जलको नहीं पिया और जब लोगोंने उसके इस कार्यको देख लिया तब उसने जलको पी लिया] ॥ ९५ ॥

हरिन्मणेर्भोजनभाजनेऽर्पिते गताः प्रकोपं किल वारयात्रिकाः ।
भृतं न शाकैः प्रवितीर्णमस्ति वस्त्विषेदमेवं हरितेति बोधिताः ॥ ९६ ॥

हरिदिति । हरिन्मणेः मरकतोपलस्य, भोजनभाजने भोजनपात्रे, मरकतमणिनिर्मितभोजनपात्रे इत्यर्थः, अर्पिते पुरतः स्थापिते सति, प्रकोपम् अतिरोषं, गताः प्राप्ताः, अतिशयेन रुष्टा इत्यर्थः, पत्रभाजनभ्रान्त्येति भावः, वरयात्रा प्रयोजनम् एषामस्तीति वारयात्रिकाः वरेण सह समागताः, 'प्रयोजनम्' इति ठक्। वः युष्माकं सम्बन्धे, प्रवितीर्णं दत्तम्, इदं भोजनभाजनं, शाकैः 'शेगुन' इत्याख्यतरुविशेषपत्रैः 'शाको द्वीपान्तरेऽपि च। शक्तौ तरुविशेषे च पुमान् हरितकेऽस्त्रियाम्॥' इति मेदिनी। भृतं कृतं, निर्मितमित्यर्थः, न अस्ति न भवति, किन्तु हरिता हरितया, हरिद्वर्णयेत्यर्थः। 'पालाशो हरितो हरत्' इत्यमरः। त्विषा स्वकान्त्या, एवम् इत्थं, शाकपत्रनिर्मितभाजनमिति वो भ्रान्तिरिति भावः, इति बोधिताः विज्ञापिताः। अत्र कल्पितसादृश्यान्मरकतभाजने पत्रभाजनभ्रान्तिनिबन्धनात् भ्रान्तिमदलङ्कारः ॥ ९६ ॥

पन्ना मणिके बने हुए भोजनपात्र (थाल) देनेपर (हरा रंग होनेके कारण पत्तलके भ्रमसे) अत्यन्त क्रुद्ध हुए बरातियोंको 'आपलोगोंके लिए दिया गया यह भोजनपात्र (थाल) पलाश आदि (या—सागौन) के पत्तोंसे नहीं बना (अथवा—बथुआ, पालक आदिके शाकसे नहीं भरा हुआ) है; किन्तु हरी कान्तिसे यह भोजनपात्र ऐसा (पत्तोंसे बनाया, शाकसे भरा हुआ प्रतीत होनेवाला) हरे रंगका है' इस प्रकार (कन्यापक्षवालोंने) समझाया ॥ ९६ ॥

ध्रुवं विनीतः स्मितपूर्ववाग्युवा किमप्यपृच्छन्नविलोकयन्मुखम् ।
स्थितां पुरः स्फाटिककुट्टिमे वधूं तदङ्घ्रियुग्मावनिमध्यबद्धदृक् ॥ ६७ ॥

ध्रुवमिति । युवा कोऽपि तरुणः, पुरः अग्रे, स्फटिके स्फटिकमये, कुट्टिमे निबद्धभूमौ, स्थितां तिष्ठन्तीं, वधूं कामपि सीमन्तिनीं, तस्याः वध्वा एवेत्यर्थः, अङ्घ्रियुग्मस्य पादद्वयस्य, अवनिः आधारभूतभूभागः, तस्याः मध्ये अन्तरालभूभागे, तस्याः पादद्वयाधारभूतभूम्योरन्तराले इत्यर्थः, बद्धदृक् दत्तदृष्टिः सन्, तत्सङ्क्रान्ततद्वराङ्गप्रतिबिम्बाकृष्टदृष्टिः सन्नित्यर्थः, मुखं नविलोकयन् अधोदर्शनार्थं मुखं न पश्यन्, नञर्थस्य नशब्दस्य सुप्सुपेति समासः। विनीतः ध्रुवं साधुरिव, स्मितपूर्वा वाक् यस्य सः तादृशः सन् ईषद्धास्यपूर्वकमित्यर्थः । किमपि यत् किञ्चित्, अपृच्छत् जिज्ञासितवान्। अत्र यूनः स्त्रीसम्भाषणे पादावलोकनेन मुखानवलोकनधर्मयोगात् विनीतत्वोत्प्रेक्षा ॥ ६७ ॥

विनयी जैसा ( वास्तविकमें अविनयी अर्थात् हँसी करनेमें चतुर ), मुस्कुराकर बोलनेवाला कोई युवक स्त्रीके मुखको नहीं देखता हुआ स्फटिक मणिकी बनी हुई भूमिपर सामने बैठी हुई स्त्रीसे उसके दोनों चरणोंके बीचकी भूमि ( पर प्रतिबिम्बित उस स्त्रीके मदन-मन्दिर-भग ) को देखता हुआ कुछ पूछा ॥ ६७ ॥

अमी लसद्बाष्पमखण्डिताखिलं वियुक्तमन्योऽन्यममुक्तमार्दवम् ।
रसोत्तरं गौरमपीवरं रसादभुञ्जतामोदनमोदनं जनाः ॥ ६८ ॥

अमी इति । अमी जनाः जन्यजनाः, लसन् प्रकाशमानः, उद्गच्छन्नित्यर्थः, बाष्पः धूमायमानोष्मा यस्य तादृशम् ईषदुष्णमित्यर्थः, अखण्डितम् अभग्नम्, अखिलं स्वरूपम्, आकृतिरिति यावत्, यस्य तादृशम्, अन्योऽन्यं परस्परं, वियुक्तम् असंश्लिष्टं, तथाऽपि अमुक्तमार्दवम् अकठिनं, सुकोमलमित्यर्थः, रसोत्तरं स्वादुभूयिष्ठं, गौरं शुभ्रम् , अपीवरम् अस्थूलं, सूक्ष्ममित्यर्थः, आमोदनम् आह्लादजनकं, सुगन्धम् इत्यर्थः, ओदनम् अन्नं, रसात् रागात्, अभुञ्जत अखादन्। सार्थकविशेषणत्वात् परिकरः ॥ ६८ ॥

इन बराती लोगोंने बाष्प निकलते हुए अर्थात् थोड़ा-थोड़ा गर्म, विना टूटे हुए दानोंवाले, परस्परमें नहीं सटे हुए, कोमल, स्वादिष्ट, स्वच्छवर्ण, ( कृष्णभोग, श्याम जीरा आदि उत्तम जातीय चावल होनेसे ) महीन ( अत एव ) हर्षप्रद ( अथवा—सुगन्धयुक्त ) भातको [illegible]जन किया ॥ ६८ ॥

वयोवशस्तोकविकस्वरस्तनीं तिरस्तिरश्चुम्बति सुन्दरे दृशा ।
स्वयं किल स्रस्तमुरःस्थमम्बरं गुरुस्तनी ह्रीणतराऽपराऽऽदधे ॥ ६९ ॥

वय इति । सुन्दरे रूपसम्पन्ने, वरपक्षीये कस्मिंश्चित् पुंसि इति शेषः। वयोव-

१. 'परादधे' इति पाठान्तरम् ।

शेन बाल्ययौवनयोः सन्धिरूपवयोऽधीनतया, स्तोकविकस्वरस्तनीम् ईषदुद्भिन्नकुचमण्डलां, काञ्चित् बालामिति शेषः। तिरस्तिरः दृशा तिरश्चीनदृष्ट्या, वक्रकटाक्षेणेत्यर्थः। चुम्बति साग्रहं पश्यति सतीत्यर्थः। गुरुस्तनी पृथुस्तनी, अपरा अन्या, काचित् स्त्रीति शेषः। ह्रीणतरा अतिशयेन ह्रीणा लज्जिता, अतिशयलज्जिता सतीत्यर्थः। क्षुद्रस्तन्यां बालिकायामनुरागदर्शनात् पृथुस्तन्यां स्वस्यां तस्यारुचित्वबुद्ध्या अतिसलज्जत्वं युक्तमिति भावः। ह्रीधातोः 'कालात्' इति तरप्, 'नुदविद—' इत्यादिना पक्षे निष्ठानत्वं, 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावः। स्वयमात्मनैव, स्रस्तं गलितं, किल इति अलीके, स्वस्थानात् भ्रष्टमिव जातमित्यर्थः। इति उरःस्थं वक्षःस्थितम्, अम्बरं वसनम्, उत्तरीयमित्यर्थः। आदधे स्वेच्छया स्वस्थानादपसारितं कृत्वा पुनराच्छादनार्थं यथास्थानं निदधे। क्षुद्रस्तनीं प्रति हृदयावरणसङ्केतं स्वकीयहृदयावरणनिधानेन ज्ञापयामास, अथवा अहं पीवरस्तनी तवोपभोगक्षमेति बुद्ध्या स्तनयुगं दर्शयामासेति भावः॥ ६९॥

अवस्था (बाल्य तथा युवावस्थाके सन्धिकालकी उम्र) के वश थोड़ा उठते हुए स्तनवाली (मुग्धा स्त्री) को तिर्छी-तिर्छी दृष्टिसे युवकके देखते रहने पर अर्थात् अनुरागवश कटाक्षपूर्वक देखनेमात्रसे चुम्बनसुखका अनुभव करते रहने पर विशाल स्तनोंवाली दूसरी (प्रौढा) स्त्री अधिक लज्जित होकर स्तनोंसे स्वयं कपड़ेको हटाकर फिर उससे स्तनोंको ढक लिया। ['यह युवक लघुस्तनी मुग्धासे अनुराग करता है, पृथुस्तनी सम्भोगसमर्था मुझसे नहीं' अत एव अपने विशाल स्तनोंको दिखानेके अभिप्रायसे यथास्थान स्थित वस्त्रको भी हटाकर पुनः स्तनोंको ढक लिया। अथवा—उस मुग्धाको सङ्केत किया कि—'तुम अपने स्तनोंको अच्छी तरह ढक लो'। ऐसे अवसरपर कुछ स्पष्ट कहना अनुचित होनेसे सङ्केतमात्रसे उस मुग्धाको स्तनोंको ढकनेके लिए उस प्रौढाने सचेत कर दिया] ॥६९॥

यदादिहेतुः सुरभिः समुद्भवे भवेत्तदाज्यं सुरभि ध्रुवं ततः।
वधूभिरेभ्यः प्रवितीर्य पायसं तदोघकुल्यातटसैकतं कृतम्॥ ७०॥

यदिति। यत् यस्मात् कारणात्, समुद्भवे उत्पत्तौ, सुरभिः गौः, सुगन्धिः पदार्थश्च। 'सुरभिर्वाच्यवत् सौम्ये सुगन्धौ गोषु योषिति' इति यादवः। आदिहेतुः मूलकारणं, ततः कारणात्, तत् आज्यं घृतं, सुरभि सुगन्धि, भवेत्, 'कारणगुणाः कार्यगुणमारभन्ते' इति सुरभिसूतस्य सुरभित्वं युक्तमिति भावः। ध्रुवमित्युत्प्रेक्षायाम्। वधूभिः परिवेष्ट्रीभिः, एभ्यः जन्यजनेभ्यः, पायसं परमान्नं, पयसि संस्कृतमन्नमित्यर्थः। 'परमान्नन्तु पायसम्' इत्यमरः। 'संस्कृतं भक्षाः' इत्यण्प्रत्ययः। प्रवितीर्य दत्त्वा, परिवेष्येत्यर्थः। तस्य सुरभ्याज्यस्य, ओघः प्रवाहः एव, कुल्या कृत्रिमसरित्, तस्याः तटे तीरदेशे, सैकतं सिकतामयं पुलिनं, कृतं रचितमिति रूपकम्।

१. 'यदाज्यमि'त्येव पाठः इति 'प्रकाशः'।

'देशे लुविलचौ च' इति सिकताशब्दादण्प्रत्ययः । प्रदत्तपायसोपरिनिक्षिप्तघृतधाराप्रवाहेण द्विधा विभक्तं पायसं शुक्लत्वात् घृतमभितः घृतकुल्यातटसैकतमिव विरेजे इति भावः ॥ ७० ॥

जिस कारणसे कामधेनु या गौ ( अथवा—सुगन्धयुक्त पदार्थ ) उत्पत्तिमें ( दूध-दही आदिकी परम्परासे ) मूल कारण है, उस कारणसे ( अथवा—मानों उस कारणसे ) वह घी सुगन्धित होता है ( परोसनेवाली ) स्त्रियोंने इन ( वरातियों ) के लिए उस घीको परोसकर खीरको उस घृतके प्रवाहरूप छोटी नहरके दोनों किनारे रेती-सा बना दिया । [ पहले खीर परोसकर उसके ऊपर घीका धार गिराया जिससे घीके चारों तरफ वह खीर नहरके दोनों किनारे रेती-सी बन गयी । वह घी सुगन्धित था, क्योंकि कारणगत गुणका कार्यमें होना उचित ही है ] ॥ ७० ॥

यदप्यपीता वसुधालयैः सुधा तदप्यदः स्वादु ततोऽनुमीयते ।
अपि क्रतूपर्बुधदग्धगन्धिने स्पृहां यदस्मै दधते सुधाऽन्धसः ॥ ७१ ॥

यदपीति । यदपि यद्यपि, वसुधालयैः भूनिलयैः, मनुष्यादिभिरित्यर्थः । सुधा अमृतम् , अपीता न पीता, तदपि तथाऽपि, अपीतत्वेऽपीत्यर्थः । अदः आज्यं, ततः सुधातोऽपि, स्वादु मधुरम् , अनुमीयते तर्क्यते, यत् यतः, सुधा एव अन्धः अन्नं येषां ते सुधाऽन्धसः देवा, क्रतूपर्बुधदग्धगन्धिने यज्ञाग्निप्लुष्टगन्धवते, अस्मै आज्याय, स्पृहाम् इच्छां, दधते कुर्वते इत्यर्थः । 'स्पृहेरीप्सितः' इति सम्प्रदानत्वाच्चतुर्थी । अस्माकमुभयानुभवाभावेऽपि अमृतभोजिनामपि विशिष्टप्रवृत्तिलिङ्गेन तदुभयरसतारतम्यानुमानं सुकरमित्यर्थः । अग्निदग्धत्वेन विकृतगन्धमपि घृतम् अमृतादपि स्वादुरसं किमुत सौरभयुक्तमिति भावः । अनुमानन्तु घृतममृतादपि स्वादु अमृताशानां देवानां विशिष्टेच्छाविषयत्वादिति अत्रानुमानालङ्कारः ॥ ७१ ॥

यद्यपि भूलोकवासी ( मनुष्यों ) ने अमृत नहीं पिया है, तथापि ( अमृत-रसका ज्ञान नहीं होनेपर भी ) 'यह ( घृत ) उस ( अमृत ) से अधिक स्वादिष्ट है' ऐसा अनुमान होता है; क्योंकि अमृतभोगी ( देव ) भी यज्ञोंमें अग्निके द्वारा जलाये ( दूषित किये ) गये गन्धवाले इस ( घृत ) के लिये चाहना करते हैं । [ यदि अमृतसे भी अधिक स्वादिष्ट घृत नहीं होता तो जलानेसे विकृत गन्धवाले भी घृतको अमृतका भोजन करनेवाले देवलोग क्यों इच्छा करते ?, इससे अनुमान होता है कि जले हुए गन्धवाला भी घृतका स्वाद अमृतसे उत्तम है, तो फिर जो बिना जले हुए गन्धवाला घृत है उसके स्वादके विषयमें क्या कहना है, वह तो अमृतसे बहुत ही अधिक स्वादिष्ट होगा ही । अथवा—कुछलोग ( भूलोकवासी ) घृतसे कम स्वादिष्ट अमृतका आस्वादन नहीं करते तथा सर्वदा अमृत भोजन करनेवाले ( देवलोग ) भी घृतकी चाहना करते हैं; इन दोनों कारणोंसे अमृतकी अपेक्षा घृतके अधिक स्वादिष्ट होनेका अनुमान होता है ] ॥ ७१ ॥

अबोधि नो ह्रीनिभृतं मदिङ्गितं ? प्रतीत्य वा नादृतवत्यसाविति ? ।
लुनाति यूनः स्म धियं कियद्गता निवृत्य बालाऽऽदरदर्शनेषुणा ॥ ७२ ॥

अबोधीति । असौ बाला स्त्री, ह्रीनिभृतं लज्जानिगूढं, मदिङ्गितं सभ्रूभङ्गदर्शनादिना मम हृद्गतभावं, नो अबोधि ? न अज्ञासीत् ? बुध्यतेः कर्त्तरि लुङि तङ्, 'दीपजन—' इत्यादिना च्लेश्चिणादेशः । वा अथवा, प्रतीत्य बुद्ध्वाऽपि, न आदृतवती अनभिप्रेतत्वात् तत् न गणितवती, इत्येवंरूपां, यूनः तरुणस्य कस्यचित्, धियं संशयबुद्धिं, कियत् कतिचित् पदानि, गता चलिता अपि, निवृत्य प्रत्यावृत्य, आदरदर्शनं सरागदृष्टिः, यद्वा—दरदर्शनम् ईषद्दृष्टिः, लज्जया सङ्कोचपूर्णदृष्टिरिति यावत् । 'ईषदर्थे दराव्ययम्' इति मेदिनी । तद्रूपेण इषुणा बाणेन, लुनाति स्म चिच्छेद । एतावतैव यूनः अनुरागाभावशङ्काशङ्कुरुद्धृत इति भावः ॥ ७२ ॥

'इस बालाने लज्जासे गूढ मेरी चेष्टा ( कटाक्षदर्शन आदि ) को नहीं समझा क्या ? अथवा समझकर आदर ( मुझपर अनुराग ) नहीं किया ?' इस प्रकारकी युवककी बुद्धि अर्थात् सन्देह को कुछ दूर गयी हुई बालाने लौटकर आदरपूर्वक दर्शन ( सानुराग कटाक्षदर्शन ) रूपी बाणसे काट दिया। अर्थात् कुछ दूर जाकर बालाने उस युवकको अनुरागपूर्वक देखकर उसके उक्त संशय बुद्धिको दूर कर दिया ॥ ७२ ॥

न राजिका-राद्धमभोजि तत्र कैर्मुखेन सीत्कारकृता दधद्दधि ।
धुतोत्तमाङ्गैः कटुभावपाटवादकाण्डकण्डूयितमूर्द्धतालुभिः ? ॥ ७३ ॥

नेति । तत्र भोजनसमये, कैः जनैः, दधद्दधि दधिवत्, दध्ना संस्कृतम् इत्यर्थः । राजिकाराद्धं राजसर्षपनिष्पन्नं, सर्षपचूर्णसंयुक्तं व्यञ्जनमित्यर्थः । 'अथो राजसर्षपः । क्षवः क्षुधाऽभिजननो राजिका कृष्णिकाऽऽसुरी' इति यादवः । कटुभावपाटवात् कटुत्वसामर्थ्यात्, कटुरसातिरेकादित्यर्थः । धुतोत्तमाङ्गैः कम्पितमस्तकैः, तथा अकाण्डे असमये, भोजनसमये मस्तककण्डूयनस्य स्मार्त्तवचननिषिद्धत्वात् भोजनसमयः कण्डूयनस्य असमय इति भावः । कण्डूयितं मूर्द्धतालु मूर्द्धानः तालूनि च यैः तादृशैः सद्भिः, सीत्कारकृता ससीत्कारेण, मुखेन वक्त्रेण, न अभोजि ? न अखादि ? सर्वैः एवंकुर्वद्भिरपि अभोजि इत्यर्थः । स्वभावोक्तिरलङ्कारः ॥ ७३ ॥

उस समय ( या—वहां पर अर्थात् राजा भीमके यहां ) किन ( बरातियों ) ने राई या पीली सरसोंमें तैयार किये गये और दहीसे भिगोये गये व्यञ्जन-विशेषको अधिक कटु होनेसे मस्तक हिलाते हुए तथा ( भोजनकालमें मस्तक खुजलानेका धर्मशास्त्रोंमें निषेध होनेसे ) असमयमें मस्तक तथा तालुको खुजलाये हुए सीत्कारयुक्त मुखसे अर्थात् 'सी-सी' ऐसा शब्द करते हुए भोजन नहीं किया ? अर्थात् सभी बरातियोंने उक्त प्रकारके व्यञ्जनको मस्तक हिलाते, मस्तक तथा तालु खुजलाते और 'सी-सी' करते हुए खाया ॥ ७३ ॥

वियोगिदाहाय कटूभवन्द्विषः तुषारभानोरिव खण्डमाहृतम् ।

सितं मृदु प्रागथ दाहदायि तत् खलः सुहृत्पूर्वमिवाहितस्ततः ॥ ७४ ॥

वियोगीति। वियोगिनां प्रियवियुक्तानां, दाहाय सन्तापाय, कटूभवन्त्यः तीक्ष्णीभवन्त्यः, त्विषः प्रभाः यस्य तादृशस्य, तुषारभानोः चन्द्रस्य, खण्डं शकलम्, आहृतम् आनीतम् इव स्थितम् इत्युत्प्रेक्षा। सितं शुभ्रं, प्रभूतदधिसंयोगादिति भावः। तत् राजसर्षपमिश्रं व्यञ्जनं, पूर्वम् आदौ, सुहृत् आप्तः, ततः पश्चात्, कार्यकाले इत्यर्थः, अहितः अनाप्तः, खलः दुर्जन इव, इत्युपमा, प्राक् आदौ, स्पर्शकाले इत्यर्थः, मृदु कोमलम्, अथ पश्चात्, मुखे प्रक्षेपानन्तरमित्यर्थः, दाहदायि कटुरसातिरेकात् जिह्वादेर्दाहकारि, बभूव इति शेषः ॥ ७४ ॥

विरहियोंके सन्तापके लिए तीक्ष्ण कान्तिवाले चन्द्रमाके टुकड़ेके समान लाये गये (अथवा—लाये गये चन्द्रखण्डके समान स्थित) श्वेत वर्ण पहले (स्पर्श-क्षणमें) कोमल तथा बादमें (मुखमें डालनेपर अतिकटु होनेसे) दाहकारक पहले मित्र तथा बादमें शत्रु बने हुए खलके समान हुआ (अथवा—उस रायीके बने व्यञ्जनको किन बरातियोंने नहीं भोजन किया ऐसा पूर्व (१६।७३) श्लोकसे सम्बन्ध समझना चाहिये) ॥ ७४ ॥

नवौ युवानौ निजभावगोपिनावभूमिषु प्राक् प्रहितभ्रमिक्रमम्।
दृशोर्विधत्तः स्म यदृच्छया किल त्रिभागमन्योऽन्यमुखे पुनः पुनः ॥७५॥

नवाविति। नवौ बाल्ययौवनयोः सन्धौ वर्त्तमानौ, अत एव निजभावगोपिनौ लज्जावशात् स्वाभिप्रायं स्पष्टमप्रकाशयन्तौ, युवानौ युवतिश्च युवा च तौ, 'पुमान् स्त्रिया' इत्येकशेषः। प्राक् प्रथमम्, अभूमिषु अन्यविषयेषु, दर्शनायोग्येषु इत्यर्थः, नञर्थेन नञ्समासः। प्रहितभ्रमिक्रमं कृतसञ्चारप्रकारं, विषयान्तरेषु इतस्ततः प्रवर्त्तितम् इत्यर्थः, दृशोः नयनयोः, त्रिभागं तृतीयभागम्, अपाङ्गदर्शनम् इत्यर्थः, 'वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वम्' इति कैयटः। पुनः पुनः वारं वारम्, अन्योऽन्यस्य परस्परस्य, मुखे वदने, यदृच्छया किल अनिच्छयैव, किल इत्यलीके, इच्छापूर्वकमेव इत्यस्य तात्पर्यम्। विधत्तः स्म निचिक्षिपतुरित्यर्थः, आदौ ह्रिया विषयान्तरदर्शनव्याजादेव अन्योऽन्यमुखम् अपाङ्गदृष्ट्या पुनः पुनर्ददृशतुरिति चक्षुःप्रीत्याख्या प्रथमावस्थैषा ॥ ७५ ॥

नये (शैशव तथा यौवनावस्थाके मध्यमें वर्तमान, अत एव लज्जाके कारण) अपने भाव (पारस्परिक अनुराग) को छिपानेवाले युवती तथा युवकने पहले अयोग्य (अपने उद्देश्यसे हीन, या—अपने देखनेके अयोग्य या—लोक व्यवहारके अयोग्य किन्हीं अन्य) वस्तुओंको कटाक्षपूर्वक देखा तथा बादमें परस्परके मुखको देखा। [नयी उम्र होनेसे लज्जावश वे युवती तथा युवक सहसा एक दूसरेके मुखको नहीं देख सके, अतः पहले उद्देश्यहीन पदार्थोंको देखनेके बाद परस्परके मुखको देखा। उनका अभिप्राय यह रहा कि—दूसरे लोग ऐसा समझें कि—ये दोनों अन्य पदार्थोंके समान ही परस्परमें एक दूसरेके मुखको भी स्वभावतः ही देखते हैं, अनुरागसे नहीं देखते] ॥ ७५ ॥

व्यधुस्तमां ते मृगमांससाधितं रसादशित्वा मृदु तेमनं मनः ।
निशाधवोत्सङ्गकुरङ्गजैरदः पलैः सपीयूषरसैः किमश्रपि ? ॥ ७६ ॥

व्यधुस्तमामिति । ते जन्याः, मृगमांसेन हरिणमांसेन, साधितं निष्पादितं, मृदु कोमलं, तेमनं व्यञ्जनम् 'तेमनं व्यञ्जने क्लेदे' इति हेमचन्द्रः । रसात् रागात्, साग्रहमित्यर्थः, अशित्वा आस्वाद्य, अदः इदं तेमनं, निशाधवस्य निशापतेः इन्दोः, उत्सङ्गे क्रोडे, यः कुरङ्गः मृगः, तज्जैः तत्सम्बन्धिभिः, अत एव सपीयूषरसैः अमृतद्रवमिश्रितैः पलैः मांसैः, अश्रपि किम् अपाचि किम् ? पाकार्थात् श्राधातोः ण्यन्तात् कर्मणि लुङ्, घटादित्वात् मित्त्वात् ह्रस्वः । इति मनो मतिं, व्यधुस्तमाम् अतिशयेन विदधुः इत्युत्प्रेक्षितवन्तः इत्यर्थः । दधातेर्लुङि 'तिङश्च' इति तमप्प्रत्ययः, ततः 'किमेत्तिङव्ययघादा—' इति आमुप्रत्ययः ॥ ७६ ॥

उन वरातियोंने मृग-मांससे बनाये गये व्यञ्जनविशेषको खाकर 'यह ( व्यञ्जन ) चन्द्रमाके क्रोडमें रहनेवाले हरिणके अमृतयुक्त मांससे पकाया गया है क्या ?' ऐसा मनमें अच्छी तरह सोचा [ यहांपर 'अच्छी तरह सोचा' ऐसा कहनेसे वरातियोंके 'अच्छी तरह सोचकर भी यह निर्णय नहीं हो सका कि वास्तविकमें यह व्यञ्जन चन्द्रस्थ मृगमांससे बना है या वन्य मृगमांससे ?' अत एव उसका अधिकतम स्वादु होना सूचित होता है ] ॥ ७६ ॥

परस्पराकूतजदूतकृत्ययोरनङ्गमाराद्धुमपि क्षणं प्रति ।
निमेषणेनैव कियच्चिरायुषा जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥

परस्परेति । परस्परस्य आकूतात् अभिप्रायावेदकनयनादिचेष्टाविशेषात्, जातं निर्वृत्तं, दूतकृत्यं सम्भोगसम्मतिविषयकप्रश्नोत्तरपरिज्ञानरूपं दौत्यकार्यं ययोः तादृशयोः, संज्ञाभिरेव कृतसमागमनिश्चययोरित्यर्थः, यूनोः कयोश्चित् तरुणयोः स्त्रीपुंसयोः, अनङ्गं कामम्, आराद्धुं सेवितुं, रन्तुमित्यर्थः, क्षणं कालं प्रति, निर्णयोऽपि निश्चयोऽपि, समागमकालनिर्द्धारणमपीत्यर्थः, जनेषु जनमध्ये एव, कियच्चिरायुषा किञ्चिद्दीर्घकालावस्थायिना, निमेषणेनैव नयननिमीलनेन एव, साधारणनिमेषकालापेक्षया किञ्चिदधिककालव्यापिना नेत्रमुद्रणकरणेनैवेत्यर्थः, उदपादि उत्पन्नः उत्पद्यतेः कर्त्तरि लुङ् 'चिण् ते पदः' इति चिण् । एतेषु निद्रितेष्वेव आवयोः समागमः भवेत् इति कालनिश्चयोऽपि नेत्रनिमीलनरूपसंज्ञयैव कृतः इति भावः ॥ ७७ ॥

परस्पर चेष्टाओंसे ही दूतकार्य ( सम्भोग-विषयक सम्मति ) को पूर्ण किये हुए किसी युवक तथा युवतीके कामाराधन ( सुरत ) करनेके लिए समयके प्रति निर्णय भी लोगोंके बीचमें कुछ विलम्ब तक किये गये निमेष ( नेत्र बन्द करने ) से ही हो गया । [ उन दोनों युवक तथा युवतीने पहले परस्पर चेष्टाओंसे सम्भोग करनेका निर्णय विना दूतके ही कर लिया और बादमें कुछ देरतक नेत्र बन्द करके सुरत-समयका भी निर्णय कर लिया अर्थात् लोगोंके बीचमें ही उक्त प्रकारसे कुछ देरतक नेत्र बन्द करनेसे यह सङ्केत कर लिया कि इन लोगोंके सो जानेपर हम दोनों सुरत करेंगे ] ॥ ७७ ॥

अहर्निशा वेति रताय पृच्छति क्रमोष्णशीतान्नकरार्पणात् विटे।
ह्रिया विदग्धा किल तन्निषेधिनी न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलिम् ॥७८॥

अहरिति। विटे कस्मिंश्चित् कामुके, क्रमेण पर्यायानुसारेण, उष्णशीतयोः अन्नयोः भोज्यद्रव्ययोः उपरि, करार्पणात् हस्तस्थापनात्, तद्रूपसङ्केतविशेषादित्यर्थः, रताय सम्भोगाय, अहः सूर्यसम्पर्केण उष्णोपलक्षितं दिनं वा कालः? निशा वा चन्द्रसम्पर्केण शैत्योपलक्षिता निशा वा कालः? इति एवं, पृच्छति जिज्ञासमाने सति, विदग्धा चतुरा, तदभिप्रायाभिज्ञेत्यर्थः, ह्रिया लज्जया, किल तत् कालद्वयं, निषेधतीति तन्निषेधिनी तन्निवारिका सती, सन्ध्यामधुरे सन्ध्यावत् मनोहरे, सन्ध्यारुणवर्णे इत्यर्थः, अधरे ओष्ठे, अङ्गुलिं न्यधत्त स्थापयामास, सन्ध्यासवर्णाधरस्पर्शेन आवयोः सन्ध्यासमये समागमः इति सूचयामास इत्यर्थः। ह्रिया स्त्रीभिरङ्गुल्या अधरमाच्छाद्यते इति प्रसिद्धम् ॥ ७८ ॥

'रतिके लिए दिन या रात्रिका समय—दोनोंमें-से कौन ठीक होगा' इस बातको क्रमशः गर्म तथा ठण्डे अन्नपर हाथ रखकर कामुकके पूछनेपर चतुर (उसके अभिप्रायको समझनेवाली) स्त्री लज्जासे उन दोनों समयोंका निषेध करती हुई सन्ध्याके समान मनोहर अर्थात् अरुणवर्ण अधरपर अङ्गुलिको रख दिया। [कामुकने उष्ण अन्नपर हाथ रखकर दिनमें तथा शीत अन्न पर हाथ रखकर रात्रिमें—दोनोंमें-से कौन-सा समय हमदोनोंके सम्भोगके लिये अनुकूल होगा?' ऐसा पूछा तो उसके अभिप्रायको समझनेवाली उस चतुर स्त्रीने दिन तथा रात्रि-दोनों समयमें क्रमशः सूर्य तथा चन्द्रमाका प्रकाश रहनेसे उन दोनों समयोंका निषेध कर अरुण वर्णवाले अधरपर अङ्गुलि रखकर अन्धकार युक्त सन्ध्याकालको सम्भोगके लिये सङ्केतित किया। लज्जित स्त्रीका अधरपर अङ्गुलि रखना स्वभाव होता है]॥७८॥

([1]क्रमेण कूरं स्पृशतोष्मणः पदं सिताञ्च शीताञ्चतुरेण वीक्षिता।
दधौ विदग्धाऽरुणितेऽधरेऽङ्गुलीमनौचितीचिन्तनविस्मिता किल॥१॥)

क्रमेणेति। अयं श्लोकः क्षेपकः। कूरं भक्तम्। सितां शर्कराम्। किमिदमनेनानुचितं क्रियत इत्यनौचितीचिन्तनेन विस्मिता किल विस्मितेव। अरुणिते यावकेनेत्यर्थः। भावः स एव[2] ॥ १ ॥

क्रमशः गर्म भात तथा ठण्डे शक्करका स्पर्श करते हुए चतुर (कामी पुरुष) से देखी गयी विदग्धा (परभावज्ञानचतुरा स्त्री) ने अनुचितके चिन्तनसे आश्चर्यित-सी होती हुई (अलक्तकसे) लाल अधर पर अङ्गुलिको रख दिया। [क्रमशः सूर्य तथा चन्द्रमासे प्रकाशमान दिन तथा रात्रिमें सम्भोग करनेके लिए निश्चित समयको सङ्केतसे पूछनेपर विदग्धाने 'यह क्या अनुचित समयका सङ्केत करके पूछ रहा है' इस चिन्तासे उस स्त्रीने अपने ओष्ठ-

---

१. क्षेपकस्यास्य 'जीवातु' व्याख्यानाभावान्मया 'प्रकाश' व्याख्यैवात्र निहितेत्यवधेयम्। २. इयं किल 'प्रकाश' व्याख्या म० म० नारायणभट्टस्येत्यवधेयम्।

पर अङ्गुलिको रख दिया। शेष भाव पूर्ववत् (१६।७८) जानना चाहिये ] ॥ १ ॥

**कियत्त्यजन्नोदनमानयन् कियत् करस्य पप्रच्छ गतागतेन याम् ।**
**अहं किमेष्यामि ? किमेष्यसीति ? सा व्यधत्त नम्रं किल लज्जयाऽऽननम् ॥**

कियदिति। कियत् किञ्चित्, ओदनम् अन्नं, त्यजन् भोजनपात्रैकदेशे अपसारयन् कियत् किञ्चित् ओदनम्, आनयन् तत्रैव स्वयं प्रति आकर्षन्, पूर्वोक्तः विटः इति शेषः, करस्य पाणेः, गतागतेन ओदनस्यापसारणार्थमाकर्षणार्थञ्च यातायाताभ्याम् 'विप्रतिषिद्धञ्चानधिकरणवाचि' इति वैभाषिको द्वन्द्वे एकवद्भावः। किम् अहम् एष्यामि ? त्वां प्रति इति शेषः, किं एष्यसि वा ? त्वं मां प्रति इति शेषः, इति यां तरुणीं, पप्रच्छ जिज्ञासयामास, सा स्त्री, लज्जया किल किलेत्यलीके, वस्तुतः तज्जिज्ञासितोत्तरदानार्थमेव इति भावः। आननं मुखं, नम्रम् अवनतं, व्यधत्त कृतवती, शिरोऽवनतिसंज्ञया त्वमेव मां प्रति आगच्छ इति सूचितवती इति भावः ॥ ७९ ॥

( सम्भोगकालका निर्णय ( १६।७८ ) करनेके बाद ) कुछ भातको छोड़ता ( आगेकी ओर दूर फैलता ) हुआ तथा कुछ भातको खींचता ( अपने समीप लाता ) हुआ हाथके गमनागमन ( क्रमशः सङ्केत ) से 'मैं आऊंगा ?' या 'तुम आवोगी ?' ऐसा जिस ( युवती ) से पूछा, उसने मानो लज्जासे मुखको नीचा कर लिया। [ भातको हटाने से 'मैं तुम्हारे पास आऊं क्या ?' ऐसा तथा भातको समीप करनेसे 'तुम मेरे पास आवोगी क्या ?' ऐसा युवकने सङ्केतकर जिस युवतीसे पूछा, उसने दूसरोंकी दृष्टिमें लज्जित होकर मुख नीचा कर लिया, किन्तु वास्तविकमें मुखको नीचेकर अपने चरणोंकी ओर देखती हुई उसने सङ्केत किया कि 'तुम्हीं आकर मेरे चरणोंपर गिरो, मैं तुम्हारे पाव नहीं आऊंगी अथवा—'मैं ही आऊंगी' ऐसा सङ्केत किया। लोकमें भी किसीसे 'यह काम कौन करेगा ?' ऐसा पूछनेपर अपने मुखको नीचा करके 'मैं करूंगा' ऐसा सङ्केत करते देखा जाता है ] ॥ ७९ ॥

**यथाऽऽमिषे जग्मुरनामिषभ्रमं निरामिषे चामिषमोहमूहिरे ।**
**तथा विदग्धैः परिकर्मनिर्मितं विचित्रमेव परिहस्य भोजिताः ॥ ८० ॥**

यथेति। एते जन्याः, यथा येन प्रकारेण, आमिषे मांसे अनामिषम् अमांसम्, इति भ्रमं भ्रान्तिं, जग्मुः प्रापुरित्यर्थः यथा च निरामिषे अनामिषे, आमिषमोहं मांसभ्रमञ्च, ऊहिरे प्राप्नुवन्ति स्म, तथा तेन प्रकारेण, विदग्धैः परिहासनिपुणैः, पाचकैरिति शेषः, परिकर्मणा तत्तद्भोज्यसंस्कारकद्रव्यविशेषेण, निर्मितं निष्पादितम्, अत एव विचित्रम् आश्चर्यं, भोज्यवस्तु इति शेषः, परिहस्य आमिषदानकाले च निरामिषपरिवेषणरूपं, निरामिषदानकाले च आमिषपरिवेषणरूपं परिहासं कृत्वा, भोजिताः भोजनं कारिताः ॥ ८९ ॥

---

१. 'परिहास्य' इति पाठान्तरम्। २. अत्र म० म० शिवदत्तशर्माणः—'इदं तु' 'ऊहवितर्के' इत्यस्य 'ऊहाञ्चक्रिरे' इति 'प्रयोगादुपेक्ष्यम्' इति सुखावबोधा। तथा च 'वहन्ति स्म' इति जीवातुः। 'प्रापुः' इति सुखावबोधायां व्याख्यातम्।

वरातियोंने जिस प्रकार मांससे बने पदार्थमें बिना मांसके बने पदार्थका भ्रम किया और बिना मांसके बने पदार्थमें मांससे बने पदार्थका भ्रम किया; उस प्रकार चतुर रसोइयों (पाचकों) ने इन्हें (इन वरातियोंको) साधन द्रव्योंसे तैयार किये गये विचित्र अन्नको परिहास-कर अर्थात् निरामिष वस्तु परोसनेके समय सामिष भोजन परोसकर तथा सामिष भोजन परोसनेके समय निरामिष भोजन परोसकर (पाठा०—हँसा-हँसाकर) भोजन कराया ॥८०॥

**नखेन कृत्वाऽधरसन्निभां निभाद्युवा[1] मृदुव्यञ्जनमांसफालिकाम् ।**
**ददंश दन्तैः प्रशशंस तद्रसं विहस्य पश्यन् परिवेषिकाऽधरम् ॥८१॥**

**नखेनेति । युवा कश्चित् तरुणः मृदोः कोमलस्य, व्यञ्जनमांसस्य तेमनीभूतमांसस्य, फालिकां खण्डिकां निभात् भक्षणव्याजात्, नखेन नखरद्वारा, सञ्छिद्य इति भावः, अधरसन्निभां परिवेषिकाधराकारां, कृत्वा विधाय, परिवेषिकायाः भोज्यप्रदाव्याः, अधरं निम्नोष्ठं, पश्यन् अवलोक्य, विहस्य हसित्वा, दन्तैः ददंश दष्टवान्, तस्य रसं स्वादं, प्रशशंस अहो अमृतकल्पमिति तुष्टाव चेत्यर्थः; तदधरबुद्ध्या इति भावः ॥ ८१ ॥**

किसी युवकने कोमल व्यञ्जन बने हुए मांस-खण्डको खानेके छलसे नखसे ( काटकर, परोसनेवाली स्त्रीके ) अधरके समान ( अरुण वर्ण होनेसे पहलेसे ही अधराकार रहनेपर भी नखसे रेखायुक्त अधराकार ) करके, परोसनेवाली ( स्त्री ) के अधरको देखता हुआ हँसकर ( अधराकार उस मांसखण्डको ) दाँतोंसे काटा और उसके रस ( मधुरता ) की प्रशंसा की । [ 'तुम्हारे अमृतरस भरे अधरको काटता हूं' ऐसा सङ्केत करते हुए उस मांस-खण्डमें उसके अधरका आरोपकर उसे काटा और उस स्त्रीसे उसकी मधुरताकी प्रशंसाकर अपने आशयको प्रकट किया ] ॥ ८१ ॥

**अनेकसंयोजनया तदा[2] कृतं निकृत्य निष्पिष्य च तादृगर्जनात् ।**
**अमी कृताकालिकवस्तुविस्मयं जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८२ ॥**

**अनेकेति । तदा भोजनकाले, अमी जनाः भोक्तारः, अनेकेषां बहूनां संस्कारकद्रव्याणां, संयोजनया मेलनेन, तथा निकृत्य छित्त्वा, निष्पिष्य पिष्ट्वा च, अर्जनात् वस्त्वन्तरसादृश्यसम्पादनात् हेतोः, तादृक् तादृशं, विचित्रमित्यर्थः, कृतं निष्पादितं, यथा ( तथा ) कृतः सम्पादितः, आकालिकेषु अकालभवेषु, तत्कालदुर्लभेषु इत्यर्थः, वस्तुषु पदार्थेषु, विस्मयः अद्भुतता येन तत् तादृशं, बहु अनेकं, व्यञ्जनं शाकमांसादिकम्, अभ्यवाहरन् अभुञ्जत ॥ ८२ ॥**

उस ( भोजनके ) समयमें इन लोगों ( वरातियों ) ने अनेक ( मिर्च लौंग आदि पदार्थों ) के संयोगसे तथा काटकर ( छोटे-छोटे टुकड़ेकर ) और पिसकर दूसरे वस्तुओंकी समानता प्राप्त करनेके कारण वैसा ( विचित्र ) बनाये गये तथा असामयिक वस्तुके विस्मयको उत्पन्न करनेवाले बहुतसे व्यञ्जनोंको भोजन किया ॥ ८२ ॥

---

१. 'सन्निभां युवा द्विधा मृदु' इति पाठान्तरम् । २. 'तथाकृतैः' इति पाठान्तरम् ।

पिपासुरस्मीति विबोधिता मुखं निरीक्ष्य बाला सुहितेन वारिणा ।
पुनः करे कर्त्तुमना गलन्तिकां हसात् सखीनां सहसा न्यवर्त्तत ॥ ८३ ॥

पिपासुरिति । वारिणा जलेन, सुहितेन तृप्तेन इत्यर्थः । सौहित्यं तर्पणं तृप्तिः' इत्यमरः । शेषार्थे षष्ठी 'पूरणगुण—' इत्यादिना समासनिषेधः । केनचित्, यूना इति शेषः । मुखं बालिकाया वदनं, निरीक्ष्य अवलोक्य, पिपासुः पातुम् इच्छुः, अस्मि भवामि, इति विबोधिता विज्ञापिता, बाला तरुणी, निगूढाभिप्रायपरिज्ञानमूढा काचिदप्रौढा इति भावः । पुनः गलन्तिकां कर्करीं, जलदानपात्रमित्यर्थः 'कर्कर्यालु-र्गलन्तिका' इत्यमरः । करे हस्ते, कर्त्तुमनाः धर्त्तुकामा सती 'पृषोदरादीनि' इत्यादौ 'तुंकाममनसोरपि' इति कारिकातो मकारलोपः । सखीनां सहचरीणां, हसात् हास्यात्, 'स्वनहसोश्च' इति विकल्पादप्प्रत्ययः । सहसा सपदि, न्यवर्त्तत निवृत्ता जलेन तृप्तस्याप्यस्य कर्मविशेषमनुपादाय केवलं 'पिपासुरस्मि' इति कथनेन बालिकाया अस्या अधरमेव पिपासुरयमिति तद्वाक्यतात्पर्यमवधार्य सखीनां हास्याद् बाला तदाशयं परिज्ञाय जलपरिवेषणव्यापारान्निवृत्तेति भावः ॥ ८३ ॥

पानीसे तृप्त हुए ( किसी युवक ) के 'मै प्यासा हूं' ऐसा मुख देखकर कहनेपर हाथमें झारी ( जलपात्र ) को वे उठानेकी इच्छा करती हुई बाला सखियोंके हंसनेसे एकाएक रुक गई । [ पानी पीकर तृप्त युवकके उस मुग्धाके मुखको देखकर 'मैं तुम्हारे अधरका प्यासा हूं' इस आशयसे 'मैं प्यासा हूं' ऐसा कहनेपर उसके गूढाभिप्रायको नहीं समझती हुई जल पिलानेवाली मुग्धा ( अपरिपक्क बुद्धिवाली स्त्री ) ने पानी पिलानेके लिए पुनः हाथमें झारी ( पानीके वर्तन ) को लेना चाहा, इतनेमें उस युवकके परिहासपूर्ण गूढा-भिप्रायको समझनेवाली प्रौढा सखियोंने हंस दिया और वह मुग्धा भी उनका हंसना देखकर सोकर जागे हुए के समान उस युवकके परिहासपूर्ण गूढाभिप्रायको समझकर झट रुक गयी ] ॥ ८३ ॥

युवा समादित्सुरमत्रगं घृतं विलोक्य तत्रैणदृशोऽनुबिम्बनम् ।
चकार तन्नीविनिवेशितं करं बभूव तच्च स्फुटकण्टकोत्करम् ॥ ८४ ॥

युवेति । युवा कश्चित्तरुणः, अमत्रगं पात्रगतम् 'सर्वमावपनं भाण्डं पात्रामत्रञ्च भाजनम्' इत्यमरः । घृतं समादित्सुः ग्रहीतुमिच्छुः सन् ददातेः सन्नन्तादुप्रत्ययः, 'सनि मीमा—' इत्यादिना इसादेशे अभ्यासलोपः । तत्र घृते, एणदृशः मृगाक्ष्याः, परिवेषिकायाः इति शेषः । अनुबिम्बनं प्रतिबिम्बं, विलोक्य दृष्ट्वा, करं स्वकीयहस्तं, तस्य स्त्रीप्रतिबिम्बस्य, नीव्यां कटिवस्त्रबन्धने, निवेशितं स्थापितं, चकार कृतवान्, तत् प्रतिबिम्बञ्च, स्फुटं व्यक्तं, कण्टकोत्करं पुलकप्रकरं यस्य तादृशं, बभूव सञ्जातम् स्त्रीयनीविग्रन्थिमोचनाभिप्रायप्रकटनार्थं स्वप्रतिबिम्बनीविसविधे तदीयकरार्पणं

१. 'निवेशिनं' इति पाठान्तरम् ।

**दृष्ट्वा तस्य स्वसम्भोगाभिप्रायं परिज्ञाय तस्मिन्ननुरागात् सा पुलकिता अभूत् तत एव तत्प्रतिबिम्बमपि पुलकितं बभूवेति भावः ॥ ८४ ॥**

पात्रस्थ घृतको ग्रहण करनेका इच्छुक किसी युवकने उसमें ( परोसनेवाली ) मृगनयनीके प्रतिबिम्बको देखकर उस ( प्रतिबिम्ब ) के नीवी ( नाभिके नीचे की वस्त्रग्रन्थि ) के भीतर हाथको रख दिया और वह प्रतिबिम्ब स्पष्ट रोमाञ्चयुक्त हो गया। [ उस युवकके प्रतिबिम्बित नीवीमें हाथको रखनेपर वह मृगनयनी उस युवकके अनुरागको समझकर स्वयं भी अनुरागयुक्त होनेसे रोमाञ्चित हो गयी और उसका रोमाञ्चित देह घृतमें प्रतिबिम्बित होनेसे वह प्रतिबिम्ब भी रोमाञ्चयुक्त हो गया ] ॥ ८४ ॥

**प्रलेहजस्नेहकृता[1]नुबिम्बनां चुचुम्ब कोऽपि श्रितभोजनस्थलः[2]।**
**मुहुः परिस्पृश्य कराङ्गुलीमुखैस्ततोऽनुरक्तैः[3] स्वमवापितैर्मुखम् ॥ ८५ ॥**

**प्रलेहजेति। कोऽपि युवा, श्रितभोजनस्थलः प्राप्तभोजनप्रदेशः सन्, प्रलेहजस्नेहे लेह्यद्रव्यजातस्नेहरसे, कृतानुबिम्बनां प्राप्तप्रतिबिम्बां, प्रतिबिम्बितामित्यर्थः परिवेषिकाम् इति शेषः। मुहुः वारं वारं, परिस्पृश्य स्पृष्ट्वा, अङ्गुल्यग्रैरिति भावः। ततः स्पर्शात् अनन्तरं, स्वं निजं, मुखम् आस्यम्, अवापितैः प्रापितैः, चुम्बितैः इत्यर्थः। अत एव अनुरक्तैः उष्णस्पर्शात् स्वभावाद्वा आरक्तैः, स्निग्धैरिति च गम्यते कराङ्गुलीमुखैः हस्ताङ्गुल्यग्रैः, चुचुम्ब चुम्बितवान् प्रतिबिम्बितां तामिति शेषः। मुहुः लेह्यलेहनव्याजेन सम्मुखस्थपरिवेषिकाप्रतिबिम्बानुस्पृष्टाङ्गुलिमुखचुम्बनात् एव तत्प्रतिबिम्बचुम्बनात् सुखम् अन्वभूत्, तां प्रति अनुरागमदर्शयच्च इति भावः ॥८५॥**

किसी ( युवक ) ने भोजन-स्थलपर जाकर प्रलेह ( चटनी आदि ) के स्नेह ( तेल या घृत ) में प्रतिबिम्बित ( परोसनेवाली स्त्रीको, उस प्रलेह्य पदार्थकी उष्णतासे या स्वभावसे ही ) *अरुणवर्ण* ( पक्षा०—अनुराग-युक्त ) तथा अपने मुखमें डाले गये हाथकी अङ्गुलियोंके अगले भागोंसे वार-वार स्पर्शकर अनुरागसे ही चुम्बन किया क्या ?। ( अथवा— किसी युवकने प्रलेहके स्नेहमें प्रतिबिम्बित ( परोसनेवाली स्त्री ) को भोजनका बहाना करता हुआ अपने मुखमें डाले गये, रक्तवर्ण ( या—सानुराग ) हस्ताङ्गुल्यग्रसे वार-वार स्पर्शकर अनुरागसे चूम लिया क्या ?। 'रिक्तैः' पाठमें—उस ( प्रलेह पदार्थसे रहित तथा मुखमें डाले गये हस्ताङ्गुल्यग्रसे चूम लिया। [ जो वह युवक चटनी आदि लेह्य पदार्थोंमें छोड़े गये अधिक घृत या तैलमें परोसनेवाली स्त्रीके प्रतिबिम्बको अङ्गुल्यग्रसे छूता है, और उस लेह्य द्रव्यके चलानेसे प्रतिबिम्बके नष्ट होनेके भयसे चाटनेके बहानेसे धीरे-धीरे अङ्गुल्यग्रको चूमता है। इसका सारांश यह है कि उस स्त्रीके प्रतिबिम्बको छूकर अङ्गुलिको

---

१. '—घृता—' इति पाठान्तरम्। २. '—च्छलः' इति पाठान्तरम्।
३. 'ततोऽनु रिक्तैः' इति पाठान्तरम्।

मुखमें डालकर चूमनेसे उस स्त्रीको चूमनेका आनन्द पाते हुए युवकने अपने अनुरागको उस स्त्रीसे प्रकट किया ] ॥ ८५ ॥

**अराधि यन्मीनमृगाजपत्रिजैः पलैर्मृदु स्वादु सुगन्धि तेमनम् ।**
**अशाकि लोकैः कुत एव जेमितुं ? न तत्तु सङ्ख्यातुमपि स्म शक्यते ॥८६॥**

अराधीति । मीनाः मत्स्याः, मृगाः शशादयः, अजाः छागाः, पत्रिणः पक्षिणः चटकादयः,तेभ्यः जातैः तत्सम्बन्धिभिः,पलैः मांसैः । 'पलमुन्मानमांसयोः' इति मेदिनी । मृदु कोमलं, स्वादु रसवत् , सुगन्धि सुरभि, यत् तेमनं व्यञ्जनम्, अराधि अपाचि, निष्पादितमित्यर्थः । तत् तेमनं, लोकैः भोक्तृजनैः, सङ्ख्यातुं बहुत्वात् गणयितुम् अपि, न शक्यते स्म न समर्थ्यते स्म, तु पुनः, जेमितुम् अशितुं, कुत एव कथं वा, अशाकि ? शक्तैरभावि ? बहुलत्वादिति भावः । 'पाके राध्यते रध्यति जेमत्यत्ति चमती'ति भट्टमल्लः ॥ ८६ ॥

मछली, मृग ( हिरण या—खरगोश आदि पशु ), छाग और पक्षी ( तित्तिर, लावा बटेर, वत्तख आदि ) के मांसोंसे कोमल, स्वादिष्ट और सुगन्धयुक्त जिस व्यञ्जनोंको ( पाचकोंने ) पकाया, उनको ( खाने या देखनेवाले ) लोग गणना करने ( गिनने ) में भी समर्थ नहीं हुए तो खानेमें कैसे समर्थ होते ? ॥ ८६ ॥

**कृतार्थनश्चाटुभिरिङ्गितैः पुरा परासि यः किञ्चन कुञ्चितभ्रुवा ।**
**क्षिपन् मुखे भोजनलीलयाऽङ्गुलीः पुनः प्रसन्नाननयाऽन्वकम्पि सः ॥**

कृतेति । चाटुभिः अनुनयसूचकैरित्यर्थः । इङ्गितैः नयनादिचेष्टितैः, कृतार्थनः कृतसम्भोगप्रार्थनः, यः युवा, किञ्चन किञ्चित् कुञ्चितभ्रुवा कुटिलभ्रुवा, कृतभ्रुकुट्या इत्यर्थः । स्त्रिया इति शेषः, पुरा पूर्वं, परासि पर्यहारि, प्रत्याख्यात इत्यर्थः, सः युवा, भोजनलीलया भोजनव्यापारेण, तद्व्याजेन इत्यर्थः । मुखे अङ्गुलीः तत्प्रतिबिम्बस्पृष्टाङ्गुलीरित्यर्थः, क्षिपन् स्थापयन् , प्रतिबिम्बस्पृष्टाङ्गुलीचुम्बनव्याजेन तामेव चुम्बयन्निति भावः, प्रसन्नाननया तदनुरागदर्शनेन सानुरागदर्शनादिव्यञ्जितप्रसन्नमुख्या तया, पुनः अन्वकम्पि अनुकम्पितः, तद्व्याकुलतादर्शनेन सम्भोगप्रार्थनं तथा स्वीकृतमिति भावः ॥ ८७ ॥

विनय सूचक नेत्रादि व्यापारों ( या—प्रिय वचनों तथा अञ्जलिबन्धन आदि चेष्टाओं ) से प्रार्थना ( सम्भोगार्थ याचना ) करनेवाले जिस युवकको पहले ( क्रोध या अनादरसे ) थोड़ा भ्रुकुटिको टेढ़ा करनेवाली स्त्रीने तिरस्कृत कर दिया, भोजनके कपटसे मुखमें ( उस स्त्रीके प्रतिबिम्बका स्पर्श कर ) अङ्गुलि डालते हुए उस ( युवक ) को प्रसन्नमुखी उस स्त्रीने अनुकम्पित कर दिया । [ उसके अनुरागजन्य व्याकुलताको देखकर प्रसन्न हुई उस स्त्रीने सम्भोग करना स्वीकार कर लिया ] ॥ ८७ ॥

अकारि नीहारनिभं प्रभञ्जनादधूपि यच्चागुरुसारदारुभिः ।
निपीय भृङ्गारकसङ्गि तच्च तैरवर्णि वारि प्रतिवारमीदृशम् ॥ ८८ ॥

अकारीति । यत् वारि जलं, प्रभञ्जनात् वायोः, वायुसञ्चालनात् इत्यर्थः । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः । नभस्वद्वातपवनपवमानप्रभञ्जनाः ॥' इत्यमरः । नीहारनिभं हिमकल्पं, तद्वत् शीतलम् इत्यर्थः । अकारि कृतं, तथा अगुरोः कृष्णागुरुवृक्षस्य, सारदारुभिः अभ्यन्तरस्थितोत्कृष्टसुगन्धिकाष्ठैः, धूपकाष्ठैरिति यावत्, अधूपि धूपितञ्च, वासितञ्च इत्यर्थः । भृङ्गारकसङ्गि क्षुद्रकनकालुकान्तर्गतं, स्वर्णमय-जलपात्रविशेषस्थितमित्यर्थः । 'भृङ्गारः कनकालुका' इत्यमरः । तत् पूर्वोक्तं वारि, निपीय पीत्वा, प्रतिवारं प्रतिपानकालं, तैः पातृभिः, ईदृशं वक्ष्यमाणरूपम् , अवर्णि वर्णितम् ॥ ८८ ॥

जिस पानीको वायुसे वर्फके समान ठण्ढा किया गया था और अगरुके सारभूत ( मध्य-भागस्थ ) लकड़ीसे धूपित ( धूप देकर सुगन्धित ) किया गया था; ( वारातियोंने सुवर्णादिके ) झारी ( जलपात्र—हथहर या गङ्गासागरमें ) रखे गये उस पानीको वहांपर ( भोजनशालामें, या राजा भीमके महलमें ) वार-वार अच्छी तरह पीकर ( अथवा—पीकर वार-वार ) इस प्रकार ( १६।८९ ) वर्णन किया ॥ ८८ ॥

त्वया विधातर्यदकारि चामृतं कृतञ्च यज्जीवनमम्बु साधु तत् ।
वृथेदमारम्भि तु सर्वतोमुखं तथोचितः कर्त्तुमिदं-पिबस्तव ॥ ८९ ॥

त्वयेति । विधातः ! हे स्रष्टः !, त्वया भवता, अम्बु जलं, यत् अमृतम् अमृत-नामकं, तथा जीवनं जीवनसंज्ञकञ्च, यत् अकारि कृतं, तत् उभयं कर्म साधु सम्यक्, सार्थकमित्यर्थः, कृतं विहितम् , अम्बुनोऽमृततुल्यरसत्वात् जीवनाधायकत्वाच्च तादृशसंज्ञाद्वयं सार्थकमेवेति भावः । तु किन्तु, इदम् अम्बु, सर्वतः सर्वदिक्षु, मुखानि प्रवाहरूपवक्त्राणि यस्य तत् सर्वतोमुखं सर्वतोमुखमिति संज्ञाविशिष्टम् इत्यर्थः । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । कवन्धमुदकं पाथः पुष्करं सर्वतो-मुखम्' इत्यमरः । वृथैव निरर्थकमेव, आरम्भि अकारि, पेयस्य मुखवैयर्थ्यादिति भावः । अतः अस्य अम्बुनः, पिबतीति इदंपिबः जलपायी अस्मदादिः । 'पाघ्राध्मा-धेट्दृशः शः' इति शप्रत्ययः । तथा सर्वतः सर्वस्थाने मुखानि यस्य स सर्वतोमुखः, कर्त्तुं विधातुम् इत्यर्थः, तव उचितः योग्यः ; जलपायिनां बहुमुखसत्त्वे आतृप्ति जलपानं सम्भवति न त्वेकमुखेनेति तेषामेव सर्वतोमुखभावितायाः औचित्या-दिति भावः ॥ ८९ ॥

हे ब्रह्मन् ! तुमने पानीको जो 'अमृत' तथा 'जीवन' बनाया अर्थात् 'अमृत' तथा 'जीवन' नाम रक्खा, ( अमृतवत् मधुर एवं जीवनरक्षक होनेसे ) वह ठीक किया; किन्तु 'सर्वतोमुख' ( सब ओर मुखवाला ) यह नाम व्यर्थमें रक्खा, क्योंकि इस ( पानी ) को पीनेवाले हम लोगोंको वैसा करना ( 'सर्वतोमुख' एक मुखके स्थानमें सब ओर मुख

बनाना ) उचित था अर्थात् यदि पानीको 'सर्वतोमुख' ( सब ओर मुखवाला ) नाम न रखकर इस पानीको पीनेवाले हमलोगोंको सर्वतोमुख ( सब ओर मुखवाला ) करते तो अत्यन्त मधुर एवं शीतल जलको अनेक मुखोंसे हमलोग पीकर अतिशय तृप्त होते, किन्तु आपने हमलोगोंको सर्वतोमुख न बनाकर पानीको जो सर्वतोमुख बनाया वह व्यर्थ ही रहा ] ॥ ८९ ॥

सरोजकोशाभिनयेन पाणिना स्थितेऽपि कूरे मुहुरेव याचते ।
सखि ! त्वमस्मै वितर त्वमित्युभे मिथो न[1] वादाद्ददतुः किलौदनम् ॥९०॥

सरोजेति । कूरे ओदने, स्थितेऽपि भोजनपात्रे अन्ने विद्यमानेऽपीत्यर्थः, 'अन्धः कूरं भक्तमन्नमोदनं भिस्सा' इति हलायुधः । सरोजकोशस्य कमलमुकुलस्य, अभिनयः अनुकरणं यस्य तादृशेन कमलमुकुलानुकारिणा तदीयकुचग्रहणाभिलाषव्यञ्जकेन इत्यर्थः, पाणिना करेण, मुहुः पुनः पुनः एव, याचते कूरं याचमानाय, यूने इति शेषः, याचेरुभयपदित्वात् शतृप्रत्ययः । हे सखि ! त्वम् अस्मै याचमानाय, वितर कूरं देहि, द्वितीया त्वाह—त्वं वितर, इति एवं रूपेण, उभे द्वे, स्त्रियौ इति शेषः । मिथः परस्परं, वादात् विवादात्, ओदनं भक्तं, न ददतुः न परिविविषतुः, किल खलु, तस्य जनहासकरव्यापारं विलोक्य कौतुकवशात् न काऽपि तत्प्रार्थितमङ्गीचकारेति भावः ॥

( थालमें ) भात रहनेपर भी कमलकोषाकार हाथसे फिर भी भातको मांगते हुए ( युवक ) के लिए 'हे सखि ! तुम इसके लिए भात दो' ( अथवा—'हे सखि ! ( थालमें ) भात रहनेपर भी कमलकोषाकार हाथ बनाकर बार–बार भात मांगते हुए इस ( युवक ) के लिए भात दो' ) ऐसा प्रथमा सखीके कहनेपर 'तुम दो' इस प्रकार ऐसे ( परस्परके ) विवाद ( पाठा०—एक दूसरेके बातको दुहराने ) से दोनों ( –मेंसे किसी सखी ) ने भात नहीं दिया । [ कमलकोषाकार हाथ करके युवकके द्वारा भातके बहानेसे स्तनमर्दनरूप सम्भोगकी याचना करनेपर जनहासकारक लज्जावश इच्छा होनेपर भी किसीने भी उसकी प्रार्थनाको स्वीकार नहीं किया ] ॥ ९० ॥

इयं कियच्चारुकुचेति पश्यते पयःप्रदाया हृदयं समावृतम् ।
ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं मिषेण भृङ्गारधृतेः करद्वयी ॥ ९१ ॥

इयमिति । इयम् एषा स्त्री, कियन्तौ किंपरिमाणकौ, चारु मनोहरौ, पीनौ इति यावत्, कुचौ स्तनौ यस्याः सा तादृशी, इति एवं, विचार्य इति शेषः, पयः प्रददातीति पयःप्रदा तस्याः जलदायिन्याः, समावृतं वस्त्राच्छादितं, हृदयं वक्षः, [ कर्म ] पश्यते अवलोकयते, कुचपरिमाणं जिज्ञासमानाय विटाय इत्यर्थः, करद्वयी तस्याः पाणियुगली, भृङ्गारधृतेः स्वर्णमयजलपात्रधारणस्य, मिषेण व्याजेन, भृङ्गारग्रहणच्छलेनेत्यर्थः, यत् उत्तरम् एतद्भृङ्गारपरिमाणं कुचद्वयम् इत्येवंरूपम् उत्तरं, व्यतरत्

---

1. 'मिथोऽनुवादात्' इति पाठान्तरम् ।

अददात्, तेन ध्रुवं निश्चितं, मनोज्ञा चित्तज्ञा, पराभिप्रायज्ञा इत्यर्थः, करद्वयीति शेषः। पराशयज्ञत्वस्य प्रश्नोत्तरदानस्य च चेतनधर्मतया अचेतने करद्वये तदुत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ ९१ ॥

'कितने सुन्दर स्तनोंवाली यह स्त्री है ?, ऐसा ( विचारकर ) पानी परोसनेवाली स्त्रीके ढकी हुई छातीको देखते हुए युवकके लिए ( उस स्त्रीके ) दोनों हाथोंने ( सोनेकी ) झारी ( जलपात्र ) के पकड़नेके बहानेसे जो उत्तर ( 'इस झारीके समान गौरवर्ण तथा इतने ही बड़े स्तन हैं' ऐसा उत्तर ) दिया, वे दोनों हाथ मानो मनोज्ञ ( सुन्दर, पक्षा०—दूसरेके मनोगत भावको जाननेवाले ) हैं। [ वस्त्रसे ढके हुए स्तनोंकी सुन्दरता देखनेके इच्छुक युवकको उसका आशय समझकर सुवर्णमय जलपात्रको दोनों हाथोंमें लेकर युवतीने उन स्तनोंकी सुन्दरता तथा विशालता बतला दी। लोकव्यवहारमें भी किसीके संकेतित गूढाशयको समझनेवाला व्यक्ति बिना स्पष्ट कहे गूढ संकेतसे ही उसका प्रत्युत्तर दे देता है ] ॥९१॥

अमीभिराकण्ठमभोजि तद्गृहे तुषारधारामृदितेव शर्करा ।
वाहद्विषद्वष्कयणीपयःसुतं[1] सुधाह्रदात् पङ्कमिवोद्धृतं दधि ॥ ९२ ॥

अमीभिरिति। अमीभिः जन्यैः, तद्गृहे भीमभवने, तुषारधारया हिमधारया, मृदिता मर्दिता, शर्करा खण्डविकार इव तद्वत् स्वादु शुभ्रञ्चेत्यर्थः। 'शर्करा खण्डविकृतौ' इति हैमः। सुधाह्रदात् अमृतह्रदात्, उद्धृतम् उत्तालितं, पङ्कं कर्दमम्, अमृतकर्दमम् इव स्थितम् इत्युत्प्रेक्षा। वाहं हयं, द्विषन्ती विरुध्यन्ती, महिषी इत्यर्थः, 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः। 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः। सा च सा वष्कयणी चिरप्रसूता, 'चिरसूता वष्कयणी' इत्यमरः। तस्याः पयसः क्षीरात् सुतम् उत्पादितं, सुनोतेः कर्मणि क्तः। दधि दुग्धविकारः आकण्ठम् अभोजि भुक्तम् ॥ ९२ ॥

इन ( बरातियों ) ने उस ( राजा भीम ) के घरमें तुषार ( बर्फ ) की धारासे मर्दित शक्करके समान तथा अमृत-सरोवरसे निकाले गये पङ्कके समान, बकेन ( बहुत दिनोंकी ब्यायी हुई ) भैंसके दूधसे बने दहीको कण्ठ तक ( अच्छी तरह पेट भरकर ) भोजन किया। ( अथवा—……तुषार-धारासे मर्दित शक्करको तथा अमृत—……बने दहीको……… । 'पयःश्रुतम्' पाठा०—उक्त गुण विशिष्ट शक्करा तथा बकेन भैंसके पके हुए गर्म दूध और अमृत-सरोवरसे निकाले गये पङ्कके समान ( स्वादिष्टतम एवं गाढे ) ( दहीको…… ) । [ तुषार-धारामर्दित होनेसे अत्यधिक शीतल तथा शुक्लवर्ण और अमृत सरोवरोद्धृत पङ्कसदृश होनेसे अधिक स्वादिष्ट और गाढा दहीका होना सूचित होता है। बकेन भैंसके दूध-दहीका मधुरतम तथा अधिक गाढा होना तथा उसे शक्कर ( बूरे ) के साथ भोजन करना लोकप्रसिद्ध है ] ॥ ९२ ॥

---

१. 'हय-' इति पाठान्तरम्। २. '-पयःसुतम्' इति, '-पयः श्रुतम्' इति च पाठान्तरे

तदन्तरन्तः सुषिरस्य बिन्दुभिः करम्बितं कल्पयता जगत्कृता ।
इतस्ततः स्पष्टमचोरि मायिना निरीक्ष्य तृष्णाचलजिह्वताभृता ॥९३॥

तदिति । निरीक्ष्य दृष्ट्वा, सृष्ट्यादौ स्वसृष्टं दधि इति भावः । तृष्णया स्पृहया, दधिभोजनवासनया इत्यर्थः । चला चञ्चला, अधरप्रान्तलेहिनी जलस्राविणी चेति भावः । जिह्वा यस्य तस्य भावस्तत्तां, बिभर्त्ति धारयतीति तद्भृता तद्धारिणा, दधिलुब्धेनेत्यर्थः । अत एव मायिना स्वचापल्यवञ्चनाचतुरेण, अथवा, दर्शकलोकानां दृष्टिवञ्चनाचतुरेण, जगत्कृता स्रष्ट्रा, तत् दधि, अन्तरन्तः मध्ये मध्ये, सुषिरस्य । जातावेकवचनम् । सुषिराणां, छिद्राणामित्यर्थः । बिन्दुभिः मण्डलैः, करम्बितं मिश्रितं, कल्पयता रचयता, तद्दधि वर्त्तुलच्छिद्रयुक्तं कुर्वता सता इत्यर्थः । इतस्ततः सर्वप्रदेशेभ्यः, स्पष्टं व्यक्तम् , अचोरि चोरितमिव, तद्दधि इति शेषः । सफेनदुग्धे दधिरूपेण परिणते तत्र छिद्राणि दृश्यन्ते, तच्चोत्प्रेक्ष्यते यत् ब्रह्मणा लोकचक्षुरगोचरतया इतस्ततो दधिस्थसारांशो भोक्तुमिच्छयाऽपहृतः, अन्यथा कथमितस्ततस्तत्र छिद्राणि दृश्यन्ते इति ब्रह्मणोऽपि आकर्षकं माहिषदधि किमुतान्येषामिति भावः । स्पष्टमित्युत्प्रेक्षायाम् ॥ ९३ ॥

( रचनाके समयमें ) उस ( दही ) को देखकर तृष्णा ( दहीको खानेकी स्पृहा ) से चञ्चल जिह्वावाले मायावी ( दूसरोंकी दृष्टि बचाकर दहीके बीच-बीचसे सार भागको लेनेमें अतिशय चतुर ) ब्रह्माने बीच-बीचमें छिद्रोंकी बिन्दुओंसे युक्त उस ( दही ) को बनाते हुए इधर-उधरसे अर्थात् सर्वत्रसे चुरा-सा लिया है । [ ब्रह्मा जब दहीकी रचना कर रहे थे, तब उसे देखकर उन्हें भी खाने की बलवती इच्छा हो गयी और वे अपनी इच्छाको नहीं रोक सकनेके कारण उसके बीच-बीचमेंसे छेद करके दहीके उतने भागको निकाल लिया, ऐसा मालूम पड़ता है; इसी कारण इस दहीके बीच-बीचमें छिद्र दृष्टिगोचर हो रहे हैं । दहीको ब्रह्माने स्वयं बनाया, उसे वे बड़े बूढ़े होते हुए भी तृष्णायुक्त हो मायाचारितासे चुरा लिये, इसीसे उसके अत्यधिक उचित दी है । स्वादिष्ट होनेका अनुमान होता है । अतः उस दहीको बारातियोंने कण्ठतक खाया । फेनयुक्त गर्म दूधको जमानेपर उसके बीच-बीचमें बहुतसे छिद्र हो जाते हैं, ऐसा नियम है ] ॥ ९३ ॥

ददासि मे तन्न रुचेर्यदास्पदं न यत्र रागः सितयाऽपि किं तया ।
इतीरिणे बिम्बफलं रुचिच्छलाददायि बिम्बाधरयाऽरुचच्च तत् ॥९४॥

ददासीति । यत् , द्रव्यमिति शेषः । रुचेः अभिलाषस्य, आस्पदं पात्रं, विषयीभूतमित्यर्थः । तत् मे मह्यं, न ददासि न यच्छसि, यत्र यस्मिन् द्रव्ये, रागः अनुरागः, रुचिरित्यर्थः, न नास्ति, तया सितया शर्करयाऽपि, 'शर्करा सिता' इत्यमरः । किम् ? अलं, न किमपि प्रयोजनमित्यर्थः । रक्तवस्तुरागिणः किं सितवस्तुना ? इति च गम्यते । इतीरिणे इतिवादिने, अधरबिम्बचुम्बनेच्छया एवं भाषिणे रागिणे

इत्यर्थः । रुचिच्छलात् अभिलाषव्याजात्, 'छलप्रयोगे छलप्रयोगः एव कर्त्तव्यः' इति न्यायात् इति भावः । बिम्बमिव अधरः यस्याः तया बिम्बाधरया बिम्बोष्ठ्या स्त्रिया; बिम्बफलम् ओष्ठोपमाफलम्, अदायि दत्तं, मिषान्तरेणाधरबिम्बं याचितं मिषान्तरात् बिम्बफलं दत्तम् इत्यर्थः, तत् बिम्बफलञ्च, अरुचत् तस्मै अरोचिष्ट, रुचिकरमभूदित्यर्थः, तस्य प्रियाधरबिम्बप्रतिनिधित्वादिति भावः । रुच दीप्तौ प्रीत्यर्थाल्लुङ् 'द्युद्भ्यो लुङि' इति परस्मैपदं, 'पुषादिद्युतादि—' इत्यादिना च्लेरङादेशः ॥ ९४ ॥

'जो ( पदार्थ, अधर ) रुचि ( अभिलाषा, पक्षा०—रुचिकर होने ) का स्थान है अर्थात् मुझे रुचता है, उसे मेरे लिए नहीं देती हो; जिसमें राग ( लालिमा, पक्षा०—अनुराग ) नहीं है, उस सिता ( श्वेत पदार्थ, पक्षा०—शक्कर ) से भी क्या ? अर्थात् मुझे कुछ प्रयोजन नहीं है; ( क्योंकि लाल वस्तु चाहनेवालेको श्वेत वस्तुसे, तथा पक्षा०—तुम्हारे अधरकी मधुरताका आस्वादन चाहनेवालेको शक्करसे कोई प्रयोजन नहीं होता )' ऐसा कहनेवाले ( रागी व्यक्तिके लिए ) रुचि ( अभिलाष ) के कपटसे बिम्बफलके समान अधरवाली ( परोसनेवाली ) स्त्रीने ( लाल वर्णवाले ) बिम्बफलको दिया और वह उस रागीको रुचिकर हुआ । [ उस रागी युवकने कपटसे उस स्त्रीके अधरको मांगा तो 'शठे शाठ्यं समाचरेत्' नीतिके अनुसार उस स्त्रीने भी उसके लिए रक्तवर्ण अधरको न देकर बिम्बफलको दे दिया और वह सरस एवं स्वादिष्ट होनेसे या प्रियाधरतुल्य होनेसे उसको रुचिकर हुआ ] ॥ ९४ ॥

**समं ययोरिङ्गितवान् वयस्ययोस्तयोर्विहायोपहृतप्रतीङ्गिताम् ।**
**अकारि नाकूतमवारि सा यया विदग्धयाऽरञ्जि तयैव भाववित् ॥९५॥**

सममिति । ययोः वयस्ययोः सहचर्योः विषये, समं युगपत्, इङ्गितवान् दृगादिसंज्ञावान्, नयनभ्रमणादिचेष्टाविशेषं कुर्वन्नित्यर्थः । भाववित् गूढाभिप्रायाभिज्ञः, चातुर्यवेत्ता इत्यर्थः । कश्चित् विट इति शेषः । तयोः मध्ये उपहृतप्रतीङ्गितां दत्ततदभिप्रेताङ्गीकारसूचकप्रतिसंज्ञां, प्रथमवयस्यामिति भावः । विहाय परिहृत्य, जनसमाजे सखीसमक्षं चक्षुरिङ्गितादिकरणादियमचतुरेति निश्चित्य तां प्रत्यननुरागेण तां हित्वा इति भावः । यया विदग्धया चतुरया, आकूतं तदभिप्रेताङ्गीकारसूचकं प्रतीङ्गितं, न अकारि न कृतं, बहुजनसमक्षं तत्करणे प्रकाशभिया लज्जातिशयादिति भावः । किन्तु सा प्रथमा इति यावत्, अवारि वारिता, अयमस्यां विरक्तः मयि चानुरक्तः तत् कथमियं मत्प्रियं प्रति इङ्गितं करोतीति सापत्न्येर्ष्यया जनसमक्षमिङ्गितादिकरणमनुचितमिति व्याजेन द्वितीयया सा इङ्गितादिचेष्टातो निवारितेत्यर्थः, तया द्वितीययैव विदग्धया, अरञ्जि रञ्जितः, आकृष्टः इत्यर्थः । द्वितीयायास्तथाविधगूढभावदर्शनेन सन्तुष्टतया तस्यामेवानुरक्त इति भावः । एतेन प्रथमापेक्षया द्वितीया गम्भीरा सोऽपि भावज्ञः तत् युक्तम् एतदिति गम्यते ॥ ९५ ॥

जिन दो सखियोंके विषयमें एक साथ संकेत ( कटाक्ष आदिके द्वारा अनुरागसूचक

भावका प्रदर्शन ) करनेवाले भावज्ञानी ( कामी युवक ) ने उन दोनोंमेंसे प्रतिसंकेत करनेवाली ( प्रथमा सखीको ) छोड़कर उस विदग्धा सखीके साथ अनुरक्त हुआ, जिस ( दूसरी सखी ) ने अपने भावप्रदर्शन नहीं किया, अपितु ( भावप्रदर्शन करनेवाली ) उस सखीको मना किया। [ किन्हीं दो सखियोंमें अनुरक्त किसी युवकने एक साथ ही अपनी चेष्टाओंसे अपना अनुरक्त होना सूचित किया। यह देख उन दोनोंमेंसे एक सखीने सब लोगोंके सामने ही प्रत्युत्तरमें स्वीकृतिसूचक अपना भाव प्रदर्शित किया और उसे भाव प्रदर्शित करती हुई देखकर 'यह युवक तो मुझमें अनुरक्त है तो तुम अपना भाव प्रदर्शितकर इसे अपनी ओर क्यों आकृष्ट कर रही है?' इस प्रकार सपत्नीत्वको मनमें रखती हुई दूसरी सखीने उस भाव प्रदर्शित करनेवाली प्रथमा सखीको 'तुम ऐसी निर्लज्ज हो कि सब लोगोंके सामने अपना कामानुराग इस पुरुषसे प्रकट करती हो' ऐसा कहकर मना किया, उसे इस प्रकार मना करते देखकर दूसरेके भावको जाननेवाले उस चतुर युवकने 'ये दोनों मुझसे अनुराग करती हैं' किन्तु इनमें-से सब लोगोंके सामने ही अपना भाव प्रदर्शित करनेसे प्रथमा सखी अविदग्ध ( चतुर नहीं ) है, और अपने स्वार्थकी सिद्धिके लिये व्याजान्तरसे मना करती हुई दूसरी सखी विदग्ध है, अत एव उस दूसरी सखीमें ही अनुरक्त हुआ। चतुर पुरुषका अचतुरा प्रथमा सखीको छोड़कर चतुरा द्वितीया स्त्रीमें अनुरक्त होना उचित ही है ] ॥ ९५ ॥

**सखीं प्रति स्माह युवेङ्गितेक्षिणी क्रमेण तेऽयं क्षमते न दित्सुताम् ।**
**विलोम तद्व्यञ्जनमर्प्यते त्वया वरं किमस्मै न नितान्तमर्थिने ? ॥ ९६ ॥**

सखीमिति । युवेङ्गितेक्षिणी युवाभिप्रायसूचकनयनादिचेष्टादर्शिनी, काचित् तरुणीति शेषः । सखीं परिवेषिकां वयस्यां, प्रति आह स्म उवाच । 'लट् स्मे' इति भूते लट् । किमिति ? अयं युवा, ते तव सम्बन्धिनीं, क्रमेण पारम्पर्येण, दित्सुतां परिविविक्षुतां, न क्षमते न सहते, एकमेकं कृत्वा उत्तरोत्तरक्रमेण परिवेषणविलम्बं सोढुं न शक्नोति इत्यर्थः । अतः त्वया नितान्तमर्थिने अत्यन्तव्यग्रतया याचकाय, अस्मै यूने, वरम् उत्कृष्टं, तत् व्यञ्जने निष्ठानं, विलोम विपरीतं यथा तथा, व्युत्क्रमेण इत्यर्थः । किं न अर्प्यते ? कथं न दीयते ? अपि तु व्यग्राय शीघ्रदेयमिति व्याजोक्तिरिति भावः । अयं युवा, क्रमेण आलिङ्गनस्तनमर्दनचुम्बनादिव्यापारक्रमेण, दित्सुतां मैथुनार्थं वराङ्गदानेच्छुतां, तद्दानविलम्बमित्यर्थः, न क्षमते न सहते, अतस्त्वया विलोम अरोमकम् , अत एव वरम् उत्कृष्टं , व्यञ्जनम् अवयवः, वराङ्गमित्यर्थः । 'व्यञ्जनं श्मश्रुनिष्ठानचिह्नेष्ववयवेऽक्षरे' इति यादवः । नितान्तमर्थिने अस्मै किं न अर्प्यते ? अपि तु शीघ्रमेवार्पय इत्यर्थान्तरस्यापि विवक्षितत्वात् केवल प्रकृतश्लेषः ॥ ९६ ॥

( कामी ) युवककी चेष्टाओंको देखनेवाली स्त्रीने सखीसे कहा—'यह ( युवक ) तुम्हारी क्रमशः परोसनेकी इच्छाको नहीं सहन करता है, अतएव अत्यधिक याचने ( मांगने ) वाले

इस ( युवक ) के लिये क्रमको छोड़कर श्रेष्ठ व्यञ्जनको तुम क्यों नहीं देती हो ?' पक्षा०··· 'कहा—आलिङ्गन-चुम्बनादि बाह्य सम्भोगक्रमसे तुम्हारी मदनमन्दिर ( भग ) को देनेकी इच्छाको यह युवक नहीं सहन करता, अत एव तुम अधिक याचना करनेवाले अर्थात् शीघ्र मैथुनेच्छुक इस ( युवक ) के लिए श्रेष्ठ ( अथवा—अवर अर्थात् अधोभागस्थ ) तथा लोमरहित उस वराङ्ग ( मदन—मन्दिर ) को क्यों नहीं देती ?' [ यह युवक इतना कामुक हो गया है कि तुम्हारे आलिङ्गनादिके क्रमसे मैथुनमें विलम्बको नहीं सहन कर सकता अतः तुम्हें आलिङ्गन-चुम्बनादि बाह्याङ्गसम्भोगके क्रमको छोड़कर इसके साथ शीघ्र मैथुन करना चाहिये ] ॥ ९६ ॥

**समाप्तिलिप्येव भुजिक्रियाविधेर्दलोदरं वर्त्तुलयाऽऽलयीकृतम् ।**
**अलङ्कृतं चीरवटैस्तदाऽश्नतां[1] रराज पाकार्पितगैरिकश्रिया ॥ ९७ ॥**

समाप्तीति । तदा तत्काले, अश्नतां भुञ्जानानां, जन्यामिति शेषः । दलोदरं कदलीपत्रादिभोजनपात्राभ्यन्तरं, पाकेन विविधसंस्कारकद्रव्यद्वारा पाकविशेषेण, अर्पिता सम्पादिता, गैरिकस्य शैलजरक्तवर्णधातुविशेषस्य, श्रीरिव श्रीः येषां तैरिति विभक्तिव्यत्ययेनान्वयः । पाकेन रक्तवर्णैरित्यर्थः । तथा वर्त्तुलया वर्त्तुलैरिति विभक्तिव्यत्ययः । वृत्ताकारैः, वटानां वर्त्तुलत्वादिति भावः । चीरवटैः दुग्धपक्वमाषनिष्पादितवटकाख्यपिष्टकविशेषैः, अलङ्कृतं शोभितं सत्, तदर्पणादिति भावः । पाकार्थं रक्तवर्णसम्पादनार्थम्, अर्पितेन निक्षिप्तेन, गैरिकेण रक्तवर्णधातुविशेषेण, श्रीः रक्तकान्तिर्यस्यां तादृशया, तथा वर्त्तुलया वर्त्तुलाकारया, वृत्ताकारः रक्तवर्णश्चिह्नविशेषः लिपिशेषे क्रियते इति व्यवहारादिति भावः । भुजिक्रियाविधेः भुजधात्वर्थानुष्ठानस्य, भोजनव्यापारस्येत्यर्थः, समाप्तिलिप्या समाप्तिसूचकवर्णविशेषविन्यासेन लिप्यन्तरे प्रवृत्त्यभावात्, अन्यत्र—व्यञ्जनान्तरे रुच्यभावादिति भावः । आलयीकृतम् आस्पदीकृतं, चिह्नीकृतमित्यर्थः । दलोदरं तालपत्रादिलेख्यपत्राभ्यन्तरमिव, रराज शुशुभे, रक्तवर्णतादृशवटकैः शोभते स्म । तादृशवटकप्रदानान्तरमेव जन्यानां तेषां व्यञ्जनान्तरभोजनप्रवृत्तिर्विनष्टेति भावः । अत्रोपमालङ्कारः ॥९७॥

उस समय भोजन करते हुए बरातियोंके केलेके पत्तेका मध्यभाग अधिक पकानेसे गेरुवत् लाल, भोजनके समाप्ति-सूचक लिखावटके समान क्षीरवटों ( दूध डालकर पकाये गये बड़ों ) से अलंकृत होकर ऐसा शोभित हुआ; जैसा लाल होनेके लिए डाले गये गेरुसे शोभनेवाली समाप्तिसूचक लिपिसे ग्रन्थोंके ताडपत्रादिका पत्र ( पन्ना ) शोभता है। [इसका विशद अभिप्राय यह है कि जिस प्रकार ग्रन्थके अन्तमें 'छ ॥ छ ॥ छ ॥' इत्यादि अक्षर या—'॥ ० ॥ ० ॥ ० ॥' इत्यादि गोलाकार चिह्नविशेष लिखनेसे उस ग्रन्थका पन्ना शोभता है और उससे उस ग्रन्थका समाप्त होना जाना जाता है, उसी प्रकार राजा भीमके यहां

1. 'तदश्नताम्' इति पाठान्तरम् ।

भोजन करते हुए बरातियोंके अधिक पकाने ( सेंकने ) से गेरुके समान लालवर्ण तथा आकारमें गोल-गोल क्षीरवट परोसे गये तो उनसे वह भोजनपात्रभूत केले आदिका पत्ता शोभित होने लगा और उन वड़ोंसे भोजनकर्ताओंको दूसरा कोई व्यञ्जन खानेकी रुचि नहीं रह गयी, अत एव वे 'वड़े' ही मानो भोजनके समाप्ति-सूचक लिपिसे हो गये। उन क्षीरवटोंके परोसनेपर भोजनकर्ता वराती अन्य व्यञ्जनोंको छोड़कर केवल उसे ही खाने लगे ] ॥ ९७ ॥

चुचुम्ब नोर्वीवलयोर्वशीं परं पुरोऽधिपारि प्रतिबिम्बतां विटः ।
पुनः पुनः पानकपानकैतवाच्चकार तच्चुम्बनचुङ्कृतान्यपि ॥ ९८ ॥

चुचुम्बेति । विटः कश्चित् कामुकः, पुरः अग्रे, पार्याम् अधि अधिपारि कर्कर्याम्, पानीयपात्र्याम् इत्यर्थः । 'कर्करीपूरयोः पारी पादरज्ज्वाञ्च हस्तिनः' इति विश्वः । 'वारिवहनभाण्डम्' इति स्वामी । प्रतिबिम्बितां प्रतिफलिताम्, उर्वीवलयोर्वशीं भूमण्डलोर्वशीं, सर्वोत्कृष्टरूपवतीमित्यर्थः । स्त्रीमिति शेषः । परं केवलं, न चुचुम्ब, न चुम्बितवान्, किन्तु पुनः पुनः वारं वारं, पानकपानकैतवात् पानीयपानच्छलात्, तस्याः प्रतिबिम्बिताया भूमण्डलोर्वश्या इत्यर्थः । चुम्बने अधरसुधापाने, चुङ्कृतानि अपि चूषणचुङ्कारशब्दानपि, चकार कृतवान् ॥ ९८ ॥

किसी विट ( धूर्त ) ने आगे कसोरे ( पन्ना रखे हुए वर्तन ) में प्रतिबिम्बित हुई पृथ्वीमण्डलकी उर्वशी अर्थात् अत्यन्त सुन्दरी स्त्रीका केवल चुम्बन ही नहीं किया, किन्तु पन्ना पीनेके कपटसे बार-बार उसके चुम्बनसम्बन्धी चुङ्कृत ( 'चूँ-चूँ' ऐसा ध्वनि-विशेष ) को भी किया । [ कसोरेमें रक्खे हुए पन्ना पीनेके कपटसे उस सुन्दरीके प्रतिबिम्बको चूमते हुए उस विटने चुम्बनकालिक 'चूँ-चूँ' ध्वनि-विशेषको भी करके उसमें अपना अनुराग प्रकट किया ] ॥ ९८ ॥

घनैरमीषां परिवेषकैर्जनैरवर्षि वर्षोपलगोलकावली ।
चलद्भुजाभूषणरत्नरोचिषा धृतेन्द्रचापैः श्रितचान्द्रसौरभा ॥ ९९ ॥

घनैरिति । चलन्त्यः परिवेषणार्थम् इतस्ततः भ्रमन्त्यः, याः भुजा बाहवः, तासु यानि भूषणरत्नानि रत्नखचितालङ्काराः, तेषां रोचिषा प्रभया एव, धृतः गृहीतः, इन्द्रचापः इन्द्रचाप इव इत्यर्थः । यैः तादृशैः, परिवेषन्तीति परिवेषकाः तैः अन्नव्यञ्जनादिदातृभिः, जनैः लोकैरेव, घनैः स्त्रीजनरूपमेघैः, अमीषां भोक्तॄणां कृते, श्रितचान्द्रसौरभा प्राप्तकर्पूरसम्बन्धिगन्धा, अन्यत्र—चन्द्र एव चान्द्रः, सूर एव सौरः, तयोर्भाः प्रभा, श्रिता व्याप्ता यया सा, करकाणां रात्रिदिनयोः सम्भाव्यमानत्वेन चन्द्रसूर्ययोः क्रमेण कान्तिव्याप्तत्वं सम्भवति, अथवा शैत्योज्ज्वलत्वाभ्यां तत्कान्तिसदृशीति भावः । वर्षोपलाः करका इव, गोलकाः घुटिकाकाराः पिष्टकविशेषाः, तेषाम् आवली राशिः, अवर्षि वृष्टा, प्रदत्तेत्यर्थः ॥ ९९ ॥

(परोसते समय) चञ्चल वाहुओंके भूषणोंमें जड़े हुए रत्नोंकी कान्तिसे इन्द्रधनुष (की शोभा) को प्राप्त किये हुए वहुतसे परोसनेवाले लोगों (पक्षा०—परोसनेवालेरूप मेघों) ने इन (भोजन करते हुए वरातियों) के लिए सुगन्धि (पक्षा०—चन्द्रमा तथा सूर्यकी कान्ति) से युक्त (शीतल तथा दीप्तियुक्त होनेसे चन्द्रमा तथा सूर्यके सदृश, अथवा—चन्द्रमाके समान मनोज्ञतासे युक्त, अथवा—चन्द्रकान्त तथा सूर्यकान्त मणिकी शोभासे युक्त) ओलेंके समान (गोले-गोले, शीतल एवं सन्तापहारक) लड्डुओं (पक्षा०—लड्डूरूपी ओलों) के समूहोंको वरसाया अर्थात् परोसा। [ मेघ जब ओलोंको वरसाते हैं तो वे (मेघ) इन्द्रधनुषको धारण कर लेते हैं और वे ओले दिनमें सूर्य और रात्रिमें चन्द्रकी शोभासे युक्त हो जाते हैं, उसी प्रकार परोसते समय वाहुके भूषणोंमें जड़े हुए रत्नोंकी शोभासे इन्द्रधनुषयुक्त मालूम पड़ते हुए वहुत-से परोसनेवाले लोगोने उन भोजनकर्ता वरातियोंके लिए कपूर की सुगन्धियुक्त ओलोंके समान गोले-गोले एवं शीतल लड्डुओंको परोसा ] ॥ ९९ ॥

**कियद्वहु व्यञ्जनमेतदर्प्यते ? ममेति तृप्तेर्वदतां पुनः पुनः।**
**अमूनि सङ्ख्यातुमसावढौकि तैश्छलेन तेषां कठिनीव भूयसी ॥१००॥**

**कियदिति। मम एतत् कियत् कतिपरिमाणं, वहु प्रभूतं, व्यञ्जनं शाकमांसादि-रूपतेमनादिकं, कति व्यञ्जनानीत्यर्थः। अर्प्यते ? दीयते ? तृप्ता वयम् अतो नापरं दातव्यम् इति भावः। तृप्तेः भोजनजन्यसन्तोषात् हेतोः, इति एवं, पुनः पुनः वदतां वारं वारं कथयतां, तेषां भोक्तृणां, छलेन व्याजेन, तेषां तादृशवाक्येन कति व्यञ्ज-नानि अस्माभिर्दत्तानि ? इति सङ्ख्याजिज्ञासैवाभिप्राय इति व्याजेन इत्यर्थः। अमूनि व्यञ्जनानि, सङ्ख्यातुं गणयितुं, भूयसी वहुतरा, कठिनी इव करिका इव, भूयस्यः सङ्ख्यानघुटिकाः इवेत्यर्थः। 'करिका कठिनी' इति विश्वः। तैः परिवेषकैः, असौ गोलकावलिः, प्रागुक्तपिष्टकविशेषराशिरित्यर्थः। अढौकि ढौकिता, उपहृता इत्यर्थः। भवद्भिः व्यञ्जनवाहुल्यं कथ्यते, अतः आभिः कठिनीभिः तानि गणयेति च्छ-लेनेव भूयसी कठिनी अर्पितेवेति भावः। अत्रोत्प्रेक्षालङ्कारः ॥ १०० ॥**

हमारे लिए यह कितना व्यञ्जन दे रहे हो ? (हम तृप्त हो गये, अव मुझे कुछ नहीं चाहिये) ऐसा तृप्तिके कारणसे वार-वार कहते हुए भोजनकर्ता वरातियोंके लिए ('कितना व्यञ्जन दे रहे हो ?' ऐसा तुम लोग पूछते हो तो लो इनके द्वारा गिन लो कि हमने कितने व्यञ्जन दिये हैं, इस प्रकारके) छलसे उन व्यञ्जनोंको वहुत-सी खड़ियों (लिखनेके चाकों) को उढेल (अधिक परिमाणमें दे) दिया। [ जिस प्रकार वहुत अधिक पदार्थोंकी गणना करनेमें असमर्थ व्यक्तिको खड़ियासे लिख-लिखकर गणना करनी पड़ती है, उसी प्रकार 'हम लोगोंने कितने व्यञ्जन परोसे' यह तुम गणना नहीं कर सकते हो तो लो इन व्यञ्जनरूपी खड़ियोंसे गिन लो कि हम लोगोंने कितने व्यञ्जन परोस दिये। भोजनकर्ता

वरातियोंके तृप्त हो जानेके कारण वार-वार मना करने पर भी परोसनेवाले लोग आग्रह-पूर्वक अधिक व्यञ्जनोंको परोस रहे थे ]॥ १०० ॥

विदग्धबालेङ्गितगुप्तिचातुरीप्रवह्लिकोद्धाटनपाटवे हृदः ।
निजस्य टीकां प्रबबन्ध कामुकः स्पृशद्भिराकूतशतैस्तदौचितीम् ॥१०१॥

विदग्धेति । विदग्धबालायाः चतुराङ्गनायाः, इङ्गितगुप्तिचातुरी भ्रूभङ्गयाद्याकार-गोपनचातुर्यं, निगूढार्थचेष्टाप्रयोगचातुरीत्यर्थः । सा एव प्रवह्लिका दुर्बोध्यत्वात् प्रहेलिकापराख्यो निगूढार्थोक्तिविशेषः । 'प्रवह्लिका प्रहेलिका' इत्यमरः । तस्याः उद्धाटने बोधने, अर्थाद्भेदने इत्यर्थः । यत् पाटवं सामर्थ्यं, तस्मिन् विषये, तत् तत्र, तादृशार्थोद्भेदने इत्यर्थः । औचितीम् आनुकूल्यं, स्पृशद्भिः प्राप्तैः, तदनुकूलैरित्यर्थः । तवेङ्गितगुप्तिचातुर्यं मया ज्ञातमित्यर्थप्रकाशकैस्तदीयेङ्गितानुरूपैः इति भावः । आकूतानां शतैः अभिप्रायव्यञ्जकैः बहुविधेङ्गितैः, कामुकः कश्चित् कामी, निजस्य आत्मीयस्य, हृदः हृदयस्य, टीकां व्याख्याम् , अभिप्रायप्रकाशनमित्यर्थः । प्रबबन्ध प्रकर्षेण कृतवान् , स्वहृदयं तस्यै निवेदयामास इत्यर्थः । उचितोत्तरदानादेव प्रश्ना-र्थप्रकाशनात् तदेव तद्व्याख्यानमिति भावः ॥ १०१ ॥

किसी ( चतुर कामुक ) ने चतुर बालाकी चेष्टाके अभिप्राय-चातुर्यरूपी पहेली (बुझौवल) के स्पष्ट करनेकी चतुरताके विषयमें उसके योग्यता ( तदनुकूलता ) से युक्त सैकड़ों अभिप्रायोंसे अपने हृदयकी व्याख्या को कर दिया । ( अथवा—चतुर ( युवक ) तथा बाला—इन दोनोंके अभिप्राय-चातुर्यरूपी……। अथवा—क्रमशः चतुर ( युवक ) की चेष्टा तथा बाला की गुप्ति ( चुपके से चेष्टा विशेष )—इन दोनोंके चातुर्य……) । [ किसी चतुर बालाने स्वाभाविक लज्जावश अपनी गुप्त चेष्टाद्वारा अपना अभिप्राय सूचित किया, उसे दूसरे कामुकने समझकर तदनुकूल बहुत-सी अभिप्रायसूचक चेष्टाओंसे अपने हृद्गत भावको उस प्रकार प्रकट किया, जिस प्रकार किसी गुप्ताभिप्रायवाली पहेलीको उसके अभिप्रायको जाननेवाला व्यक्ति अनेक प्रकारकी व्याख्याकर स्पष्ट करता है । प्रकृतमें चतुर बालाके द्वारा गुप्त चेष्टा द्वारा अपना अनुराग प्रकट करनेपर कामुकने भी उसके अनुकूल बहुत-सी स्पष्ट चेष्टाओंद्वारा अपने अनुरागको प्रकट किया अथवा—विदग्ध युवक तथा बालाकी गुप्त चेष्टाओंद्वारा उन दोनोंके अभिप्रायको समझकर किसी अन्य कामुकने 'मैं तुम दोनोंकी गुप्त चेष्टाओंसे परस्पर अनुरागको समझ गया, अतः मैं उस युवकसे अधिक चतुर हूं, इस कारण तुम उस युवकको छोड़कर मेरे साथ अनुराग करो' इस अभिप्रायसे स्पष्ट रूपसे बहुत-सी चेष्टाओंको किया ]॥ १०१ ॥

घृतप्लुते भोजनभाजने पुरःस्फुरत्पुरन्ध्रीपतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयं नखैर्लिलेखाथ ममर्द निर्दयम् ॥१०२॥

घृतेति । युवा कश्चित्तरुणः, पुरः अग्रे, घृतेन प्लुते सिक्ते, भोजनभाजने भाजन-

पात्रे, स्फुरन्ती प्रकाशमाना, या पुरन्ध्रयाः अङ्गनायाः, प्रतिविम्बिता प्रतिफलिता, आकृतिः शरीरं, तस्याः उरसि वक्षसि, लड्डुकद्वयं वर्त्तुलाकृतिमिष्टान्नविशेषपिण्ड-युग्मं, निधाय स्थापयित्वा, नखैः लिलेख विददार, अथ अनन्तरं, निर्दयम् अशिथिलं यथा तथेत्यर्थः। ममर्द पीडयामास, तदीयकुचकुम्भयुगलभावनयेति भावः ॥१०२॥

( भोजन करनेवाले किसी वराती ) युवकने घृतसे व्याप्त भोजनपात्रमें सामने स्फुरित होती हुई ( परोसनेवाली ) स्त्रीके प्रतिविम्बित आकृति ( शरीर ) की छातीपर दो लड्डुओंको रखकर नाखूनोंसे लेखन किया ( खरोचा ) और वादमें निर्दयतापूर्वक अर्थात् अच्छी तरह मर्दन किया । [ 'जब हम दोनोंका समागम होगा तब इसी प्रकारसे तुम्हारे स्तनोंको मर्दन करूंगा' ऐसा, अथवा—'तुम्हारे स्तनोंको इस प्रकार मर्दित करना चाहता हूं' ऐसा अपना अभिप्राय उस युवकने वतलाया ] ॥ १०२ ॥

विलोकिते रागितरेण सस्मितं ह्रियाऽथ वैमुख्यमिते सखीजने ।
तदालिरानीय कुतोऽपि शार्करीं करे ददौ तस्य विहस्य पुत्रिकाम् ॥१०३॥

विलोकिते इति । सखी एव जनः तस्मिन् निजसख्यां, रागितरेण अत्यन्तानुर-क्तेन, केनचित् कामुकेनेति शेषः । सस्मितम् ईषद्धास्यसहितं, विलोकिते दृष्टे, अथ विलोकनानन्तरं, ह्रिया लज्जया, वैमुख्यं पराङ्मुखताम्, इते गते सति, एतेन तस्याः अपि तस्मिन् तथा अनुरागः सूचितः । तदालिः तस्य सखीजनस्य, आलिः सखी, कुतः अपि कस्मादपि स्थानात्, शार्करीं शर्करामयीम् । विकारार्थात्अण् यप्र-त्ययः । पुत्रिकां पाञ्चालिकां, कृत्रिमपुत्रीम् इत्यर्थः। तत्परिवेषणच्छलेनेति भावः । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । पुत्रीव प्रतिकृतिरस्याः सा पुत्रिका 'इवे प्रतिकृतौ' इति कन् 'केऽणः' इति ईकारह्रस्वः । आनीय सङ्गृह्य, तस्य रागितरस्य, करे पाणौ, विहस्य किञ्चित् हसित्वा, ददौ अर्पयामास । वैमुख्या-दननुरागसन्देहो न कर्त्तव्यः, परन्तु एवम् एषा सखी तव करगता यथा भवेत् तथा करिष्यामि इति सूचयामासेति भावः ॥ १०३ ॥

अतिशय रागी ( किसी युवकके द्वारा ) मुस्कुराकर देखी गयी सखीके लज्जासे मुख फेर देनेपर उसकी सखीने शक्करकी पुतली ( जनाकार भक्ष्यपदार्थ ) को लाकर हँसकर ( परोसनेके व्याजसे ) उस ( रागी युवक ) के हाथमें दे दिया । [ 'इस शक्करकी पुतलीके समान अधर चुम्बनादिमें मधुर इस अपनी सखीको मैं तुम्हारे अधीन कर दूंगी, अत एव तुम इसे हस्तगत ही समझो' ऐसा, अथवा—'इस पुतलीके समान मुझे तुम अपने हाथमें आयी हुई अर्थात् वशवर्तिनी समझो' ऐसा सङ्केत किया ] ॥ १०३ ॥

निरीक्ष्य रम्याः परिवेषिका ध्रुवं न भुक्तमेवैभिरवाप्ततृप्तिभिः ।
अशक्नुवद्भिर्वहुभुक्तवत्तया यथोज्झिता व्यञ्जनपुञ्जराजयः ॥ १०४ ॥

निरीक्ष्येति । वहुभुक्तवत्तया यथेष्टं कृतभोजनतया, अशक्नुवद्भिः निःशेषं भोक्तुम्

अपारयद्भिः, जनान्तरैरिति शेषः। यथा व्यञ्जनपुञ्जराजयः शाकमांसाद्युपकरणराशीनां श्रेणयः, उज्झ्यन्ते इति शेषः, बहुलपरिवेषणादिति भावः। तथा एभिः भोक्तृभिः जन्यजनैरपि, रम्याः रमणीयाः, परिवेषिकाः परिवेषणकारिण्यः तरुण्यः, निरीक्ष्य विलोक्य एव, अवाप्ततृप्तिभिः तावतैव तृप्तैः सद्भिः, व्यञ्जनपुञ्जराजयः उज्झिताः त्यक्ताः, न भुक्तं न खादितं, ध्रुवम् इत्युत्प्रेक्षायाम्, अन्यथा कथमेते भोज्यराशयः पात्रेषु तथैव दृश्यन्ते इति भावः ॥ १०४ ॥

बहुत भोजन करनेसे ( थालमें परोसे गये सब व्यञ्जनोंको भोजन करनेमें ) असमर्थ इन ( भोजन करनेवाले वरातियों ) ने व्यञ्जन-समूहके ढेरोंको जैसा छोड़ दिया है, उससे ऐसा ज्ञात होता है कि परोसनेवाली सुन्दरियोंको देखकर तृप्त हुए इन लोगोंने मानों भोजन किया ही नहीं है। [ भोजनकर्ता वरातियोंने बहुत-से भोज्य पदार्थोंको नहीं खा सकनेके कारण बहुत मात्रामें जूठा छोड़ दिया ] ॥ १०४ ॥

पृथक्प्रकारेङ्गितशंसिताशयो युवा ययोदासि तयाऽपि तापितः ।
ततो निराशः परिभावयन् परामये ! तयाऽतोषि सरोषयैव सः ॥१०५॥

पृथगिति। यया स्त्रिया, पृथक्प्रकारेङ्गितसंशिताशयः नानाविधचेष्टाप्रकाशिताभिप्रायः, युवा कश्चित्तरुणः, उदासि प्रतीङ्गिताद्यकरणेन औदासीन्यं प्रापित इत्यर्थः, तयाऽपि रोषात् अनादरपरया अपि तयैव स्त्रिया, तापितः सन्तापितः दुःखं प्रापितः इत्यर्थः, प्रतीङ्गितादर्शनेन स्वाभीष्टलाभनैराश्यात् दुःखितोऽभूदिति भावः, यो यत्रोदासीनः तस्य तदलाभजन्यं दुःखं न भवति, प्रकृते तु तस्यामुदासीनस्यापि तयैव जनितमिति विरोधार्थकोऽपिशब्दः, ततः औदासीन्यात्, निराशः तत्प्राप्तौ हताशः सन्, पराम् अन्यां, परिभावयन् इङ्गितादिना विभावयन्, सानुरागमवलोकयन् इति यावत्, सः युवा, सरोषया अन्यावलोकनरुष्टया, तयैव पूर्वया एव, अतोषि तोषितः, न तु द्वितीयया इति भावः, तोषयतेः कर्मणि लुङ्। अये इति आश्चर्ये, औदासीन्यं जनयित्र्याऽपि दुःखं जनितं सरोषयैव सन्तोषो जनित इति विरुद्धार्थद्वयसमावेश आश्चर्यंकर इत्यर्थः। पूर्वया तदनुरक्तयाऽपि जनसमक्षमिङ्गितादिकरणमयुक्तमिति बुद्ध्या पूर्वं प्रतीङ्गितादिना न सम्भावितः, अत एव युवा दुःखितः, किन्तु तस्या गूढाभिप्रायमज्ञात्वा इयं मय्यननुरागिणीति निश्चित्यान्यां प्रति तस्मिन् सानुरागं विलोकयति सति तद्दर्शनेन पूर्वा सा सरोषा जाता, सानुरागैव सरोषा भवतीति व्याप्तेः तस्या रोषदर्शनेनानुरागमनुमाय स सन्तुष्ट इति भावः ॥ १०५ ॥

अनेक प्रकारकी चेष्टाओंसे अपने अभिप्राय ( अनुराग ) को वतलानेवाले युवकको ( उसके प्रति सङ्केतसे अपना अभिप्राय नहीं वतलानेवाली ) जिस स्त्रीने उदासीन कर दिया और उससे सन्तप्त ( यह स्त्री मुझे नहीं चाहती इस भावनासे दुखित ) हुआ, इसके बाद निराश होकर दूसरी स्त्रीको सानुराग देखते हुए उस युवकको क्रोधयुक्त उसी ( पहली )

स्त्रीने सन्तुष्ट कर दिया, यह आश्चर्य है। [ अनुरागी उस युवकके अनेक प्रकारकी चेष्टाओंके करनेपर बहुत लोगोंके सामने लज्जावश उस स्त्रीने सङ्केतद्वारा आना अनुराग प्रकट नहीं किया तो 'यह मुझसे अनुराग नहीं करती' ऐसा समझकर उस स्त्रीके विषयमें निराश उस युवकने दुखी हो दूसरी स्त्रीके प्रति अपना अनुराग प्रकट करने लगा, यह देख वह प्रथमा स्त्री क्रुद्ध हो गयी कि 'यद्यपि इसमें अनुराग करती हूं और लज्जावश सबके सामने अपना भाव प्रदर्शित नहीं किया, अत एव यह युवक दूसरी स्त्रीमें अनुराग करने लगा'। यह देख उस युवकने 'पहली स्त्री ही मुझमें अनुराग करती है, मैंने पहले इसके मनोगत भावको नहीं समझकर व्यर्थमें उदासीन एवं दुःखित होकर दूसरी स्त्रीमें अनुराग करने लगा' ऐसी अपनी भूल समझकर पहली स्त्रीमें ही अनुराग करता हुआ सन्तुष्ट हो गया। उदासीन जिस स्त्रीसे दुखित हुआ, क्रुद्ध उसी स्त्रीसे सन्तुष्ट किया गया' यह विरुद्ध विषय होनेसे आश्चर्य है और उसका निराकरण पूर्वोक्त प्रकारसे है ]॥ १०५ ॥

**पयःस्मिता मण्डपमण्डलाम्बरा वटाननेन्दुः पृथुलड्डुकस्तनी ।**
**पदं रुचेर्भोज्यभुजां भुजिक्रिया प्रिया बभूवोज्ज्वलकूरहारिणी ॥ १०६ ॥**

**पय इति । पयः पाथः क्षीरं वा, स्मितं हास्यं यस्याः सा, मण्डपमण्डलं जन्यजनानामाश्रयसमूहः, चन्द्रातपसमूहः एव इत्यर्थः । 'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः, अम्बरं वस्त्रं यस्याः सा तादृशी, मण्डपानामावरकत्वात् शुभ्रत्वाच्चेति भावः, वटः वटकः एव, शुभ्रवर्त्तुलपिष्टकविशेषः एव इत्यर्थः, आननेन्दुः आह्लादकत्वात् मुखचन्द्रः यस्याः सा तादृशी, पृथू महान्तौ लड्डुकौ मिष्टान्नविशेषौ एव, स्तनौ यस्याः सा तादृशी, रुचेः पदम् अभिलाषास्पदं लावण्यास्पदञ्च, उज्ज्वलैः शुभ्रैः, कूरैः भक्तैः, 'अन्धः कूरं भक्तम्' इति हलायुधः । हारिणी मनोहरा हारवती च, भुजिक्रिया भोजनव्यापारः, भुज इति धातुनिर्देशेनार्थलक्षणा । भोज्यभुजां भोक्तॄणां भोगिनाञ्च, प्रीणातीति प्रिया तृप्तिकारिणी वल्लभा च, बभूव । रूपकालङ्कारः ॥ १०६ ॥**

दुग्ध ( या—स्वच्छ जल ) रूप स्मित ( मन्द मुस्कान ) वाली, मण्डप-समूहरूप ( पाठा०—अधिक आंच लगनेसे लाल-लाल विन्दुओंसे युक्त पूआरूप अलङ्कारभूत ) वस्त्रवाली, ( शुक्लवर्ण तथा आह्लादक होनेसे ) वड़े ( दही-वड़े ) रूप मुख चन्द्रवाली, वड़े-वड़े लड्डूरूपी स्तनोंवाली, रुचि ( कान्ति या—भोजनेच्छा, पक्षा०—अनुराग ) का स्थान अर्थात् रुचिकारिणी, शुक्लवर्ण भातसे मनोहर ( पक्षा०—शुक्लवर्ण भातरूपी हार अर्थात् मुक्तामालावाली ) भोजनक्रिया भोज्य पदार्थोंको भोजन करनेवालोंकी प्रिया ( तृप्ति करनेवाली, पक्षा०—वल्लभा ) हुई । [ पक्षान्तरमें सर्वत्र 'दुग्ध ( या स्वच्छजल ) के समान है स्मित जिसका' इस प्रकार अर्थान्तर कल्पना करनी चाहिये । भोजनकर्ताओंको वहांका भोजन प्रिया स्त्रीके समान अत्यन्त रुचिकर हुआ ] ॥ १०६ ॥

१. 'मण्डकमण्डनाम्बरा' इति 'प्रकाशे' व्याख्यातम् ।

चिरं युवाऽऽकूतशतैः कृतार्थनश्चिरं सरोषेङ्गितया च निर्धुतः ।
सृजन् करक्षालनलीलयाऽञ्जलिं न्यषेचि किञ्चिद्विधुताम्बुधारया ॥ १०७ ॥

चिरमिति । चिरं दीर्घकालं व्याप्य, आकूतशतैः इङ्गितसमूहैः, कृतार्थनः कृतप्रार्थनः ततश्च सरोषेङ्गितया रोषव्यञ्जकचेष्टावत्या, कयाचित्तरुण्या इति शेषः । निर्धुतश्च निराकृतश्च, युवा कश्चित्तरुणः, करक्षालनलीलया हस्तप्रक्षालनव्याजेन इत्यर्थः, चिरं दीर्घकालं यावत्, अञ्जलिं करद्वयसंयोगं, सृजन् विदधत् सन्, अञ्जलिबन्धेन चिरं प्रार्थयमानः सन् इत्यर्थः । किञ्चिद्विधुतया ईषत् कम्पितया, अम्बुधारया जलधारया, धाराविधूननव्याजेन इत्यर्थः । न्यषेचि निषिक्तः । कोपानलशान्तिज्ञापनाय इति भावः, तरुण्या इति शेषः ॥ १०७ ॥

बहुत देरतक सैकड़ों चेष्टाओंसे प्रार्थना करनेवाले ( उसके प्रार्थनाको अस्वीकृत कर ) क्रोधयुक्त चेष्टाओंवाली ( किसी तरुणीके द्वारा ) तिरस्कृत हुए ( किन्तु फिर भी ) हाथ धोनेके बहानेसे अञ्जलि करते ( हाथ जोड़ते ) हुए युवकको थोड़ा-सा कम्पित पानीकी धारासे भिगों दिया । [ युवकके सैकड़ों चेष्टाओंद्वारा प्रार्थना करनेपर युवतीने उसकी इच्छाको क्रोधयुक्त चेष्टाओंसे अस्वीकार कर दिया तो पुनः युवकने हाथ धोनेके बहानेसे बार-बार हाथ जोड़कर सम्भोगार्थ प्रार्थना की, यह देख युवतीने 'तुम्हारी प्रार्थना मुझे स्वीकार है' ऐसा अभिप्राय हाथ धोनेके लिए उसे पानी देते समय अपने हाथको थोड़ा कम्पितकर प्रकट किया । युवकने जब हाथ धोनेके बहानेसे बार-बार हाथ जोड़कर प्रार्थना की तब युवतीने भी हाथ कम्पितकर सङ्केत कर दिया कि बार-बार हाथ मत जोड़ो, मुझे तुम्हारी प्रार्थना स्वीकार है, अथवा—उस स्त्रीने अपनी कोपाग्निको शान्त होनेका सङ्केत थोड़े जलधाराको कँपाकर किया । हाथ धोनेसे यह सूचित होता है कि अब भोजन करना समाप्त हो गया है ] ॥ १०७ ॥

न षड्विधः षिङ्गजनस्य भोजने तथा यथा यौवतविभ्रमोद्भवः ।
अपारशृङ्गारमयः समुन्मिषन् भृशं रसस्तोषमधत्त सप्तमः ॥ १०८ ॥

न षड्विध इति । षिङ्गजनस्य विटजनस्य 'षिङ्गः पल्लविको विटः' इत्यमरः, भोजने भोजनकाले, षड्विधः षट्प्रकारः, रसः मधुरादिरूपः, तथा तादृशं, तोषं प्रीतिं, नाधत्त न अपुषत्, पोषणार्थे लुङि लङ् । यथा यादृशं, युवतीनां समूहः यौवतम् 'भिक्षादिभ्योऽण्' इति अण् । तत्र युवतीति सामर्थ्यात् 'भस्याढे तद्धिते' इति पुंवद्भावः । तस्य विभ्रमैः विलासैः, उद्भवः सञ्जातः, पचाद्यच् । भृशम् अत्यर्थं, समुन्मिषन् समुज्जृम्भमाणः, वर्द्धमान इत्यर्थः, अपारः अपरिमितः, शृङ्गारमयः शृङ्गारः नाम, सप्तमः रसः । अत्र सप्तमत्वं मधुरादिषड्रसापेक्षया, न तु आलङ्कारिकोक्तरसापेक्षया षड्रसातिरिक्तस्य रसस्याभावात् शृङ्गाररसस्यापि तदन्तर्गतत्वात् इति तात्पर्यम् । तोषम् अधत्त इत्यनेनान्वयः, एकोऽपि लोकोत्तरो बहूनतिशेते इति भावः ॥ १०८ ॥

रसिक कामुक-समुदायके भोजनमें छः प्रकार ( मीठा, खट्टा, नमकीन, कड़वा, कसैला और चरपरा ) के रसोंने वैसी तृप्ति नहीं उत्पन्न की, जैसी तृप्ति युवती-समूहके विलाससे उत्पन्न अत्यन्त बढ़ते हुए अपरिमित शृङ्गाररूप सातवें रसने की। [ कामुक जनोंको मधुरादि षड्रस भोजनकी अपेक्षा परोसनेवाली युवतियोंकी शृङ्गार चेष्टाओंसे अधिक आनन्द हुआ। प्रकृतमें मधुरादि छः रसोंकी अपेक्षासे 'शृङ्गार' को सातवां रस समझना चाहिये, न कि नाट्यशास्त्रमें वर्णित रसोंकी अपेक्षासे अलौकिक एक पदार्थ भी अनेक पदार्थोंसे श्रेष्ठ हो जाता है, अत एव प्रकृतमें छः भोज्य पदार्थके रसोंसे एक शृङ्गार रस ही भोजनकर्ता रसिकोंके लिए आनन्दप्रद होनेसे श्रेष्ठ हो गया ] ॥ १०८ ॥

**मुखे निधाय क्रमुकं नलानुगैरथौज्झि पर्णालिरवेक्ष्य वृश्चिकम् ।**
**दमार्पितान्तर्मुखवासनिर्मितं भयाविलैः स्वभ्रमहासिताखिलैः ॥ १०९ ॥**

मुखे इति । अथ करक्षालनानन्तरं, नलानुगैः नलानुयायिभिः, जन्यजनैरिति शेषः । क्रमुकं पूगफलं, मुखे वदने, निधाय दत्त्वा, दमेन दमयन्तीभ्रात्रा, अर्पितं दत्तम्, अन्तः मुखस्य अन्तर्मुखं मुखाभ्यन्तरम्, विभक्त्यर्थेऽव्ययीभावः। तद्वासयति सुगन्धीकरोतीति अन्तर्मुखवासं लवङ्गकक्कोलकर्पूरादिवासनाद्रव्यम्, कर्मण्यण्। तेन निर्मितं कल्पितं, वृश्चिकं वृश्चिकाकृतिताम्बूलोपकरणसुगन्धिद्रव्यविशेषम्, अवेक्ष्य दृष्ट्वा, भयेन दंशनभीत्या, आविलैः आकुलैः, अत एव स्वभ्रमेण स्वस्य भ्रमेण, अवृश्चिके वृश्चिकज्ञानरूपनिजभ्रान्त्या इत्यर्थः, हासिताः जनितहासाः, अखिलाः समस्तदर्शकवृन्दा यैः तादृशैः सद्भिः, पर्णालिः नागवल्लीदलपङ्क्तिः, औज्झि उज्झिता, परित्यक्ता इत्यर्थः, उज्झ विसर्गे कर्मणि लुङ् ॥ १०९ ॥

इस ( हाथ धोने ) के बाद सुपारीको मुखमें लेकर दमयन्तीके छोटे भाई 'दम' के द्वारा दी गयी ( कर्पूर, लवङ्ग, कस्तूरी, कत्था जावित्री आदि ) मुखको सुगन्धित करनेवाले पदार्थोंसे बनाये गये विच्छूको देखकर भय ( विच्छूके डंक मारनेके भयसे घबराहट ) से व्याकुल (अत एव) अपने भयसे सबोंको हँसानेवाले नलानुगामियों ( भोजनकर्ता वरातियों ) ने पानके बीड़ेको फेंक दिया ॥ १०९ ॥

**अमीषु तथ्यानृतरत्नजातयोर्विदर्भराट्[1] चारुनितान्तचारुणोः ।**
**स्वयं गृहाणैकमिहेत्युदीर्य तद्द्वयं ददौ शेषजिघृक्षवे हसन् ॥ ११० ॥**

अमीष्विति । विदर्भराट् विदर्भदेशाधीश्वरः भीमः, चारुनितान्तचारुणोः यथासङ्ख्यं रम्यातिरमणीययोः, इह अनयोः, तथ्यानृतरत्नजातयोः सत्यासत्यरत्नौघयोः मध्ये 'जातं जात्योघजन्मसु' इति विश्वः। एकं स्वयम् आत्मना, गृहाण स्वीकुरु, अमीषु वारयात्रिकेषु मध्ये, इति एवम्, उदीर्य उक्त्वा, शेषम् असत्यमेव, जिघृक्षवे गृहीतुमिच्छवे, कृत्रिमत्वेन तस्यैवातिचारुत्वादिति भावः। ग्रहेः सनन्ताव् 'सनाशं-

1. वराटरा' इतिट'प्रकाश' सम्मतं पाठान्तरम् ।

समिद्ध उः' इति उप्रत्ययः, मधुपिपासादित्वात् द्वितीयासमासः । हसन् तस्य रत्नज्ञानाभावात् हास्यं कुर्वन् , तयोः कृत्रिमाकृत्रिमयोः, द्वयम् उभयमेव, ददौ अर्पयामास। तत्र कृत्रिमं विनोदाय ददौ अन्यदौचित्यादिति भावः ॥ ११० ॥

विदर्भनरेश ( भीम या 'दम' ) ने सुन्दर तथा अतिशय सुन्दर झूठे तथा सच्चे अर्थात् नकली तथा असली दो रत्नसमूहोंमें-से 'एक स्वयं ( जो तुम्हें पसन्द आवे, उसे ) ले लो' ऐसा इन ( बरातियों ) में कहकर झूठे अर्थात् नकली ( रत्न ) को ग्रहण करनेके इच्छुक ( बराती आदमी ) के लिए हँसते हुए, उन दोनों रत्नोंको दे दिया। [ पहले 'इन दोनों रत्नोंमें जो पसन्द हो, उसे तुम स्वयं ले लो' ऐसा विदर्भराजके कहनेपर उनके तारतम्यको नहीं पहचाननेवाले बरातीने अधिक चमकते हुए नकली रत्नको लेना चाहा, यह देख उसकी रत्नज्ञता नहीं होनेसे उसपर हँसते हुए विदर्भनरेशने उन दोनों रत्नोंको दे दिया। उनमें झूठे (नकली) रत्नको परिहाससे तथा सच्चे (असली) रत्नको उचित होनेसे दिया]॥

इति द्विकृत्वः शुचिमिष्टभोजिनां दिनानि तेषां कतिचिन्मुदा ययुः ।
द्विरष्टसंवत्सरवारसुन्दरीपरीष्टिभिस्तुष्टिमुपेयुषां निशि ॥ १११ ॥

इतीति । इति पूर्वोक्तप्रकारेण, द्विकृत्वः द्विवारं, दिवा रात्रौ च इत्यर्थः, 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच् । शुचि विशुद्धं, मिष्टं मधुरं, भुञ्जते अश्नन्ति इति तेषां विशुद्धलड्डुकादिभोजिनां, तथा निशि रात्रौ, द्विः द्विरावृत्ताः, अष्टसंवत्सराः यासां तासां षोडशवर्षाणां, वारसुन्दरीणां गणिकानां, परीष्टिभिः परिचर्याभिः, तत्कर्तृकशुश्रूषाभिरित्यर्थः, 'परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणे स्त्रियाम्' इति मेदिनी । तुष्टिं प्रीतिम् , उपेयुषां प्राप्नुवतां, तेषां नलानुगानां, कतिचित् दिनानि कतिपयानि अहानि, मुदा हर्षेण, ययुः अतिवाहितानि बभूवुः ॥

इस प्रकार ( १६।४९—११० ) दो वार अर्थात् दिन तथा रातमें विशुद्ध तथा मधुर भोजन करते हुए और रातमें षोडशवर्षीया वाराङ्गनाओंकी परिचर्या ( सेवा-सत्कार, अथवा—आलिङ्गन-चुम्बनादि सेवाकार्य ) से सन्तुष्ट उन ( बरातियों ) के कई ( ५-६ ) दिन आनन्दसे बीत गये ॥ १११ ॥

उवास वैदर्भगृहेषु पञ्चषा निशाः कृशाङ्गीं परिणीय तां नलः ।
अथ प्रतस्थे निषधान् सहानया रथेन वार्ष्णेयगृहीतरश्मिना ॥११२॥

उवासेति । नलः कृशाङ्गीं तन्वङ्गीं, तां दमयन्तीं, परिणीय उदूह्य, वैदर्भगृहेषु भीमभवनेषु, पञ्चषाः पञ्च षट् वा, 'सङ्ख्ययाऽव्यया—' इत्यादिना बहुव्रीहिसमासे कृते 'बहुव्रीहौ सङ्ख्येये डच्' इति डच्समासान्तः । निशाः रात्रीः । अत्यन्तसंयोगे द्वितीया उवास तस्थौ । अथ सप्तमाहे, अनया भैम्या सह, वृष्णेः अपत्यं पुमान् वार्ष्णेयः तन्नामकनलसारथिः 'इतश्चानिञ्' इति ढक् । तेन गृहीताः धृताः, रश्मयः

प्रग्रहाः यस्य तादृशेन 'किरणप्रग्रहौ रश्मी' इत्यमरः। रथेन निषधान् तदाख्यनिजजनपदान्, प्रतस्थे जगाम ॥ ११२ ॥

नलने कृशाङ्गी ( दमयन्ती ) के साथ विवाहकर विदर्भनरेश ( राजा भीम ) के महलोंमें पांच-छः रात वास किया, इसके बाद उस ( दमयन्ती ) के साथ वार्ष्णेय नामक सारथिके द्वारा पकड़े गये रास ( घोड़ोंके लगामकी डोरी ) वाले रथसे निषध देश ( अपने राज्य ) को चले ॥ ११२ ॥

परस्य न स्प्रष्टुमिमामधिक्रिया प्रिया शिशुः प्रांशुरसाविति ब्रुवन् ।
रथे स भैमीं स्वयमध्यरूरुहन्न तत् किलाश्लिक्षदिमां जनेक्षितः ॥११३॥

परस्येति । परस्य मदितरस्य लोकस्य, इमां पतिव्रतां भैमीं, स्प्रष्टुं परामर्ष्टुम्, अधिक्रिया अधिकारः, न, अस्तीति शेषः । प्रिया भैमी, शिशुः बाला, ह्रस्वप्रमाणा इति भावः । असौ रथः, प्रांशुः उन्नतः, अत एव स्वयं रथारोहणे असमर्थेति भावः । इति एवं, ब्रुवन् किल वदन्निव, सः नलः, स्वयम् आत्मनैव, भैमीं दमयन्तीं, रथे अध्यरूरुहत् अधिरोहयामास, स्पर्शलोभादिति भावः । णिजन्तरुहधातोः लुङि 'णौ चङि' इत्युपधाह्रस्वः, 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घत्वम्। किन्तु तत् तदा, रथारोपणकाले इत्यर्थः, जनेक्षितः जनैः दृष्टः सन्, बहुभिर्जनैः दृष्टत्वादिति भावः। इमां भैमीं, नाश्लिक्षत् न आलिङ्गत्, शालीनताविरोधिव्यवहारत्वादिति भावः। श्लिष आलिङ्गने इति श्लिषो लुङि च्लेः क्सादेशः ॥ ११३ ॥

'( मेरे अतिरिक्त ) दूसरे किसीको इसे ( पतिव्रता दमयन्तीको ) छूनेका अधिकार नहीं है ( और ) प्रिया ( दमयन्ती ) शिशु ( छोटी ) है तथा यह ( रथ ) ऊंचा है' ऐसा कहते हुए उस ( नल ) ने दमयन्तीको स्वयं रथपर चढ़ाया और लोगोंको देखते हुए उसका मानों आलिङ्गन नहीं किया अर्थात् वास्तविक विचार करनेपर तो उस प्रकार कहकर उसे रथपर चढ़ाते समय आलिङ्गन कर ही लिया ॥ ११३ ॥

इति[1] स्मरः शीघ्रमतिश्चकार तं वधूञ्च रोमाञ्चभरेण कर्कशौ ।
स्खलिष्यति स्निग्धतनुः प्रियादियं म्रदीयसी पीडनभीरुदोर्युगात् ॥११४॥

इतीति । स्निग्धतनुः मसृणाङ्गी, म्रदीयसी अतिसुकोमला च, इयं भैमी, पीडनात् दृढतया धारणजन्यव्यथाप्राप्तेः, भीरु भयशीलं, दोर्युगं बाहुद्वयं यस्य तस्मात् म्रदीयसः पीडनासहत्वात् सुदृढधारणेन व्यथाप्राप्तिशङ्कया शिथिलधारिण इति भावः । प्रियात् नलात्, स्खलिष्यति भ्रंशिष्यति, इति मृदुतया शिथिलधारणेन स्निग्धतनुरियं प्रियभुजान्तरात् संसिष्यते इति हेतोरिवेत्यर्थः। शीघ्रमतिः प्रत्युत्पन्नमतिः, स्मरः कामः, तं नलं, वधूं भैमीञ्च, रोमाञ्चभरेण पुलकातिशय्येन, कर्कशौ

१. 'इतीव तं शीघ्रमतिः स्मरोऽकरोद्वधूम्' इति, पूर्वार्द्धोत्तरार्द्धयोर्व्यत्यासेन पाठान्तरम् ।

खरस्पर्शौ, अस्निग्धगात्रौ इत्यर्थः, चकार विदधे । अनयोः परस्पराङ्गसङ्गहेतुके रोमाञ्चे स्खलनप्रतिबन्धार्थत्वमुत्प्रेक्षते ॥ ११४ ॥

'अतिशय कोमल तथा चिकने ( पक्षा०—सस्नेह ) शरीरवाली यह ( दमयन्ती ) अधिक दबाने ( कसकर पकड़ने ) में भययुक्त बाहुद्वयवाले नल ( के हाथों ) से स्खलित ( फिसलकर गिर ) जायेगी' ऐसा ( विचारकर ) प्रत्युत्पन्नबुद्धि कामदेवने उस ( नल ) तथा वधू (दमयन्ती ) को अधिक रोमाञ्चसे कर्कश कर दिया । [ 'दमयन्ती अतिशय कोमल तथा स्निग्ध शरीरवाली है, अतः नल 'यदि इसे मैं कसकर पकड़ूगा तो इसे कष्ट होगा' इस भयसे दमयन्तीको रथपर चढ़ाते समय कसकर नहीं पकड़ेंगे और ढीला पकड़नेसे यह नलके हाथसे फिसल ( सरक ) कर गिर पड़ेगी' इस विचारके मनमें आते ही प्रत्युत्पन्नमति कामदेवने दोनोंको रोमाञ्चितकर कर्कश ( रूक्ष शरीर युक्त ) कर दिया, जिसमें नलके हाथसे गिरने न पावे । कोमल तथा चिकनी वस्तुको अधिक दबाकर नहीं पकड़नेसे फिसलकर गिर जाना सम्भव है, और उसीके कठोर या रूक्ष हो जानेपर गिरनेका भय नहीं रहता, अतः कामदेवका वैसा करना उचित ही था । दमयन्तीको रथपर चढ़ाते समय नल तथा दमयन्ती दोनोंको तत्काल ही सात्त्विक भावजन्य रोमाञ्च हो गया ] ॥ ११४ ॥

तथा किमाजन्म निजाङ्कवर्द्धितां प्रहित्य पुत्रीं पितरौ विषेदतुः ? ।
विसृज्य तौ तं दुहितुः पतिं यथा विनीततालक्षगुणीभवद्गुणम् ॥ ११५ ॥

तथेति । पितरौ भैम्या मातापितरौ 'पिता मात्रा' इति विकल्पादेकदेशः । आजन्म जन्मप्रभृति, अभिविधावव्ययीभावः । निजाङ्के स्वोत्सङ्गे, वर्द्धितां पोषितां, पुत्रीं दुहितरम् । गौरवादित्वादीकारः । प्रहित्य प्रस्थाप्य, हिनोतेः क्त्वो ल्यप् । तथा तादृक्, विषेदतुः विषण्णौ बभूवतुः, किम् ? नेत्यर्थः, सदेर्लिटि 'अत एकहल्मध्ये–' इत्यादिना एत्वाभ्यासलोपौ । यथा यादृक्, तौ भैमीपितरौ, विनीततया विनयसम्पन्नतया, लक्षगुणीभवनः लक्षगुणत्वेन सम्पद्यमानाः, गुणाः शौर्यादयः यस्य तथोक्तं, दुहितुः पतिं जामातरम् 'विभाषा स्वसृपत्योः' इति विकल्पात् षष्ठ्या अलुक् । तं नलं, विसृज्य सम्प्रेष्य, विषेदतुरिति पूर्वक्रियया अन्वयः । कन्यावियोगापेक्षया गुणशालिजामातृवियोगस्तयोर्नितरां विषादकारणमभूदिति भावः ॥ ११५ ॥

माता-पिता जन्मसे अपने गोदमें बढ़ायी हुई पुत्री ( दमयन्ती ) को भेजकर वैसा दुःखित हुए क्या ? जैसा नम्रतासे लाखगुना होते हुए ( शौर्यादि ) गुणोंवाले कन्याके पति अर्थात् जामाता ( नल ) को भेजकर दुःखित हुए । [ जन्मसे गोदमें पाल-पोसकर बढ़ायी गयी पुत्री दमयन्तीके वियोगसे माता-पिताको उतना दुःख नहीं हुआ, जितना गुणवान् जामाता नलके वियोगसे हुआ ] ॥ ११५ ॥

निजादनुव्रज्य स मण्डलावधेर्नलं निवृत्तौ चटुलापतां गतः ।

तडागकल्लोल इवानिलं तटाद्धृताऽऽनतिर्व्याववृते विदर्भराट्[1] ॥ ११६ ॥

निजादिति। नलम् अनुव्रज्य अनुसृत्य, निवृत्तौ प्रत्यावर्त्तनसमये, चटु चाटु, प्रियवाक्यमित्यर्थः, लपति कथयतीति चटुलापः तस्य भावः तत्तां चाटुभाषितां, गतः प्राप्तः, मनोहरवाक्यवादी इत्यर्थः, 'कर्मण्यण्' इति अण्प्रत्ययः। सः विदर्भराट भीमः, धृता स्वीकृता, आनतिः नलनमस्कारः येन तादृशः सन्, अनिलं वायुम्, अनुव्रज्य अनुयाय, चटुलाः चञ्चलाः, आपः जलानि यस्य तस्य भावः तत्तां चलजलत्वं, गतः प्राप्तः, वातेनान्दोलिताप इत्यर्थः, 'ऋक्पूर—' इत्यादिना समासान्तः। तडागस्य सरोवरस्य, कल्लोलः महोर्मिः 'अथोर्मिषु। महत्सूल्लोलकल्लोलौ' इत्यमरः, धृता प्राप्ता, आनतिस्तटाघातजन्यनमनं येन तादृशः सन्, तटात् तीरप्रदेशादिव, निजात् स्वकीयात्, मण्डलावधेः राष्ट्रसीमान्तात्, व्याववृत्ते प्रतिनिवृत्तः॥ ११६ ॥

नलका अनुगमनकर लौटते समय प्रिय भाषण तथा नमस्कार करनेवाले वे विदर्भराज (पाठा०—विराटराज भीम) राज्यकी सीमासे उस प्रकार लौट आये जिस प्रकार सरोवरका तरङ्ग वायुका अनुगमनकर लौटते समय चञ्चल जलयुक्त हो कर तीर (किनारे) से लौट आता है। [ राजा भीम नलको अपने राज्यकी सीमातक पहुँचाकर वापस लौट आये ] ॥ ११६ ॥

पिताऽऽत्मनः पुण्यमनापदः क्षमा धनं मनस्तुष्टिरथाखिलं नलः।
अतः परं पुत्रि! न कोऽपि तेऽहमित्युदश्रुरेष व्यसृजन्निजौरसीम्॥ ११७॥

पितेति। पुत्रि! हे वत्से! आत्मनः तव, पुण्यं सुकृतमेव, पिता जनकः, हितकारित्वादहितनिवारकत्वाच्चेति भावः। क्षमाः सहिष्णुताः, अनापदः न विद्यन्ते आपदो याभ्यस्ताः आपन्निवारिका इत्यर्थः, मनस्तुष्टिः सन्तोषः, अलोभित्वमेव इत्यर्थः, धनं वित्तम्, अथ अनन्तरम्, एतत्परं किं बहु वच्मि इत्यर्थः, अखिलम् उक्तम् अनुक्तञ्च सर्वमेव, नलः नलः एव तव सर्वस्वम् अभीष्टदायित्वादिति भावः। अतः अस्मात् नलात्, परम् अन्यत्, न, अस्तीति शेषः, अहन्तु ते तव, कोऽपि यः कश्चिदेवेत्यर्थः। यद्वा—अतः परम् अत ऊर्द्धम्, अद्यारभ्येत्यर्थः, अहं ते कोऽपि न मया सह तव कोऽपि सम्बन्धो नास्तीत्यर्थः, इति इत्थम्, उक्त्वेति शेषः। एषः भीमः, उदश्रुः उद्बाष्पः साश्रुनेत्रः सन् इत्यर्थः। निजाम् आत्मीयाम्, औरसीम् उरसा निर्मितां पुत्रीम् 'उरसोऽण् च' इत्यण्प्रत्ययः, 'संज्ञाधिकारादभिधेयनियमः' इति काशिका व्यसृजद् विससर्ज, प्रेषयामासेत्यर्थः॥ ११७ ॥

'हे पुत्रि (दमयन्ति)! अपना अर्थात् तुम्हारा पुण्य (ही हित करने तथा अहितका निवारण करनेसे) पिता है, क्षमा (सहनशीलता ही) आपत्तियोंका निवारण करनेवाली है, सन्तोष (अलोभ ही) धन है; और सब (पूर्वकथित तथा अकथित-सब कुछ) नल (ही) हैं। इस (नल) से भिन्न (तुम्हारा कोई) नहीं है, मैं तुम्हारा कोई हूं अर्थात्

---

१. 'वराटराट्' इति 'प्रकाश' सम्मतः पाठः।

समान्यतः अपरिचित-जैसा ही हूं ( अथवा—अब ( आज ) से मैं तुम्हारा कोई नहीं हूं अर्थात् मेरा तुम्हारा कोई सम्बन्ध नहीं रहा, नल ही आजसे तुम्हारे सब कुछ हैं ) इस प्रकार ( कहकर ) रोते हुए इस ( राजा भीम ) ने अपनी पुत्री ( दमयन्ती ) को छोड़ा अर्थात् विदा किया ॥ ११७ ॥

प्रियः प्रियैकाचरणाच्चिरेण तां पितुः स्मरन्तीमचिकित्सदाधिषु ।
शशाम सोऽम्बाविरहौर्वपावको न तु प्रियप्रेममहाम्बुधावपि ॥ ११८ ॥

प्रिय इति । प्रियः नलः, प्रियैकाचरणात् केवलप्रीतिजनकव्यवहारात्, शोकापनोदनार्थं मनःप्रसादकव्यवहारं कृत्वेत्यर्थः, पितुः स्मरन्तीं पितरं स्मरन्तीम् इत्यर्थः, पित्रर्थं शोचन्तीमिति यावत्। 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी। तां दमयन्तीं, चिरेण बहुकालेन, आधिषु पितृविरहजमनोव्यथासु विषये, अचिकित्सत् चिकित्सां कृतवान्, नलः सप्रेमसान्त्वनावचनेन दमयन्त्याः पितृविरहजदुःखं कथञ्चित् निवारयामास इत्यर्थः, कित निवासे इति धातोर्व्याधिप्रतीकारे अर्थे 'गुप्तिज्किद्भ्यः सन्' इति सन्। तु किन्तु, सः अतिदुःसह इत्यर्थः, अम्बाविरहः मातृविच्छेद एव, और्वपावकः वडवाग्निः, असह्यत्वादिति भावः। प्रियप्रेममहाम्बुधौ नलानुरागसमुद्रेऽपि न शशाम न निववृते, नले अतिप्रियमाचरत्यपि तस्या मातृविरहजदुःखं नोपशान्तमित्यर्थः, कन्यानां पितृतो मातरि अनुरागाधिक्यात् तद्विरहो दुःसहः इति भावः। जलानलयोरेकत्रावस्थानविरोधेऽपि समुद्रे वडवाग्नेरवस्थानं न विरुद्धं तस्य तत्रैव स्थानत्वादिति समुद्रे वडवाग्निर्न शान्त इति तात्पर्यम् ॥ ११८ ॥

प्रिय ( नल ) ने एकमात्र प्रिय करनेसे पिताका स्मरण करती हुई उस ( दमयन्ती ) के ( पिताके विरहसे उत्पन्न ) दुःखको बहुत समय ( दिनों ) में अर्थात् बहुत समयके बाद शान्त किया ( अथवा—प्रियने पिताका स्मरण करती हुई उसके दुःखको एकमात्र प्रिय करनेसे बहुत समयमें शान्त किया, अथवा—प्रियने बहुत दिनोंतक पिताका"""शान्त किया )। किन्तु ( सर्वविदित ) वह माताका वियोगरूपी वडवानल प्रिय ( नल ) के प्रेमरूपी महासमुद्रमें भी नहीं शान्त हुआ ( पाठा०—वैसा ही रहा )। [ पुत्रियोंके लिए पितृ-विरहकी अपेक्षा मातृ—विरहके अधिक दुःखदायी होनेसे प्रियाचरणसे नलने यद्यपि दमयन्तीके पितृ-विरहजन्य दुःखको बहुत दिनोंमें दूर कर दिये, किन्तु मातृ-विरहजन्य दुःखको वे बहुत प्रेम करनेपर भी नहीं दूर कर सके। जिस प्रकार जलमें अग्निका रहना असंभव होनेपर भी समुद्रमें वडवानल रहता ही है, उसी प्रकार नलके अधिकतम प्रेम करनेपर भी दमयन्तीका मातृ-विरहजन्य दुःख बना ही रहा ] ॥ ११८ ॥

असौ महीभृद्बहुधातुमण्डितस्तया निजोपत्यकयेव कामपि ।

---

१. 'तथास्त तन्मातृवियोगवाडवः स तु' इति, 'शशाम तन्मातृवियोगवाडवो न तु' इति च पाठान्तरम्।

भुवा कुरङ्गेक्षणदन्तिचारयोर्बभार शोभां कृतपादसेवया ॥ ११६ ॥

असाविति। बहुधातुभिः सुवर्णादिभिः, मण्डितः अलङ्कृतः, एकत्र—सुवर्णादिनिर्मिताभरणेनालङ्कृतत्वात्, अन्यत्र—तत्तद्धातूनामाकरत्वेन तद्युक्तत्वादिति भावः। असौ अयं, महीभृत् राजा नलः, पर्वतश्च, कुरङ्गस्येव मृगस्येव, ईक्षणं चक्षुः, अन्यत्र—कुरङ्गाणाम् ईक्षणं, दन्तिनः गजस्य इव, चारः गमनम्, अन्यत्र—दन्तिनां चारः गतिः, तयोः भुवा स्थानेन, मृगवत् नयनयोः गजवत् गमनस्य च आश्रयभूतया इत्यर्थः, मृगाक्ष्या गजगामिन्या च इति भावः। अन्यत्र—मृगाणां दन्तिनाञ्च तत्र विद्यमानत्वेन तयोर्दर्शनगमनाश्रयभूतया इत्यर्थः, कृता विहिता, पादसेवा भर्त्तुश्चरणसेवा, अन्यत्र—पादानां प्रत्यन्तपर्वतानां, सेवा सान्निध्यमित्यर्थः, 'पादाः प्रत्यन्तपर्वताः' इत्यमरः। यया तादृश्या, निजया आत्मीयया, उपत्यकया आसन्नभूम्या इव, तया भैम्या, काम् अपि अनिर्वाच्यां, शोभां कान्तिं, बभार धारयामास ॥ ११९ ॥

अनेक प्रकारके धातु ( सुवर्णनिर्मित रत्नजटित अलङ्कार ) से सुशोभित ये राजा ( नल ) मृगदर्शन तथा गजगमनकी उत्पत्तिस्थान अर्थात् श्रेष्ठ मृगनयनी तथा गजगामिनी और चरण-सेवा करनेवाली सतत पार्श्ववर्तिनी उस (दमयन्ती) से उस प्रकार किसी ( अनिर्वचनीय ) शोभाको प्राप्त किये, जिस प्रकार ( खानोंके होनेसे ) अनेक प्रकारके धातुओं ( सुवर्ण, चाँदी, ताँवा तथा गेरू आदि ) से शोभित पर्वत हरिणोंके दर्शन तथा हाथियोंके गमनकी भूमि तथा प्रत्यन्तपर्वतोंसे सेवित अपनी उपत्यका ( पर्वतकी समीपस्थ भूमि ) से किसी अनिर्वचनीय शोभाको प्राप्त करता है ॥ ११९ ॥

तदेकतानस्य नृपस्य रक्षितुं चिरोढया भावमिवात्मनि श्रिया।
विहाय सापत्न्यमरञ्जि भीमजा समग्रतद्वाञ्छितपूर्त्तिवृत्तिभिः ॥ १२० ॥

तदिति। चिराय बहुकालात्, ऊढया धृतया परिणीतया च, श्रिया राज्यलक्ष्म्या तदेकतानस्य दमयन्त्येकवृत्तेः, 'एकतानोऽनन्यवृत्तिः' इत्यमरः। नृपस्य नलस्य, भावं चित्तवृत्तिम्, अनुरागमिति यावत्, आत्मनि स्वविषये, रक्षितुं स्थिरीकर्त्तुम् इव, इत्युत्प्रेक्षा। सापत्न्यं सपत्नीभावं, सपत्नीद्वेषमित्यर्थः, विहाय परित्यज्य, भीमजा भैमी, समग्राणां सर्वविधानां, तद्वाञ्छितानां दमयन्तीप्सितानामित्यर्थः, पूर्त्तिवृत्तिभिः पूरणव्यापारैः, अरञ्जि रञ्जिता, पतिचित्तानुरञ्जनाय सपत्नीः अपि उपासते साध्व्यः इति भावः ॥ १२० ॥

चिरस्वीकृत ( पक्षा०—चिरविवाहित ) राजलक्ष्मीने दमयन्तीमें अनुरक्त राजा ( नल ) के अनुरागको मानो अपनेमें सुरक्षित रखनेके लिए सपत्नीत्व ( सौतपना ) को छोड़कर उस ( दमयन्ती ) की समस्त इच्छाओंको पूरी करनेसे दमयन्तीको प्रसन्न किया। [ लोकव्यवहारमें भी पति जिस स्त्रीमें अनुरक्त रहता है, उसकी चिरकाल पूर्व विवाहित भी दूसरी स्त्री 'इसके अनुकूल रहनेसे पति मेरे ऊपर प्रसन्न रहेंगे' इस अभिप्रायसे सपत्नीभावका

त्यागकर उस नवोढा पतिप्रिया स्त्रीकी इच्छाएं पूरी करती हुई उसे प्रसन्न रखती है। नल दमयन्तीमें अतिशय अनुरक्त हुए तथा वह दमयन्ती भी अपनी सब इच्छाओंकी पूर्ति होनेसे प्रसन्न हुई ]॥ १२० ॥

मसारमालावलितोरणां पुरीं निजाद्वियोगादिव लम्बितालकाम्।
ददर्श पश्यामिव नैषधः पथामथाश्रितोद्ग्रीविकमुन्नतैर्गृहैः ॥ १२१ ॥

मसारेति। अथ अनन्तरं, दमयन्त्याश्चित्तप्रसादनानन्तरमित्यर्थः, नैषधः नलः, मसारमालावलयः इन्द्रनीलमालाश्रेण्यः, तोरणेषु बहिर्द्वारेषु यस्यास्तादृशीम्, इन्द्रनीलमणिभूषितबहिर्द्वाराम्, 'नीलमणिर्मसारः स्यात्' इति हारावली। अत एव निजात् स्वात् वियोगात् विच्छेदात्, नलविरहादित्यर्थः, लम्बितालकां संस्काराभावात् विस्रस्तकुन्तलाम् इव स्थिताम्, इत्युत्प्रेक्षा। उन्नतैः तुङ्गैः, गृहैः प्रासादैः आश्रिता अवलम्बिता, उद्ग्रीविका उद्ग्रीवीकरणेन दर्शनं यस्मिन् कर्मणि तत् यथा तथा, उद्ग्रीवयतेः 'तत्करोति—' इति ण्यन्तात् 'धात्वर्थनिर्देशे ण्वुल्' इति वक्तव्यात् ण्वुल्, ततः 'प्रत्ययस्थात् कात् पूर्वस्य—' इतीकारः। पथां नलागमनमार्गाणाम्, कृद्योगात् कर्मणि षष्ठी। पश्यतीति पश्यामवलोकिकाम् इव स्थिताम्, इत्युत्प्रेक्षा। 'पाघ्रा—' इत्यादिना शप्रत्यये पुनरन्येन 'पाघ्रा—' इत्यादिना दृशेः पश्यादेशः। पुरीं नगरं, ददर्श अवलोकयामास। प्रोषितभर्तृकाः लम्बालकाः पतिमार्गान् प्रतीक्षन्ते इति भावः ॥१२१॥

नलने इन्द्रनीलमणियों ( नीलमों ) की मालाओंकी ( पक्षा०—इन्द्रनीलमणियोंकी मालारूपी ) तोरणवाली ( अत एव ) अपने अर्थात् पति नलके वियोगसे लटकते हुए केशोंवाली और उन्नत भवनोंसे गर्दनको ऊंची करके मानो मार्गों ( नलके आनेके रास्तों ) को देखती हुई ( पाठा०—"" ""ऊँची करके देखती हुई प्रियाके समान ) नगरीको देखा। [ सपत्नीक नलके आनेके समाचारसे सजायी गयी तथा ऊँचे-ऊँचे भवनोंवाली नगरी ऐसी मालूम पड़ती थी, जैसी पतिके परदेश जानेपर प्रोषितपतिका स्त्री केशोंको लटकाये हुए तथा गर्दनको ऊँचीकर पतिके मार्गको देखती है। अथवा—पतिके आनेके सुसमाचारको सुनकर वासकसज्जा ( भूषणादिसे सुभूषित ) स्त्री गर्दन ऊँचाकर जिस प्रकार पतिके मार्गको देखती है ] ॥ १२१ ॥

पुरीं निरीक्ष्यान्यमना मनागिति प्रियाय भैम्या निभृतं विसर्जितः।
ययौ कटाक्षः सहसा निवर्त्तिना तदीक्षणेनार्द्धपथे समागमम् ॥ १२२ ॥

पुरीमिति। पुरीं नगरीं, निरीक्ष्य दृष्ट्वा, मनाक् ईषत्, अन्यमनाः विषयान्तरासक्तचित्तः, मत्स्वामीति शेषः, इति एवं, विविच्येति शेषः, भैम्या दमयन्त्या, प्रियाय नलाय, निभृतं गूढं, विसर्जितः प्रहितः, तद्दृष्टिपरिहाराय इति भावः। कटाक्षः अपाङ्गदर्शनं, सहसा अकस्मात्, निवर्त्तिना भैमीं द्रष्टुं विषयान्तरात् समाकर्षिणा

१. 'प्रियाम्' इति पाठान्तरम्। २. 'पुरीनिरीक्ष्या—' इति पाठान्तरम्।

इत्यर्थः, तदीक्षणेन नलदृष्ट्या सह, अर्द्धपथे अर्द्धमार्गे, समागमं संयोगं, ययौ प्राप, दमयन्ती लज्जाभरात् नलसमक्षं तन्मुखं द्रष्टुं न शशाक, तं पुरीदर्शनेन अन्यमनस्कं विविच्य यदैव कटाक्षमकरोत् तदैव नलेनापि दृष्टिप्रत्यावर्त्तनात् तद्दृष्ट्या दृष्टिमेलनात् लज्जिता अभवत् इति निष्कर्षः। उभावपि अन्योऽन्याभिप्रायं जज्ञतुः इति भावः ॥ १२२ ॥

पुरी ( अपनी राजधानी ) को देखकर ( पाठा०—देखनेसे ) थोड़ा विषयान्तरासक्त हैं ( अत एव इस समय मैं इन्हें अच्छी तरह देख लूं ), ऐसा विचारकर प्रिय ( नल को देखने ) के लिए चुपचाप किया ( दमयन्तीका ) कटाक्ष उस ( पुरी ) के देखनेसे एकाएक लौटे ( दमयन्तीको देखनेके लिए नगरीका देखना छोड़कर बीचमें ही फिरे ) हुए नलके नेत्रसे आधे मार्गमें संभोगको पा लिया। [ नलको पुरी देखनेमें कुछ आसक्त जानकर दमयन्तीने सोचा कि 'इस समय प्राणप्रियकी दृष्टि पुरीके देखनेमें आसक्त है, अत एव इन्हें मैं इस सुअवसर पर अच्छी तरह देख लूं; क्योंकि ये जब मुझे देखते रहते हैं तब मैं लज्जावश इन्हें अच्छी तरह नहीं देख पाती' ऐसा विचारकर ज्योंही दमयन्तीने नलको देखनेके लिए नेत्र उठाया, त्योंही दमयन्तीको देखनेके लिए पुरीका देखना बीचमें ही छोड़कर नलने अपनी दृष्टि दमयन्तीकी ओर लौटा लिया और इसप्रकार दोनोंकी दृष्टियोंका आधे मार्गमें ही सम्मिलन हो गया और इससे दमयन्ती लज्जित हो गयी तथा दोनोंने परस्परके भावको समझ लिया। दमयन्ती तथा नलमें परस्पर इतना अधिक स्नेह था कि वे दोनों एक क्षण भी परस्परके देखनेके विघ्नको नहीं सहन कर सकते थे ]॥ १२२ ॥

**अथ नगरधृतैरमात्यरत्नैः पथि समियाय स जाययाऽभिरामः।**
**मधुरिव कुसुमश्रिया सनाथः क्रममिलितैरलिभिः कुतूहलोत्कैः॥१२३॥**

अथेति। अथ पुरीनिरीक्षणानन्तरं, जायया भार्यया, अभिरामः रमणीयः, सः नलः, कुसुमश्रिया पुष्पसम्पदा, सनाथः युक्तः, मधुः वसन्तः, क्रमेण अनुक्रमेण, पारम्पर्येण इत्यर्थः, मिलितैः एकत्र समागतैरित्यर्थः, कुतूहलोत्कैः कुतूहलाय कौतुकाय, मधुपानजनितानन्दलाभायेत्यर्थः, उत्कैः उत्सुकैः, अन्यत्र—दमयन्तीसहितनलदर्शनार्थं साग्रहविस्मयेन, उत्कैः उत्सुकैः, अलिभिः मधुकरैरिव, नगरे धृतैः संरक्षणाय स्थितैः, ध्रियतेः कर्त्तरि क्तः। अमात्यरत्नैः मन्त्रिवर्यैः सह, पथि नगरपथे, राजमार्गे इत्यर्थः, समियाय सङ्गतः॥ १२३ ॥

इस ( पुरीको देखने ) के बाद स्त्री ( दमयन्ती ) से मनोहर वे ( नल ) कुतूहलसे उत्कण्ठित ( अथवा—जायासहित नल दर्शनके लिए उत्कण्ठित अथवा—जाया......ऊपर गर्दन उठाये हुए ) नगरमें ( रक्षार्थ ) स्थापित क्रमशः आये हुए श्रेष्ठ मन्त्रियोंसे उस प्रकार मिले, जिस प्रकार ( गुलाब-चम्पा आदि ) पुष्पोंकी शोभासे युक्त तथा मनोहर वसन्त ऋतु क्रमशः ( पङ्क्तिबद्ध होकर ) आये हुए कौतूहलसे ( या पुष्परसपानके आनन्द लाभके

लिए उत्कण्ठित ) भ्रमरोंसे मिलता है। [ स्वयंवरमें जाते समय नगररक्षार्थ नियुक्त और उनके लौटनेपर स्त्रीसहित नलको देखनेके कौतूहलसे उत्कण्ठित श्रेष्ठ मन्त्रिगण नलकी अगवानी करनेके लिए आये तो उनसे नलका मिलाप हुआ ]॥ १२३ ॥

कियदपि कथयन् स्ववृत्तजातं श्रवणकुतूहलचञ्चलेषु तेषु ।
कियदपि निजदेशवृत्तमेभ्यः श्रवणपथं स नयन् पुरीं विवेश ॥ १२४ ॥

कियदिति । सः नलः, श्रवणकुतूहलेन स्वयंवरवृत्तान्तश्रवणकौतूहलेन, चञ्चलेषु व्यग्रेषु, तेषु अमात्येषु विषये, स्ववृत्तजातं स्वचरितसमूहम्, इन्द्रादीनां दौत्यादिरूपं मुख्यं कर्मसमूहमित्यर्थः, कियत् अपि स्तोकं, सङ्क्षेपेण इत्यर्थः, कथयन् वर्णयन्, तथा निजदेशवृत्तं स्वराष्ट्रवृत्तान्तम्, एभ्यः अमात्येभ्यः सकाशात्, कियत् अपि किञ्चित्, श्रवणपथं श्रुतिमार्गं, नयन् प्रापयन्, शृण्वन् इत्यर्थः, पुरीं नगरं विवेश प्रविष्टवान् ॥ १२४ ॥

( स्वयंवर-वृत्तान्तको ) सुननेके कुतूहलमें चञ्चल उन ( मन्त्रियों ) से अपने समाचार-समूह ( पाठा०—स्वयंवरमें हुए समाचार ) को कुछ अर्थात् संक्षेपमें ( इन्द्रादिका दूत बनना तथा उनका कपटरूप धारण करना आदि मुख्य-मुख्य समाचार ) कहते हुए और इन ( मन्त्रियों ) से अपने देशके समाचारको कुछ अर्थात् मुख्य-मुख्य सुनते हुए वे नल पुरीमें प्रवेश किये। [ स्वयंवरके समाचारको सुननेके लिए कौतूहलवश वे मन्त्रिगण बहुत चञ्चल हो रहे थे, अत एव उनको अपना मुख्य-मुख्य कुछ समाचार कहते तथा अपने देशका कुछ समाचार उनसे सुनते हुए नलने राजधानीमें प्रवेश किया। बाहरसे आनेवालोंसे वहांके समाचार सुननेका कौतुक वहां नहीं गये हुए लोगोंमें होना और बाहरसे लौटे हुए व्यक्तिका अपने देशके समाचार सुननेकी इच्छा होना और परस्परमें एक दूसरेसे संक्षिप्त कहते-सुनते नगरमें प्रवेश करना लोक व्यवहारमें भी देखा जाता है ]॥ १२४ ॥

अथ पथि पथि लाजैरात्मनो बाहुवल्लीमुकुलकुलसकुल्यैः पूजयन्त्यो जयेति ।
क्षितिपतिमुपनेमुस्तं दधाना जनानाममृतजलमृणालीसौकुमार्यं कुमार्यः ॥

अथेति । अथ पुरप्रवेशानन्तरं पथि पथि प्रतिमार्गम्, अमृतजलस्य सुधोदकस्य, या मृणाली मृणालम्, अमृतजलोत्पन्ना या बिसतन्तुरित्यर्थः, तद्वत् सौकुमार्यं कोमलतां, दधानाः धारयन्त्यः, कोमलाङ्ग्यः इत्यर्थः, कुमार्यः अविवाहिता नार्यः, आत्मनः स्वस्य, बाहुवल्लीनां भुजलतानां, मुकुलकुलसकुल्यैः कुड्मलोत्करतुल्यैः, लाजैः भृष्टधान्योद्भवैः, जय विजयीभव, इति जयशब्दपूर्वमित्यर्थः, पूजयन्त्यः सत्यः, जनानां समागतलोकानां मध्ये, तं क्षितिपतिं नलम्, उपनेमुः उपस्थिरे इत्यर्थः ॥

इस ( पुरीमें प्रवेश करने ) के बाद प्रत्येक मार्गमें अमृतजलोत्पन्न बिसतन्तु ( मृणाल-कमलनाल ) की सुकुमारताको धारण करती हुई अर्थात् उक्त मृणालके समान कोमल

---

१. 'कथयन्नमुत्र जातम्' इति पाठान्तरम् ।

कुमारियोंने ( अविवाहित कन्याएँ ) अपनी बाहुलतारूपी कोरक-समूहके समान खीलोंसे 'विजयी होवो' ऐसा कहकर पूजा करती हुई लोगोंके बीचमें नलका सत्कार किया। ( अथवा ... धारण करती हुई लोगोंकी कन्याओंने ... पूजन करती हुई नलको नमस्कार किया )। [ मार्गमें कुमारियोंद्वारा खील बिखेरना मङ्गल-सूचक माना गया है ] ॥ १२५ ॥

अभिनवदमयन्तीकान्तिजालावलोकप्रवणपुरपुरन्ध्रीवक्त्रचन्द्रान्वयेन ।
निखिलनगरसौधाट्टावलीचन्द्रशालाः क्षणमिव निजसंज्ञां सान्वयामन्वभूवन् ॥

अभिनवेति । अभिनवायाः नवीनायाः, सद्यः समागतायाः इत्यर्थः । दमयन्त्याः भैम्याः, कान्तिजालस्य लावण्यराशेः, अवलोकप्रवणानां दर्शनतत्पराणां, पुरपुरन्ध्रीणां पौराङ्गनानां, वक्त्रचन्द्रैः मुखेन्दुभिः, अन्वयेन योगेन, निखिलासु समग्रासु, नगरे पुरे, सौधाट्टावलीषु सुधाधवलिताट्टालकपङ्क्तिषु, प्रासादोपहितनगरगृहश्रेणीषु इत्यर्थः। याः चन्द्रशालाः शिरोगृहाः ताः, 'चन्द्रशाला शिरोगृहम्' इति हलायुधः। क्षणं क्षणकालं, तन्मुखचन्द्रयोगकालमात्रमिति भावः। निजां स्वां, संज्ञां नाम, चन्द्रशालाभिधानमित्यर्थः। सान्वयाम् अनुगतार्थां, चन्द्राणां सम्बन्धिन्यः चन्द्रयुक्ता वा शाला इत्येवं सार्थामित्यर्थः। अन्वभूवन् अनुभूतवत्य इव ॥ १२६ ॥

नयी दमयन्तीके कान्ति-समूहको देखनेमें तत्पर नारियोंके मुखचन्द्रोंके सम्बन्ध ( संयोग ) से सम्पूर्ण नगरके महलों ( प्रसादों ) की अट्टालिकाओंकी चन्द्रशालाओं ( छतों ) ने क्षणभर ( जबतक वे स्त्रियां वहां रहीं तब तक अर्थात् थोड़े समयतक ) सार्थक ( 'चन्द्रोंकी शालाएँ अथवा—चन्द्रयुक्त शालाएँ' ऐसे अन्वर्थ ) अपने नामोंको पा लिया। [ नवोढा दमयन्तीकी सुन्दरता देखनेके लिए स्त्रियोंसे अटारियोंके छत ठसा-ठस भर गये ] ॥१२६॥

निषधनृपमुखेन्दुश्रीसुधां सौधवातायनविवरगरश्मिश्रेणिनालोपनीताम् ।
पपुरतुलपिपासापांशुलत्वोपरागान्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि ॥१२७॥

निषधेति । अतुलया निरुपमया, अतिप्रबलयेत्यर्थः । पिपासया पानेच्छया, दर्शनलालसयेत्यर्थः । यत् पांशुलत्वं कलुषितत्वं, परपुरुषदर्शनाग्रहेण पापवासनावत्त्वमित्यर्थः । तत एव उपरागः दुर्नयो व्यसनं वा येषां तादृशानि । 'उपरागस्तु पुंसि स्यात् राहुग्रासेऽर्कचन्द्रयोः । दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते ।' इति मेदिनी । अखिलपुरपुरन्ध्रीणां समस्तपौराङ्गनानां, नेत्राणि चक्षूंषि एव, नीलोत्पलानि इन्दीवराणि, सौधवातायनविवरैः अट्टालिकागवाक्षरन्ध्रैः, गच्छन्ति बहिर्निःसरन्तीति तेषां सौधवातायनविवरगाणां, रश्मीनां, नयनप्रभाणां, श्रेणिभिः पङ्क्तिभिः एव, नालैः सच्छिद्रेन्दीवरदण्डरूपनाडीविशेषैः, उपनीताम् आकृष्टां, नेत्रसमीपं प्रापितामित्यर्थः । निषधनृपस्य नलस्य, मुखेन्दुश्रीसुधां मुखचन्द्रशोभामृतं, पपुः पीतवन्तः । साग्रहम् अद्राक्षुः इत्यर्थः ॥ १२७ ॥

अत्यधिक प्यास ( नलको देखनेकी उत्कटेच्छा ) से उत्पन्न पांशुलतारूपी दुर्नय ( पर-

पुरुष-दर्शनाग्रहसे पापवासनाभावरूपी दुर्व्यसन । पक्षा०—शुष्ककण्ठमें ऊपर निकले हुए पराग—धूलि या-मकरन्द ) वाले समस्त नगरनारियोंके नेत्ररूपी नील-कमलोंने महलोंकी खिड़कियोंके विलमें पहुँचती हुई किरणोंकी पङ्क्तिरूप कमलनालसे समीपमें प्राप्त ( लायी गयी ) निषध-राज ( नल ) के मुखचन्द्रकान्तिरूपिणी अमृतका पान किया अर्थात् अच्छी तरह देखा । [ अतिशय प्यासे हुए व्यक्तिका कण्ठ सूख जाता है और उसके मुखके बाहर धूल-सी निकलने लगती है तो वह पानीके एकाएक पीनेपर कलेजा लगनेका भय होनेके कारण कूप आदिके पानीको छिद्रसहित नलीसे धीरे-धीरे पीता है, वैसे ही स्त्रियोंने गवाक्षके विलोंमें प्रविष्ट करते हुए किरण-समूहरूपी नालियोंसे नलके मुखकान्तिरूपी अमृतको पीया । कुमारियोंका समीप जाकर तथा पुरन्ध्रियोंका गवाक्षों ( खिड़कियों ) के बिलोंसे कनखी मात्रसे देखना अत्यन्त उचित ही है ] ॥ १२७ ॥

**अवनिपतिरथोदुर्ध्वस्त्रैणपाणिप्रबालस्खलितसुरभिलाजव्याजभाजः प्रतीच्छन् ।**
**उपरि कुसुमवृष्टीरेष वैमानिकानामभिनवकृतभैमीसौधभूमिं विवेश॥१२८॥**

**अवनीति । अथ पुरप्रवेशानन्तरम् , एषः अयम् , अवनीपतिः भूपालः ऊर्ध्वेषु उपरिगृहेषु, ये स्त्रैणाः स्त्रीसमूहाः । 'स्त्रीपुंसाभ्यां नञ्स्नञौ' इत्यादिना नञ्प्रत्ययः । तेषां पाणिप्रवालेभ्यः करकिसलयेभ्यः, स्खलिताः पतिताः, ये सुरभयः सुगन्धयः, लाजाः अक्षताः, तद्व्याजं तच्छलं,भजन्ते आश्रयन्तीति तद्भाजः, वैमानिकानां विमानैः चरतां देवानाम् । 'चरति' इति ठक् । उपरिष्टात् कुसुमवृष्टीः पुष्पवर्षणमिव लाजवृष्टीरिति भावः । प्रतीच्छन् स्वीकुर्वन् , अभिनवकृतां प्रत्यग्रनिर्मितां, भैम्याः दमयन्त्याः, सौधभूमिं प्रसाददेशं, विवेश प्रविष्टवान् ॥ १२८ ॥**

इस ( पुरीमें प्रवेश करने ) के बाद ये राजा नल ऊपरमें ( पाठा०—ये राजा ( नल ) राजमार्ग अर्थात् मुख्य सड़ककी अट्टालिकाओंपर बैठे हुए स्त्री-समूहके हस्तपल्लवसे गिरती तथा सुगन्धित खीलोंके व्याज ( छल ) को धारण करती हुई विमानगामी ( देवों ) की पुष्पवृष्टियोंको ( शिरके ) ऊपरमें ( सादर ) स्वीकार करते हुए दमयन्तीके लिये नये बनाये गये महलके ऊपरी भूमि ( ऊपरके भाग ) में प्रवेश किया । [ शुभ शकुनके लिए कन्याओंद्वारा हाथरूप पल्लवोंसे गिरायी जाती हुई खीलोंको शुक्लवर्ण होने तथा ऊँचेसे गिरने तथा पल्लवोंसे पुष्पोंका गिरना उचित होनेसे पुष्पवृष्टि होना माना गया है ] ॥१२८॥

**इति परिणयमित्थं यानमेकत्र याने दरचकितकटाक्षप्रेक्षितञ्चानयोस्तत् ।**
**दिवि दिविषदधीशाः कौतुकेनावलोक्य प्रणिदधुरथ[1] गन्तुं नाकमानन्दसान्द्राः॥**

**इतीति । दिविषदाम् अधीशाः देवाः, दिवि आकाशे, स्थित्वेति शेषः । अनयोः दमयन्तीनलयोः, इति एवंविधं, परिणयं विवाहम् , इत्थम् उक्तप्रकारेण, एकत्र**

---

१. —'रिव' इति पाठान्तरम् ।

एकस्मिन्, याने रथे, यानं यात्रां, तथा तत् पूर्वोक्तं, दरचकितम् ईषत् सभयं, परस्परदृष्टिमेलनभयादिति भावः। कटाक्षप्रेक्षितम् अपाङ्गवीक्षणञ्च, कौतुकेन कुतूहलेन, अवलोक्य दृष्ट्वा, अथ भैमीनलयोः सौधप्रवेशानन्तरम्, आनन्दसान्द्राः आनन्दपूर्णाः सन्तः, नाकं स्वर्गलोकं, गन्तुं प्रयातुं, प्रणिदधुः चिन्तयामासुः॥ १२९॥

देवोंके स्वामी (इन्द्रादि चारों देव) आकाशमें (ठहरकर) इन दोनों (नल तथा दमयन्ती) के इस प्रकार विवाहको, इस प्रकार (१६।११३-१२७) एक रथमें गमनको और इस प्रकार (१६।१२३) अचकित कटाक्षसे देखनेको कौतुकपूर्वक देखकर परमानन्दित हो इस (उनके पूर्वोक्त कार्योंको देखने) के बाद (पाठा०—मानों) स्वर्गको जानेके लिए विचार किये। ['प्रणिदधुरिव' इस पाठान्तरमें—देवोंने नवदम्पतीका उक्त कार्यकलाप देखकर आनन्दसे अतिशय हर्षित हो स्वर्गको जानेके लिए विचार-सा किया, वास्तविकमें उन्हें छोड़कर जानेकी इच्छा देवोंको नहीं होती थी, यह सूचित होता है। यद्यपि पहले (स्वस्यामरैः''' १४।९९) देवोंके स्वर्ग जानेका वर्णन किया गया है, तथापि उक्त देव स्वयंवर स्थानको छोड़कर दमयन्ती तथा नलके विवाहसे लेकर अबतक (१६।१२८) के कार्यकलापको आकाशमें विमानपर बैठकर देखते रहे, यह 'दिवि (आकाशमें)' पदसे सूचित होता है, अतः पूर्वापर कोई भी विरोध नहीं है। अथवा—नलने नववधू दमयन्तीके साथ नगरमें प्रवेश किया और इन्द्रादिदेव स्वर्गको गये तथा मार्गमें कलिसे उन देवोंका उत्तरप्रत्युत्तर हुआ, इस अग्रिम (सत्रहवें) सर्गके प्रसङ्गको सूचित करनेके लिए देवोंके स्वर्ग जानेका पुनः वर्णन किया गया है; जिससे अग्रिम (सत्रहवें) सर्गमें वक्ष्यमाण नल तथा कलिका परस्पर द्वेषारम्भ अप्रस्तुत न मालूम पड़े, अन्यथा कविसमयविरुद्ध होनेसे यह महाकाव्य सदोष कहा जायेगा]॥ १२९॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः॥ १३०॥

श्रीहर्षमिति। चतुर्दशतयीं चतुर्दशावयवां, चतुर्दश विधाम् इत्यर्थः। 'सङ्ख्याया अवयवे तयप्' इति तयप्। 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः' इत्यादिना ङीप्। विद्यां विदद्भिः ज्ञानिभिः, काश्मीरैः काश्मीरदेशीयैः, विद्वद्भिरिति शेषः। महिते पूजिते। तद्भुवि श्रीहर्षोत्पन्ने, तद्विरचिते इत्यर्थः। षोडशानां पूरणः षोडशः। 'पूरणे डट्' इति डट्। गतमन्यत्॥ १३०॥

इति मल्लिनाथविरचिते 'जीवातु' समाख्याने षोडशः सर्गः समाप्तः॥१६॥

कवीश्वर-समूहके······किया, उसके रचित चौदह[1] विद्याओंको जाननेवाले अर्थात् सरस्वतीदेवीके जागरूक अधिष्ठानभूत कश्मीर देशमें उत्पन्न विद्वानोंसे पूजित[2] अर्थात् लेश-मात्र भी दोषसे रहित और समस्त गुणसमूहोंसे पूर्ण नैषधीय अर्थात् नल (पाठा०—राजा नल) के चरित महाकाव्यमें षोडश सर्ग पूरा हुआ। (शेष व्याख्या चतुर्थसर्गवत् समझनी चाहिये।)

यह 'मणिप्रभा' टीकामें 'नैषधचरित' का षोडश सर्ग समाप्त हुआ ॥ १६ ॥

---

# सप्तदशः सर्गः ।

अथारभ्य वृथाप्रायं धरित्रीधावनश्रमम् ।
सुराः सरस्वदुल्लोल-लीला जग्मुर्यथाऽऽगतम् ॥ १ ॥

अथेति । अथ स्वर्गलोकजिगमिषानन्तरं, नलदमयन्त्योः सौधप्रवेशानन्तरं वा, सुराः इन्द्रादयः, धरित्रीधावनश्रमं पृथिव्यामागमनायासं, वृथाप्रायं व्यर्थमिव, दमयन्त्यलाभेऽपि नलदमयन्तीवरदानजन्यात्मगौरवरक्षणात् प्रायशब्दप्रयोगः, न तु सर्वथा वृथैवेति बोध्यम् । आरभ्य कृत्वा, सत्वेति यावत्, सरस्वदुल्लोलानां समुद्र-महोर्मीणां, लीला इव लीला येषां तथाभूताः सन्तः, यथाऽऽगतं यस्मादागतं तत्रैव इत्यर्थः । जग्मुः प्रतस्थिरे । सागरतरङ्गाः यथा वृथैव तटं धावित्वा व्यावर्त्तनेन यथाऽऽगतं गच्छन्ति तद्वत् देवा अपि गता इत्यर्थः । दमयन्तीमलब्ध्वैव प्रत्यावृत्ता इति तात्पर्यम् ॥ १ ॥

इस (स्वर्गलोकको जानेका विचार करने, या—नल-दमयन्तीको नवीन महलमें प्रवेश करने) के बाद पृथ्वीपर दौड़ने अर्थात् जानेका व्यर्थ-सा परिश्रम करके समुद्रके तरङ्गतुल्य देव (इन्द्रादि चारो देव) जैसे आये थे, वैसे चले गये। [जिस प्रकार समुद्रका तरङ्ग तटको जाकर व्यर्थ ही ज्योंका त्यों वापस चला जाता है, उसी प्रकार देवलोग भी व्यर्थप्राय ही पृथ्वीपर आकर दमयन्तीको बिना प्राप्त किए स्वर्गको वापस चले गये। दमयन्ती की स्तुतिसे प्रसन्न होकर नलको पतिरूपमें वरण करनेकी आज्ञा देनेसे देवोंकी मानरक्षा हो गयी, अन्यथा दमयन्तीको प्राप्त नहीं करनेसे देवोंकी मर्यादा ही नष्ट हो जाती, अब उसके सुरक्षित रह जानेसे पृथ्वीका गमन करना सर्वथा व्यर्थ नहीं हुआ, इसी कारण 'प्रायः' शब्दका प्रयोग है] ॥ १ ॥

---

१. मनुनोक्ताश्चतुर्दश विद्याः—

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणञ्च विद्यास्त्वेताश्चतुर्दश ॥' इति ।

२. एतदर्थं ग्रन्थस्यास्यैव भूमिका द्रष्टव्या ।

भैमीं पत्ये भुवस्तस्मै चिरं चित्ते धृतामपि ।
विद्यामिव विनीताय न विषेदुः प्रदाय ते ॥ २ ॥

भैमीमिति । ते देवाः, चिरं दीर्घकालं, चित्ते मनसि, धृतां स्थापितामपि, आकाङ्क्षितामपीत्यर्थः, अभ्यस्तामित्यर्थश्च । भैमीं दमयन्तीं, भुवः पत्ये भूपतये, तस्मै नलाय, विनीताय विनययुक्ताय शिष्याय, विद्याम् इव ज्ञानमिव, प्रदाय दत्त्वा, न विषेदुः नानुतापं जग्मुः । न हि महान्तो दत्त्वाऽनुतापिनः, न च तेषामदेयमस्ति इति भावः ॥ २ ॥

वे ( इन्द्रादि चारो देव ) चिरकालसे चित्तमें धारण की गयी अर्थात् चिराभिलषित भी दमयन्तीको उस भूपति ( नलके लिए ) देकर उस प्रकार विषाद नहीं किये; जिस प्रकार विनीत ( शिष्य ) के लिए मनमें चिराभ्यस्त विद्याको देकर गुरु विषाद नहीं करता । [ बड़े लोग देकर पश्चात्ताप नहीं करते और उनको अदेय कुछ नहीं है, अर्थात् वे सभी कुछ दे सकते हैं । अथवा—जिस प्रकार गुरु चिराभ्यस्त विद्याको विनीत शिष्यके लिए देकर अनुताप नहीं करता, तथा वह विद्या भी उनके मनसे नहीं जाती; उसी प्रकार उस दमयन्तीको उन देवोंने विनीत नलके लिए देकर अनुताप नहीं किया, किन्तु वह सद्गुणयुक्त होनेसे उनके चित्तसे नहीं निकली ( भूली ) ] ॥ २ ॥

कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः ।
स्फटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः ॥ ३ ॥

कान्तिमन्तीति । विवस्वतः अर्कस्य, प्रतिबिम्बाः प्रतिच्छायाः, सूर्यस्यैकत्वेऽपि तटभेदेन प्रतिबिम्बानां बहुत्वं बोध्यम् ; स्फटिकाद्रेः कैलासस्य, तटानि भृगुप्रदेशा इव, भासुराः तैजसमूर्त्तयः, सुराः इन्द्रादयः, कान्तिमन्ति समुज्ज्वलानि, विमानानि व्योमयानानि, भेजिरे आरुरुहुरित्यर्थः । एतेन विमानानां तदधिष्ठातृणाञ्च अतितेजस्वित्वमुक्तम् ॥ ३ ॥

तेजस्वी देवलोग ( रत्नादिके ) कान्तिवाले विमानोंको उस प्रकार प्राप्त किये ( चढ़े ), जिस प्रकार सूर्यके देदीप्यमान प्रतिबिम्ब कैलास पर्वतके तटको प्राप्त करते हैं । [ इससे विमानों तथा विमानारूढ देवोंका अतिशय तेजस्वी होना सूचित होता है और प्रतितटपर प्रतिबिम्बित होनेसे विमानकी अधिकता प्रतीत होती है ] ॥ ३ ॥

जवाज्जातेन वातेन बलाकृष्टबलाहकैः ।
श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि ॥ ४ ॥

जवादिति । जवात् निजवेगात् , जातेन समुत्थितेन, वातेन वायुना, बलात् आकृष्टाः आक्षिप्ताः, बलाहकाः मेघाः यैः तादृशैः, एषाम् इन्द्रादीनां रथैः विमानैः, स्वस्य आत्मनः, श्वसनाद् वायोरपि, शीघ्रत्वं त्वरितगामित्वम् , अकथि अवादि

इव, इत्युत्प्रेक्षा । स्ववेगजन्यवायोः स्वपश्चाद्वर्त्तितया रथानान्तु पुरोवर्त्तितया वाय्वपेक्षया सुतरां शीघ्रगामीत्वमिति भावः । कथेश्चौरादिकात् कर्मणि लुङ्, मित्वात् ह्रस्वत्वम् ॥ ४ ॥

( अपने ) वेगसे उत्पन्न हवासे बलपूर्वक मेघोंको आकृष्ट करनेवाले इन ( इन्द्रादि देवों ) के रथोंने मानो वायुसे अपनी गतिको शीघ्र बतलाया । [ अपनेसे उत्पन्न वायुका बादमें तथा रथके आगे चलनेसे उक्त वायुकी अपेक्षा रथकी गति तीव्र सूचित होती है ] ॥ ४ ॥

क्रमाद्दवीयसां तेषां तदानीं समदृश्यत ।
स्पष्टमष्टगुणैश्वर्य्यात्पर्य्यवस्यन्निवाणिमा ॥ ५ ॥

क्रमादिति । क्रमात् अनुक्रमात्, आनुपूर्व्या इत्यर्थः । उत्तरोत्तरं गमनादिति यावत्, 'क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च' इति मेदिनी । दवीयसां दविष्ठानां, दूरवर्त्तितराणामित्यर्थः । दूरशब्दादियसुनि 'स्थूलदूर—'इत्यादिना यणादिपरलोपः पूर्वगुणश्च । तेषाम् इन्द्रादीनां, तदानीं दूरवर्त्तित्वभवनकाले, अणिमा अणुत्वम्, अष्टविधेषु ऐश्वर्येषु प्रथमोक्तैश्वर्यविशेष इत्यर्थः । अष्टगुणम् अणिमाद्यष्टगुणात्मकं, यत् ऐश्वर्यं वैभवं, निग्रहानुग्रहसामर्थ्यमिति यावत् । तस्मात् तन्मध्यात् इत्यर्थः । पर्यवस्यन् इव परिशिष्यमाण इव, लघिमादिसप्तविधात् पृथग्भूत इव इत्यर्थः । स्पष्टं व्यक्तं, समदृश्यत सन्दृष्टः । दूरे अणुत्वेन अवभाषादियमुत्प्रेक्षा ॥५॥

उस समय क्रमशः दूरस्थ उन ( देवों ) की अणिमा ( सूक्ष्मता, पक्षा०—आठ ऐश्वर्योंमें से प्रथम ऐश्वर्य ) आठ गुणैश्वर्यसे पृथग्भूत-सी दृष्टिगोचर हुई । [ दूर होती हुई वस्तु क्रमशः सूक्ष्म दृष्टिगोचर होती है । उन देवोंका आठ गुणैश्वर्योंमेंसे अणिमा नामक प्रथम ऐश्वर्य ही उस समय दृष्टिगोचर होता था । अथवा—उन रथोंकी अणिमा ( सूक्ष्मता )··· । इस अर्थमें देवोंके सम्बन्धसे उन रथोंमें भी 'अणिमा' नामक ऐश्वर्य आ गया था ] ॥ ५ ॥

ततान विद्युता तेषां रथे पीतपताकताम् ।
लब्धकेतुशिखोल्लेखा लेखा जलमुचः क्वचित् ॥ ६ ॥

ततानेति । क्वचिद् गगनस्य कुत्रापि प्रदेशे, जलमुचः मेघस्य, लेखा श्रेणी, लब्धः प्राप्तः, केतुशिखाभिः ध्वजाग्रैः, उल्लेखो विदारणं यस्याः सा तादृशी सती, तेषाम् इन्द्रादीनां, रथे स्यन्दने, विद्युता तडिता करणेन, पीताः पीतवर्णाः, पताकाः ध्वजा येषां तेषां भावः तत्ता तां, ततान विस्तारयामास । ध्वजदण्डाग्रोल्लेखनेनोत्थाः तडितो रथेषु पीतपताकाः इव रेजुरित्यर्थः ॥ ६ ॥

कहींपर ( आकाशके किसी भागमें ) ध्वजाग्रसे विदीर्ण मेघश्रेणिने उन ( इन्द्रादि देवों ) के रथपर बिजलीसे पीली पताकाको फैला दिया । [ आकाशमें जाते हुए देवोंके रथके ऊपर लगी हुई ध्वजाके अग्रभागकी रगड़से विदीर्ण हुई मेघपङ्क्तिसे उत्पन्न बिजली उन रथोंकी ध्वजाओंपर पीले कपड़ेकी पताकाके समान प्रतीत हुई ] ॥ ६ ॥

पुनः पुनर्मिलन्तीषु पथि पाथोदपङ्क्तिषु ।
नाकनाथरथालम्बि बभूवाभरणं धनुः ॥ ७ ॥

पुनः पुनरिति। नाकनाथरथालम्बि इन्द्रस्यन्दनस्थं, धनुः चापः, पथि गगनमार्गे, पुनः पुनः वारं वारं, मिलन्तीषु संसज्यमानासु, पाथोदानां मेघानां, पङ्क्तिषु श्रेणीषु, आभरणं भूषणं, बभूव सञ्जज्ञे यद्यत् मेघवृन्दं रथेन सङ्गच्छते धनुः तस्य तस्य आभरणं बभूव इत्यर्थः। पूर्वं कृत्रिमेन्द्रधनुर्योगः अद्य मुख्येन्द्रधनुर्योगो लब्धः इति भावः। अत्र तादृशासम्बन्धे सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ ७ ॥

स्वर्गाधीश ( इन्द्र ) के रथपर स्थित धनुष ( इन्द्रधनुष ) मार्ग ( आकाश ) में बार-बार सम्बद्ध होती हुई मेघपङ्क्तियोंमें उन ( मेघपङ्क्तियों, अथवा—उस इन्द्ररथ ) का क्षणमात्र भूषण बन गया। [ पहले मेघपङ्क्तियोंका कृत्रिम इन्द्रधनुषसे सम्बन्ध होता था, किन्तु इस समय वास्तविक इन्द्रधनुषसे सम्बन्ध हुआ, अतएव वे शोभने लगीं ] ७ ॥

जले जलदजालानां वज्रिवज्रानुबिम्बनैः ।
जाने तत्कालजैस्तेषां जाताऽशनिसनाथता ॥ ८ ॥

जले इति। जलदजालानां मेघवृन्दानां, जले वारिणि, तत्कालजैः इन्द्रादिगमनकालजातैः, वज्रिवज्रस्य इन्द्रकुलिशस्य, अनुबिम्बनैः प्रतिबिम्बैः, तेषां जलदजालानाम् , अशनिसनाथता वज्रसाहित्यं, वज्रयुक्तत्वमित्यर्थः। जाता सम्भूता, जाने इति मन्ये, इत्युत्प्रेक्षायाम् ॥ ८ ॥

मेघ-समूहके जलमें उस ( इन्द्र-गमन ) समयमें उत्पन्न इन्द्रके वज्रके प्रतिबिम्बोंसे उन ( मेघ-समूहों ) की वज्रासनाथता हुई अर्थात् तभीसे मेघ वज्रयुक्त हुए ऐसा मैं मानता हूं ॥ ८ ॥

स्फुटं सावर्णिवंश्यानां कुलच्छत्रं महीभुजाम् ।
चक्रे दण्डभृतश्चुम्बन् दण्डश्चण्डरुचिं क्वचित् ॥ ९ ॥

स्फुटमिति। क्वचित् कुत्रचित् प्रदेशे, दण्डभृतः यमस्य, दण्डः अस्त्रविशेषः, चण्डरुचिं सूर्यं, चुम्बन् सूर्यमण्डलं स्पृशन् इत्यर्थः। सावर्णिः सूर्यपुत्रः अष्टमो मनुः, तद्वंश्यानां मनुवंशजानां, महीभुजां राज्ञां, कुलस्य वंशस्य, छत्रम् आतपत्रं, चक्रे विदधे। स्फुटमित्युत्प्रेक्षायाम्। अधःप्रदेशे दण्डसंयोगात् अर्कमण्डलं तद्वंश्यराजकुलस्य उद्धृतं छत्रमिव बभौ इत्यर्थः। इन्द्रादयः क्रमात् मेघपथमतीत्य सूर्यमण्डलं प्राप्ताः इति तात्पर्यम् ॥ ९ ॥

कहींपर ( आकाशके किसी प्रदेशमें ) सूर्यको स्पर्श करता हुआ दण्डधारी ( यमराज ) का दण्ड उस ( सूर्य ) को सूर्यवंशी राजाओंके कुलच्छत्र ( कुलक्रमागत श्वेतच्छत्ररूप चिह्न, पक्षा०—कुलश्रेष्ठ )-सा कर दिया। [ सूर्यमण्डलके नीचे स्थित यमराजका दण्ड जब देदीप्यमान श्वेतवर्ण गोलाकार सूर्यका स्पर्श करता था तो वह दण्डस्पृष्ट-श्वेतच्छत्र-सा

शोभता था, उसीको कविने उत्प्रेक्षा की है कि सूर्यवंशी राजाओंका श्वेतच्छत्र-सा हुआ। सब इन्द्रादि देव सूर्यमण्डलमें पहुंच गये ]॥ ९ ॥

नलभीमभुवोः प्रेम्णि विस्मितायाः दधौ दिवः ।
पाशिपाशः शिरःकम्पस्रस्तभूषश्रवःश्रियम् ॥ १० ॥

नलेति । पाशिनः वरुणस्य, पाशः वलयाकारपाशास्त्रं, नलभीमभुवोः नलभैम्योः, प्रेम्णि अन्योऽन्यानुरागे विषये, विस्मितायाः विस्मयाविष्टायाः, दिवः नभसः, शिरःकम्पेन मस्तकचालनेन, स्रस्तभूषस्य गलितावतंसस्य, श्रवसः श्रोत्रस्य, श्रियं शोभां, दधौ धारयामास । अत्र श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनाभेदः ॥ १० ॥

वरुणका पाश ( अस्त्र-विशेष ) नल तथा दमयन्तीके प्रेम ( के विषय ) में आश्चर्यित आकाशके शिरकँपानेसे गिरे हुए भूषणवाले कानकी शोभाको प्राप्त किया। अर्थात् उसके ताटङ्करहित कानके समान वरुणपाश शोभता था ॥ १० ॥

पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी ।
अनेन प्रापि भैमीति भ्रमञ्चक्रे नभःसदाम् ॥ ११ ॥

पवनेति । पवनस्कन्धं वायुपथाख्यस्य नभोदेशांशविशेषस्य उपरिभागम्, आरुह्य अधिष्ठाय, नृत्यत्तराः अतिशयेन नृत्यन्तः, वायुवेगेन अत्यर्थं चञ्चला इत्यर्थः । कराः अंशवः हस्ताश्च यस्य सः तादृशः 'बलिहस्तांशवः कराः' इत्यमरः । शिखी अग्निः, नभःसदां खेचराणाम्, अनेन अग्निना, भैमी दमयन्ती, प्रापि प्राप्ता, अन्यथा कथमेतज्जृम्भणमिति भावः । इति एवं, भ्रमं चक्रे भ्रान्तिं जनयामास इत्यर्थः ॥११॥

वायुके ( ताराचक्राधारभूत ) कन्धेपर चढ़कर अत्यन्त ऊपर उठती हुई ज्वाला ( पक्षा०—नाचते हुए हाथ ) वाली अग्नि 'इस ( अग्नि ) ने दमयन्तीको पा लिया' ऐसा भ्रम देवताओंको पैदा कर दिया। [ अग्निकी ऊपर उठती हुई ज्वालाओंको देखकर अकाशगामी देवोंको भ्रम हो रहा था कि 'इसने दमयन्तीको पा लिया है'। अन्य भी कोई व्यक्ति नववधूको पानेसे मित्रके कन्धेपर चढ़कर हाथोंको नचाया करता है। प्रकृतमें—अग्नि ताराचक्राधारभूत वायुके ऊपर चल रहा था और उसकी ज्वालाएं चारो ओर हिलती हुई फ़ैल रही थी तो ऐसा ज्ञात होता था कि अग्नि अपने मित्र वायुके कन्धेपर चढ़कर हस्तस्थानीय भुजाओंको फैलाता हुआ नृत्य कर रहा है। ]॥ ११ ॥

तत्कर्णौ भारती दूनौ विरहाद् भीमजागिराम् ।
अध्वनि ध्वनिभिर्वैणैरनुकल्पैर्व्यनोदयत् ॥ १२ ॥

तदिति । भारती सरस्वती, भीमजागिरां दमयन्तीवचनानां, विरहात् अभावात् अश्रवणादिति यावत् । दूनौ परितप्तौ, तेषां देवानां, कर्णौ श्रवणौ, अध्वनि आकाशमार्गे, अनुकल्पैः भैमीगिरां सदृशैः, तदपेक्षया हीनगुणैरित्यर्थः । कुशाभावे काशवत् प्रतिनिधिभिरिति भावः । 'मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्य-

मरः। वैणैः वीणासम्बन्धिभिः 'तस्येदम्' इत्यण्। ध्वनिभिः शब्दैः, व्यनोदयत् विनोदितवती ॥ १२ ॥

सरस्वती देवीने दमयन्तीके वचनोंके विरहसे सन्तप्त उन (इन्द्रादि देवों) के कानोंको (दमयन्तीके वचनोंसे) कुछ कम वीणास्वरोंसे मार्गमें विनोदित किया (बहलाया)। [ दमयन्तीके वचनोंके न सुननेसे उन इन्द्रादि देवोंके दोनों कान सन्तप्त हो रहे थे, अतः सरस्वतीने दमयन्तीके वचनोंसे कम मधुर वीणाध्वनियोंसे उनके कानोंको विनोदित किया। लोकमें भी मुख्य वस्तुके अभावमें तत्तुल्य वस्तुसे काम चलाया जाता है; दमयन्तीके वचन सरस्वतीकी वीणाकी ध्वनिसे भी अधिक मधुर थे। सरस्वती देवी वीणा बजाती हुई इन्द्रादि देवोंके साथ आकाशमार्गसे जा रही थीं ] ॥ १२ ॥

अथाऽऽयान्तमवैक्षन्त ते जनौघमसित्विषम्[1]।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्तिमत् ॥ १३ ॥

अथेति। अथ तादृशवाणीवीणाध्वनिश्रवणानन्तरं, ते देवाः, आयान्तम् आगच्छन्तम्, असेः खड्गस्य त्विट् इव त्विट् प्रभा यस्य तादृशम् असिनिभकान्तिम्, असिवत् श्यामोऽज्ज्वलप्रभमित्यर्थः। जनौघं जनसमाजं, तेषां देवानां, प्रत्युद्गमप्रीत्या प्रत्युद्गमनार्थं हर्षेण, मिलत् आगच्छत्, मूर्तिमत् विग्रहवत्, व्योम आकाशमिव, इत्युत्प्रेक्षा, अवैक्षन्त अपश्यन् ॥ १३ ॥

इस (सरस्वती देवीके वीणा बजाने) के बाद उन लोगों (इन्द्रादि चारों देव तथा सरस्वती देवी) ने तलवार (पाठा०—स्याही) के समान कान्तिवाले (श्यामवर्ण या काले) उन (चारो देव तथा सरस्वती देवी) के प्रेमसे अगवानी करनेके लिए शरीरधारी आकाशके समान आते हुए जन-समूहको देखा ॥ १३ ॥

अद्राक्षुराजिहानं ते स्मरसग्रेसरं सुराः।
अक्षाविनयशिक्षार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

अद्राक्षुरिति। ते सुराः इन्द्रादयः, आजिहानम् आगच्छन्तम्, ओहाङ् गताविति धातोर्लटः शानजादेशः। अग्रेसरं जनौघपुरोवर्त्तिनम्, अत एव अक्षाणाम् इन्द्रियाणाम्, अविनयस्य औद्धत्यस्य, दुर्व्यवहारस्य इत्यर्थः। अन्यत्र—अक्षाणां पाशकानाम्, आ सम्यक्, विनयः विनीतता, स्ववशीकरणमित्यर्थः। तस्य 'अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रिये' इति विश्वः। शिक्षार्थम् अभ्यासार्थं, कलिना कलिपुरुषेण, पुरस्कृतं पूजितम्, अग्रतः कृतम् इव स्थितम् इत्यर्थः। स्मरं कामम्, अद्राक्षुः अवालोकिषत। दृशेर्लुङि 'इरितो वा' इति विकल्पादङभावपक्षे सिचि वृद्धिः ॥ १४ ॥

उन लोगों (इन्द्रादि चारो देवों) ने आगे-आगे आते हुए धूर्तों (पक्षा०—इन्द्रियों)

---

1. 'जनौघं मषीत्विषम्' इति पाठान्तरम्।

के सम्यक् विनय ( अथवा—अविनय ) की शिक्षाके लिए अर्थात् द्यूतको अपने वशमें करने ( अथवा—द्यूत-सम्बन्धी अविनय सीखाने ) के लिए कलियुगके द्वारा मानो आगे पूजित-सत्कृत ( पक्षा०—आगे ) किये गये कामदेवको देखा । [ कामदेवको इन्द्रियोंको विकृत करनेमें निपुण होनेसे प्रकृतमें इन्द्रियवाचक 'अक्ष' शब्दके कपटसे द्यूत ( जुए ) के विषयमें नलको अविनय सीखानेके लिए पाशोंके द्वारा नलका निग्रह करनेके लिए मानो कलिने उस कामदेवको आगे कर लिया ( या—पूजित किया ) है, ऐसे उस जन-समूहके आगे आते हुए कामदेवको उन इन्द्रादि देवोंने देखा ] ॥ १४ ॥

अगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः ।
शम्भलीभुक्तसर्वस्वा जना यत्पारिपार्श्वकाः ॥ १५ ॥

**अगम्येति । अगम्यार्थम् अगम्यागमनार्थम् इत्यर्थः । तृणप्राणाः तृणप्रायप्राणाः, प्राणान् तृणवत् अविगणय्य अगम्यागन्तार इत्यर्थः, पृष्ठस्थीकृते पश्चाद्देशस्थीकृते, अविगणिते इति यावत्, भीह्रियौ भयलज्जे यैः तादृशाः, लज्जाभयवर्जिताः इत्यर्थः, शम्भलीभिः कुट्टनीभिः 'कुट्टनी शम्भली समे' इत्यमरः । भुक्तं कवलीकृतमित्यर्थः, सर्वस्वं सर्वधनं येषां तादृशाः, जनाः लोकाः, यस्य स्मरस्य, पारिपार्श्वकाः परिपार्श्ववर्त्तिनः, परिजनाः इत्यर्थः, वयस्या इति यावत् । 'परिमुखञ्च' इति चकारात् ठक् ॥**

अगम्या ( सम्भोग करनेके अयोग्य—रानी, या माता-बहन आदि ) के लिए प्राणोंको तृणतुल्य समझनेवाले अर्थात् प्राणोंको तृणतुल्य तुच्छतम समझकर अगम्यागमन करनेवाले, भय तथा लज्जाको पीठ-पीछे किये हुए अर्थात् निर्भय तथा निर्लज्ज और कुट्टिनियोंने जिनकी सम्पूर्ण धनका भोग कर लिया है ऐसे लोग जिस (कामदेव) के पार्श्ववर्ती ( मित्र या—अनुचर) थे । (उस कामदेवको उन देवोंने उस जनसमूहके आगे-आगे आते हुए देखा)॥

बिभर्त्ति लोकजिद्भावं बुद्धस्य स्पर्द्धयेव यः ।
यस्येशतुलयेवात्र कर्त्तृत्वमशरीरिणः ॥ १६ ॥

**विभर्त्तीति । यः स्मरः, बुद्धदेवेन जित इति भावः, बुद्धस्य सुगतस्य मारजित इत्यर्थः । सम्बन्धसामान्ये षष्ठी । स्पर्द्धया इव संहर्षणेनेव, जिगीषयेवेत्यर्थः, साम्येन इति वा, बुद्धेन सह शौर्यादिभिः समत्वाकाङ्क्षयेत्यर्थः, 'स्पर्द्धा संहर्षणेऽपि स्यात् साम्ये क्रमसमुन्नतौ' इति मेदिनी । लोकजिद्भावं सर्वलोकजेतृत्वं, विभर्त्ति धारयति । 'सर्वज्ञः सुगतो बुद्धो मारजिल्लोकजिज्जिनः' इत्यमरोक्तेः । बुद्धस्य सर्वलोकजेतृत्वादिति भावः । यस्य स्मरस्य, ईशतुलया इव ईश्वरसाम्यापेक्षया इवेत्यर्थः । देहदाहकारीश्वर-स्पर्द्धयेवेति यावत्, शरीरं न भवतीति अशरीरि तस्य अशरीरिणः दग्धदेहत्वात् अनङ्गस्य सतः, अत्र लोके, कर्तृत्वम् एकत्र—जेतृत्वम्, अन्यत्र—स्रष्टृत्वम् उपादाना-दिगोचरापरोक्षज्ञानादिमत्त्वादेवेश्वरस्य कर्त्तृत्वं शरीरमतन्त्रमिति तार्किकाः । पराभि-भूताः तन्मत्सरा तत्साम्याय तद्वत् आचरन्तीति भावः ॥ १६ ॥**

(बुद्धदेवसे जीता गया) जो कामदेव मानों बुद्धदेव (मारजित्–कामविजयी) के साथ स्पर्द्धासे लोकजिद्भाव संसारको जीतनेका भाव धारण करता है तथा (शिवजीके नेत्राग्निमें भस्म हो जानेसे) शरीर रहित अर्थात् अनङ्ग जिस (कामदेव) का इस लोकमें (शरीर रहित) शिवजी का कर्तृत्व है। [बुद्धदेव 'मारजित्' (कामदेवविजयी) तथा 'लोकजित्' (संसारविजयी) हैं, अतः उन बुद्धदेवसे पराजित कामदेव 'मैं भी उस बुद्धदेवके समान ही हो जाऊं' ऐसी उनसे स्पर्द्धा करके समस्त लोगों पर विजय पाता हुआ 'लोकजित्' बन रहा है और वह कामदेव शिवजीके नेत्रकी अग्निसे भस्म होकर अशरीरी (अनङ्ग) हो गया है और जिस प्रकार नैयायिकोंके मतसे अशरीरी शिवजी ही लोकके स्रष्टा (सृष्टिकर्ता) हैं, उसी प्रकार यह कामदेव भी मानो उन (शिवजी) के साथ स्पर्द्धा करता हुआ अशरीरी (अनङ्ग) होकर इस संसारमें कामियोंके मनोविकार (या–मैथुन द्वारा सब लोगोंके प्रति) कर्तृत्व धारण कर रहा है। लोक व्यवहारमें भी देखा जाता है कि प्रबल शत्रुसे पराजित व्यक्ति उसकी समानता करनेके लिए उससे स्पर्द्धा करता हुआ वैसा ही कार्य करता है, इसी प्रकार 'मारजित्' (बुद्धदेव) 'लोकजित्' हैं और शिवजी न्यायसिद्धान्तानुसार अशरीरी होकर सृष्टिकर्ता हैं, उसी प्रकार कामदेव भी क्रमशः 'लोकजित्' तथा 'अनङ्ग' होकर सब लोगोंमें मनोविकार करनेसे सृष्टिकर्ता हो रहा है। बुद्धदेव तथा शिवजीसे जीता गया कामदेव भी 'लोकजित्' होनेसे तथा अशरीरी अर्थात् 'अनङ्ग' होकर सृष्टिकर्ता होनेसे उन दोनोंके समान (अतिशय) बलवान् है। दूसरेसे पराजित व्यक्तिका वैसे आचरणसे उसकी विजेताकी समानता करना उचित ही है]॥ १६॥

ईश्वरस्य जगत् कृत्स्नं सृष्टिमाकुलयन्निमाम्।
अस्ति योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन्[1]॥ १७॥ (कुलकम्)

ईश्वरस्येति। यः स्मरः, तस्य ईश्वरस्य, वैरं शत्रुताम्, अनङ्गीकरणरूपमित्यर्थः, अनुस्मरन् मनःस्थीकुर्वन्, स्त्रियः न भवन्तीति अस्त्रियः, अ-स्त्रीकृताः स्त्रियो येन तादृशः सन्, अत्र स्त्रियाः स्त्रीत्वाभावकरणरूपः विरोधः, तत्परिहारस्तु—अस्त्राणि आयुधानि कृतानि इति अस्त्रीकृताः, अभूततद्भावे च्विः, अस्त्रीकृताः स्त्रियाः येन सः तादृशः अस्त्रीकृतस्त्रीकः सन्, 'नद्यृतश्च' इति कप्। ईश्वरस्य इमां स्त्रीपुंसात्मिकाम् इत्यर्थः, सृष्टिं निर्माणं, कृत्स्नं जगत् आकुलयन् अस्थिरीकुर्वन्, अस्ति वर्त्तते। ईश्वरेण या स्त्रीकृता सा अनेनास्त्रीकृता इति ईश्वरप्रतिकूलाचरणेन, तथा ईश्वरेण त्रिपुरासुरवधकाले विष्णोर्मोहिनी मूर्त्तिरूपा स्त्री शस्त्रीकृता, अनेनापि स्त्रियः शस्त्रीकृता इत्येककार्यकारितया च ईश्वरेण सह स्पर्द्धामसौ अकरोत् इति निष्कर्षः॥ १७॥

स्त्रियोंको अस्त्री करनेवाला जो (कामदेव) उस (शिवजी) के वैर (शरीरदाहकर अनङ्ग बनाना) को स्मरण करता हुआ (पाठा०—मानो स्मरण करता हुआ) शिवजी की

1. 'वैरं स्मरन्निव' इति पाठान्तरम्।

इस सृष्टि समस्त संसारको व्याकुल ( पक्षा०—अपने वशीभूत ) करता हुआ वर्तमान है। शिवजीने जिसे स्त्री किया, कामदेव उसे अस्त्री (स्त्री-भिन्न ) करके उनके प्रति स्पर्द्धा कर रहा है, यहां स्त्रीको स्त्रीभिन्न करना विरोध है, उसका परिहार 'कामदेव स्त्रीको अस्त्र बनाया है' ऐसे अर्थसे करना चाहिये। अथवा—त्रिपुरासुरके वधके समय शिवजीने भी मोहिनी-रूपधारी विष्णु को अस्त्र बनाया था, उसी प्रकार यहां कामदेव भी स्त्रियोंको अस्त्र बनाकर शिवजीके प्रति स्पर्द्धा ( समानता ) कर रहा है। [ इस शिवजीने मुझे भस्मकर अनङ्गतक बना दिया, अतः मैं इनकी कोई क्षति करनेमें समर्थ नहीं होनेसे इनकी बनायी हुई सृष्टि-समस्त संसारको ही पीडितकर बदला चुका लूं ऐसी भावनासे कामदेव संसारको स्त्रीरूपी शस्त्रसे पीडित कर रहा है। लोकमें भी यदि कोई प्रवल शत्रुसे बदला नहीं चुका सकता तो उसके आश्रितोंसे ही बदला चुकाकर आत्मसन्तोष करता है ] ॥ १७ ॥

चक्रे शक्रादिनेत्राणां स्मरः पीतनलश्रियाम् ।
अपि दैवतवैद्याभ्यामचिकित्स्यमरोचकम् ॥ १८ ॥

**चक्रे इति । स्मरः कामः, पीतनलश्रियां पानविषयीकृतनलकान्तीनां, साक्षात्कृत-नलसौन्दर्याणामित्यर्थः । शक्रादिनेत्राणाम् इन्द्रादिचक्षुषां, दैवतवैद्याभ्याम् अश्विनी-कुमाराभ्यामपि, अचिकित्स्यं चिकित्सितुम् अशक्यं, न रोचयते इति अरोचकं रोग-विशेषं, चक्रे जनयामास, नलरूपदर्शिभ्यः तेभ्यः स्मररूपं न अरोचत इत्यर्थः । स्मरादपि रमणीयो नल इति भावः ॥ १८ ॥**

कामदेवने नलकी शोभाका पान किये हुए अर्थात् नलकी शरीरशोभाको अच्छी तरह देखे हुए इन्द्रादिके नेत्रोंका 'अश्विनीकुमार' नामक स्ववैद्योंसे भी अचिकित्स्य ( जिसकी चिकित्सा नहीं की जा सके ऐसा अर्थात् ला-इलाज ) अरोचक ( रुचिका अभाव अथवा—नहीं रुचने वाला रोग-विशेष ) कर दिया। [ कामकी अपेक्षा अतिशय सुन्दर नलको देख-कर लौटते हुए इन्द्रादि देवको नलापेक्षा हीन सौन्दर्यवाले कामदेवको देखकर प्रीति नहीं हुई। 'केवल कामदेवसे ही नल अधिक सुन्दर नहीं थे, किन्तु अश्विनीकुमारसे भी अधिक सुन्दर थे' यह भी ध्वनित होता है। कामदेवको देखकर भी इन्द्रादि देव रुके नहीं और आगे चल दिये। लोकमें भी अतिशय सुन्दर वस्तु देखने के उपरान्त उससे हीन वस्तुको देखनेकी रुचि नहीं हुआ करती है ] ॥ १८ ॥

यत्तत् क्षिपन्तमुत्कम्पमुत्थायुकमथारुणम् ।
बुबुधुर्विबुधाः क्रोधमाक्रोशाक्रोशघोषणम् ॥ १९ ॥

**यदिति । अथ स्मरदर्शनानन्तरं, विबुधाः देवाः, यत्तत् यत्किञ्चित् लोष्टादिकं वस्तु इत्यर्थः । क्षिपन्तं दूरात् मुञ्चन्तं, परप्रहाराय इति भावः । उत्कम्पं कम्पितं, क्रोधावेगेन कम्पनस्य स्वाभाविकत्वादिति भावः । उत्थायुकं युद्धार्थम् उल्लम्फयन्तम्,**

१. '—दुश्चिकित्स्य—' इति पाठान्तरम् । २. '-क्रोशभूषणम्' इति पाठान्तरम् ।

आक्रोशं क्रोशपरिमितदूरपर्यन्तं क्रोशमभिव्याप्य वा, आक्रोशस्य परनिन्दावादसहित-तिरस्कारस्य, घोषणा उच्चैरुच्चारणं यस्य तादृशम्, उच्चैः तर्जनसहकारेण परनिन्दां कुर्वाणाम् इत्यर्थः, अरुणं रक्तवर्णं, क्रोधं मूर्त्तिमन्तं क्रोधाख्यं रिपुविशेषं, बुबुधुः ददृशुः इत्यर्थः, निरुक्तचिह्नैरयं क्रोध इति अवगतवन्तः इति तात्पर्यम्। बुधेर्भौवादिकाल्लट्॥ १९॥

विबुधों (इन्द्रादि देवों, पक्षा०—विशिष्ट विद्वानों) ने—जो कुछ (पत्थर, ढेला, काष्ठ आदि) भी फेंकते हुए, कम्पित होते हुए, लड़नेके लिए तैयार (खड़े उठे) हुए, (क्रोधसे) रक्त वर्ण और कोशों दूरतक पहुंचने वाले उच्च स्वरसे परनिन्दाको चिल्लाते हुए (पाठा०—…परनिन्दारूप भूषण वाले) क्रोधको पहचाना। [क्रोधी का उपर्युक्त स्वभाव होनेसे देवोंने 'यह क्रोध है' ऐसा पहचाना]॥ १९॥

यमुपासत दन्तौष्ठक्षतासृक्शिष्यचक्षुषः।
भ्रुकुटीफणिनीनादनिभनिःश्वासफूत्कृताः॥ २०॥

यमिति। यं क्रोधं, दन्तैः ओष्ठस्य क्षतेन दंशनजव्रणेन, यत् असृक् रक्तं, तच्छिष्याणि तत्कल्पानि इत्यर्थः, चक्षूंषि नेत्राणि येषां तादृशाः, भ्रुकुटी एव भ्रूसङ्कोचनमेव, फणिनी भुजङ्गी, तन्नादनिभानि तत्फूत्कारकल्पानि, निःश्वासफूत्कृतानि निःश्वासस्य फूत् इति प्रबलशब्दा येषां तादृशाः, परिजनाः इति शेषः, उपासत असेवत, आसेर्लुङ्। तत्सेवका अपि तादृशा एवेत्यर्थः॥ २०॥

दांतसे ओठ कटने पर उत्पन्न रक्तके समान नेत्रवाले तथा भ्रुकुटी (का सञ्चालन अर्थात् सङ्कुचित करना तथा फेंकना) रूपिणी सर्पिणीकी ध्वनि (फुफकार) के समान श्वाससे फुफकार करते हुए व्यक्ति जिस (क्रोध) की उपासना करते थे ('उस क्रोधको देवोंने पहचाना' ऐसा पूर्व (१७।१९) श्लोकसे सम्बन्ध समझना चाहिये)। [क्रोधमें दांतोंसे ओष्ठ का काटना, नेत्रोंका रक्ततुल्य लाल होना, भ्रुकुटी का बार-बार चढ़ना एवं सङ्कुचित होना तथा सर्पिणीके समान गर्म-गर्म फुत्कारयुक्त श्वास चलना स्वभाव होता है। उस क्रोधके परिजन भी वैसे ही थे]॥ २०॥

दुर्गं कामाशुगेनापि दुर्लङ्घ्यमवलम्ब्य यः।
दुर्वासोहृदयं लोकान् सेन्द्रानपि दिधक्षति॥ २१॥

दुर्गमिति। यः क्रोधः, कामाशुगेन कन्दर्पबाणेन अपि, दुर्लङ्घ्यं दुरतिक्रमम्, अजेयमित्यर्थः। दुर्वाससः तदाख्यस्य अतिक्रोधिनः मुनेः हृदयं चित्तम् एव, दुर्गं कोट्टम्, अवलम्ब्य आश्रित्य, सेन्द्रान् इन्द्रादिदेवतासहितानपि, लोकान् भुवनानि, त्रैलोक्यमित्यर्थः, दिधक्षति शापाग्निना दग्धुमिच्छति। दहतेः सनन्ताल्लट्‌ दग्धकस्वभावाः। दुर्लङ्घ्यदुर्गावलम्बनो दुर्जेय इति भावः। नित्यक्रुद्धो भगवान् दुर्वासा दुर्द्धर्षश्चेति प्रसिद्धम्॥ २१॥

जो ( क्रोध ) कामवाणसे भी दुर्लङ्घ्य अर्थात् दुर्जय ( अतएव ) दुर्ग ( किला, पक्षा०— दुःखसे गम्य ) दुर्वासा मुनिके हृदय का अवलम्बनकर इन्द्रके साथ रसिकोंको भी जलानेकी इच्छा करता है । [ सदा क्रोधपूर्ण दुर्वासा मुनि शापसे इन्द्र सहित सब संसार को जलाने की जिस प्रकार इच्छा करते थे, उसी प्रकार यह क्रोध भी इच्छा करता है । पर्वतादि से दुर्गम भूमि ( या-किला ) वाणोंसे भी अजेय होती है ] ॥ २१ ॥

वैराग्यं यः करोत्युच्चै रञ्जनं जनयन्नपि ।
सूते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥ २२ ॥

**वैराग्यमिति । यः क्रोधः, उच्चैः अत्यर्थं, रञ्जनं रागं, रक्तवर्णतामिति यावत् । जनयन् अपि उत्पादयन्नपि, वैराग्यं तद्राहित्यं, करोति जनयतीति विरोधः, नैस्पृह्यं करोतीति तदाभासीकरणात् विरोधाभासोऽलङ्कारः, क्रुद्धस्य न कुत्रापि अनुरागः इति भावः, तथा यः क्रोधः, प्रज्वलन् सन्धुक्षमाणोऽपि, प्रकाशमानः अपि इत्यर्थः, अन्तः सन्तापयन्नपि इत्यर्थश्च, सर्वेन्द्रियाणि चक्षुरादीनि ज्ञानेन्द्रियाणि आच्छादयतीति तदाच्छादि सर्वेन्द्रियवरकं, ज्ञानेन्द्रियाणामावरकमित्यर्थः, तमः मोहम् अन्धकारञ्च, सूते जनयति क्रोधान्धो न किञ्चित् पश्यतीति भावः । अत्र प्रज्वलत्तमः-शब्दयोः अर्थभेदेन विरोधपरिहारात् पूर्ववदलङ्कारः ॥ २२ ॥**

जो ( क्रोध ) अत्यधिक लालिमाको पैदा करता हुआ भी वैराग्य अर्थात् रंग (लालिमा) का अभाव पैदा करता है तथा जो ( क्रोध ) प्रज्वलित ( प्रकाशित ) होता हुआ भी सम्पूर्ण इन्द्रियों ( नेत्रादि ) को आच्छादित करनेवाले अन्धकारको पैदा करता है । यहां 'लालिमा-को पैदा करनेवाला उसके अभावको कैसे पैदा करेगा ? तथा प्रज्वलित होता हुआ नेत्रादिके शक्तिको रोकनेवाले अन्धकार को कैसे पैदा करेगा ?' यह विरोध हुआ, उसका परिहार यह है कि—जो ( क्रोध ) मुख नेत्र आदिमें लालिमा को पैदा करता हुआ अर्थात् मुखनेत्रादि को लाल करता हुआ भी उद्वेग ( या निःस्पृहता ) पैदा करता है तथा प्रज्वलित होता अर्थात् अतिशय बढ़ता हुआ भी सब ( बाहरी नेत्रादि तथा भीतरी ज्ञान ) इन्द्रियोंको आच्छादित करनेवाले अज्ञानको पैदा करता है । ( अथवा—जो क्रोध हिंसादि कार्यमें प्रीति पैदा करता हुआ भी ( अनिष्टोत्पादनके पश्चात्तापसे प्रायश्चित्त का कारणभूत ) वैराग्यको करता है तथा… ) । [ क्रोधसे मुख-नेत्रका लाल होना तथा उसके बढ़नेसे केवल नेत्रादिका ही नहीं, अपि तु ज्ञानतक का आच्छादित ( शक्तिहीन ) हो जाना सर्वविदित है । आशय यह है कि—क्रुद्धको कहीं भी अनुराग नहीं होता तथा क्रोधसे अन्धा कुछ भी देखता ( या समझता ) नहीं है ] ॥ २२ ॥

पञ्चेषुविजयासक्तौ[1] भवस्य क्रुध्यतो जयात् ।
येनान्यविगृहीतारिजयकालनयः श्रितः ॥ २३ ॥

1. '—शक्त्यौ' इति पाठान्तरम् ।

पञ्चेष्विति। येन क्रोधेन, पञ्चेषुविजयासक्तौ पञ्चेषुविजये कन्दर्पपराभवे, या आसक्तिः तत्परता तस्यां, कन्दर्पभस्मीकरणाभिनिवेशे, क्रुध्यतः स्मराय कुप्यतः, भवस्य हरस्य कर्मणि षष्ठी। जयात् स्वाधीनीकरणात् हेतोः, अन्येन पुरुषान्तरेण, विगृहीतस्य आक्रान्तस्य, अरेः शत्रोः, जयकाले आयत्तीकरणसमये, यो नयः नीतिः सः, श्रितः अवलम्बितः, तत्कालोचिता नीतिराश्रिता इत्यर्थः। अन्यदा महादेवं जेतुमशक्योऽपि स्मरविग्रहकाले स्मरहरं क्रोधो जिगाय तत्काले तस्य क्रोधवशीभूतत्वादिति भावः। अत्र कामन्दकः—'बलिना विगृहीतस्य द्विषता कृच्छ्रवर्त्तिनः। कुर्वीताऽपचयं शत्रोरात्मच्छित्तिविशङ्कया॥' इति ॥ २३ ॥

जिस (क्रोध) ने कामदेवके विजयमें संलग्न होने पर क्रुद्ध शिवजीको अपने वशमें करनेसे दूसरेके साथ युद्ध करते हुए शत्रुको विजय करनेके अवसरकी नीतिको ग्रहण किया। ['जिस शत्रुको दूसरे समय में नहीं जीता जा सकता, तो जब वह किसी दूसरे शत्रुसे युद्ध करता हो उस समय उसे जीता जा सकता है' इस नीतिके अनुसार शिवजीको कभी भी नहीं जीत सकनेवाले क्रोधने जब वे (शिवजी) कामदेवको विजय करने (जलाने) में आसक्त हुए तब उपयुक्त अवसर देखकर उनको जीत लिया अर्थात् उन्हें अपने अधीन कर लिया। जिसने शिवजीको भी अवसर पाकर हराकर अपने वशमें कर लिया, उस क्रोधके पराक्रम का फिर क्या कहना है?] ॥ २३ ॥

हस्तौ विस्तारयन्निभ्ये बिभ्यदर्द्धपथस्थवाक्।
सूचयन् काकुमाकूतैर्लोभस्तत्र व्यलोकि तैः ॥ २४ ॥

हस्ताविति। तत्र जनौघे, तैः इन्द्रादिभिः, इभ्ये धनिके 'इभ्य आढ्यो धनी स्वामी' इत्यमरः। हस्तौ करौ, विस्तारयन् प्रसारयन्, याच्ञामुद्रया इति भावः। बिभ्यत् अयं कटूक्तिं करिष्यति न वेति त्रस्यन्, अत एव अर्द्धपथस्थवाक् अर्द्धोक्तवाक्यः, आकूतैः अभिप्रायविशेषैः, आत्मनो दैन्यज्ञापकचेष्टाविशेषैरित्यर्थः। काकुं शोकभीत्यादिजनितां स्वरविकृतिं, सूचयन् कुर्वन्नित्यर्थः, भयेन गद्गदभाषीत्यर्थः, लोभः विग्रहवान् तदाख्यरिपुविशेषः, व्यलोकि दृष्टः ॥ २४ ॥

उस (जन-समूह) में उनलोगों (इन्द्रादि चारो देवों) ने धनिकके (सामने) में दोनों हाथ पसारे हुए, (यह देगा या नहीं, अथवा—कटु वचन तो नहीं कह देगा? इस भावनासे) डरते हुए (अत एव) आधी बातको कहे हुए तथा (हाथ जोड़ने, पेट आदि दिखलाकर अपनेको भूखा बतलानेकी) चेष्टाओंसे दीन वचनोंको सूचित करते (अस्पष्ट गद्गद वचन बोलते) हुए (शरीरधारी) लोभ को देखा ॥ २४ ॥

दैन्यस्तैन्यमया नित्यमत्याहारमयाविनः।
भुञ्जानजनसाकूतपश्या यस्यानुजीविनः ॥ २५ ॥

दैन्येति। दैन्यं दारिद्र्यं, स्तैन्यं स्तेयम् 'स्तेनात् यत् नलोपश्च' इत्यत्र स्तेनादिति

योगविभागात् ष्यण्प्रत्ययः। तदुभयमयाः तत्प्रचुराः, नित्यं सर्वदा, अत्याहारेण बहुभोजनेन, आमयाविनः अजीर्णादिरोगिणः 'आमयस्योपसङ्ख्यानं दीर्घश्च' इति विन् दीर्घश्च। तथा भुञ्जानानाम् अश्नतां, जनानां लोकानां, साकूतं साभिप्रायं, पश्यन्ति अवलोकयन्तीति पश्या द्रष्टारः। 'पाघ्रा—' इत्यादिना शप्रत्ययः, पश्यादेशश्च। जना इति शेषः। यस्य लोभस्य, अनुजीविनः अनुचराः ॥ २५ ॥

अतिशय दीनता तथा चोरीसे युक्त, सर्वदा अधिक भोजन करनेसे ( मन्दाग्नि आदि ) रोगोंसे युक्त और भोजन करते हुए लोगोंको ( ये सभी भोजन पदार्थ खा जायेंगे मुझे नहीं देंगे क्या ?, इनके लिये कितने अच्छे-अच्छे खाद्य पदार्थ परोसे गये हैं, मेरे लिए नहीं इत्यादि ) अभिप्रायसे देखते हुए लोग जिस ( लोभ ) के अनुजीवी थे, ( ऐसे लोभको उस जन समूहमें उन इन्द्रादि देवोंने देखा ऐसा सम्बन्ध पूर्व ( १६।२४ ) श्लोकसे करना चाहिये )। [ लोभीका ऐसा स्वभाव ही होता है ] ॥ २५ ॥

धनिदानाम्बुवृष्टेर्यः पात्रपाणाववग्रहः ।
स्वान् दासानिव हा ! निःस्वान्[1] विक्रीणीतेऽर्थवत्सु यः ॥ २६ ॥

धनिदानेति। यः लोभः, पात्रपाणी पात्रस्य सम्प्रदानार्हजनस्य, पाणौ हस्ते, निःस्वजनकरे इत्यर्थः। धनिनाम् अर्थशालिनां, दानाम्बुवृष्टेः त्यागोदकवर्षस्य, अवग्रहः प्रतिबन्धकस्वरूपः। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः। प्रभूतधनसत्त्वेऽपि लोभवशीभूतः सन् पात्रपाणी दानार्थोदकं नार्पयतीति भावः। तथा निःस्वान् धनहीनान्, स्वान् स्वजनान्, पुत्रदारादीनिति यावत्। दासान् इव किङ्करानिव, अनायासदेयान् इव इति यावत्। अर्थवत्सु आढ्येषु, विक्रीणीते अर्थविनिमयेन ददाति, लोभात् इति भावः। हा ! इति विषादे अहो लोभस्य वैचित्र्यमयी शक्तिरिति भावः ॥ २६ ॥

जो ( लोभ ) पात्र ( दान लेनेवाले ) के हाथ पर धनिकोंके दान-सम्बन्धी वृष्टिका प्रतिबन्धक है अर्थात् जिस लोभके कारण धनी व्यक्ति पात्रोंके हाथमें सङ्कल्प करके दानजल नहीं अर्पण करता, जो ( लोभ ) निर्धन ( पाठा०—निर्धनताके कारणसे ) आत्मा ( अपने या—अपने पुत्र स्त्री बान्धवादि ) को धनवानोंमें दासके समान बेंच देता है, हाय ! ( 'उस लोभको देवोंने जन-समूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२४ ) श्लोकसे करना चाहिये )॥

एकद्विकरणे हेतू महापातकपञ्चके ।
न तृणे मन्यते कोपकामौ यः पञ्च कारयन् ॥ २७ ॥

एकेति। यः लोभः, पञ्च ब्रह्महत्यादीनि पञ्चापि महापातकानि, कारयन् नरादिना स्वयम् अनुष्ठापयन्, महापातकानां 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।

---

1. 'निःस्वाद्' इति पाठान्तरम्।

महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ।' इत्युक्तानां ब्रह्महत्यादीनां, पञ्चके पञ्चकमध्ये, एकश्च द्वे च एकद्वीनि । सङ्ख्येयद्वन्द्वे बहुत्वोपजननात् बहुवचनम् । तेषाम् एकद्वीनां, यथासङ्ख्यम् एकस्य ब्रह्महननस्य द्वयोः पानागम्यागमनयोश्च, करणे अनुष्ठाने, हेतू कारणभूतौ, कोपकामौ क्रोधकामौ, तृणे तृणतुल्यौ तुच्छौ इत्यर्थः । अपीति शेषः । न मन्यते न गणयति इत्यर्थः । न हि बहुकारी स्वल्पकारिणं गणयतीति भावः । कामक्रोधाभ्यामपि पापिष्ठो लोभ इति रहस्यम् ॥ २७ ॥

जो ( लोभ ) पांच महापातकों को कराता हुआ एक ( ब्रह्महत्या ) तथा दो ( अगम्यासम्भोग तथा ब्रह्महत्या, अथवा—मद्यादिपान और अगम्यासम्भोग ) को करनेमें कारण कोप तथा कामको तृण ( के समान तुच्छ ) मानता है । ( 'ऐसे लोभको इन्द्रादि देवोंने जन समूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२४ ) श्लोकसे करना चाहिये ) । [ क्रोधके कारण ब्रह्महत्यारूप एक तथा कामके कारण अगम्या ( गुरुपत्नी आदि ) के साथ सम्भोग तथा स्त्रीकामके कारण उसके पति ब्राह्मण का वध ( अथवा—कामके कारण मद्यादि पान तथा अगम्या ( गुरुपत्नी आदि ) के साथ सम्भोग ) रूप दो महापातकोंमें क्रमशः कोप तथा काम कारण हैं और धनादिलोभसे ब्रह्महत्या, सुवर्ण की चोरी, रसलोभके कारण मदिरापान, स्त्रीलोभ अथवा स्त्रीजाति प्रदर्शित धनलोभके कारण गुरुपत्नी आदिके साथ सम्भोग और इष्ट-संग्रहके लोभके कारण इन चार पातककर्ताओंके साथ संसर्ग होता है, इस प्रकार लोभके कारण पाचों महापाप होते हैं और कोप तथा काम पूर्वोक्त प्रकारसे क्रमशः एक और दो महापातकोंके कारण हैं । अतः पांच महापातकों को कराने वाला लोभ क्रमशः एक तथा दो महापातकोंके कारणभूत कोप तथा कामको तृणतुल्य तुच्छ मानता है । अधिक करनेवाला थोड़े करनेवाले को नहीं मानते, काम तथा क्रोधसे भी लोभ महापापी है ] ॥२७॥

यः सर्वेन्द्रियसद्मापि जिह्वां बह्ववलम्बते ।
तस्यामाचार्य्यकं याच्ञापटवे बटवेऽर्जितुम् ॥ २८ ॥

य इति । यः लोभः, सर्वेन्द्रियाणि चक्षुरादीनि पञ्चैव, सद्म आश्रयः यस्य सः तादृशः सन् अपि, सर्वेन्द्रियाधिष्ठानोऽपि, जिह्वां रसनेन्द्रियमेव, बहु प्रचुरतया, अवलम्बते आश्रयति, प्रायेण तत्रैवास्ते इत्यर्थः । किमर्थम् ? तत्राह—तस्यां जिह्वायाम् , अध्ययनशालाभूतायामिति भावः, याच्ञापटवे भिक्षानिपुणाय, [१]बटवे ब्राह्मणाय, शिष्यभूताय इति भावः । आचार्यकं गुरुत्वम् , अर्जितुं लब्धुमिवेत्युत्प्रेक्षा। लुब्धब्राह्मणबटुभ्यः याच्ञवाणीशिक्षादानार्थं वागिन्द्रियमधिष्ठाय आचार्यो भूत्वा वर्त्तते इत्यर्थः । गुरवस्तु अध्ययनशालायां स्वशिष्येभ्यो विद्याशिक्षां ददतीति प्रसिद्धम् । अत्रोपमोत्प्रेक्षाभ्यां सजतीत्यकाभ्यां वाक्यार्थयोः शब्दहेतुत्वात् शब्दार्थहेतुककाव्यलिङ्गमलङ्कारः सङ्कीर्यते इत्यलङ्कारत्रयस्य परस्परसम्बन्धेनाङ्गाङ्गिभावः ॥२८॥

---

१. 'याच्ञाचाटवे बटवे' इति, 'याच्ञावटवे पटवे' इति च पाठान्तरम् ।

सम्पूर्ण इन्द्रियोंमें रहता हुआ भी जो ( लोभ ) याचनामें चतुर वटु ( शिष्यभूत ब्राह्मण-बालक ) में आचार्यत्व पानेके लिए अर्थात् उक्तरूप वटुके आचार्य बननेके लिए जिह्वामें अधिक रहता है। [ गन्धका लोभी नाक, सौन्दर्यादि रूपका लोभी नेत्र, कोमलादि स्पर्शका लोभी त्वक् इत्यादि प्रकारसे पांचों ( 'प्रकाश' के मतसे छहों ) इन्द्रियोंमें रहनेवाला भी लोभ जीभमें अधिक निवास करता है, अर्थात् लोभके कारण ही सभी लोग याचना करते समय प्रिय एवं स्तुतिपरक ( चापलूसीके ) वचन बोलते हैं। इसमें उत्प्रेक्षा की गयी है कि—जिस प्रकार गुरुकुल आदि विद्यामन्दिरमें याचना ( भिक्षा मांगने ) में चतुर ब्रह्मचारी बालकका आचार्य सर्वदा निवास करता है, उसी प्रकार मानों लोभ याचनामें चतुर ( प्रिय एवं चापलूसीके वचनोंको कहकर याचना करनेमें निपुण ) बालकके आचार्य बननेके लिए विद्यामन्दिर-स्थानीय उस जिह्वामें अधिक निवास करता है। अन्यत्र रहते हुए भी विद्यामन्दिरमें विशेषरूपसे निवास करते हुए आचार्य शिष्योंको जिस प्रकार शिक्षा देते हैं, उसी प्रकार सर्वेन्द्रियोंमें रहता हुआ भी जिह्वेन्द्रियमें अधिक रहता हुआ लोभ लोगोंको याचना चातुर्यकी शिक्षा देता है ] ॥ २८ ॥

पथ्यां तथ्यामगृह्णन्तं[1] मन्दं बन्धुप्रबोधनाम् ।
शून्यमाश्लिष्य नोज्झन्तं मोहमैक्षन्त हन्त ते ॥ २९ ॥

पथ्यामिति । ते देवाः, मन्दं मूढस्वभावम् , अत एव पथ्यां हितां, तथ्यां सत्यां युक्तियुक्तामिति यावत् । बन्धुप्रबोधनां सुहृदुपदेशम् , अगृह्णन्तम् अस्वीकुर्वाणम् , अशृण्वन्तमित्यर्थः । शून्यं यत्किञ्चित् तुच्छं वस्तु इत्यर्थः । आश्लिष्य अवलम्ब्य इत्यर्थः । न उज्झन्तं मौढ्यात् न त्यजन्तं, हन्तेति खेदे, मोहं मूर्त्तिमन्तं तदाख्यं चतुर्थरिपुम् , ऐक्षन्त अपश्यन् ॥ २९ ॥

उनलोगों ( इन्द्रादि चारो देवों ) ने मन्द ( मूढ स्वभाववाले, अतएव ) हितकर एवं सत्य बान्धवोपदेश ( यह कार्य श्रेयस्कर होनेसे ग्राह्य तथा यह कार्य अनिष्टकर होनेसे त्याज्य है, इत्यादि हितकर एवं सत्य बन्धुमित्रादिके उपदेश ) को नहीं ग्रहण करते हुए तथा शून्य ( तुच्छतम कोई वस्तु या अप्रामाणिक अनात्मभूत जड देह-इन्द्रियादिको अज्ञानवश आत्मस्वरूप ) मानकर ( मूर्खतावश हजारों बार समझानेपर भी ) नहीं छोड़ते हुए मोहको ( उस जनसमूहमें ) देखा, हाय ! खेद ( या-आश्चर्य ) है ॥ २९ ॥

श्वः[2] श्वः प्राणप्रयाणेऽपि न स्मरन्ति स्मरद्विषम्[3] ।
मग्नाः कुटुम्बजम्बाले बालिशा यदुपासिनः ॥ ३० ॥

श्वः श्वः इति । यदुपासिनः यस्य मोहस्य सेवकाः, अत एव कुटुम्बजम्बाले पुत्रकलत्रादिरूपपङ्के । 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः । मग्नाः

१. '—न्तमन्धम्' इति 'प्रकाश' व्याख्यातं पाठान्तरम् ।
२. 'शश्वत्' इति पाठान्तरम् । ३. 'स्मरद्विषः' इति पाठान्तरम् ।

अन्तः प्रविष्टा इत्यर्थः । बालिशाः मूर्खाः, श्वः श्वः आगामिदिवसे आगामिदिवसे, परश्वः इत्यर्थो वा । प्राणानां जीवनस्य, प्रयाणे निष्क्रमणेऽपि जीवनत्यागेऽपि, स्मरद्विषं कामारिम् ईश्वरं शङ्करं, न स्मरन्ति न चिन्तयन्तीत्यर्थः ॥ ३० ॥

जिस ( मोह ) के अनुचर कुटुम्बरूपी पङ्कमें मग्न ( 'यह बालक क्या करेगा ? यह स्त्री क्या करेगी ? इस खेत, उद्यान आदिका क्या होगा ?' इत्यादि कुटुम्बकी चिन्तामें ही फँसा हुआ ) मूर्ख ( अथवा—स्वयं ज्ञानशून्य होनेसे दूसरेके सदुपदेशको नहीं स्वीकार करनेके कारण बालक ) कल कल अर्थात् कल और परसों ( पाठा०—निरन्त ) जीवके निकलते ( मरते ) रहनेपर भी शङ्करजीका स्मरण नहीं करते अर्थात् 'उत्पन्नका विनाश अवश्यम्भावी है' इस नीतिके अनुसार रोगी नहीं रहनेपर या सन्निपातादि असाध्य रोगके कारण मृत्युके सन्निहित रहनेपर भी उक्त प्रकारसे कुटुम्बके लिये ही चिन्तित रहते हुए लोकसमुद्रतारक शिवजीका स्मरण नहीं करते, ( ऐसे 'मोह को उन इन्द्रादि चारों देवोंने उस जन-समूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२९ ) श्लोकसे करना चाहिये ) ॥ ३० ॥

पुंसामलब्धनिर्वाणज्ञानदीपमयात्मनाम् ।
अन्तर्म्लापयति व्यक्तं यः कज्जलवदुज्ज्वलम् ॥ ३१ ॥

पुंसामिति । यः मोहः, अलब्धः अप्राप्तः, निर्वाणज्ञानदीपमयः निर्वाणज्ञानं मोक्षविषयिणी बुद्धिः, तदेव दीपः प्रकाशकत्वात् प्रदीपः, तन्मयः तदात्मकः, आत्मा स्वभावः यैः तेषाम् अनात्मज्ञानां, विषयासक्तानामित्यर्थः । पुंसाम् उज्ज्वलं स्वभावत एव निर्मलम्, अन्तः अन्तःकरणं, कज्जलवत् अञ्जनवत्, व्यक्तं स्फुटं, म्लापयति मलिनीकरोति मोक्षसाधनात्मसाक्षात्कारविघातकोऽयं दुरात्मेत्यर्थः ॥ ३१ ॥

जो ( मोह ) मोक्ष-साधक ज्ञानरूपी दीपकको नहीं प्राप्त किये हुए अर्थात् अद्वैतज्ञानहीन ( अथवा—अविनष्ट ज्ञानदीपकयुक्त आत्मावाले ) पुरुषोंके स्वभावतः निर्मल अन्तःकरण ( पक्षा०—मध्यभाग ) को कज्जलके समान स्पष्टतः मोहित ( कालिमायुक्त ) कर देता है ( 'ऐसे मोहको उन देवोंने उस जनसमूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२९ ) श्लोकके साथ समझना चाहिये ) । [ जिस प्रकार जलता हुआ दीपक अपने कज्जलके द्वारा अत्यन्त निर्मल पात्रके भी मध्यभागको कालिमायुक्त कर देता है, उसी प्रकार जो मोह ज्ञानदीपकयुक्त आत्मावाले मुनियोंके भी अतिशय शुद्ध मनको दूषित कर देता है, क्योंकि विश्वामित्रादिका मेनकादिको देखकर मोहित होनेकी कथा पुराणोंमें उपलब्ध होती है । अत एव मोक्षसाधन आत्मसाक्षात्कारका विनाशक यह मोह है ] ॥ ३१ ॥

ब्रह्मचारिव्रतस्थायियतयो गृहिणं यथा ।
त्रयो यमुपजीवन्ति क्रोधलोभमनोभवाः ॥ ३२ ॥

---

१. '—वनस्थायि—' इति पाठान्तरम् ।

ब्रह्मचारीति । ब्रह्मचारिव्रतस्थायियतयः ब्रह्मचारिवानप्रस्थभिक्षुरूपाः, त्रयः आश्रमत्रयम् इत्यर्थः । गृहिणं गृहस्थाश्रमिणं, यथा इव, क्रोधलोभमनोभवाः क्रोधलोभकामाः त्रयः, यं मोहम् , उपजीवन्ति आश्रित्य वर्त्तन्ते । मोहमूलास्ते तन्निवृत्तौ तेऽपि निवर्त्तन्ते इति भावः ॥ ३२ ॥

जिस प्रकार ब्रह्मचारी, वानप्रस्थ तथा संन्यासी तीनों ही ( भोजन-वस्त्रादिके लिये ) गृहस्थका आश्रय करते हैं, उसी प्रकार क्रोध, लोभ तथा काम तीनों ही जिस ( मोह ) का आश्रय करते हैं ('उस मोहको देवोंने उस जन-समूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२९ ) श्लोकसे समझना चाहिये ) । [मोहसे ही क्रोध, लोभ तथा काम होते हैं]॥३२॥

जाग्रतामपि निद्रा यः पश्यतामपि योऽन्धता ।
श्रुते सत्यपि जाड्यं यः प्रकाशेऽपि च यस्तमः ॥ ३३ ॥

जाग्रतामिति । यः मोहः, जाग्रतां प्रबुद्धानाम् अपि, निद्रा निद्रास्वरूपः, निद्राया इव सदसज्ज्ञानविलोपकत्वादिति भावः । यः मोहः, पश्यतां चक्षुष्मताम् अपि, अन्धता तद्राहित्यम्, अन्धो यथा सुपथं कुपथं वा निश्चेतुं न शक्नोति तद्वदिति भावः। यः मोहः, श्रुते शास्त्रे, शास्त्रज्ञाने इत्यर्थः । सत्यपि विद्यमानेऽपि, जाड्यं मौढ्यं, जडवत् शास्त्रविरुद्धकार्यकरणादिति भावः । यश्च मोहः, प्रकाशे आतपे, रौद्रे सत्यपि इत्यर्थः । तमश्च अन्धकारः, अन्धकारे यथा वस्तुज्ञानं न भवति तद्वदिति भावः । निद्रादिचतुष्टयकार्यकारित्वात् तद्वत् जागरचक्षुरादिभिरनिवर्त्त्यत्वाच्च प्रसिद्धनिद्रादिचतुष्टयविलक्षणः कोऽपि तत्समष्टिरिति निष्कर्षः ॥ ३३ ॥

जो ( मोह ) जागते ( सावधान रहते ) हुए लोगोंकी भी निद्रा ( निद्राके समान भले-बुरेके ज्ञानका नाशक ) है, जो ( मोह ) देखते हुए लोगोंका भी अन्धापना ( अन्धेके समान भले-बुरे मार्गको ज्ञानसे शून्य करनेवाला ) है, जो ( मोह ) शास्त्र ( श्रवण ) होनेपर भी मूर्खता ( मूर्खके समान शास्त्रविरुद्ध कार्यमें प्रवृत्त करनेवाला ) है और जो ( मोह ) प्रकाशमें भी अन्धकार ( अन्धकारके समान ग्राह्य-त्याज्य पदार्थोंके ज्ञानसे रहित करनेवाला ) है; ( 'उस मोहको इन्द्रादि चारो देवोंने उस जन-समूहमें देखा' ऐसा सम्बन्ध पूर्व ( १७।२९ ) श्लोकसे करना चाहिये ) । [ निद्रादि चारोंके कार्यको करनेसे तथा उस प्रकार जागरणादिके द्वारा अनिवार्य होनेसे लोकप्रसिद्ध निद्रादिसे विलक्षण तत्समुदायरूप अनिर्वचनीय वह मोह है ] ॥ ३३ ॥

( [1]कुरुसैन्यं हरेणेव प्रागलज्जत नार्जुनः ।
हतं येन जयन् कामस्तमोगुणजुषा जगत् ॥ १ ॥ )

[2]कुर्विति । तमोगुणजुषाऽज्ञानरूपतमोगुणसेविना येन मोहेन हतं जगत् जयन्

१. अयं श्लोको 'जीवातौ' न व्याख्यातः, इति मयाऽत्र 'प्रकाश' व्याख्यानमेवोपन्यस्तमित्यवधेयम् । २. इदं 'प्रकाश' व्याख्यानमिति बोध्यम् ।

कामो नालज्जत । क इव—तमोगुणजुषा आश्रिततमोगुणेन हरेण संहारकारकेण रुद्रेण प्राप्तकालतया प्राक् हतं ग्रस्तं कुरुसैन्यं पश्चाद्विनाशयन्नर्जुन इव । मया हतमित्यभिमानेन लज्जां नाप । अन्येन हतस्य पश्चात् स्वेन हनने हि लज्जा युक्ता । सा तु कामस्य न जातेत्यर्थः । मूढ एव कामपरवशो भवतीत्यर्थः । ईश्वरः प्राक्कुरुसैन्यं शूलेन हन्ति, पश्चाच्छरेणार्जुन इति द्रोणपर्वकथा । कुलकम् ॥ १ ॥

तमोगुणप्रधान संहारक शिवजीसे पहले हत ( ग्रस्त ) कुरुसेनाको जीतते हुए अर्जुनके समान तमोगुणी जिस ( मोह ) से पहले नष्ट ( ग्रस्त ) संसारको जीतता हुआ कामदेव लज्जित नहीं हुआ । [ 'ब्रह्मा सत्वगुणी सृष्टिकर्ता, विष्णु रजोगुणी पालनकर्ता और शिव तमोगुणी संहारकर्ता हैं' ऐसा शास्त्रप्रमाण है । अत एव तमोगुण प्रधान शिवजी कौरवसेनाको पहले मारते थे तो उसके बाद अर्जुन उसपर बाण चलाकर 'इसे मैंने मारा' ऐसा समझते हुए जिस प्रकार लज्जित नहीं होता था, उसी प्रकार पहले तमोगुणी मोहने ही समस्त संसारको अपने वश में कर लिया है, तदनन्तर उस जगत्को जीतता हुआ काम मैंने अपने बाणसे इसे जीता है ऐसा मानकर लज्जित नहीं होता है । वस्तुतः दूसरेके द्वारा मारे गयेको मारनेमें लज्जित होना उचित है, परन्तु कामदेव लज्जित नहीं हुआ । मोहके वशीभूत ( मूर्ख ) ही कामाधीन होता है, अतः कामदेवसे भी मोह ही प्रबल है ] ॥

चिह्निताः कतिचिद्देवैः प्राचः परिचयादमी ।
अन्ये न केचनाचूडमेनःकञ्चुकमेचकाः ॥ ३४ ॥

चिह्निता इति । अमी पूर्वोक्तस्मरादयः, कतिचित् कियत्सङ्ख्यकाः, देवैः इन्द्रादिभिः, प्राचः परिचयात् इन्द्रादीनां कामादिवशीभूतत्वेन पूर्वजातपरिचयात्, पूर्वानुभवजन्यसंस्कारादिति यावत् । चिह्निताः चिह्नविशेषैः परिज्ञाताः, प्रत्यभिज्ञाता इत्यर्थः । आचूडम् आशिखम्, एनःकञ्चुकेन पापरूपकृष्णवर्णावरकवस्त्रेण, मेचकाः श्यामवर्णाः, अन्ये अपरे च, कामादिव्यतिरिक्ता इत्यर्थः । केचन केचित्, न, देवैः चिह्निताः इति पूर्वेणान्वयः, नीलवस्त्रावृतशरीरत्वेन 'अमी ते' इति न प्रत्यभिज्ञाताः इत्यर्थः ॥ ३४ ॥

इन ( कामादि ) कुछको इन ( इन्द्रादि देवों ) ने पूर्वपरिचयके कारण चिह्नविशेषोंसे पहचान लिया तथा चोटीतक पापरूप कञ्चुकसे कृष्णवर्णवाले कुछ दूसरों ( कामादिसे भिन्नों या तदुपजीवी बौद्धादिकों ) को नहीं पहचाना । [ इन्द्रादि देवोंको भी कामादिके वशीभूत होनेसे पूर्वपरिचय होना तथा उस कारण उन्हें पहचानना और चोटी ( शिर ) तक कृष्णवर्णके वस्त्रसे ढके रहनेके कारण कुछको नहीं पहचानना भी उचित है, क्योंकि काले वस्त्रसे चोटी तक ढके हुए व्यक्तिको पहचानना असम्भवप्राय है ] ॥ ३४ ॥

तत्रोदीर्ण इवार्णोघो सैन्येऽभ्यर्णमुपेयुषि ।
कस्याप्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान् ॥ ३५ ॥

तत्रेति। उदीर्णे उच्चलिते, अर्णोधौ अम्भोधौ इव, तत्र तस्मिन्, सैन्ये स्मराद्यनुगते सैन्ये, अभ्यर्णम् उपेयुषि समीपं गते सति, ते देवाः, कस्यापि अपरिज्ञातशरीरस्य कस्यचित् पुरुषस्य, चार्वाकस्येति भावः। कर्णकर्कशान् श्रुतिकठोरान्, वर्णान् वाक्यानि, आकर्णयामासुः शुश्रुवुः ॥ ३५ ॥

मर्यादाहीन समुद्रके समान उस सेना ( जन-समूह ) के समीप आनेपर उन लोगों ( इन्द्रादिदेवों ) ने किसी (अपरिचित पुरुष—चार्वाक) के कर्णकटु वर्णों (वचनों) को सुना ॥

ग्रावोन्मज्जनवद्यज्ञ-फले[१]ऽपि श्रुतिसत्यता।
का श्रद्धा ? तत्र धीवृद्धाः ! कामाद्धा यत् खिलीकृतः ॥ ३६ ॥

अथ सप्तचत्वारिंशता श्लोकैस्तानेव वर्णानाह—ग्रावेत्यादि। धीवृद्धाः ! हे ज्ञानवृद्धाः ! यज्ञफले ज्योतिष्टोमादियज्ञाद्यनुष्ठानस्य फलभूतस्वर्गादौ विषये, श्रुतिसत्यता वेदवाक्यस्य प्रामाण्यं, ग्रावोन्मज्जनवत् पाषाणप्लवनवत्, पाषाणप्लवनं यथा न प्रत्यक्षं, तद्वत् यज्ञफलं स्वर्गादिकमपि न प्रत्यक्षम्, अत एव तत्प्रतिपादिका श्रुतिरपि 'ग्रावाणः प्लवन्ते' इति वाक्यवत् न प्रमाणमित्यर्थः। अपिशब्दोऽत्र निन्दायाम्; श्रुतिरियं मिथ्या इत्यर्थः। तत्र तत्फलप्रतिपादिकायां श्रुतौ, का श्रद्धा ? युष्माकं कः विश्वासः ? यत् यतः, कामाद्धा तृतीयपुरुषार्थमार्गः, यथेच्छव्यवहारमार्ग इति यावत्। खिलीकृतः प्रतिरुद्धः, श्रुत्या इति शेषः। 'द्वे खिलाप्रहते समे' इत्यमरः। सिद्धं प्रमाणं विहाय तद्विरुद्धे न श्रद्धेयम् इत्यर्थः ॥ ३६ ॥

हे ज्ञानवृद्धो ! ( ज्योतिष्टोमादि ) यज्ञोंके फल ( स्वर्गादि ) के विषयमें वेदकी सत्यता पत्थरके ( पानीमें ) तैरनेके समान है, ( अतएव ) उसमें क्या विश्वास है, जो काममार्गको ( तुम लोगों ) ने व्यर्थ कर दिया है। [ जिस प्रकार पत्थर का पानीमें तैरना नहीं देखा जाता, उसी प्रकार ज्योतिष्टोमादि यज्ञों का फल स्वर्गादि भी प्रत्यक्ष नहीं देखा जाता, अत एव तत्प्रतिपादिका श्रुति ( वेद ) भी सत्य नहीं है, तब उसमें विश्वास भी नहीं करना चाहिये, अतएव वेदवचनके अप्रामाणिक होनेसे यज्ञकर्ता यजमान, ऋत्विक् आदिको काम सेवन छोड़कर ब्रह्मचर्यादि नियमसे रहना व्यर्थ है। प्रत्यक्षसिद्ध प्रमाणको छोड़कर उसके विपरीत प्रमाणमें श्रद्धा करना मूर्खता है। 'धीवृद्धाः' ( ज्ञानवृद्ध ) व्यङ्ग्य वचन है अतः उसके विरुद्धार्थक होनेसे देवों को मूर्ख कहकर सम्बोधित किया गया है ] ॥ ३६ ॥

केनापि बोधिसत्त्वेन जातं सत्त्वेन हेतुना।
यद्वेदमर्मभेदाय जगदे[२] जगदस्थिरम् ॥ ३७ ॥

केनेति। बोधिसत्त्वेन बुद्धेन। 'बुद्धस्तु श्रीघनः शास्ता बोधिसत्त्वो विनायकः' इति यादवः। केनापि अवाच्यमहिम्ना, जातं प्रादुर्भूतम्। भावे क्तः। अतः स एव श्रद्धेयवचन इति भावः। यत् यस्मात्, वेदस्य कालान्तरभाविफलभोगिनित्यात्म-

१. 'फलेति' इति पाठान्तरम्। २. 'जगाद' इति पाठान्तरम्।

साधकश्रुतेः, मर्मभेदाय रहस्योद्घाटनाय, प्रामाण्यभङ्गाय इति यावत्। सत्त्वेन हेतुना 'यत् सत् तत् क्षणिकम्' इति कारणेन, जगत् इदं विश्वम्, अस्थिरं क्षणिकम्, इति जगदे गदितम्। अयं भावः—जगतः क्षणिकत्वे सिद्धे आत्मनोऽपि जगदन्तर्गततया क्षणिकत्वं सिद्धमेव, ततश्च येनात्मना पापं कृतं तस्यात्मनः क्षणोत्तरं नाशात् कथं तस्य फलभोगसम्भवः? इति आत्मनः कालान्तरभाविफलभोगित्वस्यासम्भवात् तद्बोधकश्रुतेः कथं प्रामाण्यम्? कथं वा पापात् भयम्? अतो न पारलौकिकसुखाशया हस्तगतम् ऐहिकं सुखं हातव्यमिति॥ ३७॥

बुद्ध अनिर्वचनीय महिमावाला हुआ, क्योंकि वेदके रहस्य को प्रकट करनेके लिए अर्थात् उसकी प्रामाणिकता नष्ट करनेके लिए 'सत्त्वके कारण संसार अनित्य है' यह कहा है। (अथवा—अज्ञाननामा जिनभट्टारक वेदके रहस्यके भेदन करनेके लिए हुए, क्योंकि सत्त्वके कारण संसार अनित्य है, ऐसा उन्होंने कहा)। [बौद्धसिद्धान्त यह है कि—'जो सत् (विद्यमान्) है, वह अनित्य है' अतएव यह संसार भी उक्त अनुमानसे अनित्य है और संसारके अन्तर्गत ही आत्माके होनेसे वह (आत्मा) भी क्षणिक हुआ ऐसी स्थितिमें जिस आत्माने पाप या पुण्य किया वह तो क्षणमात्रके बाद नष्ट हो गया, अतएव पाप-पुण्य का फल भोक्ता आत्मा कदापि नहीं हो सकता, इस प्रकार 'दूसरे समयमें पाप-पुण्यका फल आत्मा भोगता है' ऐसा कहने वाली श्रुति भी अप्रामाणिक सिद्ध हो जाती है, इस कारण पापसे डरकर पारलौकिक सुख पानेकी आशासे हस्तगत ऐहलौकिक सुखका त्याग नहीं करना चाहिये। यह चार्वाकभिन्न बौद्धसिद्धान्त है, अथवा—चार्वाकने ही अपने पूर्वोक्त (१७।३६) वचनकी पुष्टि इस बौद्धमतके संवादसे की है]॥ ३७॥

अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्मपुण्ड्रकम्।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविकाः॥ ३८॥

सम्प्रति बृहस्पतिमतावलम्बनेन वैदिकं विडम्बयति अग्निहोत्रमिति। अग्निहोत्रम् अग्निहोत्राख्यो यागः, त्रयी त्रिवेदी, वेदत्रयमित्यर्थः। तन्त्रं तदर्थविचारात्मकं मीमांसाशास्त्रं, त्रिदण्डं संन्यासः। पात्रादिपाठात् नपुंसकत्वम्। भस्मनः भूतेः, भस्मकृतमित्यर्थः। पुण्ड्रकं तिलकविशेषः, एतानि जीवः बृहस्पतिः, प्रज्ञापौरुषाभ्यां, बुद्धिपुरुषकाराभ्यां, निःस्वानां दरिद्राणां, तद्रहितानाम् इत्यर्थः। जीविकाः जीवनोपायाः, इति जल्पति ब्रूते। अतश्च नास्ति परलोकः इति निश्चयात् यथेष्टचेष्टितमेव हितमिति भावः॥ ३८॥

अग्निहोत्र, त्रयी (ऋग्वेद, यजुर्वेद और सामवेद), मीमांसा (अथवा—वेदत्रयमें प्रतिपादित कर्मकलाप), संन्यास, भस्मका तिलक (या-शैवव्रत), ये सब बुद्धि के सामर्थ्य (अथवा—बुद्धि तथा सामर्थ्य) से हीन (ठगकर, चोरीकर या बलात्कार ग्रहण करनेमें

१. 'त्रयीतन्त्रम्' इत्येकपदं वा।

असमर्थ ) लोगोंकी जीविका है, ऐसा बृहस्पति[1] कहते हैं। [ अतएव परलोकके नहीं होनेसे इच्छानुसार कार्य करना चाहिये ] ॥ ३८ ॥

[2]शुद्धं वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः ।
[3]तदनन्तकुलादोषाददोषा जातिरस्ति का ॥ ३९ ॥

शुद्धमिति । यत् यतः कारणात्, पित्रोः पित्रोः मातापितृपरम्परयोः मध्ये । निर्द्धारणे सप्तमी । वीप्सायां द्विरुक्तिः । 'पिता मात्रा' इत्येकशेषः । एकशः एकैकस्य, वंशद्वयीशुद्धौ उभयकुलशुद्धौ, पितृवंशमातामहवंशयोः विशुद्धितायां सत्यामित्यर्थः । शुद्धं निर्दोषं, पुत्रं[4] जायते इति शेषः । पुत्रस्यापि शुद्धता भवति इत्यर्थः । तत् तस्मात् अनन्तानाम् अशेषाणाम्, आमूलानामिति भावः । कुलानां वंशानाम्, अदोषात् दोषराहित्यात्, अदोषा निर्दोषा, जातिः जन्म, का अस्ति ? न काऽपि इत्यर्थः । यथाहुः—'अनादाविह संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का जातिपरिकल्पना ? ॥' इति ॥ ३९ ॥

जिस कारण माता-पितामें से एक-एकके दोनों वंश (पिताका कुल तथा नानाका कुल) की शुद्धि होने पर शुद्ध सन्तान होती है, उस कारण अनन्त वंशके दोष रहित होनेसे निर्दोष जाति ( जन्म ) कौन है ? अर्थात् कोई नहीं । ( अथवा—जिस कारण पिताके माता-पिता ( पितामही तथा पितामह अर्थात् दादी-दादा ) और माताके माता-पिता ( मातामही और मातामह अर्थात् नानी-नाना ) और उन दोनोंमें से एक-एकके माता-पिता इस प्रकार ब्रह्मातक प्रत्येक की शुद्धि की परीक्षा करनी चाहिये; उस कारण अनन्त वंशवालीमें ( अतएव ) दोष होने से अर्थात् स्त्री-पुरुष परम्पराके संसर्गजन्य दोषके अभावका सन्दिग्ध होने ( तथा इन्द्रचन्द्रादिके भी व्यभिचारका प्रमाण पुराणादिमें मिलने ) से कौन जाति निर्दोष है ? अर्थात् कोई भी जाति निर्दोष नहीं प्रतीत होती । अथवा—……उस कारण ब्रह्मातक दोनों वंशके दोषरहित होनेसे जाति निर्दोष होती है, वह कौन-सी जाति है ? ( जिसे शुद्ध माना जाय ) अर्थात् कोई भी नहीं । [ उक्त कारणोंसे शुद्ध जातिका मिलना असम्भव होनेसे सभी जाति सदोष हैं, अतएव जातिदोषका भय छोड़कर स्वेच्छापूर्वक व्यवहार करना चाहिये ] ॥ ३९ ॥

१. तदुक्तं बृहस्पतिना—
'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मपुण्ड्रकम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥' इति ।

२. 'शुद्धिर्वंश-' इति 'प्रकाश' व्याख्यातः पाठः साधु प्रतिभाति ।

३ तदानन्त'-इति पाठः सम्यक् इति 'प्रकाशः' ।

४. अस्य नित्यपुंस्त्वेन अत्र 'सन्तानम्, अपत्यं' वा भवेदिति बोध्यम् ।

कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः ? ।
नाश्नाति स्नाति हा ! मोहात् कामक्षामव्रतं जगत् ॥ ४० ॥

कामिनीति । किञ्च, कामिनीवर्गस्य पुरुषापेक्षया अष्टगुणकामस्य स्त्रीजातस्य, संसर्गैः सम्बन्धैः, स्त्रीभिः सह एकत्र वासैरित्यर्थः । कः पुमान्, सङ्क्रान्तपातकः प्राप्तपापः, पापाक्रान्त इत्यर्थः । न ? अपि तु सर्वः एव पातकी, 'संवत्सरात्तु पतति पतितेन सहाचरन्' इति शास्त्रात् पतितस्त्रीसंसर्गेण सर्वोऽपि पातकी एवेति भावः । अत एव कामेन कन्दर्पेण अभिलाषेण वा, क्षामव्रतं क्षीणव्रतं, निष्फलव्रतं वा । 'क्षायो मः' इति निष्ठातकारस्य मकारः । जगत् इदं विश्वं, विश्ववासीत्यर्थः । मोहात् स्ववृत्ता-नाकलनात्, न अश्नाति उपवसति, तथा स्नाति च तीर्थादौ स्नानं करोति च, स्नानेन आत्मनः शुद्धत्वबुद्धयैव पुनः व्रतानि चरति इति भावः । हा इति खेदे । व्रतसहस्रे कृतेऽपि एकेनैव स्त्रीसंसर्गपातकेन सर्वनाश इति भावः ॥ ४० ॥

( पुरुषोंकी अपेक्षा अठगुने कामयुक्त ) स्त्री-समूहके संसर्गोंसे कौन ( पुरुष ) पापयुक्त नहीं है ? ( अतिशय कामवासनायुक्त स्त्रियोंके संसर्गसे सभी सांसर्गिक पापसे युक्त हैं, क्योंकि एक वर्ष पातकीके संसर्गसे पातकरहित भी पातकी हो जाता है ) । काम ( इच्छा, फल या कामवासना ) से क्षीण व्रतवाला ( पाठा०—······क्षीण यह ) संसार मोह ( विचार-शून्यता ) के कारण ( एकादशी आदि को ) नहीं खाता है । और ( अमावस्या आदिको तीर्थोंमें ) स्नान करता है, हाय ! ( खेद है ) । [ स्वयं शुद्ध होनेपर भी स्त्रियोंके संसर्गसे, स्त्रियोंके भी कथञ्चित् शुद्ध होनेपर दुष्टादिके संसर्गसे पापरहित कोई भी नहीं है; अतएव एकादशी आदि तिथियोंमें व्रतोपवास तथा अमावस्या आदि तिथियोंमें प्रयागादि तीर्थोंमें स्नान करना अविचारपूर्ण होनेसे व्यर्थ ही है, इस कारण स्वेच्छासे यथेष्ट व्यवहार करना चाहिये ] ॥ ४० ॥

ईर्ष्यया रक्षतो नारीं धिक् कुलस्थितिदाम्भिकान् ।
स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः ॥ ४१ ॥

ईर्ष्ययेति । स्मरान्धत्वस्य कामविमूढत्वस्य, अविशेषेऽपि समानत्वेऽपि, स्त्रीपुंस-योरिति शेषः । ईर्ष्यया पुरुषान्तरसंसर्गासहिष्णुतया, नारीं स्त्रियं, रक्षतः निरुन्धतः, अवरोधमध्ये शासनवाक्येन वा इति शेषः । किन्तु नरं पुरुषं, तथा तद्वत्, अरक्षतः परस्त्रीसंसर्गात् अनिवारयतः, अथ च कुलस्य वंशस्य स्थितिः मर्यादा, विशुद्धिरि-त्यर्थः । असाङ्कर्येणावस्थानमिति यावत्, तया तद्रूपेण, दम्भेन छलेन चरन्तीति तथोक्तान् स्त्रीमात्ररक्षणादेव जातेरसाङ्कर्यं मन्यमानान् वञ्चकान् । 'चरति' इति ठक् । 'दम्भस्तु कैतवे कल्के' इति विश्वः । जनानिति शेषः । धिक् निन्दार्थमित्यर्थः । 'धिगु-

१. 'क्षाममिदं जगत्' इति पाठो जीवातुसम्मतः इति म. म. शिवदत्तशर्माणः ।
२. 'नारीधि–' इति पाठान्तरम् ।

पर्यादिषु' इति द्वितीया। स्त्रीदोषादिव पुरुषदोषादपि कुलहानेरवश्यम्भाव्यत्वेऽपि एकत्राभिनिवेशो ईर्ष्यैव केवलं हेतुरिति भावः॥ ४१॥

ईर्ष्यावश स्त्री ( पाठा०—स्त्रियों ) को ( शासनसे या अन्तःपुरादिमें रखनेसे ) परपुरुष-संसर्गसे बचाते हुए कामान्धताके सामने होनेपर भी उस प्रकार ( स्त्रियोंके समान ) पुरुषको ( परस्त्री-संसर्गसे ) नहीं बचाते हुए कुल मर्यादा ( की रक्षा ) का दम्भ ( मिथ्याभिमान ) करनेवालों को धिक्कार है। [ 'कामान्ध स्त्री यदि परपुरुषके साथ सम्भोग करोगी तो कुल मर्यादा नष्ट हो जायेगी' इस विचारसे शासन कर या अन्तःपुर आदि सुरक्षित स्थानोंमें रखकर स्त्री को परपुरुष या द्वितीय विवाहके पतिके संसर्गसे सुरक्षित रखनेमें और उस कामान्धताको पुरुषमें भी स्त्रीके समान ही होनेसे पुरुष को उस स्त्रीके समान परस्त्री ( दूसरे की स्त्री या दूसरी स्वविवाहिता स्त्री या वेश्यादि ) के संसर्गसे नहीं सुरक्षित रखनेमें केवल स्त्रीके प्रति ईर्ष्या और कुलमर्यादाके नष्ट होनेका दम्भ ही कारण है; अतः जिस प्रकार स्त्रीको द्वितीय विवाह करनेसे या परपुरुषके संसर्गसे रोका जाता है, उसी प्रकार पुरुषको भी द्वितीय विवाह करनेसे तथा परस्त्री ( द्वितीय विवाहकी स्त्री, दूसरे की स्त्री या वेश्यादि अन्य स्त्री ) के संसर्गसे रोकना उचित है, परन्तु ऐसा नहीं किया जाता, अत एव जिस प्रकार स्त्रीके परपुरुषका संसर्ग करनेपर कुलमर्यादा नष्ट हो सकती है, उसी प्रकार पुरुषके भी परस्त्री का संसर्ग करने पर कुलमर्यादा नष्ट हो सकती है ] ॥ ४१ ॥

परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः।
अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना॥ ४२॥

परेति। या परदारेभ्यः परस्त्रीसंसर्गेभ्यः, निवृत्तिः उपरतिः, तदर्थमुपदेश इति यावत्, सः अयं परदारा अगम्या इत्यादिरूपः, दम्भः कपटोपदेशः इत्यर्थः, अहल्याकेलिलोलेन गौतमस्त्रीरतिलालसेन, दम्भोलिपाणिना वज्रधरेण इन्द्रेण, स्वयम् आत्मना, अनादृतः उपेक्षितः, अतो न पारदार्यम् अनाचार इति भावः॥ ४२॥

( दूसरेकी स्त्री को देखना भी नहीं चाहिये, फिर स्पर्श करनेकी बात ही क्या है ? इत्यादि शास्त्रीय वचनोंसे ) जो परस्त्रीसे निवृत्ति ( के लिये उपदेश ) है, उस दम्भ ( पर-वञ्चक कपटोपदेश ) का अहल्याके साथ क्रीडा करनेमें तत्पर वज्रपाणि ( इन्द्र ) ने स्वयं ही अनादर कर दिया। [ अतएव परस्त्री सम्भोग करने पर शास्त्रोंमें जो प्रायश्चित्त बतलाये हैं, वे भी व्यर्थ हैं, क्योंकि दूसरेको परस्त्री सम्भोग करनेका निषेध करनेसे और स्वयं वही कार्य करनेसे इन्द्रका उपहास भी सूचित होता है। अथ च—इन्द्रके हाथमें वज्र था, अतः समर्थ होनेसे उन्होंने परस्त्री-सम्भोग कर लिया, अतएव यह शास्त्रीय निषेध नहीं है, किन्तु असमर्थ होनेके कारण है ] ॥ ४२ ॥

गुरुतल्पगतौ पापकल्पनां त्यजत द्विजाः!।
येषां वः पत्युरत्युच्चैर्गुरुदारग्रहे ग्रहः॥ ४३॥

गुरुतल्पेति। किञ्च, द्विजाः! हे विप्राः! गुरुतल्पगतौ गुरुदारगमने, 'तल्पं शय्याऽट्टदारेषु' इत्यमरः, पापकल्पनां पातकसम्भावनां, त्यजत जहीत। कुतः? येषां द्विजानां, वः युष्माकं, पत्युः स्वामिनः, द्विजराजस्य चन्द्रस्य इत्यर्थः, 'तस्मात् सोमराजानो ब्राह्मणाः' इति श्रुतेः, गुरोः देवगुरोः बृहस्पतेः, दारग्रहे ताराख्यभार्याभिगमने, अत्युच्चैः अतिमहान्, ग्रहः निर्बन्धः, तस्मात् अत्रापि न दोषबुद्धिः कार्या इति भावः॥ ४३॥

हे ब्राह्मणो! गुरु ( शिक्षक, दीक्षागुरु, पिता, चाचा, बड़ा भाई आदि ) की स्त्रीके साथ सम्भोग करनेमें पापकी कल्पना छोड़ो, ( क्योंकि ) जिन तुम लोगोंके स्वामी ( द्विजराज ) अर्थात् चन्द्रमाके अपने गुरु ( बृहस्पति ) की स्त्री ( तारा ) के साथ सम्भोग करनेमें अत्यधिक साग्रह सुना जाता है। [ बृहस्पति देवोंके गुरु माने जाते हैं, उनकी तारा नामकी स्त्रीके साथ द्विजराज ( चन्द्रमा, पक्षा०—द्विजों अर्थात् ब्राह्मणोंके राजा ) ने सम्भोग किया 'यथा राजा तथा प्रजा' नीति के अनुसार तुमलोगोंको भी गुरुपत्नीके साथ सम्भोग करनेमें महापातक लगनेका भय छोड़ देना चाहिये। इन्द्रादिके पासमें वसिष्ठ आदि निवास करते हैं, उन्हीं को सम्बोधित कर 'द्विजाः' पद कहा गया है। यहां भी चन्द्रमाका उपहास किया गया है। 'ग्रहः' के स्थानमें 'गह' पाठ होने पर......चन्द्रमाका अत्यधिक उत्सव होता है, या गुरुपत्नीसम्भोग करनेपर भी चन्द्रमाको तेजःसमूहका प्रतिदिन उदय होता ही है, वह उक्त कर्मसे पतित नहीं हुआ है ]॥ ४३॥

पौराणिक कथा—चन्द्रमाने बृहस्पतिकी पत्नी तारासे पुत्र उत्पन्न किया तो उस पुत्रको ग्रहण करनेके लिए इन्द्रादि देवोंने बहुत प्रयत्न किया, उस समय उनके प्रति बड़े युद्धके आरम्भ करनेवाले चन्द्रमाने अपने तेजःसमूह को प्रकट किया, बादमें ब्रह्माने बृहस्पतिकी उस स्त्रीको चन्द्रमासे छुड़वा दिया, फिर भी उसके गर्भसे उत्पन्न पुत्रको चन्द्रमाने ही प्राप्त किया, जिसका नाम 'बुध' है ]॥

पापात् तापा मुदः पुण्यात् परासोः स्युरिति श्रुतिः।
वैपरीत्यं ध्रुवं साक्षात् तदाख्यात बलाबले॥ ४४॥

पापादिति। परासोः मृतस्य, पापात् ऐहिकपातकाचरणात्, तापाः दुःखानि, नरकयन्त्रणा इत्यर्थः, पुण्यात् ऐहिकसुकृताचरणात्, मुदः हर्षाः, स्वर्गः सुखानि इत्यर्थः, स्युः भवेयुः, इति एवं, श्रुतिः वेदः, आहेति शेषः, विधिनिषेधाभ्यासगम्यं तदित्यर्थः, किन्तु वैपरीत्यमुक्तश्रुतिवाक्यस्य विपर्ययं, पानागम्यागमनादिपापात् सुखं तथा यज्ञादिपुण्याद् दुःखञ्चेति विपरीतफलमित्यर्थः, ध्रुवं सत्यम् एव, साक्षात् प्रत्यक्षं, दृश्यते इति शेषः, तदित्यव्ययं तयोरित्यर्थः, तयोः प्रत्यक्षागमयोः, बलाबले बलवत्त्वं दौर्बल्यञ्च, आख्यात हे द्विजाः! कथयत, ग्रावप्लवनवाक्यवत् प्रत्यक्षविरोधात् तथा श्रुतिप्रत्यक्षयोर्विरोधे प्रत्यक्षस्यैव बलवत्त्वाच्च श्रुतिरिह दुर्बला, ततश्च पापजन्यसुखस्य प्रत्यक्षतया पापमेव सर्वैरनुष्ठातव्यमिति भावः॥ ४४॥

मृत प्राणीके पापसे दुःख तथा पुण्यसे सुख होते हैं, ऐसी श्रुति (वेद) कहता है (पक्षा०—यह श्रुति है अर्थात् केवल सुना ही जाता है, उसमें प्रामाणिकता कोई नहीं है), किन्तु इसमें विपरीतभाव (पापसे सुख तथा पुण्यसे दुःख) देखा जाता है, इस कारण (अथवा—इन दोनोंके) वलावलको तुमलोग कहो। [प्रयागादि तीर्थमें स्नानरूप धर्म करनेसे पुण्य तथा शास्त्र-विरुद्ध कार्य करनेसे दुःख होता है, ऐसा वेदका कथन है, किन्तु यह प्रत्यक्ष देखा जाता है कि प्रातःकाल प्रयागादि तीर्थोंमें स्नान या तप आदि करनेसे दुःख तथा मद्य-पान, परस्त्री-सम्भोग आदि करनेसे आनन्द मिलता है, पुण्यसे परलोक होनेपर स्वर्गादि प्राप्तिरूप सुख मिलता है यह परोक्षकी वात है, अत एव प्रत्यक्ष तथा परोक्ष प्रमाणमें प्रत्यक्ष प्रमाण वलवान् होनेसे यह मानना पड़ेगा कि पापकर्मसे ही सुख तथा पुण्यकर्मसे दुःख मिलता है, अतः पापकर्ममें ही सवको प्रवृत्त होना चाहिये] ॥ ४४ ॥

सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि ।
त्यजत श्रोत्रियाः! सत्रं हिंसादूषणसंशयात्[१] ॥ ४५ ॥

सन्देहे इति । अन्यदेहाप्तेः मृतस्य देहान्तरप्राप्तेः, सन्देहेऽपि संशयेऽपि, पापकारी चेत् तदा मृत्वा देहान्तरमाश्रित्य नरकभोगी स्यादिति वादिनः, यः पापकारी स दग्ध एव, अतस्तस्य देहान्तरप्राप्त्यसम्भवेन नरकभोगस्याप्यसम्भवः, इति देहात्मवादिनः तत्प्रतिवादिनश्च तादृशविरुद्धवाक्यद्वयजन्यसन्देहे सत्यपि इत्यर्थः, यदि वृजिनं पारदार्य्यादिपापं, 'पापं किल्विषकल्मषं कलुषं वृजिनैनोऽघम्' इत्यमरः । विवर्ज्यं त्याज्यं, पाक्षिकदोषस्यापि परिहार्यत्वादिति भावः । तर्हि, श्रोत्रियाः! हे छान्दसाः! हे वेदाध्यायिनः! इत्यर्थः । 'श्रोत्रियच्छान्दसौ समौ' इत्यमरः । छन्दो वेदमधीते इति छन्दसो वा श्रोत्रभावो निपात्यते 'तदधीते' इत्येतस्मिन्नर्थे घंश्च इति निपातनात् साधुः, हिंसादूषणसंशयात् जीवहत्याजनितपापशङ्कातः, वैधहिंसायामपि साङ्ख्यादिभिः प्रत्यवायाङ्गीकाराद्विति भावः । सत्रं यज्ञं, त्यजत जहीत, 'पाक्षिकोऽपि दोषः परिहर्त्तव्यः' इति न्यायादिति भावः । पारदार्यादेः पुनरहिंसात्मकत्वात् प्रत्युत सुखकरत्वाच्च न कश्चित् प्रत्यवायः इति तात्पर्यम् ॥ ४५ ॥

(जन्मान्तरमें दुःखकी सम्भावनासे पाप नहीं करना चाहिये ऐसा कुछ लोग कहते हैं, तथा जो (शरीर) पाप करता है, वह तो मरनेके वाद जला दिया जाता है, पुनः दूसरा शरीर मिलेगा, इसमें क्या विश्वास है? इस प्रकारके दो मत होनेसे) दूसरे देहकी प्राप्ति होनेमें सन्देह होनेसे (पाक्षिक दोषका भी त्याग करना ठीक है इस न्यायसे) यदि पापका त्याग करना चाहिये (ऐसा तुमलोग कहते हो) तो हे वेदपाठियो (वशिष्ठ आदि महर्षियो)! (यदि हम यज्ञमें पशुओंको मारेंगे तो उससे भी सम्भवतः) हिंसा होगी-इस सन्देहके होनेसे यज्ञको भी छोड़ दो। [जिस प्रकार शरीरकी पुनः प्राप्ति होनेके सन्देह

१. '—संश्रयात्' इति पाठान्तरम् ।

होनेपर पाक्षिक कर्मका भी त्याग करना न्यायसङ्गत होनेसे देहान्तरमें पापजन्य दुःख होनेके भयसे पापको यदि त्याज्य मानते हो तो यज्ञमें पशुहिंसा करनेसे भी 'अहिंसा परमो धर्मः', 'न हिंस्यात् सर्वभूतानि' इत्यादि श्रुति-स्मृतिवचनोंसे हिंसाका त्याग प्रतिपादित होनेसे उक्त यज्ञीय हिंसामें भी पाप होनेकी सम्भावना होनेसे वह यज्ञ भी तुमलोगोंको नहीं करना चाहिये और यदि ऐसा नहीं करते हो तो तुल्यन्यायसे पापका भी आचरण करो ]॥

यस्त्रिवेदीविदां वन्द्यः स व्यासोऽपि जजल्प वः ।
रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥ ४६ ॥

य इति । किञ्च, त्रयाणां वेदानां समाहारः त्रिवेदी, त्रिलोकीवत् प्रक्रिया । तद्विदां त्रयीवृद्धानां, वेदत्रयाभिज्ञानामित्यर्थः, यः वन्द्यः पूज्यः, श्रेष्ठ इत्यर्थः, सः व्यासोऽपि कृष्णद्वैपायनोऽपि, जातकामायाः रन्तुं जाताभिलाषायाः, रामायाः कामिन्याः, हस्तधारणा करग्रहणं, प्रशस्ता कर्त्तव्या, इति वः युष्माकं, जजल्प उक्तवान्, भारतादौ इति शेषः । 'स्मरार्त्तां विह्वलां दीनां यो न कामयते स्त्रियम् । ब्रह्महा स तु विज्ञेयो व्यासो वचनमब्रवीत् ॥' इति महाभारतादिवाक्यात् स्वयञ्च विचित्रवीर्य-भार्याभिगमनेन पुत्रोत्पादनादिति भावः ॥ ४६ ॥

जो तीनों वेद ( ऋग्वेद, यजुर्वेद और सामवेद ) जाननेवालोंके वन्दनीय हैं, उस व्यासने भी आपलोगोंसे 'कामुकी स्त्रीका हाथ ग्रहण करना ( पक्षा०—विवाह करना ) श्रेष्ठ है' ऐसा कहा है । ( अथवा—जो तीनों वेद जाननेवाले आपलोगोंके वन्दनीय हैं, उस व्यासने भी······) । [ जब वेदत्रयके ज्ञाताओंके वन्दनीय व्यासजी भी ('अपि' शब्दसे वाल्मीकि आदि भी ) कामुकी स्त्रीका ग्रहण करना श्रेष्ठ बतलाते हैं, तब इसे पाप समझना महान् भ्रम है ] ॥ ४६ ॥

सुकृते वः कथं श्रद्धा ? सुरते[1] च कथं न सा ? ।
तत् कर्म पुरुषः कुर्य्याद् येनान्ते सुखमेधते ॥ ४७ ॥

सुकृते इति । सुकृते तपोयज्ञादौ पुण्यकर्मणि, वः युष्माकं, कथं केन हेतुना, श्रद्धा विश्वासः ? सुरते स्त्रीसङ्गमादौ च, सा श्रद्धा, कथं न ? अस्तीति शेषः । तत्रैव श्रद्धया भवितव्यम् इति भावः । कुतः ? पुरुषः नरः, तत् तादृशं, कर्म क्रियां, कुर्यात् आचरेत्, येन कर्मणा, अन्ते परिणामे, कर्मान्ते इत्यर्थः, सुखम् आनन्दम्, एधते वर्द्धते, सुखार्थमेव कर्म कुर्यात् इत्यर्थः । तच्च सुरतम् एव अनुभवसिद्धत्वात्, न सुकृतं वैपरीत्यादिति भावः ॥ ४७ ॥

पुण्य ( चान्द्रायणादि व्रत ) में तुमलोगोंको कैसे श्रद्धा ( आत्म-विश्वास ) है तथा सुरत ( मैथुन-पाठा०—परदारासम्भोगरूप पाप ) में वह श्रद्धा क्यों नहीं है, क्योंकि मनुष्यको वह काम करना चाहिये, जिससे अन्तमें सुख बढ़े । [ पुण्यमें प्रत्यक्षतः सुख नहीं

१. 'दुरिते' इति पाठान्तरम् ।

देखे जाने तथा परस्त्रीसम्भोग आदि रतिमें ( या पाप ) में तात्कालिक प्रत्यक्ष सुख देखे जानेसे परोक्ष पुण्यजन्य सुखकी अपेक्षा प्रत्यक्ष पापजन्य सुखमें ही तुमलोगोंको श्रद्धा करना उचित है; अतएव पुण्यकर्मकी अपेक्षा पापकर्ममें ही विश्वास करना चाहिये ] ॥ ४७ ॥

बलात् कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ ४८ ॥

वलादिति । किञ्च, बलात् वलपूर्वकं, शास्त्रवाक्यमुपेक्ष्य शास्त्रशासनमुपेक्ष्य इत्यर्थः, पापानि कलुषाणि, पापानाम्ना अभिहितानीत्यर्थः । कुरुत आचरत, तानि बलात् कृतपापानि, वः युष्माकम् , अकृतानि अनाचरितानि, सन्तु भवन्तु, अकृतान्येव भविष्यन्तीत्यर्थः । कुतः ? सर्वान् निखिलान् , वलकृतान् वलपूर्वकमनुष्ठितान् अर्थान् व्यापारान्, अकृतान् अननुष्ठितान्, मनुः आदिस्मार्त्तः, अब्रवीत् उवाच तस्मात् वलात् कृते दोषो नास्तीत्यर्थः । अत्र मनुः,—'वलाद्दत्तं वलाद्भुक्तं बलात् यच्चापि लेखितम् । सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥' यद्यपि बलात्कृतं व्यवहारपरावृत्तिपरमेतत् तथाऽपि पापमाकलयतां चार्वाकविषयतया प्रलपनमिति द्रष्टव्यम् ॥ ४८ ॥

( तुमलोग ) वलपूर्वक भी पाप करो, वे ( वलपूर्वक किये गये पाप ) तुमलोगोंका नहीं किया हुआ होवे अर्थात् वलपूर्वक पाप करनेपर भी तुमलोगोंको तज्जन्य दोष नहीं लगे क्योंकि वलात्कारसे किये गये सब दोषोंको मनुने नहीं किया हुआ वतलाया है । [ जब मुख्य स्मृतिकार मनुने ही वलात्कारसे किये गये कर्मको नहीं किया गया कहते है तब उक्त रूपसे किये गये पापका भी दोष पापकर्ताको नहीं लगेगा, अतः वलात्कारसे भी परस्त्रीसम्भोग आदि पाप करना चाहिये । यहां यद्यपि मनुभगवान्ने 'बलादत्तं'……( ८।१६८ ) वचनसे वलात्कारसे किये गये व्यवहारपरावृत्तिके लिये है, तथापि पापको नहीं माननेवाला चार्वाक उसके द्वारा छलसे अपने पक्षको पुष्ट करता है ] ॥ ४८ ॥

स्वागमार्थेऽपि मा स्थास्मिंस्तीर्थिकाः ! विचिकित्सवः ।
तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ ॥ ४९ ॥

स्वेति । तीर्थिकाः ! हे शास्त्रिणः ! मत्वर्थीयष्ठक्प्रत्ययः । 'तीर्थं शास्त्रध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥'[1] इत्यमरः । अस्मिन् मनुप्रोक्ते, स्वागमार्थे वलात्कारलक्षणे स्वशास्त्रार्थेऽपि, विचिकित्सवः सांशयिकाः । 'विचिकित्सा तु संशयः' इत्यमरः । कितः सनन्तादुप्रत्ययः । मा स्थ न भवथ, यूयमिति शेषः । अतः यं यम् आनन्दं परदारगमनादिकं सुखम् , इच्छथ वाञ्छथ, तं तम् आनन्दं, स्वच्छन्दं यथेच्छम् , आचरत अनुभवत इत्यर्थः ॥ ४९ ॥

हे गुरुसम्प्रदायागतविद्या पढ़े हुए ( वसिष्ठादि मुनि ) ! अपने आश्रम ( पूर्व श्लोकोक्त

---

१. अयं श्लोको मेदिन्यामुपलभ्यते न त्वमरकोशे ।

मनुप्रतिपादित सिद्धान्त) में भी संशयालु मत होवो, (इस कारण) जिस-जिस आनन्द (परस्त्री-सम्भोग जन्य सुख) को चाहते हो, उस-उसका स्वच्छन्द (निर्बाधरूपसे) आचरण करो। [ मेरा (चार्वाकका) मत तुमलोगोंके सम्प्रदायके विपरीत होनेसे यथा-कथञ्चित् भले हो उसपर विश्वास नहीं करना उचित हो सकता है, परन्तु गुरुसम्प्रदायानुगत विद्या पढ़नेवाले तुमलोगोंको 'बलादत्तं बलाद्भुक्तं……(८।१६८)' इस मनुप्रतिपादित वचनमें तुमलोगोंको सन्देह करना कदापि उचित नहीं है और इस अवस्थामें उक्त वचनानुसार स्वेच्छापूर्वक परस्त्रीसम्भोगादिरूप सुखका आनन्द तुमलोगोंको लेना चाहिये ] ॥४९॥

**श्रुतिस्मृत्यर्थबोधेषु क्वैकमत्यं महाधियाम् ?।**
**व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी ॥ ५० ॥**

**ननु मनुवचनस्य व्यवहारविषयत्वान्नायमर्थः, सम्प्रदायविरुद्धत्वात् इत्याक्षिपन्तं प्रत्याह—श्रुतीति। महाधियां तीक्ष्णबुद्धीनां पुंसां, श्रुतिस्मृत्यर्थानां वेदधर्मशास्त्रोक्तविषयाणां, बोधेषु ज्ञानेषु, ऐकमत्यं मतैक्यं, मतविरोधाभाव इत्यर्थः। क ? कुत्र ? न क्वापि, अपि तु सर्वत्रैव विसंवाद इति भावः। किन्तु व्याख्या पदवाक्यार्थप्रतिपादनं, बुद्धिबलापेक्षा ज्ञानौत्कर्ष्यानुसारिणी, ज्ञानस्य उत्कर्षापकर्षानुसारेण शास्त्रस्य विविधव्याख्या कर्त्तुं शक्यते यया परमतनिरसनेन स्वमतं स्थापयितुं युज्यते इति भावः। एवं स्थिते या व्याख्या सुखोन्मुखी सुखप्रवणा, आनन्दसाधिका इत्यर्थः। सा न उपेक्ष्या न त्याज्या, सा एव ग्राह्या इत्यर्थः। अतः यथेच्छमाचरतेति भावः॥**

वेदों तथा धर्मशास्त्रोंके अर्थज्ञानमें महामतिमानोंको भी एक मत कहा है अर्थात् कहीं नहीं (अपितु विसंवाद ही है) ऐसी स्थितिमें पद-वाक्यार्थ-निरूपण बुद्धिके आधिक्यके अनुसार है और सुखदायिनी उसकी उपेक्षा नहीं करनी चाहिये। [ मनुस्मृतिके उक्त वचनका वैसा अभिप्राय नहीं है, जैसा कि आपने पूर्व दो श्लोकोंमें प्रतिपादन किया है, इस प्रकार आक्षेप करनेवालेका खण्डन करनेके उद्देश्यसे यह वचन है। इसका तात्पर्य यह है कि बड़े-बड़े विद्वानोंको भी वेद तथा स्मृतियोंके अर्थके विषयमें एकमत नहीं है किन्तु ज्ञानोत्कर्षके अनुसार की गयी व्याख्याको ही सिद्धान्त माना जाता है, इसी कारण जिस वेदमन्त्रका अर्थ अद्वैतवादी अभेदपरक मानते हैं, उसीका अर्थ द्वैतवादी भेदपरक मानते हैं, इसी प्रकार स्मृतियोंमें भी एक मत नहीं है, अत एव जिस व्याख्याका अन्तिम परिणाम आनन्दप्रद हो, उसीका आश्रय करना बुद्धिमत्ता है, ऐसी स्थितिमें उक्त मनुवचनका मदुक्त आशय मानकर आनन्दप्रद परस्त्रीसम्भोग आदि करना मनुवचन विरुद्ध नहीं होनेसे दोषोत्पादक नहीं है, अतः वैसा स्वच्छन्द आचरण करना चाहिये ] ॥ ५० ॥

**यस्मिन्नस्मीति धीर्देहे तद्दाहे वः किमेनसा ?।**
**क्वापि किं तत् फलं न स्यादात्मेति परसाक्षिके ?॥ ५१ ॥**

**नन्वेवं सुखलौल्यात् पापाचरणे परत्रानिष्टं स्यादित्यत्राह—यस्मिन्निति। यस्मिन्**

देहे शरीरे, अस्मीति धीः अहमिति बुद्धिः । 'अस्मीत्यव्ययमस्मदर्थानुवादे अहमर्थेऽपि' इति गणव्याख्याने । 'पादप्रहारमिति सुन्दरि ! नास्मि दूये' इत्यादिप्रयोगश्च। तस्य देहस्य, दाहे भस्मीभावे सति, वः युष्माकम्, एनसा पापेन, किम् ? कर्तुं शक्यते इति शेषः । गौरोऽहं कृशोऽहमित्यादिबुद्धिप्रामाण्याद्देहादतिरिक्तः फलभोक्ता नास्तीत्यभिमानः ; येन देहेन पापं कृतं तस्य दाहे सति देहात्मवादिनां युष्माकं पापेन नरकभोगादिकं न किञ्चिदपि कर्तुं शक्यते इति भावः । अथ पापपुण्यफलभोक्ता देहव्यतिरिक्त आत्माऽस्ति तत्रैव कर्मफलमिति चेत् तत्राह—क्वापीति। परसाक्षिके परो वेदादिः, साक्षी प्रमाणं यस्य तस्मिन् देहातिरिक्तया वेदप्रतिपादिते, क्वापि यत्र कुत्रचिदात्मान्तरेऽपि, आत्मेति हेतोः आत्मेति कृतनामतया, आत्मत्वाविशेषादित्यर्थः । तत् निरयादिरूपं, फलं पापस्य परिणामः, किं कथं, न स्यात् ? न भवेत् ? अपि तु एकेनात्मना पापे कृते आत्मत्वेन तदविशेषात् आत्मान्तरस्यापि तत्फलभोक्तृत्वं कथं न स्यात् ? इत्यर्थः । देहातिरिक्तस्यात्मनः फलभोक्तृत्वाभावात् एतद्देहनाशे पापफलभोगस्यासम्भवाच्च यथेच्छमाचरतेति भावः ॥ ५१ ॥

जिस देहमें ( मैं दुर्बल हूं, मोटा हूं, इत्यादि रूप ज्ञान होनेसे ) 'आत्मा', ऐसा विश्वास है अर्थात् जिस देहको 'आत्मा' मानते हो, उस ( देह ) के ( मरनेके बाद ) जल जानेपर ( देहात्मवादी ) तुमलोगोंको ( उस देहके द्वारा किये गये ) पापसे क्या प्रयोजन ? अर्थात् वह पाप आपलोगोंका क्या कर सकता है ? और देहातिरिक्त वेदादि प्रतिपादित किसी दूसरे आत्मामें भी वह पाप-पुण्यजन्य फल क्यों नहीं होता ? अर्थात् एक व्यक्तिके किये गये पापका फल दूसरे व्यक्तिको भी मिलना चाहिये, ऐसा नहीं होता, अतः देहातिरिक्त 'आत्मा' नामक कोई वस्तु नहीं है ! [ इसका आशय यह है कि—'देह ही आत्मा है, या देहाभिन्न अन्य कोई ?' यदि प्रथम पक्ष मानते हैं तो पापादि कर्म करनेवाला शरीर मरनेपर जलकर भस्म हो जाता है, अत एव उस पापादि कर्मका फलभोक्ता कोई शेष नहीं रह जाता, अतः स्वच्छन्द होकर प्रत्यक्ष आनन्दादि फलप्रद परस्त्रीसम्भोग आदि करना चाहिये तथा यदि द्वितीय पक्ष ( देहातिरिक्त आत्माका होना ) मानते हैं तो वह देहातिरिक्त आत्मा स्वसाक्षिक है या परसाक्षिक ? इसमें भी प्रथम पक्ष मानकर 'अहं' ज्ञान देहविषयक ही होगा, क्योंकि देहभिन्न किसी दूसरेका आश्रय सिद्ध नहीं होता, इस कारण पापजन्य फल शरीरके भस्म हो जानेपर कुछ नहीं कर सकता, यही बात पुनः सिद्ध होती है । दूसरा पक्ष मानकर वेदादिसाक्षिक देहान्तर, कालान्तर या देशान्तरके फलभोक्ता होनेसे उस पापका नरक आदि फल वेदादिप्रतिपादित आत्माको होता है, ऐसा स्वीकार करते हैं तो वह आत्मा होनेके कारण ही फलभोक्ता होता है और सर्वगत आत्माके अविशेष होनेसे किसी

१. श्लोकोऽयमेवं विद्यते—
'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यच्छिद्यते मृदु पदं ननु सा व्यथा मे ॥ इति ।

एकको वह पापादिजन्य नरक आदि फल किसी दूसरे व्यक्तिको भी होना चाहिये, इन अवस्थामें भी स्वयं फलभोक्ता नहीं होनेके कारण स्वच्छन्द होकर प्रत्यक्षतः आनन्ददायक परस्त्रीगमनादि पाप-कर्म करनेमें कोई हानि नहीं होती ] ॥ ५१ ॥

मृतः स्मरति कर्माणि[1] मृते कर्मफलोर्मयः ।
अन्यभुक्तैर्मृते[2] तृप्तिरित्यलं धूर्तवार्त्तया ॥ ५२ ॥

नन्वत्रागमो बलवदस्ति प्रमाणमत आह—मृत इति । मृतः परेतः, कर्माणि स्वकृतानि, स्मरति आध्यायति, मृते परेते जन्तौ, कर्मणां पापपुण्याद्यनुष्ठानानां, फलोर्मयः सुखदुःखसन्तानाः, भवन्तीति शेषः । अन्यभुक्तैः श्राद्धादिषु ब्राह्मणभोजनैः मृते प्रेते, तृप्तिः सन्तोषः, भवति इति शेषः । इति एवं, धूर्तवार्त्तया धूर्तानां परप्रतारणया स्वस्य उपजीविकां निर्वाहतां, वार्त्तया वृत्तान्तेन, वाक्येन इति यावत्, अलं निष्प्रयोजनम्, आगमोऽपि कस्यचित् प्रलाप एव, अतो न विश्वसितव्यम् इति भावः। देहात्मवादिमते देहनाशे स्मृति-भोग-तृप्तीनां सामानाधिकरण्यासम्भवात् तादृशवाक्यमप्रामाणिकमिति भावः ॥ ५२ ॥

मृत प्राणी पूर्व जन्मोंका स्मरण करता है, मरनेपर ( पुण्य-पापादिजन्य ) फलोंकी परम्परा होती है और ( ब्राह्मण आदि ) दूसरे लोगोंके भोजनसे मृत प्राणीकी तृप्ति होती है; ( स्वार्थसाधक ) धूर्तोंकी यह बात व्यर्थ है । [ देहभिन्न 'आत्मा' नामक पदार्थ कोई भी नहीं होनेसे मरनेपर पूर्वजन्मस्मृति, पूर्वकृत पुण्य-पापादिकर्मोंके फलोंको भोगना और श्राद्धादिमें ब्राह्मण आदिके खानेसे मृतात्माकी तृप्ति होना इत्यादि प्रतिपादन करनेवाले शास्त्रीय वचन धूर्तोंके बनाये हुए होनेसे अश्रद्धेय हैं, अतः उनपर आस्थाकर तदनुसार आचरण करना मूर्खता है ] ॥ ५२ ॥

एकं सन्दिग्धयोस्तावद् भावि तत्रेष्टजन्मनि ।
हेतून्[3]आहुः स्वमन्त्रादीनसाङ्गानन्यथा विटाः ॥ ५३ ॥

धौर्त्यप्रकारमेवाह—एकमित्यादि । सन्दिग्धयोः सम्भवासम्भवाभ्यां संशयितयोः, पुत्रादिलाभालाभरूपेष्टानिष्टफलयोर्मध्ये इति भावः । एकम् इष्टमनिष्टं वा अन्यतरत् फलमिति शेषः । तावत् अवश्यमेव, भावि भविष्यति, तत्र तयोर्मध्ये, इष्टजन्मनि इष्टसिद्धौ सति, विटाः धूर्त्ताः, स्वमन्त्रादीन् निजमन्त्रादिप्रयोगान्, हेतून् कारणभूतान्, आहुः वदन्ति, मयैतन्मन्त्रजपादिकं कृतं तत एव तव पुत्रादीश्लाभोऽभूदिति आत्मश्लाघां कुर्वन्तीति भावः । अन्यथा तदसिद्धौ, असाङ्गान्

१. 'जन्मानि' इति पाठान्तरम् । २. 'अन्यभुक्तानि' इति पाठान्तरम् । तथ 'अन्यभुक्तानि तत्तृप्तिः' इत्येवं मूलपाठः 'प्रतिभाति' इति म० म० शिवदत्तशर्माणः । ३. 'हेतुमाहुः' इति पाठान्तरम् ।

अङ्गविकलान्, हेतून् आहुः इति पूर्ववाक्येनान्वयः । कार्योपयोगिनां तत्तद्वस्तूनामभावादेव फलं नाभूदिति गृहस्थस्य दोषं प्रकटयन्तीति भावः ॥ ५३ ॥

सन्देहयुक्त ( पुत्रलाभादिरूप इष्टकी सिद्धि होना या नहीं होना—रूप ) दो कार्योंमें एक ( सिद्धि या असिद्धि ) अवश्य ही होती है, उन दोनोंमें-से इष्टसिद्धि ( पुत्रादिलाभ ) होनेपर धूर्त ( मन्त्रजपादि करनेवाले ब्राह्मण आदि ) अपने मन्त्रको कारण ( मेरे मन्त्रजपादिके प्रभावसे तुम्हें पुत्रलाभादिरूप मनोरथ सिद्धि हुई है ऐसा ) कहते हैं, अन्यथा ( पुत्रलाभादि इष्टसिद्धि नहीं होनेपर ( मन्त्रोंको ) असाङ्ग (अङ्गहीन–अमुक वस्तुके अभावसे तुम्हारी मनोरथसिद्धि नहीं हुई इत्यादि रूपसे मन्त्रोंकी अपरिपूर्णता ) बतलाते हैं ( यह बड़ी भारी धूर्तता है ) ॥ ५३ ॥

जनेन जानताऽस्मीति कायं नायं त्वमित्यसौ ।
त्याज्यते ग्राह्यते चान्यदहो ! श्रुत्याऽतिधूर्त्तया[1] ॥ ५४ ॥

इत्थं कर्मकाण्डं विडम्ब्या ज्ञानकाण्डं विडम्बयति, जनेनेति । अतिधूर्त्तया अतिप्रतारिकया, श्रुत्या वेदेन, प्रयोजककर्त्र्या । कायं देहम्, अस्मि अहम्, इति जानता अवगच्छता, गौरोऽहं कृशोऽहमित्याद्यहं प्रत्ययविषयः देह एव, न तु तदतिरिक्तः कश्चिदिति देहमेवात्मानं मन्यमानेनेत्यर्थः । जनेन पुंसा, प्रयोज्येन । अयं कायः, त्वम् आत्मा, न, भवतीति शेषः, इति अस्माद्धेतोः, असौ कायः, त्याज्यते हाप्यते, 'अहं' प्रत्ययविषयत्वेन कायः परित्याज्यते इत्यर्थः । अन्यत् अपरं, देहात् अन्यत् आत्मलक्षणं वस्तु इत्यर्थः । ग्राह्यते स्वीकार्यते च, 'अहं' प्रत्ययविषयतयेति शेषः । तत्त्वमसीत्यादिवाक्यैः अङ्गीकार्यते च इत्यर्थः । इत्यहो आश्चर्यम् ! सत्यस्य असत्यकरणात् असत्यस्य सत्यकरणाच्च आश्चर्यमेतत् ॥ ५४ ॥

( 'तत्त्वमसि', 'स वा एष महानज आत्मा' इत्यादि रूप ) अतिशय वञ्चक श्रुति, शरीरको 'मैं हूं' इस प्रकार जानते ( 'मैं मोटा हूं, मैं दुर्बल हूं' इत्यादि प्रत्ययसे शरीरको ही आत्मा मानते ) हुए व्यक्तिके द्वारा 'तुम यह ( शरीर ) नहीं हो' इस प्रकार ( देहमें आत्मविषयक ज्ञानका ) त्याग कराती है तथा दूसरे ( शरीराभिन्न स्वानुभवविरुद्ध अप्रत्यक्ष तथा प्रमाणबहिर्भूत 'आत्मा' नामकी किसी अनिर्वचनीय वस्तु ) का ही ग्रहण कराती है, अहो ! आश्चर्य ( या—ऐसी धूर्ततापर खेद ) है । [ इसका यह आशय है कि—यद्यपि लोग 'मैं दुर्बल हूं, मैं मोटा हूं' इत्यादि ज्ञान शरीरविषयक होनेसे शरीरको ही आत्मा जानते हैं, तथापि उक्त वेदवाक्य शरीरको आत्मा होनेका खण्डनकर तद्विलक्षण अप्रत्यक्ष एवं वचनागोचर किसी वस्तुको 'आत्मा' कहते हैं, अत एव अनुभवविरुद्ध होनेसे ये वेदवाक्य अत्यन्त धूर्त एवं अप्रामाणिक हैं ] ॥ ५४ ॥

---

1. 'इमौ ( १७५३-५४ ) श्लोकौ 'प्रकाश' कृता विपर्यासेन व्याख्यातौ ।

एकस्य विश्वपापेन तापेऽनन्ते निमज्जतः ।
कः श्रौतस्यात्मनो भीरो ! भरः स्याद्दुरितेन ते ? ॥ ५५ ॥

एकस्येति । विश्वेषां यावतां संसारिणां, पापेन परदारगमनादिरूपविविधपातकेन, अनन्तेऽक्षये, तापे नरकादिदुःखे, निमज्जतः अवगाहमानस्य, यावल्लोककृतपापजन्यानन्तदुःखमनुभवतः इत्यर्थः । श्रौतस्य 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानाऽस्ति किञ्चन' इत्यादि श्रुतिसिद्धस्य, एकस्य परमार्थतोऽद्वितीयस्य, हेतुगर्भविशेषणमेतत् । तथा हि-यतः सर्वदेहेषु आत्मा एक एव, अतः यावद्देहावच्छेदे कृतानां यावत्पापानां फलभोक्ता स एवेति भावः । ते तव, त्वदुक्तस्य इत्यर्थः । आत्मनः परमात्मसंज्ञकस्य, भीरो ! हे पापभयशील !, दुरितेन पापेन, परदारगमनरूपैकमात्रपातकेन इति भावः । को भरः भारः स्यात् ? भवेत् ? देहातिरिक्तैकात्मवादिमते नानादेहोपाधिकृतनानापापसम्बन्धवत् आत्मनः एकेन पापेन न कोऽपि भारः स्यात् अतः यथेच्छं पापं कुरु इति निष्कर्षः ॥ ५५ ॥

सबलोगोंके ( परस्त्रीसम्भोगादिरूप ) पापसे ( नरक आदि ) अनन्त सन्तापमें डूबते हुए तुम्हारे ( एकात्मवादियोंके ) अभिमत वेदप्रमाणित आत्माको हे भीरो ( पाप कर्मसे नरक प्राप्तिरूप सन्तापसे डरनेवाले ) ! कौन-सा भार ( बोझ ) होगा ? [ 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानास्ति किञ्चन' इत्यादि वेदवाक्य आत्माके एकत्वका प्रतिपादन करते हैं, इस अवस्थामें सब लोग जो कुछ पाप करते हैं, उस पापसे वह एक आत्मा ही समस्त पापको भोगनेवाला सिद्ध होता है और जब ऐसी स्थिति है, तब यदि तुम परस्त्रीसम्भोगादिरूप पाप करोगे तो अनन्त लोगोंके पापको भोगनेवाले उस आत्माके लिए कौन-सा अधिक बढ़ जायेगा क्योंकि बोझसे लदी हुई गाड़ीपर सूप रखनेसे उसका बोझ बढ़ना कोई भी व्यक्ति नहीं स्वीकार करता । अथवा—जब आत्मा एक ही है, तब दूसरे लोगोंके किये पुण्यके कारण सुखानुभव करनेवाले उसके लिए किसी एकके पाप कर्मसे कौन-सा बोझ हो जायेगा? अर्थात् कुछ नहीं। अथवा—जब आत्मा एक ही है, तब कोई भी वस्तु संसारमें दूसरी या दूसरेकी नहीं है, इस अवस्थामें कोई भी परस्त्री नहीं, अतः स्वेच्छाचारसे समस्त स्त्रियोंके साथ सम्भोग करनेपर भी कोई पाप नहीं होगा, अतः तुम्हें उस पापजन्य सन्तापसे डरना नहीं चाहिये ] ॥ ५५ ॥

किन्ते वृन्तहृतात् पुष्पात् तन्मात्रे हि फलत्यदः ।
न्यस्य तन्मूर्ध्न्यनन्यस्य न्यास्यमेवाश्मनो यदि ॥ ५६ ॥

किमिति । हे याजक ! वृन्तहृतात् बन्धनावचितात्, पुष्पात् चम्पकादिकुसुमात्, पुष्पं वृन्तच्युतं कृत्वा इत्यर्थः । ल्यब्लोपे पञ्चमी । ते त्वया, किं कुत्सितं कर्म कृतमित्यर्थः । 'किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि' इति मेदिनी । हि यतः,

---

१. 'तापेनान्ते' इति पाठान्तरम् । २. 'न्यस्य ते मूर्ध्न्यनन्यस्य' इति पाठान्तरम् ।

अदः इदं पुष्पं, मन्मात्रे तस्मिन् वृन्ते एव, फलति फलरूपेण परिणमति, न त्वन्यत्र। पुष्पं वृन्तच्युतं कृत्वा फलव्याघातसम्पादनाद्दोष एव कृतस्त्वयेति भावः। अथ अश्मनः देवताधिष्ठितस्य शालग्रामादिप्रस्तरस्य, मूर्ध्नि शिरसि, न्यास्यम् अर्पणीयम् एव, यदि 'ऋहलोर्ण्यत्' देवतापूजादिप्रयोजनमेव तत्कारणं चेदित्यर्थः। तत् तर्हि, अनन्यस्य तादृशप्रस्तरादभिन्नस्य स्वस्य एव, मूर्ध्नि न्यस्य निधेहि अस्यतेर्लोटि सिचि हेलुक्। 'सर्वं विष्णुमयं जगत्' इत्यादिवादिभवन्मते भेदस्य काल्पनिकतया सर्वत्रैव ईश्वरस्य वर्त्तमानतया च विष्णुशिलातः स्वच्छिरसः अभिन्नत्वात् अन्योपासनापेक्षया वरं स्वयमुपभोग इति भावः॥ ५६ ॥

वृन्त (भेंटी) से तोड़े गये फूलसे तुम्हें क्या प्रयोजन (या—तुमने क्या साधा)? क्योंकि वह फूल वृन्तमें रहनेपर ही फलता है (अन्यथा नहीं, अत एव वृन्तसे तोड़कर उसे फलनेसे वञ्चित करनेके कारण तुमने लाभ उठानेके बदले हानि एवं पाप ही किया), यदि इस (फूल) को दूसरे (शिवमूर्ति या शालग्रामादि) शिला मस्तकपर रखना ही है तो उसे अपने ही मस्तकपर रखो। [फूलको तोड़कर देवतापर चढ़ानेसे कुछ लाभ नहीं, क्योंकि वह फूल जब डण्ठलसे तोड़ लिया जाता है तो फलता नहीं, इस प्रकार एक फलकी उत्पत्तिको रोककर तुमने लाभके स्थानमें हानि ही प्राप्त की है। 'देवताके ऊपर फूल चढ़ानेसे अभीष्टलाभ होता है' इत्यादि भावनासे यदि तुम्हें उस फूलको तोड़कर किसी शिवलिङ्ग या शालग्रामकी शिलापर रखना ही है तो 'सर्वं विष्णुमयं जगत्' इत्यादि सिद्धान्तके अनुसार उक्त देव तथा तुम्हारे शिरमें भेद नहीं होनेसे, दूसरे पत्थरके ऊपर उस फूलको नहीं रखकर अपने ही शिरपर रखो, क्योंकि दूसरेकी सेवाकी अपेक्षा स्वयमेव उपभोग करना श्रेष्ठ है। अत एव देवपूजन आदि करना सब व्यर्थ होनेसे अपने मस्तकपर ही फूलको क्यों नहीं चढ़ाते? इस प्रकार देव-पूजकोंका उपहास किया गया है]॥ ५६ ॥

तृणानीव घृणावादान् विधूनय वधूरनु ।
तवापि तादृशस्यैव का चिरं जनवञ्चना ? ॥ ५७ ॥

तृणानीति। वधूः कामिनीः, अनु लक्षीकृत्य, स्त्रीविषये इत्यर्थः। घृणावादान् 'हासोऽस्थिसन्दर्शनमक्षियुग्ममत्युज्ज्वलं तत् कलुषं वसायाः। स्तनौ च पीनौ पिशितौ च पिण्डौ स्थानान्तरे किं नरकोऽपि योषित्॥' इत्यादिजुगुप्सावाक्यानि, 'घृणा जुगुप्साकृपयोः' इति यादवः। तृणानि इव असारतया यवसानीव, विधूनय विसर्जय। 'धूञ्प्रीञोर्नुग्वक्तव्यः'। तव अपि भवतोऽपि, तादृशस्य नारीवत् असारतया जुगुप्सितस्य एव सतः, चिरम् अत्यन्तं, जनवञ्चना स्त्रीविषये विरक्तिसूचकप्रलापैः लोकप्रतारणा, का? किमर्था? स्त्रीणां यादृशा निन्दावादाः तादृशास्तवापि, अतः स्त्रीनिन्दया लोकवञ्चना न युक्तेति भावः॥ ५७ ॥

स्त्रियोंको लक्ष्यकर (स्त्रियोंका मुख थूकका घर, स्तन मांसग्रन्थि, हास अस्थि-दर्शन है

इत्यादि रूपमें कथित ) निन्दावचनोंको तृणके समान ( निःसार जानकर ) छोड़ो, क्योंकि उसी प्रकारके ( निन्दनीय ) तुम्हारे लिये ( स्त्रियां इस प्रकार निन्दनीय हैं इत्यादि ) चिरकाल तक मनुष्योंको वञ्चित करना कैसा है ?। [ स्त्रियोंके विषयमें बहुत प्रकारसे घृणित रूपमें उनका वर्णनकर उनका त्याग करना बतलाया गया है, किन्तु पुरुष भी वैसा ही—मुख थूकका घर, हास अस्थिदर्शनमात्र ही है, अत एव स्त्रियोंके विषयमें निःसार घृणित वचनोंको कहना अनुचित होनेसे उसका त्याग करना और उनका उपभोगकर आनन्दलाभ करना चाहिये ] ॥ ५७ ॥

कुरुध्वं कामदेवाज्ञां ब्रह्माद्यैरप्यलङ्घिताम् ।
वेदोऽपि[1] देवकीयाज्ञा तत्राज्ञाः ! कोऽधिकाऽर्हणा[2] ? ॥ ५८ ॥

कुरुध्वमिति । अज्ञाः ! हे मूढाः ! ब्रह्माद्यैः विधातृप्रभृतिभिरपि, अलङ्घिताम् अनतिक्रान्तां, कामदेवस्य कामः कन्दर्प एव, देवः देवता, तस्य आज्ञां नारीवशीभूतत्वरूपमादेशं, कुरुध्वं पालयत । न चायमवैदिकाचार इत्याह—वेदः अपि श्रुतिरपि, देवस्य इयं देवकीया देवतासम्बन्धनी, 'गहादिभ्यश्च' इति छप्रत्यये 'देवस्य च' इति कुगवक्तव्यः[3] आज्ञा शासनं, 'श्रुतिः स्मृतिर्ममैवाज्ञा' इति भगवद्वचनादिति भावः । तत्र देवाज्ञारूपे वेदे, अधिका कामदेवाज्ञातो बलवतीत्यर्थः। अर्हणा पूजा, समादर इत्यर्थः । का ? किन्निमित्ता ? इत्थम् आज्ञाद्वयस्याविशेषे कामदेवाज्ञा एव कार्या ब्रह्माद्यैरप्यङ्गीकृतत्वेन शिष्टपरिगृहीतत्वरूपप्रामाण्यात् प्रत्यक्षसुखहेतुत्वाच्चेति भावः ॥ ५८ ॥

हे मूर्खो ! ब्रह्मा आदिसे भी अनुल्लङ्घित कामरूप देवकी ( स्त्रीपरवशतारूप ) आज्ञाको करो, क्योंकि वेद भी देवकी ही आज्ञा है ( इस प्रकार दोनोंके देवाज्ञा होनेके कारण ) उस ( वेदाज्ञा ) में अधिक मान्यता क्यों है अर्थात् दोनों आज्ञाओंके देवप्रतिपादित होनेसे किसी एकमें मान्यता तथा दूसरेमें अमान्यता रखनेका पक्षपात नहीं करना चाहिये। [ अथवा—उन ( वेदाज्ञा तथा देवाज्ञा ) में-से अधिक मान्यता किसमें है ? 'यह कहो' अर्थात् किसीमें नहीं, देवाज्ञा होनेके कारण दोनों ही समान रूपसे मान्य हैं। अथवा—वेद तो ब्रह्मप्रतिपादित है तथा ब्रह्मादि भी कामदेवकी आज्ञाका उल्लङ्घन नहीं करते, इस कारण ब्रह्मप्रतिपादित वेदाज्ञा तथा कामप्रतिपादित आज्ञामें-से कामप्रतिपादित आज्ञा ही ब्रह्मादि शिष्टसम्मत तथा प्रत्यक्षसुखप्रद होनेसे अधिक मान्य है अतः उसीका पालन करना चाहिये। पाठा०—उस ( कामाज्ञा ) में कौनसी निन्दा है ? अर्थात् कुछ नहीं। चुंकि तुमलोग वेदाज्ञामें ही अधिक श्रद्धा रखते हो, तदपेक्षया श्रेष्ठ कामाज्ञामें नहीं, अत एव तुमलोग 'मूर्ख' हो, इस प्रकार उपहास किया गया है। ] ॥ ५८ ॥

---

१. 'वेदो हि' इति पाठान्तरम् । २. 'का विगर्हणा' इति पाठान्तरम् ।
३. 'कुगागमः' इत्युचितम् ।

प्रलापमपि वेदस्य भागं मन्यध्वमेव[1] चेत्।
केनाभाग्येन दुःखान्न विधीनपि तथेच्छथ ? ॥ ५९ ॥

प्रलापमिति। हे मूढाः! वेदस्य भागम् अंशविशेषम्, अर्थवादात्मकमिति भावः। प्रलापम् अनर्थकं वचः, अपि प्रश्ने, मन्यध्वं जानीथ एव, चेत् यदि, तदा केन कीदृशेन, अभाग्येन भाग्यविपर्ययेण, दुःखयन्तीति दुःखाः। पचाद्यच्। तान् दुःखान् दुःखकरार्थान्, विधीन् अपि विधिभागम् अपि, तथा तद्वत् प्रलापान् इत्यर्थः। न इच्छथ ? न मन्यध्वम् ? एकदेशोपहतान्नराशिवत् कृत्स्नस्यापि अनुपादेयत्वादिति भावः ॥ ५९ ॥

वेदके ( अर्थवादात्मक ) भागको यदि प्रलाप ( कार्यप्रतिपादक नहीं होनेसे निरर्थक ) मानते हो तो किस अभाग्यसे दुःखकारक दूसरे विधि ( अग्निष्टोमादि यज्ञविधान-प्रतिपादक भाग ) को वैसा ( प्रलाप अर्थात् अर्थवादात्मक होनेसे निरर्थक ) नहीं मानते हो ! [ 'आम्नायस्य क्रियार्थत्वादानर्थक्यमेतदर्थानाम्' अर्थात् 'वेदके क्रियार्थक ( क्रियापतिपादक ) होनेसे तद्भिन्न वचन अनर्थक है' इस पूर्वपक्षीय वचनानुसार 'सोऽरोदीत्', 'यदरोदीत्' इत्यादि वचन अनर्थक हैं ऐसा पूर्वपक्ष होनेपर 'विधिना त्वेकवाक्यत्वात्' अर्थात् विधिके साथ एकवाक्यता होनेसे वे वचन स्तुत्यर्थक होनेसे अर्थवाद मानते हैं, फिर भी उनको जिस प्रकार कार्यप्रतिपादक नहीं होनेसे निरर्थक मानते हो, उसी प्रकार 'अग्निष्टोमेन स्वर्गकामो यजेत' अर्थात् 'स्वर्ग चाहनेवाला अग्निष्टोम यज्ञ करे' इत्यादि विधिवाक्योंको भी निरर्थक मानना चाहिये, क्योंकि वेदके किसी भागको सार्थक तथा तदितर भागको निरर्थक मानना अनुचित एवं अभाग्यका सूचक है, अत एव सभी वेदवचनको तुमलोग निरर्थक मानकर स्वेच्छापूर्वक कार्य करो ] ॥ ५९ ॥

श्रुतिं श्रद्धध्वं[2] विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयम्।
मीमांसामांसलप्रज्ञास्तां यूपद्विपदापिनीम् ॥ ६० ॥

श्रुतिमिति। हे मीमांसया जैमिनिप्रोक्ततत्त्वनिर्णायकग्रन्थभेदाध्ययनेन, मांसलप्रज्ञाः! परिपुष्टबुद्धयः! स्थूलबुद्धयः! इति परिहासोक्तिः। विक्षिप्ताः वादिनिराकृताः भ्रान्ताः सन्तः, श्रुतिं वेदं, श्रद्धध्वं विश्वसिथ, अथ च यूपद्विपदापिनीं यूपसम्बन्धिहस्तिदानप्रतिपादिकां, 'यूपे यूपे हस्तिनो बद्ध्वा ऋत्विग्भ्यो दद्यात्' इत्यादिवादिनीमित्यर्थः। तां श्रुतिं, स्वयम् आत्मनैव, वेदप्रामाण्यं स्वीकुर्वाणः स्वयमेव इत्यर्थः। प्रक्षिप्तां विप्लुतार्थां, केनचित् लुब्धेन वेदान्तर्निवेशितां न तु ईश्वरप्रणीतामित्यर्थः। ब्रूथ च वदथ च, तत् कुतो वेदस्य प्रामाण्यमिति भावः ॥ ६० ॥

हे मीमांसासे परिपुष्ट ( पक्षा०—स्थूल ) बुद्धिवाले! विक्षिप्त ( प्रतिपक्षियोंसे पराजित होकर भ्रान्तचित्त, तुम लोग ) वेदमें श्रद्धा करते अर्थात् वेदवचनोंको प्रमाण मानते हो तथा

१. 'मन्यध्व एव' इति पाठान्तरम्। २. 'श्रद्धत्थ' इति पाठान्तरम्।

प्रत्येक यज्ञस्तम्भमें हाथी बाँधकर ऋत्विजोंके लिये दिलानेवाली श्रुति (वेदवचन) को स्वयमेव प्रक्षिप्त कहते हो। [ऐसा श्रुतिके विषयमें भेदभाव क्यों करते हो? यह ठीक नहीं। वेदमें विधिवाक्य कहनेके बाद 'यूपे यूपे हस्तिनो बद्ध्वा ऋत्विग्भ्यो दद्यात्' अर्थात् 'प्रत्येक यूपमें हाथी बांधकर ऋत्विजोंके लिये दे' इस वचनको 'यह वेदमूलक नहीं है, लोभपूर्वक उन्हीं लोगोंके द्वारा यह कहा गया है' ऐसा कहकर अर्थवाद मानना युक्तिसङ्गत नहीं है]॥ ६०॥

को हि वेत्ताऽस्त्यमुष्मिन् वा लोक इत्याह या श्रुतिः।
तत्प्रामाण्यादमुं लोकं लोकः प्रत्येति वा कथम्?॥ ६१॥

को हीति। किञ्च, को हि वा को वा जनः, अमुष्मिन् लोके परलोकविषये, वेत्ता ज्ञाता, अस्ति? विद्यते? न कोऽपि परलोकतत्त्वाभिज्ञ इत्यर्थः। इति एवं, या श्रुतिः वेदः, आह कथयति, तस्याः एवं सन्दिहानायाः श्रुतेः, प्रामाण्यात् प्रामाणावलम्बनात्, अमुं लोकं परलोकं, लोकः जनः, कथं वा केन वा प्रकारेण, प्रत्येति? विश्वसिति? न प्रत्ययार्हः परलोक इत्यर्थः। अतः प्रतिष्ठावादिनी श्रुतिर्न श्रद्धेया इति भावः॥ ६१॥

'इस परलोकके विषयमें कौन जानता है?' अर्थात् 'परलोकका तत्त्वज्ञाता कोई नहीं है' ऐसी जो श्रुति कहती है, उस (श्रुति) के प्रमाणसे इस परलोकके विषयमें कौन विश्वास करेगा? अर्थात् कोई नहीं। ['को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा', 'दिक्वतीकाशान् करोति' इत्यादि श्रुतियोंसे ही परलोकके विषयमें सन्देह होता है तो कौन विज्ञ पुरुष उस सन्देहजनक श्रुतिके प्रमाणसे उस परलोकके अस्तित्वको स्वीकार करेगा? अर्थात् कोई भी विज्ञ पुरुष उस परलोकके अस्तित्वको स्वीकार नहीं करेगा, किन्तु तुम्हीं लोगों जैसा स्थूलबुद्धि व्यक्ति उसे स्वीकार करेगा। इस प्रकार इन तीन (१७।५९-६१) श्लोकोंसे मीमांसकोंके मतका खण्डन किया है]॥ ६१॥

धर्माधर्मौ मनुर्जल्पन्नशक्यार्जनवर्जनौ।
व्याजान्मण्डलदण्डार्थी श्रद्धायि मुधा बुधैः॥ ६२॥

एवं श्रुतेरप्रामाण्यमुक्त्वा स्मृतेरप्याह-धर्मेत्यादि। व्याजात् कैतवात्, धर्माधर्मोपदेशमपदिश्येत्यर्थः। मण्डलस्य राष्ट्रस्य, राष्ट्रवासिलोकस्येत्यर्थः। दण्डार्थी दमार्थी, शासननिमित्तमित्यर्थः। लोकस्य विधिनिषेधातिक्रमजन्यमपराधं निमित्तीकृत्य प्रायश्चित्तादिद्वारा धनाभिलाषुकः सन् इति भावः। अशक्ये कर्त्तुः असाध्ये, अर्जनवर्जने यथासङ्ख्यं करणाकरणे ययोः तादृशौ, धर्माधर्मौ पुण्यपापे, धर्मो यागादिकः बहुधनव्ययायाससाध्यत्वात् अर्जितुमशक्यः, अधर्मः परदारादिगमनाद्यात्मकः इन्द्रियनिग्रहं कर्त्तुमशक्यत्वात् सुखकारणत्वाच्च वर्जितुमशक्य इति भावः। जल्पन्

१. 'वेदा—' इति पाठान्तरम्। २. 'श्रद्दधे वा' इति पाठान्तरम्।

कथयन्, यथासङ्ख्यम् अजर्यत्वेन वर्ज्यत्वेन च उपदिशन् इत्यर्थः । मनुः आदिस्मृतिकर्त्ता, बुधैः विद्वद्भिः, मुधा वृथैव, अश्रद्धायि श्रद्धितः, आहत इत्यर्थः । परदाराभिगमनादिरूपमधर्मं प्रत्यक्षसुखजनकतया सर्वं एवाचरन्ति इति ज्ञात्वा तज्जन्यकल्पितदुरितपरिहारमपदिश्य धनलाभार्थं प्रायश्चित्तात्मको दण्डो मनुना विहितः, न तु तदधर्मम्, अतो मनुवचनमूला स्मृतिर्न प्रमाणमिति भावः ॥ ६२ ॥

( पूर्व तीन श्लोकों ( १७।५९-६१ ) से वेदकी प्रामाणिकताका खण्डनकर अब स्मृतिकी प्रामाणिकताका खण्डन करता है—) व्याज अर्थात् धर्म-अधर्मके प्रतिपादनके कपटसे राष्ट्र ( वासियों ) के शासनके लिए ( धर्म-अधर्मको कारण बतलाकर प्रायश्चित्त आदिके द्वारा धनका लोभी ) तथा असाध्य धर्म और अधर्मको कहनेवाले मनुका पण्डितों (पक्षा०—मूर्खों) ने व्यर्थ आदर किया है । [ बहुत धनव्यय होनेसे तथा शीत-आतप-भूख-प्यास आदिके असह्य होनेसे अग्निष्टोमादि यज्ञरूप धर्मको और इन्द्रियनिग्रह असाध्य होनेसे एवं प्रत्यक्ष सुखदायी होनेसे परस्त्रीगमनादि रूप अधर्मको ग्रहण तथा त्याग करना अशक्य है; अतः उनका प्रतिपादन जो राष्ट्रवासियोंके शासनको निमित्तकर धर्म-अधर्मके व्याजसे मनुने धनलोभके कारण किया है; उस मनुपर विद्वान् लोग व्यर्थ श्रद्धा करते हैं अर्थात् श्रद्धा नहीं करते, अथवा श्रद्धा नहीं करनी चाहिये, अथवा—'अबुधैः' पदच्छेद करके उसपर मूर्खलोग व्यर्थ श्रद्धा करते हैं अर्थात् कोई भी विद्वान् श्रद्धा नहीं करता । इस कारण आदि स्मृतिकार ब्रह्मपुत्र मनुका धर्माधर्म प्रतिपादनपरक प्रायश्चित्तादिकथन अश्रद्धेय है ] ॥ ६२ ॥

**व्यासस्यैव गिरा तस्मिन् श्रद्धेत्यद्धा स्थ तान्त्रिकाः ।**
**मत्स्यस्याप्युपदेश्यान् वः को मत्स्यानपि भाषताम् ॥ ६३ ॥**

व्यासस्येति । व्यासस्य धीवरकन्याव्यभिचारोत्पन्नस्य भ्रातृपत्न्यां सुतोत्पादयितुः स्वयमेव व्यभिचाररतस्य पराशरपुत्रस्यैव, गिरा वाचा, पुराणवाक्येन, मनूक्तं ग्राह्यम् इत्युक्त्या वा इत्यर्थः । तस्मिन् परलोके धर्मे वा, श्रद्धा आदरबुद्धिः, इति एवं, तान्त्रिकाः शास्त्रवेदिनो युक्तिज्ञाः । 'तदधीते तद्वेद' इति ठक् । स्थ भवथ, इति अद्धा सत्यम् । पुराणसामान्यमुपहस्य विशेषपुराणमुपहसति—मत्स्यस्य मीनस्यापि, मत्स्यरूपधारिणो विष्णोर्वाक्यरूपस्य मत्स्यपुराणस्यापीत्यर्थः । उपदेश्यान् अनुशासनीयान्, अत एव मत्स्यान् मत्स्यप्रायान्, वः युष्मान्, कः सुधीः, अपि प्रश्ने, भाषताम् ? आलपतु ? न कोऽपि इत्यर्थः । मत्स्याः कस्यापि न सम्भाष्याः इति भावः । मत्स्यः उपदेष्टा इति स्वकपोलकल्पितं वदन् व्यासो न श्रद्धेयवचन इति तात्पर्यम् ॥ ६३ ॥

( निषाद-कन्याके साथ व्यभिचार करनेसे उत्पन्न तथा भ्रातृ-पत्नीमें पुत्रोत्पादन करनेसे स्वयं भी व्यभिचारपरायण ) व्यासके ही वचन ( पुराण अथवा—'मनुका कथन ग्राह्य है' इस कथन ) से उस ( धर्म या व्यासवचन=पुराण, अथवा व्यास ) में सचमुच तान्त्रिक ( तन्त्रशास्त्रके विद्वान्, पक्षा०—सूत बुननेका काम करनेवाले जुलाहे अर्थात् जुलाहेके

समान मूर्ख ) तुम श्रद्धा करते हो, तब मत्स्य ( रूपधारी विष्णु, पक्षा०—मछली ) के उपदेश्य अर्थात् शिष्य ( अत एव मत्स्यरूप=मछलीरूप ) तुमलोगोंके साथ कौन भाषण करे ? अर्थात् कोई नहीं । [ निषाद-कन्याके साथके व्यभिचार करनेपर उत्पन्न होनेसे तथा भ्रातृपत्नीमें पुत्रोत्पादन करनेके कारण स्वयं भी व्यभिचारी होनेसे व्यासके वचनरूप महाभारतादि ग्रन्थ भी अश्रद्धेय हैं और मत्स्यरूपधारी विष्णुद्वारा प्रतिपादित मत्स्यपुराणके उपदेशार्ह होने मत्स्यप्राय अर्थात् अतिशय तुच्छ तुमलोगोंके साथ कौन बातचित करे ? एक तो मत्स्य ( मछली ) ही जलचरोंमें हीन एवं तिर्यग्योनिमें उत्पन्न होनेसे बातचित करनेके अयोग्य है, किन्तु तुमलोग तो उस ( मत्स्य—मत्स्यरूपधारी विष्णु ) के शिष्य हो, अत एव अतिनीच तुमलोगोंके साथ बातचीत भी कौन करे ? अर्थात् तुमलोग सम्भाषणके भी योग्य नहीं हो । अथवा—श्लोकके पूर्वार्द्धसे व्यासोक्त महाभारतादि पुराणोंकी निन्दा करनेके बाद उत्तरार्द्धसे मनु आदि स्मृतिकारोंकी ही निन्दा करते हुए कह रहा है कि—मत्स्य ( मत्स्यरूपधारी विष्णु ) के भी उपदेश्य अर्थात् अनुशासनीय तुमलोगों ( मनु आदि स्मृतिकारों ) के साथ बातचित भी कौन करे ? । 'मनु'के उपदेश्य होनेसे जिस प्रकार सभी 'मानव' कहलाते हैं, उसी प्रकार 'मत्स्य' ( मत्स्यरूपधारी विष्णु ) के शासित उपदेश्य होनेसे यहांपर सबको 'मत्स्य' कहकर उनका उपहास किया गया है ] ॥ ६३ ॥

**पण्डितः पाण्डवानां स व्यासश्चाटुपटुः कविः ।**
**निनिन्द तेषु निन्दत्सु स्तुवत्सु स्तुतवान्न किम् ॥ ६४ ॥**

पुनर्व्यासमेव विडम्बयति-पण्डित इत्यादि । पाण्डवानां युधिष्ठिरादीनां, चाटुपटुः मिथ्यास्तुतिवादकुशलः, कविः उत्प्रेक्षितार्थवर्णयिता, पण्डितः पण्डितमानी, स भवतामाप्ततम इत्यर्थः । व्यासः महाभारतकारः, अपि इति शेषः । तेषु पाण्डवेषु, निन्दत्सु दुर्योधनादीन् आक्षिपत्सु, न निनिन्द किम् ? न परिववाद किम् ? दुर्योधनादीनिति शेषः । तेषु पाण्डवेषु, स्तुवत्सु कृष्णादीन् स्तुतिं कुर्वत्सु सत्सु, न स्तुतवान् किम् ? स्तुतिं न कृतवान् किम् ? कृष्णादीनिति शेषः । तेषां निन्द्यान् निन्दन् स्तुत्यांश्च स्तुवन् व्यासोऽपि पाण्डवपक्षपाती कश्चित् कविर्न आप्ततमः यथार्थवादीति भावः ॥ ६४ ॥

पाण्डवोंकी चापलूसीमें चतुर, कवि एवं पण्डित व्यासने उन ( पाण्डवों ) के ( दुर्योधनादि की ) निन्दा करते रहनेपर ( उन दुर्योधनादिकी ) निन्दा नहीं की है क्या ? ( कृष्णादिकी ) प्रशंसा करते रहनेपर ( उन कृष्णादिकी ) प्रशंसा नहीं की है क्या ? । [ महाभारत आदिके रचयिता व्यास बुद्धिमान् एवं स्वामी पाण्डवोंकी चापलूसी करनेमें चतुर कवि था, अतः पाण्डवोंने दुर्योधनादिकी निन्दा तथा कृष्णादिकी स्तुति की, तदनुसार ही स्वामी पाण्डवोंको प्रसन्न करनेकी नीति अपनानेवाले चाटुकारी व्यासने भी महाभारतादिमें दुर्योधनादिकी निन्दा तथा कृष्णादिकी स्तुति ( प्रशंसा ) की है; अतः व्यास स्वयं

आप्त नहीं हैं तो उसके कथित महाभारतादि ग्रन्थ-पुराणादि किस प्रकार प्रमाणिक हो सकते हैं ? अर्थात् वे सभी अप्रमाणिक तथा अश्रद्धेय हैं ] ॥ ६४ ॥

न भ्रातुः किल देव्यां स व्यासः कामात् समासजत् ।
दासीरतस्तदासीद्यन्मात्रा तत्राप्यदेशि किम् ॥ ६५ ॥

**कामचारी च स इत्याह—नेति। सः प्रसिद्धपारदारिकः, व्यासः सत्यवतीनन्दनः, भ्रातुः विचित्रवीर्यस्य, देव्यां महिष्यां, कामात् स्मरावेगात्, न समासजत् किल ? न आसक्तः किम् ?। गुर्वनुज्ञानान्न दोषश्चेत् तत्राह—तदा तत्काले, विचित्रवीर्यस्य पत्न्यां सुतोत्पत्तिकाले इत्यर्थः। दासीरतः दास्यां विदुरमातरि, रतः आसक्तः, आसीत् अभूत्, विदुरोत्पादायेति भावः। इति यत् तत्रापि दासीगमनेऽपि, मात्रा सत्यवत्या, अदेशि किम् ? आदिष्टः किम् ? अपि तु नादिष्ट इत्यर्थः। उभयत्रैव कामपरवशत्वात् प्रवृत्तस्य एवम्भूतदुश्चरित्रजनस्याप्ततमत्वासम्भवात् तद्वचनमप्रमाणमिति भावः ॥ ६५ ॥**

( तुमलोगोंका आप्ततम ) व्यास भाई ( विचित्रवीर्य ) की स्त्रीमें कामाधीन होकर नहीं आसक्त हुआ था क्या ? अर्थात् कामाधीन होकर ही विचित्रवीर्यको पत्नीके साथ सम्भोग करनेमें व्यास आसक्त हुआ था, ( क्योंकि यदि ऐसा नहीं होता और माताकी आज्ञासे नियोग[1] द्वारा विचित्रवीर्यकी स्त्रीमें सन्तानोत्पादनके लिए वह व्यास प्रवृत्त हुआ होता तो ) उस ( पुत्रके उत्पादनके ) समयमें ( वह व्यास ) जो दासी ( विदुरकी माता ) में अनुरक्त हुआ, उसमें ( विदुरमाताके साथ सम्भोगकर पुत्रोत्पादन करनेमें ) भी माताने आदेश दिया था क्या ? अर्थात् नहीं, ( अत एव जिस प्रकार दासी विदुरमाता ) में अनुरक्त होनेमें व्यासका कामातुर होना ही कारण है, उसी प्रकार भाई विचित्रवीर्यकी स्त्रीके साथ सम्भोग करनेमें भी व्यासका कामातुर होना ही कारण है, माताकी आज्ञासे नियोग द्वारा पुत्रोत्पादन करना आदि नहीं ] ॥ ६५ ॥

पौराणिक कथा—भीष्म पितामहने पिताके सुखके निमित्त निषादराजकी कन्याके साथ विवाह करनेके लिए आजन्म ब्रह्मचारी रहनेकी प्रतिज्ञा कर ली थी और राजा विचित्रवीर्य स्वयं सन्तानोत्पादनमें असमर्थ थे, इस प्रकार भविष्यमें सन्तान होनेकी कोई आशा नहीं होनेसे सन्तानोच्छेदके भयसे विह्वल सत्यवती ( व्यासकी माता ) ने व्यासको बुलाकर सन्तानोत्पादन करनेके लिए आदेश दिया और उनकी आज्ञा मानकर व्यासने भाई विचित्रवीर्यकी स्त्रीसे 'धृतराष्ट्र' तथा 'पाण्डु' नामके दो पुत्रोंको तथा ।उस विचित्रवीर्यको

---

१. तदुक्तं मनुना—'देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ् नियुक्तया ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥' इति ( मनु० ९।५९ )

एतद्विषये विशेषजिज्ञासुभिर्मन्वर्थमुक्तावली मत्कृतो 'मणिप्रभा'ख्यो मनुस्मृत्यनुवादो वा द्रष्टव्यः ।

दासीमें 'विदुर' नामक एक पुत्रको उत्पन्न किया। विशेष कथाप्रसङ्ग महाभारतसे ज्ञात करना चाहिये।

देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ ।
गां नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽधरीकृतः ॥ ६६ ॥

**देवैरिति। हे मूढाः! येषां वः, देवैः ब्रह्मादिभिः, द्विजैः व्यासादिभिश्च, कृताः रचिताः, ग्रन्थाः पुस्तकानि, 'गां प्रणमेत्' इत्यादि स्मृतयः इति यावत्। पन्थाः प्रमाणं, धर्माधर्मोपदेष्टा इत्यर्थः। तदादृतौ तदादरनिमित्तं, तस्मिन् ग्रन्थे श्रद्धाहेतोरित्यर्थः। निमित्तार्थे सप्तमी। गां धेनुं, नतैः प्रणतैः, तैः भवद्भिः, ततः गोः अपि, आत्मा स्वं, व्यक्तं स्फुटम्, अधरीकृतः हीनीकृतः, न किम्? अपि तु कृतः एव इत्यर्थः। पशुप्रणामात् पशोरपि निकृष्टता स्यात्, न चास्य किञ्चित् फलमस्तीति भावः ॥६६॥**

(ब्रह्मा आदि) देवों तथा (याज्ञवल्क्य व्यास आदि) ब्राह्मणोंके बनाये गये जो ग्रन्थ (श्रुति-स्मृति-पुराण) जिन तुमलोगोंके लिए प्रमाणभूत है, उन ग्रन्थोंके आदरमें गायोंको प्रणाम करते (गायोंसे नम्र अर्थात् हीन होते) हुए तुमलोगोंने स्पष्टरूपमें उन (पशु-गायों) से भी अपनेको नीचा (हीन) नहीं कर दिया क्या? अर्थात् तुमलोगोंने गायोंको प्रणामकर अपनेको उनसे भी अवश्यमेव हीन कर दिया। [अथवा—देवों तथा ब्राह्मणोंके बनाये गये जो ग्रन्थ जिन तुमलोगोंके लिए प्रमाण है, उन देवों तथा ब्राह्मणोंके अर्थात् यज्ञादि द्वारा देवोंके तथा दान-पूजनादिद्वारा ब्राह्मणोंके आदर करनेमें मार्ग है अर्थात् उन देवों तथा ब्राह्मणोंने यज्ञ-दानादिद्वारा अपना आदर करानेके लिए उन ग्रन्थोंको बनाया है, जिसे तुमलोग प्रमाण मानते हो। उन ग्रन्थोंके कथनानुसार गौको प्रणाम करते हुए तुमलोगोंने उनसे अपनेको स्पष्ट ही हीन नहीं किया क्या? अर्थात् अवश्यमेव पशुको प्रणामकर अपनेको उनसे हीन बना लिया। जो जिससे नष्ट होता है, वह उससे अवश्य ही हीन (तुच्छ) माना जाता है; अत एव गौसे नम्र होकर तुमलोगोंने उस पशु गौसे भी अपनेको हीन बना लिया अर्थात् तुमलोग पशुसे भी गये-गुजरे हो गये] ॥ ६६ ॥

साधु कामुकता मुक्ता शान्तस्वान्तैर्मखोन्मुखैः ।
सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः ? ॥ ६७ ॥

**साध्विति। शान्तस्वान्तैः संयतचित्तैः, विषयभोगनिवृत्तचित्तैरित्यर्थः। मखोन्मुखैः क्रतुप्रवणैः, याज्ञिकैरित्यर्थः। प्रेत्य मृत्वाऽपि, अन्ये तु इह जन्मन्येव परस्त्रीकामुकाः, याज्ञिकास्तु परजन्मन्यपि कामुका इति अपेरर्थः। सारङ्गलोचनाः मृगाक्ष्यः स्त्रियः एव, साराः श्रेष्ठांशाः यस्यां तादृशीं, दिवं स्वर्गं, लिप्सुभिः लब्धुमिच्छुभिः सद्भिः कामुकता अभिरतिः, कामपरतन्त्रता इत्यर्थः। साधु सम्यक् यथा तथा, मुक्ता? त्यक्ता? इति काकुः, नैव त्यक्ता इत्यर्थः। इति सिद्धं विहाय साध्यप्रवृत्तेरुपहासः। तस्मात् यागकाले ब्रह्मचर्यादिकम् आत्मवञ्चनमात्रफलं न चान्यत् किमपि इति भावः ॥ ६७ ॥**

शान्त चित्तवाले (विषयभोगशून्य) तथा मरकर भी मृगलोचनी है सार जिसमें ऐसे स्वर्गको चाहनेवाले यज्ञकर्ताओंने कामुकता (कामीपने) का अच्छी तरह[1] त्याग किया? अर्थात् नहीं किया, (अथवा—सुखदायिनी होनेसे श्रेष्ठ कामुकताको नहीं छोड़ा, अथवा—कामुकताको नहीं छोड़ा, यह ठीक है[2])। [इन्द्रियोंका दमनकर संयतचित्त एवं ब्रह्मचर्य-धारणकर यज्ञकर्ता लोग स्वर्ग पानेके लिए यज्ञ करते हैं, किन्तु उस स्वर्गमें सारभूत पदार्थ मृगनयनी अप्सराएँ ही हैं और उन्हींको प्राप्तकर आनन्दपूर्वक जीवन व्यतीत करनेके लिए ही यज्ञ किया जाता है, इससे यह प्रमाणित होता है कि यज्ञकर्तालोग यद्यपि इस जन्ममें इन्द्रियोंको वशमें रखते हुए ब्रह्मचर्य धारणकर यज्ञ करते हैं तथापि मरकर भी वे मृगनयनी स्त्रियों (अप्सराओं) के साथ सम्भोग करनेके लिए ही यज्ञ करते हैं, अत एव जो मरकर भी स्त्रीकी कामुकताका त्याग नहीं कर सकते, वे भला जीवित रहते हुए इन्द्रियनिग्रह-कर कामुकताका त्याग क्या कर सकते हैं? अर्थात् कदापि नहीं; अत एव वे यज्ञकर्ता अतिशय कामुक हैं और उनका यज्ञ करते समय ब्रह्मचर्यादि पालन करना ढोंग तथा आत्मवञ्चनामात्र है]॥ ६७॥

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतम्।
अपवर्गे तृतीयेति भणतः पाणिनेरपि॥ ६८॥

उभयीति। 'अपवर्गे तृतीया' इति भणतः कथयतः, सूत्रं कुर्वतः इत्यर्थः। पाणिनेः तदाख्यस्य प्रसिद्धवैयाकरणस्य, मुनेः ऋषेरपि, उभयी प्रकृतिः स्त्रीपुंसात्मिका द्वयी योनिः, कामे कामात्मके तृतीयपुरुषार्थे इत्यर्थः। मिथुनधर्मे मैथुने वा, सज्जेत् आसक्ता भवेत, स्त्री पुमांश्च द्वयं कामासक्तो भवेदित्यर्थः। इति मतम् अभिप्रायः स्फुटमेव इत्यर्थः। तथा तृतीया प्रकृतिः शण्ढः, क्लीव इत्यर्थः। 'तृतीया प्रकृतिः शण्ढः क्लीवं षण्डो नपुंसकम्' इत्यमरः। अपवर्गे मोक्षे, नपुंसकत्वेन मैथुनाशक्तत्वाद् ब्रह्मचर्यादिद्वारा मोक्षलाभायेत्यर्थः। सज्जेत् इति पाणिनिसूत्रार्थेन उभयी प्रथम-द्वितीया, प्रकृतिः स्त्रीपुंसात्मिका योनिरित्यर्थः। कामे सज्जेत् इति पारिशेष्याद् बोध्यते इति भावः। सूत्रस्थशब्दच्छलेन तादृशविकृतार्थं परिकल्प्या स्वमतसमर्थनं कृतम्, वस्तुतस्तु 'अपवर्गे फलप्राप्तौ तृतीया विभक्ति'रिति तत्सूत्रस्यार्थः। तथा च वृथा कामं विहाय अपवर्गे प्रवर्त्तमाना यूयं नपुंसका हताः स्थेति भावः॥ ६८॥

'अपवर्गे तृतीया (पा० सू० २।३।६)' ऐसा कहते हुए पाणिनि मुनिका भी 'स्त्री-पुरुष काम (मैथुनरूप तृतीय पुरुषार्थ) में आसक्त होवें', ऐसा मत (सिद्धान्त) है। [यद्यपि उक्त पाणिनि-सूत्रका 'फलप्राप्ति द्योत्य रहनेपर काल तथा मार्गके अत्यन्त संयोगमें तृतीया विभक्ति होती है' (जैसे—अह्नाऽनुवाकोऽधीतः, 'क्रोशेनानुवाकोऽधीतः''''''') तथापि शब्द-

१. अत्रार्थे 'साधुकामुकताऽमुक्ता' इत्येवं पाठोऽङ्गीकार्यः।
२. अत्रार्थे साधु कामुकताऽमुक्ता' इत्येवं पाठः स्वीकार्यः।

च्छलसे चार्वाक कलिमुखसे अपने सिद्धान्तका प्रतिपादन करता हुआ उक्त सूत्रका वह अर्थ करता है कि—'तृतीया प्रकृतिः षण्ढः (अमर० २।६।३९) इस कोषप्रामाण्यसे तृतीया प्रकृति अर्थात् नपुंसक व्यक्ति (काममें असमर्थ होनेके कारण) मोक्षमें आसक्त होवे' और 'शेष उभयी प्रकृति अर्थात् स्त्री-पुरुष व्यक्ति कामसेवन (मैथुन करने) में समर्थ होनेके कारण काम-सेवन ही करें' ऐसा मेरे (चार्वाकके) ही आचार्योंका नहीं अपितु तुमलोगोंके सर्वमान्य पाणिनि मुनिका भी मत है। यह 'अपि' शब्दसे ध्वनित होता है। अथ च—'धर्मार्थकाममोक्षाः स्युः' इस वचनमें 'मोक्ष' अर्थात् अपवर्गके अव्यवहित पूर्व 'काम' का कथन होनेसे 'तृतीय प्रकृति' अर्थात् नपुंसक व्यक्ति मोक्षका और शेष दो प्रकृति अर्थात् स्त्री-पुरुष व्यक्ति कामका सेवन करें यह पाणिनिका भी मत है]॥ ६८॥

**बिभ्रत्युपरि यानाय जना जनितमज्जनाः।**
**विग्रहा[1]याग्रतः पश्चाद्गत्वरोरभ्रविभ्रमम्॥ ६९॥**

**बिभ्रतीति। उपरि यानाय ऊर्ध्वलोकगमनाय, जनितमज्जनाः निमग्नाः, तीर्थोदकेषु कृतस्नानाः इत्यर्थः। अधः गच्छन्तः इति भावः। जनाः स्वर्गार्थिनो लोकाः, अग्रतः पुरतः, सम्मुखे इत्यर्थः, विग्रहाय युद्धाय, सम्मुखयुद्धाय इत्यर्थः, पश्चाद्गत्वराणां पश्चाद्गामिनाम्। 'गत्वरश्च' इति क्वरबन्तो निपातः, उरभ्राणां मेषाणां, विभ्रममिव विभ्रमं चेष्टां, बिभ्रति दधतीति निदर्शनालङ्कारः, स चोर्ध्वगमनाय अधो गच्छत इति स्थूलबुद्धीनां स्थूलबुद्धिप्रयासरूपविचित्रालङ्कारोत्थापित इति सङ्करः, तेन तेषामविमृश्यकारित्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ६९॥**

(अब वह गङ्गादिमें स्नान करनेकी निन्दा करता है—) ऊपर (पक्षा०—स्वर्ग) जानेके लिए मज्जन किये (डुबकी लगाये, पक्षा०—नीचेकी ओर गये) हुए लोग आगे अर्थात् सामनेमें युद्धके लिए पीछे हटनेवाले भेंड़ेकी चेष्टा (समानता) को धारण करते (भेंड़ेके समान आकृतिवाले, अथच—भेंड़ेके समान मूर्ख मालूम पड़ते) हैं। [किसीको ऊपर जानेके लिए ऊपरकी ओर उठना उचित है, न कि नीचेकी ओर बैठना, किन्तु ऊपर अर्थात् स्वर्गको जानेके लिए जो लोग गङ्गा आदि तीर्थोंमें डुबकी लगाते (नीचेकी ओर झुकते) हैं, वे लोग आकृति तथा बुद्धिमें उस भेंड़ेके समान हैं जो आगेकी ओर युद्ध करनेके लिए पीछेको हटता है। जब कोई पानीमें डुबकी लगानेके लिए शीतबाधासे शिरके पीछे तथा कटिपर हाथ रखता है, अथवा—जलमें अघमर्षण करते समय नाकपर दहना हाथ और पीठपर बायां हाथ रखता है तब वह आकारमें युद्धार्थ पीछे सरकते हुए भेंड़ेके समान मालूम पड़ता है। अथच—गङ्गादिसे स्नान करनेसे स्वर्गादि प्राप्ति नहीं होनेके कारण वे स्नानकर्ता भेंड़ेके समान महामूर्ख हैं]॥ ६९॥

**कः शमः? क्रियतां प्राज्ञाः! प्रिया[2]प्राप्तौ परिश्रमः।**

---

1. 'विग्रहस्या—' इति पाठान्तरम्। 2. 'प्रियाप्रीतौ' इति पाठान्तरम्।

भस्मीभूतस्य देहस्य[1] पुनरागमनं कुतः[2] ? ॥ ७० ॥

क इति । प्राज्ञाः ! हे प्रज्ञावन्तः ! इति सोपहासमामन्त्रणं, प्रकृष्टज्ञानहीनाः इत्यर्थः, 'प्रज्ञाश्रद्धा' इत्यादिना मत्वर्थीयो णप्रत्ययः शमः शान्तिः, वैराग्यमित्यर्थः, कः ? न कोऽपीत्यर्थः । शमावलम्बनस्य न किमपि फलमस्तीति भावः । प्रियाप्राप्तौ इष्टस्त्रीसङ्गतौ, परिश्रमः प्रयासः, क्रियतां विधीयताम् । न च तत्पापेन नरकयातनाप्राप्तिशङ्का कार्येत्याह—भस्मीभूतस्य दग्धस्य, देहस्य कायस्य, आत्मभूतस्य इति यावत् । पुनः भूयः, आगमनं परलोके प्रत्यावर्त्तनं, कुतः ? कथं सम्भवेदित्यर्थः ? । देहात्मवादिमते परलोकसद्भावेऽपि यस्मिन् देहे पापं कृतं तस्यैव भस्मीभूतत्वेन कथं पापफलभोगसम्भवः ?, देहातिरिक्तात्मवादिमते तु परलोकस्यैवाभावात् पापफलभोगार्थं कृमिकीटादिदेहप्राप्तिः कथं सम्भवेत् ? इति पुनरुद्भवः भ्रम एव इति निष्कर्षः॥

हे प्राज्ञो (अधिक ज्ञानवानों—उपहाससे मूर्खो, अथवा—'प्र+अज्ञ' पदच्छेदकर हे महामूर्खो) शान्ति अर्थात् वैराग्य क्या है ? अर्थात् यज्ञादि करनेसे मरनेके बाद स्वर्ग पाकर देवाङ्गनासङ्गमकी इच्छा बने रहनेके कारण शान्ति-वैराग्य कुछ भी नहीं है, अत एव प्रिया (स्त्री) को पाने (पाठा०—स्त्रीके साथ प्रेम करने) में अधिक श्रम (प्रयत्न) करो, (परस्त्री-सम्भोग करनेपर नरकादि पानेका भय भी नहीं करना चाहिये, क्योंकि-) जले हुए शरीरका फिर आना (परलोकमें शरीरान्तर ग्रहण करना) कैसे होता है ? अर्थात् नहीं होता। [ यज्ञकर्ता यज्ञ करके मरनेके बाद स्वर्गमें भी देवाङ्गनाके साथ सम्भोग करनेकी इच्छा करते हैं, अतः वैराग्य कहीं भी नहीं है। इसलिए स्त्रीके साथ सम्भोग करनेके लिए भरपूर उपाय करना चाहिये। मरनेपर दूसरा शरीर धारणकर परस्त्रीसम्भोगजन्य पापके कारण दुःख भोगनेकी शङ्का भी नहीं करनी चाहिये, क्योंकि देहको ही आत्मा माननेवालोंके मतमें परलोक रहनेपर भी पापकर्ता देवके भस्म हो जानेके कारण तथा देहसे भिन्न आत्मा माननेवालोंके मतमें परलोकका ही अभाव होनेके कारण दूसरे देहको पाकर दुःख भोगना सम्भव ही नहीं है, अत एव जीवनपर्यन्त यथेष्ट स्त्रीसम्भोगादि करना चाहिये ] ॥ ७० ॥

एनसाऽनेन तिर्य्यक् स्यादित्यादिः का विभीषिका ? ।
राजिलोऽपि हि राजेव स्वैः सुखी सुखहेतुभिः ॥ ७१ ॥

अस्तु वा नरकभोगार्थं यातनाशरीरं तत्रापि सुखमेवेत्याह—एनसेति । अनेन एवंविधेन, एनसा पापेन, तिर्यक् कृमिकीटादियातनाशरीरं स्याद् भवेत्, इत्यादिः एतत्प्रभृतिः, का विभीषिका ? किं त्रासनम् ? अनिष्टाजनकत्वात् तदकिञ्चित्करमित्यर्थः, विपूर्वात् भीपयतेर्धात्वर्थनिर्देशे ण्वुल् कात् पूर्वस्येकारः[3] । हि तथा हि,

1. 'भूतस्य' इति पाठान्तरम् । 2. अयं श्लोकः 'प्रकाश' कृता 'उभयी प्रकृति...(१७।६८)' तः प्राग्व्याख्यातः । 3. 'प्रत्ययस्थात्कात्पूर्वस्य' इत्यनेन सूत्रेणेति बोध्यम्।

राजिलः डुण्डुभाख्यः निर्विषः सर्पोऽपि । 'समौ राजिलडुण्डुभौ' इत्यमरः । स्वैः आत्मीयैः, स्वजात्यनुरूपैरित्यर्थः । सुखहेतुभिः जलविहारभेकभक्षणसजातीयरमणीसम्भोगादिभिः सुखसाधनैः, राजा इव नृपतिवत्, सुखी सुखवान्, सुखमनुभवतीत्यर्थः । तिरश्चामपि शरीरेन्द्रियाभिमानिनां सुखानुभूतिरस्ति। अतः तिर्यग्योनित्वे प्राप्तेऽपि तद्धेतोः पापात् न भेतव्यम् इति भावः ॥ ७१ ॥

इस ( परस्त्री-सम्भोग, ब्रह्महत्यादि ) पापसे तिर्यग् योनि होगी, इसमें कौन-सा भय है, क्योंकि ( स्वजातिवालोंमें हीनतम ) राजिल अर्थात् डोंड़ साँप भी अपने ( अनुकूल मण्डूकादि भक्षण एवं स्त्रीसम्भोग आदि ) सुखके कारणोंसे राजाके समान सुखी रहता है। [ अतः परस्त्री-गमन, ब्रह्महत्यादि पापसे तिर्यग् योनि प्राप्त करनेपर अपार दुःख भोगने पड़ते हैं, इत्यादि भय करना व्यर्थका श्रम है ] ॥ ७१ ॥

हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे ।
तत्रापि तेन युध्यन्तां हता अपि[1] तथैव ते ॥ ७२ ॥

अन्यच्च शास्त्रं विडम्बयति—हता इति । रणे युद्धे, हताः विनष्टाः, शूरा इति शेषः । दिवि स्वर्गे, दीव्यन्ति क्रीडन्ति, चेत् यदि, दिव्यदेहं प्राप्येति भावः । तर्हि दैत्यारिणा विष्णुना, हताः रणे विनष्टाः, दैत्याः असुराः, पापकारिण इति भावः । तत्रापि स्वर्गेऽपि, तेन विष्णुना सह, युध्यन्तां युध्येरन्, रणे हतत्वात् दिव्यदेहं प्राप्य इति भावः । यस्मात् हता रणे विनष्टा अपि, ते दैत्याः, तथैव सम्मुखरणहतत्वात् स्वर्गे जीवनविशिष्टा एव; मरणसमयेऽपि दैत्यारिणा सह शत्रुभावस्य हृदये वर्त्तमानतया स्वर्गगमनेऽपि असुरभावस्य वर्त्तमानत्वात्, तत्रापि तेन सह सङ्ग्रामयितव्यमेव, न चैतदस्ति, तस्मादपि शास्त्रं मृषा इति निष्कर्षः ॥ ७२ ॥

यदि युद्धमें मारे गये ( शूरवीर ) स्वर्गमें क्रीड़ा करते हैं तो ( विष्णुके द्वारा मारे गये भी हिरण्यकशिपु आदि ) दैत्य उस स्वर्गमें भी ( देवरूप देहान्तरको प्राप्ति होनेपर भी मरणकालमें भी आसुर भाव रहनेसे ) उस विष्णुके साथमें उसी प्रकार युद्ध करें। [ युद्धमें शरीर त्यागकर शूरवीर स्वर्गमें जाते हैं इस सिद्धान्तके अनुसार विष्णु भगवान्‌ने जिन हिरण्यकशिपु आदि दैत्योंको युद्धमें मारा है, वे भी स्वर्गमें जाकर देव हुए होंगे, किन्तु मरनेके समयमें आसुर भाव बने रहनेके कारण देवशरीर पा लेनेपर भी उस आसुर भावका त्याग[2] नहीं होनेसे वहां स्वर्गमें भी उन दैत्योंको देवों तथा विष्णु भगवान्‌के साथ युद्ध करना उचित था, किन्तु ऐसा होनेका प्रमाण किसी पुराणादिमें नहीं मिलनेसे ज्ञात होता है कि युद्धमें मरनेपर देव होकर स्वर्गमें क्रीड़ा करनेकी कल्पना केवल भ्रममात्र है ] ॥ ७२ ॥

स्वञ्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम् ।

---

१. 'हतावपि' इति पाठान्तरम् । २. यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्' इत्यादि भगवद्गीतोक्तेरिति बोध्यम् ।

इति स्वोच्छित्तिमुक्त्युक्ति-वैदग्धी वेदवादिनाम् ॥ ७३ ॥

अथ मायावादिवेदान्तसिद्धान्तविशेषं विडम्बयति स्वमित्यादि । संसारे संसारावस्थायां, स्वञ्च जीवात्मप्रपञ्चश्च, ब्रह्म च अनाद्यविद्याविलासवासनाविद्यमानभेदं ब्रह्म च इति द्वयमेव, तथा मुक्तौ मोक्षावस्थायान्तु, केवलं जीवात्मप्रपञ्चरहितम् एकं, ब्रह्म, उभयत्रापि वर्त्तते इति शेषः । यथा आकाशस्य घटाद्युपाधिनिवृत्तौ घटाकाशादिनिवृत्त्या आकाशमात्रेणावस्थानं तथा ब्रह्मात्मनः संसारोपाधिनिवृत्तौ जीवात्मनिवृत्त्या 'एकमेवाद्वितीयं ब्रह्म' इत्यादिना ब्रह्मात्मस्वरूपेणैव अवस्थानं भवतीत्यर्थः । इति वेदवादिनां वेदान्तशास्त्रिणां, स्वस्य जीवस्य, उच्छित्तिः विनाश एव, मुक्तिः मोक्षः, तस्याः उक्तौ प्रतिपादने, वैदग्धी वैदग्ध्यं, वाक्चातुर्यमित्यर्थः । 'गुणवचन—' इत्यादिना ष्यञ्, स्त्रीत्वविवक्षायां 'षिद्गौरादिभ्यश्च' इति ङीप् । दृश्यते इति शेषः । यस्य जीवात्मनः कृते सर्वमेव, तस्यैव उच्छेदः प्रतिपादित इत्यहो वाक्चातुर्यमित्युपहासः ॥

संसारदशामें जीवात्मस्वरूप प्रपञ्च तथा ब्रह्म—दोनों ही हैं मुक्ति होनेपर ( जीवात्मस्वरूपप्रपञ्चरहित ) केवल ब्रह्म ही है, यह वेदान्तियोंका स्व ( आत्मा=जीवात्मा ) का अभावरूप मुक्तिके कथनमें बड़ा भारी चातुर्य है। [ जिस प्रकार घटकाशकी घटोपाधिके निवृत्त हो जानेपर केवल आकाश ही रह जाता है, उसी प्रकार वेदान्तियोंके मतसे संसारोपाधिके निवृत्त हो जानेपर स्व=जीवात्माकी भी निवृत्त हो जानेके बाद केवल शुद्ध ब्रह्म ही रह जाता है यही 'एकमेवाद्वितीयं ब्रह्म' श्रुतिका अभिप्राय है। उसको खण्डन करता हुआ चार्वाक कलिके मुखसे कहलवाता है कि मुक्ति-दशामें स्व=जीवात्माका अर्थात् अपना ही उच्छेद कहलानेवाले वेदान्तियोंका मुक्तिकथनमें बड़ा चातुर्य है, अर्थात् जो अपना ही उच्छेद स्वयं स्वीकार करता है, वह चतुर नहीं, किन्तु महामूर्ख है, इस प्रकार वेदान्तियोंका यहाँ उपहास किया है, क्योंकि लोकमें भी जो कोई व्यक्ति अपना ही उच्छेद ( विनाश ) स्वीकारकर दूसरेकी स्थिति स्वीकार करता है उसे मूर्ख ही माना जाता है] ॥७३॥

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेतैव[1] यथा वित्थ तथैव सः ॥ ७४ ॥

न्याय-वैशेषिकसम्मतां मुक्तिं दूषयति—मुक्तये इति । यः शास्त्रकर्त्ता, सचेतसां प्राणिनां, शिलात्वाय सुखदुःखादिसंवेदनाभावात् पाषाणावस्थास्वरूपायै, मुक्तये मोक्षाय, शास्त्रं न्यायशास्त्रम्, ऊचे प्रणिनाय, तत्त्वज्ञानेन मिथ्याज्ञानदोषादीनां क्रमशो विनाशात् 'तदत्यन्तविमोक्षोऽपवर्गः' इति सूत्रेण आत्यन्तिकदुःखनिवृत्तिरूपा मुक्तिः गौतमेन व्यवस्थापिता, तेन च नवविधात्मविशेषगुणोच्छेदरूपा मुक्तिः प्रतिपाद्यते, इत्थञ्च मुक्तस्य पाषाणसदृशत्वमायातमिति भावः । तं तच्छास्त्रकर्त्तारं मुनिं, गोतममेव न केवलं नाम्नैव गोतमं किन्तु अर्थतोऽपि गोतममेव उत्कृष्टगावमेव इत्यर्थः ।

1. 'तमवेक्ष्यैव' इति पाठान्तरम् ।

अवेत जानीत। अवपूर्वादिणो मध्यमपुरुषबहुवचनम्। एवञ्च सति यथा वित्थ तं गोपशुश्रेष्ठत्वेन यथा जानीथ। वेत्तेः पूर्ववद्रूपम्। सः तथा एव मन्मतेऽपि स अर्थ-तोऽपि गोतमः गोपशुश्रेष्ठ एव, शिलावस्थास्वरूपमोक्षोपदेशाद् गोतमः पशुतमः, मूढतमः एवेत्यर्थः। यौगिकोऽयं शब्दो न तु योगरूढः, वैशेषिका अपि न्यायमतानु-सारितया तद्रूपा इति भावः ॥ ७४ ॥

जिस ( न्याय वैशेषिककार गोतम मुनि ) ने चेतनायुक्त प्राणियोंके ( सुख-दुःखादिका अनुभव नहीं होनेसे ) पाषाणस्वरूपा मुक्तिके लिए ( न्यायवैशेषिक ) ग्रन्थ बनाया, उसे गोतम ( 'गोतम' नामक मुनि, पक्षा०—विशिष्ट गौ पशु ) ही जाने और जैसा ( गोतम= उस नामवाले मुनि, पक्षा०—विशिष्ट गौ पशु ) जानते हो, वह वैसा ( महापशु ) ही है। [ न्यायवैशेषिककार गौतम मुनिका सिद्धान्त है कि 'मुक्ति होनेपर तत्त्वज्ञान हो जानेसे प्राणीको मिथ्या सुख-दुःखादिका अनुभव नहीं होता' यही 'तदत्यन्तविमोक्षोऽपवर्गः' वाक्यका आशय है, उसीका कलिके मुखसे उपहास करता हुआ चार्वाक कहता है कि प्राणीको यदि सुख-दुःखका अनुभव ही नहीं होता तो वह पाषाणतुल्य है और उसे ही मुक्ति मरनेवाला गोतम मुनि केवल नामसे ही 'गोतम' ( विशिष्ट गोरूप पशु ) नहीं है; किन्तु अर्थसे भी 'गोतम' ( विशिष्ट गोरूप पशु ) है ] ॥ ७४ ॥

दारा हरिहरादीनां तन्मग्नमनसो भृशम्।
किं न मुक्ताः ? पुनः सन्ति कारागारे मनोभुवः ॥ ७५ ॥

हरिहरहिरण्यगर्भोपासनया मुक्तिरिति मतं निरस्यति—दारा इति। हरिहरादीनां दाराः लक्ष्म्यादयः स्त्रियः, भृशम् अत्यर्थं, तेषु हरिहरादिषु एव, मग्नमनसः लग्नचित्ताः, तद्भावभाविताः सन्तः अपि इत्यर्थः। किं कथं, न मुक्ताः ? मोक्षं न प्राप्ताः ? प्रत्युत मुक्तिः दूरे आस्तां, मनोभुवः कामस्य, कारागारे बन्धनालये। 'कारा स्याद् बन्ध-नालये' इत्यमरः। पुनः सन्ति सदैव कामपरवशा वर्त्तन्ते, अतो हरिहराद्युपासनया मुक्तिप्रतिपादकं तत्तच्छास्त्रं मिथ्यैवेति भावः ॥ ७५ ॥

विष्णु तथा शिव आदिकी ( लक्ष्मी, गौरी आदि ) स्त्रियां उन ( विष्णु तथा शिव आदि ) में अत्यन्त संलग्नचित्ता हैं तो वे क्यों नहीं मुक्त हो गयीं ? ( प्रत्युत ) वे तो कामदेवके कारागार ( जेल=बन्धन ) में हैं अर्थात् कामके परवश हैं। [ विष्णु तथा शिव आदिके ध्यान-पूजन आदिसे ही मुक्ति होती तो उनमें सत संलग्नचित्तवाली उनकी स्त्री लक्ष्मी, गौरी आदिको भी मुक्त हो जाना चाहिये था, किन्तु देखा जाता है कि वे मुक्त नहीं, अपितु कामके पराधीन हैं, अत एव 'सकृदुच्चरितं येन 'शिव' इत्यक्षरद्वयम्' तथा 'मय्यर्पितमनोबुद्धिर्यः स मामेति पाण्डव' इत्यादि शिव तथा विष्णु आदिकी उपासनासे मुक्तिप्राप्ति बतलानेवाले शास्त्र भी मिथ्या ही हैं ] ॥ ७५ ॥

देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक्।
तत् किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः ? ॥ ७६ ॥

किञ्च, न्यायमतसिद्ध ईश्वरोऽपि नास्ति यत्प्रसादात् मुच्येमहीत्याह-देव इति । सर्वज्ञः भूतभविष्यद्वर्त्तमानयावद्वस्तुविषयकज्ञानवान्, करुणाभाक् कारुणिकः, वैषम्यनैर्घृण्यरहितबुद्धिः इत्यर्थः । अवन्ध्यवाक् अमोघवचनः, वेदरूपसत्यवचन इत्यर्थः । यथोक्तार्थसम्पादकवचन इत्यर्थो वा, देवः ईश्वरः, अस्ति विद्यते, चेत् यदि, तत् तर्हि, अर्थिनः मोक्षार्थिनः, नः अस्मान्, वागव्ययमात्राद् भवन्तो मुक्ता भवन्त्विति वाक्योच्चारणमात्रेण, किं कथं, न कृतार्थयति ? न मोचयतीत्यर्थः । स सर्वज्ञादिविशेषणत्रयविशिष्टोऽपि यदि न मोचयितुं समर्थो भवति, तदा स नास्त्येवेति भावः ॥ ७६ ॥

सर्वज्ञ ( भूत भविष्यत् वर्तमानके समस्त कार्योंको जाननेवाला), दयालु और (वेदरूप) सत्यवचनवाला ( अथवा—सदा-सर्वदा सफल वचनवाला ) देव ( ईश्वर ) है तो वह मुक्ति-मुक्तिके इच्छुक हम लोगोंको केवल वचनमात्रसे ('तुम लोग मुक्त हो गये' इतना कहनेमात्रसे ) क्यों नहीं कृतार्थ करता है ? [ यदि वह नैयायिक-सम्मत उक्त गुणोंवाला 'ईश्वर' होता तो केवल वचनमात्रसे हमलोगोंको मुक्त कर देता, किन्तु ऐसा नहीं करता इसलिए मानना पड़ता है कि 'ईश्वर' नामक कोई देव नहीं हैं ] ॥ ७६ ॥

भविनां भावयन् दुःखं स्वकर्मजमपीश्वरः ।
स्यादकारणवैरी[1] नः कारणादपरे परे ॥ ७७ ॥

कर्ममीमांसकमतं दूषयति—भविनामिति । भविनां संसारिणां, स्वकर्मजं निजकर्मजातम् अपि, दुःखं क्लेशं, भावयन् दुःखोत्पत्तौ औदासीन्यं विहाय निमित्तं भवन्, दुःखोत्पत्तौ प्रवर्त्तयन् वा, ईश्वरः न अस्माकम्, अकारणात् अहेतोः, वैरी शत्रुः, स्यात् भवेत्, अपरे अन्ये, कारणात् अन्योऽन्यापकारलक्षणात् निमित्तात्, परे वैरिणः, भवन्ति इति शेषः । अतः सोऽपि न विश्वसनीयः इति भावः ॥ ७७ ॥

संसारियोंके अपने कर्मजन्य दुःखोंको प्राप्त करता हुआ अर्थात् स्वकर्मानुसार दुःख भोगनेमें निमित्त होता हुआ ईश्वर हमलोगोंका अकारण शत्रु बनता है, दूसरे लोग तो (स्त्री-धनादिके अपहरण आदिरूप परस्पर अपकार करनेके) कारणसे वैरी होते हैं । [ संसारियोंको यदि अपने-अपने कर्मानुसार दुःखादि भोगना ही है तो ईश्वरका उस दुःखको संसारियोंके द्वारा भोगनेमें निमित्त होना केवल हम संसारियोंके साथमें अकारण द्वेष करना ही है, अतः दूसरे लोग तो परस्परमें अपकार करनेके कारण किसीका वैरी बनते हैं, किन्तु वह ईश्वर तो अकारण ही दुःख भोग करानेमें निमित्त होकर हम संसारियोंके साथ द्वेष करता है, अत एव 'वह ईश्वर कारुणिक आदि गुणोंसे युक्त है' यह कथन सर्वथा मिथ्या है, इस कारण दुःख भोग करनेमें कर्मकी प्रधानता होनेसे ईश्वर है ही नहीं ] ॥ ७७ ॥

---

१. 'कारणवैरी न' इति पाठे काक्वा व्याख्येयम्, इति सुखावबोधा इति म० म० शिवदत्तशर्माणः । तत्र तथा पाठाङ्गीकारे छन्दोभङ्गात् 'स्यान्न कारणवैरी नः' इति पाठः साधुः प्रतिभाति ।

तर्काप्रतिष्ठया साम्यादन्योऽन्यस्य व्यतिघ्नताम् ।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत् ? ॥ ७८ ॥

किञ्च, सर्वाण्यप्यास्तिकमतानि परस्परविरोधादप्रामाण्यान्येवेत्याह—तर्केति । तर्कस्य प्रामाण्योपपादकयुक्तेः, अप्रतिष्ठया अनन्ततया, एकत्र परिनिष्ठितत्वाभावेन कारणेन इत्यर्थः । यत् साम्यं तुल्यत्वं, व्याप्तिपक्षतादिरूपसमबलत्वमित्यर्थः । तस्मात् हेतोः, अन्योऽन्यस्य परस्परस्य, व्यतिघ्नतां दूषयतां, विरोधिप्रमाणसद्भावेन परस्परं फलनिश्चयं प्रतिरुन्धतामित्यर्थः । 'सर्वनाम्नो वृत्तिमात्रे द्वे भवतः' इति अन्य-शब्दस्य द्विरुक्तिः, पूर्वपदात् प्रथमैकवचनं, शेषे कर्मणि षष्ठी, कर्मव्यतीहारे द्योतनार्थोऽप्युपसर्गप्रयोगः, 'इतरेतरान्योऽन्योपपदाच्च' इति प्रतिषेधात् कर्मव्यतीहारेऽप्यात्मनेपदाभावः । केषां मतानां दर्शनानां, सत्प्रतिपक्षवत् सन् वर्त्तमानः, प्रतिपक्षः विरोधिसाध्यसाधको हेतुर्यस्य स सत्प्रतिपक्षस्तद्वत् मिथः प्रतिरुद्धसाध्यसाधकहेतूनाम् इव, अप्रामाण्यम् अनैकान्तिकत्वं न स्यात् ? अपि तु सर्वेषामेव तत् स्यादेव इत्यर्थः । तथा हि वैशेषिकादयो यथा कार्यत्वहेतुना घटादिदृष्टान्तेन शब्दस्यानित्यत्वं प्रमाणयन्ति, तथा मीमांसका अपि निरवयवत्वादिहेतुना आत्माकाशादिदृष्टान्तेन शब्दस्य नित्यत्वं व्यवस्थापयन्ति, इत्थञ्च तादृशमतद्वयस्य समबलतया एकत्र प्रामाण्यनिश्चयाभावेन च तदुत्तरं मध्यस्थस्य शब्दो नित्यो न वेति संशयोत्पादात् निश्चयरूपफलोत्पादविरहात् तादृशमतद्वये एव अप्रामाण्यज्ञानं जायते इति भावः ॥ ७८ ॥

तर्क ( प्रमाण्योपपादक युक्ति ) के अनन्त होनेसे समानताके कारण ( सुन्दोपसुन्द न्यायसे ) परस्परको दूषित करते ( विरोधी प्रमाण होनेसे परस्परमें फल-निश्चय नहीं करते ) हुए किन मतों ( सिद्धान्तों अर्थात् प्रमाणाभावसे समान अनुमानादिका, अथवा—सत्त्व-असत्व, एकात्म्य-नानात्म्य, ईश्वरत्व-अनीश्वरत्व आदि ) का सत्प्रतिपक्षके समान अप्रामाण्य ( प्रमाणाभावत्व ) नहीं होगा ? अर्थात् सबका अप्रामाण्य हो जायेगा । [ इसका आशय यह है कि—जिस प्रकार वैशेषिक घट आदिका दृष्टान्त देते हुए कार्य होनेसे शब्दको अनित्य मानते हैं और मीमांसक आत्मा आदिका दृष्टान्त देते हुए निरवयव होनेसे शब्दको नित्य मानते हैं, इस अवस्थामें पूर्वोक्त दोनों मतोंके समबल होनेसे किसी एकमें प्रामाण्यनिश्चय नहीं होनेके कारण तटस्थ ( वैशेषिक तथा मीमांसकसे भिन्न तृतीय ) व्यक्तिको 'शब्द नित्य है या अनित्य ?' ऐसा सन्देह होनेपर उक्त दोनों मतोंमें अप्रामाण्य बुद्धि हो जाती है; उसी प्रकार प्रामाण्यनिश्चायक तर्कोंकी अनेकता होनेसे और सबमें समानता होनेसे उन सभी मतोंका अप्रामाण्य हो जायेगा ] ॥ ७८ ॥

अक्रोधं शिक्षयन्त्यन्यान् क्रोधना ये तपोधनाः ।
निर्धनास्ते धनायेव धातुवादोपदेशिनः ॥ ७९ ॥

अक्रोधमिति । क्रोधनाः स्वयं कोपनशीलाः । 'क्रुधमण्डार्थेभ्यश्च' इति युच् । ये

**तपोधनाः दुर्वासःप्रभृतयः, अन्यान् इतरान्, अक्रोधं सर्वानर्थहेतुत्वात् क्रोधः परिहर्त्तव्य इत्यादिना क्रोधपरिहारं, शिक्षयन्ति उपदिशन्ति । 'शुविश ासि—' इति द्विकर्मकत्वम् । ते मुनयः, निर्धनाः स्वयं निःस्वाः जनाः, धनाय धनार्थं, धातुवादोपदेशिनः ईदृशप्रक्रियातो लोहः स्वर्णां भवेदित्यादिना परेषां धातुविद्योपदेष्टारः इव, उपहास्या भवन्ति इति शेषः । धातुविद्योपदेष्टुस्तादृशप्रक्रिया यदि फलवती स्यात् तदा स्वस्य कथं निर्धनत्वमिति स यथा उपहास्यः तद्वत् उपहास्याः स्युरिति भावः ॥७९॥**

सर्वदा क्रोध करनेवाले ( दुर्वासा आदि ) जो तपस्वी लोग दूसरोंको क्रोध नहीं करनेकी शिक्षा देते हैं ( पाठा०—दूसरोंसे क्रोध नहीं करनेकी शिक्षा दिलवाते हैं ), वे निर्धन तपस्वी धन ( पाने ) के लिए ही धातुवाद ( क्रिया-विशेषके द्वारा लोहे आदि हीनजातीय धातुको चाँदी-सोना आदि उत्तम जातीय धातु बना देने ) का उपदेश देते हैं। [ जिस प्रकार स्वयं निर्धन कोई व्यक्ति 'इस विधिसे लोहा-ताँबा आदि हीनधातु चाँदी-सोना आदि उत्तम धातु बन जाता है' ऐसा उपदेश किसीको देते हैं किन्तु स्वयं उस विधिद्वारा सोना बनाकर धनवान् नहीं हो जाते तो यही मानना पड़ेगा कि यह धन लेनेके लिए मुझे ठग रहा है, अन्यथा स्वयमेव सोना बनाकर धनी क्यों नहीं हो जाता ? उसी प्रकार दुर्वासा आदि मुनि जो सर्वदा क्रोध करते देखे गये हैं, वे जो दूसरोंको उपदेश देते हैं या दिखलाते हैं कि क्रोधका सर्वथा त्याग करना चाहिये, यह उनका उपदेश दूसरेको वञ्चित करना मात्र है वास्तविक नहीं, अतः उनका उपदेश भी मानने योग्य नहीं है ] ॥ ७९ ॥

किं वित्तं दत्त ? तुष्टेयमदातरि हरिप्रिया ।
दत्त्वा सर्वं धनं मुग्धो बन्धनं लब्धवान् बलिः ॥ ८० ॥

**किमिति । हे वदान्याः ! वित्तं धनं, किं किमर्थं, दत्त ? वितरत ? न दातव्यमित्यर्थः । सम्प्रश्ने लोट् । न च अदाने लक्ष्मीक्षोभ आशङ्कनीय इत्याह—यतः इयं वित्तरूपा, हरिप्रिया लक्ष्मीः, अदातरि कृपणे एव, तुष्टा प्रसन्ना, अदानेनैव तुष्यतीत्यर्थः । तथा हि, मुग्धः मूढः, दानव्यसनीति भावः । बलिः वैरोचनिः, सर्वं धनं सर्वस्वं, दत्त्वा प्रदाय, वामनरूपाय विष्णवे इति भावः । बन्धनं संयमनं, लब्धवान् प्राप्तवान्, त्रिविक्रमेण तेनैव बद्धः इत्यर्थः । दानविधायकं शास्त्रमपि तथा प्रमाणम्, एवञ्च कृपणे सम्यद्रूपायां लक्ष्म्या अवस्थानदर्शनाद् दानं न कर्त्तव्यमेवेति भावः ॥ ८० ॥**

( तुमलोग ) धनको क्यों देते ( यज्ञादिमें सत्पात्रोंके लिए दक्षिणादिरूपमें दान करते ) हो ? अर्थात् ऐसा मत करो, ( क्योंकि ) यह विष्णुप्रिया ( लक्ष्मी ) दान ( उपभोग आदि ) नहीं करनेवाले ( कृपण ) पर ही प्रसन्न रहती ( उसके पास सदा निवास करती ) है। दानव्यसनी अर्थात् महादानी (अथ च—दान महत्त्व प्रतिपादक स्मृति-पुराणादिमें श्रद्धालु) बलि सम्पूर्ण धन दान करके ( वामनके द्वारा ) बन्धनको प्राप्त हुआ । [ यह देखा गया है कि जो धनका दान तथा उपभोग नहीं करते, उन्हीं कृपणोंके यहां लक्ष्मी रहती हैं और

दान करनेवाले निर्धन होकर दुःखी रहते हैं, उदाहरणार्थ (पृथ्वीरूप) सम्पूर्ण धनको वामनके लिए दान करनेवाला मूर्ख वलि वाग्वद्ध हुआ (या वामनसे बांधा गया) और उसे पातालमें जाना पड़ा। इससे यह प्रमाणित होता है कि जिस स्मृतिपुराण शास्त्रमें दानकी श्रेष्ठता वतलायी गयी है, उसी स्मृति-पुराण शास्त्रमें दान करनेसे वलिके वांधे जाकर दुःख पानेके उदाहरण मिलते हैं, अत एव यज्ञादिमें दान करना निष्फल एवं दुःखमात्र फलदाता है। इस श्लोकमें लक्ष्मीके लिए 'हरिप्रिया' शब्दका प्रयोग होनेसे पतिके मांगनेपर धन देनेवाले वलिके ऊपर लक्ष्मीको प्रसन्न होकर सुख पहुंचना चाहिये था, किन्तु उलटे विष्णुकी प्रिया लक्ष्मीको वलिने उसे (लक्ष्मीको) उस (लक्ष्मी) के पति (वामनरूपी श्रीविष्णु) के पास पहुंचाकर भी वन्धन प्राप्त किया, अतः जो लक्ष्मीको किसीके लिए नहीं देता, उसीपर वह प्रसन्न रहती हैं यह सूचित होता है। अत एव दानादि करना व्यर्थ है]॥

पौराणिक कथा—दैत्यराज वलि यज्ञ कर रहा था, उसके प्रभावसे भयार्त इन्द्रकी प्रार्थना करनेपर विष्णु भगवान् वामनका रूप धारणकर उस वलिकी यज्ञशालामें गये और उससे साढ़े तीन पैर भूमिको दानमें मांगा। अपने कुलगुरु शुक्राचार्यके वारवार निषेध करनेपर भी यज्ञमें पधारे हुए याचक ब्राह्मणको निराश लौटाना अनुचित मानकर वलिने उतनी भूमि दानमें देदी तव वामनने विराट् रूप धारणकर तीन पैरसे तीनों लोकोंको माप लिया तथा शेष आधे पैरके स्थानमें वलिकी पीठ मापकर उन्हें पाताललोकमें भेज दिया।

**दोग्धा द्रोग्धा च सर्वोऽयं धनिनश्चेतसा जनः।**
**विसृज्य[1] लोभसङ्क्षोभमेकद्वा यद्युदासते ॥ ८१ ॥**

**दोग्धेति। अयं परिदृश्यमानः, सर्वः निखिलः, जनः, लोकः, धनिनः धनिकान्, दोग्धा दोहनशीलः, परोपकारस्य कर्त्तव्यताद्युपदेशादिना धनिभ्यो नित्यं धनसंग्रहं करोतीत्यर्थः, तथा चेतसा मनसा, द्रोग्धा च द्रोहकरणशीलश्च, अनिष्टचिन्तनपर इत्यर्थः। कथमेनं वञ्चयित्वा एतस्य धनादिकं संगृह्णीयामित्येवं मनसि तस्यानिष्टं चिन्तयतीति भावः। ताच्छील्ये तृन्, अत एव 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः। कदाचिदेतस्य व्यभिचारोऽपि दृश्यते इत्याह—लोभसङ्क्षोभं धनाभिलाषजन्यं मानसचाञ्चल्यं, विसृज्य विहाय, संयम्य इत्यर्थः। एको द्वौ वा येषां ते एकद्वाः, न तु तृतीयः इति भावः। 'सङ्ख्ययाव्यय–' इत्यादिना वहुव्रीहौ, 'वहुव्रीहौ सङ्ख्येये' इति डच्समासान्तः। यदि सम्भावनायाम्, उदासते निःस्पृहाः तिष्ठन्ति, तादृशलोभसङ्क्षोभरहितो जनः अत्यल्प एव इति सम्भावयामि इति भावः। तथा च प्रतारकाणामुदरपूरको दानधर्मः सत्पात्राभावात् त्याज्य एवेति निष्कर्षः ॥ ८१ ॥**

ये सभी लोग धनिकोंसे (धन-दानादिका उपदेश देकर धनको) दुहनेवाले (येन केनापि प्रकारेण धनको लेनेवाले) और मनसे द्रोह करनेवाले अर्थात् किस प्रकार इसका

---

१. 'विषज्य' इति पाठान्तरम्।

सम्पूर्ण धन मुझे प्राप्त हो जायेगा, यह इतना धनवान् होकर सुखी कैसे हो गया ?' इत्यादि सोचते हुए वैर करनेवाले हैं। लोभ ( धनिकोंसे येन केनापि प्रकारेण धन लेनेकी प्रवृत्ति, अथवा कृपणताके परवश होकर धनको सुरक्षित रखने ) के संक्षोभको छोड़कर ( पाठा०— बलात्कारसे रोककर ) धनिकोंसे धन लेनेमें यदि कोई उदासीन होते हैं तो वैसे केवल एक या दो ही हैं, अधिक नहीं [ अत एव दानादि करनेका उपदेश वञ्चना एवं अपनी उदर-पूर्तिका साधनमात्र है, परलोकमें सुखोत्पादक नहीं, इस कारण दान करना नहीं चाहिये ]॥

दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं कुक्षिवञ्चना ।
स्वाच्छन्द्यमृच्छतानन्द-कन्दलीकन्दमेककम् ॥ ८२ ॥

दैन्यस्येति। अस्तैन्यम् अस्तेयं, चौर्याभावः इत्यर्थः। क्वचित् प्रसज्य प्रतिषेधेऽपि नञ्समास इष्यते अहिंसेतिवत्। दैन्यस्य दारिद्र्यस्य, आयुषे हितम् आयुष्यं वृद्धिकारकमित्यर्थः। चौर्यं विना दैन्यं नापयातीति भावः। हितार्थे यत्-प्रत्ययः। अभक्ष्यं लशुनग्राम्यशूकरादिभोजनविरतिः, कुक्षेः जठरस्य, वञ्चना प्रतारणा एव, सुस्वादुवस्तुभोजनपरित्यागात् जठरमेव वञ्चितं भवति, न तु ततः कश्चित् धर्म इति भावः। अतः आनन्दकन्दलीकन्दम् आनन्दाङ्कुरमूलं सकलसुखबीजभूतमित्यर्थः, एककम् एकमात्रम्, असहाये कन्-प्रत्ययः। स्वाच्छन्द्यं स्वेच्छाचारित्वम्, ऋच्छत अवलम्बध्वम्, श्रुतिस्मृतिपुराणादिप्रतिपादितान् निषेधान् उल्लङ्घ्य सकलसुखनिदानं स्वेच्छाचारित्वमेव कुरुतेति भावः॥ ८२ ॥

अचौर्य ( चोरी नहीं करना ) दीनताकी आयुका हितकारी है ( चोरी नहीं करनेसे दीनता बहुत दिनोंतक बनी रहती है, अतः चोरी करके दीनता ( दरिद्रता ) को दूर करना चाहिये ), अभक्ष्य ( लशुन, प्याज, ग्राम्यसूकर आदि अभक्ष्य हैं यह कथन ) पेटको वञ्चित करना ( ठगना ) ही है ( सुस्वादु एवं पुष्टिकारक लहसुन, प्यास ग्राम्यसूकरका मांस आदि नहीं खाना पेटको ठगना है, अतः इनको अभक्ष्य बतलानेवाले धर्मशास्त्र वचनोंकी अव-हेलना करके इनका भक्षण करना चाहिये। अधिक क्या कहा जाय—) आनन्दकन्दका मूल स्वच्छन्दता ( श्रुति-स्मृति-पुराणोक्त धर्मका त्यागकर स्वेच्छाचरिता जो कुछ भी खाना, जिस किसीके साथ सम्भोग करना आदि ) का आश्रय करो॥ ८२ ॥

इत्थमाकर्ण्य दुर्वर्णान् शक्रः सक्रोधतां दधे ।
अवोचदुच्चैः कस्कोऽयं धर्ममर्माणि कृन्तति ? ॥ ८३ ॥

इत्थमिति। शक्रः इन्द्रः, इत्थम् एवंविधान्, दुर्वर्णान् वेदादिदूषकाणि चार्वाकदुर्वाक्यानि, आकर्ण्य श्रुत्वा, सक्रोधतां दधे चुक्रोध। कः ? अयं वेदादिदूषकः जनः, कः ? क इत्यस्य कोपे द्विरुक्तिः। 'कस्कादिषु च' इति सकारः। धर्ममर्माणि श्रुति-

१. '-न्द्यं विन्दता-' इति पाठान्तरम्।

सारभूतानि धर्मरहस्यानि, कृन्तति ? छिनत्ति ? इति उच्चैः तारम्, अवोचत् अकथयत्, शक्र इति शेषः ॥ ८३ ॥

इस प्रकार (१७।३६–८२, श्रुति–स्मृति–पुराण–प्रतिपादित धर्मकी निन्दा करनेवाले) दूषित अक्षरोंको सुनकर इन्द्र क्रुद्ध हो गये और 'धर्मकी जड़को यह कौन काट रहा है ?' ऐसा ऊँचे स्वरसे बोले ॥ ८३ ॥

लोकत्रयीं त्रयीनेत्रां वज्रवीर्य्यस्फुरत्करे ।
क इत्थं भाषते पाक-शासने मयि शासति ? ॥ ८४ ॥

लोकेति । त्रयीनेत्रां बाह्यप्रत्यक्षाविषयपदार्थज्ञापकवेदत्रयचक्षुषं, लोकत्रयीं त्रिलोकीं, वज्रवीर्येण कुलिशप्रभावेण, स्फुरत्करे दीप्यमानहस्ते, पाकशासने पाकासुरघातिनि, एतेन धर्मदूषकाणां हननसामर्थ्यं स्वस्य सूचितम् । मयि देवेन्द्रे, शासति दण्डयति, धर्मसंस्थापनपूर्वकं पालयति सतीत्यर्थः । क इत्थम् एवं, धर्मदूषणादिरूपमित्यर्थः । भाषते ? प्रलपति ? ॥ ८४ ॥

त्रयी (ऋक् यजुष् और सामवेद) हैं नेत्र जिसके ऐसे तीनों लोकोंका वज्रके बलसे स्फुरित होते हुए बाहुवाले मुझ इन्द्रके शासन करते रहनेपर कौन ऐसा (१७।३६–८२) कहता है ? [ त्रयीको लोकका नेत्र कहनेसे वेदकी लोकका सच्चा मार्ग–प्रदर्शक होना तथा वज्रके बलसे स्फुरित होते हुए बाहुवाला कहनेसे ऐसे धर्ममूलोच्छेदक वचन कहनेवालेका दण्डित करनेकी शक्ति होना एवं मुझको कहनेसे क्रोधपूर्वक वज्रका स्पर्शकर उक्त वाक्य कहना सूचित होता है ] ॥ ८४ ॥

वर्णासङ्कीर्णतायां वा जात्यलोपेऽन्यथाऽपि वा ।
ब्रह्महादेः परीक्षासु भङ्गमङ्ग ! प्रमाणय ॥ ८५ ॥

'शुद्धं वंशद्वयीशुद्धौ' इत्यादिश्लोकद्वयेन (१७।३९–४०) यत् सर्वस्यैव जातिदूषणमुक्तं तत् परिहरति—वर्णेत्यादि । वर्णानां ब्राह्मणादिवर्णानाम्, असङ्कीर्णतायाम् असाङ्कर्ये वा, योनिसाङ्कर्याभावे वा इत्यर्थः । अन्यथाऽपि प्रकारान्तरेणापि वा, वाणिज्यादिनिषिद्धवृत्त्यनाश्रयणेन इत्यर्थः, जात्यलोपे जातिभ्रंशाभावे, जातिशुद्धिविषये इत्यर्थः । ब्रह्महादेः ब्रह्महत्यादिकारिणः पापिनः, परीक्षासु तुलादिदिव्यबाधनेषु, भङ्गं पराजयम्, अङ्ग ! भोः !, प्रमाणय प्रमाणत्वेनावगच्छ इत्यर्थः । यदि ब्राह्मणत्वादिजातिशुद्धिर्न स्यात्, तदा नाहं ब्राह्मणहन्तेति दिव्यकारिणः ब्राह्मणादिहन्तुः शुद्धत्वादिज्ञापकेषु स्मृतिशास्त्राद्युक्तेषु जलानलतुलादिदिव्यशोधनेषु कथं पराजयः स्यात् ? अतस्तत्र पराजय एव जातिशुद्धौ प्रमाणमिति भावः ॥ ८५ ॥

(अब पूर्वोक्त (१७।३९–४०) पक्षोंका अग्रिम दो (१७।८५–८६) श्लोकोंसे खण्डन करते हैं—) हे अङ्ग ! वर्णोंका साङ्कर्य (धर्मसङ्कीर्णता) नहीं होनेपर अथवा प्रकारान्तरसे अर्थात् व्यापार आदि स्वजनित विरुद्ध निषिद्ध वृत्तिका आश्रय करनेसे जातिनाश नहीं

होनेपर ( अथवा—वर्णोंका साङ्कर्य नहीं होनेपर ) जातिनाश नहीं होनेपर या प्रकारान्तर ( वर्णोंका साङ्कर्य होने ) से जातिनाश होनेपर ब्रह्मघाती आदिकी परीक्षाओंमें पराजयको प्रमाण मानो। [ ब्रह्महत्या आदि पापोंके करनेपर अग्नि, जल आदि द्वारा परीक्षा की जाती है, उसे 'दिव्य'[1] कहा जाता है। उस 'दिव्य' परीक्षाके समय यदि ब्रह्मघातीका हाथ नहीं जलता या वह जलमें नहीं डूबता तो उसे ब्रह्मघाती नहीं माना जाता, इस कारण यदि वर्णसङ्करता होनेसे ब्राह्मणादिकी शुद्ध जातिका ही लोप हो जाय तो वह 'दिव्य' परीक्षा किस प्रकार होगी? अत एव उस वर्णसाङ्कार्यको रोककर जातिशुद्धि रखनी ही पड़ेगी, अथवा—उस दिव्य परीक्षाके समय ब्रह्मघातीका हाथ जल जाता है और जो ब्रह्मघाती नहीं होता उसका हाथ नहीं जलता है, इस कारण उसे ही जातिशुद्धिमें प्रमाण मानना चाहिये। 'अङ्ग' यह सम्बोधन वचन प्रतिकूलतासूचक है ] ॥ ८५ ॥

ब्राह्मण्यादिप्रसिद्धाया[2] गन्ता यन्नेक्षते[3] जयम् ।
तद्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८६ ॥

**ब्राह्मण्यादीति। किञ्च, ब्राह्मणी आदिः यस्याः सा ब्राह्मण्यादिः क्षत्रियादिस्त्री, सा चासौ प्रसिद्धा चेति तस्याः प्रख्यातब्राह्मण्यादिस्त्रियाः, गन्ता सम्भोक्ता, जन इति शेषः। जयं दिव्यपरीक्षणे जिनविजयं, न ईक्षते न पश्यति, ब्राह्मण्यादिगन्ता परीक्षासु कुत्रापि विजयं न लभते इत्यर्थः। इति यत्, तत् पराजयनम् एव जयादर्शनमेव वा, अशेषस्य सकलस्य, वर्णवंशस्य ब्राह्मणादिकुलस्य, विशुद्धिं मातापित्रादिपरम्परया निर्दोषत्वं, शंसति कथयति, अन्यथा कथं तद्गन्तुः पातकित्वशंसी पराजयः? इति भावः ॥ ८६ ॥**

ब्राह्मणी आदि ( अथवा—ब्राह्मणत्व आदि जाति ) से प्रसिद्ध स्त्रीका सम्भोग करनेवाला जो ( दिव्य शपथ लेते समय ) विजयी नहीं होता, वही ( उसका पराजय होना ही ) सम्पूर्ण वर्ण ( ब्रह्मणादि ) वंशकी विशुद्धिको कहता है। [ ब्राह्मणी आदिके साथ सम्भोग करनेवाला पुरुष जब दिव्य परीक्षा देने अर्थात् तप्तलौह हाथमें लेकर या जलमें डूबकी लगाकर शपथ करनेमें हार जाता है अर्थात् तप्तलौहसे जल जाता और पानीमें डूब जाता है ( और इसके विपरीत ब्राह्मणी आदिके साथ सम्भोग नहीं करनेवाला पुरुष उक्तदिव्य परीक्षामें विजयी हो जाता अर्थात् न तो तप्तलौहसे जलता या न पानीमें डूबता ही है ), यही ब्राह्मण आदि वर्णोंकी शुद्धि ( वर्णसङ्करताका अभाव ) होना बतला रहा है ] ॥ ८६ ॥

जलानलपरीक्षादौ संवादो वेदवेदिते ।
गलहस्तितनास्तिक्यां धिक् धियं कुरुते न ते ? ॥ ८७ ॥

---

**१. एतदर्थं मनुस्मृतिः ( ८।११४–११५ ), याज्ञवल्क्यस्मृतिः ( व्यवहाराध्याये ९५–११३ ) च द्रष्टव्ये। २. '–प्रसिद्धायां' इति पाठान्तरम्। ३. 'यन्नेक्षयते जयम्' इति पाठान्तरम्।**

जलेति । किञ्च, वेदवेदिते श्रुतिप्रतिपादिते, जलानलपरीक्षादौ जलाग्न्यादिदिव्यशोधनादौ, आदिशब्दात् प्रत्यक्षफलक-कारीर्यादिसंग्रहः । संवादः शुद्धाशुद्धवृष्ट्यादिदर्शनरूपः व्यापार इत्यर्थः । ते तव, धियं मतिं, गलहस्तेन तुल्यं गलहस्तितं गले हस्तं दत्त्वा बलाद्दूरीकृतम्, नास्तिक्यं परलोको नास्तीत्यादिप्रकारकं ज्ञानं यस्याः ताम् आस्तिक्यबुद्धिमित्यर्थः । न कुरुते ? धिक् अतो निन्दामीत्यर्थः । त्वामिति शेषः 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । वेदबोधितजलदिव्ये तु पापाभिशस्तः पुरुषः जले निमज्जता पुरुषान्तरेण आकर्णपूर्णधनुर्मुक्तशरप्रत्यानयनमपेक्षमाणः सन् यदि अप्रत्यानीतशरो जलादुन्मज्जति तदा स अशुद्धः, प्रत्यानीतशरो यदि उन्मज्जति तदा शुद्ध एव, इत्थमेव च तत्र प्रत्यक्षं दृश्यते इत्येव संवादः । अग्निदिव्येऽपि तप्तलोहादौ दाहादाहाभ्याम् अशुद्धिशुद्धी प्रत्यक्षदृश्ये । एवम् अनावृष्ट्यादौ कारीर्यादियागे कृते वृष्टिर्दृश्यते इत्यादिकप्रत्यक्षफलकवेदबोधितकार्यदर्शनात् तव नास्तिक्यबुद्धिर्नापयातीति धिक् इति भावः ॥ ८७ ॥

वेदप्रतिपादित जल तथा अग्निसे ( की गयी दिव्य ) परीक्षा आदि ('आदि' शब्दसे 'कारीर्यादि' यज्ञका संग्रह है ) में संवाद ( शुद्ध-अशुद्धकी निर्णयरूप सङ्गति ) तुम्हारी बुद्धिको अर्द्धचन्द्र ( गर्दनियां ) देकर निकाली गयी नास्तिकतावाली अर्थात् बलात्कारपूर्वक नास्तिकतासे शून्य नहीं करता है, ( अतएव ऐसा संवाद होनेपर भी महामूर्खता करनेवाले तुमको ) धिक्कार है । [ अथवा—तुम्हारी निन्दित बुद्धिको बलात्कारपूर्वक नास्तिकतासे शून्य नहीं करता ? अर्थात् करता ही है अथवा—हे कु-रुते ( कुत्सित शब्दवाले अर्थात् निन्दित वाक्य कहनेवाले ) । तथा हे अ-नते ( नम्रता-हीन ) ! वेदप्रतिपादित जल-अग्नि-परीक्षादिमें संवाद है, अत एव नास्तिकताको गलासे लिपटायी ( हठपूर्वक ग्रहणकी ) हुई ( नास्तिकतायुक्त ) बुद्धिको धिक्कार है ] ॥ ८७ ॥

सत्येव पतियोगादौ गर्भादेरध्रुवोदयात् ।
आक्षिप्तं नास्तिकाः ! कर्म न किं मर्म भिनत्ति वः ? ॥ ८८ ॥

सतीति । नास्तिकाः ! हे नास्तिपरलोकाः ! 'अस्ति नास्ति दिष्टं मतिः' इति ठक् । पतियोगादौ भर्तृसहवसादिकारणसाकल्ये, सति एव विद्यमानेऽपि, एवशब्दोऽत्र अप्यर्थे बोध्यः । आदिशब्दान्मेघोदयादिप्रत्यक्षीभूतकारणकलापे सत्यपि इति भावः । गर्भादेः अध्रुवोदयात् अनिश्चितोत्पत्तिकत्वात्, कदाचित्कोत्पन्नगर्भादिकार्यादित्यर्थः । आदिशब्दात् वृष्ट्यादिकार्यसंग्रहः । आक्षिप्तम् अर्थापत्तिसिद्धम्, अर्थापत्तिप्रमाणसिद्धं स्त्रीपुरुषसहवासादिरूपदृष्टकारणकलापसद्भावेऽपि गर्भोदयादिरूपकार्यस्य कादाचित्कत्वं धर्माधर्मरूपादृष्टकारणं विनाऽनुपपन्नम् इत्यनुपपत्तिज्ञानरूपादर्थापत्तिप्रमाणात् प्रमितमित्यर्थः । कर्म धर्माधर्मरूपजन्मान्तरीयादृष्टं, वः युष्माकं नास्तिकानां, मर्म हृदयं, हृद्गतसंशयमिति यावत् । न भिनत्ति किम् ? न छिनत्ति किम् ? एतेनैव अदृष्टमस्तीति बोद्धव्यम् इति भावः ॥ ८८ ॥

( अब 'मृते कर्मफलोर्मयः ( १७।५२ )' इत्यादि पक्षका खण्डन करते हैं-) हे नास्तिको! पति-सहवास आदिके होनेपर भी गर्भ आदिका धारण होना अनिश्चित होनेसे आक्षिप्त ( अर्थापत्तिका प्रमाणसे सिद्ध ) कर्म्म ( धर्माधर्मरूप जन्मान्तरीय अदृष्ट ) तुमलोगोंके मर्म ( हृदय ) को क्यों नहीं भेदन करता? ( अर्थात् ऐसे प्रमाणसे सचेतस पुरुषके हृदयका भेदन होना चाहिये ) पर तुमलोगोंके हृदयका भेदन नहीं होता, अत एव तुमलोग महामूर्ख या वज्रहृदय हो। अथवा—तुमलोगोंके हृदयका भेदन क्यों नहीं करता? अथवा—तुमलोगोंके मर्म ( नास्तिकवादात्मक दर्शनरहस्य ) अर्थात् सिद्धान्तका भेदन ( खण्डन ) नहीं करता? अर्थात् अवश्य ही करता है। [ ऋतुकालमें पतिपत्नीके सहवास होनेपर भी जन्मान्तरीय अदृष्टवश सन्तानप्राप्तिका योग नहीं रहनेपर यह गर्भाधान नहीं होता, अत एव मानना पड़ेगा कि जन्मान्तरीय अदृष्ट भी सन्तानोत्पत्ति आदिमें कारण है ] ॥ ८८ ॥

**याचतः स्वं गयाश्राद्धं भूतस्याविश्य कञ्चन ।**
**नानादेशजनोपज्ञाः प्रत्येषि न कथाः कथम् ? ॥ ८९ ॥**

यदुक्तम् 'अन्यभुक्तैर्मृते तृप्तिरित्यलं धूर्तवार्त्तया' ( १७।५२ ) इत्यादि, तत्रोत्तरमाह—याचत इति। कञ्चन कमपि जनम्, आविश्य अधिष्ठाय, स्वं स्वकीयं, गयाश्राद्धं गयातीर्थे पिण्डदानं, याचतः प्रार्थयमानस्य, अहं पापवशात् प्रेतयोनिं प्राप्तोऽस्मि, अतो मम सद्गत्यर्थं गयायां श्राद्धं त्वया कार्यमित्यादि प्रार्थयमानस्य इत्यर्थः। भूतस्य भूतयोनिं प्राप्तवतः प्रेतस्य सम्बन्धिनीः, नानादेशजनोपज्ञाः नानादेशजनाः विविधदेशवासिलोका एव, उपज्ञा आद्यं ज्ञानं, प्रमाणमिति यावत्। यासां तादृशीः, तत्प्रमाणकाः इत्यर्थः। 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः। कथाः उपाख्यानानि, गयाश्राद्धात् अमुकस्य मुक्तिरासीत् इत्येवंरूपान् आलापान् इत्यर्थः। कथं न प्रत्येषि? न विश्वसिषि? प्रत्येतव्य एवायमर्थः प्रामाणिकसंवादादिति निष्कर्षः॥

( अब 'मृतः स्मरति जन्मानि', 'अन्यभुक्तैर्मृते तृप्तिः ( १७।५२ )' 'सन्देहेऽप्यन्यदेहाप्तेः ( १७।४५ )' इत्यादिका खण्डन करते हैं—) किसी किसी ( स्वजन या तटस्थ तृतीय व्यक्ति ) में आविष्ट होकर ( सूक्ष्मरूप होनेसे उसके शरीरमें प्रवेशकर ) अपने गयाश्राद्धकी याचना करते हुए प्रेत ( पापवश प्रेतयोनिको प्राप्त जीव ) की अनेक देशके लोगोंको सुनी या जानी हुई कथाओं ( समाचारों, सम्वादों ) को तुमलोग क्यों नहीं विश्वास करते हो?। [ अनेक स्थानों एवं लोगोंमें यह देखा जाता है कि अपने पापकर्मके कारण सद्गतिको नहीं पानेसे प्रेत हुआ जीव किसी स्वजन आदिके शरीरपर अवशिष्ट होकर कहता है कि 'हमारा गयाश्राद्ध कर दो तो मेरी सद्गति हो जायेगी और मैं इसे छोड़ दूंगा, अथवा मैंने पहले जन्ममें अमुक स्थानपर इतना धन गाड़ रक्खा है इत्यादि' और उसके कथनकी सत्यता भी वैसा करनेपर हो जाती है। इससे सिद्ध होता है कि जीव मरणके बाद भी अपने पूर्व जन्मों या कर्मोंको स्मरण करता है, दूसरे ( ब्राह्मणादि जनों ) के भोजन करानेसे जीवकी तृप्ति होती है और मरनेके बाद जीवको दूसरा शरीर प्राप्त होता है ] ॥ ८९ ॥

नीतानां यमदूतेन नामभ्रान्तेरुपागतौ ।
श्रद्धत्से संवदन्तीं न परलोककथां कथम् ? ॥ ९० ॥

'को हि वेत्ताऽस्त्यमुष्मिन् (१७।६१) इत्यादेरुत्तरमाह—नीतानामिति । यमदूतेन यमकिङ्करेण, नाम्ना धर्मराजः यन्नामकपुरुषाणां, स्थूलशरीरात् लिङ्गशरीरमाकृष्टुं दूतं प्रेषयामास अन्येषामपि केषाञ्चित् तान्येव नामानि इति नामसाम्येन, भ्रान्तेः भ्रमात् हेतोः, नीतानां यमसन्निधिं प्रापितानाम्, आनेतव्यपुरुषेभ्यः अन्येषां जनानामिति भावः । उपागतौ पुनर्मर्त्यलोकप्रत्यागमनविषये, एतेषां नामसदृशान् यान् आनेतुं त्वं प्रेषितः एते ते न भवन्ति, अत एतान् मर्त्यलोकं नीत्वा स्व-स्व-स्थूलशरीरे प्रवेशयेति यमाज्ञया सद्यः एव पुनः स्वदेहसङ्क्रान्तिविषये इत्यर्थः । संवदन्तीं श्रुतिस्मृतिपुराणादिषु श्रुतस्वर्गनरकादिकथया सह समानार्थीभवन्ती, परलोककथां यमलोकात् प्रत्यावृत्तपुरुषोक्तां स्वर्गनरकादेरस्तित्ववार्त्तां, कथं न श्रद्धत्से ? न प्रत्येषि ? अतस्तादृशवाक्यस्य सत्यत्वादेव परलोकमस्त्येवेति भावः ॥

(अब 'को हि वेत्ताऽस्त्यमुष्मिन् (१७।६१)' इत्यादिका उत्तर देते हैं—) यमदूतके द्वारा नामके भ्रमसे यमके पास पहुंचाये गये लोगोंका (वेद-पुराणादि कथनके साथ) संवाद करती (मिलती-जुलती) हुई परलोककी कथा (चर्चा) का क्यों नहीं विश्वास करते हो ? [ कभी २ यह देखा जाता है कि कोई व्यक्ति मर जाता है नाड़ी आदिकी परीक्षा कुशलतम वैद्यों-डाक्टरों द्वारा करनेसे उसके मरनेका निश्चय किये जानेपर भी वह व्यक्ति कुछ समय बाद जीवित हो जाता है और पूछनेपर या स्वयं ही वह कहने लगता है कि मुझे यमदूत यमपुरीमें ले गये थे, किन्तु यमराजने कहा कि 'मैंने इस नामसे दूसरे व्यक्तिको लानेके लिए कहा था, इसे नहीं; अत एव इसको पुनः पूर्व शरीरमें प्रविष्ट कराकर उस दूसरे अभीष्ट व्यक्तिको लाओ'। साथ ही वह स्वर्ग-नरकका जैसा वर्णन शास्त्रोंमें मिलता है वैसा ही उसे बतलता है,[1] अत एव परलोकके होनेमें तुम लोगोंको विश्वास करना चाहिये ] ॥ ९० ॥

जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम् ।
किमात्थ रे ! किमात्थेदमस्मदग्रे निरर्गलम् ? ॥ ९१ ॥

जज्वालेति । अथ ज्वलनः अग्निः, क्रोधात् कोपात्, जज्वाल दिदीपे, तथा अमुं चार्वाकम्, आक्षिपन् परुषवाक्यैरधिक्षिपन्, आचख्यौ च जगाद च, रे इति तुच्छसम्बोधने; रे चार्वाक ! किमात्थ ? अस्मदग्रे मम पुरतः, निरर्गलम् अप्रतिबन्धम्, अबाधं यथा तथेत्यर्थः । इदम् उक्तरूपं वेदादिविरुद्धमित्यर्थः । किम् आत्थ ? किं प्रलपसि ? इत्यर्थः । कोपे द्विरुक्तिः ॥ ९१ ॥

---

१. एवंविधा घटना प्रायः पञ्चविंशतिवर्षेभ्यः पूर्वमस्मत्पितृव्यपत्न्या सह घटिताऽऽसीदिति से परलोकास्तित्वे नितरां प्रत्ययः । ( अनुवादकः )

( इस प्रकार ( १७।८३-९० ) इन्द्रके कहनेके बाद ) अग्निदेव क्रोधसे जलने लगे और इस ( चार्वाक ) का तिरस्कार करते हुए बोले—रे ! तूने मेरे सामने निरर्गल क्या कहा है? क्या कहा है ? । [ 'रे' सम्बोधनसे, तथा 'क्या कहा है ?' इस वचनके दो बार कहनेसे क्रोधकी अधिकता और उससे स्वतः ज्वलनशील अग्निका अधिक ज्वलित होना सिद्ध होता है ] ॥ ९१ ॥

महापराकिणः श्रौत-धर्मैकबलजीविनः ।

क्षणाभक्षणमूर्च्छाल ! स्मरन् विस्मयसेऽपि[1] न ? ॥ ९२ ॥

अथ यदन्यत् प्रलपितम् 'अग्निहोत्रं त्रयी' ( १७।३८ ) इत्यादि तत् निराचष्टे—महापराकिण इति । हे क्षणम् अत्यल्पसमयम्, अभक्षणे अभोजने, मूर्च्छाल ! मूर्च्छामापन्न ! म्रियमाण ! इत्यर्थः । 'सिध्मादिभ्यश्च' इति सूत्रस्य सिध्माद्यन्तर्गणे 'क्षुद्रजन्तूपतापाच्च'[2] इति पाठात् उपतापवाचकात् मूर्च्छाशब्दात् लच्प्रत्ययः । श्रौत श्रुतिचोदितः, धर्मः आचारः एव, अनुष्ठानमेवेत्यर्थः । 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इत्यमरः । एकं केवलं, बलं सामर्थ्यं, तेन जीवन्तीति तादृशान् श्रौतधर्मैकबलजीविनः वैदिकधर्मानुष्ठानमाहात्म्यादेवप्राणधारिणः, महान्तः महात्मान इत्यर्थः । ये पराकिणः मासोपवासनिष्पाद्यतदाख्यव्रतिनः तान्, स्मरन् चिन्तयन् अपि, न विस्मयसे ? न चित्रीयसे । धर्मोपजीविनो वैदिकाश्चिरम् अभोजिनोऽपि धर्मानुष्ठानजनितमनोबलादेव जीवन्ति अतो धर्मस्य अस्तित्वे न कोऽपि संशय इति भावः ॥ ९२ ॥

( अब 'अग्निहोत्रं त्रयी तन्त्रम् ( १७।३८ )', 'नाश्नाति स्नाति ( १७।४० )' इत्यादि आक्षेपोंका उत्तर देते हैं— ) हे क्षणभर भोजन नहीं करनेपर मूर्छित होनेवाले ( नास्तिक चार्वाक ) ! एकमात्र वेदप्रतिपादित धर्मके बलपर जीनेवाले महापराक व्रत करनेवालोंका स्मरणकर आश्चर्यित भी नहीं होते हो ? ( अथवा पाठा०—तुम क्यों नहीं आश्चर्यित होते हो ? ) अर्थात् उन महापराक व्रत करनेवालोंके स्मरणमात्रसे तुम्हें आश्चर्यित होना चाहिये, ( पर तुम आश्चर्यित नहीं होते, अत एव मूर्ख हो ) । [ जो तुम क्षणमात्र भी भोजन नहीं करनेपर भूखसे मूर्छित हो जाते हो, ऐसे तुमको वेदोक्त धर्मके बलपर बारह दिन तक उपवास[2] करनेसे साध्य महापराक आदि व्रत करनेवालोंको देखकर आश्चर्यित होना तथा वेदोक्त धर्मपर विश्वास भी करना चाहिये ] ॥ ९२ ॥

पुत्रेष्टिश्येनकारीरी-मुखा दृष्टफला मखाः ।

न वः किं धर्मसन्देह-मन्देहजयभानवः ? ॥ ९३ ॥

पुत्रेष्टीति । हे नास्तिकाः ! पुत्रेष्टिः पुत्रकामयागः, श्येनः शत्रुमारणार्थं तदाख्य-

---

१. 'न किम् ?' इति पाठान्तरम् ।

२. 'पयोश्च' इति पाठः साधीयान्, तथैव गणपाठ उपलब्धेः ।

क्रतुविशेषः, कारीरी वृष्टिकामेष्टिः, ता मुखम् आदिः येषां ते पुत्रेष्टिश्येनकारीरीमुखाः पुत्रेष्टिश्येनकारीरीप्रभृतयः, दृष्टफलाः दृष्टं प्रत्यक्षीभूतं, फलं सुतोत्पत्तिशत्रुमारणवृष्टिरूपं फलं येषां तादृशाः, मखाः क्रतवः, वः युष्माकं नास्तिकानां, धर्मस्य सदनुष्ठानजनितफलदातुरित्यर्थः । सदनुष्ठानजनितसुफलस्येत्यर्थो वा, यः सन्देहः धर्मोऽस्ति न वेति संशयः, स एव सन्देहाः सन्ध्याद्वये सूर्यग्रासार्थमुत्पद्यमानाः तेन सह युध्यमानाश्च राक्षसविशेषाः, तेषां जये निरासे, विनाशसम्पादने इत्यर्थः । भानवः सूर्याः, सूर्यवत् विनाशकाः इत्यर्थः । न किम् ? भवन्तीति शेषः । 'तिस्रः कोट्योऽर्द्धकोटी च मन्देहा नाम राक्षसाः । उदयन्तं सहस्रांशुमभियुध्यन्ति ते सदा ॥ गायत्र्या चाभिमन्त्र्योऽर्घं जलं त्रिः सन्ध्ययोः क्षिपेत् । तेन शाम्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥' इत्यादिशास्त्रात् गायत्र्यभिमन्त्रितजलप्रक्षेपात् तेषां नाशः, तदुत्तरमेव सूर्योदयेन सूर्य एव तान् नाशयतीत्युच्यते, एवञ्च सूर्यो यथा तन्नाशकः तद्वत् यागोऽपि भवदीयधर्मसन्देहनाशको भवतु इत्यर्थः । दृष्टफलयागानां फलनिश्चयदर्शनात् अदृष्टफलयागादौ तज्जन्यादृष्टेऽपि वा सन्देहो न कर्त्तव्य इति भावः ॥ ९३ ॥

पुत्रेष्टि, श्येन, कारीरी आदि प्रत्यक्ष देखे गये फलवाले यज्ञ तुम लोगोंके धर्मविषयक सन्देहरूपी मन्देह नामक राक्षसोंके जीतनेमें सूर्यरूप नहीं होते हैं क्या ? । [ इसका आशय यह है कि—पुत्रेष्टि यज्ञसे पुत्रप्राप्ति, श्येनयज्ञसे शत्रुनाश और कारीरी यज्ञसे वृष्टिरूपी फल प्रत्यक्षमें देखा गया है, अत एव इन यज्ञोंके प्रत्यक्ष फलोंको देखकर भी तुमलोगोंका धर्म (श्रुति-स्मृति प्रतिपादित यज्ञादिका अनुष्ठानरूप आचार ) के सन्देह उस प्रकार नष्ट नहीं हो जाते, जिस प्रकार उदय होनेसे पूर्व सूर्य ( की किरणें ) सामने लड़ते हुए 'मन्देह' नामक साढ़े तीन करोड़ राक्षसोंको नष्ट करते हैं । उन यज्ञोंके फलोंको देखकर तुम लोगोंका धर्मविषयक सन्देह दूर हो जाना चाहिये ] ॥ ९३ ॥

दण्डताण्डवनैः कुर्वन् स्फुलिङ्गालिङ्गितं नभः ।
निर्ममेऽथ गिरामूर्मीभिन्नमर्मेव धर्मराट् ॥ ९४ ॥

दण्डेति । अथ अग्निवाक्यानन्तरं, धर्मराट् यमः, भिन्नमर्मा चार्वाकप्रलापैः विदीर्णजीवस्थान इव सन्, दण्डस्य स्वकीयास्त्रस्य, ताण्डवनैः भ्रामणैः, नभः आकाशप्रदेशं, स्फुलिङ्गालिङ्गितम् अग्निकणाकीर्णं, कुर्वत् सम्पादयन्, गिराम् ऊर्मीः वाक्परम्पराः, निर्ममे रचयामास, उवाच इत्यर्थः ॥ ९४ ॥

इस ( प्रकार ( १७।९२-९३ ) अग्निके कहने ) के बाद दण्ड ( अपने अस्त्र-विशेष ) को घुमानेसे आकाशको चिनगारियोंसे व्याप्त करते हुए (तथा चार्वाकके वेदविरुद्ध वचनोंसे) भिन्न मर्मसे होते हुए धर्मराज वचन-समूहको बोले ॥ ९४ ॥

तिष्ठ भोस्तिष्ठ कण्ठोष्ठं कुण्ठयामि हठादहम् ।

---

१. 'दयम्' इति पाठान्तरम् ।

अपष्ठु पठतः पाठ्यमधिगोष्ठि शठस्य ते ॥ ९५ ॥

तिष्ठेति । भोः पातकापसद ! तिष्ठ तिष्ठ अपेक्षस्व अपेक्षस्व । कोपे द्विरुक्तिः । 'अधिगोष्ठि सभायाम्, इन्द्रादिदेवसमाजे इत्यर्थः । विभक्त्यर्थे अव्ययीभावः । अप्रतिष्ठतीति अपष्ठुः प्रतिकूलं, विरुद्धार्थकमिति यावत् । 'अपदुःसुषु स्थः' इति तिष्ठतेः औणादिक उप्रत्यये 'आतो लोपः इटि च' इत्याकारलोपः, 'उपसर्गात् सुनोति—' इत्यादिना षत्वम् । 'प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च' इत्यमरः । पाठ्यं पठनीयप्रबन्धं, पठतः वाचयतः, शठस्य धूर्त्तस्य, ते तव, कण्ठश्च ओष्ठौ च कण्ठोष्ठम् । प्राण्यङ्गत्वात् एकवद्भावः । अहं हठात् प्रसभं, बलादित्यर्थः । 'पार्ष्णिकप्रसभौ हठौ' इति वैजयन्ती । कुण्ठयामि स्तम्भयामि । वर्त्तमानसामीप्ये भविष्यति लट् ॥ ९५ ॥

हे ( नास्तिक चार्वाक ) ! ठहरो, ठहरो, ( इन्द्रादि देवोंकी ) सभामें प्रतिकूल ( वेदादिविरुद्ध ) पठनीय विषयको बोलते हुए शठ ( केवल वाक्छलसे अन्यथा अर्थ बतलानेवाले ) तुम्हारे कण्ठ और ओष्ठोंको मैं ( पाठा०—यह = मैं ) बलात्कारसे कुण्ठित करता हूं अर्थात् दण्डास्त्रद्वारा चूर्णित ( अथवा—शास्त्रयुक्तिके द्वारा वैसा कहनेमें असमर्थ ) करता हूं ॥ ९५ ॥

वेदैस्तद्वेषिभिस्तद्वत् स्थिरं मतशतैः कृतम् ।
परं कस्ते परं वाचा लोकं लोकायत ! त्यजेत् ? ॥ ९६ ॥

वेदैरिति । लोकायत ! लोकेषु भुवनेषु, आयतं विस्तृतम्, अनायाससाध्यत्वादिति भावः । मतं यस्य स तत्सम्बुद्धौ । लोकेषु अयत ! असंयत ! स्वेच्छाचारिन् ! इत्यर्थो वा । हे चार्वाक ! इत्यर्थः । वेदैः श्रुतिभिः, वेदोक्तैरित्यर्थः । तद्वेषिभिः वेदविरोधिभिः, बौद्धादिदर्शनोक्तैरित्यर्थः । तथा तद्वत् वेदतुल्यैरन्यैश्चेत्यर्थः । मतशतैः विविधमतैः, स्थिरं कृतं व्यवस्थापितं, परं लोकं स्वर्गादिस्वरूपमित्यर्थः । परं केवलं, ते तव, वाचा प्रलापवाक्येन, कः त्यजेत् ? कः जह्यात् ? न कोऽपीत्यर्थः । बहुजनसमादृतमतस्यैव प्रामाणिकत्वादिति भावः ॥ ९६ ॥

( अब अग्रिम तीन ( १७।९६-९८ ) श्लोकोंसे 'को हि वेत्ताऽस्त्यमुष्मिन् ( १७।६१ ) तथा 'तर्काप्रतिष्ठया ( १७।७८ ) इत्यादि वचनोंका उत्तर देते हैं—) हे लोकायत ( सीधा होनेसे संसारमें फैले हुए मतवाले, अथवा—संसारमें अयत = संयमहीन चार्वाक ) ! वेदों तथा उसीप्रकार उन ( वेदों ) के वेष ( वेदानुकूल ) स्मृति पुराणादि सैकड़ों मतोंसे स्थिर किये गये श्रेष्ठ परलोकको केवल तुम्हारे कहनेमात्रसे कौन छोड़ेगा ? [ जिसे वेदों तथा तदनुगामी स्मृति-पुराणादि शास्त्रोंने निश्चित कर दिया है, उस श्रेष्ठ परलोकको कोई विद्वान् नहीं छोड़ सकता, हां तुम्हारे-जैसा मूर्ख ही छोड़ सकता है ] ॥ ९६ ॥

अस[1]ज्ज्ञानाल्प ! भूयिष्ठपान्थवैमत्यमेत्य यम् ।
लोके प्रयासि पन्थानं परलोके न तं कुतः ? ॥ ९७ ॥

---

१. 'समज्ञानाल्पभूयिष्ठ—' इति पाठान्तरम् ।

असदिति। असज्ज्ञानेन मन्दबुद्ध्या, अल्पः क्षुद्रः, नीच इत्यर्थः, तत्सम्बुद्धौ असज्ज्ञानाल्प ! रे नीचप्रकृतिनास्तिक ! लोके इहलोके, भूयिष्ठाः बहवः, अधिकसङ्ख्यकाः एव जना इत्यर्थः। पान्थाः परलोकपथिकाः, आस्तिकाः इत्यर्थः। तेषां वैमत्यं मार्गभेदविषयकमतविरोधम्, एत्य प्राप्य, सर्वसम्मतं मार्गम् उत्सृज्य इत्यर्थः। यं पन्थानं दुर्मार्गं, प्रयासि अनुयासि, परलोके अमुत्रापि, तं पन्थानं, कुतः कस्मात्, न प्रयासि ? इति पूर्वक्रियया अन्वयः, प्रयास्यन्नेव तत्फलमनुभविष्यसीत्यर्थः। 'इह प्रच्छन्नपापानां शास्ता वैवस्वतो मतः' इति शास्त्रात् अहमेव नियन्ता इति भावः॥

हे असत् ज्ञानसे नीच ( मन्द बुद्धिसे क्षुद्र चार्वाक )! इस लोकमें बहुत पथिकों ( आस्तिक लोगों ) के विरुद्ध बहुतसे आस्तिकोंसे सम्मत सिद्धान्तके प्रतिकूल मतको ग्रहणकर जिस मार्ग ( कुमार्ग ) पर चल रहे हो, परलोकमें भी उसी मार्गसे क्यों नहीं चलते ? [ यदि परलोकके विषयमें भी उसी सर्वास्तिक प्रतिकूलमार्गका आश्रयकर चलोगे तत्काल उसका फल भोगोगे, क्योंकि मैं गुप्त पाप करनेवालोंका भी शासक हूं। अथवा पाठा०—एक मार्गके विषयमें समान ज्ञानवाले थोड़ेसे तथा बहुतसे पथिकोंके विरोधको प्राप्तकर अर्थात् जानकर इस लोकमें जिस मार्गपर चलते हो, उसी मार्ग पर परलोकके विषयमें भी क्यों नहीं चलते ? जिस प्रकार 'अमुक स्थानको कौन मार्ग जायेगा ?' ऐसा किसी मार्ग नहीं जाननेवालेके पूछनेपर थोड़े-से लोगोंके एक मार्ग तथा बहुतसे लोगोंके दूसरा मार्ग बतलाने पर वह गन्तव्य स्थानके मार्गको नहीं जाननेवाला पथिक बहुतसे लोगोंके बतलाये हुए दूसरे मार्गपर ही गमन करता है थोड़े-से लोगोंके बतलाये मार्गसे गमन नहीं करता; उसी तरह हे नास्तिक चार्वाक ! तुम परलोकके विषयमें भी थोड़े-से लोगोंके बतलाये हुए मार्गको छोड़कर बहुत-से लोगोंके बतलाये हुए ( वेद-स्मृति-पुराण-प्रतिपादित ) मार्गसे ही क्यों नहीं चलते ?, अर्थात् बहुसम्मत परलोकको तुम्हें स्वीकार करना चाहिये ] ॥ ९७ ॥

स्वकन्यामन्यसात्कर्तुं विश्वानुमतिदृश्वनः।
लोके परत्र लोकस्य कस्य न स्याद्दृढं मनः ? ॥ ९८ ॥

स्वेति। स्वकन्यां निजदुहितरम्, अन्यसात्कर्तुम् अन्यस्मै दातुम् इत्यर्थः। 'देये त्रा च' इति साति-प्रत्ययः। विश्वानुमतिं सर्वलोकसम्मतिं दृष्टवानिति विश्वानुमतिदृश्वा तस्य विश्वानुमतिदृश्वनः, 'ब्राह्मे विवाहे आहूय दीयते शक्त्यलङ्कृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्॥ त्रीण्याहुरतिदानानि कन्या पृथ्वी सरस्वती' इत्यादि सर्वशास्त्रसम्मतिद्रष्टुः इत्यर्थः। दृशेः कनिप्। कस्य लोकस्य जनस्य, मनः चित्तं, परत्र लोके परलोके, दृढं स्थिरं, स्थिरविश्वासीत्यर्थः। न स्यात् ? न भवेत् ? अपि तु सर्वेषामेव स्यादेव, परलोकभयेनैव सर्वो जनः स्वदुहितरमन्यस्मै ददाति यदि परलोको नाभविष्यत् तदा स्वदुहितरमन्यस्मै कथमदास्यत् ? स्वेनैव

स्वदुहितुः पाणिग्रहणमापद्येत, अतः सर्वसम्मतिदर्शनात् परलोकोऽङ्गीकर्त्तव्य एव भवतेति भावः ॥ ९८ ॥

( उक्त बहुसम्मतिको ही प्रदर्शित करते हैं—) अपनी कन्याको दूसरे अर्थात् वरको देनेके लिए सर्वो ( वेद-स्मृति-पुराणों तथा लोगों ) के सम्मतिको देखे ( तथा वैसा ही करते ) हुए किस व्यक्तिका मन परलोकके विषयमें निश्चल नहीं होता है ? अर्थात् सभीका—तुम्हारा भी—होता है। [ यदि कन्याको वरके लिए देनेका सर्वसम्मत विधान अभीष्ट नहीं होता तो संसारमें कोई भी व्यक्ति उसे दूसरेके लिए न देकर उसके साथ स्वयं विवाहकर लेता, परन्तु ऐसा कोई एक भी—यहां तक कि परलोक को नहीं माननेवाले तुम (नास्तिक) भी-नहीं करते हो, अत एव मानना पड़ता है कि सर्वसम्मत परलोक है, इस कारण तुम्हें दुराग्रह छोड़कर उस परलोकको स्वीकार करना ही चाहिये ] ॥ ९८ ॥

कस्मिन्नपि मते सत्ये हताः सर्वमतत्यजः ।
तद्दृष्ट्या व्यर्थतामात्रमनर्थस्तु न धर्मजः ॥ ९९ ॥

ननु नास्तिकानामिह तावत् सुखं सिद्धम्, आस्तिकानान्तु तन्नास्ति, आमुष्मिकन्तु सन्दिग्धं तथा च वृथाऽनुष्ठानक्लेश इति कुतो दार्ढ्यमित्यत्राह—कस्मिन्नपीति। कस्मिन्नपि आस्तिकमतमध्ये कस्मिंश्चिदपि, मते कन्यादानविधिमातृगमननिषेधादिरूपे परलोकसाधकमते, सत्ये प्रमाणत्वेनाङ्गीकृते सति, सर्वमतत्यजः, परस्परविरोधात् सर्वमप्रमाणमित्यादिरीत्या सर्वास्तिकमतत्याजिनः, नास्तिका इति शेषः। हताः विनष्टाः, परलोकभ्रष्टा इति यावत्। स्युः भवेयुः। यदि परलोकः स्यात् तदा सर्वास्तिकमतत्यागेन यूयं पारलौकिकसुखास्वादादिभ्यो वञ्चिता भवेतेति भावः। तद्दृष्ट्या सर्वास्तिकमताप्रामाण्यदर्शनेन तु, व्यर्थतामात्रम् अनुष्ठानवैयर्थ्यमेव, यदि परलोकसाधकं सर्वास्तिकमतमप्रमाणं स्यात् तदाऽस्माकं यागाद्यनुष्ठानस्य निष्फलत्वमात्रं न तु ततः किञ्चिदनिष्टं भवेदिति भावः। कुतो नानिष्टमित्यत आह—अनर्थ इति। धर्मजः धर्मोपचारजन्यः, धर्मानुष्ठानजन्य इति यावत्। अनर्थः विपत्तिस्तु, परलोकभ्रंशरूपः अनिष्टव्यापारस्तु इत्यर्थः। न नास्त्येव, परलोकासत्त्वपक्षेऽस्माकं धर्मानुष्ठानजन्यः न कश्चिदनर्थः, परलोकसत्त्वपक्षे तु युष्माकं धर्माननुष्ठानेन परलोकभ्रंशरूपः अनर्थ इत्यपि बोद्धव्यम्; एतच्च पाक्षिकत्वमभ्युपेत्योक्तम्, परमार्थतस्तु आस्तिकमतमेव ग्राह्यम् इति भावः ॥ ९९ ॥

( अब दो ( १७।९९-१०० ) श्लोकोंसे 'श्रुतिस्मृत्यर्थ—( १७।५० )' तथा 'तर्काप्रतिष्ठया ( १७।७८ )' इत्यादि आक्षेपोंका उत्तर देते हैं आस्तिक मतोंमें-से ) किसी भी मत ( 'कन्याको दूसरेके लिए दान देना चाहिये' इस विधिपरक तथा 'माताके साथ सम्भोग नहीं करना चाहिये' इस निषेधपरक वेदाद्युक्त परलोकसाधक आस्तिक-सिद्धान्त ) को सत्य मान लेनेपर परस्पर विरुद्ध होनेसे सब मतका त्याग करनेवाले नास्तिक लोग मारे गये अर्थात् परलोकसे भ्रष्ट हो गये। उस दृष्टिसे अर्थात् सब आस्तिक मतोंको प्रमाण नहीं

माननेसे ( यज्ञादिके अनुष्ठान करनेकी ही ) व्यर्थता होगी अर्थात् यदि परलोक वास्तविकमें नहीं होगा तो आस्तिकोंका यज्ञादिका केवल अनुष्ठान करना ही व्यर्थ होगा ( इस वैयर्थ्यके अतिरिक्त आस्तिकोंको अन्य कोई हानि नहीं होगी ) और धर्मानुष्ठानसे उत्पन्न अनर्थ (परलोकनाशरूप अनिष्ट व्यापार ) तो नहीं होगा। [ परस्पर विरोध होनेके कारण नास्तिक सब आस्तिक मतोंको अप्रमाण मानते हैं, किन्तु 'कन्यादान करना, तथा माताके साथ सम्भोग नहीं करना' इस आस्तिकके विधि-निषेधपरक मतोंको वे नास्तिक भी स्वीकार करते हैं। इस कारण उक्त 'कन्यादान तथा मातृसंभोगनिषेधको सत्य अर्थात् परलोक-साधक माननेवाले नास्तिक यदि परस्पर विरोध होनेसे अन्य आस्तिकसिद्धान्तोंका त्याग करते हैं तो वे परलोकभ्रष्ट होनेसे नष्ट हो गये। और यदि नास्तिकोंके मतके अनुसार वास्तविकमें परलोक नहीं है, तथापि आस्तिकोंके द्वारा किये गये यज्ञका अनुष्ठान ही व्यर्थ होगा, इसके अतिरिक्त दूसरी कोई हानि नहीं होगी, धर्मजन्य अनर्थ तो होगा ही नहीं। इसके विपरीत यदि सर्वास्तिकसम्मत परलोक है तो यज्ञानुष्ठानसे आस्तिकोंको स्वर्ग-सुख-प्राप्ति अवश्य होगी, तथा नास्तिक को उस परलोकमें विश्वास नहीं होनेसे यज्ञानुष्ठान करते ही नहीं, अतः वे परलोकके सुखसे अवश्यमेव वञ्चित होंगे। इस कारण यज्ञानुष्ठान करना ही चाहिये। यह कथन भी 'तुष्यतुदुर्जन' न्यायसे ही है, वास्तविकमें तो परलोकके अस्तित्वमें आस्तिकोंको लेशमात्र भी सन्देह नहीं है ] ॥ ९९ ॥

**क्वापि सर्वैरवैमत्यात् पातित्यादन्यथा क्वचित् ।**
**स्थातव्यं श्रौत एव स्याद्धर्मे शेषेऽपि तत्कृते ॥ १०० ॥**

**उपसंहरति—क्वापीति। क्वापि कुत्रापि, अहिंसाकन्यादानादिरूपे वैदिकानुष्ठान-विषये इति यावत्। अवैमत्यात् सर्वेषामेकमत्यात्, तथा क्वचित् कुत्रापि विषये, अन्यथा वैमत्येऽपि, पातित्यात् वर्णाश्रमाधिकारे विहिताकरणनिषिद्धाचरणजन्य-प्रत्यवायभयात्, तथा शेषेऽपि नित्यनैमित्तिकातिरिक्ते ज्योतिष्टोमादावपि, अथवा शेषे वेदविहितातिरक्ते स्मार्त्तेऽपि धर्मे, तत्कृते वेदकृते, वेदविहितत्वाविशेषे इति यावत्। हेतुगर्भविशेषणमेतत्। श्रौते एव धर्मे वैदिकमते, सर्वैः नास्तिकैरपि, स्थातव्यं वर्त्तितव्यं, स्यात् भवेत्, स एव ग्राह्यः इत्यर्थः। 'तयोरेव कृत्यक्तखलार्थाः' इति भावे कृत्यस्तव्यप्रत्ययः। विहितानामहिंसादीनां केषाञ्चित् श्रौतस्मार्त्तधर्माणां भवद्भिरपि अनुष्ठानात् निषिद्धानां मातृगमनादीनां केषाञ्चिदपि श्रौतस्मार्त्तधर्माणां भवद्भिरपि वर्जनात् तद्दृष्टान्तेन श्रुतिस्मृतिविहितेषु अन्येषु विधिनिषेधांशेष्वपि श्रौतस्मार्त्ताविशेषादेव स्थातव्यं स्यात्, तत्कृताः शेषा धर्मा अपि अवश्यमङ्गीकार्या इति भावः ॥ १०० ॥**

किसी ( अहिंसा, कन्यादान आदि ) धर्मके विषयमें सबका एकमत होनेसे तथा किसी

१. 'तत्कृतेः' इति पाठान्तरम् ।

धर्मके विषयमें ( विहितका त्याग तथा निषिद्धका आचरण करनेसे पाप होनेके भयसे बाकी ( नित्य-नैमित्तिकभिन्न ज्योतिष्टोम आदि, अथवा—वेद-विहितसे भिन्न स्मृति-पुराण-प्रतिपादित ) वैदिक धर्ममें ही स्थिर रहना ( उसका आचरण करना ) चाहिये । [ श्रुति-स्मृति-प्रतिपादित कन्यादान अहिंसा आदि धर्मका पालन तथा मातृगमन आदि धर्मका त्याग आपलोग भी करते ही हैं, अतः शेष ज्योतिष्टोमादिका भी आचरण श्रुति-स्मृति-प्रतिपादित होनेके कारण करना ही चाहिये । अथवा पाठा०—एकमत होनेके कारण सब ( नास्तिकों ) को भी किसी ( अहिंसा, कन्यादान आदि ) वेदप्रतिपादित अधर्ममें ही स्थिर रहना चाहिये, तथा विहित धर्मके त्याग और निषिद्ध धर्मका आचरण करनेपर पाप लगनेके भयसे परस्पर-विरुद्ध मत होनेपर भी वेदप्रतिपादित धर्ममें ही स्थिर रहना चाहिये और वेद-प्रतिपादित होनेके कारण शेष काम्यधर्म ( ज्योतिष्टोमादि यज्ञ ) में ही स्थिर रहना चाहिये । इस प्रकार इस श्लोकसे 'जनेन जानताऽस्मीति' 'एकस्य विश्वपापेन' (१७।५४-५५)' तथा 'स्वञ्च ब्रह्म च ( १७।७३ )' इत्यादि आक्षेपोंका उत्तर दे दिया गया है ] ॥ १०० ॥

**बभाण वरुणः क्रोधादरुणः करुणोज्झितम् ।**
**किं न प्रचण्डात् पाषण्ड-पाश[1] ! पाशाद् बिभेषि नः ? ॥१०१॥**

बभाणेति । अथ वरुणः जलेशः, क्रोधात् रोषात्, अरुणः रक्ताङ्गः सन्, करुणोज्झितम् उज्झितकरुणं, निष्कृपं यथा तथा इत्यर्थः । बभाण उवाच । तदेवाह—याप्यः कुत्सितः, पाषण्डः वेदबाह्यापसदः, पाषण्डपाशः । 'याप्ये पाशप्' तत्सम्बुद्धौ पाषण्डपाश ! रे नास्तिकाधम ! प्रचण्डात् भयङ्करात्, नः अस्माकं, पाशात् पाशायुधात्, न बिभेषि किम् ? न त्रस्यसि किम् ? 'निजपाशेन बध्नाति वरुणः पापकारिणः' इति किं न श्रुतम् ? इति भावः ॥ १०१ ॥

इस ( यमके इस प्रकार ( १७।९५-१०० ) कहने ) के बाद क्रोधसे लाल होकर वरुणने निर्दयतापूर्वक कहा—हे निन्दित पाषण्डवाले ( नास्तिकाधम चार्वाक )! मेरे भयङ्कर पाश ( शस्त्रविशेष ) से नहीं डरते हो क्या ? ॥ १०१ ॥

**मानवाशक्यनिर्माणा कूर्माद्यङ्कबिला शिला ।**
**न श्रद्धापयते मुग्धास्तिर्थिकाध्वनि वः कथम् ? ॥ १०२ ॥**

मानवेति । मुग्धाः ! रे मूढाः !, मानवानां नराणाम्, अशक्यनिर्माणा निर्मातुम् अशक्या, कूर्मादि कच्छपवराहादि, अङ्कं चिह्नं यस्य तादृशं, बिलं विवरं, चक्रमिति यावत् । यस्याः तादृशी, शिला पाषाणखण्डः, गण्डकाख्यनदीविशेषसम्भूता शालग्रामशिला इत्यर्थः । वः युष्मान्, तिर्थिकाध्वनि श्रोत्रियमार्गे, कथम्, न श्रद्धापयते ? न विश्वासयति ? शास्त्रोक्तलक्षणसंवादित्वादिति भावः ॥ १०२ ॥

( अब 'देवश्चेदस्ति सर्वज्ञः ( १७।७८ ) का उत्तर देते हैं—) अरे मूर्खो ! मनुष्योंसे नहीं

---

१. 'पाखण्डपाश' इति कवर्गमध्यः 'प्रकाश' सम्मतः पाठः ।

बनायी जा सकनेवाली कच्छप आदि ( वाराह, नरसिंह आदि ) के चिह्नयुक्त बिलोंवाली ( गण्डकी नदीसे निकलनेवाली ) शिला ( शालग्रामकी मूर्ति ) तुम लोगोंको ईश्वरमार्गमें ( अथवा—वैदिकमार्गमें ) क्यों नहीं विश्वास कराती है। [ गण्डकी नदीमें मिलनेवाली मनुष्योंसे नहीं बनाये जा सकनेवाले कच्छप, वराह, नरसिंह आदि चिह्नोंसे युक्त बिलोंवाली शालग्रामकी मूर्तिको देखकर भी तुम लोगोंको ईश्वर ( या—वैदिकधर्म ) में विश्वास नहीं होता, अत एव तुम लोग महामूर्ख मालूम पड़ते हो ] ॥ १०२ ॥

शतक्रतूरुजाद्याख्या-विख्यातिर्नास्तिकाः ? कथम्।
श्रुतिवृत्तान्तसंवादैर्न वश्चमदचीकरत् ? ॥ १०३ ॥

शतेति। नास्तिकाः ! रे नास्तिपरलोकाः ! शतक्रतुः शताश्वमेधयज्ञकारी इन्द्रः, ऊरुजः विष्णोरूरुदेशसम्भूतः वैश्यः, स आदिर्येषां ते ब्राह्मणक्षत्रियादयः तेषामाख्याः शतक्रतुः ऊरुजः बाहुजः मुखजः पादज इत्यादीनि नामानि, तासां विख्यातिः प्रसिद्धिः, श्रुतिवृत्तान्तसंवादैः श्रुतिषु वेदेषु, यादृशा वृत्तान्ताः 'शताश्वमेधक्रतुकारी इन्द्रो भवति' इतीन्द्रस्यैव शतक्रतुत्वं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिना ब्राह्मणस्यैव मुखजत्वं वैश्यस्यैवोरुजत्वम् इत्यादयो वेदोक्ता इतिहासाः, तेषां संवादैः श्रुत्युक्तवृत्तान्तेन सह लोकव्यवहारस्य मेलनदर्शनैरित्यर्थः। लोकेन इन्द्रस्यैव शतक्रतुनाम व्यवह्रियते न तु अन्यदेवानां, ब्राह्मणस्यैव मुखजत्वं व्यवह्रियते न त्वन्यवर्णानाम् इत्यादिव्यवहारैः करणैरिति यावत्। व युष्मान्, कथं न चमदचीकरत् ? न व्यसिस्मयत् ? श्रुतिवृत्तान्तस्य लोकव्यवहारेण ऐक्यदर्शनात् कथं श्रुतिः प्रमाणत्वेन युष्माभिः न स्वीक्रियते ? इति भावः ॥ १०३ ॥

हे नास्तिको ! शतक्रतु ( सौ अश्वमेध यज्ञ करनेवाला = इन्द्र ) तथा ऊरुज ( विष्णुके ऊरुसे. उत्पन्न = वैश्य ) आदि ( मुखज = ब्राह्मण, बाहुज = क्षत्रिय और पज्ज = शूद्र ) नामकी प्रसिद्ध वैदिक वचनसे सङ्गत होनेके कारण तुम लोगों को क्यों नहीं आश्चर्यित ( होनेसे वेदमें विश्वास युक्त ) करती है । ( अथवा—शतक्रतु अर्थात् इन्द्र आदि ( अग्नि, धर्मराज, मैं = वरुण आदि देव ) तथा ऊरुजा अर्थात् उर्वशी आदि ( मेनका, तिलोत्तमा, रम्भा आदि अप्सराएँ ) नामों की प्रसिद्धि··········) । [ 'शताश्वमेधकारीन्द्रो भवति' ( सौ अश्वमेध यज्ञ करनेवाला इन्द्र होता है ) ऐसे वैदिक वचनके अनुसार लोकमें भी 'शतक्रतु' शब्द 'इन्द्र' के लिए ही प्रसिद्ध है तथा 'ब्राह्मणोऽस्य मुखमासीत्·······' ( विष्णुके मुखसे ब्राह्मण, बाहुसे क्षत्रिय, ऊरुसे वैश्य और चरणसे शूद्र उत्पन्न हुए ) इस वैदिक वचनके अनुसार लोकमें भी 'ऊरुज' शब्द 'वैश्य' के लिए ( इसी प्रकार 'मुखज' शब्द ब्राह्मणके लिए, 'बाहुज' शब्द क्षत्रियके लिए और 'पज्ज' शब्द शूद्रके लिए ) ही प्रसिद्ध है इन प्रसिद्धियों को देखकर भी तुम नास्तिक लोगों को अपने मतको त्यागनेके लिए आश्चर्यित होकर और वैदिक मतपर विश्वास करना चाहिये । द्वितीय अर्थमें—वेदोंमें

इन्द्रादि देव तथा उर्वशी आदि अप्सराओंको स्वर्गमें रहनेका वर्णन मिलता है, उन इन्द्र, अग्नि, धर्मराज आदि देवों तथा उर्वशी, रम्भा आदि अप्सराओं को यहां प्रत्यक्षमें देखकर भी तुम लोगोंको आश्चर्य तथा वैदिक वचनों पर विश्वास होना चाहिये, वह नहीं होता, अतः तुम लोग जडतम हो ] ॥ १०३ ॥

तत्तज्जनकृतावेशान् गयाश्राद्धादियाचिनः ।
भूताननुभवन्तोऽपि कथं श्रद्धत्थ न श्रुतीः ? ॥ १०४ ॥

श्रुतेः प्रामाण्यमेव कुतः ? इत्याशङ्क्य तदेव द्वाभ्यामुपपादयति—तदित्यादि। तेषु तेषु जनेषु लोकेषु, कृतावेशान् तन्मुखेन यत्किञ्चित् याचितुं कृताधिष्ठानान्, गयाश्राद्धादियाचिनः प्रेतत्वादिविमोचककर्मयाचकान्, भूतान् प्रेतयोनिभेदान्, अनुभवन्तः प्रत्यक्षेण पश्यन्तः अपि, श्रुतीः तद्विधायकवेदान्, कथं न श्रद्धत्थ ? न विश्वसिथ ? ॥ १०४ ॥

उन-उन ( स्वजनों या तटस्थ तृतीय लोगों ) में आविष्ट तथा ( अपनी सद्गति होनेके लिए ) गया श्राद्धादि की याचना करते हुए ( प्रेतादि योनियों को प्राप्त ) जीवोंको देखते हुए भी तुम लोग वेदों पर क्यों नहीं श्रद्धा (विश्वास) करते हो ? [ इस वचनको वरुणोक्त होनेसे 'याचतः एवं गयाश्राद्धं' ( १७।८९ ) इस इन्द्रोक्त वचनके साथ पुनरुक्ति नहीं समझनी चाहिये । इसी प्रकार अग्रिम वचनके विषयमें भी जानना चाहिये ] ॥ १०४ ॥

नामभ्रमाद् यमं नीतानथ स्वतनुमागतान् ।
संवादवादिनो जीवान् वीक्ष्य मा त्यजत श्रुतीः ॥ १०५ ॥

नामेति । किञ्च, नामभ्रमात् नामसाम्यकृतभ्रान्तेः, यमं परेतराजम्[1], नीतान् यमदूतैःप्रापितान्, अथ अनन्तरम्, भ्रान्तिशोधनार्थं यमेन पुनः मर्त्यलोकप्रेरणानन्तरमित्यर्थः। स्वतनुम् आगतान् अप्राप्तकालत्वात् पुनर्यमाज्ञया स्वशरीरं प्रविष्टान्, संवादवादिनः वेदोक्त्या सह ऐक्यवादियमलोकवृत्तान्तकथकान्, जीवान् मर्त्यान्, वीक्ष्य अवलोक्य, श्रुतीः वेदान्, मा त्यजत न जहीत, एकत्र प्रामाण्यदर्शनादन्यत्राप्यश्रद्धा न कार्या इति भावः ॥ १०५ ॥

नामके भ्रम ( सादृश्य ) होनेसे यमराजके पास पहुंचाये गये इसके बाद ( असमयमें मृत्यु होनेसे ) पुनः अपने पूर्व शरीरमें लौटे हुए ( वेद-स्मृति-पुराणादि शास्त्रोंमें प्रतिपादित स्वर्ग-नरकादिके समान ही ) सङ्गत कहते ( स्वर्गादि-वर्णन करते ) हुए जीवों को देखकर वेदों ( तथा तन्मूलक स्मृति आदि शास्त्रों ) का त्याग मत करो ( उन्हें अप्रामाणिक मत कहो, किन्तु उन पर विश्वास करो ) ॥ १०५ ॥

संरम्भैर्जम्भजैत्रादेः स्तभ्यमानाद् बलाद् बलन् ।

---

१. 'राजाहःसखिभ्यष्टच्' इति टचि 'परेतराजम्' इत्यस्यैवौचित्यान्मया प्राक्तनः 'परेतराजानम्' इति पाठस्त्यक्तः ।

मूर्द्ध्नि बद्धाञ्जलिर्देवानथैवं कश्चिदूचिवान् ॥ १०६ ॥

संरम्भैरिति । अथ वरुणवाक्यानन्तरम्, जन्मजैत्रादेः जम्भासुरविजयीन्द्रादिदेववर्गस्य, संरम्भैः कोपैः 'संरम्भः सम्भ्रमे कोपे' इति विश्वः । स्तभ्यमानात्, पुरश्चलितुं प्रतिबध्यमानात्, बलात् कलिसैन्यात्, बलन् निर्गच्छन्, कश्चित् धूर्त्तः वन्दी, मूर्द्ध्नि शिरसि, बद्धाञ्जलिः कृताञ्जलिः सन्, नमस्कृत्य इत्यर्थः । देवान् इन्द्रादीन्, एवं वक्ष्यमाणम्, ऊचिवान् उक्तवान् । ब्रुवः क्वसुः ॥ १०६ ॥

इस ( इन्द्रादि देवोंके इस प्रकार ( १७।८४—१०५ ) कहने ) के वाद आगे वढ़नेसे रोकी गयी सेनासे पृथक् होकर ( कुछ आगे वढ़कर ) कोई ( पापरूप होनेसे अज्ञात नामा वन्दी या—चार्वाक ) सिरपर हाथ जोड़कर अर्थात् नमस्कार कर देवोंसे इस प्रकार ( १७।१०७ ) वोला ॥ १०६ ॥

नापराधी पराधीनो जनोऽयं नाकनायकाः ! ।
कालस्याहं कलेर्वन्दी तच्चाटुचटुलाननः ॥ १०७ ॥

यदूचिवान् तदाह—नेति । नाकनायकाः ! हे देवाः !' अयं जनः अहमित्यर्थः । पराधीनः परवशः, अतो न अपराधी न दोषी, अहम् अयं जनः, कलेः कालस्य कलियुगाधिदेवस्य, तच्चाटुभिः तस्य कलेः, चाटुभिः प्रियवादैः, चटुलाननः चपलमुखः, स्वामिचित्तानुकूलवादीत्यर्थः । वन्दी स्तुतिपाठकः, अतोऽहं क्षन्तव्य इति भावः । स्वामिचित्तानुरञ्जनार्थं वेदादिदूषणं कृतं न तु स्वतः, अतो नाहं भवद्भिर्दण्डनीय इति निष्कर्षः ॥ १०७ ॥

'हे स्वर्गाधीश देवो ! कालिकाल ( कलियुग ) का वन्दी ( स्तुतिपाठक, अतएव ) उसके प्रियभाषण ( चापलूसी ) में चञ्चल मुखवाला अर्थात् कलिकी वढ़-वढ़कर चापलूसी करनेवाला पराधीन यह मनुष्य ( मैं ) अपराधी नहीं है ।' [ उस वन्दीने इन्द्रादिको नमस्कार कर कहा कि—मैं तो कलियुगका वन्दी होनेके कारण पराधीन हूं, और उसी को सदा चापलूसी किया करता हूं, इसी कारण मैंने वेदादि की निन्दा की है, अतएव मेरी पराधीनताको जानकर आप लोग मुझे दण्डित न करें ] ॥ १०७ ॥

इति तस्मिन् वदत्येव देवाः स्यन्दनमन्दिरम् ।
कलिमाकलयाञ्चक्रुर्द्वापरञ्चापरं पुरः ॥ १०८ ॥

इतीति । तस्मिन् वन्दिनि, इति इत्थं, वदति जल्पति एव सति, देवाः इन्द्रादयः, स्यन्दनमन्दिरं रथमध्यस्थं, कलिं कलियुगाधिष्ठातारं, तथा अपरं ततः अन्यं, द्वापरं द्वापरयुगाधिदेवञ्च, पुरः अग्रे, आकलयाञ्चक्रुः ददृशुः ॥ १०८ ॥

उस ( वन्दी ) के इस प्रकार ( १७।१०७ ) कहते रहनेपर ही अर्थात् कहनेके वाद

१. 'मूर्द्धबद्धा—' इति पाठान्तरम् ।

तत्काल ही देवोंने रथमें बैठे हुए कलि तथा दूसरे द्वापर ( कलियुगाधिष्ठातृ देव तथा दूसरे द्वापरके अधिष्ठातृ देव ) को देखा ॥ १०८ ॥

सन्ददर्शोन्नमद्ग्रीवः श्रीबहुत्वकृताद्भुतान् ।
तत्तत्पापपरीतस्तान् नाकीयान् नारकीव सः ॥ १०९ ॥

सन्ददर्शेति । नरकः अस्य अस्तीति नारकी नरकस्थः जन इव, तैः तैः पापैः ब्रह्महत्यादिभिः पातकैः, परीतः परिवेष्टितः, सः कलिः, श्रीबहुत्वेन सौन्दर्यबाहुल्येन, कृताद्भुतान् जनितविस्मयान्, रूपातिशयेन दर्शकानां विस्मयोत्पादकानित्यर्थः । नाकीयान् स्वर्गस्थान्, तान् इन्द्रादीन्, उन्नमद्ग्रीवः उत्कन्धरः सन्, सन्ददर्श अवलोकयामास ॥ १०९ ॥

नरकस्थ प्राणीके समान उन-उन ( ब्रह्महत्यादि ) पापोंसे व्याप्त उस कलिने अत्यधिक शरीर सौन्दर्य ( या-सम्पत्ति-बाहुल्य ) से विस्मित करनेवाले ( इन्द्रादि ) देवोंको ऊपर शिर उठाकर देखा । [ ब्रह्महत्यादि पापोंसे कण्ठपर्यन्त नरकमें डूबा हुआ प्राणी जिस प्रकार ऊपरकी ओर गर्दन उठाकर शरीर-सौन्दर्यसे विस्मित करनेवाले पुण्यात्माओंको देखता तथा अनुताप करते हुए सोचता है कि पुण्यके कारण इनका शरीर सौन्दर्य ऐसा उत्तम है और पापके कारण हमारा ऐसा हीन है, उसी प्रकार कलिने भी देवोंको देखा तथा मनमें सोचा ] ॥ १०९ ॥

गुरुव्रीडावलीढः प्रागभून्नमितमस्तकः ।
स त्रिशङ्कुरिवाक्रान्तस्तेजसैव विडौजसः ॥ ११० ॥

गुर्विति । सः कलिः, प्राक् प्रथमं, दर्शनमात्रमेवेत्यर्थः । गुर्व्या प्रबलया, व्रीडया लज्जया, देवानां वैमुख्यजनितया इति भावः । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः । अवलीढः ग्रस्तः, पश्चात् विडौजसः इन्द्रस्य, तेजसा एव प्रभावेणैव, आक्रान्तः अभिभूतः सन्, त्रिशङ्कुः इन्द्रतेजसा स्वर्गात् भ्रंशितः नमितमस्तकः सूर्यवंशीयो राजविशेष इव, नमितमस्तकः अवनतशिराः, अभूत् अजायत ॥ ११० ॥

वह ( कलि ) पहले ( इन्द्रादिको देखते ही ) अधिक लज्जित हुआ तथा ( बादमें ) इन्द्रके तेजसे ही आक्रान्त होकर त्रिशङ्कुके समान नतमस्तक हो गया। ( पाठा०— इन्द्रादि तुच्छ देवता मेरे सामने क्या हैं ? इस भावनासे ) पहले ( इन्द्रादिके विषयमें पक्षा०—गुरु=वसिष्ठ मुनिके विषयमें ) अधिक अवज्ञायुक्त ( किन्तु उनको देखते ही ) इन्द्रके तेजसे आक्रान्त त्रिशङ्कुके समान नतमस्तक हो गया ।। [ जिस प्रकार विश्वामित्रको ऋत्विक् बनाकर ईक्ष्वाकुवंशीय राजा त्रिशङ्कु सशरीर स्वर्गमें जाता हुआ इन्द्रके तेजसे ध्वस्त होकर नतमस्तक हो गया ( नीचे मस्तक करके गिरने लगा ), उसी प्रकार कलि भी इन्द्रके तेजसे ही इच्छा नहीं रहते हुए भी लज्जित हो इन्द्र तेजसे ध्वस्त होकर नतमस्तक

१. '—न्नतग्रीवः' इति पाठान्तरम् । २. 'गुरुरीढा—' इति पाठान्तरम् ।

हो गया ( इन्द्रको नमस्कार किया ) । अर्थान्तरमें—जिस प्रकार गुरु वसिष्ठ मुनिके शापसे चण्डाल बना हुआ राजा त्रिशङ्कु उनके विषयमें अवज्ञा युक्त हो विश्वामित्रसे यज्ञ कराकर सशरीर स्वर्गको जाता हुआ इन्द्रके तेजसे ध्वस्त होकर नतमस्तक हो गया ( नीचेकी ओर मस्तककर स्वर्गसे पृथ्वीमें गिरने लगा ) उसी प्रकार कलि भी इन्द्रके विषयमें पहले अधिक अवज्ञा युक्त होकर भी वादमें इन्द्रके तेजसे आक्रान्त हुएके समान नतमस्तक हो गया अर्थात् इन्द्रको मस्तक झुकाकर प्रणाम किया ] ॥ ११० ॥

पौराणिक कथा—पहले इक्ष्वाकुवंशीय राजा त्रिशङ्कु पर क्रुद्ध उसके गुरु वसिष्ठ मुनिने शाप देकर उसे चण्डाल बना दिया, तदनन्तर सशरीर स्वर्ग जानेका इच्छुक उसने विश्वामित्रको यज्ञमें आचार्य बनाकर यज्ञ किया और विश्वामित्रके मन्त्र बलसे सशरीर स्वर्ग जाने लगा तो इन्द्रने स्वर्गमें रहनेका अधिकारी नहीं होनेके कारण उसे भूमिपर गिरनेका आदेश दिया और वह उलटा मुखकर ( नतमस्तक होकर ) भूमिपर गिरने लगा……। यह कथा महाभारतमें आयी है ।

**विमुखान् द्रष्टुमप्येनं जनङ्गमसिव द्विजान् ।**
**एष मत्तः सहेल तानुपेत्य समभाषत ॥ १११ ॥**

**विमुखानिति । जनात् गच्छति इति जनङ्गमः चण्डालः तम् । 'गमश्च' इति संज्ञायां खच्प्रत्यय इति क्षीरस्वामी । 'चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः' इत्यमरः । द्रष्टुम् ईक्षितुम् अपि, विमुखान् परावर्त्तिताननान्, द्विजान् विप्रादीन् इव, एनं कलिं, द्रष्टुमपि किमुत सम्भाषितुं स्प्रष्टुं वेति भावः । विमुखान् तान् इन्द्रादीन्, मत्तः मदान्धः, एषः कालः, सहेलं सावज्ञम् । 'हेलाऽवज्ञाविलासयोः' इति विश्वः । उपेत्य समागत्य, समभाषत सम्भाषितवान् ॥ १११ ॥**

चण्डालको देखनेके लिए भी ( सम्भाषण तथा स्पर्श करनेकी बात तो बड़ी दूर है ) विमुख द्विजोंके समान इस ( कलि ) को देखनेके लिए भी विमुख उन ( इन्द्रादि देवों ) के पास जाकर मतवाला वह कलि अवज्ञापूर्वक बोलने लगा । ( अथवा पाठा०—देखनेके लिए भी विमुख द्विजोंके पास ( मदपानसे ) मतवाले चण्डालके समान देखनेके लिए भी विमुख उन इन्द्रादि देवोंके पास जाकर उन्मत्त कलि अवज्ञापूर्वक बोलने लगा ) ॥ १११॥

**स्वस्ति वास्तोष्पते ! तुभ्यं ? शिखिन्नस्ति न खिन्नता ? ।**
**सखे काल ! सुखेनासि ? पाशहस्त ! मुदस्तव ? ॥ ११२ ॥**

**स्वस्तीति । वास्तोष्पते ! वास्तोः गृहक्षेत्रस्य, पतिः अधिष्ठाता तत्सम्बुद्धौ, हे भुवस्पते ! इन्द्र !, 'वास्तोष्पतिगृहमेधाच्छ च' इत्यस्मादेव निपातनादलुकि षत्वम् । 'इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः । वास्तोष्पतिः सुरपतिर्वलारातिः शचीपतिः ॥' इत्यमरः । तुभ्यं स्वस्ति क्षेमम्, अस्ति कच्चित् ? इति शेषः । 'नमः**

---

१. 'जनङ्गम इव' इति पाठान्तरम् ॥

स्वस्ति—' इत्यादिना चतुर्थी। 'स्वस्त्याशीः क्षेमपुण्यादौ' इत्यमरः। शिखिन्! हे अग्ने! खिन्नता खेदः, न अस्ति, कच्चित्? इति शेषः। सखे काल! हे सुहृत् यम! सुखेन प्रीत्या, असि वर्त्तसे, किम्? इति शेषः। पाशहस्त! हे वरुण! तव भवतः, मुदः मोदाः, सन्ति किम्? इति शेषः। सर्वत्र काकुरनुसन्धेया॥ ११२॥

हे वास्तोष्पते (गृहपति इन्द्र)! तुम्हारा कल्याण तो है? हे शिखिन् (ज्वालावाले अग्नि)! तुम्हें खिन्नता तो नहीं है? हे मित्र काल (यमराज)! सुखसे हो न? हे पाशहस्त (हाथमें 'पाश' नामक आयुध लिये हुए वरुण)! आनन्द तो हैं?। [उक्त चारों सम्बुद्धि शब्दोंसे क्रमशः इन्द्रका केवल गृहपति मात्र होना, अग्निका ज्वाला (अकिञ्चित्कर ज्वाला) वाला होना, यमका कृष्णवर्ण होनेसे कुत्सित रूपवाला होना और वरुणका केवल हाथमें अकिञ्चित्कर पाश आयुध लिये हुए होना उस कलिने सूचित किया है, तथा इन्द्रके लिए 'स्वस्ति' प्रश्न करनेसे इन्द्रका स्वामित्व या कलिका ब्राह्मणत्व द्योतित होता है तथा अपने समान कृष्ण वर्णवाले यमराजके लिए 'सखि' (मित्र) शब्दका प्रयोग किया है, उत्तमोंके साथ कुशल-प्रश्न होता है, उनके साथ समता होती है यहां पर कलिकी श्रेष्ठता द्योतित होती है, इस प्रकार कलिने इन्द्रादिके विषयमें अवज्ञाको प्रकट किया]॥११२॥

स्वयंवरमहे भैमी-वरणाय त्वरामहे।
तदस्माननुमन्यध्वमध्वने तत्र धाविने॥ ११३॥

स्वयमिति। हे देवाः! स्वयंवरः एव आत्मना पतिवरणमेव, महः उत्सवः तस्मिन्, स्वयंवराय महः तस्मिन् इति वा। भैमीवरणाय दमयन्तीं भार्यात्वेन वरीतुं, त्वरामहे त्वरां कुर्महे, शीघ्रं याम इत्यर्थः। तत् तस्मात्, अस्मान् तत्र धाविने स्वयंवरगामिने, अध्वने अध्वगमनाय इत्यर्थः। अनुमन्यध्वम् अनुजानीध्वम्॥११३॥

हम स्वयंवरोत्सवमें दमयन्तीको वरण करनेके लिए शीघ्रता कर रहे हैं अर्थात् शीघ्र जा रहे हैं, इस कारण वहां जानेवाले मार्गके लिए तुम लोग हमें अनुमति दो। [शीघ्रताके कारणसे ही हम तुम लोगोंके साथ विशेष सम्भाषण करना नहीं चाहते, इस कारण तुम लोग इस समयमें मुझे वहां जानेकी अनुमति दो]॥ ११३॥

तेऽवज्ञाय तमस्योच्चैरहङ्कारमकारणम्।
ऊचिरेऽतिचिरेणैनं स्मित्वा दृष्टमुखा मिथः॥ ११४॥

ते इति। ते देवाः, अस्य कलेः, तं पूर्वोक्तम्, उच्चैः उत्कटम्, अकारणम् अहेतुकम्, अहङ्कारं गर्वम्, अवज्ञाय अविगणय्य, अत एव अतिचिरेण अतिविलम्बेन, पापिष्ठोऽयं कथमस्माभिः सम्भाष्य इति बुद्ध्या इति भावः। मिथो दृष्टमुखाः परस्परमुखावलोकिनः सन्तः, स्मित्वा मूढोऽयं स्वयंवरवार्त्तां करोतीति ईषत् हसित्वा, एनं कलिम्, ऊचिरे ऊचुः॥ ११४॥

वे (इन्द्रादि देव) कलिके निष्कारण महान् अहङ्कारकी अवज्ञाकर (अथवा—निष्कारण अहङ्कारकी अधिक अवज्ञाकर) परस्परमें एक दूसरेके मुखको देखकर थोड़ा हँसकर ('इस

पापीके साथ सम्भाषण भी हम लोग किस प्रकार करें' इस विचारसे ) अत्यन्त विलम्बकर इस कलिसे बोले ॥ ११४ ॥

**पुनर्वक्ष्यसि मा मैवं कथमुद्वक्ष्यसे नु सः ?।**
**सृष्टवान् परमेष्ठी यं नैष्ठिकब्रह्मचारिणम् ॥ ११५ ॥**

पुनरिति। हे कले ! पुनः भूयः, एवं स्वयंवरार्थं गमिष्यामीत्येवंरूपं, मा मा वक्ष्यसि नैव वक्तव्यम्, कोपे द्विरुक्तिः। 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यमर्षार्थे वचेर्लृट्। कुतः ? परमे तिष्ठतीति परमेष्ठी पितामहः। 'परमेस्थः कित्' इति इनिः। 'अम्बाम्बगोभूमि—' इति षत्वम्। यं त्वां, नैष्ठिकब्रह्मचारिणं यावज्जीवं ब्रह्मचर्येण अवतिष्ठमानं, सृष्टवान् निर्मितवान्, सः त्वं, कथं नु केन वा प्रकारेण, उद्वक्ष्यसे ? परिणेष्यसि ? वहेर्लृट्। तेन चालङ्घ्यशासनेन कृतयुगादयोऽपि निष्कलत्रा एव सृष्टाः, अतस्तव स्वयंवरवार्त्ता नैव कर्त्तव्या नैष्ठिकब्रह्मचारिव्रतस्य हानिभयात् इति भावः॥

( हे कले ! ) फिर ऐसा ( मैं दमयन्ती को वरण करने स्वयंवरोत्सवमें शीघ्र जा रहा हूं यह वचन ) मत कहना, क्योंकि वह तुम ( उस दमयन्तीको ) वरण कैसे करोगे ? जिसे ब्रह्माने नैष्ठिक ( आजन्म गुरुकुलमें रहनेवाला ) ब्रह्मचारी रचा है। [ यदि नैष्ठिक ब्रह्मचारी होकर भी तुम विवाह करोगे तो तुम्हारा ब्रह्मचर्य व्रत भ्रष्ट होनेसे तुम 'अवकीर्णी'[1] हो जावोगे, अतः विवाह करनेके लिए जानेकी बात पुनः कदापि मत करना ] ॥ ११५ ॥

**द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम्।**
**त्वज्जनैरपि वा धातुः सेतुर्लङ्घ्यस्त्वया न[2] किम् ? ॥ ११६ ॥**

द्रौहिणमिति। वा अथवा, त्वज्जनैः तव भृत्यैः कामक्रोधादिभिरपि, भृत्यत्वादतिक्षुद्रैरपीति भावः। धातुः ब्रह्मणः, सेतुः मर्यादा, नियोग इति यावत्, लङ्घ्यः लङ्घयितुं शक्यः। 'शकि लिङ् च' इति चकारात् शक्यार्थे कृत्यप्रत्ययः। सुतरां त्वया तत्स्वामिना भवताऽपि, न किम् ? स सेतुः किं न लङ्घ्यः ? अपि तु लङ्घ्यः एव इत्यर्थः। यस्य क्षुद्रभृत्यैरपि स्रष्टुराज्ञालङ्घनं सम्भाव्यते, तेनापि तदाज्ञालङ्घनं नासम्भाव्यमिति भावः। किन्तु द्रुहिणः ब्रह्मा, त्वाम् अवकीर्णं स्खलितम् अनेनेत्यवकीर्णी क्षतव्रतः। 'इष्टादिभ्यश्च' इति इनिप्रत्ययः। तम् अवकीर्णिनं क्षतव्रतम्, व्रतलङ्घिनमित्यर्थः। 'अवकीर्णी क्षतव्रतः' इत्यमरः। आकर्ण्य श्रुत्वा, द्रौहिणम् आज्ञालङ्घनापराधिनम्, वेत्तु जानातु, ज्ञात्वा च यत् कर्त्तव्यं तत् करोतु इति भावः ॥११६॥

अथवा तुम्हारे भृत्यलोग ( काम, क्रोध, लोभ आदि अतिशय क्षुद्र लोग ) भी ब्रह्माकी मर्यादाको लाँघ सकते हैं तो तुम नहीं लाँघ सकते क्या ? अर्थात् तुम्हारे अतिक्षुद्र काम-क्रोध आदि अनुचर भी जब ब्रह्माकी मर्यादा तोड़ सकते हैं तो उनके स्वामी तुम्हारे लिए

---

1. तदुक्तम्—'अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितम्।' इति।
2. 'तु किम् ?' इति पाठान्तरम्।

ब्रह्माकी मर्यादा तोड़ना कौन बड़ी बात है ? (किन्तु ऐसा करनेपर) ब्रह्मा तुझे अवकीर्णी (स्त्री-सम्भोग करनेसे नष्ट ब्रह्मचर्य व्रतवाला) सुनकर द्रोह करनेवाला जानें (और ऐसा जानकर जैसा उचित हो वैसा करें अर्थात् तुम्हें दण्डित करें)। अथवा—ब्रह्मा तुमको अवकीर्णी सुनकर तुम्हें द्रोही (वैर करनेवाला) जाने और जब तुम्हारे (नीच) भृत्य (काम क्रोधादि) भी ब्रह्माकी मर्यादाको तोड़ते हैं तो तुम नहीं तोड़ोगे क्या ? अर्थात् तुम्हें ब्रह्माकी मर्यादाको तोड़ना कोई आश्चर्य की बात नहीं है। अथवा—तुम्हारे (नीच कामक्रोधादि) भृत्योंको भी ब्रह्माकी मर्यादाको नहीं तोड़ना चाहिये, फिर तुम्हें नहीं तोड़ना चाहिये (यह क्या कहना है अर्थात् जब तुम्हारे नीच भृत्योंको ही ब्रह्माकी मर्यादा नहीं तोड़नी चाहिये तो तुम्हें तो कदापि नहीं तोड़नी चाहिये, (अन्यथा) वे ब्रह्मा तुम्हें अवकीर्णी सुनकर द्रोही समझेंगे एवं दण्डित करेंगे, इस कारण भी तुमको दमयन्तीके विवाहकी बात फिर कभी भी नहीं करनी चाहिये)॥ ११६॥

अतिवृत्तः स वृत्तान्तस्त्रैलोक्ययुवगर्वनुत्।
आगच्छतामपादानं न स्वयंवर एव नः॥ ११७॥

अतीति। भवतु तावत्, त्रैलोक्ये त्रिलोकमध्ये, ये युवानः यावन्तस्तरुणाः, तेषां गर्वनुत् सौन्दर्याहङ्कारहन्ता, भैमीकर्तृकप्रत्याख्यानादिति भावः। सः वृत्तान्तः स्वयंवरप्रसङ्गः, अतिवृत्तः अतीतः। कथं त्वया ज्ञातम्? इत्याह—आगच्छताम् आयातानां, नः अस्माकं, सः प्रसिद्धः, स्वयंवरः एव स्वयंवरस्थानमेव, अपादानम्[1] आगमनक्रियाया अवधिभूतः, ततः एव आगच्छामः इत्यर्थः॥ ११७॥

त्रिलोकीके (एक नलको छोड़कर शेष समस्त) युवकोंके अहङ्कारको मर्दित करनेवाला वह (दमयन्तीका स्वयंवरोत्सव) समाप्त हो गया, (क्योंकि) वह स्वयंवर ही (वापस) आते हुए हमलोगोंका अपादान (पृथक् होनेमें निश्चल अवधि) है। [हमलोग उसी स्वयंवरसे आ रहे हैं, अतएव वहांका वृत्तान्त हमें ठीक-ठीक ज्ञात है कि वह स्वयंवर समाप्त हो गया, इस कारण भी तुम्हें वहां जानेकी बात करना व्यर्थ है]॥ ११७॥

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च।
भूमिपालं नलं[2] भैमी वरं साऽववरत् वरम्॥ ११८॥

नागेष्विति। सानुरागेषु, अनुरागयुक्तेषु, नागेषु, नागकुमारेषु, दिविषत्सु देवेषु च, पश्यत्सु अवलोकयत्सु, पश्यतः तान् सर्वाननादृत्येत्यर्थः। 'षष्ठी चानादरे' इति चकारात् अनादरे सप्तमी। सा भैमी दमयन्ती, वरं नागाद्यपेक्षया श्रेष्ठम्, भूमिपालं चक्रवर्तिनम्, नलं निषेधशम्, वरं वोढारम्, अववरत् वृणोति स्म। वरयतेश्चौरादिकात् ईप्सायाम् अदन्ताल्लङ्, अल्लोपत्वेनासन्वद्भावादित्वदीर्घयोरभावः॥ ११८॥

---

१. 'ध्रुवमपायेऽपादानम्' (पा० सू. १।४।२४) इति पाणिन्युक्तेरिति भावः।
२. 'नरं' इति पाठान्तरम्।

अनुरागयुक्त ( वासुकी आदि ) नागों तथा हमारे अर्थात् इन्द्रादि चारों देवोंके देखते रहनेपर ( अथवा—नागों तथा हम देवोंके अनुरागके साथ देखते रहने पर सबका अनादर करके ) उस दमयन्तीने श्रेष्ठ वर राजा नल ( पाठा०—नर=मनुष्य, 'र-ल' के अभेद होनेसे 'नल' ) को वर लिया है। [ उस स्वयंवरोत्सवमें वासुकि आदि नाग तथा हम लोग—इन्द्रादि देव-भी सम्मिलित होकर उसे वरनेके लिए अनुरागसे देखते ही रह गये, किन्तु सबका त्यागकर उसने श्रेष्ठ राजा नलको अच्छी तरह वरण कर लिया, जब वासुकि आदि देवों तथा इन्द्रादि-हम लोगोंको-ही उसने वरण नहीं किया तो मर्त्यलोकवासी अन्य राजाओंके विषयमें कहना ही क्या है ? इसीसे हमने पहले ( १७।११७ ) कहा कि त्रिलोकी के युवकोंके अहङ्कारको मर्दन करनेवाला स्वयंवर हो चुका ] ॥ ११८ ॥

भुजगेशानसद्वेशान् वानरानितरान् नरान् ।
अमरान् पामरान् भैमी नलं वेद गुणोज्ज्वलम् ॥ ११९ ॥

भुजगेति । भैमी दमयन्ती, भुजगेशान् वासुकिप्रमुखमहानागान्, असद्वेशान् अपकृष्टपरिच्छदान्, वैरूप्यादमनोज्ञाकृतीन् इत्यर्थः। इतरान् नलात् अन्यान्, नरान् मानवान्, नरेन्द्रान् इति यावत्। वानरान् मर्कटान्, चापल्यनिर्गुणत्वाभ्यां मर्कटतुल्यान् इत्यर्थः। तथा अमरान् इन्द्रादीन् देवान्, पामरान् नीचान्। 'विवर्णः पामरो नीचः' इत्यमरः। वेद वेत्ति। 'विदो लटो वा' इति णलादेशः। नलं केवलं नलनृपतिम् एव, गुणोज्ज्वलं गुणाढ्यम्, वेद इति पूर्वक्रियया अन्वयः ॥ ११९ ॥

दमयन्ती ( वासुकि आदि ) नागोंको असुन्दर वेश ( कञ्चुक ) वाला, ( नलेतर ) मनुष्योंको ( चञ्चलतायुक्त, एवं सद्गुणहीन होनेसे ) वानर ( के तुल्य ), देवोंको नीच और नलको गुणोंसे उज्ज्वल समझती है ( अथवा—समझा था ) ॥ ११९ ॥

इति श्रुत्वा स रोषान्धः परमश्चरमं युगम् ।
जगन्नाशनिशारुद्र-मुद्रस्तानुक्तवानदः ॥ १२० ॥

इतीति। इति इदं, श्रुत्वा आकर्ण्य, परमः उत्कट इत्यर्थः। रोषेण क्रोधेन, अन्धः दृष्टिशक्तिहीनः, हिताहितविवेचनापरिशून्य इत्यर्थः। अज्ञानपरवशः इति यावत्। चरमम् अन्त्यम्, युगं चतुर्थयुगमित्यर्थः। सः कलिः, जगन्नाशनिशा त्रिभुवनध्वंसकारिणी रात्रिः, कालरात्रिरित्यर्थः। तत्र रुद्रः प्रलयकाले संहारमूर्त्तिः शिवः, तस्य मुद्रा इव मुद्रा चिह्नम्, आकारः इति यावत् यस्य सः तादृशः सन्, तान् इन्द्रादीन्, अदः वक्ष्यमाणं वाक्यम्, उक्तवान् कथितवान् ॥ १२० ॥

यह ( १७।११५-११९ ) सुनकर क्रोधान्ध ( अत एव सदसद्विचारहीन ), उत्कट अर्थात् भयङ्कर वह अन्तिम युग अर्थात् कलि संसारनाशिनी रात्रि ( कालरात्रि ) में रुद्रके समान (भयङ्कर) प्रकृतिवाला होता हुआ उन (इन्द्रादि देवों) से ऐसा (१७।१२१-१३१) बोला ॥१२०॥

कयाऽपि क्रीडतु ब्रह्म दिव्याः स्त्रीर्दीव्यत स्वयम् ।

कलिस्तु चरतु ब्रह्म प्रैतु चातिप्रियाय वः ॥ १२१ ॥

यदुक्तं 'पुनर्वंदयसि' इत्यादिना श्लोकद्वयेन ( १७।११५-११६ ) तत्रोत्तरं सोल्लुण्ठ-माह—कथाऽपीत्यादिना श्लोकद्वयेन । हे देवाः ! ब्रह्मा स्रष्टा, कयाऽपि अगम्ययाऽपीति भावः । 'प्रजापतिर्वै स्वां दुहितरमभ्यगात्' इति श्रुतेः; क्रीडतु रमताम्, स्वयं यूयञ्च इत्यर्थः । दिव्याः स्वर्गीयाः, स्त्रोः नारीः, दिव्याभिः वेश्याभिरिति भावः । 'कर्म च' इति करणस्य कर्मत्वम् । दीव्यत क्रीडत, कलिस्तु अहं पुनरित्यर्थः, वः युस्माकम्, अतिप्रियाय अत्यन्तप्रीतिजननाय, ब्रह्म चरतु ब्रह्मचर्यमवलम्ब्य तिष्ठतु, प्रैतु म्रियताञ्च॥ १२१ ॥

( पहले कलि इन्द्रोक्त 'पुनर्वंदयसि…' इत्यादि ( १७।११५-११६ ) श्लोकोंका उत्तर दे रहा है—) ब्रह्मा किसी स्त्री ( अतिसुन्दरी 'गायत्री' आदि, अथवा—सम्भोगके अयोग्या होनेसे अग्राह्य नामवाली, अथवा—पुत्री सरस्वती ) के साथ क्रीडा करें, ( तुमलोग भी ) दिव्य स्त्रियों ( अतिशय सुन्दरियों, अथवा—स्वर्गीय रम्भा आदि अप्सराओं, अथवा—अतिसुन्दरी 'अहल्या' आदि परस्त्रियों ) के साथ स्वयं ( स्वच्छन्दतापूर्वक ) क्रीडा करो, किन्तु कलि तुमलोगोंके अतिशय प्रिय करनेके लिए ब्रह्मचर्य धारण करे और ( अन्तमें ) मर जाय । [ पाठा०—कलि तो ब्रह्मचर्य धारण करे, या तुमलोगोंके अतिप्रियता ( प्रसन्नता ) के लिए मर जाय । अथवा—ब्रह्मा तथा तुम लोग तो यथेष्ट स्वच्छन्दतापूर्वक सुन्दरियोंके साथ भोग-विलासकर आनन्द मनाओ और मैं कलि तुम लोगोंकी प्रसन्नता ( मर्यादा रक्षा ) के लिए यावज्जीवन ब्रह्मचारी रहूं और अन्तमें मर जाऊं । अथवा—ब्रह्मा तथा तुम लोग स्वन्दतापूर्वक सुन्दरियोंके साथ आनन्द मनाओ, मैं कलि तुम लोगोंकी अतिशय प्रिय ( दमयन्ती ) के लिए मर जाऊंगा किन्तु स्वेच्छाचरण नहीं करूंगा इत्यादि प्रकारसे कलिने इन्द्रादिका उपहास किया ] ॥ १२१ ॥

चर्य्येव कतमेयं वः परस्मै धर्मदेशिनाम् ? ।
स्वयं तत् कुर्वतां सर्वं श्रोतुं यद् बिभितः श्रुती ॥ १२२ ॥

ततः किम् ? तत्राह चर्यैवेति । परस्मै अन्यस्मै, धर्मदेशिनां स्वसुतादिगमनं न कार्यमित्यादिरूपमाचारमुपदिशताम्, स्वयं तु आत्मना पुनः, यत् कर्म, ब्रह्महत्या-गुरुदारगमनादिरूपमित्यर्थः । श्रुती कर्णौ अपि, श्रोतुम् आकर्णयितुम्, बिभितः त्रस्यतः । 'भियोऽन्यतरस्याम्' इति विकल्पादिकारः । तत् सर्वं ब्रह्महत्यापारदार्या-दिकम् , कुर्वताम् आचरताम् , 'अहल्यायै जार' इति श्रुतेः । वः युष्माकम्, इयम् एषा, चर्या आचारः, रीतिरिति यावत् , कतमेव ? कीदृशीव ? अवाच्या इत्यर्थः । स्वयमनाचारिणां युष्माकं परोपदेशवचनं न ग्राह्यम् इति भावः ॥ १२२ ॥

१. 'वाति—' इति पाठान्तरम् ।

दूसरेके लिए धर्मोपदेश करनेवाले तथा जिस कर्म (पुत्र्यादिसम्भोग) को सुननेके लिए कान भी डरते हैं, उन सब कर्मोंको स्वयं करते हुए तुमलोगोंका आचरण ही क्या है? [तुमलोग केवल धर्माचरण करनेके लिए दूसरोंको उपदेश देते हो, किन्तु स्वयं ऐसे निन्दिततम कर्म करते हो, जिन्हें सुननेसे कान भी डर जाते हैं, अतः तुमलोगोंका उपदेश ग्रहण करने योग्य नहीं है]॥ १२२॥

तत्र स्वयंवरेऽलम्भि भुवः श्रीर्नैषधेन सा।
जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः॥ १२३॥

यदुक्तम् 'अतिवृत्तः स वृत्तान्तः' इत्यादिना श्लोकत्रयेण (१७।११७-११९) तत्रोत्तरं प्रपञ्चेनाह—तत्रेत्यादिभिः षोडशभिः[1]। हे देवाः! तत्र स्वयंवरे दमयन्ती-कर्तृकेप्सितपतिवरणे, भुवः श्रीः भूलोकलक्ष्मीः, सा भैमी, नैषधेन नलेन, अलम्भि लब्धा। लभेर्ण्यन्तात् कर्मणि लुङि 'विभाषा चिण्णमुलोः' इति विकल्पान्नुमागमः। युष्माभिश्च भवद्भिस्तु, जगतः त्रिलोकस्य, ह्रीः लज्जा, त्रैलोक्ये यावती लज्जा वर्त्तते सा इत्यर्थः। अलम्भि इति पूर्वेणान्वयः। स्वर्लोकलज्जाकरमिदमवमानमिति भावः। एवञ्च वः युष्माकं, नलस्य देवानाञ्च इत्यर्थः। स च यूयञ्चेति तेषां युष्माकमिति तदाद्येकशेषः। लाभः फलप्राप्तिः, तुल्याभः समानरूप एव, एकविधः एव इत्यर्थः। श्री-ह्रीति शकार-हकारयोः विभिन्नतामात्रमन्यत् तुल्यमिति भावः॥ १२३॥

(अब कलि इन्द्रोक्त 'अतिवृत्तः सः वृत्तान्तः' इत्यादि तीन (१७।११७-११९) श्लोकोंका उत्तर 'तत्र स्वयंवरे' आदि नव (१७।१२३।१३१) श्लोकोंसे देना है-) उस स्वयंवरमें नलने संसार की लक्ष्मी (दमयन्ती) को और तुमलोगोंने संसारकी (अथवा-संसारसे) लज्जाको प्राप्त किया, (इस प्रकार) तुमलोगों (तुम इन्द्रादि देवों तथा नल) का लाभ समान ही है। [नलने संसारकी लक्ष्मीरूपा दमयन्तीको पाया और तुमलोग उसे नहीं पानेके कारण संसारके लोगोंसे लज्जा प्राप्त किये अर्थात् संसारमें लज्जित हुए, इस प्रकार 'श्री' तथा 'ह्री' दोनोंमें केवल 'शकार-हकार' का भेद है, शेष लाभ दोनों पक्षोंका समान ही है, अर्थात् स्वयंवरमें जाकर भी तुमलोगोंके सामने ही नलने दमयन्तीको प्राप्त कर लिया तथा तुमलोग उसे नहीं पानेसे अत्यन्त लज्जित हुए, अतएव तुमलोगोंका दर्प व्यर्थ है]॥ १२३॥

दूरान्नः प्रेक्ष्य यौष्माकी[2] युक्तेयं वक्त्रवक्रता।
लज्जयैवा[3]समर्थानां मुखमास्माकमीक्षितुम्॥ १२४॥

---

१. 'नवभिः' इत्येवोचितम्, षोडशश्लोकानां मध्ये श्लोकत्रयेण (१७।१२२-१२४) सरस्वतीभाषणवर्णनात्। २. 'युष्माकम्' इति पाठः साधुः' इति 'प्रकाश'कारः। ३. 'लज्जयेवा—' इति पाठान्तरम्।

दूरादिति । हे देवाः ! दूरात् विप्रकृष्टदेशात्, नः अस्मान्, प्रेक्ष्य दृष्ट्वा, युष्माकम् इयं यौष्माकी भवदीया । 'युष्मदस्मदोरन्यतरस्याम्' इत्यण्प्रत्यये 'तस्मिन्नणि च' इत्यादिना युष्माकादेशे 'टिड्ढाणञ्' इत्यादिना ङीप् । इयम् एषा, वक्त्राणां मुखानां वक्रणा वक्रीकरणम्, तिर्यङ्मुखत्वमित्यर्थः । 'तत्करोति—' इति ण्यन्तात् युच् । लज्जया एव व्रीडावशेनैव, दमयन्त्या अवृतत्वादिति भावः । अस्माकम् इदम् आस्माकम्, यौष्माकीवत् प्रक्रिया । मुखम् आननम्, ईक्षितुं द्रष्टुम्, असमर्थानाम्, अशक्यानां युष्माकमिति शेषः। अथवा समासान्तर्गततया गुणीभूतस्य यौष्माकीत्यत्र युष्मच्छब्दस्य विशेषणम्; युक्ता उचिता ॥ १२४ ॥

(आते हुए) हमलोगोंको दूरसे ही देखकर लज्जासे ही (पाठा०—मानो लज्जासे) हमलोगोंके मुखको देखनेके लिए असमर्थ तुमलोगोंकी यह विमुखता (हमलोगोंके सामनेसे मुख फेर लेना) उचित ही है। [दमयन्तीने स्वयंवरमें गये हुए तुमलोगोंका वरण नहीं किया है, अतएव तुमलोग अतिशय लज्जित हो और इसी कारण आते हुए हमलोगोंको दूरसे ही देखकर अपना मुख फेर लिये हो यह तुमलोगोंके लिए उचित ही है। लोकमें भी कोई अतिशय लज्जित व्यक्ति परिचित जनको आते हुए दूरसे ही देखकर मुख मोड़ लेता है। यद्यपि देवोंने हीन कलिको नहीं देखनेके लिये मुख फेर लिया था (१७।१११), तथापि उसको कलि अन्यथा समर्थन करते हुए इस प्रकार कह रहा है] ॥ १२४ ॥

स्थितं भवद्भिः पश्यद्भिः कथं भोस्तदसाम्प्रतम् ।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ? ॥ १२५ ॥

स्थितमिति । भोः देवाः ! पश्यद्भिः अवलोकयद्भिः, नलवरणमिति शेषः । भवद्भिः युष्माभिः, कथं केन प्रकारेण, स्थितम् ? उदासितम् ? भावे क्तः । तद् औदासीन्यम्, असाम्प्रतम् अयुक्तम् । किं तर्हि तदा कार्यम् ? तदाह—दुर्विदग्धा दुर्विनीता सा भैमी, ज्वलत्क्रुधा दीप्यमानकोपया, कोपप्रज्वलितया इत्यर्थः । दृशा दृष्ट्या, किं कथं, न निर्दग्धा ? न भस्मीकृता ? दग्धुमेव उचिता इत्यर्थः ॥ १२५ ॥

हे देवो ! उसे (नलवरणको) देखते हुए तुमलोग क्यों उदासीन रहे ! (अथवा—कैसे ठहरे रहे) ? यह अनुचित हुआ, दुर्विनीत उस (दमयन्ती) को क्रोधसे जलती हुई दृष्टिसे भस्म क्यों नहीं कर दिया ? । [जिस दमयन्तीने तुमलोगोंका त्यागकर सामान्यतम मनुष्य नलका वरण किया और उसे तुमलोग चुपचाप उदासीन होकर देखते रहे, सशक्त होकर भी क्रोधसे भस्म नहीं कर दिया, यह उचित नहीं किया] ॥ १२५ ॥

महावंशाननादृत्य महान्तमभिलाषुका ।
स्वीचकार कथङ्कारमहो ! सा तरलं नलम् ॥ १२६ ॥

दाह्यत्वे हेतुमाह—महेति । महान्तम् उत्कृष्टपुरुषम्, वरमिति शेषः । अभिलाषुका कामयमाना । 'लषपत—' इत्यादिना उकञ्प्रत्ययः, 'न लोका—' इत्यादिना

षष्ठीप्रतिषेधः। सा भैमी, महावंशान् उत्कृष्टकुलान्, सर्वलोकवरेण्यप्रजापतिकश्यपसुतान् इति भावः। युष्मान् इति शेषः। महतः वेणून् च। 'वंशो वेणौ कुले वर्गे' इति विश्वः। अनादृत्य अवधीर्य, तरलं चपलम्, नलं नलाख्यं राजानम्, पोटगलाख्यक्षुद्रतृणविशेषञ्च। 'नलः पोटगले राज्ञि' इति विश्वः। कथङ्कारं कथम् इत्यर्थः। 'अन्यथैवंकथम्—' इत्यादिना णमुल्प्रत्ययः। स्वीचकार! वत्रे? अहो! इत्याश्चर्ये। प्रखरनदीस्रोतसा नीयमानस्य वेण्ववलम्बनं परित्यज्य तृणावलम्बनवदुपहास्यमिदं चेष्टितमिति भावः॥ १२६॥

(कुल शील आदिसे) बड़ेको चाहनेवाली (दमयन्ती) महावंश (कश्यप मुनिके कुलमें उत्पन्न होनेसे श्रेष्ठ कुलमें उत्पन्न, पक्षा०—बड़े बांस) आपलोगोंको छोड़कर चञ्चल (मनुष्य होनेसे चपल स्वभाववाले, पक्षा०—थोड़ी हवासे भी हिलनेवाले) नल (निषधेश्वर, पक्षा०—'नल' नामक तृण-विशेष) को किस प्रकार स्वीकार किया? यह आश्चर्य है। [बड़ेको चाहनेवाला व्यक्तिका बड़े बांसको छोड़कर चञ्चल 'नल' नामक तृणको स्वीकार करनेके समान श्रेष्ठ कुलको चाहनेवाली दमयन्तीका कश्यप मुनि-जैसे श्रेष्ठकुलमें उत्पन्न तुम देवोंको छोड़कर हीन गुणवाले मानव 'नल' को दमयन्तीका स्वीकार करना आश्चर्यजनक है अतएव उपहासास्पद है]॥ १२६॥

भवादृशैर्दिशामीशैर्मृग्यमाणां मृगेक्षणाम्।
स्वीकुर्वाणः कथं सोढः कृतरीढस्तृणं नलः?॥ १२७॥

भवादृशैरिति। भवादृशैः भवद्विधैः, दिशाम् ईशैः दिक्पालैः, मृग्यमाणां काम्यमानाम्, मृगेक्षणां हरिणलोचनाम्, भैमीमिति शेषः। स्वीकुर्वाणः गृह्णन्, अत एव कृतरीढः भवतां कृतावज्ञः। 'रीढाऽवमाननाऽवज्ञा' इत्यमरः। 'कृतव्रीडः' इति पाठे—जनितलज्जः, दमयन्तीकर्तृकप्रत्याख्यानात् युष्माननादृत्य नलकर्तृकदमयन्तीग्रहणाच्च लज्जा इति बोध्यम्। तृणं तृणकल्पः, नलः नैषधः, कथं केन प्रकारेण, सोढः? क्षान्तः? भवद्भिरिति शेषः। महद्भिः हि परिभवो न सोढव्यः इत्यर्थः॥१२७॥

आप लोगों-जैसे दिक्पालोंने कामिनी मृगलोचनी (दमयन्ती) को स्वीकार करते हुए (अत एव आप लोगोंको) अवज्ञात (पाठा०—लज्जित) किये हुए तृण (के समान निस्सार) नलको किस प्रकार सहन किया?। [समर्थ दिक्पाल होते हुए भी कामिनीको स्वीकारकर आप लोगोंकी अवज्ञा करनेवाले निर्बल नलको आप लोगोंने क्षमा कर दिया यह उचित नहीं किया]॥ १२७॥

दारुणः कूटमाश्रित्य शिखी साक्षीभवन्नपि।
नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम्?॥ १२८॥

दारुण इति। अयं पुरोवर्त्ती, शिखी शिखावान् अग्निः, दारुणः काष्ठस्य, कूटं राशिम्, आश्रित्य अवलम्ब्य, अन्यत्र—दारुणः पापकार्यकारित्वात् क्रूरकर्मा, पुरुषः

इति शेषः । कूटं कपटम्, आश्रित्य अवलम्ब्य, साक्षीभवन्नपि प्रत्यक्षद्रष्टा सन् अपि, अग्निसाक्षिके विवाहे व्यवहारे च साक्षीभवन्नपि इति भावः । तदुद्वाहे तयोः दमयन्तीनलयोः विवाहे, कूटसाक्षिणः मिथ्यासाक्षिणः, क्रियां चेष्टितम्, नलेन दमयन्ती नोढा किन्तु अन्येनोढा इत्याद्यनृतवचनव्यापारमित्यर्थः । किं कथम्, नावहत् ? नावलम्बत ? शिखिनस्तादृगकूटसाक्षिदाने च भवतां दमयन्तीलाभः स्यादेव यतः कूटसाक्षी परकीयं वस्तु अन्यस्मै दापयतीति भावः ॥ १२८ ॥

दारुण ( प्रज्वलित होनेसे भयङ्कर, पक्षा०—क्रूरकर्म करनेवाला ) यह अग्नि कूट ( काष्ठराशि, पक्षा०—कपट ) का आश्रयकर साक्षी होता हुआ भी उस विवाहमें ( अथवा-उन दोनोंके, या-उस नलके, या-उस दमयन्तीके विवाहमें; पक्षा०—उस साक्षित्वके निर्वाह करनेमें ) कपट साक्षीके कार्यको क्यों नहीं ग्रहण किया ? । [ जिस प्रकार क्रूरकर्मा पुरुष कपटपूर्वक किसी व्यवहार ( मुकदमे ) में साक्षी होकर भी उसके निर्वाह ( यथार्थत्वको पूरा ) करनेमें कपटी साक्षी बनकर दूसरेकी वस्तु दूसरेको दिलवा देता है, उसी प्रकार दारुण यह अग्नि काष्ठ-राशिको पाकर उनके विवाहमें साक्षी होता हुआ भी कपटी साक्षी का काम क्यों नहीं किया ? अर्थात् यह क्यों नहीं कह दिया कि 'दमयन्तीका नलके साथ विवाह नहीं हुआ है, किन्तु इस (आप लोगोंमेंसे किसी एक) देवके साथ हुआ है; यदि वह ऐसा कहता तो अवश्य ही वह दमयन्ती आप लोगोंमेंसे किसी एकको प्राप्त हो जाती, परन्तु इसने ऐसा नहीं किया, अत एव अत्यन्त अनुचित किया ] ॥ १२८ ॥

**अहो ! महःसहायानां सम्भूता भवतामपि ।**
**क्षमैवास्मै कलङ्काय देवस्येवामृतद्युतेः ॥ १२९ ॥**

अहो इति । भो देवाः ! महःसहायानां तेजस्विनामपि, भवतां युष्माकम्, अमृतद्युतेः सुधाकरस्य, देवस्य इन्दोः इव, क्षमा क्षान्तिः एव, अन्यत्र—क्षितिः एव । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । अस्मै इन्द्रादिदेवेषु सत्स्वपि दमयन्त्या नलो वृत इति स्वीकृतपरिभवरूपाय, कलङ्काय अपवादाय, अयशसे इत्यर्थः । अन्यत्र—कलङ्काय अङ्काय, कृष्णवर्णचिह्नविशेषायेत्यर्थः । चन्द्रे श्यामिका भूच्छायैवेति केचित् । 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । सम्भूता सञ्जाता, इत्यहो ! खेदे । क्षमाया गुणभूतत्वेऽपि समयविशेषे क्षमाकरणात् स्त्रियः अपि न गणयन्तीति भावः ॥ १२९ ॥

तेजस्वी भी आप लोगोंकी ( अथवा—तेजस्वी आप लोगोंकी भी ) क्षमा ही उस प्रकार इस कलङ्क ( दमयन्तीने इन्द्रादि देवोंका त्यागकर नलको वरणकर लिया ऐसे अपयश, या-नलकृत आपलोगोंके अनादर, अथवा—लज्जाके कारण हमलोगोंके समक्ष विमुखता ग्रहणरूप कलङ्क ) के लिये हुई, जिस प्रकार तेजस्वी देव चन्द्रमाको कलङ्क ( कालिमा ) के लिए पृथ्वी होती है, अहो, खेद है । [ यदि आप लोग क्षमा नहीं करते तो अपने तेजसे नलको पराभूतकर इस प्रकार कलङ्कित नहीं होते, अतएव गुणरूप भी क्षमा अस्था-

नमें प्रयुक्त होनेसे दोषाधायक ही हुई । चन्द्रमामें पृथ्वीकी छाया ही कलङ्करूपसे दृष्टिगोचर होती है, ऐसा ज्योतिःशास्त्रका सिद्धान्त है ] ॥ १२९ ॥

सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ? ।
ब्रूतागःसद्मनस्तस्माच्छद्मनाऽद्याऽऽच्छिनद्मि ताम् ॥ १३० ॥

सेति । हे देवाः ! सा भैमी, यं नलम्, वव्रे पतित्वेन वृतवती, तम् अपराधिनं तं नलम्, उत्सृज्य विहाय, किं किमर्थम् मह्यं मां प्रति । 'क्रुधद्रुह—' इत्यादिना सम्प्रदानत्वाच्चतुर्थी । ईर्ष्याजुषः अक्षान्तिभाजः, कोपपरवशा इत्यर्थः । स्थ ? भवथ ? ब्रूत कथयत, यूयमिति शेषः । अस्तु तावत्, आगः सद्मनः अपराधमन्दिरात्, भवदनादररूपदोषाकरादित्यर्थः । तस्मात् नलात्, अद्य अस्मिन्नेव अहनि, तां भैमीम्, छद्मना कपटेन, आच्छिनद्मि आहरामि, आनयामीत्यर्थः, अहमेवेति शेषः । सामीप्ये वर्त्तमाननिर्देशः ॥ १३० ॥

उस ( दमयन्ती ) ने जिसको वरण किया उस ( अपराधी नल ) को छोड़कर तुमलोग मेरे साथ क्यों ईर्ष्यालु हो ? कहो; अपराधके घर ( आप लोगोंका अनादर दमयन्तीके साथ विवाह करनेसे महापराधी ) उस ( नल ) से उस ( दमयन्तीको ) कपटसे आज (अभी) लाता हूं ( अथवा—हमलोगों ( तुमलोगोंका तथा मेरा भी ) की अपराधिनी ( हमलोगोंका त्यागकर नलके साथ विवाह करनेके कारण हमलोगोंके साथ महान् अपराध करनेवाली ) उस ( दमयन्ती ) को कपटके द्वारा नलसे ( पृथक् कर ) आज लाता हूं । इस पक्षमें 'आगः-सद्म' शब्द 'ताम्' का विशेषण तथा 'नः' शब्दका पृथक् पद मानना चाहिये ) ॥ १३० ॥

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव ।
साऽपि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥ १३१ ॥

ततः किमस्माकम् ? अत आह—यतध्वमिति । अत्र 'ततश्च' इति पदमध्याहृत्य पूर्वश्लोकेन सह सङ्गतिः रक्षणीया; ततश्च कपटेन दमयन्त्यानयनानन्तरमित्यर्थः । पाञ्चाली द्रौपदी, पाण्डवैः युधिष्ठिरादिभिः पञ्चभिरिव, सा भैमी अपि, अस्माभिः पञ्चभिरेव मया तथा युष्माभिः चतुर्भिश्च । त्यदाद्येकशेषः संविभज्य विभागं कृत्वा, पृथक् पृथक् समयं निर्दिश्य इत्यर्थः । भुज्यतां रम्यतामिति यावत् । अतो मां सहकर्त्तुं भैम्यानयने सहायीभवितुम्, यतध्वं चेष्टध्वम्, दमयन्त्यानयने माम् अनुसन्यध्वम् इति भावः ॥ १३१ ॥

( इस कारण ) पांच पाण्डवोंने जिस प्रकार समय-विभागकर द्रौपदीका सम्भोग किया, उसी प्रकार हम पांचों भी समय-विभागकर उस ( दमयन्ती ) का सम्भोग करें, इसके लिये तुमलोग यत्न करो अर्थात् मुझे नलसे कपटपूर्वक छीनकर दमयन्तीको लानेके लिए सहायता करो ( या-अनुमति दो ) । [ इस प्रकार दमयन्तीको प्राप्त करनेपर तुम लोगोंको भी निराश नहीं होना पड़ेगा, तथा युधिष्ठिरादि पांच पतियोंके साथ समय-विभा-

गकर सम्भोग करनेपर द्रौपदीके समान उस दमयन्तीका भी सतीत्व नष्ट नहीं होगा और न हमलोगों ( पांचों ) को ही परदारगमनजन्य दोष होगा, अत एव तुमलोगोंको मेरे कार्यमें सहायता देनी चाहिये। यद्यपि सत्ययुगमें होनेवाले नल-दमयन्तीके बाद द्वापरयुगमें होनेवाले पाण्डवों तथा द्रौपदीका प्रादुर्भाव हुआ, तथापि भविष्य-कालज्ञ होनेसे अथवा कल्पभेदसे पूर्व कल्पमें व्यतीत पाण्डव-द्रौपदीके प्रादुर्भावका स्मरण होनेसे कलिका वैसा दृष्टान्त देना असङ्गत नहीं मानना चाहिये ] ॥ १३१ ॥

**अथापरिवृढा सोढुं मूर्खतां मुखरस्य ताम् ।**
**चक्रे गिरा शराघातं भारती सारतीव्रया ॥ १३२ ॥**

अथेति । अथ कलिप्रलापानन्तरम्, भारती सरस्वती, मुखरस्य दुर्मुखस्य, अप्रियवादिन इत्यर्थः । प्रलपतः इति यावत् । कलेरिति शेषः । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । तां तादृशीम्, मूर्खतां मूढताम्, सोढुं क्षन्तुम्, अपरिवृढा अप्रभुः, असमर्था सतीत्यर्थः । 'प्रभौ परिवृढः' इति निपातनात् साधुः । 'प्रभुः परिवृढोऽधिपः' इत्यमरः । सारेण न्यायेन, न्यायसङ्गतत्वेनेत्यर्थः, यथार्थत्वेनेति यावत् । 'सारो बले स्थिरांशे च न्याये क्लीबं वरे त्रिषु' इत्यमरः । तीव्रया तीक्ष्णया, अथवा सारया गुर्वर्थप्रतिपादकत्वेन श्रेष्ठया, तीव्रया परुषत्वात् दुःसहया च, गिरा वाचा एव, शराघातं बाणप्रहारम्, चक्रे कृतवती, वाक्सायकेन तं विव्याध इत्यर्थः ॥ १३२ ॥

इसके ( कलिके इस प्रकार ( १७।१२१-१३१ ) कहनेके ) बाद बकवादी उस (कलि) की मूर्खता ( से पूर्ण निन्दित वचनों ) को सहनेमें असमर्थ अर्थात् नहीं सह सकनेवाली सरस्वती देवी सार ( न्याययुक्त, या-गभीरार्थयुक्त ) होनेसे तीक्ष्ण ( अथवा—उक्त कारणसे श्रेष्ठ तथा कठोर होनेसे तीव्र ) वाणी ( १७।१३३ ) से बाण-प्रहार किया अर्थात् बाणके समान सारगर्भित एवं तीक्ष्ण वचनोंसे कलिको पीडित किया ॥ १३२ ॥

**कीर्त्तिं भैमीं वरांश्चास्मै दातुमेवागमन्नमी ।**
**न लीढे[2] धीरवैदग्धीं धीरगम्भीरगाहिनी[3] ॥ १३३ ॥**

कीर्त्तिमिति । रे शठ ! अमी देवाः, अस्मै नलाय, कीर्त्तिं पुण्यश्लोकताम्, भैमीं दमयन्तीम्, तथा वरान् ईप्सितान् च, दातुं वितरितुम् एव, अगमन् स्वयंवरसभां गतवन्तः, न तु स्वयं तां परिणेतुमिति भावः । गमेर्लुङ्, इदित्त्वात् च्लेरङादेशः । तथा हि, अगम्भीरगाहिनी उत्तानग्राहिणी, गूढार्थं बोद्धुमसमर्था यथास्थूलग्राहिणीत्यर्थः । धीः त्वादृशां बुद्धिः, धीराणां मनीषिणाम्, वैदग्धीं चातुर्यम्, गूढाभिप्रायमित्यर्थः । न लीढे न आस्वादयति, न वेत्ति इत्यर्थः ॥ १३३ ॥

ये ( इन्द्रादि देव ) नलके लिए दमयन्तीको, ( दमयन्तीका अभिलाषी होते हुए भी

१. 'भारतीव्रया' इति पाठान्तरम् । २. 'न लेढि' इति, 'नालीढ' इति च पाठा० ।
३. 'धीर गम्भीरगाहिनीम्' इति पाठान्तरम् ।

नलने इन्द्रका दूत बनकर दमयन्तीके पास जाकर निष्कपट हो दूतकार्य किया, अतः नलके समान कोई धीर नहीं है ऐसी ) कीर्तिको तथा वरों ( १४।७०—९१ ) को देनेके लिए ही ( स्वयंवरमें ) गये थे। ( दमयन्तीको वरण करनेके लिए नहीं गये थे। अगम्भीरग्राहिणी ( गूढाभिप्रायको नहीं समझनेवाली तुझ-जैसे लोगोंकी ) बुद्धि धीरों ( इन्द्रादि-जैसे गम्भीराशयवालों ) को बुद्धिकी चतुरताको नहीं जानती है। [ अथवा—हे अधीर ! अगम्भीर-ग्राहिणी बुद्धि ( इन्द्रादि-जैसे चतुर लोगोंके ) बुद्धिचातुर्यको नहीं जानती है। अथवा—हे धीर ! ( काकुसे हे अधीर ! ) गम्भीरग्राहिणी ( गूढार्थको समझनेवाली ) धीरोंकी चतुरताको नहीं जानती ? अर्थात् जानती है, अतः तुम्हारी बुद्धि गम्भीरग्राहिणी नहीं है, इससे धीर इन इन्द्रादि देवोंकी बुद्धिके चातुर्यको नहीं समझती। यही कारण है कि तुम ऐसा कह रहे हो ] ॥ १३३ ॥

**वाग्मिनीं जडजिह्वस्तां प्रतिवक्तुमशक्तिमान् ।**
**लीलावहेलितां कृत्वा देवानेवावदत् कलिः ॥ १३४ ॥**

**वाग्मिनीमिति । जडजिह्वः अपगल्भवाक्, वाक्प्रयोगानभिज्ञः इत्यर्थः । कलिः कलियुगम्, वाग्मिनीं प्रगल्भवाचम्, तां भारतीं सरस्वतीम्, प्रतिवक्तुं प्रत्युत्तरं दातुम्, अशक्तिमान् असमर्थः सन्, लीलया विलासेन, उपेक्षाप्रदर्शनरूपचेष्टित-विशेषेण इत्यर्थः । अवहेलिताम् अवज्ञाताम्, स्त्रियमित्येवमवधीरितामित्यर्थः । कृत्वा विधाय, अगणयन्निवेत्यर्थः । देवान् इन्द्रादीन् एव, अवदत् उवाच ॥ १३४ ॥**

जड जिह्वावाला ( अप्रगल्भ वचन ) कलि वाग्मिनी ( श्रेष्ठ वचन बोलनेवाली ) उस ( सरस्वती देवी ) से प्रत्युत्तर देनेमें असमर्थ होता हुआ उपेक्षा दिखानेसे अपमानित ( स्त्रीकी वातोंका उत्तर देना पुरुषके लिए उचित नहीं है मानो इस बुद्धिसे सरस्वती देवी-को उत्तर देनेमें अवमानित ) करता हुआ देवोंसे ही बोला ॥ १३४ ॥

**प्रौञ्छि वाञ्छितमस्माभिरपि तां प्रति सम्प्रति ।**
**तस्मिन् नले न लेशोऽपि कारुण्यस्यास्ति नः पुनः ॥ १३५ ॥**

**प्रौञ्छीति । सम्प्रति अधुना, अस्माभिः अपि तां भैमीं प्रति, वाञ्छितम् इच्छा, प्रौञ्छि प्रोञ्छितम्, परित्यक्तमिति यावत् । उञ्छतेः कर्मणि लुङ् । पुनः किन्तु, तस्मिन् तादृशदुष्कार्यकारिणि इत्यर्थः । नले नैषधे, नः अस्माकं, कारुण्यस्य कृपायाः, लेशः विन्दुमात्रम् अपि, न अस्ति नैव विद्यते ॥ १३५ ॥**

इस समय हमने भी उस ( दमयन्ती ) से इच्छाको हटा लिया अर्थात् हम भी दमयन्ती को नहीं चाहते, किन्तु ( अपमान करनेसे अपराधी ) नलके प्रति हमारी करुणाका लेश भी नहीं है अर्थात् नलपर मैं लेशमात्र भी करुणा नहीं करता हूं, ( अतः नलसे बदला लेनेके लिए आपलोग मेरी सहायता करें ) ॥ १३५ ॥

**वृत्ते कर्मणि कुर्मः किं ? तदा नाभूम तत्र यत् ।**
**कालोचितमिदानीं नः शृणुतालोचितं सुराः ! ॥ १३६ ॥**

अकरुणस्त्वं कृतार्थं किं करिष्यतीत्याशङ्क्याह—वृत्ते इति । सुराः ! हे देवाः !, वृत्ते गते, कर्मणि भैमीवरणक्रियायाम्, किं कुर्मः ? किं सम्पादयामः ? इदानीं न किञ्चित् कर्त्तुं शक्नुम इत्यर्थः । यत् यस्मात्, तदा तत्काले, तत्र स्वयंवरे; न अभूम नास्म इत्यर्थः । वयमिति शेषः । भवतु, इदानीम् अधुना, नः अस्माकम्, कालोचितं भैम्या नले वृतेऽपि एतत्समयोपयोगि, आलोचितं विचारं पुनः । भावे क्तः । शृणुत आकर्णयत ॥ १३६ ॥

( दमयन्ती-परिणयरूप ) कर्मके समाप्त हो जानेपर हम क्या करें ? ( परस्त्री दमयन्ती के साथ मुझे कुछ नहीं करना चाहिये, इसीसे तद्विषयक इच्छाको मैंने छोड़ दिया है ), जो हम उस समय ( स्वयंवरकालमें ) नहीं थे ( यदि हम स्वयंवरकालमें उपस्थित होते तो दमयन्तीका विवाह नलके साथ कदापि नहीं होने देते, इस कारण 'गतं न शोचामि' नीतिके अनुसार अतीतके विषयमें पश्चात्ताप करना व्यर्थ है ), किन्तु हे देवो ! इस समय समयानुसार मेरे विचारको तुम लोग सुनो ॥ १३६ ॥

प्रतिज्ञेयं नले विज्ञाः ! कलेर्विज्ञायतां मम ।
तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३७ ॥

प्रतिज्ञेति । विज्ञाः ! हे विबुधाः ! नले नलविषये, कलेः कलियुगाधिदेवस्य, मम मे, इयम् एषा, प्रतिज्ञा शपथः, विज्ञायताम् अवधार्यताम् । तामेवाह—तेन नलेन, प्रयोज्येन । भैमीञ्च दमयन्तीञ्च, भूमिञ्च राज्यञ्च, त्याजयामि विसर्जयामि, एवञ्च तं नलम्, जयामि आत्माधीनीकरोमि, उभयत्र भविष्यत्सामीप्ये वर्त्तमानप्रत्ययः ॥

हे विद्वान् ( देवो ) ! नलके विषयमें मुझ कलिकी इस प्रतिज्ञाको तुमलोग मालूम करो कि—'मैं नलसे दमयन्ती तथा पृथ्वी ( राज्य ) को शीघ्र ही छोड़वाऊंगा, (तथा इस प्रकार) उस ( नल ) को जीत लूंगा' ॥ १३७ ॥

नैषधेन विरोधं मे चण्डतामण्डितौजसः ।
जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३८ ॥

नैषधेनेति । चण्डतामण्डितौजसः क्रौर्योपस्कृततेजसः, मे मम कलेः, नैषधेन नलेन सह, विरोधं वैरम्, रवेः सूर्यस्य, कैरवैः कुमुदैः, वैरवत् शत्रुतातुल्यम्, जगन्ति लोकाः, गायन्तु उच्चैर्घुष्यन्तु इत्यर्थः । हन्तेति हर्षे ॥ १३८ ॥

चण्डता ( दमयन्ती तथा राज्यको छुड़ाकर पीडित करनेसे क्रूरता ) से संयुक्त तेजवाले मेरे नलके साथ विरोधको तीनों लोक उस प्रकार गावें ( उच्च स्वरसे कहें ), जिस प्रकार तीक्ष्णतासे संयुक्त तेजवाले सूर्यके कुमुदोंके साथ विरोधको तीनो लोक गाते हैं; हन्त-खेद है! ( अथवा—इस प्रकार नलका विजय करनेसे हर्ष है ) । [ यद्यपि हीनतेजा होनेसे अयोग्य नलके साथ मुझे विरोध करना तीनो लोकोंमें अपयश ही होगा तथापि खेद है कि—नलके

साथ मुझे उसी प्रकार विरोध करना ही पड़ेगा, जिस प्रकार हीनवल कुमुदके साथ प्रचण्ड तेजस्वी सूर्य विरोध करते हैं ॥ १३८ ॥

द्वापरः साधुकारेण तद्विकारमदीदिपत् ।
प्रणीय श्रवणे पाणिमवोचन्नमुचेः रिपुः ॥ १३९ ॥

द्वापर इति । द्वापरः कलेः सहचारितृतीययुगाधिदेवः, साधुकारेण 'साधु' इति शब्दोच्चारणेन, तस्य कलेः, विकारं प्रलापम्, अदीदिपत् अचीवृधत् । दीप्यतेर्णौ चङि 'भ्राजभासभापदीपजीव—' इत्यादिना विकल्पादुपधाह्रस्वः, 'दीर्घो लघोः' इत्यभ्यासदीर्घः । अथ नमुचेः रिपुः इन्द्रः, श्रवणे कर्णे, पाणिं करम्, प्रणीय निधाय, पाणिभ्यां कर्णौ पिधाय इत्यर्थः । अवोचत् अचीकथत् ॥ १३९ ॥

द्वापर (तृतीय युगके अधिष्ठातृ देव) ने साधुकारसे (तुम्हारा विचार बहुत ठीक है, ऐसा कहनेसे) उस कलिके (नलके साथ विरोधरूप) विकारको प्रदीप्त कर दिया। फिर इन्द्र (उस वचनको श्रवण करनेमें भी दोष मानते हुएके समान) कानपर हाथ रखकर अर्थात् कानोंको हाथोंसे बन्दकर बोले ॥ १३९ ॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे ।
यद्दत्तेऽल्पमनल्पाय तद्दत्ते ह्रियमात्मने ॥ १४० ॥

विस्मेयेति । हे कले ! विस्मेयमतिः विस्मयनीयबुद्धिः, त्वमिति शेषः । अस्मासु वैलक्ष्यं सलज्जत्वम्, ईक्षसे पश्यसि, साधु 'जगतो ह्रीस्तु युष्माभिः' इति यदुक्तं तत् साधु उक्तम् इत्यर्थः । कुतः ? अनल्पाय महार्हाय, अल्पं स्तोकम् यत् दत्ते अर्पयति, तत् अल्पदत्तम्, आत्मने अल्पदात्रे जनाय, ह्रियं लज्जाम्, दत्ते जनयतीत्यर्थः । अधिकदानार्हाय अल्पदानस्य दातुरेव ह्रीकरत्वात् महते नलाय कीर्त्यादिकमल्पमेव प्रदत्तमित्यस्माकं लज्जा युक्तैवेति भावः ॥ १४० ॥

विस्मयनीय बुद्धि तुम जो हमलोगोंमें लज्जाको देखते हो वह ठीक ही है (दूसरेके हृद्गताभिप्रायको जाननेके कारण तुम्हारी बुद्धि हमलोगोंको विस्मित करती है)। बड़ेके लिये जो थोड़ा (या तुच्छ पदार्थको) दिया जाता है, वह (तुच्छ पदार्थका देना ही) अपने (दाताके) लिए लज्जाको देता है अर्थात् बड़ेके लिए तुच्छ पदार्थ देनेसे दाताको लज्जित होना पड़ता है। [ नल बहुत महान् हैं, अत एव उनके लिए हमलोगोंको कोई महान् पदार्थ देना चाहिये था, किन्तु हमलोग वैसा नहीं करके उनके लिए दमयन्तीको, कुछ कीर्त्तिको तथा वरोंको ही दे सके हैं; अत एव हमलोग इस तुच्छदानके करनेसे वास्तविकमें लज्जित हो रहे हैं और हमलोगोंका लज्जित होना तुमने पहचान लिया, इसलिए तुम्हारी पराशयवेदिनी बुद्धिपर हमलोगोंको विस्मय हो रहा है। इस प्रकार कहकर इन्द्रने नलके महत्त्वको अत्यधिक बढ़ा दिया। अथवा—अनल्प (जिसकी अपेक्षा छोटा नहीं है ऐसा अर्थात् अतिशय तुच्छ) तुम्हारे लिए जो हमने 'कस्कोऽयं धर्ममर्माणि कृन्तति (१७।८२)' इत्यादि

थोड़ा-सा उपालम्भ दिया, अत एव हमें लज्जा हो रही है, क्योंकि अधिक उपालम्भ देने-योग्य तुम्हारे लिए थोड़ा उपालम्भ देनेसे हम लज्जित हैं तथा इसे तुमने पहचान लिया, अतः पराशयवेदिनी तुम्हारी बुद्धि विस्मय उत्पन्न करती है। अथवा—अतिहीनके लिए जो कुछ थोड़ा दिया जाता है, वह देना दाताके लिए लज्जाको देता है, प्रकृतमें सम्भाषणके भी अयोग्य तुमको हमने जो उपालम्भ दिया, वास्तविकमें वैसा करना भी अनुचित होनेसे हम लज्जित हो रहे हैं और तुमने इसको जान ही लिया, अतः तुम्हारी उक्त बुद्धिपर हमें विस्मय हो रहा है ]॥ १४० ॥

**फलसीमां चतुर्वर्गं यच्छतांशोऽपि[1] यच्छति।**
**नलस्यास्मदुपघ्ना सा भक्तिर्भूताऽवकेशिनी ॥ १४१ ॥**

ततः किमत आह—फलेति। यच्छतांशः यस्याः भक्तेः, शततमांशः अपि। सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं त्रिभागवत्। फलसीमां फलावधिम्, चरमफलरूपमिति यावत्। चतुर्वर्गं धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयम्, यच्छति ददाति, नलाय दातुमर्हतीत्यर्थः। 'पाघ्रा—' इत्यादिना यच्छादेशः। वयम् उपघ्नः आश्रयः यस्याः सा अस्मदुपघ्ना अस्मद्विषया, 'उपघ्न आश्रये' इति निपातः। नलस्य नैषधस्य, सा प्रकर्षतां गता, भक्तिः सेवाविशेषः इत्यर्थः। अवकं शून्यम् ईष्टे इत्यवकेशिनी निष्फला। 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः 'ऋन्नेभ्यो ङीप्' इति ङीप्। 'बन्ध्योऽफलोऽवकेशी च' इत्यमरः। भूता सञ्जाता, नलस्यास्मद्विषयकभक्तेः शततमांशेनापि सन्तुष्टैरस्माभिः चतुर्वर्गोऽपि नलाय दातुं शक्यते, किन्तु चतुर्वर्गादधिकस्य फलस्याभावात् प्रकृष्टायास्तद्भक्तेरुचितफलस्य दातुमसामर्थ्यात् तद्भक्तिः निष्फलैव सञ्जातेत्यर्थः। तद्भक्तेः चतुर्वर्गदानरूपम् अपि फलं न पर्याप्तं किं पुनर्भैमीदानमिति ऋणिनाम् अस्माकं युक्ता एव ह्रीः इति भावः ॥ १४१ ॥

जिस भक्तिका शतांश भी फलकी चरम सीमा चतुर्वर्ग ( अर्थ, धर्म, काम और मोक्ष ) को ( नलके लिए ) देनेके लिए समर्थ है, हमलोगोंमें की गयी वह नलकी भक्ति निष्फल हो गयी। [ अपनेमें की गयी नलभक्तिके शतांशसे भी अति सन्तुष्ट होकर हमलोग उनके लिए सर्वोत्तम फल चतुर्वर्ग दे सकते थे, किन्तु इतनी अधिक की गयी नलकृत भक्तिसे भी हमलोगोंने उसके लिए केवल दमयन्तीको कुछ कीर्ति ( पूर्णश्लोकत्व ) तथा वरों ( १४।७०—९१ ) ही दिया; अत एव नलकी भक्ति निष्फल हो गयी। अथवा—जिस भक्तिके शतांशसे भी वशीभूत हमलोगोंसे प्राप्त-सामर्थ्य नल दूसरोंके लिए चरम फल चतुर्वर्गको भी देता ( दे सकता ) है, वह भक्ति ( तदधिक फल नहीं दे सकनेसे ) निष्फल हो गयी। अथवा पाठा०—वह नल भी चतुर्वर्गको देते हुए हमलोगोंके लिए किये जाते हुए कर्मोंके चरम फलको ब्रह्मार्पणरूपसे देता है, उसीके फिर प्रत्यर्पण करने ( लौटाने ) से नल तथा हमलोगों

१. 'यच्छतां सोऽपि' इति पाठान्तरम्।

में समानता ही रह गयी, किन्तु नलकी हमलोगोंमें निरतिशय भक्ति कर्ममात्रका ब्रह्मार्पण करनेसे फलाभिसन्धिरहित होनेके कारण निष्फल ही होगयी; इस कारणसे हमलोगोंका लज्जित होना उचित ही है ]॥ १४१ ॥

भव्यो न व्यवसायस्ते नले[1] साधुमतौ कले ! ।
लोकपालविशालोऽसौ निषधानां सुधाकरः ॥ १४२ ॥

भव्य इति । हे कले ! साधुमतौ रागद्वेषादिशून्यत्वात् पवित्रचेतसि, नले नैषधे, ते तव, व्यवसायः चेष्टितम्, विरोधकरणोद्योगः इत्यर्थः । न भव्यः न श्रेयः, न परिणामशुभावह इत्यर्थः । कुतः ? निषधानां निषधाख्यजनपदानाम्, सुधाकरः चन्द्रः, आह्लादकत्वात् चन्द्रसदृश इत्यर्थः । असौ नलः, लोकपालविशालः लोकपाला इन्द्रादयो दिक्पाला इत्यर्थः । तद्वत् विशेषेण शालते शोभते इति तादृशः, तदंशत्वात् इति भावः । अतः तदपकारो न परिणामश्रेयस्करः इति निष्कर्षः ॥ १४२ ॥

हे कले ! सद्बुद्धिमान् नलमें तुम्हारा उद्योग ( विरोध करना ) श्रेष्ठफलप्रद नहीं है । ( अथवा प्रथम पाठा०—हे असाधुबुद्धे कले ! नलमें……… । द्वितीय पाठा०—हे कले ! नलमें तुम्हारा उद्योग साधु ( सज्जन-सम्मत ) तथा श्रेष्ठ फलप्रद नहीं है ) । निषधदेशवासियोंका सुधाकर ( आह्लादक होनेसे चन्द्ररूप ) यह ( नल ) लोकपालोंके समान विशेषरूपसे शोभनशील है । (इस कारण ऐसे महापुरुषके अपकारकी वात सोचना अच्छा फल देनेवाला नहीं है ) ॥ १४२ ॥

न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति ।
निचिताखिलधर्मे च द्वापरस्योदयं वयम् ॥ १४३ ॥

नेति । किञ्च, क्षमाभृति पृथिवीपाले क्षान्तिशीले च, तस्मिन् नले, कलेः कलियुगाधिपतेः कलहस्य च । 'कलिः स्त्री कलिकायां न शूराजिकलहे युगे' इति मेदिनी । अवकाशं छिद्रम्, आक्रमणावसरमित्यर्थः । वयं न पश्यामः न ईक्षामहे, धर्मेण भूमिं पालयतः क्षान्तस्य कुतः कलिदोषः कलहो वेति भावः । किञ्च, निचिताः उपार्जिताः निश्चिताश्च, अखिलाः कृत्स्नाः, धर्माः पुण्यकर्माणि उपनिषदश्च, वेदस्य गूढार्थाः इत्यर्थः । येन तादृशे, नले द्वापरस्य भवन्मित्रस्य तृतीययुगस्य, सन्देहस्य च, उदयम् आक्रमणावकाशं प्रकाशञ्च, वयं न पश्यामः । 'द्वापरौ युगसंशयौ' इत्यमरयादवौ । क्षान्तिशीले नले कलहस्यावकाशो न, निश्चितसकलधर्मरहस्ये च नले धर्मसन्देहस्यापि उदयो न सम्भवतीत्यर्थः ॥ १४३ ॥

क्षमावान् ( पृथ्वीपति, या-क्षमा करनेवाले ) उस ( नल ) में कलि ( तुम्हारा, पक्षा०—कलहका ) अवकाश ( प्रवेश या अवसर ) हमलोग नहीं देखते हैं । और सम्पूर्ण धर्मोंके सङ्ग्रहकर्ता उस ( नल ) में द्वापर ( तेरे सहायक तृतीय युग, पक्षा०—सन्देह ) का भी

1. 'नलेऽसाधुमते' इति 'नले साधुमतः' इति च पाठान्तरम् ।

अवकाश हमलोग नहीं देखते हैं। [ नल क्षमाशील है, अतः, तुम्हें या कलहको उसमें स्थान मिलेगा, ऐसा हमलोग नहीं मानते, और इसी प्रकार वह नल सदा सर्वविध श्रौत-स्मार्त धर्मका पालन करनेवाला है, अतः द्वापर ( तुम्हारी सहायता करनेवाले तृतीय युग, या सन्देह ) को स्थान भी मिलेगा, ऐसा हमलोग नहीं मानते। क्षमा करनेवाले में कलह तथा शास्त्र-सम्मत सब धर्म पालनेवालेमें सन्देहको अवसर मिलना असम्भव होनेसे तुम दोनोंका नलके साथ विरोध करनेका प्रयत्न व्यर्थ ही होगा, ऐसा हमलोगोंका विचार है, अत एव तुमलोगोंको ऐसे असत्प्रयत्नका विचार छोड़ देना चाहिये। यद्यपि इन्द्र भविष्यमें होनेवाले नलके राजभङ्ग तथा दमयन्ती-विरहको जानते थे तथापि कलिके उत्साहको भङ्ग करनेके लिये उन्होंने वैसा कहा, अथवा—'न पश्यामः' ( हमलोग नहीं देखते हैं ) ऐसी वर्तमानकलिक क्रियासे निकट भविष्यमें तुम्हें या द्वापरको उक्त गुणवाले नलमें अवकाश नहीं होगा ऐसा इन्द्र सूचित कर रहे हैं ] ॥ १४३ ॥

**सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो ! ।**
**कथं भवद्विधैर्बाध्या प्रमितिर्विभ्रमैरिव ? ॥ १४४ ॥**

**सेति । किञ्च, विनीततमा अतिशयेन विनम्रा, उपमानपक्षे च—विनीतं निराकृतं, तमः अज्ञानं यया सा भ्रमज्ञाननिरासिनीत्यर्थः । सा भैमी दमयन्ती, व्यर्थः निष्फलः, अनर्थग्रहः वैराचरणरूपाकार्याभिनिवेशः येषां तादृशैः. पक्षान्तरे च—व्यर्थो निष्फलः, अनर्थस्य शुक्तौ रजतादेः निष्प्रयोजनस्य, ग्रहो ज्ञानं येषां तादृशैः, भवद्विधैः युष्मादृशैः, प्रमितिः प्रमाज्ञानम्, सम्यगनुभूतिरिति यावत् । विभ्रमैः मिथ्याज्ञानैः इव, कथं केन प्रकारेण, बाध्या बाधितुं पीडयितुं शक्या ? नैव शक्येत्यर्थः । अहो ! इत्याश्चर्ये; पातिव्रत्यतेजसो दुर्द्धर्षत्वादिदि भावः ॥ १४४ ॥**

जिस प्रकार ( शुक्तिमें रजतज्ञानको दूर करनेवाले ) प्रमाज्ञानको ( रजतमें शुक्तिका ... ) विशिष्ट भ्रम ज्ञान नहीं बाधित कर सकते, उसी प्रकार अतिशय विनम्र उस ( दमयन्ती ) को व्यर्थ ही वैराचरणरूप दुराग्रहवाले तुम्हारे-जैसे लोग किस प्रकार बाधित ( पीडित ) कर सकते हैं ? अहो ! आश्चर्य ( या-खेद ) है। [ प्रमात्मक ज्ञानको भ्रमात्मक ज्ञानके समान विनीततम पतिव्रता दमयन्तीको व्यर्थ विरोधाचरणके दुराग्रही तुमलोग नहीं बाधित कर सकते, अहो ! आश्चर्य ( या-खेद ) है कि तुमलोग ऐसा दुष्प्रयत्न करना चाहते हो। 'भवद्विधैः' इस बहुवचनान्त पदसे तुम्हारे जैसे अनेक लोग भी उस दमयन्तीको पीडित नहीं कर सकते तो अकेले तुम कैसे कर सकते हो ? अत एव साध्वी दमयन्तीको पीडित ( नलसे पृथक्कर दुःखित ) करनेका दुर्विचार तुम्हें छोड़ देना चाहिये ] ॥ १४४ ॥

**तं नासत्ययुगं तां वा त्रेता स्पर्द्धितुमर्हति ।**
**एकप्रकाशधर्माणं न कलिद्वापरौ ! युवाम् ॥ १४५ ॥**

**तमिति । कलिद्वापरौ ! हे युगविशेषौ !, एकः केवलः, प्रकाश उज्ज्वलः प्रसिद्धो**

वा, धर्मो न्यायः, न्यायविचार इत्यर्थः। पुण्यं वा स्वभावो वा यस्य तम् एकप्रकाशधर्माणम्, एतत् दमयन्त्यामपि योज्यम्। 'धर्मादनिच् केवलात्' इत्यनिच्। 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इत्यमरः। तं नलम्, तां दमयन्तीं वा, नासत्ययुगं न असत्यं नासत्यं किन्तु सत्यमेव, युगं सत्ययुगमित्यर्थः। तथा त्रेता त्रेतायुगमपि, स्पर्द्धितुमर्हति तुलयितुं योग्यं भवति, न तु जेतुमिति भावः। युवां कलिद्वापरौ युगे, न, तं तां वा स्पर्द्धितुं नार्हथ इति विभक्तिविपरिणामेनान्वयः। अथवा—असत्यस्य युगं कृतयुगापेक्षया अधर्मयुगम्, त्रेता युगविशेषः अग्नित्रयञ्च। 'त्रेताऽग्नित्रितये युगे' इत्यमरः। स्पर्द्धितुं नार्हति, नासत्ययोर्युगमश्विनोर्द्वयञ्च, तं नलम्, स्पर्द्धितुम् अर्हति सौन्दर्येणेति च गम्यते। सुतरां युवां कलिद्वापरौ न स्पर्द्धितुमर्हथ इत्यर्थः॥ १४५॥

हे कलि तथा द्वापर युग! एक प्रसिद्ध (या–उज्ज्वल) धर्म (पुण्य, या–स्वभाव) वाले उस (नल) को तथा एक प्रसिद्ध धर्मवाली उस (दमयन्ती) को सत्ययुग समानता कर सकता है, (चतुर्थांश धर्महीन) त्रेतायुग स्पर्द्धा तो कर सकता है किन्तु जीत नहीं सकता और तुम दोनों (द्वापर तथा कलियुग) तो (अतिशय हीन होनेसे) स्पर्द्धा भी नहीं कर सकते हो। (अथवा—उक्त गुणवाले उस नल तथा दमयन्तीके साथ सत्ययुग तया त्रेतायुग तो स्पर्द्धाकर सकते हैं, किन्तु तुम दोनों स्पर्द्धा भी नहीं कर सकते। (अथवा—(सत्ययुगकी अपेक्षा अधर्मयुक्त होनेसे) असत्य युग त्रेता उन दोनोंके साथ स्पर्द्धा कर सकता है······। [अथवा—नासत्य=अश्विनीकुमार का युग=जोड़ी अर्थात् अश्विनीकुमारद्वय तथा त्रेता (गार्हपत्य, आहवनीय और दक्षिण नामसे प्रसिद्ध अग्नित्रय) मुख्य प्रसिद्ध (या–उज्ज्वल) धर्म (शरीर सौन्दर्य, या तेज) वाले उस नल तथा वैसी ही दमयन्तीके साथ स्पर्द्धा कर सकते हैं अर्थात् सम्मिलित दोनों अश्विनीकुमार और सम्मिलित तीनों अग्नि क्रमशः शरीर–सौन्दर्य तथा तेजसे युक्त गुणवाले नल–दमयन्तीके साथ स्पर्द्धा कर सकते हैं (फिर भी जीत नहीं सकते) और उनमेंसे कोई अकेला तो स्पर्द्धा भी नहीं कर सकता, जीतना तो दूर रहे और तुम दोनों पापाधिक्ययुक्त होनेसे स्पर्द्धा भी नहीं कर सकते हो। अथवा—पूर्णतः प्रकृष्ट शोभमान धर्मवाले नल तथा वैसी दमयन्तीके साथ सत्ययुग (अन्तिम समय सत्ययुगमें भी असत्यका कुछ अंश आजानेसे और (चतुर्थांश असत्ययुक्त होनेसे) त्रेतायुग भी स्पर्द्धा नहीं कर सकते तो फिर तुम दोनों (कलि तथा द्वापर युग) तो अत्यधिक असत्यांशयुक्त होनेसे उक्त गुणवाले उन नल–दमयन्तीके साथ कदापि स्पर्द्धा करनेके योग्य भी नहीं हो। अथवा—पुरुष कलि तथा द्वापरका नलके साथ और स्त्री त्रेताका दमयन्तीके साथ स्पर्द्धा करनेका सम्बन्ध करना चाहिये। अथवा—विरुद्ध तथा अनिश्चित धर्मके होने पर वहां कलह तथा सन्देह हो सकते हैं, किन्तु नल तथा दमयन्ती तो शास्त्रानुकूल एवं निश्चित प्रकृष्ट धर्मवाले हैं, अत एव वहां तुम दोनोंको अवसर नहीं होनेसे उनके साथ तुम दोनों स्पर्द्धा नहीं कर सकते]॥ १४५॥

करिष्येऽवश्यमित्युक्त्वा[1] करिष्यन्नपि दुष्यसि ।
दृष्टादृष्टा हि नायत्ताः कार्य्यीया हेतवस्तव ॥ १४६ ॥

करिष्येति इति । हे कले ! अवश्यं निश्चितम्, करिष्ये विधास्यामि, इत्युक्त्वा एवं कथयित्वा, सर्वथा पापं करिष्यामि इति प्रतिज्ञाय इत्यर्थः । करिष्यन् अपि चिकीर्षुरपि, दुष्यसि दुष्टोऽसि, किमुत कृत्वा इति भावः । हि तथा हि, कार्यस्य इमे कार्यीयाः कार्योत्पादनयोग्याः । 'वृद्धाच्छः' दृष्टादृष्टा लक्षितालक्षिताः, हेतवः कारणानि, दण्डचीवरादयो दृष्टहेतवः, कालकर्मेश्वरेच्छादयोऽदृष्टा हेतवः इत्यर्थः । तव ते, आयत्ताः अधीनाः, न, किन्तु तत्तत्कार्योत्पादिका सामग्री कालवशाददृष्टवशाच्च स्वयमेव सम्पाद्यते, न तु त्वया सम्पादयितुं शक्या, तथा च करिष्येऽवश्यमित्युक्त्वा पापकार्येऽकृतेऽपि मनसि तच्चिन्तया मुखे तदुच्चारणेन च भवद्विधानां पातकं जातमिति भावः ॥ १४६ ॥

'( मैं नलका अपकार ) करूंगा' ऐसा कहकर उसे करनेकी इच्छा करते हुए भी तुम दोषी होवोगे । ( अथवा—·········उसे नहीं करनेकी इच्छा करते········· । क्योंकि—प्रथम पक्षमें—नलापकार करनेको कहकर यदि उसे करने की इच्छा करोगे तो पुण्यात्मा नलके अपकारकी भावना मनमें तथा कार्यरूपमें करनेसे भी तुम्हें दोष होगा, और दूसरे पक्षमें—नलापकार करनेको कहकर नहीं करनेको इच्छा करोगे तो भी प्रतिज्ञाभङ्ग करनेके कारण तथा महात्मा नलका अपकार करनेको कहनेके कारण वाचिक दोष होगा, और नलापकार यदि करोगे तो दोष होगा इस विषयमें सन्देह ही क्या रह जाता है ? ) । क्योंकि ( घटादि ) कार्य-सम्बन्धी दृष्ट ( मिट्टी, चक्र, दण्ड, चीवर, चक्र, जल आदि ) और अदृष्ट ( देश, काल, ईश्वरेच्छा आदि ) कारण तुम्हारे अधीन नहीं हैं । [ कार्य-साधक दृष्ट सामग्रीको ही तुम जुटा सकते हो, अदृष्ट सामग्रीको नहीं, अत एव यदि नल-दमयन्तीके भाग्यमें दुःख नहीं लिखा होगा तो उन्हें पीडित करनेकी इच्छा करके भी तुम उस प्रकार दोषभागी बनोगे ही, जिस प्रकार ब्रह्महत्यादि पाप करनेकी इच्छा करके उसे नहीं करनेवाला भी मनुष्य पापभागी होता है । इसके विपरीत यदि नल-दमयन्तीके भाग्यमें दुःख होना लिखा ही होगा तो वह तुम्हारे उद्योग नहीं करनेपर भी होगा ही, किन्तु उसमें निमित्त बननेसे तुम्हें दोषभागी होना पड़ेगा । इस कारण नल-दमयन्तीके अपकार करनेकी भावना तुम्हें नहीं करनी चाहिये ] ॥ १४६ ॥

द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः ।
तत्पापसम्भवं तापमाप्नुयादनयात् ततः ॥ १४७ ॥

द्रोहमिति । किञ्च, यः यो जनः, मोहेन अज्ञतावशेन, मौर्ख्यतया इत्यर्थः । तस्मिन् नले विषये, द्रोहम् अपकारम्, आचरेत् विदधीत, सः जनः, अचिरेण शीघ्र-

1. '···त्युक्तिः' इति पाठान्तरम् ।

मेव ततः तस्मात्, अनयात् दुर्नयात् हेतोः, तत्पापसम्भवं नलद्रोहजन्यपातकसम्भूतम्, तापं तीव्रयातनाम्, आप्नुयात् लभेत ॥ १४७ ॥

जो उस ( पुण्यश्लोक नल ) के विषयमें अज्ञानसे ( भी ) द्रोह करता है, वह उस ( द्रोहके करने ) से उस पापसे उत्पन्न सन्तापको शीघ्र ही प्राप्त करता है । [ अथवा—हे मोहेन = मोह + ईन = मोहाधिपते अर्थात् महामूर्ख कलि ! यदि अज्ञानसे भी नलके साथ द्रोह करनेवाला शीघ्र सन्तापको पाता है तो तुम ज्ञानपूर्वक उनके साथ द्रोह करके सन्ताप नहीं पावोगे यह हो ही नहीं सकता; अत एव तुम्हें नल द्रोह-भावनाको सर्वथा छोड़ देनी चाहिये ] ॥ १४७ ॥

युगशेष ! तव द्वेषस्तस्मिन्नेष न साम्प्रतम्[1] ।
भविता न हितायैतद्वैरं ते वैरसेनिना ॥ १४८ ॥

युगेति । युगशेष ! युगानां सत्यादीनां शेषः चरम ! हे कले !, तस्मिन् नले तव ते, एषः अयम्, द्वेषः द्रोहबुद्धिः, न साम्प्रतं न युक्तम्, वैरसेनिना नलेन सह, एतत् वैरं विरोधः, ते तव, हिताय मङ्गलाय, न भविता न भविष्यति ॥ १४८ ॥

हे अन्तिम युग ( कलि ) ! उस ( नल ) के विषयमें तुम्हारा यह द्वेष अनुचित ( अथवा—असामयिक ) है, वीरसेन-पुत्र ( नल ) के साथ यह विरोध तुम्हारे हितके लिए नहीं होगा ॥ १४८ ॥

तत्र यामीत्यसज्ज्ञानं राजसं परि[2]हार्य्यताम् ।
इति तत्र गतो मा गा राजसंसदि हास्यताम् ॥ १४९ ॥

तत्रेति । हे कले ! तत्र स्वयंवरे, यामि यास्यामि, सामीप्ये वर्त्तमानप्रयोगः । इति एवम्भूतम्, राजसं रजःप्रयुक्तम्, असत् ज्ञानं दुर्बुद्धिः, परिहार्य्यतां निरस्यताम्, इति असज्ज्ञानात्, तत्र राजसंसदि राजसभायाम्, गतः उपस्थितः सन्, हास्यताम् उपहास्यताम्, मा गाः न गच्छेः ॥ १४९ ॥

'( मैं ) वहां ( स्वयंवर सभामें ) जाता हूँ' ऐसे अशुभ एवं राजस विचारको छोड़ दो ( पाठा०—········राजस वर्तमान विचारको यहीं पर छोड़ दो । अथवा—········ऐसा विचार राजस होनेसे अशुभ है, ( इस कारण उस विचारको छोड़कर ) यहीं रहो अर्थात् स्वयंवरमें मत जाओ, यही शुभ है ) । उस राजसभामें जाकर हास्यभावको मत प्राप्त करो ॥ १४९ ॥

( गत्वान्तरा नलं भैमीं नाकस्मात्त्वं प्रवेद्‌यसि ।
षण्णां चक्रमसंयुक्तं पठ्यमानं ङ[3]कारवत् ॥ १ ॥[4] )

---

१. 'साम्प्रतः' इति पाठान्तरम् । २. 'सदिहास्यताम्' इति पाठान्तरम् ।
३. 'टकारवत्' इति पाठान्तरम् । ४. अयं श्लोकः क्षेपक इति 'प्रकाश'कृता स्वयमेव स्वीकृतम्, अत एव मल्लिनाथेनायं श्लोको न व्याख्यात इत्यतो मया 'प्रकाश' व्याख्यया सहैवायमिहोपस्थापित इत्यवधेयम् ।

गत्वेति । हे कले ! निषधदेशान् गत्वा प्राप्य नलं भैमीमन्तरा नलभैम्योर्मध्येऽकस्माच्छीघ्रं दुरितलक्षणकारणमन्तरेण वा त्वं न प्रवेक्ष्यसि । नलस्य पुण्यश्लोकत्वात्, भैम्याश्च पातिव्रत्यादिधर्मयुक्तत्वात्, तौ पराभवितुं न शक्नोषीत्यर्थः । इव—असंयुक्तं पूर्वं विसन्धितया पृथक्कृतप्रकृतिप्रत्ययविभागं पश्चात्पठ्यमानं संहितया प्रयोगार्हम् । उच्चार्यमाणमिति यावत् । एवम्भूतं षण्णां चक्रं षण्णामिति शब्दस्वरूपस्थवर्णवृन्दमन्तरा मध्ये डकारवत् । डकारो वर्णो यथाऽकस्माद्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा । 'षष्' शब्दात् 'षट्चतुर्भ्यश्च' इति नुटि तत्सहित आमि 'स्वादिष्वसर्वनामस्थाने' इति पूर्वपदस्य पदत्वात् 'झलां जशोऽन्ते' इति जश्त्वेन षकारस्य डकारे 'न पदान्तात्' इति निषेधस्य 'अनाम्नवति–' इति निषेधात् 'ष्टुना ष्टुः' इति ष्टुत्वेन नाम्नकारस्य णकारादेशे 'यरोऽनुनासिके–' इति डकारस्याप्यनुनासिकस्य व्यवस्थितविकल्पत्वादनुनासिकस्यात्र नित्यत्वेन णकारे जाते सर्वथापि न स्वेन रूपेण 'षण्णाम्' इति पदमध्ये डकारो यथा प्रवेशं लभते, तथा तयोर्मध्ये त्वमपीत्याशयः । अन्यथा विकल्पत्वात्पक्षे 'षड्णाम्' इति स्यात्तन्मा भूदित्यत्र व्यवस्थितविभाषाऽङ्गीकरणीया । षण्णां चेति चकारो भैमीं चेति योज्यः । तथा च—*क्रमेण परिपाट्यां संयुक्तं षण्णामिति कर्मभूतं शब्दस्वरूपमन्तरा डकारो यथा न* प्रविशति । असंयुक्तावस्थायां यद्यपि स्वेन रूपेणावस्थानं वर्तते, तथापि संयुक्तावस्थायां नास्तीत्यर्थ इति वा । षण्णामित्यत्र प्रकृतिप्रत्ययदशायामकस्मादागन्तुकादेशरूपतया डकारो यथा प्रविशति, तथा त्वं न प्रविशसि इति वैधर्म्योपमया वा व्याख्येयम् । 'टकारवत्' इति पाठे 'वाऽवसाने' इत्यवसान इव चर्त्वविकल्पात्, खरश्चाभावात् षट्, षट्स्वित्यादिवत् षण्णामित्यत्र खरवसानयोरभावाट्टकारो यथा न प्रविशतीति साधर्म्योपमैव । क्षेपकोऽयम् । नलं भैमीम् 'अन्तराऽन्तरेण—' इति द्वितीया ॥ १ ॥

तुम ( निषध देशको ) जाकर भी नल तथा दमयन्तीके मध्यमें एकाएक ( अतिशीघ्र, या उनके अशुभोदयके विना, पक्षा०—विना विकृतरूप धारण किये ) उस प्रकार नहीं प्रवेश पावोगे, जिस प्रकार ( पहले ) असंयुक्त (तथा बादमें संहिता कार्य अर्थात् सिद्धि करके) पढ़े जाते हुए 'षण्णाम्' पदके अक्षर–समुदायके मध्यमें ( आदेश रूप विकार होनेके विना ) डकार नहीं प्रवेश पाता है । [ जिस प्रकार पहले ( षष् न् आम्, या षड् न् आम् इस असंयुक्तावस्थामें ) रहनेवाला डकार विना 'ण' कररूप विकार प्राप्त किये सिद्ध हुए 'षण्णाम्' प्रयोगमें प्रवेश नहीं पाता अर्थात् 'षड्णाम्' ऐसा रूप नहीं बनता, उसी प्रकार नल तथा दमयन्तीके बीचमें तुम भी विना विकृत हुए ( रूपान्तर धारण किये ) प्रवेश नहीं पा सकोगे । अथवा—'षण्णाम्' प्रयोगके मध्यमें जिस प्रकार 'ड'कार 'ण' आदेशरूप विकारको पाकर प्रवेश कर जाता है, उस प्रकार तुम नल तथा दमयन्तीके मध्यमें प्रवेश नहीं कर सकोगे, इस प्रकार वैधर्म्योपमासे अर्थ करना चाहिये ] ॥ १ ॥

अपरेऽपि दिशामीशा वाचमेनां शचीपतेः ।
अन्वमन्यन्त किन्त्वेनां नादत्त युगयोर्युगम् ॥ १५० ॥

अपरे इति । दिशां ककुभाम्, अपरे अन्ये, ईशाः अधिपाः, अग्न्यादयोऽपीत्यर्थः । शचीपतेः इन्द्रस्य, एनां पूर्वोक्ताम्, वाचम् उपदेशवचनम्, अन्वमन्यन्त अन्वमोदन्त, इन्द्रवाक्यं युक्ततया अभ्यनन्दन् इत्यर्थः । तेऽपि तथैव ऊचुः इति भावः । किन्तु एनां वाचम्, युगयोः कलिद्वापरयोः, युगं युग्मम् । कर्तृ, न आदत्त न अगृह्णात्, न स्वीचकार इत्यर्थः ॥ १५० ॥

दूसरे ( अग्नि, यम, वरुण ) दिक्पालोंने भी इन्द्रके वचनका अभिनन्दन ( 'इन्द्रका कथन ठीक है' ऐसा समर्थन ) किया, किन्तु वे दोनों युग ( कलि तथा द्वापर ) इसको स्वीकार नहीं किये । [ देवराज इन्द्रके कहे हुए तथा दिक्पालोंसे समर्थित वचनको भी ग्रहण नहीं करनेसे 'किन्तु' शब्दद्वारा कलि तथा द्वापर युगोंकी महामूर्खता सूचित होती है ] ॥ १५० ॥

कलिं प्रति कलिं देवा देवान् प्रत्येकशः कलिः ।
सोपहासं समैर्वर्णैरित्थं व्यरचयन्मिथः ॥ १५१ ॥

कलिमिति । देवाः इन्द्रादयः, कलिं कलियुगं प्रति, कलिश्च देवान् प्रति एकशः प्रत्येकम् वीप्सायां शस् । समैः वर्णैः उभयसाधारणशब्दैः, श्लिष्टाक्षरैरित्यर्थः । इत्थं वक्ष्यमाणभङ्ग्या, मिथः परस्परम्, सोपहासम् उपहाससहितम्, कलिं कलहम्, व्यरचयन् अकुर्वन् ॥ १५१ ॥

देव ( इन्द्र, अग्नि, यम और वरुण ) कलियुगके साथ तथा कलियुग प्रत्येक देवों ( इन्द्रादि चारों देवों ) के साथ परस्परमें उपहासपूर्वक समान ( श्लिष्ट ) अक्षरोंसे इस प्रकार ( १७।१५२–१५५ ) कलह ( विवाद ) करने लगे [ इन्द्रादि प्रत्येक देवने जिस वचनसे कलियुगका उपहास किया, कलिने भी उसी वचनसे इन्द्रादि प्रत्येक देवका उपहास किया ] ॥

तत्रागमनमेवार्हं वैरसेनौ तया वृते ।
उद्वेगेन विमानेन किमनेनापि धावता ? ॥ १५२ ॥

कलहप्रकारमेवाह—तत्रेति । हे कले ! तया भैम्या, वैरसेनौ नले, वृते भर्तृत्वेन स्वीकृते सति, तत्र स्वयंवरे, अगमनम् अप्रयाणम् एव, अर्हं युक्तम्, अत एव उद्वेगेन उत्कटजवेन, धावता शीघ्रं गच्छता, अनेन विमानेन व्योमयानेन, किम् ? किं प्रयोजनम् ? इदानीं तत्र गमनं निष्फलमित्यर्थः ।

अन्यत्र—हे इन्द्र ! तत्र स्वयंवरे, तया वैरसेनौ वृते सति आगमनं ततः प्रत्यावर्त्तनमेव, गमेर्ण्यन्तात् ल्युट् । अर्हं युक्तम्, अथवा, अगमनमेव स्वर्गं प्रति गमनाभाव एव, अर्हं भैमीलाभार्थं पृथिव्यागतैः भवद्भिर्व्यर्थमनोरथत्वेन इन्द्राण्यादिसविधे मुखं दर्शयितुमशक्यत्वात् सर्वथा स्वर्गो न गन्तव्य एवेति भावः । तथा अपिधा

अपिधानम्, आच्छादनमित्यर्थः, 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः । तद्वता आच्छादनवता, निगूहितेन इत्यर्थः । विमानेन मानरहितेन, अनेन मुखदर्शनानुमितेन, उद्वेगेन चित्तचाञ्चल्येन, अपमानजनितमनःक्षोभेणेत्यर्थः । किम् ? अलम्; तद्गोपनं व्यर्थमेवेत्यर्थः । धैर्यावलम्बनेन भैम्यलाभजन्यदुःखं संवृतमपि मया भावदर्शनादिना सम्यगनुमितमेव, सुतरां दुःखगोपनं व्यर्थमेवेति भावः । अत्र द्वयोः अर्थयोः प्रकृतत्वात् केवलप्रकृतश्लेषः ॥ १५२ ॥

( इन्द्रने कलिसे कहा— ) उस ( दमयन्ती ) के द्वारा नलको वरण कर लेने पर वहां ( स्वयंवरमें ) तुम्हारा नहीं जाना ही उचित है, ( अत एव ) तीव्रगामी और दौड़ते हुए इस विमान ( आकाशगामी रथ ) से भी क्या लाभ है ? अर्थात् जब दमयन्तीने नलको वरण कर लिया तब तीव्रगामी विमानसे जानेमें पर भी कोई लाभ नहीं है, अत एव तुम वहांपर मत जावो । [ अथवा—उस दमयन्तीद्वारा नलको नहीं वरण करनेपर तुम्हारा वहां पहुंचना उचित था । उस समय पहुंचनेपर यथाकथञ्चित् सम्भव था कि वह तुम्हें ही वरती, किन्तु नलको वर लेनेपर अब शीघ्रगामी रथसे भी जाना व्यर्थ ही है, अर्थात् तुम अबतक कहां थे ! जो समय बीतनेपर व्यर्थ ही जानेकी शीघ्रता कर रहे हो । इस प्रकार इन्द्रने कलिका उपहास किया ] ॥

( कलिने इन्द्रसे कहा— ) वहां ( स्वयंवरमें ) उस ( दमयन्ती ) के द्वारा नलका वरण किये जानेपर तुम्हारा लौटना ही उचित है [ अथवा—(स्वर्गको) नहीं जाना ही उचित है ( क्यों कि इन्द्राणी का त्यागकर दमयन्तीके साथ विवाह करनेके लिए पृथ्वी लोकपर आकर उसके वरण नहीं करनेपर कौन–सा मुख इन्द्राणीको दिखलावोगे ? ) तथा छिपाये जाते हुए ( अथवा—नहीं छिपाये जाते हुए अर्थात् स्पष्टतया परिलक्षित होते हुए ) मानहीन इस तीव्र व्याकुलतासे क्या ( लाभ ) है ? ( धैर्यावलम्बनादिके द्वारा दमयन्तीको नहीं पानेका दुःख मुझसे छिपाना व्यर्थ है, क्योंकि तुम्हारे छिपानेपर भी दुःखको मैने मालूम कर लिया है ) । अथवा—हे विमानेन ( विमान + इन = अपमानितोंके स्वामी अर्थात् अतिशय अपमानीत इन्द्र ) ! ] ॥ १५२ ॥

पुरा यासि वरीतुं यामग्र एव तया वृते ।
अन्यस्मिन् भवतो हाऽऽस्यं वृत्तमेतत्त्रपाकरम् ॥ १५३ ॥

पुरेति । हे कले ! यां भैमीम्, वरीतुं पत्नीत्वेन स्वीकर्त्तुम्, पुरा आगामिनि, शीघ्रमेवेत्यर्थः । यासि यास्यसि, 'यावत्पुरा–' इति भविष्यति लट् । 'निकटागामिके पुरा' इत्यमरः । तया भैम्या, अग्रे एव तवागमनात् प्राक् एव, अन्यस्मिन् पुरुषान्तरे, वृते स्वीकृते सति, त्रपायाः लज्जायाः, आकरम् आकरायितमित्यर्थः । वृत्तं जातम्, एतत्

---

१. 'हास्यम्' इति पाठान्तरम् ।

पुरोवर्ति, भवतः तव, आस्यं मुखम्, हा ! शोचामः इत्यर्थः । 'अभितः परितः—' इत्यादिना हा-शब्दयोगे द्वितीया । 'हा विषादशुगर्त्तिषु' इत्यमरः ।

अन्यत्र—हे वह्ने ! पुरा पूर्वम्, यां वरीतुम्, यासी अयासीः, 'पुरि लुङ् चास्मे' इति भूते लट् । त्वमिति शेषः । तया अग्रे एव तव समक्षमेव, अन्यस्मिन् नले, वृते सति भवतस्तव, एतत् प्रत्यक्षदृश्यम्, वृत्तं वर्त्तुलाकारम्, आस्यं मुखम्, त्रपामाकरोतीति त्रपाकरं लज्जाकरम्, जातमिति शेषः, अत एव हा ! शोचामीत्यर्थः ॥ १५३ ॥

( अग्निने कलिसे कहा— ) तुम जिस ( दमयन्ती ) को वरण करनेके लिए जावोगे, उससे दूसरे ( नल ) के पहले ही वरण कर लिये जानेपर लज्जाका आकर यह तुम्हारा मुख हो गया, हा ! [ इसके लिए हम दुःख प्रकट करते हैं । अथवा पाठा०—······ जाने पर तुम्हारा यह ( स्वयंवरमें जाना ) लज्जा करनेवाला ( या-लज्जाकी खान ) हास्य हो गया । अथवा—······तुम्हारा यह वृत्त ( आचरण—स्वयंवरमें जाना ) लज्जाकारक और हास्य का कारण होगा । दमयन्तीके द्वारा नलका वरण कर लिये जानेपर अब स्वयंवरमें तुम्हारे जानेसे तुम्हें लज्जित होना पड़ेगा और लोग तुम्हारा उपहास करेंगे, अत एव तुम वहां मत जावो ] ॥

( कलिने अग्निसे कहा— ) पहले जिस ( दमयन्ती ) को वरण करनेके लिए तुम गये थे, उसके द्वारा ( तुम्हारे ) सामने ही दूसरे ( नल ) को वरण कर लिये जानेपर यह गोलाकार मुख लज्जाकारक ( अथवा—लज्जाका आकर = खान ) हो गया, हाय ! [ इसका मैं शोक कर रहा हूं । अथवा—······जानेपर यह तुम्हारा वृत्त ( स्वर्गको पुनः प्रत्यावर्तन-रूप आचरण ) त्रपाऽकर ( अलज्जाकारक ) है ? अर्थात् कदापि नहीं, अत एव ऐसी घटना होनेपर तुम्हें लज्जा होनी ही चाहिये । अथ च अपनी स्त्री ( स्वाहा ) को स्वर्गमें जाकर कैसे अपना मुख दिखलावोगे ! हाय खेद है । अथवा—पहले ( स्वयंवरमें अपने पहुंचनेके पूर्व ) रत्नादिका उपहार भेजकर जिस दमयन्ती के पास गये थे,······ । अथवा—तुम्हारा मुख तथा आचरण-दोनों ही लज्जाकारक हैं ] ॥ १५३ ॥

पत्यौ तया वृतेऽन्यस्मिन् यदर्थं गतवानसि ।
भवतः कोपरोधस्तादक्षमस्य वृथारुषः ॥ १५४ ॥

पत्याविति । हे कले ! यदर्थं यद्भैमीनिमित्तम् गतवान् गमनवान्, गमनपरः इत्यर्थः, भावविहितगतशब्दात् मतुप्प्रत्ययः । असि भवसि, यां वरीतुं गच्छसीत्यर्थः। तया भैम्या, अन्यस्मिन् पत्यौ पूर्वमेव वृते सति, अक्षमस्य प्रतीकाराशक्तस्य, अत एव वृथारुषः निष्फलकोपस्य, भवतः तव, कोपरोधः क्रोधस्य उपशमः, स्तात् अस्तु, इदानीं कोपो न कार्य इत्यर्थः। अस्तेर्लोटि तातङादेशः ।

अन्यत्र तु—हे यम ! यदर्थं गतवानसि पूर्वं गतोऽसि, भूते क्तवतुः । अक्षमस्य भवतः तव, अधस्तात् अधरः, हीनः इत्यर्थः, 'दिक्छब्देभ्यः सप्तमी—' इत्यादिना अधरशब्दात् प्रथमार्थे अस्तातिप्रत्ययः, 'अस्ताति च' इत्यधरस्याधादेशः, 'पष्ठयत-

सर्थप्रत्ययेन' इति तद्योगे षष्ठी । अपरः कः ? अन्यः कः ? त्वत्तः अधमः कश्चिन्नास्ति इत्यर्थः । समानमन्यत् ॥ १५४ ॥

( यमने कलिसे कहा— ) जिस ( दमयन्ती ) के लिए गतवान् गमन करनेमें प्रयत्नवान् हो अर्थात् जिसके लिए जा रहे हो, उस ( दमयन्ती ) के द्वारा दूसरे पति ( नल ) को वरण किये जानेपर असमर्थ ( अथवा—क्षमाहीन ) और व्यर्थ क्रोध करनेवाले तुम्हारे क्रोध का अवरोध हो अर्थात् तुम्हारा क्रोध रुके ( तुम क्रोध मत करो )। [ यद्यपि नलने तुम्हारा कोई अपकार नहीं किया है, तथापि क्षमाहीन होकर ( या असमर्थ होकर भी ) व्यर्थ क्रोध करनेवाले तुमको क्रोध नहीं करना चाहिये ] ॥

( कलिने यमसे कहा— ) जिस ( दमयन्ती ) के लिए तुम गये थे, उसके द्वारा दूसरे पति ( नल ) का वरण किये जानेपर असमर्थ एवं व्यर्थ क्रोधवाले तुमसे हीन ( नीच या तुच्छ ) दूसरा कौन है ? अर्थात् कोई नहीं। [ अथवा—तुमसे हीन कौन होवे ? ( इस पक्षमें 'स्तात्' क्रिया पद पृथक् समझना चाहिये )। अथवा—"'जानेपर तुमसे हीन कौन होवे ? ( क्योंकि ) अक्षम ( भूमि-स्पर्श नहीं करनेवाले अर्थात् देव ) तुम्हारा क्रोध ( १७।९५ ) व्यर्थ है ( हमारे-जैसे लोगोंका ही क्रोध करना सफल है, न कि तुमलोगोंका )। अथवा—तुमसे हीन कौन है ? ( अत एव ) हे अक्षम ( असहनशील यम ) ! व्यर्थमें ( हमलोगोंके प्रति ) क्रोधको नष्ट करो अर्थात् हमलोगोंके प्रति क्रोध मत करो । इस अर्थमें 'षोऽन्तकर्मणि' धातुके लोट् लकारके मध्यम पुरुषके एक वचनका 'स्य' क्रियापद पृथक् समझना चाहिये ] ॥ १५४ ॥

यासि स्मरं जयन् कान्त्या योजनौघं महार्वता ।
समूढस्त्वं वृतेऽन्यस्मिन् किं न ह्रीस्तेऽत्र पामरः ! ? ॥ १५५ ॥

यासीति । पामर ! हे नीच ! कले ! 'विवर्णः पामरो नीचः' इत्यमरः। त्वं कान्त्या सौन्दर्येण, स्मरं कन्दर्पम्, जयन् अधरीकुर्वन्, प्रसाधनविशेषेण स्मरादपि अधिकरूपवान् सन् इत्यर्थः। तथा महार्वता महाश्वेन, विमानेन इति शेषः। समूढः सम्यक् वाहितश्च सन्, योजनानां चतुष्क्रोशाध्वमानानाम्, ओघं समूहम्, बहुयोजनमित्यर्थः । 'योजनं परमात्मनि। चतुष्क्रोश्याञ्च योगे च' इति मेदिनी। यासि गच्छसि, किन्तु अत्र स्वयंवरे, अन्यस्मिन् वृते सति ते ह्रीः लज्जा, न किम् ? भविष्यतीति शेषः ।

अन्यत्र तु—अत्रप ! हे निर्लज्ज !, अमर ! वरुण !, यः त्वं कान्त्या निजदेहसौन्दर्येण, जनौघं जनसङ्घम्, रञ्जयन् प्रीणयन्, महार्वता बृहदश्वेन, यासि स्म स्वयंवरमयासीः, स त्वं मूढः मूर्खः, असि इति शेषः। अत्र अन्यस्मिन् वृते तव ह्रीः न किम् ? पूर्ववदलङ्कारः ॥ १५५ ॥

( वरुणने कलिसे कहा— ) हे नीच ! ( शरीरकी ) कान्तिसे कामदेवको जीतते हुए ( विपरीत लक्षणासे अत्यन्त कृष्ण वर्ण होनेके कारण कामदेवको नहीं जीतते हुए ) तथा

चढ़े घोड़ोंवाले रथसे ढोए (लाये) गये तुम (दमयन्तीके द्वारा) दूसरे (नल) के वरण कर लिये जानेपर अनेक योजन अर्थात् बहुत दूर जा रहे हो इस विषयमें (अथवा—यहां पर) तुम्हें लज्जा नहीं होती ? अर्थात् लज्जा होनी चाहिये (वह नहीं हो रही है, अत एव तुम अतिशय निर्लज्ज हो। अथवा—लज्जा नहीं होगी ? अर्थात् अवश्यमेव लज्जा होगी, अत एव तुम्हें नहीं जाना चाहिये। अथवा—कान्तिसे जन-समूह (अपने सहचर सैनिकों) को तथा कामदेवको भी जीतते हुए दूसरेको वरण कर लिये जानेपर जो तुम बड़े घोड़ोंवाले रथसे जा रहे हो, वह तुम मूर्ख हो······) ॥

**(कलिने वरुणसे कहा—)** हे निर्लज्ज देव (वरुण)! कान्ति (शरीरशोभा) से जन-समूहको अथवा—योजनसमूहको अर्थात् सुदूरतक रञ्जित करते हुए जो तुम बड़े घोड़ोंवाले रथसे (अथवा—श्यामकर्णादि घोड़ेसे स्वयंवरको) को जाते थे, वह तुम मूर्ख हो, (क्योंकि) इस स्वयंवरसे दूसरेके वरण करलिये जानेपर तुम्हें लज्जा नहीं होती ? अर्थात् मैं तो उस समय स्वयंवरमें नहीं था, किन्तु तुम्हारे सामने ही दूसरेका वरण हुआ, अत एव तुम्हें लज्जा आनी ही चाहिये। [अथवा–हे अत्रपामर (लज्जाके अभाव अर्थात् निर्लज्जतासे नहीं मरनेवाले वरुण)! यदि दूसरे किसीके लिए ऐसी लज्जाका प्रसङ्ग आता तो वह मर जाता, किन्तु तुम निर्लज्ज होनेके कारण ही नहीं मरे हो, इससे वरुणका कलिने अत्यन्त उपहास किया। अथवा—हे अत्रपामर (लज्जासे (हम जैसे लोगोंको) रोग देनेवाला अर्थात् दुःखित करनेवाला वरुण)! तुम्हारे इस कर्मसे हमलोग भी दुःखित हो जाते हैं, किन्तु तुम दुःखित नहीं होते, अतः आश्चर्य है, या तुम बहुत नीच हो ]॥ १५५॥

**नलं प्रत्यनपेतार्त्ति तार्त्तीयीकतुरीययोः।**
**युगयोर्युगलं बुद्ध्वा दिवि देवा धियं दधुः॥ १५६॥**

**नलमिति। अथ देवाः इन्द्रादयः, तार्त्तीयीकतुरीययोः तृतीयचतुर्थयोः, 'तीयादीकक् स्वार्थे वा वाच्यः' इत्यनेन तार्त्तीयीकसिद्धिः। 'चतुरश्छयता वाऽऽद्यक्षरलोपश्च' इत्यनेन तुरीयसिद्धिः। युगयोः द्वापरकल्योः, युगलं द्वयम्, कर्म। नलं प्रति अनपेता अनपगता, अस्मद्वाक्येनापि न दूरीभूतेत्यर्थः। आर्त्तिः पीडनेच्छा यस्य तत् तादृशम्, बुद्ध्वा विविच्य, दिवि स्वर्गे, धियं मतिम्, दधुः कृतवन्तः, दिवं गन्तुम् ऐषुरित्यर्थः॥**

(इन्द्रादि चारो) देवोंने तृतीय तथा चतुर्थ युगों अर्थात् द्वापरयुग तथा कलियुगको नलको पीडित करनेके विचारको नहीं छोड़नेवाला समझकर स्वर्ग जानेका विचार किया। [हमारे बहुत समझानेपर भी ये द्वापर तथा कलि नलको पीडित करनेके विचारको नहीं छोड़ रहे हैं, और इससे अधिक हम कर ही क्या सकते हैं ? नलका जैसा होनहार होगा, वह होकर ही रहेगा, ऐसा सोचकर (इन्द्रादि चारो) देव स्वर्ग जानेकी इच्छा किये ]॥ १५६॥

द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः ।
नलनिग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५७ ॥

द्वापरेति । मत्सरमूर्च्छितः मूर्च्छितमत्सरः, प्रवृद्धनलशुभद्वेष इत्यर्थः । नलनिर्यातनाय दृढसङ्कल्प इति यावत् । आहिताग्न्यादिषु द्रष्टव्यः । अत एव ग्रहिलः आग्रहवान्, पिच्छादित्वात् मत्वर्थीय इलच्प्रत्ययः । कलिः चतुर्थयुगम्, द्वापरस्तृतीययुगम् एव, एकः केवलः, परीवारः परिजनः यस्य तादृशः, द्वापरमात्रसहायः सन्नित्यर्थः । नलनिग्राहिणीं नलनिग्रहार्थाम् इत्यर्थः । यात्रां गमनम्, जग्राह स्वीचकार, किल खलु ॥ १५७ ॥

मत्सर ( नल-विषयक द्वेष ) से मूर्च्छित ( मृततुल्य, अथवा—( नलके प्रति ) बढ़े हुए मत्सरवाला ), आग्रही ( इन्द्रादिके बहुत समझाने तथा मना करनेपर भी अपने दुराग्रहको नहीं छोड़नेवाला अर्थात् महाहठी ) तथा ( काम क्रोधादि अपने सैनिकोंको लौटानेसे ) द्वापरमात्रके साथ कलि नलको निगृहीत करनेवाली यात्राको स्वीकार किया अर्थात् नलको जीतनेके लिए केवल द्वापरको अपने साथमें लेकर चल पड़ा ॥ १५७ ॥

नलेष्टापूर्त्तसम्पूर्त्तेर्दूरदुर्गानमुं प्रति ।
निषेधन् निषधान् गन्तुं विघ्नः सञ्जघटे घनः ॥ १५८ ॥

नलेति । नलस्य वैरसेनेः, इष्टापूर्त्ताभ्यां क्रतुखातादिधर्मकर्मभ्याम् । 'अथ क्रतुकर्मेष्टं पूर्त्तं खातादिकर्मणि' इत्यमरः । सम्पूर्त्तेः सम्यक् पूर्णत्वात्, बहुधर्मानुष्ठानचिह्नव्यासत्वादित्यर्थः । अमुं पापरूपं कलिं प्रति, दूरमत्यर्थं, दुःखेन गच्छन्ति एष्विति दुर्गाः । 'सुदुरोरधिकरणे' इति डप्रत्ययः । तान् दूरदुर्गान् अतिदुर्गमान्, निषधान् देशान्, गन्तुं प्रयातुम्, निषेधन् निवारयन्, गमनं प्रतिबध्नन्निवेत्यर्थः । घनः निरन्तरः, विघ्नः प्रत्यूहः, सञ्जघटे वक्ष्यमाणरीत्या घटितवानित्यर्थः । धर्मगुप्ततया निषधदेशाः कलिना दुष्प्रवेशा बभूवुरिति निष्कर्षः ॥ १५८ ॥

नलके इष्टपूर्त ( यज्ञ तथा तडागादि धर्मकार्य ) की सम्पूर्णताके कारण इस ( पापी कलि ) के प्रति अत्यन्त दुर्गम निषध देशको जानेके लिए निषेध करता हुआ महान् ( वक्ष्यमाण ( १७।१६०-२०४ ) बहुत-सा ) विघ्न हुआ । ( अथ च—जलपूर्ण होनेसे दूर देश जानेके लिए मेघ विघ्नरूप होकर मना करने लगा ) । [ पुण्यश्लोक नलके धर्मकार्योंके कारण कलिको वहां पहुंचनेमें बहुत कठिनाई हुई ] ॥ १५८ ॥

( मण्डलं निषधेन्द्रस्य चन्द्रस्येवामलं कलिः ।
प्राप म्लापयितुं पापः स्वर्भानुरिव संग्रहात् ॥ १ ॥[2] )

मण्डलमिति । पापः कलिः पापग्रहमध्ये गणितत्वात्पापः स्वर्भानुरिवामलं निष्पापं

१. 'स ग्रहात्' इति पाठान्तरम् । २. अयं श्लोकः 'प्रकाश'कृता नारायणभट्टेन व्याख्यात इति मयाऽत्र स्थापितः ।

निषधेन्द्रस्य मण्डलं राष्ट्रम्, अमलं परिपूर्णप्रकाशं चन्द्रस्य मण्डलं बिम्बमिव संग्रहाद्धठाद्ग्रहणयोगवशाच्च म्लापयितुं विनाशयितुं ग्रसितुं च प्राप ॥ १ ॥

पापी कलि निषधेश्वर ( नल ) के निष्पाप ( दोषरहित ) राज्यको हठ ( दुराग्रह ) से नष्ट करनेके लिए उस प्रकार प्राप्त किया, जिस प्रकार (ज्योतिःशास्त्रके अनुसार पापग्रह होनेसे ) पाप राहु चन्द्रमाके स्वच्छ बिम्बको ग्रहणयोग होनेसे ग्रसित करनेके लिए प्राप्त करता है। [ राहु तथा चन्द्रमाकी उपमासे सूचित होता है कि—जिस प्रकार ग्रहणका योग आनेपर राहु परिपूर्ण एवं निर्मल चन्द्रबिम्बको अवश्यमेव मलिन कर देता है, उसे कोई नहीं रोक सकता, किन्तु कुछ समय बाद ही वह चन्द्र राहुयुक्त होकर पुनः विमल कान्तिको पूर्ववत् प्राप्त कर लेता है उसी प्रकार पापी कलि नलके निर्मल राज्यको बहुत प्रयत्न करनेपर भी अवश्यमेव दूषित करेगा अर्थात् नल-दमयन्तीको अवश्यमेव पीडित करेगा; किन्तु चन्द्रके समान ही नल थोड़े दिनोंके अनन्तर ही कलि-पीडासे मुक्त होकर पुनः अपना राज्य पूर्ववत् प्राप्तकर दमयन्तीके साथ सुखभोग करेंगे ] ॥ १ ॥

कियता[1]ऽथ च कालेन कालः कलिरुपेयिवान् ।
भैमीभर्तुरहंमानी राजधानीं महीभुजः ॥ १५९ ॥

कियतेति। अथ देवानां सन्निधानात् प्रस्थानानन्तरम्, कियता च कालेन किञ्चित्कालेऽतीते इत्यर्थः। अहंमानी अहङ्कारी, कलिः कालः युगात्मकसमयरूपः पापात्मकत्वात् श्यामरूपो वा, भैमीभर्तुः दमयन्तीपतेः, महीभुजः राज्ञो नलस्य, राजानः धीयन्ते अस्यामिति राजधानी नगरी ताम्, 'करणाधिकरणयोश्च' इत्यधिकरणार्थे ल्युट्। उपेयिवान् उपगतः, निपातनात् साधुः॥ १५९ ॥

इस ( समीपसे देवोंके प्रस्थान करने, अथवा—विघ्न-समूहको पार करने ) के बाद कुछ समयमें ( नलको पीडित करनेके विषयमें ) अहङ्कारी तथा समयरूप ( अथवा—पापात्मक होनेसे कृष्णवर्ण, अथवा—दारुणकर्मा होनेसे यमतुल्य ) कलि दमयन्तीभर्ता भूपति ( नल ) की राजधानीको प्राप्त किया ( राजधानीमें पहुंचा )। [ 'भैमीभर्तुः' तथा 'महीभुजः' इन दो विशेषणोंसे नलसे दमयन्ती तथा पृथ्वीका सम्बन्ध छुड़ानेमें कलिका विशेष आग्रह सूचित होता है ] ॥ १५९ ॥

वेदानु[2]च्चरतां तत्र मुखादाकर्णयन् पदम् ।
न प्रसारयितुं कालः कलिः पदमपारयत् ॥ १६० ॥

अथ पुरप्रवेशे विघ्नप्रकारमाह—वेदानिति। तत्र राजधान्याम्, वेदान् श्रुतीः, उच्चरताम् उच्चारयताम्, अधीयानानां श्रोत्रियाणाम् इत्यर्थः। मुखात् वदनात्, पदं मन्त्रचतुर्थांशापराख्यं पदजातम्, आकर्णयन् शृण्वन्, कालः समयात्मकः पापात्मको

---

१. 'कियतापि' इति पाठान्तरम्। २. 'वेदानुद्धरताम्' इति पाठान्तरम्।

वा, कलिः जघन्ययुगम्, पदं चरणम्, प्रसारयितुं विस्तारयितुम्, न अपारयत् न अशक्नोत् ॥ १६० ॥

( अब कलिके विघ्नोंका वर्णन करते हैं—) वहां ( नलकी राजधानीमें ) वेदोंका उच्चारण ( पाठा०—उद्धरण-उधरणी = आवृत्ति ) करनेवाले ( वेदपाठियों ) के मुखसे पद ( पदकारकृत संहिताविभागरूप 'पद' संज्ञक मन्त्रांश-विशेष ) को सुनता हुआ काल ( पाप होनेसे कृष्णवर्ण या समयरूप या दारुण कर्म करनेसे यमतुल्य ) कलि ( एक ) पैर फैलाने ( आगे बढ़ाने = चलने ) के लिए भी समर्थ नहीं हुआ । [ राजधानीमें श्रोत्रियोच्चार्यमाण 'पद' संज्ञक मन्त्रभागको सुनकर कलि एक कदम भी आगे नहीं बढ़ा सका। इससे नलकी राजधानीकी धर्म-परिपूर्णता तथा कलिके लिए विघ्न बाहुल्य सूचित होता है ]॥

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् ।
क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६१ ॥

श्रुतीति । तत्र पुरे, श्रुतिपाठकवक्त्रेभ्यः वेदाध्येतृमुखेभ्यः, क्रमम् उभयापराख्यं पदजातम्, आकर्णयतः श्रृण्वतः, तस्य कलेः, क्रमः पादन्यासः, सङ्कुचितः प्रतिबद्धः सन्, दूरम् अवर्त्तत प्रवेशाशक्त्या दूरे स्थितः इत्यर्थः । वेदध्वनिप्रभावेणेति भावः ॥

उस पुर ( नलकी राजधानी ) में वेदाध्यापकोंके मुखसे 'क्रम' संज्ञक मन्त्रभागको सुनते हुए उस ( कलि ) का पैर ( अथवा—गमन ) अत्यन्त सङ्कुचित हो गया। [ वेदाध्यापकोक्त 'क्रम' को सुननेके कारण उत्पन्न भयसे कलि एक पग भी आगे नहीं बढ़ सका, उस स्थानसे शीघ्र ही निवृत्त हो गया ] ॥ १६१ ॥

तावद्गतिर्धृताटोपा पादयोस्तेन संहिता ।
न वेदपाठिकण्ठेभ्यो यावदश्रावि संहिता ॥ १६२ ॥

तावदिति । तावत् तत्पर्यन्तम्, तेन कलिना, पादयोः चरणयोः, धृताटोपा साडम्बरा, सदर्पा इति यावत्, गतिः विहरणम्, संहिता सन्धृता, अवलम्बितुं शक्ता इत्यर्थः । यावत् यत्पर्यन्तं, वेदपाठिनाम् वेदाध्येतृणाम्, कण्ठेभ्यः मुखेभ्यः, संहिता पूर्वोक्तपदक्रमरूपावस्थाद्वयविलक्षणा ऋगादिरूपा, न अश्रावि न श्रुता, तच्छृणोतेस्तुभय एव पादयोरिति भावः । तदेतदारण्यके—'श्रुतम् अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्वन् उभयमन्तरेण' इति ॥ १६२ ॥

कलिने तबतक ( उस समयतक या उस स्थानतक ) चरणद्वयकी गतिको आडम्बरसहित ग्रहण किया अर्थात् तभीतक ( या वहींतक ) शीघ्रगतिसे चला, जबतक ( जिस समय तक या जिस स्थानतक ) वेदपाठियोंके कण्ठसे 'पद-क्रम' की अवस्थासे विलक्षण 'ऋक्' आदि संहिताको नहीं सुना। [ जिस समय ( या-स्थान ) तक कलि श्रोत्रियकण्ठोच्चरित 'संहिता' को नहीं सुना, उस समय ( या-स्थान ) तक ही वह तीव्रगतिसे चला, 'संहिता' सुननेके बाद उसका गतिभङ्ग हो गया ] ॥ १६२ ॥

तस्य होमाज्यगन्धेन नासा नाशमिवागमत्।
तत्रातत दृशौ नासौ क्रतुधूमकदर्थिते ॥ १६३ ॥

तस्येति। तत्र पुरे, होमाज्यगन्धेन होमसम्बन्धिघृतपरिमलेन, तस्य कलेः, नासा घ्राणेन्द्रियम्, नाशं विध्वस्तम्, अगमत् इव प्रापदिव, तथा असौ कलिः, क्रतुधूमेन यज्ञधूमेन, कदर्थिते दूषिते, अन्धीभूते इत्यर्थः दृशौ नेत्रे, नातत न अतनिष्ट, नोन्मीलयितुं शक्त इत्यर्थः, हव्यगन्धयज्ञधूमाद्यसहिष्णुतया इति भावः। तनोतेर्लुङि तङ्, 'तनादिभ्यस्तथासोः' इति सिचो लुक्। पक्षे-'अनुदात्तोपदेश-' इत्यादिना अनुनासिकलोपः ॥ १६३ ॥

उस नगरमें उस (कलि) की नाक हवनके घृतके सुगन्धि से नष्ट-सी (मृतकल्प, अथवा—नष्ट हो) हो गयी, और वह कलि यज्ञधूमसे पीड़ित दोनों नेत्रोंको भी नहीं खोला अर्थात् कुछ नहीं देख सका। [ हवनके घृतके गन्ध तथा यज्ञके धूमसे पापी कलि अतिशय व्यथित हुआ ]॥ १६३ ॥

अतिथीनां पदाम्भोभिरिमं प्रत्यतिपिच्छिले।
अङ्गणे गृहिणामत्र खलेनानेन चस्खले ॥ १६४ ॥

अतिथीनामिति। अत्र पुरे, अतिथीनां गृहागतपान्थानाम्, पदाम्भोभिः चरणप्रक्षालनोदकैः, इमं कलिं प्रति, न तु धार्मिकान् प्रतीति भावः, अतिपिच्छिले सर्वदा जलार्द्रत्वात् विजिले, अतिमसृणे इत्यर्थः, पिच्छादित्वादिलच्प्रत्ययः। गृहिणां गृहस्थानाम्, अङ्गणे चत्वरे, खलेन दुर्जनेन, अनेन कलिना, चस्खले स्खलितम्, पतितमित्यर्थः, भावे लिट् ॥ १६४ ॥

वहांपर (उस नगरमें) अतिथियों (के चरण धोने) के जलसे इस (पापी कलि) के प्रति अतिशय पिच्छिल (रपट=चिकिलाहटसे युक्त) गृहस्थोंके आँगनमें दुष्ट कलि स्खलित हो गया। [ गृहस्थोंके पवित्रतम आँगनमें नहीं प्रवेश कर सका ]॥ १६४ ॥

पुटपाकमिव[1] प्राप क्रतुशुष्ममहोष्मभिः।
तत्प्रत्यङ्गमिवाकर्त्ति पूर्तोर्मिव्यजनानिलैः॥ १६५ ॥

पुटेति। क्रतुषु यज्ञेषु, शुष्मणाम् अग्नीनाम्, 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः। वर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः। महोष्मभिः प्रबलसन्तापैः, पुटपाकं निरुद्धमुखपात्रे अन्तर्धूमपाकमित्यर्थः। प्राप लेभे इवेत्युत्प्रेक्षा, कलिरिति शेषः, तथा पूर्तानां वापीतडागादीनाम्, ऊर्मयः तरङ्गा एव, व्यजनानि तालवृन्तानि, तेषाम् अनिलैः वायुभिः, तत्प्रत्यङ्गं तस्य कलेः अङ्गजातम्। वीप्सायामव्ययीभावः। अकर्त्ति इव छिन्नमिवेत्युत्प्रेक्षा। कृती छेदने इति धातोः कर्मणि लुङ् ॥ १६५ ॥

यज्ञाग्निके तीव्र सन्तापोंसे मानो (पाठा०—इस (कलि) ने) पुटपाकको प्राप्त किया

---

१. 'पुटपाकमसौ' इति पाठान्तरम्।

( दोनों पार्श्वभागों तथा आगे पीछेके भवनोंमें किये जाते हुए यज्ञोंकी अग्निके तीव्रतम सन्तापसे वह उस प्रकार सन्तप्त हुआ जिस प्रकार बन्द हुए दो पात्रोंके बीच रखी हुई दवा अपने चारो ओर जलायी गयी अग्निके सन्तापसे सन्तप्त होती है )। और पूर्त ( तडाग, वापी आदि ) के तरङ्गरूप पङ्खोंकी वायुओंसे उस कलिका प्रत्येक अङ्ग मानो काटा गया हो ( प्रत्येक शरीरको काटनेके समान नगरके तडागादिके तरङ्गोंकी वायुसे वह कलि पीडित हुआ ) ॥ १६५ ॥

पितॄणां तर्पणे वर्णैः कीर्णाद् वेश्मनि वेश्मनि ।
कालादिव तिलात् कालाद् दूरमत्रसदत्र सः ॥ १६६ ॥

**पितॄणामिति । सः कलिः, अत्र पुरे, वेश्मनि वेश्मनि गृहे गृहे, वीप्सायां द्विर्भावः । वर्णैः ब्राह्मणादिवर्णचतुष्टयैः, पितॄणां पितृपितामहादीनाम् अग्निष्वात्तादीनां पितृलोकानाञ्च, तर्पणे तर्पणकर्मणि, पितॄनुद्दिश्य तत्तृप्त्यर्थं सतिलोदकदानरूपपैत्र्यक्रियाविशेषे इत्यर्थः । कीर्णात् विक्षिप्तात्, कालात् तिलात् कृष्णतिलात्, कालात् मृत्योरिव 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति विश्वः । दूरमत्यर्थम्, अत्रसत् त्रस्तः ॥ १६६ ॥**

यहांपर ( नलकी राजधानीमें ) प्रत्येक गृहमें ( ब्राह्मणादि ) वर्णोंके द्वारा ( अग्निष्वात्तादि तथा पिता-पितामहादि ) पितरोंके तर्पणमें दिये गये काले ( कृष्ण वर्णवाले ) तिलोंसे काल ( यमराज ) के समान अत्यन्त डर गया। [ वर्णोंके द्वारा प्रत्येक गृहमें पितृतर्पणकालमें काले तिलोंसे कलि उस प्रकार अत्यन्त डरा, जिस प्रकार काले वर्णवाले यमराजसे कोई डरता है ] ॥ १६६ ॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः ।
कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥ १६७ ॥

**स्नातॄणामिति । कृपाणीभूय खड्गीभूय, तस्य कलेः, हृदयं वक्षःस्थलं, प्रविष्टैः कृतप्रवेशैः इव स्थितैः, तैः प्रसिद्धैः, स्नातॄणां स्नायिनां, कृतस्नानानामित्यर्थः। तिलकैः ऊर्ध्वपुण्ड्रादिभिः, सः कलिः, स्वम् आत्मानम्, अन्तः वक्षसि, दीर्णमेव पाटितमेव, मेने बुबुधे ॥ १६७ ॥**

वहांपर उस कलिने स्नानकर्त्ताओंके तलवार होकर मानो हृदयमें प्रविष्ट हुए ( खड्गाकार ईषद्वक्र गोपीचन्दन-भस्मादि द्वारा किये गये ) तिलकोंसे अपनेको हृदयमें विदीर्ण हुआ ही समझा। [ स्नानकर्ताओंके खड्गाकार कुछ टेढ़े तिलकोंको देखकर कलि अत्यन्त पीडित हुआ ] ॥ १६७ ॥

पुमांसं मुमुदे तत्र विन्दन् मिथ्यावदावदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥ १६८ ॥

---

१. 'तर्पणैः' इति पाठान्तरम् । २. 'विदन्' इति पाठान्तरम् ।

पुमांसमिति । अयं कलिः, तत्र पुरे, मिथ्या अनृतम्, तस्याः, वदावदं वक्तारम्, 'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्" इति साधुः । 'वदो वदावदो वक्ता' इत्यमरः । पुमांसं नरम्, विन्दन् प्राप्नुवन्, मिथ्यावादिनं लोकं पश्यन् इत्यर्थः । मुमुदे तुतोष, तद्द्वारा प्रवेष्टुमैच्छदिति भावः । अथ हर्षलाभानन्तरमेव, तं पुरुषं, स्त्रियं नारीं प्रति, तथा मिथ्या वदन्तम्, वीक्ष्य दृष्ट्वा, तस्य तां मिथ्यां नर्मोक्तिं ज्ञात्वेत्यर्थः । ग्लानवान् ग्लानः, विषण्ण इत्यर्थः । 'संयोगादेरातो धातोः' इति निष्ठानत्वम् । अभूत् इति शेषः । स्त्रिया सह नर्मोक्तौ मिथ्याभाषणे दोषाभावादिति भावः ॥ १६८ ॥

वहांपर मिथ्या बोलते हुए पुरुषको प्राप्त करता ( पा०—जानता हुआ ) यह ( कलि ) प्रसन्न हुआ, इसके बाद ( सुरतमें ) स्त्रीके प्रति वैसा ( मिथ्याभाषी ) देखकर खिन्न हो गया । [ स्त्रीके प्रति रतिकालमें मिथ्या नर्मवचन बोलना दोषकारक नहीं होनेसे वैसा मिथ्यावचन बोलनेवाले पुरुषको पाकर कलि सुरतकालका नर्मोक्ति नहीं समझकर अत्यन्त प्रसन्न हुआ, किन्तु बादमें 'यह रतिकालमें स्त्रीसे परिहासमें मिथ्या वचन बोल रहा है' यह देखकर अत्यन्त खिन्न हो गया, क्योंकि बहुत देरके बाद नगर में प्रवेश करनेका जो एक सहारा मिला था, वह भी दूर हो गया ] ॥ १६८ ॥

यज्ञयूपघनां जज्ञौ सः पुरं शङ्कुसङ्कुलाम् ।
जनैर्धर्मधनैः कीर्णां व्यालक्रोडीकृताञ्च ताम् ॥ १६९ ॥

यज्ञेति । सः कलिः, यज्ञयूपैः यज्ञीयपशुबन्धनस्तम्भैः, घनां निरन्तराम्, व्याप्तामित्यर्थः । पुरं नागरीम्, शङ्कुसङ्कुलाम् अस्त्रविशेषाकीर्णामिव, तथा धर्मधनैःधार्मिकैः, जनैः लोकैः, कीर्णां व्याप्ताम्, तां पुरीम्, व्यालः सर्पैः श्वापदैः वा, 'व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि' इति विश्वः । क्रोडीकृताम् अङ्कीकृतामिव, जज्ञौ ज्ञातवान्, तद्वत् दुरासदाम् अमन्यतेत्यर्थः ॥ १६९ ॥

उस ( कलि ) ने यज्ञके पशु बांधनेवाले ( कत्था, गूलर आदिके ) खम्भोंसे व्याप्त उस पुरीको कीलोंसे व्याप्तके समान तथा धार्मिक लोगोंसे व्याप्त उस पुरीको व्यालों ( सर्पों या—मतवाले हाथियों, या—व्याघ्रादि हिंसक जन्तुओं ) से भरी हुई समझा । [ जिस प्रकार शङ्कुव्याप्त तथा सर्पों ( या—मतवाले हाथियों, या—क्रूर व्याघ्रादि पशुओं ) से व्याप्त वनभूमिमें चलना ( या—प्रवेश करना ) अतिशय कष्टकर होता है, उसी प्रकार यज्ञके पशु बांधनेवाले खम्भोंसे तथा धार्मिक जनोंसे व्याप्त उस पुरीमें चलना ( या—प्रवेश करना ) कलिके लिए अतिशय कष्टकर हुआ ] ॥ १६९ ॥

स पार्श्वमशकद् गन्तुं न वराकः पराकिणाम् ।
मासोपवासिनां छाया-लङ्घने घनमस्खलत् ॥ १७० ॥

---

१. 'व्याड—' इति पाठान्तरम् ।

स इति । वराकः तुच्छः, सः कलिः, पराकिणां कृच्छ्रव्रतविशेषचारिणाम्, 'द्वादशाहोपवासस्तु पराकः परिकीर्त्तितः' इति स्मरणात् । पार्श्वं समीपम् गन्तुं यातुम् न अशकत् न समर्थोऽभूत् । शक्नोतेर्लिदित्त्वात् च्लेरङादेशः । तथा मासोपवासिनां मासं व्याप्य अनशनव्रतिनान्तु, छायालङ्घने प्रतिबिम्बाक्रमणेऽपि, घनं भृशम्, अस्खलत् अभ्रंशत्, दुरासदत्वात् तपस्विनाम् इति भावः ॥ १७० ॥

( कहीं भी स्थान नहीं मिलनेसे ) अतिशय दीन वह ( कलि ) 'पराक' व्रतियों ( बारह दिन तक उपवास रहनेका व्रत करनेवालों ) के पास नहीं जा सका, और मास भर उपवास करनेवालोंकी तो छाया ( परछाहीं ) को भी लाँघनेमें अत्यन्त स्खलित हो गया अर्थात् उनकी परछाहींको भी नहीं लाँघ सका ॥ १७० ॥

आवाहितां द्विजैस्तत्र गायत्रीकर्ममण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥ १७१ ॥

आवाहितामिति । सः कलिः, तत्र पुरे, द्विजैः विप्रैः, आवाहिताम् आहूताम्, अत एव अर्कमण्डलात् सूर्यबिम्बात्, सन्निदधतीं समीपमागच्छन्तीम्, गायत्रीं गायत्रीदेवीम्, पश्यन् अवलोकयन्, भिया भयेन, तत्प्रभावादिति भावः । दृष्टनष्टः पूर्वं दृष्टः ईक्षितः, अनन्तरं नष्टः अदृष्टः, सद्यः एव अदर्शनं गतः इत्यर्थः । स्नातानुलिप्तवत् पूर्वकालसमासः । अभवत् अजायत ॥ १७१ ॥

वहांपर द्विजों ( ब्राह्मणादि तीन वर्णों ) के द्वारा आवाहित[1] तथा ( उनकी अतिशयिता भक्तिके कारण ) सूर्यमण्डलसे ( निकलकर उनके ) पास आती हुई ( प्रातःसन्ध्याकी अधिदेवता ) 'गायत्री' को देखता हुआ वह कलि ( उस गायत्रीके ) भयसे पहले देखा गया और बादमें नष्ट हो गया अर्थात् भागकर कहीं छिप गया । [ प्रातः सन्ध्यावन्दन करते हुए द्विजोंको देखकर वह कलि गायत्रीके भयसे वहांसे भागकर छिप गया ] ॥ १७१ ॥

स गृहे गृहिणां[2] पूर्णे घने[3] वैखानसैर्वृते ।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥ १७२ ॥

स इति । सः कलिः, गृहिणां पूर्णे गृहस्थैः व्याप्ते, सम्बन्धसामान्ये षष्ठी । गृहे भवने, तथा वैखानसैः वानप्रस्थैः, 'वैखानसो वनेवासी वानप्रस्थश्च तापसः' इति यादवः । वृते वेष्टिते, घने निरन्तरे, 'घने' इत्यत्र 'वने' इति पाठः साधुः । तथा

---

१. 'आगच्छ वरदे ! देवि ! त्र्यक्षरे ! ब्रह्मवादिनि !
गायत्री ! छन्दसां मातर्ब्रह्मविद्ये ! नमोऽस्तु ते ॥'
इत्यनेन 'तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृतदेवयजनमसि' इत्यनेन मन्त्रेण वेति बोध्यम् । २. 'गृहिभिः' इति पाठान्तरम् । ३. 'वने वैश्वानसैर्वने' इति 'प्रकाश'व्याख्यासम्मतः पाठः ।

यतिनां संन्यासिनाम्, आधारे आश्रये, यत्यधिष्ठते इत्यर्थः । अमरागारे देवालये, क्वापि कुत्रापि, स्थानं स्थितिम्, न आनशे न लेभे, 'अत आदेः' इत्यभ्यासदीर्घः, 'अश्नोतेश्च' इति नुडागमः ॥ १७२ ॥

उस ( कलि ) ने गृहस्थोंके ( पाठा०—गृहस्थोंसे ) परिपूर्ण घरमें, वानप्रस्थोंसे व्याप्त घने ( वनों ) में और यतियों ( संन्यासियों ) से आश्रित देवालयोंमें कहीं भी स्थान ( ठहरने का आश्रय ) नहीं पाया ॥ १७२ ॥

हिंसागवीं मखे[1] वीक्ष्य रिरंसुर्धावति स्म सः ।
सा तु सौम्यवृषासक्ता खरं दूरं[2] निरास तम् ॥ १७३ ॥

हिंसेति । सः कलिः, मखे गोमेधाख्ययज्ञे, हिंसाया गौः तां हिंसागवीम् आलम्भार्थानं गाम् इत्यर्थः । 'गोरतद्धितलुकि' इति समासान्तष्टच् । वीक्ष्य दृष्ट्वा, रिरंसुः चित्तविनोदनेच्छुः सन् इत्यर्थः । निजाधिपत्यसूचकं गोवधोद्यमं दृष्ट्वेति भावः । अन्यत्र—रन्तुम् इच्छुः, विहर्तुम् इच्छुरित्यर्थः । रमेः सनन्तादुप्रत्ययः । धावति स्म द्रुतम् अगात्, सा गौस्तु, सौम्यः सोमदैवतो यागः, स एव वृषः धर्मः, तत्र आसक्ता सङ्गता, धर्माभिलाषिणी सतीत्यर्थः । सुन्दरवृषभाक्रान्ता चेति गम्यते । 'वृषो धर्मे बलीवर्दे' इति मेदिनी । बलीवर्दो वृषभः । अत एव खरं रलयोरभेदात् खलम्, क्रूरमित्यर्थः, खरं गर्दभञ्च, तं कलिम्, दूरं विप्रकृष्टदेशम्, निरास निचिक्षेप वृषाक्रान्ताया गोर्विजातीयत्वात् खरनिराकरणं युक्तमिति भावः ॥ १७३ ॥

वह ( कलि ) 'गोमेध' नामक यज्ञमें हिंसार्थ लायी गयी गौको देखकर रमण करने ( गोवधरूप स्व-मनोऽनुकूल कर्म समझकर प्रसन्न होने ) की इच्छा किया, किन्तु सोमदेवताक ( यागरूप ) धर्ममें आसक्त अर्थात् धर्माभिलाषिणी उस गौने खर ( अतिशय क्रूर, पक्षा०—'रल' में भेद नहीं होनेसे खल अर्थात् दुष्ट ) उसको अत्यन्त ( पाठा०—दूरसे ही ) तिरस्कृत कर दिया । ( पक्षा०—वह कलि यज्ञमें हिंसार्थ लायी गयी गौको देखकर रमण ( मैथुन ) करनेकी इच्छा करता हुआ दौड़ा, किन्तु सुन्दर वृषभ ( साँढ़ ) में आसक्त उस ( गौ ) ने गधे ( के तुल्य, या गधारूप ) उस ( कलि ) को अत्यन्त ( पाठा०—दूरसे ही ) तिरस्कृत कर दिया ( सुन्दर वृषभासक्त गौका विजातीय गधेको तिरस्कृत करना उचित ही है ) । अथवा पाठा०—( याज्ञिक ब्राह्मणोंके मुखमें अर्थात् मुखसे उच्चारित हिंसार्थक ( 'अग्नीषोमीयं पशुमालभेत' इत्यादि ) वाणीको सुनकर रमण करने ( ये पशुहिंसारूप मेरा प्रिय कार्य करनेका समर्थन करते हैं, ऐसा समझकर प्रसन्न होने ) की इच्छा करता हुआ दौड़ा, किन्तु सोमदेवताक यज्ञरूप धर्ममें आसक्त अर्थात् उक्त धर्म-सम्बन्धिनी उस वाणीने ( बादमें 'यह पशुहिंसारूप मेरा प्रिय कार्य करनेवाली वाणी नहीं है, किन्तु धर्मसम्बन्धिनी वाणी है' ऐसा जाननेपर ) अखर अर्थात् निस्तेज उस कलिका अत्यन्त (पाठा०—दूरसे ही) तिरस्कार कर दिया ) ॥ १७३ ॥

---

१. 'मुखे' इति पाठान्तरम् । २. 'दूरान्निरास' इति पाठान्तरम् ।

क्वापि[1] नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम् ॥ १७४ ॥

क्वापीति । असौ कलिः, तत्र पुरे, क्वापि कस्मिन्नपि स्थाने, आत्मनः स्वस्य, प्रियाम् इष्टाम्, हिंसां जीवहत्यादिरूपाम्, अन्विष्यन् मृग्यमाणोऽपि, न अपश्यत् न अवालोकयत्, तथा मूर्खमुखे मूढवक्त्रेऽपि, स्वस्य निजस्य, मित्रं सखायम्, अनुकूलमिति यावत् । कलिं कलहञ्च, न प्रापत् न अलम्भिष्ट, प्रजानां तथा नियमनादिति भावः ॥ १७४ ॥

वह ( कलि ) वहां पर अपनी प्रिय हिंसाको ढूंढ़ता हुआ ( ढूंढ़कर ) कहीं भी नहीं देखा तथा मूर्खके मुखमें भी अपने मित्र ( प्रिय ) कलहको नहीं पाया । [ वहांकी प्रजा इतनी सुशासित थी कि ढूंढ़नेसे भी कहीं पर हिंसा होती हुई तथा मूर्ख भी कलह करता हुआ नहीं दिखलायी पड़ा ] ॥ १७४ ॥

मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः ।
वन्द्यवन्दारुभिर्जज्ञौ स्वाशिरश्च पदाहतम् ॥ १७५ ॥

मौनेनेति । सः कलिः, व्रतनिष्ठानां नियमावलम्बिनाम्, मौनेन वाक्संयमनेन, स्वस्य आत्मनः, आक्रोशं शापम्, मन्यते स्म बुध्यते स्म, मौनिनो भूत्वा मामेते अशपन् इति अमन्यत इत्यर्थः । तथा वन्द्यानाम्, अभिवाद्यानाम्, वन्दारुभिः वन्दनशीलैः, गुरुजनान् नमस्कुर्वद्भिर्जनैरित्यर्थः । 'शृवन्द्योरारुः' । स्वशिरः निजमस्तकञ्च, पदेन चरणेन, आहतं ताडितमिव, जज्ञौ मेने । तत् सर्वं शास्त्रविधिपालनं तस्य तादृग्दुःखजनकं सञ्जातम् इति भावः ॥ १७५ ॥

उस ( कलि ) ने व्रतियोंके मौनसे अपना आक्रोश ( ये मुझे गाली दे रहे हैं ऐसा ) माना तथा वन्दनीयों ( देवों तथा माता, पिता आदि गुरुजनों ) की वन्दना करनेवालोंसे अपने मस्तकको पैरसे मारा गया माना ॥ १७५ ॥

मुनीनां[2] स वृसीः[3] पाणौ पश्यन्नाचामतामपः ।
मेने घनैरमी हन्तुं शप्तुं मामद्भिरुद्यताः ॥ १७६ ॥

मुनीनामिति । सः कलिः, मुनीनां तापसानाम् , पाणौ करे, वृसीः आसनानि, उपवेशनार्थं गृहीताः इति भावः । 'व्रतिनामासनं वृसी' इत्यमरः । तथा आचामताम् उपस्पृशताम्, एषां पाणौ इति शेषः । अपश्च जलानि, पश्यन् अवलोकयन्, अमी मुनयः, मां घनैः मुद्गरैः, 'द्रुघणे मुद्गरघनौ' इति वैजयन्ती । हन्तुं ताडयितुम्, तथा अद्भिः जलैः, शप्तुञ्च अभिशापं दातुञ्च, उद्यताः प्रवृत्ताः, इति मेने बुबुधे । तादृग्दुःखं प्राप इत्यर्थः ॥ १७६ ॥

---

१. अयं श्लोकः 'प्रकाश'कृता 'हिंसागर्वी' (१७।१७२) इत्यस्मात्पूर्वमेव पठितो व्याख्यातश्च । २. 'ऋषीणाम्' इति पाठान्तरम् । ३. 'कुशान्' इति पाठान्तरम् ।

मुनियोंके हाथमें ( कृष्णमृगचर्म या कुशादिके बने ) आसनों ( पाठा०—कुशाओं ) को तथा आचमन करते हुए ( उन्हीं या दूसरे मुनियोंके हाथमें ) जलको देखता हुआ वह (कलि) 'ये मुझे मुद्गरोंसे मारने तथा जलसे शाप देनेके लिए उद्यत हैं' ऐसा समझा॥ १७६॥

**मौञ्जीभृतो धृताषाढानाशशङ्के स वर्णिनः ।**
**रज्ज्वाऽमी बद्धुमायान्ति हन्तुं दण्डेन मां ततः ॥ १७७ ॥**

मौञ्जीति । सः कलिः, मौञ्जीभृतः मुञ्जतृणनिर्मितमेखलाधारिणः, धृताषाढान् गृहीतपालाशदण्डान्। 'विशाखाषाढादण् मन्थदण्डयोः' इत्यण्प्रत्ययः। 'पालाशो दण्ड आषाढः' इत्यमरः। वर्णिनः ब्रह्मचारिणः, 'वर्णाद् ब्रह्मचारिणि' इति इनिप्रत्ययः। दृष्ट्वेति शेषः। अमी वर्णिनः, मां रज्ज्वा पाशेन, मुञ्जमयेनेति भावः। बद्धुं संयन्तुम्, ततः बन्धनानन्तरम्, दण्डेन पालाशयष्ट्या, हन्तुं ताडयितुञ्च, आयान्ति आगच्छन्ति, इति आशशङ्के सन्दिदेह तथा विव्यथे इत्यर्थः॥ १७७ ॥

उस ( कलि ) ने मूंजकी बनी मेखलाको पहने तथा पालाशदण्डको लिये हुए ब्रह्मचारियोंको माना कि—'ये मुझे ( पहले ) रस्सीसे बाँधनेके लिये और इसके बाद डण्डेसे मारनेके लिए आ रहे हैं'। ( पाठा०—'''हुए लोगोंको ब्रह्मचारी नहीं माना, किन्तु—'ये''' आ रहे हैं' ऐसा माना )॥ १७७ ॥

**दृष्ट्वा पुरः पुरोडाशमासीदुत्त्रासदुर्मनाः ।**
**मन्वानः फणिनीस्त्रस्तः स मुमोचाश्रु च स्रुचः ॥ १७८ ॥**

दृष्ट्वेति । सः कलिः, पुरः अग्रे, पुरोडाशं यज्ञीयपिष्टकपिण्डविशेषम्, 'पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्त्तितः ॥' इति विश्वः। दृष्ट्वा अवलोक्य, उत्त्रासेन भयेन, दुर्मनाः विह्वलः, आसीत् अभूत्, स्वघातार्थं पाषाणभ्रमादिति भावः । तथा स्रुचः होमादिपात्राणि, फणिनीः भुजङ्गीः, मन्वानः शङ्कमानः, त्रस्तः भीतः सन्, अश्रु वाष्पम्, मुमोच च तत्याज च । अत्र स्रुक्षु फणिनीभ्रान्त्या भ्रान्तिमदलङ्कारः॥ १७८ ॥

वह ( कलि ) वहांपर सामने पुरोडाश ( हवनीय हविष्य ) को देख ( उसे वज्रमय गोला समझ ) कर अतिशय भयसे विह्वल हो गया तथा ( सर्पफणाकार ) स्रुवाओंको सर्पिणी मानता हुआ आँसू भी गिरा दिया अर्थात् 'ये साँपिन मुझे डँस देंगी' ऐसा मानकर रोने भी लगा॥ १७८ ॥

**आनन्दन्मदिरादानं विन्दन्नेष द्विजन्मनः ।**
**दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १७९ ॥**

आनन्ददिति । एषः कलिः, द्विजन्मनः ब्राह्मणस्य, मदिरायाः सुरायाः, आदानं ग्रहणम्, विन्दन् जानन्, पश्यन् इत्यर्थः । आनन्दत् अमोदत, शास्त्रमर्यादालङ्घनं दृष्ट्वेति भावः । अथ तं मदिरामाददानं ब्राह्मणम्, सौत्रामणीं सौत्रामण्याख्याम्,

इष्टिं यागम्, कुर्वन्तं सम्पादयन्तम्, दृष्ट्वा अवलोक्य, ज्ञात्वा इत्यर्थः । अदूयत पर्यतप्यत, 'सौत्रामण्यां सुरां पिबेत्' इति श्रुतेः । तस्मिन् यज्ञे सुराग्रहणस्य शास्त्रविहितत्वेन पापाभावात् निराशोऽभूत् इति भावः ॥ १७९ ॥

यह ( कलि ) ब्राह्मणको मदिरा लेता हुआ जान ( देख ) कर प्रसन्न हुआ, ( किन्तु बादमें उस मदिरासे ) इन्द्रयाग करते हुए उस ( ब्राह्मण ) को देखकर ( उस यागमें मदिराका निषेध नहीं होनेसे शास्त्रोक्त धर्मकार्य होता हुआ समझकर ) सन्तप्त हो गया ॥ १७९ ॥

अपश्यद् यावतो ब्रह्म-विदां ब्रह्माञ्जलीनसौ ।
उदडीयन्त तावन्तस्तस्यास्राञ्जलयो हृदः ॥ १८० ॥

अपश्यदिति । असौ कलिः, ब्रह्मविदां वेदाध्यायिनाम्, यावतः यावत्सङ्ख्यकान्, ब्रह्माञ्जलीन् वेदाध्ययनकालीनपाणिद्वयसम्पुटान् । 'संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः' इति स्मरणात् । 'अञ्जलिः' पाठे ब्रह्माञ्जलिः' इत्यमरः । अपश्यत् ऐक्षत, तस्य कलेः, हृदः हृदयात्, तावन्तः तावत्सङ्ख्यकाः, अस्राञ्जलयः रक्ताञ्जलयः, उदडीयन्त उड्डीनाः, निर्गता इत्यर्थः ॥ १८० ॥

इस ( कलि ) ने वेद पढ़नेवाले छात्रोंके जितनी ब्रह्माञ्जलियोंको देखा, उसके हृदयसे उतनी ही रक्तकी अञ्जलियां निकल पड़ीं अर्थात् उसका हृदय वेदपाठी छात्रोंको देखकर विदीर्ण हो गया। तथा उसके शरीरका रक्त सूख गया [ वेदाध्ययनके आरम्भ तथा अन्तमें गुरुके चरणद्वयकी वन्दनाकर पढ़ते समय हाथ जोड़नेको 'ब्रह्माञ्जलि' कहते है ] ॥१८०॥

स्नातकं घातुकं जज्ञे जज्ञौ दान्तं कृतान्तवत् ।
वाचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥ १८१ ॥

स्नातकमिति । सः कलिः, स्नातकं समाप्तवेदं जनम्, 'स्नाताद्वेदसमाप्तौ' इति कन्प्रत्ययः । घातुकं स्वस्य हन्तारम्, 'लषपत–' इत्यादिना उकञ्प्रत्ययः । जज्ञे मेने, दान्तं तपःक्लेशसहं, तपस्विनमित्यर्थः । 'तपःक्लेशसहो दान्तः' इत्यमरः । कृतान्तवत् यमतुल्यम्, जज्ञौ बुबुधे, तथा वाचं यच्छतीति वाचंयमः मौनव्रती तस्य, 'वाचि यमो व्रते' इति खच्प्रत्ययः । 'वाचंयमपुरन्दरौ च' इति निपातनात् साधुः । दृष्ट्यैव दर्शनेनैव, यमस्येव शमनस्येव, बिभाय भीतवान्, भियो लिट् । सर्वत्रैषां तपःप्रभावस्य दुर्द्धर्षत्वात् भीतिरिति द्रष्टव्यम् ॥ १८१ ॥

---

१. 'तदस्र–' इति पाठ उपेक्ष्यः, इति 'प्रकाश'कारः ।

२. 'स्नातवेदसमाप्तौ' इत्युचितम् । यावादिगणे एतत्सूत्रस्यै दर्शनात् । अत एवामरकोषव्याख्याने भानुजिदीक्षितः—'स्नाताद्वेदसमाप्तौ' इति कन् इति मुकुटः, तन्न, उक्तवचनादर्शनात्, इत्याह 'स्नातक' शब्दस्य व्याख्यायाम् ( अमर २।७।४३ ) । तत्रैव क्षीरस्वामिना च—'स्नानवेदसमाप्तौ' इति यावादित्वात्कन्, इत्युक्तम् ।

वह ( कलि ) स्नातक ( विद्यास्नातक, व्रतस्नातक और उभयस्नातक ) को घातक (अपने अर्थात् कलिको मारनेवाला ) समझा, दान्त ( तपस्याके क्लेशको सहनेवाले तपस्वी ) को यमराजके समान ( प्राणनाशक ) समझा और वाचंयम ( व्रतमें मौन धारण किये हुए ) की दृष्टि ( देखने ) से ही यमराजकी दृष्टिके समान डर गया। [ वाचंयम व्रतियोंके द्वारा अपने देखे जानेपर या स्वयं वाचंयम व्रतियोंको देखे जानेपर कलि उस प्रकार डर गया, जिस प्रकार यमके द्वारा अपने देखे जाने पर या स्वयं यमको देखकर डर गया हो। उन सबके तपके प्रभावसे पापात्मा कलिको बहुत भय हो गया ] ॥ १८१ ॥

स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितम्।
जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥ १८२ ॥

स इति। पापः क्रूरः, सः कलिः, पाषण्डजनान्वेषी शास्त्रदूषकजनानुसन्धायी सन्, वेदपण्डितं वैदिकं, प्राप्नुवन् लभमानः, पश्यन्नित्यर्थः। जलार्थी पानीयाभिलाषी, जन इति शेषः। अनलम् अग्निम्, प्राप्येव लब्ध्वेव, तापात् तत्तेजोजन्यसन्तापाद्धेतोः, अपासरत् अपसृतः। ब्रह्मतेजसः पाषण्डदाहकत्वादिति भावः ॥१८२॥

पाखण्डी लोगोंको खोजता हुआ पापी वह कलि वेदके विद्वानों को पाकर ( उनके तपःप्रभावजन्य ) तापसे उस प्रकार दूर हट गया, जिस प्रकार पानीको चाहता हुआ व्यक्ति अग्निको पाकर ( उसके ) तापसे दूर हटता है ॥ १८२ ॥

तत्र ब्रह्महणं पश्यन्नतिसन्तोपमानशे।
निर्वर्ण्य सर्वमेधस्य यज्वानं ज्वलति स्म सः ॥ १८३ ॥

तत्रेति। सः कलिः, तत्र पुरे, ब्रह्महणं ब्राह्मणं घातयन्तम्, जनमिति शेषः। 'ब्रह्मभ्रूणवृत्रेषु—' इति क्विप्। पश्यन् विलोकयन्, अति अतितराम्, सन्तोषं हर्षम्, आनशे प्राप इत्यर्थः। अथ तं ब्रह्महणं सर्वमेधस्य सर्वमेधाख्ययागस्य, यज्वानं विधिनेष्टवन्तम्, यथाविधि होतारमित्यर्थः। निर्वर्ण्य निश्चित्य, ज्वलति स्म सन्तप्तोऽभूत्, 'ब्रह्मणे ब्राह्मणमालभत' इति श्रुत्या सर्वमेधे ब्राह्मणादिसर्वालम्भविधानात् तस्य धर्मत्वादिति भावः ॥ १८३ ॥

वहां पर वह ( कलि ) ब्रह्मघातीको देखता हुआ अत्यन्त सन्तोषको प्राप्त किया, किन्तु उसे विधिपूर्वक किये जाते हुए सर्वमेधयज्ञ निश्चितकर अर्थात् जानकर ज्वरार्त ( सन्तप्त ) हो गया ॥ १८३ ॥

यतिहस्तस्थितैस्तस्य राम्भैरारम्भि तर्जना।
दुर्जनस्याजनि क्लिष्टिर्गृहिणां वेदयष्टिभिः ॥ १८४ ॥

यतीति। दुर्जनस्य खलस्य, तस्य कलेः, यतीनां मस्करिणाम्, परिव्राजकानामित्यर्थः। हस्तेषु करेषु, स्थितैः वर्त्तमानैः, राम्भैः वेणुदण्डैः, 'त्रिदण्डेन कमण्डलुः' इति स्मृतेरिति भावः। 'राम्भस्तु वैणवः' इत्यमरः। तर्जना त्रासनम्, आरम्भि

कृतेत्यर्थः । तथा गृहिणां गृहस्थाश्रमिणाम्, वेदयष्टिभिः सन्दर्भवेणुदण्डैश्च, 'वेणुमान् स कमण्डलुः' इति स्मृतेः, इति भावः । क्लिष्टिः क्लेशः, अजनि जनिता जनेर्ण्यन्तात् कर्मणि लुङ् । 'यतिः पाराशरी भीमस्तत्कर्म मस्करी यतिः । वद्धदर्भा वेदयष्टिर्दम्भो राम्भस्तु वैणवः ॥' इति सर्वत्र यादवः ॥ १८४ ॥

संन्यासियोंके हाथमें स्थित बांसके दण्डों उस ( कलि ) को भर्त्सित करने लगे और गृहियों ( गृहाश्रमियों-गृहस्थों ) की वेदयष्टियों ( वेदरूप छड़ियों, अथवा—वेदोंके 'क्रम, जटा' रूप यष्टियों ) से दुष्ट ( उस कलि ) को क्लेश हुआ ॥ १८४ ॥

मण्डलत्यागमेवैच्छद् वीक्ष्य स्थण्डिलशायिनः ।
पवित्रालोकनादेष पवित्रासमविन्दत ॥ १८५ ॥

मण्डलेति । एषः कलिः, स्थण्डिलशायिनः अनास्तृतभूमिशयनव्रतिनः । 'व्रते' इति णिनिः । 'यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ' इत्यमरः । वीक्ष्य दृष्ट्वा, मण्डलत्यागं देशत्यागम् एव, ऐच्छत् अवाञ्छत्, तथा पवित्राणां कुशानाम्, 'अस्त्री कुशं कुथो दर्भः पवित्रम्' इत्यमरः । आलोकनात् दर्शनात्, पवेः कुलिशात्, त्रासं भयम्, अविन्दत अलभत । 'यथा शक्रकरे वज्रं तथा विप्रकरे कुशाः' इति स्मृतेरिति भावः ॥ १८५ ॥

यह ( कलि ) विस्तर ( कुशासन आदि ) रहित भूमिपर सोनेवाले व्रतियोंको देखकर ( नलके ) राज्यको ही छोड़नेकी इच्छा किया तथा पवित्रके देखनेसे वज्रसे उत्पन्न भयके समान भयको प्राप्त किया । [ गर्भरहित अग्रभाग युक्त कुशद्वयकी 'पवित्र' संज्ञा है । 'इन्द्रके हाथसे वज्रके समान ब्राह्मणोंके हाथमें कुशा है' ऐसे स्मृतिके कहनेसे वह कलि वज्रसे-के समान उन कुशाओंसे डर गया ] ॥ १८५ ॥

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणाम् ।
क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत ॥ १८६ ॥

अपश्यदिति । सः कलिः, जिनं जिनाख्यं बौद्धदैवतम्, स्वमित्रमिति भावः । अन्विष्यन् मृगयन्, ब्रह्मचारिणां ब्रह्मचर्यपरायणानाम्, अजिनम् आसनार्थं मृगचर्म, जिनराहित्यञ्च, अपश्यत् ऐक्षत, किञ्च क्षपणार्थी स्वमित्रबौद्धसंन्यासिनोऽन्वेषी, सदीक्षस्य दीक्षितस्य राज्ञः, अक्षपणं पाशकदेवनम्, क्षपणकराहित्यञ्च, ऐक्षत अपश्यत्, 'राजसूये अभिषेचनीये अक्षावचैर्दिव्यन्तीति[1] श्रवणात्; तदुभयमप्यस्य दुःसहमिति भावः ॥ १८६ ॥

वह ( कलि ) जिन ( बौद्ध-विशेष ) को खोजता हुआ, ब्रह्मचारियोंके ओढ़नेका मृगचर्म ( पक्षा०—जिनाभाव ) को ही देखा तथा क्षपणको चाहता ( खोजता ) हुआ, ( राजसूय यज्ञमें ) दीक्षित ( राजा ) के अक्षपण ( जुएके दावपर रखे हुए धनराशि, पक्षा०—क्षपणा-

---

१. 'राजसूये यजमानोऽक्षैर्दीव्यती'ति श्रुतेरिति 'प्रकाश' व्याख्या ।

-भाव ) को देखा । [ राजसूय यज्ञमें जुआ खेलना दोषप्रद नहीं माना गया है, अतः उन्हें देखकर कलिको स्वपक्षीय किसीके नहीं मिलनेसे उसके लिए वहां सभी दुःखदायी ही हुए ] ॥

**जपतामक्षमालासु बीजाकर्षणदर्शनात् ।**
**स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् ॥ १८७ ॥**

**जपतामिति । विपरीतदृक् वेदविरुद्धदर्शी, सः कलिः, जपताम् इष्टमन्त्रस्य असकृदुच्चारणं कुर्वताम्, जनानामिति शेषः । अक्षमालासु जपमालिकासु, स्थितानां बीजानां पद्माक्षादिबीजानाम्, जपसङ्ख्यानार्थानामिति भावः । आकर्षणस्य आकृष्टेः, पुनः पुनर्भ्रामणस्येति यावत् । दर्शनात् अवलोकनात्, जीवाकृष्टिकष्टानि निजप्राणाकर्षणदुःखानि, अन्वभूत् अनुभूतवान् ॥ १८७ ॥**

वेदके विपरीत देखनेवाला वह ( कलि ) अक्षमालाओं (रुद्राक्ष, पद्माक्ष इत्यादि मालाओं) में ( गायत्री आदि मन्त्र ) जपनेवालोंके ( मन्त्र-गणनाके लिए ) बीजों ( मनियों ) का खींचना ( फेरना ) देखनेसे अपने जीवके खींचने ( बाहर निकाले जाने ) के कष्टोंका अनुभव किया । [ गायत्र्यादि मन्त्र जपना देखकर वेदविरुद्ध द्रष्टा कलिको अपने प्राणोंके निकलनेके समान कष्ट हुआ ] ॥ १८७ ॥

**त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणम् ।**
**परमैच्छद् दृशोरेव निजयोरपकर्षणम् ॥ १८८ ॥**

**त्रिसन्ध्यमिति । स कलिः, तत्र पुरे, त्रिसन्ध्यं सन्ध्यात्रये, 'समाहारैकत्वे वा तस्य' इति नपुंसकत्वम्, अत्यन्तसंयोगे द्वितीया । विप्राणां ब्राह्मणानाम्, अघमर्षणं तत्तन्मन्त्रसाध्यं पापहरं चुलुकोदकेन नासास्पर्शाभिमन्त्रितं क्रियाविशेषम्, पश्यन् अवलोकयन्, परं केवलम्, निजयोः दृशोरेव स्वनेत्रयोरेव, अपकर्षणम् उत्पाटनम्, ऐच्छत् अवाञ्छत् । अघमर्षणक्रियां दृष्ट्वा नेत्रोत्पाटनवद्दुःखमाप इति भावः ॥ १८८ ॥**

वह ( कलि ) वहांपर तीनों सन्ध्याओं ( प्रातःसन्ध्या, मध्याह्नसन्ध्या और सायंसन्ध्या ) में ब्राह्मणोंका अघमर्षण ( 'ऋतञ्च सत्यञ्चाभिद्धात्……' मन्त्रसे चुल्लूमें जल लेकर नासिका स्पर्श करते हुए क्रिया-विशेष करना ) देखकर केवल अपने नेत्रोंको ही निकालना चाहा ( पाठा०—नेत्रोंको निकालना ही अच्छा माना ) अर्थात् अपने नेत्रोंको निकालनेसे भी अधिक दुःखको प्राप्त किया ॥ १८८ ॥

**अद्राक्षीत् तत्र कञ्चिन्न कलिः परिचितं क्वचित् ।**
**भैमीनलव्यलीकाणु-प्रश्नकामः परिभ्रमन् ॥ १८९ ॥**

**अद्राक्षीदिति । कलिः युगाधमः, भैमीनलयोः दमयन्तीनैषधयोः, व्यलीकाणोः अकार्यलेशस्य, किञ्चिन्मात्रदोषस्यापीत्यर्थः । 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने'**

१. 'वरमैच्छत्' इति पाठान्तरम् । २. 'किञ्चिन्न' इति पाठान्तरम् ।

इति विश्वः । प्रश्नं पृच्छाम्, कामयते वाञ्छति इति तत्कामः सन्, 'शीलिकामिभक्ष्याचरिभ्यो णः' । तत्र पुरे, परिभ्रमन् विचरन्, क्वचित् कुत्रापि, कञ्चिदपि कमपि, परिचितं संस्तुतम्, जनमिति शेषः । न अद्राक्षीत् न ऐक्षिष्ट ॥ १८९ ॥

कलि दमयन्ती तथा नलके लेशमात्र भी दोषको पूछनेकी इच्छा कर उस नगरीमें घूमता हुआ कहींपर किसी परिचित ( उनके लेशमात्र भी दोष जानकार, अथवा—अपने सुपरिचित ) नहीं देखा । ( अथवा—"'घूमता हुआ कहींपर ( किसी व्यक्तिमें—दमयन्ती, नल तथा वहांके निवासियोंमें ) कुछ भी ( थोड़ा भी दोष ) नहीं देखा अर्थात् वहांके सभी लोगोंको सर्वथा दोषहीन ही देखा ) ॥ १८९ ॥

तपःस्वाध्याययज्ञानामकाण्डद्विष्टतापसः ।
स्वविद्विषां श्रियं तस्मिन् पश्यन्नुपततापं सः ॥ १९० ॥

तप इति । अकाण्डे अनवसरे, अकारणमित्यर्थः । द्विष्टाः विरुद्धाः, तापसाः तपस्विनः येन तादृशः, सः कलिः, तस्मिन् पुरे, स्वविद्विषां निजविरोधिनाम्, तपः चान्द्रायणादिचर्या, स्वाध्यायः वेदपाठः, यज्ञाः सोमादयः तेषाम्, श्रियं समृद्धिम्, पश्यन् अवलोकयन् उपततापं सन्तप्तो बभूव, शत्रुवृद्धेरसहनीयत्वादिति भावः॥१९०॥

अकारण तपस्वियोंके साथ द्वेष करनेवाला कलि उस पुरीमें अपने वैरी तप, स्वाध्याय और यज्ञकी सम्पत्ति ( अथवा—उन्नति )'को देखकर ( शत्रु-समृद्धिको सहन नहीं कर सकनेके कारण ) सन्तप्त हुआ । [ पञ्चाग्नि आदिसे साध्य 'तप', वेदादिका पढ़ना 'स्वाध्याय' और देवोंके उद्देश्यसे द्रव्यत्याग करना 'यज्ञ' कहलाता है ] ॥ १९० ॥

कम्रं तत्रोपनम्राया विश्वस्या वीक्ष्य तुष्टवान् ।
स मम्लौ तं विभाव्याथ वामदेवाभ्युपासकम्[1] ॥ १९१ ॥

कम्रमिति । स कलिः, तत्र पुरे, उपनम्रायाः उपासकस्य समीपं स्वयमागतायाः, विश्वस्याः सर्वस्याः, सजातीयाया विजातीयायाः गम्यायाः अगम्यायाश्चेत्यर्थः, स्त्रिया इति शेषः । कम्रं कमितारम्, रन्तारमित्यर्थः । कञ्चन पुरुषमिति शेषः । 'नमिकम्पि—' इत्यादिना रप्रत्ययः । वीक्ष्य दृष्ट्वा, तुष्टवान् तुतोष, तस्य महापातकित्वेन स्वाश्रयलाभाशयेति भावः । अथ अनन्तरम्, विशेषनिरीक्षणानन्तरमित्यर्थः । तं कम्रं पुरुषम्, वामदेवः तन्नामदेवताविशेषः, तस्य अभ्युपासकं पूजकम्, विभाव्य विमृश्य, मम्लौ विषसाद । तदुपासकानां 'न काञ्चन स्वयमागतां परिहरेत्' इति श्रुतेस्तदुपभोगस्य धर्म्यत्वादिति भावः ॥ १९१ ॥

वह ( कलि ) वहांपर उपासकके समीप आयी हुई सर्व जातिवालोंके साथ सम्भोग करनेवाली स्त्रीके कामुक ( किसी पुरुष ) को देखकर ( यह महापातकी होनेसे मेरे पक्षका है

---

१. 'वामदेव्या—' इति पाठान्तरम् ।

ऐसा समझकर पहले ) प्रसन्न हुआ, ( किन्तु ) वादमें उसको 'वामदेव' नामक देवता-विशेष (.अथवा पाठा०—'वामदेव'से दृष्ट 'साम'-विशेष ) का उपासक जानकर ( 'वामदेवोपासने सर्वाः स्त्रिय उपसीदन्ति' इस श्रुतिके अनुसार धर्म-विरुद्ध काम करनेवाला नहीं होनेसे अपना विपक्षी = धर्मात्मा मानकर ) खिन्न हो गया ॥ १९१ ॥

**वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि ।**
**न वेदध्वनिरालम्बमम्बरे विततार च ॥ १९२ ॥**

**वैरिणीति । वैरिणी विरोधिनी, कलेरिति भावः । शुचिता लोकानां बाह्याभ्यन्तरशुद्धता गोमयाद्यनुलेपनादिजनितभूमिशुद्धता च, तस्मै कलये, भुवि निषधभूमौ, प्रवेशम् अन्तर्गमनम् न ददौ न दत्तवती, तथा अम्बरे च नगरसम्बन्धिनभसि च, वेदध्वनिः ब्रह्मघोषः, आलम्बम् आलम्बनम् , अवस्थानावकाशमित्यर्थः । न विततार न ददौ ॥ १९२ ॥**

( कलिकी ) विरोधिनी पवित्रता ( लोगोंकी गोवर आदिके द्वारा लीपने-पोतनेसे वाहरी शुद्धि तथा रागद्वेषादि-शून्य होनेसे आभ्यन्तर शुद्धि ) ने उस (कलि ) के लिए पृथ्वीपर प्रवेश नहीं दिया अर्थात् शुद्धिके कारण कलि पृथ्वीपर नहीं ठहर सका और ( आकाशतक गूँजती हुई ) वेदध्वनिने आकाशमें ( भी उस कलिके लिए ) आश्रय नहीं दिया ॥ १९२ ॥

**दर्शस्य दर्शनात् कष्टमग्निष्टमोस्य चानशे ।**
**जुघूर्णे पौर्णमासेक्षी सौमं सोऽमन्यतान्तकम् ॥ १९३ ॥**

**अनन्तरश्लोकद्वयं प्रक्षिप्तमिति[1] पूर्वैरुपेक्षितम् , तथाऽपि क्वचित् स्थितत्वात् व्याख्यायते-दर्शस्येत्यादि । सः कलिः, दर्शस्य दर्शयागस्य, तथा अग्निष्टोमस्य तदाख्ययागविशेषस्य च, दर्शनात् अवलोकनात् , कष्टं महत् दुःखम् , आनशे प्राप तथा पौर्णमासं पूर्णमासेष्टिम् , ईक्षते पश्यति इति पौर्णमासेक्षी पौर्णमासयागदर्शी सन् , जुघूर्णे बभ्राम, मूर्च्छितप्रायोऽभूदित्यर्थः । तथा सौमं सोमयागञ्च, अन्तकं मृत्युम् , अमन्यत अबुध्यत, मरणयातनामिव यातनामन्वभूदित्यर्थः ॥ १९३ ॥**

'दर्श' ( अमावस्या तिथिका यज्ञ ) तथा 'अग्निष्टोम' यज्ञके देखनेसे कलिको कष्ट हुआ, 'पौर्णमास' ( पूर्णिमाको होनेवाले यज्ञ ) को देखनेवाला वह ( कलि ) चकरा गया अर्थात् 'पौर्णमास' यज्ञको देखनेसे कलिको चक्कर आ गया और 'सोम' यज्ञको उसने मरण ही माना अर्थात् सोमयज्ञसे मरणके समान यातनाको प्राप्त किया । [ उन यज्ञोंको देखनेसे कलिको वर्णनातीत कष्ट हुआ। लोकमें भी किसी व्यक्तिको पहले ज्वरादिजन्य कष्ट, तदनन्तर चक्कर ( मूर्च्छा ) और अन्तमें मरण होता है, सो कलिको भी क्रमशः वैसा पीड़ित होना ठीक ही है ] ॥ १९३ ॥

---

१. परं 'प्रकाश'कृता तु व्याख्यातमेवेति बोध्यम् ।

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः ।
नापश्यत् सोऽभिनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥ १९४ ॥

तेनेति । तेन कलिना, वीरघ्नाः क्षात्रधर्मानुसारेण रणे वीरघातिनः, जनाः इति शेषः, 'अमनुष्यकर्तृके च' इति चकारादक्, अत एव 'क्वचिन्मनुष्यकर्तृके च' इति कौमारं सूत्रम् । अदृश्यन्त ऐक्ष्यन्त, तु किन्तु, वीरहणः क्षत्रियघातिनः, जिनाः भट्टभास्कराः अग्नित्यागिनः वा वीरहा वा, 'एष देवानां योऽग्निमुद्वासयत' इति श्रुतेरित्यनेन उपलक्षिता इति यावत्, न, अदृश्यन्त इति पूर्वक्रियया अन्वयः । सः कलिः, अभिनिर्मुक्तान् यान् सुप्तान् अभि सूर्योऽस्तमेति ते अभिनिर्मुक्ताः तान्, मुञ्चतेः कर्मणि क्तः । सूर्यास्तकाले निद्रितान् आचारहीनान्, न अपश्यत् न व्यलोकयत्, किन्तु जीवन्मुक्तान् आत्मारामान् पुण्यान् जनान्, अवैक्षत अपश्यत् ॥१९४॥

उस ( कलि ) ने ( युद्धमें ) शूरवीरोंको मारनेवाले लोगोंको देखा, ( किन्तु ) क्षत्रियोंको मारनेवाले भट्टभास्करोंको नहीं देखा ( अथवा—सदाचार अथवा—अग्निहोत्रका त्याग करनेवालोंको नहीं देखा । अथवा—वीरोंको मार सकनेवाले लोगोंको देखा, किन्तु वीरोंको मारे हुए लोगोंको नहीं देखा—इससे यह सूचित होता है कि यद्यपि उस राष्ट्रमें ऐसे वीर थे जो वीरोंको युद्धमें मार सकते थे, किन्तु इतना सुशासन एवं शान्त तथा धर्मप्राण राज्य था कि सभी लोग भाईचारेके नातेसे रहते थे, किसी वीरको कोई दूसरा वीर मारता नहीं था ) । तथा अभिनिर्मुक्त ( सूर्यास्त होनेतक सोनेवाले, अत एव अधार्मिक ) लोगोंको नहीं देखा और जीवन्मुक्तों ( जीवितावस्थामें विषयपरित्यागी होनेसे आत्माराम ब्रह्मज्ञानियों ) को देखा ॥ १९४ ॥

स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
होमशेषीभवत्सोम-भुजस्तान् वीक्ष्य दूनवान् ॥ १९५ ॥

स इति । सः कलिः, स्पृष्टं कृतस्पर्शम् परस्परम् अन्योऽन्यं यैः तान् स्पृष्टपरस्परान् परस्परस्पर्शपूर्वकमित्यर्थः । अश्नतः भक्षयतः, विप्रान् ब्राह्मणान्, दृष्ट्वा विलोक्य, तुतोष मुमुदे, भोजनकाले परस्परस्पर्शस्य निषेधात् तद्विपरीतव्यवहारिणस्तान् दृष्ट्वा स्वाश्रयलाभाशया सन्तुष्ट इत्यर्थः । अथ तान् पूर्वोक्तप्रकारेणाश्नतो विप्रान्, होमशेषीभवन्तं होमावशिष्टम्, सोमं सोमलताचूर्णम्, भुञ्जते अश्नन्ति इति भुजः, वीक्ष्य दृष्ट्वा, ज्ञात्वा इति यावत् । दूनवान् परतप्तवान्, दुःखमनुभूतवानित्यर्थः । 'न सोमेनोच्छिष्टो भवति' इति श्रुतेः, 'इक्षुदण्डे तिले सोमे नोच्छिष्टो मनुरब्रवीत्' इति स्मृतेश्च सोमभक्षणे परस्परस्पर्शदोषाभावादिति भावः ॥ १९५ ॥

वह ( कलि ) परस्परमें स्पर्शकर खाते हुए ब्राह्मणोंको देखकर ( अधर्माचारयुक्त होनेसे आश्रयप्राप्तिकी सम्भावनाकर ) सन्तुष्ट हुआ, ( किन्तु ) होम करनेपर बचे हुए सोमलता-

१. 'जनाः' इति पाठान्तरम् ।

चूर्णको खाते हुए उनको देखकर ( वैसा करना धर्मविरुद्ध नहीं होनेसे अपने आश्रय पानेकी आशा नष्ट हो जानेसे ) व्यथित हुआ ॥ १९५ ॥

दृष्ट्वा[1] जनं रजोजुष्टं तुष्टिं प्राप्नोज्झटित्यसौ[2] ।
तं पश्यन् पावनस्नानावस्थं दुःस्थस्ततोऽभवत् ॥ १९६ ॥

दृष्ट्वेति । असौ कलिः, रजोभिः धूलिभिः, जुष्टं सेवितम्, व्याप्तमिति यावत् । जनं लोकम्, दृष्ट्वा वीक्ष्य, झटिति द्राक्, तुष्टिं सन्तोषम्, प्राप्नोत् अलभत, धूलिमलिनं जनं दृष्ट्वा जनोऽयं निषिद्धच्छागखरादिखुरोत्थधूलिव्याप्त इति निश्चित्य स्वाश्रयलाभसम्भावनया तुतोपेत्यर्थः । ततः विशेषनिरीक्षणानन्तरमित्यर्थः । तं रजोजुष्टं जनम्, पावनं पवनसम्बन्धि, यत् स्नानं गोरजःस्नानमित्यर्थः । तादृशी अवस्था दशा यस्य तादृशम्, वायव्यस्नाननिरतमित्यर्थः । पश्यन् विलोकयन्, जानन् इत्यर्थः । दुःस्थः दूनः, दुःखित इत्यर्थः । अभवत् अजायत । 'वारुणन्तु जलस्नानमापो हिष्ठेति मान्त्रिकम् । वायव्यं गोरजःस्नानमाग्नेयं भस्मनोदितम् ॥ यत्तु सातपवर्षेण दिव्यं तदिति पञ्चधा ॥' इति मनूक्त[3]पञ्चविधस्नानान्तर्गतस्य वायव्यस्नानस्य वैधत्वात् तदवस्थं तं दृष्ट्वा दुःखितोऽभवदित्यर्थः ॥ १९६ ॥

वह ( कलि ) धूलिसे व्याप्त मनुष्यको देख ( पाठा०—सुन ) कर ( रजस्वला स्त्रीके रजसे, अथवा गधे आदिके अपवित्र धूलिसे व्याप्त समझकर अपने आश्रय मिलनेकी आशासे ) झट सन्तोषको प्राप्त किया अर्थात् प्रसन्न हो गया, ( किन्तु ) बादमें ( विचार करनेपर ) वायु-स्नान किये हुए उसे देखता अर्थात् जानता हुआ वह ( कलि ) दुःखित हो गया । [ गौओंके खुरसे उड़ती हुई धूलिके द्वारा स्नान करनेको 'वायव्य' स्नान स्मृतिकारोंने कहा है ] ॥ १९६ ॥

अधावत् क्वापि गां वीक्ष्य हन्यमानामयं मुदा ।
अतिथिभ्यस्तु तां बुद्ध्वा मन्दं मन्दो न्यवर्त्तत ॥ १९७ ॥

अधावदिति । मन्दः मूढः, अयं कलिः, क्वापि कुत्रचित् प्रदेशे, गां सौरभेयीम्, हन्यमानाम् आलभ्यमानाम्, वीक्ष्य दृष्ट्वा, मुदा हर्षेण, अधावत् द्रुतमगच्छत् । तु किन्तु, तां गाम्, अतिथिभ्यः अतिथ्यर्थं हन्यमानाम्, बुद्ध्वा ज्ञात्वा, मन्दं शनैः शनैः, न्यवर्त्तत व्यरमत्, सखेदं प्रत्यागच्छदित्यर्थः । 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति विधानादिति भावः ॥ १९७ ॥

यह ( कलि ) किसी स्थानपर मारी जाती हुई गायको देखकर ( उसे अधर्म कार्य होनेसे अपने आश्रयलाभकी आशाकर ) हर्षसे दौड़ा, ( किन्तु ) उसको ( पाठा०—वैसा करना ) अतिथियोंके लिए जानकर मूर्ख ( वह कलि ) लौट आया ( अथवा—शीघ्र लौट आया ) ।

---

१. 'श्रुत्वा' इति पाठान्तरम् । २. 'प्राप्तो' इति पाठान्तरम् ।
३. मनुस्मृताविदं वचनं नोपलभ्यते ।

[ अतिथियोंके लिए बैल, वत्सतरी या बकरेका मांस देना शास्त्र-विहित होनेसे उसे धर्मकार्य समझकर कलि वापस आ गया। 'उत्तररामचरित' नाटकमें भी वसिष्ठ मुनिके लिये वत्सतरीको मारनेका वर्णन मिलता है। किन्तु कलियुगमें देवरसे पुत्रोत्पत्ति, मांससे श्राद्ध करने तथा अतिथिको मांस भोजन करानेका स्मृतिकारोंने निषेध किया है; अतः यह प्रसङ्ग सत्ययुगका होनेसे धर्मोपेत है ] ॥ १९७ ॥

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम्।
यजमानं निरूप्यैणं दूरं दीनमुखोऽद्रवत् ॥ १९८ ॥

हृष्टवानिति। सः कलिः, नित्यनैमित्तिकत्यजं दानहोमादिकर्मत्यागिनम्, क्विप्। द्विजं विप्रम्, दृष्ट्वा वीक्ष्य, हृष्टवान् मुमुदे। अथ एनं पूर्वोक्तद्विजम्, यजमानं यज्ञे दीक्षितम्, निरूप्य निश्चित्य, दीनमुखः विषण्णवदनः सन्, दूरं विप्रकृष्टदेशम्, अद्रवत् अधावत्, पलायत इत्यर्थः। दीक्षितो न ददाति न जुहोति न वदतीति दीक्षितस्य तन्निषेधे तेन दोषाभावादिति भावः ॥ १९८ ॥

वह ( कलि ) नित्य नैमित्तिक ( दान, अग्निहोत्र आदि ) कर्मका त्याग करनेवाले द्विजको देखकर हर्षित हुआ, ( किन्तु बादमें ) उसे यजमान ( यज्ञ करते हुए—यज्ञमें दीक्षित ) निश्चितकर दीनमुख होता हुआ दूर हट गया। [ यज्ञमें दीक्षित द्विजको नित्य, नैमित्तिक कर्मका त्याग करना धर्म-विरुद्ध नहीं होनेसे उदास होकर यहांसे कलि भाग गया ] ॥ १९८ ॥

आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम्।
सर्वस्वारस्य यज्वानमेनं दृष्ट्वाऽथ विव्यथे ॥ १९९ ॥

आननन्देति। अयं कलिः, तत्र तस्मिन्, पुरे राजधान्याम्, आत्मघातिनम् [illegible], निरीक्ष्य विलोक्य, आननन्द स्वाश्रयलाभाशया तुतोष। एनम् आत्मघातिनम्, सर्वस्वारस्य सर्वस्वारनामात्माहुतिकयागविशेषस्य, तथा रघुवंशेऽप्युक्तं—'यो मन्त्रपूतां तनुमप्यहौषीत्' इति। यज्वानं यागकारिणम्, दृष्ट्वा वीक्ष्य, तद्याजिनं विदित्वेत्यर्थः। विव्यथे सन्तताप। 'सः अन्त्येष्टौ सर्वस्वाराख्ये यज्ञे आत्मानमेव पशुमन्त्रैः संस्कृतं घातयित्वा यज्ञभागमर्पयति' इति श्रुतेः। तत्रात्मघातस्य वैधत्वेन दोषाभावाद् व्यथितोऽभवदित्यर्थः ॥ १९९ ॥

यह ( कलि ) उस नगरमें आत्मघाती ( आत्महत्या करनेवाले ) को देखकर प्रसन्न हुआ, ( किन्तु ) बादमें 'सर्वस्वार' नामक यज्ञ करते हुए उसे देख ( समझ ) कर दुःखित हो गया। ['सर्वस्वार' यज्ञमें पशुमन्त्रसे संस्कारप्राप्त व्यक्तिका अपनेको मारकर यज्ञभागार्पण करनेपर उस आत्महत्याको धर्मविरुद्ध नहीं होनेसे वह कलि दुःखित हुआ। किन्तु उक्त यज्ञ करनेका अधिकार औषधादि सेवनसे भी स्वस्थ नहीं होनेवाले किसी असाध्य रोगसे युक्त मरणासन्न पुरुषको ही है, स्वस्थ पुरुषको नहीं ] ॥ १९९ ॥

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् ।
जज्ञौ यज्ञक्रियामज्ञः स भाण्डाकाण्डताण्डवम् ॥ २०० ॥

क्रताविति । अज्ञः मूर्खः, सः कलिः, महाव्रते महाव्रताख्ये, क्रतौ यागे, ब्रह्मचारिणः वर्णिनः, इत्वर्याः कुलटायाश्च, रतं मैथुनम् , 'महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवादः' इति श्रुतिविहितं ग्राम्यभाषणादिकं वा, 'इण्नश्जिसर्तिभ्यः क्वरप्'। 'असती कुलटेत्वरी' इत्यमरः । पश्यन् विलोकयन् , यज्ञक्रियां यागव्यापारम् , भाण्डानाम् अश्लीलभाषिणाम् , अकाण्डताण्डवम् असमयकृतोद्धतनृत्यमिव, जज्ञौ मेने, भण्डचेष्टितममन्यतेत्यर्थः ॥ २०० ॥

मूर्ख वह ( कलि ) 'महाव्रत' नामक यज्ञमें ब्रह्मचारी तथा पुंश्चली स्त्रीके रत ( मैथुन, अथवा—अश्लील सम्भाषण ) को देखता हुआ यज्ञकार्यको भाँड़ोंका असामयिक नृत्य ही माना । [ जिस प्रकार भाँड़लोग सबके समक्ष अश्लील गाली-गलौज करते हैं, कलिने 'महाक्रतु' यज्ञमें ब्रह्मचारी तथा व्यभिचारिणीके रतको देखकर उक्त यज्ञको भी वैसा ही समझा, क्योंकि वह मूर्ख था; किन्तु 'महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवादः' इस उपनिषद्वाक्यानुसार वैसा करना धर्म-प्रतिकूल नहीं था ] ॥ २०० ॥

यज्वभार्याश्वमेधाश्व-लिङ्गालिङ्गिवराङ्गताम् ।
दृष्ट्वाऽऽचष्ट स कर्त्तारं श्रुतेर्भण्डमपण्डितः ॥ २०१ ॥

यज्वेति । अपण्डितः मूर्खः, सः कलिः, यज्वभार्यायाः यजमानस्य पत्न्याः, अश्वमेधे तदाख्ययज्ञे, अश्वस्य यज्ञियाश्वस्य, लिङ्गेन मेहनेन, आलिङ्गिवराङ्गतां संयोजितयोनिताम् , 'निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते' इति श्रुतिविहितामिति भावः । दृष्ट्वा वीक्ष्य, श्रुतेः कर्त्तारं वेदप्रणेतारम् , भण्डम् असज्जनम् , अश्लीलविषयोपदेष्टारमिति यावत् । आचष्ट अकथयत् । केनचित् भण्डेन प्रणीताः वेदाः इति बभाषे इत्यर्थः ॥ २०१ ॥

यज्ञकर्ताकी स्त्रीके वराङ्गसे अश्वमेधके घोड़ेके शिश्नको संसृष्ट देखकर अपण्डित ( श्रुति-विधानका अज्ञ ) वह कलि ( अपने सहचर द्वापरसे, या स्वयं अपने प्रति ) वेद बनानेवाले ( ईश्वर ) को भाँड़ कहा । [ अश्वमेध यज्ञमें वैसा करनेका विधान है, अतः राजाज्ञाके समान वेदाज्ञाके विना विकल्प किये स्वीकार करनेका मनुवचन होनेसे वैसा करना धर्मविरुद्ध नहीं था, किन्तु श्रुतिको नहीं जाननेवाला कलि अज्ञताके कारण वेदकर्ताको ही भण्ड कहने लगा ] ॥ २०१ ॥

अथ भीमजया जुष्टं व्यलोकत कलिर्नलम् ।
दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाविभुम् ॥ २०२ ॥

---

१. 'भण्डा—' इति 'प्रकाश' सम्मतः पाठः ।

अथेति । अथ पूर्वोक्तरूपदर्शनानन्तरम्, कलिः चतुर्थयुगाधिपतिः, भीमजया भैम्या, जुष्टं सेवितम्, दुष्टदृग्भिः पापदृष्टिभिः, अन्यत्र—रोगोपहतदृष्टिभिः, दुरालोकं दुर्दर्शनम्, नलं वैरसेनिम्, प्रभया दीप्त्या सूर्यभार्यया संज्ञादेव्या च जुष्टं प्रभाविभुं प्रभाकरं, सूर्यम् इवेत्यर्थः । व्यलोकत अपश्यत् ॥ २०२ ॥

इस ( नगरमें परिभ्रमण करनेपर स्वपक्षीय किसी अधर्मकृत्यको नहीं देखने ) के बाद कलिने प्रकृष्ट कान्तिवाली भीमकुमारी ( दमयन्ती ) से युक्त तथा ( राग-द्वेषादिसे कलिके समान ) दूषित दृष्टिवालोंसे कठिनतासे देखे जाने योग्य नलको उस प्रकार देखा, जिस प्रकार प्रकृष्टतेज ( या—'संज्ञा' नामकी अपनी स्त्री ) से युक्त ( काच, कामला आदि रोगोंसे ) दूषित दृष्टि ( नेत्र ) वालोंसे प्रभापति ( सूर्य ) को कोई देखता है। [ प्रभासे सेवित सूर्यके साथ दमयन्तीसे सेवित नलकी उपमा देनेसे यह ध्वनित होता है कि समय ( रात्रि ) के बिना आये जिस प्रकार सूर्यको प्रभासे कोई पृथक् नहीं कर सकता और पृथक् होनेपर भी कुछ समयके बाद पुनः प्रभासे वह सूर्य पूर्ववत् संयुक्त हो जाता है उसी प्रकार नलको भी दमयन्तीसे कलि बिना समय आये पृथक् नहीं कर सकेगा, और फिर नियत समय बीत जानेपर नल पुनः पूर्ववत् दमयन्तीको प्राप्त करेंगे ] ॥ २०२ ॥

तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे ।
मर्मच्छेदमिवानर्च्छ स तन्नर्मोक्तिभिर्मिथः[1] ॥ २०३ ॥

तयोरिति । सः कलिः, तयोः भैमीनलयोः, सुहृदोः भावः सौहार्दं प्रेम, 'युवादिभ्योऽण्', 'हृद्भग—' इत्यादिना उभयपदवृद्धिः । तस्य सान्द्रत्वं घनत्वम्, पूर्णत्वमित्यर्थः । सौहार्दोत्कर्षमिति यावत् । पश्यन् अवलोकयन्, शल्यम् अस्त्रविशेषाघातम्, आनशे इव प्राप इव । तथा मिथः परस्परम्, तयोः भैमीनलयोः, नर्मोक्तिभिः परिहासविशेषैः, मर्मच्छेदं हृदयच्छेदनम्, आनर्च्छ इव प्राप इव । अनुबभूव इवेत्यर्थः ॥ २०३ ॥

उन दोनों ( नल तथा दमयन्ती ) के सौहार्दकी सघनता ( परिपूर्णता ) को देखता हुआ वह ( कलि ) काँटा चुभे हुएके समान पीड़ित हुआ और उनके नर्मोक्तियों ( रतिकालिक परिहास वचनों ( पाठा०—नर्म-समूहों ) से ( हृदयादि ) मर्मस्थलोंके काटे जानेके समान अनुभव किया ॥ ॥ २०३ ॥

अमर्षादात्मनो दोषात् तयोस्तेजस्वितागुणात् ।
स्प्रष्टुं दृशाऽप्यनीशस्तौ तस्मादप्यचलत् कलिः ॥ २०४ ॥

अमर्षादिति । कलिः कलियुगम्, अमर्षात् क्रोधात् आत्मनः स्वस्य, दोषात् पापिष्ठत्वापराधात्, तयोः भैमीनलयोः, तेजस्वितागुणाच्च प्रभावसम्पन्नत्वाच्च, तौ भैमीनलौ, दृशाऽपि दृष्ट्याऽपि, किमुत करेणेति भावः । स्प्रष्टुं परामृष्टुम्, द्रष्टुमपि

1. 'तन्नर्मोर्मि—' इति पाठान्तरम् ।

इत्यर्थः । अनीशः अक्षमः सन् , तस्मादपि तत्स्थानादपि, अचलत् पलायत ॥२०४॥

क्रोध ( नल दमयन्तीके नर्म-परिहासादि नहीं सह सकनेके कारण उत्पन्न रोष ), अपने ( महापातकादि रूप ) दोष तथा उन दोनोंकी तेजस्विताके गुण ( शरीरसौन्दर्यादि तथा नलके क्षत्रियत्वादिजन्य और दमयन्तीके पातिव्रत्यादिजन्य तेज आदि होने ) से उन्हें नेत्रसे भी स्पर्श करने अर्थात् देखनेमें भी असमर्थ कलि वहां ( नलके पास या नलके महल ) से चल पड़ा ( भाग चला ) [ लोकमें भी क्रोधी, दोषी एवं किसीके तेजसे मलिन या चकाचौंधयुक्त कोई व्यक्ति उसके पास नहीं ठहरता ] ॥ २०४ ॥

अगच्छदाश्रयान्वेषी नलद्वेषी स निःश्वसन् ।
अभिरामं गृहारामं तस्य रामसमश्रियः ॥ २०५ ॥

अगच्छदिति । नलद्वेषी निषधेशविरोधी, अत एव आश्रयान्वेषी नलनिर्यातनार्थं तत्र निवासार्थी, सः कलिः, निःश्वसन् कुत्रापि तदलाभात् उच्छ्वसन् सन् , रामसमश्रियः रामचन्द्रसमानकान्तेः, तस्य नलस्य, अभिरामं रमणीयम् , गृहारामं प्रासादसमीपवर्त्तिक्रीडावनम् , अगच्छत् प्रायात् । कवेरेतत्काव्यप्रणयनकाले रामस्य सम्भूतत्वेन सृष्टिप्रवाहस्य अनादित्वेन वा सत्ययुगीनस्य नलस्य रामसादृश्यं बोध्यम् ॥ २०५ ॥

नलका विरोधी ( नलको पीड़ित करनेके लिए ) वहां अपने आश्रय ( स्थिति ) को खोजनेवाला ( किन्तु कहीं आश्रय नहीं मिलनेसे ) निःश्वास ( लम्बा २ श्वास ) लेता हुआ वह कलि रामके समान श्री ( शरीरशोभा या—राजसम्पत्ति ) वाले उस ( नल ) के महलके पार्श्ववर्ती क्रीडोपवनको गया । [ पास रहनेसे दोषान्वेषण सरल समझकर नलके महलके पासवाले उद्यानमें ठहरा । सत्ययुगमें स्थित नलसे त्रेतायुगमें स्थित परवर्त्ती रामका उपमान यद्यपि सङ्गत नहीं होता, तथापि कविकी अपेक्षा या कल्पभेदसे रामको पूर्ववर्ती मानकर नलके साथ रामकी उपमा दिया जाना असङ्गत नहीं होता ] ॥ २०५ ॥

रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः ।
मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥ २०६ ॥

रक्षीति । रक्षिणां गृहपालानाम्, लक्षेण शतसहस्रेण, बहुसङ्ख्यकप्रासादरक्षिपुरुषेणेत्यर्थः । यत् वृतत्वं परिवेष्टितत्वं तेन हेतुना, तत्र गृहारामे, तपोधनैः तपस्विभिः कर्त्तृभिः, बाधनं पीडनम् न, अस्ति स्वस्येति शेषः । प्रासादसमीपवर्त्तितया बहुजनसङ्कुलत्वेन नित्यं धर्मकार्यनिरतानां निर्जनप्रियाणां तपस्विनामभावात् धर्मद्वेषिकलेः बाधाभावः इति भावः । अत एव मानी अभिमानवान् , अहङ्कारीत्यर्थः । कलिः अन्त्ययुगम्, मनाक् ईषत् , स्वस्य अनुकूलं प्रियम्, अभीष्टसाधनयोग्यस्थानमित्यर्थः । मेने बुबुधे किल, तमाराममिति शेषः । सर्वदा वैधकार्यकारिणां मुनीनां तत्र सद्भावे धर्मकार्यासहिष्णुः कलिः तत्रारामे वस्तुं न शक्नुयात् , रक्षिबाधने सत्यपि तत्राद्दस्य-

-तया प्रवेष्टुं सर्वदा धर्मालोचनाविरहेण तत्र निर्बाधं वस्तुञ्च शक्नुयात् एवम् आरा-मादन्यत्र सर्वत्रैव धर्माचरणदर्शनात् तदपेक्षया आरामे वासस्य ईषत् स्वानुकूलत्व-मिति भावः ॥ २०६ ॥

मानो कलिने उस ( उपवन ) को लाखों रक्षकों ( पहरेदारों ) से घिरा हुआ होनेसे ( एकान्तप्रिय धर्मसाधक ) तपस्वियोंकी वाधासे रहित अत एव कुछ अनुकूल माना। ( अथवा—मानो कलिने उस उपवनमें लाखों रक्षकोंसे घिरा हुआ होनेसे वाधा ( के साथ अपनी स्थिति ) मनी, किन्तु तपस्वियोंसे वाधा नहीं मानी, अत एव उसको थोड़ा अपने अनुकूल माना )। [ मानो कलिने यह समझा कि यहां लाखों पहरेदार पहरा दे रहे हैं, अत एव वहुत लोगोंके आवागमन होनेसे एकान्तमें धर्माचरण करना पसन्द करनेवाले तपस्वी यहां नहीं आवेंगे और अन्यत्र सर्वत्र धर्माचरण होते रहनेसे मुझे कहीं ठहरनेका स्थान नहीं मिलता, इस कारण यह उपवन ही मेरे ठहरनेके लिये कुछ उपयुक्त है, वहां भी कभी-कभी नल-दमयन्तीके आने तथा रक्षकोंके भी धर्मात्मा ही होनेसे उसे पूर्ण उपयुक्त नहीं समझा, किन्तु थोड़ा ही उपयुक्त समझा। अथवा—यहां लाखों पररेदारोंसे ही हमें रहनेमें वाधा है। एकान्तप्रिय तपस्वियोंके यहां नहीं आनेके कारण तज्जन्य वाधा नहीं है, अत एव अन्तर्धान होकर प्रवेश करने तथा रहनेकी शक्ति होनेसे पहरेदारोंकी वाधा तो मैं दूर कर सकता हूँ, किन्तु उस शक्तिका तपस्वियोंके समीप वश नहीं चल सकनेसे तज्जन्य वाधाको मैं दूर नहीं कर सकता; अत एव यह स्थान मेरे ठहरनेके लिए पूर्णतया उपयुक्त नहीं होते हुए भी कुछ तो उपयुक्त है ही, ऐसा कलिने समझा ] ॥ २०६ ॥

दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना।
स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥ २०७ ॥

दलेति। सः कलिः, तत्र गृहारामे, दलैः पत्रैः, पुष्पैः कुसुमैः, फलैः शस्यैश्च, देवानां हरिहरादीनाम्, द्विजानां ब्राह्मणानाञ्च, पूजायाः अर्चनायाः अभिसन्धिना अभिप्रायेण हेतुना, नलेन नैषधेन, अर्जितान् रोपितान्, द्रुमान् वृक्षान्, विभीतके-तरानिति भावः। आक्रमितुम् अधिष्ठातुम्, न प्राप न शशाक इत्यर्थः। तेषां धर्मका-र्योपयोगित्वेन स्वस्य च पापरूपत्वेन तानारोढुं नापारयदित्यर्थः ॥ २०७ ॥

वह कलि नलके द्वारा पत्र (विल्वपत्र आदि), पुष्प (चम्पा, गुलाव, केतकी जुही आदि ) तथा फल ( आम, अनार, सेव; जम्बीर आदि ) से देवों तथा ब्राह्मणादि अतिथियोंकी पूजाके लक्ष्यसे रोपे गये पेड़ोंको ठहरनेके लिए नहीं प्राप्त किया अर्थात् उन पेड़ोंपर नहीं ठहर सका॥

अथ सर्वोद्भिदासत्ति-पूरणाय स रोपितम्।
बिभीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठम् ॥ २०८ ॥

अथेति। अथ उद्यानप्रवेशानन्तरम्, सः कलिः, कर्मणि घटते इति कर्मठं कर्मक्षमं, तन्न भवतीति अकर्मठम्, 'कर्मणि घटोऽठच्' इति सप्तम्यन्तकर्मशब्दात् अठच् प्रत्ययः।

धर्मं धर्मकार्ये, अकर्मठमपि अनुपयुक्तमपि, सर्वेषां समस्तजातीयानाम्, उद्भिदां तरुगुल्मलतादीनाम्, आसत्तेः विद्यमानतायाः, पूरणाय पूर्त्तये, रोपितम् अर्जितम्, अत्रोद्याने सर्वविधतरुगुल्मादयः सन्तीति कीर्त्तिस्थापनायारोपितं न तु देवद्विजपूजाद्यर्थम्, तत्पत्रादीनां देवपूजाद्यनर्हत्वादिति भावः । विभीतकं कर्षफलं नाम, एकं कञ्चित्, कुटं वृक्षम् । 'वृक्षो महीरुहः शाखी, अनोकहः कुटः शालः' इत्यमरः । ददर्श अवलोकयामास ॥ २०८ ॥

उस ( कलि ) ने उस ( उपवन ) में धर्मकार्य में उपयुक्त नहीं होनेपर भी समस्त उद्भिद् ( वृक्ष, लता, गुल्म, क्षुप आदि ) की पूर्तिके लिए ( 'इस उपवनमें सब प्रकारके उद्भिद् हैं' इस उद्देश्यसे ) रोपे गये एक बहेड़ेके पेड़को देखा ॥ २०८ ॥

स तं नैषधसौधस्य निकटं निष्कुटध्वजम् ।
बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥ २०९ ॥

स इति । सः कलिः, तस्मिन् वने गृहारामे, नैषधसौधस्य नलप्रासादस्य, निकटं नेदिष्ठम्, निष्कुटस्य गृहारामस्य, 'गृहारामस्तु निष्कुटः' इत्यमरः । ध्वजं चिह्नस्वरूपमित्यर्थः । तं विभीतकम्, निजम् आत्मीयम्, आलम्बनम् आश्रयम्, बहु अधिकं यथा तथा, मेने विवेचयामास । धर्मकार्यानुपयोगिनि तत्र सुखवाससम्भवात् अत्युच्चे तस्मिन्नवस्थानेन नलदोषविचारसम्भवाच्च तं स्वावलम्बनं बहु मेने इति भावः॥

उस ( कलि ) ने उस ( उपवन ) में नलके महलके समीपवर्ती तथा ( ऊँचा होनेसे ) उपवनके ध्वजस्वरूप उस ( बहेड़ेके पेड़ ) को अपना अच्छा आश्रय ( रहनेका स्थान ) माना । [ उस बहेड़ेके पेड़को धर्मानुपयुक्त होनेसे तथा नलके प्रासादके समपवर्ती एवं ऊँचा होनेके कारण वहां रहकर नलके दोषका निरीक्षण सरल होनेसे अपने लिए उपयुक्त अवलम्ब माना ] ॥ २०९ ॥

निष्पदस्य[1] कलेस्तत्र स्थानदानात् विभीतकः ।
कलिद्रुमः परं नासीदासीत् कल्पद्रुमोऽपि सः ॥ २१० ॥

निष्पदस्येति । सः कलिवासत्वात् प्रसिद्धः, विभीतकः कर्षफलवृक्षः निष्पदस्य निराश्रयस्य, क्वचिदपि स्थानमप्राप्तवत इत्यर्थः । कलेः युगाधमस्य, तत्र आरामे, स्थानदानात् आवासप्रदानात्, परं केवलम्, कलिद्रुमः तत्र वासात् कलिसम्बन्धिवृक्ष एव, 'त्रिलिङ्गस्तु विभीतकः । नाऽक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥' इत्यमरः । न आसीत् न अभवत्, किन्तु कल्पद्रुमः कल्पवृक्षोऽपि, आसीत् अभवत् । वासरूपसङ्कल्पितार्थदानादिति भावः ॥ २१० ॥

वह बहेड़ेका पेड़ ( सर्वत्र धर्माचरण होनेसे ) पैर रखनेके लिए भी असमर्थ अर्थात् निराश्रय, पाठा०—( ठहरनेका स्थान नहीं पानेके कारण ) स्पन्द रहित अर्थात् ( हिलने-

---

१. 'निष्पन्दस्य' इति पाठान्तरम् ।

डोलनेमें भी असमर्थ ) कलिके लिए केवल कलिद्रुम ( कलि-सम्बन्धी वृक्ष ) ही नहीं हुआ; किन्तु उत्तम आश्रय देनेसे ( कल्पद्रुम ) भी हुआ । [ अन्य भी कोई किसी निराश्रितके लिए आश्रय देकर वह उसके लिए कल्पद्रुम कहा जाता है ] ॥ २१० ॥

ददौ पदेन धर्मस्य स्थातुमेकेन यत् कलिः ।
एकः सोऽपि तदा तस्य पदं मन्येऽमिलत् ततः ॥ २११ ॥

ददाविति । यत् तस्मात् कलिः युगाधमः, धर्मस्य पुण्यस्य, एकेन पदेन चतुर्थांशेन, स्थातुं वर्त्तितुम्, ददौ दत्तवान्, सृष्टिप्रवाहस्य अनादितया प्राक्तनकलियुगे कलिः धर्मस्य एकेन पदेन स्थानमर्पितवानित्यर्थः । ततः तस्मात्, तदा नलराज्यकाले परवर्त्तिसत्ययुगे, एकः केवलः, सोऽपि विभीतकतरुरेव, तस्य कलेः, पदं स्थानम्, अमिलत् जातम्, एकपदस्थानदानात् एकवृक्षरूपस्थानं प्राप्तमित्यर्थः । इति मन्ये विवेचयामि, अहमिति शेषः । दानानुरूपं फलमश्नुते इति भावः ॥ २११ ॥

जिस कलिने ( समय-प्रवाहके अनादि होनेसे पूर्व कल्पमें ) धर्मके लिए एक पादसे ठहरनेका स्थान दिया था, उससे वह (बहेड़ा) भी कलिके ठहरनेके लिए एक पाद ही मिला, ऐसा मैं मानता हूँ । [ 'जो व्यक्ति पूर्व जन्ममें जितना दान करता है, जन्मान्तरमें उसे उतना ही वह द्रव्य मिलता है' इस विधानके अनुसार कलिको भी एक पादसे ठहरनेके लिए ही वह बहेड़ेका पेड़ प्राप्त हुआ, क्योंकि कलिने पूर्व जन्ममें धर्मके लिए एक पादसे ही ठहरनेका स्थान दिया था। 'सत्ययुगमें चारो पादोंसे, त्रेतामें तीन पादोंसे, द्वापरमें दो पादोंसे और कलिमें एक पादसे धर्मका अवस्थान रहता है' ऐसे शास्त्र सिद्धान्तके आधारपर उक्त उत्प्रेक्षकी गयी है ] ॥ २११ ॥

उद्भिद्विरचितावासः कपोतादिव तत्र सः ।
राज्ञः साग्नेर्द्विजात् तस्मात् सन्त्रासं प्राप दीक्षितात् ॥ २१२ ॥

उद्भिदिति । उद्भिदि विभीतकवृक्षे, विरचितावासः कल्पितस्थितिः, अन्यत्र— उद्भिदा तृणगुल्मादिना, विरचितावासः निर्मितगृहः, सः कलिः, कश्चित् पुरुषश्च, साग्नेः आहिताग्नेः, सजाठराग्नेश्च, द्विजात् द्विजातेः क्षत्रियात्, अण्डजाच्च, दीक्षितात् अग्निहोत्रे कृतदीक्षात्, अन्यत्र—ईक्षितात् गृहोपरि दृष्टात्, तस्मात् राज्ञः नलात्, कपोतात् अङ्गारभक्षिपारावतविशेषादिव, सन्त्रासम् अभिशापभयम्, गृहे अग्निसंयोगभयञ्च, प्राप लेभे, लिट् । अन्यत्र—प्रापत् अलम्भिष्ट; इति, लुङ् । अत्र साग्नेर्दीक्षितादिति विशेषणद्वयेन नलस्य कलिं प्रति तपःप्रभावजन्याभिशापप्रदानसामर्थ्यं राज्ञो द्विजादिति विशेषणद्वयेन च तस्य क्षत्रियराजोचितदण्डदानसामर्थ्यं सूचितम् ॥

बहेड़ेके पेड़पर निवासस्थानको बनाया हुआ कलि अग्निहोत्र करनेवाले, यज्ञमें दीक्षित,

१. 'स्थानमेकेन' इति पाठान्तरम् ।

क्षत्रिय राजा ( नलसे ) उसप्रकार अधिक भयको प्राप्त किया, जिस प्रकार तृण-गुल्मादिसे घरको बनाया हुआ पुरुष, अग्निसहित ( 'कबूतरके पेटमें अग्नि रहती है' ऐसी लोकख्याति है—इसी कारण वह कङ्कड़ आदिको भी पचा डालता है, अथवा—अग्नि लिये हुए ) देखे गये पक्षी कबूतर से डरता है। ( अथवा—बहेड़ेपर स्थित वह कलि राजाके अग्निहोत्री राजाके यज्ञमें दीक्षित द्विज 'गौतम' नामक पुरोहितसे बहुत डर गया। अथवा—अग्नि-सहित गृहादिके ऊपर देखे गये कबूतर पक्षीसे तृण-गुल्म आदिके घरको बनाया हुआ पुरुष ( इसका बैठना घरमें आग लगनेका अशुभ शकुन सूचित करता है इस भयसे ) बहुत डर जाता है, वैसा वह कलि भी बहुत डर गया )। [ 'राज्ञः' तथा 'द्विजात्' नलका विशेषण-द्वारा ( नलको राजा तथा क्षत्रिय कहने ) से उसका स्वाभाविक दण्ड दानका सामर्थ्य होना और 'साग्नि' तथा 'दीक्षित' विशेषण होने ( अग्निहोत्री और यज्ञमें दीक्षित कहने ) से तपोजन्य प्रभावसे शापद्वारा दण्डित करनेका सामर्थ्य होना सूचित होता है ] ॥ २१२ ॥

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता।
तेन भीमभुवोऽभीकः स राजर्षिरधर्षि न ॥ २१३ ॥

**विभीतकमिति। तथाभूतेन नलरन्ध्रान्वेषिणा, अत एव विभीतकम् अक्षवृक्षम्, अधिष्ठाय अधिरुह्य, तिष्ठता विद्यमानेन, तेन कलिना, भीमभुवः भैम्याः, अभिकामयते इति अभीकः कमिता, कामुक इत्यर्थः। 'अनुकाभिकाभीकः कमिता' इति कन्-प्रत्ययान्तो निपातनात् साधुः। 'कामुके कमिताऽनुकः कम्रः कामयिताऽभीकः' इत्यमरः। सः राजर्षिः मुनितुल्यो राजा नलः, न अधर्षि न अभ्यभावि, न पीडयितुं शक्त इत्यर्थः। भूतावासापराख्यं विभीतकवृक्षमाश्रित्य तिष्ठता तथा तादृशेन, अतिमहता इत्यर्थः। भूतेन देवयोनिविशेषेण, भीमभुवो भयङ्करस्थानात्, अभीको निर्भीकः, राजर्षिः राजश्रेष्ठः, धार्मिकः इत्यर्थः। भूतापसारकमन्त्रवादी इत्यर्थो वा, न पराभूयते इति ध्वनिः, तेन च राजमन्त्रवादिनोरौपम्यं गम्यते ॥ २१३ ॥**

उस प्रकार ( नलद्वेषेच्छुक, या—नलका छिद्रान्वेषी ) तथा बहेड़ेके पेड़का आश्रयकर रहते हुए उस कलिने भीम-कुमारी ( दमयन्ती ) के कामुक उस राजर्षि ( राजा होते हुए भी सदा धर्मा चरणमें संलग्न रहनेसे ऋषिरूप या ऋषितुल्य नल ) को पराजित नहीं कर सका। ( पक्षा०—भूतावास ( भूतोंका आवास स्थान अर्थात् बहेड़े ) पर रहनेवाले भयङ्कर ( या—अतिमहान् ) उस प्रेतयोनि प्राप्त भूतने भयङ्कर भूमि ( अथवा—भयके उत्पत्तिस्थान, अथवा—रणभूमि, अथवा = शङ्करजीकी भूमि ) से निर्भीक उस ( धर्माचर-णादि या—भूत-प्रेतादि निवारक-मन्त्रज्ञानमें सुप्रसिद्ध ) राजर्षि ( नल ) को पराभूत नहीं किया ) ॥ २१३ ॥

तमालम्ब्यनमासाद्य वैदर्भीनिषधेशयोः।
कलुषं कलिरन्विष्यन्नवात्सीद् वत्सरान् बहून् ॥ २१४ ॥

**तमिति।** कलिः तुरीययुगम्, तं वृक्षम्, आलम्बनम् आश्रयम्, आसाद्य प्राप्य, वैदर्भीनिषधेशयोः भैमीनलयोः, कलुषं दुष्कृतम्, पापानुष्ठानमित्यर्थः। अन्विष्यन् अनुसन्दधन्, बहून् अनेकान्, वत्सरान् वर्षान्, अत्यन्तसंयोगे द्वितीया। अवात्सीत् उवास, वसेर्लुङि सिचि, 'सः स्यार्द्धधातुके' इति सस्य तत्वम्, 'वदव्रज—' इत्यादिना वृद्धिः ॥ २१४ ॥

उस ( बहेड़ेके पेड़ ) का आश्रय पाकर दमयन्ती तथा निषधराज ( नल ) के छिद्र ( दोष ) को खोजता हुआ कलि बहुत वर्षोंतक निवास किया [ इससे नल दमयन्तीकी अतिशय धर्माचरणपरायणता तथा कलिकी उनको पीडित करनेके अत्यधिक हठशीलता सूचित होती है ] ॥ २१४ ॥

यथाऽऽसीत् कानने तत्र विनिद्रकलिका लता ।
तथा नलच्छलासक्ति-विनिद्रकलिकालता ॥ २१५ ॥

**यथेति।** तत्र तस्मिन्, कानने वने, यथा विनिद्रकलिका उन्निद्रकोरका, लता व्रततिः, आसीत् अवर्त्तत; तथा तद्वदेव, नलस्य वैरसेनेः, छले छलने, रन्ध्रान्वेषणे इत्यर्थः। आसक्त्या अभिनिवेशेन, विनिद्रः जागरूकः, सततमप्रमत्त इत्यर्थः। कलिः कलिरूपः, कालः समयो यस्मिन् तस्य भावः तत्ता, आसीत् इति शेषः। अत्रार्थभेदेऽपि विनिद्रकलिकालतेति शब्दमात्रसाम्यात्तथेति सादृश्यमुक्तम् ॥ २१५ ॥

उस उद्यानमें जिस प्रकार लता विकसित हुई कलियोंवाली थी, उसी प्रकार नलको वञ्चित करनेमें आसक्त कलि भी जागरूक था ॥ २१५ ॥

दोषं नलस्य जिज्ञासुर्बभ्राज[1] द्वापरः क्षितौ ।
नादोषः[2] कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥ २१६ ॥

**दोषमिति।** अथ द्वापरः तृतीययुगमपि, नलस्य नैषधस्य, दोषम् अनाचारम्, जिज्ञासुः ज्ञातुमिच्छुः सन्, लोकस्य जनस्य, मुखे वाचि, अदोषः निर्दोषः, कोऽपि कश्चिदपि, नास्ति न विद्यते, इति दुराशया दुष्टवाञ्छया, लोको हि सर्वत्र दोषदृष्टिपरत्वात् सर्वथा दोषलेशं द्रक्ष्यति वक्ष्यति चेति दुराग्रहेण इत्यर्थः। क्षितौ भुवि, बभ्राज रराज, बभ्रामेति यावत् ॥ २१६ ॥

नलके दोषको जाननेका इच्छुक द्वापर ( कलियुग सहायक होकर साथमें आया हुआ तृतीय युगका अधिष्ठाता देव-विशेष ) 'लोगोंके मुखमें कोई भी निर्दोष नहीं है ( पाठा०— कोई ( किसी मनुष्य-विषयक ) दोष नहीं है क्या ? अर्थात् है ही )' इस दुराशासे पृथ्वीपर शोभने विराजमान रहने अर्थात् ठहरने ( पाठा०—घूमने ) लगा। [ द्वापरने सोचा कि 'सब लोग जिसे निर्दोष मानें ऐसा कोई व्यक्ति नहीं है, अतः नलके दोषको मैं किसीके मुखसे अवश्य सुनूंगा' इसी दुराशासे वह नगरमें घूमने लगा ] ॥ २१६ ॥

---

१. 'बभ्राम' इति पाठान्तरम् । २. 'न दोषः' इति पाठान्तरम् ।

अमुष्मिन्नारामे सततनिपतद्दोहदतया
प्रसूनैरुन्निद्रैरनिशममृतांशुप्रतिभटे।
असौ बद्धालम्बः कलिरजनि कादम्बविहग-
च्छदच्छायाभ्यङ्गोचितरुचितया लाञ्छनमृगः॥ २१७॥

अमुष्मिन्निति। सततम् अविरतम्, निपतद्दोहदतया मिलद्धूपादिसंस्कारतया, 'तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया।' इति शब्दार्णवः। उन्निद्रैः विकसितैः, प्रसूनैः कुसुमैः, अनिशं निरन्तरम्, अमृतांशुप्रतिभटे चन्द्रस्पर्द्धिनि, चन्द्रकल्पे इत्यर्थः। अमुष्मिन् अस्मिन्, आरामे गृहोद्याने, बद्धालम्बः कृताश्रयः, असौ कलिः युगशेषः, कादम्बविहगस्य कलहंसस्य, यः छदः पक्षः, धूम्रवर्ण इति भावः। तस्य छाया कान्तिः, तया अभ्यङ्गे लेपने, उचिता अभ्यस्ता, रुचिः स्पृहा यस्य तस्य भावः तत्ता, तया कलहंसपक्षवत् कृष्णवर्णतया इत्यर्थः। लाञ्छनमृगः कलङ्कशशः, अजनि जनितः। चन्द्रे कलङ्कवत् उद्यानचन्द्रस्य अयं कृष्णवर्णकलङ्करूपः अभूत् इति भावः॥ २१७॥

सर्वदा दिये जाते हुए दोहदों (वृक्षोंको फूलने-फलनेके लिये धूप, खलीका पानी आदि साधन-विशेषों) के कारण विकसित पुष्पोंसे निरन्तर चन्द्रके समान (स्वच्छ कान्तिवाले) उस उद्यानमें वसता हुआ वह कलि कृष्णवर्णवाले हंसजातीय पक्षीकेप ङ्खोंकी कान्तिके योग्य (या—कान्तिसे निरन्तर तैलादिके समान लिप्त) कान्ति लाञ्छन-सम्बन्धी मृग हो गया। [जिस प्रकार स्वच्छ चन्द्रमें कृष्णवर्ण मृग है, उसी प्रकार सर्वदा दोहद देते रहनेसे विकसित पुष्पोंसे स्वच्छ (चन्द्रस्थानीय) उस उद्यानमें अति कृष्णवर्ण वह कलि लाञ्छनमृग हो गया। स्वच्छ चन्द्रमें जिस प्रकार कृष्ण वर्ण मृग कलङ्करूप है, उसी प्रकार निर्दोष उस उद्यानमें वह कलि ही कलङ्क (दोष) हुआ]॥ २१७॥

स्फारे तादृशि वैरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवतश्चिरादुपनतिस्तस्मिन् किलासीत् कलेः।
एतस्मिन् पुनरन्तरेऽन्तरमितानन्दः स भैमीनला-
वाराद्धुं व्यधित स्मरः श्रुतिशिखावन्दारुचूडं धनुः॥ २१८॥

स्फारे इति। तादृशि तथाभूते, स्फारे विशाले, वैरसेनेः नलस्य, नगरे पुरे, निषधराज्ये इत्यर्थः, प्रजानां लोकानाम्, पुण्यैः धर्मैरेव, घनं निरन्तरम्, विघ्नं कार्यप्रतिबन्धम्, लब्धवतः प्राप्तवतः, अपूर्णमनोरथस्य इत्यर्थः। कलेः कलियुगस्य, तस्मिन्नुद्याने, चिरात् बहुकालम्, उपनतिः स्थितिः, अभूत् आसीत् किल, एतस्मिन् अन्तरे अस्मिन् अवकाशे पुनः, अन्तः अन्तःकरणे, अमितानन्दः अतिहृष्टः, सः अमोघलक्ष्यः, स्मरः कन्दर्पः, भैमीनलौ दमयन्तीनैषधौ, आराद्धुम् उपासितुम्, वशीकर्त्तुमिति यावत्। श्रुतिशिखाम् आकर्णाग्रम्, वन्दारुः उपनता इति यावत्। चूडा कोटिः यस्य

तत् तादृशम्, आकर्णाकृष्टम् इत्यर्थः । धनुः चापम्, अधित विहितवान्, बाणेन संयोजितवानित्यर्थः । कलेराक्रमणात् प्राक् तौ यथाकामं कामसुखम् अन्वभूताम् इति निष्कर्षः ॥ २१८ ॥

विशाल वैसी ( धर्मपरिपूर्ण ) नलकी राजधानीमें प्रजाओंके पुण्योंसे (अथवा—प्रजाओंके पुण्योंसे वैसी विशाल नलकी राजधानीमें ) बहुत ( निरन्तर ) विघ्न प्राप्त करते हुए कलिका उस उद्यानमें बहुत समयतक निवास हुआ अर्थात् उस उद्यानमें उक्त प्रकारसे कलि बहुत दिनोंतक ठहरा । इसी बीचमें ( कलिके वहां निवास करते रहने पर ही ) अन्तःकरण ( हृदय ) में अतिशय प्रसन्न कामदेव दमयन्ती तथा नलकी सेवा ( या—उन्हें पीडित या वशीभूत ) करनेके लिए धनुषकी डोरको कर्णाग्रतक चढ़ाया । [ कलिके आक्रमण करनेके पहले उन चिरविरही तथा उत्कण्ठित चित्तवाले दोनों ( नल तथा दमयन्ती ) ने कामसुखको प्राप्त किया । यहांपर नल-दमयन्तीके कामाराधनका प्रसङ्ग लाकर कविने अग्रिम सर्गमें वर्णनीय उनके सम्भोग-वर्णनको सूचित किया है । भविष्यमें होनेवाले कलिकृत नल-पराभवसे नायकका अपकर्ष ( हीनता ) सूचित होता है, उसके अवर्णनीय होनेसे कविने उसे यहां पर नहीं कहा है ] ॥ २१८ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातः सप्तदशः स्वसुः सुसदृशि छन्दःप्रशस्तेर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २१९ ॥

श्रीहर्षमिति । स्वसुः सोदर्याः, एककर्तृत्वात् एकोदरत्वव्यपदेशः । छन्दःप्रशस्तेः[1] छन्दोबद्धराजचरितवर्णनाग्रन्थस्य, स्वकृतेरिति भावः । सुसदृशि अत्यन्ततत्सदृशि । तस्मात् श्रीहर्षात् भवतीति तद्भुवि । व्याख्यातमन्यत् ॥ २१९ ॥

इति मल्लिनाथसूरिविचरिते 'जवातु' समाख्याने सप्तदशः सर्गः समाप्तः ॥ १७ ॥

---

कवीश्वर-समूहके……किया, उसके रचित ( एक कविरचित ) होनेसे बहनरूप छन्दः-प्रशस्ति ( छन्दोबद्ध राजचरितका वर्णनात्मक ग्रन्थ, या—छन्दोरचनाके क्रमस्वरूपका निरूपण करनेवाला ग्रन्थविशेष, या—छिदप्रशस्ति अर्थात् 'छिद' नामक राजाकी प्रशस्ति-का वर्णनात्मक ग्रन्थ ) के सर्वथा ( सब प्रकारसे ) समान, सुन्दर नलके…यह सप्तदश सर्ग समाप्त हुआ ॥ २१९ ॥

यह 'मणिप्रभा' टीकामें 'नैषध-चरित' का सप्तदश सर्ग समाप्त हुआ ॥ १७ ॥

---

१. 'छिन्दप्रशस्ते—' इति पाठान्तरम् ।

# अष्टादशः सर्गः ।

सोऽयमित्थमथ भीमनन्दिनीं[1] दारसारमधिगम्य नैषधः ।
तां तृतीयपुरुषार्थवारिधेः पारलम्भनतरीमरीरमत्[2] ॥ १ ॥

सोऽयमिति । अथ इति वाक्यारम्भे अध्यायारम्भे वा, सः प्रसिद्धः, अयं नैषधः नलः, इत्थम् एवम्, पूर्ववर्णितप्रकारेणेत्यर्थः । दारसारं दारेषु स्त्रीषु, सारं वरम्, श्रेष्ठमित्यर्थः । स्त्रीरत्नमिति यावत् । 'सारो बले स्थिरांशे च न्याये सारं वरे तथा' इति शाश्वतः । भीमनन्दिनीं भैमीम् । नन्द्यादित्वात् ल्युट्प्रत्ययः । अधिगम्य प्राप्य, तृतीयपुरुषार्थवारिधेः कामसागरस्य, पारलम्भने परतीरप्राप्तौ, तरीं नावम्, तरणीस्वरूपामित्यर्थः । तां दमयन्तीम्, अरीरमत् रमयामास, रमेर्णौ चङ् । अस्मिन् सर्गे रथोद्धतावृत्तम्—'रो नराविह रथोद्धता लगौ' इति लक्षणात् ॥ १ ॥

(उक्त शरीरसौन्दर्य-प्रभातिशयादिसे) प्रसिद्ध वह नल इस प्रकार (देवेन्द्रादिके समक्ष) स्त्रीरत्न भीमकुमारी (दमयन्ती) को पाकर कामसमुद्रके पार जानेमें नौकारूपिणी उस (दमयन्ती) को रमण कराने लगे । [ विना नौकाके समुद्रका पार जाना जिस प्रकार असम्भव है, शरीर सौन्दर्यादि उत्कृष्ट गुणवाली दमयन्तीके विना नलका कामसमुद्रके पार जाना (परम सुखप्रद कामसेवन करना) असम्भव है । इससे दमयन्तीके शरीरसौन्दर्यादिका सर्वोत्कृष्ट होना सूचित होता है ] ॥ १ ॥

आत्मवित्सह तया दिवानिशं भोगभागपि न पापमाप सः ।
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥ २ ॥

आत्मेति । आत्मवित् आत्मज्ञानी, जीवब्रह्माभेदबुद्धिशाली इति यावत् । सः नलः, तया भैम्या सह, दिवानिशम् अहोरात्रम्, द्वन्द्वैकवद्भावः । अत्यन्तसंयोगे द्वितीया । भोगभाक् अपि विषयसुखमनुभवन् अपीत्यर्थः, 'भजो ण्विः' पापम् इन्द्रियानिग्रहजनितप्रत्यवायम्, न आप न लेभे । ननु 'अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' इति निषेधात् कथं दिवानिशं विषयलोलुपस्य न पापमत आह—आहृतेति । हि तथाहि, आहृता कृत्रिमा, विषयेषु शब्दादिषु, एकतानता एकाग्रता, 'एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि' इत्यमरः । ज्ञानेन तत्त्वबुद्धया, धौतमनसं निर्मलान्तःकरणम्, जनमिति शेषः । न लिम्पति न स्पृशति, न पातयति इत्यर्थः । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इति भगवद्वचनादिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २ ॥

आत्मज्ञानी (जीवात्मा तथा परमात्मामें अभेद बुद्धि रखनेवाले) वे (नल) उस

---

१. अत्र '—नन्दनाम्' इति पाठो 'जीवातु-सुखावबोधा' सम्मतः इति म० म० शिवदत्तशर्माणः । २. 'पारतारणतरी—' इति पाठान्तरम् ।

( दमयन्ती ) के साथ रात-दिन भोग करते हुए भी पाप ( दिवा-मैथुनादि जन्य दोष ) को नहीं प्राप्त किये क्योंकि विषयोंमें कृत्रिम एकाग्रता ज्ञानसे धोए गये ( अत एव स्वच्छ ) मनवालेको दूषित नहीं करता ॥ २ ॥

**न्यस्य मन्त्रिषु स राज्यमादरादारराध मदनं प्रियासखः ।**
**नैकवर्णमणिकोटिकुट्टिमे हेमभूमिभृति सौधभूधरे ॥ ३ ॥**

न्यस्येति । सः राजा, मन्त्रिषु अमात्येषु, राज्यं राज्यभारम्, न्यस्य निधाय, नैकवर्णाः अनेकवर्णाः, नञर्थस्य न-शब्दस्य सुप्सुपेति समासः । मणिकोटयः असङ्ख्यरत्नानि यस्मिन् तादृशम्, कुट्टिमं बद्धभूमिः यस्मिन् तथोक्ते, हेमभूमिभृति सुवर्णमयभूयुक्ते, भृञः क्विप् । सौधः प्रसाद एव, भूधरः पर्वतः तस्मिन्, पर्वतसदृशे अत्युच्चप्रासादे, प्रियासखः भैमीद्वितीयः सन्, आदरात् आग्रहादित्यर्थः । मदनं कन्दर्पम्, आरराध सिषेवे, शच्या सह मेरौ इन्द्र इव स भैम्या सह तत्रसौधे रतिसुखमन्वभूदिति भावः ॥ ३ ॥

वह ( राजा नल ) मन्त्रियोंमें राज्य ( सञ्चालनका भार ) देकर अनेक वर्णवाले करोड़ों रत्नोंसे जड़े हुए फर्शवाले तथा सुवर्णमयी भूमिवाले प्रासादरूपी पर्वत अर्थात् पर्वततुल्य अत्युन्नत प्रासादपर प्रिया ( दमयन्ती ) के साथ होकर कामदेवकी आराधना करने लगे। [ जिस प्रकार इन्द्राणीसे युक्त इन्द्र करोड़ों मणियोंसे युक्त सुवर्णमयी भूमिवाले सुमेरु पर्वतपर कामाराधन ( रतिसुखानुभव ) करता है, उसी प्रकार नल भी मन्त्रियों को राज्य-भार सौंपकर सुमेरुवत् प्रासादमें दमयन्तीके साथ कामसुख भोगने लगे ] ॥ ३ ॥

**वीरसेनसुतकण्ठभूषणीभूतदिव्यमणिपङ्क्तिशक्तिभिः ।**
**कामनोपनमदर्थतागुणाद् यस्तृणीकृतसुपर्वपर्वतः ॥ ४ ॥**

अथ चतुर्विंशतिश्लोक्या सौधं वर्णयति-वीरेत्यादि । यः सौधः, वीरसेनसुतस्य नलस्य, कण्ठभूषणीभूतायाः गलदेशस्य आभरणस्वरूपायाः, दिव्यायाः, अलौकिक्याः,[1] मणिपङ्क्तेः रत्नमालिकायाः, शक्तिभिः अचिन्त्यप्रभावैः, कामनया सङ्कल्पमात्रेणैव, उपनमदर्थता सम्प्राप्तेष्टवस्तुता, सैव गुणः उत्कर्षः तस्मात्, तृणीकृतः अवधीरितः, सुपर्वपर्वतः सुराचलः, सुमेरुभूधरः इत्यर्थः । येन तादृशः, न केवलमौन्नत्येन सम्पदाऽपि सुमेरोरधिकः सः इति निष्कर्षः ॥ ४ ॥

जिस ( प्रासाद ) ने नलके कण्ठभूषण दिव्य ( अत्युत्तम ) मणियों ( दहेजमें राजा भीमके दिये हुए चिन्तामणियों ) की मालाकी शक्तियों ( अलौकिक प्रभावों ) से इच्छामात्रासे मिलते हुए पदार्थरूपी गुणसे सुमेरु पर्वतको भी तृणवत् ( तिरस्कृत ) कर दिया था। [ जो नलप्रासाद केवल ऊँचाईमें ही नहीं, किन्तु सम्पत्तिमें भी सुमेरुपर्वतसे श्रेष्ठ था,

---

१. 'महाकुलकेने'ति शेषः ।

क्योंकि सुमेरुपर्वतमें एक चिन्तामणि थी और यहाँ नलके कण्ठमें अनेक चिन्तामणियोंकी माला थी ] ॥ ४ ॥

धूपितं यदुदराम्बरं[1] चिरं मेचकैरगुरुसारदारुभिः ।
जालजालधृतचन्द्रचन्दनक्षोदमेदुरसमीरशीतलम् ॥ ५ ॥

धूपितमिति । यस्य सौधस्य, उदराम्बरम् अभ्यन्तराकाशम् , मध्यदेशमित्यर्थः । चिरं नित्यम् , मेचकैः कृष्णैः, अगुरुणः तदाख्यचन्दनविशेषस्य, सारदारुभिः अभ्यन्तरस्थदृढकाष्ठैः, धूपितं तद्धूमवासितमित्यर्थः । किञ्च, जालजालेषु गवाक्षसमूहेषु, धृतैः स्थितैः, चन्द्रचन्दनक्षोदैः कर्पूरश्रीखण्डचूर्णैः, मेदुरेण सान्द्रस्निग्धेन, मृदुसुरभिणेति यावत् । समीरेण वायुना, शीतलं हिमम् , दूरीभूतधूपजसन्तापमित्यर्थः ॥५॥

जिस प्रासादका भीतरी भाग कृष्णवर्ण अगरुके श्रेष्ठ काष्ठोंसे धूपित और खिड़कियोंकी पङ्क्तियोंमें रखे हुए कर्पूर तथा चन्द्रमाकी धूलिसे सान्द्र ( अतिशय ) सुगन्धि वायुसे शीतल था अर्थात् जिस प्रासादके भीतरमें श्रेष्ठ कृष्णागरुका धूप दिया गया था और खिड़कियोंपर कर्पूर तथा चन्दनकी धूलियोंकी ढेर रखनेसे जिसका भीतरी भाग सुगन्धपूर्ण एवं शीतल था॥

क्वापि कामशरवृत्तवर्त्तयो यं महासुरभितैलदीपिकाः ।
तेनिरे वितिमिरं स्मरस्फुरद्दोःप्रतापनिकराङ्कुरश्रियः ॥ ६ ॥

क्वापीति । कामशरः चूतमुकुलः, कर्पूरविशेषः इति वा, तेन वृत्ताः निष्पन्नाः, वर्त्तयः दशाः यासां तादृश्यः, महासुरभीणि अतिशयसुगन्धीनि, तैलानि तिलजानि यासां तादृश्यः, दीपिकाः प्रदीपाः, स्मरस्य कामस्य, स्फुरतोः स्पन्दमानयोः, भैमीनललव्यधार्थं चलितयोरित्यर्थः । दोषोः भुजयोः, प्रतापनिकरस्य तेजोराशेः, अङ्कुराणां प्ररोहाणाम्, श्रीः शोभा इव, श्रीः, यासां तादृश्यः सत्यः, यं सौधम् क्वापि कुत्रचित् , भैमीनलालङ्कृतदेशे इत्यर्थः । वितिमिरं तमोराहित्यम् , तेनिरे चक्रिरे ॥ ६ ॥

जिस ( प्रासाद ) कामशर ( आम्रमञ्जरी, अथवा—अनेकौषधिनिर्मित धूप-विशेष[2], अथवा—कर्पूर ) से बनायी गयी ( अथवा—कामबाणके समान गोलकृति ) वत्तियोंवाले ( नल तथा दमयन्तीको पृथक् करनेके लिए ) स्फुरित होते हुए काम-बाहुके प्रताप-समूहाङ्कुरके समान शोभावाले महासुगन्धि तेलके दीपक कहींपर ( नल-दमयन्तीके पासमें ) अन्धकाररहित ( प्रकाशमान ) करते थे ॥ ६ ॥

कुङ्कुमैणमदपङ्कलेपिताः क्षालिताश्च हिमवालुकाऽम्बुभिः[3] ।

---

१. '—न्तरम्' इति पाठान्तरम् । २. 'कामशरा'ख्यधूपनिर्माणसामग्रीः 'प्रकाश' व्याख्यायां लिखितास्तद्यथा—

'पुरसर्जाभयालाक्षानखाब्जादिजटागदैः ।
समैः समधुभिर्धूपो मतः 'कामशरा'भिधः ॥' इति ।

३. '—वालुकांशुभिः' इति पाठे········। अत्र शाब्दोऽपि क्रमो घटते, इति 'प्रकाश' कृत् ।

रेजुरध्वततशैलजस्रजो यस्य मुग्धमणिकुट्टिमा भुवः ॥ ७ ॥

कुङ्कुमेति । कुङ्कुमैणमदयोः काश्मीरजकस्तूरिकयोः, पङ्केन कर्दमेन, घृष्टकुङ्कुममृगमदाभ्यामित्यर्थः । लेपिताः दिग्धाः, च किञ्च, हिमवालुकाऽम्बुभिः कर्पूरोदकैः 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमबालुका' इत्यमरः। क्षालिताः धौता, तथा अध्वसु प्रवेशमार्गेषु, तताः विस्तृताः, शैलजस्य शैलेयस्य, शिलाकुसुमाख्यगन्धद्रव्यस्येत्यर्थः । स्रजः माला यासु तादृश्यः, तथा मुग्धाः सुन्दराः, मणीनां रत्नानाम्, मणिमया इत्यर्थः । कुट्टिमाः निबद्धप्रदेशाः यासु तादृश्यः । 'कुट्टिमोऽस्त्री निबद्धा भूः' इति यादवः । यस्य सौधस्य, भुवः अङ्गणादिप्रदेशा इत्यर्थः । रेजुः शुशुभिरे । चूतवृक्षवत् सामान्यविशेषभावादपौनरुक्त्यम् । समृद्धिमद्वस्तुवर्णनादुदात्तलङ्कारः ॥ ७ ॥

कुङ्कुम तथा कस्तूरीके पङ्कसे लिपी गयी कर्पूरचूर्णके पानीसे धोयी गयी, (नलके आनेके) मार्गमें फैलायी गयी पर्वतपर होनेवाले (अतिसुरभि मालती आदि, या—गन्धद्रव्यविशेष) की मालावाली और मनोहर मणियोंके बने फर्शवाली जिस (प्रासाद) की (पाठा०—जहांपर) भूमि (आङ्गण आदि) शोभती थी। [प्रकृत पाठमें 'अतिशय स्निग्धता तथा सुगन्धिके लिए कुङ्कुम-कस्तूरी-पङ्कसे लीपना, तदन्तर पङ्ककी पिच्छिलता दूर करनेके लिए कर्पूर-वालुका-जलसे धोकर पङ्कको दूर एवं अतिशयित सुगन्धित करना और नल तथा दमयन्तीके चरणोंके अत्यन्त मृदु होनेसे चकनेमें कष्टानुभव होनेके भयसे मणिमयी भूमिमें पर्वतोत्पन्न मालत्यादि सुरभित पुष्प-समूहोंको बिछाकर उसे मृदुतम बनाना' अर्थ होता है, किन्तु इस क्रममें अर्थक्रम ठीक नहीं प्रतीत होता, इससे 'पाठक्रमादर्थक्रमो बलीयान्' (पाठक्रमसे अर्थक्रम अधिक बलवान् होता है) इस न्यायसे पहले कर्पूर-वालुका-जलसे धोकर गोमयादिस्थानीय कुङ्कुमकस्तूरीपङ्कसे लीपना और सबके अन्तमें कुसुम-समूहको बिछाना अर्थक्रम मानना सुन्दर है। अथवा—'वालुकांशुभिः' पाठमें तो क्रम-परिवर्तन किये विना ही पहले कुङ्कुम-कस्तूरी-पङ्कसे लीपकर पिच्छिलता दूर करनेके लिए कर्पूर-वालुकाओंसे उसे सुखाना और पुष्प-समूह बिछाकर मृदुतम करना' अर्थ होता है, इसी कारण 'प्रकाश'कारने इस पाठकी व्याख्या करके 'अत्र शाब्दोऽपि क्रमो घटते' अर्थात् 'इस पाठमें शाब्दिक क्रम भी सङ्घटित होता है' ऐसा कहा है ]॥ ७॥

नैषधाङ्गपरिमर्दमेदुरामोदमार्दवमनोज्ञवर्णया ।

यद्भुवः क्वचन सूनशय्ययाऽभाजि भालतिलकप्रगल्भता ॥८॥

नैषधेति । नैषधस्य नलस्य, अङ्गपरिमर्दन शरीरमर्दनेन, अङ्गलोठनेनेत्यर्थः । मेदुरः सान्द्रः, आमोदः गन्धः, मार्दवं मृदुत्वम् , मनोज्ञः मनोरमः, वर्णश्च शौभ्यञ्चेत्यर्थः । यस्याः तादृश्या, सूनशय्यया कुसुमशयनेन, यस्य सौधस्य, भुवः प्रदेशवि-

१. 'यत्र' इति पाठान्तरम् । २. 'यान्ति भालतिलकप्रगल्भताम्' इति पाठान्तरम् ।

शेषाः, क्वचन कुत्रचित्, नलस्य शयनस्थाने इति यावत्, भालतिलकस्य ललाटदेशे तिलकधारणस्य, प्रगल्भता स्पर्द्धा, शोभेति यावत्। अभाजि प्राप्ता इति निदर्शनालङ्कारः ॥ ८ ॥

नलके शरीरस्पर्श ( शयनकालमें शरीरके परिमर्दन ) से अत्यधिक गन्ध, कोमलता, मनोज्ञता और अम्लान वर्णवाली पुष्पशय्याने कहींपर ( नलशयनस्थानमें ) जिस ( प्रसाद ) की भूमिके ललाटतिलककी प्रगल्भता ( अत्यधिक समानता ) को प्राप्त किया। [ स्वयंवरमें वरुणके दिये हुए 'अम्लानिरामोदभरश्च ( १४।८५ )' के अनुसार नलके शरीरस्पर्शसे उनकी शय्याके पुष्पोंमें उक्त गुण आजानेसे उस पुष्पशय्याने उस प्रासादभूमिके ललाटस्थ तिलककी शोभाको प्राप्त किया। पाठा०—उक्त गुणवाली पुष्पशय्याके द्वारा जिस प्रासादकी भूमि ललाटस्थ तिलककी शोभाको प्राप्त होती हैं ] ॥ ८ ॥

क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभोर्मिभिः ।
सान्द्रम्[१]अध्रियत भीमनन्दिनीनासिकापुटकुटीकुटुम्बिता ॥ ९ ॥

क्वापीति। क्वापि क्वचित् प्रदेशे, यस्य सौधस्य, निकटे समीपस्थे, निष्कुटे गृहारामे, स्फुटतां विकशताम्, कोरकप्रकराणां कलिकानिवहानाम्, सौरभोर्मिभिः परिमलपरम्पराभिः, सान्द्रं निरन्तरम्, भीमनन्दिनी भैमी, तस्याः नासिकापुटयोः नासारन्ध्रयोः, कुटीकुटुम्बिता गार्हस्थ्यम्, नित्यस्थायित्वमित्यर्थः। अध्रियत अधारि, नन्दनविहारसुखम् अनुभूयते तया इति भावः ॥ ९ ॥

किसी स्थानपर जिस ( प्रासाद ) के समीपमें गृहोद्यानके विकसित होते हुए कलिका-समूहके सुगन्धसमुदायसे सम्यक् प्रकारसे दमयन्तीके नासिकापुटरूपी सङ्कीर्ण गृहके कुटुम्बित्वको धारण किया। [ उस प्रासादके गृहोद्यानमें विकसित होते हुए कोरक-समूहके नानाविध सौरभको दमयन्तीने अपने नासिकासे सूंघा, उसकी कविने कल्पना की है कि वे सौरभसमूह उस दमयन्तीके नासापुटमें इस प्रकार निवास किये, जिस प्रकार एक कुटी ( लघुतम घर ) में बहुत बड़ा कुटुम्ब बड़ी सङ्कीर्णतासे निवास करता है। अथवा—वे सौरभसमूह दमयन्तीके नासापुटरूपी गृहके कुटुम्बी बने अर्थात् दमयन्तीके नासापुटमें जैसा सौरभ था, वैसा ही उस कलिका-समूहका भी सौरभ होनेसे वह कलिका-सौरभ-समूह उसके नासापुटरूपी गृहका कुटुम्बी बना ( उसकी समानताको प्राप्त किया ) ] ॥ ९ ॥

रुद्ध[२]सर्वऋतुवृन्दवाटिकाकीरकृत्तसहकारशीकरैः ।
यज्जुषः स्म कुलमुख्यमाशुगो घ्राण[३]वातमुपदाभिरञ्चति ॥ १० ॥

रुद्धेति। आशुगः वायुः, बहिश्चरो वायुरिति भावः। 'आशुगोऽर्के शरे वायौ' इति यादवः। कुलमुख्यं वंशमध्ये श्रेष्ठम्, नलदमयन्त्योः तत्परिजनानाञ्च घ्राणरन्ध्रे स्थान-

१. 'सान्द्रमाद्रियत' इति पाठान्तरम्। २. 'ऋद्ध—' इति पाठान्तरम्। ३. 'प्राग—' इति पाठान्तरम्।

लाभादिति भावः। यज्जुषः यत्सौधसेविनः, जनस्य इति शेषः, प्राणवातं निःश्वासमारुतम्, रुद्धाः, अवरुद्धाः, एकत्र सम्भूय स्थिता इत्यर्थः। रुधेः कर्मणि क्तः। 'ऋद्धा' इति पाठे—ऋद्धाः समृद्धाः, ऋध्यतेः कर्त्तरि क्तः। सर्वे समस्ताः, ऋतवः वसन्तादयः यस्यां तादृश्याम्, 'ऋत्यकः' इति प्रकृतिभावः। एकत्रावस्थितषड्तुकायामित्यर्थः। वृक्षवाटिकायां गृहसंलग्नोपवने, कीरैः शुकैः, कृत्तानां खण्डितानाम्, सहकाराणां सुरभिचूतवृक्षाणाम्, शीकरैः अम्बुकणैः, जलकणामिश्रितमृदुसौरभैरेवेत्यर्थः। उपदाभिः उपायनैः, अञ्चति स्म पूजयति स्म ॥ १० ॥

वायु कुलश्रेष्ठ जिस नल (या–दमयन्ती) के निःश्वासको रोकी गयी (पाठा०—समृद्धिको प्राप्त हुई) सम्पूर्ण ऋतुओंवाले गृहोद्यानमें शुकोंद्वारा कुतरे गये आम (के फल, या–मञ्जरी) के जलकण (पराग, या–फलरसके कण) रूप उपहारोंसे पूजा करती थी। [अथवा पाठा०—वायु समृद्ध समस्त ऋतुओंवाले गृहोद्यानमें शुकोंसे कुतरे गये आमरूपी उपदाओंसे जिस (प्रसाद) पर रहनेवाले (नल, या–दमयन्ती, या दूसरे) के कुलवृद्ध प्राणवायुकी पूजा करती थी। निःश्वास (या–पाठा०—प्राणवायु) को भी वायुस्वरूप होनेसे एवं उस वायुकी अपेक्षा नल या–दमयन्तीके निःश्वासके अतिशय सौरभयुक्त (पाठा०—प्राणवायुके अतिशय मूल्यवान्) होनेसे वह (निःश्वास, या–प्राणवायु) उद्यानवायुके कुलमें श्रेष्ठ है, और कुलमें श्रेष्ठका अनेकविध उपहारसे पूजन करना उचित होनेसे बाह्य वायुद्वारा निःश्वास (या–प्राणवायु) का पूजन करना कहा गया है] ॥ १० ॥

कुत्रचित् कनकनिर्मिताखिलः क्वापि यो विमलरत्नजः किलः।
कुत्रचिद्रचितचित्रशालिकः क्वापि चास्थिरविधैन्द्रजालिकः ॥११॥

कुत्रचिदिति। यः सौधः, कुत्रचित् क्वापि प्रदेशे, कनकनिर्मितं सुवर्णमयम्, अखिलं समग्रांशं यस्य सः तादृशः, क्वापि कुत्रचित् प्रदेशे, विमलरत्नेभ्यः उज्ज्वलमणिभ्यः, जातः निर्मितः, भास्वररत्नघटित इत्यर्थः। किल इति प्रसिद्धः। कुत्रचित् कस्मिन्नपि भागे, रचिताः निर्मिताः, चित्रशालिकाः आलेख्यगृहाः यस्य तादृशः, बहुचित्रसमन्वितगृहविशिष्टः चित्राङ्कितगृहविशिष्टो वा इत्यर्थः। क्वापि च कस्मिंश्चिद् भागे, अस्थिरविधः क्षणे क्षणे परिवर्त्तितप्रकारः, कदाचित् तमसः कदाचिदालोकस्य प्रकाशादिरूपः इत्यर्थः। ऐन्द्रजालिकः इन्द्रजालवान्, प्रतिक्षणमन्यथाऽन्यथा प्रतीयमानत्वात् आश्चर्यदर्शनः इत्यर्थः। मत्वर्थीयष्ठन् ॥ ११ ॥

जो प्रसाद कहींपर सर्वत्र (ऊपर–नीचे) सुवर्णसे बनाया हुआ था, कहींपर निर्मल (श्रेष्ठ) रत्नोंसे बनाया गया था, कहींपर चित्रित पुतलियोंवाला (या–चित्रोंसे शोभनेवाला) था और कहींपर अस्थिर कान्ति (कभी प्रकाश, कभी अन्धकार अर्थात् धूपछाँह कपड़ेके समान प्रतिक्षण परिवर्तनशील कान्ति) वाला होनेसे ऐन्द्रजालिक (जादूगर) के समान (देखनेमें विस्मयजनक) था ॥ ११ ॥

चित्रतत्तदनुकार्यविभ्रमाधायिनैकविधरूपरूपकम्[1] ।
वीक्ष्य यं बहु धुवन् शिरो जरावातकी विधिरकल्पि शिल्पिराट् ॥१२॥

चित्रेति । चित्रेषु आलेख्येषु, तेषां तेषाम् अन्यत्र दृष्टानां प्रसिद्धानां वा, अनुकार्याणाम् अनुकरणयोग्यानां राजर्षिमनुष्यादीनाम्, विभ्रमस्य विलासस्य, आधायीनि उत्पादकानि, नैकविधरूपाणि नानाप्रकारस्वरूपाणि, रूपाण्येवेति रूपकाणि प्रतिकृतयः यस्मिन् तादृशम्, यं सौधम्, वीक्ष्य दृष्ट्वा, बहु पुनःपुनः, शिरः मस्तकम्, धुवन् कम्पयन्, शिल्पिराट् कारुश्रेष्ठः, विधिः स्रष्टा, जरया वार्द्धकेन, वातकी वातरोगी, वेपथुवाताक्रान्त इत्यर्थः । 'वातातिसाराभ्यां कुक् च' इति कुक्, चकारात् इनिप्रत्ययश्च । इति अकल्पि अतर्कि, देवादिभिरिति शेषः । सौधशिल्पिनः आश्चर्यशिल्पनैपुण्यं दृष्ट्वा विस्मयवशात् तदा शिल्पिश्रेष्ठेन विधात्रा अपि पुनः पुनः शिरः कम्पितम् इत्यर्थः ॥ १२ ॥

चित्रोंमें ( या–आश्चर्यकारक ) उन–उन ( अथवा—'चित्रं तन्वन्ति' ऐसा विग्रह करके 'चित्रतत' अर्थात् आश्चर्यवर्द्धक उन ) अनुकरणीय ( मनुष्य, देवादि ) के विलास ( या–अतिशय भ्रम ) के उत्पादक अनेकरूप ( नानारूप ) प्रतिमाओंवाले जिस ( प्रसाद ) को देखकर ( देवोंने या–मनुष्योंने या वहां रहते हुए कलिने ) बहुत शिर कँपाते हुए, वार्द्धक्यरूप वातरोगी, शिल्पियोंमें श्रेष्ठतम ब्रह्म ( या–विश्वकर्मा ) की कल्पना की। [ अनेकविध अनेक अनुकरणीय चित्रादियुक्त प्रासादको देखकर देवों या–दर्शकोंने कल्पना की कि–इसे वृद्धत्वरूपी वातरोगयुक्त शिल्पिश्रेष्ठ ब्रह्मा ( या–विश्वकर्मा ) ने बनाया है ] ॥ १२ ॥

भित्तिगर्भगृहगोपितैर्जनैर्यः कृताद्भुतकथादिकौतुकः ।
सूत्रयन्त्रजविशिष्टचेष्टयाऽऽश्चर्यसञ्जिबहुशालभञ्जिकः ॥ १३ ॥

भित्तीति । यः सौधः, भित्तिगर्भेषु कुड्याभ्यन्तरेषु, ये गृहाः कक्षाः, तेषु गोपितैः गुप्तभावेनावस्थितैः, जनैः लोकैः, कृतं विहितम्, अद्भुतकथादिकौतुकं विस्मयजनकभाषणादिकुतूहलं येन सः तादृशः, स्वयमेव सौधः कथयतीति भ्रान्तिकरः इत्यर्थः । 'कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम्' इत्यमरः । किञ्च, सूत्राणां यन्त्रेण तन्तुनिर्मितयन्त्रविशेषेण, जाता उत्पादिता, या विशिष्टचेष्टा हसितनिमेषोन्मेषादिरूपासाधारणक्रियाविशेषः तया, आश्चर्यं विस्मयम्, सञ्जयन्ति उत्पादयन्तीति तत्सञ्जिन्यः, बह्व्यः अनेकाः, शालभञ्जिकाः दारुपुत्रिकाः यत्र सः तादृशः ॥ १३ ॥

जो ( प्रासाद ) दीवालोंके भीतर बने गृहोंमें छिपाये गये लोगोंसे आश्चर्यजनक कथा-कौतुक करनेवाला था और तारोंके यन्त्रजन्य विविध चेष्टा ( आलिङ्गन, चुम्बनादि कार्यों ) से आश्चर्यजनक बहुत पुतलियों ( काष्ठादिरचित मूर्तियों ) वाला था। [ जिस प्रासादकी दीवालोंके भीतर बनाये गये तथा गृहोंमें छिपे मनुष्य वार्तादि करते थे तो मालूम पड़ता

---

1. '—धाय्यनेक—' इति पाठान्तरम् ।

था कि ये दीवालें ही परस्पर कथादि कर रही हैं तथा तारोंके द्वारा सञ्चालित पुतलियां अनेक प्रकारकी चेष्टाएँ करके आश्चर्यित करती थीं, ऐसा वह गृहोद्यान था ] ॥ १३ ॥

**तामसीष्वपि तमीषु भित्तिगै रत्नरश्मिभिरमन्दचन्द्रिकः ।**
**यस्तपेऽपि जलयन्त्रपातुकासारदूरधुततापतन्द्रिकः ॥ १४ ॥**

**तामसीष्विति ।** यः सौधः, तामसीषु तमस्विनीषु अपि, 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' इति मत्वर्थीयोऽण्-प्रत्ययः । तमीषु रात्रिषु, भित्तिगैः कुड्यगतैः, रत्नरश्मिभिः मणिप्रभाभिः, अमन्दा प्रभूता, चन्द्रिका ज्योत्स्ना यस्य तादृशः, तथा तपेऽपि ग्रीष्मेऽपि, जलयन्त्रेभ्यः जलोत्सारकयन्त्रविशेषेभ्यः, कृत्रिमप्रस्रवणेभ्यः इत्यर्थः । पातुकैः पतनशीलैः, आसारैः धारासम्पातैः, दूरम् अतिशयेन, धुता निराकृता, तापतन्द्रिका ग्रीष्मजनितमोहप्रायावस्था यस्य सः तादृशः ॥ १४ ॥

जो ( प्रासाद ) अन्धकारयुक्त रात्रियोंमें भी दीवालोंमें जड़े गये रत्नोंकी किरणोंसे तीव्र चाँदनी ( प्रकाश ) से युक्त था और ग्रीष्मकालमें भी फौव्वारोंसे गिरती हुई जलधारावृष्टिसे दूरसे ही सन्तापकी तन्द्रा ( अवस्था ) को नष्ट कर देता था ॥ १४ ॥

**यत्र पुष्पशरशास्त्रकारिका शारिकाऽध्युषितनागदन्तिका ।**
**भीमजानिषधसार्वभौमयोः प्रत्यवैक्षत रते कृताकृते ॥ १५ ॥**

**यत्रेति ।** यत्र सौधे, पुष्पशरशास्त्रस्य वात्स्यायनादिप्रणीतकामतन्त्रस्य, कारिका कर्त्री, प्रायश एव लोकमुखे श्रवणात् तत्पुनरुक्तिकारिणीत्यर्थः । तथा अध्युषिता अधिष्ठिता, नागदन्तिका भित्तिनिर्गतदारुविशेषः यया तादृशी 'नागदन्ती द्विपरदे गृहान्निर्गतदारुणि' इति मेदिनी । शारिका शारीतिख्यातः पक्षिविशेषः । 'शारिका शारी' इति यादवः । भीमजानिषधसार्वभौमयोः भैमीनलयोः, रते सुरते, कृताकृते विहिताविहिते, कामशास्त्रानुसारेण सुरतमनुष्ठितं न वा इत्यादिरूपे इत्यर्थः । प्रत्यवैक्षत निपुणभावेनापश्यत् । इदं कृतम् इदं न कृतम् इति अनुसन्दधे इत्यर्थः ॥ १५ ॥

जिस ( प्रासाद ) पर कामशास्त्रको करनेवाली ( पक्षा०—वात्स्यायनकृत कामशास्त्रके श्लोकरूपिणी ) तथा दीवालोंकी खूटियोंपर ( या—पिंजड़ोंमें ) बैठी हुई सारिका पक्षी दमयन्ती और निषधेश्वर नलके किये गये तथा नहीं किये गये रत ( अथवा—किये गये तथा नहीं किये गये रसविषयक कार्य ) को देखती थी । [ शास्त्रमें श्लोकरूपमें कारिका होती है, यथा—साङ्ख्यकारिका, कारिकावली आदि । तथा—यज्ञमें यज्ञीय शास्त्रोक्त कार्यके न्यूनाधिक्यको देखनेवाला ब्रह्मा होता है, वैसे वह सारिका ( मैना ) पक्षी थी । दमयन्ती तथा नलके रतका वह सारिका अनुकरण करती थी ] ॥ १५ ॥

**यत्र मत्तकलविङ्कशारिकाश्लेष्य[1]केलिपुनरुक्तिवृत्तयोः ।**
**कापि दृष्टिभिरवापि वापिकोत्तंसहंसमिथुनस्मरोत्सवः ॥ १६ ॥**

---

१. 'शीलिताश्लील-' इति पाठान्तरम् ।

यत्रेति । यत्र सौधे, क्वापि कुत्रचित् प्रदेशे, तयोः भैमीनलयोः, दृष्टिभिः दर्शनैः, वापिकोत्तंसानां दीर्घिकालङ्काराणाम्, हंसमिथुनानां हंसद्वन्द्वानाम्, स्मरोत्सवः सुरतकेलिः, मत्तानां हृष्टानाम, कलविङ्कानां चटकानाम्, तथा शारिकाणां पक्षिविशेषाणाञ्च, आश्लेष्यकेलिभिः ग्राम्यक्रीडाभिः, पुनरुक्तिवत् पौनरुक्त्यमिव, अवापि अबोधि, तत्तुल्यम् अदर्शि इत्यर्थः ॥ १६ ॥

जहांपर मतवाले चटका ( गोरैया ) तथा सारिका ( मैना ) पक्षियों ( पाठा०—जहांपर मतवाले चटका पक्षियों ) की अश्लील क्रीडाओंसे ( या-क्रीडाओंकी ) पुनरुक्तिसे युक्त ( या-के समान ) वापीके भूषणरूप हंसोंकी जोड़ीके कामोत्सवको उन दोनों ( नल तथा दमयन्ती ) ने कहींपर देखा । [ उन्होंने पहले चटका तथा मैनाको तदनन्तर वापीभूषण हंसमिथुनको आलिङ्गनादिहीन मैथुन क्रीडाको देखा ] ॥ १६ ॥

यत्र वैणरववैणवस्वरैर्हूङ्कृतैरुपवनीपिकालिनाम् ।
कङ्कणालिकलहैश्च नृत्यतां गोपि¹तं सुरतकूजितं तयोः ॥ १७ ॥

यत्रेति । यत्र सौधे, वैणैः वीणासम्बन्धिभिः, रवैः शब्दैः, वैणवैः वेणुसम्बन्धिभिः, स्वरैः ध्वनिभिः, तथा उपवन्याम् आरामे, पिकानां कोकिलानाम्, अलिनां भृङ्गाणाञ्च, हूङ्कृतैः हुङ्कारैः, तथा नृत्यतां नर्त्तकीजनानाम्, कङ्कणालिकलहैः करभूषणावलीकलकलैश्च, तयोः दम्पत्योः, सुरतकूजितं शृङ्गारकालिकमणितादिशब्दः, गोपितं तिरस्कृतम् । अतो न विस्रम्भविघातः इति भावः ॥ १७ ॥

जहांपर वीणाके झङ्कार, वांसोंकी ध्वनि और उपवनमें रहनेवाले कोयलों तथा भ्रमरोंके हुङ्कार-गुञ्जनोंसे, एवं नृत्य करनेवालों ( स्त्री-पुरुषों ) के कङ्कण-कलह ( क्रीडा कलहमें उत्पन्न कङ्कण समूहके झनकारों ) से उन दोनों ( नल तथा दमयन्ती ) का सुरतकूजित ( रतिकालिक अव्यक्त कण्ठध्वनि ) छिप ( पाठा०—मन्द पड़ ) गया अर्थात् उक्त ध्वनियोंसे इन दोनोंका सुरतकूजित दूसरोंको सुनायी नहीं पड़ा ॥ १७ ॥

( सीत्कृतान्यशृणुतां विशङ्कयोर्यत्प्रतिष्ठितरतिस्मरार्चयोः ।
जालकैरपवरान्तरेऽपि तौ त्याजितैः कपटकुड्यतां निशि ॥ १² ॥ )

सीत्कृतानीति । अपवरान्तरे गर्भगृहमध्ये रतिस्मरप्रतिमागृहापेक्षयाऽन्यस्मिन् वा गृहे स्थितावपि तौ भैमीनलौ दिवा गवाक्षेष्वपि भित्तिभ्रमादच्छिद्रगृहनिवासवशादन्यानाकर्णनबुद्धया विशङ्कयोः शङ्कारहितयोः ससम्भ्रमं कुजनादि कुर्वतोः यस्मिन् सौधे प्रतिष्ठितयोः पुरोधसा मन्त्रसामर्थ्याच्चैतन्यमवलम्ब्य प्रतिमायां कृताधिष्ठानयोः रतिस्मरयोर्ये अर्चे सुवर्णादिरचितप्रतिमे तयोः सीत्कृतानि नखदन्तजपीडानुभावसूचकानि सीच्छब्दाभिनेयानि शब्दितानि निशि रात्रौ कपटकुड्यतामलीक-

---

१. 'कुञ्जितम्' इति पाठान्तरम् । २. 'प्रकाश' व्याख्यासहित एवायं श्लोकोऽत्र स्थापितः ।

भित्तिभ्रमं त्याजितैर्जालकैर्गवाक्षैः कृत्वा अश्रृणताम् । दिने रजतादिभित्तीनां मणीनां वा भासा छादितानि जालानि भित्तितुल्यानि भवन्ति, रात्रौ तु रजतादिभित्तीनां तादृशप्रकाशाभावात्ताभिरेव कपटकुड्यत्वं त्याजितानि जलरूपेणैव प्रतीयन्ते । ततश्च प्रतिष्ठासामर्थ्यात्सचेतनौ सुरतलोलुपौ रतिस्मरावपि गवाक्षेषु दिवा जातभित्तिभ्रमात्तुभावपि कुड्यभ्रमेणाविचार्यैव विशङ्कौ यत्र सुरतं चक्रतुः, जालमार्गेण शब्दसञ्चाराच्च तत्कूजितानि तौ शुश्रुवतुरिति भावः । पुरोधसो मन्त्रप्रभावश्च सूचितः । तण्डुलचूर्णादिमण्डलिप्तं चित्रमयं वस्त्रं कपटकुड्यम् । दिवोष्मप्रवेशभिया गवाक्षेषु चित्रपटा ध्रियन्ते रात्रौ च पवनागमनार्थमपनीयन्ते, तथा च दिनवद्रात्रावपि कुड्यबुद्धया विशङ्कं भणितानि चक्रतुरिति वा । अपवृणोत्याच्छायतीत्यपवरो गृहगर्भं पचाद्यच् । 'प्रतिकृतिरर्चा पुंसि—' इत्याद्यमरः ॥ १ ॥

गर्भगृहके मध्य ( अथवा—रति-स्मर-प्रतिमाके पार्श्ववर्ती गृह ) में दमयन्ती तथा नलने जड़े हुए रत्नोंकी किरणोंसे ( दिनमें भी खिड़कियोंको दीवाल समझनेके कारण ) निःशङ्क ( दूसरा कोई मेरे रति-कूजितको इस निश्छिद्र घरमें-से नहीं सुन सकता इस प्रकार शङ्कारहित ), जिस ( प्रासाद ) में प्रतिष्ठित ( नल-पुरोहितके द्वारा प्राणप्रतिष्ठाप्राप्त ) रति तथा कामदेवकी ( स्वर्णादिरचित ) मूर्तियोंके 'सीत्कृतों' ( रतिकालिक दन्त तथा नखादिके क्षतसे उत्पन्न 'सीत्, सीत्-' शब्द-विशेषों ) को सुना तथा रात्रिमें रजत आदिकी बनी दीवालोंमें वैसा प्रकाश नहीं रहनेसे कपटकुड्यताको छोड़ ( भ्रान्तिजन्य दीवाल ) के भ्रमको दूर करनेवाली खिड़कियोंसे उक्त सीत्कृतोंको सुना । अथवा—सूर्यादि-सन्तापके निवारणार्थ खिड़कियोंपर डाले गये चित्रित पर्दोंको ही रतिस्मर दीवाल समझकर निःशङ्क हो क्रीडा करते थे और रात्रिमें वायु आनेके लिए उन पर्दोंको हटा देनेपर प्रकाश नहीं रहनेसे खिड़कियोंको ही रति-स्मर दीवाल समझकर निश्शङ्क हो क्रीडा करते थे और उस गृहके पार्श्ववर्ती गृहमें स्थित नल तथा दमयन्ती उन दोनों ( रति-स्मर ) के सीत्कृतोंको सुनते थे । [ प्रतिमाओंमें मन्त्रद्वारा प्राणसञ्चार करनेसे नलपुरोहितका प्रभावातिशय सूचित होता है ] ॥ १ ॥

कृष्णसारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसारणिः[1] ।
नानिशं त्रुटति यत्पुरः[2] पुरा किन्नरीविकटगीतिझङ्कृतिः ॥ १८ ॥

कृष्णेति । यत्पुरः यस्य सौधस्य सम्मुखदेशे, कृष्णसारमृगस्य कालसाराख्यहरिणस्य, शृङ्गवत् विषाण इव, भङ्गुरा भङ्गवती, अतिवक्रेति यावत् । एकत्र—कण्ठस्वरस्य कम्पनविशेषेण तथोच्चारणात्, अन्यत्र—स्वभावादिति भावः । अत एव उज्ज्वलरसस्य शृङ्गाररसस्य, 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः । एका मुख्या, सारणिः कुल्या, स्वल्पनदीत्यर्थः, 'प्रसारण्यां स्वल्पनद्याञ्च सारणिः' इति मेदिनी । शृङ्गार-

१. '—सारिणी' इति पाठान्तरम् । २. 'यन्मुखे' इति पाठान्तरम् ।

रसात्मिका इति भावः। स्वादुः मधुरा, किन्नरीणां किन्नरस्त्रीणाम्, देवगायिकानामित्यर्थः, विकटा विपुला, गीतस्य गानस्य, झङ्कृतिः झङ्काराख्यस्वरः, अनुकारिशब्दोऽयम्, अनिशं नित्यम्, पुरा अतीते वर्त्तमाने भाविनि वा इत्यर्थः। न त्रुटति न छिनत्ति, न विच्छिन्ना इत्यर्थः। 'पुरि लुङ् चास्मे' इति भूते लट्। अत्र गीतझङ्कृतेः शृङ्गाररससारणित्वेन रूपणात् रूपकालङ्कारः[1] ॥ १८ ॥

जिस (प्रसाद) के सामने (आरोह-अवरोह क्रमके कारण) कृष्णसार मृगके सींगके समान टेढ़ा, कर्णप्रिय, किन्नरियोंके उच्च स्वरवाले गीतके झङ्कारसे युक्त शृङ्गार रसका मुख्य प्रवाह सर्वदा नहीं टूटता था, (पक्षा०—जिसके सामने कृष्णसार मृगके सींगके समान टेढ़ी, मधुर (स्वादिष्ट), निर्मल जलवाली, किन्नरियोंके समान बहुत-सी भ्रमरियोंके तीव्र गुञ्जनके झङ्कारसे युक्त एक नहर सर्वदा नहीं विच्छिन्न होती थी अर्थात् कभी नहीं सूखती थी)। [मधुर गान करती हुई दमयन्तीसे गान सीखनेके लिए आयी हुई किन्नरियाँ जिस प्रासादके द्वारपर सर्वदा गान करती थीं (अत एव) जिसका द्वार उनकी ध्वनिसे त्रिकालमें परिपूर्ण रहता था। पक्षान्तरका अर्थ स्पष्ट है। आगे 'तुङ्गप्रासादवासात् (२१।१२९)' श्लोकद्वारा प्रासादके आगे नहरका वर्णन होनेसे यहां पक्षान्तरसे नहरका वर्णन किया गया समझना चाहिये] ॥ १८ ॥

भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरितिहाससङ्कथाः।
पद्मनन्दनसुतारिरंसुताऽमन्दसाहसहसन्मनोभुवः ॥ १९ ॥

भित्तीति। यत्र सौधे, भित्तिषु कुड्येषु, चित्रलिखिता आलेख्यरूपतया अङ्किताः, अखिलाः सकलाः, क्रमाः अनुक्रमाः, पूर्वापरघटनाविशेषाः इत्यर्थः। यासां तादृश्यः, पद्मनन्दनस्य पद्मयोनेः ब्रह्मणः, तस्य विष्णुनाभिकमलोत्पन्नत्वादिति भावः। सुतया कन्यया भारत्या, रिरंसुता रन्तुमिच्छुता, सा एव अमन्दं महत्, साहसम् अविमृश्यकारित्वम्, तेन हसन् स्वप्रयाससाफल्यसन्तोषात् स्मयमानः, मनोभूः कामः यासु तथाभूताः, इतिहाससङ्कथाः पुरावृत्तोक्तवृत्तान्ताः, तस्थुः विद्यन्ते स्म। यस्य सौधस्य भित्तौ कामस्य ब्रह्मणोऽपि पराभवादिप्रभावः चित्रकरेण अङ्कितः अवर्त्तत इत्यर्थः ॥१९॥

जहांपर दीवालोंके चित्रोंमें लिखित सम्पूर्ण क्रमवाली, ब्रह्माकी पुत्री (सरस्वती) के साथ रमणेच्छारूप महान् साहससे हँसते हुए कामदेववाली, इतिहासकी विस्तृत कथा थी, (अथवा—''''''रमणेच्छा उत्पन्न करने) से महासाहसी एवं (वैसा करनेसे अपने पराक्रमकी सफलता पर) हँसते (आनन्दित होते) हुए कामदेववाली'''''')। [जिस प्रासादकी दीवालोंमें वृद्धतम ब्रह्माकी भी पुत्रीके साथ रमणेच्छाकी कथा क्रमशः चित्रित है, जिसमें ब्रह्माके महासाहस (अविचारित कार्य) पर अपनी सफलतासे हँसता हुआ कामदेव

---

१. ''''''रसस्मरणीयत्वेन रूपणाद्रूपकालङ्कारः' इति 'जीवातु'रिति म० म० शिवदत्तशर्माणः।

भी चित्रित है ( अथवा—ब्रह्माकी उक्त इच्छा होनेपर अपने महासाहसकी सफलतासे हँसता हुआ कामदेव भी चित्रित है )। ब्रह्मा अपनी पुत्री सरस्वतीदेवीके साथ रति करना चाहा था। यह कथा मत्स्यपुराणमें मिलती है ] ॥ १९ ॥

पुष्पकाण्डजयडिण्डिमायितं यत्र गौतमकलत्रगामि[1]नः ।
पारदारिकविलाससाहसं देवभर्त्तुरुदटङ्कि भित्तिषु ॥ २० ॥

पुष्पेति । यत्र सौधे, भित्तिषु कुडयेषु, पुष्पकाण्डस्य कुसुमेषोः, जयडिण्डिमायितं विजयघोषकडिण्डिमाख्यवाद्यविशेषवत् आचरितम् । 'उपमानादाचारे' इति क्यजन्तात् कर्त्तरि क्तः । गौतमकलत्रगामिनः अहल्यागन्तुः, देवभर्त्तुः, इन्द्रस्य, परदारान् गच्छतीति पारदारिकः । 'गच्छतौ परदारादिभ्यः' इत्युपसङ्ख्यानात् ठक् । तस्य विलासः विजृम्भणम्, तत् एव साहसं हठकारिता, उदटङ्कि उट्टङ्कितम्, अङ्कितम् इत्यर्थः । चित्रशिल्पिभिरिति शेषः । ब्रह्मादिकीटपर्यन्तं जगत् कामोन्मत्तमिति ज्ञापनार्थं तथा दम्पत्योः हर्षजननार्थञ्च सर्वमेतत् वृत्तान्तं तत्र लिखितम् इति भावः ॥ २० ॥

जहां ( जिस प्रासादकी सुवर्णादिरचित ) दीवालोंपर कामदेव-विजयके डिण्डिमके समान, अहल्याके कामुक देवेन्द्रका परस्त्री-गमनरूप साहस खोदकर लिखा गया है। [ देवराज इन्द्रको भी जिस कामदेवने पराजित कर मुनिपत्नीके साथ सम्भोग कराया, उस कामदेवका पूजन तुम दोनों ( नल-दमयन्ती ) को मनोयोगसे सर्वदा करना चाहिये, यह कामोद्दीपक कथा स्वर्णादिरचित दीवालोंपर खोदी गयी है ] ॥ २० ॥

उच्च[2]लत्कलरवालिकैतवाद् वैजयन्तविजयार्जिता जगत् ।
यस्य कीर्तिरवदायति स्म सा कार्त्तिकीतिथिनिशीथिनीस्वसा ॥ २१ ॥

उच्चलदिति । कृत्तिकाभिः नक्षत्रेण युक्ता पौर्णमासी कार्त्तिकी । 'नक्षत्रेण युक्तः कालः' इत्यण् । सा एव तिथिः पूर्णिमा, तस्याः निशीथिनी रात्रिः, तस्याः स्वसा भगिनी, तत्सदृशी सुशुभ्रा इत्यर्थः । तथा वैजयन्तस्य इन्द्रप्रासादस्य 'स्यात् प्रासादो वैजयन्तः' इत्यमरः । विजयेन पराभवेण, औन्नत्येन सौन्दर्येण च इति भावः । अर्जिता लब्धेत्यर्थः । यस्य सौधस्य, सा प्रसिद्धा, कीर्त्तिः यशः, धवलतेति यावत् । 'यशसि धवलता वर्ण्यते हासकीर्त्त्योः' इत्युक्तेरिति भावः । उच्चलताम् उड्डीयमानानाम्, कलरवालीनां पारावतश्रेणीनाम्, कैतवात् व्याजात्, इत्यपह्नवभेदः । जगत् भुवनम्, अवदायति स्म शोधयति स्म, शुभ्रीकरोति स्म इत्यर्थः । सौधोपरि उड्डीयमाना एते तावत् पारावता न भवन्ति, परन्तु एतस्य शरच्चन्द्रचन्द्रिकातुल्या कीर्त्तिरेवेति भावः । दैप् शोधने इत्यस्य लट् ॥ २१ ॥

कार्तिकी पूर्णिमाकी रात्रिके समान ( अतिशय शुभ्र ) तथा ( उच्चता एवं सौन्दर्यके द्वारा )

---

१. '—कामिनः' इति पाठान्तरम् । २. '—उच्छल—' इति पाठान्तरम् ।

इन्द्रप्रसादके विजयसे प्राप्त हुई जिस (प्रासाद) की कीर्ति उड़ते हुए कबूतरोंके झुण्डके बहानेसे संसारको उज्ज्वल करती थी। [ये कबूतर नहीं उड़ते; किन्तु इन्द्रप्रासाद-विजय जन्य इस प्रासादकी शुभ कीर्ति ऊपरको बढ़ रही थी] ॥ २१ ॥

गौरभानुगुरुगेहिनीस्मरोद्भूतभावमितिवृत्तमाश्रिताः।
रेजिरे यदजिरेऽभिनीतिभिर्नाटिका भरतभारतीसुधाः ॥ २२ ॥

गौरेति। यस्य सौधस्य, अजिरे प्राङ्गणे, गौरभानोः सितांशोः, चन्द्रस्येत्यर्थः। गुरुगेहिन्यां बृहस्पतिपत्न्यां तारायाम्, स्मरोद्भूतभावं कामजव्यापारमेव, इतिवृत्तं वर्णनीयविषयम्, आश्रिताः अवलम्बिताः, तद्वर्णनपराः इत्यर्थः। भरतभारतीसुधाः नाट्यशास्त्रस्य सारभूताः अमृतकल्पाः, नाटिकाः चतुरङ्गरूपकविशेषाः, 'चतुरङ्का तु नाटिका' इत्युक्तलक्षणात्, अभिनीतिभिः अभिनयैः, रेजिरे शुशुभिरे ॥ २२ ॥

चन्द्रमाकी गुरुपत्नी (तारा) में कामजन्य (पाठा०—कामविषयक मर्यादोल्लङ्घन) भावरूप इतिहासका आश्रय किया हुआ नाट्यशास्त्रमें अमृतरूप चार अङ्कोंवाला लघु नाटक-विशेष जिस (प्रासाद) प्राङ्गणमें अभिनीत (प्रदर्शित) होनेसे शोभते थे। (अथवा—चन्द्रमा तथा गुरुपत्नी (तारा) के कामज भाव (पाठा०—कामका अमर्यादित) भावरूप इतिहास······) ॥ २२ ॥

पौराणिक कथा—कामपीडित चन्द्रमाने एक समय 'तारा' नामकी गुरुपत्नीके साथ सम्भोग किया, जिससे 'बुध' नामका उत्पन्न हुआ।

शम्भुदारुवनसम्भुजिक्रियामाधवव्रजवधूविलासयोः।
गुम्फितैरुशनसा सुभाषितैर्यस्य हाटकविटङ्कमङ्कितम् ॥ २३ ॥

शम्भुदार्विति। यस्य सौधस्य, हाटकविटङ्कं हिरण्मयकपोलपालिका, 'हिरण्यं हेम हाटकम्' 'कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्' इति चामरः। शम्भोः हरस्य, दारुवने देवदारुकानने, सम्भुजिक्रिया कोचस्त्रीभिः सह सम्भोगव्यापारः, माधवस्य श्रीकृष्णस्य, व्रजवधूविलासः गोपाङ्गनाविहारश्च तयोः विषये, उशनसा शुक्राचार्येण, गुम्फितैः विरचितैः, सुभाषितैः सूक्तैः, शिवकृष्णविहारवर्णनैरित्यर्थः, अङ्कितं चित्रितम्। तत्र लिखितम् इत्यर्थः ॥ २३ ॥

जिस (प्रासाद) की सुवर्णरचित कपोतपाली, शिवजीकी (मन्दरकन्दरामें) दारुवनमें (पार्वतीके साथ दिव्य सहस्र वर्ष पर्यन्त) सम्भोग क्रियाका तथा श्रीकृष्णजीके व्रजबालाओंके साथ विलास (रासक्रीडा) का शुक्राचार्यके द्वारा बनाये गये (श्लोकमय) सुभाषितोंसे पूर्ण थी अर्थात् जिसके सुवर्णमयी कपोतपालियोंपर शिवक्रीडा तथा कृष्णकी रासलीलाके कवि शुक्राचार्यकृत सुन्दर वर्णन लिखे गये थे ॥ २३ ॥

---

१. '—स्मरोद्धृत्त—' इति पाठान्तरम्।

अह्नि भानुभुवि दासदारिकां यच्चरः परिचरन्तमुज्जगौ ।
कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः ॥ २४ ॥

अह्नीति । यच्चरः यत्सौधचारी, शुकः कीरः, कालः रात्र्यादिः, देशः निर्जनादिः, विषयः उपभोग्याया नार्या अवस्थादिः, तेषाम् असहात् अक्षमात्, योग्यायोग्यविचारविलम्बासहिष्णोरित्यर्थः । स्मरात् कामात्, कामताडनादित्यर्थः । उत्सुकम् इच्छापूरणयोद्युक्तम् । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । अत एव अह्नि दिवैव, न रात्रौ इति भावः । भानुभुवि सूर्यतनयायां यमुनायाम्, यमुनामध्यस्थद्वीपे इत्यर्थः । न विविक्ते इति भावः । 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः दासदारिकां कैवर्त्तकन्याम्, सत्यवतीमित्यर्थः । न तु कुलीनामिति भावः । 'कैवर्त्ते दासधीवरौ' इत्यमरः । परिचरन्तं सेवमानम्, रमयन्तमिति यावत् । शुकपितामहं व्यासपितरं पराशरम् 'शुको व्याससुते कीरे' इति विश्वः । उज्जगौ गायति स्म । पराशरस्य दासराजकन्यकासमागमं पुराणादौ श्रुतं पुनः पुनरुच्चैः पपाठेत्यर्थः ॥२४॥

जहां रहनेवाला शुक ( तोता ), कामदेव ( जन्य विकार ) से समय, देशत था विषयको नहीं सहनेवाले ( अत एव ) दिनमें यमुना ( के द्वीप ) में धीवरकन्या ( योजन गन्धा—सत्यवती ) के साथ सम्भोग करते हुए शुकदेवजीके पितामह (महर्षिव्यासके पिता) का उच्च स्वरसे गान करता (नामोच्चरण करता) था अर्थात् उनकी उक्त सम्भोगको कहता था। [ यद्यपि शास्त्रमें रात्रिमें, तीर्थस्थानादिसे भिन्न एकान्त स्वगृहादिमें तथा स्वस्त्रीके साथ ही सम्भोग का विधान और दिनमें, तीर्थस्थानमें और परस्त्री—उसमें भी निषाद ( शूद्र ) कन्याके साथ सम्भोग करनेका निषेध किया गया है, किन्तु काम-पीडित महर्षि व्यासजीके पिताने काल ( दिन ), देश ( तीर्थस्थान-यमुना नदी ) और विषय ( शूद्र कन्या ) होनेका विचार छोड़ कर जो उसके साथ सम्भोग किया था इस वातको महाभारतकी कथा सुननेसे शीघ्र शिक्षा ग्रहण करनेवाला जिस प्रासादपर रहनेवाला तोता भी उच्च स्वरसे कह रहा था । लोकमें भी कोई सज्जन बुरे कर्म करनेवाले अपने पितामहकी भी निन्दा करता फिरता है ] ॥२४॥

नीतमेव करलभ्यपारतामप्रतीर्य मुनयस्तपोऽर्णवम् ।
अप्सरःकुचघटावलम्बनात् स्थायिनः क्वचन यत्र चित्रगाः ॥२५॥

नीतमिति । यत्र सौधे, क्वचन कुत्रचित् प्रदेशे, करलभ्यपारतां पाणिप्राप्यचरमसीमात्वम्, अचिरमेव लप्स्यमानफलत्वमित्यर्थः, नीतमेव प्राप्तमेव, तीर्णप्रायमेवेत्यर्थः । तपोऽर्णवं तपस्यासागरम्, अप्रतीर्य अनुत्तीर्य, तपस्यातो विरत्येत्यर्थः । अप्सरसां स्वर्वेश्यानां, कुचाः स्तना एव, घटाः कुम्भाः, तेषाम् अवलम्बनात् आश्रयात्, स्थायिनः अवतिष्ठमानाः, विश्रामपरा इत्यर्थः । तरणश्रान्ताः घटादिकमवलम्ब्य विश्राम्यन्तीति प्रसिद्धिः । मुनयः विश्वामित्रादयः, चित्रगाः आलेख्यवर्त्तिनः, चित्रे अङ्किताः विद्यन्ते स्म इत्यर्थः ॥ २५ ॥

जहांपर किसी प्रदेशमें हाथसे (तैरकर) प्राप्त होने योग्य परतीर अर्थात् अतिशय निकट (समाप्तप्राय) फलवाले तपस्यारूपी समुद्रको पार नहीं करके (इन्द्रके द्वारा तपस्यामें विघ्न करनेके लिए भेजी हुई मेनका आदि) अप्सराओंके स्तनरूपी घटों (पक्षा०—घटतुल्य स्तनों) को ग्रहणकर ठहरे हुए मुनिलोग चित्रित थे। [जिस प्रकार समुद्रको कठिन परिश्रमसे पार करता हुआ कोई व्यक्ति समुद्रके हाथसे ही पार करने योग्य अर्थात् अत्यन्त निकटस्थ दूसरे किनारे तक तैरकर नहीं पहुंचता, किन्तु घटादिका आश्रय लेकर वहीं (दूसरे किनारेके पास ही) विश्राम करने लगता है, उसीप्रकार बहुत दिनोंसे की गयी तपस्यासे शीघ्र ही मिलनेवाले उसके फलको नहीं प्राप्तकर अप्सराओंके घटतुल्य स्तनोंको पकड़े हुए अनेक मुनि चित्रित थे। समाप्तप्राय तपवाले उन महातपस्वियों का चित्र बनाया गया था, जो अप्सराओंका स्तन ग्रहण कर उनके साथ रमण करते थे] ॥ २५ ॥

(स्वामिना च वहता च तं मया स स्मरः सुरतवर्णनाज्जितः।
योऽयमीदृगिति नृत्यते स्म यत्केकिना मुरजनिस्वनैर्घनैः ॥ १ ॥[1])

स्वामिनेति। यस्य सौधस्य सम्बन्धिना केकिना क्रीडामयूरेणेति हेतोर्घनैर्निबिडैर्मुरजस्वनैर्मृदङ्गध्वनिभिः, अथ च तैरेव मेघैर्नृत्यते स्म। इति किम्—योऽयमीदृग्ब्रह्मादिवशीकारकारी स महाप्रभावः स्मरः स्वामिना कार्तिकेयेण प्रभुणा च तदीययानत्वेन तं वहता पृष्ठेन धारयता मया मयूरेण च सुरतवर्जनाज्जित इति। चावन्योन्यसमुच्चये। कुमारस्य नैष्ठिकब्रह्मचारत्वान्मयूराणां च वर्षर्तुकामभाजां नेत्रोपान्तरन्ध्रमार्गेण निर्गच्छतामश्रुमयशुक्रविन्दूनां मयूरीमुखग्रहणमात्रेण गर्भसम्भूतेर्लिङ्गसङ्घर्षणरूपरतपरित्यागो जयहेतुः। मयूराश्च मेघशब्दभ्रान्त्या मृदङ्गशब्दैर्नृत्यन्ति ॥ १ ॥

जिस (प्रासाद) का मयूर 'स्वामी' (कार्तिकेय, पक्षा०—मेरे प्रभु) ने तथा उनको ढोते हुए मैंने जो यह ऐसा (ब्रह्मा आदिको भी कामपरवश करनेके कारण सुप्रसिद्ध) है 'उस कामदेवको सुरतत्यागसे जीत लिया है' इस विजयभावनासे मृदङ्गध्वनिरूप मेघ (या—मेघके गर्जनतुल्य मृदङ्गध्वनि) से नाचता था। [कामदेव ब्रह्मा, देवेन्द्र, महातपस्वी व्यास, विश्वामित्र आदिको भी कामपरवश करनेसे महापराक्रमी प्रसिद्ध हो रहा है, उस कामदेवको भी मेरे प्रभु कार्तिकेयने तथा आदरातिशयसे उनका वाहन होकर उनको ढोनेवाले मैंने भी जीत लिया है, क्योंकि हम दोनों रति नहीं करते। यहांपर नैष्ठिक ब्रह्मचारी होनेसे कार्तिकेयको तथा मेघतुल्य मृदङ्गके शब्दसे नाचते हुए मयूरके नेत्रसे गिरे हुए वीर्यरूप अश्रुविन्दुको मुखसे ग्रहण करने मात्रसे मयूरीको गर्भवती होनेके कारण योनि-शिश्न-सम्बन्धरूप रतिका त्याग करनेसे मयूरको सुरतका त्याग करनेवाला कामविजेता समझना चाहिये] ॥ १ ॥

---

१. मया 'प्रकाश' व्याख्यया सहायं श्लोकोऽत्र स्थापितः।

यत्र वीक्ष्य नलभीमसम्भवे मुह्यतो रतिरतीशयोरपि ।
स्पर्द्धयेव जयतोर्जयाय ते कामकामरमणीबभूवतुः ॥ २६ ॥

यत्रेति । यत्र सौधे, नलभीमसम्भवे निषधेशभैम्यौ, वीक्ष्य दृष्ट्वा, मुह्यतोः मोहं गच्छतोः, रूपदर्शनात् विस्मयविमूढयोरित्यर्थः । अत एव स्पर्द्धया साम्येनेव, तुल्यताभिमानेनेवेत्यर्थः । जयतोः अभिभवतोः, रतिरतीशयोः रतिकामयोरपि, जयाय अभिभवाय, ते नलदमयन्त्यौ, कामकामरमणीबभूवतुः तज्जयाय स्वमन्ये ततोऽप्युत्कृष्टे कन्दर्पकन्दर्पस्त्रियौ जज्ञाते, ते अतिशय्य स्थिते इत्यर्थः । अभूततद्भावे च्विः ॥ २६ ॥

जहांपर नल तथा दमयन्तीको देखकर ( सुरतके लिए ) मोहित होते हुए ( अथवा—भ्रमयुक्त होते हुए, अथवा—अपनी अपेक्षा उनका अतिशय शरीरसौन्दर्य होनेसे आश्चर्यके कारण मोहित होते हुए ) और मानो स्पर्द्धासे जीतते हुए कामदेव तथा रतिको जीतनेके लिए वे दोनों ( नल तथा दमयन्ती ) कामदेव तथा रति हो गये । [ नल तथा दमयन्तीके शरीरसौन्दर्य ( या—उनकी रति ) को देखकर कामदेव तथा रति भी आश्चर्यसे ( या—सम्भोग करनेके लिये ) मोहित हो गये और उनको मानो ईर्ष्यासे जीतने लगे तो वे नल तथा दमयन्ती भी उक्तरूप कामदेव तथा रतिको जीतनेके लिए स्वयं भी उनसे उत्कृष्ट कामदेव तथा रति हो गये ] ॥ २६ ॥

तत्र सौधसुरभूधरे तयोराविरासुरथ कामकेलयः ।
ये महाकविभिरप्यवीक्षिताः पांशुलाभिरपि ये न शिक्षिताः ॥ २७ ॥

तत्रेति । तत्र तस्मिन्, सौधसुरभूधरे मेरुतुल्यप्रासादे, तयोः भैमीनलयोः, कामकेलयः अनङ्गक्रीडाः । 'द्रवकेलिपरिहासाः क्रीडा खेला च' इत्यमरः । अथ आरम्भे कार्त्स्न्येन वा, अविरासुः आविर्बभूवुः, विहारस्य प्रथमप्रवृत्तिः कार्त्स्न्येन वा प्रवृत्तिरभूदित्यर्थः । प्रादुराविःशब्दयोः कृभ्वस्तिपरनियमात् तत्राम्प्रत्ययवत् कृभ्वस्तिग्रहणसामर्थ्यात् नास्ति भूभावः । ये केलयः, महाकविभिः वात्स्यायनशास्त्रज्ञैरपि, अवीक्षिताः अदृष्टाः, वर्णितुमशक्ता इत्यर्थः । तथा ये पांशुलाभिः कुलटाभिरपि, न शिक्षिताः न अभ्यस्ताः, एतेन वर्णयिष्यमाणकामकेलीनामसाधारणत्वं सूच्यते ॥२७॥

उस प्रासादरूपी सुमेरुपर उन दोनों ( नल तथा दमयन्ती ) को वे कामक्रीडाएँ होने लगीं, जिनको महाकवि ( कामशास्त्रके रचयिता वात्स्यायन आदि, या—कालिदास आदि ) ने भी नहीं देखा ( बुद्धिगोचर किया ) था, तथा ( अनेक जारोंके संसर्ग होने पर ) पुंश्चली (अनेक रतिपण्डिता व्यभिचारिणी स्त्रियों) ने भी नहीं सीखा था । ['कवयः किं न पश्यन्ति' ( कविलोग क्या नहीं देखते अर्थात् सूक्ष्मसे सूक्ष्म वस्तु भी कवियोंकी बुद्धिमें स्फुरित होता है ) नीतिके अनुसार महाकविलोग की बुद्धिमें भी जो कामक्रीडा स्फुरित नहीं हुई थी, तथा अनेक पुरुषोंके साथ सम्भोग करनेसे व्यभिचारिणी स्त्रियां अधिक क्रीडाचतुर होती हैं,

किन्तु जिन कामक्रीडाओंको उन्होंने भी नहीं सीखा था, अलौकिक उन कामक्रीडाओं को वे ( नल-दमयन्ती ) करने लगे ]॥ २७॥

**पौरुषं दधति योषिता नले स्वामिनी श्रिततदीयभावया।**
**यूनि शैशवमतीर्णया कियत्प्रापि भैमसुतया न साध्वसम् ॥ २८॥**

**पौरुषमिति। पौरुषं पुरुषत्वम्। युवादित्वादण्प्रत्ययः। दधति दधाने, यूनि तरुणे, स्वामिनि पत्यौ, नले नैषधविषये, क्रमात् योषिता स्त्रिया, भीरुस्वभावया इत्यर्थः। शैशवम् अतीर्णया अद्यापि अनुत्तीर्णबाल्यया। कर्त्तरि क्तः। श्रितः अवलम्बितः, तदीयभावः नलाभिप्रायः, तदधीनत्वमिति यावत्। यया तादृश्या, अस्वतन्त्रया इत्यर्थः। भीमसुतया भैम्या, साध्वसं सङ्गमभयम्, कियत् किञ्चिन्मात्रम्, न प्रापि न अलम्भि, परन्तु महदेव भयं प्रापि इति भावः। तच्च रसीभवतः स्थायिनः अङ्गं पत्युः अत्यानन्दकरञ्च इति प्रपञ्चितं कुमारसम्भवसञ्जीवन्यां 'भावसाध्वसपरिग्रहात्' इत्यत्र। अत्र भयहेतूनां नलगतपौरुषादीनां त्रयाणां भैमीगतस्त्रीत्वादीनां त्रयाणाञ्च यथासङ्ख्यं सम्बन्धात् यथासङ्ख्यालङ्कारः॥ २८॥**

पुरुषार्थको प्राप्त अर्थात् बलवान्, तरुण तथा स्वामी ( राजा, पक्षा०—पति ) नलके विषयमें ( क्रमशः ) स्त्री (होनेसे भीरु), बाल्यावस्थाका त्याग नहीं की हुई अर्थात् प्रौढत्वको अप्राप्त, उनके भावका आश्रयकी हुई अर्थात् नलाधीन दमयन्तीने कुछ भय नहीं प्राप्त किया? अर्थात् थोड़ा भय प्राप्त किया ही। [ जिस प्रकार बलवान्, युवक और मालिकसे भीरु, बाल्यावस्थायुक्त और दासभावप्राप्त व्यक्ति कुछ भय करता ही है; उसी प्रकार उक्त गुणयुक्त नलसे उक्त गुणवाली दमयन्तीने थोड़ा भय किया अर्थात् 'प्रथम सुरतमें न मालूम क्या होगा?' इस प्रकार दमयन्तीको अपनी अप्रौढताके कारण थोड़ा भय लगा। प्रथम सुरतमें स्त्रीका भययुक्त होना उचित ही है ]॥ २८॥

**दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रियं गिरः।**
**तं विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशम् ॥ २९॥**

**दूत्येति। इयं दमयन्ती, प्राक् स्वयंवरात् पूर्वम्, दूत्ये इन्द्रस्य दूतकर्मणि, सङ्गतिगतं समागमं प्राप्तम्, प्रियं नलम्, आत्मना स्वयम्, गिरः नवसर्गोक्तवाक्यानि, हृदयनिहितसप्रेमभाषणानीति यावत्, अशिश्रवत् श्रावयति स्म। श्रृणोतेर्णौ चङ्युपधाया ह्रस्वे सन्वद्भावः, 'स्रवतिश्रृणोति—' इत्यादिना विकल्पादभ्यासस्येत्वम्। इति यत्, तं पूर्वकृतम्, विनयव्ययम् अविनयम्, प्रगल्भतामिति यावत् विचिन्त्य अनुस्मृत्य, ह्रिया लज्जया, सा भैमी, कीदृशं किम्, करवाणि विदधानि, इति न वेद स्म न बुबुधे। शालीनताऽभावस्मरणात् लज्जया इतिकर्त्तव्यताविमूढा अभवदित्यर्थः॥ २९॥**

इस ( दमयन्ती ) ने ( स्वयंवरसे ) पहले ( इन्द्रादि देवोंके ) दूतकार्यमें मिले हुए प्रिय

( नल ) से जो स्वयं ( नवमसर्गोक्त ) वचनोंको कहा था, उस अविनय ( प्रगल्भता ) को सोचकर लज्जासे 'मैं क्या करूं?' ऐसा ( वह ) कुछ नहीं जान सकी । [ नलके इन्द्रादिका दूत बनकर अपने महलमें आनेके बाद दमयन्तीने जो अपने विरहप्रकाशक वचनोंको कहा था, उस धृष्टताको सोचकर 'मुझे इस समय क्या करना चाहिये' इस बातको लज्जित वह दमयन्ती नहीं समझ सकी । नवसङ्गममें स्वाभाविक लज्जाने पूर्वोक्त वचनके स्मरणसे दमयन्तीको किंकर्तव्यमूढ बना दिया ] ॥ २९ ॥

**यत् तया सदसि नैषधः स्वयं प्राग्वृतः सपदि वीतलज्जया ।**
**तन्निजं मनसिकृत्य चापलं सा शशाक न विलोकितुं नलम् ॥ ३० ॥**

**यदिति । किञ्च, तया भैम्या, प्राक् पूर्वम्, स्वयंवरकाले इत्यर्थः । सदसि स्वयंवरसभायाम्, सपदि सहसा, वीतलज्जया विगतत्रपया सत्या, नैषधः नलः, स्वयम् आत्मना, नलकर्तृकयाच्ञाऽभावेऽपि इति भावः । वृतः पतित्वेन स्वीकृतः, इति यत् तत् स्वयंवरणरूपम्, निजम् आत्मीयम्, चापलं धाष्टर्यम्, मनसिकृत्य हृदि निधाय 'अनत्याधान उरसिमनसी' इति समासे क्त्वो ल्यबादेशः । सा भैमी, नलं नैषधम्, विलोकितुं द्रष्टुमपि, न शशाक न चक्षमे ॥ ३० ॥**

वीतलज्जा ( लज्जाहीना ) उस ( दमयन्ती ) ने जो पहले स्वयंवर सभामें नलको स्वयं ( विना किसीकी प्रेरणा किये ही ) वरण कर लिया, अपनी उस चपलताको सोचकर वह ( दमयन्ती ) नलको देखनेमें भी समर्थ नहीं हुई । [ उस तीनों लोकोंसे आये हुए सहस्रों पुरुषोंके सामने मैंने लज्जा छोड़कर नलको विना किसीकी प्रेरणा किये ही वरण कर लिया, यह स्मरण कर अतिशय लज्जित वह दमयन्ती नलको देख भी नहीं सकी । इन दोनों श्लोकोंसे दमयन्तीकी लज्जाका आधिक्य बतलानेसे उसका 'उत्तम नायिका' होना सूचित होता है ] ॥ ३० ॥

**आसने मणिमरीचिमांसले यां दिशं स परिरभ्य तस्थिवान् ।**
**तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥ ३१ ॥**

**आसने इति । सः नलः, मणिमरीचिभिः रत्नकिरणैः, मांसले सान्द्रे, समुद्भासिते इत्यर्थः । आसने मणिपीठे, यां दिशं ककुभम्, परिरभ्य आश्रित्य इत्यर्थः । तस्थिवान् उपविवेश, यद्दिगाभिमुख्येनावस्थित इत्यर्थः । मानिनी अभिमानवती, इयं दमयन्ती, तां प्रियपरिरब्धां दिशम्, असूयितवतीव दिशः स्त्रीत्वेन सापत्न्यात् ईर्ष्यितवतीव इत्युत्प्रेक्षा, मनागपि ईषदपि, न व्यलोकयत् न अपश्यत्, नलन्तु किमु वक्तव्यमिति भावः ॥ ३१ ॥**

( अनुरागाधिक्यसे एक बड़े आसनपर बैठे हुए उन दोनोंमेंसे ) नल मणियोंकी किरणोंसे व्याप्त आसनपर ( आसनके एक भागमें ) जिस दिशाका आलिङ्गनकर अर्थात् दिशाकी ओर बैठे थे, अपने प्रिय नलद्वारा आलिङ्गित होनेसे उस दिशामें ( सपत्नीभाव

करके ) असूयायुक्त होती हुई-सी मानिनी उस ( दमयन्ती ) ने उस ( दिशा ) को थोड़ा भी नहीं देखा। [ यद्यपि लज्जाके कारण दमयन्तीने उस तरफ नहीं देखा, किन्तु कविने उस दिशारूपिणी नायिकाको उस ( दमयन्ती ) के पति ( नल ) द्वारा आलिङ्गित होनेसे दमयन्तीने उस दिशाको अपना सपत्नी मानकर ईर्ष्या की और स्वयं मानिनी होनेसे उस ( सपत्नीरूपिणी ) दिशाको देखातक नहीं ऐसी उत्प्रेक्षा की है। लोकमें भी सभी स्त्रियां पतिके द्वारा आलिङ्गित स्त्रीको सपत्नी मानकर उसके साथ ईर्ष्यालु होती तथा उसकी ओर देखती तक नहीं, अत एव दमयन्तीका वैसा करना उचित ही है ] ॥ ३१ ॥

ह्रीसरिन्निजनिमज्जनोचितं मौलिदूरनमनं दधानया।
द्वारि चित्रयुवतिश्रिया तया भर्तृहूतिशतमश्रुतीकृतम् ॥ ३२ ॥

**ह्रीति। ह्रीसरिति लज्जानद्याम्, निजस्य आत्मनः, निमज्जनं निमग्नीभवनम्, तस्य उचितं योग्यम्, लज्जाप्रयुक्तत्वात् मौलिनमनस्येति भावः। मौलेः मूर्द्ध्नः, दूरम् अत्यर्थम् नमनं नतिम्, दधानया धारयन्त्या, अत एव द्वारि द्वारदेशे, चित्रयुवतेः आलेख्यलिखितायाः तरुण्याः, श्रीरिव श्रीः कान्तिः यस्याः तथाभूतया, तद्वन्निश्चलया इत्यर्थः। तथा भैम्या, भर्त्तुः नलस्य, हूतिशतं पुनः पुनराह्वानम्। 'हूतिराकारणाह्वानम्' इत्यमरः। अश्रुतीकृतं न श्रवणविषयीकृतम्, श्रुतमपि लज्जया प्रत्युत्तराप्रदानात् अगमनाच्च अश्रुतमिव कृतमित्यर्थः। ह्रिया प्रियं न किञ्चित् प्रत्युवाच इति निष्कर्षः। अभूततद्भावे च्विः ॥ ३२ ॥**

( निरन्तर प्रवाहित होनेसे ) लज्जारूपी नदीमें अपने डूबने ( स्नान करने ) के योग्य अत्यन्त दूरतक नतमुखी तथा द्वारपर चित्रलिखित युवतिके समान हुई उस दमयन्तीने पति ( नल ) के सैकड़ों आह्वानों ( 'प्रिये दमयन्ति ! शीघ्र आओ……' इत्यादि नलकृत बुलाने ) को अनसुनी कर दिया। [ जिस प्रकार नदीमें स्नान करनेवाला व्यक्ति डुबकी लगाते समय मुखको नाभितक नीचे कर लेता है, उसी प्रकार लज्जावती दमयन्तीने मुखको अधिक नीचा कर लिया। तथा नलके बार-बार बुलानेपर भी उस प्रकार उस नलके बातको अनसुनी कर दिया और उनके पास न गयी और न कुछ उत्तर ही दिया जिस प्रकार द्वारपर बनायी गयी स्त्रीकी मूर्ति हो। लज्जावती अत एव नम्रमुखी दमयन्ती नलके बार बार बुलानेपर भी उनकी बातको अनसुनी कर न तो उनके पास गयी और न उनकी बातोंका उत्तर ही दिया ] ॥ ३२ ॥

वेश्म पत्युरविशन्न साध्वसाद् वेशिताऽपि शयनं बभाज न।
भाजिताऽपि सविधं न साऽत्रपत् स्वापिताऽपि न च सम्मुखाऽभवत् ॥

**वेश्मेति। सा भैमी, साध्वसात् भयात्, पत्युः भर्त्तुः, वेश्म गृहम्, न अविशत् न प्रविष्टवती, वेशिताऽपि सखीभिः कथञ्चित् गृहान्तः प्रापिताऽपि शयनं तल्पम् न बभाज न सिषेवे, शय्यायां न अगच्छदित्यर्थः। भाजिताऽपि सखीभिरनुनयादिना**

शयनं प्रापिताऽपि, सविधं समीपम्, अत्यन्तसंयोगे द्वितीया। न अस्वपत् न अशेत 'स्वापः शयननिद्रयोः' इति मेदिनी। स्वापिताऽपि सखीभिः समीपे शायिताऽपि, सम्मुखा अभिमुखी, न अभवत् न बभूव। एतेन नवोढाया मौग्ध्यात् लज्जाविजित-मन्मथत्वमुक्तम् ॥ ३३ ॥

वह दमयन्ती भयसे पति ( नल ) के भवन ( विलासगृह ) में नहीं गयी, ( नल या सखियोंसे ) प्रविष्ट करानेपर भी शय्यापर नहीं गयी, ( नल या सखियोंसे ) शय्यापर पहुंचायी गयी भी शयन नहीं किया और ( नल या सखियोंसे ) सुलायी गयी भी सामने मुखकर नहीं शयन किया। अर्थात् पीठ फेरकर सोयी। [नवोढा स्त्रीकी यह प्रकृति होती है]॥

( केवलं न खलु भीमनन्दिनी दूरमत्रपत नैषधं प्रति।
भीमजाहृदि जितः स्त्रिया ह्रिया मन्मथोऽपि नियतं स लज्जितः॥१[1]॥)

केवलमिति। भीमनन्दिनी केवलं नैषधं प्रत्युद्दिश्य दूरं नितरामत्रपत लज्जां प्राप्नोति न, किन्तु भीमजाहृदि वर्तमानया ह्रिया लज्जारूपया स्त्रिया जितः खलु जित एव सोऽतिप्रसिद्धपराक्रमो हृद्येव वर्तमानो मन्मथोऽपि नियतं बहुकालं लज्जितः। अथ च-मनो मथ्नाति पीडयतीति मन्मथः पृषोदरादिः। एवंविधोऽपि जितो लज्जितः सङ्कुचितश्चेति चित्रम्। ह्रीवशान्नलविषयोऽतिपीडाकरोऽपि कामो बहुकालं तामभिभवति स्मेति भावः। अन्योऽपि स्त्रिया जितो लज्जते ॥ १ ॥

केवल भीमनन्दिनी ( दमयन्ती ) ही नलसे अत्यन्त लज्जित नहीं हुई, किन्तु दमयन्तीके हृदयमें स्थित लज्जारूपिणी स्त्रीसे जीता गया वह ( अतिशय प्रसिद्ध पराक्रमी ) मन्मथ ( चित्तको मथित = पीडित करनेवाला, कामदेव ) भी निश्चितरूपसे (या–अत्यधिक) लज्जित हो गया। [ स्त्रीरूपी लज्जासे पराजित प्रसिद्ध पराक्रमी कामदेवका लज्जित होना उचित ही है ] ॥ १ ॥

आत्मनाऽपि हरदारसुन्दरी यत् किमप्यभिललाष चेष्टितुम्।
स्वामिना यदि तदर्थमर्थिता मुद्रितस्तदनया तदुद्यमः ॥ ३४ ॥

आत्मनेति। हरदाराः पार्वती इव, सुन्दरी सुरूपा, सा भैमीति शेषः। आत्मना स्वयमपि, यत् किमपि चेष्टितुं यत् किञ्चन कटाक्षवीक्षणादि कर्त्तुम्, अभिललाष स्पृहयामास, किन्तु स्वामिना पत्या, तदर्थं तन्निमित्तम्, अर्थिता यदि प्रार्थिता चेत्। तत् तदैव, अनया भैम्या, तदुद्यमः तस्य नलस्य, उद्यमः चेष्टा, स्वकीयकटाक्षवीक्षणादिचेष्टा वा, मुद्रितः प्रतिबद्धः, निरुद्धीकृतः इत्यर्थः। स्वयं चिकीर्षितमपि लज्जावशात् न करोति इति निष्कर्षः ॥ ३४ ॥

शिवपत्नी ( पार्वती ) के समान सुन्दरी ( दमयन्ती ) ने स्वयं भी जो कुछ चेष्टा ( कटाक्षदर्शन आलिङ्गन, चुम्बन आदि ) करना चाहा, ( किन्तु ) पति ( नल ) द्वारा उसीके

१. 'प्रकाश' व्याख्यासहित एवायं श्लोकोऽत्र स्थापितः।

लिए प्रार्थित उस ( दमयन्ती ) ने उस ( नल ) के उस उद्यम ( कटाक्षदर्शन, आलिङ्गन, चुम्बनादि करने ) को रोक दिया। [ स्वयं चिकीर्षित भी आलिङ्गन आदिको नलके द्वारा करनेकी चाहना करनेपर उन्हें वैसा करनेसे रोक दिया ]॥ ३४॥

**ह्रीभराद् विमुखया तया भियं सञ्चितामननुरागशङ्किनि।**
**स स्वचेतसि लुलोप संस्मरन् दूत्यकालकलितं तदाशयम् ॥ ३५॥**

ह्रीभरादिति। सः नलः, ह्रीभरात् लज्जातिशयात्, विमुखया प्रतिकूलया, तया भैम्या, अननुरागशङ्किनि वैमुख्यदर्शनात् अनुरागाभावसन्देहिनि, स्वचेतसि निजमनसि, सञ्चितां पुञ्जीकृताम्, भियं विरागसम्भावनाजनितं भयम्, दूत्यकाले दूतकर्मसमये, कलितम् अवगतम्, तस्याः भैम्याः, आशयं चित्तवृत्तिम् संस्मरन् सञ्चिन्तयन्, लुलोप विनाशयामास। तदनुरागस्य स्मरणेन भयं नुनोद इत्यर्थः॥ ३५॥

( अपने इन्द्रादिके ) दूतकर्मके समयमें निश्चित दमयन्तीके अभिप्राय ( स्व-विषयक दृढतमानुराग ) को स्मरण करते हुए उस ( नल ) ने लज्जाधिक्यसे पराङ्मुखी उस ( दमयन्ती ) के द्वारा अनुरागका अभाव सोचनेवाले अपने चित्तमें उत्पन्न हुए भयको दूर कर दिया। [ पहिले तो लज्जासे दमयन्तीको विमुख होती हुई देखकर नलके हृदयमें भय उत्पन्न हुआ कि 'यह मुझसे अनुराग नहीं करती है क्या?' किन्तु इस भयको अपने दूतकालमें देखे गये दमयन्तीके अटल अनुरागको स्मरणकर दूर कर दिया ]॥ ३५॥

**पार्श्वमागमि निजं सहालिभिस्तेन पूर्वमथ सा तथैकया।**
**क्वापि तामपि नियुज्य मायिना स्वात्ममात्रसचिवाऽवशेपिता ॥ ३६॥**

पार्श्वमिति। मायिना कपटपटुना, चतुरेणेत्यर्थः। तेन नलेन, सा भैमी, पूर्वम् आदौ, आलिभिः वल्लीभिः सखीभिः सह, निजं पार्श्वं स्वसमीपम्, आगमि आगमिता, आनीतेत्यर्थः। गमेर्ण्यन्तात् कर्मणि लुङ् मित्त्वात् ह्रस्वत्वम्। अथ अन्यासां सखीनां कार्यव्यपदेशेन प्रस्थापनानन्तरम्, एकया एकमात्रया, तया आल्या सह, अवशेपिता अवशिष्टीकृता। अथ ताम् एकामपि आलिम्, क्वापि ताम्बूलानयनादिरूपे कस्मिन्नपि कर्मणि, नियुज्य सम्प्रेष्य, स्वात्ममात्रं केवलं स्वयमेव, सचिवः सहायः, सहचर इत्यर्थः। यस्याः सा तादृशी, चक्रे इति शेषः। विविक्तमकरोदित्यर्थः॥ ३६॥

( भयसे अपने समीप नहीं आती हुई दमयन्तीको पास बुलानेके लिए ) कपट करनेवाले नलने पहले सखियोंके साथ उस ( दमयन्ती ) को निकट बुलवाया, इसके अनन्तर ( व्याजान्तरसे अन्य सखियोंको भेजकर ) एक सखीके साथ उसे अपने पास किया और ( कुछ समय बाद पहलेसे थोड़ा अधिक विश्वास प्राप्त कर लेनेपर ) उस सखीको भी कहीं

१. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्यनेन दीर्घ इत्यवधेयम्। अत्र 'विभाषा चिण्णमुलोः इति दीर्घविकल्पात्पक्षे ह्रस्व इति वदन् 'प्रकाशः' कारस्तु भ्रान्तस्तेन नुम्विधानाद्दीर्घाविधानाच्च।

पर ( पान, माल्य आदि लानेके लिए ) नियुक्तकर उस दमयन्तीके साथ केवल स्वयं ही रह गये ॥ ३६ ॥

सन्निधावपि निजे निवेशितामालिभिः कुसुमशस्त्रशास्त्रवित् ।
आनयद् व्यवधिमानिव प्रियामङ्कपालिवलयेन सन्निधिम् ॥ ३७ ॥

सन्निधाविति । कुसुमशस्त्रशास्त्रवित् कामतन्त्रपारगः नलः, आलिभिः सहचरीभिः, निजे सन्निधौ स्वसमीपे, निवेशितां स्थापितामपि, प्रियां दमयन्तीम्, व्यवधिमान् इव असन्निहितः इव, अङ्कपालिः पृष्ठदेशस्पर्शपूर्वकालिङ्गनविशेषः, तद्रूपेण वलयेन वलयाकारवेष्टनेन, सन्निधिं स्वसमीपम्, आनयत् आनीतवान् । 'आदौ रतं वाह्यमेव प्रयोज्यं तत्रापि चालिङ्गनमेव पूर्वम्' 'तथा सामीप्यगां भीरुं नवोढां सन्निधापयेत् । विश्वासच्छद्मना गाढालिङ्गनात् त्याजयेद् भयम् ।' इति कामशास्त्रादिति भावः ॥ ३७ ॥

सखियोंद्वारा अपने ( नलके ) पासमें पहुंचायी गयी प्रिया ( दमयन्ती ) को स्वयं पृथक् बैठे हुए-से कामशास्त्रज्ञ नलने अङ्कपालीमें घेरने ( पीठके पीछेसे पकड़कर अपने क्रोड़में करने ) से समीपमें कर लिया । [ यद्यपि सखियोंने नलके पासमें दमयन्तीको पहुंचा दिया था, तथापि अपनेको प्रियासे दूरस्था-सा मानकर कामशास्त्रज्ञ नलने पीछेसे दमयन्तीको पकड़कर गोदमें या-अत्यन्त पासमें बैठा लिया ] ॥ ३७ ॥

प्रागचुम्बदलिके ह्रिया नतां तां क्रमाद्दरनतां कपोलयोः ।
तेन विश्वसितमानसां झटित्यानने स परिचुम्ब्य सिष्मिये ॥ ३८ ॥

प्रागिति । स नलः, ह्रिया लज्जया, नतां नम्रमुखीम्, तां भैमीम्, प्राक् पूर्वम्, अलिके ललाटपट्टके । 'ललाटमलिकं गोधिः' इत्यमरः । अचुम्बत् चुम्बितवान्, अथ क्रमात् क्रमशः, दरनताम् ईषदवनताम्, पूर्वापेक्षया किञ्चिदुन्नमितमुखीमित्यर्थः । कपोलयोः गण्डयोः, तामचुम्बदिति पूर्वेणान्वयः । तेन पूर्वोक्तरूपमृदुव्यवहारेणेत्यर्थः। विश्वसितमानसां विस्रब्धचित्ताम्, तामिति शेषः । झटिति द्राक्, आनने मुखे, परिचुम्ब्य चुम्बयित्वा, सिष्मिये स्मितवान्, अधरचुम्बनहर्षात् ईषत् जहासेत्यर्थः । अनुप्रवेशलाभात् इति भावः ॥ ३८ ॥

उस ( नल ) ने लज्जासे अतिशय नीचे मुख की हुई दमयन्तीको पहले ललाटमें, ( फिर कुछ विश्वास उत्पन्न हो जानेसे ) कुछ नम्र ( पूर्वापेक्षा कुछ ऊपर ) मुख की हुई उसके दोनों कपोलोंमें और उससे विश्वस्त चित्तवाली उसको झट मुखमें चुम्बन करके थोड़ा-सा मुस्कुरा दिया । [ 'अबतक जिस मुखचुम्बनके लिये मुझे लालायित रहनेपर भी तुम पास भी नहीं आती थी, उस मुखका चुम्बन अब मैंने कर लिया' इस आशयसे थोड़ा

१. 'वाह्यमिह' इति 'प्रकाश' कृत् ।

हँस दिया। अधिक हँसनेपर दमयन्तीको पुनः भयभीत होनेकी आशङ्कासे कामशास्त्रज्ञ नलने थोड़ा ही हँसा ] ॥ ३८ ॥

लज्जया प्रथममेत्य हूङ्कृतः साध्वसेन बलिनाऽथ तर्जितः ।
किञ्चिदुच्छ्वसित एव तद्धृदि न्यग्बभूव पुनरर्भकः स्मरः ॥ ३९ ॥

लज्जयेति । अर्भकः शिशुः, अप्रगल्भावस्थत्वात् तथा रूपणम् । स्मरः कामः, तस्याः दमयन्त्याः, हृदि चेतसि, किञ्चित् ईषत्, उच्छ्वसितः स्फुरित एव, पूर्वोक्तचुम्बनाद्युपलालनेन किञ्चिदुल्लसितः सन् एवेत्यर्थः । प्रथमम् आदौ, लज्जया ह्रिया, एत्य आगत्य, हूङ्कृतः हूङ्कारेण वारितः, अथ तदनन्तरम्, तथाऽप्युल्लसने बलिना ततोऽपि प्रबलेन, साध्वसेन त्रासेन, तर्जितः भर्त्सितः सन् , पुनः भूयः, न्यग्बभूव सङ्कुकोच, प्रशशामेत्यर्थः ॥ ३९ ॥

उस ( दमयन्ती ) के हृदयमें ( पूर्वोक्त ( १८।३७-३८ ) आलिङ्गन-चुम्बनादि-व्यापारसे ) थोड़ा बढ़ा हुआ ( अत एव ) बालक ( कुछ समय पहले उत्पन्न ) कामदेव आकर पहले लज्जासे डराया गया और बादमें अधिक भयसे तर्जित किया गया अतएव सङ्कुचित हो गया । [ नलके आलिङ्गन चुम्बनादि करनेपर आनन्दसे दमयन्तीके हृदयमें थोड़ा काम उत्पन्न हुआ, किन्तु पहले लज्जासे कुछ ( बहुत थोड़ा ) दबा, बादमें अधिक भय होनेसे अधिक दबकर सङ्कुचित हो गया । जिस प्रकार थोड़ी आयुवाला बालक माताके पास आता है तो वह पहले माताके हुङ्कारसे तदनन्तर अधिक तर्जित होनेपर भयसे सङ्कुचित हो जाता है, वही दशा थोड़े समय पहले दमयन्तीके हृदयमें उत्पन्न होने वालरूप कामदेवकी हुई । दमयन्तीने नलकृत आलिङ्गन-चुम्बनादिसे अपने हृदयमें उत्पन्न कामको लज्जा तथा अतिशय भयसे दबा दिया ] ॥ ३९ ॥

वल्लभस्य भुजयोः स्मरोत्सवे दित्सतोः प्रसभमङ्कपालिकाम् ।
एककश्चिरमरोधि बालया तल्पयन्त्रणनिरन्तरालया ॥ ४० ॥

वल्लभस्येति । स्मरोत्सवे सुरतारम्भे, प्रसभं बलात्, अङ्कपालिकाम् आलिङ्गनम् । 'सम्परीरम्भ आश्लेषः परिष्वङ्गः प्रगूहनम् । आलिङ्गनमपि क्रोडीकरणञ्चाङ्कपाल्यपि॥' इति यादवः । दित्सतोः दातुमिच्छतोः, आलिङ्गनप्रवृत्तयोरित्यर्थः । ददातेः सनन्ताल्लटः शत्रादेशः, 'सनि मीमा—' इत्यादिना इत्वेऽभ्यासलोपः । वल्लभस्य प्रियस्य, भुजयोः बाह्वोः, एककः एको भुजः, असहाये कन्-प्रत्ययः । तल्पयन्त्रणे शय्यानिरोधने, शय्याऽऽश्लेषणे इत्यर्थः । निरन्तरालया अव्यवधानया, दृढरूपेण निरन्तराश्लिष्टतल्पया इत्यर्थः । बालया तरुण्या भैम्या, चिरं दीर्घकालम्, अरोधि निरुद्धः, तल्पमाश्लिष्य प्रियस्य एकं करमरुगत् इत्यर्थः । भैम्याः पृष्ठदेशशय्ययोर्मध्ये अन्तरालाभावात् नलः एकं हस्तं तत्र प्रवेश्य दमयन्तीमालिङ्गितुं न समर्थ इति भावः ॥ ४० ॥

कामोत्सवमें बलात्कारसे अङ्कपालिका देने ( अँकवारमें लेकर आलिङ्गन करने ) के

इच्छुक प्रियके दोनों भुजाओंमेंसे एक भुजाको शय्यासे अपनी पीठको अत्यधिक दवायी हुई अबला दमयन्तीने बहुत देरतक रोका। [ शय्यापर लेटी हुई दमयन्तीका आलिङ्गन करनेके लिए नलने दोनों बाहुओंको ( एक नीचे दमयन्तीकी पीठकी ओर तथा दूसरा ऊपर करके ) फैलाया, किन्तु अवला वह दमयन्ती एक साथ दोनों बाहुओंको रोकनेमें असमर्थ होनेके कारण शय्यासे अपनी पीठको इतने जोरसे दबाकर सटा दिया कि नलका एक बाहु उसकी पीठके नीचे नहीं घुस सका, अत एव एक हाथसे वे नल उसका आलिङ्गन नहीं कर सके। अथवा—उक्त प्रकारसे तो उस अवला दमयन्तीने प्रियके एक हाथ रोका और दूसरे हाथको अपने दोनों हाथोंसे रोका, इस प्रकार उसने नलको आलिङ्गन करनेसे रोक दिया ] ॥ ४० ॥

हारसाधिमविलोकने मृषा कौतुकं किमपि नाटयन्नयम् ।
कण्ठमूलमदसीयमस्पृशत् पाणिनोपकुचधाविना धवः ॥ ४१ ॥

हारेति । धवः पतिः, अयं नलः, हारस्य मुक्तावल्याः, साधिम्नः अतिशयेन साधुतायाः, रमणीयताया इत्यर्थः । विलोकने दर्शने, परीक्षार्थमित्यर्थः । किमपि अनिर्दिष्टमित्यर्थः । मृषा मिथ्या, कौतुकं कुतूहलम् , नाटयन् प्रदर्शयन्नित्यर्थः । वस्तुतस्तु पीडनाभिप्रायेणैवेति भावः । उपकुचं कुचसमीपे, धावति द्रुतं गच्छतीति तद्धाविना स्तनसमीपगामिना, पाणिना करेण, अमुष्याः इदम् अदसीयं दमयन्तीसम्बन्धि । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः । कण्ठमूलं गलाधोभागम् , उरःस्थलमित्यर्थः । अस्पृशत् स्पृष्टवान् ॥ ४१ ॥

हारकी श्रेष्ठता ( पाठा०—सुन्दरता ) को देखनेमें झूठे ही कौतूहलका अभिनय करते हुए पति इस ( नल ) ने स्तनोंके पासमें दौड़ते हुए ( शीघ्र पहुंचे हुए ) हाथसे इस ( दमयन्ती ) के कण्ठमूल ( हृदयोपरिस्थ भाग ) को छू लिया ॥ ४१ ॥

यत् त्वयाऽस्मि सदसि स्रजाऽञ्चितस्तन्मयाऽपि भवदर्हणाऽर्हति ।
इत्युदीर्य निजहारमर्पयन्नस्पृशत् स तदुरोजकोरकौ ॥ ४२ ॥

यदिति । हे प्रिये ! यत् यस्मात् , त्वया भवत्या, सदसि स्वयंवरसभायाम् , स्रजा वरणमालया, अञ्चितः पूजितः, 'अञ्चेः पूजायाम्' इतीडागमः, 'नाञ्चेः पूजायाम्' इत्यनुनासिकलोपप्रतिषेधः । अस्मि भवामि, अहमिति शेषः । तत् तस्मात् , मयाऽपि भवत्याः तव, अर्हणा पूजा । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' । अर्हति युज्यते, इति एवम् , उदीर्य उक्त्वा, निजं स्वकम् , हारं कण्ठभूषाम् , अर्पयन् ददत् , गलदेशे सन्निधापयन्नित्यर्थः । सः नलः, तस्याः दमयन्त्याः, उरोजकोरकौ कुचकुड्मलौ, अस्पृशत् स्पृष्टवान् ॥ ४२ ॥

'स्वयंवर सभामें जो तुमने वरणमालासे मेरी पूजा की ( मुझे वरणमाला पहनाकर

---

१. '—धारिम—' इति पाठान्तरम् । २. 'कृता' इति पाठान्तरम् ।

सत्कार किया), उस कारण मुझे भी तेरी पूजा (अपना हार पहनाकर तेरा आदर) करना उचित है' ऐसा कहकर अपने हारको पहनाते हुए उस (नल) ने उस (दमयन्ती) के कोरकतुल्य (छोटे-छोटे) दोनों स्तनोंका स्पर्श किया ॥ ४२ ॥

**नीविसीम्नि निहितं स निद्रया सुभ्रुवो निशि निषिद्धसंविदः।**
**कम्पितं शयमपासयन्निजं दोलनैर्जनितबोधयाऽनया ॥ ४३ ॥**

नीवीति। सः नलः, निशि रात्रौ, निद्रया स्वापेन, निषिद्धसंविदः निवृत्तसंज्ञायाः, सुभ्रुवः सुन्दरभ्रूशालिन्याः प्रियायाः, नीविसीम्नि कटीवस्त्रग्रन्थिसमीपे, निहितं स्थापितम्, उन्मोचनाय इति भावः। अत एव कम्पितं सत्त्वोदयात् सकम्पम्, निजं स्वीयम्, शयं पाणिम्, दोलनैः पाणिकम्पनैः, कम्पनाद्धेतोः दमयन्त्याः गात्रे सहसा संलग्नत्वात् इति भावः। जनितबोधया प्रबुद्धया, अनया भैम्या, प्रयोज्यया। अपासयत् अपासारयत् ॥ ४३ ॥

रात्रिमें निद्रासे चेतनाशून्य सुन्दर भ्रूवाली (दमयन्ती) के नीवि (फुफुनी—नाभिके नीचेवाली वस्त्रग्रन्थि) पर (उसे खोलनेके लिए) रखे हुए (किन्तु सात्त्विक भावोदयजन्य) कम्पनसे युक्त अपने हाथको (पाठा०—हाथको आनन्द प्राप्त करते हुए) उस नलने हिलनेसे जगी हुई उस दमयन्तीसे हटा (पाठा०—छुड़ा) लिया ॥ ४३ ॥

**स प्रियोरुयुगकञ्चुकांशुके न्यस्य दृष्टिमथ सिष्मिये नृपः।**
**आववार तदथाम्बराञ्चलैः सा निरावृतिरिव त्रपावृता ॥ ४४ ॥**

स इति। सः नृपः नलः, प्रियायाः दमयन्त्याः, ऊरुयुगस्य सक्थिद्वयस्य, कञ्चुके चोलके, आवरके इत्यर्थः। अंशुके सूक्ष्मवस्त्रे, दृष्टिं नेत्रम्, न्यस्य निक्षिप्य, सिष्मिये स्मितवान्, सूक्ष्मवस्त्राभ्यन्तरात् ऊरुयुगसौन्दर्यं दृष्ट्वा आनन्दोदयादिति भावः। अथ दर्शनानन्तरम्, सा दमयन्ती, निरावृतिरिव आवरणरहितेव, साक्षाद्दृष्टोरुयुगा इवेत्यर्थः। अत एव त्रपावृता लज्जामग्ना सती, तदूरुयुगम्, अम्बराञ्चलैः वस्त्रप्रान्तैः, आववार आच्छादयामास। आवृतमपि अनावृतमितीव आवृणोदिति त्रपातिशयोक्तिः ॥ ४४ ॥

इस (नीविसे हाथ हटाने) के बाद उस (नल) ने प्रिया (दमयन्ती) के ऊरुद्वयको छिपानेवाले वस्त्रमें दृष्टि रखकर अर्थात् पहने हुए वस्त्रको देखकर (अत्यन्त महीन वस्त्र होनेसे दृश्यमान ऊरुद्वयको देखनेसे उत्पन्न आनन्दके कारण, अथवा—अत्यन्त महीन वस्त्र होनेसे मैं आच्छादित भी तुम्हारे ऊरुद्वयको देख सकता हूँ—इस भावसे) मुस्कुरा दिया। इसके बाद आवरणरहित-सी लज्जित उस (दमयन्ती) ने उस (ऊरुद्वय, या—ऊरुद्वयावरक वस्त्र) को वस्त्रके अञ्चलों (प्रान्त भागों) से आवृत कर लिया। [ उक्त आशयसे

१. '—मपास यन्नयम्' इति पाठान्तरम्।

नलके मुस्कुराने पर 'मैंने वस्त्र नहीं पहना है' मानो ऐसा समझती हुई अत एव लज्जित उस दमयन्तीने वस्त्रका कई तह करके उनसे उसे ढक लिया ] ॥ ४४ ॥

**बुद्धिमान् व्यधित तां क्रमादयं किञ्चिदित्थमपनीतसाध्वसाम् ।**
**किञ्च तन्मनसि चित्तजन्मना ह्रीरनामि धनुषा समं मनाक् ॥ ४५ ॥**

अथ शनैर्मौग्ध्यत्यागान्मध्यमावस्थां प्रापितेत्याह-बुद्धिमानिति । बुद्धिमान् उपायज्ञः, अयं नलः, तां प्रियाम्, क्रमात् क्रमशः, इत्थम् उक्तरीत्या, किञ्चित् ईषत्, अपनीतसाध्वसाम् अपसारितभयाम, व्यधित विहितवान्। किञ्च, चित्तजन्मना कामेनापि, तस्याः भैम्याः, मनसि चेतसि, ह्रीः लज्जा, धनुषा समं चापेन सह, मनाक् ईषत्, अनामि नामिता, एकत्र—अल्पीकृता, अन्यत्र—न्युब्जीकृतेत्यर्थः । 'ज्वलह्वल-' इति वार्त्तिकात् मित्वाभावपक्षे वृद्धिः । शनैर्लज्जानमनेन कामः स्वयमुत्थितः इति भावः । अत्र हि ह्रीनमन-धनुर्नमनयोः कार्यकारणयोः पौर्वापर्यविपर्ययेण सहोक्त्यलङ्कारः॥४५॥

( कामशास्त्रोक्त उपायोंसे कन्याको विश्वासयुक्त करनेमें चतुर ) नलने उस ( दमयन्ती ) को क्रमशः इस प्रकार कुछ निर्भय कर दिया तथा उसके मनमें कामदेवने भी ( वहीं पर स्थित उसकी ) लज्जाको अपने धनुषके साथ झुका दिया । [ क्रमशः कामवृद्धि होनेपर दमयन्तीकी लज्जा कुछ कम हो गयी ] ॥ ४५ ॥

**सिष्मिये हसति तेन न स्म सा प्रीणिताऽपि परिहासभाषणैः ।**
**स्वे हि दर्शयति ते परेण काऽनर्घ्यदन्तकुरुविन्दमालिके ॥ ४६ ॥**

सिष्मिये इति । सा भैमी, तेन नलेन, परिहासभाषणैः नर्मोक्तिभिः, प्रीणिता हर्षिताऽपि । प्रीञो ण्यन्तात् कर्मणि क्तः, 'धूञ्प्रीञोर्नुग् वक्तव्यः' । सिष्मिये स्मितवती, न तु हसति स्म न जहास, स्मितमात्रमकरोत् न तु हसितवतीति गाम्भीर्योक्तिः । हसितं लक्ष्यदशनं स्मितञ्च न तथा इति उभयोर्भेदः । हि तथाहि, का स्त्री, स्वे आत्मीये, ते अतिसुन्दरे इत्यर्थः । अनर्घ्याः अतिसुन्दरत्वात् बहुमूल्याः, दन्ताः दशना एव, कुरुविन्दाः पद्मरागाः, ताम्बूलरञ्जितत्वादिति भावः। 'कुरुविन्दस्तु मुस्तायां पद्मरागे' इति यादवः । तेषां मालिके मालाद्वयम्, दन्तपङ्क्तिद्वयमित्यर्थः । परेण अन्येन, दर्शयति ? दर्शनविषयीकरोति ? नैव दर्शयतीत्यर्थः । 'अणौ यः कर्त्ता' इति कर्तृसंज्ञानुवादेन कर्मत्वविधानात् संज्ञापूर्वकविधेरनित्यत्वात् परेण इत्यत्र दृशेर्बुद्ध्यर्थत्वात् 'गतिबुद्धि-' इत्यादिना प्राप्तकर्मत्वाभावः ॥ ४६ ॥

वह ( दमयन्ती ) उस ( नल ) के द्वारा परिहास वचनों ( प्रिय नर्मोक्तियों ) से प्रसन्न

---

१. अत्र म० म० शिवदत्तशर्माणः—'स्थितस्य गत्यन्वेषणमिदम् । वस्तुतस्तु 'स्वे ह्यदर्शयत' इति पाठसत्त्वेन 'अभिवादिदृशोरात्मनेपदे वा' इति विकल्पेन कर्मत्वाभावः । किञ्च संज्ञायां अनूद्यमानतायामेव 'संज्ञापूर्वको विधिरनित्यः' इत्यङ्गीकारे 'ओर्गुणः' इति धार्मिकग्राहकमानविरोधः' इत्याहुः ।

की गयी भी केवल मुस्कुरायी, हँसी नहीं, क्योंकि कौन (कुलीन स्त्री) अतिप्रसिद्ध (या—अतिसुन्दर), अपनी अमूल्य दन्तरूपी पद्मरागमणियोंकी माला दूसरेको दिखलाती है? [कोई भी कुलीन स्त्री हँसकर पान खानेसे रक्तवर्ण अत एव पद्मराग मणितुल्य दन्त-पङ्क्तियोंको दूसरे (पुरुष) से नहीं दिखलाती, अर्थात् पुरुषके सामने ऐसा नहीं हँसती कि सब दाँत दिखलायी पड़ें, अतएव दमयन्तीका वैसा करना भी उत्तम स्त्री होनेका सूचक है। लोकमें भी कोई व्यक्ति अपनी अमूल्य पद्मराग मणियोंकी माला दूसरेको नहीं दिखलाता है]॥

वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रयाऽङ्कितम्।
सोढकान्तपरिम्भगाढता सा त्वमानि सुमुखी सखीजनैः ॥४७॥

वीक्ष्येति। सखीजनैः सहचरीभिः, भीमतनयास्तनद्वयं भैम्याः कुचयुगलम्, मग्नानां नलोरसा दृढनिपीडनात् अन्तःप्रविष्टानाम्, हारमणीनां कण्ठभूषणस्थितरत्नानाम्, मुद्रया चिह्नेन, अङ्कितं चिह्नितम्, वीक्ष्य दृष्ट्वा, सुमुखी सुवदना, सा भैमी, सोढा क्षान्ता, सोढुं समर्था इत्यर्थः। कान्तस्य प्रियस्य, यः परिरम्भः आलिङ्गनम्, तस्य गाढता दाढर्यं यया सा तादृशी, इति अमानि अबोधि। गाढपरिरम्भं विना स्तनयोस्तादृशचिह्नासम्भवः इत्यनुमितमित्यर्थः॥ ४७॥

सखियोंने दमयन्तीके दोनों स्तनोंको गड़े हुए हारके मणियोंसे चिह्नित देखकर 'सुमुखी (प्रसन्न मुखमुद्रावाली) इस (दमयन्ती) ने प्रिय (नल) के गाढालिङ्गनको सहन कर लिया है' ऐसा अनुमान किया। ['सुमुखी' पदसे पतिकृत गाढालिङ्गनसे दमयन्तीका प्रसन्न होना ध्वनित होता है]॥ ४७॥

याचते स्म परिधापिकाः सखीः सा स्वनीविनिबिडक्रियां यथा[1]।
अन्वमिन्वत तथा[2] विहस्य ता वृत्तमत्र पतिपाणिचापलम् ॥ ४८॥

याचते इति। सा दमयन्ती, परिधापिकाः वस्त्रपरिधापनकारिकाः, सखीः सहचरीः, यथा यादृशभावेन, स्वस्या आत्मनः, नीवेः वस्त्रग्रन्थेः, निबिडक्रियां दृढतासम्पादनम्, याचते स्म प्रार्थयामास, तथा तेनैव क्रमेणेत्यर्थः। ताः सख्यः, विहस्य मध्यमस्मितं कृत्वा, अत्र नीविदेशे, पत्युः भर्त्तुः, पाणिचापलं करचाञ्चल्यम्, नीविग्रन्थेराकर्षणमित्यर्थः। वृत्तं भूतम्, अन्वमिन्वत इत्यनुमितवत्यः, अन्यथा एतत्प्रार्थनाऽनुपपत्तेरिति भावः। मिनोतेर्लङि तङ्॥ ४८॥

उस (दमयन्ती) ने वस्त्र पहनानेवाली सखियोंसे जो (पाठा०—जब) अपनी नीविकी गांठको कसकर बांधनेके लिए कहा, तो (पाठा०—तब) उन (सखियों) ने हँसकर 'इस नीवि-देशमें पतिका हाथ चञ्चल हुआ है' अर्थात् 'इसको नलने हठपूर्वक खोलनेके लिए हाथ बढ़ाया है' ऐसा अनुमान किया॥ ४८॥

---

१. 'यदा' इति पाठान्तरम्। २. 'तदा' इति पाठान्तरम्।

कुर्वती निचुलितं ह्रिया कियत् सौहृदात् विवृतसौरभं कियत् ।
कुड्मलोन्मिषितसूनसेविनीं पद्मिनीं जयति सा स्म पद्मिनी ॥ ४९ ॥

कुर्वतीति । पद्मिनी पद्मिनीस्त्रीजातीया, सा भैमी, कियत् किञ्चित् रात्रिवृत्तम्, ह्रिया लज्जया, निचुलितं सखी समीपेऽपि निगूहितम्, कियत् किञ्चिच्च, सुहृदो भावः सौहृदं तस्मात् सौहृदात् सौहार्दात्, प्रणयाधिक्यादित्यर्थः । युवादित्वादण् प्रत्ययः । हृदयस्य 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावे बाहुलकान्नोभयपद-वृद्धिः । विवृतं प्रकटितम्, सौरभं मनोज्ञत्वं सौगन्ध्यञ्च यस्य तत् तादृशम्, कुर्वती विदधती सती, कुड्मलानि मुकुलानि, उन्मिषितसूनानि प्रस्फुटितकुसुमानि च, सेवते भजते इति तादृशीम्, पद्मिनीं कमलिनीम्, जयति स्म विजितवती, कियत्कलि-काढ्या कियद्विकसितकमलाढ्या च कमलिनीव सा बभौ इत्यर्थः । रहस्यगोपने कलि-कातुल्यं रहस्यप्रकटने च विकशितपद्मतुल्यमिति भावः ॥ ४९ ॥

( कामशास्त्रोक्त ) पद्मिनी-जातीया उस ( दमयन्ती ) ने लज्जासे ( रात्रिमें पतिके साथ किये गये रति-विषयक ) कुछ (सम्भोगादि) को अप्रकाश करती हुई तथा सौहार्द (सखिभाव) से कुछ ( आलिङ्गनादि कर्म ) को प्रकटित कामशास्त्रोक्त कुशलतावाला ( पक्षा०—सुगन्ध वाला ) करती हुई अर्थात् आलिङ्गनादि कुछ सम्भोग-सुखको सखी होनेके कारण उन सखियोंसे बतलाती हुई, कोरक तथा स्वल्पविकसित पुष्पवाली कमलिनीको जीत लिया । [ जिस प्रकार कमलिनी कोरकावस्थामें अपने गन्धको प्रकटित नहीं करती तथा कुछ विकसित होनेपर उसे प्रकटित करती है, उसी प्रकार दमयन्ती भी लज्जावश पतिके साथमें हुए रति कालिक कुछ ( चुम्बनादि ) भावको छिपाती थी और सखी होनेके कारण प्रेमवश कुछ ( आलिङ्गनादि ) कर्मको उनसे प्रकट करती ( कहती ) थी, इस प्रकार 'पद्मिनी' जातीया दमयन्ती पद्मिनीके तुल्य हुई ॥ ४९ ॥

नाविलोक्य नलमासितुं स्मरो ह्रीर्न वीक्षितुं[1] मदान्मृगीदृशः ।
तद्दृशः पतिदिशाऽचलन्नथ व्रीडिताः समकुचन्मुहुः पथः ॥५०॥

नेति । स्मरः कामः, मृगीदृशः हरिणलोचनायाः भैम्याः सम्बन्धे, नलं नैषधम्, अविलोक्य अदृष्ट्वा, आसितुं स्थातुम्, न अदात् न दत्तवान्, ह्रीः लज्जा पुनः, वीक्षितुं द्रष्टुम्, न अदात्, अत एव तस्याः दमयन्त्याः, दृशः दृष्टयः, पतिदिशा स्वामिनं प्रतीत्यर्थः । मुहुः पुनः पुनः, अचलन् अगच्छन् । अथ अनन्तरमेव, व्रीडिताः लज्जिता सत्यः, पथः तन्मार्गात्, समकुचन् सङ्कुचिताः अभवन् । अतीव कौतुकमिदमित्याशयः ॥ ५० ॥

---

१. 'वीक्षितुमदत्त सुभ्रुवः' इति पाठान्तरम् । अत्र 'प्रकाश' कारः—'वीक्षयते स्म' इति पाठः सुयोजः । यद् यस्माद्विलोकननिमित्त तत्र तत्र वस्तुनि नेत्रे ददत्या स वीक्ष्यते स्मैव, तस्माल्लक्ष्यतां परोक्षतां च नानायीत्ति वा, इत्याह ।

जिस कारण कामदेवने नलको विना देखे दमयन्तीको ठहरनेका स्थान नहीं दिया (कामप्रेरित दमयन्ती नलको विना देखे नहीं ठहर सकती थी, अत एव सदा नलको देखना चाहती थी), किन्तु लज्जाने उस (नल) को देखने का स्थान नहीं दिया (किन्तु लज्जा-वश वह दमयन्ती नलको नहीं देख पाती थी); उस कारण उस (दमयन्ती) की दृष्टियां नलकी ओर बढ़ीं, (नलको दमयन्तीने वार-वार देखनेके लिए उधर नेत्र फैलाये), इसके वाद लज्जित वे (दमयन्तीकी दृष्टियां) फिर मार्गसे ही सङ्कुचित हो गयीं (कर लौट आयीं। अर्थात् नलका सामना होते ही उनको विना देखे ही दमयन्तीने लज्जासे अपने नेत्रोंको उधरसे फेर लिया)। [इससे काम तथा लज्जाका समान वल होनेसे भावसन्धिमें दमयन्तीका रहना सूचित होता है] ॥ ५० ॥

**नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि।**
**वीक्ष्यते स खलु यद्विलोकने तत्र तत्र नयने ददानया ॥ ५१ ॥**

**नेति। अनया भैम्या, पतिः नलः, नेत्रयोः नयनयोः, लक्ष्यतां विषयतामपि, न अनायि न नीतः, लज्जावशादिति भावः। तथा परोक्षताम् अविषयतामपि, न अनायि इति पूर्वेणान्वयः। अनुरागवशादिति भावः। ननु लक्ष्यताऽलक्ष्यतयोरेकतराकरणे प्रकारान्तराभावात् कथमेषोक्तिः सङ्गच्छते? इत्याह-यत् यस्मात्, विलोकने दर्शने निमित्ते, दर्शनार्थमित्यर्थः। तत्र तत्र तेषु तेषु विषयेषु, आदर्शादौ इति भावः। नयने ददानया दत्तदृष्ट्या तया, स नलः, आदर्शादौ प्रतिविम्बित इति भावः। वीक्ष्यते स्म अवलोक्यते स्म खलु। अवर्जनीयतया वीक्षितः एव प्राय इति भावः ॥ ५१ ॥**

इस (दमयन्ती) ने पति (नल) को नेत्रोंका लक्ष्य नहीं किया अर्थात् नलको नहीं देखा और उनको परोक्ष भी नहीं किया अर्थात् अप्रत्यक्ष भी नहीं किया—देखा भी; क्योंकि जिस-जिस (दर्पण, मणिस्तम्भादि रूप) दर्शन-निमित्तोंमें वह (नल) दृष्टिगोचर होते थे, उस-उस (दर्पण, मणिस्तम्भादिरूप दर्शन-निमित्तक पदार्थों) को यह (दमयन्ती) देखती थी। [लज्जावश यद्यपि दमयन्तीने नलको सामनेसे नहीं देखा, किन्तु दर्पण तथा मणिस्तम्भोंमें प्रतिविम्बित नलको देखा ही। इस कारण उसका नलको प्रत्यक्ष तथा परोक्ष—दोनों करना असङ्गत नहीं होता] ॥ ५१ ॥

**वासरे विरहनिःसहा निशां कान्तयोगसमयं[1] समैहत।**
**सा ह्रिया निशि पुनर्दिनोदयं वाञ्छति स्म पतिकेलिलज्जिता ॥५२॥**

**वासरे इति। सा भैमी, वासरे दिवसे, विरहस्य विच्छेदस्य, निःसहा सहनासमर्था सती। पचाद्यच्। कान्तयोगसमयं प्रियसमागमकालम्, निशां रात्रिम्, समहत ऐच्छत्, निशि पुनः रात्रौ तु, पत्युः भर्तुः, केलिषु अनङ्गक्रीडासु, लज्जिता**

१. 'कान्तसङ्गसमयम्' इति पाठान्तरम्।

प्राप्तलज्जा सती, ह्रिया सहजलज्जया, दिनोदयं दिवसप्रादुर्भावम् , वाञ्छति स्म अभिललाष । विचित्रा हि नवोढानां चित्तवृत्तिरिति भावः ॥ ५२ ॥

वह ( दमयन्ती ) दिनमें ( नलके ) विरहको सहनेमें असमर्थ होकर पतिके संयोगकाल रात्रिको चाहती थी और रात्रिमें पति ( नल ) की कामकेलिसे लज्जित होती हुई लज्जासे दिनके प्रादुर्भावको चाहती थी ॥ ५२ ॥

तत् करोमि परमभ्युपैषि यन्मा ह्रियं व्रज भियं परित्यज ।
आलिवर्ग इव तेऽहमित्यमूं शश्वदाश्वसनमूचिवान् नलः ॥ ५३ ॥

तदिति । हे प्रिये ! यत् चुम्बनादिषु यत् किञ्चिन्मात्रम् , अभ्युपैषि स्वीकरोषि, अनुमोदसे इत्यर्थः । त्वमिति शेषः । परं केवलम् , तत् तन्मात्रमेव, करोमि सम्पादयामि, अहमिति शेषः । न पुनस्तवानभिप्रेतं किञ्चिदपि करोमीति भावः । अत एव ह्रियं लज्जाम् , मा न, व्रज गच्छ, भियं त्रासञ्च, परित्यज दूरीकुरु, अहं ते तव, आलिवर्गः सखीजनः इव, विश्रम्भभाजनमिति भावः । नलः नैषधः, अमूं प्रियाम् , इति एवम् , शश्वत् मुहुर्मुहुः । 'मुहुः पुनः पुनः शश्वत्' इत्यमरः । आश्वसनं सान्त्वनावचनम् , उचिवान् उवाच ॥ ५३ ॥

'( हे प्रिये दमयन्ति ! ) मैं केवल ( आलिङ्गन, चुम्बन आदिमेंसे ) वही करूँगा, जिसे तुम स्वीकार करोगी, लज्जा मत करो, ( पुरुषके शरीरस्पर्शसे न मालूम क्या होगा ?, या— ये मेरी इच्छाके विरुद्ध भी कुछ व्यापार करेंगे इत्यादि शङ्कासे उत्पन्न होनेवाले ) भयको छोड़ो, मैं भी तुम्हारी सखियोंके समान ही हूँ । (पाठा०—इस (आलिङ्गन, चुम्बनादि) के विषयमें मैं तुम्हारी सखी ही हूँ;—इस कारण जैसे सखीके आलिङ्गन-चुम्बनादि करनेपर तुमको लज्जा या भय नहीं होता, उसी प्रकार सखीरूप मुझसे भी लज्जा या भय तुम्हें नहीं करना चाहिये ।' इस प्रकार आश्वासनयुक्त वचनको नल दमयन्तीसे बराबर कहते थे) ॥५३॥

येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरुद्धशक्तिना ।
सिद्धिमद्भिरुदतेजि तैः पुनः स प्रियप्रियवचोऽभिमन्त्रणैः ॥ ५४ ॥

येनेति । येन तन्मदनवह्निना तस्याः दमयन्त्याः, कामाग्निना, ह्रीः लज्जा एव, महौषधिः अव्यर्थभेषजम्, तया निरुद्धशक्तिना प्रतिबद्धवीर्येण सता, स्थितं तस्थे । भावे क्तः । सः मदनवह्निः, सिद्धिमद्भिः साफल्यजनकशक्तियुक्तैः, तैः पूर्वोक्तैः, प्रियस्य पत्युः, प्रियवचोभिः एव सप्रेमभाषणैरेव, अभिमन्त्रणैः मन्त्रप्रयोगैः, पुनः भूयः, उदतेजि उत्तेजितः । तिज निशाने इति धातोर्ण्यन्तात् कर्मणि लुङ् । औषधप्रतिबद्धोऽग्निः प्रतिमन्त्रेण पुनरुद्दीपितो भवतीति लोके दृश्यते । रूपकालङ्कारः ॥ ५४ ॥

लज्जारूप महौषधिसे निरुद्ध शक्तिवाली जो दमयन्तीकी कामाग्नि दबी थी, उसे सिद्धिप्राप्त नलके प्रियवचनरूप मन्त्रके प्रयोगने फिर उत्तेजित कर दिया । [ जिसप्रकार

१. 'इह' इति पाठान्तरम् ।

किसी ओषधिके संसर्गसे अग्निका तेज मन्द पड़ जाता है, किन्तु सिद्ध किये हुए मन्त्रोंके प्रयोग करनेपर वह पुनः उद्दीप्त होकर जलने लगती है; उसी प्रकार लज्जावश मन्द पड़ी हुई दमयन्तीकी कामाग्निको नलने उक्त प्रियवचनोंसे दूर कर दिया। यहाँ कामदेवको अग्नि, लज्जाको महौषधि तथा प्रियवचनोंको सिद्ध मन्त्र समझना चाहिये ] ॥ ५४ ॥

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ दृढम् ।
पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थितमिवालिलिङ्ग तत् ॥ ५५ ॥

यदिति । सा भैमी, दयितेन प्रियेण, अर्पितम् उरसि स्थापितम्, करं पाणिम्, विधूय अपसार्य, दोर्द्वयेन निजभुजयुगेन, कुचौ स्तनौ, दृढम् अशिथिलं यथा तथा, यत् पिदधे आच्छादयामास, तत् तेन कुचपिधानेन इत्यर्थः । एवमवगम्यते यदिति शेषः । ह्रिया लज्जया, पार्श्वगं बहिःसमीपस्थम्, प्रियं नलम्, अपास्य निरस्य, हृदि हृदयमध्ये, स्थितं वर्त्तमानम्, तं प्रियम्, आलिलिङ्ग इव आलिङ्गितवतीव, इत्युत्प्रेक्षा। अन्तरालस्थितस्य आलिङ्गने अन्यैर्दर्शनसम्भावनाविरहात् लज्जाऽभावेन हृदयाभ्यन्तरस्थं नलं दृढरूपेण आलिङ्गितवतीवेति भावः ॥ ५५ ॥

जिस कारण उस ( दमयन्ती ) ने पति ( नल ) के द्वारा ( वक्षःस्थलपर ) रखे हुए हाथको हटाकर ( अपने ) दोनों हाथोंसे दोनों स्तनोंको अच्छी तरह ढक लिया, उस कारण पार्श्ववर्ती ( बहिःस्थित ) प्रियको ( 'बहिःस्थित प्रियको आलिङ्गन करनेपर दूसरा कोई देख लेगा' इस भावनावश उत्पन्न ) लज्जासे दूरकर मानो हृदयमें स्थित प्रिय ( नल ) को आलिङ्गन कर लिया। [ आलिङ्गनादिकी प्रार्थना करनेपर स्त्रियोंका निषेध करना कामोद्दीपन होता है । अथ च—स्तनमर्दनार्थ तत्पर नलका काम दमयन्तीके द्वारा स्तनोंको छिपानेपर भी दमयन्तीका आलिङ्गन करनेके समान बढ़ गया ] ॥ ५५ ॥

अन्यदस्मि[1] भवतीं न याचिता वारमेकमधरं धयामि ते ।
इत्यसिस्वददुपांशु काकुवाक् सोपमर्दहठवृत्तिरेव[2] तम् ॥ ५६ ॥

अन्यदिति । हे प्रिये ! भवतीं त्वाम्, अन्यत् अपरं किमपि, याचिता अर्थयिता । तृन्, दुहादित्वात् द्विकर्मता । न अस्मि न भवामि, किन्तु वारमेकम् एकवारमात्रम्, ते तव, अधरं दन्तच्छदम्, धयामि पिबामि । धेट् पाने इत्यस्य भविष्यत्सामीप्ये लट् । इति इत्थम्, उपांशु रहसि, काकुः अनुनयेन विकृतस्वरा, वाक् वचनं यस्य तादृशः, नलः इति शेषः । उपमर्दे कुचपीडने, हठेन अनुमतिमनपेक्ष्यैव बलात्कारेण, वृत्तिः प्रवृत्तिः, तया सह इति सः तादृशः सन् एव, तम् अधरम्, असिस्वदत् स्वादितवान्, चुचुम्बेत्यर्थः । स्वदेर्णौ चङ्युपधाया ह्रस्वः ॥ ५६ ॥

'और कुछ मैं तुमसे नहीं याचना करूँगा, ( केवल ) एक बार तुम्हारा अधरपान करता हूँ' इस प्रकार एकान्तमें ( या—प्रार्थनाकी दीनतासे ) काकु ( दीनवचन ) बोलनेवाले नल

१. 'अन्यदास्मि' इति पाठान्तरम् । २. 'सोऽयमर्द्दहठ-' इति पाठान्तरम् ।

गाढ़ालिङ्गनमें हठवृत्ति हो ( बलात् अर्थात् दमयन्तीकी अनुमतिके विना ही आलिङ्गन कर ) उस ( अधर ) का स्वाद ले लिया अर्थात् अधरचुम्बन कर लिया। [ अथवा—दमयन्तीके द्वारा केवल एक बार अधरपान करनेकी अनुमति प्राप्तकर नलने एक बारसे अधिक अधरपान तथा आलिङ्गन आदि व्यापारको भी बलात्कारसे ( विना अनुमतिके ) कर लिया। अथवा—एक बार अधरपान करनेके लिए दमयन्तीसे अनुमति पाकर पहले आलिङ्गन, नखक्षत आदिको हठपूर्वक करके अन्तमें अधरपान कर लिया। 'अन्यदा' पाठा०—'फिर दूसरे समयमें अधरपानकी याचना भी नहीं करूंगा', यह अर्थ करना चाहिये। 'सोऽयमर्द्ध—' पाठा०—वे नल कुछ हठयुक्त आलिङ्गनादि व्यापार किये—ऐसा अर्थ करना चाहिये ] ॥ ५६ ॥

( पीततावकमुखासवोऽधुना भृत्य एष निजकृत्यमर्हति ।
तत्करोमि भवदूरुमित्यसौ तत्र सन्न्यधित पाणिपल्लवम् ॥ १ ॥[1])

पीतेति। असौ नल इत्युक्तिव्याजेन तत्रोरौ पाणिपल्लवं मृदुसुखस्पर्शतया पल्लवतुल्यं पाणिं सन्न्यधित स्प्रष्टुं सन्निवेशितवान्। इति किम्?—हे भैमि!, एष भृत्यो मल्लक्षणो दासः; पीतस्तावकमुखमेवासवो मद्यं येन, अथ च—पीतस्त्वदीय-मुखस्य सुरागण्डूषो येन, एवम्भूतः सन्नधुना निजकृत्यं चरणसंवाहनादिरूपं भृत्य-सम्बन्धिकार्यं कर्तुमर्हत्युचितो भवति। तत्तस्माद्गृहारामपुष्पावचयादिना खिन्नं भवदूरु त्वदीयमूरुं करोमि संवाहयामि। अथ च—सामर्थ्यादूर्ध्वं करोमीति। अनेकार्थ-त्वात्करोतिः संवाहनार्थः। अन्योऽपि भृत्यो भुक्तमुखोच्छिष्टश्चरणसंवाहनं करोति ॥१॥

इस समय तुम्हारे मुखरूपी ( पक्षा०—मुखोच्छिष्ट अर्थात् पीनेसे बचे हुए ) मद्यका पान किया हुआ यह (मल्लक्षण अर्थात् नलरूप) दास अपना कार्य ( स्वामिनीरूपिणी तुम्हारे चरणोंको दबाना ) करनेके योग्य है, ( अथ च—सामर्थ्य होनेसे इससे अधिक कार्य करनेके योग्य है ), यह कहकर इस ( नल ) ने वहांपर (दमयन्तीके ऊरुद्वयपर सुख-स्पर्श होनेसे) पल्लवोपम हाथको रख दिया। [ लोकमें भी कोई दास मालिकके उच्छिष्टका भोजन करके उसके पैरको दबाकर उसे पीड़ा-रहित करता है ] ॥ १ ॥

चुम्बनादिषु बभूव नाम किं ? तद्वृथा भयमिहापि मा कृथाः ।
आलपन्निति तदीयमादिमं स व्यधत्त रसनावलिव्ययम् ॥ ५७ ॥

चुम्बनेति। हे प्रिये! चुम्बनादिषु अधरपानादिषु कृतेषु, किं नाम तव किमनि-ष्टमित्यर्थः। नाम इति प्रश्ने, बभूव? सञ्जातम्? न किञ्चिदपीत्यर्थः। तत् तस्मात्, इह करिष्यमाणेऽस्मिन् सुरतेऽपि, वृथा मिथ्या, भयं शङ्काम्, मा कृथाः न कुरु, इति

१. अयं श्लोकः 'प्रकाश'व्याख्यासहित एवात्र मया स्थापितः।

२. 'इत्युदीर्य रसनावलिव्ययं निर्ममे मृगदृशोऽयमादिमम्' इति 'प्रकाश' कृता व्याख्यातः पाठः।

एवम्, आलपन् उदीरयन्नेव, स नलः, तदीयं तस्याः प्रियायाः इदं दमयन्तीसम्बन्धिनम्, आदिमम् आद्यम्। 'अग्रादिपश्चाड्डिमच्' इति वार्त्तिकवचनात् डिमच्-प्रत्ययः। रसनावलिव्ययं काञ्चीदाममोचनम्, व्यधत्त चकार। रन्तुमिति भावः ॥ ५७ ॥

'( हे प्रिये दमयन्ती ! ) चुम्बन आदि ( आलिङ्गन, स्तनमर्दन आदि ) में क्या (तुम्हारा कौन-सा अनिष्ट ) हुआ ? अर्थात् कुछ नहीं, अनिष्ट नहीं हुआ, इस कारण इस ( किये जानेवाले सुरत, या—करधनी खोलने, या ऊरुसंवाहन ) में व्यर्थ भयको मत करो' ऐसा कहकर इस नलने ( लज्जादिके कारण अतिशय चपल ) मृगनेत्रके तुल्य नेत्रवाली ( दमयन्तीकी ) करधनीको पहली वार ( सर्वप्रथम ) खोला ॥ ५७ ॥

अस्तिवाम्यभरमस्तिकौतुकं साऽस्तिघर्मजलमस्तिवेपथु।
अस्तिभीति रतमस्तिवाञ्छितं प्रापदस्तिसुखमस्तिपीडनम् ॥ ५८ ॥

अस्तीति। सा भैमी, अस्ति विद्यमानः, वाम्यस्य सर्वेष्वेव व्यापारेषु प्रतिकूलतायाः, भरः आतिशय्यं यस्मिन् तत् तादृशम्, 'अस्ति' इति विभक्तिप्रतिरूपकं विद्यमानार्थकमव्ययम्, 'अस्तिक्षीराक्षीरादयश्च'[1] इति वचनात् बहुव्रीहिः। एवमुत्तरत्रापि द्रष्टव्यम्। अस्ति विद्यमानं, कौतुकम् औत्सुक्यं यस्मिन् तत् तादृशम्, अस्ति घर्मजलं स्वेदवारि, श्रमजनितमिति भावः। यस्मिन् तत् तादृशम्, अस्ति वेपथुः कम्पः, शब्दोऽयं सात्त्विकमात्रोपलक्षणम्, यस्मिन् तत् तादृशम्, अस्ति भीतिः भयं यस्मिन् तत् तादृशम्, अस्ति वाञ्छितम् ईप्सितं यस्मिन् तत् तादृशम्, अस्ति सुखम् आनन्दानुभवो यस्मिन् तत् तादृशम्, अस्ति पीडनं नखदन्तक्षतादिव्यथा यस्मिन् तत् तादृशम्, रतम् एवम्भूतं सुरतसम्भोगम्, प्रापत् अलम्भिष्ट। नलादिति शेषः ॥ ५८ ॥

उस ( दमयन्ती ) ने ( पहले ) अतिशय प्रतिकूलतायुक्त ( अनन्तर सुरतारम्भकालमे पूर्वानुभूत नहीं होनेसे ) कौतूहलयुक्त ( तदनन्तर सात्त्विक भाव उत्पन्न होनेसे परिश्रम-जन्य ) स्वेदयुक्त तथा कम्पयुक्त ( तदनन्तर सुरतके आरम्भ हो जानेपर पूर्वजात भय दूर होनेपर भी आगे क्या होगा ? एवंभूत ) भययुक्त ( सुखकारण होनेसे ) अभिलाषायुक्त, ( समरस सुरतके होनेसे ) सुखयुक्त और ( उससे भी अतिशय गाढालिङ्गनादि होनेसे ) पीडायुक्त सम्भोगको प्राप्त किया। ( दमयन्तीने सर्वप्रथम उक्तरूप मैथुन किया ) ॥ ५८ ॥

ह्रीस्तवेयमुचितैव यन्नवस्तावके मनसि मत्समागमः।
तत्तु निस्त्रपमजस्रसङ्गमात् व्रीडमावहति मामकं मनः ॥ ५९ ॥

ह्रीरिति। हे प्रिये ! यत् यस्मात्, तावके त्वदीये, मनसि चेतसि, मत्समागमः मम सङ्गतिः, नवः साम्प्रतिकः, इति सोल्लुण्ठोक्तिः; तत् तस्मात्, तव ते, इयम्

1. 'अस्तिक्षीरादयश्च' इत्येवोचितम्। सिद्धान्तकौमुद्यान्तु 'अनेकमन्यपदार्थे' इति सूत्रस्योदाहरणे 'अस्ति' इति विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा 'गौः' इत्युक्तं भट्टोजिदीक्षितेन।

एषा, ह्री; लज्जा, उचिता अनुरूपा एव । तु किन्तु, अजस्रसङ्गमात् एतावन्तं कालं सदैव मनसा नित्यसमागमात् हेतोः, निस्त्रपं निर्लज्जम् , मामकं मदीयम् , मनोऽपि व्रीडं लज्जाम् , आवहति प्राप्नोति । त्वया सह बहिरभिनवसमागमादिति भावः॥५९॥

'( हे प्रिये ! ) जिस कारण तुम्हारे मनमें मेरे साथ यह नया ( पहला ) समागम है, अत एव तुम्हें ( अथवा—जिस कारण मेरे साथ यह नया समागम है, अत एव तुम्हारे मनमें ) यह लज्जा होना उचित ही है । किन्तु ( विवाहसे पहले भी स्वप्नादिमें ) निरन्तर सङ्गम होनेसे निर्लज्ज मेरा मन भी ( अथवा—''''''मन ) जो लज्जित होता है, यह उचित नहीं है, क्योंकि तुम्हारे साथ यह बाह्य समागम ही पहला है, आभ्यन्तरिक तुम्हारा समागम तो सदा स्वप्नादिमें होता ही था )' ॥ ५९ ॥

इत्युपालभत सम्भुजिक्रियारम्भविघ्नघनलज्जितैर्जिताम् ।
तां तथा स चतुरो न सा यथा त्रपुमेव तमनु त्रपामयात् ॥ ६० ॥

इतीति । सम्भुजिक्रियारम्भस्य सम्भोगव्यापारोपक्रमस्य, विघ्नैः प्रतिबन्धकीभूतैः, घनलज्जितैः प्रगाढलज्जाभिः, जिताम् अभिभूताम् , तां प्रियाम् , चतुरः परिहासनिपुणः, स नलः, तथा तादृशरूपेण, उपालभत अभ्ययुङ्क्त, यथा येन कृत्वा, सा प्रिया, तम् अनु नलं प्रति, त्रपुमेव लज्जितुमेव । ऊदित्वात् विकल्पादिडभावः । त्रपां लज्जाम् , अयात् अगच्छत् , प्राप्तवतीत्यर्थः । पुनरपि उपालम्भजनितलज्जाभयात् त्रपां जहौ इति भावः ॥ ६० ॥

इस प्रकार चतुर नलने सम्भोग कार्यके आरम्भमें प्रतिबन्धक अतिशय लज्जा ( या—अतिशय लज्जाजन्य शरीरादि सङ्कोच ) से दबी हुई उस ( प्रिया दमयन्ती ) को वैसा उपालम्भ दिया, जिससे उस ( दमयन्ती ) ने उस ( नल ) के प्रति लज्जा करनेसे ही लज्जित हुई अर्थात् लज्जाको छोड़ दिया । [ नलोक्त उक्त ( १८।५९ ) उपालम्भको सुनकर दमयन्तीने सोचा कि मेरे लज्जित होनेसे इनके मनमें अन्यथा भाव उत्पन्न होते हैं, अत एव वह लज्जा छोड़कर सम्भोग करने लगी ] ॥ ६० ॥

( बाहुवक्त्रजघनस्तनाङ्घ्रितद्बन्धगन्धरतसङ्गतानतीः ।
इच्छुरुत्सुकजने दिने स्मिते वीक्षितेति समकेति तेन सा ॥ १[1] ॥ )

बाह्विति । तेन दीक्षिता सा भैमी इति पूर्वोक्तप्रकारेण समकेति सङ्केतिता । इति किम् ?—हे भैमि ! उत्सुकाः स्वस्वकार्यसाधनोत्साहवन्तो जना यत्र रात्रिवृत्ताकर्णनाद्यर्थमुत्सुकः सखीजनो यत्रैवंविधो वा दिने दिवसेऽपि ते सम्बन्धिनीः बाहू च वक्त्रञ्च जघनञ्च स्तनौ चाङ्घ्री च तस्य बाह्वादेः कामशास्त्रप्रसिद्धा ये बन्धा नागपाशादीनि करणानि तेषां गन्धो लेशो विद्यते यत्र तादृशं रतं तेन सङ्गता मिलिताश्च ता आनतयश्च नितरां नम्रत्वानि कौशलातिशयनिर्मितानवयवनम्रीभावान् ।

१. श्लोकोऽयं मया 'प्रकाश' व्याख्यया सहैवात्र स्थापितः ।

सङ्गता इति पृथग्वा । नतीरिच्छुरभिलाषुकोऽस्मीति । स्मित इति भैमीसम्बोधनं वा रात्रिकृतवन्धरतप्रत्यभिज्ञानं यथा भवति वीक्षणमात्रेणेङ्गितं कृत्वाऽनुरागातिशयाद्दिनेऽपि स्वीयं तादृशरताभिलाषं तां प्रति ज्ञापितवानिति भावः । यद्वा—वाह्वादेस्ताः प्रसिद्धाः क्रमेण वन्धश्च, गन्धश्च, रतञ्च, सङ्गतञ्च, आनतिश्च, ताः । वाहोर्नागपाशादिवन्धः, वक्त्रस्य गन्धः पद्मिनीत्वात्सौरभम्, जघनस्य रतम्, स्तनयोः सङ्गतं श्लेषः, चरणयोः पतनमानतिश्चेत्यर्थः । स्वसम्वन्धिनीस्ताः स्वस्वव्यापारकरणमात्रनिरता दुश्चित्ता जना यत्रैवम्भूते दिनेपीच्छुरस्मीति वीक्षिता साऽनेन स्वाशयं ज्ञापितेति भावः । यद्वा—त्वां (यदैव) पश्यामि, तदैव ममैवं वाञ्छोदेति त्वद्दर्शनमेव सम्भोगसमय इति च ज्ञापितेति भावः । 'उत्सुकसखीजनेऽस्मिते व्रीडिते'ति पाठे—रात्रिवृत्तप्रश्नवाञ्छागोपनार्थं तस्माल्लज्जा मा भूदित्यस्मिते स्मितरहित एवंविधे ज्ञातुमेवोत्सुके सखीजने सखीजनसन्निधौ पूर्वोक्तप्रकारेण सा तेन सङ्केतिता शब्दिता । यद्वात्रावाचरितं वाहुवन्धादि तदिदानीमिच्छुरस्मीति रात्रिवृत्तज्ञापनार्थं सखीसन्निधावेवमुवाचेत्यर्थः । अत एव सा व्रीडिता । उत्सुके सखीजने स्मिते प्रारब्धहास्ये सति व्रीडितेति वा । हे भैमि ! ते वाह्वादिवन्धादीन् दिने वीक्षिता द्रष्टा एवम्भूतोऽभिलाषुकोऽस्मि । रात्रौ यद्यपि कृताः, तथापि न दृष्टास्तस्माद्दिने यद्दर्शनेच्छुरस्मीत्येवं सा तेन शब्दिता । न परमहमेव, किन्तु त्वत्सखीजनोऽपीत्युत्सुकपदेन सूचितमिति वा । व्याख्यानान्तरं ग्रन्थगौरवभयान्नोक्तम् । नतीरित्यत्र इच्छुर्वीक्षितेत्येताभ्यां योगे 'न लोका—' इति षष्ठीनिषेधः ॥ १ ॥

अपने-अपने काम करनेके लिये उत्सुक लोगोंवाले (अथवा—रात्रिमें हुए तुम्हारे सङ्गमवृत्तान्तको जाननेके लिए उत्सुक सखियोंवाले) दिनमें तुम्हारे भुजाद्वय, मुख, जघनद्वय, स्तनद्वय और चरणद्वयके (कामशास्त्र-प्रसिद्ध नागपाशादिरूप) आसन-विशेषोंसे युक्त सुरतसे संयुक्त कुशलताधिक्यसे निर्मित नम्रताओंको (अथवा—सुरतको तथा सङ्गत आनतियोंको मैं देखना चाहता हूं' इस प्रकार दमयन्तीको देखकर नलने सङ्केत किया। अथवा—""""दिनमें क्रमशः वाहुओंके (नागपशादि) वन्ध अर्थात् कामशास्त्रोक्त आसन-विशेष), मुखका ('पद्मिनी' जातीयास्त्री होनेसे) सौरभ, जघनोंका रत, स्तनोंका मिलना (श्लिष्ट होना) और चरणोंकी आनति (नम्रता-झुकना) इन सबोंको मैं देखना चाहता हूं"""। अथवा—जब तुमको देखता हूं, तभी हमें उक्त इच्छा होती है अर्थात् तुम्हें देखनेका समय ही सम्भोगका समय है, ऐसा नलने दमयन्तीको देखकर सङ्केत किया। पाठा०—(रात्रिमें हुए तुम्हारे सम्भोगवृत्तान्तको पूछनेकी इच्छाको छिपानेके लिए उससे लज्जा न हो इस कारण) तुम्हारी सखियोंके हासरहित होनेपर अर्थात् सखियोंके सामने ही उक्तरूपसे नलने दमयन्तीको सङ्केत किया, अत एव वह (दमयन्ती) लज्जित हो गयी। अथवा—नलके वैसा कहनेपर उत्सुक सखियां हंसने लगीं, तब वह लज्जित हो गयी।

अथवा—तुम्हारे बाहु आदिके बन्धादि ( नागपाशादि आसन-विशेष ) आदिको मैं दिनमें भी देखूंगा, क्योंकि रात्रिमें मैं नहीं देख सका तथा उत्सुक सखियां भी देखेंगी ऐसा नलने सङ्केत किया ] ॥ १ ॥

**प्रातरात्मशयनाद्विनिर्यतीं सन्निरुध्य यदसाध्यमन्यदा ।**
**तन्मुखार्पणसुखं सुखं भुवो जम्भजित् क्षितिशचीमचीकरत् ॥ ६१ ॥**

प्रातरिति । भुवः पृथिव्याः, जम्भजित् इन्द्रः, नलः इत्यर्थः । प्रातः प्रभातसमये, आत्मशयनात् निजशय्यायाः, विनिर्यतीं निर्गच्छन्तीम्, क्षितिशचीं भूलोकेन्द्राणीम् प्रियामिति शेषः । सन्निरुध्य प्रतिबध्य, कराभ्यामाकृष्येति यावत् । अन्यदा अन्यस्मिन् समये, गृहान्निर्गमनानन्तरमित्यर्थः । यत् यादृशं सुखम्, असाध्यं कर्त्तुमशक्यम्, सखीसमीपे अवस्थानादिति भावः । तत् अनुभूतचरम्, मुखार्पणसुखं मुखचुम्बनादिरूपम्, दमयन्तीकर्त्तृकमिति भावः । सुखम् अचीकरत् कारयामास । दमयन्तीमवरुध्य तया निजमुखचुम्बनादिकमकारयदित्यर्थः । करोतेर्णौ चङ्युपधाह्रस्वादि । 'हृक्रोरन्यतरस्याम्' इति विकल्पादणिकर्त्तुः कर्मत्वम् ॥ ६१ ॥

पृथ्वीन्द्र ( नल ) ने प्रातःकाल अपनी शय्यासे उठकर बाहर जाती हुई पृथ्वीन्द्राणी ( दमयन्ती ) को रोककर जो ( सुख ) दूसरे समयमें ( रात्रिमें लज्जा, भय आदिके कारण ) असाध्य था, उस मुखचुम्बन आदि सुखको दमयन्तीसे कराया [ अथवा—यदि तुम इस समय ( रात्रिके अन्तमें ) मेरा कहना करोगी तभी तुम्हें अलभ्य पदार्थ तुम्हें दूंगा, ( या—तभी बाहर जाने दूंगा ), अन्यथा नहीं; यह सुनकर दमयन्तीने सोचा कि यदि मैं इनका कहना नहीं मानती तो ये मुझे बाहर नहीं जाने देंगे, और अब प्रातःकाल हो जानेसे सखियोंके आनेका समय है । यह विचारकर नलको मुखचुम्बनादि देकर वह दमयन्ती बाहर चली गयी । अथवा—नलने 'अपने मुख-चुम्बन आदि दमयन्तीद्वारा करानेसे जो सुख होगा, वह सुख दिनमें सखियोंके सामने असाध्य है' यह सोचकर दमयन्तीसे वह सुख करवाया ] ॥ ६१ ॥

**नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवाम् ।**
**आत्मना निजनवस्मरोत्सवस्मारिणीयमहृणीयत स्वयम् ॥ ६२ ॥**

नायकस्येति । अहर्मुखे ऊषसि । 'रोऽसुपि' इत्यह्नो नकारस्य रेफादेशः । नायकस्य पत्युः, शयनात् शय्यायाः, निर्गता निसृता, इयं भैमी, सुभ्रुवां सुलोचनानां सखीनाम्, मुदं हर्षम्, स्वसम्भोगचिह्नदर्शनजन्यमिति भावः । उदीक्ष्य आलोक्य, आत्मना मनसा, 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि' इति मेदिनी । निजं स्वकीयम्, नवं नूतनं सद्यस्कं वा, स्मरोत्सवं सम्भोगानन्दम्, स्मरति चिन्तयतीति

१. 'निजधव—' इति पाठान्तरम् ।

तादृशी सती, स्वयम् एव आत्मनैव, अहृणीयत तत्प्रकाशनात् अजिहृत् । 'त्रपायां हृणीङिति जिहेति लज्जते हृणीयते' इति भट्टमल्लः । कण्ड्वादियगन्तत्वाल्लङ्; तत्र हृणीङिति ङित्करणादात्मनेपदम् ॥ ६२ ॥

नायक ( पति–नल ) के शयनसे प्रातःकाल निकली हुई यह ( दमयन्ती ) सुन्दरियोंके ( रात्रिमें स्व–स्वनायकके साथ सम्भोग करनेसे उत्पन्न ) हर्षको देखकर अपने नवीन (पाठा०–पतिके साथ) कामोत्सवका स्मरण करती हुई स्वयं लज्जित हुई ॥ ६२ ॥

तां मिथोऽभिदधतीं सखीः प्रियस्यात्मनश्च स निशाविचेष्टितम् ।
पार्श्वगः सुरवरात् पिधां दधद् दृश्यतां श्रुतकथो हसन् गतः ॥ ६३ ॥

तामिति । पार्श्वगः समीपस्थोऽपि, सुराणाम् इन्द्रादीनाम्, वरात् वरप्रसादात्, पिधाम् अन्तर्द्धाम्, 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः । 'वष्टि भागुरिरल्लोपम्' इत्यकारलोपः । दधत् धारयन्, सः नलः, प्रियस्य पत्युः, आत्मनश्च निजायाश्च, निशाविचेष्टितं रात्रिवृत्तम्, मिथः रहसि, सखीः सहचरीः, अभिदधतीं भाषमाणाम् सखीभ्यः कथयन्तीमित्यर्थः । ब्रुवेरर्थवत्त्वाद् द्विकर्मकत्वम् । तां प्रियाम्, श्रुतकथः आकर्णितप्रियावचनः, अत एव हसन् उच्चैर्हास्यं कुर्वन् सन्, दृश्यतां तासां नयनगोचरताम्, गतः प्राप्तः ॥ ६३ ॥

देवोंके द्वारा दिये गये 'कूटकायमपहाय'—( १४।९४ ) वरदानसे अन्तर्धान हो समीपमें स्थित नल, परस्परमें रात्रिमें किये गये प्रिय ( नल ) तथा अपने ( सुरत–सम्बन्धी ) व्यापारोंको सखियोंसे कहती हुई उस ( दमयन्ती ) को वह वार्तालाप सुनकर हँसते हुए प्रत्यक्ष हो गये ॥ ६३ ॥

चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साऽभवत् ।
क्वापि वस्तुनि वदत्यनागतं चित्तमुद्यदनिमित्तवैकृतम् ॥ ६४ ॥

अथास्याः प्रियविरहासहिष्णुतामाह—चक्रेति । चक्रदाराणां रात्रौ चक्रवाकवनितायाः, विरहेक्षणक्षणे वियोगदर्शनकाले, बिभ्यती स्वस्या अपि कदाचिन्नलेन विरहसम्भावनया त्रस्यन्ती, सा भैमी, धवस्य नलस्य, हसाय हास्याय, अभवद् अजायत, प्रियाया अकाण्डत्रासदर्शनात् प्रियो जहास इत्यर्थः । 'स्वनहसोर्वा' इति विकल्पादप्प्रत्ययः । अथवा युक्तमेतत् भयमित्याह–क्वापि कुत्रचित्, वस्तुनि विषये, उद्यत् उत्पद्यमानम्, अनिमित्तवैकृतम् आकस्मिकविकारः यस्य तत् तादृक्, चित्तं मनः कर्तृ, अनागतं भाविशुभाशुभादिकमेव, वदति ज्ञापतीत्यर्थः । चक्रविरहदर्शनात् आशङ्कितनिज आगामिविरह एव भयहेतुभूत इति तात्पर्यम् ॥ ६४ ॥

चकई पक्षीके वियोगको देखनेके समयमें अर्थात् सायंकालमें ( 'मेरे प्रियके साथ भी,

---

१. 'कथोऽहसद्गतः' इति पाठान्तरम् ।

कहीं इसी तरह विरह न हो जाय' इस आशङ्कासे ) डरती हुई वह ( दमयन्ती ) पति ( नल ) की हँसीके लिए हुई अर्थात् उस प्रकार डरती हुई उसे देखकर नल हँसने लगे ( पा०—डरती हुई प्रियाका आलिङ्गनकर उस ( नल ) ने नहीं छोड़ा अर्थात् उसके भयको दूर करनेके लिए बहुत देर तक आलिङ्गन किये रहे—लोकमें भी डरे हुए व्यक्तिके डरको दूर होनेके लिये उसका हितचिन्तक व्यक्ति उसे गोद आदिमें लेकर दबाये रहता है )। अकारण उत्पन्न होते हुए विकारवाला चित्त किसी पदार्थके ( विषय ) में भविष्य ( होनहार ) को कह देता है। [ इससे कलिकृष्यमाण नल-दमयन्तीका भावी विरह सूचित होता है ] ॥ ६४ ॥

चुम्बितं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत् ।
सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितम् ? ॥ ६५ ॥

चुम्बितमिति । सा भैमी, चुम्बितं नलेन चुम्बितुमारब्धम्, 'चुम्बितुम्'[1] इति पाठे—चुम्बितुं नलेनाधरं पातुमुद्यते सतीत्यर्थः। मुखं निजाननम्, न आचकर्ष न अपासारयत्। इति यत्, तत् चुम्ब्यमानमुखस्य अनाकर्षणमेव, पत्युः नलस्य, अन्तः अन्तःकरणे, अमृतं सुधाम्, ववर्ष निषिषेच, तत्तुल्यमानन्दमजनयदित्यर्थः। तथा अर्पितं स्तनोपरि न्यस्तम्, भुजं नलकरम् यत् न नुनोद न निरास, तेन भुजानपसारणेन, तस्य नलस्य सम्बन्धि, किं किं वस्तु, अङ्गं वा चित्तं वा इत्यर्थः। न तर्पितम् अभूत् ? न आप्यायितम् अभूत् ? अपि तु सर्वाङ्गसन्तर्पणमेवाभूदित्यर्थः ॥ ६५ ॥

( क्रमशः लज्जा तथा भयको दूरकी हुई ) उस ( दमयन्ती ) ने चूमे जाते हुए ( पाठा०—नल द्वारा चूमनेके लिये तत्पर ) मुखको जो नहीं हटाया, वह पति ( नल ) के अन्तःकरणमें अमृत वर्षा कर दिया अर्थात् उससे अमृत वर्षा—जैसा नलको आनन्द हुआ। और ( स्तनादिपर ) नलके द्वारा अर्पित ( बढ़ाये गये ) हाथको जो नहीं हटाया, उससे उस ( नल ) का क्या ( मन, या शरीरादि ) नहीं तर्पित ( अतिशय सन्तुष्ट ) हुआ ? अर्थात् नलका मन ( या-प्रत्यङ्ग ) अतिशय सन्तुष्ट ही हुआ ॥ ६५ ॥

नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परम् ।
वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये ॥ ६६ ॥

नीतयोरिति । सः नलः, तया भैम्या, स्तनपिधानतां कुचावरणताम्, नीतयोः प्रापितयोः, भुजयोः तद्दोर्युगयोः, परं केवलम्, प्रथममिति भावः। आदौ केवलं कुचस्थभुजोपरि इति निष्कर्षः। ततः अनन्तरम्, वीतबाहुनि अपसारितभुजे, शनैः शनैः नलेनेति भावः। हृदंशुके स्तनावरकवस्त्रे, अथ तदनन्तरम्, केवलेऽपि अपसारितांशुकत्वात् उन्मुक्तेऽपि इति भावः। तत्कुचद्वये दमयन्तीस्तनयुगले, करं हस्तम्, दातुम् अर्पयितुम्, आप शशाक इत्यर्थः। दमयन्त्या अपि क्रमशो मन्मथोदयेन लज्जाजन्य-

1. 'चुम्बितुम्' इति पाठान्तरम् ।

सङ्कोचापगमादिति भावः । अत्रैकस्य करस्य क्रमादनेकेषु भुजांशुककुचेषु वृत्तिकथनात् 'क्रमेणैकमनेकस्मिन्' इत्याद्युक्तलक्षणः पर्यायालङ्कारभेदः ॥ ६६ ॥

नलने स्तनोंको ढके हुए दमयन्तीके हाथोंको पहले छुआ, अनन्तर ( दमयन्तीके ) स्तनोंको ढाँकनेवाले कपड़ोंको छुआ और सबसे बादमें वस्त्रावरण रहित ( दमयन्तीके ) स्तनोंको छुआ । [ दमयन्तीने लज्जावश कपड़ेसे ढके हुए स्तनोंको हाथसे भी ढक लिया था, अत एव नलसे क्रमशः पहले उसके हाथोंका अनन्तर कपड़ेका और बादमें वस्त्ररहित स्तनोंका स्पर्श किया ] ॥ ६६ ॥

याचनान्न ददतीं नखार्पणं तां विधाय कथयाऽन्यचेतसम् ।
वक्षसि न्यसितुमात्ततत्करः स्वं बिभेद मुमुदे स तन्नखैः ॥ ६७ ॥

याचनादिति । स नलः, याचनात् मां नखेन विदारय इति प्रार्थनाकरणादपि, नखार्पणं नखेन भेदनम्, न ददतीं नार्पयन्तीम्, स्नेहवशात् नखक्षतमकुर्वतीमित्यर्थः। तां प्रियाम् कथया विविधालापप्रसङ्गेन । 'चिन्तिपूजिकथि–' इत्यादिना अङ्प्रत्ययः । अन्यचेतसम् अन्यमानसाम्, प्रसङ्गान्तरव्यासक्तचित्तामित्यर्थः । विधाय कृत्वा, वक्षसि स्वोरसि, न्यसितुं स्थापयितुम्, आत्ततत्करः गृहीतभैमीपाणिः सन्, तन्नखैः प्रियाया एव नखैः, स्वम् आत्मानम्, बिभेद अभिनत्, व्यदारयदित्यर्थः । मुमुदे च ननन्द च ॥ ६७ ॥

( 'तुम भी मेरे वक्षःस्थलपर नखक्षत करो' ऐसी ) याचना करनेपर भी ( प्रेम या लज्जासे ) नखक्षत नहीं करती हुई उस ( दमयन्ती ) को नलने दूसरी तरहकी बातोंसे कथासक्त चित्तवाली करके ( अपने ) वक्षःस्थलपर उसका हाथ रखकर तथा अपने ( वक्षःस्थल ) का ( उसके ही नखोंसे ) भेदनकर आनन्दको प्राप्त किया ॥ ६७ ॥

स प्रसह्य हृदयापवारकं हर्तुमक्षमत सुभ्रुवो बहिः ।
ह्रीमयं न तु तदीयमान्तरं तद्विनेतुमभवत् प्रभुः प्रभुः ॥ ६८ ॥

स इति । प्रभुः स्वामी, सः नलः, सुभ्रुवः सुलोचनायाः प्रियायाः, बहिः बाह्यम् , हृदयापवारकं वक्षोदेशाच्छादकम् , स्तनावरणवस्त्रमित्यर्थः । प्रसह्य बलात् , हर्तुम् अपसारयितुम् , अक्षमत अशक्नोत् , तु किन्तु, तदीयं दमयन्तीयम् , आन्तरम् अन्तर्वर्त्ति, ह्रीमयं लज्जारूपम् , तत् हृदयापवारकम् , विनेतुम् अपसारयितुम् , न प्रभुः न समर्थः, अभवत् अजायत । तस्य सहजत्वादिति भावः ॥ ६८ ॥

पति वे ( नल ) वक्षःस्थलको ढकनेवाले दमयन्तीके बाहरी आवरण ( वस्त्र ) को तो हठसे हटा सके, किन्तु लज्जारूप उसके भीतरी आवरणको नहीं हटा सके । [ यद्यपि विश्वास उत्पन्न होनेसे वे दमयन्तीके वक्षःस्थलके आवरणवस्त्रको किसी प्रकार हटा नहीं सके, किन्तु स्वाभाविक लज्जाको नहीं हटा सके, अतः वक्षःस्थलका स्पर्श करने पर वह दमयन्ती पुनः लज्जित हो ही गयी ] ॥ ६८ ॥

सा स्मरेण बलिनाऽप्यहापिता ह्रीक्षमे भृशमशोभताबला ।
भाति चापि वसनं विना न तु व्रीडधैर्यपरिवर्जने[1] जनः ॥ ६९ ॥

सेति । बलिना प्रबलेनापि, स्मरेण कामेन, ह्रीक्षमे लज्जाधैर्ये, अहापिता अत्याजिता, त्यजयितुमक्षमेत्यर्थः । जहातेर्ण्यन्तात् पुगि द्विकर्मकादप्रधाने कर्मणि क्तः । अबला दुर्बला, सा भैमी, भृशम् अत्यर्थम् , अशोभत अराजत, 'नारीणां भूषणं लज्जा' इति नीतिशास्त्रोक्तेरिति भावः । तथा हि जनः लोकः, वसनं वस्त्रम् , विनाऽपि ऋतेऽपि, भाति शोभते, तु किन्तु, व्रीडधैर्ययोः लज्जाधीरत्वयोः, परिवर्जने परित्यागे, न च नैव, भातीति अन्वयः ॥ ६९ ॥

बलवान् ( पक्षा०—बढ़े हुए ) कामदेवके द्वारा लज्जा तथा धैर्यका त्याग नहीं की हुई वह अबला ( स्त्री दमयन्ती, पक्षा०—निर्बल ) अत्यन्त शोभित हुई; क्योंकि कपड़ेके विना भी मनुष्य शोभता है, किन्तु लज्जा तथा धैर्यके छोड़नेसे ( पाठा०—छोड़नेपर ) नहीं शोभता ॥ ६९ ॥

आत्थ नेति रतयाचितं[2] न यन्मामतोऽनुमतवत्यसि स्फुटम् ।
इत्यमुं तदभिलापनोत्सुकं धूनितेन शिरसा निरास सा ॥ ७० ॥

आत्थेति । हे प्रिये ! मां रतयाचितं सुरतभिक्षाम्, यत् यतः, न इति, 'न दास्यामि' इति, न आत्थ न ब्रवीषि, मम सुरतप्रार्थनायां न दास्यामि इति यत् त्वं न वदसीत्यर्थः । अतः अप्रतिषेधाद्धेतोः, स्फुटं व्यक्तम् , अनुमतवती स्वीकृतवती, असि भवसि, 'अप्रतिषिद्धं परमतम् अनुमतं भवति' इति न्यायात् इति भावः । इति इत्थम् , तस्याः दमयन्त्याः, तस्य अप्रतिषेधवचनस्येत्यर्थो वा, अभिलापनाय वाचनाय, उत्सुकम् उद्युक्तम् , आग्रहान्वितमित्यर्थः । अमुं प्रियम् , सा भैमी, धूनितेन कम्पितेन । 'धूञ्-प्रीञोर्नुग्वक्तव्यः' । शिरसा मूर्ध्ना, निषेधसूचकशिरश्चालनेनेत्यर्थः । निरास प्रत्याख्यातवती । अहो ! अत्यन्ताभिमतार्थेऽपि निषेधशीलता स्त्रीणामिति भावः ॥ ७० ॥

'( हे प्रिये ! ) मेरी सुरतभिक्षाका जो तुम निषेध नहीं कर रही हो, इससे स्पष्ट ही तुमने मुझको ( उस सुरतके लिए ) अनुमति दे चुकी' इस प्रकार उस ( दमयन्ती, अथवा—स्वीकृति वचन ) के कहवानेके उत्सुक इस ( नल ) को उस ( दमयन्ती )ने (निषेध-सूचक) शिरःकम्पनसे मना कर दिया । [ नलके दमयन्तीसे सुरतयाचना करनेपर जब उसने कोई उत्तर नहीं दिया तो 'अप्रतिषिद्धं परवचनमनुमतं भवति' ( दूसरेके वचनका निषेध नहीं किया जाता तो वह स्वीकृत समझा जाता है) इस न्यायके अनुसार उसके निषेधात्मक भावको समझते हुए भी उसको स्पष्ट कहलानेके लिए उत्कण्ठित नलने कहा कि—'तुमने सुरतका निषेध नहीं किया, अत एव उसे तुम स्वीकार कर रही हो, ऐसा मैं समझता हूं' किन्तु

१. 'परिवर्जनैः' इति पाठान्तरम् । २. 'रतयाचिनम्' इति पाठान्तरम् ।

फिर भी लज्जाशीला दमयन्तीने कुछ नहीं कहकर केवल शिर हिलाकर निषेध कर दिया। अथवा—"......हुए भी उससे परिहास-भाषण करनेके लिए उत्सुक नलने......"]॥७०॥

**या शिरोविधुतिराह नेति ते सा मया न किमियं समाकलि?।**
**तन्निषेधसमसङ्ख्यताविधिर्व्यक्तमेव तव वक्ति वाञ्छितम्॥ ७१॥**

येति। हे प्रिये! ते तव, या शिरोविधुतिः निषेधसूचकमस्तकचालनम्। कर्त्री। न इति आह न दास्यामि इति निषेधं ब्रूते, सा इयं शिरोविधुतिः, मया न समाकलि किम्? न सम्यक् अवोधि किम्? अपि तु गृहीतार्थैव इत्यर्थः। कलयतेः कर्मणि लुङ्। किं त्वया समाकलि? इत्याह—तस्य शिरोविधुतिद्वयरूपस्य प्रतिपाद्यस्य, निषेधस्य असम्मतेः, समसङ्ख्यतया प्रतिपादकस्य नञोऽपि द्विसङ्ख्यतया, प्रतिपादितो विधिः विधानम्। 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायात् सुरतानुमोदनरूप इत्यर्थः। तव वाञ्छितम् अभिलाषम्, व्यक्तं स्फुटमेव, वक्ति कथयति। वचेर्लट्। निषेधार्थमपि वारद्वयशिरोविधूननं ते सम्मतिमेव सूचयति, नञ्द्वयेन प्रकृतार्थस्य गम्यमानत्वादिति भावः॥ ७१॥

निषेधार्थक तुम्हारे शिरःकम्पनने जो 'नहीं' (सुरत मत करो) ऐसा कहा, उसे मैंने नहीं समझा क्या? अर्थात् शिरःकम्पनके द्वारा सुरतनिषेध करनेका तुम्हारा आशय मैंने समझ लिया है, (वह आशय यह है कि—) उस (शिरःकम्पन) का दो वार निषेध करना (सुरत करनेकी स्वीकृतिरूप) तुम्हारे चाहनाको स्पष्ट ही कह रहा है। [नलके पूर्वोक्त (१८।७०) वचन कहनेपर जब दमयन्तीने शिरःकम्पन द्वारा निषेध कर दिया तब पुनः उसके साथ परिहासभाषणार्थ उत्सुक नलने कहा कि—तुमने शिर हिलाकर दो वार निषेध किया है, अतः 'द्वौ नञौ प्रकृतमर्थं गमयतः' (दो निषेध प्रकृत अर्थ का समर्थन करते हैं) न्यायके अनुसार तुम सुरतकी स्वीकृति दे रही हो अर्थात् 'सुरत स्वीकार नहीं है, ऐसा नहीं है' इस वचनमें आये हुए दो निषेधोंसे सुरतका स्वीकृति स्पष्ट ही ज्ञात होती है]॥

**नात्थ नात्थ शृणवानि तेन किं ते न वाचमिति तां निगद्य सः।**
**सा स्म दूत्यगतमाह तं यथा तज्जगाद मृदुभिस्तदुक्तिभिः॥ ७२॥**

नेति। हे प्रिये! न आत्थ मया सह त्वं न आलपसि, न आत्थ नैव कथयसि, तेन अनालपनेन हेतुना, ते तव, वाचं वचनम्, न शृणवानि किम्? न शृणुयां किम्? अपि तु शृणुयामेव, इत्यसम्भावनानिषेधः। सः नलः, तां प्रियाम्, इति एवम्, निगद्य उक्त्वा, सा भैमी, दूत्यगतं दूतरूपेण दमयन्तीसमीपमुपस्थितम्, तम् आत्मानं नलम्, यथा नवमसर्गोक्तेन येन प्रकारेण, आह स्म उक्तवती, तत् सर्वम्, मृदुभिः नम्राभिः, तस्याः दमयन्त्या एव, उक्तिभिः कथाभिः, दमयन्तीवा-

१. 'सङ्ख्यता विधिम्' इति पाठान्तरम्।

क्यानुकरणैरित्यर्थः। जगाद उवाच। तदा मत्समीपे वाक्यमुच्चार्य इदानीमनुच्चारणे न किमपि फलम्, अतोऽवश्यमेव मया सह आलपिष्यसीति भावः॥ ७२॥

( हे प्रिये ! तुम ) 'नहीं बोलती हो, नहीं बोलती हो', इस कारण अर्थात् 'तुम्हारे नहीं बोलनेसे तुम्हारे वचनको मैं नहीं सुनता हूं क्या ? अर्थात् अवश्य सुनता हूं' इस प्रकार उस दमयन्तीसे कहकर नलने 'दूतभावसे गये हुए नलसे दमयन्तीने जैसा ( 'तदद्य विश्रम्य दयालुरेधि मे' ( ९।६६ ) इत्यादि मृदु वचन )' कहा था, वही वचन उस दमयन्तीकी मृदूक्तियोंसे कहा अर्थात् दमयन्तीने दूत बनकर गये हुए नलसे जैसे मृदु वचन कहे थे, वैसे ही मृदु वचन नलने भी दमयन्तीसे कहे॥ ७२॥

नीविसीम्नि निबिडं पुराऽरुणत् पाणिनाऽथ शिथिलेन तत्करम्।
सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम्॥ ७३॥

नीवीति। सा दमयन्ती, नीविसीम्नि कटीवस्त्रग्रन्थिसमीपे, तत्करं प्रियहस्तम्, ग्रन्थिमोचनाय उपस्थितमिति भावः। पुरा प्रथमम्, पाणिना स्वकरेण, निबिडं दृढं यथा तथा, अरुणत् रुद्धवती। रुणद्धेः कर्त्तरि लङ्। अथ कियद्दिनानन्तरम्, शिथिलेन श्लथेन, अदृढेनेत्यर्थः, पाणिना अरुणदित्यन्वयः। क्रमेण क्रमशः भयभङ्गेन, तत्परमित्यर्थः। केवलं न न नेति वादिनी केवलं वाचिकनिषेधम् एवं कुर्वती सती, अमुष्य प्रियकरव्यापारस्य, विघ्नं नीविमोचनप्रतिबन्धम्, आचरत् अकुर्वदित्यर्थः क्रमशो लज्जापगमात् वाङ्मात्रेणैव केवलं विघ्नमाचरत् न तु अङ्गेनेति भावः। अत्रैकस्मिन् नीविदेशे क्रमादनेकव्यापारसम्बन्धोक्तेः पर्यायालङ्कारभेदः॥ ७३॥

उस ( दमयन्ती ) ने पहले नीवि ( नाभिके नीचे बधी हुई वस्त्रग्रन्थि ) के पासमें ( उसे खोलनेके लिए पहुंचे हुए ) नलके हाथको कड़े हाथसे रोका, इसके बाद ( लज्जा एवं भयके कुछ कम हो जानेपर ) ढीले हाथसे रोका और क्रमशः ( कुछ दिनोंके बाद, लज्जा एवं भयके अधिक कम हो जानेपर ) 'नहीं, नहीं' ऐसा कहती हुई उस ( दमयन्ती ) ने इस ( नल, या—नलकर ) के विघ्नको किया अर्थात् रोका॥ ७३॥

रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धताम्।
साऽन्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा॥ ७४॥

रूपेति। रूपं सौन्दर्यम्, वेषः विविधप्रकारनेपथ्यम्, वसनं वस्त्रम्, अङ्गवासना धूपादिना शरीरसंस्कारः, भूषणं कङ्कणादि, तानि आदिः येषां तेषु विविधप्रकारप्रसाधनादिषु विषयेषु, नित्यं प्रत्यहमेव, पृथक् भिन्नभिन्नरूपाम्, विदग्धतां कुशलिताम्, एत्य प्राप्य, प्रत्यहमेव नवनववेशवचनां कुर्वतीत्यर्थः। अत एव नवा नवा नूतना नूतना सती, आभीक्ष्ण्ये द्विर्भावः। सा भैमी, अन्या अपरा काचित्, दिव्या स्वर्गीया, युवतिः तरुणी, उर्वश्यादिरित्यर्थः। इति भ्रमे भ्रान्तिजनने,

१. 'क्षमाम्' इति पाठान्तरम्।

क्षमा समर्था सती, तं नलम्, अगात् अगच्छत्, समतोषयदित्यर्थः। इणो गा लुङ् ॥ ७४ ॥

रूप (देववरदान (१४।९१) से विविध शरीरधारणसे उत्पन्न सौन्दर्य), वेष (महाराष्ट्र, गुजरात, लाट आदि देशवाली स्त्रियोंके भूषण-वस्त्रादिसे शृङ्गाररचना), वस्त्र (नीले, लाल, पीले, श्वेत, चित्रित आदि विविध रंग-बिरंगे कपड़े), अङ्गवासना (चन्दन, कर्पूर, कस्तूरी, कुङ्कमादिसे तथा अगर-तगर-चन्दनादि निर्मित धूपोंसे शरीरको सुरभित करना) और भूषण (अनेकविध मुक्ता, हीरा, पन्ना, माणिक्य आदि जड़े हुए सुवर्णमय अलङ्कार) आदि (अनेकविध भाषा, गायन कला आदि) में अलग-अलग चतुरताको करती हुई तथा दूसरी दिव्याङ्गना (उर्वशी, मेना, रम्भा, तिलोत्तमा आदि अप्सराओं या-परमसुन्दरी) युवतियोंके भ्रमको उत्पन्न करनेवाली अतएव नयी-सी वह दमयन्ती उस (नल) के पास गयी अर्थात् दमयन्तीने उन्हें उक्त प्रकारसे दिव्याङ्गओंके समान सन्तुष्ट किया ॥ ७४ ॥

**इङ्गितेन निजरागसागरं संविभाव्य चटुभिर्गुणज्ञताम्।**
**भक्तताञ्च परिचर्ययाऽनिशं साऽधिकाधिकवशं व्यधत्त तम् ॥ ७५ ॥**

इङ्गितेनेति। सा भैमी, अनिशं निरन्तरम्, इङ्गितेन कटाक्षवीक्षणादिचेष्टितेन, निजं स्वकीयम्, रागसागरम् अनुरागार्णवम्, सागरवदसीममनुरागाधिक्यमित्यर्थः। चटुभिः प्रियवादैः, गुणज्ञतां पत्युः गुणाभिज्ञताम्, तथा परिचर्यया सेवया, भक्तताञ्च तस्मिन् भक्तिमत्त्वञ्च, संविभाव्य सम्यग् ज्ञापयित्वा, तं प्रियम्, अधिकाधिकवशम् उत्तरोत्तरमधिकायत्तम्। 'प्रकारे गुणवचनस्य' इति द्विरुक्तिः, कर्मधारयवद्भावात् सुपो लुक्। व्यधत्त अकरोत्। इङ्गिताद्यनुमितैः रागादिगुणैस्तस्याः सोऽत्यन्तवशंवदोऽभूत् इति निष्कर्षः ॥ ७५ ॥

उस (दमयन्ती) ने चेष्टासे अपने अनुरागके समुद्ररूप नलको प्रियभाषणोंसे अपनी गुणज्ञता (गुणग्राहकता) को तथा सेवासे (पतिविषयिणी अपनी) भक्तियुक्तताको प्रकटितकर उस (नल) को सर्वदा अत्यधिक अपने वशमें कर लिया। [ यहांपर 'चेष्टा' से-सखि आदिसे पतिके गुणोंका वर्णन करते हुए भाषण करना, उनके दोषका अपलाप करना (मिथ्या बतलाना), पतिके बादमें सोना तथा सोकर पतिसे पहले उठना, पतिके आनेपर प्रसन्न होना, बाहर जानेपर उदासीन होना और सुख-दुःखमें समान रहना आदि; 'प्रियभाषण' से—आपके ऐसा सुन्दर, महादानी, वीर सब कलाओंका पण्डित एवं तेजस्वी दूसरा कोई नहीं है, इत्यादि अनुकूल वचन कहना; तथा 'सेवा' से—पङ्खेसे हवा करना, चरण दबाना, पान-बीड़ा आदि देना; का ग्रहण करना चाहिये। इनके द्वारा दमयन्तीने नलको सर्वदा अपने वशमें कर लिया ] ॥ ७५ ॥

**स्वाङ्कमर्पयितुमेत्य[1] वामतां रोषितं प्रियमथानुनीय सा।**

---

१. अत्र इतः प्राक् 'यत्क्रियां प्रति यदस्रजस्तया (?) स्वस्वरस्य लघुतां

आतदीयहठसम्बुभुक्षुतं नान्वमन्यत पुनस्तमर्थिनम् ॥ ७६ ॥

स्वाङ्गमिति । सा दमयन्ती, स्वाङ्गं निजवराङ्गादिकम्, अर्पयितुं नलकर्तृकस्पर्शताद्यर्थं प्रदातुम्, वामतां प्रतिकूलताम्, असम्मतिमित्यर्थः । एत्य प्राप्य, अथ तदनन्तरम्, रोषितम् इच्छाऽपूरणात् कोपितम्, प्रियं पतिम्, अनुनीय चरणधारणादिना प्रसाद्य, पुनः भूयः, अर्थिनम् अङ्गार्पणयाचिनम्, तं प्रियम्, तदीया प्रियसम्बन्धिनी, या हठात् बलात्, सम्बुभुक्षुता सम्भोक्तुमिच्छा, तावत् पर्यन्तम् आतदीयहठसम्बुभुक्षुतम्, यावत् स बलपूर्वकं न सम्भोक्तुमैच्छत् तावत्पर्यन्तमित्यर्थः । 'आङ् मर्यादाऽभिविध्योः' इत्यव्ययीभावेन नपुंसकह्रस्वत्वम् । न अन्वमन्यत न अनुमोदितवती । व्यवहारोऽयं सम्भोगपिपासावर्द्धनार्थमिति भावः ॥ ७६ ॥

उस ( दमयन्ती ) ने अपने ( दमयन्तीके ) शरीर ( रतिमन्दिर, या-स्तनादि ) को देनेके लिए याचक ( 'तुम अपने अमुक शरीरका सम्भोगार्थ अर्पण करो' ऐसी याचना करते हुए ) प्रतिकूलताको प्राप्त होकर अर्थात् देनेका निषेधकर ( अतएव ) क्रोधित प्रिय ( नल ) को अनुनीतकर ( चरणों पर गिरने, या हाथ जोड़ने आदिसे प्रसन्नकर ) फिर उस ( अङ्गको देनेके लिए ) याचना करनेवाले नलको तबतक अनुमति नहीं दी, जबतक उन्होंने बलात्कारसे सम्भोग करनेकी इच्छा नहीं की । [ नलने दमयन्तीसे उसके काममन्दिर आदि शरीरकी याचना की तो उसने मनाकर दिया, इससे नल कुछ रुष्ट ही गये तो उनको दमयन्तीने अनुनयसे प्रसन्न कर लिया, तदनन्तर जब वे पुनः सम्भोगार्थ उस अङ्गकी याचना करने लगे तब दमयन्तीने तबतक उनको उक्त कार्यके लिए अपनी अनुमति नहीं दी, जबतक उन्होंने हठपूर्वक सम्भोग की इच्छा नहीं की । इस प्रकार निषेध, अनुनयादि करनेसे अनुरागवृद्धि होती है और सम्भोगमें भी अधिक आनन्द आता है ] ॥ ७६ ॥

आद्यसङ्गमसमादराण्यधाद् वल्लभाय दधती कथञ्चन ।
अङ्गकानि घनमानवामताव्रीडलम्भितदुरापतानि सा ॥ ७७ ॥

आद्येति । सा नलप्रिया, घनैः प्रगाढैः, मानवामताव्रीडैः प्रणयकोपप्रतिकूलतात्रपाभिः, लम्भिता प्रापिता, दुरापता दौर्लभ्यं येषां तादृशानि, अङ्गकानि सदयभोग्यानि सुकुमारावयवानीत्यर्थः । ह्रस्वे अनुकम्पायां वा कन् । वल्लभाय प्रियनलाय, कथञ्चन लज्जावशात् कृच्छ्रेण, दधती धारयन्ती, ददती सतीत्यर्थः । आद्यसङ्गमेन प्रथमसम्भोगकालेन, समः तुल्यः, आदरः प्राप्त्याग्रहः येषां तादृशानि, अधात् धृतवती । प्रथमसङ्गमतुल्यादरं प्राप्तानीव स्वाङ्गानि प्रियाय अर्पितवतीति भावः ॥ ७७ ॥

---

दधानया । पत्युरन्वहमह्रीयत स्फुटं तत्किलाह्रियत तस्य मानसम् ॥' इत्यधिकः श्लोकः क्वापि दृश्यते, इति म० म० शिवदत्तशर्माण आहुः ।

१. 'क्षुताम्'—इति पाठान्तरम् ।

अधिक प्रणयकलह (शरीरादि दानमें) प्रतिकूलता (अथवा—अधिक प्रणयकलहके कारण शरीरादि दानमें प्रतिकूलता) तथा लज्जासे दुष्प्राप्य (अपने) सुकुमारतम शरीरोंको प्रियतम (नल) के लिए देती हुई उस (दमयन्ती) ने प्रथम सङ्गमके समान आदरको प्राप्त कराया। [प्रणयकलहादिके कारण दुष्प्राप्य दमयन्तीके सुकुमारतम अङ्गोंको पाकर सम्भोगेच्छार्थं वृद्धिगत कामवाले नलने प्रथम सम्भोगके अत्यधिक प्रसन्नताको प्राप्त किया] ॥ ७७ ॥

**पत्युरागिरिशमातरु क्रमात् स्वस्य चागिरिजमालतं वपुः।**
**तस्य चार्हमखिलं पतिव्रता क्रीडति स्म तपसा विधाय सा ॥ ७८ ॥**

**पत्युरिति। पतिव्रता साध्वी, सा दमयन्ती, तपसा पतिसेवारूपेण तपस्याप्रभावेण, क्रमात् क्रमानुसारेण, औचित्यानुसारेणेत्यर्थः। पत्युः नलस्य, आगिरिशं शङ्करमारभ्य, आतरु वृक्षपर्यन्तम्, स्वस्य आत्मनश्च, आगिरिजं गिरिजाम् अम्बिकामारभ्य, आलतं लतापर्यन्तम्। सर्वत्राभिविधावव्ययीभावः। वपुः देवगन्धर्वोरगमृगविहगादिद्वन्द्वशरीरम्, तथा तस्य वपुषः, अर्हम् अनुरूपम्, अखिलञ्च समग्रं क्रीडासाधनञ्चेत्यर्थः। विधाय कृत्वा, क्रीडति स्म चक्रीड, पत्युर्गिरिशस्वरूपत्वे स्वस्य गिरिजास्वरूपत्वं तथा तदनुरूपं व्याघ्रचर्मादिरूपशय्यादिकम्, तथा नलस्य वृक्षस्वरूपत्वे स्वस्य लतास्वरूपत्वञ्च सम्पाद्य सा इच्छानुरूपं रेमे। निरङ्कुशमहिमत्वात् पतिव्रतानामिति भावः ॥ ७८ ॥**

पतिव्रता वह (दमयन्ती) पतिके शरीरको शिवजीसे लेकर वृक्षतक (अथवा-वृक्षसे लेकर शिवतक) तथा अपने शरीरको पार्वतीसे लेकर लतातक (अथवा—लतासे लेकर पार्वतीतक) क्रमशः (पतिसेवारूप) तपस्याके द्वारा उस (नल) के योग्य बनाकर क्रीडा करने लगी। [दमयन्ती पतिव्रता थी, अतः पतिसेवारूप तपस्यासे देवप्राप्त वरदान (१४। ९१) से अपने शरीरको सर्वथा नलके अनुरूप बनाकर क्रीडा करती थी, यथा-नल शिवरूप होते थे तो वह पर्वतीरूपिणी हो जाती थी और नल वृक्षरूप होते थे तो वह लतारूपिणी हो जाती थी, इसी प्रकार क्रमशः शिवसे वृक्षपर्यन्त नलका शरीर होनेपर वह दमयन्ती पार्वतीसे लतापर्यंत शरीर धारणकर तथा तदनुरूप ही वेश-भूषा-भाषा आदिको भी ग्रहणकर उनके साथ तद्रूप होकर रमण करती थी। पतिव्रताके लिए कोई कर्म असाध्य नहीं है] ॥ ७८ ॥

**न स्थली न जलधिर्न काननं नाद्रिभूर्न विषयो न विष्टपम्।**
**क्रीडिता न सह यत्र तेन सा सा विधैव न यया यया न वा ॥ ७९ ॥**

**नेति। सा भैमी, तेन नलेन सह, यत्र यस्मिन् प्रदेशे, न क्रीडिता न क्रीडितवती। कर्त्तरि क्तः। सा तादृशी, स्थली अकृत्रिमभूमिः, स्थलदेश इत्यर्थः, न। 'जानपद—' इत्यादिना अकृत्रिमार्थे ङीप्। स जलधिः नदीसागरतडागादिजलाधार**

इत्यर्थः। न, तत् काननं वनम्, न, सा अद्रिभूः पर्वतसानुः, न, स विषयः देशः, न, तत् विष्टपं जगत्, न, सर्वत्र आसीदिति शेषः। किञ्च सा तादृशी, विधैव प्रकारः एव, न, आसीदिति शेषः। यया यया विधया धेनुकादिबन्धप्रकारेण, न वा, क्रीडिता इति शेषः। तेन सह सर्वत्रैव विजहार इत्यर्थः॥ ७९॥

उस ( दमयन्ती ) ने उस ( नल ) के साथ जहांपर क्रीडा नहीं की; ऐसा कोई स्थली ( अकृत्रिम भूमि ) समुद्र ( कूपादि लघु जलाशयसे लेकर समुद्रतक महाजलाशय ), वन, पर्वतीय भूमि, देश, अथवा लोक ( भू , भुवः, स्वः ये तीन; अथवा—भू , भुवः, स्वः, महः, जनः, तप और सत्य ये सात लोक) नहीं था और वह ( कामशास्त्रोक्त धेनुकादिबन्धरूप ) प्रकार नहीं था; जिस-जिस प्रकारसे उसने नलके साथ क्रीडा नहीं की हो [ दमयन्तीने नलके साथमें सब प्रकार की क्रीडाएँ सर्वत्र की ] ॥ ७९ ॥

नम्रयांशुकविकर्षिणि प्रिये वक्त्रवातहतदीप्तदीपया ।
भर्तृमौलिमणिदीपितास्तया विस्मयेन ककुभो निभालिताः ॥ ८० ॥

नम्रयेति । प्रिये नले, अंशुकविकर्षिणि परिहितवसनाकर्षणकारिणि सति, नम्रया नतया, गूढाङ्गगोपनाय अवनतपूर्वकायया इत्यर्थः। तथा वक्त्रवातेन मुखमारुतेन, फुत्कारेणेत्यर्थः। हतः निर्वापितः, दीप्तः प्रज्वलितः, दीपः प्रदीपः यया तथाभूतया, तया भैम्या, भर्तृमौलिमणिभिः पत्युर्मुकुटस्थरत्नैः, दीपिताः प्रकाशिताः, ककुभः दिशः, विस्मयेन दीपे निर्वापितेऽपि कथमालोकप्रकाश इत्याश्चर्येण, निभालिताः दृष्टाः॥ ८० ॥

( गुप्ताङ्गके दर्शनार्थ ) प्रियके वस्त्र खींचते रहनेपर ( उस गुप्ताङ्गको नहीं देखे जानेके लिए ) झुकी हुई तथा फूंककर जलते हुए दीपकको बुझाई हुई उस दमयन्तीने पति ( नल ) के मुकुटमें जड़े हुए रत्नोंसे प्रकाशमान दिशाओंको आश्चर्यसे देखा ! [ अन्धकार होनेके लिए किये गये दीपनिर्वाणरूप अपने प्रयत्नको नलके मुकुटरत्नोंसे प्रकाशमान दिशाओंको देख दमयन्ती आश्चर्यित हो गयी ] ॥ ८० ॥

कान्तमूर्ध्नि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलम् ।
रन्तुमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः ॥ ८१ ॥

कान्तेति । सा भैमी, तस्य भर्तृमौलिस्थितस्य, मणेः रत्नस्य, पिधित्सया पिधातुम् आवरितुम् इच्छया, कान्तस्य प्रियस्य, मूर्ध्नि शिरसि, श्रवणपूरं निजकर्णभूषणीभूतम्, उत्पलं नीलोत्पलम्, दधती स्थापयन्ती सती, रन्तुं रतिकर्म कर्तुम्, पुरः कर्मप्रारम्भे, स्ववल्लभः निजपतिः एव, तनुः मूर्त्तिः यस्य तादृशस्य नलमूर्त्तेः, मनोभुवः कामस्य, रत्यधिदैवतस्य इति यावत्। अर्चनं पूजनम्, आचरत् इव अन्वतिष्ठदिव इत्युत्प्रेक्षा॥ ८१ ॥

पति ( नल ) के मस्तकमें उस ( प्रकाशमान—१८।८० ) रत्नको ढकनेकी इच्छासे

( अपने ) कर्णभूषण-कमलको ऊपर करती हुई उस (दमयन्ती) ने रमण करनेके लिए अपने पति ( नल ) के शरीरधारी कामदेवका मानो पहले पूजन किया। [ फूंककर दीपकके बुझा देनेपर भी नलके मुकुटस्थ रत्नसे प्रकाश होता हुआ देखकर दमयन्तीने जब अपने कर्णोत्पलसे उस रत्नको ढक दिया, तब वह ऐसा प्रतीत होता था कि दमयन्ती रमण करनेके लिए नलदेहधारी कामदेवकी मानो पहले पूजा की हो। किसी कार्यके आरम्भमें उसके निर्विघ्न समाप्त होनेके लिए तत्सम्बन्धी देवके मस्तकपर फूल चढ़ाकर पूजन करना शास्त्रसम्मत होनेसे साध्वी दमयन्तीका भी रमण करनेके पहले उस रमण-क्रियाको निर्विघ्न होनेके लिए तत्सम्बन्धी देव ( काम ) की पूजा करना उचित ही है ] ॥ ८१ ॥

तं पिधाय मुदिताऽथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः।
चित्तमाप कुतुकाद्भुतत्रपाऽऽतङ्कसङ्कटनिवेशितस्मरम् ॥ ८२ ॥

तमिति। सा भैमी, तं दिगुद्भासकं शिरोमणिम्, पिधाय कर्णोत्पलेन आच्छाद्य, मुदिता अन्धकारसम्भावनया हृष्टा, अभूदिति शेषः। अथ अनन्तरम्, स्वयोः स्वकीययोः, उभयत्र उभयोः, पार्श्वयोः दीपं प्रज्वलितप्रदीपद्वयमित्यर्थः। वीक्ष्य दृष्ट्वा, कुतुकम्, अकस्माद्दीपदर्शनात् कौतुकम्, अद्भुतं निर्वापितस्यापि पुनः प्रादुर्भावादाश्चर्यम्, त्रपा पत्या विवस्त्रीकरणात् लज्जा, आतङ्कः कोऽयमदृष्टपूर्वव्यापार इति शङ्का, तेषां सङ्कटे सम्बाधे, परस्परसङ्घर्षे इत्यर्थः। निवेशितः संस्थापितः, निरुद्ध इत्यर्थः। स्मरः कामः यस्मिन् तत् तादृक्, चित्तं मनोभावम्, आप प्राप्तवती। तथा प्रवृद्धोऽपि कामः तदा किञ्चित् सङ्कुचितः इव आसीत् इति भावः ॥ ८२ ॥

वह ( दमयन्ती ) उस ( पतिमुकुटजटित रत्न ) को ढककर प्रसन्न हुई, इसके बाद उसने अपने दोनों भागोंमें दीपकोंको देखकर ( अकस्मात् दीपकोंके देखनेसे ) कौतुक ( दीपकके बुझनेपर पुनः दीपकोंके जलनेसे हा! यह क्या हुआ? ऐसा ) आश्चर्य, ( पतिके द्वारा वस्त्रहीन किये जानेसे उत्पन्न ) लज्जा, ( यह विचित्र घटना किस प्रकार हो गयी? ऐसा ) भय—इनके समुदायमें स्थित कामयुक्त चित्तवाली हो गयी अर्थात् उसके देखनेपर कौतुक आदिसे दमयन्तीका बढ़ा हुआ भी काम कुछ सङ्कुचित हो गया ॥ ८२ ॥

एककस्य शमने परं पुनर्जाग्रतं शमितमप्यवेक्ष्य तम्।
जातवह्निवरसंस्मृतिः शिरः सा विधूय निमिमील केवलम् ॥ ८३ ॥

एककस्येति। एककस्य तयोरेकस्य, दीपस्य, प्रदीपस्य, शमने निर्वापणे कृते सति, शमितमपि पूर्वं निर्वापितमपि, परम् अपरम्, तं दीपम्, पुनः भूयः, जाग्रतं नलमायया प्रज्वलन्तम्, 'नाभ्यस्ताच्छतुः' इति नुमः प्रतिषेधः। अवेक्ष्य विलोक्य, जाता उत्पन्ना, वह्नेः अग्नेः, वरस्य 'या दाहपाकौपयिकी तनुः' इत्यादिनोक्तवरदानस्य, संस्मृतिः सम्यक् स्मरणं यस्याः सा तादृशी, सा भैमी, शिरः मस्तक-

विधूय कम्पयित्वा, स्मरणं नाटयित्वा दुर्वारत्वं निश्चित्येति भावः । केवलं निमिमील स्वयं निमीलिताक्षी जाता । स्वाभाविकलज्जावशादिति भावः ॥ ८३ ॥

( उन दोनों दीपकोंमें-से ) एकको ( वस्त्राञ्चल या—मुखवायुसे ) बुझानेपर फिर बुझे हुए भी उस दीपकको ( नलकी इच्छामात्रसे ) जलता हुआ देखकर ( स्वयम्वरमें दिये हुए ) अग्निके वरदान ( १४।७४ ) का स्मरण होनेपर दमयन्तीने ( अरे ! अग्निके द्वारा नलके लिए दिये हुए वरदानके प्रभावसे ऐसा हो रहा है, इस अभिप्रायसे ) शिरको हिलाकर (दीपक बुझाकर अन्धकार करना अशक्य होनेसे तुलसीदासके 'मूँदे आँख कहीं कोउ नाहीं' इस वचनके अनुसार ) केवल आँखोंको बन्द कर लिया ॥ ८३ ॥

पश्य भीरु ! न मयाऽपि दृश्यसे यन्निमेषितवती दृशावसि ।
इत्यनेन परिहस्य सा तमः संविधाय समभोजि लज्जिता ॥ ८४ ॥

पश्येति । भीरु ! हे वराङ्गने ! लज्जाया वराङ्गनाभूषणत्वादिति भावः । 'भियः क्रुक्लुकनौ' इति क्रुप्रत्ययः, ततः ऊङन्तत्वात् नदीत्वात् ह्रस्वः । 'भीरुरार्त्ते त्रिलिङ्गः स्यात् वरयोषिति योषिति' इति मेदिनी । यत् यतः, दृशौ नयनद्वयम्, निमेषितवती लज्जया निमीलितवती, असि भवसि, त्वमिति शेषः । मम दर्शनभयादिति भावः । तत् तत एव, मया अपि न दृश्यसे अवलोक्यसे, त्वमिति शेषः । त्वन्निमीलने सर्वस्यान्धकारावृतत्वादिति भावः । पश्य अवलोकय, इति इत्थम्, अनेन नलेन, परिहस्य उपहस्य, तमः अन्धकारम्, संविधाय निर्माय, लज्जिता व्रीडिता, सा दमयन्ती, समभोजि सम्भुक्ता । अन्यथा उभयोस्तुल्यप्रीतेरयोगादिति भावः ॥ ८४ ॥

हे भीरु ( लज्जाकातर दमयन्ती ) ! जो तुमने नेत्रोंको बन्द कर लिया है, उससे मैं भी तुमको नहीं देखता हूँ ( अथवा—तुमने नेत्रोंको बन्द कर लिया है और मैं नहीं देखता हूँ, यह आश्चर्यकी बात है । अथवा—तुमने जो नेत्रोंको बन्द किया है, इससे मैं भी तुमको नहीं देखता ? अर्थात् तुम्हें तो मैं देख ही रहा हूँ । अथवा—कोई व्यक्ति अपने शरीरके अदर्शनार्थ उस शरीरको ही वस्त्रादिसे छिपाता है, परन्तु तुमने शरीरको नहीं छिपाकर नेत्रोंको बन्द किया है, अत एव मैंने तो तुम्हारे अङ्गोंको अच्छी तरह देख ही लिया है, तुम्हारे नेत्र बन्द करनेसे कोई लाभ नहीं हुआ ? ) इस प्रकार परिहासकर ( इच्छामात्रसे दीपकोंके बुझानेपर) अन्धकार करके नलने लज्जित हुई उस दमयन्तीके साथ सम्भोग किया ॥

चुम्ब्यसेऽयमयमङ्क्यसे नखैः श्लिष्यसेऽयमयमर्प्यसे हृदि ।
नो पुनर्न करवाणि ते गिरं हुं त्यज त्यज तवास्मि किङ्करा ॥ ८५ ॥

अथान्धकारकल्पनायाः फलं युग्मेनाह—चुम्ब्यसे इत्यादि । हे प्रियतम ! इत्यामन्त्रणपदमूहनीयम् । अयं त्वम्, चुम्ब्यसे तव अधरः पीयते; अयं त्वम्, नखैः अङ्क्यसे क्षतकरणेन चिह्न्यसे; अयं त्वम्, श्लिष्यसे आलिङ्ग्यसे; अयं त्वम्, हृदि उरसि अर्प्यसे स्थाप्यसे इत्यर्थः । सर्वत्र मयेति शेषः । ते तव, गिरं वाक्यं, चुम्बनादि-

प्रार्थनारूपामित्यर्थः । पुनः न करवाणि ? न पालयामि ? इति नो न, अवश्यमेव करवाणीत्यर्थः । हुमिति अनुनये, त्यज त्यज मां मुञ्च मुञ्च, ते तव, किङ्करा दासी । 'किंयत्तद्बहुषु कृञोऽज्विधानम्' इत्यच्प्रत्यये टाप् । अस्मि भवामि । अतस्तवाभिलाषः सर्वथैव पूरणीयो मयेति भावः ॥ ८५ ॥

'यह मैं तुमको चुम्बन करती हूँ, यह मैं तुमको नखोंसे चिह्नित करती हूँ, यह मैं तुम्हारा आलिङ्गन करती हूँ, यह मैं तुम्हें हृदयपर रखती हूँ' फिर तुम्हारी बात नहीं करूँगी ऐसा नहीं होगा अर्थात् फिर मैं तुम्हारी सुरतयाचनाकी वातको मानूंगी ही, हुं, छोड़ो-छोड़ो, तुम्हारी मैं दासी हूँ—' ॥ ८५ ॥

इत्यलीकरत[1]कातरा प्रियं विप्रलभ्य सुरते ह्रियं च सा ।
चुम्बनादि विततार मायिनी किं विदग्धमनसामगोचरः ? ॥ ८६ ॥

इतीति । इति इत्थम्, अलीकं मिथ्या यथा तथा, रते रमणे, कातरा असमर्था, कपटेनैव रतकातर्यं नाटयन्ती न पुनस्तत्त्वत इति भावः । मायिनी वाक्छलचतुरा, सा भैमी, सुरते रमणकाले, प्रियं नलम्, ह्रियञ्च लज्जाञ्च, विप्रलभ्य प्रतार्य, चुम्बनादि केवलमधरपानादिकमेवेत्यर्थः । विततार नलाय ददौ । मध्यानायिकाभावत्वेऽपि मुग्धात्वप्रकटनात् प्रकृतसुरताकरणेन प्रियविप्रलम्भः, किञ्च चुम्बनादिषु लज्जातिशयसम्भवेऽपि तदवलम्बनाभावात् लज्जाविप्रलम्भ इति भावः । तथा हि विदग्धानि कालोचितव्यवहारकुशलानि, मनांसि धियः येषां तादृशानाम्, जनानामिति शेषः । किं वैदग्ध्यम्, अगोचरः ? अविषयः ? न किमपीत्यर्थः । अत एव सा विस्रब्धं विहर्त्तुं शशाक इति भावः ॥ ८६ ॥

इस प्रकार ( १८।८५ ) व्यर्थ ही रतमें (पाठा०—अत्यधिक व्यर्थ) कातर मायावती उस ( दमयन्ती ) ने सुरतमें पति ( नल ) को तथा लज्जाको वञ्चितकर चुम्बन आदि दिया; चतुरचित्तवाले व्यक्तियोंका क्या अविषय है ? अर्थात् चतुर व्यक्ति क्या नहीं कर सकते हैं ? [ मध्या नायिका होनेपर भी मुग्धाभावको प्रकट करके केवल चुम्बनादि देकर प्रकृत सुरतको टाल देनेसे प्रिय ( नल ) को तथा चुम्बनादिमें लज्जाधिक्यकी सम्भावना होनेपर भी उसका अवलम्बन नहीं करनेसे लज्जाको वञ्चित करना कहा गया है । इसका अभिप्राय यह है कि—सुरतके विषयमें वलात्कार करनेके भयसे डरी हुई यह जिस किसी प्रकार अपनेको मुझसे छुड़ानेके लिए ही ऐसा कहती है । जिस प्रकार अप्रौढ़ा यह दमयन्ती प्रिय नलको वञ्चितकर उनकी ऐसी वृथा बुद्धि उत्पन्न कर रही है, उसी प्रकार मुझे ( लज्जाको ) भी वञ्चितकर मुझे अर्थात् लज्जाको यह अब तक भी नहीं छोड़ रही है । यह वलात्कारके भयसे ही चुम्बन नखच्छेदन आदि करती है, स्वेच्छासे नहीं; इस प्रकार लज्जाके त्यागको भी अप्रकटितकर चुम्बनादि सम्पूर्ण सुरतसम्भारको प्रौढ़तासे प्रियके

---

१. '-तरकातरा' इति पाठान्तरम् ।

लिए देकर माया ( कपट ) से अपने अभीष्टको उस दमयन्तीने पूरा कर लिया ] ॥ ८६ ॥

स्वेप्सितोद्गमितमात्रलुप्तया दीपिकाचपलतया तमोघने ।
निर्विशङ्करतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥ ८७ ॥

स्वेति । सः नलः, तमः अन्धकार एव, घनः मेघः तस्मिन्, स्वेप्सितेन निजेच्छामात्रेणैव, उद्गमितमात्रं प्रज्वलनक्षणमेव, लुप्ता विनष्टा तया तथोक्तया, क्षणिकयेत्यर्थः । दीपिका प्रदीप एव, चपला विद्युत् तया तद्द्वारा इत्यर्थः । 'विद्युच्चञ्चला चपलाऽपि च' इति यादवः । निर्विशङ्करतात् अन्धकारजन्यनिरुद्वेगरमणात्, जन्म सम्भवः । येषां तादृशानाम्, तस्याः भैम्याः, मुखाकूतानां वदनचेष्टितानाम्, दर्शनात् अवलोकनात्, यानि सुखानि हर्षाः तानि, अभुङ्क्त अन्वभूत् । स्थिरप्रकाशे तद्विस्रम्भविघातभयात् क्षणिकप्रकाशेन तन्मुखदर्शनसुखम् अनुभूतवान् इत्यर्थः ॥ ८७ ॥

उस नलने अन्धकाररूपी मेघ ( पक्षा०—मेघतुल्य अन्धकार ) में अपनी इच्छामात्रासे जलकर तत्काल बुझे हुए दीपकरूपी बिजलीसे निश्शङ्क किये जाते हुए सुरतमें उत्पन्न दमयन्तीके मुखाभिप्रायके दर्शनके सुखोंको प्राप्त किया । [ जिस प्रकार काले-काले मेघमें क्षणमात्र बिजली चमककर शान्त हो जाती है, उसी प्रकार वरुणके दिये हुए वर (१४।७४) के प्रभावसे नलकी इच्छामात्रासे दीपक भी क्षणमात्र जलकर बुझ जाता था और पहले अन्धकार होनेसे निश्शङ्क होकर सुरत करती हुई दमयन्तीके मुखमें कैसे भाव हो रहे हैं, इसे दीपकके क्षणिक प्रकाशमें देखकर नल सुखका अनुभव कर रहे थे ] ॥ ८७ ॥

यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकम् ।
यत्तु हुं हुमिति सा तदा व्यधात्तत् स्मरस्य शरमुक्तिहुङ्कृतम् ॥८८॥

अथ तन्मुखाकूतान्येवाह—यदित्यादि । तया भैम्या, रते सुरतकाले, यत् भ्रुवौ भ्रूद्वयम्, कुटिलिते सुखातिरेकात् सङ्कोचिते, तत् एव भ्रूकुटिलीकरणमेव, मन्मथेन कामेन, कार्मुकं धनुः, अनामि नमितम्, आकर्षीत्यर्थः । तस्या भ्रूद्वयस्य कामकार्मुकवत् मनोहरत्वादिति भावः । किञ्च, सा भैमी, तदा रमणकाले, हुं हुम् इति यत् व्यधात् सुखातिरेकात् 'हुं हुं' इति यत् अव्यक्तशब्दम् अकरोत्, तत्तु तत् हुङ्कृतमेव, स्मरस्य कामस्य, शरमुक्तिहुङ्कृतं बाणमोक्षस्य हुङ्कारस्वरूपम्, अभूदिति शेषः । तत् सर्वं तस्य अधिकमुद्दीपकम् अभूत् इति भावः ॥ ८८ ॥

उस ( दमयन्ती ) ने सुरतमें जो भ्रूद्वयको टेढ़ा किया, वह कामदेवने ( मानो ) अपने धनुषको झुकाया, तथा उस ( दमयन्ती ) ने जो 'हुँ, हुँ' शब्द किया, वही ( मानो ) कामदेवके बाण छोड़नेका हुङ्कार हुआ [ सुरतकालमें दमयन्तीके भ्रूद्वयको टेढ़ा करना तथा 'हुं, हुं' शब्द करनेसे फिर काम बढ़ गया । धनुर्धरलोग धनुषको झुकाकर बादमें हुङ्कार करते हुए बाण छोड़ते हैं ] ॥ ८८ ॥

ईक्षितोपदिशतीव नर्त्तितुं तत्क्षणोदितमुदं मनोभुवम् ।
कान्तदन्तपरिपीडिताधरा पाणिधूननमियं वितन्वती ॥ ८९ ॥

**ईक्षितेति । कान्तस्य प्रियस्य, दन्तैः दशनैः, परिपीडिताधरा दंशनेन व्यथित-रदनच्छदा, अत एव पाणिधूननं तन्निवारणाय करकम्पनम् , वितन्वती कुर्वती, इयं दमयन्ती, तत्क्षणे सुरतकाले, उदितमुदं स्वप्रभावदर्शनात् सञ्जातहर्षम् , मनोभुवम् अनङ्गम् , नर्त्तितुं नृत्यं कर्त्तुम् , उपदिशतीव इत्थं नृत्यं कुरु इति शिक्षयन्ती इव, स्थितेति शेषः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । ईक्षिता दृष्टा, प्रियेणेति शेषः । नृत्यशिक्षको हि हस्तनर्त्तनेनैव स्वशिष्यान् नर्त्तितुं शिक्षयतीति लौकिकाः ॥ ८९ ॥**

पति ( नल ) के दन्तोंसे पीड़ित अधरवाली ( अत एव निषेधार्थ ) हाथको फैलाती हुई उस ( दमयन्ती ) को ( नलने ) उस समयमें हर्षित कामदेवको नृत्य करनेके लिए शिक्षा देती हुई-सी देखा । [ चुम्बनके समय दांतोंसे अधरके पीड़ित होनेपर दमयन्तीने हाथको फैलाकर वैसा करनेसे जो मना किया, तो नलको मालूम पड़ा कि मानो वह उस समय हर्षित हुए कामदेवको नृत्य सिखा रही हो । लोकमें भी कोई व्यक्ति किसी शिष्यको नृत्य सिखाते समय हाथ घुमा-घुमाकर शिक्षा देता है ] ॥ ८९ ॥

सा शशाक परिरम्भदायिनी गाहितुं बृहदुरः प्रियस्य न ।
चक्षमे स च न भङ्गुरभ्रुवस्तुङ्गपीनकुचदूरतां गतम् ॥ ९० ॥

**सेति । परिरम्भदायिनी आलिङ्गनप्रदायिनी, सा भैमी, प्रियस्य नलस्य, बृहत् विशालम् , उरः वक्षःस्थलम् , गाहितुं प्रवेष्टुम् , साकल्येनाभिव्याप्तुमित्यर्थः । न शशाक न चक्षमे, नलोरःस्थलमपेक्ष्य स्वस्य क्षीणाङ्गत्वादिति भावः । इत्याश्रया-धिक्येनाधिकालङ्कारभेदः । सः च नलोऽपि, भङ्गुरभ्रुवः सुवङ्किमभ्रूशालिन्याः प्रियायाः, तुङ्गपीनकुचाभ्याम् उन्नतस्थूलपयोधराभ्याम्, दूरतां व्यवधानम्, गतं प्राप्तम् , उरः गाहितुमिति पूर्वेणान्वयः, न चक्षमे न शशाक । कुचयोरौन्नत्यस्थौल्याभ्यां व्यवहितत्वादिति भावः । इति सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्तिः ॥ ९० ॥**

आलिङ्गन देती हुई ( कृशाङ्गी ) वह ( दमयन्ती ) प्रियके विशाल वक्षःस्थलको ( सम्पूर्णतया ) आलिङ्गन नहीं कर सकी, तथा वे नल भी कुटिल भ्रूवाली ( दमयन्ती ) के ऊँचे-ऊँचे स्तनोंसे दूरस्थ ( दमयन्तीके ) वक्षःस्थलका सम्पूर्णतया आलिङ्गन नहीं कर सके । [ दमयन्ती स्वयं कृशाङ्गी थी और नलकी छाती चौड़ी थी, अतः उसका सम्पूर्णतया वह आलिङ्गन नहीं कर सकी तथा दमयन्तीके स्तन ऊँचे-ऊँचे थे, अतः उसकी छातीसे नलकी छाती दूर ही रह जाती थी—सटती नहीं थी—इस कारण वे भी प्रियाकी छातीका सम्पूर्णतया आलिङ्गन नहीं कर सके । आलिङ्गनेच्छा अपूर्ण होनेसे दोनों उद्दीप्तकाम ही रह गये ] ॥ ९० ॥

वाहुवल्लिपरिरम्भमण्डली या परस्परमपीडयत् तयोः ।
आस्त हेमनलिनीमृणालजः पाश एव हृदयेशयस्य सः ॥ ९१ ॥

वाह्विति । तयोः भैमीनलयोः, या वाहुवल्लिभ्यां भुजलताभ्याम्, परिरम्भेण परस्परसंश्लेषेण, मण्डली वेष्टनम्, भुजचतुष्टयानां मण्डलाकारता इत्यर्थः । परस्परम् अन्योऽन्यम्, अपीडयत् प्रगाढसंश्लेषेण पीडितवती, सः परिरम्भव्यापार इत्यर्थः । हृदये शेते इति हृदयेशयः कामः तस्य । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । 'शयवासवासिष्वकालात्' इत्यलुक् । हेमनलिनीमृणालात् स्वर्णकमलिनीदण्डात्, जायते इति तज्जः अतिगौरत्वात् मृदुत्वाच्च सुवर्णमयकमलदण्डात् जात इव प्रतीयमानः, पाशः पाशाख्यवन्धनरज्जुरेव, आस्त अभवत् इत्युत्प्रेक्षा ॥ ९१ ॥

उन दोनोंके वाहुरूपी लताके आलिङ्गनकी गोलाई ( वृत्ताकारता ) ने परस्परमें ( आलिङ्गन करते समय ) पीडित किया, वह स्वर्णकमलिनीके मृणालका वना हुआ कामदेव का पाश ( बांधनेकी रस्सी ) ही हो गया । [ कोमल, पतले तथा लम्बे होनेसे लतातुल्य वाहुचतुष्टयसे परस्पर पीडनपूर्वक एक दूसरेका आलिङ्गन करनेसे ऐसा मालूम पड़ता था कि सुवर्णमयी कमलिनीके मृणालसे वना हुआ कामदेवका वह पाश ( वन्धनरज्जु ) हो परस्परालिङ्गन करनेसे वे दोनों कामके वशीभूत हो गये ] ॥ ९१ ॥

वल्लभेन परिरम्भपीडितौ प्रेयसीहृदि कुचाववापतुः ।
केलतीमदनयोरुपाश्रये तत्र वृत्तमिलितोपधानताम् ॥ ९२ ॥

वल्लभेनेति । वल्लभेन प्रियेण नलेन, परिरम्भेण प्रगाढालिङ्गनेन, पीडितौ चिपिटीकृतौ इत्यर्थः । प्रेयस्याः दमयन्त्याः, हृदि वक्षसि, स्थितौ इति शेषः । कुचौ स्तनौ एव, केलतीमदनयोः रतिकामयोः । 'कामस्त्री केलती रतिः' इति यादवः । उपाश्रये अवष्टम्भभूते, तत्र दमयन्तीवक्षसि, वृत्ते वर्त्तुले, मिलिते परस्परसङ्गते, उपधाने उपबर्हे । 'उपधानं तूपबर्हम्' इत्यमरः । तयोः भावः तत्ता ता शिरोनिधानताम्, अवापतुः जग्मतुः, इवेति शेषः । इत्युत्प्रेक्षा ॥ ९२ ॥

प्रियतमा ( दमयन्ती ) की छातीमें प्रियतम ( नल ) के द्वारा ( आलिङ्गन-कालमें ) अतिशय पीडित अर्थात् दवे हुए ( दमयन्तीके ) दोनों स्तन रति तथा कामदेवके विश्रामस्थानपर गोलाकार- मिली हुई दो तकियोंके समान हो गये । [ नलके गाढालिङ्गनसे दवे हुए दमयन्तीके दोनों स्तन रति-कामके गोलाकार तकियोंके समान मालूम पड़ते थे ] ॥९२॥

तत् प्रियोरुयुगलं नलार्पितैः पाणिजस्य मृदुभिः पदैर्वभौ ।
उत्प्रशस्ति[1] रतिकामयोर्जयस्तम्भयुग्ममिव शातकुम्भजम् ॥ ९३ ॥

तदिति । तत् अतिमनोज्ञम्, प्रियायाः, कान्तायाः, ऊरुयुगलं सक्थिद्वयम्, नलेन अर्पितैः न्यस्तैः, कृतैरित्यर्थः मृदुभिः कोमलैः, ईषन्मात्रैरित्यर्थः । पाणिजस्य, नखस्य,

1. 'तत्प्रशस्ति' इति पाठान्तरम् ।

पदैः चिह्नैः, नखक्षतैरित्यर्थः। उत् उद्गता, उत्कीर्णा इत्यर्थः। प्रशस्तिः प्रशंसावचनं तत् तादृशम् उत्प्रशस्ति उत्कीर्णप्रशंसावचनम्, शातकुम्भजं हिरण्मयम्, रतिकामयोः जयस्तम्भयुग्मम् इव जेतृत्वसूचकस्तम्भद्वयमिव, बभौ शुशुभे इत्युत्प्रेक्षा ॥ ९३ ॥

नलके द्वारा किये गये नखके कोमल अर्थात् छोटे-छोटे चिह्नों ( नखक्षतों ) से प्रिया दमयन्तीका वह ऊरुद्वय रति तथा कामदेवके विजय-प्रशस्ति लिखे गये सुवर्णनिर्मित दो विजयस्तम्भोंके समान शोभता था ॥ ९३ ॥

बह्वमानि विधिनाऽपि तावकं नाभिमूरुयुगमन्तराऽङ्कम् ।
स व्यधादधिकवर्णकैरिदं काञ्चनैर्यदिति तां पुराऽऽह सः ॥९४॥

बह्विति। हे प्रिये ! तावकं त्वदीयम्, नाभिम् ऊरुयुगञ्च अन्तरा तन्मध्यवर्त्ति। 'अन्तराऽन्तरेण युक्ते' इति द्वितीया। 'अन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे' इति काशिका। अङ्कम् अत्यन्ताभिलषणीयत्वेन आदरणीयमङ्गम्, वराङ्गमित्यर्थः। विधिना वेधसाऽपि, बहु अमानि अतिशयेन समादृतम्। कुतः ? यत् यस्मात्, सः विधिः, इदम् अङ्कम्, अधिकवर्णकैः समुज्ज्वलाभैः, काञ्चनैः सुवर्णैः, व्यधात् सृष्टवानिव, इति इत्थम्, सः नलः, तां प्रियाम्, पुरा सुरतारम्भात् पूर्वम्, आह उक्तवान्। 'पुरि लुङ् चास्मे' इति भूते लट् ॥ ९४ ॥

'( तुम्हारा अतिशय कामुक युवक केवल मैंने ही नहीं, किन्तु वीतराग एव बूढ़े ) ब्रह्मा ने भी नाभि तथा ऊरुद्वयके मध्यमें स्थित तुम्हारे काममन्दिरको बहुत माना अर्थात् अतिशय आदर किया, क्योंकि उस ( ब्रह्मा ) ने इसे ( अधिक गौरवर्ण लोमहीन तथा अन्यान्य अङ्गोंकी अपेक्षा शीत-वातातपको नहीं सह सकनेके कारण ) अधिक वर्णवाले मानो सुवर्णोंसे बनाया है' ऐसा उस ( नल ) ने ( मैथुन करनेके ) पहले उस ( दमयन्ती ) से कहा। [ अतिशय अश्लील होनेके कारण अवर्णनायोग्य होनेपर भी मैथुन-वर्णनके अतिरिक्त अन्यत्र वर्णन करना अयोग्य होनेसे इसे मैथुनकालसे पूर्व वर्णन किया गया है ]॥

पीडनाय मृदुनी विगाह्य तौ कान्तपाणिनलिने स्पृहावती ।
तत्कुचौ कलशपीननिष्ठुरौ हारहासविहते वितेनतुः ॥ ९५ ॥

पीडनायेति। कलशवत् घटवत्, पीनौ स्थूलौ, निष्ठुरौ कठिनौ च, तस्याः दमयन्त्याः, कुचौ स्तनौ। कर्त्तारौ। मृदुनी कोमले, तथाऽपि तौ अतिकठिनौ दमयन्तीकुचौ, विगाह्य अवगाह्य, प्राप्य इत्यर्थः। पीडनाय पीडनं कर्त्तुम्, स्पृहावती अभिलषितवती, व्याप्रियमाणे इत्यर्थः। कान्तस्य नलस्य, पाणिनलिने करकमले। कर्मणी। हारः कुचविलम्बितमुक्तावली एव, हासः हास्यम्, शुभ्रताधिक्यादिति भावः। तेन विहते तिरस्कृते, तिरस्कारेण विताडिते इव इत्यर्थः। वितेनतुः चक्रतुः। कोमलत्वात् दुर्बलयोः नलपाण्याः स्थूलकठिनयोः बलिनोः दमयन्तीकुचयोः पीडन-

**प्रवृत्तौ दुर्बलस्य प्रबलकर्तृकहासताडनयोरवश्यम्भाव्यत्वादिति भावः । अशक्यार्थप्रवृत्ताः परिहासास्पदं भवन्तीति निष्कर्षः ॥ ९५ ॥**

घटके समान बड़े तथा कठिन दमयन्तीके स्तनद्वयने कोमल (होते हुए भी) उन दोनोंको स्पर्शकर मर्दन करनेके लिए इच्छुक पतिके हस्त-द्वयरूपी कमलद्वय (कमल तुल्य मृदु दोनों हाथों) को हारके प्रकाश (या—हाररूपी हास=उपहास) से आच्छादित (पक्षा०—तिरस्कृत) कर दिया। (अथवा—"""मर्दन करनेके लिए इच्छुक उन दोनों हाथोंको मृदु जानकर उक्त प्रकारसे उपहास कर दिया)। [दमयन्तीके दोनों स्तन घटके समान विशाल तथा कठिन थे, उनको नलके मृदुतम कमलतुल्य हाथोंने मर्दन करना चाहा तो उन दोनों स्तनोंके हारका प्रकाश नलके उन दोनों हाथोंपर पड़नेपर ऐसा मालूम पड़ता था कि कठिन एवं विशाल स्तन कोमल एवं लघु नलहस्तको हँस रहे हैं कि तुम दोनों कोमल तथा लघु होनेसे हमारा मर्दन नहीं कर सकते, अत एव तुम दोनोंका यह प्रयास व्यर्थ है। लोकमें कोई असमर्थ एवं लघु व्यक्ति कठोर एवं महान् व्यक्तिको नहीं दबा सकता, यदि दबाता है तो भी वह उपहासास्पद ही होता है। यद्यपि 'अकर्मकठिनौ हस्तौ—' इस वचनके अनुसार राजाके हाथका कठोर होना ही शास्त्रोंमें उत्तम माना गया है, तथापि नलके हाथोंको कमलवत् कोमल कहकर उसकी अपेक्षा दमयन्तीके स्तनोंका अधिक काठिन्य द्योतित करनेसे शास्त्रलक्षणसे कोई विरोध नहीं होता] ॥ ९५ ॥

**यौ कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूकुचौ ।**
**स प्रियोरसि तयोः स्वयम्भुवोराचचार नखकिंशुकार्चनम् ॥ ९६ ॥**

**याविति । यौ वधूकुचौ दमयन्तीस्तनौ, कुरङ्गमदकुङ्कुमाभ्यां कस्तूरिकाश्मीरजाभ्याम्, अञ्चितौ पूजितौ, लेपनेन शोभितौ सन्तौ इत्यर्थः । अत एव नीला कस्तूरीलिप्तस्थाने कृष्णवर्णा च, सा लोहिता कुङ्कुमलिप्तस्थाने रक्तवर्णा च । 'वर्णो वर्णेन' इति तत्पुरुषसमासः । रुच्प्रभा ययोः तादृशौ, अन्यत्र—नीलः कण्ठे लोहितः केशेषु इति नीललोहितः महादेवः, तस्मिन् रुक् रुचिः, अनुराग इत्यर्थः । ययोः तादृशौ, बभूवतुरिति शेषः । प्रियायाः भैम्याः, उरसि वक्षसि, स्वयम्भुवोः यौवनागमे स्वतः एव उत्पन्नयोः, अन्यत्र—स्वयम्भूमूर्त्योश्च, तयोः वधूकुचयोः, सः नलः, नखैः नखक्षतैरेव, किंशुकैः पलाशकुसुमैः, रक्तवर्णतासाम्यात् वक्रतारूपाकारसाम्याच्चेति भावः । अर्चनं पूजनम्, आचचार चकारेव । स्वयम्भूत्वेन देवत्वात् तयोरर्चनाया औचित्यादिति भावः । गम्योत्प्रेक्षा ॥ ९६ ॥**

कस्तूरी तथा कुङ्कुम (के लेप) से शोभित (अत एव क्रमशः) नील तथा लाल रंगवाले (पक्षा०—नीललोहित अर्थात् शिवजीमें अनुरागवाले अर्थात् शिवतुल्य) जो वधू (दमयन्ती) के दोनों स्तन थे, प्रियाके वक्षस्थलपर (यौवनावस्थामें) स्वयमेव उत्पन्न (पक्षा०—स्वयम्भू मूर्तिवाले) उन दोनों (स्तनों, पक्षा०—शिवजी) की उस (नल) ने

( वक्राकार एवं रक्त वर्ण होनेसे ) नखरूपी किंशुकों ( पलाश-पुष्पों ) से मानो पूजन किया अर्थात् उक्तरूप दमयन्तीके स्तनोंपर नखक्षत किया॥ ९६॥

**अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत्।**
**चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम्॥ ९७॥**

अम्बुधेरिति। तदा संसर्गकाले, अम्बुजमुख्याः कमलवदनायाः प्रेयस्याः, मुखं वदनम्, चुम्बत् अधरं स्वदमानम्, नैषधस्य नलस्य, वदनेन्दुमण्डलं मुखचन्द्रबिम्बम्। कर्तृ। अम्बुधेः सागरात्, कियत् किञ्चित्, अनुत्थितम् अनुदितम्, अधिकांशमुदितम् ईषत् समुद्रगर्भे अवस्थितमित्यर्थः। स्वानुबिम्बेन स्वस्य विधोरेव जलान्तर्वर्त्तिप्रतिबिम्बेन, मिलितं युक्तम्, विधुम् इन्दुम्, व्यडम्बयत् अनुचकार। तयोः मुखयोर्मिथः संश्लेषात् कार्त्स्न्येनादृश्यमानत्वादिदमुपमितम्॥ ९७॥

उस समय ( सुरतकालमें ) कमलमुखी ( दमयन्ती ) के मुखका चुम्बन करते हुए, नलके मुखरूपी चन्द्रमण्डलने समुद्रसे कुछ नहीं निकले हुए अर्थात् अधिकांश उदित और स्वल्पांश अनुदित हुए, (समुद्रजलमें) अपने प्रतिबिम्बसे मिलित चन्द्रमाका अनुकरण किया। ( अथवा—······नलके मुखरूपी चन्द्रमण्डलका चुम्बन करता हुआ कमलमुखी (दमयन्ती) के मुखने······ )। [ थोड़ा अवशिष्ट और अधिकांश उदित हुआ चन्द्रका प्रतिबिम्ब समुद्रजलमें पड़ते हुए अपने प्रतिबिम्बसे युक्त होकर जैसा शोभा पाता है, वैसे ही नल-दमयन्तीके मुख भी चुम्बनकालमें शोभते थे। बिम्ब-प्रतिबिम्ब भाव कहनेसे नल-दमयन्ती के मुखोंकी अधिकतम साम्यता सूचित होती है तथा कामके मित्र चन्द्रमाके उदयका वर्णन करनेसे भविष्यमें कामकी अधिक वृद्धि होना भी सूचित होता है ]॥ ९७॥

**पूगभोग[1]बहुताकषायितैर्वासितैरुदयभास्करेण तौ।**
**चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमम्॥ ९८॥**

पूगेति। तौ भैमीनलौ, तत्र तस्मिन्, निधुवने रते। 'व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्' इत्यमरः। पूगभोगः क्रमुकभक्षणं, ताम्बूलचर्वणमिति यावत्। 'पूगः क्रमुकवृन्दयोः' इत्यमरः। तस्य बहुतया बाहुल्येन, 'पूगभाग' इति पाठे—चर्व्यमाणताम्बूले गुवाकभागस्य आधिक्यतया इत्यर्थः। कषायितैः सञ्जातकषायरसैः, तथा उदयभास्करेण कर्पूरविशेषेण, वासितैः सुरभितैः, अधरामृतैः परस्परमधरसुधापानैरित्यर्थः। साधु सम्यक्, मधुपानस्य मद्यपानस्य, विभ्रममिव विभ्रमं लीलाम्, चक्रतुः आचेरतुः। गुवाकादिमदकारकद्रव्यसन्धानजमद्यपानेन यथा मत्तता जायते, तथा तादृशाधरमधुपानेनापि मत्तौ तौ सुरतं चक्रतुरिति निष्कर्षः। अत्र सादृश्याक्षेपात् निदर्शनालङ्कारः॥ ९८॥

उन दोनों ( दमयन्ती तथा नल ) ने ( पान-बीड़ेमें डाली गयी ) सुपारीके अधिक

---

१. 'पूगभाग—' इति, 'पूगराग' इति च पाठान्तरम्।

खाने ( पा०—सुपारीका भाग अधिक होने, द्वितीयपाठा०—पान चबानेसे क्रमशः बढ़े हुए सुपारी की लालिमा ) से कषाय रसवाले ( पक्षा०—सुगन्धयुक्त ) तथा ( पानमें डालने योग्य ) कर्पूर-विशेषसे सुरभित अधररूप अमृत ( पक्षा०—परस्पर किये जाते हुए मधुर होनेसे अमृत तुल्य अधरपान ) से सम्यक् प्रकारसे मधु ( मद्य- ) पानके विलास ( विशेष भ्रान्ति-नशा ) को प्राप्त किया । [ जिस प्रकार कोई व्यक्ति सुपारी आदिकी अधिकतासे कषायरसयुक्त मद्यका पानकर नशेसे भ्रान्त ( आनन्द या नशेसे युक्त ) होता है, उसी प्रकार दमयन्ती तथा नलने भी सुरतमें अधिक पान चबानेसे अरुणवर्णके अधरामृतका परस्परमें पानकर ( परस्पर अधर-चुम्बनकर ) सम्यक् प्रकारसे कामोन्मत्त हो गये ] ॥ ९८ ॥

आह नाथवदनस्य चुम्बतः सा स्म शीतकरतामनक्षरम् ।
सीत्कृतानि सुदती वितन्वती सत्त्वदत्तपृथुवेपथुस्तदा ॥ ९९ ॥

आहेति । सुदती मनोज्ञदशना, सा भैमी, तदा अधरपानकाले, सीत्कृतानि दंशनवेदनया सीत्कारान्, वितन्वती कुर्वती, तथा सत्त्वेन सत्त्वगुणोद्रेकेण, दत्तः जनितः, पृथुः महान्, वेपथुः कम्पाख्यः सात्त्विकभावः यस्याः सा तादृशी च सती, चुम्बतः चुम्बनं कुर्वतः, नाथवदनस्य प्रियमुखस्य, शीतकरतां शीतांशुत्वमेव शीतकारित्वम् । 'कृञो हेतु—' इत्यादिना ताच्छील्ये टप्रत्ययः । अनक्षरम् अशब्दमेव, आह स्म उवाच, ज्ञापयमासेत्यर्थः । अन्यथा कथं शीतजन्यं कम्पसीत्कारादिकार्यमिति भावः ॥ ९९ ॥

उस ( सुरत-चुम्बन ) कालमें ( दन्तदंशनवेदनासे ) सीत्कार करती हुई तथा सात्त्विक भावसे कम्पित होती हुई उस सुदती ( दमयन्ती ) ने चुम्बन करते हुए नलमुखको विना अक्षरोच्चारण किये ही शीतकर ( ठण्डा करनेवाला, पक्षा०—ठण्डे किरणोंवाला अर्थात् चन्द्रमा ) कह दिया । [ ठण्ड लगनेपर मनुष्य 'सी-सी' शब्द करता हुआ काँपता और कुछ कहता नहीं है, दमयन्ती भी सुरतचुम्बनमें दन्त-दंशनसे पीडित हो 'सी-सी' करती थी और सात्त्विक भावके उदय होनेसे कम्पित भी होती थी, अत एव वह मानो विना अक्षरोच्चारण किये ही 'यह चुम्बन करने वाला नल-मुख शीतकर ( ठण्डक करनेवाला—पक्षा०—चन्द्र ) है' ऐसा कहती थी । नलके चुम्बनसे दमयन्तीको चन्द्रस्पर्श के समान परमानन्द हुआ ] ॥ ९९ ॥

चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम् ।
प्राप भर्त्तुममृतैः सुधांशुना सक्तहाटकघटेन मित्रताम् ॥ १०० ॥

चुम्बनायेति । चुम्बनाय स्तनोपरि चुम्बनकरणाय, कलितः गृहीतः, मुखेनैव स्पृष्ट इत्यर्थः । प्रियाकुचः भैमीस्तनो येन तादृशम्, वीरसेनसुतवक्त्रमण्डलं नलमुखबिम्बम् । कर्तृ । अमृतैः सुधाभिः, भर्त्तुं पूरयितुम्, सक्तः स्पृष्टः, हाटकस्य कनकस्य, घटः कुम्भो यस्मिन् तादृशेन, सुधांशुना चन्द्रेण, मित्रतां सदृशताम्, प्राप

**लेभे। नलमुखस्य चन्द्रतुल्यत्वात् भैमीकुचस्य च स्वर्णघटसाम्यादिति भावः। कनककलशे अमृतसम्भरणार्थं समागतः साक्षात् अमृतांशुरिव इत्युत्प्रेक्षया अमृतकरत्वं व्यज्यते इति अलङ्कारेण वस्तुध्वनिः॥ १००॥**

चुम्बनके लिए प्रिया (दमयन्ती) के स्तनको प्राप्त नलका मुखमण्डल (अपने ही) अमृतसे पूर्ण करनेके लिए सोनेके घड़ेका स्पर्श किये हुए चन्द्रके समान हुआ। [ दमयन्तीके स्तनोंको जब नल मुखसे चुम्बन करने लगे तो मालूम पड़ता था कि चन्द्रमा अपने अमृतप्रवाहोंसे स्वर्णघटको भर रहा हो; इससे नल मुखका अमृततुल्य मधुररसपूर्ण चन्द्रतुल्य होना तथा दमयन्तीके स्तनका स्वर्णकलशतुल्य गौरवर्ण, विशाल एवं कठोर होना और नलमुखके स्पर्शसे दमयन्तीको अमृतरसपूर्णके समान अवर्णनीय आनन्द होना सूचित होता है। 'मुखनेत्रस्तनबाहुमूलकपोलौष्ठद्वयवराङ्गान्यष्टौ चुम्बनस्थानानि, रागतः सर्वाण्यपि च' (मुख, नेत्र, स्तन, बाहुमूल (वक्षः), कपोल, दोनों ओठ तथा काममन्दिर ये आठ चुम्बनके स्थान हैं और रागातिशय होनेसे सभी अङ्ग चुम्बनके स्थान हैं) इस वात्स्यायनोक्त वचनके अनुसार अथवा—'नयनगल्लकपोलदन्तवासोमुखान्तस्तनयुगलललाटं वा चुम्बनस्थानम्, स्तने चूचुकं परिहृत्येति विशेषः' इस वचनके अनुसार रतिकालमें स्त्रीके स्तन (बालकपेय स्तनाग्रभाग (चूचुक) को छोड़कर) का भी चुम्बन करनेका विधान है॥

**वीक्ष्य वीक्ष्य पुनरैक्षि साऽमुना पर्यरम्भि परिरभ्य चासकृत्।**
**चुम्बिता पुनरचुम्बि चादरात्तृप्तिरापि न कथञ्चनापि च॥ १०१॥**

**वीक्ष्येति। अमुना नलेन, सा भैमी, आदरात् आग्रहातिशयात्, पदमिदं चुम्बनालिङ्गनयोरपि योज्यम्। वीक्ष्य वीक्ष्य पुनः पुनर्दृष्ट्वाऽपि, पुनः भूयः, ऐक्षि ईक्षिता, असकृत् वारं वारम्, आदरात् परिरभ्य आलिङ्ग्यापि, पर्यरम्भि पुनः परिरब्धा। 'रभेरशब्लिटोः' इति नुमागमः। तथा आदरात् चुम्बिता कृतचुम्बनाऽपि, पुनश्च भूयोऽपि, अचुम्बि चुम्बिता। कथञ्चनापि केनापि प्रकारेण, तृप्तिः आकाङ्क्षापूर्त्तिः, न च आपि नैव प्राप्ता। रागातिरेकात् इति भावः। सर्वत्र कर्मणि लुङ्॥ १०१॥**

इस (नल) ने इस (दमयन्ती) को आदरपूर्वक देख-देखकर फिर देखा, वार-वार आलिङ्गनकर फिर आलिङ्गन किया और चुम्बनकर फिर चुम्बन किया; किन्तु किसी प्रकार भी तृप्ति को नहीं प्राप्त किया अर्थात् आदरपूर्वक वार-वार दमयन्तीको देखने, आलिङ्गन करने तथा चुम्बन करनेपर भी पुनः उन कार्योंको करनेकी प्रबल इच्छा ज्यों-की-त्यों मनमें बनी ही रही॥ १०१॥

**छिन्नमप्यतनु हारमण्डलं मुग्धया सुरतलास्यकेलिभिः।**
**न व्यतर्कि सुदृशा चिरादपि स्वेदबिन्दुकितवक्षसा हृदि॥ १०२॥**

**छिन्नमिति। मुग्धया सुरतमोहितचित्तया, सुदृशा सुनयनया, भम्येति शेषः। सुरतानि रमणान्येव, लास्यकेलयः नृत्यक्रीडाः तैः, हृदि वक्षोपरि, स्थितमिति शेषः।**

अतनु महत्, हारमण्डलं मुक्ताकलापः, छिन्नं त्रुटितमपि, स्वेदबिन्दवः एव स्वेदबिन्दुकाः घर्मोदककणाः । स्वार्थे कः ते अस्य सञ्जाताः इति स्वेदबिन्दुकितं सुरतश्रमजन्यघर्मबिन्दुयुक्तम् । 'तारकादित्वादितच्' । वक्षः उरःस्थलं यस्याः तादृशया सत्या, चिरात् दीर्घकालेनापि, न व्यतर्कि न व्यभावि, छिन्नेति न अज्ञायि इत्यर्थः । स्वेदबिन्दुषु हारभ्रमादिति भावः । अतएव भ्रान्तिमदलङ्कारः ॥ १०२ ॥

( सुरतानन्दसे ) मुग्ध सुलोचना ( दमयन्ती ) ने छातीपर सुरतरूप ( या-सुरतसम्बन्धी ) नृत्यक्रीडाओंसे टूटो ( नाभिपर्यन्त लटकती ) हुई बड़ी मुक्तामालाको ( सुरतश्रमजन्य ) स्वेदबिन्दुओंसे तारकित वक्षःस्थलवाली होनेसे ( स्वेदबिन्दुओंमें ही मुक्तामालाका भ्रम होनेके कारण ) देरतक नहीं जान सकी ॥ १०२ ॥

यत् तदीयहृदि हारमौक्तिकैरासि तत्र गुण एव कारणम् ।
अन्यथा कथममुत्र वर्त्तितुं तैरशाकि न तदा गुणच्युतैः ? ॥ १०३ ॥

यदिति । तदीये भैमीसम्बन्धिनि, हृदि वक्षसि, अन्तःकरणे च, हारमौक्तिकैः हारस्थितमुक्तावलीभिः, यत् आसि अवस्थितम् । आसेर्भावे लुङ् । तत्र स्थितौ, गुणः एव मुक्तानां छिद्रान्तर्वर्त्तिसूत्रमेव, सूत्रेण ग्रथितत्वमेवेत्यर्थः । कान्तिमत्त्वादिगुण एव च, कारणं हेतुः । अन्यथा तद्वैपरीत्ये, तदा सुरतकाले, गुणच्युतैः गुणभ्रष्टैः, तैः हारमौक्तिकैः, अमुत्र अस्मिन् वक्षसि मनसि च, वर्त्तितुं स्थातुम्, कथं कस्मात्, न अशाकि ? न शक्तम् ? अच्छिन्नसूत्रैः कतिपयमौक्तिकैरेव तत्र स्थितं न पुनश्छिन्नसूत्रांशैः, ततो गुण एव अत्र कारणम् अन्यथा पतनप्रसङ्गादनुपादेयत्वाच्चेति भावः॥

उस ( दमयन्ती ) की छातीपर ( पक्षा०—चित्तमें ) हारके जो मोती ठहरे थे, उस ( ठहरने ) में गुण ( हारमें गुथा हुआ सूत्र-धागा, पक्षा०—कान्तियुक्तत्वादि गुण ) ही कारण था; अन्यथा ( यदि उक्त गुण ही वहां ठहरनेमें कारण नहीं होता तो ) उस समयमें अर्थात् सुरतक्षणमें गुण ( उक्त सूत्र—धागा, पक्षा०—कान्तिमत्त्वादि गुण ) से हीन वे ( हारके मोती ) वहांपर ( दमयन्तीकी छातीपर, पक्षा०—चित्तमें ) क्यों नहीं ठहर सके ? [ दमयन्तीके वक्षःस्थलपर ( पक्षा०—चित्तमें ) गुणवान् ही ठहर सकते थे, अत एव गुणहीन ( सूत्रहीन, कान्तिमत्त्वादि गुणरहित ) मुक्तामणि उसके वक्षःस्थलपर ( पक्षा०—चित्तमें ) नहीं ठहर सके । इससे सुरतकालमें मुक्ताहारका टूटकर मुक्तामणियोंका नीचे गिर जाना, तथा नलके गुणवान् होनेसे दमयन्तीके उभयविध हृदय ( बाह्य वक्षःस्थल तथा आभ्यन्तर अन्तःकरण ) में सर्वदा वर्तमान रहना सूचित होता है ] ॥ १०३ ॥

एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः ।
छायया ऽन्यहृदये ऽपि भूषणं भ्रान्तिवारिभरभाविते ऽभवत् ॥१०४॥

एकेति । तदा तत्काले, तयोः दमयन्तीनलयोः मध्ये, एकस्मिन् नले एव, वृत्तिः अवस्थानं यस्याः सा तादृशी अपि, नलवक्षःस्थिता अपीत्यर्थः । मौक्तिकावलिः मुक्ता-

हारः, छिन्ना त्रुटिता, हारविलतिः विस्तृतहारो यस्य तादृशे। भाषितपुंस्कत्वात् पुंवद्भावः। श्रान्तिवारिभरेण सुरतश्रमोद्भूतस्वेदपूरेण, भाविते आप्लुते, अन्यस्याः भैम्याः, हृदये वक्षसि। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः, इति पुंवद्भावः। छायया प्रतिविम्बेन, विभूषणम् अलङ्करणम्, अभवत् अजायत। अत्र एकस्यैव हारस्य उभयत्र भूषणत्वेन असम्बन्धेऽपि सम्बन्धोक्तेः तद्रूपातिशयोक्तिरलङ्कारः॥ १०४॥

उस समय (सुरतकाल) में उन दोनों (दमयन्ती तथा नल) में से एक (नल) के वक्षःस्थलपर लटकती हुई भी मुक्तामाला सुरत-श्रमजन्य स्वेदविन्दुसे व्याप्त दमयन्तीके वक्षःस्थलपर प्रतिविम्बित होनेसे (दमयन्तीके वक्षःस्थलका) भी भूषण वन गयी। [सुरतकालमें हारके टूट जानेसे हारहीन, किन्तु सुरतके परिश्रमसे स्वेदविन्दुओंसे युक्त दमयन्तीके वक्षःस्थलमें प्रतिविम्बित सम्मुखस्थ नलके वक्षःस्थलका हार ही उस (दमयन्तीके वक्षःस्थल) का भी हार वन गया। दमयन्ती सुरतजन्य श्रमसे स्वेदयुक्त हो गयी तथा उक्त मुक्ताहार भी टूट गया]॥ १०४॥

वामपादतललुप्तमन्मथश्रीमदेन मुखवीक्षिणाऽनिशम्।
भुज्यमाननवयौवनाऽमुना पारसीमनि चचार सा मुदाम्॥१०५॥

वामेति। वामपादस्य सव्यचरणस्य, तलेन अधःप्रदेशेन, अत्यन्तापकृष्टावयवेनेति भावः। लुप्तः हृतः, मन्मथस्य कामस्य, श्रियः मदः सौन्दर्यदर्पः येन तादृशेन, अतिसुन्दरेणेत्यर्थः। अनिशं निरन्तरम्, मुखवीक्षिणा दमयन्तीवदनदर्शिना, अमुना नलेन, भुज्यमानम् उपभोगं कुर्वन्तं, नवयौवनम् अभिनवतारुण्यं यस्याः तादृशी, सा भैमी, मुदाम् आनन्दानाम्, पारसीमनि चरमावस्थायाम्, चचार विचरितवती नलसम्भोगात् परमानन्दमाप इत्यर्थः॥ १०५॥

वामचरणतल (शरीरका अतिशय तुच्छ अवयव, पक्षा०—सुन्दर पादतल) से कामदेवके सौन्दर्यमदको नष्ट करनेवाले अर्थात् कामदेवसे भी अत्यधिक सुन्दर (तथापि—अर्थात् इतना अधिक सुन्दर होने पर भी स्वानन्दवृद्ध्यर्थ) सर्वदा (दमयन्तीके) मुखको देखते रहनेवाले इस (नल) के द्वारा भोग किये जाते हुए नवयौवनवाली वह (दमयन्ती) हर्षोंकी दूसरी सीमापर घूमने लगी अर्थात् अत्यधिक हर्षित हुई॥ १०५॥

आन्तरानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत।
नेत्रयोरमृतसारपारणां तद्विलोकनमचिन्तयन्नलः॥ १०६॥

आन्तरानिति। नलः तस्याः दमयन्त्याः, अङ्गसङ्गमैः बाह्यावयवसम्पर्कैः, आन्तरान् आभ्यन्तरानपि, न केवलं वक्षःप्रभृतिवहिरवयवानिति भावः। अवयवान् अन्तःकरणादीन् अंशान्, तर्पितान् प्रीणितान्, अमन्यत अबुध्यत। तथा तस्याः

१. अत्र वहुव्रीहिसमासत्वेन कर्मप्रत्ययान्तस्य प्रथमान्तस्यौचित्याच्चिन्त्यमिदं कर्तृप्रत्ययान्तं द्वितीयान्तं पदम्।

भैम्याः, विलोकनं साक्षात्कारम्, नेत्रयोः स्वाक्ष्णोः, अमृतस्य पीयूषस्य, सारेण उत्कृष्टांशेन, पारणाम् उपवासानन्तरमाहारविशेषमिव, अचिन्तयत् अभावयत्। तद्वत् तृप्तिबोधादिति भावः॥ १०६॥

नलने उस (दमयन्ती) के अङ्गों (बाह्याङ्गों) के स्पर्शसे (अपने) आभ्यन्तर (बाह्याङ्गसे अस्पर्शनीय) अङ्गोंको भी तृप्त हुआ माना तथा उस (दमयन्ती) के देखनेको दोनों नेत्रोंकी अमृतके सारभूत अंशसे पारणा समझा। [नलने बार-बार दमयन्तीका आलिङ्गन तथा दर्शनकर अतिशय हर्ष प्राप्त किया]॥ १०६॥

बह्वमन्यत विदर्भजन्मनो भूषणानि स दृशा न चेतसा।[1]
तैरभावि कियदङ्गदर्शने यत् पिधानमयविघ्नकारिभिः॥१०७॥

बह्विति। सः नलः, विदर्भजन्मनः वैदर्भ्याः, भूषणानि आभरणानि, दृशा दृष्ट्या एव, बहु अमन्यत अत्यर्थं समादृतवान्, दमयन्त्यङ्गस्पर्शसौभाग्यलाभादिति भावः। चेतसा मनसा, न, बहु अमन्यत इति शेषः। कुतः? यत् यस्मात्, तैः भूषणैः, कियताम् अङ्गानां प्रकोष्ठादीनां केषाञ्चिदवयवानाम्, दर्शने विलोकने, पिधानमयं छादनरूपम्, विघ्नं प्रत्यूहम्, कुर्वन्तीति तादृशैः, दृष्टिव्याघातोत्पादकैरित्यर्थः। अभावि भूतम्। अतः भूषणबहुमानः नातिपुष्कलः इति भावः॥ १०७॥

उस (नल) ने विदर्भकुमारी (दमयन्ती) के भूषणोंको दृष्टिसे ही अतिशय आदर किया, मनसे नहीं (पाठा०—इस (नल) ने प्रिया (दमयन्ती) को आश्रित अर्थात् शरीरमें पहने गये भूषणोंसे पहले सन्तुष्ट हुए, (किन्तु) बादमें विचार करते हुए खिन्न हुए; क्योंकि) वे (भूषण) दमयन्तीके कुछ अङ्गोंके देखनेमें उन्हें आच्छादित करने (ढकने—छिपाने) के कारण विघ्नकारक हो रहे थे। [दमयन्तीके अङ्गस्पर्शसे सौभाग्य-लाभ होनेसे उन भूषणोंको देखकर पहले नलको हर्ष हुआ, किन्तु बादमें 'यदि ये भूषण नहीं होते तो दमयन्तीके उन अङ्गोंको भी देखनेका मुझे सौभाग्य प्राप्त होता, जिन अङ्गोंको ये भूषण छिपा रहे हैं' ऐसा विचार करनेसे मानसिक हर्ष नहीं हुआ। रतिकालमें भूषणोंका हटा देना ही कामशास्त्र-सम्मत होनेसे यहां उनके धारण किये रहनेका वर्णन, विलम्ब-सहनमें अशक्त होनेके कारण नलका हठ सुरत करनेमें प्रवृत्त होना, या—सम्पूर्ण भूषणोंको नहीं हटाना दोषरहित होनेसे किया गया समझना चाहिये। नलने अतिशय सौन्दर्य-सम्पन्न दमयन्तीके अङ्गोंसे हीन सौन्दर्यवाले भूषणोंका अधिक आदर नहीं किया]॥१०७॥

योजनानि परिरम्भणेऽन्तरं रोमहर्षजमपि स्म बोधतः।
तौ निमेषमपि वीक्षणे मिथो वत्सरव्यवधिमध्यगच्छताम्॥ १०८॥

योजनानीति। तौ भैमीनलौ, परिरम्भणे आलिङ्गनकाले, रोमहर्षात् सात्त्विकभा-

1. 'भूषणैरनुपदाश्रितैः प्रियां प्रागथ व्यपददेष भावयन्' इति पाठं व्याख्याय 'बह्वमन्यत—' इति मूलोक्तपाठं सुगममाह 'प्रकाश'कारः।

चोदयेन रोमाञ्चात्, जातम् उत्पन्नम्, अन्तरमपि तन्मात्रव्यवधानमपि, योजनानि बहुयोजनव्यवधानानीत्यर्थः । बोधतः स्म अबुध्यताम् । बोधतेर्भौवादिकाद् भूते 'लट् स्मे' इति लट् । तथा मिथः अन्योऽन्यम्, वीक्षणे दर्शनविषये, निमेषमपि अक्षिवर्त्मनिमीलनोन्मीलनकालव्यवधानमपि, वत्सरव्यवधिं वर्षकालव्यवधानम्, अध्यगच्छतां मन्येते स्म । अनुरागाधिक्यादिति भावः ॥ १०८ ॥

उन दोनों ( नल तथा दमयन्ती ) ने आलिङ्गनमें रोमाञ्चजन्य व्यवधान ( दूरी ) को भी अनेक योजन दूर समझा तथा परस्पर देखनेमें निमेष ( पलक गिरने ) को भी वर्षोंका व्यवधान होना समझा ॥ १०८ ॥

वीक्ष्य भावमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टिमे मृदुम् ।
कोऽयमित्युदितसम्भ्रमीकृतां स्वानुबिम्बमददर्शदेष ताम् ॥ १०९ ॥

अथानयोः च्युतिसुखं पञ्चभिर्वर्णयति, वीक्ष्येत्यादि । एषः नैषधः, तां प्रियां, मृदुं कोमलां, परिश्रमासहिष्णुत्वात् श्लथावयवामिति यावत्, अत एव पूर्वम् आत्मनः प्राक्, भावं च्युतिसुखावस्थाम्, अधिगन्तुं प्राप्तुम्, उत्सुकाम् इच्छन्तीं, वीक्ष्य गाढालिङ्गनादिलिङ्गैः ज्ञात्वा, कोऽयम् ? अयं कः अत्र समागतः ? इति, उक्त्वा इति शेषः, उदितः सञ्जातः, सम्भ्रमः भयचकितभावो यस्याः सा उदितसम्भ्रमा, अतां तां कृताम् उदितसम्भ्रमीकृताम् । अभूततद्भावे च्विः । प्रियामिति शेषः । अच्छे निर्मले, प्रतिबिम्बग्राहिणि इत्यर्थः । मणिकुट्टिमे रत्ननिबद्धभूमौ, स्वानुबिम्बं निजप्रतिबिम्बम्, अददर्शत दर्शितवान् । मत्प्रतिबिम्बदर्शनात् भ्रान्तं मया इति तस्याः त्रासम् अपाचकार इत्यर्थः । दृशेर्णौ चङि 'णिचश्च' इति तङ् । 'अभिवादिदृशोरात्मने पदे वेति वाच्यम्' इति अणिकर्तुः कर्मत्वम् । उभयोर्युगपद्भावप्राप्तये तस्याः प्राक् पातं व्यासङ्गेन प्रत्यबध्नात्, अन्यथा वैरस्यं स्यादिति भावः ॥ १०९ ॥

( अब इन दोनोंके च्युतिसुखका पांच श्लोकों ( १८।१०९–११३ ) से वर्णन करते हैं– ) इस ( नल ) ने उस ( दमयन्ती ) को ( अधिक सुरतश्रम नहीं सह सकनेके कारण ) शिथिल अवयवोंवाली ( अत एव नलसे ) पहले च्युतिसुखावस्थाके लिए उत्सुक अर्थात् च्युतिसुखको चाहती हुई देखकर 'यह कौन है ?' ( ऐसा कहने पर किसी दूसरे व्यक्तिके आनेकी आशङ्कासे ) उत्पन्न भय तथा आश्चर्यसे युक्त हुई उस प्रियाको मणियोंके निर्मलतम कुट्टिम ( फर्श ) पर अपना प्रतिबिम्ब दिखलाया । [ दमयन्ती अतिशय मृदु होनेसे सुरतश्रमको अधिक नहीं सह सकनेके कारण शिथिलाङ्गी होकर नलसे पहले ही स्खलित बिन्दु होना चाहती थी, किन्तु ऐसा होनेपर सुरतके आनन्दके मध्यमें ही भङ्ग होना अनुचित होनेसे नलने 'यह कौन है ?' ऐसा कहा, जिससे सुरत जैसे गोप्यतम समयमें दूसरेका उपस्थित हो जाना असह्य होनेसे दमयन्ती सहसा चकित एवं भयार्त हो गयी तथा 'कहां कौन आ गया ?' ऐसा नलसे पूछा तो उन्होंने मणिमयी भूमिमें पड़ती हुई अपनी परछाहींको

दिखाकर 'मैंने इसे ही बाहरसे आया हुआ दूसरा आदमी समझकर 'यह कौन है ?' ऐसा तुमसे कह दिया था' ऐसा कहकर 'अन्यचित्ततया सम्भ्रमजननेन च भावबन्धनं कुर्यात्' (अन्यचित्त करके या सम्भ्रमोत्पादनकर भावबन्धन करना चाहिये' इस कामशास्त्रोक्त वचनके अनुसार उसके भावबन्धनको किया ] ॥ १०९ ॥

तत्क्षणावहितभावभावितद्वादशात्मसितदीधितिस्थितिः।
आत्मनोऽनभिमतक्षणोदयां भावलाभलघुतां नुनोद सः ॥ ११० ॥

तदिति। सः नलः, तस्मिन् क्षणे आसन्नच्युतिसमये, अवहितभावेन अवहितत्वेन, एकाग्रतया इति यावत्। भाविता ध्याता, द्वादशात्मसितदीधित्योः सूर्याचन्द्रमसोः, स्थितिः नभोदेशे अवस्थानक्रमः येन सः तादृशः सन्, तेन च विषयान्तरनिविष्टतया च्युतिनिरोध इति भावः। आत्मनः स्वस्य, अनभिमतक्षणे अनभिप्रेतकाले, उदयः प्रादुर्भावः यस्याः तादृशीम्, भावलाभस्य च्युतिसुखप्राप्तेः, लघुताम् आशुभावितताम्, नुनोद निवारयामास। 'तत्काले हृदि सोमार्कधारणात् सिद्धिः' इति रतिरहस्ये। अत्र पुंस एव शक्त्याधिक्योक्त्या योषितो वहुशक्तिप्रयुक्तरसाभालशङ्काऽपि समूलकाषकषितेति द्रष्टव्यम् ॥ ११० ॥

उस (सुरतके) समयमें सावधान मनसे सूर्य तथा चन्द्रमाकी नभोमण्डलमें स्थितिका ध्यान किये (अथवा—……सूर्य-चन्द्रसंज्ञक 'ईडापिङ्गला' नाडियोंमें स्थित वायुको रोके) हुए उस (नल) ने अपने अभिलषित सुरतकालीन भावोदय (वीज-स्खलन) को रोका। [पहले दमयन्तीका स्खलन रोकनेके बाद जब अपना स्खलन उससे पहले होने लगा तो नलने सूर्य-चन्द्रकी आकाश-स्थितिका एकाग्रमनसे ध्यान करनेमें मनको दूसरी ओर लगाकर 'अन्यचित्ततया सम्भ्रमजननेन च भावबन्धं कुर्यात्' इस कामशास्त्रोक्त वचनके अनुसार अपने वीजस्खलनको रोका। अथवा—सूर्य-चन्द्रसंज्ञक ईडा तथा पिङ्गलानामक क्रमशः दहने तथा वांये नाडियोंमें स्थित वायुको रोककर 'दक्षिणनासामुद्रणे पुरुषस्य, वामनासिकामुद्रणे योषितो विन्दुस्तम्भो भवति' (दाहनी नाक वन्द करनेपर अर्थात् 'ईडा' संज्ञक नाडीमें स्थित वायुको रोकनेपर पुरुषका और वांयी नाक वन्द करनेपर पिङ्गलासंज्ञक नाडीमें स्थित वायुको रोकनेपर स्त्रीका विन्दुस्तम्भ (स्खलननिरोध) होता है।) इस कामशास्त्रोक्त वचनके अनुसार क्रमशः अपने तथा दमयन्तीके भी स्खलनको नलने रोका]॥

स्वेन[1] भावभजने[2] स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः।
निर्ममे रतरहः समापनाशर्मसारसमसंविभागिनीम् ॥ १११ ॥

स्वेनेति। तु पुनः, सः नलः, भावभजने च्युतिसुखप्राप्तिविषये, बाहुमूलयोः कक्षदेशयोः, कुचयोः स्तनयोः, नाभौ नाभिदेशे च, चुम्बनैः पुनरुद्दीपनार्थं चुम्बनरूपैः

१. 'स्वां प्रियामभि—' इति 'प्रकाश' सम्मतं पाठान्तरम्। २. 'भावजनने' इति पाठान्तरम्।

उपायैः, स्वेन आत्मना सह, प्रियां दमयन्तीम्, रतरहसः सुरतरहस्यस्य, समापनायां समाप्तिकाले, यः शर्मसारः च्युतिसुखोत्कर्षः, तत्र समसंविभागिनीं समानसुखभागिनीम्, निर्ममे चक्रे । युगदेवोभयोर्बीजनिःसरणात् समानसुखभागित्वमिति भावः । एतेन तयोर्विप्रलम्भवत् सम्भोगस्यापि समानशक्तित्वमुक्तं भवतीत्यनुसन्धेयम् ॥ १११॥

फिर नलने स्खलन-सुख-प्राप्तिके विषयमें ( दमयन्तीके ) दोनों काँख, स्तन तथा नाभिमें चुम्बनोंसे अपने साथ सुरतरहस्यकी समाप्तिमें स्खलनसुखाधिक्यके समान भागवाली उस दमयन्तीको बनाया [ दोनोंके एक समयमें ही स्खलन होनेसे नलने दमयन्तीको भी अपने समान ही स्खलनसुखको प्राप्त कराया । इससे विप्रलम्भके समान दोनोंमें सम्भोग-सुखका भी समानशक्ति होना सूचित होता है ] ॥ १११ ॥

विश्लथैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्रताम् ।
सूचितं श्वसितसीत्कृतैश्च तौ भावमक्रमजमध्यगच्छताम् ॥ ११२ ॥

विश्लथैरिति । तौ भैमीनलौ, विश्लथैः शिथिलप्रायैः, अवयवैः हस्तपादाद्यङ्गैः, निमीलया उत्कटसुखानुभवजनितनेत्रनिमीलनेन । भिदादित्वादङ् । द्रुतं हठात्, विनिद्रताम् उद्भेदम, इतैः प्राप्तैः, कण्टकितैरित्यर्थः । लोमभिः रोमभिः, रोमाञ्चोद्गमैरित्यर्थः । तथा श्वसितानि श्रमजनितद्रुतनिःश्वासाः, सीत्कृतानि सीत्काराश्च तैः, सूचितं ज्ञापितम्, 'स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम् । श्लेषयत् स्वजघनं घनं मुहुः सीत्कृतानि गलगर्जितानि च ॥' इत्युक्तत्वादिति भावः । अक्रमात् पौर्वापर्यं विहाय, जायते इति अक्रमजं युगपज्जातम्, भावं पातसुखम्, अध्यगच्छतां प्राप्तवन्तौ, ज्ञातवन्तौ वा । एवञ्च उभयोः समरागिता सम्भवति, अन्यथा पूर्वच्युतस्य उत्तरच्याविनि वैराग्येण तद्भङ्गप्रसङ्गः इति भावः ॥ ११२ ॥

उन दोनों ( दमयन्ती तथा नल ) ने शिथिल ( हाथ-पैर आदि ) अङ्गोंसे ( श्रम या अधिक सुखसे उत्पन्न ) नेत्र-निमीलनसे, तत्काल हुए रोमाञ्चोंसे- शीघ्रगति श्वासवायुसे और सीत्कारसे सूचित बीज-स्खलनको एक साथ प्राप्त किया अर्थात् दोनोंका एक साथ स्खलन हुआ ॥ ११२ ॥

आस्त भावमधिगच्छतोस्तयोः सम्मदेषु करजप्रसर्पणा[१] ।
फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा ॥ ११३ ॥

आस्तेति । भावं च्युतिसुखम्, अधिगच्छतोः प्राप्नुवतोः, तयोः दम्पत्योः, करजप्रसर्पणा पुनरपि मिथो नखक्षतकरणम्, सम्मदेषु आनन्दलाभेषु, आस्त स्थिता, अन्तर्भूता इत्यर्थः । ननु नखक्षतं वेदनाजनकमपि कथमानन्देषु अन्तर्भूतमित्याशङ्क्याह-सा नखक्षतक्रिया, कटुः तीक्ष्णा अपि कटुरसा अपि च । 'रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः' इत्यमरः । फाणितेषु खण्डविकारेषु । 'मत्स्यण्डी फाणितं

१. 'क्षतार्पणा—' इति पाठान्तरम् ।

खण्डविकारे' इत्यमरः। मरिचस्य अवचूर्णना चूर्णैः अवध्वंसना, तच्चूर्णमिश्रणमित्यर्थः। 'सत्याप—' इत्यादिना ण्यन्तात् 'ण्यासश्रन्थो युच्' इति युच्। स्फुटं व्यक्तम्, अत एव स्पृहावहा रुचिकरी। या इयं सम्मर्देषु नखार्पणा सा फाणितेषु मरिचार्पणावत् इष्टा इव अभूदित्यर्थः। अत्र वाक्यार्थयोः सादृश्ययोगेन सादृश्याक्षेपाद् असम्भवद्वस्तुसम्बन्धलक्षणो वाक्यार्थवृत्तिनिदर्शनाभेदोऽलङ्कारः ॥ ११३ ॥

भाव ( बीज-स्खलन ) को प्राप्त करते हुए उन दोनों ( दमयन्ती तथा नल ) का नखक्षत करना ( नखविलेखन ) आनन्दोंमें हुआ अर्थात् आनन्दप्रद हुआ, क्योंकि दूध या शक्करके बनाये हुए पानक-विशेषमें कड़वा भी मिर्चका चूर्ण डालना रुचिकारक होता है। ( अथवा—अनेक विध सुरतमें स्खलितवीज होते हुए उन दोनोंका नखक्षत करना दूध या शक्करके बने हुए पानक-विशेषमें कटु भी मरिच-चूर्ण डालनेके समान रुचिकारक हुआ। अथवा—स्खलितवीज होते हुए उन दोनोंके अनेकविध सुरतमें रुचिकर नखक्षत करना दूध या शक्करके बने पानक-विशेषमें कटुरस मरिचके चूर्ण डालना ही ( या—चूर्ण डालनेके समान ) हुआ ) ॥ ११३ ॥

अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा ।
यन्मुहूर्त्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यतः ॥ ११४ ॥

अर्द्धेति। निधुवनक्लमालसा सुरतश्रमेणावसन्ना, सा भैमी, मुहूर्त्तं किञ्चित्कालमपि, यत् अर्द्धमीलिते ईषत्सङ्कुचिते, च ते विलोलतारके चञ्चलकनीनिके चेति ते तादृश्यौ। 'तारकाऽक्ष्णः कनीनिका' इत्यमरः। दृशौ नेत्रे, अवहत् अधारयत्, अकारयदित्यर्थः। तत् तादृशीमवस्थामित्यर्थः। पश्यतः विलोकयतः, दयितस्य प्रियस्य नलस्य पुनः, तृप्तिः आकाङ्क्षापूर्त्तिः, न आस्त नासीत्। अतिरमणीयत्वात् पुनः पुनरेव तामवस्थां ददर्श स मुग्धो नलः इति भावः ॥ ११४ ॥

सुरतश्रमसे आलसयुक्त उस ( दमयन्ती ) ने जो कुछ समय तक अर्द्धनिमीलित ( आधे बन्द ) एवं चञ्चल पुतलियोंवाले नेत्रोंको धारण किया, उसे वार-वार देखते हुए प्रियतम ( नल ) को तृप्ति नहीं हुई अर्थात् आलससे अर्द्धनिमीलितनयना दमयन्तीको नल वार-वार बहुत विलम्ब तक देखते ही रह गये ॥ ११४ ॥

तत्क्लमस्तमदिदीक्षत क्षणं तालवृन्तचलनाय नायकम् ।
तद्विधाधिभवधूननक्रिया वेधसोऽपि विदधाति चापलम् ॥ ११५ ॥

तदिति। तस्याः दमयन्त्याः, क्लमः श्रान्तिः, तं नायकं स्वामिनं नलम्, क्षणं क्षणकालम्, तालवृन्तचलनाय व्यजनवीजनाय। 'व्यजनं तालवृन्तकम्' इत्यमरः। अदिदीक्षत दीक्षयति स्म, प्रावर्त्तयदित्यर्थः। तथा हि तद्विधः तादृशः, यः आधिः श्रमकातर्यं, तद्भवे तदुद्भूते सन्तापे, धूननक्रिया व्यजनसञ्चालनम्, व्यजनक्रियया

---

१. 'तद्विधा हि भवदैवतं प्रिया' इति 'प्रकाश' सम्मतं पाठान्तरम् ।

सुरतश्रान्तिशान्तिचेष्टेत्यर्थः । वेधसः जितसर्वेन्द्रियस्य लोकपितामहस्य ब्रह्मणोऽपि, चापलं तरलताम्, तत्करणार्थं चित्तचाञ्चल्यमित्यर्थः । विदधाति जनयति, किमुतान्यस्येति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ११५ ॥

उस ( दमयन्ती ) की थकावटने नलको कुछ समयतक पंखा करनेके लिए दीक्षित किया अर्थात् सुरतश्रान्त दमयन्तीको देखकर नल पंखासे हवा करने लगे, क्योंकि विचलित कर देती । वैसी ( सुरतश्रमजन्य ) आधिमें उत्पन्न तापमें पंखेका हाँकना (पाठा०—संसार ( संसारसुखसर्वस्व ) की वैसी ( दमयन्ती-जैसी परमसुन्दरी ) प्रिया ) ब्रह्माको भी ( उस पंखे हाँकनेके लिए ) विचलित कर देती है ( तो मनुष्य नलके विषयमें क्या कहना है ? ) ॥

स्वेदबिन्दुकितनासिकाशिखं तन्मुखं सुखयति स्म नैषधम् ।
प्रोषिताधरशयालुयावकं संविलुप्ततिलकं कपोलयोः ॥ ११६ ॥

स्वेदेति । स्वेदविन्दुकिता सञ्जातघर्मविन्दुका, नासिकाशिखा नासाग्रं यस्य तादृशम्, प्रोषिताधरशयालुयावकम् अधरपानात् प्रमृष्टौष्ठगतालक्तकम्, कपोलयोः गण्डयोः, संविलुप्ततिलकं चुम्बनादेव विनष्टविशेषकम् । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । तस्याः दमयन्त्याः, मुखं वदनम्, नैषधं नलम्, सुखयति स्म आनन्दयामास ॥ ११६ ॥

( सुरतश्रमजन्य ) स्वेदबिन्दुसे युक्त नासिकाग्रभागवाला ( अधरपान करनेके कारण ) अधरस्थित अलक्तकसे रहित तथा ( चुम्बनकरनेसे ) तिलक (चन्दनादिरचित मकरिकादि चिह्न-विशेष ) से रहित ( पाठा०—आधा नष्ट रोमाञ्चवाले ) कपोलोंवाला दमयन्तीका मुख नलको सुखी कर रहा था । [ उक्तरूप दमयन्तीके मुखको देखते हुए नल परमानन्दित हो रहे थे । इस श्लोकके पूर्वार्द्ध तथा उत्तरार्द्ध भागको परस्परमें परिवर्तितकर पढ़ना चाहिये, अन्यथा द्वितीय पादमें ही अर्थ-समाप्ति हो जाती है, अतः तृतीय-चतुर्थ पादोंकी सङ्गति पुनः द्वितीय पादके साथ करनेसे यहां 'समाप्तपुनरात्त' नामक काव्य-दोष होता है ] ॥११६॥

ह्रीणमेव पृथु सस्मयं कियत् क्लान्तमेव बहु निर्वृतं मनाक् ।
कान्तचेतसि तदीयमाननं तत्तदालभत लब्धमादरात्[3] ॥ ११७ ॥

ह्रीणमिति । पृथु एव भूयिष्ठमेव, ह्रीणं लज्जितम्, सुरतकालिकनिजाचरणस्मरणादिति भावः । कियत् किञ्चित्, सस्मयं सगर्वम्, सुरते कान्तं सन्तोषयितुं निजसामर्थ्यस्मरणादिति भावः । तथा बहु एव बाहुल्येनैव, क्लान्तं परिश्रान्तम्, बहुक्षणं व्याप्य सुरतपरिश्रमादिति भावः । ईषत् मनाक्, निर्वृतं सुखितम्, कामवेगस्य किञ्चित् प्रशमादिति भावः । तदीयं दमयन्तीसम्बन्धि, तत् लज्जागर्वादिभावसमावेशादतिमनोज्ञम्, आननं मुखम्, तदा तत्काले, सुरतावसाने इत्यर्थः । कान्तचेतसि

१. 'साभिलुप्तपुलकम्' इति पाठान्तरम् । २. 'सस्मरम्' इति पाठान्तरम् ।
३. 'अत्र पूर्वोत्तरार्द्धे व्यस्यस्ते पठनीये, अन्यथा समाप्तपुनरात्तदोषापातः' इति ।

**नलहृदये, आदरात् पुनरपि रमणाग्रहात्, लक्षं व्याजम्, उद्दीपकतया पुनः सुरताय हेतु स्वरूपमित्यर्थः । अलभत प्राप्नोत्, बहुमतमभूदित्यर्थः । सर्वावस्थामनोहरं तन्मुखमिति भावः ॥ ११७ ॥**

उस सुरतान्तकालमें (रतिकालमें किये गये अपने कामचापल्यजन्य व्यापारके स्मरणसे) बहुत ही लज्जित, ( रतिकालमें पतिको सन्तुष्ट करनेकी अपनेमें शक्ति होनेसे ) कुछ गर्व-सहित ( पाठा०—( सुरतकी अभिलाषाके स्मरण आनेसे ) कुछ कामोद्दीप्त ), ( रतिकालमें अधिक श्रम होनेसे ) अतिशय थका हुआ तथा ( कामवेगके कुछ शान्त होनेसे ) कुछ सुखी दमयन्तीका मुख प्रिय ( नल ) के चित्तमें आदरसे अर्थात् रमण करनेके आग्रहसे लक्ष ( बहाना—व्याज ) को पाया अर्थात् वैसे दमयन्तीके मुखको देखकर नलके चित्तमें पुनः कामोद्दीपन हो गया । (अथवा—नलके विषयमें लाखों पाया [अर्थात् अधिक श्रेष्ठताको प्राप्त किया ) ॥ ११७ ॥

**स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा यथा ।**
**नैषधस्य दृगपात् तथा तथा चित्रमापदपतृष्णतां न सा ॥ ११८ ॥**

**स्वेदेति । नैषधस्य नलस्य, दृक् दृष्टिः, स्वेदवारिणा धर्मोदकेन, परिपूरितं सम्भृतम्, प्रियायाः भैम्याः, रोमकूपाणां लोमच्छिद्राणाम्, निवहं समूहम्, यथा यथा येन येन, यावता परिमाणेनेत्यर्थः । अपात् पिबति स्म । पिबतेर्लुङि 'गातिस्था—' इत्यादिना सिचो लुक् । सा दृष्टिः, तथा तथा तेन तेन, तावता परिमाणेनेत्यर्थः । अपतृष्णतां पिपासानिवृत्तिम्, न आपत् नालभत, वितृष्णा नाभूदित्यर्थः । इति चित्रम् आश्चर्यम्, बहुकूपसम्भृतोदकपानेऽपि तृष्णा न अपगता इति विरुद्धमित्यर्थः । लोकोत्तरवस्तुदर्शने तृष्णावर्द्धते एवेति विरोधाभासोऽलङ्कारः॥**

नलकी दृष्टि ( नेत्र ) ने ( सुरतश्रमजन्य ) पसीनेके जलसे परिपूर्ण हुए दमयन्तीके रोमकूप-समूहको जैसे-जैसे अर्थात् जितनी अधिक मात्रामें पान किया ( दमयन्तीके रोम-रोमसे निकलते हुए पसीनेको जितना ही देखा ), उस ( नल-दृष्टि ) ने वैसे-वैसे अर्थात् उतना ही अधिक मात्रामें तृप्तिको नहीं प्राप्त किया अर्थात् सन्तुष्ट नहीं हुई, यह आश्चर्य है । [ अधिकसे-अधिक भी प्यासा हुआ व्यक्ति अञ्जलि आदिसे पानी पीकर भी पिपासा शान्तकर सन्तुष्ट हो जाता है, किन्तु ऊपरतक जलसे परिपूर्ण दमयन्ती-रोम-कूप-समूहके ( जलको ) अत्यधिक पीनेपर भी नल-दृष्टिकी पिपासा बनी ही रही ( नहीं शान्त हुई ) यह आश्चर्य है । लोकोत्तर वस्तु देखनेसे उसे पुनः पुनः देखनेकी इच्छा बनी ही रहती है, यह उक्त विरोधका परिहार है । उक्तरूप दमयन्तीको बार-बार देखकर नलका काम पुनः उद्दीप्त हो गया ] ॥ ११८ ॥

**वान्तमाल्यकचहस्तसंयमन्यस्तहस्तयुगया स्फुटीकृतम् ।**

---

१. 'वीत—' इति पाठान्तरम् ।

वाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्यजलधौ ममज्ज सः ॥ ११९ ॥

वान्तेति । सः नलः, वान्तम् उद्गीर्णम्, परित्यक्तमित्यर्थः । प्रबलरमणवेगज-सञ्चालनेनेति भावः । 'वान्त' इत्यत्र 'वीत' इति पाठान्तरं साधु । माल्यं कुसुम-स्रक् येन तादृशस्य कचहस्तस्य केशपाशस्य, संयमे बन्धने, न्यस्तं निवेशितम्, हस्तयुगं करद्वयं यया तादृशया, अनया भैम्या, स्फुटीकृतं हस्तोत्तोलनेन व्यक्ती-कृतम्, उज्ज्वलं सुन्दरम्, तत् अतिमनोहरम्, वाहुमूलं कक्षदेशम् वीक्ष्य दृष्ट्वा, सौख्यजलधौ आनन्दसागरे, ममज्ज निमग्नीभूतः । वाहुमूलदर्शनस्य उद्दीपकत्वा-दिति भावः ॥ ११९ ॥

( सवेग रति करनेसे ) गिरे हुए मालाके पुष्पोंवाले केश-समूहको दोनों हाथोंसे बांधती हुई इस ( दमयन्ती ) के द्वारा ( उन हाथोंको ऊपर उठानेसे ) प्रदर्शित श्रेष्ठतम बाहुमूल ( काँख ) को देखकर वे ( नल ) सुख-समुद्रमें डूब गये । [ रतिकालमें केशसे मालाके फूलोंके गिरने तथा केशोंके खुल जानेपर उन केशोंको बांधते समय हाथोंको ऊपर उठानेसे उसके बाहुमूलको देखकर नलको अतिशय सुख हुआ ] ॥ ११९ ॥

वीक्ष्य पत्युरधरं कृशोदरी बन्धुजीवमिव भृङ्गसङ्गतम् ।
मञ्जुलं नयनकज्जलैर्निजैः संवरीतुमशकत् स्मितं न सा ॥ १२० ॥

वीक्ष्येति । कृशोदरी क्षीणमध्या, सा दमयन्ती, मञ्जुलं मनोहरम् , पत्युः नलस्य, अधरं दशनच्छदम् , निजैः स्वकैः, नयनकज्जलैः नेत्राञ्जनैः, नेत्रचुम्बनसङ्क्रान्तैरिति भावः । भृङ्गसङ्गतम् अलिचुम्बितम् , बन्धुजीवं बन्धूकपुष्पम् इव स्थितम् वीक्ष्य दृष्ट्वा, स्मितं मन्दहासम् , संवरीतुं निरोद्धम् , न अशकत् न शक्ताऽभूत्, हासः प्रसक्तः एवेति भावः ॥ १२० ॥

कृशोदरी ( पतली कटिवाली ) वह ( दमयन्ती ) अपनी आँखोंके कज्जलोंसे मनोहर ( अत एव ) भ्रमरयुक्त बन्धूकपुष्प ( दुपहरियाका फूल ) के समान, पतिके अधरको देखकर मुस्कानको नहीं रोक सकी । [ रतिकालमें नलने दमयन्तीके नेत्रका चुम्बन किया था, अतः उसका काजल उनके अधरमें लगकर ऐसा मालूम पड़ता था कि दुपहरियाके फूलपर भ्रमर बैठा हो, उसे देख दमयन्ती अपने मुस्कानको नहीं रोक सकी, किन्तु मुख फेरकर थोड़ा मुस्कुरा ही दिया ] ॥ १२० ॥

तां विलोक्य विमुखश्रितस्मितां पृच्छतो हसितहेतुमीशितुः ।
ह्रीमती व्यतरदुत्तरं वधूः पाणिपङ्करुहि दर्पणार्पणाम् ॥ १२१ ॥

तामिति । तां दमयन्तीम् , विमुखं पराङ्मुखं यथा तथा, श्रितस्मितां कृतमन्द-हासाम् , विलोक्य दृष्ट्वा, हसितहेतुं स्मितकारणम् , पृच्छतः जिज्ञासयतः, ईशितुः पत्युः नलस्य, पाणिपङ्करुहि करपद्मे, ह्रीमती लज्जावती, वधूः नवोढा भैमी, दर्पणा-र्पणां मुकुरप्रदानरूपमेव, उत्तरं व्यतरत् अदात् । अधरे कज्जलरेखादर्शनार्थमिति भावः ॥ १२१ ॥

मुख फेरकर मुस्कराती हुई उसे ( दमयन्तीको ) देखकर मुस्कुराने का कारण पूछते हुए पतिके हस्तकमलमें लज्जावती वधू ( दमयन्ती ) ने दर्पण ( देकर उत्तर ) दे दिया अर्थात् स्वयं कुछ नहीं कहकर मुख देखनेके लिए उनके हाथमें दर्पण दे दिया ॥ १२१ ॥

लाक्षयाऽऽत्मचरणस्य चुम्बनाच्चारुभालमवलोक्य तन्मुखम् ।
सा ह्रिया नतनताननाऽस्मरच्छेषरागमुदितं पतिं निशः ॥ १२२ ॥

**लाक्षयेति । सा भैमी, आत्मचरणस्य निजपादतलस्य, चुम्बनात् रतिप्रार्थनाकाले ललाटे एव स्पर्शकरणात् हेतोः, लाक्षया अलक्तकेन, निजचरणालक्तकस्पर्शेनेत्यर्थः । चारुभालं रम्यललाटम् , तस्य नलस्य , मुखम् आननम् , अवलोक्य दृष्ट्वा, ह्रिया भर्तृकर्तृकचरणपतनस्मरणजलज्जया, नतनतानना अतिनम्रमुखी सती, उदितं प्राप्तोदयम् , शेषरागं तदानीमपि किञ्चिदवशिष्टलौहित्यम् , निशः निशायाः । 'पद्-न्नोमास्—' इत्यादिना निशायाः निशभावः । पतिं नाथं चन्द्रम् , अस्मरत् स्मृतवती ललाटस्य अर्द्धचन्द्राकृतित्वात् तत्र निजपादालक्तकरागसंस्पर्शाच्च मुखस्य तादृशचन्द्र-तुल्यत्वमिति भावः । स्मरणालङ्कारः ॥ १२२ ॥**

(प्रणयकुपित दमयन्तीको प्रसन्न करनेके लिए उसके चरणपर गिर कर रमण से, या—'पद्मिनी' जातीया दमयन्तीका 'पद्मबन्ध' नामक आसन-विशेष करके रमण करनेसे ) चुम्बन ( छूने ) से अपने ( दमयन्तीके ) चरणोंके लाक्षारस ( महावर ) से सुन्दर ललाटवाले नलमुखको देखकर ( उस समयकी अपनी धृष्टताका स्मरण होनेके कारण उत्पन्न हुई ) लज्जासे अतिशय नीचे मुखकी हुई उस ( दमयन्ती ) ने थोड़ी बची हुई लालिमावाले उदित निशापति (चन्द्रमा) का स्मरण किया। [दमयन्तीके चरणालक्तक रससे रक्तवर्ण ललाटवाले प्रियमुखको देखकर ईषद्रक्तवर्ण चन्द्रमाको देखनेसे जितनी प्रसन्नता होती है, उतनी प्रसन्नता हुई । ईषद्रक्तवर्ण नलका ललाट ईषदरुणिमायुक्त अर्द्धचन्द्रवत् सुन्दर था ] ॥ १२२ ॥

स्वेदभाजि हृदयेऽनुबिम्बितं वीक्ष्य मूर्त्तमिव हृद्गतं प्रियम् ।
निर्ममे धुतरतश्रमं निजैर्ह्रीनताऽतिमृदुनासिकानिलैः ॥ १२३ ॥

**स्वेदेति । स्वेदभाजि स्विन्ने, हृदये वक्षसि, अनुबिम्बितं प्रतिबिम्बितम् , अत एव हृद्गतं नियतचिन्तया हृदयावस्थितम् , चिन्तनीयत्वादमूर्त्तमपीति भावः । प्रियं कान्तं नलम् , मूर्त्तं मूर्त्तिमन्तमिव, वीक्ष्य दृष्ट्वा, ह्रीनता लज्जाऽवनता, दमयन्तीति शेषः । निजैः स्वीयैः, अतिमृदुभिः अतिकोमलैः, मन्दवेगैरित्यर्थः । नासिकानिलैः निःश्वासमारुतैः, धुतः निरस्तः, रतश्रमः सुरतजनितक्लमः यस्य तादृशम् , निर्ममे चकार, इवेति शेषः । तस्य श्रममपनुदतीव स्थिता इत्युत्प्रेक्षा ॥ १२३ ॥**

स्वेदयुक्त अपने हृदयमें प्रतिबिम्बित ( अत एव निरन्तर चिन्तन करनेसे ) हृदयस्थ प्रिय ( नल ) को मूर्तिमान्के समान देखकर लज्जासे नम्रमुखी उस दमयन्तीने अपने अतिशय मन्द निश्श्वासवायुसे ( सुरतमें उत्पन्न ) श्रमसे रहित-सा कर दिया । ( अथवा—

( नलके ललाटमें अपने चरणका महावर लगा हुआ देखकर सुरतकालकी अपनी धृष्टताका स्मरण होनेसे उत्पन्न ) लज्जासे नतमुखी दमयन्तीने स्वेदयुक्त अपने हृदयमें""" ) । [ लज्जानम्र नासिकाके श्वासका हृदयस्थ प्रियके श्रमका दूर करना उचित ही है । वैसी दमयन्तीको देखकर नल सुरतश्रमरहित होकर हर्षित हो गये तथा वैसे प्रिय नलको देखकर दमयन्ती भी हर्षसे मन्द-मन्द निःश्वास छोड़ने लगी ] ॥ १२३ ॥

सूनसायकनिदेशविभ्रमैरप्रतीततरवेदनोदयम् ।
दन्तदंशमधरेऽधिगामुका साऽस्पृशन्मृदु चमच्चकार च ॥१२४॥

सूनेति । सा भैमी, सूनसायकस्य पुष्पबाणस्य, कामस्येत्यर्थः । निदेशविभ्रमैः आज्ञाविलासैः, अप्रतीततरः अतिशयेनाज्ञातः, 'अप्रतीतचरः' इति पाठः साधुः । अप्रतीतचरः पूर्वं किमपि अज्ञात इत्यर्थः । वेदनोदयः व्यथोत्पत्तिः यस्मिन् तं तादृशम् , मदनपारवश्यात् प्राक् अज्ञानमानदुःखमित्यर्थः । अधरे निजोष्ठे, दन्तदंशं नलस्य दन्तेन दंशनम् , अधिकामुका जानती, वेदनया अनुभवन्ती सती । 'लषपत—' इत्यादिना उकञ् , 'नलोक—' इत्यादिना षष्ठीप्रतिषेधः । मृदु मन्दं यथा तथा, अस्पृशत् करतलेन दन्तदंशं परामृशदित्यर्थः । चमच्चकार च किमेतत् ? कदा जातमिति साश्चर्या बभूव च ॥ १२४ ॥

कामाज्ञाके विलासोंसे पूर्वानुभवरहित वेदनावाले दन्तक्षतको इस समय अर्थात् सुरतके अन्तमें जानती हुई वह ( दमयन्ती ) धीरेसे स्पर्श की और आश्चर्यित हो गयी । [ सम्भोगकालमें नलके द्वारा किये गये अधर-दंशनकी पीड़ाका अनुभव दमयन्तीको नहीं हुआ, किन्तु सम्भोगके बादमें जब अङ्गुलिसे अधरका स्पर्श किया तो उसकी पीड़ासे वह सहसा आश्चर्यित हो गयी कि—अरे ! यह कब तथा कैसे हुआ ? ] ॥ १२४ ॥

वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसाऽर्जितमुरोजयोरियम् ।
कान्तमैक्षत हसस्पृशं कियत्कोपसङ्कुचितलोचनाञ्चला ॥१२५॥

वीक्ष्येति । इयं भैमी, प्रेयसा प्रियतमेन नलेन, अर्जितम् उत्पादितम् , कृतमित्यर्थः, उरोजयोः निजकुचयोः, करजस्य विभ्रमं नखक्षतरूपं विलासम् , वीक्ष्य वीक्ष्य दृष्ट्वा दृष्ट्वा, कियत् किञ्चित् , कोपेन रोषेण, सङ्कुचितौ कुटिलीकृतौ, लोचनाञ्चलौ नेत्रप्रान्तौ, कटाक्षावित्यर्थः । यया सा तादृशी सती, हसं हास्यम् , स्पृशति परामृश्यतीति हसस्पृशं हसन्तम् , कान्तं नलम् , ऐक्षत दृष्टवती ॥ १२५ ॥

---

१. 'सूननायक—' इति पाठान्तरम् , तत्र 'कामस्य' पुष्पनायकत्वं कथमिति विचार्यं सुधीभिः । २. 'अत्र 'चमत्कृता कियत्' इति 'जीवातु' सम्मतः पाठः' इति म० म० शिवदत्तशर्माणः । ३. 'कोपकुञ्चितविलोचनाञ्चला' इति 'प्रकाश' सम्मतं पाठान्तरम् । अत्र म० म० शिवदत्तशर्माणः—'कोपसङ्कुचितलोचनाञ्चलाम्' इति 'जीवातुः' इत्याहुः, परमत्र द्वितीयान्तं कथमिति त एव जानन्तु ।

इस ( दमयन्ती ) ने प्रियतम ( नल ) के द्वारा किये गये दोनों स्तनोंपर नखोंके विलास अर्थात् नखक्षतको देख-देखकर अर्थात् बार-बार देखकर थोड़े क्रोधसे सङ्कुचित ( अर्द्धनिमीलित ) नेत्रवाली होती हुई हँसते हुए पति ( नल ) को देखा ॥ १२५ ॥

रोषभूषितमुखीमिव प्रियां वीक्ष्य भीतिदरकम्पिताक्षरम् ।
तां जगाद स न वेद्मि तन्वि ! तं ब्रूहि शास्मि तव कोपरोपकम् ॥१२६॥

रोषेति । सः नलः, तां पूर्वोक्तरूपकोपसङ्कुचितलोचनाञ्चलाम्, प्रियां दमयन्तीम्, रोषेण कोपेन, भूषितमुखीम् आरक्तवर्णतया अलङ्कृताननामिव, स्थितामिति शेषः । वीक्ष्य विलोक्य, भीत्या भयेन, दरकम्पिताक्षरम् ईषच्चलाक्षरं यथा तथा, जगाद उवाच । किमिति ? तन्वि ! हे कृशाङ्गि !, तव ते, कोपरोपकं क्रोधजनकम्, जनमिति शेषः । न वेद्मि न जानामि । तम् अपराधिनं जनम्, ब्रूहि कथय । शास्मि दण्डयामि । अहमिति शेषः ॥ १२६ ॥

( पूर्व ( १८।१२५ ) श्लोकानुसार ) मानो क्रोधसे भूषित ( पाठा०—( भ्रूभङ्गादिके कारण ) रूक्ष ) मुखवाली ( वस्तुतः क्रोधरहित ) प्रिया ( दमयन्ती ) को देखकर उस (नल)ने उस (दमयन्ती) से भयसे गद्गद वचन कहा—'हे तन्वि ! मैं नहीं जानती हूँ, उसे कहो, मैं तुम्हारे क्रोध उत्पन्न करनेवाले व्यक्तिको दण्डित करूँ ( पाठा०—हे तन्वि ! मैं उसे नहीं जानता हूँ कि तुम्हारे क्रोधको किसने उत्पन्न किया ? अर्थात् किसके अपराध करनेसे तुम्हें क्रोध हुआ ? ) । [ 'नहीं जानता हूँ' ऐसा कहकर नल स्वयंकृत नखक्षतरूप अपराधको दमयन्तीसे छिपाकर असत्य भाषण करते हैं । उपहास वचन होनेसे ऐसा कहनेपर नलको असत्य भाषणका दोष नहीं लगता है ] ॥ १२६ ॥

रोषकुङ्कुमविलेपनान्मनाक् नन्ववाचि कृशतन्ववाचि ते ।
भूदयुक्तसमयैव रञ्जना माऽऽनने विधुविधेयमानने ॥ १२७ ॥

रोषेति । ननु अये ! कृशतनु ! क्षीणाङ्गि ! सम्बुद्धौ नदीह्रस्वः । अवाचि अवनते । अवपूर्वादञ्चतेः क्विन् । अवाचि वाचंयमे, वाग्विरहिते इत्यर्थः । तथा विधुना चन्द्रेणापि, विधेया कर्त्तव्या, मानना पूजा यस्य तादृशे, विधोरपि उत्कृष्टे इत्यर्थः । ते तव, आनने मुखे, अयुक्तः अनुचितः, समयः कालो यस्याः तादृशी, रमणाकाङ्क्षाया अपरितृप्तत्वेन इदानीं प्रसन्नताया एवौचित्यादिति भावः । रोषः कोप एव, कुङ्कुमं काश्मीरजम्, तस्य विलेपनात् प्रलेपाद्धेतोः, मनाक् ईषदपि, रञ्जना रक्तिमा, मा भूत् एव न भवत्वेव । निष्कलङ्के मुखे रोषकलङ्कस्य नेदानीं कालः इति निष्कर्षः ॥१२७॥

( नलने और भी कहा कि )—हे कृश शरीरवाली ! हे ( क्रोधके कारण ) मौन धारण की हुई ! हे नम्रीभूते ! हे ( अपनी अपेक्षा तुम्हारे मुखके अतिशय सुन्दर होनेसे ) चन्द्रमा

---

१. '—रूषित—' इति 'प्रकाश' सम्मतः पाठः । २. 'कथ्यकार तव कोपरोपणाम्' इति 'प्रकाश'कृता व्याख्याय 'ब्रूहि शास्मि तव कोपरोपिणम्' इति पाठान्तरमुक्तम् ।

द्वारा माननीये (प्रिये)! तुम्हारे मुखपर अप्राप्त समयवाली अर्थात् असामयिकी, क्रोपरूपी कुङ्कुमके लेपसे थोड़ी भी लालिमा न होवे अर्थात् तुम इस प्रसन्नताके समयमें कोप मत करो [ अथ च—निष्कलङ्क अपने मुखपर असामयिक रोषकलङ्क लाकर उसे दूषित मत करो अर्थात् मैंने यह कोई अपराधका कार्य नहीं किया है, अत एव असामयिक क्रोधसे मुखको लाल मत करो। अथवा—यह सम्भोगका समय (रात्रि) है, कोपका समय नहीं है अत एव इस समय कोप मत करो। अथवा—तुम्हारा मुख चन्द्रमासे भी अधिक सुन्दर है, इसी कारण वह तुम्हारी मानना (आदर) करता है, अत एव यदि क्रोधयुक्त मुख करोगी तो वह चन्द्रमासे हीन कान्तिवाला हो जायेगा, अत एव यह क्रोधका समय नहीं होनेसे उसे छोड़ दो। अथवा—शीतकालमें उष्णप्रकृतिक कुङ्कुमसे मुखरञ्जन किया जाता है, इस वसन्तकालमें तो श्वेत चन्दनकी पाण्डुता ही मुखको शोभित करेगी, अत एव कोप-कुङ्कुमसे मुखको रञ्जित करनेका समय नहीं है, वैसा (कोपसे, पक्षा०—कुङ्कुमसे) मुखको रञ्जित करना छोड़ दो ] ॥ १२७ ॥

**क्षिप्रमस्यतु रुजा नखादिजास्तावकीरमृतशीकरं किरत् ।**
**एतदर्थमिदमर्जितं मया कण्ठचुम्बि मणिदाम कामदम् ॥१२८॥**

क्षिप्रमिति। हे प्रिये! कण्ठचुम्बि गलदेशविलम्बि, कामदम् अभीष्टपूरकम्, इदं दृश्यमानम्, मणिदाम रत्नमालिका। कर्त्तृ। अमृतशीकरं सुधाबिन्दुम्, किरत् वर्षत् सत्, नखादिजाः नखदन्तक्षतादिजन्याः, तावकीः त्वदीयाः, रुजाः पीडाः, भिदादित्वादङ्प्रत्ययः। क्षिप्रं शीघ्रम्, अस्यतु दूरीकरोतु, मया एतदर्थं क्षतादिजपीडानिरासार्थम् एव, अर्जितं सङ्गृहीतम्, इदं मणिदामेति शेषः ॥ १२८ ॥

(नलने दमयन्तीसे पुनः कहा—) कण्ठमें लटकती हुई, इच्छा (मनोरथ) को पूर्ण करनेवाली यह मणिमाला अमृतकणको बरसाती हुई नख आदि (दन्तके क्षत) से उत्पन्न तुम्हारी पीड़ाको शीघ्र शान्त कर दे, इसी वास्ते (नखक्षत एवं दन्तदंशसे उत्पन्न तुम्हारी पीड़ाको शान्त करनेके लिए ही) मैंने इसका संग्रह किया है। पाठा०—······पूर्ण करनेवाली, मुझसे इस (नखक्षतजन्य तथा दन्तदंशजन्य तुम्हारी पीड़ाको दूर करने) के लिए प्रार्थित (प्रियाकी नखक्षत तथा दन्तक्षतसे उत्पन्न पीड़ाको शीघ्र दूर कर दो ऐसा प्रार्थित) अत एव अमृतकणोंको फेंकती (बरसाती) हुई नख आदि (दन्तके क्षत) से उत्पन्न तुम्हारी पीड़ाओंको शीघ्र शान्त कर दे ॥ १२८ ॥

**स्वापराधमलुपत् पयोधरे मत्करः सुरधनुः करस्तव ।**
**सेवया व्यजनचालनाभुवा भूय एव चरणौ करोतु वा ॥ १२९ ॥**

स्वेति। हे प्रिये! तव ते, पयोधरे स्तने, मेघे च। 'पयोधरः कोपकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि' इति मेदिनी। सुरधनुः इन्द्रचापाकृति नखाङ्कम्,

---

१. '—मर्थितम्' इति पाठान्तरम्। २. 'एष' इति पाठान्तरम्।

इन्द्रचापश्च करोतीति तादृशः । 'दिवाविभा—' इत्यादिना टप्रत्ययः । मत्करः मम पाणिः, करः सूर्यकिरणश्च, व्यजनस्य तालवृन्तस्य, चालनया सञ्चालनेन, वायुप्रवाहणेन च, भवति सम्पादयतीति तादृशया, सेवया परिचर्यया, स्वापराधं नखक्षतकरणजनितनिजदोषम्, अलुपत् नुनोद, प्रागेवेति भावः । लुम्पेः लृदित्त्वात् च्लेरङादेशः । भूय एव पुनरपि, चरणौ वा तव पादौ वा, करोतु धातूनामनेकार्थत्वात् सेवतामित्यर्थः । सामान्ये विशेषलक्षणा ॥ १२९ ॥

( नलने दमयन्तीसे पुनः कहा कि—हे प्रिये ! ) तुम्हारे स्तन पर ( पक्षा०—मेघमें ) इन्द्रधनुप ( रक्तवर्ण एवं वक्राकार होनेसे इन्द्रधनुषतुल्य नखक्षत ) को करनेवाला मेरा हाथ ( पक्षा०—सूर्य-किरण ) पङ्खा झेलनेकी सेवासे पहले ही अपने ( नखक्षतरूप ) अपराधको नष्ट कर दिया, अथवा फिर भी दोनों चरणोंको दबावे अर्थात् दबाकर अपने अवशिष्ट अपराधको भी नष्ट करे । [ अथवा—चरणोंको सम्भोगार्थ ऊपर उठावे । अथवा—अनेक वर्णोंवाले रत्नोंसे जड़ी हुई अँगूठियोंसे युक्त मेरे हाथने तुम्हारे स्तनपर इन्द्रधनुषको बनाया है, अथवा—पयोधर ( स्तन ) पर सम्भोगकालमें रक्तवर्ण, वक्र नखक्षतरूप इन्द्रधनुष बनाया है तथा पक्षा०—मेघमें इन्द्रधनुष बनाया है, अत एव ( क्रमशः रत्नकिरणोंसे इन्द्रधनुष बनाने पर पीड़ा होनेसे, अथवा—सम्भोगकालमें नखक्षत करना दूषित नहीं होनेसे, अथ च पक्षा०—मेघमें इन्द्रधनुष बनाना दोषकारक नहीं होनेसे ) मेरे हाथने कोई अपराध ही नहीं किया था, तथापि यथाकथञ्चित् अपराध किया माननेपर भी पङ्खा झेलकर सेवा करनेसे उस हाथने उस अपराधका परिमार्जन कर दिया, इतनेपर भी यदि तुम क्रोध करती हो तो अब वह हाथ तुम्हारे पैर दबाकर ( पैरोंपर पड़कर ) अपने अपराधका मार्जन कर ले, क्योंकि पैरोंपर पड़नेसे तो बड़े अपराधका भी मार्जन हो जाता है, अतः वैसा करनेके लिए मैं तैयार हूँ, इस कारण तुम क्रोध मत करो ] ॥ १२९ ॥

आननस्य मम चेदनौचिती निर्दयं दशनदंशदायिनः ।
शोध्यते सुदति ! वैरमस्य तत् किं त्वया वद विदश्य नाधरम् ? ॥१३०॥

आननस्येति । हे प्रिये ! निर्दयं निष्कृपं यथा तथा, दशनदंशं दन्तेन दंशनम्, ददाति करोतीति तादृशस्य, ते अधरं दष्टवतः इत्यर्थः । मम आननस्य मन्मुखस्य, अनौचिती अन्यायता, चेत् यदि तर्हि हे सुदति ! सुन्दरदशने ! त्वया भवत्या, अधरं मम ओष्ठम्, विदश्य—दष्ट्वा, दन्तक्षतं कृत्वेति यावत् । अस्य मदाननस्य, तत् पूर्वोक्तरूपम्, वैरं शत्रुता, किं कथं शोध्यते ? न निर्यात्यते ? न प्रतिक्रियते ? इत्यर्थः । वद तत् कथय । मद्दशनदंशस्य प्रतिदंशनमेव प्रतीकारः इति भावः ॥१३०॥

यदि निर्दयतापूर्वक दन्तदंशन करनेवाले मेरे मुखका अनुचित कार्य है तो हे सुदति ! इस ( मेरे मुख ) के अधरको सम्यक् रूपसे दंशनकर उसका बदला क्यों नहीं चुका लेती ? कहो ॥ १३० ॥

दीपलोपमफलं व्यधत्त यस्ते[1] पटाहृतिषु मच्छिखामणिः ।
नो तदागसि परं समर्थना सोऽयमस्तु पदपातुकस्तव ॥ १३१ ॥

दीपेति । हे प्रिये ! ते तव, पटाहृतिषु वस्त्राकर्षणकालेषु, यः मच्छिखामणिः मम चूडारत्नम्, दीपलोपं स्वकर्तृकदीपनिर्वापणम्, अफलं व्यर्थम्, व्यधत्त चकार, स्वप्रभया आलोकोत्पादनात् तव प्रयत्नं निष्फलीचकार इत्यर्थः । तदागसि तस्मिन् अपराधे, परम् उत्कृष्टम्, समर्थना अनुमोदनम्, तदपराधस्य यौक्तिकत्वसमर्थनमित्यर्थः । नो न, अस्तीति शेषः । अत एव सः अयं शिखामणिः, तव ते, पदपातुकः पादपाती 'लषपत—' इत्यादिना उकञ् । अस्तु भवतु । प्रणिपातेन एवापराधप्रमार्जनं करोतु इत्यर्थः ॥ १३१ ॥

जिस मेरे मुकुटमणिने तुम्हारे वस्त्रोंके अपहरण करने ( हटाने ) में ( अपनी प्रभासे ) दीप बुझाना व्यर्थ कर दिया, उस अपराधमें कोई समर्थन नहीं है अर्थात् यह मुकुटमणि अपने किये हुए उस कार्य को किसी प्रकार उचित नहीं प्रमाणित कर सकता, अत एव वह ( मुकुटमणि ) तुम्हारे चरणोंपर गिरे अर्थात् अपराध-मार्जनका दूसरा कोई उपाय नहीं होनेसे तुम्हारे चरणोंपर गिरकर ही अपने पूर्वकृत अपराधको क्षमा करावे [ क्योंकि लोकमें भी कोई अपराधी अपने अपराधको चरणोंपर गिरकर क्षमा-याचना करता है तथा सज्जन लोग उसे क्षमा भी कर देते हैं, अत एव चरणोंपर गिरनेसे तुम्हें भी इसके अपराधको क्षमा कर देना चाहिये ] ॥ १३१ ॥

इत्थमुक्तिमुपहृत्य कोमलां तल्पचुम्बिचिकुरश्चकार सः ।
आत्ममौलिमणिकान्तिभङ्गिनीं तत्पदारुणसरोजसङ्गिनीम् ॥ १३२ ॥

इत्थमिति । सः नलः, इत्थम् उक्तप्रकाराम, कोमलां ललितपदाम्, उक्तिं वाणीम्, उपहृत्य उपायनीकृत्य, तस्याः सन्तोषविधानाय उपढौकनवत् प्रयुज्येत्यर्थः । तल्पचुम्बिनः शय्यास्पर्शिनः, मस्तकनमनादिति भावः । चिकुराः स्वकेशाः यस्य सः तादृशः सन्, आत्ममौलिमणिकान्तिः निजशिरोरत्नप्रभा एव, भङ्गिनी तरङ्गिणी, तरङ्गप्रवाहवत् कुटिलतया प्रसरणात् नदीत्यर्थः । ताम्, तत्पदे भैमीचरणावेव, अरुणसरोजे कोकनदद्वयम्, तत्सङ्गिनीं तद्युक्ताम् चकार विदधे । तत्पादयोर्नमश्चकार इत्यर्थः । नद्यो हि रक्तनीलकमलादियुक्ता भवन्तीति प्रसिद्धिः ॥ १३२ ॥

इस प्रकार ( १८।१२६-१३१ ) मृदु वचन कहकर ( प्रणाम करनेसे ) शय्याका स्पर्श कर रहा है केश जिसका ऐसे उस ( नल ) ने अपने मुकुटरत्नों की कान्तिरूपिणी नदीको उस ( दमयन्ती ) के चरणरूपी रक्तकमलसे युक्त कर दिया । [ उक्त मृदुवचन कहनेके उपरान्त नल दमयन्तीके चरणोंपर नम्र हुए तो उनके केश पलङ्गको छूने लगे तथा उनके मुकुटरत्नोंकी कान्ति दमयन्तीके अरुणवर्ण चरणोंपर फैल गयी तो ऐसा मालूम पड़ता था कि

---

१. 'यस्त्वत्पदा—' इति पाठान्तरम् ।

रत्नकान्तिरूपिणी नदी चरणरूप रक्तकमलसे युक्त हो रही है। नदीमें रक्तकमलका होना उचित ही है। ऐसा मृदु वचन कहकर नलने पलङ्गपर बैठी हुई दमयन्तीके चरणोंको नतमस्तक होकर प्रणाम किया ] ॥ १३२ ॥

तत्पदाखिलनखानुबिम्बनैः स्वैः समेत्य समतामियाय सः ।
रुद्र[1]भीतिविजिगीषया रतिस्वामिनोपदशमूर्त्तिताभृता ॥ १३३ ॥

तदिति। सः नलः, स्वैः आत्मीयैः, तस्याः दमयन्त्याः, पदयोः चरणयोः, अखिलेषु समग्रेषु, दशस्वेति यावत्। नखेषु अनुबिम्बनैः प्रतिबिम्बैः, समेत्य मिलित्वा, दशभिः मेलनेन एकादशसङ्ख्यको भूत्वेत्यर्थः। रुद्रेभ्यः एकादशभ्यः रुद्रदेवताभ्यः, भीतेः भयस्य, विजिगीषया जेतुमिच्छया, भयात् परित्रातुमिच्छया इत्यर्थः। उप समीपे दशानाम् उपदशाः एकादश इत्यर्थः। 'सङ्ख्याव्यया–' इत्यादिना बहुव्रीहौ समासान्तो डच् टिलोपश्च। मूर्त्तयः यस्य तस्य भावः तत्ता तां बिभर्त्तीति तादृशेन, रतिस्वामिना कामेन, समतां सादृश्यम्, इयाय प्राप। एकादशरुद्रजिगीषया एकादशमूर्त्तिधारी साक्षात् काम इव अलक्ष्यत इत्युत्प्रेक्षा ॥ १३३ ॥

( प्रणाम करते हुए ) उस ( नल ) ने उस ( दमयन्ती ) के दोनों चरणोंके सब ( दशों ) नखों में अपने प्रतिबिम्बोंसे युक्त होकर रुद्र ( महाक्रोधी शिवजी ) के भय ( पाठा०—बाहुल्यता अर्थात् एकादश संख्या ) को जीतनेकी इच्छासे ग्यारह मूर्ति धारण किये हुए कामदेवकी समानताको प्राप्त किया। [ जब नल दमयन्तीको प्रसन्न करनेके लिए उसके चरणोंपर गिरे, तब उसके चरणोंके दशों नखोंमें नलका प्रतिबिम्ब पड़ गया, वह ऐसा मालूम पड़ता था कि ग्यारह रुद्रोंको अकेला जीतना अशक्य मानकर उनसे डरे हुए कामदेवने भी ग्यारह ( १० प्रतिबिम्ब तथा १ स्वयं कुल ११ ) रूप धारण कर लिया हो। इससे नलका साक्षात्कामदेवतुल्य होना तथा दमयन्तीके चरणनखोंका रत्नवत् निर्मल होना सूचित होता है ] ॥ १३३ ॥

आख्यतैष कुरु कोपलोपनं पश्य नश्यति कृशा मधोर्निशा ।
एवमेव तु निशान्तरे वरं रोषशेषमनुरोत्स्यसि क्षणम् ॥ १३४ ॥

आख्यतैष इति। हे प्रिये ! कोपस्य क्रोधस्य, लोपनं संहरणम्, कुरु विधेहि, क्रोधं परित्यज इत्यर्थः। यतः कृशा क्षीणा, अल्पपरिमाणा इत्यर्थः। मधोः वसन्तस्य, निशा रात्रिः, नश्यति अपगच्छति। पश्य अवलोकय, निशान्तरे तु अन्यस्यां रात्रौ पुनः, एवमेव इत्थमेव, क्षणं क्षणमात्रम्, न तु चिरमिति भावः। रोषशेषम् अवशिष्टक्रोधम् अनुरोत्स्यसि अनुसरिष्यसि, वरं तत्तु किञ्चित् प्रियम्, एषः नलः, आख्यत इति आह स्म। चक्षिङो लुङि ख्याञादेशे तङ्, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः ॥ १३४ ॥

---

1. 'रुद्रभ्रम–' इति पाठान्तरम् ।

( इस प्रकार दमयन्तीके चरणोंपर गिरकर ) नलने कहा—'कोपको छोड़ो, देखो, वसन्तकी छोटी ( कुछ शेष रहनेसे थोड़ी, या शीतकालकी अपेक्षा छोटी ) रात्रि नष्ट हो ( व्यर्थमें ही बीत ) रही है, ( अत एव ) फिर दूसरी ( आगामिनी—अगले दिनवाली, या—शीतकालकी ) रात्रिमें इसी प्रकार ( पाठा०—इसी ) बचे हुए कोपको क्षणमात्र करना, ( तो वैसा कुछ ठीक भी होगा )। [ दमयन्तीके चरणपतित नलने कहा—आजकल वसन्त ऋतुकी रात्रि एक तो स्वयं छोटी होती है तथा दूसरे वह थोड़ी ही शेष रह गयी है, अत एव इस समय कोप छोड़कर सम्भोगार्थ प्रसन्न होवो, हां, इस प्रकार कोपको तुम भले ही किसी दूसरी ( शीतकालकी बड़ी, या कल-परसों आदिकी ) रात्रिमें कर लेना तो वह कुछ ठीक भी होगा, अन्यथा यदि आज ही सब कोप करके उसे समाप्त कर दोगी तो दूसरी रात्रिमें कहांसे कोप करोगी, अत एव भविष्यके लिए भी कुछ कोपको बचा रखना उचित है]॥

**साथ नाथमनयत् कृतार्थतां पाणिगोपितनिजाङ्घ्रिपङ्कजा।**
**तत्प्रणामधुतमानमाननं स्मेरमेव सुदती वितन्वती॥ १३५॥**

**सेति। अथ प्रियप्रणामानन्तरम्, पाणिभ्यां कराभ्याम्, गोपिते तच्छिरःस्पर्शभयात् छादिते, निजाङ्घ्रिपङ्कजे स्वीयपादपद्मयुगलं यया तादृशी, सुदती सुन्दरदन्तशालिनी, सा भैमी, तस्य नलस्य, प्रणामेन पादपतनेन, धुतमानं दूरीभूतकोपम्, अपगतकोपचिह्नमित्यर्थः, आननं स्वमुखम्, स्मेरं सस्मितम्, वितन्वती एव कुर्वती एव, नाथं स्वामिनं नलम्, कृतार्थतां पूर्णकामम्, अनयत् प्रापितवती॥ १३५॥**

इस ( नलके प्रणाम-प्रियभाषण ) के बाद हाथोंसे अपने चरणकमलको ढकती हुई सुन्दर दाँतोंवाली उस ( दमयन्ती ) ने उस ( नल ) के प्रणामसे मानरहित मुखको स्मितयुक्त करती हुई अर्थात् मुस्कुराती हुई स्वामी ( नल ) को कृतार्थ कर दिया। [ 'स्वामीके मस्तकका मेरे चरणोंसे स्पर्श न हो' इस लिए अपने चरणोंको दोनों हाथोंसे दमयन्तीने ढक लिया तथा मान छोड़कर मुस्कुराती हुई नलको कृतकृत्य कर दिया। उसके उक्त व्यवहारसे नलको अपार हर्ष हुआ ]॥ १३५॥

**तौ मिथोरतिरसायनात् पुनः सम्बुभुक्षुमनसौ बभूवतुः।**
**चक्षमे न तु तयोर्मनोरथं दुर्जनी रजनिरल्पजीविता[1]॥ १३६॥**

**ताविति। तौ भैमीनलौ, मिथः अन्योऽन्यम्, रतिः अनुरागः एव, रसायनं जरादिजातावसादनाशकौषधविशेषः तस्मात्, 'यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्' इति वाग्भटोक्तेः। प्रथमसुरतजावसादनाशकौषधविशेषसेवनेन पुनः प्रवृत्तिहेतोः, पुनः भूयः, सम्बुभुक्षुणी सम्भोक्तुमिच्छुनी, मनसी चित्ते ययोः तादृशौ सम्भोक्तुकामौ, बभूवतुः जज्ञाते। तु किन्तु, 'दुर्जनी दुष्टजन्मा, परसुखद्वेषित्वादिति भावः। अल्पजीविता वसन्तरात्रीणाम् अतिह्रस्वत्वात् अचिरस्थायिनी, अल्पायुष्का च, रजनिः**

---

1. 'जीवना' इति पाठान्तरम्।

रात्रिः काचित् स्त्री च, तयोः दम्पत्योः, मनोरथम् अभिलाषम्, न चक्षमे न सेहे। शीघ्रमेव अवसितत्वात् विघ्नाचरणाच्चेति भावः। दुर्जनः परशुभासहोऽल्पजीवी चेति युक्तम्। रात्रेः अल्पावशिष्टत्वात् तयोः पुनः सम्भोगवाञ्छा न पूर्णा इति तात्पर्यम् ॥

वे दोनों (नल तथा दमयन्ती) परस्परमें रतिरूपी रसायन (दौर्बल्यादि-नाशक वीर्यकारक औषध-विशेषके सेवन) से फिर सम्भोग करनेके इच्छुक हो गये, किन्तु दुष्ट जन्मवाली तथा थोड़ी जीवितवाली अर्थात् थोड़ी बची हुई (पक्षा०—थोड़ी आयुवाली) रात्रिने उन दोनोंके मनोरथको नहीं सहा अर्थात् थोड़ी रात्रि शेष रहनेसे उनको पुनः सम्भोगेच्छा पूर्ण नहीं हुई। [अन्य भी कोई दुष्ट सपत्नी आदि स्त्री दम्पतिकी सम्भोगेच्छा को नहीं सहन करती] ॥ १३६ ॥

स्वप्तुमात्तशयनीययोस्तयोः स्वैरमाख्यत वचः प्रियां प्रियः।
उत्सवैरधरदानपानजैः सान्तरायपदमन्तराऽन्तरा ॥ १३७ ॥

स्वप्तुमिति। स्वप्तुं निद्रातुम्, आत्तशयनीययोः आश्रिततल्पयोः, तयोः प्रिययोः मध्ये, प्रियः नलः, प्रियां भैमीम्, अधरयोः रदनच्छदयोः, दानात् अन्योऽन्यं चुम्बनाय समर्पणात्, तथा पानात् चुम्बनाच्च, जायन्ते उत्पद्यन्ते इति तादृशैः, उत्सवैः आनन्दैः, अन्तराऽन्तरा मध्ये मध्ये, दानपानयोर्मध्ये मध्ये इत्यर्थः। सान्तरायाणि सप्रतिबन्धानि, दानपानरूपैर्विघ्नैः विच्छिद्य विच्छिद्य प्रयोज्यमानानीत्यर्थः। पदानि सुप्तिङन्तरूपशब्दाः यस्मिन् तत् तादृशम्, वचः वाक्यम्, निजप्रेमज्ञापकमिति भावः। स्वैरं यथेच्छम्, असम्बद्धरूपं यथा तथेत्यर्थः। आख्यत अवोचत् ॥ १३७ ॥

शयनार्थ शय्यापर गये हुए उन दोनोंमेंसे प्रिय (नल) ने प्रिया (दमयन्ती) से अपने अधरका दमयन्तीके द्वारा पान कराने तथा दमयन्तीके अधरका पान करनेके आनन्दोंसे बीच-बीचमें विच्छिन्न पद-समूह हो अर्थात् रुक-रुककर (एकान्त होनेसे) स्वच्छन्दतापूर्वक बोले। [शय्यापर लेटे हुए दोनों परस्परमें एक दूसरेके अधरका पान करते-कराते थे, उसी समय नलने दमयन्तीको एकान्त होनेसे स्वच्छन्दतापूर्वक वक्ष्यमाण वचन (१८।१३८-१४५) उक्त अधर-पान करने-करानेके आनन्दसे बीच-बीचमें रुककर कहने लगे।] ॥ १३७ ॥

देवदूत्यमुपगत्य निर्दयं धर्मभीतिकृततादृशागसः।
अस्तु सेयमपराधमार्जना जीवितावधि नलस्य वश्यता ॥ १३८ ॥

किं तत् वाक्यं तदेवाष्टभिराचष्टे—देवेत्यादि। हे प्रिये! देवदूत्यं देवानां दूतकृत्यम्, उपगत्य स्वीकृत्य, देवदौत्यस्वीकारहेतोरित्यर्थः। निर्दयं निष्करुणं यथा तथा, धर्मभीत्या प्रतिश्रुतिभङ्गजनितधर्मलोपभयेन, कृतम् अनुष्ठितम्, तादृक् तथाभूतम्, इन्द्रादिवरणार्थमनुरोधात् प्रतिकूलाचरणरूपमित्यर्थः। आगः अपराधः येन तादृशस्य, नलस्य अपराद्धस्य मम सम्बन्धिनी, जीवितावधि यावज्जीवम्, सा इयं क्रियमाणे-

स्यर्थः । वश्यता तव आज्ञानुवर्त्तिता, 'वशङ्गतः' इति यत्प्रत्ययः । अपराधस्य दोषस्य, मार्जना परीहारः, क्षालनीत्यर्थः । अस्तु भवतु । यावज्जीवं दास्येनापराधमिमं क्षालयिष्यामीत्यर्थः ॥ १३८ ॥

देवों ( इन्द्र, अग्नि, यम और वरुण ) के दूतकर्मको स्वीकारकर धर्मके ( यदि मैं अपनी स्वीकृत बातका पालन नहीं करूंगा तो मुझे पाप लगेगा इस प्रकारके ) भयसे वैसा ( दूत कर्म करते हुए तुम्हें कष्टदायक ) अपराध करनेवाले नलके अर्थात् मेरे जीवन पर्यन्त तुम्हारे वशमें होकर रहना उस अपराधका परिमार्जन करनेवाला होवे । [ धर्मके भयसे मैंने इन्द्रादि चारो देवोंका दूतकर्म करते हुए तुम्हें कष्ट पहुंचाकर बड़ा अपराध किया है, अत एव अबसे जीवनपर्यन्त तुम्हारे वशमें रहकर अर्थात् तुम्हारा दास बनकर वैसे महान् अपराधका मार्जन करूंगा ]॥ १३८ ॥

स क्षणः सुमुखि ! यत्त्वदीक्षणं तच्च राज्यमुरु येन रज्यसि ।
तन्नलस्य सुधयाऽभिषेचनं यस्त्वदङ्गपरिरम्भविभ्रमः ॥ १३९ ॥

स इति । सुमुखि ! हे सुवदनि ! यत् त्वदीक्षणं तव दर्शनम्, तव दर्शनलाभ इत्यर्थः । नलस्य नैषधस्य मम, सः क्षणः उत्सवः । 'अथ क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः । अनुपमानन्दजनकत्वादिति भावः । येन कर्मणा द्रव्येण वा, रज्यसि रक्ता भवसि, प्रीयसे इत्यर्थः । त्वमिति शेषः । 'कुषिरञ्जोः' इत्यादिना श्यन्, परस्मैपदञ्च । तच्च तदेव, उरु महत्, राज्यं राजत्वस्वरूपम्, तव प्रसन्नवदनदर्शनसुखस्य राज्यसुखादपि अधिकसुखकरत्वादिति भावः । यः त्वदङ्गस्य तव वक्षःस्थलाद्यवयवस्य, परिरम्भविभ्रमः आलिङ्गनलीला, तत् एव सुधया पीयूषेण, अभिषेचनं सिञ्चनम्, अमृताभिषेचनवदङ्गानां प्रहर्षजननमित्यर्थः । अवसन्नस्यापि देहस्य उत्तेजकत्वादिति भावः । त्वत्सम्बन्धं विना मे न किञ्चिदपि रोचते इति निष्कर्षः ॥ १३९ ॥

हे सुमुखि ! जो तुम्हारा दर्शन है, वही मेरा ( अनुपम आनन्दप्रद होनेसे ) उत्सव है ( अथवा—जो तुम्हारा बहुत समय तक भी दर्शन है, वह मेरे लिए ( अतिशय सुखकर होनेसे ) क्षण मात्रका समय है ), जिस ( वस्तु या-व्यापार-विशेष ) से तुम अनुराग करती हो, वही ( वस्तु, या-व्यापार-विशेष ) मेरा राज्य है ( तुम्हारे अनुरागवाली वस्तु या-व्यापार-विशेष साम्राज्यके समान मुझे सुखप्रद है, यह भूमण्डलरूप साम्राज्य वैसा सुखप्रद नहीं है ) और तुम्हारे अङ्गोंके आलिङ्गनका जो विलास है, वही नलका अर्थात् मेरा अमृताभिषेक है ( इस प्रकार हे सुमुखि ! तुम्हारे विना साम्राज्यादि कोई भी वस्तु या कार्य मुझे सुखकर नहीं है, किन्तु तुम्हीं मेरे सर्वविध सुखका साधन हो )॥ १३९ ॥

शर्म किं हृदि हरेः प्रियाऽर्पणं ? किं शिवाऽर्द्धघटनं शिवस्य वा ? ।
कामये तव सयेह तन्वि ! तं नन्वहं सरिदुदन्वदन्वयम् ॥ १४० ॥

---

१. 'महेषु' इति पाठान्तरम् ।

शर्मेति । हरेः विष्णोः, हृदि वक्षसि, प्रियायाः हरिप्रियायाः लक्ष्मीदेव्याः, अर्पणं दानम्, स्थानदानमित्यर्थः । वक्षसि धारणमिति यावत् । किं शर्म ? सुखं किम् ? नैव सुखकरमित्यर्थः । सर्वथा एकीभावाभावादिति भावः । वा अथवा, शिवस्य महादेवस्य, शिवायाः गौर्याः, अर्द्धे अर्द्धाङ्गे, घटनं निजार्द्धाङ्गसम्मेलनम्, अर्द्धनारीश्वरभावमित्यर्थः । किं शर्म ? सुखकरं किम् ? नैवेत्यर्थः । उभयोरर्द्धार्द्धाङ्गमात्रयोजनेन सर्वथा एकीभावाभावादिति भावः । तर्हि किं तत् शर्म, यत् त्वं कामयसे ? इत्याह-ननु तन्वि ! हे कृशाङ्गि ! इह अस्मिन् लोके, अहं नलः, मया सह तव ते, तं प्रसिद्धत्वेन सर्वथा प्रार्थनीयमित्यर्थः । सरिदुदन्वतोः नदीसमुद्रयोः, अन्वयं मेलनम्, तयोः संयोगमिव संयोगमित्यर्थः । नदीसागरयोरिव एकात्मत्वेन मिश्रणमिति यावत् । कामये प्रार्थये । मिथुनान्तरमेलनवत् सरित्सागरमेलने भेदानवभासात् इति भावः ॥

विष्णुके हृदयमें प्रिया (लक्ष्मी) का स्थापन करना (रहनेके लिये स्थान देना) कौन-सा सुख है ? (अथवा—सुख है क्या ?), अथवा शिवजीके शरीरार्द्धमें पार्वतीका घटित होना अर्थात् शिवजीकी अर्द्धाङ्गिनी होना कौन-सा सुख है (अथवा—सुख है क्या) ? अर्थात् उक्त दोनों कार्योंमें एकीभाव नहीं होनेसे कोई भी सुख नहीं है (अत एव) हे तन्वि ! यह मैं यहांपर अपने साथ (पाठा०—सुरत-सम्बन्धी उत्सवोंमें) नदी तथा समुद्रके अन्वय (एकीभाव) को चाहता हूं। [लक्ष्मी-विष्णुका तथा पार्वती-शिवका क्रमशः हृदयमें वास देने तथा शरीरार्द्ध समर्पण करनेपर भी पृथग्भाव बने रहनेसे अङ्ग-प्रत्यङ्गका सम्मेलन नहीं होनेके कारण परमानन्द लाभ नहीं होता, अत एव मैं जिस प्रकार नदी समुद्रमें मिलकर एकीभाव प्राप्त करनेसे कौन नदी है ? और कौन समुद्र है ? यह नहीं कहा जा सकता, वैसा ही मैं अपने साथ तुम्हारा एकीभाव चाहता हूं ] ॥ १४० ॥

दीयतां[1] मयि दृढं ममेति धीर्वक्तुमेवमवकाश एव कः ? ।
यद्विधूय तृणवद्दिवस्पतिं क्रीतवत्यसि दयापणेन माम् ॥ १४१ ॥

दीयतामिति । हे प्रिये ! मयि मद्विषये, मां प्रतीत्यर्थः । मम इति धीः तव ममत्वबुद्धिः, दृढं निश्चलं यथा तथा, दीयताम् अर्प्यतां, स्थाप्यतामित्यर्थः । भवत्या इति शेषः । एवम् इत्थम्, वक्तुं कथयितुम्, अवकाशः अवसरः एव, कः ? नैवास्तीत्यर्थः । अप्राप्तमेवार्थं लोकाः प्रार्थयन्ति प्राप्ते तु तस्या अनौचित्यादिति भावः । अवकाशाभावमेव प्रदर्शयति-यत् यस्मात्, दिवस्पतिम् इन्द्रमपि, तृणवत् तृण इव, विधूय निरस्य, परित्यज्य इत्यर्थः । दयया एव कृपारूपेणैव, पणेन मूल्येन, मां नलम्, क्रीतवती स्वीकृतवती, असि भवसि । अतः क्रीतदासे मयि प्रभोः ते ममत्वबुद्धिविषये प्रार्थनाऽवकाशो नास्त्येवेति भावः ॥ १४१ ॥

'तुम मुझे यह मेरा है, ऐसा दृढ बुद्धि करो अर्थात् दृढतापूर्वक मुझे तुम अपना

१. 'धीयतां मयि दृढा' इति पाठान्तरम् ।

समझो' ऐसा कहनेका अवसर ही कौन-सा है। क्योंकि तुमने स्वर्गाधीश इन्द्रको भी तृणतुल्य ( तुच्छ समझकर ) परित्यागकर दयारूपी मूल्यसे मुझे खरीद लिया है। [ 'जो तुमने उक्त प्रकारसे मुझे खरीद लिया है, अतः तुम मुझे अच्छी तरह अपना समझो' ऐसे कहनेका कोई भी अवसर नहीं है, क्योंकि अवास्तविक बातके लिए प्रार्थना की जाती है, वास्तविकके लिए नहीं। 'स्वर्गाधीश तथा दयारूपी मूल्य' कहनेसे यह सूचित होता है कि न तो मैं इन्द्रसे अधिक ऐश्वर्यवान् ही था और न तुमसे अधिक सुन्दर ही था, तथापि तुमने इन्द्रका तृणवत् त्यागकर जो मुझे वरा है, उसमें तुम्हारी दया ही मुख्य कारण है, अत एव उस दयाको तुम मेरे ऊपर जीवन पर्यन्त बनाये रहो, यही प्रार्थना है ]॥ १४१॥

**शृण्वता निभृतमालिभिर्भवद्वाग्विलासमसकृन्मया किल ।**
**मोघराघवविसर्ज्यजानकीश्राविणी भयचलाऽसि वीक्षिता ॥ १४२॥**

**शृण्वतेति । हे प्रिये ! आलिभिः सखीभिः सह, भवत्याः तव, वाग्विलासं कथोपकथनव्यापारमित्यर्थः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । असकृत् अनेकशः, निभृतं गूढं यथा तथा, अन्तराले अवस्थाय आत्मनोपनं कृत्वेत्यर्थः । शृण्वता आकर्णयता, मया नलेन, मोघं व्यर्थम्, सर्वसमक्षमेव अग्निपरीक्षया विशुद्धितायां प्रमाणितायामपि अकारणमेवेत्यर्थः । राघवेण रामचन्द्रेण, विसर्ज्यां त्याज्याम्, जानकीं सीताम्, शृणोति आकर्णयतीति तादृशी, किलेति वार्त्तायाम, उत्तरकाले उत्पत्स्यमानो रामचन्द्रः मिथ्यालोकापवादेन धर्मपत्नीं सीतां विसर्जयिष्यतीति समागतैः त्रिकालज्ञमुनिभिः वर्णितमुपाख्यानं सखीमुखेभ्यः शृण्वतीत्यर्थः । अत एव भयेन आत्मनोऽपि तादृशश्चेत् सम्भवेदिति भीत्या, चला सकम्पा, त्वमिति शेषः । वीक्षिता दृष्टा, असि भवसि । अत एव मयि ते ममत्वबुद्धौ नास्ति वचनावकाश इति भावः ॥ १४२॥**

अनेक बार सखियोंके साथ तुम्हारे वाग्विलासको ( देवोंके दिये हुए वरदान ( १४।९१ ) के प्रभावसे गुप्त होकर, या—प्रकारान्तरसे खम्भे आदिके आड़में छिपकर ) चुपचाप सुनते हुए मैंने ( सबके सामने अग्निपरीक्षामें निर्दोष सिद्ध होनेपर भी ) व्यर्थ ही रामचन्द्रके द्वारा छोड़ी जानेवाली सीताको सुनकर ( जिस प्रकार राम निष्कलङ्क एवं प्राणप्रिया सीताजीका त्याग करेंगे या-किया, उसी प्रकार निष्कलङ्क मुझे भी मेरे स्वामी कदाचित् त्याग न कर दें, इस प्रकार उत्पन्न हुए ) भयसे चञ्चल ( घबड़ायी हुई ) तुमको मैंने देखा है। [ जब रामके द्वारा त्याज्य सीताकी कथामात्र सुननेसे भयसे घबड़ायी हुई तुझे मैंने देखा, अत एव निश्चित कर लिया कि तुम्हारा मुझमें अपार अनुराग है, इस कारण 'तुम मुझे अच्छी तरह अपना समझो' यह कहनेका कोई अवसर हो नहीं है। सत्ययुगमें होनेवाले पूर्वकालिक नलकी अपेक्षा त्रेतामें होनेवाले परकालिक रामचन्द्र द्वारा सीताके त्यागकी चर्चा त्रिकालज्ञ महर्षियोंसे सुनी हुई सखियोंका दमयन्तीसे कहना असम्भव नहीं होनेसे असङ्गत नहीं है। अथवा—ग्रन्थकार कवि श्रीहर्षको स्वपूर्ववर्ती रामचन्द्र तथा सीताका वर्णन

दमयन्तीकी सखियोंसे कराना असङ्गत नहीं है। इससे नलके द्वारा निर्दोष दमयन्तीका भविष्यमें त्याग करना सूचित होता है ] ॥ १४२ ॥

(युगम्)

छुप्तपत्रविनिमीलितक्षुपात् कच्छपस्य धृतचापलात् पलात् ।
त्वत्सखीषु सरटाच्छिरोधुतः स्वं भियोऽभिदधतीषु वैभवम् ॥ १४३ ॥
त्वं मदीयविरहान्मया निजां भीतिमीरितवती रहः श्रुता ।
नोज्झितास्मि भवतीं तदित्ययं व्याहरद्वरमसत्यकातरः ॥ १४४ ॥

अथ युग्मेनाह, छुप्तेत्यादि । छुप्तेन स्पृष्टेन, स्पर्शमात्रेणेत्यर्थः । छुप्तेति क्वचित्पाठः 'छुपस्पर्शे' अयं पकारान्तो स्तौदादिकोऽनिटश्च । पत्रेषु पर्णेषु, यद्वा–छुप्तपत्रः स्पृष्टपर्ण एव, विनिमीलितः सङ्कुचितः, यः क्षुपः ह्रस्वशाखशिफक्षुद्रवृक्षविशेषः, लज्जालुसंज्ञक क्षुद्रशाखामूलविशिष्टवृक्ष इत्यर्थः, तस्मात् । 'ह्रस्वशाखशिफः क्षुपः' इत्यमरः । निरिन्द्रियस्यापि सेन्द्रियवत् व्यवहारदर्शनेन भौतिकोऽयमिति त्रासादिति भावः । तथा धृतचापलात् पुनः पुनः कृतसङ्कोचविस्ताररूपचाञ्चल्यात्, कच्छपस्य कमठस्य पलात् मांसात्, शुण्डारूपादिति यावत् । अस्थिवत् कठिनपदार्थमध्यात् सहसा कोमलमांसनिःसरणप्रवेशयोः अन्यत्र कुत्राप्यदर्शनजनितत्रासादिति भावः । तथा शिरोधुतः शिरो मस्तकं धुनोति कम्पयतीति तादृशात् सदा चालितमस्तकात्, सरटात् कृकलासात्, तस्य आकारप्रकारयोरस्वाभाविकत्वदर्शनजनितभयादिति भावः । वाक्यत्रयेऽपि अहं बिभेमीति शेषः । त्वत्सखीषु तव सहचरीषु, रहो निर्जने, स्वं स्वकीयं, भियः भयस्य, वैभवं सम्पदम्, भयातिरेककारणमित्यर्थः । अभिदधतीषु वर्णयन्तीषु सतीषु, युष्माकं का कस्मात् बिभेषि? इति परस्परालोचनायां तव सखीषु एकैका उक्तरूपं व्याहरन्तीसु सतीषु इत्यर्थः । त्वमिति । मदीयविरहात् मम विच्छेदात्, निजां स्वकीयाम्, भीतिं भयम्, ईरितवती उक्तवती, त्वं भवती, मया नलेन, श्रुता आकर्णिता, आर्यपुत्रविरहाशङ्का एव मां भापयति इति त्वदुक्तिः मया श्रुतेत्यर्थः । तत् तस्मात्, तव भयस्मरणादित्यर्थः । भवतीं त्वाम्, न उज्झितास्मि न त्यक्ष्यामि । उज्झतेः लुटि मिप् । अहमिति शेषः । असत्यकातरः अनृतभीतः, अयं नलः, इति इत्थम्, वरम् अपरित्यागरूपं वरम्, व्याहरत् अवोचत् । दमयन्तीं वरं ददौ इत्यर्थः ॥ १४३–१४४ ॥

( किसी समय एक साथ बैठकर विश्रम्भपूर्वक परस्पर बातचीत करती हुई सखियोंमें-से 'कौन किससे डरती है ?' ऐसा प्रश्न करनेपर ) स्पर्शमात्रसे सङ्कुचित पत्तोंवाली छुईमुई ( लजौनी ) नामक क्षुप ( ओषधि–विशेष ) से ( 'मैं डरती हूँ' ऐसा किसीने कहा ), स्वभावतः चञ्चल कच्छप–मांस ( लम्बे डण्डेके समान मुख ) से ( 'मैं डरती हूँ' ऐसा दूसरी सखीने कहा ), शिरको कँपाते रहनेवाले गिरगिटसे ( 'मैं डरती हूँ' ऐसा तीसरी सखीने

कहा ); इस तुम्हारे सखियोंके अपना-अपना भयकारण वतलानेपर मेरे ( नलके ) विरहसे अपना भय वतलाती हुई तुमको मैंने एकान्तमें ( देवोंके दिये वर ( १४।९१ ) के प्रभावसे अन्तर्धान होकर या-खम्बे आदिके आड़में छिपकर ) सुना, 'सो मैं तुम्हें नहीं छोड़ूंगा' ऐसा वरदान असत्यकातर(असत्यसे डरनेवाले, अथवा—असती स्त्रियोंमें अकातर=निर्भय, किन्तु सती स्त्रियोंमें भययुक्त ) नलने ( दमयन्तीके लिए ) दिया । [ दमयन्तीके लिए ऐसा वरदान देकर भी भविष्यमें उसका त्याग करनेसे पालन नहीं होनेपर भी दैवाधीन कार्यके अवश्यम्भावी होनेके कारण नल असत्यभाषणके दोषी नहीं हुए ऐसा समझना चाहिये ] ॥ १४३-१४४ ॥

**सङ्गमय्य विरहेऽस्मि जीविका यैव वामथ रताय तत्क्षणम् ।**
**हन्त दत्थ इति रुष्टयाऽऽवयोर्निद्रयाऽद्य किमु नोपसद्यते ? ॥ १४५ ॥**

**सङ्गमय्येति । या एव या अहं निद्रा, विरहे परिणयात् पूर्वं विच्छेददशायाम्, वां युवाम्, सङ्गमय्य मेलयित्वा, स्वप्नसङ्गतिसुखम् अनुभाव्येत्यर्थः । जीविका जीवितवती, युवयोर्जीवनरक्षाकारिणीत्यर्थः । अस्मि भवामि । अथ अनन्तरम्, परिणयात् परमिदानीमित्यर्थः । तस्याः मम निद्राया एवेत्यर्थः, क्षणं समयम्, रात्रिरूपं कालमित्यर्थः । रताय सुरताय, दत्थः अर्पयथः, युवामिति शेषः । तस्मिन् समये युवां मां परित्यज्य सुरतं प्रपद्यथः इत्यर्थः । ददातेर्लटि थस् । हन्त इति खेदे, इति अस्माद्धेतोः, किमु किम्, इत्युत्प्रेक्षा, रुष्टया क्रुद्धया, निद्रया स्वापेन, अद्य अस्यां रात्रौ, आवयोः तव मम च, न उपसद्यते ? न सन्निकृष्यते ? न समीपे आगम्यते ? इत्यर्थः । सीदतेर्भावे लट् । निद्रां लब्धुं चेष्टायां कृतायामपि तदलाभेन नलस्योक्तिरियम् ॥ १४५ ॥**

जो मैं ( निद्रा ) विरहमें तुम दोनोंको ( स्वप्नावस्थामें ) मिलाकर जिलानेवाली बनी, इसके बाद ( इस समय विवाह हो जानेपर स्वत एव मिलनेपर तुम दोनों ) उसके ( मेरी-निन्द्राके ) समय अर्थात् रात्रिको सुरतके लिए दे रहे हो, मानो इस कारणसे रुष्ट हुई निद्रा आज पासमें नहीं आती है क्या ? । ( पाठा०—तुम दोनों क्षणमात्र मुझे नहीं दे रहे हो, किन्तु रात्रिरूप सम्पूर्ण समय सुरतके लिए ही दे रहे हो······) । [ नल तथा दमयन्तीने सारी रात्रिको कामकेलिमें ही व्यतीत किया, क्षणमात्र भी नहीं सोये, इसपर नलने दमयन्तीसे कहा कि—हे प्रिये ! विवाहके पहले विरहावस्थामें जव हम दोनों सोते थ तव स्वप्नावस्थामें परस्पर सङ्गति हो जाया करती थी, इस कारण निद्रा ही हम दोनोंके जीवनका उस समय कारण थी । किन्तु अव विवाह होनेपर स्वतः मिले हुए हम दोनों जो रात्रिका समय निद्राके लिए देना उचित था, उसे निद्राके लिए न देकर सुरतके लिए दे रहे हैं अर्थात् रात्रिमें थोड़ा भी नहीं सोकर पूरी रात सुरतक्रीड़ामें व्यतीत कर रहे हैं, इसी कारण प्रथमोपकार करनेवाली वह निद्रा हमलोगोंसे रुष्ट होकर हमलोगोंके पास नहीं आती है क्या ? । लोकमें भी प्रथम उपकार करनेवालेके उपकारको भूलकर यदि उपकृत व्यक्ति

उसके योग्य वस्तुको दूसरेके लिए देता है तो वह प्रथम उपकार करनेवाला व्यक्ति उपकृतसे रुष्ट होकर उसके पास तक नहीं जाता। नल तथा दमयन्तीने सम्पूर्ण रात्रिको कामक्रीड़ा करनेमें व्यतीत किया ] ॥ १४५ ॥

**ईदृशं निगदति प्रिये दृशौ सम्मदात् कियदियं न्यमीमिलत्।**
**प्रातरालपति कोकिले कलं जागरादिव निशः कुमुद्वती ॥ १४६ ॥**

ईदृशमिति । प्रिये नले, सम्मदात् सन्तोषात्, यथेष्टसम्भोगसुखानुभवजनितानन्दादित्यर्थः। ईदृशम् ईदृक् वाक्यम्, निगदति कथयति सति, तथा प्रातः तदा निशावसानात् उषसि, कोकिले पिके, कलं मधुरास्फुटं यथा तथा, आलपति कूजति च सति, निशः रात्रेः सम्बन्धिनः, जागरात् जागरणात् हेतोः, कुमुदपक्षे—रात्रौ प्रस्फुटनात्, अन्यत्र—सुरतव्यापारेण निद्रापरिहारादित्यर्थः। कुमुद्वतीव कुमुदलतेव कुमुदमिवेत्यर्थः। इयं भैमी, कियत् किञ्चित्, दृशौ नेत्रे, न्यमीमिलत् न्यमीलितवती, 'भ्राजभास—' इत्यादिना विकल्पादुपधाह्रस्वः, 'दीर्घो लघोः' इत्यभ्यासदीर्घः ॥१४६॥

इस ( दमयन्ती ) ने अत्यधिक हर्षसे प्रिय ( नल ) के इस प्रकार ( १४।१२८–१४५ ) कहते रहनेपर तथा प्रातः काल कोयलके मधुर बोलते रहनेपर रात्रिमें जगने ( पक्षा०—विकसित रहने ) से कुमुदिनीके समान नेत्रोंको कुछ बन्द कर लिया [ अथवा—इस दमयन्तीने प्रिय नलके इस प्रकार कहते रहनेपर और प्रातःकाल कोयलके मधुर बोलते रहनेपर सुरतजन्य अत्यधिक हर्ष अर्थात् श्रमसे……। अथवा—इस दमयन्तीने प्रिय नलके इस प्रकार कहते रहनेपर, प्रातःकालमें कोयलके मधुर बोलते रहनेपर रात्रिमें ( विकसित रहनेके कारण ) जागरण करनेसे कुमुद्वतीके समान नेत्रोंको अर्द्धनिमीलित कर लिया अर्थात् रातभर जागनेसे दमयन्ती कुछ-कुछ सोते समय नेत्रोंको बन्द किया तो वह रातभर विकसित रहकर प्रातःकाल बन्द होते समय कुछ सङ्कुचित पंखुड़ियोंवाली कुमुदिनीके समान सुन्दर जान पड़ती थी। इससे नलके स्वरका कोकिलके समान मधुर होना तथा दमयन्तीके नेत्रोंके पलकोंका कुमुदिनीके पंखुड़ियोंके समान सुन्दर होना सूचित होता है ]॥

**मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम्।**
**तौ ततोऽनु परिरम्भसम्पुटे पीडनां विदधतौ निदद्रतुः ॥ १४७ ॥**

मिश्रितेति । ततः दमयन्त्याः दृङ्निमीलनात्, अनु पश्चात्, तौ भैमीनलौ, मिथः परस्परम्, मिश्रितौ संश्लिष्टौ, ऊरू द्वयोः सक्थिनी यस्मिन् तद्यथा तथा, मिलितौ स्पृष्टौ, अधरौ रदनच्छदौ यस्मिन् कर्मणि तत् यथा तथा, स्वप्ने वासनावशात् निद्राकालिकविषयानुभवे, वीक्षिताः दृष्टाः, परस्परक्रियाः अन्योऽन्यं चुम्बनादिव्यापारा यस्मिन् तत् यथा तथा च, परिरम्भसम्पुटे आलिङ्गनरूपपुटके, पीडनां

१. 'न्यमीलयत्' इति पाठान्तरम्।

प्रगाढपेषणम्, विदधतौ कुर्वन्तौ सन्तौ, निदद्रतुः सुषुपतुः, निद्रासुखम् अनुबभूवतुरित्यर्थः ॥ १४७ ॥

इस ( दमयन्तीके अर्द्धनिमीलित नेत्र होने ) के बाद वे दोनों ( दमयन्ती तथा नल ) परस्परमें एक दूसरेके ऊरुओंको सटाकर, अधरोंको मिलाकर ( पूर्व वासनाके कारण ) परस्परकी हुई रतिक्रीडाओंको स्वप्नमें देखते हुए तथा आलिङ्गनरूपी सम्पुटमें (एक दूसरेको) पीड़ित करते हुए ( क्षीरनीरालिङ्गन करके ) सो गये ॥ १४७ ॥

तद्यातायातरंहश्छलकलितरतिश्रान्तिनिःश्वासधाराऽ-
जस्रव्यामिश्रभावस्फुटकथितमिथःप्राणभेदव्युदासम् ।
बालावक्षोजपत्राङ्कुरकरिमकरीमुद्रितोर्वीन्द्रवक्ष-
श्चिह्नाख्यातैकभावोभयहृदयमगाद् द्वन्द्वमानन्दनिद्राम् ॥ १४८ ॥

तदिति । यातायातानां निःसरणप्रवेशानाम्, रंहसः वेगस्य, छलेन व्याजेन, कलिता ज्ञापिता, रतिश्रान्तिः रमणक्लान्तिः, याभिः तादृशानां निःश्वासधाराणां निःश्वासपरम्पराणाम्, अजस्रव्यामिश्रभावेन अनवरतमेलनेन, स्फुटं व्यक्तम्, कथितः विज्ञपितः, मिथः परस्परम्, प्राणभेदस्य पृथक्प्राणवायुतायाः, व्युदासः अभावः यस्य तत् तादृशम्, मापराश्यादौ मापान्तरादिमिश्रणवत् निःश्वासवाते निःश्वासवातान्तरमिश्रणस्य भेदानुपलम्भात् अभिन्नत्वं युज्यते एव निःश्वासवायोरेव प्राणरूपत्वादिति भावः । तथा बालायाः षोडशवर्षीयायाः प्रियायाः, वक्षोजयोः कुचयोः, ये पत्राङ्कुराः कुङ्कुमादिना रचितक्षुद्रक्षुद्रतिलकविशेषाः, तेषु याः करिमकर्यः कस्तुरीप्रभृतिभिः रचिता हस्तिमकरीप्रभृतीनां मूर्त्तयः, ताभिः मुद्रितस्य चिह्नितस्य, उर्वीन्द्रवक्षसः पृथिवीपतिनलोरःस्थलस्य, चिह्नेन प्रगाढालिङ्गनेनाङ्कितकरिप्रभृतीनामाकृत्या, आख्यातः कथितः, एकभावः ऐक्यं ययोः ते तादृशी, उभये द्वे, हृदये वक्षःस्थले ययोः तत् तादृक् एकविधचिह्नत्वात् सर्वथैव एकमिति भावः । वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगः इत्युक्तं प्राक् । तत् नलदमयन्तीरूपम्, द्वन्द्वं मिथुनम्, आनन्दनिद्रां सुखेन स्वापम्, अगात् अगच्छत् ॥ १४८ ॥

यातायात ( बाहर निकलने तथा भीतर प्रवेश करने ) के वेगके व्याजसे सुरतजन्य श्रमको बतलानेवाले निःश्वास-समूहके निरन्तर मिश्रण होनेसे ( दमयन्तीके निःश्वासका निकलकर नलकी नासिकाके भीतर प्रविष्ट होनेसे एवं नलके निःश्वासका निकलकर दमयन्तीकी नासिकाके भीतर प्रविष्ट होनेसे—एकके निःश्वासका दूसरेके निःश्वासमें मिलनेसे ) स्पष्ट रूपसे कहा गया है परस्परके प्राण-भेदका अभाव ( पानीमें पानी तथा तिलमें तिल मिलानेपर जिस प्रकार भेदज्ञान नहीं होता, उसी प्रकार दोनोंके निःश्वासके मिलनेसे और उसी निःश्वासके प्राणवायुरूप होनेके कारण दोनोंके प्राणोंमें भेदाभाव ) जिसका ऐसा, तथा बाला ( षोडशी दमयन्ती ) के स्तनद्वयपर ( कस्तूरी आदिसे बनाये गये )

पत्राङ्कुरमें चिह्नित हाथी–मकरी आदिसे चिह्नित भूपति ( नल ) के वक्षःस्थलके चिह्नोंसे दोनों ( नल तथा दमयन्ती ) के हृदयद्वयकी एकताको बतलानेवाला वह द्वन्द्व ( नल तथा दमयन्तीकी जोड़ी ) आनन्दनिद्राको प्राप्त किया अर्थात् वे सो गये । [ परस्पर गाढ़ालिङ्गन कर सोये हुए उन दोनोंका निःश्वास एक दूसरेकी नासिकामें प्रविष्ट होकर दोनोंके प्राणवायुमें अभेद होना सूचित करता था और दमयन्तीके स्तनोंपर कस्तूरी आदिके द्वारा बनाये गये हाथी–मकरिका आदिके चिह्न गाढ़ालिङ्गन करते समय नलके वक्षःस्थलपर भी लग गये, अत एव दोनोंका हृदय बाह्य वक्षःस्थल एवं अभ्यन्तर अन्तःकरणमें भी अभेद हो गया । इस प्रकारके वे दोनों सुरतश्रमसे थककर गाढ़ालिङ्गन करके सो गये ] ॥ १४८ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
यातोऽस्मिन् शिवशक्तिसिद्धिभगिनीसौभ्रात्रभव्ये महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः ॥ १४९ ॥

**श्रीहर्षमित्यादि । शिवशक्तिसिद्धिः नाम काचित् स्वकृतिः, सा एव भगिनी उभयोरेव एककर्तृत्वात् स्वसा, तया सह सौभ्रात्रं सुभ्रातृत्वम् । युवादित्वादण्-प्रत्ययः । भ्राता च भगिनी च भ्रातरौ । 'भ्रातृभागिन्यौ भ्रातरौ' इत्यमरः । 'भ्रातृ-पुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः । तेन सौभ्रात्रेण हेतुना, भव्ये शुभे, उत्कृष्टे इत्यर्थः । एककर्तृकत्वादित्थं निर्देशः । अष्टौ च दश च अष्टादश । 'द्व्यष्टनः सङ्ख्या-यामबहुव्रीह्यशीत्योः' इत्यात्वम् । तेषां पूरणः अष्टादशः । 'तस्य पूरणे डट्' टिलो-पश्च । गतमन्यत् ॥ १४९ ॥**

**इति मल्लिनाथसूरिविरचिते 'जीवातु' समाख्यानेऽष्टादशः सर्गः समाप्तः ॥ १८ ॥**



कवीश्वर–समूहके······किया, उसके रचित 'शिवशक्तिसिद्धि' नामक ग्रन्थके ( एक ग्रन्थकारकृत होनेसे ) सहोदरत्वसे सुन्दर इस नलके चरित······यह अष्टादश सर्ग समाप्त हुआ । ( शेष व्याख्याको चतुर्थसर्गके समान समझना चाहिये ) ॥ १४९ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित'का अष्टादश सर्ग समाप्त हुआ ॥ १८ ॥



# ऊनविंशः सर्गः।

निशि दशमितामालिङ्गन्त्यां विबोधविधित्सुभि-
र्निषधवसुधामीनाङ्कस्य प्रियाऽङ्कमुपेयुषः।
श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविक-
स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः॥ १॥

अथ काव्ये प्रयोगवैचित्र्यस्यालङ्कारत्वादस्मिन् सर्गे तद्वैचित्र्यमाश्रित्य प्रभातवर्णनमारभते-निशीति। निशि निशायाम्। 'पद्दन्नोमास्-' इत्यादिना निशादेशः। दशमः वयोऽवस्थाविशेषः अस्याः अस्तीति दशमिनी वृद्धा 'वर्षीयान् दशमी ज्यायान्' इत्यमरः। 'वयसि पूरणात्' इति इनिः प्रत्ययः। तस्याः भावः तत्ता दशमिता वृद्धत्वं तां चरमावस्थामित्यर्थः। 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः। आलिङ्गन्त्यां स्पृशन्त्याम्, प्राप्नुवन्त्यामित्यर्थः। प्रभातप्रायायां सत्यामिति भावः। प्रियायाः दमयन्त्याः, अङ्कम् उत्सङ्गम्, उपेयुषः प्राप्तस्य, प्रियामालिङ्ग्य निद्रितस्येत्यर्थः। निषधवसुधामीनाङ्कस्य निषधदेशमन्मथस्य नलस्य, निबोधविधित्सुभिः जागरणं विधातुमिच्छुभिः। गम्यादिपाठात् द्वितीयासमासः। वैतालिकैः बोधकरैः, निद्राभञ्जकैः वन्दिभिरित्यर्थः। 'वैतालिका बोधकराः' इत्यमरः। श्रुतिमधुपदस्रजां श्रुतौ कर्णे, मधूनां मधुराणाम्, पदानां सुप्तिङन्तशब्दानाम्, या स्रक् माला, पङ्क्तिरित्यर्थः। तासां या वैदग्धी रचनाचातुर्यम्, कौशिक्यादिवृत्तिसम्पत्तिरिति यावत्। तया विभाविताः व्यञ्जिताः, भावाः स्थायिप्रभृतयः अस्य सन्तीति भाविकः रसबोधकविभावादिचतुर्विधभाववान्। 'अतः इनिठनौ' इति मत्वर्थीयष्ठन्प्रत्ययः। अत एव स्फुटः अभिव्यक्तः, संवेद्यतां प्राप्तः इत्यर्थः। रसः श्रृङ्गारादिरेव रसः स्नेहद्रवः, तेन भृशम् अत्यर्थम्, अभ्यक्ताः सिक्ताः, स्निग्धीकृता इत्यर्थः। रसभरिताः इति यावत्। गिरः वक्ष्यमाणगीतवाचः, जगिरे गीयन्ते स्म। गायतेः कर्मणि लिट्। अस्मिन् सर्गे हरिणी वृत्तम्; 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात्॥१॥

(इस सर्गमें प्रयोगवैचित्र्यका आश्रयकर ग्रन्थकार प्रभातवर्णन करते हैं—) रात्रिकी अन्तिमावस्था प्राप्त करने (समाप्तप्राय होने) पर प्रिया (दमयन्ती) के अङ्कको प्राप्त (कर सोए हुए) तथा निषध देशके कामदेव (नल) को जगानेके इच्छुक वैतालिकलोग कर्णप्रिय पदसमूहके चातुर्यसे व्यञ्जित (श्रृङ्गारादि) रसके प्रकाशित होनेसे अतिशय सिक्त अर्थात् सरस वचन गाने (कहने) लगे। [वैतालिकोंने नलको जगानेके लिए पद-समूह कहना आरम्भ किया]॥ १॥

जय जय महाराज! प्राभातिकीं सुषमामिमां
सफलयतमां दानादक्ष्णोर्दरालसपक्ष्मणोः।

प्रथमशकुनं शय्योत्थायं तवास्तु विदर्भजा
प्रियजनमुखाम्भोजात् तुङ्गं यदङ्ग ! न मङ्गलम् ॥ २ ॥

जय जयेति । हे महाराज ! नल !, जय जय अभीक्ष्णं सर्वोत्कर्षेण वर्त्तस्व । 'नित्यवीप्सयोः' इति द्विर्भावः । दरम् ईषत्, अलसानि तदाऽपि निद्रावेशसत्त्वात् निश्चेष्टानि, पक्ष्माणि नेत्रलोमानि ययोः तादृशयोः 'अल्पार्थे त्वव्ययं दरम्' इति यादवः । अक्ष्णोः चक्षुषोः, दानात् निक्षेपात्, दृष्टिप्रदानादित्यर्थः । इमां पुरोवर्त्तिनीम्, प्राभातिकीं प्रत्यूषकालिकीम्, सुषमां परमां शोभाम्, सफलयतमाम् अतिशयेन सफलय, नरपतिकर्तृकदर्शने शोभायाः सफलत्वात् । 'किमेत्तिङव्यय-' इति आमुप्रत्ययः । विदर्भजा वैदर्भी, शय्योत्थायं शय्यायाः सत्वरम् उत्थाय, 'अपादाने परीप्सायाम्' इति णमुल् । परीप्सा त्वरा । एतेन स्त्रियः प्रथमोत्थानं लभ्यते, 'चरममपि शयित्वा पूर्वमेव प्रबुद्धा' इत्युत्तमाङ्गनालक्षणात् त्वत्तः पूर्वमेव शयनात् सत्वरमुत्थाय अवस्थिता इत्यर्थः । तव ते, प्रथमशकुनं प्राथमिकं मङ्गलजनकं दृश्यम्, अस्तु भवतु, तदा तस्यामेव प्रथमाक्षिपातात् इति भावः । कुत इत्यत आह–यत् यस्मात्, अङ्ग ! भोः !, प्रियजनस्य प्रीतिपात्रस्य, मुखाम्भोजात् वदनकमलात्, आननपद्मदर्शनादित्यर्थः । तुङ्गम् अधिकम्, मङ्गलं श्रेयः, न, अस्ति इति शेषः । इत्यर्थान्तरन्यासः ॥ २ ॥

हे महाराज ( नल ) ! विजयी होवो, विजयी होवो, इस प्रातःकालीन उत्कृष्ट शोभाको कुछ आलसयुक्त पलकोंवाले नेत्रोंके देनेसे ( तत्काल निद्राभङ्ग होनेके कारण ईषत् आलसी पलकोंवाले नेत्रोंके द्वारा देखनेसे ) कृतार्थ करो । विदर्भकुमारी ( दमयन्ती ) शय्यासे उठकर तुम्हारे लिए प्रथम माङ्गलिक वस्तु हो, क्योंकि हे अङ्ग ( स्वामिन् ) ! प्रियजनके मुखकमलके अतिरिक्त दूसरी कोई वस्तु श्रेष्ठ मङ्गल ( करनेवाली ) नहीं है । [ आप उठकर प्रातःकालकी श्रेष्ठ शोभाको देखेंगे तो वह शोभा राजावलोकित होनेसे सफल हो जायेगी । तथा आपके उठनेके पूर्व ही दमयन्ती शय्यासे उठेगी, अतः आप उठते ही सर्वप्रथम प्रातःकाल माङ्गलिक वस्तुको देखनेका शास्त्रीय विधान होनेसे उसके मुखको देखकर उस विधानको पूरा करेंगे, क्योंकि प्रियजनके मुखका देखना सर्वश्रेष्ठ मङ्गल है ] ॥ २ ॥

वरुणगृहिणीमाशामासादयन्तममुं रुची-
निचयसिचयांशांशभ्रंशक्रमेण निरंशुकम् ।
तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ
निजमुखमिव स्मेरं धत्ते हरेर्महिषी हरित् ॥ ३ ॥

वरुणेति । असौ दृश्यमाना, हरेः इन्द्रस्य, महिषी साम्राज्ञीस्वरूपा, हरित् प्राची दिक्, काचित् राजपत्नी च, वरुणगृहिणीं वारुणीम्, आशां दिशम् प्रतीचीमित्यर्थः । काञ्चित् पुरुषान्तरपत्नीञ्च, आसादयन्तम् अस्तोन्मुखत्वात् प्राप्नुवन्तम्, सङ्गच्छ-

न्तमिति यावत्। सम्भोगार्थं गृह्णन्तमिति च, रुचीनिचयः प्रभासमूहः एव, 'कृदिकारात्-' इति ङीप्। सिचयः वसनम्, आच्छादकत्वसाधर्म्यादिति भावः। 'सिचयो वस्त्रवसनमंशुकम्' इति यादवः। तस्य अंशांशस्य किञ्चित् किञ्चिद्भागस्य, वीप्सायां द्विरुक्तिः। अंशक्रमेण उत्तरोत्तरं परित्यागेन, एकत्र-निशावसानात्, अन्यत्र-नग्नीभवनाय इति भावः। निर्नास्ति अंशुः किरणो यस्य तादृशं निरंशुकं निष्प्रभम्। शैषिकः कप्। निः नास्ति अंशुकं वस्त्रं यस्य तादृशं विवसनञ्च, अमुं पुरःस्थम्, तुहिनमहसं शीतकिरणं चन्द्रम्, कमपि पुरुषञ्च, पश्यन्ती अवलोकयन्ती इव, प्रसादमिषात् प्राभातिकवैशद्यच्छलात्, कौतुकजनितप्रसन्नताव्याजाच्च, निजमुखं स्वीयपुरोभागम् आननञ्च, स्मेरं सहासम्, धत्ते इव करोतीव। अत्र मिषशब्देन प्रसादरूपापह्नवेन पराङ्गनासङ्गतपुरुषदर्शनजन्मस्मितत्वोत्प्रेक्षणात् सापह्नवोत्प्रेक्षा ॥ ३ ॥

वरुणकी स्त्री अर्थात् पश्चिम दिशाको प्राप्त करते हुए तथा प्रकाशसमूहरूपी वस्त्रके एक-एक अंशके क्रमशः हटने (नष्ट होने) से किरणरहित (पक्षा०—वस्त्ररहित) चन्द्रमा (शीतस्पर्श-नायक) को देखती हुई यह इन्द्रकी पटरानी (पूर्व दिशा) प्रसन्नता (स्वच्छता पक्षा०—हर्ष) के व्याजसे अपने मुखको स्मितयुक्त कर रही है। [ जिस प्रकार कोई नायक पहले किसी नायिकाका साथ करनेसे उन्नतिको प्राप्त करके बादमें दूसरी नायिकाका साथ करनेपर निष्प्रभ होता है तो उसे देखकर प्रथमा नायिका उसके दुष्कृत्यपर ईर्ष्यावश प्रसन्न होती हुई मुस्कुराती है, उसी प्रकार पहले सायङ्कालमें चन्द्रमा पूर्वदिशाका साथ करके उन्नतिको प्राप्त करनेके बाद प्रातःकालमें पश्चिम दिशाका साथ करनेपर प्रभारहित हो रहा है तो प्रथमसङ्गिनी पूर्वदिशा उक्तरूप चन्द्रमाको देखकर प्रसन्नचित्त होकर मानो मुस्कुरा रही है। प्रातःकालमें पश्चिम दिशामें जाकर चन्द्रमाका निष्प्रभ होनेसे तथा पूर्वदिशाको अरुणोदय होनेसे लालिमायुक्त एवं स्वच्छ होनेसे उक्त उत्प्रेक्षा कविने की है ]॥३॥

अमहतितरास्तादृक् तारा न लोचनगोचरा-
स्तरणिकिरणा द्यामञ्चन्ति क्रमादपरस्पराः।
कथयति परिश्रान्तिं रात्रीतमःसह युध्वनाम्
अयमपि दरिद्राणप्राणस्तमीदयितस्त्विषाम् ॥ ४ ॥

अमहतीति। अतिशयेन महत्यः महतितराः 'घरूपकल्प—' इत्यादिना ङ्यो ह्रस्वः, अनेन ह्रस्वविधानेन परत्वात् 'तसिलादिषु' इति प्राप्तपुंवद्भावप्रतिषेधः, ततो नञ्समासः। अमहतितराः सूक्ष्माः, ताराः अरुन्धत्यादयः तारकाः, तादृक् पूर्ववत्, रात्रौ इवेत्यर्थः। लोचनस्य नयनस्य, गोचराः विषयाः, न, भवन्तीति शेषः। उत्तरोत्तरं सूर्यतेजोवर्द्धनादिति भावः। परे परे न भवन्तीति अपरस्पराः सततक्रियाः, सततम् अविच्छेदेन प्रवृत्ता इति यावत्,

युगपदेव प्रसरणशीला इति भावः। 'अपरस्पराः क्रियासातत्ये' इति निपातनात् साधुः। तरणेः अर्कस्य, किरणाः मयूखाः, क्रमात् क्रमशः, द्याम् आकाशम्, अञ्चन्ति गच्छन्ति, व्याप्नुवन्तीत्यर्थः। दरिद्राणप्राणः क्षीणबलः। दरिद्रातेः कर्त्तरि ल्युट्। 'बलान्तर्मारुतोः प्राणः' इति यादवः। अयं परिदृश्यमानः, तमीदयितः निशापतिरपि, राव्याः निशायाः। 'कृदिकारात्—' इति वा ङीप्। तमांसि अन्धकाराः, तैः सह युध्वनां युद्धं कुर्वतीनाम्। 'सहे च' इति क्वनिप्। 'वनो न हशः—' इति वक्तव्यात् 'वनो र च' इति ङीप्प्रत्ययो रश्च नास्ति। त्विषां भासाम्, स्वप्रभाणामित्यर्थः। परिश्रान्तिं क्लान्तिम्, कथयति ख्यापयति। प्रभातः सञ्जातः, अतः शयनं परित्यजेति भावः। समुच्चयोऽलङ्कारः॥ ४॥

अतिशय लघु (ध्रुव, अरुन्धती आदि) अथवा—(पहले अधिक प्रकाशमान किन्तु इस समय) अतिक्षीण (स्वाती आर्द्रा आदि) ताराएँ रात्रिके समान दृष्टिगोचर नहीं होती हैं। परस्पर अहमहमिकासे निरन्तर प्रवृत्त सूर्यकिरणें आकाशमें व्याप्त हो रही हैं। क्षीणप्राण अर्थात् कान्तिहीन यह चन्द्रमा भी रात्रिके अन्धकारसे युद्ध करनेवाली अपनी कान्ति (किरणों) की परिश्रान्ति (अतिशय ग्लानि, पक्षा०—अतिशय थकावट) को कह रहा है अर्थात् अपनी प्रभाके साथ चन्द्रमा भी क्षीण हो रहा है। [प्रातःकाल हो गया, अत एव अब आप शय्या त्यागकर उठिये]॥ ४॥

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः
पुरुसितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः।
अपि मधुकरी कालिम्मन्या विराजति धूसल-
च्छविरिव रवेर्लाक्षालक्ष्मीं करैरभिपातुकैः॥ ५॥

स्फुरतीति। तिमिरस्तोमः तमोराशिः, लाक्षालक्ष्मीम् अलक्तकशोभाम्, अभिपातुकैः अभिक्रामद्भिः, पराजेतुमिच्छुभिरित्यर्थः। लाक्षावर्णादपि अधिकारुणवर्णैरिति यावत्। उदीयमानसूर्यकिरणानां तद्वत् परिदृश्यमानत्वादिति भावः। 'लषपत—' इत्यादिना उकञ्, 'न लोक—' इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया। रवेः सूर्यस्य, करैः किरणैः, किरणसम्पातैरित्यर्थः। पुरु भूयिष्ठं यथा तथा, सितगरुतां श्वेतपक्षाणां हंसानाम्, 'हंसास्तु श्वेतगरुतः' इत्यमरः। चञ्चद्भिः चञ्चलैः, मृणालभक्षणार्थः कर्दमालोडनव्यग्रतयेति भावः। चञ्चूपुटैः अरुणवर्णैः त्रोटियुगलैः, स्फुटं स्पष्टम्, चुम्बितः स्पृष्टः, विलोडितः इत्यर्थः। पङ्कप्रपञ्चः कर्दमराशिः इव, उच्चकैः अत्यर्थं, स्फुरति दीप्यते इत्युपमा। तथा कालीम् आत्मानं मन्यते इति कालिम्मन्या अतिकृष्णा इत्यर्थः। वर्णे अर्थे 'जानपद—' इत्यादिना ङीप्, कालीशब्दोपपदात् मन्यतेः 'आत्ममाने खश्च' इति खश् प्रत्ययः, 'खित्यनव्ययस्य' इति ह्रस्वः। 'अरुर्द्विषत्—' इत्यादिना मुमागमः। मधुकरी भृङ्गी अपि, लाक्षालक्ष्मीम् अभि-

पातुकैः रवेः करैः धूमलच्छविः कृष्णलोहितकान्तिः इव । 'धूम्रधूमलौ कृष्णलोहितौ' इत्यमरः । विराजति शोभते । अत्र काल्या भृङ्ग्या रविकरलौहित्याद्युत्कृष्टगुणग्रहणे तद्गुणालङ्कारः, तदुत्थापिता धूमलत्वोत्प्रेक्षेति सङ्करः ॥ ५ ॥

अन्धकार-समूह लाक्षाशोभा ( महावरकी लालिमा ) का अतिक्रमण करनेवाले अर्थात् महावरसे भी अधिक लाल सूर्य-किरणोंसे अनेक श्वेत पङ्खोंवाले हंसोंके ( कीचड़से मृणालदण्डको खोदकर निकालनेके लिए ) चञ्चल चन्चुपुटसे स्पष्टतः छुए जाते हुए पङ्क-समूहके समान शोभित होता है तथा अपनेको अधिक काली माननेवाली भ्रमरी अरुणतम सूर्य-किरणोंसे धूमिल ( लालिमायुक्त कृष्णवर्ण ) कान्तिके समान शोभती है । [ अत्यन्त अरुण वर्णवाली सूर्य-किरणें पङ्क-समूहमें प्रविष्ट होती हुई ऐसी मालूम पड़ रही हैं, कि—श्वेत पङ्खोंवाले तथा लाल चोंवाले अनेक हंसोंके चोंच मृणालदण्ड ( विस ) के लिए अधिक पङ्कको खोदते हों । तथा वैसे अरुणतम सूर्य-किरणोंके स्पर्शसे अत्यधिक काली भ्रमरी भी धूमिल वर्णवाली हो रही है ] ॥ ५ ॥

रजनिवमथुप्रालेयाम्भःकणक्रमसम्भृतैः
कुशकिशलयस्याच्छैरग्रेशयैरुदविन्दुभिः ।
सुषिरकुशलेनायःसूचीशिखाङ्कुरसङ्करं
किमपि गमितान्यन्तर्मुक्ताफलान्यनुमेनिरे ॥ ६ ॥

रजनीति । रजनेः रात्रेः, हस्तिनीरूपाया इति भावः । वमथवः करशीकराः, शुण्डाग्रविक्षिप्तजलकणस्वरूपा इत्यर्थः । 'वमथुः करशीकरः' इत्यमरः । ये प्रालेयाम्भसः हिमजलस्य, कणाः विन्दवः, तैः क्रमेण क्रमशः, किञ्चित् किञ्चित् कृत्वेत्यर्थः । सम्भृतैः सञ्चितैः, किञ्चित् किञ्चित् कृत्वा सञ्चयात् स्थूलीभूतैरिति भावः । कुशकिशलयस्य सूचीवत् सूक्ष्माग्रनवीनदर्भपत्राणामित्यर्थः । जातावेकवचनम् । अग्रे शेरते इति अग्रेशयाः तैः अग्रस्थैः । 'अधिकरणे शेतेः' इत्यच् । अच्छैः निर्मलैः, उदविन्दुभिः जलकणैः । कर्तृभिः । सुषिरे मुक्तादिषु छिद्रविधाने, कुशलेन निपुणेन, शिल्पिनेति शेषः । किमपि किञ्चित्, अन्तः मध्ये, अयसः लौहस्य, सूचीनां व्यधनीनाम्, सीवनसाधनसूक्ष्माग्रशलाकाविशेषाणामित्यर्थः । शिखाङ्कुरः शिखा अग्रभागः, स एव सूक्ष्मत्वादङ्कुरः, तैः सङ्करं सङ्गमम्, गमितानि प्रापितानि, मुक्ताफलानि मौक्तिकानि, अर्द्धविद्धानि मुक्ताफलानीत्यर्थः । अनुमेनिरे हीनतया बुबुधिरे, हीनीकृतानीत्यर्थः । सूर्यकिरणसम्पर्केण अन्तरौज्ज्वल्यसाधर्म्यात् मुक्ताफलानि तिरस्कृतानीति भावः । इति सादृश्ये लक्षणा । अत्र दर्भाग्रोदविन्दूनां वेधसूच्यग्रलग्नमुक्ता-

१. 'अत्र काल्या भृङ्ग्या रविकरैर्लौहित्याजीविकारात्तद्गतेन तदुत्थापिता......' इति 'जीवातुः' इति म० म० शिवदत्तशर्माणः । २. '—न्यवमेनिरे' इतिपाठान्तरम् ।

फलैरुपमा, प्रालेयाम्भःकणेषु वमथुत्वरूपगात् रजनेः करिणीत्वरूपसिद्धेरेकदेशविवर्त्तिरूपकम् इत्यनयोरङ्गाङ्गिभावात् संसृष्टिः ॥ ६ ॥

(करिणी–रूपिणी) रात्रिके वमथु (शुण्डादण्डके फुत्कारसे निकले हुए जलकण–रूपी ओसके जल–कणों) के क्रमशः (धीरे–धीरे) सञ्चित और कुशाग्रोंके नये पत्तोंके अग्रभाग (नोक) पर स्थित जलविन्दुओंने (मोतियोंके) छेदनेमें चतुर कारीगरके द्वारा कुछ भीतरमें लोहेकी सूईकी नोकपर रखे हुए मोतियोंको तुच्छ माना (पाठा०—तिरस्कृत कर दिया)। [प्रातःकालमें कुशाओंके पत्तोंके आगे स्थित ओसकी बूंदें छेद करनेमें कुशल कारीगरके द्वारा कुछ छेदे गये अत एव सूईकी नोकपर स्थित मोतियोंसे अधिक शोभ रही हैं] ॥ ६ ॥

रविरुचिऋचामोङ्कारेषु स्फुटामलबिन्दुतां
गमयितुममूरुच्चीयन्ते विहायसि तारकाः ।
स्वरविरचनायासामुच्चैरुदात्ततयाऽऽहृताः[1] ।
शिशिरमहसो बिम्बादस्मादसंशयमंशवः ॥ ७ ॥

रवीति । रवेः सूर्यस्य, रुचयः उदयकालीनकिरणाः एव, ऋचः पूर्वाह्णत्वात् ऋग्वेदमन्त्रविशेषाः तासाम्, 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्यादि तन्मयत्वश्रुतेरिति भावः। ओङ्कारेषु आदौ उच्चार्यमाणप्रणवेषु, स्फुटाः व्यक्ताः, अमलाः स्वच्छाः, बिन्दवः उपरिस्थितबिन्द्वाकृतिवर्णाः, तेषां भावः तत्ता ताम्, गमयितुं प्रापयितुम्, ओङ्काराणामुपरिदेशे बिन्दून् संस्थापयितुमित्यर्थः। विहायसि आकाशे, अमूः परिदृश्यमानाः, तारकाः नक्षत्राणि, उच्चीयन्ते एकमेकं कृत्वा सङ्गृह्यन्ते, प्रभातालोकेन क्षुद्रीभूततया परिदृश्यमानत्वात् वृत्तत्वसाम्याच्चेति भावः। किञ्च, आसां ऋचाम्, उदात्ततया हृद्यतया, 'उच्चैरुदात्तः' इत्युक्तलक्षणस्वरविशेषतया च । 'उदात्तः स्वरभेदे स्यात् काव्यालङ्कारहृद्ययोः' इति विश्वः। उच्चैः अत्यन्तम्, स्वरविरचनाय उदात्ताख्यस्वरसम्पादनार्थम्। अस्मात् परिदृश्यमानात्, शिशिरमहसः शीतकिरणस्य चन्द्रस्य, बिम्बात् मण्डलात्, अंशवः किरणाः, असंशयं निश्चयम्। अभावार्थेऽव्ययीभावः। आहृताः संगृहीताः, केनापीति शेषः। अन्यथा चन्द्रांशवस्तारकाश्च क्व गताः ? इति भावः। असंशयमित्युत्प्रेक्षायाम् ॥ ७ ॥

सूर्य-किरणरूपी ऋचाओं (ऋग्वेद–मन्त्रों) के ओङ्कारों (मन्त्रोंके आदिमें अवश्योच्चार्यमाण 'ॐ' इस आकारवाले प्रणवों) में स्पष्टतः निर्मल (स्वरोच्चारणादिदोषरहित) बिन्दुत्वको प्राप्त करानेके लिये अर्थात् 'ॐ' में बिन्दु लगानेके लिए इन ताराओंको कोई एकत्रित (या–ऊपरिगत) कर रहा है और इन (ऋचाओं) के अत्यन्त ऊपर लेनेसे —

1. 'हृताः' इति 'वृता' इति च पाठान्तरम्।

( पक्षा०—'उच्चैरुदात्तः' इति पाणिनीय सूत्र ( १।२।२९ ) के अनुसार 'उदात्त' नामक स्वरविशेष बनानेके लिए ) चन्द्रमाके इस बिम्ब ( मण्डल ) से इन किरणोंको भी किसीने निश्चय ही ग्रहण कर लिया है । [ ताराओंके अतिसूक्ष्म बिन्दुतुल्य होनेसे ॐकारके उपस्थित बिन्दु ( अनुस्वार ) बनानेके लिए ताराओंके तथा चन्द्रकिरणोंके सूक्ष्म रेखारूप होनेसे ऋचाओंके ऊपर उदात्त स्वरका चिह्न-विशेष लगानेके लिए चन्द्रकिरणोंके संग्रह करनेकी उत्प्रेक्षा की गयी हैं। उक्त कारणसे ही ताराएँ तथा चन्द्र-किरणें नहीं दृष्टिगोचर हो रही हैं ] ॥७॥

व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके
भवति च नले दूरं तारापतौ च हतौजसि ।
लघु रघुपतेर्जायां मायामयीमिव रावणिः
तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥ ८ ॥

व्रजतीति । दृष्ट्वा विलोक्य, रात्रेर्नाशोपक्रमं सीतावधोपक्रमञ्च इति शेषः, कुमुदे कैरवे कपिविशेषे च । 'कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ' इति विश्वः । मोहं सङ्कोचं मूर्च्छनञ्च, एकत्र—दिवा मुद्रणस्वभावात्, अन्यत्र—शोकादिति भावः । व्रजति गच्छति सति, तथा भवति त्वयि, नले च नैषधे च, दृशोः दर्शनयोः, दर्शनसाधन-दृष्टिमण्डलयोरित्यर्थः । 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके' इति मेदिनी । अपिधायके आच्छादके सति, तदाऽपि निद्रावेशानपगमात् निमीलिताक्षे सतीत्यर्थः । अन्यत्र—नले कपिविशेषे । 'नलः पोटगले राज्ञि पितृदेवे कपीश्वरे' इति विश्वः । दृशोः अपिधायके सीतावधोद्यमं द्रष्टुं सोढुञ्च, अशक्यत्वात् हस्ताभ्यां चक्षुषोराच्छादके, भवति सति, तथा तारापतौ चन्द्रे सुग्रीवे च । 'ऋक्षाक्षिमध्ययोस्तारा सुग्रीवगुरुयोषितोः' इति विश्वः । दूरम् अत्यन्तम्, हतौजसि निस्तेजस्के च सति, सूर्यतेजसा अभिभूतत्वात् सीतावधोद्यमस्य प्रतीकाराशक्यत्वाच्चेति भावः । रावणस्य अपत्यं रावणिः इन्द्रजित्, मायामयीं मायाकल्पितां रघुपतेः रामचन्द्रस्य, जायां भार्यां सीतामिव, कल्पान्तरीयमायासीतावधविवरणावलम्बनेन अत्र उपमासङ्गतिर्बोद्धव्या। गभस्तिराट् सूर्यः, रात्रिं रजनीम्, लघु क्षिप्रम्, तिमिराणि अन्धकारा एव, चिकुराः केशाः, सीतापक्षे-तिमिराणीव चिकुराः, तेषु गृहीत्वा तिमिरचिकुरग्राहम् । सप्तम्यु-पपदे 'समासत्तौ' इति णमुल्-भावः । हिनस्ति विनाशयति ॥ ८ ॥

( मेघनादके द्वारा मायामयी सीताके वधका उपक्रम, पक्षा०—रात्रिकी समाप्तिका उपक्रम ) देखकर कुमुद ( रात्रिमें विकसित होनेवाला कमल, पक्षा०—'कुमुद'नामक वानर ) मोह ( सङ्कोच, पक्षा०—मूर्च्छा ) को प्राप्त होते रहनेपर, आपके नेत्रोन्मीलन करते रहने-पर ( पक्षा०—'नल' नामक वानरके ( सीतावधोपक्रमरूप दारुण कर्मके असह्य होनेसे ) नेत्रोंको ढक लेनेपर ), चन्द्रमा ( पक्षा०—'सुग्रीव' नामक वानराधिराज ) के क्षीणबल ( निस्तेज, पक्षा०—पराक्रमशून्य ) होते रहनेपर जिस प्रकार रावणपुत्र ( मेघनाद ) ने

मायामयी सीताको अन्धकारतुल्य कृष्णवर्ण केशोंको पकड़कर मारा था, उसी प्रकार प्रभापति (सूर्य) रात्रिको अन्धकाररूपी केशोंको पकड़कर मार (नष्ट कर) रहा है। [कल्पभेदसे या-कविसमयापेक्षासे पहले सत्ययुगोत्पन्न नलकी अपेक्षा बादमें त्रेतायुगोत्पन्न सीताका वर्णन करना असङ्गत नहीं है। हे राजन्! रात्रि बीत गयी, कुमुद सङ्कुचित होने लगे, कमल निकलने लगे, चन्द्रमा प्रकाशहीन होने लगा; अत एव प्रभातकाल जानकर निद्रा-त्याग कीजिये ]॥ ८॥

त्रिदशमिथुनक्रीडातल्पे विहायसि गाहते
निधुवनधुतस्रग्भागश्रीभरं ग्रहसङ्ग्रहः।
मृदुतरकराकारैस्तूलोत्करैरुदरम्भरिः
परिहरति नाखण्डो गण्डोपधानविधां विधुः॥ ९॥

त्रिदशेति। ग्रहसंग्रहः तारकात्मकशुक्रादिग्रहगणः, ग्रहशब्दस्य उपलक्षणत्वात्, रजन्याः पश्चिमयामे शुक्रताराया उदयदर्शनाच्चेति भावः। त्रिदशमिथुनानां देव-द्वन्द्वानाम्, क्रीडातल्पे विहारशय्यास्वरूपे, विहायसि आकाशे, निधुवनेन सुरतेन, सुरतकालिकप्रबलसञ्चालनेनेत्यर्थः। धुतस्रग्भागानां धुतानाम् इतस्ततो विक्षिप्ता-नाम्, स्रग्भागानां पुष्पमालांशानाम्, मालातो विक्षिप्तानामेकैकपुष्पाणामित्यर्थः। निर्माल्यानामिति यावत्, श्रीभरमिव श्रीभरं शोभाऽतिरेकम् गाहते आश्रयति। किञ्च अखण्डः परिपूर्णमण्डलः, विधुः चन्द्रः, मृदुतरकराः अतिशयेन कोमलाः किरणा एव, आकाराः रूपाणि येषां तादृशैः, तूलोत्करैः तूलपटलैः, उदरम् अभ्यन्त-रम्, बिभर्त्ति पूरयतीति उदरम्भरिः पूरितमध्यः, व्याप्तोदरः सन् इत्यर्थः। 'फलेग्रहि-रात्मम्भरिश्च' इति चकारात् सिद्धः। गण्डोपधानस्य कपोलोपबर्हस्य, गोलाकार—कपोलनिधानस्येत्यर्थः। 'उपधानन्तूपबर्हः' इत्यमरः। विधां प्रकारम्, तुल्यतामि-त्यर्थः। न परिहरति न त्यजति, गण्डोपधानत्वं भजते इत्यर्थः। उषागमेन क्षीणप्रभ-त्वादिति भावः। अत्र श्रियमिव श्रियं विधामिव विधामिति सादृश्याक्षेपात् उभयत्र निदर्शनोत्थानात् सजातीयसंसृष्टिः॥ ९॥

(शुक्र आदि) ग्रह-समूह देव-मिथुनकी क्रीडा-शय्यारूप आकाशमें (देव-मिथुनके) सुरतसे मर्दित मालाके पुष्पोंकी शोभाके समान शोभाको ग्रहण कर रहा है तथा पूर्णचन्द्रमा कोमलतर किरणोंके समान रूईकी राशिसे मध्यभागको पूर्ण करता हुआ (गोलाकार) गलतकिये (कपोलके नीचे रखी जानेवाली गोलाकार छोटी तकिया) के शोभाको नहीं छोड़ रहा है अर्थात् गलतकियेके समान शोभ रहा है। [जिस प्रकार शय्यापर मैथुन करनेसे मालाके टूटनेसे उसके फूल बिखरकर फैल जाते हैं, उसी प्रकार देवमिथुनके शय्या-रूप आकाशमें यह शुक्रादि तारागण देवमिथुनके सुरतमें टूटी मालाके बिखरे हुए फूलोंके समान शोभता है तथा उस शय्यापर जिस प्रकार श्वेत रूईसे भरी हुई गोलाकार मर्दित

होनेसे कुछ कान्तिहीन एवं चिपटी गलतकिया रहती है, उसी प्रकार अखण्ड होनेसे गोलाकार, प्रभात होनेसे दूरतक नहीं फैलनेवाली अत एव केवल चन्द्रके मध्यभागमें स्थित किरणरूपी रूईसे पूर्णमध्यभागवाला चन्द्रमा उक्तरूप आकाशमें गलतकियेके समान शोभ रहा है। सुरतकालमें मर्दित मालाके फूल तथा गलतकियेके समान यह ग्रहसमूह तथा चन्द्रमा प्रातःकाल होनेसे क्षीणप्रभ हो रहे हैं, अतः अब प्रातःकाल हो गया जानकर आप निद्रा त्यागकर उठिये ]॥ ९ ॥

दशशतचतुर्वेदीशाखाविवर्त्तनमूर्त्तयः
सविधमधुनाऽलङ्कुर्वन्ति ध्रुवं रविरश्मयः।
वदनकुहरेष्वध्येतॄणामयं तदुदञ्चति
श्रुतिपदमयस्तेषामेव प्रतिध्वनिरध्वनि ॥ १० ॥

दशेति। दश शतानि यासु ताः सहस्रसङ्ख्याः इत्यर्थः। ताश्च ताः चतुर्वेदीशाखाश्च इति। विशेषणसमासः, अन्यथोभयद्विगुप्राप्तौ बहु स्यादिति। वेदचतुष्टयस्य सहस्रसङ्ख्यकाः शाखा इत्यर्थः। तासां विवर्त्तनानि अतत्त्वतोऽन्यथाभावाः, परिवर्त्तनानीत्यर्थः। परिणतयः इति यावत्। मूर्त्तयः रूपाणि येषां ते तादृशाः तद्विवर्त्तनरूपाः सहस्रसङ्ख्यकोपनिषत्स्वरूपा इत्यर्थः। रवेः सूर्यस्य, रश्मयः सहस्रसङ्ख्यकाः किरणाः, अधुना सम्प्रति, अहर्मुखे इत्यर्थः। ध्रुवम् अजस्रम्, अविरतमित्यर्थः। 'ध्रुवं खेऽजस्रतर्कयोः' इति हैमः। सविधम् अस्मदादिसामीप्यम्, अलङ्कुर्वन्ति भूषयन्ति, समीपमागच्छन्ति इत्यर्थः। तत् तस्मात्, रविरश्मीनां समीपागमनादित्यर्थः। तेषां रश्मीनामेव, अयं श्रूयमाणः, श्रुतिपदमयः वेदाक्षरात्मकः, प्रतिध्वनिः प्रतिशब्दः, रविरश्मीनवलम्ब्य अत्रागतः सूर्यलोकीयवेदध्वनेः प्रतिशब्दः इत्यर्थः। अध्येतॄणाम् अत्रत्यवेदपाठकानां जनानाम्, वदनकुहरेषु मुखदरीषु, तथा अध्वनि शब्दगुणमये आकाशमार्गे च, उदञ्चति उद्गच्छति। 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्यादिश्रुत्या रविरश्मयः श्रुतिपदमया एव, सूर्यलोकवासिभिरपि इदानीं वेदा अधीयन्ते, 'द्वितीये च तथा भागे वेदाभ्यासो विधीयते' इति दक्षवचनात् इदानीं मर्त्यानां वेदाध्येतॄणां मुखविवरेषु योऽयं ध्वनिरुद्गच्छति स पुनः सूर्यलोकवासिनां वेदाध्ययनस्य रविरश्मीनवलम्ब्य आगतः प्रतिध्वनिरिव प्रतिभातीति भावः ॥ १० ॥

सहस्रसङ्ख्यक चतुर्वेद-शाखाओंके अतात्त्विक विवर्तनरूप आकृतवाली सूर्य-किरणें इस समय जिस कारण हमलोगोंके पास आ रही हैं, उस कारण ( वेदको ) पढ़नेवालोंके मुखरूपी कन्दरामें श्रुतियों ( वेदों ) के पदरूप प्रतिध्वनि आकाशमार्गमें फैल रही है। [ चारों वेदोंकी आश्वलायन, तैतिरीय आदि एक सहस्र शाखाओंका अतात्त्विक विवर्तनरूप ही ये सूर्य-किरणें हैं, अत एव जिस प्रकार कोई दूरागत शब्द पर्वतगुहा आदिमें प्रतिध्वनित होकर आकाश-मार्गमें फैल जाता है, उसी प्रकार वेद पढ़नेवालोंके मुखरूपी गुहामें

अतात्त्विक विवर्तित वेदशाखाओंके सुप्तिङादिरूप पद-समूह ही सूर्य किरणरूप होकर प्रतिध्वनित हो रहे हैं। सूर्योदय हो गया, वेदपाठी वेदाध्यन करने लगे, अत एव निद्रा त्यागकर जागिये ] ॥ १० ॥

नयति भगवानम्भोजस्यानिबन्धनबान्धवः
किमपि मघवत्प्रासादस्य प्रघाणमुपघ्नताम् ।
अपसरदरिध्वान्तप्रत्यग्वियत्पथमण्डली-
लग[1]नफलदश्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नयतीति। अम्भोजस्य पद्मस्य, अनिबन्धनबान्धवः निर्व्याजबन्धुः, भगवान् माहात्म्यवान्, सूर्यः इति शेषः। अपसरन्ति अपगच्छन्ति, पलायमानानीत्यर्थः। अरीणि विरोधीनि, ध्वान्तानि अन्धकाराः यस्यां तादृश्याम्, प्रत्यग्वियत्पथमण्डल्यां पश्चिमाकाशमार्गदेशे, लगनात् किरणसम्पर्केण संयोगात्, तथाविधभावेन ध्वान्तध्वंसनादित्यर्थः। फलन् सफलीभवन्, अश्रान्तस्वर्णाचलभ्रमः निरन्तरमेरुप्रदक्षिणीकरणमेव, विभ्रमः विलासः यस्य सः तादृशः सन्, किमपि कस्यापि हेतोः, मघवत्प्रासादस्य इन्द्रसौधस्य वैजयन्तस्य, प्रघाणम् अलिन्दम्। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। 'अगारैकदेशे प्रघणः प्रघाणश्च' इति निपातः। उपघ्नताम् अन्तिकाश्रयताम्, 'स्यादुपघ्नोऽन्तिकाश्रये' इत्यमरः। नयति प्रापयति, प्रघाणसमीपमाश्रितवानित्यर्थः। यथा स्वर्णादिपूर्णकोषागारपरिरक्षणाय नियुक्तः कश्चित् रक्षिसैन्यः तदागारं परितः पुनः पुनः परिक्रमणं कुर्वन् तत्रैव गुप्तभावेनावस्थितं शत्रुपक्षीयं कमप्यनुसरन् तत्कोषागारप्राचीरावलम्बनेनावस्थाय तं दूरीकृत्य सफलप्रदक्षिणः सन् श्रान्तिपरिहाराय अलिन्दं प्रविशति तद्वदिति भावः। सूर्यः शत्रुमिव अन्धकारं निरस्य क्षणादुदयाद्रिमाश्रितः इति निष्कर्षः ॥ ११ ॥

कमलके निष्कारण बन्धु तथा भागते ( नष्ट होते ) हुए शत्रुरूप अन्धकारके पश्चिम दिशा-सम्बन्धी आकाशमार्गमें संसर्ग ( पाठा०—अस्तङ्गत-नष्ट ) होनेसे निरन्तर सुमेरु पर्वतके चारों ओर घूमनेवाले भगवान् ( सूर्य ) इन्द्रप्रासादके अलिन्द ( पटडेहर ) का आश्रयकर रहे हैं अर्थात् पूर्वदिशामें उदय ले रहे हैं। [ जिस प्रकार स्वर्णादि धनराशिका रक्षक पहरेदार सर्वदा उसके चारों ओर चक्कर लगाता रहता है तथा उस धनराशिके एक भागमें छिपे हुए चोरका अनुसरण करता हुआ उसे मारकर श्रान्तिसे प्रवेशद्वारभागका आश्रय करता है, उसी प्रकार सुमेरुपर्वतरूप स्वर्णराशिका रक्षक अत एव उसकी चारों ओर घूमनेवाला सूर्य उस सुमेरुके पश्चिम भागमें पहुंचे हुए चोररूपी अन्धकारको भगाकर देवराज होनेसे देवोंके आवासभूत सुमेरुपर्वतके भी स्वामी पूर्व दिग्पति इन्द्रके 'वैजयन्त'

१. '—लयन—' इति पाठान्तरम् ।

नामक प्रासादके प्रवेश-द्वारका आश्रय कर रहा है अर्थात् सूर्य-किरणें पूर्व दिशामें ऊपरकी ओर फैलने लगी हैं और सूर्य उदयाचलपर आगया है ]॥ ११॥

नभसि महसां ध्वान्तध्वाङ्क्षप्रमापणपत्त्रिणा-
मिह विहरणैः श्यैनम्पातां रवेरवधारयन्।
शशविशसनत्रासादाशामगाच्चरमां शशी
तदधिगमनात्तारापारावतैरुदडीयत ॥ १२ ॥

नभसीति। शशी चन्द्रः, ध्वान्तानाम् अन्धकाराणामेव, ध्वाङ्क्षाणां कृष्णवर्णसाम्यात् वायसानाम्। 'ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि' इत्यमरः। प्रमापणे मारणे, पत्त्रिणां श्येनानाम्, श्येनस्वरूपाणामित्यर्थः। 'अथ शशादनः पत्त्री श्येनः' इत्यमरः। पत्त्रिणां शराणामिति वा, बाणस्वरूपाणामित्यर्थः। 'कलम्बमार्गणशराः पत्त्री रोप इषुर्द्वयोः' इत्यमरः। महसां तेजसाम्, सूर्यकिरणानामित्यर्थः। इह नभसि आकाशे, विहरणैः परिक्रमणैः, रवेः सूर्यस्य, श्येनपातः अस्यां क्रियायां वर्त्तते इति श्यैनम्पाता मृगया ताम्। 'घञः साऽस्यां क्रियेति ञः' इति ञप्रत्ययः। 'श्येनतिलस्य पाते ञे' इति मुमागमः। 'श्यैनम्पाता च मृगया' इत्यमरः। अवधारयन् निश्चिन्वन्, इवेति शेषः। शशः स्वाङ्कस्थितमृगविशेषः, तस्य विशसनत्रासात् हिंसाभयात्, मारणभयादित्यर्थः। चरमां पश्चिमाम्, आशां दिशम्, अगात् अगमत्, पलायितवानित्यर्थः। तस्य श्यैनम्पातावृत्तान्तस्य, रवेः मृगयाव्यापारस्येत्यर्थः। अधिगमनात् ज्ञानात्, ताराभिः नक्षत्रैरेव, पारावतैः कपोताख्यपक्षिविशेषैः। 'पारावतः कलरवः कपोतः' इत्यमरः। उदडीयत उड्डीनम्, उड्डीय पलायितमित्यर्थः। भावे लङ्। रविकिरणा गगने प्रसरन्ति, शशाङ्कः पश्चिमां दिशं यातः, तारकाश्च अलक्ष्यतां गता इति निष्कर्षः। रूपकालङ्कारः॥ १२॥

आकाशमें अन्धकारतुल्य (पक्षा०—अन्धकाररूप) कौवोंको मारने (पक्षा०—नष्ट करने) वाले ('श्येन'—बाज नामके) पक्षियों (पक्षा०—बाणों) के समान अर्थात् पक्षिरूप सूर्य-किरणोंके भ्रमण करनेसे इस पूर्वदिशा (या आकाश) में सूर्यके आखेटका निश्चय करता हुआ चन्द्रमा मानो (अपने अङ्कस्थ) शशकके भी मारे जानेके भयसे पश्चिम (अन्तिम अर्थात् बहुत दूर) दिशाको चला गया तथा उस (चन्द्रमाके भागने, या—सूर्यके आखेट करनेके समाचार) के मालूम होनेसे तारारूपी (पक्षा०—ताराके समान) कबूतर भी उड़ गये (पक्षा०—ऊपर चले गये अर्थात् अस्त हो गये)। [ जिस प्रकार कोई शिकारी आकाशमें उड़ते हुए कौवोंको बाणोंसे मारकर शिकार करता है तो शशकवाला व्यक्ति भी अपने शशकके शिकारमें मारे जानेके भयसे वहांसे बहुत दूर चला जाता है और कबूतर भी बहुत ऊंचा उड़कर आकाशमें छिप जाते हैं, उसी प्रकार सूर्य भी आकाशमें फैलती हुई अपनी किरणोंसे ऊपर फैले हुए अन्धकारको नष्ट करने लगा तो 'यह सूर्य अपने किरणोंसे कृष्णवर्ण अन्धकार को नष्टकर उनका शिकार कर रहा है, अतः वह कदाचित् मेरे

अङ्कमें स्थित कृष्णवर्ण शशकको भी न नष्ट कर दे' इस भयसे चन्द्रमा पश्चिम दिशाको चला गया और तारा भी उस वृत्तान्तके मालूम होनेपर ऊपरको ओर चली गयीं अर्थात् अस्त हो गयीं। आकाशमें सूर्यकिरण फैल रही है, कौवे तथा कबूतर उड़ रहे हैं, चन्द्रमा पश्चिम दिशामें अस्त हो रहा है तथा ताराएं भी अस्तङ्गत होनेसे अलक्ष्य हो गयी हैं ]॥१२॥

भृशमबिभरुस्तारा हाराच्च्युता इव मौक्तिकाः
सुरसुरतक्रीडालूनाद् घुसद्वियदङ्गणम् ।
बहुकरकृतात् प्रातः सम्मार्जनादधुना पुन-
र्निरुपधिनिजावस्थालक्ष्मीविलक्षणमीक्ष्यते ॥ १३ ॥

भृशमिति । ताराः तारकाः, सुराणां देवमिथुनानाम्, सुरतजया रमणोद्भूतया, क्रीडया परिमर्दरूपविहारेण, लूनात् छिन्नात्, हारात् मुक्तावलीतः, च्युताः विस्रस्ताः, मुक्ताः एव मौक्तिकाः, ता इव मुक्ताफलानीव इत्युत्प्रेक्षा । स्वार्थे कप्रत्ययः, 'प्रत्ययस्थात् कात् पूर्वस्य—' इतीकारः । घुसद्वियदङ्गणं घुसदां देवानां नभोरूपं प्राङ्गणम्, भृशम् अत्यर्थम्, अबिभरुः अपूरयन्, रात्रौ परिपूरितवत्य इत्यर्थः । 'डुभृञ् धारणपोषणयोः' इत्यस्य लङि रूपम्, 'लङः शाकटायनस्यैव' इति झेर्जुसादेशः । अधुना इदानीम्, प्रातः पुनः प्रभाते तु, बहुकरेण बहवः सहस्रसङ्ख्यकाः इत्यर्थः । कराः किरणा यस्य स बहुकरः सूर्यः, स एव बहुकरः खलपूसंज्ञकः सम्मार्जनकारी जातिविशेषः तेन, 'खलपूः स्यात् बहुकरः' इत्यमरः । कृतात् सम्पादितात्, सम्मार्जनात् शोधनात्, शोधन्या तारापसारणेन धूल्याद्यपसारणेन च परिष्करणादित्यर्थः । निरुपधेः निर्व्याजायाः, अकृत्रिमाया इत्यर्थः । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवम्' इत्यमरः । निजावस्थायाः आत्मस्वरूपस्य, लक्ष्म्याः नीलनिर्मलशोभायाः; विलक्षणं रात्रिकालिकावस्थातोऽन्यादृशं रूपम्, ईक्ष्यते एतत् वियदङ्गणं दृश्यते, खलपूपरिशुद्धिवत् बहुकरशुद्धमन्तरीक्षमपि पूर्वविलक्षणं लक्ष्यते इत्यर्थः, जनैरिति शेषः ॥

देवमिथुनों ( पक्षा०—देव तुल्य ऐश्वर्यवान् राजा आदि ) के सुरतजन्य क्रीडासे टूटे हुए हारसे गिरे हुए मोतियोंके समान ताराओंने देवताओंके आकाश-प्राङ्गणको परिपूर्णकर दिया अर्थात् आकाशरूपी आँगनमें बिखर पड़ीं—फैल गयीं। फिर इस समय बहुत किरणवाले ( सूर्य, पक्षा०—झाड़ू देनेवाले लोगों ) के द्वारा प्रातःकाल मार्जन ( झाड़ू लगाकर साफ ) करनेसे वह ( आकाश-प्राङ्गण ) स्वाभाविक अवस्थावाली शोभासे विलक्षण ( अपूर्व ) दृष्टिगोचर हो रहा है । [ जिस प्रकार ऐश्वर्यवान् राजा आदिके सुरतक्रीडाओंमें टूटे हुए हारसे गिरे मोती आँगनमें फैल जाते है तो झाड़ू देनेवाला नौकर आदिके प्रातःकालमें झाड़ू देनेसे कूड़ा-कचरा साफ हो जानेसे वह आँगन अपूर्व-सा दीखने लगता है; उसी प्रकार देवमिथुनको सुरत क्रीडाओंसे टूटे हुए हारसे गिरकर मोतीतुल्य तारागण

१. 'लूनादियद्वि—' इति पाठान्तरम् ।

देवोंके आँगनरूपी आकाशमें रातको फैल गये थे, अब सूर्यरूपी झाड़ू लगानेवालेमें प्रातः-काल मानो झाड़ू लगाकर उन ताराओंको आकाशरूपी आँगनसे बहारकर फेंक दिया है, ( दूर कर ) दिया है, अत एव वह आकाशरूपी आँगन स्वाभाविक शोभाको धारण करनेसे अभूतपूर्व शोभाको धारणकर रहा है ] ॥ १३ ॥

प्रथममुपहृत्यार्घ्यं तारैरखण्डिततण्डुलै-
स्तिमिरपरिषद्दूर्वापर्वावलीशबलीकृतैः।
अथ रविरुचां ग्रासातिथ्यं नभः स्वविहारिभिः।
सृजति शिशिरक्षोदश्रेणीमयैरुदसक्तुभिः ॥ १४ ॥

प्रथममिति। नभः आकशम्। कर्तृ। तिमिरपरिषत् तमोवृन्दम्, सा एव दूर्वा-पर्वणां दूर्वाग्रन्थीनाम्, दूर्वादलानामित्यर्थः। आवली श्रेणी, श्यामवर्णत्वादिति भावः। तया शवलीकृतैः चित्रीकृतैः, मिश्रितैरित्यर्थः। तारैः नक्षत्रैरेव। 'नक्षत्रे नेत्र-मध्ये च तारा स्यात् तार इत्यपि' इति व्याडिः। अखण्डिततण्डुलैः निस्तुषाभग्न-शालिबीजैः, प्रथमम् आदौ, रविरुचां सूर्यकिरणानाम्, अर्घः पूजाविधिः, तस्मै इदम् अर्घ्यं पूजोपकरणमित्यर्थः। 'मूल्ये पूजाविधावर्घः' इति 'अर्घ्यमर्घार्थे' इति चामरः। उपहृत्य दत्वा, अथ अनन्तरम्, स्वविहारिभिः स्वस्मिन् नभसि सञ्चरणशीलैः, शिशिरक्षोदश्रेणीमयैः हिमशीकरपुञ्जरूपैः, उदसक्तुभिः जलालोडितभृष्टयवचूर्णैः। 'मन्थौदन—' इत्यादिना उदकशब्दस्योदादेशः। ग्रासातिथ्यं ग्रासरूपम् अतिथिस-त्कारम्, अतिथये इदम् इति 'अतिथेर्ञ्यः' इति ञ्यः। सृजति सम्पादयति, इवेति शेषः। समागताय अतिथये अर्घ्यदानानन्तरमन्नदानं हि गृहिणां रीतिः। रूपकालङ्कारः

आकाश अन्धकार-समूहरूपी दूर्वाकाण्ड-समूहोंसे श्यामवर्ण युक्त अर्थात् मिश्रित किये गये तारारूपी अक्षतोंसे पहले सूर्यकिरणोंके लिए अर्घ्य देकर बादमें हिम-कण-समूहरूपी जल मिश्रित सत्तूओंसे भोजनदानरूप आतिथ्य कर रहा है। [ जिस प्रकार कोई सद्गृहस्थ अपने गृहपर आये हुए अतिथिके लिए पहले अक्षत तथा दूर्वायुक्त जलसे अर्घ्य देनेके बाद उसके लिए अपने घरमें सरलतासे प्राप्य जल मिलित सत्तू आदिसे भी उसे भोजन देकर अतिथि-सत्कार क्रियाको पूर्ण करता है, उसी प्रकार यह आकाश भी श्यामवर्ण होनेसे दूर्वातुल्य अन्धकारसे तथा श्वेतवर्ण होनेसे अखण्डित तण्डुल-कण ( अक्षत ) तुल्य ताराओंसे पहले सूर्य-किरणोंके लिए अर्घ्य देकर बादमें श्वेत हिमकणरूप जलयुक्त सत्तूसे उनका भोजनदानरूप अतिथि सत्कार कर रहा है ] ॥ १४ ॥

असुरहितमप्यादित्योत्थां विपत्तिमुपागतं
दितिसुतगुरुः प्राणैर्योक्तुं न किं कचवत् तमः।
पठति लुठतीं कण्ठे विद्यामयं मृतजीवनीं ?
यदि न वहते सन्ध्यामौनव्रतव्ययभीरुताम् ॥ १५ ॥

असुरेति । दितिसुतानां दैत्यानाम् , गुरुः उपदेष्टा शुक्राचार्यः, असुरेभ्यः दैत्येभ्यः, हितमपि हितकरमपि, निशायामेव असुराणां बलवृद्धेरिति भावः । 'चतुर्थी तदर्थार्थ—' इत्यादिना समासः । अन्यत्र—असुभिः प्राणैः, रहितं विहीनम् , अचेतनमपीत्यर्थः । आदित्योत्थां सूर्योद्भूताम् ; कचपक्षे—देवोद्भूताम् , देवानामनुरोधेनैव कचस्य तत्रागमनात् तद्विपत्तेः तदुत्थत्वव्यपदेशः । विपत्तिं विनाशम् , उपागतं प्राप्तम् , तमः अन्धकारम् , कचवत् बृहस्पतिसुतं कचमिव, बृहस्पतिपुत्रः कचः देवताप्रेरितः सञ्जीवनीविद्यार्थं शुक्रमुपागतः, स दैत्यहतः पुनः शुक्रेणोज्जीवितः इति भारती कथा । प्राणैः असुभिः, योक्तुं सङ्घटयितुम् , कण्ठे गलमध्ये, लुठतीं परावर्त्तमानाम् , सदा तिष्ठन्तीमित्यर्थः । 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः । मृतजीवनीं मृतसञ्जीवनीम् , विद्यां ज्ञानम् , मन्त्रमिति यावत् , न पठति किम् ? न अधीते किम् ? अपि तु पठेदेव, यदि, अयं शुक्रः, सन्ध्यामौनव्रतव्ययात् सन्ध्यायां प्रातःसन्ध्यायाम् , यत् मौनव्रतं वाक्संयमनियमः, तस्यः, व्ययात् भङ्गात् , भीरुतां भयशीलताम् , न वहते न धत्ते, अन्यथा कथमीदृक् विद्यावानपि पुरोवर्त्तिनं स्वशिष्यासुरहितकरान्धकारविनाशमुपेक्षते इति भावः ॥ १५ ॥

दैत्यगुरु ( शुक्राचार्य ) देवों ( पक्षा०—सूर्य ) से उत्पन्न विपत्ति ( मरण, पक्षा०—विनाश ) को प्राप्त ( रात्रिचर होनेसे ) असुरोंके हितकर ( पक्षा०—प्राण-रहित ) भी अन्धकारको 'कच' ( नामक बृहस्पति-पुत्र ) के समान प्राणोंसे युक्त करने अर्थात् जीवित करनेके लिए कण्ठमें लोटती हुई अर्थात् कण्ठस्थ ( अतिशय अभ्यस्त ) मृतसञ्जीवनी विद्याको क्या नहीं पढ़ते ? अर्थात् अवश्य ही पढ़ते, यदि प्रातः सन्ध्यामें गृहीत मौनव्रतके भङ्ग होनेसे नहीं डरते । [ जिस प्रकार देवोंके कारण प्राप्त मृत्युवाले 'कच' को दैत्यगुरु शुक्राचार्यने मृतशञ्जीवनी विद्या पढ़कर जीवित कर दिया, उसी प्रकार सूर्यसे उत्पन्न नाशको प्राप्त किये हुए असुरहितकारी अन्धकारको वह शुक्राचार्य मृतसञ्जीवनी विद्या पढ़कर अवश्य जीवित कर देते, किन्तु वे प्रातःसन्ध्याका मौनव्रत लेनेके कारण उसके भङ्ग होनेपर दोष लगनेके भयसे वैसा नहीं करते हैं, अन्यथा वे सूर्यसे नष्ट हुए असुरों ( स्वशिष्यों ) के हितकारी अन्धकारको मृतसञ्जीवनी विद्या पढ़कर नामको अवश्यमेव जीवित कर देते ] ॥१५

पौराणिक कथा—देवासुरसङ्ग्राममें मरते हुए देवपक्षको देखकर दैत्यगुरु शुक्राचार्यके पास उनसे मृतसञ्जीवनी विद्या पढ़नेके लिए बृहस्पतिपुत्र 'कच' को देवोंने भेजा तो उसके अभिप्रायको जानकर दैत्योंने उसे मार डाला, किन्तु दैत्यगुरु शुक्राचार्यने मृतसञ्जीवनी विद्यासे उस कचको पुनः जीवित कर दिया । यह महाभारतकी कथा है ।

उदयशिखरिप्रस्थान्यह्ना रणेऽत्र निशः क्षणे
दधति विहरत्पूषाण्युष्मद्रुताश्मजतुस्रवान् ।
उदयदरुणप्रह्वीभावादरादरुणानुजे
मिलति किमु तत्सङ्गाच्छङ्क्ष्या नवेष्टकवेष्टना ? ॥ १६ ॥

उदयेति। अत्र अस्मिन्, क्षणे समये, अहर्मुखे इत्यर्थः। निशः निशायाः, अह्ना दिवसेन सह, रणे युद्धे, स्वाधिकारस्थापनाय युद्धे प्रारब्धे सतीत्यर्थः। विहरत्पूषाणि विहरन् सञ्चरन्, युद्धदर्शनकौतूहलेनेति भावः। पूषा सूर्यः यत्र तादृशानि सञ्चरत्सूर्याणि, उदयशिखरिप्रस्थानि उदयाद्रेः सानूनि। 'प्रस्थोऽस्त्री सानुमानयोः' इति यादवः। उष्मणा सूर्यस्यैव तेजसा, द्रुतानां विलीनानाम्, अश्मजतूनां शिलाजत्वाख्यधातुविशेषाणाम्, स्रवान् स्रावान्, प्रवाहानित्यर्थः। दधति धारयन्ति, रक्तप्रवाहानिवेति भावः। तेन च उदयतः उत्तिष्ठतः, अरुणस्य सूर्यसारथेः गरुडाग्रजस्य अनूरोः सम्बन्धे, प्रह्वीभावादरात् प्रणामकरणाग्रहात्, अरुणानुजे गरुडे, रक्तवर्णे इति भावः। मिलति सङ्गमं प्राप्तवति, अरुणाय नन्तुं समागच्छति सतीत्यर्थः। तत्सङ्गात् गरुडसम्पर्कात् हेतोः, नवाः प्रत्यग्राः, इष्टकाः रक्तवर्णदग्धमृत्खण्डविशेषाः यस्यां सा तादृशी, वेष्टना परिधिः, प्राकार इत्यर्थः। शङ्क्या शङ्कनीया, किमु? किम्? रक्तवर्णगरुडकान्तेः पर्वतसमन्तात् स्थितेरिति भावः। यदुक्तहेतुना गरुडः न सङ्गच्छेत तदा सुवर्णपङ्क्त्यासिरूपा उदयाद्रेः नवेष्टकावेष्टना कस्मादिति सम्भावनयोत्प्रेक्षा ॥ १६ ॥

इस समयमें रात्रिका दिनके साथ (अपने-अपने पक्षको दृढ़ करनेके लिए) युद्ध आरम्भ होनेपर (अथवा—रात्रिका दिनके साथ युद्धरूप इस समय अर्थात् प्रातःकालमें मानो युद्ध देखनेके कौतुकसे) विहारकर (घूम) रहे हैं सूर्य जिनमें ऐसे, उदयाचलके शिखर (सूर्य-किरणोंके स्पर्शसे उत्पन्न) गर्मीसे पिघलते हुए शिलाजीतके स्रावको धारण कर रहे हैं अर्थात् सूर्य-किरण-संसर्गज सन्तापसे शिलाजीत (पक्षा०—युद्धमें आहत होनेसे रक्त) को वहा रहे हैं। तथा उदय होते (पक्षा०—आते हुए) अरुण (अपने बड़े भाई) के नमस्कार करनेके आदरसे गरुड (पक्षीराज, पक्षा०—गारुत्ममणि) के मिलनेपर उसके संसर्गसे नये (भट्ठेसे तत्काल निकालनेके कारण अरुणवर्ण) ईंटके घेरेकी शङ्का क्यों नहीं होती क्या? अर्थात् नई ईंटोंके घिरे हुए के समान वह अवश्यमेव जान पड़ता है। [सूर्यके आश्रित दिन-प्रकाशका रात्रिके साथ युद्ध होनेपर अपने आश्रितके युद्धपराक्रम को देखनेके लिए सूर्य युद्धस्थलमें पहुंचे तो उनके चारो तरफ नयी लाल-लाल सुवर्णमयी ईंटोंका घेरा वना दिया गया है सेनानायक दिन तथा रात्रिके परस्पर युद्ध होनेपर उनके भटतुल्य उदयाचल-शिखर सूर्यसन्तापज उष्णतासे वहते हुए शिलाजीतरूप रक्तस्रावको धारण कर रहे हैं और विजयी दिनपक्षीय शिलाएँ गरुडमणिके सम्पर्कसे सुवर्णमय पट्टिकाओंसे अलङ्कृत हो रही हैं ऐसा मालूम पड़ता है] ॥ १६ ॥

रविरथहयानश्वस्यन्ति ध्रुवं बडवा बल-
प्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान्।
निजपरिवृढं गाढप्रेमा रथाङ्गविहङ्गमी
स्मरशरपराधीनस्वान्ता वृषस्यति सम्प्रति ॥ १७ ॥

रवीति । बलप्रतिबलस्य बलाख्यासुरप्रतिपक्षस्य पूर्वदिगधिपतेरिन्द्रस्य, बलेषु सैन्येषु, अवतिष्ठन्ते वर्त्तन्ते इति तदवस्थायिन्यः, बडवाः तुरङ्गयः, पूर्वदिग्वर्त्तिन्य इति भावः । समीपगान् निकटस्थान् , रविरथहयान् सूर्यस्य स्यन्दनाकर्षिणः सप्त घोटकान् , समीक्ष्य विलोक्य, अश्वस्यन्ति कामयन्ते, मैथुनार्थमश्वमिच्छन्तीत्यर्थः, ध्रुवमित्युत्प्रेक्षायाम् । तथा गाढप्रेमा दृढानुरागा, अत एव स्मरशराणां कन्दर्पबाणानां पराधीनस्वान्ता परतन्त्रचित्ता, कामपीडितचित्ता इत्यर्थः । रथाङ्गविहङ्गमी चक्रवाकपक्षिणी । 'जातेरस्त्री—' इत्यादिना ङीप् । निजपरिबृढं स्वप्रभुम् , आत्मनः कान्तमित्यर्थः । सम्प्रति ऊषःकाले, वृषस्यति मैथुनाय कामयते इत्यर्थः । रात्रिवियोगिनोः चक्रवाकमिथुनयोः दिने एव मैथुनकरणादिति बोध्यम् । 'सुप आत्मनः क्यच्' इति क्यच् । 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुगागमः । 'अश्ववृषयोर्मैथुनेच्छायाम्' इति वक्तव्यादर्थनियमः ॥ १७ ॥

बलासुरके प्रतिपक्षी ( इन्द्र ) की ( पूर्वदिशास्थित ) सेनाकी घोड़ियां समीपसे जाते हुए सूर्यके रथके ( सात ) घोड़ोंको मैथुनार्थ मानो इच्छा कर रही हैं ( अथवा—अवश्य ही इच्छा कर रही हैं । तथा इस समय ( प्रातःकालमें ) कामवाणोंसे पराधीन चित्तवाली एवं अधिक प्रेमवाली चक्रवाकी अपने स्वामी ( चक्रवाक ) को मैथुनार्थ चाह रही है । अथवा—इस समय ( प्रातःकालमें ) कामबाणोंसे पराधीन चित्तवाली एवं अधिक प्रेम करनेवाली वलारि ( इन्द्र ) की सेनामें रहनेवाली घोड़ियां अपने स्वामी समीपगामी सूर्यरथके सात घोड़ोंको मैथुनार्थ चाह रही हैं तथा कामवाणोंसे पराधीन चित्तवाली एवं अधिक प्रेम करनेवाली चक्रवाकी समीपगामी अपने स्वामी ( चक्रवाक ) को मैथुनार्थ चाह रही है )। [ इस अर्थमें 'निजपरिवृढम्' पदको विभक्ति-विपरिणामकर बहुवचनान्त तथा 'समीपगान्' पदको विभक्तिविपरिणामकर एकवचनान्त करके वडवा तथा चक्रवाकी दोनों पक्षोंका विशेषण मानना चाहिये । 'गाढप्रेमा' पद 'डाबुभाभ्यां—' सूत्रसे विकल्प डाप् करनेसे तथा 'स्मर'''स्वान्ता' पद टावन्त करनेसे बहुवचनान्त तथा एकवचनान्त दोनों हैं, इसके बहुवचनान्तपक्षमें विसर्गलोप तथा आबन्त होनेसे सुलोपमात्र करनेसे उसको चक्रवाकी तथा वडवा—दोनोंके विशेषण मानना चाहिये ] ॥ १७ ॥

> निशि निरशनाः क्षीरस्यन्तः क्षुधाऽश्वकिशोरकाः
> मधुरमधुरं ह्रेषन्त्येते[1] विलोलितबालधि ।
> तुरगसमजः स्थानोत्थायं क्वणन्मणिमन्थभू-[2]
> धरभवशिलालेहायेहाचणो लवणस्यति ॥ १८ ॥

निशीति । हे महाराज ! निशि रात्रौ, निरशनाः निराहाराः, मातुः सकाशात् दूरे

---

१. 'हेषन्ते ते' इति 'प्रकाश' सम्मतः पाठः ।

२. 'क्वणन्मणि मन्थभू—' इति व्यस्तपदं पाठान्तरम् ।

अस्वयापनादिति भावः । अत एव क्षुधा क्षुधया, क्षीरस्यन्तः क्षीरम् आत्मनः भृश-मिच्छन्तः, दुग्धं पिपासन्तः इत्यर्थः । एते हेषाध्वनिना अनुमितसमीपावस्थाना इत्यर्थः । अश्वकिशोरकाः घोटकबालकाः । 'बालः किशोरः' इत्यमरः । विलोलित-वालधि सञ्चालितपुच्छं यथा तथा, मधुरमधुरम् अतिशयेन मनोहरम्, ह्रेपन्ति स्वनन्ति । किञ्च मणिमन्थभूधरः सैन्धवाचलः । 'सैन्धवोऽस्त्री शीतशिवं माणिमन्थञ्च सिन्धुजे' इत्यमरः । तद्भावानां तज्जानाम्, शिलानां लवणोपलविशेषाणाम्, लेहाय आस्वादाय, ईहाचणः चेष्टया वित्तः, लवणलोलुपत्वेन ख्यात इत्यर्थः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्प्रत्ययः । तुरगाणां घोटकानाम्, समजः समूहः । 'पशूनां समजः' इत्यमरः । 'समुदोरजः पशुषु' इत्यप्प्रत्ययः । क्वणन् शब्दायमानः, हेषाध्वनिं कुर्वन् इत्यर्थः । 'क्वणन्मणि मन्थभू' इति व्यस्तपाठे—मन्थभूदरः रवि-पर्वतः, उदयाचल इत्यर्थः । 'मन्थो रवौ मथि । साक्तवे नेत्ररोगे च' इति हैमः । तद्भवशिलालेहाय ईहाचणः तुरगसमजः, क्वणन्तः शब्दायमानाः, मणयः क्षुद्रघण्टि-कासमूहा यस्मिन् तत् यथा तथा क्वणत्किङ्किणीकं यथा तथा इत्यर्थः । स्थानोत्थायं स्थानात् निजशयनप्रदेशात्, उत्थाय उद्गत्य । 'अपादाने परीप्सायाम्' इति णमुल् । लवणस्यति लवणम् आत्मनः भृशमिच्छति, लवणं भोक्तुमिच्छतीत्यर्थः । 'अश्व-क्षीर—' इत्यादिना 'क्षीरलवणयोर्लालसायाम्' इत्यर्थनियमेऽसुगागमः । लालसा तृष्णातिरेकः ॥ १८ ॥

रात्रिमें ( मातासे पृथक् बँधे रहनेसे ) निराहार एवं भूखसे दूध पीनेकी अधिक इच्छा करते हुए ये घोड़ोंके बच्छे पूछको हिलाते हुए अतिशय मधुर हिनहिना रहे हैं तथा शयन-स्थानसे शीघ्र उठकर हिनहिनाता हुआ एवं सैन्धव पर्वतकी शिला ( चट्टानों—सेंधानमकके बड़े-बड़े टुकड़ों ) के चाटनेकी इच्छासे युक्त ( पाठा०—शयनस्थानसे तत्काल उठकर उदयाचलकी शिलाको चाटनेकी इच्छासे युक्त तथा गलेमें पड़े हुए मणियों की घुघुरुओंको वार-बार बजाता हुआ ) अश्वसमूह नमक चाहता है । [ घोड़ोंके छोटे बच्चे दूध पीना तथा उठकर नमक चाटना चाहते हैं ] ॥ १८ ॥

उडुपरिषदः किं नार्हत्त्वं ? निशः किमु नौचिती ?
पतिरिह न यत् ताभ्यां दृष्टो गरीयरुचीगणः ।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मन-
च्छवि यदनयोर्विच्छेदेऽपि मृतं वत न द्रुतम् ॥ १९ ॥

उडिति । उडुपरिषदः तारागणस्य, अर्हतः भावः अर्हत्वं पूज्यत्वम्, प्रशंसनीय-त्वमित्यर्थः । प्रागेवास्तगमनस्येति भावः । न किम् ? अपि तु अर्हत्वमेव । 'अर्हत्वम्' इति पाठे—अर्हत्वम् औचित्यम्, न किम् ? अपि तु औचित्यमेवेत्यर्थः । 'आर्हन्तौ'

१. 'नार्हत्वम्' इति, 'नार्हन्ती' इति च पाठान्तरम् । २. 'द्रुतम्' इति पाठान्तरम् ।

इति पाठे । 'अर्हः प्रशंसायाम्' इति शतरि, अर्हतो भाव इति ब्राह्मणादित्वात् ष्यञ्-प्रत्यये 'अर्हतो नुम् च' इति नुमागमः, 'ष्यञः षित्करणादीकारो बहुलम्' इति वामनः । 'यस्य हलः' इति यकारलोपः । एतेन औचिती व्याख्याता । नुमभावस्तु विशेषः । निशः रात्रेरपि, न औचिती न औचित्यम्, किमु ? अपि तु उचितमेव, प्रागेवापगमनमिति भावः । अर्हत्वमेवौचित्यमेव चाह,—यत् यस्मात्, इह अस्मिन् समये, प्रभातकाले इत्यर्थः । गणेयरुचीगणः परिगणनीयकान्तिचयः, अतिशयेन परिक्षीणकिरणः इत्यर्थः । 'गणेरेयः' इत्यौणादिकण्यप्रत्ययः । पति चन्द्रः, ताभ्याम् उडुपरिषन्निशाभ्यां, न दृष्टः न अवलोकितः । 'धन्यास्तात ! न पश्यन्ति पतिभङ्गं कुलक्षयम्' इति स्मृतेः स्त्रीणां पत्युः क्षीणावस्थाया ईक्षणस्य अधन्यत्वसूचकत्वा-दिति भावः । किञ्च, अश्मनः इयम् आश्मनी, 'तस्येदम्' इत्यण्, सम्बन्धे अणि विकाराभावात् 'अश्मनो विकारे टिलोपो वक्तव्यः' इति टिलोपाभावः । स्फुरन्ती शशाङ्कतया कृष्णवर्णत्वेन प्रकाशमाना, मलिना कृष्णवर्णा, आश्मनी पाषाणमयी, पाषाणवत् कठिनेत्यर्थः । छविः कान्तिः यस्य तत् स्फुरन्मिलनाश्मनच्छवि कृष्ण-वर्णप्रस्तरसदृशम्, उडुपतेः ताराकान्तस्य, वक्षः हृदयम्, अश्मनो विकारः आश्मं पाषाणमयम्, प्रस्तरवत् दुर्भेद्यमिति भावः । विकारार्थेऽण्प्रत्ययः । 'अश्मनो विकारे टिलोपो वक्तव्यः' इति टिलोपः । स्फुटं सत्यम् । कुतः ? यत् यस्मात्, अनयोः स्वकान्तयोः उडुपरिषन्निशयोः, विच्छेदे वियोगेऽपि, प्रागेवापगमनादिति भावः । द्रुतं शीघ्रम्, न मृतं न विदीर्णं जातम् बत इति खेदे । अनयोर्वियोगेन उडुपतेः वक्षो-विदारणेन मरणस्यैवौचित्यादिति भावः ॥ १९ ॥

तारासमूहका पूज्यत्व ( पाठा०—औचित्य ) नहीं है क्या ? तथा रात्रिका औचित्य नहीं है क्या ? कि उन दोनों ( तारासमूह तथा रात्रि ) ने गिनने योग्य अर्थात् अत्यल्प किरण-समूहवाले ( क्षीणकिरण ) पति ( चन्द्रमा ) को नहीं देखा ( पतिरूप चन्द्रके विनाश देखनेके पहले ही नष्ट होनेवाले तारासमूह तथा रात्रिका नष्ट हो जाना अत्यन्त उचित है । किन्तु ) स्फुरित होते हुए मलिन ( कृष्णवर्ण ) पत्थरके समान कान्तिवाला तारापति ( चन्द्रमा ) का वक्षःस्थल अवश्य ही पत्थरका ( या—मानों पत्थरसे ) बना है, क्योंकि ( अथवा—जो = हृदय ) इन दोनों ( तारासमूह तथा रात्रि ) के वियोग होने पर भी शीघ्र नष्ट नहीं हुआ ( पाठा०—पिघल गया ) । [ अत एव चन्द्रमाके ऐसा कार्य अनुचित हुआ । तारागण नष्ट हो गये, रात्रि बीत गयी तथा चन्द्र भी क्षीणप्रभ हो गया । ] ॥१९॥

अरुणकिरणो वह्नौ लाजानुडूनि जुहोति या
परिणयति तां सन्ध्यामेतामवैमि मणिर्दिवः ।
इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोत्कः सकौतुकमीक्षितुम् ? ॥ २० ॥

अरुणेति। या प्रातःसन्ध्या, अरुणस्य सूर्यसारथेः अनूरोः, किरणे रश्मौ एव, वह्नौ अनले, आरक्तवर्णत्वसाम्यादिति भावः। उडूनि नक्षत्राणि एव, लाजान् भृष्टधान्यकृतान् अक्षतान्, जुहोति आहुतिदानेनेव अदर्शनं नयतीत्यर्थः। आहुतिं ददाति च। प्रभातालोकेन नक्षत्राणां क्षीणत्वशुभ्रत्वादिरूपेण प्रतीयमानत्वात् लाजसाम्यत्वं बोध्यमिति। ताम् उक्तरूपाम्, एतां परिदृश्यमानाम्, सन्ध्यां प्रातःसन्ध्यारूपां वधूम्, दिवः आकाशस्य, मणिः रत्नम्, सूर्यः इति यावत्। वरः इति भावः। परिणयति परि सर्वतोभावेन, नयति प्रापयति, उपस्थापयतीत्यर्थः। उपयच्छते च, इति अवैमि जानामि। वाक्यार्थः कर्म। इत्युत्प्रेक्षे इत्यर्थः। कथमवैषीत्यपेक्षायामाह—यतः यस्मात् हेतोः, इयं सन्ध्यावधूरिव, सोऽपि स वरः सूर्योऽपि, पुरा पूर्वम्, आगामिनि काले च। 'स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा' इत्यमरः। तत्र सन्ध्या पूर्वं सूर्यश्च आगामिनि काले इत्याशयः। अग्निभ्रान्तिम् आरुण्यात् आत्मनि अग्निविभ्रमं लाजहोमानन्तरम् अग्निप्रदक्षिणरूपं भ्रमणञ्च, करोति चकार करिष्यति च। 'यावत्पुरानिपातयोर्लट्'। एकत्र—सन्ध्यायाः सूर्यस्य च उभयोरेव अग्निवर्णत्वात् उभावेव आत्मनि तद्भ्रमं कुरुतः अन्यत्र च—अग्रे वधूः तत्पृष्ठतो वरश्च अग्निप्रदक्षिणं करोतीति परिणयविधौ दृश्यते इत्याशयः। एवञ्च क एव को वा जनः, सकौतुकं सकौतूहलं यथा तथा, ससूत्रञ्च। 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले' इति यादवः। तस्य परिणेतुः द्युमणेः, करम् अंशुं हस्तञ्च। 'बलिहस्तांशवः कराः' इत्यमरः। ईक्षितुं द्रष्टुम्, न एव उत्कः? नैव उत्सुकः? एकत्र—अरुणोदयकालिकहोमादिनित्यकर्मानुष्ठानार्थम्, अन्यत्र—चित्तविनोदनार्थञ्चेति भावः। भवतीति शेषः। अपि तु सर्वेऽपि उत्सुका एव भवन्तीत्यर्थः। अरुणोदयः जातः, तारकाश्च अरुणप्रभायां लीनाः सत्यः न दृश्यन्ते, सन्ध्यासमयश्च समागतः, इदानीं सूर्यं उदेष्यति इति निष्कर्षः॥ २०॥

जो (प्रातःसन्ध्यारूपिणी वधू) अरुणके किरणरूपी (पक्षा०—अरुणवर्ण ज्वालाओंवाली) अग्निमें तारारूपी लाजाओं (धानकी खीलों) को हवन करती (पक्षा०—पहुंचाकर जलाती—नष्ट करती) है, ऐसी उस प्रातःसन्ध्या (रूपिणी वधू) को आकाशमणि (सूर्य, पक्षा०—सूर्यरूपी श्रेष्ठ वर) अभ्युन्नत (पक्षा०—विवाहित) कर रहा है, क्योंकि इस (प्रातःसन्ध्यारूपिणी वधू) के समान वह सूर्य भी पहले (पक्षा०—आगामी समयमें) अग्निकी भ्रान्ति (भ्रम, पक्षा०—प्रदक्षिणा) को करेगा तथा किया तथा उस (सूर्य) के किरणको (प्रातःकालका सूर्यार्घ्य देते समय) ऊपर जल किया हुआ कौन व्यक्ति कौतूहलपूर्वक नहीं देखेगा? (पक्षा०—उस (सूर्यरूपी वर) के विवाहके कङ्कणसूत्र युक्त हाथको कौन व्यक्ति उत्कण्ठित होकर नहीं देखेगा?)। [जिस प्रकार वधू अरुणवर्ण ज्वालाओंवाली अग्निमें लाजाहुती करती है, उससे श्रेष्ठ वर विवाह करता है, वह वधू आगे-आगे तथा वर पीछे-पीछे अग्निकी चारों ओर प्रदक्षिणा करते हुए भ्रमण करते हैं और कौतूहलपूर्वक सव-

लोग उस वरके विवाहकालके कङ्कण बँधे हुए हाथको देखते हैं, उसी प्रकार प्रकृतमें प्रातः-सन्ध्यारूपिणी वधू अरुणकिरणरूपी अग्निमें नक्षत्ररूप लाजाका हवन करती है, सूर्यरूपी श्रेष्ठ वर उसको परिणीत ( विवाहित ) कर रहा है, पहले प्रातः सन्ध्या तथा बादमें सूर्यने अरुण-वर्ण होनेसे लोगोंमें अग्निका भ्रम उत्पन्न कर दिये हैं तथा फिर 'करेंगे' ( पक्षा०—पहले अरुणवर्ण वधू तथा बादमें अरुणवर्ण ही वर अग्निकी प्रदक्षिणा किये तथा करेंगे ) और यह अर्घ्य देनेवाले हाथमें ऊपरकी ओर जल लिये, सूर्य-किरणों को देखते हैं ( पक्षा०—वैवाहिक मङ्गलसूत्रसे युक्त वरके हाथको लोग देखते हैं ) यहांपर अरुणमें अग्नि, ताराओंमें लाजा, प्रातःसन्ध्यामें वधू, सूर्यमें वरका आरोप किया गया है। अरुणोदय हो गया, ताराएँ अरुणकी प्रभामें विलीन होनेसे नहीं दीखतीं, प्रातःसन्ध्याका समय आ गया और अब सूर्योदय भी होनेवाला है ] ॥ २० ॥

रतिरतिपतिद्वैतश्रीकौ ! धुरं बिभृमस्तमां
प्रियवचसि यन्नग्नाचार्या वदामतमां ततः ।
अपि विरचितो विघ्नः पुण्यद्रुहः खलु नर्मणः
परुषमरुषे नैकस्यै वा मुदेतु मुदेऽपि तत् ॥ २१ ॥

रतीति । रतिरतिपत्योः कामाङ्गनाकामदेवयोः, द्वैतं द्वितीयत्वं यत्र सा तादृशी, श्रीः सौन्दर्यं ययोः तादृशौ हे द्वितीयौ रतिकामौ ! हे तादृशौ भैमीनलौ ! प्रियवचसि चाटुवादे, स्तुतिपाठकर्मणीत्यर्थः। धुरं भारम्, बिभृमस्तमाम् अतिशयेन धारयामः। भवतां सन्तोषकरवचनप्रयोगे एव वयं नियुक्ताः स्म इत्यर्थः। तथाऽपि यत् यस्मात्, नग्नानां वन्दिनाम्, अन्यान्यस्तुतिपाठकानामित्यर्थः। 'नग्नः क्षपण-वन्दिनोः' इत्यमरः। आचार्याः उपदेशादिकारिणः, वन्दिप्रधाना इत्यर्थः। वयमिति शेषः। ततः तस्मात्, वदामतमाम् अतिशयेन वदामः, औचित्यात् अप्रियमपि हितमिति भावः। उभयत्रापि 'तिङश्चयात्—' इत्यामुप्रत्ययः। ननु किं वा अप्रियं कि वा हितं वदथ? इत्याह—पुण्यद्रुहः सन्ध्यार्चनाद्यवश्यकर्त्तव्यनित्यकर्मणां व्याघा-तजनकत्वेन सुकृतविरोधिनः, नर्मणः युवयोः सुखविहारस्य, विघ्नः अन्तरायः, विर-चितः खलु अपि ईदृगप्रियवाक्येन सम्पादितः एव, अतः तत् तादृशम्, परुषं नर्म-व्याघातकतया निष्ठुरम्, वाक्यमिति शेषः। वां युवयोः मध्ये, एकस्यै भैम्यै, अरुषे क्रोधाभावाय, क्वचित् प्रसज्य प्रतिषेधेऽपि नञ्समास इष्यते। न उदेति न जायते, बालाया अदोक्षितायाः तस्याः सन्ध्यादिप्रयोजनाभावात् क्रोधायैव भवतु इति भावः। मुदे हर्षाय अपि, सन्ध्यार्चनाद्यवश्यकर्मप्रयोजकत्वात् तव सन्तोषायापी-त्यर्थः। उदेतु। अप्रियमपि हितं वाच्यमेवेत्यतो वदाम इत्याशयः ॥ २१ ॥

हे रति तथा कामदेवके द्वैतकी ( द्वितीयत्व ) की शोभावाले ( क्रमशः—दमयन्ती तथा नल ) ! प्रियवचन ( कहने ) में हमलोग विशेषतः भार ग्रहण करते हैं अर्थात् आपलोगोंके

प्रियभाषणको करना ही हमलोगोंका दायित्व, क्योंकि हमलोग नग्नाचार्य (स्तुतिपाठक वन्दियोंके आचार्य) हैं, इस कारण हमलोग (अप्रिय होनेपर भी हितकर वचनको) विशेषतः कहते हैं। (अथवा—जिस कारण वन्दियोंके आचार्य हमलोग प्रियवचन कहने में भार ग्रहण करते हैं, उस कारण विशेषतः कहते हैं। अथ च—नग्नोंके आचार्य हैं, अत एव निर्लज्जतम होनेके कारण चाहे जो कुछ भला-बुरा कहते हैं)। प्रातःसन्ध्यादि (आवश्यक-नित्यकर्मके व्याघात करनेसे) पुण्यकर्मके नर्म (तुम दोनोंके सुरतादिविलास) का विघ्न किया ही है अर्थात् उठनेके लिए यह वचन कहकर हमने आप दोनोंके सुरतविलासमें बाधक ही वचन कहा है; (अत एव नर्मविघातक होनेसे) कठोर वह (वचन) तुम दोनोंमें-से एक (दमयन्ती) के क्रोधाभावके लिए नहीं होवे अर्थात् केवल अक्रोधके लिए ही नहीं होवे, किन्तु हर्षके लिए भी होवे [दमयन्ती इस सुरतविघातक वचनोंसे केवल क्रोधसे रहित ही नहीं होवे, किन्तु धर्मप्रिय तुम्हारे अनुकूल वचनका आदरकर हर्षित भी होवे। अथवा-(मर्मविरोधी होनेसे) कठोर वह वचन पुण्यविरोधी नर्मका विघ्नकारक होकर दमयन्तीके क्रोधाभावके लिए ही न होवे, किन्तु हर्षके लिए भी होवे। अथवा—क्रोधहीन दमयन्तीके ही हर्षके लिए नहीं होवे, किन्तु तुम्हारे हर्षके लिए भी होवे अर्थात् यद्यपि यह वचन सुरतविलासविघातक होनेसे कठोर है, तथापि धर्मप्रिया पतिप्राणा दमयन्ती इस धर्मसाधक वचनको सुनकर क्रोध छोड़कर हर्षित ही होगी और तुम तो हर्षित होवोगे ही। अथवा—उक्तरूप वह वचन दमयन्तीके क्रोधाभावके लिए नहीं होवे और हर्षके लिए भी नहीं होवे अर्थात् दमयन्ती भले ही क्रोधित या हर्षित-दोनोंमें से कुछ भी नहीं होवे, किन्तु प्रियवचन कहनेका भार ग्रहण करनेके कारण तुम लोगोंके लिए जो उचित है, उसी वचनको हम लोगोंने कहा है]॥ २१॥

भव लघुयुताकान्तः सन्ध्यामुपास्स्व तपोमय[1] !
त्वरयति कथं सन्ध्येयं त्वां न नाम निशानुजा ?।
द्युतिपतिरथावश्यङ्कारी दिनोदयमासिता
हरिपतिहरित्पूर्णभ्रूणायितः कियतः क्षणान् ? ॥ २२ ॥

भवेति। तपोमय ! हे तपोनिष्ठ ! महाराज ! अत एव विहितकाले सन्ध्यादि-निमित्तं तत्परो भव इत्याशयः। लघु शीघ्रम्, युता पृथग्भूता, कान्ता प्रिया यस्य सः तादृशः युताकान्तः विसृष्टप्रियः। भव जायस्व। कान्ताशब्दस्य प्रियादिपाठात् 'स्त्रियाः पुंवत्' 'इत्यादिना पूर्वपदस्य न पुंवद्भावः, 'अप्रियादिषु' इति प्रतिषेधात्। सन्ध्यां प्राभातिकोपासनाम्, उपास्स्व सेवस्व। इयम् उपस्थिता, निशानुजा रात्रेरनन्तरं सञ्जाता, सन्ध्या प्रातःसन्ध्या, त्वां भवन्तम्, कथं किमर्थम् नाम प्रश्ने, न त्वरयति ? न सत्वरीकरोति ? सन्ध्योपासनार्थमिति भावः। यतः, अथ

1. 'तपोमल' इति पाठान्तरम्।

अनन्तरमेव, सत्वरमेवेत्यर्थः। दिनोदयं दिवसप्रादुर्भावम्, अवश्यं करिष्यतीति अवश्यङ्कारी दिनं निश्चितमेव करिष्यन् इत्यर्थः, 'आवश्यकाधमर्ण्ययोः' इत्यावश्यकार्थे णिनिः। मयूरव्यंसकादित्वात् समासः। आवश्यकार्यत्वादिह भविष्यति इत्यर्थः। लभ्यते, अतः 'अकेनोर्भविष्यदाधमर्ण्ययोः' इतीन्युक्तषष्ठीप्रतिषेधः सम्भवति, अत एव भविष्यदर्थाभावे अत्र प्रत्युदाहरणं काशिकायाम् 'अवश्यङ्करी कटस्य' इति। हरिः इन्द्रः, पतिः प्रभुः यस्याः तादृश्याः, हरितः दिशः, प्राचीदिगङ्गनाया इत्यर्थः। पूर्णभ्रूणः सम्पूर्णगर्भः, दशममासीयगर्भ इत्यर्थः। 'गर्भो भ्रूण इमौ समौ' इत्यमरः। स इव आचरितः इति तादृशः। 'आचारक्यङन्तात् कर्त्तरि क्तः। द्युतिपतिः सूर्यः, कियतः क्षणान् कति कालान्, अत्यन्तसंयोगे द्वितीया। आसिता ? स्थाता ? स्वोदयं स्थगयित्वा अपेक्षिष्यते ? इत्यर्थः। न क्षणमपीति भावः। शीघ्रमेव सूर्यस्य उदयो भविष्यति, अतः सूर्योदयात् प्राक् सन्ध्योपासनार्थं सत्वरमुत्तिष्ठ इति तात्पर्यम् ॥ २२ ॥

हे तपोनिष्ठ ( पाठा०—तपसे निर्मल, नल ) ! शीघ्र कान्तासे पृथक् होवो अर्थात् दमयन्तीके साथ शयन करना छोड़ो और सन्ध्योपासन करो रात्रिके बाद होनेवाली सन्ध्या अर्थात् प्रातःसन्ध्या ( सन्ध्योपासनके लिए ) तुम्हे क्यों नहीं जल्दी करा रही है अर्थात् प्रातःसन्ध्योपासन का समय देखकर तुम जल्दी क्यों नहीं उठ रहे हो ? दिनोदयको शीघ्र करनेवाला, अतएव पूर्व दिशाके पूर्ण गर्भस्थित-सा सूर्य कितने क्षणतक ठहरेगा अर्थात् कुछ कुछ क्षणोंमें ही सूर्योदय होनेवाला है। [ यहां 'लघुयुताकान्तः' पदमें अदादिगणस्थ 'यु मिश्रणामिश्रणयोः' धातुसे भूतमें 'क्त' प्रत्ययसे सिद्ध होनेवाले 'युत' शब्दको 'पृथक् होने' अर्थमें प्रयुक्तकर महाकवि श्रीहर्षने सन्ध्योपासनके बाद पुनः कान्तासे संयुक्त होनेका सङ्केत किया है, केवल पृथक् अर्थको कहनेवाले 'त्यक्त' आदि शब्दका प्रयोग अमङ्गलवाचक होनेसे नहीं किया है ] ॥ २२ ॥

मुषितमनसश्चित्रं भैमि ! त्वयाऽद्य कलागृहै-
र्निषधवसुधानाथस्यापि श्लथश्लथता विधौ ।
अजगणदयं सन्ध्यां वन्ध्यां विधाय न दूषणं
नमसितुमना यन्नाम स्यान्न सम्प्रति पूषणम् ॥ २३ ॥

मुषितेति। भैमि ! हे दमयन्ति ! अद्य अस्मिन् दिवसे, कलागृहैः कलानां चुम्बनालिङ्गनादिरूपकामक्रीडाशानाम्, गृहैः निवासैः, आश्रयस्वरूपया इत्यर्थः। 'गृहाः पुंसि च भूम्न्येव' इत्यमरः। त्वया भवत्या, मुषितमनसः अपहृतचित्तस्य, निषधवसुधानाथस्य नलस्यापि, परमधार्मिकस्यापीति भावः। विधौ श्रुतिविहितसन्ध्योपासनादिनित्यकर्मानुष्ठाने, श्लथश्लथता अतिशिथिलता। कर्मधारयवद्भावे पुंवद्भावात् सुपो लुक्। चित्रम् आश्चर्यम्, यत् यस्मात्, अयं नलः, सम्प्रति अधुना,

न इतः पूर्वमिति भावः। सन्ध्यां प्रातःकालिकोपासनाम्, वन्ध्यां निष्फलाम्, विधाय कृत्वा, अनुपास्येत्यर्थः। दूषणं दोषम्, न अजगणत् न गणयति स्म, तथा पूषणं सूर्यम्, अचिरमेव उदेष्यन्तमिति भावः। 'इन्हन्पूषार्यम्णां शौ' इति नियमाद्यत्र दीर्घः। नमसितुमनाः नमस्कर्तुंकामश्च। 'नमोवरिवश्चित्रङः क्यच्' इति क्यजन्तात् तुमुन्, 'क्यस्य विभाषा' इति क्यलोपः, 'तुं काममनसोरपि' इति मकारलोपः। न स्यात् नाम न भवेदपीत्यर्थः। अप्यर्थे नाम॥ २३॥

हे दमयन्ति! चौंसठ कलाओंके आश्रयभूत तुमसे चोरितचित्त (या—त्यक्तस्वभाव) निषधेश्वर राजा नलकी भी (प्रातःसन्ध्योपासनरूप नित्य) कर्ममें भी अतिशय शिथिलता होना आश्चर्य जनक है (अथ च—कलागृह तुमसे चोरितचित्त नलका कलानाथ चन्द्रमामें शिथिलता (स्नेहाभाव) होना आश्चर्यकारक है) (क्योंकि) इस (राजा नल) ने सन्ध्याको वन्ध्या (व्यर्थ) बनाकर (नित्यकृत्यके लोपजन्य) दोषको नहीं गिना तथा इस समय सूर्यको नमस्कार करनेका इच्छुक नहीं है। [जिस प्रकार अन्य स्त्रीमें आसक्त पुरुष अपनी धर्मपत्नीका त्याग करनेमें दोष नहीं समझता और उसे वन्ध्या (सन्तानहीन) कर देता है एवं सम्भोगमें दिनको विघ्नकारक मानकर सूर्यका आदर नहीं करता, उसी प्रकार ये नल भी तुममें आसक्त होकर प्रातःसन्ध्याका त्यागकर उसके त्यागके दोषकी चिन्ता नहीं करते और न तो सूर्यको नमस्कार (सूर्योपस्थान) ही करना चाहते हैं]॥ २३॥

न विदुषितरा काऽपि त्वत्तस्ततो नियतक्रिया-
पतनदुरिते हेतुर्भर्तुर्मनस्विनि! मास्म भूः।
अनिशभवदत्यागादेनं जनः खलु कामुकी-
सुभगमभिधास्यत्युद्दामाऽपराङ्कवदावदः॥ २४॥

नेति। मनस्विनि! हे प्रशस्तचित्ते! अतः अवश्यमेव स्वामिनम् अवैधकार्यात् निवारयिष्यसीत्याशयः। त्वत्तः भवत्याः, त्वामपेक्ष्य इत्यर्थः। 'पञ्चमी विभक्ते' इति पञ्चमी। अतिशयेन विदुषी विदुषितरा। 'घरूप—' इत्यादिना ह्रस्वः। काऽपि अन्या काचिदपि स्त्री, न, अस्तीति शेषः। ततः तस्मात् हेतोः, भर्तुः पत्युः, नियतक्रिया-पतनदुरिते सन्ध्यादिनित्यकर्मभ्रंशपापे, हेतुः कारणम्, मास्म भूः नैव भव। 'स्मत्तरे लङ् च' इति चकाराल्लुङ्, 'न माङ्योगे' इत्यडभावः। तथा हि—उद्दामा उत् उद्गतम्, तल्लङ्घितमित्यर्थः। दाम लोकस्थितिरूपपाशः येन तादृशः उच्छृङ्खलः, उग्रस्वभाव इत्यर्थः। अत एव अपरेषाम् अन्येषाम्, अङ्कस्य कलङ्कस्य, वदावदः वक्ता। 'चरि—'इत्यादिना वदेर्द्विरुक्तिः अभ्यासस्यागागमश्च। जनः लोकः, खलु निश्चितम्, अनिशं निरन्तरम्, भवत्या त्वया, कर्त्र्या। अत्यागात् अमुक्तत्वात् हेतोः 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः'। एनं नलम्, तव स्वामिनमिति भावः। कामुकी वृषस्यन्ती। 'वृषस्यन्ती तु कामुकी' इत्यमरः। 'अश्ववृषयोर्मैथुनेच्छायाम्' इति

न्यच्। तस्याः सुभगं वल्लभम्, तत्परवशमित्यर्थः। अभिधास्यति कथयिष्यति, स्त्रीलोलं वदयतीत्यर्थः। तस्मादेनं क्षणं मुञ्च इति भावः ॥ २४ ॥

हे मनस्विनि ( पण्डिते दमयन्ति )। तुमसे अधिक कोई ( दूसरी स्त्री ) विदुषी नहीं है, इस कारण तुम ( प्रातःसन्ध्योपासनरूप ) नित्यकृत्यके त्यागरूप पाप ( के करने ) में कारण मत बनो; क्योंकि तुम्हारा निरन्तर साथ करनेसे उच्छृङ्खल तथा दूसरेके दोषको कहनेवालेलोग इसे ( नलको ) स्त्रीलम्पट कहेंगे [ अतः इस समय नित्यकृत्यके लिए नलका त्यागकर इनके धर्मकार्य करने तथा जनापवादसे बचनेमें सहायिका बनो ] ॥ २४ ॥

रह सहचरीमेतां राजन्नपि स्त्रितरां[1] क्षणं
तरणिकिरणैः स्तोकोन्मुक्तैः[2] समालभते नभः।
उदधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुतां
दधति नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा ॥ २५ ॥

रहेति। हे राजन्! स्त्रितराम् उत्कृष्टस्त्रियमपि। स्त्रीशब्दस्य जातिवाचित्वेऽपि तन्निष्ठगुणगतातिशयविवक्षया तरप्प्रत्यय इति भगवान् भाष्यकारः। 'नद्याः शेषस्यान्यतरस्याम्' इति विभाषया ह्रस्वः। सहचरीं सहचारिणीम्। पचादिषु चरट् इति टित्करणेन ङीप्। एतां प्रियां दमयन्तीम्, क्षणं कियत्कालम्, रह त्यज, वैधक्रियासम्पादनार्थमिति भावः। 'रहति त्यजति त्यागे' इति भट्टमल्लः। रहेर्भौवादिकाल्लोटि सिप्। नभः आकाशम्, कर्तृ स्तोकेन लेशेन, उन्मुक्तैः प्रकटितैः। 'करणे च स्तोकाल्प—' इत्यादिना पक्षे तृतीया। कर्मणि कर्मकर्त्तरि वा क्तः। स्वल्पमुदितैरित्यर्थः। तरणिकिरणैः सूर्यरश्मिभिः करणैः, समालभते आत्मानं विलिम्पति, अनुलिम्पति इत्यर्थः। 'समालम्भो विलेपनम्' इत्यमरः। 'समालम्भनमित्यपि' इत्यनुलेपनपर्याये यादवः। कुङ्कुमैरिवेति भावः। किञ्च, कुमुदात् कैरवात्। अपादानात् नलिनं पद्मं प्रति। गम्यमानोद्देशक्रियापेक्षया कर्मत्वम्। नलिनम् उद्दिश्य इत्यर्थः। प्रस्थायिन्यः प्रतिष्ठमानाः, रजन्यपगमेन कुमुदस्य मुद्रणोन्मुखत्वात् पद्मस्य च स्फुटनोन्मुखत्वादिति भावः। ग्रह्यादित्वात् णिनिः। अत्र गम्यादिपाठात् 'अकेनोः' इति षष्ठीप्रतिषेधात् कर्मणि द्वितीयेति केचित्, तत् प्रतिष्ठतेरकर्मकत्वमनालोच्य उक्तमित्युपेक्षणीयम्। श्रियः शोभाः, मुदा हर्षेण, उदकानि धीयन्ते अस्मिन् इति उदधिः समुद्रः। 'कर्मण्यधिकरणे च' इति किप्रत्ययः। 'पेषंवासवाहनधिषु च' इत्युदादेशः। तस्मात् निरयन् निर्गच्छन्। एतेर्लटः शत्रादेशः। स चासौ भास्वान् सूर्यश्च, स एव स्वर्णस्य उदकुम्भः जलपूर्णहेमघटः। 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्युदादेशः। तद्दिदृक्षुतां द्रष्टुमिच्छवः दिदृक्षवः तासां भाव तत्ता ताम्, विलोकयितुमिच्छुताम्। 'न लोक—' इत्यादिना षष्ठीप्रतिषेधे गम्यादिपाठात् द्विती-

१. 'स्त्रितमात्' इति पाठान्तरम्। २. 'स्तोकान्मुक्तः' इति पाठान्तरम्।

यासमासः। दधति धारयन्तीव, दिदृक्षन्ते इवेत्यर्थः। प्रस्थानकाले पूर्णकुम्भदर्शनस्य मङ्गलावहत्वादिति भावः॥ २५॥

हे राजन्! स्त्रियोंमें श्रेष्ठतम सहचरी इस (दमयन्ती) को छोड़िये, थोड़ी निकली हुई सूर्य-किरणोंसे आकाश लिप्त हो रहा है और (सङ्कुचित होते हुए) कुमुदोंसे (निकट भविष्यमें विकसित होनेवाले) कमलोंमें जानेवाली शोभा समुद्रसे निकलते हुए सूर्यरूप स्वर्णकलशको देखना चाहती है। [प्रस्थान कालमें स्वर्णकलशका देखना मङ्गलकारक होनेसे यहां कुमुदसे कमलको जाती हुई शोभाके लिए ऐसी उत्प्रेक्षा की गयी है]॥ २५॥

प्रथमककुभः पान्थत्वेन स्फुटेक्षितवृत्रहा-
ण्यनुपदमिह द्रक्ष्यन्ति त्वां महांसि महःपतेः।
पटिमवहनादूहापोहक्षमाणि वितन्वता-
महह! युवयोस्तावल्लक्ष्मीविवेचनचातुरीम्॥ २६॥

प्रथमेति। महःपतेः सूर्यस्य महांसि तेजांसि, प्रथमककुभः इन्द्रस्वामिकायाः प्राच्याः, पन्थानं गच्छतीति पान्थः नित्यपथिकः। 'पन्थो ण नित्यम्' इति णप्रत्ययः पन्थादेशश्च। तत्त्वेन पथिकत्वेन, नित्यमिन्द्रदिग्गतत्वेन इत्यर्थः। स्फुटं स्पष्टम्, ईक्षितः दृष्टः, वृत्रहा इन्द्रः यैः तानि। 'इन्हन्—' इत्यादिना शौ दीर्घः। अनुपदम् अनुगमेव, इन्द्रेक्षणानन्तरमेवेत्यर्थः। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः। इह अस्मिन् प्रदेशे, त्वां नलं, द्रक्ष्यन्ति अवलोकयिष्यति। ततः किं तत्राह—पटिमवहनात् पटिमा तीक्ष्णता, तीक्ष्णरश्मिता इत्यर्थः। चातुर्यञ्च, प्रज्ञातिशयश्च इत्यर्थः। तस्य वहनात् धारणात् 'पटुश्चतुरतीक्ष्णयोः' इति शाश्वतः। ऊहापोहयोः ऊहः तर्कः, विचारपूर्वकसद्ग्रहणमित्यर्थः। अपोहः परित्यागः, अपकृष्टवस्तुन इति भावः। तयोः क्षमाणि शक्तानि, तानि महांसि इति शेषः। युवयोः तस्य इन्द्रस्य तव च। 'त्यदादीनि सर्वैर्नित्यम्' इति त्यदाद्येकशेषः। लक्ष्मीविवेचनचातुरीं शोभासम्पदां तारतम्यविचारकौशलम्, तावत् साकल्येन, वितन्वतां विस्तारयन्तु, प्रदर्शयन्तु इति यावत्। उभयदर्शिनाम् उभयतारतम्यं विवेक्तुं युक्तमेवेति भावः, अहह इत्यद्भुते॥ २६॥

पूर्व दिशाका नित्य पथिक (सर्वदा जानेवाला) होनेसे इन्द्र (के ऐश्वर्य) को सम्यक् प्रकारसे देखी हुई सूर्यकी किरणें उसके बाद ही तुम्हें (नलको) देखेंगी (अतः) तीक्ष्णता (पक्षा०—चातुर्य) होनेसे उहापोह (सद्वस्तुके ग्रहण तथा असद्वस्तुके त्याग) में समर्थ वे सूर्य-किरणें तुम दोनों (देवराज तथा निषधेश नल) के सम्पूर्ण ऐश्वर्य (या शोभा) की चातुर्यका विस्तार करें। [जिस प्रकार लोकमें कोई चतुर व्यक्ति पहले किसी व्यक्तिका ऐश्वर्यादि देखकर सामान्यबुद्धि तथा फिर दूसरेका ऐश्वर्यादि देखकर विशेषबुद्धि होनेपर निर्णय करके दूसरेके ऐश्वर्यादिको श्रेष्ठ बतलाता है, उसी प्रकार ये सूर्य-किरणें भी प्रथम

पूर्वदिशामें इन्द्रका ऐश्वर्य देखकर विशेष बुद्धिसे तुम्हारे (नलके) ऐश्वर्यको श्रेष्ठ समझें ] ॥२६॥

अनतिशिथिले पुम्भावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः ।
किमपि मुखतः कृत्वाऽऽनीतं वितीर्य सरोजिनी-
मधुरसमुषोयोगे[1] जायां[2] नवान्नमचीकरन् ॥ २७ ॥

अनतीति । पुम्भावेन पुंस्त्वेन हेतुना, प्रगल्भबलाः स्त्रीभ्योऽधिकशक्तिसम्पन्नाः, अलयः भृङ्गाः, अनतिशिथिले ईषद्विकसिते, पाथोजस्य पद्मस्य, आस्ये मुखे, उपरिभागे इत्यर्थः । प्रसभं बलात्, निविश्य अधिष्ठाय, निरित्वराः निर्गच्छन्तः सन्तः, 'इण्नशजिसर्त्तिभ्यः क्वरप्' इति क्वरप् । मुखतः मुखे कृत्वा धृत्वेत्यर्थः । आनीतम् आहृतम्, सरोजिनीमधुरसं नलिन्याः मकरन्दद्रवम्, वितीर्य दत्त्वा, उषोयोगे प्रातः, जायां स्वकान्ताम् अलिनीम्, किमपि पूर्वमनास्वादात् अनिर्वचनीयसुस्वादु, नवान्नं नूतनं भोज्यम्, अचीकरन् कारयामासुः, भोजयामासुः इत्यर्थः । करोतेर्णौ चङ्युपधाया ह्रस्वः, 'हृक्रोरन्यतरस्याम्' इति अणिकर्तुः कर्मत्वम् । बली पुमान् स्त्र्यन्तराधिकृतमपि मिष्टमन्नं बलात् आच्छिद्य स्वस्त्रियै प्रयच्छतीति भावः ॥ २७ ॥

पुरुषत्व होनेसे अतिशय सामर्थ्यवान् ( या—धृष्ट ) तथा कुछ विकसित ( पक्षा०—स्वल्प विकसित होनेसे कठिन ) कमलके मुखमें ( पक्षा०—कमलके ऊपर ) बलात्कारसे बैठकर निकलते ( वहांसे उड़ते हुए भ्रमरोंने मुखमें लेकर लाये ) हुए कमलिनी-मकरन्दको देकर प्रातःकालमें स्त्रीके लिए अनिर्वचनीय आनन्दप्रद नवान्नभोजन कराया। [ जिस प्रकार स्त्री होनेसे अल्पशक्ति होनेके कारण अपने अधिक शक्तिवाले किसीसे कोई भोज्य-पदार्थ लानेमें असमर्थ स्त्रीके लिए पुरुष होनेसे अधिक शक्तिवाला उसका पति बलात्कार-पूर्वक उक्त प्रबल स्त्रीसे भोज्य पदार्थ लाकर उसे सन्तुष्ट करता है, उसी प्रकार अल्पविकसित होनेसे कठिनतर कमलसे मकरन्द-पान करनेमें अल्पशक्ति स्त्रीके लिए अपने मुखमें उक्त मकरन्दको लाकर दिया, जिससे उस भ्रमरीको अनिर्वचनीय आनन्द हुआ। अथ च—पतिका उच्छिष्ट मकरन्दपानकर अनिर्वचनीय स्वाद होनेसे स्त्रीका आनन्दित होना स्वाभाविक ही है। अथ च—प्रातःकालमें शुभकारक नवान्नभोजन करनेसे भी आनन्दित होना उचित ही है। प्रातःकाल होनेसे कमल कुछ विकसित होने लगे तथा भ्रमर एकसे दूसरे कमलपर उड़-उड़कर जाने लगे ] ॥ २७ ॥

मिहिरकिरणाभोगं भोक्तुं प्रवृत्ततया पुरः
कलितचुलुकाऽऽपोशानस्य ग्रहार्थमियं किमु ? ।
इति विकसितेनैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्तुर्जनस्य दिनोदये ॥ २८ ॥

---

1. '—मुषायोगे' इति पाठान्तरम् । 2. 'जाया' इति पाठान्तरम् ।

मिहिरेति। इयं किञ्चित् विकसिता, सरोजिनी पद्मिनी, दिनोदये अस्मिन् प्रातःकाले, प्राक् दलान्तरविकाशात् पूर्वम्, विकसितेन प्रस्फुटितेन, संहतीभावात् पृथग्भूतेनेत्यर्थः। एकेन एकमात्रेण, दलेन पत्रेण हेतुना, मिहिरकिरणः सूर्यरश्मिरेव, आ सम्यक् भुज्यते इति आभोगः भोज्यं तम्, भोक्तुं खादितुम्, प्रवृत्ततया कृतारम्भतया हेतुना, पुरः पूर्वम्, भोजनात् प्रागित्यर्थः। आपोशानस्य आपोशानं नाम भोजनादौ कर्त्तव्यम् 'अमृतोपस्तरणमसि स्वाहा' इति समन्त्रकजलपानेन अन्नस्य अमृतास्तरणरूपं कार्यं, समन्त्रकाचमनमित्यर्थः, तस्य। पृषोदरादित्वात् साधुः। ग्रहार्थम् आचरणार्थं, कलितः कृतः, चुलुकः गण्डूषकरणार्थं विश्लिष्टकनिष्ठाङ्गुलिकः प्रसृत्यपराख्यः निकुब्जपाणितलविशेषः यस्याः सा तादृशी, किमु? जाता किम्? इति उत्प्रेक्षा, इति एवम्, साक्षात्कर्त्तुः स्वस्या एव द्रष्टुः, जनस्य लोकस्य, मतिं बुद्धिम्, जनयति उत्पादयति। आपोशानकार्यकारी हस्तस्य कनिष्ठाङ्गुलिं प्रसार्य अन्याङ्गुलीनां सङ्कोचं विधाय च जलं पिबति इति सम्प्रदायः। प्राग् विकसितैकदलस्य विश्लिष्टकनिष्ठाङ्गुलीतुल्यतया पद्मस्य च निकुब्जपाणितलतुल्यतया कलितचुलुकत्वं बोद्धव्यम्॥ २८॥

सरोजिनी प्रातःकाल सर्वप्रथम खिले (खिलकर फैले) हुए एक पल्लव (पँखुड़ी) से दर्शकको ऐसी बुद्धि उत्पन्न करती है अर्थात् उसे देखकर देखनेवाला यह समझता है कि—'सूर्य-किरण-मण्डलका उपभोग (पक्षा०—भोजन) करनेके लिए प्रवृत्त होनेसे यह (सरोजिनी) पहले (भोजन करनेसे पूर्व) अपोशानके ग्रहण ('अमृतोपस्तरणमसि स्वाहा' इस मन्त्रको पढ़कर आचमन) करनेके लिए उद्यत है क्या?। [जिस प्रकार भोजनके पूर्व 'कनिष्ठा अङ्गुलिको फैलाकर तथा शेष अङ्गुलियोंको सङ्कुचितकर चुल्लूमें पानी लेकर अन्नको अमृतमय बनानेके लिए 'अमृतोपस्तरणमसि स्वाहा' मन्त्रसे आचमन किया जाता है, उसीप्रकार प्रातःकाल सर्वप्रथम खिलनेसे फैले हुए एक पत्रवाली सरोजनी सूर्यकिरणका भोग (पक्षा०-भोजन) कर रही है ऐसा दर्शकोंके मनमें विचार उत्पन्न हो जाता है]॥२८॥

तटतरुखगश्रेणीसांराविणैरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी।
अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहाम्॥ २६॥

तटेति। साम्प्रतं सम्प्रति, सरसि सरोवरे, स्थितेति शेषः। सरोजिती पद्मनी, तटतरुषु तीरस्थितवृक्षसमूहेषु, याः खगश्रेण्यः पक्षिसमूहाः, तासां सांराविणैः सम्यग् रावैरिव, उच्चकलकलैरिवेत्यर्थः। इत्युत्प्रेक्षा। 'अभिविधौ भावे इनुण्' इति स्वार्थे इनुण्प्रत्ययः। विगलन्निद्रामुद्रा विगलन्ती अपगच्छन्ती, निद्रा स्वप्न इव, मुद्रा निमीलनम्, सङ्कोच इत्यर्थः। यस्याः सा तादृशी, अजनिष्ट जाता। जनेः कर्त्तरि लुङ्।

तथा मधुपः भ्रमरः, सरोरुहां कमलानाम्, मधूनि मकरन्दान्, मध्ये मध्ये अन्तराऽन्तरा, वधूमुखे स्वकान्ताननने, लब्धया चुम्बनकाले प्राप्तया, अधरसुधया अधरामृतेन, स्वादुङ्कारं स्वादूकृत्य, सुरसानि कृत्वेत्यर्थः । 'स्वादुमि णमुल्' इति णमुल्प्रत्ययः । मान्तनिर्देशादेव पूर्वपदस्य मकारान्तनिपातः । धयति पिबति । धेटो लट् ॥ २९ ॥

इस समय कमलिनीने तड़ागके तटपर स्थिति वृक्षोंके पक्षियोंके झुण्डके कलरवोंसे मानो निद्रामुद्राका त्याग कर दिया है अर्थात् अन्य मनुष्यादि जिस प्रकार पक्षी आदिके कलरवोंसे निद्राका त्याग देते हैं; उसी प्रकार कमलिनीने भी निद्राका त्याग कर दिया ( विकसित हो गयी ) है और भ्रमर कमलोंके परागोंको भ्रमरीके मुखसे प्राप्त अधरामृतसे बीच-बीचमें अधिक स्वादिष्ट करके पान कर रहा है अर्थात् भ्रमर की कमलमकरन्दका पान करते समय बीच-बीचमें भ्रमरीके अधरामृतका पानकर उसे अधिक स्वादुमान् हो रहा है। [ तड़ागके तीरस्थवृक्षोंपर निवास करनेवाले पक्षिगण कलरव करने लगे, कमल विकसित हो गये और उनपर भ्रमरी-सहित भ्रमर भ्रमण करने लगे; अत एव हे राजन् ! अब निद्रात्याग कीजिए ] ॥ २९ ॥

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुच-
त्कमलमुकुलक्रोडे[1] नीडे प्रवेशमुपेयुषाम् ।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोक्यन्तेऽधुना मधुपारणाः ॥ ३० ॥

गतेति । गतचरस्य गतपूर्वस्य । 'भूतपूर्वे चरट्' प्रागतीतस्य इत्यर्थः । दिवस्य दिवसस्य, आयुर्भ्रंशे जीवितावसाने सति, सायंसमये इति भावः । दयोदयात् कृपाविर्भावात् इव, तद्दुरवस्थादर्शनेनेति भावः । सङ्कुचतां म्लायमानाम्, रात्रिनिमीलनस्वभावात् मुद्रितीभवतामित्यर्थः । कमलमुकुलानां पद्मकोरकाणाम्, क्रोडे अभ्यन्तरे एव, नीडे कुलाये । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । प्रवेशम् अन्तर्गमनम्, उपेयुषां प्राप्नुवताम्, अन्तः प्रविशामित्यर्थः, रात्रौ तत्रैव आबद्धानाम् अत एव कृतोपवासानामिति भावः । इह अधुना, प्रभाते इत्यर्थः । भिन्नेषु विकसितेषु, अम्भोरुहेषु पद्मेषु, समायतां निपतताम्, इतस्ततो भ्रमतामित्यर्थः । इणो लटः शत्रादेशः । मधुलिहां मधुपानाम्, अधुना इदानीम्, सहचरैः सुहृद्भिः भ्रमरान्तरैः सह, सम्प्रत्यागतैरिति भावः । मधुना मकरन्देन, पारणाः उपवासानन्तरं भोजनानि, आलोक्यन्ते दृश्यन्ते, जनैरिति शेषः ॥ ३० ॥

पूर्व दिनके अन्त ( कल सायङ्काल ) में मानो दयोदय होनेसे सङ्कुचित होते हुए मुकुल ( कोरक )'के क्रोड़ ( मध्य ) रूपी नीड़ ( घोसले-वासगृह ) में भ्रमरोंका इस समय

1. 'क्रोडान्नीडे' इति 'क्रोडं नीडे' इति च पाठान्तरम् ।

( प्रातःकालमें ) कमलोंके विकसित होनेपर आते हुए सहचरों ( अन्य भ्रमर-भ्रमरियों ) के साथमें की जाती हुई मकरन्दपारणाको ( लोग ) देख रहे हैं [ कल सायङ्कालमें जब कमल मुकुलित होने लगा तब कुछ भ्रमर उसीके अन्दर बन्द रह गये और मकरन्द नहीं रहनेसे उन्होंने उपवास किया तथा बाहरी रहनेवाले उसके सहचर भी उसके वियोगके कारण उपवास किये, पुनः अब प्रातःकाल होनेपर कमल विकसित होने लगा तो वे बाहर रहनेवाले सहचर वहां पहुँचे तथा रात्रिमें भीतर बन्द रहे हुए भ्रमर भी बाहर निकले और सभी मिलकर मकरन्द-पान करने लगे; उसे देखनेवालोंको ऐसा ज्ञात होता है कि रात्रिमें कमलमें बन्द भ्रमर मानो कारागारमें बन्द हो गये ( या मर गये ) थे, अतः उन्होंने तथा उनके बाहरी सहचरोंने रात्रिको उपवास किया और इस समय प्रातःकाल होनेपर कमलरूप कारागारसे निकले हुए भ्रमर अपने बाहरी सहचरोंके साथ मकरन्द-पानरूप पारणा कर रहा है ] ॥ ३० ॥

तिमिरविरहात् पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का ? ।
शरणमिलितध्वान्तध्वंसिप्रभाऽऽदरधारणा-
द्गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥ ३१ ॥

तिमिरेति । दिशः प्राच्यादयः, तिमिरेण अन्धकारेण सह, विरहात् विच्छेदात्, कृशाः क्षीणाः, सूर्यप्रभया औज्ज्वल्यह्रासादिति भावः । तारकाः नक्षत्राणि यासां ताः तादृश्यः सत्यः, पाण्डूयन्ते पाण्डुवर्णाः इव आचरन्ति, विरहिधर्मत्वादिति भावः । का सरसी तडागः, कमलानि विकसितपद्मानि एव, हसितानि हास्यानि तैः, कमलानां हसितैः विकसनरूपैः हास्यैरिति वा, श्येनी इव श्वेतवर्णा इव, न उन्नीयते ? न दृश्यते ? अपि तु सर्वा एव उन्नीयन्ते इत्यर्थः । प्रियसमागमेन सर्वा एव हास्यविकसितानना भवन्ति इति भावः । 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्प्रत्ययः, 'त'कारस्य च 'न'कारः । किन्तु एकं केवलम्, गगनशिखरम् आकाशोपरिभागः, तुङ्गनभोमण्डलमित्यर्थः । शरणमिलितानि रक्षितृत्वेन प्राप्तानि, शरणागतानीत्यर्थः । ध्वान्तानि अन्धकारान्, ध्वंसयन्ति विनाशयन्तीति तादृशीनाम् । 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः । प्रभाणां सूर्यकिरणानाम्, आदरेण आग्रहातिशयेन, धारणात्, भरणात् हेतोः, स्वस्मिन् स्थानदानाद्धेतोरित्यर्थः । निजैः स्वकीयैः, अयशोभरैः अकीर्त्तिबाहुल्यैरिव, नीलति नीलवर्णं भवति । 'नील वर्णे' इति धातोः भौवादिकाल्लट् । शरणागतहन्तुराश्रयदानात् हेतोर्निजैर्निन्दाभरैः कृष्णीभवति इत्यर्थः, शरणागतापालनकीर्त्तिलोपादिव स्वमेकं नीलमदृश्यत इति निष्कर्षः । तारकाप्रभाक्षयात् गगनं स्वेन नीलरूपेण प्रकटं जातमिति भावः ॥ ३१ ॥

[दिशाएँ अन्धकार के वियोग (पक्षा०—नाश )से पाण्डुवर्ण-सी (स्वच्छ प्रायः) हो रही

हैं, कौन-सा तड़ाग कमलोंके ( विकास रूपी ) हासोंसे श्वेत वर्ण नहीं हो रहा है ?; ( किन्तु ) शरणागत अन्धकारके नाशक ( सूर्य ) किरणोंको आदरपूर्वक ग्रहण करने ( अपने यहां आश्रय देने ) से केवल एक आकाशमण्डल ( विशाल आकाश ) मानो अपने अपकीर्ति-समूहसे नीला ( कृष्णवर्ण ) हो रहा है। [अन्धकाररूप प्रियजनके विरह होनेपर दिशाओंका पाण्डु वर्ण होने, कमलरूपी प्रियजनका विकास ( हास ) होनेपर तड़ागोंका स्वच्छ होने और शरणागत अन्धकारके नाशक सूर्य-किरणोंको आश्रय देनेवाले आकाशमण्डलका अपकीर्तिसे नीलवर्ण होनेकी उत्प्रेक्षा की गयी है। दिशाएँ स्वच्छ हो गयीं, तड़ागोंमें कमल विकसित हो गये और आकाशमें सूर्य-किरणें फैल गयीं; अत एव अब प्रभातकाल जानकर आप शीघ्र निद्राभङ्ग करें ] ॥ ३१ ॥

सरसिजवनान्युद्यत्पक्षार्यमाणि हसन्तु न ?
क्षतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवम् ? ।
हिमगिरिदृषद्दायाद[1]श्रीप्रतीतमुदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति । उद्यन् उदयं गच्छन्, पक्षः सहायभूतः, अर्यमा सूर्यः येषां तादृशानि, सरसिजवनानि कमलकाननानि, न हसन्तु ? न विकसन्तु ? न हास्यं कुर्वन्तु ? इति च इति काकुः, हसन्त्वेव इत्यर्थः । सुहृदाम् उदये सर्वे एव हसन्तीति लोके दर्शनादिति भावः । क्षतरुचिः शीर्णद्युतिः, सुहृत् मित्रम्, चन्द्रः निशापतिः यस्य तत् तादृशम्, कैरवं कुमुदम्, कर्तृ । तन्द्रां तन्द्रावत् निमीलनमित्यर्थः । प्रमीलां च, न उपैतु ? न प्राप्नोतु ? अत्रापि काकुः, उपैत्वेव इत्यर्थः । सुहृत्पीडायां सर्वे एवावसीदन्तीति लोके दर्शनादिति भावः । अथो किञ्च, पाथोरुहैः पद्मैः । कर्तृभिः हिमगिरिदृषद्दायादया हिमगिरेः हिमालयस्य, दृषदां शिलानाम्, दायादया अंशहरया, सदृशया इत्यर्थः । श्रिया वैशद्यसम्पदा, प्रतीतमुदः प्रतीता प्रकाशं गता, मुत् हर्षः यस्य तादृशस्य प्रकटहर्षस्य, रात्रौ तथा हृष्टस्य इत्यर्थः । कुमुदविपिनस्य कैरववनस्य सम्बन्धिन्या, निजनिद्रया स्वनिद्रया निमित्तेन, निशाकालिकस्वकीयनिमीलनात्मकनिद्रायाः सम्प्रति कुमुदवनगामित्वेन हेतुनेत्यर्थः, स्मितं हसितम्, विकसितञ्च, भावे निष्ठा । रात्रौ कुमुदवनस्य हृष्टत्वं कमलवनस्य च निद्रा आसीत्, इदानीं पद्मानि रात्रिजां स्वनिद्रां कुमुदवने सञ्चार्य तस्य हृष्टत्वं गृहीत्वा हसन्तीवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । 'हिमगिरिदृषद्दायादश्रि प्रतीष्टमदः स्मितम्' इति पाठान्तरे–पाथोरुहैः निजनिद्रया स्वीयनिमीलनरूपनिद्रादानेन, हिमगिरिदृषददायादा सदृशी, श्रीः शोभा यस्य तादृशम्, कुमुदवनस्य अदः इदम्, स्मितं नैशविकसनं हास्यञ्च, प्रतीष्टं वाञ्छितम्, प्रतिगृहीतमित्यर्थः ॥ ३२ ॥

---

१. '—दश्रि प्रतीतमदः' इति, '—दश्रि प्रतीष्टमदः' इति च पाठान्तरम् ।

सपक्ष ( सहायक ) सूर्यके उदयसे युक्त कमलवन विकसित नहीं होवें ( पक्षा०—नहीं हँसे) ?, क्षीणकान्ति मित्र चन्द्रमावाला कुमुद तन्द्रा ( निमीलन, पक्षा०—सङ्कोच-हर्षाभाव ) को नहीं प्राप्त करे ?; अथवा—कमल-समूह हिमालय पर्वतके चट्टानों के समान (स्वच्छतम) कान्तिसे स्पष्ट हर्षवाले कुमुदवनको निद्रासे हँसे हैं अर्थात् अपनी निद्रा को कुमुदवनमें देकर उसके विकासरूपी हासको ग्रहण कर लिये हैं। ( पाठा०-कमलोंने हिमालयके चट्टानोंके समान स्वच्छतम शोभावाले इस स्मित ( ईषद्धास्य, पक्षा०—विकसन ) को अपनी निद्रा ( निमीलन ) से बदल लिया ) । [ जिस प्रकार अपने पक्षवाले व्यक्तिके अभ्युदय होनेपर कोई व्यक्ति हँसता है, उसी प्रकार विकसित होनेमें कारणभूत स्वपक्ष सूर्यके उदय होनेसे कमल विकसित हो ( पक्षा०—हँस ) रहा है; जिस प्रकार अपने पक्षवालेका नाश या अवनति होनेसे कोई खिन्न होता है, उसी प्रकार विकास करनेवाले सुहृद् चन्द्रमाके क्षीणरुचि होकर अस्त ( अस्तोन्मुख ) होनेसे कुमुद निमीलित ( पक्षा०—खिन्न ) हो रहा है । अथवा—जिस प्रकार लोकमें कोई व्यक्ति किसीकी वस्तुको लेकर अपनी वस्तु उसको देता है, जो कमल रात्रिमें निमीलित ( पक्षा०—निद्रित ) था, उसने रात्रिमें विकसित रहनेवाले ( पक्षा०—स्मित करनेवाले ) कुमुदसे अदला-बदली कर ली है अर्थात् अपनी निद्रा ( पक्षा०—निमीलन—विकासभाव ) को कुमुदके लिए देकर उसके स्मित ( हास, पक्षा०—विकासभाव ) को स्वयं ग्रहण कर लिया है ] ॥ ३२ ॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः ।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा
मधु निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकम् ॥ ३३ ॥

धयत्विति । कुमुदानां कैरवाणाम्, मकरन्दौघैः मधुसमूहैः, कुक्षिम्भरिः उदरपूरकः । 'फलेग्रहिरात्मम्भरिश्च' इति चकारात् कुक्षिम्भरिः सिद्धः । नलिने पद्मे, अभिनवागतः सद्यः समागतः, भ्रमरोत्करः भृङ्गसङ्घः, माध्वीकं मकरन्दम्, कमलमधु इत्यर्थः, धयतु पिबतु वा, न वा, धयतु इति शेषः । रात्रौ कुमुदमधुभिः उदरपूरं पीतत्वात् तृप्तस्य अतिथेः पानाद्यभावे न काऽपि क्षतिः इति भावः । तु किन्तु, रथाङ्गविहङ्गमाः चक्रवाकाः, रात्रीतर्षं रात्रिं व्याप्य तृषित्वा, प्रियाविरहात् तर्षणैः रात्रिं नीत्वा इत्यर्थः । 'अस्यतितृषोः क्रियान्तरे कालेषु' इति णमुल्प्रत्ययः । इह अस्मिन्, निजवधूवक्त्राम्भोजे स्वकान्तामुखकमले, अधुना सम्प्रति प्रभाते, अधरनामकम् ओष्ठसंज्ञकम्, मधु मकरन्दम्, लिहते आस्वादयन्ति । प्रभाते चक्रवाकदम्पतीनां परस्परमेलननियमादिति भावः । ततश्च भुक्तस्य भोजनापेक्षया अभुक्तस्य भोजनादेव सहृदयानां तृप्तिरित्याशयः ॥ ३३ ॥

कुमुदोंके मकरन्द-समूहों अर्थात् बहुत मकरन्द ( का रात्रिमें पान करने ) से परिपूर्ण

उदरवाला, नवागत भ्रमर–समूह कमलमें मकरन्दका पान करे या न करे ( इसके विषयमें मुझे कुछ नहीं कहना है, क्योंकि भरपेट भोजन किये हुए अतिथिको पुनः भोजन नहीं करनेमें कोई विशेष आग्रह नहीं करता ), किन्तु ( वियोग होनेपर प्रियाके अभावमें कुमुद-मकरन्दको भी नहीं पीनेसे ) रात्रिका प्यासा हुआ चकवा पक्षी कमल–मकरन्दको छोड़कर इस समय ( प्रातःकालमें ) स्ववधू–मुखरूपी कमलमें अधरनामक मकरन्दका पान कर रहा है। [ रात्रिमें वियोग होनेपर प्रियाविरहित चकवेका सुलभ भी कुमुदमकरन्दका अकेला होनेसे दुःखी होनेके कारण पान नहीं करनेसे तृषार्त रह जाना तथा इस समय प्रातःकालमें कमलोंके विकसित होनेपर भी उनके मकरन्दका पान करना छोड़कर प्रियाके अधररूप कमलके अमृतरूप मकरन्दका पान करना चकवेका प्रियामें अतिशयित प्रेम तथा कमलकी श्रेष्ठताको सूचित करता है। कमल विकसित हो गये, उनपर कहीं-कहीं भ्रमर मधुपान करने लगे तथा चकवा–चकई परस्परमें संयुक्त हो गये, अतः प्रभातकाल जानकर आप निद्रा त्याग करें ] ॥ ३३ ॥

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ।
सततममृतादेवाहाराद् यदापदरोचकं
तदमृतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभुः ॥ ३४ ॥

**जगतीति। जगति त्रिलोकमध्ये, मिथुने मिथुनेषु, स्त्रीपुरुषयुगलमध्ये इत्यर्थः। निर्द्धारणे सप्तमी। जातावेकवचनम्। चक्रौ चक्रवाकौ एव, चक्रवाकमिथुनमेवेत्यर्थः। स्मरागमपारगौ कामशास्त्रतत्त्वज्ञौ, कामोपभोगे चातुरौ इत्यर्थः। 'अन्तात्यन्ताध्व–' इति डप्रत्ययः। कुतः? यौ चक्रौ, मिथः परस्परम्, वियुज्य वियुज्य पुनः पुनः विश्लिष्य विश्लिष्य, प्रतिरात्रं स्वेच्छयैवेति भावः। नवमिव प्रत्यहं नूतनमिव, इदं प्रथममिवेत्यर्थः। सम्भुञ्जाते सुरतसम्भोगानन्दमनुभवतः। अन्यथा अरोचकभयात् इति भावः। अत्र दृष्टान्तमाह–यत् यस्मात्, अमृतभुजां सुधासेविनां देवानाम्, भर्त्ता अधीश्वरः, एतेन सर्वदा अमृतपानं सम्भवतीति बोद्धव्यम्। विभुः प्रतीकार-समर्थः, एतेन विषपानजानिष्टप्रतीकारसामर्थ्यं सूच्यते। शम्भुः शिवः, सततम् अनारतम्, अमृतात् पीयूषात्, आहारात्, अशनात्, प्रात्यहिकाहार्यभूतादमृता-दित्यर्थः। न रोचते इति अरोचकं तदाख्यं रोगम्, आपत् अलभत, तत् तस्मात् एव, विषं गरलम्, बुभुजे पपौ। नित्यं मधुरादिसेवनेन जाताया अरुचेः कटुतिक्तादि-विपरीतरससेवनेन निवृत्तिदर्शनादिति भावः ॥ ३४ ॥**

संसारमें मिथुन ( दम्पतियों ) में चकवा–चकई ही कामशास्त्रके पारगामी हैं ( अथवा–कामशास्त्रके पारगामी चकवा–चकई ही संसारमें मिथुन उत्तम दम्पति हैं ) जो ( चकवा-चकई ) परस्परमें वियुक्त ( पृथक्–पृथक् ) होकर नवीन–नवीन–सा होकर सम्भोग करते

हैं। जैसे अमृतभोजियों (देवों) के स्वामी सर्वसमर्थ शिवजी निरन्तर अमृतके ही भोजन करनेसे जब अरोचक रोगको प्राप्त कर लिये, तब (उस रोगको दूर करनेके लिए) विषका भोजन किया। [ लोकमें भी जब किसीको उत्तमसे उत्तम भी एक ही पदार्थको खाते-खाते अरुचि हो जाती है, तब वह व्यक्ति उससे हीन भी दूसरे पदार्थको खाकर उस अरोचक रोगको दूर करता है। एक वस्तुके ही नित्य सम्भोगसे अरुचि होनेका दृष्टान्त यह है कि शिवजी अमृतभोजी देवोंके स्वामी हैं, और उन्हें सर्वदा अमृतभोजन करते रहना अत्यन्त आसान था, अत एव नित्य अमृतका ही भोजन करते रहनेसे जब उन्हें अरोचक रोग हो गया तब वे उसकी निवृत्तिके लिए अमृतविरुद्ध विषका भोजन किये ऐसी हम उत्प्रेक्षा करते हैं प्रकृतमें नित्य सम्भोग करनेसे अरुचि होनेके भयसे चकवा-चकई रात्रिमें वियुक्त होकर प्रतिदिन नवीन-सा सम्भोग करनेसे कामशास्त्रके पारङ्गामी हैं ऐसा हमलोग समझते हैं ]॥ ३४॥

विशति युवतित्यागे रात्रीमुचं मिहिकारुचं
दिनमणिमणिं तापे चित्तान्निजाच्च यियासति।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिह सहचरीं नामग्राहं रथाङ्गविहङ्गमाः॥ ३५॥

विशतीति। इह प्रातःसमये, रथाङ्गविहङ्गमाः पुंश्चक्रवाकाः, युवतित्यागे निजतरुणीकान्तावियोगे, चक्रवाककान्ताविच्छेदतुल्यविच्छेदे इत्यर्थः। दिनोदयेन रात्रेरदर्शनादिति भावः। रात्रीमुचम् अधुनैव रात्रीरूपपत्नीवियोगिनम्। मुचेः क्विप्। रात्रीति कृदिकारादीकारः। मिहिकारुचं मिहिकायाः हिमस्य, रुक् इव रुक् प्रभा यस्य तं तादृशम्, विरहात् हिमवत् शुभ्ररुचि चन्द्रमित्यर्थः। विशति आश्रयति सति, चक्रवाकविरहवत् शशिनोऽपि रात्रिविरहे समुपस्थिते सतीत्यर्थः। तापे सन्तापे च, विरहजनितमनस्तापे औष्ण्ये च इत्यर्थः। निजात् स्वात्, चक्रवाकीयादित्यर्थः। चित्तात् मनसः। अपादानात्। दिनमणिमणिं सूर्यकान्तमणिम्, यियासति यातुमिच्छति सति, सन्तापे चक्रवाकचित्तात् सूर्यकान्तं गन्तुमिच्छति सति इत्यर्थः। सूर्यकरसम्पर्केण सूर्यकान्तमणेः ज्वलनस्य स्वाभाविकत्वादिति भावः। यातेः सनन्ताल्लटः शत्रादेशः। विरहेण रात्रौ विच्छेदेन, तरलन्त्यः तरलायमानाः, बहुक्षणादर्शनात् आह्वानार्थं चलायमाना इत्यर्थः। आचारार्थे क्विबन्ताल्लटः शत्रादेशः। जिह्वाः रसना येषां ते तादृशाः सन्तः, अतिविह्वलां दीर्घकालादर्शनात् अतिविवशाम्, सहचरीं प्रियां चक्रवाकीम्, नामग्राहं नाम गृहीत्वा। 'नाम्न्यादिशिग्रहोः' इति णमुल्प्रत्ययः। बहु वारंवारम्, आह्वयन्ति आकारयन्ति। दिनकरः समुदितः, अतः सत्वरमुत्तिष्ठ इति भावः॥ ३५॥

चक्रवाकनिष्ठ युवतित्यागके (स्त्रीस्थानीया) रात्रिका त्याग करनेवाले (तथा विरहसे

हिमतुल्य पाण्डुवर्ण ) चन्द्रमामें प्रविष्ट होते रहनेपर (अर्थात् चकवाके समान चन्द्रमाको भी पत्नीविरह होनेपर तथा ताप ( विरहजन्य सन्ताप, पक्षा०—उष्णता ) के अपने ( चकवाकके ) चित्तसे सूर्यकान्तमणिमें गमन करनेका इच्छुक होनेपर अर्थात् सूर्य-किरण-संसर्गसे सूर्यकान्तमणिके प्रज्वलित होनेसे चक्रवाकके चित्तसे उसके रात्रि-विरहजन्य सन्तापको सूर्यकान्तमणिमें जानेकी इच्छा करते रहनेपर विरहसे अतिशय चञ्चल जिह्वावाले चक्रवाक अत्यन्त व्याकुल सहचरी ( चकई ) को नाम लेकर बारबार बुला रहे हैं अर्थात् रात्रिको पत्नी-विरहसे व्याकुलचित्त चकवा पतिवियोगसे ही व्याकुलित चकईको 'वह जीवित है या नहीं ?' ऐसी आशङ्काकर बारबार उसका नाम लेकर बुला रहे हैं ॥ ३५ ॥

स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम् ?।
लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये[1]
शृणुत शृणुतासूर्यम्पश्या न सा किल भाविनी ? ॥ ३६ ॥

स्वेति । जनः लोकः, स्वमुकुलमयैः निजकोरकरूपैः, निमीलितैरित्यर्थः । नेत्रैः नयनैः, अन्धम्भविष्णुतया अन्धीभूततया, अनन्धाया अपि अन्धाया भूततया हेतुनेत्यर्थः । अविचारादिति भावः । 'कर्त्तरि भुवः खिष्णुच्' इति अभूततद्भावे कर्त्तरि खिष्णुच्प्रत्ययः, 'अरुर्द्विषत्—' इत्यादिना मुमागमः । रवेः सूर्यस्य, अनवेक्षिकाम् अनवेक्षणीम्, सूर्यमपश्यन्तीमित्यर्थः । ण्वुल् । 'प्रत्ययस्थात्—' इति ण्वुलि कात्पूर्वस्येकारः । कुमुदिनीं कैरविणीम्, राजपत्नीमिति भावः । किमु किमिति, दुर्व्याचष्टे ? दुर्वदति ? कुमुदिनी जगत्पावनम् अवश्यदर्शनीयं सूर्यमपि न पश्यति, अहो ! महदनुचितमिदमाचरणम् अस्याः इत्यादिरूपेण वृथा अपवदतीत्यर्थः । ननु 'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥ एतानि सततं पश्येन्नमस्येदर्चयेत्तु यः । प्रदक्षिणञ्च कुर्वीत तस्य चायुर्न हीयते ॥' इति शास्त्रात् सूर्यावेक्षणस्य विहितत्वेन तदनाचरन्ती कथं न दुर्वाच्या ? इत्याशंसायामाह—कविप्रतिभासु कवीनां विदुषाम्, प्रतिभासु प्रज्ञासु, प्रतिभोल्लासितकाव्येषु इत्यर्थः । ये कुमुदिनीत्याख्यया प्रसिद्धाः, राज्ञः चन्द्रस्य नृपस्य च । 'राजा प्रभौ नृपे चन्द्रे' इति विश्वः । दाराः पत्नी राजदाराः, लिखितपठिताः कविभिर्लिपीकृताः अध्येतृभिश्च अधीताः । लिखिताश्च ते पठिताश्च इति विशेषणसमासः। कवयो यां राजपत्नीं वदन्ति, तच्छिष्याश्च तथैव जानन्तीत्यर्थः । सा राजदारत्वेन वर्णिता कुमुदिनी, सूर्यं न पश्यतीति असूर्यम्पश्या सूर्यादर्शिनी । 'असूर्यललाटयोर्दृशितपोः' इति खश्प्रत्ययः । 'पाघ्रा—' इत्यादिना दृशेः पश्यादेशः । असूर्यं इति चासमर्थसमासोऽयं, दृशिना नञः सम्बन्धत्वात् । 'यदा तु सूर्याभावदर्शनमात्रं

1. 'येति पाठः समीचीनः' इति 'प्रकाश' कारः ।

सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवति अनभिधानात्' इति न्यासकारादयः। अस्मादेव ज्ञापकात् क्रियाऽन्वयिनोऽपि नञ उत्तरपदेन समासः। न भाविनी किल ? न भविष्यति किम् ? न भविष्यत्येवेत्यर्थः। 'भविष्यति गम्यादयः' इति साधुः। शृणुत शृणुत भोः दुर्वाचो जनाः! आकर्णयत आकर्णयत। आक्रोशे द्विरुक्तिः। यदि असूर्यम्पश्या राजदारा इति राजनीत्यनुसारेण युक्तं स्यात्, तदा चन्द्रस्य राजापरनामकत्वात् चन्द्रदर्शनेनैव विकसनस्वभावायाः कुमुदिन्याः चन्द्रपत्नीत्वेन कविभिः रूपणात् कुमुदिन्या अपि राजदारत्वं सिद्धमेव, एवञ्च राजदारत्वात् तस्याः सूर्यानवेक्षणस्य युक्तत्वेन सूर्यादर्शनेन यत् जनाः तां निन्दन्ति तदसङ्गतमेवेति निष्कर्षः। परमार्थतस्तु कैमुत्यन्यायेन पुरुषान्तरदर्शननिषेधपरमेतत् न सूर्यदर्शननिषेधपरम् इति द्रष्टव्यम्, अत एव काशिका 'गुप्तिपरञ्चैतत्' इति ॥३६॥

अपने कोरकमय (बन्द होनेसे निमीलित) नेत्रोंसे अन्धी होनेके कारण लोग (अथवा—स्वयमेव अन्धा होनेके कारण लोग अपने कोरकमय नेत्रोंसे) 'यह कुमुदिनी सूर्यको नहीं देखती है' ऐसा बदनाम क्यों करते हैं? अर्थात् प्रातः सूर्य-दर्शन करना मङ्गल-कारक होनेसे कुमुदिनीकी निमिलित हो जानेके कारण सूर्यदर्शन नहीं करनेकी निन्दा करना उचित नहीं है, क्योंकि (हे वैसी निन्दा करनेवाले लोगों!) सुनिये, सुनिये, (पाणिनी आदि) कवियों (विद्वानोंकी प्रतिभामें) लिखी तथा (छात्र आदिके द्वारा वैसी ही) पढ़ी गयी राजा (नृपति, पक्षा०—चन्द्र) की स्त्रियां असूर्यम्पश्या (सूर्यका दर्शन नहीं करनेवाली) हैं, (किन्तु) यह कुमुदिनी वह (सूर्य-दर्शन नहीं करनेवाली) नहीं है। [जो राजपत्नियां हैं वे सुरक्षिततम महलोंमें रहने तथा सुकुमारतम होनेसे सूर्यदर्शन नहीं कर पातीं और उनका ऐसा होनेमें तात्पर्य मानकर ही पाणिनि आदि विद्वानोंने 'असूर्यललाटयोर्दृशितपोः (पा. सू. ३।२।३६)' का उदाहरण 'असूर्यम्पश्या राजदाराः' अर्थात् 'सूर्यको नहीं देखनेवाली राजपत्नियां' दिया है और शिष्यादिने वैसा ही परम्परासे पढ़ा है; और उस रहस्यके अनभिज्ञ लोग उस कुमुदिनी एवं राजपत्नियोंकी वैसी निन्दा करते हैं। जब अन्य राजपत्नियोंके समान कुमुदिनी भी राजपत्नी (चन्द्रकी स्त्री) है तब उसका भी सूर्य-दर्शन नहीं करना अनुचित नहीं कहा जा सकता। वास्तविकमें तो परपुरुष-दर्शन-परक 'असूर्यम्पश्या राजदाराः' उदाहरण है, न कि 'सूर्य-दर्शन-निषेध-परक' इसीसे 'गुप्तिपरञ्चैतत्' (यह अतिशय सुरक्षितत्वपरक है) यह काशिकोक्ति भी सङ्गत होती है] ॥ ३६ ॥

चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि बिसिनीबन्धो रन्ध्रच्युतैरुदबिन्दुभिः।
शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणा-
दनुपदमदःपङ्काशङ्काममी मम तन्वते ॥ ३७ ॥

चुलुकितेति । नभसि आकाशे, भृङ्गैः उड्डीयमानभ्रमरैः, चुलुकितः चुलुकीकृतः, पानार्थं निकुञ्जपाणौ गृहीत इत्यर्थः । तमःसिन्धुः अन्धकारसागरः येन तथोक्तस्य, बिसिनीबन्धोः पद्मिनीसखस्य सूर्यस्य, करात् अंशोः हस्ताच्च, रन्ध्रच्युतैः अङ्गुल्यन्तरालगलितैः उदबिन्दुभिः इव तमःसिन्धोः जलकणैरिव, शुभ्यते दीप्यते, प्रतीयते इत्यर्थः, इत्युत्प्रेक्षा । शुभेर्भावे लट् । भृङ्गतमसोः तुल्यवर्णत्वात् तथा भृङ्गाणां कृष्णवर्णस्थूलजलबिन्दुवत् प्रतीयमानत्वाच्चेति भावः । किञ्च, अमी भृङ्गाः, अनुपदम् अनुक्षणम्, उक्तरूपेण प्रतीयमानानन्तरमेवेत्यर्थः । शतदलमधुस्रोतसः कमलमकरन्दप्रवाहस्य, कच्छद्वयीपरिरम्भणात् उभयपार्श्वस्थजलप्रायभागसंश्लेषात्, मधुरप्रवाहस्य उभयतटोपरि उपवेशनाद्धेतोरित्यर्थः । अमुष्य मधुस्रोतसः, पङ्काशङ्कां कर्दमभ्रान्तिम्, मम वैतालिकस्य, तन्वते विस्तारयन्ति, उत्पादयन्तीत्यर्थः । पङ्कभृङ्गयोः समानवर्णत्वादिति भावः ॥ ३७ ॥

चुल्लूमें लेकर पीये गये अन्धकार-समुद्रवाले सूर्य-करों ( सूर्यकी किरणों, पक्षा०—हाथों ) से अङ्गुलियोंके छिद्रोंसे गिरे हुए जल-बिन्दुके समान आकाशमें ( उड़ते हुए ) भ्रमर शोभ रहे हैं और ये ( भ्रमर ) कमलोंके मकरन्द-प्रवाहके दोनों किनारोंके आलिङ्गन ( आर्द्र ) करनेसे इन मकरन्दप्रवाहोंके कीचड़की शङ्का प्रत्येक क्षणमें हमारे ( वैतालिकोंके ) मनमें उत्पन्न करते हैं । [ चुल्लूमें जलको लेकर पीते समय ( अङ्गुलियोंके छिद्रोंसे गिरे हुए जलकी बूंदोंके समान अन्धकार-समूहको चुल्लूमें लेकर पान किये हुए सूर्यके किरण० छिद्रोंसे गिरे हुए अन्धकाररूप समुद्रके बूँदोंके समान ये आकाशमें उड़ते हुए भ्रमर शोभते हैं तथा कमलोंके मकरन्द-प्रवाहसे दोनों पक्षोंको आर्द्र होनेसे हमलोगोंको ऐसा ज्ञात होता है कि ये भ्रमर मकरन्द-प्रवाहके दोनों तटोंके कीचड़ हैं । जलपान करते समय अङ्गुलिछिद्रोंसे बिन्दुओंका गिरना तथा प्रवाहके उभयतटके मध्यमें कीचड़ होना उचित ही है । अन्धकार नष्ट हो गया, कमलोंके मकरन्दका पान करनेके लिए भ्रमर आकाशमें उड़ने लगे, अत एव प्रातःकाल जानकर हे राजन् नल ! निद्रात्याग कीजिये ] ॥ ३७ ॥

घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां पत्युः कुमारतरैः करैः ।
अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिशबलनाद्गुञ्जापुञ्जश्रियं गृहयालुभिः ॥ ३८ ॥

घुसृणेति । घुसृणसुमनाश्रेणिश्रीणा कुङ्कुमकुसुमावलिशोभानाम् । 'वाऽऽमि' इति नदीत्वपक्षे नुडागमः । 'कुङ्कुमं घुसृणं वर्णम्' इति हलायुधः । अनादरिभिः अवज्ञाकारिभिः, कुङ्कुमवर्णादप्यधिकारुणवर्णत्वादिति भावः । सरःपरिसरचरैः सरोवरप्रान्तवर्तिभिः, कुमारतरः नवोदितत्वादतिबालैः, भासां पत्युः अर्कस्य, करैः । कर्तृभिः जलजामोदेन कमलपरिमलेन, यः आनन्दः हर्षः, तस्मात् उत्पतिष्णूनाम्

उत्पतनशीलानाम्, उड्डीयमानानामित्यर्थः। 'अलङ्कृञ्—' इत्यादिना इष्णुच्। मधुव्रतानां भृङ्गाणाम्, आवल्याः पङ्क्तेः, शबलनात् चित्रणात्, निजवर्णेन मिश्रीकरणात् हेतोरित्यर्थः। गुञ्जापुञ्जस्य, 'कुंच्' 'रति' इति ख्यातस्य कृष्णलासमूहस्य। 'गुञ्जा तु कृष्णला' इत्यमरः। श्रियम् इव श्रियं शोभाम्, इति निदर्शनाभेदः, गुञ्जाया उपरिभागस्य कृष्णवर्णत्वात् निम्नभागस्य च रक्तवर्णत्वादिति भावः। 'नलोक—' इत्यादिना षष्ठीप्रतिषेधः। गृहयालुभिः ग्राहकैः, ग्रहणशीलैरित्यर्थः। 'गृहि' इत्यदन्ताच्चौरादिकात् णिच् 'स्पृहिगृहि—इत्यादिना आलुच्। अजनि जातम्। भावे लुङ्। अलिकुलयोगेन सूर्यांशुकिशोरकास्तद्वत् बभ्रुः इत्यर्थः। गुञ्जाबीजानां नीलमुखत्वात् अधो रक्तवर्णत्वाच्च उपरि सञ्चरतां कृष्णवर्णानामलिकुलानां सम्पर्केण अधोवर्त्तिनां बालसूर्यकिरणानामारक्तवर्णानां गुञ्जासादृश्यमिति भावः॥ ३८॥

कुङ्कुम-पुष्प-समूहकी शोभाका अनादर करनेवाले अर्थात् उससे भी अधिक लाल, तडागोंके चारो भागमें फैलते हुए, अतिशय बाल अर्थात् अभिनव प्रभापति (सूर्य) की किरणें कमलोंकी सुगन्धसे आनन्दित हो ऊपर उड़नेवाले भ्रमर-समूहसे मिश्रित होनेके कारण घुंघची (करेजनी) की राशिकी शोभाको ग्रहण कर रहे हैं, अर्थात् अभिनवतम होनेसे अत्यधिक लाल-लाल सूर्यकिरणें उड़ते हुए भ्रमरोंसे मिलकर घुंघचीके राशिके समान शोभती हैं। [अत्यन्त छोटे बालकका सुमनसों (विद्वानों) का अनादर करना तथा रक्तवर्ण होना और घुंघचीकी समूह (माला) से शोभित होना उचित ही है]॥ ३८॥

रचयति रुचिः शोणीमेतां कुमारितरा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका।
अजनि सरसी कल्माषी तद्ध्रुवं धवलस्फुट-
त्कमलकलिकाषण्डैः पाण्डूकृतोदरमण्डला॥ ३९॥

रचयतीति। यत् यस्मात्, अतिशयेन कुमारी कुमारितरा अतिशयेन बाला, नवप्रकाशिता इत्यर्थः। 'घरुप—' इत्यादिना ङ्यो ह्रस्वः। रवेः सूर्यस्य, रुचिः प्रभा, एतां सरसीम्, शोणीं शोणवर्णाम्, अरुणवर्णामित्यर्थः, 'शोणात् प्राचाम्' इति विकल्पात् ङीप्। रचयति करोति, निजारुण्यस्पर्शनेनेति भावः। तथा पातुका पतयालुः, सरस्या एवोपरि उत्पतनशीला इत्यर्थः। 'लषपत—' इत्यादिना उकञ्। अलीनां भ्रमराणाम्, पटली मण्डली च, नीलीकर्त्तुं स्वकान्तिसम्पर्केण कृष्णवर्णीकर्त्तुं। अभूततद्भावे च्विः। सरसीमेवेति भावः। व्यवस्यति उद्युङ्क्ते इच्छतीत्यर्थः। तत् तस्मात्, सरसी दीर्घिका, धवलैः शुभ्रैः, स्फुटद्भिः विकसद्भिश्च, कमलकलिकानां पद्ममुकुलानाम्, षण्डैः कदम्बैः, समूहैरित्यर्थः। 'कदम्बे षण्डमस्त्रियाम्' इत्यमरः। पाण्डूकृतं धवलीकृतम्, अभूततद्भावे च्विः। उदरमण्डलं

मध्यभागः यस्याः सा तादृशी सती, कल्माषी चित्रवर्णा, विविधवर्णेत्यर्थः। गौरादित्वात् ङीप्। अजनि जाता। 'दीपजन-' इत्यादिना कर्त्तरि लुङ् चिण्। ध्रुवं निश्चितम्, इत्युत्प्रेक्षायाम्। अत्र सरस्याः स्वगुणत्यागेन रविकिरणादिगुणस्वीकारात्तद्गुणालङ्कारः, 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः' इति लक्षणात्। तत्रैकैकगुणसङ्क्रान्तिपरिचयात् शोणाद्यनेकगुणसङ्क्रमद्वारा कल्माषस्वीकारोत्प्रेक्षणात्तद्गुणोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः॥ ३९॥

जिस कारणसे अतिशय अभिनव सूर्य-किरण इसे (इस तडागको) लाल कर रही है, जिस कारणसे (मकरन्द-पान करनेके लिए इस तडागके ऊपर गिरता अर्थात् आता हुआ भ्रमर-समूह इस तडागको नीला करना चाहता है, मानो इस कारणसे) स्वच्छ खिलते हुए कमल-कोरक-समूहोंसे मध्यभागमें स्वच्छ वर्णवाला यह तडाग कर्बुरित हो गया है (अथवा—······चाहता है और जिस कारणसे स्वच्छ विकसित होते हुए कमल-कोरक-समूहोंसे यह तडाग मध्यभागमें शुभ्रवर्णवाला हो गया है; मानो इस कारणसे ही यह तडाग कर्बुरित हो गया है)॥ ३९॥

कमलकुशलाधाने भानोरहो! पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः।
कविभिरुपमादानादम्भोजतां गमितान्यसा-[1]
वपि यदतथाभावान्मुञ्चत्युलूकविलोचने॥ ४०॥

कमलेति। कमलानां पद्मानाम्, प्रकृतानामुपमितानां वा इति भावः। कुशलाधाने क्षेमविधाने, विकासजनने इति भावः। भानोः सूर्यस्य, पुरुषव्रतं पुरुषस्य पुरुषाभिमानिनः, व्रतं नियमः, दृढाध्यवसाय इत्यर्थः। पौरुषमिति यावत्। अहो! चित्रम्! अथवा-अहोपुरुषः पुरुषाभिमानवान्। अहोपुरुष इति मयूरव्यंसकादिषु कैयटः। तस्य व्रतं दृढनियम इत्यर्थः। कुतः? यत् यस्मात्, असौ भानुः, श्रीगृहत्वं शोभाश्रयत्वम्, नेत्राणां सौन्दर्यवर्णने उपमानत्वमित्यर्थः। विवक्षुभिः वक्तुमिच्छुभिः। 'द्वितीया-' इति योगविभागात् द्वितीयासमासः। कविभिः काव्यकर्त्तृभिः वाल्मीकादिभिः, उपमादानात् नेत्राणां सादृश्यत्वेन वर्णनामात्रात्, अम्भोजतां गमितानि कमलत्वेन रूपितानि, नेत्राणि नयनानि अपि, सौन्दर्यातिशयख्यापनाय कमलतुल्यतया वर्णितानि जननयनान्यपीत्यर्थः, उपकुरुते उन्मीलनेन उपकृतानि करोति, विकासयतीत्यर्थः। आलोकसहकारादेव लोकलोचनानां विषयेषु प्रवृत्तेरिति भावः। सूर्योदये सर्व एव प्राणिनो निद्रां परिहृत्य नयनोन्मीलनकरणात् भानोः उपमितकमलानां कुशलाधायकत्वम्, प्रकृतानाञ्च विकाससम्पादनेन कुशलाधायकत्वमिति बोद्धव्यम्। यत् अपि यस्माच्च, अतथाभावात् औपमानिकाम्भोजत्वस्यापि

१. '—मानादथ—' इति पाठान्तरम्।

अभावादित्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। उलूकस्य पेचकस्य, विलोचने नयने, गोलाकारे क्षुद्रे च इति भावः। मुञ्चति परिहरति, न उन्मीलनेन उपकरोती॰त्यर्थः। सूर्यकरासहत्वेन निमीलिताक्षत्वादिति बोध्यम्। अन्वयव्यतिरेकाभ्याम् अम्भोजसदृशस्य लोकलोचनस्य विकासेन कुशलाधायकत्वात् तदसदृशस्य उलूकलोचनस्य च अविकाशेन कुशलानाधायकत्वात् सहस्रकरस्य देवस्य अम्भोजक्षेमङ्करत्वव्रतं किमु वाच्यम्? इति निष्कर्षः। प्रातः अम्भोजवल्लोकलोचनाम्भोजान्यपि विकास॰यामास इति भावः॥ ४०॥

कमलोंके मङ्गल करनेमें सूर्यका पुरुषव्रत ( अङ्गीकृतका सम्यक् प्रकारसे परिपालन करना ) आश्चर्यकारक है, क्योंकि यह ( सूर्य ) श्री ( शोभा या लक्ष्मी ) के निवासस्थानको कहनेके इच्छुक ( व्यास, वाल्मीकि, कालिदास आदि ) कवियोंके द्वारा उपमा देनेसे अर्थात् मनुष्योंके नेत्रोंको भी कमलतुल्य कहनेसे कमलत्वको प्राप्त ( मनुष्योंके ) नेत्रको भी विकसित ( पक्षा०—वस्तुदर्शन समर्थ ) करता है और अन्यथाभाव होनेसे अर्थात् कवियोंके द्वारा कमलका उपमा नहीं देनेसे उल्लूके नेत्रद्वयको छोड़ देता ( विकसित अथच—वस्तु-दर्शन-समर्थ नहीं करता ) है। [ सूर्य तडागस्थ मुख्य कमलको विकसित करता ही है, किन्तु कवियोंने मनुष्योंके जिन नेत्रोंको कमलके साथ उपमा दी है, उन नेत्रोंको भी ( प्रातःकालमें सूर्योदय होनेसे मनुष्योंके जगने ( नेत्रखोलने ) तथा वस्तुओंको देखनेके कारण ) विकसित करता है और श्रीहीन जिन उलूक-नेत्रोंको कवियोंने कमलके साथ उपमा नहीं दी है, उन्हें ( दिनमें नहीं देख सकनेके कारण उल्लूके नेत्रोंको ) नहीं विकसित करता अतः सूर्यका यह पुरुषव्रत ( कवियोंसे उपमित होने मात्रसे मुख्य कमलके साथ ही मानवनेत्रकमलको भी विकासित करनेका तथा कवियोंसे उपमित नहीं होनेमात्रसे उल्लूकनेत्रको अविकसित ही छोड़ देनेका अटल नियम ) आश्चर्यजनक है ]॥ ४०॥

यदतिमहतीभक्तिर्भानौ तदेनमुदित्वरं
त्वरितमुपतिष्ठस्वाध्वन्य[1] ! त्वमध्वरपद्धतेः।
इह हि समये मन्देहेषु व्रजन्त्युदवज्रताम्
अभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल॥ ४१॥

यदिति। अध्वरस्य यज्ञस्य, पद्धतेः पथः, अध्वन्य! नित्यपान्थ! अध्वानमलं गच्छतीति अध्वन्यः, 'अध्वनो यत्खौ' इति यत्प्रत्ययः। 'ये चाभावकर्मणोः' इति प्रकृतिभावः। हे नित्ययज्ञानुष्ठाननिरत महाराज! यत् यस्मात्, त्वं भवान्, भानौ सूर्ये, अतिमहती अत्युत्तमा, भक्तिः अनुरागविशेषः यस्य सः तादृशः, असीति शेषः। भक्तिशब्दस्य प्रियादिषु पाठात् न पुंवद्भावः। तत् तस्मात्, उदित्वरम् उद्यन्तम्। 'इण्नश—'इत्यादिना क्वरप्। एनं भानुम्, त्वरितं शीघ्रम्, उपतिष्ठस्व उपास्स्व।

1. '—स्वाध्वान्यम्' इति पाठान्तरम्।

'उपाद्देवपूजा—'इत्यादिना देवपूजायामात्मनेपदम् । कुतः ? हि यस्मात् कारणात्, इह अस्मिन्, समये उदयकाले, रविम् अर्कम्, अभि लक्षयित्वा, रविमुद्दिश्य इत्यर्थः । 'अभिरभागे' इति लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । उपस्थाने उपासनायाम्, उत्क्षिप्ताः ऊर्ध्वं निक्षिप्ताः 'आपः ऊर्ध्वं विक्षिपन्ति' इति श्रुतेः । जलाञ्जलयः उदकाञ्जलयः, मन्देहेषु मन्देहाख्येषु राक्षसेषु, उदवज्रतां जलमयवज्रायुधत्वम् । 'मन्थौदन—' इत्यादिनोदादेशः । व्रजन्ति गच्छन्ति, किल इत्यागमे । अत्र श्रुतिः 'तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः, सन्ध्यायां गायत्र्याऽभिमन्त्रिता आप उद्ध्र्वं विक्षिपन्ति, ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति ॥ ४१ ॥

जिस कारणसे (अथवा—यदि) तुम सूर्यमें अत्यधिक भक्तिवाले हो, उस कारणसे (अथवा—तो) हे यज्ञके पथिक अर्थात् महायाज्ञिक (नित्य यज्ञ करनेवाले नल)! उदय होते हुए (पाठा०—यज्ञमार्गके सदा पथिक) इस (सूर्य) का शीघ्र उपस्थान (पूजन) करो, क्योंकि इस (प्रातः) कालमें सूर्यको लक्षितकर उपस्थानमें दी गयी जलाञ्जलियां (उदय होते हुए सूर्यके साथ युद्ध करनेवाले साढ़े तीन करोड़) 'मन्देह' नामक राक्षसोंपर जल (बिन्दुरूप) मय वज्र हो जाते हैं। [अतः सूर्यके महान् भक्त आपको चाहिये कि शीघ्र निद्रात्यागकर नित्य स्नानादिसे निवृत्त हो सूर्यका उपस्थान करते हुए सूर्यार्घ्य दें]॥

उदयशिखरिप्रस्थावस्थायिनी खनिरक्षया
शिशुतरमहोमाणिक्यानामहर्मणिमण्डली ।
रजनिदृषदं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ? ॥ ४२ ॥

उदयेति । इयं परिदृश्यमाना, अहर्मणिमण्डली सूर्यविम्बस्वरूपा, उदयशिखरिणः उदयाद्रेः, प्रस्थावस्थायिनी सानुनिष्ठा, अक्षया अविनश्वरा, भूयसीत्यर्थः । शिशुतराणि अतिशयेन बालानि, सद्यःप्रकाशितानीति यावत् । महांसि तेजांसि एव, माणिक्यानि पद्मरागाः, अरुणवर्णत्वादिति भावः । तेषां खनिः आकरः, ध्वान्तेन अन्धकारेण, श्यामां कृष्णवर्णाम्, ध्वान्तवत् श्यामाञ्च, पिधायिकाम् आच्छादिकाम् जगतः खनेः प्रवेशद्वारस्य चेति भावः । रजनिं रात्रिम् एव, दृषदं शिलाखण्डम्, विधूय अपसार्य, कतमेन केन, जनेन लोकेन, विमुद्रिता ? उद्घाटिता ? इति न जाने न बुध्ये, खलु इति वितर्के । अत्र सूर्यमण्डल्यादिषु खनित्वाद्यारोपात् रूपकालङ्कारः ॥ ४२ ॥

सूर्य-बिम्बरूप तथा उदयाचलकी शिलापर स्थित, अक्षय (बहुत अधिक होनेसे कभी समाप्त नहीं होनेवाली), अभिनवतम तेजोरूप मणियोंकी खानको अन्धकारतुल्य (अथवा—अन्धकारसे) कृष्णवर्ण (खानके प्रवेशद्वारको) आच्छादित करनेवाली रात्रिरूपी पत्थरको हटाकर किसने खोल दिया है, यह मैं नहीं जानता हूं। [अथवा—ब्रह्माने खोल दिया

है, यह मैं नहीं जानता अर्थात् अवश्य जानता हूं कि कालपरिवर्तनकारी ब्रह्माने ही इसे खोला है। पर्वतकी शिलापर स्थित काले पत्थरसे ढकी हुई मणियोंकी अक्षय खानको जैसे कोई भाग्यवान् खोल देता है, वैसे उदयाचलकी शिलापर फैलती हुई अभिनवतम होनेसे रक्तवर्ण मणियोंके समान काली रात्रिरूपी पत्थरसे आच्छादित सूर्यबिम्बरूपी खानको किसने खोलकर सर्वसाधारणको विदित करा दिया है यह मैं नहीं जानता। अन्धकारयुक्त काली रात्रि नष्ट हो गयी, सूर्योदय हो रहा है; अतः आप निद्रात्याग करें ]॥ ४२॥

सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः॥ ४३॥

सुरेति। सुराणां देवानाम्, परिवृढः प्रभुः इन्द्रः। 'प्रभौ परिवृढः' इति निपातनात् साधुः। कर्णात् राधेयात्, कुण्डलद्वयं कर्णाभरणयुगलम्, सूर्यप्रदत्तं सहजमक्षयञ्चेति भावः। प्रत्यग्रहीत् याचित्वा आदात्, किल इति वार्त्तायाम्। 'ततो निकृत्य गात्राणि शस्त्रेण निशितेन सः। प्रायच्छद्देवराजाय दिव्यं वर्म सकुण्डलम्॥' इति भारतवचनात्। तत्रोत्प्रेक्षते—अथ प्रतिग्रहानन्तरम्, प्राच्यै पूर्वस्यै दिशे, मुदा प्रीत्या, प्रादात् दत्तवान्, तत् कुण्डलद्वयमिति शेषः, खलु निश्चये। हि यस्मात्, सः इन्द्रः, तस्याः प्राच्याः दिशः, पतिः भर्त्ता, भार्यायै आभरणदानस्य पत्युरौचित्यादिति भावः। कथं त्वया तद्बुध्यते? इत्याह—तत्र तयोः कुण्डलयोः मध्ये, एकं कुण्डलम्, उदयं भजतीति उदयभाक् उद्यन्, उदयकालिकः इत्यर्थः। 'भजोण्विः' इति ण्विप्रत्ययः। विधुः चन्द्रः, इवेति शेषः। व्यलोकि विलोक्यते स्म, जनैर्गतसायंकाले इति शेषः। नवतरान् अतिशयेन प्रत्यग्रान्, करान् किरणान् एवं, स्वर्णानि सुवर्णानि, तुल्यप्रभासम्पन्नत्वादिति भावः। स्रावयति आत्मनो वर्षयतीति तत् तादृशम्, द्वितीयं कुण्डलम्, अहर्मणिः दिनमणिः सूर्यः इवेति शेषः। 'रोऽसुपि' इति रेफादेशः। विलोक्यते इदानीं प्रातः दृश्यते, जनैरिति शेषः। एतदेव पूर्वानुमानस्य कारणमिति भावः॥ ४३॥

देवराज ( इन्द्र ) ने कर्णसे ( सूर्यप्रदत्त सहजात एवं अक्षय ) कुण्डयद्वयको दान लिया और उसे हर्षके साथ पूर्व दिशाके लिए दे दिया, क्योंकि वे उस ( पूर्व दिशा ) के पति ( स्वामी, अथवा—रक्षक ) है। ( पतिको हर्षके साथ पत्नीके लिए अमूल्य कर्णाभरण आदि अलङ्कार देना उचित ही है। इस बातका हम इस कारणसे अनुमान करते हैं कि ) उसमें ( पूर्व दिशामें, अथवा—उन दो कुण्डलोंमेंसे सायंकालमें ) उदय होते हुए चन्द्ररूप एक कुण्डल तो दिखलायी दिया था और इस प्रातःकालमें सूर्यरूप यह नवीनतम किरणरूप

सुवर्णको प्रवाहित करनेवाला (अभिनव होनेसे सुवर्णवत् भासमान) दूसरा कुण्डल दिखलायी दे रहा है ॥ ४३ ॥

पौराणिक कथा—कुमारी कुन्तीके गर्भसे सूर्यांश द्वारा कर्ण नामक पुत्र उत्पन्न हुआ था, उसको पिता सूर्यने सहजात कवचसहित दो अक्षय सुवर्णकुण्डल दिये थे, उसे इन्द्रने ब्राह्मणका वेष धारण मांगा तो महादानी कर्णने शस्त्रसे शरीरच्छेदनकर कवचसहित दोनों कुण्डलोंको इन्द्रके लिए दे दिया। यह कथा महाभारतके आरण्यक पर्वमें आती है।

दहनमविशद्दीप्तिर्याऽस्तङ्गते गतवासर-
प्रशमसमयप्राप्ते पत्यौ विवस्वति रागिणी ।
अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः कृता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम् ॥ ४४ ॥

दहनमिति। रागिणी सायङ्कालिकत्वात् रक्तवर्णा अनुरागिणी च, या दीप्तिः सूर्यस्य प्रभा काचित् स्त्री च, गतवासरे अतीतदिने, प्रशमसमयम् अवसानकालम्, तेजसो जीवनस्य चेति शेषः। सायंकालं मृत्युकालञ्चेति भावः। प्राप्ते उपस्थिते सति, पत्यौ स्वामिनि भर्त्तरि च, विवस्वति सूर्ये कस्मिंश्चित् पुरुषे च, अस्तम् अस्ताद्रिम् अदर्शनञ्च, गते प्राप्ते सति, दहनम्, अग्निम् अविशत् प्रविष्टवती, 'अग्निं वाऽऽदित्यः सायं प्रविशति' इति श्रुतेः, 'मृते भर्त्तरि ब्रह्मचर्यं तदन्वारोहणं वा' इति स्मृतेश्च सहगमनार्थमिति भावः। सा पूर्वोक्ता, एषा दीप्तिः काचित् साध्वी नारी च, हठात् बलात्, आत्मीयपुण्यप्रभावादित्यर्थः। अधरभुवनात् अधोलोकात्, पातालात् नरकाच्च इत्यर्थः। उद्धृत्य उत्तोल्य, तरणेः पत्युः अर्कस्य, कस्यचित् पुरुषस्य च, कृता सम्पादिता, अमरपतिपुरप्राप्तिः पूर्वदिगवस्थितेन्द्रनगरलाभः स्वर्गलाभश्च यया सा तादृशी सती, तीव्रतया तीक्ष्णतया सह वर्त्तते इति तादृशी सतीव्रता अतीव तीक्ष्णा, सत्याः पतिपरायणतायाः, व्रतं नियमो यत्र सा तादृशी, पतिव्रताधर्मश्च इत्यर्थः। मूर्त्तिः आकारः रूपञ्च यस्याः तस्याः भावः तत्ता तां सतीव्रतमूर्त्तिताम्, धत्ते धारयति। सूर्यतेजसः उत्तरोत्तरं तीक्ष्णताभावादिति 'व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्। तद्वद्भर्त्तारमादाय तेनैव सह मोदते॥' इति स्मरणादिति च भावः। अत्र प्रस्तुतदीप्तिविशेषणसाम्यादप्रस्तुतसतीप्रतीतेः समासोक्तिरलङ्कारः॥ ४४ ॥

(सायङ्काल होनेसे) लाल रङ्गवाली (पक्षा०—अनुरागवाली) जो दीप्ति (सूर्यप्रभा, पक्षा०—कोई साध्वी स्त्री) गत दिन (तेजके, पक्षा०—जीवनके) अन्त समय आनेपर स्वामी सूर्यके अस्त होने (पक्षा०—मरने) पर अग्निमें प्रविष्ट हो गयी थी (जन्मान्तरमें उसी पतिको पानेके लिये पतिव्रता-धर्मका पालन करती हुई अग्निमें जल गयी थी);

१. अत्र 'द्वितीयाश्रितातीत—' इति समासो बोध्यः ।

पाताल ( पक्षा०—नरक ) से ( अपने पतिव्रत्यके प्रभावसे ) हठपूर्वक ( सूर्यको, पक्षा०—पतिको ) निकाल कर सूर्य ( पक्षा०—पति ) को इन्द्रपुरी ( पूर्व दिशा, पक्षा०—स्वर्ग ) को प्राप्त करानेवाली वह ( दीप्ति, पक्षा०—साध्वी स्त्री ) तीव्रतायुक्त मूर्ति ( पक्षा०—सतियोंके व्रतकी मूर्ति ) को धारण करती है। [ जिस प्रकार अनुरागिणी स्त्री पतिके मृत्यु होनेपर अग्निमें प्रवेशकर नरकमें भी गये हुए पतिको अपने पातिव्रत्यके प्रभावसे नरकसे निकालकर स्वर्गमें पहुँचाती हुई सतीव्रतके मूर्तिभाव मूर्तिमान सतीत्वको प्राप्त करती है; उसी प्रकार लाल-लाल सूर्यप्रभा कल सायङ्काल सूर्यके अस्त हो जानेपर स्वयं अग्निमें प्रविष्ट हो गयी तथा बलात्कारसे अधोलोकसे सूर्यको निकालकर पूर्व दिशामें लाकर तीव्रतम आकृतिवाली हो रही है अर्थात् क्रमशः सूर्यके ऊपर उठनेसे सूर्यदीप्ति तीक्ष्ण ( प्रखर ) हो रही है। सूर्यके अस्त होनेपर दीप्तिका अग्निमें प्रविष्ट होना श्रुति-सम्मत एवं सर्वप्रत्यक्ष है। सूर्योदय हो गया और क्रमशः सूर्य किरणें तीक्ष्ण हो रही हैं ] ॥ ४४ ॥

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरिद्वर्णाद्याहारजः किल कालिमा।
शमनयमुनाक्रोडैः कालैरितस्तमसां पिबा-
दपि यदमलच्छायात् कायादभूयत भास्वतः ॥ ४५ ॥

बुधेति। तनोः शरीरात्, जन्म उत्पत्तिः यस्य तस्य तनुजन्मनः अपत्यस्य। 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे' इति वामनः। तनौ शरीरे, कालिमा श्यामता, पित्रोः जननीजनकयोः, शितिहरितौ कृष्णपालाशौ, वर्णौ वर्णविशिष्टम् आहार्यद्रव्यमित्यर्थः। तदादिः तत्प्रभृतिः, यः आहारः भोज्यम्, तस्मात् जायते उत्पद्यते इति तादृशः, इयम् ईदृशी, किल इति प्रसिद्धौ, बुधजनकथा विद्वज्जनानामुक्तिः, तथ्या एव सत्या एव। कुतः? यत् यस्मात्, अमलच्छायात् अतिस्वच्छकान्तेरपि, तमसाम् अन्धकाराणाम्। कृद्योगात् कर्मणि षष्ठी। पिबतीति पिबः तस्मात् पातुः। 'पाघ्रा—' इत्यादिना पिबादेशश्च शप्रत्ययः। इवेति शेषः। इतः अस्मात्, पूर्वाकाशे दृश्यमानादित्यर्थः। भास्वतः सूर्यस्य, कायात् शरीरात्, कालैः कृष्णवर्णैः, शमनयमुनाक्रोडैः यमकालिन्दीशनैश्चरैः, अभूयत जातम्। भावे लङ्। कृष्णवर्णान्धकाराहारादेव शुभ्रकान्तेरपि सूर्यस्य अपत्यानि कृष्णवर्णानि जातानि इति निष्कर्षः। अत्र शमनादिकालिम्नस्तत्पितृतिमिराहारपरिणतिपूर्वकत्वोत्प्रेक्षा॥४५॥

'सन्तानके शरीरमें कालापन पिता ( और माता ) के काले तथा हरे आदि वर्णवाले भोजनसे उत्पन्न होता है अर्थात् माता-पिताके काली-हरी वस्तुओंके भोजन करनेसे उनकी सन्तान काली होती है' यह ( 'स श्यामो मित्रातनयत्वात्' 'मित्र (सूर्य)का पुत्र नहीं होनेसे वह श्याम वर्ण है' इत्यादि उदयनाचार्यादि ) पण्डित लोगोंका कथन सत्य ही है, क्योंकि अत्यन्त निर्मल कान्तिवाले अन्धकारोंको पीने ( नाशक होनेके कारण भोजन करनेवाले )

सूर्य-शरीरसे ( उनकी सन्तान ) यमराज, यमुना और शनि काले ( कृष्णवर्णवाले ) हुए हैं॥

अभजत चिराभ्यासं देवः प्रतिक्षणदाऽत्ययं[1]
दिनमयमयं कालं भूयः प्रसूय तथा रविः।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुम् ॥ ४६ ॥

अभजतेति। अयम् उद्यन्, देवः द्युतिमान्, रविः सूर्यः, प्रतिक्षणदाऽत्ययं प्रत्येकरात्र्यवसाने। अव्ययीभावसमासः, 'तृतीयासप्तम्योर्बहुलम्' इति विकल्पात् सप्तम्यामम्भावः। दिनमयं दिवसरूपम्, कालं समयं कृष्णवर्णञ्च। 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति विश्वः। भूयः पुनः पुनः, प्रसूय जनयित्वा, तथा तादृक्, चिराभ्यासं बहुकालाभ्यसनम्, पौनः पुन्येन करणस्वभावमित्यर्थः। अभजत प्राप्नोत्। यथा येन कृत्वेत्यर्थः। अनेन रविणा, असौ चिराभ्यस्ता इत्यर्थः। अत एव शीलं स्वभावभूता, कालस्य समयस्य कृष्णवर्णस्य च, प्रसूतिः उत्पादना, पुरा पूर्वम्, वर्त्तमानात् प्राक् समयोत्पादनात् परञ्चेत्यर्थः। यमयमुनयोः शमनकालिन्द्याः स्वापत्ययोः, जन्माधाने जननार्थं वीजनिधानविषयेऽपि, उज्झितुं त्यक्तुम्, न शकिता खलु नैव शक्ता, इवेति शेषः। कर्मणि क्तः, कर्मणि निष्ठायामिडागमः, तथा च काशिकावृत्तौ—'सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, शकितो घटः कर्त्तुम्, शक्तो घटः कर्त्तुमिति। तत्र कालशब्दे वाच्यप्रतीयमानयोरभेदाध्यवसायेन भगवतो भानोः प्रत्यहं कालप्रसूत्या अभ्यासादपत्येष्वपि शमनयमुनादिषु कालप्रसवितृत्वमुत्प्रेक्ष्यते, तत्र कालयोः कृष्णानेहसोरभेदाध्यवसायादतिशयोक्तिः इति तयोरेकाश्रयत्वेनात्र सङ्करः ॥ ४६ ॥

इस सूर्यदेवने प्रत्येक रात्रिके अन्त ( प्रातःकाल ) में दिनरूप काल ( समय, पक्षा०—कृष्णवर्णवाला पुत्र ) बार-बार उत्पन्नकर उस प्रकार अत्यधिक अभ्यास कर लिया है कि पहले काल ( दिनरूप काल = समय पक्षा०-'शनि' नामक कृष्ण वर्णवाले पुत्रको, तथा भविष्यमें होनेवाले कृष्णवर्णवाले यमराज एवं कृष्ण वर्णवाली यमुना ) को उत्पन्न करनेवाला यह सूर्य यमराज तथा यमुनाको उत्पन्न ( करनेके लिए गर्भाधान ) करनेके समयमें भी इस ( कृष्णवर्णोत्पादनके चिराभ्यास ) के कारण शील ( अपने उक्त स्वभाव ) को नहीं छोड़ सका। [ प्रातःकाल प्रतिदिन बारबार किया हुआ अभ्यास अत्यन्त दृढतम होता है और वह कभी नहीं छूटता अतएव प्रातःकालमें काल अर्थात् दिन ( पक्षा०—कृष्णवर्ण सन्तान ) को बार-बार उत्पन्न करनेका अभ्यास हो जानेसे सूर्य भी यमराज तथा यमुनाको उत्पन्न करनेके समय अपने कृष्णवर्णोत्पादनरूप स्वभावको नहीं छोड़ सका और उसकी दोनों सन्तानें—यमराज तथा यमुना भी-कृष्णवर्ण ही उत्पन्न हुईं ] ॥ ४६ ॥

---

१. '—त्यये' इति पाठान्तरम्।

रुचिरचरणः सूतोरुश्रीसनाथरथः शनिं
शमनमपि स त्रातुं लोकानसूत सुताविति ।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-
र्यदुपहसितो भास्वान्नास्मान् हसिष्यति कः खलः ? ॥ ४७ ॥

ननु ईदृशबाहुल्येन सूर्यवर्णनं लोकानां हासजनकं भवितुमर्हति इत्याशङ्क्याह—रुचिरेति । रुचिरचरणः मनोज्ञाचरणशीलः, जगदाह्लादकत्वादिति भावः । अथच विपरीतलक्षणया अरुचिरचरणः किरणार्थकस्य पादशब्दस्य चरणपर्यायकत्वात् तीव्रपादः इत्यर्थः, सन्तापकत्वादिति भावः । तथा सूतया प्रसूतया, उदयानन्तरं प्रकाशितया इत्यर्थः । ऊर्व्या प्रचुरया, श्रिया शोभया, अथ च, सूतस्य सारथेः अरुणस्य, अनूरोरिति भावः। 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः। ऊर्वोः सक्थिद्वयस्य, 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । श्रिया शोभया, इति सोपहासोक्तिः, सनाथः युक्तः, रथः स्यन्दनं यस्य सः तादृशः, तथा रथपदेषु रथाङ्गनामपक्षिषु चक्रवाकेषु, कृपासिन्धुः दयासागरः, स्वोदयेन दम्पत्योर्मेलनघटनात् चक्रवाकाणामुपकारीत्यर्थः । तथा दृशां लोकचक्षुषाम् , बन्धुः सुहृत् , स्वोदयेन प्रकाशकत्वादिति भावः, सः सर्वलोकनमस्कृतः भास्वान् सूर्योऽपि, शनिं शनैश्चरम् , क्रूरग्रहत्वेन लोकानामनिष्टकारितया अत्यन्तारुचिरचरणत्वेन तथा पङ्गुत्वात् गमनकाले कुत्सितदर्शनत्वेन च पित्रपेक्षया अत्यन्तविसदृशमिति भावः । तथा शमनमपि यमञ्च, दम्पत्योरन्यतरप्राणहरणेन विच्छेदजनकत्वादकरुणत्वेन तथा स्वजनप्राणविनाशनेन नियतरोदनादन्धत्वोत्पादकतया जननेत्राणां शत्रुभूतत्वेन च पित्रपेक्षया अत्यन्तविसदृशमिति भावः । सुतौ पुत्रौ, लोकान् जगन्ति, त्रातुं रक्षितुम् विपरीतलक्षणया विनाशयितुञ्च, असूत अजनयत् , इति एवमुक्त्वा इत्यर्थः । दुर्जनैः खलैः, यत् यदा, उपहसितः उपहासः कृतः, तदा कः खलः दुर्जनः, अस्मान् वैतालिकानित्यर्थः । न हसिष्यति ? न उपहासं करिष्यति ? अपि तु सर्व एव सूर्यवर्णनात् अस्मान् उपहासं करिष्यतीत्यर्थः । परन्तु तत्र न काऽपि अस्माकं क्षतिरिति भावः । कैमुत्येनार्थान्तरापादनादर्थापत्तिरलङ्कारः ॥

सुन्दर चरणों ( किरणों, अथवा—आचरणोंवाला ) स्वयमुत्पादित अर्थात् उदयके बाद प्रकाशित ( अथवा—सारथि=अरुणकी ) अधिक शोभासे युक्त रथवाला, चक्रवाकके लिए कृपा-समुद्र ( चक्रवाक-दम्पतिको दिनमें अवियुक्त करनेसे उसके लिये कृपासागर ) तथा ( उन्मीलन, अथवा—पदार्थोंके ग्रहण करनेको शक्ति उत्पन्न करनेसे ) नेत्रोंके लिए बन्धुस्वरूप वह सूर्य ( श्रुत्यादि प्रसिद्ध लोकपाल होनेसे ) शनि और ( दुष्ट एवं शिष्टका क्रमशः निग्रह और अनुग्रह करके धर्माचरणमें लोकको प्रवृत्त करनेसे ) यम—इन दो पुत्रोंको संसारकी रक्षा करनेके लिए उत्पन्न किया ( इस प्रकार सज्जनोंसे प्रशंसित भी सूर्यको )—'तीव्र किरणोंवाला अथवा—सन्तापकारक, तथा ( पुराणादिमें चरणाङ्गुलि आदिका ध्यान

करनेसे कुष्ट होनेके कारण ) चरणरहित ( अथवा—विपरीत लक्षणासे अरुचिर किरणोंवाला), सूत ( अरुण ) के ऊरुद्वयको ( अथवा—अरुणकी अधिक ) शोभासे युक्त रथवाला ( दोनों पक्षमें आत्मीय शोभासे हीन होनेके कारण उपहासास्पद ), तिर्यञ्च चकवा पक्षीके लिए कृपासमुद्र ( अर्थात् मानवादिके लिए नहीं ), नेत्रोंके बन्धु अर्थात् विपरीत लक्षणासे अतिशय तीव्र किरणोंद्वारा नेत्रप्रतिघातक होनेसे नेत्रोंके अबन्धु—अहितकारी ( अथवा—नेत्रके अतिरिक्त दूसरेके बन्धु नहीं ) ऐसा सूर्य ( दुष्ट एवं दीर्घकालतक भोग्य ग्रह होनेसे ) शनि तथा ( प्रियजनोंमें-से एक व्यक्तिको मारकर अन्य बन्धुओंको सन्तापकारक ) यम—इन दो पुत्रोंको संसारकी रक्षाके लिए अर्थात् विपरीत लक्षणासे संसारके विनाशके लिए उत्पन्न किया' इस प्रकार सूर्यको दुष्ट लोग उपहास करते हैं तो सूर्यका इतना उत्तम एवं विशिष्ट करनेवाले हम ( वैतालिक ) लोगोंको कौन दुष्ट नहीं हँसेगा अर्थात् ( अकिञ्चित्कर ये वैतालिक उदरपूर्त्यर्थ चाहे जो कुछ बोल रहे हैं इत्यादि रूपमें ) सभी दुष्ट इस प्रकार सूर्यके विशिष्ट वर्णन करनेवाले हमलोगोंको हँसेगें, ( किन्तु जिस प्रकार उसी सूर्यको सज्जनलोग उक्तरूपसे स्तुति भी करते हैं, उसी प्रकारसे राजराजेश्वर आप हम लोगोंकी निन्दा न करके प्रशंसा ही करेंगे तथा इसी कारण हमारे इस प्रभातवर्णनको सत्यमानकर प्राभातिक सन्ध्या-वन्दनादि नित्यक्रियाके लिए अवश्यमेव निद्रात्याग करेंगे ) ॥ ४७ ॥

शिशिरजरुजां घर्मं शर्मोदयाय तनूभृता-
मथ [1]खरकराश्यानास्यानां प्रयच्छति यः पयः ।
जलभयजुषां तापं तापस्पृशां हिममित्ययं
परहितमिलत्कृत्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥

शिशिरेति । यः देवः, शिशिरजा शीतर्त्तुजा, रुक् पीडा येषां तादृशानाम्, तनूभृतां शरीरिणाम्, शर्मोदयाय सुखोत्पादनाय । एतत् पदद्वयमुत्तरवाक्यत्रयेऽप्यनुषञ्जनीयम् । घर्मं निदाघम्, वसन्तग्रीष्मकालिकौ सन्तापौ इत्यर्थः । अथ तदनन्तरम्, खरकरैः वसन्तनिदाघजनितैः तीक्ष्णैः किरणैः, आश्यानानि शुष्काणि, आस्यानि मुखानि येषां तादृशानाम्, 'खरकरश्याना' इति पाठेऽपि स एवार्थः । तनूभृतां शर्मोदयाय पयः वर्षासु जलम्, तथा जलभयजुषां वर्षाजलभीतानाम्, तनूभृतां शर्मोदयाय तापं शारदसन्तापम्, तथा तापस्पृशां शारदसन्तापभाजाम्, तनूभृतां शर्मोदयाय हिमं हेमन्तकालजशैत्यम्, प्रयच्छति ददाति, कालचक्रपरिभ्रामणेन आनयतीत्यर्थः । इति इत्थम्, परहिताय अन्येषामुपकाराय, मिलन्ती युज्यमाना, कृत्यावृत्तिः व्यापाराभ्यासः यस्य सः तादृशः, सः प्रसिद्धः, अयं परिदृश्यमानः, भानुः भगवान् सूर्यः, उदञ्चति उदेति । क्रियासमुच्चयोऽलङ्कारः ॥ ४८ ॥

---

1. 'खरकराश्याना—' इति पाठान्तरम् ।

जो ( सूर्य ) हिमपीडित शरीरधारियोंके सुखके लिए ( वसन्त तथा ग्रीष्म ऋतुके ) घामको, इसके बाद ( वसन्त तथा ग्रीष्म ऋतुको ) तीक्ष्ण किरणोंसे सूखे हुए मुखवालों अर्थात् सन्तप्त शरीरधारियोंके सुखके लिए ( वर्षा ऋतुके ) जलको, ( फिर वर्षा ऋतुके ) जलके भयसे युक्त शरीरधारियोंके सुखके लिए ( शरद् ऋतुकी ) उष्णताको, ( शरद् ऋतुकी ) उष्णतासे युक्त शरीरधारियोंके सुखके लिए ( हेमन्त ऋतुकी ) ठण्डकको देता है, इस प्रकार परोपकार करनेमें सर्वदा बार-बार कार्य करनेवाला यह ( सुप्रसिद्ध ) सूर्य उदित हो रहा है ॥ ४८ ॥

इह न कतर[1]श्चित्रं धत्ते तमिस्रततीर्दिशा-
मपि चतसृणामुत्सङ्गेषु श्रिता धयतां क्षणात् ।
[2]तरुशरणतामेत्य च्छायामयं निवसत्तमः
शमयितुमभूदानैश्वर्यं यदर्यमरोचिषाम् ॥ ४९ ॥

इहेति । चतसृणां चतुःसङ्ख्यकानामपि । 'न तिसृचतसृ' इति निषेधान्नामि दीर्घो न । दिशां पूर्वादीनाम्, उत्सङ्गेषु क्रोडेषु, तत्तत्प्रदेशेष्वित्यर्थः । श्रिताः स्थिताः, तमिस्रस्य तिमिरस्य, ततीः समूहान्, क्षणात् अल्पेनैव समयेन, धयतां पिबताम्, दूरीकुर्वतामित्यर्थः । धेटो लटः शत्रादेशः । आर्यमरोचिषां सूर्यतेजसाम्, तरवः वृक्षा एव, शरणानि त्रातारः यस्य तद्भावं तत्ताम्, एत्य प्राप्य, निवसत् वर्त्तमानम्, छायामयम् अनातपरूपम्, तमः अन्धकारम्, शमयितुं संहर्तुम्, यत् अनीश्वरस्य भावम् आनैश्वर्यम् असामर्थ्यम् । 'नञः शुचीश्वर—'इत्यादिनोभयपदवृद्धिः । अभूत् जातम्, इह अस्मिन् आनैश्वर्यविषये, कतरः को नाम जनः, चित्रम् आश्चर्यम्, न धत्ते ? चेतसि न आवहति ? अपि तु सर्व एव धत्ते इत्यर्थः । संहतिविनाशसमर्थस्य अल्पविनाशकताया अकिञ्चित्करत्वादिति भावः । तमोराशिविघातिनो देवस्याल्पतमोविषये सामर्थ्यविघातकतायाः विरोधात् छायामयत्वेन तत्परिहाराच्च विरोधाभासोऽलङ्कारः ॥ ४९ ॥

चारों दिशाओंके क्रोड ( प्रदेशों ) में स्थित अन्धकार-समूहको क्षणमात्रमें पीते ( नष्ट ) करते हुए सूर्य-तेजों ( किरणों ) का वृक्षोंके ( पाठा०—शरीरके या सूक्ष्मतारूप ) शरणको प्राप्तकर रहते हुए छायारूप अन्धकारको नष्ट करनेके लिए जो असामर्थ्य हुआ, इस विषयमें कौन व्यक्ति आश्चर्यको नहीं प्राप्त होता अर्थात् चारों दिशाओंमें व्याप्त अन्धकार-समूहको क्षणमात्रमें नष्ट करनेवाले सूर्य-तेजका वृक्षोंकी छायारूप थोड़े-से अन्धकारको नष्ट करनेमें असामर्थ्य होना सबके लिए आश्चर्यजनक है [ वृक्ष तथा शरीरकी छायाके आश्रित अन्धकारके अतिरिक्त सम्पूर्ण अन्धकारको सूर्यने दूर कर दिया ] ॥ ४९ ॥

---

१. 'कतमश्चित्रम्' इति 'प्रकाश' सम्मतं पाठान्तरम् । २. 'तनु-'इति पाठान्तरम् ।

जगति तिमिरं मूर्च्छामब्जव्रजेऽपि चिकित्सतः
पितुरिव निजादस्मादस्त्रावधीत्य भिषज्यतः ? ।
अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदयमदयः कह्लाराणामुदेत्यपमृत्यवे ? ॥ ५० ॥

जगतीति । दस्त्रौ अश्विनौ, जगति लोके, तिमिरं तमो नेत्ररोगञ्च । 'तिमिरं ध्वान्ते नेत्रामयान्तरे' इति विश्वः । तथा अब्जव्रजेऽपि पद्मषण्डेऽपि, मूर्च्छां निमीलनं रोगविशेषञ्च, चिकित्सतः प्रतिकुर्वाणात् । कितः सनन्ताल्लटः शत्रादेशः, 'गुप्तिज्किद्भ्यः सन्' इति निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते । निजात् स्वात्, पितुः जनकात्, अस्मात् परिदृश्यमानात्, सूर्यादिति शेषः । अधीत्य पठित्वा इव, आयुर्वेदमिति शेषः । भिषज्यतः स्वर्गे चिकित्सतः, किम् ? इति शेषः, इत्युत्प्रेक्षा । अन्यथा कुत्र तयोः तादृशी शिक्षा जाता ? इति भावः । कण्ड्वादौ भिषजेति पाठात् यगन्ताल्लटि तल्, 'चिकित्सति भिषज्यति' इति भट्टमल्लः । अपि च किञ्च, असौ सूर्यः यत् यतः, शमनस्य यमस्य, तातः जनकः, ततः तस्मात्, इवेति शेषः, अयं भानुः, अदयः निष्करुणः सन्, कह्लाराणां कैरवाणाम्, अपमृत्यवे अकालमरणाय, निमीलनरूपायेति भावः । उदेति उत्तिष्ठति, सा अनौचिती किम् ? अन्यायं किम् ? 'कारणगुणाः कार्यगुणमारभन्ते' इति न्यायात् नित्यमेव प्राणिसंहारकस्य तनयस्य पितुरपि तथैव गुणवत्त्वस्य युक्तत्वात् नैवानौचित्यम्, वरमुचितमेवेति निष्कर्षः । उत्प्रेक्षा । दस्रयोः पितृवत् सर्वोपकारित्वमुचितं, यमपितुस्तु रवेः कह्लारमारकत्वं न अनुचितम् इति भावः ॥ ५० ॥

संसारमें तिमिर ( अन्धकार, पक्षा०—'तिमिर' नामक नेत्ररोग ) की तथा अब्ज-समूह ( पक्षा०—लोकसमूह ) में मूर्च्छा ( निमीलन—विकासाभाव, पक्षा०—'मूर्च्छा' नामक रोग ) की चिकित्सा ( नाश, औषधोपचार अर्थात् इलाज ) करते हुए अश्विनीकुमार अपने इस ( प्रत्यक्ष दृश्यमान ) पिता ( सूर्य ) से ( आयुर्वेदको ) मानो पढ़कर चिकित्सा करते हैं । तथा जिस कारण यह सूर्य सर्वनाशक यमराजका पिता है, उस कारणसे निर्दय यह सूर्य कह्लारों ( कैरवों—रात्रिमें विकसित होनेवाले कुमुदों ) की अपमृत्यु ( निमीलन, पक्षा०—अकालमरण ) के लिए उदय प्राप्त करता ( पक्षा०—उठता ) है, यह अनुचित है क्या ? अर्थात् निर्दय यमके पिता निर्दयतम सूर्यको कुमुदोंकी अपमृत्युके लिए उदय प्राप्त करना उचित ही है । [ जिस प्रकार कोई व्यक्ति चतुर एवं अनुभवी वैद्यसे आयुर्वेद पढ़कर चिकित्सा करता है तो वह लोकमान्य राजवैद्य होता है, उसी प्रकार अश्विनीकुमारोंने उक्त गुणयुक्त अपने पिता सूर्यसे आयुर्वेदको पढ़कर स्वर्गाधीश इन्द्रके राजवैद्य हो गये हैं और जिस कारण निर्दय यह सूर्य कुमुदोंकी अपमृत्युको करता है उस कारण पता चलता है कि यमराजने भी अश्विनीकुमारोंके समान ही अपने पिता सूर्यसे आयुर्वेदको पढ़कर सद

लोगोंकी अकालमृत्यु करता है; क्योंकि कारणगुण कार्यगुणको आरम्भ करनेवाले होते हैं। अथवा—लोकोपकारक पिताके समान अश्विनीकुमारोंका सर्वोपकारी होना उचित ही है; एवं निर्दय यमके पिता निर्दयतम सूर्यका कुमुदविनाशक होना भी अनुचित नहीं है, अपितु उचित ही है। उदीयमान सूर्यने अन्धकारको दूर कर दिया, कमल विकसित हो गये और कुमुद निमीलित ( सङ्कुचित ) हो गये ]॥ ५० ॥

उडुपरिवृढः पत्या मुक्तां सतीं यदपीडय-
द्यदपि बिसिनीं भानोर्जायां जहास कुमुद्वती।
तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया
प्रसरति नवार्के कर्कन्धूकणारुणरोचिषि[1] ॥ ५१ ॥

उडुविति। उडुपरिवृढः तारापतिः चन्द्रः, पत्या भर्त्रा भानुना, मुक्तां त्यक्ताम्, दिनान्ते अस्तमितत्वादिति भावः। सतीं साध्वीम्, बिसिनीं पद्मिनीम्, यत् यतः, अपीडयत् पीडितवान्, रात्रौ सङ्कोचनेन इति भावः। तथा कुमुद्वती कुमुदिनी अपि। 'कुमुदनडवेतसेभ्यो ड्मतुप्'। भानोः सूर्यस्य, जायां भार्याम्, बिसिनीं पद्मिनीम्, यत् यस्मात्, जहास हसितवती, इवेति शेषः। निशायां स्वविकाशेन इति भावः। अतः अस्मादेव कारणात्, कर्कन्धूः पक्वबदरीफलमित्यर्थः। 'अन्दूदृन्भू-' इत्यादिना कूप्रत्ययान्तनिपातः। तत्कणावत् तच्चूर्णं इव, अरुणरोचिषि लोहितकान्तौ, प्रभातकालिकत्वात् क्रोधाच्चेति भावः। नवार्के बालसूर्ये, प्रसरति आकाशं व्याप्नुवाने सति, तयोः चन्द्रकुमुद्वत्योः, उभयं द्वन्द्वम्, निजशङ्कया स्वकृतपद्मिनीलाञ्छनाभयेन, सङ्कोचितं निस्तेजस्त्वं गतम्, निष्प्रभीभूतमिति यावत्। निमीलितञ्च। शङ्के इति मन्ये, अहमिति शेषः। इत्युत्प्रेक्षा। सर्वो हि स्वदुष्टव्यवहारेणात्मानं कलुषयतीति भावः ॥ ५१ ॥

इस ( असङ्ग होते हुए ) नक्षत्रपति अर्थात् चन्द्रने पति ( पक्षा०—सूर्य ) से ( सायङ्काल होनेके कारण ) छोड़ी गयी सूर्यकी पत्नी कमलिनीको पीडित ( किरण-स्पर्शसे सङ्कुचित, पक्षा०—करस्पर्शसे दूषित ) किया और ( स्वयं विकसित होकर ) कुमुदिनीने जिस कारण ( उस सङ्कुचित कमलिनीको ) हँसा; इस कारण वे दोनों (चन्द्र तथा कुमुदिनी) अपने अपराधकी शङ्कासे वेरके ( फलके ) चूर्ण ( पाठा०—वेरके फल ) के समान ( प्रातःकाल होनेसे, पक्षा०—क्रोधके कारण ) अरुणवर्ण नये सूर्यके तीव्रगतिसे आते ( पक्षा०—उदित होते ) रहनेपर सङ्कुचित हो गये हैं ऐसी शङ्का करता हूं। [ जिस प्रकार किसी पतिसे विरहित पत्नीको दूसरा कोई पुरुष पीडित करता तथा उसे पीडित करते हुए देखकर उस पत्नीको उस दूसरे पुरुषकी स्त्री उपहास करती है और उस पीडित स्त्रीके पतिको क्रोधसे लाल होकर शीघ्रगतिसे आते हुए देखकर अपराधी दोनों स्त्री-पुरुष अपने किये

---

१. 'फलारुण' इति पाठान्तरम्। 'कर्कन्धूकणेति पाठश्चिन्त्यः' इति 'प्रकाश' कारः।

अपराधके भयसे सङ्कुचित हो जाते हैं, उसी प्रकार सायंकालमें पतित्यक्त सूर्यपत्नी कमलिनीको पीडित करनेवाले चन्द्र तथा उपहास करनेवाली कुमुदिनीका प्रातःकाल होनेसे मानो क्रोधारुण सूर्यको आते हुए देखकर सङ्कुचित होना उचित ही है। अथ च—अपने दूषित व्यवहारसे सभी अपनेको कलुषित कर देते हैं। सूर्योदय हो गया, कमलिनी विकसित हो गयी तथा चन्द्रमा निष्प्रभ होकर अस्त हो रहा है और कुमुदिनी सङ्कुचित हो गयी ] ॥ ५१ ॥

श्रुतिमयतरोर्[1]भानोर्जानेऽवनेरधराध्वना[2]
विहरणकृतः शाखाः साक्षाच्छतानि दश त्विषाम् ।
निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्वराः
पृथगहिपतिः पश्यत्यस्याक्रमेण च भास्वराः ॥ ५२ ॥

श्रुतीति । अवनेः भूमेः, अधराध्वना अधोमार्गेण, पातालवर्त्मना इत्यर्थः । एतच्च अनूद्ध्र्वस्थानमात्रोपलक्षणम् । 'अधरस्तु पुमान् ओष्ठे हीनेऽनूद्ध्र्वे तु वाच्यवत्' इति मेदिनी । विहरणकृतः विहारकृतः, सञ्चरतः इत्यर्थः, आविर्भवत इत्यर्थश्च । श्रुतिमयतरोः वेदात्मकवृक्षस्य, 'श्रुतिमयतनोः' इति पाठे—श्रुतिमयी पूर्वोक्तश्रुत्यनुसारेण वेदात्मिका, तनुः शरीरं यस्य तादृशस्य इत्यर्थः । अस्य उदयं गच्छतः, भानोः सूर्यस्य, त्विषां रश्मीनाम् दशशतानि सहस्रम्, सहस्ररश्मिरूपेण परिणता इत्यर्थः । स्वरैः उदात्तादिभिः सह वर्त्तन्ते इति सहस्वराः सस्वराः । 'वोपसर्जनस्य' इति सहशब्दस्य विकल्पात् सभावाभावः । पृथक् असाङ्कर्येण, भास्वराः दीप्तिशीलाः । 'स्थेशभास–' इत्यादिना वरच् । शाखाः वेदभागान् वृक्षावयवांश्च । 'शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः' इति मेदिनी । अहिपतिः शेषः, निशि निशि प्रतिनिशम् । वीप्सायां द्विर्भावः । तत्र तदा सूर्यसञ्चारेण निशाभावात् मर्त्यलोकापेक्षया निशीति वे । सहस्राभ्यां द्विसहस्रसङ्ख्याभिः, दृग्भिः नेत्रैः, शेषनागस्य सहस्रफणत्वात् प्रतिफणञ्च नेत्रद्वयसद्भावात् नेत्राणां द्विसहस्रत्वं बोध्यम् । अक्रमेण यौगपद्येन, साक्षात् प्रत्यक्षम्, शृणोति आकर्णयति, पश्यति अवलोकयति च, शेषस्य चक्षुःश्रवस्त्वात् शाखानां शब्दात्मकत्वेन श्रावणत्वोपपत्तेः रश्मिपरिणामेन चाक्षुषत्वाच्च दर्शनोपपत्तेरिति भावः, जाने इति मन्ये इत्युत्प्रेक्षा रूपकसङ्कीर्णा । एकेन दृक्सहस्रेण पश्यतीति विश्वेश्वरभट्टारकव्याख्यानं चिन्त्यम्, दृशां प्रत्येकमुभयशक्तियुक्तानां शक्तिप्रविभागायोगात्, तस्मात् ग्राहकस्योभयशक्तिमत्त्वात् ग्राह्यस्य च तेजःशब्दोभयात्मकत्वात् सर्वाभिरेव दृग्भिः सर्वाश्च शाखा युगपत् पश्यति शृणोति चेति रमणीयम् ॥ ५२ ॥

---

१. 'तमोः' इति पाठान्तरम् । २. 'द्ध्वनावलिसध्मना' इति पाठान्तरम् ।

पृथ्वीके अधोमार्ग ( पाताल-मार्ग ) से सञ्चार ( अभिभव ) करते हुए वेदरूप वृक्ष शरीर ) वाले सूर्यकी एक सहस्र सस्वर ( कठ, कण्व आदि ) शाखाओं ( किरणों ) को शेषनाग प्रत्येक रात्रिमें ( प्रत्येक फणासे दो-दो नेत्र होनेके कारण सहस्र फणाओंमें स्थित ) दो सहस्र नेत्रोंसे एक साथ सुनता तथा देखता है। [ सूर्य वेदरूपीवृक्ष हैं, उस वेदरूपी वृक्षमें कठ-कण्व आदि एक सहस्र शाखाएँ ( पक्षा०—किरणें ) ( वृक्षमें सहस्रों शाखाओं अर्थात् डालियोंका होना उचित ही है। अथवा—सूर्यका शरीर वेदरूप है, उनकी किरणें उन वेदकी शाखाएँ है )। चक्षुःश्रवा शेषकी सहस्र फणाओंमें ( प्रति फणामें दो-दो नेत्र होनेसे ) दो सहस्र नेत्र है, अत एव जब रात्रिमें सूर्य पृथ्वीके अधोभाग ( पाताल ) में चले जाते हैं, तब उनकी वेदात्मक सूर्यकी शाखाओंके स्वरोंको शब्दरूप और किरणोंको तेजोरूप होनेसे दो सहस्र नेत्रवाला शेष एक साथ ही एक सहस्र नेत्रोंसे शब्दरूप वेदात्मक सूर्यकी उदात्तादि स्वरसहित सहस्र शाखाओंको सुनता तथा एक सहस्र नेत्रोंसे तेजोरूप सूर्यकी सहस्र किरणोंको देखता है, अत एव शेषके दो सहस्र नेत्रोंका होना सर्वथा चरितार्थ होता है। यही व्याख्या 'प्रकाश'कारने की है। विश्वेश्वर भट्टारकके इसी प्रकारकी व्याख्याको 'शेषके चक्षुःश्रवा ( नेत्रोंसे सुननेवाला ) होने दो सहस्र दृष्टियोंमें-से प्रत्येक दृष्टिमें दर्शन-श्रवण दोनोंकी शक्ति होनेसे ग्राह्य शब्द तथा तेज ( शाखा तथा किरण ) का दोनों सहस्र नेत्रोंसे सुनना तथा देखना एक साथ ही उचित है' ऐसी व्याख्या करते हुए 'जीवातु' कारने चिन्त्य बतलाया है, किन्तु उक्त अर्थके स्वीकार करनेमें दो सहस्र दृष्टियोंका होना सार्थक नहीं होनेसे उक्त व्याख्यान ही चिन्त्य प्रतीत होता है ]॥ ५२॥

बहु नखरता येषामग्रे खलु प्रतिभासते
कमलसुहृदस्तेऽमी भानोः प्रवालरुचः कराः।
उचितमुचितं जालेष्वन्तः प्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताऽङ्गुलिर्वल्गता[1] ॥ ५३ ॥

बह्विति। येषां कराणाम्, अग्रे प्रत्यग्रावस्थायाम्, प्रभाते इत्यर्थः। बह्वी प्रभूता, अत्यर्था इत्यर्थः। न-खरता अतीक्ष्णता, अन्यत्र-अग्रे अग्रभागे, बहुनखरता बहुनखत्वम्। 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः। खलु निश्चितम्, प्रतिभासते प्रतीयते कमलानां पद्मानाम्, सुहृदः बन्धवः, विकाशकत्वादिति भावः। सुहृत्त्वेनैव न-खरत बोद्धव्या; अन्यत्र—सौन्दर्यमार्दवाभ्यां तत्सदृशाः। प्रवालरुचः विद्रुमभासः, उभयत्रापि समानम्; भानोः सूर्यस्य, ते तादृशाः, अमी परिदृश्यमानाः, कराः अंशवः हस्ताश्च, प्रसर्पन्तीति शेषः। अत एव जालेषु गवाक्षविवरेषु, अन्तः प्रवेशिभिः अभ्यन्तरप्रविष्टैः, आयतैः दीर्घैः, एषां कराणाम्, कियदवयवैः किञ्चिदंशैः। कर्तृभिः। उचि-

---

१. 'लङ्गिमा' इति पाठं व्याख्याय 'अङ्गुलिचारुता' इति पाठः स्पष्टार्थः इति 'प्रकाश' कार आह।

तमुचितम् अत्यन्तोचितं यथा स्यात् तथा । आतिशय्ये द्विरुक्तिः । अङ्गुलीनां करशाखानाम् । 'अङ्गुल्यः करशाखाः स्युः' इत्यमरः । वल्गुता चारुता, आलिङ्गिता प्राप्ता इति श्लेषसङ्कीर्णनिदर्शनाभेदः[1] । कराणां कररूपत्वात् तदवयवानाम् अङ्गुलिरूपत्वस्य सर्वथैव सम्भाव्यत्वादिति भावः ॥ ५३ ॥

जिन ( किरणों, पक्षा०—हाथों ) की अतिशय अतीक्ष्णता पूर्वाह्नमें प्रकाशित होती है, ( अथवा—जिनकी अधिक तीक्ष्णता पूर्वाह्नमें नहीं प्रकाशित होती है, पक्षा०—जिनके आगेमें बहुत नखोंसे युक्त रहना प्रकाशित होता है ); ( विकसित करनेसे ) कमलोंके बान्धव सूर्यकी वे किरणें हैं ( अथवा—सूर्यके कमलतुल्य ( रक्तवर्ण ) एवं पल्लव ( या—मूंगे ) के समान ( या—अतिशय बाल=अभिनव होनेसे अरुण ) कान्तिवाले सूर्यकी ये किरणें हैं । अथवा—अतिशय बाल=अभिनव रुचिवाले सूर्यके कमलतुल्य अरुण ये किरणें हैं, अथवा—( प्रातःकालीन होनेसे ) विद्रुम ( या—नवपल्लव ) की समानकान्तिवाले सूर्यकी कमलतुल्य अरुण ये किरणे हैं )। खिड़कियों ( के छिद्रों ) से भीतर प्रवेश करनेवाले इन किरणों ( पक्षा०—हाथों ) के कुछ अवयवोंको अङ्गुलियोंकी शोभा प्राप्त करना अत्यन्त उचित है अर्थात् गवाक्षोंके छिद्रोंसे भीतर प्रविष्ट होती हुई ये सूर्य-किरणें जो लम्बी होनेके कारण जो अङ्गुलियोंके समान शोभती हैं, यह सर्वथा उचित ही है ॥ ५३ ॥

नय नयनयोर्द्राक् पेयत्वं[2] प्रविष्टवतीरमू
भवनवलभीजालान्नाला इवार्ककराङ्गुलीः ।
भ्रमदणुगणक्रान्ता भान्ति भ्रमन्त्य इवाशु याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ? ॥ ५४ ॥

नयेति । भवनवलभीनां भवत्प्रासादोपरि विद्यमानानां गृहविशेषाणाम् । 'शुद्धान्ते वलभी चन्द्रशाले सौधोदूर्ध्ववेश्मनि' इति रभसः । जालात् गवाक्षविवरात्, गवाक्षविवरमाश्रित्येत्यर्थः । प्रविष्टवतीः अभ्यन्तरं गतवतीः, नालाः कमलदण्डान् इव स्थिताः, कमलकाण्डायिताः इत्यर्थः । अमूः पुरोवर्त्तिनीः, अर्कस्य भानोः, कराः किरणा एव करा हस्ताः, श्लिष्टरूपकम् । 'बलिहस्तांशवः कराः' इत्यमरः । तेषाम् अङ्गुलीः करशाखाः, अङ्गुलीव प्रतीयमानानवयवानित्यर्थः । द्राक् झटिति, नयनयोः नेत्रयोः, पेयत्वम् आस्वाद्यत्वम्, विषयत्वमित्यर्थः । नय प्रापय, सादरं पश्य इत्यर्थः । अथ आसां दर्शनीयतामुत्प्रेक्षया दर्शयति–याः कराङ्गुलयः, भ्रमद्भिः घूर्णमानैः, अणुगणैः त्रसरेणुजालैः, क्रान्ताः वेष्टिताः सत्यः, आशु शीघ्रम्, भ्रमन्त्यः घूर्णमाना इव, भान्ति प्रकाशन्ते इत्युत्प्रेक्षा । भ्रमणे कारणमुत्प्रेक्षते–पुनरपि पूर्ववत् अधुनाऽपि, दिवः स्वर्गस्य, वर्द्धकिना तक्ष्णा, देवशिल्पिना विश्वकर्मणा इत्यर्थः । 'तक्षा तु वर्द्धकि-

---

१. 'विशेषणसङ्कीर्णो.....इति जीवातुः' इति म० म० शिवदत्तशर्माणः ।

२. 'राधेयत्वम्' इति पाठान्तरम् ।

स्वष्टा' इत्यमरः। कुन्दे शाणयन्त्रे। 'शाणः कुन्दश्च यन्त्रकम्' इति यादवः। धृता वा तक्षणाय स्थापिताः इव, न किम्? कराङ्गुल्य इति शेषः। अपि तु धृता एव इत्यर्थः। पुनः पुनः घर्षणेन तदुत्थैः सूक्ष्मसूक्ष्मांशैः घूर्णमानैरिव दृश्यते, अतः भ्रमणं युज्यते इति भावः। पुरा किल स्वर्गे सन्ध्यादेव्या सूर्यभार्यया दुःसहस्पर्शं सवितारमालोक्य प्रार्थितः विश्वकर्मा तं शाणयन्त्रोल्लेखनेन सन्तक्ष्य सन्तक्ष्य सुखस्पर्शं चकारेति पौराणिकी कथाऽत्रानुसन्धेया ॥ ५४ ॥

(हे राजन्!) आप महलोंकी वलभियोंके गवाक्ष-विवरों (जँगलोंके विलों) से प्रविष्ट हुई कमलनालतुल्य इन सूर्यकिरणरूपी (अथवा—सूर्यके करों=हाथोंकी) अङ्गुलियोंको शीघ्र नेत्रका पाथेय बनाइये अर्थात् आदरपूर्वक देखिये, घूमते हुए त्रसरेणु-समूहोंसे वेष्टित जिन्हें घूमती-सी (लोग देखते हैं, अत एव ये) स्वर्गके बढ़ई अर्थात् विश्वकर्माके द्वारा फिर शाणपर रखी गयी हैं क्या? (ऐसी शोभती हैं। अथवा—घूमते हुए त्रसरेणु-समूहोंसे वेष्टित (अत एव) विश्वकर्मासे शाणपर फिर रखी हुई-सी नहीं घूमती है क्या? अर्थात् शाणपर रखी हुई-सी ही वे घूम रही हैं) ॥ ५४ ॥

पौराणिक कथा—विश्वकर्माकी पुत्री छायाने सूर्यके साथ विवाह होनेपर उनके तीक्ष्णतम तेजको नहीं सह सकने पर अपने पितासे उसे कम करनेके लिए प्रार्थना की। तदनन्तर विश्वकर्माने सूर्यको शाणपर रखकर घिसते-घिसते उन्हें छोटाकर उनके तेजको छायाके द्वारा सहन करने योग्य बनाया।

दिनमिव दिवाकीर्त्तिस्तीक्ष्णैः[1] क्षुरैः सवितुः करै-
स्तिमिरकबरीलूनीं कृत्वा निशां निरदीधरत्।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभि-
र्ध्रुवमधवलं तत्तच्छायच्छलादवनीतलम् ॥ ५५ ॥

दिनमिति। दिनं दिवसः। कर्तृ। रात्रौ क्षौरकर्मनिषेधात् दिवा कीर्त्तिर्यस्य स दिवाकीर्त्तिर्नापितः इव, 'क्षुरिमुण्डिदिवाकीर्त्तिनापितान्तावसायिनः' इत्यमरः। तीक्ष्णैः निशितैः प्रखरैश्च, सवितुः सूर्यस्य, करैः किरणरूपैः, क्षुरैः वापनशस्त्रैः। 'क्षुरोऽस्य वापनं शस्त्रम्' इति यादवः। निशां रात्रिम्, व्यभिचारिणीं पत्नीमिवेति भावः। तिमिरम् अन्धकारः, कवरी केशपाशाः इव, सा लूना छिन्ना यस्याः तां मुण्डितकेशाम्। 'जानपद-' इत्यादिना कवरात् ङीप्, 'जातिकालसुखादिभ्यः परा निष्ठा

---

१. 'तीक्ष्णात्क्षुरात्सवितुः करात्' इति 'जीवातु' सम्मतः पाठ इति म० म० शिवदत्तशर्माणः।

२. 'निशां शर्वरीं तिमिरकवरीं ध्वान्तलक्षणां वेणीं लूनां कृत्वा छिन्नमूलां विधाय। 'तिमिरकबरीलूनाम्' इति पाठस्तु क्तान्तत्वेन पूर्वनिपातप्राप्तेरुपेक्ष्य, इति सुखावबोधा। 'जातिकालसुखादिभ्यः परवचनम्' इति लूनेति निष्ठायाः (क्तस्य)

वाच्या' इति लूनेति निष्ठायाः परनिपातः, 'ल्वादिभ्यश्च' इति निष्ठानत्वं, 'बहुव्रीहे-श्चान्तोदात्तात्' इति ङीष्। कृत्वा विधाय, निरदीधरत् निष्कासयामास, इवेति शेषः, इत्युत्प्रेक्षा। धरतेर्णौ चङ्युपधाया ह्रस्वः। ततः निर्द्धारणानन्तरम्, तेषां तेषां गृहा-दीनाम्, छाया अनातपः तत्तच्छायम्। 'विभाषा सेना-' इत्यादिना 'छाया बाहुल्ये' इत्यनेन वा नपुंसकत्वम्। तस्य छलात् व्याजादित्यपह्नवः, परितः समन्तात्, पत-यालुभिः पतनशीलैः। 'स्पृहिगृहि—' इत्यादिना आलुच्। केशस्तोमैः चिकुररा-शिभिः, अवनीतलं भूतलम्, अधवलम् असितम्, स्फुरति भाति, ध्रुवं निश्चितमि-त्युत्प्रेक्षायाम् ॥ ५५ ॥

नाईके समान दिनने तीक्ष्ण ( प्रखर, पक्षा०—तेज ) सूर्य-किरणरूपी छूरेसे अन्धकार-रूपी केश-समूहको काटकर रात्रि ( रूपिणी व्यभिचारिणी स्त्री ) का निश्चय किया अर्थात् छूरेसे मुण्डन करनेके बाद कहीं पर कोई केश बाकी तो नहीं रह गया है ऐसा निर्धारण किया और उसे व्यभिचारिणी मानकर बहिष्कृत कर दिया। तदनन्तर उन-उन गृह आदिके छाया-समूहके छद्मसे सर्व तरफ गिरनेवाले केश-समूहोंके समान कृष्णवर्ण पृथ्वी-तल स्फुरित ( दृष्टिगोचर ) हो रहा है। [ जिस प्रकार नाई अपनी या दूसरेकी व्यभि-चारिणी स्त्रीके बालोंको तेज छूरेसे काटकर कहीं भी बाल बाकी तो नहीं रह गये हैं ऐसा अच्छी तरह निर्धारणकर उसे देशसे बहिष्कृत कर देता है और उसके फैलते हुए काले-काले केश-समूहसे पृथ्वी काली दृष्टिगोचर होती है, उसी प्रकार दिनरूपी नाईने अन्धकार-रूपी केश-समूहको सूर्यकिरणरूप तीक्ष्ण छूरेसे काट ( नष्ट ) कर रात्रिको बहिष्कृत कर दिया है और भवनोंकी काली-काली परछाईंके कपटसे उस रात्रि-रूपिणी स्त्रीके अन्धकार-रूपी केशोंसे यह भूतल कृष्णवर्ण हो रहा है। रात्रिका अन्धकार पूर्णतः नष्ट हो गया, तीक्ष्ण सूर्य-किरणें फैल रही हैं और भवनोंकी परछाहीं भूतलपर पड़ रही है ] ॥ ५५ ॥

ब्रूमः शङ्खं तव नल ! यशः श्रेयसे सृष्टशब्दं
यत्सोदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजेन्द्रः।
अद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य
म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः॥ ५६ ॥

ब्रूम इति। नल ! हे तदाख्यमहाराज ! तव ते, यशः कीर्त्तिम्, श्रेयसे मङ्गलाय, सृष्टशब्दं सृष्टः निर्मितः, कल्पितः इत्यर्थः। शब्दो ध्वनिः यस्य तादृशं देवार्चनाशुभजातकर्मादौ विहितस्वनम्, शङ्खं कम्बुम्, शङ्खतुल्यमित्यर्थः। ब्रूमः कथयामः, वयमिति शेषः। शङ्खध्वनेः मङ्गलजनकत्वात् पुण्यश्लोकत्वेन नलयशसश्च लोकानां

---

परनिपातः। 'बहुव्रीहेश्चान्तोदात्तात्' इति ङीप्, इति 'जीवातुः' इति म० म० शिव-दत्तशर्माणः। अत्रोपरितने सुखावबोधाव्याख्याने 'तिमिरकबरीं लूनां······' इति पाठः प्रतिभातीति वयम्।

शुभावहत्वात् उभयोरपि समानधावल्याच्चेति भावः। यद्वा—श्रेयसे स्वर्गाय, सृष्टः शब्दः यस्य तं तादृशम्, शङ्खं कम्बुम्, यशः ब्रूमः त्वदीययशस्त्वेन वर्णयामः इत्यर्थः। यस्य यशसः, सोदर्यः समानम् उदरं यस्य सः तादृशः सहोदरः भ्राता, शङ्खचन्द्रयोरुभयोरपि एकसमुद्रजत्वादिति शौक्ल्यात् सदृश इति वा भावः। समानोदरे शयितः इत्यस्मिन्नर्थे 'सोदरात् यः' इत्यनेन यप्रत्यये विवक्षिते 'विभाषोदरे' इत्यनेन प्रागेव यप्रत्ययात् समानशब्दस्य सभावः। सदृशत्वाभिमानी इति फलितार्थः। स प्रसिद्धः, द्विजेन्द्रः चन्द्रः, दिवि गगने, लिखितः चित्रितः, किरणक्षयेण निष्प्रभत्वात् निष्क्रियत्वाच्च चित्रितवदिति भावः। स्पष्टं सुव्यक्तम्, अस्ति वर्त्तते। इह अधुना प्रभातकाले, अश्रद्धाकरम् अनादरावहम्, प्रभाक्षयादेव इति भावः, यद्वा—श्रद्धाकरं प्रत्यक्षत्वेन विश्वासावहम्, अस्य चन्द्रस्य, अद्धा तत्त्वतः, सूर्यतेजसा अभिहतत्वात् यथार्थमित्यर्थः। करच्छेदम् अंशुनाशम् अपि, पश्य अवलोकय किञ्च, हारिणो हरिणात्मकः, यः कलङ्कः चिह्नविशेषः, अत्र विद्यते इति शेषः। तदपि तच्चिह्नमपि, नितराम् अत्यर्थम्, म्लानेः मलिनतायाः, स्थानम् आस्पदम्, विलुप्तप्रभत्वादिति भावः। पश्येति पूर्वेणान्वयः। अतः शीघ्रं शयनं त्यजेति भावः। अन्यच्च—श्रेयसे धर्मोपदेशरूपमङ्गलाय, सृष्टशब्दं रचितस्मृतिग्रन्थम्, शङ्खं सङ्खाख्यं मुनिम्, तव यशः यशस्तुल्यं यशस्विनमित्यर्थः। यद्वा—शङ्खम्, तव यशःश्रेयसे कीर्त्तेरुत्कर्षरूपमङ्गलायेत्यर्थः। तद्रचितविधानानुसारेण कर्मानुष्ठानात् यशोवृद्धेरिति भावः। सृष्टशब्दं ब्रूमः कथयामः। यस्य शङ्खस्य, सोदर्यः भ्राता, स प्रसिद्धः, द्विजेन्द्रः ब्राह्मणोत्तमः, लिखितः लिखिताख्यः मुनिः, दिवि स्वर्गे, स्पष्टं सर्वैर्ज्ञातत्वात् सुव्यक्तम्, अस्ति विद्यते, इति अद्धा सत्यम्। किञ्च, इह अस्मिन् शङ्खलिखितयोश्चरितविषये, श्रद्धाकरं विश्वासजनकम्, अस्य लिखितस्य, करच्छेदं हस्तच्छेदनम् अपि, चौर्यापराधेन राजाज्ञया इति भावः। पश्य अवलोकय, विवेचयेत्यर्थः। पुराणोक्तत्वादिति भावः। हारिणः ज्येष्ठस्य भ्रातुः शङ्खमुनेः आश्रमे फलापहारकस्य, लिखितस्य इति शेषः। यः कलङ्कः सहोदराश्रमे फलचौर्यरूपः अपवादः, तदपि नितराम् अत्यर्थम्, म्लानेः विषादस्य, स्थानं कारणम्, जानीहि इति शेषः। अत्र महाभारतीयशान्तिपर्वणि सुद्युम्नोपाख्यानम्—'ततः स पृथिवीपालो लिखितस्य महात्मनः। करौ प्रच्छेदयामास धृतदण्डो जगाम सः॥' इति। अत्र विशेषणविशेष्ययोरपि श्लिष्टत्वादभिधायाः प्रकृतार्थत्वात् अप्रकृतार्थध्वनिरेवेति सङ्क्षेपः। मन्दाक्रान्ता वृत्तम्॥ ५६॥

(अब शङ्ख बजानेवालके शङ्खकी ध्वनिको सुनकर वैतालिकलोग शङ्खके व्याजसे नलके यशका वर्णन करते हैं—) हे नल! मङ्गलके लिए बजाये गये शङ्खको (हमलोग) तुम्हारा यश कहते हैं (शुभ्र वर्ण तथा पुण्यश्लोक होनेके कारण मङ्गलकारक होनेसे तुम्हारा यश शङ्खके समान है ऐसा हमलोग कहते हैं। अथवा—स्वर्गके लिए बजाये गये शङ्खको हम लोग

तुम्हारा यश कहते हैं क्योंकि शङ्ख तथा चन्द्रमा दोनों समुद्रोत्पन्न एवं शुभ्रवर्ण हैं ) जिस ( शङ्ख, पक्षा०—तुम्हारे यश ) का सहोदर अर्थात् समान कान्तिवाला ( पश्चिम दिशामें दृश्यमान ) वह द्विजराज ( चन्द्र ) स्पष्टरूपसे लिखित है अर्थात् निष्प्रभ तथा निष्क्रिय होनेसे लिखित चित्रके समान स्पष्टतः दृष्टिगोचर हो रहा है। तुम इस प्रभात-काल ( या—आकाश ) में ( निष्प्रभ होनेसे ) अनादरणीय ( अथवा—प्रत्यक्षतः निष्प्रभ दृष्टिगोचर होनेसे विश्वासयोग्य ), इस ( चन्द्रमा ) के वस्तुतः किरणनाशको भी देखो अर्थात् शङ्खके समान इस चन्द्रमामें भी किरण नहीं है यह तुम देखो और हरिण-सम्बन्धी जो ( चन्द्रमाका ) कलङ्क है, वह भी अत्यन्त मलिनता ( कृष्णवर्णत्व ) का स्थान है ( शङ्खके उदरमें भी चन्द्रमाके उदर ( मध्यभाग ) के समान ही मलिनता है, यह भी तुम देखो। ( अथ च—( धर्मोपदेशरूप ) मङ्गलके लिए ( स्मृति ग्रन्थ की रचना करके शब्दको करनेवाले 'शङ्ख' नामक मुनिको हमलोग तुम्हारा यश कहते हैं ( यद्वा—तुम्हारे यशोवृद्धिरूपी मङ्गलके लिए ( पक्षा०—उक्त ग्रन्थानुसार आचरण करनेसे स्वर्गादिप्राप्तिरूप मङ्गलके लिए ) 'शङ्ख' नामक मुनिको……), जिस ( 'शङ्ख' नामक मुनि ) का सहोदर भाई ब्राह्मणश्रेष्ठ 'लिखित' नामक मुनि स्वर्गमें स्पष्टतः विद्यमान है यह सत्य है, इस ( शङ्ख तथा लिखित मुनियोंके ) आचरणके विषयमें श्रद्धायोग्य ( चोरीके अपराधमें राजाज्ञाद्वारा ) 'लिखित' मुनिके हाथ काटनेको भी देखो अर्थात् ज्येष्ठ 'शङ्ख' मुनिके आश्रममें फलकी चोरी करनेसे राजाज्ञाद्वारा 'लिखित' मुनिके हाथ काटना भी आचरणके विषयमें श्रद्धाकारक ( या—अश्रद्धाकारक ) है, यह भी तुम विचार करो। जो चोरीरूप कलङ्क ( दुरपवाद ) अतिशय म्लानि ( निन्दा ) का कारण है यह भी तुम देखो अर्थात् ज्ञानरूपी नेत्रसे देखकर समझो। अथवा—'नल पुण्यश्लोक है' इस प्रकार तुम्हारे यशके लिए हमलोग 'शङ्ख' नामक मुनिको तुम्हारा यश कहते हैं, ( उनके कलङ्कयुक्त भाईको नहीं ),…) [ 'लिखित' मुनि सहोदर भाई 'शङ्ख' मुनिके आश्रममें फलको चुरानेपर राजाज्ञासे हाथ कटवाकर दण्डित हुए' यह कथा महाभारतके शान्तिपर्वके सुद्युम्नोपाख्यानमें देखनी चाहिये ] ॥५६॥

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निविडां निष्पीडनां लम्भितः ।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छङ्खच्छित्करपत्रतामिह वहत्यस्तं गतार्द्धो विधुः ॥ ५७ ॥

तारेति । ताराः तारकाः एव, शङ्खाः कम्बवः, दिनोदयेन ताराणां शुभ्रत्वेन प्रतीयमानत्वादिति भावः । तेषां विलोपकस्य विनाशकस्य, अन्तर्द्धायकस्येत्यर्थः । छेदकस्य च, तथा जलजं पद्मं शङ्खञ्च । 'जलजं शङ्खपद्मयोः' इति विश्वः । भिन्दतः विदारयतः, प्रस्फोटयत इत्यर्थः । करभूषणनिर्माणार्थं सच्छिद्रं कुर्वतश्च, तीक्ष्णत्विषः तिग्मांशोः, तीक्ष्णास्त्रधरस्य कस्यचित् शङ्खकारस्य च, सारम्भं सप्रयत्नम् , चलता

प्रसरता, छेदनकर्मणि व्यापृतत्वात् पुरः पश्चाच्च पुनः पुनः गतागतं कुर्वता इत्यर्थश्च, करेण किरणेन हस्तेन च, निविडां प्रगाढाम्, निष्पीडनां बाधनां धारणञ्च, लम्भितः प्रापितः, अस्तम् अदर्शनम्, गतं प्राप्तम्, अर्द्धम् एकांशः यस्य सः तादृशः, विधुः चन्द्रः, इह अस्मिन् अर्द्धास्तमितसमये, छेदार्थं कर्त्तनार्थम्, तारकारूपशङ्खच्छेदन-सौकर्यसिद्धये इत्यर्थः। उपहृतम् अर्पितम्, यत् अम्बु जलम्, शङ्खच्छेदनसौकर्याय जलं दीयते शाङ्खिकैरिति व्यवहारात्, तेन सह कम्बुजं छिद्यमानात् शङ्खात् जातम्, यत् रजः करपत्रघर्षणनिपतितं चूर्णम्, तस्य यः जम्बालः कर्दमः, रजोराशौ जलनिक्षे-पेण कर्दमताया अवश्यम्भावादिति भावः। तेन पाण्डूभवत् शुभ्रीभवत्, यत् शङ्खं छिनत्तीति शङ्खच्छित् शङ्खच्छेदकम्, करपत्रं क्रकचः। 'क्रकचोऽस्त्री करपत्रम्' इत्य-मरः। तस्य भावः तत्ताम्, वहति धारयति, इवेति शेषः, इत्युत्प्रेक्षा। शङ्खच्छेदक-करपत्रस्य अर्द्धचन्द्राकारत्वात् अर्द्धास्तमितः चन्द्रः शङ्खच्छेदककरपत्रमिव दृश्यते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

( अधिक प्रातःकाल होनेसे अतिशय शुभ्रवर्ण ) तारारूपी शङ्ख ( अथवा—विशाखा नक्षत्रके शङ्खाकार मातृमण्डलरूप तारा ) को नष्ट करने ( पक्षा०—छिद्र करने, या—काटने ) वाले, कमलको विकसित करते ( पक्षा०—शङ्खको छेदते, या—काटते ) हुए तीव्र तेजवाले ( सूर्य, पक्षा०—तीक्ष्ण शस्त्रवाले शिल्पी ) के सवेग चलते हुए किरण ( पक्षा०—रगड़नेके कारण आगे-पीछे चलते हुए हाथ ) से अतिशय पीडित ( पक्षा०—दबाया गया ) आधा अस्त यह चन्द्र ( शङ्खको सरलतासे ) काटनेके लिए छोड़े गये पानीके कारण शङ्खसे उत्पन्न धूलिके पङ्कसे श्वेतवर्ण होते हुए शङ्ख-च्छेदक आरेके समान दृष्टिगोचर हो रहा है। [ ताराओंके विनाशक एवं कमलोंके विकासिक सवेग चलते हुए सूर्यकी किरणसे पीडित तथा आधा अस्त हुआ निष्प्रभ चन्द्रमा ऐसा मालूम पड़ता है कि—शङ्खको छेदने ( या—काटने ) वाला तीक्ष्णशस्त्रधारी शिल्पीके वेगपूर्वक घर्षणसे सञ्चलनशील ( विस्तृत एवं सङ्कुचित होते हुए ) हाथसे अत्यन्त पीडित आरा शङ्खको जल्दी छिदने ( या—कटने ) के लिए पानी डालनेसे काटते समय उत्पन्न शङ्खके मलिन धूलि-पङ्कसे कुछ श्वेतवर्ण हो रहा है। शङ्खको छेदने ( या—काटने ) के लिए तीक्ष्ण आरा लेना, हाथका यातायात होना, शीघ्र छेद होने ( या—कटने ) के लिए पानी छोड़नेपर शङ्खकी धूलिसे कीचड़ निकलकर आरेका कुछ श्वेत वर्ण होना प्रसिद्ध है। सूर्योदय हो गया, ताराएँ लुप्त हो गयीं, कमल विकसित हो गये, चन्द्र आधा अस्त होकर शङ्ख काटते हुए शङ्खकर्दमलिप्त आरेके समान पाण्डुवर्ण एवं वक्राकार हो रहा है; अत एव प्रभात जानकर आप शीघ्र उठिये ] ॥ ५७ ॥

( [1]जलजभिदुरीभावं प्रेप्सुः करेण निपीडय-
त्यशिशिरकरस्ताराशङ्खप्रपञ्चविलोपकृत् ।

---

१. अयं श्लोकः 'प्रकाश' व्याख्यासहित एवात्र मया स्थापितः।

रजनिरमणस्यास्तक्षोणीधरार्द्धपिधावशा-
द्धतमधुना बिम्बं कम्बुच्छिदः करपत्त्रताम् ॥ १ ॥ )

जलजेति । जलजं कमलं शङ्खश्च । करेणांशुना पाणिना च । अयं श्लोकः पूर्वेण ( १९।५७ ) समानार्थकत्वात्क्षेपकः ॥ १ ॥

कमल ( पक्षा०—शङ्ख ) को विकसित ( पक्षा०—खण्डित ) करनेका इच्छुक तथा ताराऊपी शङ्खका नाश ( पक्षा०—खण्डित ) करनेवाली सूर्यकी किरण अस्ताचल में आधे छिपनेसे शङ्ख काटनेवाले आरेके समान चन्द्र-बिम्बको पीडित कर रहा है ॥ १ ॥

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्
दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कवितृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

यदिति । यत् यस्मात्, अंशुमान् अर्कः, पाथोजविमुद्रणप्रकरणे पद्मविकासकरण-प्रस्तावे, दृष्टीः दृशः, जननेत्राणि इति यावत् । निर्निद्रयति निः नास्ति, निद्रा स्वापः, निद्राकालिकनिमीलनमित्यर्थः । यासु तास्तादृशीः करोति उन्मीलयतीत्यर्थः । तथा यत् यस्माच्च, हरिः विष्णुः, जलरुहां कमलानाम्, शिवपूजाऽर्थमानीतानामिति भावः । सहस्रं सहस्रसङ्ख्याम्, अक्ष्णा स्वनेत्रेण, पूरयति स्म पूर्णं चकार, एकोनत्वा-दिति भावः । यदुक्तं शिवमहिम्नः स्तोत्रे—'हरिस्ते साहस्रं कमलबलिमाधाय पदयोः यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम्' इति । तत् तस्मात्, सरसीरुहामपि कम-लानाञ्च, दृशामपि नयनानाञ्च, वास्तवं पारमार्थिकम्, साजात्यं समानजातीयत्वम्, अस्ति विद्यते । यतः हरिसूर्याभ्यां परमाप्ताभ्यां तत्तत् कार्यमकारि अतः पद्मचक्षुषोः साजात्ये सन्देह एव नास्ति, अन्यथा पद्मोल्लासप्रकरणबाधाद्विजातीयेन त्रपुषा कनक-सङ्ख्यापूरणवत् चक्षुषा कमलसङ्ख्यापूरणायोगाच्चेति भावः । कवितृभिः कविभिः, यत् साजात्यम्, मूलं हेतुः यस्याः सा तादृशी, चक्षुषः नयनस्य, पद्मैः कमलैः सह, उपमा औपम्यम्, आद्रियतेतरां सत्क्रियतेतराम्, अत्यर्थमाद्रियते इत्यर्थः । 'किमेत्ति-ङव्ययात्–' इति आमु-प्रत्ययः । वैजात्येन सद्वस्तुनोरपि सुवर्णरजतयोरुपमाऽयोगा-दिति भावः । सर्वे एव लोकाः अजागरुः, अतः त्वमपि जागृहि इति वक्तुराशयः॥५८॥

सूर्य कमलोंके विकसित करनेके अवसरपर जो ( लोगोंके ) नेत्रोंको निद्रारहित ( पक्षा०—विकसित ) कर देता है तथा विष्णुने जो ( अपने एक ) नेत्रसे कमलोंके सहस्र सङ्ख्याको पूरा किया था; उससे कमलों तथा नेत्रोंकी वास्तविक समानता है; इसीसे कवि लोग नेत्रकी कमलके साथ उपमा देनेका अत्यन्त आदर करते हैं । [ यदि कमलकी नेत्रोंके

१. 'कविनृभिः' इति 'प्रकाश' सम्मतः पाठः ।

साथ वास्तविक समानता नहीं होती तो कमलोंको विकसित करते समय सूर्य नेत्रोंको विकसित ( निद्रारहित ) नहीं करते तथा विष्णु भगवान् भी सहस्र कमलोंसे शिव-पूजन करते समय एक कमलके कम हो जानेपर उसके स्थानमें अपना नेत्र समर्पणकर कमलोंकी सहस्र संख्याको पूरी नहीं करते, किन्तु दूसरा कमल लाकर ही उसे पूरी करते, इससे विदित होता है कि कमलों एवं नेत्रोंकी वास्तविक समानता है और इसी मूलकारणको लेकर कविलोग भी कमलोंकी नेत्रोंके साथमें उपमा बड़े आदरके साथ देते हैं। कमल विकसित हो गये, सभी लोग निद्रा त्यागकर उठ गये, अतः अब आप भी निद्रा त्यागकर उठें ]॥ ५८॥

अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्त्रनेत्रोदरम्।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्द्विरेफरवघोरणाघनमुपैति निद्रामुदम्॥ ५९॥

अवैमीति। यत् कुमुदम्, कर्तृ। पुरा इतः पूर्वम्, कमलाकरे पद्माकरे सरसि, कमलायाः पद्मालयायाः लक्ष्म्याः, धनसम्पत्तिरूपायाः इति यावत्। आकरे वसतिस्थाने कोषागारे च, विततानि विस्तृतानि, पत्त्राणि दलानि एव, नेत्रोदराणि नयनमध्यानि यस्य तत् तादृशं सत्, निखिलायां समग्रायाम्, यामिन्यां रजन्याम्, यामिकः प्राहरिकः, प्रहरिरूपेण जागरूक इत्यर्थः। तस्य श्रियम् इव श्रियं शोभाम्, सादृश्यमित्यर्थः। इति सादृश्याक्षेपान्निदर्शनाभेदः। श्रयति भजते स्म। 'पुरि लुङ् चास्मे' इति चकाराद्भूते लट्। तदेव उक्तरूपमेव, कुमुदं कैरवम्, पुनः इदानीम्, दिनं दिवसम्, अवाप्य प्राप्य, गर्भे अभ्यन्तरे, भ्रमतां घूर्णमानानाम्, द्विरेफाणां भ्रमराणाम्, प्रातःकाले कुमुदानां मुद्रणात् तदन्तरावद्धानामिति भावः। रवः शब्द एव, घोरणा निद्रितस्य घर्घरशब्दाधिक्यम्, नासागर्जनमिति भावः। घुर भीमार्थशब्दयोः इति तौदादिकाद्भावे ल्युट्[1]। तस्याः घनं गाढं यथा तथा, निद्रामुदं निद्रा निमीलनं स्वप्नश्च, तस्याः मुदं सुखम्, उपैति लभते, अवैमि[2] इति मन्ये, इत्युत्प्रेक्षायाम्। रात्रौ जागरितो हि दिवा निद्रातीति दृश्यते। अत्र एकस्मिन् कुमुदे अनेकयोर्निद्राजागरयोः क्रमेण प्रत्यभिधानात् 'एकस्मिन्नथवाऽनेकम्' इत्युक्तलक्षणपर्यायालङ्कारेण पूर्वोक्तनिदर्शना सङ्कीर्णा। पृथ्वीवृत्तं—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्॥ ५९॥

कमलाकर ( कमल-समूह, या-कमलोंके आकर तडाग; पक्षा०—कमला = सम्पत्तिके

१. 'भीमशब्दार्थाद्घुरेर्णिजन्तात्' ण्यासश्रन्थ-' इति युच् इति 'प्रकाश' कारः।
२. 'अवैमि-इत्युत्प्रेक्षायाम्। एकस्मिन्'·····'सङ्कीर्णा' इति 'जीवातु'रिति म० म० शि० द० शर्माणः।

कोष ) में विकसित पद्मरूपी नेत्रमध्यवाला ( पक्षा०—पद्ममध्यके समान विकसित= निद्रारहित होनेसे विस्फारित नेत्रमध्यवाला ) जो कुमुद पहले ( रात्रिमें ) सम्पूर्ण रात्रिमें पहरेदारकी शोभा ( समानता ) को प्राप्त किया था, वही कुमुद इस समय दिनको प्राप्तकर अर्थात् दिन होनेपर ( प्रातःकालमें कुमुदके बन्द होनेसे ) भीतरमें घूमते हुए भ्रमरोंके गुञ्जनरूपी शयन करते समय अधिक नासिकाके 'घर्र-घर्र' शब्दको करनेके साथ-साथ निद्राके सुखको प्राप्त करता है। [ जिस प्रकार कोषागार ( खजाने ) का पहरेदार पूर्ण रात्रिमें जागरण कर दिन होनेपर खुर्राटा लेता हुआ सुखसे सोता है, उसी प्रकार मानो कुमुद भी रात्रिभर उन्मीलित रहकर दिन होनेपर इस समय भीतरमें बन्द हुए भ्रमरके गुञ्जनसे मानो खुर्राटा लेता हुआ सो रहा है, ऐसा हम समझते हैं ] ॥ ५९ ॥

इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः ।
भण फणिभवशास्त्रे तातङः स्थानिनौ का-
विति विहिततुहीवागुत्तरः कोकिलोऽभूत् ? ॥ ६० ॥

इहेति । इह अस्मिन्, उषसि प्रभाते, पृच्छां प्रश्नम्, शंसति सूचयतीति पृच्छाशंसी प्रश्नवाचकः। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। तादृशस्य किं शब्दस्य किमिति सर्वनामपदस्य, रूपे रूपविशेषे, कौ इति प्रथमाद्विवचनान्तपदनिष्पत्तौ, प्रतिनियमिता सदैव निर्दिष्टा, वाक् वाक्यं यस्य तादृशेन, काविति व्यक्तवाक्येनेत्यर्थः। वायसेन काकेन, फणिनः शेषात्, भवे उत्पन्ने, शेषप्रणीते इत्यर्थः। शास्त्रे पाणिनीये महाभाष्ये, तातङस्तातङादेशस्य, स्थानिनौ आदेशिनौ, कौ ? किं शब्दौ ?, भण ब्रूहि, इति एवम्, पृष्टः जिज्ञासितः, इवेति शेषः। एषः पुरतो वृक्षशाखायामुपविष्टः इत्यर्थः। कोकिलः पिकः, विहितं प्रयुक्तम्, तुही तुश्च हिश्च तुही इति, वाक् निजध्वनिरेव, उत्तरं प्रतिवचनं येन सः तादृशः, अभूत् अजनि, किम् ? 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति पाणिनिसूत्रे तुह्योः स्थाने तातङ् विधीयते; प्रातः काकः कौ इति शब्देन तातङः स्थानिनौ कौ इति पृच्छति किम् ? कोकिलश्च तुही इति शब्देन तस्य उत्तरं ददाति किम् ? इत्यर्थः। पक्षिप्रभृतीनामव्यक्तध्वनी यस्य चेतसि यदुदेति स तथैव मनःकल्पितं प्रकाशयति, एवञ्च कविरयं तदा काकध्वनिं 'कौ' इति कोकिलध्वनिञ्च 'तुही' इति कल्पयित्वा काविति तुहीति च काककोकिलकूजितेन पूर्वोक्तप्रश्नोत्तरत्वमुत्प्रेक्षते। प्रभातं जातं काकादयः पक्षिणः कूजन्तीति भावः ॥ ६० ॥

इस प्रभातकालमें प्रश्नवाचक 'किम्' शब्दके ( कौ, कौ ) रूपसे प्रतिनियत वचनवाले कौवेसे 'शेषोक्त शास्त्र अर्थात् पाणिनिमहाभाष्यमें 'तातङ्' के स्थानी अर्थात् आदेश कौन-कौन होते हैं इस प्रकार 'कौ, कौ' ऐसा पूछा गया, तथा 'तुहि' कहनेवाला कोकिल उसका उत्तर हो गया क्या ? [ प्रातःकाल स्वभावसे ही कौवा 'कौ, कौ' तथा पिक 'तुहि, तुहि'

करता है, कविराज श्रीहर्ष इसपर उत्प्रेक्षा करते हैं कि—इस प्रातःकालमें 'कौ, कौ' कहता हुआ कौवा 'पाणिनीय महाभाष्यमें 'तातङ्' के स्थानी कौन-कौन हैं?' ऐसा प्रश्न करता है और कोयल 'तुहि, तुहि' कहकर उत्तर देता है कि 'पाणिनीय महाभाष्यमें 'तातङ्' के स्थानी 'तु-हि, तु-हि' हैं। क्योंकि 'तुह्योस्तातङाशिष्यन्तरस्याम्' (पा० सू० ७।१।३५) से 'तातङ्' के स्थानमें 'तु और हि' आदेश होते हैं। हे राजन्! प्रातःकाल हो गया, कौवे तथा कोयल बोलने लगे; अत एव आप शीघ्र जागिये]॥ ६०॥

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूषाऽनुयातः।
सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन् यो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति शिरः पट्टिकापाठनेन[1]॥ ६१॥

दाक्षीति। अयं परिदृश्यमानः, कः अपि अपरिज्ञातपूर्ववृत्तान्त इत्यर्थः। कपोतः पारावातः, दाक्षीपुत्रस्य दक्षगोत्रसञ्जातमातृकस्य दाक्षीनामकमातृगर्भजातस्य वा पाणिनेः, दक्षस्यापत्यम् 'अत इञ्' इति इञि 'इतो मनुष्यजातेः' इति ङीप्। तन्त्रे शास्त्रे व्याकरणे, ध्रुवं निश्चितमेव, अधीतम् अध्ययनम् अस्य अस्तीति अधीती दाक्षीपुत्रतन्त्राध्ययनकारी इत्यर्थः। 'इष्टादिभ्यश्च' इतीनिप्रत्ययः, 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति सप्तमी। अभवत् अजायत। यः कपोतः, कण्ठे निजगलदेशे, शब्दौघेषु 'रामः रामौ रामाः' इत्यादि प्रातिपदिकसमूहेषु, सिद्ध्यै शिक्षालाभार्थम्, क्षता प्रस्तरफलकादौ पुनः पुनः लिखनेन क्षयं प्राप्ता, बह्वी प्रभूता, या कठिनी खटी। 'कठिनी खटिकायामपि' इति मेदिनी। तस्याः शेषः अवशिष्टांशः, सः एव भूषा आभरणम्, तयाऽनुयातः अन्वितः, रूषितः सन् इत्यर्थः, इवेति शेषः, खटिकाचूर्णशेषरेखया कण्ठे अनुरञ्जितः सन्निवेत्यर्थः। कपोतविशेषस्य कण्ठे धवलरेखा भवति, तत्र खटिकाचूर्णानुरञ्जनत्वाध्यवसायो बोध्यः। सर्वम् अधीतं समस्तशास्त्रम्, विस्मृत्य तिर्यग्योनेः सम्बन्धात् विस्मृतो भूत्वा, पट्टिकापाठनेन पट्टिकायां प्रस्तरफलकादौ, पाठनेन लिखितविषयस्य अध्यापनाजनितेन, प्राक्संस्कारेण पूर्वतनवासनया, पूर्वाभ्यासवशेनेत्यर्थः। दैवात् सहसा, स्मृतिं स्मरणविषयताम्, गतां प्राप्ताम्, घुसंज्ञां 'दाधा घ्वदाप्' इति सूत्रोक्तां घु इति संज्ञाम्, घोषयन् 'घु' 'घु' इति शब्देन उच्चैः उच्चारयन्, सम्प्रति अधुनाऽपि, उषसि प्रातःकाले, शिरः मस्तकम्, धुवति कम्पयति, इत्युत्प्रेक्षा। लोकेऽपि दृश्यते यत् कश्चित् विस्मृतस्य कस्यचित् विषयस्य स्मरणकाले मस्तकं कम्पयतीति॥ ६१॥

कण्ठमें शब्दसमूहकी सिद्धिके लिए घिसी हुई बहुत-सी खड़ियाके अवशिष्टांश (अङ्गुलिमें लगे हुए रज) रूपी भूषणसे युक्त यह (प्रत्यक्ष दृश्यमान) कोई कबूतर मानो

१. '—पाठजेन' इति 'प्रकाश' सम्मतः पाठः।

पाणिनिके व्याकरणशास्त्रको पहले पढ़नेवाला हुआ है, जो भाग्य (दुर्भाग्य) से भूलकर प्रातःकालमें स्मृतिगोचर हुई ('दाधाघ्वदाप' (पा. सू. १।१।२०) से विहित 'घु' संज्ञाको घोषित (बार-बार उच्चारण) करता हुआ पट्टिका (पाटी) के अध्ययन पूर्वसंस्कारसे इस समय भी शिर कँपा रहा है। [जिस प्रकार पहले पढ़े हुए ग्र दुर्भाग्यवश विस्मृत हो जानेपर प्रातःकालमें स्मरण यथागत किसी विशेष स्थलको बार-बार कहता हुआ वह भूतपूर्व विद्वान् पूर्वसंस्कारसे शिरको कम्पित करता है, तथा उसके गले पढ़नेके समय काष्ठफलक (पाटी) पर खड़ियासे लिख-लिखकर उसे मिटानेके बाद अङ्गुलिमें लगी हुई खड़ियेकी धूलको विद्याप्रसादनार्थ कण्ठमें लगा रहता है; उसी प्रकार मानो यह कबूतर भी पहले पाणिनीय व्याकरणको पढ़ा हुआ है तथा शब्दसिद्धि करते समय घिसी हुई खड़ियेकी धूलको कण्ठमें लगा लिया है; किन्तु दुर्भाग्यवश सब पठित व्याकरणको भूल गया है इस प्रातःकालमें केवल 'घु' संज्ञा उसे याद आ गयी है, जिसे वह बार-बार कहता हुआ अध्यायनजन्य पूर्वसंस्कारसे अपने दुर्भाग्यको कोसता हुआ शिर धुन (कँपा) रहा है। प्रातःकालमें स्मरण होना तथा स्मरण आनेपर शिर कँपाना प्रायः सबका स्वभाव होता है। कबूतर 'घु-घु' कर रहा है, अतः प्रातःकाल जानकर अब आप निद्रात्याग करें] ॥ ६१ ॥

पौरस्त्यायां घुसृण[1]सुमनःश्रीजुषो वैजयन्त्या-
[2]स्तोकैश्चित्तं हरति हरित क्षीरकण्ठैर्मयूखैः।
भानुर्जाम्बूनदरुचिरसौ[3] शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ॥ ६२ ॥

पौरस्त्यायामिति। जाम्बूनदरुचिः उदयरागात् कनककान्तिः, अत एव शक्रसौधस्य पूर्वदिगवस्थितस्य इन्द्रप्रासादस्य वैजयन्तस्य, कुम्भः सौधाग्रवर्त्तिकनककलशरूपः इति रूपकम्। असौ पारदृश्यमानः, भानुः सूर्यः, पुरो भवायां पौरस्त्यायां प्राच्याम्। 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक्, 'किति च' इति वृद्धिः। हरिति दिशि, घुसृणस्य कुङ्कुमस्य, सुमनसां पुष्पाणाम्, या श्रीः शोभा, तज्जुषः तत्सेविन्याः, रक्तवर्णाया इत्यर्थः। वैजयन्त्याः पताकायाः, तोकैः अपत्यैः, पताकाया अपत्यसदृशैरित्यर्थः। 'अपत्यं तोकं तयोः समे' इत्यमरः। क्षीरकण्ठैः दुग्धपायिभिः, बालैः, मयूखैः किरणैः, चित्तं मनः, हरति मुष्णाति, मनोहरः भवतीत्यर्थः। किञ्च एतस्मात् कुम्भरूपात् भानोः, भवति जायते इति ताभिः एतद्भवाभिः कुम्भोत्पन्नाभिः, भाभिः प्रभाभिः, तिमिरजलधेः अन्धकारसमुद्रस्य, पानं चुलुकीकरणम्, विनाशनमिति यावत्। 'उभयप्राप्तौ कर्मणि' इति कर्मणि षष्ठी। स्थाने युक्तम्।

---

१. '—मसृण' इति पाठान्तरम्। २. '—स्तोमैं—' इति पाठान्तरम्।
३. '—तनुरसौ' इति पाठान्तरम्।

'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। कुम्भसम्भवः अगस्त्यः यथा चुलुकेन जलधिं पपौ, तथा अपरस्यापि कुम्भसम्भवस्य जलधिपानमुचितमेवेति भावः। रूपकालङ्कारः॥ ६२॥

सुवर्णतुल्य कान्तिवाला इन्द्रप्रासाद (वैजयन्त) का कलसरूप यह सूर्य पूर्वदिशामें कुङ्कुम-पुष्पोंकी शोभावाली (पाठा०—कुङ्कुमतुल्य स्निग्ध शोभावाली) पताकाओंके दुग्ध पीनेवाले अर्थात् अतिशय लघु(=अभिनवतम) अपत्यरूप (पाठा०—समूह) किरणोंसे चित्तको हरण कर रहा है। इस (सूर्य, पक्षा०—इन्द्रप्रासादके स्वर्णकलस) से उत्पन्न कान्तियोंको अन्धकार-समूहका पान करना उचित ही है। [सूर्य अभी-अभी उदित हुआ है अत एव उसकी किरणें कुङ्कुमपुष्पतुल्य अतिशय अरुणवर्ण इन्द्रप्रासादकी पताकाओंकी दुधमुहें सन्तानतुल्य अत्यन्त लाल-लाल हैं और यह सूर्य उस इन्द्रप्रासादका स्वर्ण कलस है, अतः उक्त स्वर्णकालसोत्पन्न इन किरणोंको अन्धकार-समुद्रका पान करना सर्वथा उचित ही है, क्योंकि कुम्भोत्पन्न अगस्त्य मुनिने भी समुद्रका पान किया था। पूर्वदिशामें स्वर्णकलसतुल्य सूर्यका उदय हो गया तथा उसकी अरुणवर्ण किरणें फैल रही हैं, अतः आप निद्रात्याग करें]॥ ६२॥

द्वित्रैरेव तमस्तमालगहनग्रासे दवीभावुकै-
रुस्रैरस्य सहस्रपत्रसदसि व्यश्राणि घस्रोत्सवः।
घर्माणां रयचुम्बितं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना सोघं निदाघद्युतिः॥ ६३॥

द्वित्रैरिति। तमः अन्धकारः एव, तमालगहनं तुल्यवर्णत्वात् तमालाख्यवृक्षाणां गभीरं वनम्, तस्य ग्रासे गिलने, दूरीकरणे इत्यर्थः। दवीभावुकैः आरण्यवह्नीभवद्भिः। 'दवदावौ वनारण्यवह्नौ' इत्यमरः। अभूततद्भावे च्विः, 'अस्य च्वौ' इतीकारः। 'लषपत—' इत्यादिना उकञ् प्रत्ययः। अस्य निदाघद्युतेः, द्वौ वा त्रयः वा द्वित्राः। 'सङ्ख्ययाऽव्यया—' इत्यादिना बहुव्रीहिः, 'बहुव्रीहौ सङ्ख्येये—' इति डच्समासान्तः। तैरेव द्वित्रिसङ्ख्यकमात्रैरेव, उस्रैः करैः। कर्तृभिः। सहस्रपत्रसदसि कमलसभायाम्, पद्मसमूहे इत्यर्थः। यस्मात् घस्रोत्सवः दिनानन्दः, विकाशप्राप्तिजन्यमानन्दानुष्ठानमित्यर्थः। व्यश्राणि व्यश्राणितः, प्रदत्तः इत्यर्थः। श्रण दाने इत्यस्य कर्मणि चिण्। तत् तस्मात्, द्वित्रिसङ्ख्यककिरणैरेव सर्वकार्यसाधनात् हेतोरित्यर्थः। निदाघद्युतिः सूर्यः, पिष्टपिष्टीकृतं पिष्टस्य चूर्णीकृततण्डुलादेः, पिष्टीकृतम् पुनः पेषणवत्कृतम्, द्वित्रैरेव मयूखैः अन्धकारं दूरीकृतमपि पुनः मयूखान्तरैः अत्यर्थं दूरीकृतमित्यर्थः। क्ष्मादिग्व्योमतमः पृथिवीककुब्गगनानाम् अन्धकारमेव, अघं पापम्, मालिन्यावहत्वादिति भावः। येन तादृशम्। 'पापं किल्बिषकल्मषम्। कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः। रयचुम्बितं वेगव्याप्तम्, वेगेन प्रसरणशील-

मित्यर्थः । घर्माणाम् आतपानाम् , ओघं समूहम् , अधुना प्रातः, मोघं व्यर्थम् एव, वितनुते विस्तारयति करोतीत्यर्थः । वनान्धकारनाशस्य कमलविकाशस्य च प्राभातिकैः द्वित्रैरेव किरणैः कृतत्वात् किरणसमूहविकीरणं सूर्यस्य पिष्टपेषणवत् निष्प्रयोजनमिति भावः ॥ ६३ ॥

अन्धकाररूप तमालवृक्षोंके वन ( पक्षा०—समूह, या-गहनता ) को नष्ट करनेमें दवाग्नि होती हुई इस ( सूर्य ) की दो-तीन ( अल्पतम ) किरणोंने ही कमलसमूहमें दिनोत्सव ( जन्य विकास ) को दे दिया अर्थात् सूर्यकी अल्पसङ्ख्यक किरणोंसे ही गाढान्धकार नष्ट हो गया और कमलसमूह विकसित हो गये, इस कारण सूर्य, पृथ्वी, दिशाओं तथा आकाशके अन्धकाररूप पाप ( पक्षा०—मलिनता ) को पिष्टपेषण करनेवाले वेगयुक्त अर्थात् तीक्ष्णतम किरणोंके समूहको व्यर्थ ही फैला रहा है । [ स्वल्पतम किरणोंसे ही सर्वत्रका अन्धकार दूर हो जानेसे अब सूर्यका अधिक किरण-विस्तर करना पिष्टपेषणवत् व्यर्थ हो रहा है ] ॥ ६३ ॥

दूरारूढस्तिमिरजलधेर्वाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयम् ।
न स्वात्मीयं किमिति दधते भास्वरश्वेतिमानं
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥

दूरेति । तिमिरजलधेः तमःसमुद्रस्य, असीमत्वकृष्णवर्णत्वसादृश्यादिति भावः । वाडवः समुद्रगर्भस्थाश्वमुखोद्गतः, चित्रभानुः अनलः, वडवाग्निरूप इत्यर्थः । तिमिरसंहर्त्ता इति यावत् , तथा ताम्यन्त्याः क्लिश्यन्त्याः, पतिविच्छेदेन निशि क्लेशमनुभवन्त्या इत्यर्थः, वनरुहवन्याः जलजवनसमूहस्य, पद्मवनस्य इत्यर्थः केलिषु क्रीडासु, विहासः मध्यमहसितं प्रयोजनं यस्य स तादृशः इति वैहासिकः विकाशरूपहास्यजनकः । 'प्रयोजनम्' इति ठञ् । अयं परिदृश्यमानः, भानुः सूर्यः, दूरं विप्रकृष्टदेशम् , आरूढः उत्थितः । घुसणेः रवेः, किरणश्रेणयः मयूखपङ्क्तयः, अद्यापि इदानीमपि, द्याम् आकाशम् , शोणयन्ति शोणाम् अभिनवत्वेन अरुणवर्णत्वात् अरुणवर्णां कुर्वन्तीत्यर्थः । इति एवम् , अपीति शेषः । इदानीमपि दिवः शोणतासम्पादने कृतेऽपीत्यर्थः । स्वात्मीयं निजम् , भास्वरम् अत्युज्ज्वलम् , श्वेतिमानं श्वैत्यम् , प्रोज्ज्वलशुभ्रवर्णमित्यर्थः । न दधते किम् ? न धारयन्ति किम् ? अपि तु सत्वरमेव धारयिष्यन्तीत्यर्थः । तस्मात् उत्थातुमयमुचितः कालः इति निष्कर्षः ॥ ६४ ॥

अन्धकाररूपी समुद्रके ( शोषक, पक्षा०—नाशक होनेसे ) वडवाग्निरूप तथा ( सूर्यरूप पतिके विरहसे ) खिन्न होती हुई कमल-वनी ( रूपिणी नायिका ) को क्रीडासे अर्थात् अनायास ही हासयुक्त ( पक्षा०—विकसित ) करनेवाला तथा ऊपर तक चढ़ा हुआ यह

सूर्य अपनी ( स्वाभाविक ) देदीप्यमान शुभ्रताको क्यों नहीं धारण करता ? और इस समय ( इतना दिन चढ़नेपर ) भी सूर्य-किरण-समूह आकाशको अरुण वर्ण क्यों कर रहा है ? [ इस प्रकार यहां दो प्रश्न हैं। अथवा—"'जिस कारण ये सूर्य-किरण-समूह आकाशको अरुणवर्ण कर रहे हैं, इसी कारण यह सूर्य अपनी ( सहज ) देदीप्यमान शुभ्रताको नहीं धारण कर रहा है क्या ? सूर्य ऊपर आ गया है, कमल विकसित हो गये हैं, फिर भी आकाश लालवर्ण हो रहा है; इस कारण निद्रात्याग करनेका यह उचित समय है ] ॥६४॥

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदाद्<br>
देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः।<br>
सूता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-<br>
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीम् ॥ ६५ ॥

प्रातरिति। हे वन्दिनः! अनया युष्माभिरुक्तया, प्रातर्वर्णनया प्रभातवर्णनेन, परितोषिता प्रीणिता, देवी महिषी दमयन्ती, वः युष्मभ्यम्, निजवपुषः स्वाङ्गस्य, निजव्यवहार्याणि अत एव बहुमूल्यानीति भावः। भूषाः आभरणानि एव, प्रसादान् पारितोषिकाणि, अदात् दत्तवती। देवी अदात् इत्यनेन पूर्वमेव प्रातःसन्ध्याचरणार्थं नलस्य प्रासादात् प्रस्थानं सूचितमिति बोध्यम्। इति इत्थम्, उक्त्वेति शेषः। गम्यमानार्थत्वात् अप्रयोगः। आन्तःपुरीभिः अन्तःपुरिकाभिः, अन्तःपुरे नियुक्ताभिः सहचरीभिरित्यर्थः। 'तत्र नियुक्तः' इति ठक्। पुरः अग्रे, वैतालिकानामिति भावः। निहितां स्थापिताम्, माणिक्यरोचिर्मय्या पद्मरागप्रभारूपया, क्रोधावेगेन दारिद्र्यं प्रति कोपवशेनैव, सरागया रक्तवर्णया, लोचनरुचा नेत्रभासा, मण्डनमण्डल्या एव प्रभयेति भावः। दारिद्र्यस्य निर्धनतायाः, विद्राविणीम् उच्चाटनीम्, चलेन दूरीकुर्वतीमिव स्थितामित्यर्थः इत्युत्प्रेक्षा। मण्डनमण्डलीम् आभरणराशिम्, सूताः वन्दिनः। 'सूतः मागधवन्दिनोः' इति विश्वः। परिदधुः स्वाङ्गे धारयामासुः॥ ६५॥

'( हे वन्दिगण! ) इस ( १९।२—६४ ) प्रातवर्णनसे सन्तुष्ट हुई पटरानी दमयन्तीने अपने शरीरके भूषणोंको ( तुमलोगोंके लिए ) पारितोषिकस्वरूप दिया है' ऐसा कहकर अन्तःपुर ( रनिवास ) में नियुक्त सहचरियोंसे ( वन्दिगणके ) सामने रखे गये तथा माणिक्यकी ( लाल-लाल ) कान्तिरूपी क्रोधयुक्त सराग ( लाल वर्ण ) नेत्रोंकी कान्तिसे दरिद्रताको दूर भगानेवाले भूषण-समूहको वन्दियोंने पहना। [ यहांपर भूषणोंमें जड़े गये माणिक्योंकी लाल कान्तिको हे दारिद्र्य! हमारे आनेपर भी तुम अभी तक नहीं दूर हुए मानो इस प्रकार क्रोधसे नेत्रको लाल करके वन्दियोंके दारिद्र्यको दूर करनेकी उत्प्रेक्षा की गयी है। दमयन्तीके प्रसन्न होकर पारितोषितक देनेसे वन्दियोंके प्रातः वर्णन समाप्त होनेके पहले ही नलका उठकर प्रातः सन्ध्यादिकृत्यके निमित्त चले जानेसे प्रासादपर

नहीं रहना, सूचित होता है । बहुत सहचरियोंके द्वारा भूषण लानेसे भूषणोंकी अधिकता तथा दमयन्तीके अपने शरीरके भूषणोंको पारितोषिकमें देनेसे भूषणोंकी बहुमूल्यता सूचित होती है ] ॥ ६५ ॥

आगच्छन् भणतामुषः क्षणमथातिथ्यं दृशोरानशे
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः ।
आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियायौतुके-[1]
प्राप्तं तैरवरागतैरविदितप्रासादतोनिर्गमः ॥ ६६ ॥

आगच्छन्निति । अथ दमयन्त्या प्रसाददानानन्तरम्, अवरागतैः अवरं पश्चात्, स्नानार्थं नलस्य वहिर्गमनानन्तरमित्यर्थः । आगतैः उपस्थितैः, नलस्य निद्रापनय-नार्थं प्रासादे इति शेषः । तैः वैतालिकैः, अविदितः अज्ञातः, पश्चादागतत्वादिति बोध्यम्, प्रासादतः हर्म्यात्, निर्गमः वहिर्निष्क्रमणं यस्य स तादृशः, भूपतिः पृथ्वीशः नलः, स्वर्गङ्गाम्बुनि मन्दाकिनीप्रवाहे, कृतदिनारम्भाप्लुतिः कृता सम्पा-दिता, दिनारम्भस्य प्रभातकालस्य, आप्लुतिः निमज्जनम्, स्नानमित्यर्थः, येन स तादृशः, कृतप्रातःस्नातः सन्, एतेन नलस्य महाधार्मिकत्वं प्रतिपाद्यते । प्रियायाः भैम्याः, यौतुके विवाहकालिकोपाहरणे, प्राप्तं लब्धम्, भीमदत्तमित्यर्थः । अतिक्रान्त-पुष्पकम् अतिपुष्पकं पुष्पकादपि उत्कृष्टमित्यर्थः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, 'द्विगुप्राप्तापन्नालम्'—इत्यादिना 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति प्राप्तस्य परवल्लिङ्गत्वस्य प्रतिषेधः । रथं स्यन्दनम्, अधिष्ठाय आस्थाय । 'अधिशीङ्—' इत्याधारस्य कर्मत्वम् । आनन्दात् हर्षात्, दमयन्तीसमागमाशया इति भावः । आगच्छन् प्रत्यावर्त्तमानः सन्, उषः प्रभातकालम्, भणतां तथैव वर्णयताम्, वन्दिनां वैतालिकानाम्, दृशोः नेत्रयोः दृशाम् इत्यर्थः । आतिथ्यम् आगन्तुकत्वम्, विषयत्वमिति यावत्, क्षणं किञ्चित्कालम्, सौधान्तःप्रवेशात् पूर्वपर्यन्तमित्यर्थः । आनशे प्राप्तः, तैर्दृष्ट इत्यर्थः 'अत आदेः' इत्यभ्यासदीर्घः, 'अश्नोतेश्च' इति नुडागमः । अत एव नलस्य स्नानार्थं गमनात् पूर्वश्लोके देव्यैव पारितोषिकं दत्तमित्युक्तम् ॥६६॥

इस ( दमयन्तीके दिये पारितोषिक-भूषणोंको वन्दियों द्वारा धारण करने ) के बाद ( नलको नित्यक्रियासम्पादनार्थ बाहर जानेके ) अनन्तर ( उनको जगानेके लिए उपस्थित ) वन्दियोंसे नहीं मालूम किया गया है बाहर निर्गमन जिसका ऐसे तथा प्रातःकाल आकाश-गङ्गामें गोता लगाये ( स्नान किये ) हुए दमयन्तीके विवाहके समय दहेजमें ( भीमराजाके द्वारा ) दिये गये एवं पुष्पकविमानातिशायी ( कुवेरके पुष्पक विमानकी अपेक्षा उत्तम ) रथपर चढ़कर ( दमयन्तीका पुनर्मिलन होनेकी आशासे ) आनन्दपूर्वक आते हुए राजा

१. '—यौतुके' इति पाठान्तरम् ।

नलको प्रातःकालका वर्णन करनेवाले वन्दियोंने देखा। [ वन्दियोंके आनेसे पहले ही नित्यक्रियार्थ वाहर जाकर थोड़ा दिन चढ़ते-चढ़ते नित्यक्रियाका समाप्तकर लौट आनेसे नलकी धार्मिकता और इसी कारण अर्थात् नलके वहां नहीं रहनेसे पूर्व श्लोकोक्त दमयन्तीका वन्दियोंके लिए भूषणको पारितोषिकरूपमें देनेका औचित्य और स्वर्गङ्गामें प्रातः स्नान करनेसे नलके रथका सर्वत्र गमन कर सकना, तथा स्नानकर दमयन्तीके साथ पुनर्मिलनकी आशासे आनन्दपूर्वक लौटना कहनेसे आगामी सर्गकी कथाकी सङ्गति सूचित होती है ] ॥ ६६ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एकां न त्यजतो नवार्थघटनामेकान्नविंशो महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमस्मिन्नगात् ॥ ६७ ॥

श्रीहर्षमिति। एकां मुख्याम्, नवार्थघटनाम् अपूर्वार्थसृष्टिम्, न त्यजतः न मुञ्चतः, सर्वदा नवं नवं विषयं वर्णयत इत्यर्थः। तस्य श्री हर्षस्य, विंशतेः पूरणः इत्यर्थे—'तस्य पूरणे डट्' इति डट्, 'ति विंशतेर्डिति' इति तिशब्दलोपः। ततः एकेन न विंशः इति 'तृतीया' इति योगविभागात् समासे 'एकादिश्चैकस्य चादुक्' इति नञः प्रकृतिभावः, एकशब्दात् अदुगागमश्च। ऊनार्थे चात्र नञ्। गतमन्यत् ॥

इति मल्लिनाथसूरिविरचिते 'जीवातु'समाख्याने एकोनविंशः सर्गः समाप्तः ॥ १९ ॥

---

कवीश्वर-समूहके······किया, मुख्य नवीन घटनाका अत्याग ( सदा नयी-नयी घटनाओंका ही वर्णन ) करते हुए उस श्रीहर्षके रचित सुन्दर नलके चरित अर्थात् 'नैषधचरित'······उन्नीसवां सर्ग समाप्त हुआ ( शेष व्याख्या चतुर्थसर्गवत् जाननी चाहिये ) ॥६७॥

यह 'मणिप्रभा' टीकामें 'नैषधचरि'का उन्नीसवां सर्ग समाप्त हुआ ॥ १९ ॥

---

# विंशः सर्गः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् ।
स प्राप रथपाथोभृद्वातजातजवो दिवः ॥ १ ॥

सौधेति । वातवत् वायुरिव, जातः समुत्पन्नः, जवः वेगः यस्य सः तादृशः, अन्यत्र—वातात् वायोः, जातः उत्पन्नः, जवः वेगो यस्य स तादृशः, स पूर्वोक्तः अतिपुष्पकः, रथः स्यन्दन एव, पाथोभृत् जलधरः, दिवः स्वर्गात् आकाशाच्च । 'द्यौश्च स्वर्गतन्मार्गयोः' इति विश्वः । सौधः अट्टः एव, अद्रिः पर्वतः, तस्य कुट्टिमम् उपरिगृहेषु विविधरत्नादिनिबद्धभूमिः । 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः । तदेव अनेके धातवः नानाविधगैरिकादयः यत्र सा तादृशी । 'शेषाद्विभाषा' इति कप् । अत्यधिका ऊर्ध्वभूमिप्रदेशः, तस्याः तटं पर्यन्तप्रदेशं शिखरञ्च, प्राप लेभे । रूपकालङ्कारः ॥ १ ॥

वायुसे भी अधिक तीव्र चलनेवाला ( अथवा—वायु भी जिससे वेगवान् है, ऐसा ) वह रथरूपी मेघ स्वर्ग ( पक्षा०—आकाश ) से प्रासादरूपी पर्वतके ( नानावर्ण मणियोंसे जटित ) भूमि ( फर्श ) रूपी ( गैरिकादि ) अनेक धातुवाली पर्वतकी ऊपरी भूमिके तटको प्राप्त किया । [ जिस प्रकार वायुसे वेगयुक्त मेघ आकाशसे नानाधातुयुक्त पर्वताधित्यकाके तटको प्राप्त करता है, उसी प्रकार नलका वायुसे भी तीव्रगामी वह प्रसिद्ध रथ प्रासादके अनेक वर्णवाले रत्नोंसे जड़ी हुई भूमिके पर्यन्तप्रदेशको प्राप्त किया अर्थात् पहुँचा ] ॥ १ ॥

ततः प्रत्युदगाद् भैमी कान्तमायान्तमन्तिकम्[1] ।
प्रतीचीसिन्धुवीचीव दिनोङ्कारे सुधाकरम् ॥ २ ॥

तत इति । ततः रथस्य कुट्टिमतटप्राप्त्यनन्तरम्, भैमी दमयन्ती, दिनस्य ... , ओङ्कारे प्रारम्भे, गायत्र्यादीनां प्रारम्भे एव ओङ्कारप्रयोगदर्शनादत्रापि ओङ्कारशब्दस्य आरम्भार्थे लक्षणा ज्ञातव्या । 'ओमाङोश्च' इति पररूपत्वम् । प्रतीचीसिन्धोः पश्चिमदिगवस्थितसमुद्रस्य, वीची ऊर्मिः, अन्तिकं समीपम्, आयान्तम् आगच्छन्तम्, कान्तं रमणीयम्, सुधाकरं चन्द्रमिव, प्रत्यूषे एव अस्तोन्मुखतया सुधाकरस्य पश्चिमार्णवतरङ्गलग्नवत् प्रतीयमानत्वादिति भावः । अन्तिकं समीपम्, आयान्तम् आगच्छन्तम्, कान्तं पतिं नलम्, प्रत्युदगात् सादरं प्रत्युत्थितवती । 'इणो गा लुङि' इति गादेशः । 'गातिस्था—'इत्यादिना सिचो लुक् ॥ २ ॥

तदनन्तर समीप आते हुए पति ( नल ) का दमयन्तीने उस प्रकार प्रत्युद्गमन ( अगवानी—अभ्युत्थान ) किया, जिस प्रकार दिनके आरम्भ ( प्रातःकाल ) में समीप आते

---

१. '—मन्तिके' इति पाठान्तरम् ।

हुए मनोहर चन्द्रमाकी प्रत्युद्गमन ( अगवानी ) पश्चिम समुद्रकी लहरी ( पानीका तरङ्ग ) करती है ॥ २ ॥

**स दूरमादरं तस्या वदने मदनैकदृक् ।**
**दृष्टमन्दाकिनीहेमारविन्दश्रीरविन्दत ॥ ३ ॥**

**स इति । दृष्टा अवलोकिता, मन्दाकिन्याः स्वर्गङ्गायाः, हेमारविन्दस्य स्वर्णकमलस्य, श्रीः शोभा येन सः तादृशः, सदृशदर्शनजातप्रियामुखारविन्दस्मृतिः इत्यर्थः । एवञ्च दमयन्तीमुखारविन्द-मन्दाकिनीहेमारविन्दयोः उत्कर्षापकर्षनिर्द्धारणे समर्थः इति भावः । मदनैकदृक् कामैकशरणः, कामासक्तचित्त इत्यर्थः । सः नलः, तस्याः प्रियायाः भैम्याः, वदने आनने, दूरम् अत्यन्तम्, तत्पद्मापेक्षया समधिकमित्यर्थः । आदरम् आग्रहम्, अविन्दत अलभत । तत्पद्मापेक्षया दमयन्तीमुखस्य अधिकसुन्दरत्वात् तत्रैव समधिकादरवान् बभूवेत्यर्थः ॥ ३ ॥**

मन्दाकिनी ( आकाशगङ्गा ) के स्वर्णकमलकी शोभाको पहले ( स्नानकालमें ) देखे हुए एकमात्र काममें दृष्टि रखनेवाले अर्थात् कामासक्त उस नलने उस ( दमयन्ती ) के मुखमें ( मन्दाकिनीके कमलकी अपेक्षा दमयन्तीके मुखमें अधिक शोभा होनेसे ) अधिक आदरको प्राप्त किया अर्थात् मन्दाकिनीके स्वर्णकमलकी अपेक्षा दमयन्तीके मुखको अधिक आदरसे देखा । [ पहले मन्दाकिनीके स्वर्णकमलकी शोभा देखनेसे दमयन्तीके मुखकी शोभाके साथ तुलना करनेमें नलकी क्षमता सूचित होती है ] ॥ ३ ॥

**तेन स्वर्देशसन्देशमर्पितं सा करोदरे ।**
**बभ्राज[1] बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ॥ ४ ॥**

**तेनेति । उन्निद्रपद्मदृक् विकचारविन्दलोचना, सा दमयन्ती, तेन तदानयता प्रियेण नलेन, अर्पितं दत्तम्, स्वर्देशस्य स्वर्गलोकस्य, सन्देशं सूचकम्, त्वं स्वर्लोकं गच्छसि, अतः तल्लोकस्थमेकं पद्मं मन्निमित्तमानयेः इति दमयन्तीप्रार्थनाऽनुसारेणानीतम् अत एव स्वर्गभूमेः नलः आगतः इति ज्ञापयदिव स्थितमित्यर्थः । पद्मं हेमारविन्दम्, करोदरे पाणिमध्ये, बिभ्रती दधती सती, पद्मा इव साक्षादेव लक्ष्मीः इव, बभ्राज रेजे । लक्ष्मीरपि उन्निद्रपद्मदृक् पद्महस्ता च इति उपमासङ्गतिः बोद्धव्याः ॥ ४ ॥**

उस ( नल ) के द्वारा स्वर्गके सन्देशके समान दिये गये स्वर्णकमलको हाथमें ग्रहण करती हुई ( अत एव हर्षसे, या—स्वभावतः ) विकसित कमलके समान नेत्रवाली वह दमयन्ती लक्ष्मीके समान शोभित हुई । [ जब नल स्नानार्थ मन्दाकिनीको जा रहे थे तब दमयन्तीने अपने लिए स्वर्गसे एक कमल लानेकी प्रार्थना की थी, तदनुसार ही नलने स्वर्गके सन्देशके समान उस मन्दाकिनी-स्वर्ण-कमलको दमयन्तीके लिए दिया तो उसे

---

१. 'बभ्राजे' इति पाठान्तरम् ।

-हाथमें ग्रहण करती हुई कमलतुल्य प्रफुल्लितनेत्रा वह दमयन्ती लक्ष्मीके समान शोभने लगी, क्योंकि लक्ष्मी भी स्वभावतः कमलतुल्य नेत्रवाली है तथा हाथमें कमल लिये रहती है] ॥

प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ ।
ह्येकलक्षतया दध्यौ दत्तमेकवराटकम् ॥ ५ ॥

प्रियेणेति । असौ भैमी, प्रियेण कान्तेन नलेन इष्टजनेन च, प्रत्तं दत्तम् । 'अच उपसर्गात्तः' इति दस्तादेशः । अल्पम् अपि किञ्चिदपि वस्तु, बहु प्रभूतं समधिकादरणीयञ्च, मेनेतराम् अतिशयेन मेने । 'किमेत्तिङव्ययात्—' इति आमु-प्रत्ययः । कुतः ? हि यस्मात् कारणात्, दत्तम् अर्पितम्, एकः एकसङ्ख्यामात्रः, वराटकः बीजकोषो यस्य तत् तादृशं पद्मम् 'बीजकोषो वराटकः' इत्यमरः । एकवराटकम् एककपर्दकञ्च । 'कपर्दको वराटकः' इति हलायुधः । एकलक्षतया एकलक्षसङ्ख्यकत्वेन तदेकपरतया लक्षसङ्ख्यकधनत्वेन च । 'लक्षञ्च सङ्ख्यायाम्' इति विश्वः । दध्यौ मेने, प्रियदत्तं वराटकमपि रत्नात् अतिरिच्यते इति भावः ॥ ५ ॥

प्रिय ( नल ) के द्वारा दिये हुए थोड़ा अर्थात् एक कमलको भी उस ( दमयन्ती ) ने बहुत ( अत्यधिक, पक्षा०—अत्यादरणीय ) माना, क्योंकि श्रेष्ठ बीजकोषवाले उस दिये गये कमलको एकटक होकर ध्यान किया—देखा, ( अथ च—प्रियजनसे दी गयी थोड़ी-सी भी किसी वस्तुको इसने अत्यधिक माना, क्योंकि प्रियकी दी हुई एक कौड़ीको भी एक लाख धनके बराबर माना ) । [ प्रियतमदत्त साधारण वस्तुका भी अधिक मानना दमयन्ती-जैसी साध्वी स्त्रीके लिए उचित ही है ] ॥ ५ ॥

प्रेयसावादि सा तन्वी त्वदालिङ्गनविघ्नकृत् ।
समाप्यतां विधि[1]: शेषः क्लेशश्चेतसि चेन्न ते ? ॥ ६ ॥

प्रेयसेति । प्रेयसा प्रियतमेन नलेन, तन्वी कृशाङ्गी, सा दमयन्ती, अवादि कथिता । किमवादि ? तदेवाह—हे प्रिये ! चेत् यदि, ते तव, चेतसि मनसि, क्लेशः दुःखम्, मदागमनविलम्बजनितमिति भावः, न, भवेदिति शेषः । तर्हि त्वदालिङ्गनस्य तव आश्लेषजनितसुखस्य, विघ्नकृत् अन्तरायभूतः, शेषः प्रातः स्नानसन्ध्योपासनानन्तरं कर्त्तव्यतया अवशिष्टः, विधिः नित्याग्निहोत्रादेः अनुष्ठानम्, समाप्यतां समाप्तिः विधीयताम्, मयेति शेषः, भवत्या एतेषां कर्मणां समाप्तिः अनुज्ञायतामित्यर्थः ॥ ६ ॥

प्रियतम ( नल ) ने तन्वी ( कृशोदरी दमयन्ती ) से कहा कि—'यदि तुम्हारे चित्तमें क्लेश नहीं हो तो तुम्हारे आलिङ्गनके विघ्नकारक अवशिष्ट ( बचे हुए, अग्निहोत्रादि ) नित्यकर्मको भी ( मैं ) समाप्त कर लूं' ॥ ६ ॥

---

१. 'विधेः' इति पाठान्तरम् ।

क्वैतावान्नर्ममर्मावि‌द्विद्यते विधिरद्य ते ? ।
इति तं मनसा रोषादवोचद्वचसा न सा ॥ ७ ॥

क्वेति । अद्य इदानीमपि, त्वयि मम प्रगाढानुरक्तिं विदित्वाऽपीति भावः । यद्वा—प्रत्यूषे उत्थाय स्नानार्थं गतोऽसि, तदनन्तरं बहवः कालाः अपगताः, इदानीमपीति भावः । ते तव, एतावान् इयान्, नर्मणः क्रीडासुखस्य, मर्म विध्यतीति मर्मावित् मर्माभिघातकः, अतीव क्लेशप्रदप्रतिबन्धक इत्यर्थः । 'नहिवृति—' इत्यादिना पूर्वस्य दीर्घः । विधिः नित्यक्रियानुष्ठानम्, क्व कुतः, किमर्थमित्यर्थः । विद्यते ? अस्ति ? बहुक्षणं त्वया सह वियुक्ता अस्मि, न पुनरिदानीं विलम्बं सोढुं मया शक्यते, अतः वैधानुष्ठानमिदानीं तिष्ठतु, आगच्छ मत्समीपमित्याशयः, इति एवम्, सा भैमी, रोषात् कोपात्, नलस्य आगमनविलम्बजनिताभिमानादिति भावः । तं नलम्, मनसा चेतसा, अवोचत् उक्तवती, वचसा वाक्येन, सुस्पष्टमित्यर्थः, न, अवोचदिति पूर्वक्रियया अन्वयः । लज्जादाक्षिण्यादिति भावः ॥ ७ ॥

उस ( दमयन्ती ) ने उस ( नल ) के प्रति मनसे ही क्रोधयुक्त यह वचन कहा, ( लज्जा तथा दाक्षिण्यके कारण ) वचनसे नहीं कहा—आलिङ्गनादि क्रीडा-रहस्यका विघातक आज इतनी विधि ( नित्यानुष्ठान ) कहांसे हो गया ? [ 'आपको स्नानार्थ गये बहुत विलम्ब हो गया, आजतक इतना नित्यानुष्ठान कभी नहीं करते थे, सो आज मेरी आलिङ्गनादि क्रीडाका विघातक इतना नित्यानुष्ठान कहांसे बाकी रह गया ?' इस प्रकार दमयन्तीने क्रोधसे नलको मूक उत्तर दिया, स्पष्ट कुछ नहीं कहा ] ॥ ७ ॥

क्षणविच्छेदकादेव विधेर्मुग्धे ! विरज्यसि ।
[1]विच्छेत्ताहे चिरं नु त्वा हृदाऽऽह स्म तदा कलिः ॥ ८ ॥

क्षणेति । मुग्धे ! हे मूढे ! भैमि ! क्षणविच्छेदकादेव किञ्चित्कालमात्रविरहसम्पादकादेव, विधेः अनुष्ठानात्, विरज्यसि विरक्ता भवसि, किन्तु, नु भोः ! त्वा त्वाम् । 'त्वामौ द्वितीयायाः' इति त्वाऽऽदेशः । चिरं चिरकालम्, विच्छेत्ताहे विच्छेत्स्यामि । छिदेः स्वरितेत्वाल्लुटि तङि इट्, 'स्यतासी लृलुटोः' इति धातोः तासि प्रत्यये कृते 'टितः आत्मनेपदानां टेरे' इत्यनेन इटष्टेरेत्वे 'ह एति' इति सकारस्य हकारः । अहमिति शेषः । इति एवं, तदा तत्काले, दमयन्त्याः मुखमलिनीकरणसमये इत्यर्थः । कलिः कलिपुरुषः, हृदा स्वचेतसा, आह स्म उवाच । यद्यपि अधुना किमपि अनिष्टं कर्त्तुं न शक्नोमि, तथाऽपि रन्ध्रान्वेषी तिष्ठामि इति भावः । नलस्य पापच्छिद्रमन्विष्यन् ईर्ष्युः कलिः तयोः प्रासादसमीपवर्त्तिनि अक्षवृक्षे अधिष्ठानं कृतवानिति प्राक् वर्णितमासीत्, तत्रस्थ एव स नलदमयन्त्योः आलापनं श्रुत्वा विरहेण दीनाननां भैमीं विलोक्य एवमुक्तवानिति मन्तव्यम् ॥ ८ ॥

---

१. 'विच्छेत्ता न चिरं त्वेति' इति 'प्रकाश' सम्मतः पाठः ।

'हे मुग्धे ( मोहित चित्तवाली दमयन्ति ) ! क्षणमात्र वियोग करानेवाले नित्यानुष्ठानसे ही विरक्त ( या—विह्वल ) होती हो ?, मैं तुमको चिरकालतक वियुक्त करूंगा ( पाठा०—मैं तुमको शीघ्र वियुक्त करूंगा )' इस प्रकार ( नलके क्रीडोद्यानस्थ बहेड़ेके वृक्षपर रहते हुए नलच्छिद्रान्वेषी ) कलिने अपने मनमें ही कहा ॥ ८ ॥

सावज्ञेवाथ सा राज्ञः सखीं पद्ममुखीमगात् ।
लक्ष्मीः कुमुदकेदारादारादम्भोजिनीमिव ॥ ९ ॥

सावज्ञेति । अथ नलवाक्यश्रवणानन्तरम्, सा भैमी, सावज्ञेव सतिरस्कारेव सती, स्वां विहाय होमाद्यनुष्ठानार्थं नलस्य गमनाभिप्रायात् सावमानेव सतीत्यर्थः । लक्ष्मीः, शोभा, कुमुदकेदारात् कैरवक्षेत्रात्, तं विहाय इत्यर्थः । आरात् कुमुदाकरसमीपस्थिताम्, पद्ममेव मुखं यस्याः तादृशीम्, अम्भोजिनीं पद्मिनीम् इव, प्रातःकाले इति भावः । राज्ञः नलसमीपात्, राजानं विहाय इति वा । कर्मणि ल्यप्लोपे पञ्चमी । आरात् समीपे, समीपवर्त्तिनीमित्यर्थः । पद्मम् इव मुखं यस्याः तादृशीम्, सखीं वयस्याम्, अगात् अगमत्, अवज्ञाता हि अवज्ञाकारिणं विहाय गच्छन्तीति प्रसिद्धिः । लक्ष्मीनिर्गमे कुमुदक्षेत्रस्य यथा मालिन्यं तत्सम्पर्कात् पद्मानां च यथा विकासो भवति, तथा भैमीविरहात् नलमुखस्य मालिन्यं तत्समागमात् सखीमुखस्य च स्मितशोभित्वं सूचितमनया उपमया इति द्रष्टव्यम् ॥ ९ ॥

इसके बाद तिरस्कारयुक्त-सी वह ( दमयन्ती ) राजा नलके पाससे पद्ममुखी ( पद्मवत् सुन्दर मुखवाली, अथच—'पद्ममुखी' नामवाली ) सखीके पास उस प्रकार गयी, जिस प्रकार ( प्रातःकालमें ) कुमुद-क्षेत्रसे समीपवर्ती कमलरूप मुखवाली अम्भोजिनीके पास शोभा जाती है । [ प्रातःकालमें जिस प्रकार शोभारहित कुमुदनिमीलित होनेसे मलिनमुख और कमलिनी विकसित होनेसे प्रसन्नमुख होती है, उसी प्रकार दमयन्तीके चले जानेसे नल मलिनमुख ( खिन्न ) हो गये और सखी प्रसन्नमुखी हो गयी ] ॥ ९ ॥

ममासावपि मा सम्भूत् कलिद्वापरवत् परः ।
इतीव नित्यसत्रे तां स त्रेतां पर्यतूतुषत् ॥ १० ॥

ममेति । असौ त्रेता अपि, कलिद्वापरवत् चतुर्थतृतीययुगाधीशाविव, मम मे, परः शत्रुः, मा सम्भूत् न जायतां, माङ्योगादडभावः । इतीव इति मत्वेव, सः नलः, नित्यसत्रे प्रत्यहमनुष्ठेययज्ञे अग्निहोत्रे, 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रम्' इति श्रुत्या नित्यत्वावगमादित्यर्थः । 'सत्रमाच्छादने यज्ञे' इत्यमरः । ताम् आहवनीय-गार्हपत्य-दक्षिणाग्नित्वेन प्रसिद्धाम्, रामरावणादीनां विविधव्यापाराश्रयत्वेन प्रसिद्धाञ्च, त्रेताम् अग्नित्रयम्, द्वितीययुगञ्च । 'त्रेता त्वग्नित्रये युगे' इत्यमरः । पर्यतूतुषत् हविषा परितोषयामास । 'सत्कर्मणि पततः—' इत्यादिना विकल्पेनोपधाया ह्रस्वः॥१०॥

'यह ( 'त्रेता' नामक द्वितीय युगाधिष्ठातृदेव ) भी कलि तथा द्वापरके समान मेरा

शत्रु न हो जाय', मानो ऐसा मानकर उस ( नल ) ने नित्ययज्ञ ( अग्निहोत्र ) में उस 'त्रेता' ( गार्हपत्य, आहवनीय तथा दक्षिणाग्नि, पक्षा०—'त्रेता' नामक द्वितीय युगके अधिष्ठाता देवविशेष ) को ( हविष्यसे ) सब प्रकार तुष्ट किया अर्थात् अग्निहोत्र किया। [ अग्नित्रयको अग्निहोत्र कर्ममें हवनद्वारा तुष्ट नहीं करनेपर नित्यानुष्ठानजन्य प्रत्यवाय होनेके भयसे नलने 'त्रेता' ( अग्नित्रय ) को हवन करके सन्तुष्ट किया, किन्तु वस्तुवमें तो वे दमयन्तीके ही अधीन थे ] ॥ १० ॥

( युग्मम् )

क्रियां प्राह्णेतनीं कृत्वा निषेधन् पाणिना सखीम् ।
कराभ्यां पृष्ठगस्तस्या न्यमीमिलदसौ दृशौ ॥ ११ ॥
दमयन्त्या वयस्याभिः सहास्याभिः समीक्षितः ।
प्रसृतिभ्यामिवायामं मापयन् प्रेयसीदृशोः ॥ १२ ॥

क्रियामिति । असौ नलः, प्राह्णेतनीं प्राह्णे भवाम्, पूर्वाह्णकृत्यामित्यर्थः । 'सायं चिरम्—' इत्यादिना ट्युप्रत्ययः तस्य तुट् च । तस्मात् एव निपातनात् प्राह्णेतनी-मिति । क्रियाम् अनुष्ठानम्, कृत्वा विधाय, सखीं पूर्वोक्तां सहचरीम्, पाणिना हस्तसंज्ञया, निषेधन् निवारयन्, स्वागमनं विज्ञापयितुमिति शेषः, तस्याः भैम्याः, पृष्ठगः पश्चाद्देशे स्थितः सन् कराभ्यां पाणिभ्याम्, दृशौ लोचने, दमयन्त्या एव इति शेषः, न्यमीमिलत् अवारुणत्, कौतुकार्थमिति भावः । 'भ्राजभास—' इत्यादिना विकल्पेनोपधाया ह्रस्वविधानात् पक्षे ह्रस्वः[1] ॥ दमयन्त्या इति । प्रसृतिभ्यां निकुब्ज-पाणिभ्याम्, गण्डूषार्थं क्रियमाणकरतुल्यसङ्कोचितकराभ्यामित्यर्थः । 'पाणिर्निकुब्जः प्रसृतिः' इत्यमरः । प्रेयसीदृशोः भैमीनयनयोः, आयामं दैर्घ्यम्, मापयन् तोलयन् इव स्थितः, मातेः माङो वा ण्यन्तात् लटः शत्रादेशः । तथा सहास्याभिः सम्मुखतः नलदर्शनात् ईषत् हसन्तीभिः, दमयन्त्याः भैम्याः, वयस्याभिः सखीभिः, समीक्षितः दृष्टः, असौ नलः लोचने न्यमीमिलदिति पूर्वेणान्वयः ॥ ११-१२ ॥

प्रातःकालकी ( अवशिष्ट अग्निहोत्रादि ) क्रिया समाप्तकर ( 'मैं आग या हूँ' यह बात प्रिया दमयन्तीसे मत कहो' इस प्रकार ) हाथसे सखीको मना करते हुए, ( अत एव ) हँसती हुई सखियोंसे देखे गये तथा प्रियाके नेत्रद्वयको मानो दोनों पसरोंसे मापते हुए उस नलने पीछेसे आकर उस ( दमयन्ती ) के नेत्रोंको बन्द कर दिया ॥ ११-१२ ॥

तर्किताऽऽलि ! त्वमित्यर्द्ध-वाणीका पाणिमोचनात् ।
ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी ॥ १३ ॥

तर्कितेति । आलि ! हे सखि ! त्वं नेत्राच्छादिका भवती, तर्किता अवधारिता,

---

१. 'णौ चङि—' इत्युपधाया ह्रस्वः इति 'प्रकाश'-व्याख्यानमेव समीचीनं भाति।

अनुमानेन ज्ञाता इत्यर्थः, मया इति शेषः । इति एवम्, अर्द्धा 'अतो मां जहीहि' इत्यवशिष्टांशस्य अवचनात् असम्पूर्णरूपा, वाणी वाक्यं यस्याः सा तादृशी । शैषिकः कप् । पाण्योः नयनपिधायकनलहस्तयोः, मोचनात् निजपाणिभ्याम् अपनोदनात् हेतोः, ज्ञातं विदितम्, स्पर्शान्तरम् अन्यविधः स्पर्शः, सखीस्पर्शात् विलक्षणः नलस्पर्शः इत्यर्थः । यया सा तादृशी निश्चितप्रियपाणिस्पर्शा, दमयन्तीति शेषः । मानसेविनी अभिमानवती, नलस्य दमयन्त्यनादरपूर्वकत्रेतानुरक्तत्वेन तस्मिन् मानवती सतीत्यर्थः । मौनं नीरवताम्, आनशे प्राप, न किञ्चिदूचे कोपादिति भावः ॥ १३ ॥

हे सखि ! ( नेत्र वन्द करनेवाली तुमको मैंने ) अनुमानसे जान लिया, ऐसी आधी बात कही हुई, तथा ( अपने हाथोंसे नलके ) हाथोंको छुड़ानेसे ( पतिके ) स्पर्शको पहचानती हुई ( मेरे साथ आलिङ्गनादि छोड़कर 'त्रेता' में अनुरक्त होनेसे नलके प्रति ) मान करनेवाली दमयन्ती चुप हो गयी । [ 'तुमको मैंने अनुमानसे जान लिया' इतनी आधी बात ही दमयन्तीने सखीको सम्बोधितकर कहा था 'अतः अब मुझे छोड़ दो' यह आधी बात कहना बाकी ही था, इतनेमें अपने हाथसे नलके हाथको छुड़ाते समय उनके स्पर्शको पहचान लेनेसे 'अरे मैं तो 'सखीने आँख वन्द किया है' ऐसा समझती थी, किन्तु ये सखी नहीं, अपितु प्रियतम नल हैं' ऐसा जानकर मानयुक्त होनेसे उक्त बातको पूरा नहीं कहा, किन्तु आधी बात कह कर ही चुप लग गयी ] ॥ १३ ॥

साऽवाचि[1] सुतनुस्तेन कोपस्ते नायमौचिती ।
त्वां प्रापं[2] यत्प्रसादेन प्रिये ! तन्नाद्रिये तपः ॥ १४ ॥

सेति । तेन नलेन, सुतनुः अनवद्याङ्गी, सा भैमी, अवाचि उक्ता । वचेः कर्मणि लुङ् । तदेवाह—हे प्रिये ! ते तव, अयं क्रियमाणः, कोपः रोषः, नौचिती न न्यायः, अनुचित इत्यर्थः । तथा हि, यस्य तपसः, प्रसादेन अनुग्रहेण, त्वां भवतीम्, प्रापं प्राप्तवान् अस्मि, अहमिति शेषः । आप्नोतेर्लुङ् 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽमादेशः । तत् महोपकारि, तपः अग्निहोत्रादिकर्म, न आद्रिये ? न सत्करोमि ? इति काकुः, अपि तु अवश्यमेव तस्य समादरं करोमि, तत्प्रसादादेव यतः त्वां लब्धवानस्मि इति निष्कर्षः ॥ १४ ॥

सुन्दर शरीरवाली दमयन्तीसे नलने कहा कि—'तुम्हें यह कोप करना उचित नहीं है, ( क्योंकि ) जिसके प्रसादसे ( मैंने ) तुम्हें पाया है, उस तपका मैं आदर नहीं करूँ? अर्थात् तुम्हें प्राप्त करानेमें कारण होनेसे उस तप ( अग्निहोत्रादि नित्यानुष्ठान ) का मुझे आदर करना ही चाहिये, अत एव तुम्हें मुझपर क्रोध करना उचित नहीं है ॥ १४ ॥

निशि दास्यं गतोऽपि त्वां स्नात्वा यन्नाभ्यवीवदम् ।
तं प्रवृत्ताऽसि मन्तुं चेन्मन्तुं तद्वद वन्द्यसे ॥ १५ ॥

---

१. 'साऽवादि' इति 'प्रकाश' सम्मतः पाठः । २. 'प्राप' इति पाठान्तरम् ।

निशीति । हे प्रिये ! निशि रात्रौ, दास्यं दासत्वम् , तवेति शेषः । चरणमर्दन-व्यजनादिना सुरतश्रान्त्यपनोदनार्थमिति भावः । गतः प्राप्तोऽपि, अहमिति शेषः, स्नात्वा स्नानात् आगत्य, त्वां भवतीम् , यत् न अभ्यवीवदं न अभिवादितवान् अस्मि । वदेरभिवादनार्थाच्चौरादिकात् ण्यन्ताच्चङि 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वः । तम् अनभिवादनमेव, मन्तुम् अपराधम् , 'आगोऽपराधो मन्तुश्च' इत्यमरः । मनेरौणादिकस्तुमुन्प्रत्ययः । मन्तुं विवेचयितुम् । । मन्यतेस्तुमुन्प्रत्ययः । प्रवृत्ता उद्युक्ता, असि भवसि, चेत् यदि, दासस्याप्रणतेरपराधत्वादिति भावः । तत् तर्हि, वद कथय, वन्द्यसे नमस्क्रियसे, इदानीमेव मया त्वमिति शेषः । प्रणिपात-प्रतीकारत्वात् अपराधस्येति भावः ॥ १५ ॥

( सुरतश्रमको दूर करनेके लिए चरणसंवाहन, व्यजनचालन आदि करके ) रात्रिमें तुम्हारे दासभावको प्राप्त भी मैंने ( प्रातःकाल ) स्नानकर जो अभिवादन नहीं किया, उसीको तुम अपराध माननेके लिये तैयार हो तो कहो, ( यह मैं तुम्हारा ) अभिवादन करता हूं । [ प्रणिपातपर्यन्त सज्जनोंका क्रोध होनेसे अभिवादन करनेपर तुम्हें मुझपर क्रोध करना छोड़ देना चाहिये ] ॥ १५ ॥

इत्येतस्याः पदासक्त्यै पत्यैषा प्रेरितौ[1] करौ ।
रुद्ध्वा सकोपं सातङ्कं तं कटाक्षैरमूमुहत् ॥ १६ ॥

इतीति । एषा दमयन्ती, पत्या प्रियेण नलेन, इति इत्थम् , उक्त्वेति शेषः, एतस्याः प्रियाया भैम्याः, पदासक्त्यै अभिवादनार्थं पादग्रहणाय, प्रेरितौ प्रसारितौ, करौ हस्तौ, रुद्ध्वा स्वकराभ्यां निरुध्य, सकोपम् अनर्हकरणात् सक्रोधम् , सातङ्कं सभयञ्च, स्वचरणे स्वामिकरस्पर्शस्य अनौचित्यादिति भावः । कटाक्षैः अपाङ्गविलो-कनैः, तं प्रियम् , अमूमुहत् मोहयति स्म, स्मरार्त्तं कृतवतीत्यर्थः ॥ १६ ॥

ऐसा ( २०।१४-१५ ) कहकर इस ( दमयन्ती ) ने चरण-स्पर्शके लिए पति ( नल ) के द्वारा बढ़ाये गये दोनों हाथोंको क्रोध तथा ( पतिके द्वारा मेरे चरणोंका स्पर्श न हो जाय, इस भावनासे ) भयके साथ रोककर कटाक्षसे उस ( नल ) को मोहित कर लिया अर्थात् कटाक्षोंद्वारा दमयन्तीने नलको कामाधीन कर लिया ॥ १६ ॥

अवोचत ततस्तन्वीं निषधानामधीश्वरः ।
तदपाङ्गचलत्तारा-झलत्कारवशीकृतः ॥ १७ ॥

अवोचतेति । ततः कटाक्षैर्मुग्धीभावानन्तरम् , तस्याः प्रियायाः, अपाङ्गे नेत्रान्ते, चलन्त्याः भ्रमन्त्याः, तारायाः कनीनिकायाः, झलत्कारेण प्रभास्फुरणेन, वशीकृतः आयत्तीभूतः, निषधानां निषधदेशीयानाम् , अधीश्वरः अधिपतिः नलः, तन्वीं कृशाङ्गीं प्रियाम् , अवोचत अभाषत । ब्रुवो लुङि रूपम् ॥ १७ ॥

---

१. 'प्रेपितौ' इति पाठान्तरम् ।

तदनन्तर ( दमयन्ती-कटाक्षोंसे मोहित होनेके बाद ) उस ( दमयन्ती ) के नेत्रप्रान्तमें चञ्चल कनीनिकाओं ( नेत्रकी पुतलियों ) की स्फुरित होती हुई प्रभासे वशीभूत नल तन्वी ( कृशाङ्गी दमयन्ती ) से बोले ॥ १७ ॥

**कटाक्षकपटारब्ध-दूरलङ्घनरंहसा ।**
**दृशा भीत्या निवृत्तं ते कर्णकूपं निरूप्य किम् ? ॥ १८ ॥**

**कटाक्षेति । हे प्रिये ! कटाक्षकपटेन अपाङ्गदर्शनव्याजेन, आरब्धम् उपक्रान्तम्, दूरलङ्घनरंहः विप्रकृष्टदेशोत्पतनवेगः यया तादृशया, ते तव, दृशा नयनेन, कर्णः श्रुतिः एव, कूपः गर्त्तः तम्, निरूप्य निरीक्ष्य, भीत्या भयेन, कूपलङ्घनोपक्रमे तत्र पतनभिया इत्यर्थः । निवृत्तं किम् ? निरस्तं किम् ? दूरलङ्घनेच्छुरन्योऽपि जनः सम्मुखे कूपं तिष्ठेच्चेत् तत्र पतनभिया स्वारब्धात् निवृत्तो भवतीति लोके दृश्यते । आकर्णविश्रान्तलोचना दमयन्तीति तात्पर्यम् ॥ १८ ॥**

कटाक्षके कपटसे दूरतक जानेके लिये वेगको आरम्भ की हुई अर्थात् सवेग चलती हुई तुम्हारी दृष्टि कानरूप कूएका निश्चयकर ( उसमें गिरनेके ) भयसे लौट आयी क्या ? [ लोकमें भी दूरतक जानेके लिए वेगपूर्वक चलना आरम्भ करके कोई व्यक्ति मार्गमें कूपको देखकर उसमें गिरनेके भयसे जिस प्रकार वापस लौट आता है, उसी प्रकार कटाक्षके छलसे दूर ( कानसे भी आगे ) तक जानेके लिए सवेग दृष्टि कर्णकूपको देखकर लौट आयी है क्या ? ऐसा ज्ञात होता है ] ॥ १८ ॥

**सरोषाऽपि सरोजाक्षि ! त्वमुदेषि मुदे मम ।**
**तप्ताऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥**

**सरोषेति । सरोजाक्षि ! हे कमललोचने ! सरोषाऽपि रुष्टाऽपि, त्वं भवती, मम मे, मुदे हर्षाय एव, उदेषि भवसि, नयनाननयोः तात्कालिकसुषमाया अतीवरमणीयत्वादिति भावः । तथा हि—तप्ता उष्णा अपि, सूर्यस्य इयं सौरी सूर्यसम्बन्धिनी । 'सूर्यागस्त्ययोः—' इत्यादिना यकारलोपः । सौरी च सा भा प्रभा च सौरभा सूर्यप्रभा । 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । शतपत्रस्य कमलस्य, सौरभाय एव सुरभित्वाय एव, प्रस्फुटनद्वारा सुगन्धवितरणायैवेत्यर्थः, न तु शोषणाय, भवतीति शेषः । दृष्टान्तालङ्कारः ॥ १९ ॥**

हे कमलनयनी ( दमयन्ति ) ! क्रोधयुक्त भी तुम मेरे हर्षके लिए होती हो, क्योंकि उष्ण भी सूर्य-कान्ति कमलके ( विकसित करके ) सुगन्धिके लिए ही होती है ( शोषणके लिए नहीं ) । [ तुम्हारे क्रोध करनेपर भी आलिङ्गनादि करनेके लिए उत्तम शोभा होनेसे मुझे आनन्द ही होता है ] ॥ १९ ॥

---

१. 'दृशाभ्येत्य' इति पाठान्तरम् ।

छेत्तुमिन्दौ भवद्वक्त्र-बिम्बविभ्रमविभ्रमम् ।
शङ्के शशाङ्कमानङ्क्षे भिन्नभिन्नविधिर्विधिः ॥ २० ॥

छेत्तुमिति । हे प्रिये ! भिन्नभिन्नः पृथक् पृथक् प्रकारः, अत्यन्तविलक्षणरूप इत्यर्थः । विधिः निर्माणव्यापारः यस्य सः तादृशः, विधिः विधाता, इन्दौ चन्द्र, भवत्याः तव, वक्त्रबिम्बस्य मुखमण्डलस्य । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' । यः विभ्रमः शोभा, तस्य विभ्रमं भ्रान्तिम् । 'विभ्रमः संशये भ्रान्तौ शोभायाञ्च' इति यादवः । सादृश्यजन्यं लोकानां तव मुखभ्रममित्यर्थः । छेत्तुं निराकर्त्तुम् । छिदेः तुमुन् । शशाङ्कं शशस्य मृगस्य, अङ्कं चिह्नम् , आनङ्क्षे अङ्कितवान् । 'अकि लक्षणे' इति धातोर्भ्वादिकाल्लिटि तङ्, 'तस्मान्नुड् द्विहलः' इति नुडागमः । इति शङ्के मन्ये, अहमिति शेषः । ईदृशाकरणे निश्चितमेव इन्दौ लोकानां तव मुखभ्रान्तिरुत्पद्येत इति भावः ॥ २० ॥

भिन्न-भिन्न विधिवाले अर्थात् प्रत्येक वस्तुकी एक दूसरेसे भिन्न रचना करनेवाले ब्रह्माने तुम्हारे मुखकी शोभाके विशिष्ट भ्रम ( अथवा—विलास ) को नष्ट करनेके लिए चन्द्रको शशसे चिह्नित कर दिया है, ऐसी मैं शङ्का करता हूँ। [ यदि चन्द्रमें शशचिह्न नहीं होता तो वह तुम्हारे मुखकी शोभाको प्राप्त करता, तथा 'यह चन्द्र है या दमयन्ती-मुख ?' इस प्रकारका भ्रम लोगोंको हो जाता; किन्तु वैसा नहीं होनेसे इस समय तुम्हारा मुख चन्द्रसे भी अधिक सुन्दर है तथा लोगोंको तुम्हारे मुख तथा चन्द्रके पहचाननेमें भ्रम नहीं होता है ] ॥ २० ॥

ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः[1] ।
बद्धस्पर्द्धतरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ २१ ॥

ताम्रेति । प्रसन्नाः प्रसादगुणसम्पन्नाः, सुस्पष्टा इत्यर्थः । स्वच्छाश्च, स्वादवः मनोज्ञाः, श्रवणपिपसावर्द्धकाः इति यावत् । सुमधुराश्च 'स्वादू मिष्टमनोज्ञयोः' इति मेदिनी । तव भवत्याः, वर्णाः त्वन्मुखोच्चरितानि अक्षराणि, ताम्रपर्ण्याः तदाख्यायाः स्वच्छजलायाः कस्याश्चित् नद्याः, तटे तीरदेशे, उत्पन्नैः सञ्जातैः, अत एव स्वच्छैरिति भावः । तथा इन्दुकुक्षिजैः चन्द्रगर्भोत्पन्नैश्च, अत एव पीयूषसम्पर्कात् मधुरैरिति भावः । मौक्तिकैः मुक्ताफलैः सह, बद्धस्पर्द्धतराः बद्धा धृता इत्यर्थः, स्पर्द्धा सादृश्यजनिताभिमानः यैस्ते तादृशाः बद्धस्पर्द्धाः अतिशयेन बद्धस्पर्द्धाः बद्धस्पर्द्धतराः, भवन्तीति शेषः । ततोऽपि तव वर्णानामेव अधिका स्वच्छता मधुरता च इति भावः ॥ २१ ॥

ताम्रपर्णी नदीके तीरमें तथा चन्द्र ( पक्षा०—गन्ने ) के मध्यमें उत्पन्न मोतियोंसे ( स्वच्छता स्वादुतामें समानता होनेके लिए ) अधिक स्पर्द्धा करनेवाले तुम्हारे वर्ण ( मुखो-

---

१. '—रिक्षुकुक्षिजैः' इति पाठान्तरम् ।

च्चारित अक्षर ) निर्मल तथा स्वादिष्ट ( कर्णमधुर ) हैं । [ मलयाचलसे निकलकर दक्षिण समुद्रमें गिरनेवाली स्वच्छतम जलवाली ताम्रपर्णी नदीके तीरमें उत्पन्न मोती केवल स्वच्छ ही होंगे, अत एव अमृतमय चन्द्र ( अथवा—मधुरतम इक्षु=गन्ना ) से उत्पन्न होनेको कहा गया है, अतएव अपनेमें अधिक स्वच्छता तथा स्वादिष्टता होनेके अभिमानसे तुम्हारे मुखसे उच्चारण किये गये अक्षर उक्तरूप मोतियोंसे अधिक स्पर्द्धा करते हैं और उन मोतियोंसे अधिक स्वच्छ तथा मधुर ( कर्णप्रिय ) लगते हैं ] ॥ २१ ॥

**त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः ।**
**अद्य यावदहो ! धावद्दुग्धलेपलवस्मिताः ॥ २२ ॥**

**त्वदिति । हे प्रिये ! त्वद्गिरः तव वाक्यानि, सुधया अमृतेन, सहैव सार्द्धमेव, क्षीरपाथोधेः दुग्धसागरात्, उत्थिताः उद्गताः, इवेति शेषः । अतः सुधासंसर्गादेव तासां सुधावत् माधुर्यं प्रतीयते इति भावः। ततश्च अद्य यावत् अद्यपर्यन्तमपीत्यर्थः। धावन्ति स्रवन्ति, दुग्धलेपानां क्षीरसमुद्रे अवस्थानात् लिप्तक्षीराणाम्, लवाः बिन्दव एव, स्मितानि ईषद्धास्यानि याभ्यः ताः तादृश्यः, यद्वा—धावतां स्रवताम्, दुग्धानां लेपस्य तत्र संसृष्टस्य, लवा एव स्मितानि यासु ताः तादृश्यः परिलक्ष्यन्ते इति शेषः। इति अहो ! आश्चर्यम् ! स्मितव्याजेन क्षीरलिप्तत्वात् त्वद्गिरां सुधया क्षीरेण च सार्द्धं क्षीरसागरोत्पन्नत्वम् उन्नीयते, अन्यथा तथाभावासम्भवादिति भावः ॥ २२ ॥**

तुम्हारे वचन क्षीरसमुद्रसे अमृतके साथ ही निकले हैं, क्योंकि आजतक ये फैलते हुए दुग्धलेपके अंशरूप स्मितसे युक्त हैं अहो ! ( आश्चर्य है ) । [ स्मितके छलसे आजतक क्षीरसमुद्रके दुग्धांशयुक्त तथा मधुर होनेसे अमृतयुक्त इन तुम्हारे वचनोंके होनेका अनुमान होता है ] ॥ २२ ॥

**पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव ।**
**अलञ्चक्रे स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥ २३ ॥**

**पूर्वेति । आश्लिष्टा आलिङ्गिता, स्पृष्टा इति यावत्, चन्द्रिका कौमुदी येन सः तादृशः, चन्द्रमाः चन्द्रः, पूर्वपर्वतम् उदयाद्रिम् इव, अङ्कसङ्क्रमिता क्रोडारोपिता, प्रिया दमयन्ती येन सः तादृशः क्रोडोपवेशितभैमीकः 'अपूरणीप्रियादिषु' इति वचनान्न प्रियापरस्य पूर्वपदस्य 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । सः नलः, पर्यङ्कं शयनम्, अलञ्चक्रे भूषयामास, उपविवेश इत्यर्थः ॥ २३ ॥**

चाँदनीका आश्लेष ( स्पर्श ) कर चन्द्रमा जिस प्रकार उदयाचलको अलङ्कृत करता है, उसी प्रकार क्रोडमें प्रिया ( दमयन्ती ) को लिये हुए उस ( नल ) ने पलङ्कको अलंकृत किया । [ नल दमयन्तीको अङ्कमें लेकर पलङ्कपर बैठ गये ] ॥ २३ ॥

प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियाम् ।
परीरभ्य चिरायास विश्लेषायाससुक्तये ॥ २४ ॥

प्रावृडिति । स्निग्धः अनुरक्तः, दमयन्तीं प्रति प्रीतिसम्पन्नः इत्यर्थः । जलगर्भत्वात् मसृणश्च । सः नलः, प्रावृडारम्भणे वर्षाप्रारम्भे, अम्भोदः मेघः, द्यां नभस्थलीम् इव, विश्लेषायासमुक्तये वियोगक्लेशपरिहाराय, प्रियां भैमीम्, परीरभ्य आलिङ्ग्य, चिराय दीर्घकालपर्यन्तम्, आस शुशुभे, चिरमाश्लिष्य अवस्थितः इत्यर्थः । 'आसेति तिङन्तप्रतिरूपकम्' इति शाकटायनः, वामनश्च 'अस गतिदीप्त्यादानेष्विति अस्धातोः' इत्याह 'आसेत्यसतेः' इति ॥ २४ ॥

(दमयन्तीके प्रति) अनुरक्त (पक्षा०—जलपूर्ण होनेसे कृष्णवर्ण) वह नल, वर्षारम्भमें मेघ (शरद् ऋतुमें आकाशमें उड़नेके कारण) पक्षियोंके सम्बन्धरूप आयासको दूर करनेके लिए प्रिय आकाशका आलिङ्गन कर (व्याप्त होकर) जिस प्रकार बहुत देरतक ठहरता है; उसीप्रकार (स्नान अग्निहोत्र आदि नित्यानुष्ठानके विलम्बसे उत्पन्न) विरहदुःखको दूर करनेके लिये प्रिया दमयन्तीका आलिङ्गनकर बहुत देर तक ठहरे अर्थात् बहुत देरतक उसे आलिङ्गनकर अङ्कमें लिये रहे ॥ २४ ॥

चुचुम्बास्यमसौ तस्या रसमग्नः श्रितस्मितम् ।
नभोमणिरिवाम्भोजं मधुमध्यानुबिम्बितः ॥ २५ ॥

चुचुम्बेति । रसमग्नः अनुरागसागरान्तर्निविष्टः, असौ नलः, श्रितस्मितं प्राप्तमन्दहासम्, आलिङ्गनजन्यानन्देन क्रोधापगमादिति भावः । प्राप्तविकासञ्च, तस्याः दमयन्त्याः, आस्यं मुखम्, मधुमध्ये कमलस्यैव मकरन्दाभ्यन्तरे, अनुबिम्बितः प्रतिफलितः, एवञ्च नभोमण्यम्भोजयोः परस्परं सुदूरव्यवधाने सत्यपि चुम्बने न काऽप्यनुपपत्तिरिति मन्तव्यम् । नभोमणिः रविः, अम्भोजं कमलम् इव, चुचुम्ब चुम्बितवान् ॥ २५ ॥

प्रेमरससे परिपूर्ण उस (नल) ने (बहुत देरतक आलिङ्गन करनेके कारण क्रोधके नष्ट होनेसे) स्मितयुक्त दमयन्तीके मुखका उस प्रकार चुम्बन किया, जिस प्रकार कमलमधुमें प्रतिबिम्बित एवं जलमें मग्न सूर्य विकसित कमलका चुम्बन (प्रतिबिम्बित होकर अतिशय निकटस्थ होनेसे स्पर्श) करता है ॥ २५ ॥

अथाहूय कलां नाम पाणिना स प्रियासखीम् ।
पुरस्ताद्वेशितामूचे कर्तुं नर्मणि साक्षिणीम् ॥ २६ ॥

अथेति । अथ चुम्बनानन्तरम्, स नलः, कलां नाम कलानाम्नीम्, प्रियासखीं भैम्याः, वयस्याम्, नर्मणि परिहासक्रीडायाम्, साक्षिणीं प्रत्यक्षदर्शिनीम्, कर्तुं विधातुम्, पाणिना हस्तसंज्ञया, आहूय आकार्य, पुरस्तात् अग्रे, वेशिताम् उपवेशिताम्, कृत्वेति शेषः, ऊचे बभाषे ॥ २६ ॥

इस ( चुम्बन करने ) के बाद उस ( नल ) ने दमयन्तीकी 'कला' नामक सखीको हाथ ( के सङ्केत ) से बुलाकर तथा परिहासक्रीडामें साक्षिणी ( प्रत्यक्ष देखनेवाली ) करनेके लिए सामने बैठाकर कहा ॥ २६ ॥

कस्मादस्माकमब्जास्या वयस्या दयते न वः[1] ? ।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥ २७ ॥

कस्मादिति । हे कले ! अब्जास्या कमलवदना, वः युष्माकम्, वयस्या सखी, कस्मात् कस्य हेतोः, अस्माकं मामित्यर्थः । 'अधीगर्थ–' इत्यादिना कर्मणि षष्ठी । न दयते ? न अनुकम्पते ? मन्ये विवेचयामि, अहमिति शेषः । भवतीषु युष्मासु, आसक्ता अत्यन्तमनुरक्ता सती, अन्यम् अपरं जनम्, न बहु मन्यते न समाद्रियते ॥

( हे कले ! ) कमलमुखी तुम लोगोंकी ( पाठा०—तेरी ) सखी ( दमयन्ती ) हमपर क्यों नहीं दया करती है ? ( जिस कारण दया नहीं करती, इस कारण मैं ) तुमलोगोंमें आसक्त ( यह ) अतिशय प्रेममग्न ( मेरे-जैसे ) दूसरेका नहीं समादर करती है, ऐसा मानता हूं । ( अथ च—'कमलमुखी दमयन्ती नवीन परिचयवाले भी मुझपर दया करती है और तुम लोगोंपर दया नहीं करती, ( अत एव ) तुमलोगोंमें अनासक्त स्नेहहीन यह मुझ-जैसे दूसरे लोगोंको मानती है' ऐसा अर्थ अग्रिम श्लोकके अनुरोधसे करना चाहिये) ॥२७॥

अन्वग्राहि मया प्रेयान्निशि स्वापनयादिति ।
न विप्रलभते तावदालीरियमलीकवाक् ? ॥ २८ ॥

अन्वग्राहीति । मया भैम्या, निशि रात्रौ, स्वोपनयात् आत्मसमर्पणात्, स्वाङ्गदानं कृत्वेत्यर्थः । प्रेयान् प्रियतमः नलः, अन्वग्राहि अनुगृहीतः इति एवम्, अलीकवाक् अनृतवादिनी, इयम् एषा वः सखी, तावत् सकला एव, आलीः सखीः भवतीः, न विप्रलभते ? न प्रतारयति ? किमिति शेषः, इति काकुः; अपि तु प्रतारयत्येव । तस्मात् अहं रात्रौ प्रियतमाय आत्मसमर्पणं कृतवतीति युष्मत्समीपे यदियमुक्तवती तद् वचः न श्रद्धेयम् इति भावः ॥ २८ ॥

'मैंने रात्रिमें आत्मसमर्पण ( आलिङ्गनादिके लिए वक्षःस्थलादिका समर्पण ) करनेसे प्रियतम ( नल ) को अनुगृहीत कर दिया है' ऐसा असत्य वचन कहनेवाली यह सखियोंको भी नहीं ठगती है ? [ अर्थात् तुमलोगोंको भी ठगती है तो हम लोगोंकी गणना ही कौन है ? अत एव इसकी बातका कदापि तुमलोग विश्वास मत करना ] ॥ २८ ॥

आह स्मैषा नलादन्यं न जुषे मनसेति यत् ।
यौवनानुमितेनास्यास्तन्मृषाऽभून्मनोभुवा ॥ २९ ॥

आहेति । एषा इयं वः सखी, नलात् नैषधात्, अन्यम् अपरं पुरुषम्, मनसा

---

1. 'ते' इति पाठान्तरम् ।

चेतसा, अपीति शेषः, न जुषे न सेवे, इति यत् आह स्म ऊचे, अस्याः तव सख्याः, तद् वचनम्, यौवनानुमितेन यौवनेन तारुण्येन लक्षणेन, अनुमितः तर्कितः तादृशेन, एषा मनोभूमती यौवनवत्त्वात्, या या यौवनवती सा सा मनोभूमती इत्यनुमान-विषयीकृतेनेत्यर्थः। मनोभुवा मनः चित्तमेव, भूः उत्पत्तिस्थानं यस्य तादृशेन कामेन, मृषा मिथ्या, अभूत् अजनि;मदन्यस्य कामस्य मनसा सेवनात् अस्याः तादृशी उक्तिः मिथ्या जाता इति निन्दाच्छलेन मय्येवेयं कामानुरक्तेति स्तुतेः व्याजस्तुतिः ॥ २९ ॥

इस ( दमयन्ती ) ने 'मैं नलके अतिरिक्त दूसरेका मनसे भी नहीं सेवन करती हूं' ऐसा जो ( तुम लोगोंके समक्ष ) कहा, युवावस्थासे अनुमित कामदेवसे इसका वह कथन असत्य हो गया [ युवावस्थामें यह कामासक्त है, अत एव मुझसे अतिरिक्त कामका सेवन करनेसे दमयन्तीका वह कथन असत्य हो गया। वस्तुवस्तु 'युवावस्थाके आरम्भ होनेसे लेकर यह मुझमें ही आसक्त है' इस प्रकार नलने दमयन्तीकी प्रशंसा ही की है ] ॥ २९ ॥

आस्यसौन्दर्यमेतस्याः शृणुमो यदि भाषसे।
तद्धि लज्जानमन्मौलेः परोक्षमधुनाऽपि नः ॥ ३० ॥

आस्येति। हे कले! एतस्याः युष्मत्सख्याः, आस्यसौन्दर्यं मुखशोभाम्, यदि चेत्, भाषसे वर्णयसि, त्वमिति शेषः। तदा शृणुमः आकर्णयामः, वयमिति शेषः। ननु तव उत्सङ्गे एव यदा इयमुपविष्टा, तदा अस्मन्मुखे कथं शृणुथ, पश्यथ न कथम्? इति चेदाह—हि यस्मात्, लज्जया त्रपया, नमन्मौलेः नम्रशिरसः, एतस्याः इति शेषः। तत् आस्यसौन्दर्यम्, अधुना अपि विवाहात् परमद्यपर्यन्तमपीत्यर्थः। नः अस्माकम्, परोक्षम् अक्ष्णोरगोचरमेव, वर्त्तते इति शेषः। तत् यथा एषा लज्जां परित्यज्य स्वमुखकमलमस्मान् दर्शयति तथा क्रियताम् इति भावः ॥ ३० ॥

इस ( अपनी सखी दमयन्ती ) के मुखके सौन्दर्यका यदि तुम वर्णन करोगी तो हम सुनेंगे। ('अपने अङ्कमें स्थित इसके मुख-सौन्दर्यको आप स्वयं देखते ही हैं तो उसके वर्णन करनेकी क्या आवश्यकता है?' यह शङ्का तुम मत करो, क्योंकि—विवाहकालसे लेकर ) अब तक भी लज्जासे अवनतमुखी ( मुखको नीचे की हुई ) इसका वह ( मुख-सौन्दर्य ) हमारे परोक्ष ( अदृष्टचर ) ही है। [ अत एव जिसप्रकार लज्जा छोड़कर अपने मुखकमलको यह मुझे दिखलावे वैसा उपाय करो, अथवा—परिहाससे 'कला' से नल कहते हैं कि—आजतक जब मैंने इसके सदा नम्रमुखी रहनेसे मुखसौन्दर्यको भी नहीं देख सका तो सम्भोगादिकी चर्चा ही व्यर्थ है, अत एव इसके उक्त वचन ( मेरे लिए सर्वथा आत्मसमर्पण करने आदिकी बात ) पर विश्वास कदापि मत करना ] ॥ ३० ॥

पूर्णयैव द्विलोचन्या सैषाऽऽलीरवलोकते।
द्राग्दृगन्ताणुना मान्तु मन्तुमन्तमिवेक्षते ॥ ३१ ॥

पूर्णयेति। सा उक्तरूपा लज्जानतशिरस्का, एषा दमयन्ती, पूर्णयैव समग्रयैव, न

तु अन्तेन इति भावः। द्वयोः लोचनयोः समाहारः इति द्विलोचनी तया द्विलोचन्या नेत्रद्वयेन त्रिलोकीवत् प्रक्रिया। आलीः सखीः, अवलोकते पश्यति, मान्तु मां पुनः, मन्तुमन्तम् अपराधीनम् इव,द्राक् झटिति, क्षणमात्रमित्यर्थः। दृगन्ताणुना दृशः एकमात्रस्य चक्षुषः, न तु द्वयोः, अन्तः शेषभागः, न तु सम्पूर्णभागः, तस्यापि अणुना लेशमात्रेण, कटाक्षलेशेन इत्यर्थः। ईक्षते अवलोकयति, अन्योऽपि लोको यथा अपराधिनं घृणया कटाक्षमात्रेणावलोकयति तद्वदिति निष्कर्षः॥ ३१॥

यह (तुमलोगोंकी सखी दमयन्ती) सखियोंको पूरे ही दोनों नेत्रोंसे देखती है, किन्तु अपराधीके समान मुझको तो एक नेत्रके प्रान्तके अल्पमात्र भाग (लेशमात्र कटाक्ष) से एकवार (या—झट—थोड़ा-सा) ही देखती है। [लोकमें भी अपराधीको घृणापूर्वक नेत्रप्रान्तसे थोड़ा देखा जाता है। यहांपर भी 'प्रिया प्रियपतिको नेत्रप्रान्त (कटाक्ष) से तथा सखी आदि स्नेही बान्धवोंको पूर्ण दृष्टिसे देखती है' ऐसा सर्वसाधारणका नियम होनेसे नलने दमयन्तीके द्वारा कटाक्षपूर्वक देखना कहकर दमयन्तीका अपनेमें स्नेहातिशयको सूचित किया है]॥ ३१॥

नालोकते[1] यथेदानीं मामियं तेन कल्पये।
योऽहं दूत्येऽनया दृष्टः सोऽपि व्यस्मारिषीदृशा॥ ३२॥

नेति। इयं दमयन्ती, यथा येन प्रकारेण, इदानीम् अधुना, मां नलम्, न आलोकते न ईक्षते, तेन तादृशानालोकनव्यापारेण, कल्पये एवं मन्ये, यत् यः अहं नलः, दूत्ये इन्द्रादीनां दूत्यकाले, अनया भैम्या, दृष्टः पूर्णलोचनद्वयेन अवलोकितः, सोऽपि अहम्, ईदृशा इदानीमेतादृशव्यवहारेण माम् अपश्यन्त्या अनया, व्यस्मारिषि विस्मृतः अस्मि। स्मरतेः कर्मणि लुङ्। 'स्यसिच्सीयुट्—' इत्यादिना सिच इडागमे तस्य चिण्वद्भावे 'अचो ञ्णिति' इति वृद्धिः। अविस्मरणे पूर्ववत् सादरं पश्येत् इति भावः॥ ३२॥

यह दमयन्ती जिस कारण इस समय मुझे नहीं देखती है, उस कारण मैं कल्पना करता हूं कि—'दूतकालमें इस दमयन्तीने जिस मुझको देखा है, उसे भी इस व्यवहारसे भूल गयी है'। [क्योंकि यदि इन्द्रादिका दूत बनकर मेरे जानेपर जो पूर्ण दृष्टिसे देखना नहीं भूलती तो यह अवश्य ही इस समय मुझे पूर्ण दृष्टिसे देखती, किन्तु ऐसा नहीं कर रही है, अत एव ज्ञात होता है कि यह दूतकालमें मुझे पूर्णदृष्टिसे देखना भूल गयी है]॥३२॥

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः।
मम त्वमिति वक्तुं मां मानिनी मौनिनी पुनः॥ ३३॥

रागमिति। सा उक्तरूपा, एषा प्रिया, सूनृतामृतैः सत्यप्रियवाक्यपीयूषैः। 'सूनृतं प्रिये सत्ये' इत्यमरः। वयस्याः सखीः, रागम् आनुरक्तिम्, स्नेहभावमित्यर्थः,

---

१. 'न लोकते' इति पाठान्तरम्।

दर्शयते प्रकाशयतीत्यर्थः, ताभ्यः विस्रब्धं कथयतीति भावः। 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति विकल्पादणिकर्तुः कर्मत्वम्, 'णिचश्च' इत्यात्मनेपदम्। मानिनी मानवती इयम्, मां पुनः मान्तु, त्वं भवान्, मम मदीयः, इति एवम्, वक्तुं कथयितुम्, 'मदीयः त्वम्' इत्येतावन्मात्रं वक्तुमपीत्यर्थः। मौनिनी वाचंयमा, भवतीति शेषः। अतिनिष्करुणा इयं मयि इति निन्दा, लज्जाशीलेयमिति स्तुतिः॥३३॥

यह ( दमयन्ती ) सत्यप्रिय वचनामृतोंसे सखियों ( तुम लोगों ) को स्नेह दिखलाती है, किन्तु मानिनी यह मुझसे 'तुम मेरे हो' इतना कहनेके लिए भी मौन हो रही है। [ मैंने इसका कोई अपराध नहीं किया है, तथापि यह मुझसे 'तुम मेरे हो' इतना भी नहीं कहती और तुमलोगोंसे 'सत्य, प्रिय एवं मधुर वचन कहकर स्नेह दिखलाती है' इस प्रकार यह मुझसे मानकर उतना कहनेसे मुझे सनाथ नहीं करती, यह कहकर नलने दमयन्तीकी निन्दा की है तथा यह लज्जाशील होनेसे ऐसा कह रही है यह कहकर प्रशंसा भी की है ]॥

कां नामन्त्रयते नाम नामग्राहमियं सखी ?।
कले ! नलेति नास्माकीं स्पृशत्याह्वां तु जिह्वया ? ॥ ३४ ॥

कामिति। हे कले ! इयम् एषा, सखी ते वयस्या, कां नाम सखीम्, नामग्राहं नाम गृहीत्वा। 'नाम्न्यादिशिग्रहोः' इति णमुल्। न आमन्त्रयते ? न सम्बोधयति ? अपि तु सर्वाः एव आमन्त्रयते इत्यर्थः। नामेति प्रश्ने। तु किन्तु, अस्माकम् इमाम् आस्माकीं मदीयम्। 'युष्मदस्मदोः' इत्यादिना अण्प्रत्ययः। 'तस्मिन्नणि च—' इत्यादिना आस्माकादेशः, 'टिड्ढाणञ्—' इत्यादिना ङीप्। नलेति आह्वां नाम। 'आख्याऽऽह्वे अभिधानञ्च नामधेयञ्च नाम च' इत्यमरः। जिह्वया रसनया, अपीति शेषः, न स्पृशति न स्पर्शं करोति, मां नाम्नाऽपि न आह्वयति रहस्यालापस्तु दूरमास्तामिति निन्दा, स्त्रीणां भर्तृनामग्रहणस्य अनौचित्यात् स्तुतिः ॥ ३४ ॥

हे कले ! यह सखी ( दमयन्ती ) किस सखीको नाम लेकर नहीं बुलाती है ? ( किन्तु ) 'नल' इस प्रकार मेरे नामको जीभसे स्पर्श भी नहीं करती ( रहस्यका बतलाना तो बहुत दूर है )। [ यहांपर भी नलने उक्त वचन कहकर दमयन्तीकी निन्दा तथा पतिके नाम लेनेका शास्त्रीय निषेध होनेके कारण उसका पालन करनेसे प्रशंसा की है ] ॥ ३४ ॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्त्तु नः ? ॥ ३५ ॥

अस्या इति। पीनाभ्यां स्थूलाभ्याम्, स्तनाभ्यां कुचाभ्याम्, व्याप्ते सम्पूर्णताभावेन आक्रान्ते, ततश्च बहिरपि अवकाशलवोऽपि नास्तीत्याशयः, अस्मासु मयि विषये, निर्दये अकरुणे, तत एव अन्तरपि अवकाशलवोऽपि नास्तीति भावः, अस्याः दमयन्त्याः, हृदये वक्षसि, अवकाशस्य मदवस्थितिस्थानस्य, लवः लेशोऽपि, नास्ति न विद्यते, अत एव अत्र हृदये, कुत्र कस्मिन् स्थाने, नः अस्मान्, मामित्यर्थः।

विभर्त्तु ? धारयतु ? न कुत्रपीत्यर्थः । उच्चकुचाभ्यां व्यवहितेनैव मया स्थीयते, न तु: हृदयेन ध्रियते इति भावः । अत्रापि निन्दाच्छलात् स्तुतिः ॥ ३५ ॥

स्थूल ( विशाल ) स्तनोंसे व्याप्त तथा हमारे विषयमें निर्दय इस ( दमयन्ती ) के हृदयमें लेशमात्र भी अवकाश ( ठहरनेका स्थान ) नहीं है, अत एव यह मुझे कहां धारण करे ? । [ इस दमयन्तीके हृदयका वाह्य भाग बड़े स्तनोंसे व्याप्त है, अतः मेरे लिए इसके हृदयके बाहर ठहरनेका स्थान नहीं हैं तथा इसका हृदय भीतरमें मेरे प्रति निर्दय है अत एव भीतरमें भी मेरे लिए स्थान नहीं है; अत एव इस दमयन्तीके हृदयमें बाहर या भीतरी—कहीं भी मुझे ठहरानेके लिए लेशमात्र भी स्थान नहीं है, अथ च—विशाल स्तन होनेसे इसका आलिङ्गन करते समय मैं इसके वक्षःस्थलसे ऊपर ही रह जाता हूँ और निर्दय होनेसे भीतर स्थान है ही नहीं, इस प्रकार नलने दमयन्तीकी निन्दा तथा उच्च स्तनका वर्णन कर प्रशंसा की है ] ॥ ३५ ॥

अधिगत्येदृगेतस्या हृदयं मृदुतामुचोः ।
प्रतीम एव वैमुख्यं कुचयोर्युक्तवृत्तयोः ॥ ३६ ॥

अधिगत्येति । एतस्याः भैम्याः, हृदयम् अन्तःकरणम् , ईदृक् निर्दयत्वात् ईदृशं कठिनम् , अधिगत्य ज्ञात्वा, इवेति शेषः । मृदुतामुचोः कोमलतात्यागिनोः, तथाभूतकठिनहृदयसंसर्गात् स्वयमपि तावत् काठिन्यभाजोः इत्यर्थः । अन्यथा कठिने मृदुताचरणे दुर्नीतिरिति भावः । अत एव युक्तवृत्तयोः युक्तम् उचितम् , वृत्तं व्यवहारः ययोस्तादृशयोः, कठिने कठिनव्यवहारस्य औचित्यात् ; अन्यत्र—युक्तौ पीनत्वात् मिथः संश्लिष्टौ, वृत्तौ वर्त्तुलौ च तयोः युक्तवृत्तयोः । विशेषणसमासः । कुचयोः स्तनयोः, अपीति शेषः, वैमुख्यमेव कठिनात् हृदयात् विपरीतमुखत्वमेव औदासीन्यमेव च, प्रतीमः जानीमः; एतस्याः निर्दयात् कठिनात् हृदयात् स्वाङ्गभूतौ सद्वृत्तौ कुचावपि विमुखौ जातौ, वयन्तु वाह्याः तत्र निवेष्टुं कथं शक्नुमः ? इति भावः; यद्वा—वैमुख्यमेव मयि पराङ्मुखत्वमेव, तुङ्गतया आलिङ्गनविघ्नजननादिति भावः, अन्यत्र—विगतमुखत्वमेव, नवोद्भिन्नत्वात् वृन्तहीनतया मनोज्ञमेवेति भावः ॥ ३६ ॥

इस ( दमयन्ती ) के हृदयको ऐसा ( कठिन ) जानकर ( 'शठे शाठ्यं समाचरेत्' नीतिके अनुसार कठिन हृदयके प्रति ) मृदुताका त्याग करनेवाले अर्थात् कठिनतायुक्त ( अत एव-उक्त नीतिके अनुसार ) समुचित व्यवहार करनेवाले दोनों स्तनोंकी ( कठिन हृदयके साथ विपरीत व्यवहार करनेसे, अथच—ऊर्ध्वमुख होनेके कारण ) पराङ्मुखता ( पक्षा०—उदासीनता ) को ही हम जानते हैं । [ इसके कठिन हृदयसे स्वाङ्गभूत सद्व्यवहारवाले ये स्तन भी यदि पराङ्मुख हो गये तो हम तो बाहरी होनेके कारण वहाँ ( हृदयमें ) प्रवेश ही किस प्रकार पा सकते हैं ? अथवा—इन स्तनोंको अत्युन्नत होनेसे मेरे आलिङ्गन करते समय दमयन्तीके वक्षःस्थलका मिलन नहीं होनेसे मेरे प्रति इनः

स्तनोंकी पराङ्मुखता ही हम जानते हैं। अथवा—स्त्रीहृदय स्वभावसे ही मृदु होता है, उससे उत्पन्न होकर मृदुताका त्याग करनेवाले ( अत एव, विपरीत लक्षणासे ) अयुक्त आचरणवाले इन स्तनोंकी हम दमयन्ती हृदयसे पराङ्मुखता ( मृदु हृदयसे उत्पन्न होकर भी मृदुताका त्याग करनेसे विपरीताचरणपरायणता ) ही जानते हैं। अथवा—इसके सुन्दरतम हृदयको पाकर कठिनताको प्राप्त तथा अत्यन्त बड़ा एवं गोलाकार इन स्तनोंको आगेमें श्यामवर्ण होनेसे हृदयके साथ पराङ्मुखता ( विपरीत व्यवहार ) ही जानते हैं। अथवा—उक्तरूप स्तनोंकी विमुखता ( चूचुकशून्यता ) ही जानते हैं अर्थात् दमयन्तीकी अल्पावस्था होनेसे कठिन एवं स्तनाग्रभागमें श्यामवर्ण वृन्त ( चूचुक ) से हीन ( अत एव ) युक्त आचरण करनेवाले स्तनोंको जानते हैं। अथवा—ऐसे सहज कोमल स्त्रीहृदयको पाकर मूर्खताको नहीं छोड़ते हुए तथा मेरे प्रति सदय होनेसे युक्त आचरण करनेवाले इन स्तनोंकी विमुखता ( विशिष्ट=उन्नत, मुखता=अग्रभागता ) को ही जानते हैं ]॥ ३६॥

इति मुद्रितकण्ठेऽस्मिन् सोल्लुण्ठमभिधाय ताम्।
दमयन्तीमुखाधीत-स्मितयाऽस्मै तया जगे॥ ३७॥

इतीति। अस्मिन् नले कान्ते, तां कलाम्, सोल्लुण्ठं सोत्प्रासम्, सपरिहासमित्यर्थः। 'सोल्लुण्ठनन्तु सोत्प्रासम्' इत्यमरः। इति एवम्, अभिधाय उक्त्वा, मुद्रितकण्ठे निरुद्धगले, तूष्णीम्भूते सतीत्यर्थः। तया कलानामसख्या, दमयन्तीमुखाधीतस्मितया दमयन्त्याः वयस्यायाः भैम्याः, मुखात् आननात्, अधीतं शिक्षितम्, गृहीतमिति यावत्, स्मितं मन्दहास्यं यया तादृशया सत्या, दमयन्तीं हसन्तीं दृष्ट्वा स्वयमपि स्मयमानया सत्या इत्यर्थः। अस्मै नलाय, जगे जगदे, नलः गदितः इत्यर्थः। 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इति क्रियया अभिप्रायात् सम्प्रदानत्वम्, तथा चाविवक्षितकर्मत्वाद्भावे लिट्। अस्मै इत्यत्र 'असौ' इति पाठे-असौ नलः, जगदे ऊचे, वक्ष्यमाणं वच इति शेषः। कर्मणि लिट्॥ ३७॥

उस ( कला ) से इस प्रकार ( २०।२७—३६ ) वक्रोक्ति आदिसे युक्त वचन कहकर इस ( नल ) के मौन होनेपर दमयन्तीके मुखसे स्मितका अध्ययनकी हुई अर्थात् दमयन्तीको स्मित करती हुई देखकर स्वयं भी स्मित करती हुई उस (कला) ने इस (नल) से कहा॥३७॥

भावितेयं त्वया साधु नवरागा खलु त्वयि।
चिरन्तनानुरागार्हं वर्त्तते नः सखीः प्रति॥ ३८॥

यदुक्तं 'कस्मादस्माकम्' इत्यादि तत्र तावदुत्तरमाह—भावितेति। हे महाराज! त्वया भवता, इयं सखी भैमी, साधु सम्यक्, भाविता तर्किता, खलु इति निश्चये यतः, त्वयि भवति नवरागा नूतनपरिचयात् नूतनानुरागा, जातेति शेषः। अतः तदनुरूपं वर्त्तते इति भावः। नः अस्मान्, सखीः सहचरीः प्रति तु, चिरन्तनस्य पुरातनस्य, अनुरागस्य प्रणयस्य, आबाल्यमेकत्रावस्थानात् सहजानुरागस्येत्यर्थः।

अर्हम् अनुरूपं यथा तथा, वर्त्तते विद्यते, व्यवहरतीत्यर्थः। अत एवेयं भवति ससङ्कोचा अस्मासु तु तद्वर्जिता स्वभावत एव, एवञ्चायमुपालम्भः नोचितः इति भावः॥ ३८॥

(पहले नलोक्त 'कस्मादस्माकम्'……(२०।२७)' वचनका उत्तर कला दे रही है—हे महाराज!) तुमने इस (दमयन्ती) को सम्यक् प्रकारसे जान लिया कि यह तुम्हारेमें नवीन अनुरागवाली है (इसीसे यह आपके सामने सलज्ज रहती है), हम सखियोंके प्रति पुराने स्नेहके योग्य वर्ताव करती है। [तुम्हारेमें नया स्नेह होनेसे दमयन्तीका लज्जा (सङ्कोच) करना तथा हमलोगोंमें बचपनसे एक साथ रहनेके कारण पुराना स्नेह होनेसे सङ्कोचरहित होकर वर्ताव करना दमयन्तीका उचित ही है इस बातको तो आपने ठीक ही समझ लिया है। अथवा—तुमने इस दमयन्तीको सम्यक् प्रकारसे नहीं समझा है, क्योंकि वह तुम्हारेमें नये (दृढ़) अनुरागवाली है तथा हम सखियोंके प्रति पुराने अनुरागके योग्य अर्थात् पुराना स्नेह होनेसे ('अतिपरिचयादवज्ञा' नीतिके अनुसार) शिथिल अनुरागवाली है; अत एव 'मेरे लिये दया करती है, तुमलोगोंके लिये नहीं दया करती' यह अपने दमयन्तीके विषयमें सत्य अनुमान किया है। अथवा—तुमने इस (दमयन्ती) को ठीक-ठीक द्रवित किया है, क्योंकि तुम्हारे विषयमें नवीन (दृढ़) अनुरागवाली होनेसे हमलोगोंके प्रति पुराने अनुरागके कारण शिथिल प्रीतिवाली है, अत एव मेरे प्रति दृढ़ानुरागवाली दमयन्ती हमलोगों (सखियों) को कुछ नहीं गिनती यह ठीक जान लिया है]॥ ३८॥

स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी।
कथं सम्भुज्यते बाला? कथमस्मासु भाषताम्?॥ ३९॥

यदुक्तम् 'अन्वग्राहि' इत्यनेन तत्रोत्तरं श्लोकद्वयेनाह—स्मरेत्यादिना। नवम् अचिरमेव, ऊढा परिणीता, अत एव लज्जासङ्कुचिता इत्याशयः। तथा बाला अविदग्धा, अत एव स्मरागमानभिज्ञा इति भावः। नः अस्माकम्, सा त्वया अभियुक्ता, इयं भवदङ्कस्था, सखी सहचरी दमयन्ती, स्मरशास्त्रविदा कामतन्त्रवेदिना, अत एव कामकलाकुशलेनेत्यर्थः। त्वया भवता, कथं केन प्रकारेण, सम्भुज्यते? निर्भरं सम्भोक्तुं शक्यते? कथमपि नैवेत्यर्थः। अस्या लज्जाया एव दुर्वारविघ्नत्वादिति भावः। कथं केन वा प्रकारेण, अस्मासु अस्मत्समीपे, भाषताम्? रात्रिवृत्तमसङ्कोचं कथयतु? बालत्वेन लज्जावशादस्मभ्यं स्वचेष्टितं नैव कथयिष्यतीत्यर्थः। तस्मान्नासौ अलीकवाक् न वा अस्मान् विप्रलभते, किन्तु नवोढासुलभलज्जापरवशाया अस्याः कामशास्त्रवेदिनस्तव एवमुपालम्भः नोचितः इति भावः॥ ३९॥

(अब नलोक्त 'अन्वग्राहि'……(२०।२८)' उपालम्भका उत्तर 'कला' दे रही है—) नवोढ़ा (अत एव सलज्जा) बाला (अत एव अविदग्धा=कामशास्त्रानभिज्ञा) इस सखी

( दमयन्ती ) का सम्भोग ( बालाके साथ बलात्कारपूर्वक सम्भोग करनेका कामशास्त्रमें निषेध होनेसे[1] ) कामशास्त्रके रहस्यज्ञ आप कैसे करते हैं [ कामशास्त्ररहस्यवेदी आप बाला एवं नवोढ़ा दमयन्तीके साथ यथेष्ट सम्भोग नहीं कर सकने तथा सम्भोग करनेपर भी दुर्वार लज्जावश यह दमयन्ती उस सम्भोगवार्ताको हमलोगोंसे किस प्रकार कहती ? आपके द्वारा किये गये सम्भोग आदिकी चर्चा दमयन्तीने हमलोगोंसे नहीं की है, अत एव यह असत्यभाषिणी नहीं है, आपको व्यर्थ ही ऐसा उपालम्भ देकर हमें वञ्चित करना उचित नहीं है। अथवा—कामशास्त्रज्ञ आप नवोढ़ा एवं बाला दमयन्तीका निर्भर सम्भोग किस प्रकार कर सकते हैं तथा उक्त कारणसे लज्जाशीला यह सखी हमलोगोंसे सह्य सम्भोगकी चर्चा क्यों करें अर्थात् जो बाला निर्भर सम्भोगद्वारा पतिसे पीड़ित होती है, वही उक्त सम्भोगजन्य पीड़ा आदिकी चर्चा सखियोंसे करती है; किन्तु कामशास्त्रके रहस्यवेत्ता आपने नवोढ़ा एवं बाला प्रिय सखी दमयन्तीको निर्भर सम्भोग करके पीड़ित नहीं किया और उसने भी इसीसे हमलोगोंसे इस विषयमें कुछ भी नहीं कहा, अत एव आपको उक्त उपालम्भ देना उचित नहीं। अथवा—कामशास्त्ररहस्यवेदी आपने नवोढ़ा एवं बाला दमयन्तीके साथ अनुराग एवं सामर्थ्यके अनुसार ही सम्भोग किया और लज्जाशीला इसने हमलोगोंसे कुछ भी नहीं कहा; अत एव तुम दोनों ही हमलोगोंको वञ्चित कर रहे हो। अथवा—शास्त्रज्ञ आप नवोढ़ा तथा बाला दमयन्तीका सम्भोग किस प्रकार किया ? उसे स्मरण कीजिये और यह हमलोगोंसे किसप्रकार कहती अर्थात् इसने हमलोगोंसे कुछ भी नहीं कहा—विपरीत लक्षणासे आपने इसके साथ सम्भोग किया और इसने हमलोगोंसे सब रहस्य कह दिया; अत आप हमें क्यों वञ्चित कर रहे हैं ? ] ॥ ३९ ॥

नासत्यवदनं देव ! त्वा गायन्ति जगन्ति यम् ।
प्रिया तस्य सरूपा स्यादन्यथालपना न ते ॥ ४० ॥

अत्रैव यत् विशेषितवान् 'अलीकवाक्' इति तत्रोत्तरमाह—नासत्येति। देव ! हे महाराज ! जगन्ति लोकाः, यं त्वां भवन्तम्, न असत्यं मिथ्या, वदनं भाषणं यस्य तं तादृशं सत्यवादिनमित्यर्थः। गायन्ति कीर्त्तयन्ति, तस्य तादृशसत्यवादिनः, ते तव, प्रिया स्निग्धा कान्ता, सरूपा समानरूपा, तवानुरूपसत्यवादिन्येवेत्यर्थः। स्यात् भवेत्, अन्यथा तद्विपरीतम् असत्यभूतम्, लपनं भाषणं यस्याः सा तादृशी, न नैव, स्यादिति पूर्वेणान्वयः। पक्षान्तरे—यं त्वाम् असत्यवदनं मिथ्याभाषणशीलम् न गायन्ति ? इति काकुः, अपि तु गायन्त्येवेत्यर्थः, तस्य तादृशमिथ्यावादित्वेन गीतस्य, ते प्रिया सरूपा समानरूपा, तवानुरूपेत्यर्थः। स्यात्, अतः अन्यथालपना मिथ्या-

---

१. तच्च स्मरशास्त्रमित्थंरूपम्—
'बालां बलान्न भुञ्जीत विरागोत्पत्तिशङ्कया।
भुञ्जीत चेत्रपाभीतिस्याजनक्रमसङ्गताम् ॥' इत्यादि बोध्यम्।

भाषिणी, न स्यात् ? इति काकुः, अपि तु अन्यथालपनैव स्यादित्यर्थः । एवञ्च भवान् इमां सम्भुज्यापि यथा न भुक्तवान् इति मिथ्या भाषते, तथा इयमपि आत्मसमर्पणमकृत्वाऽपि कृतवती इत्यभाषत, अतः उभयोरेव तुल्यमृषावादित्वात् नायं ते अभियोग उचित इति भावः । पक्षे—यं त्वां नासत्ययोः अश्विनीकुमारयोः इव, वदनम् आस्यं यस्य तं तादृशम् अश्विनीकुमारतुल्यसुन्दरवदनम्, गायन्ति तस्य तादृशसुन्दरमुखस्य, ते तव, सरूपा समानरूपा, अनुरूपसुन्दरमुखी एवेत्यर्थः । प्रिया कान्ता, स्यात्, अन्यथा तद्विपरीतम्, कुत्सितमित्यर्थः । लपनं वदनं यस्याः सा तादृशी । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । न, स्यादिति अन्वयः; योग्यं योग्येन युज्यते इति भावः ॥ ४० ॥

( अब नलोक्त 'आलीरियमलीकवाक्......( २०।२८ का उत्तरार्द्ध )', तथा 'आहस्म...( २०।२९ )' का उत्तर कला दे रही है— ) संसार अर्थात् तीनो लोक तुमको असत्यवक्ता नहीं कहते हैं ( किन्तु सत्यवक्ता ही कहते हैं । अथवा—सत्यवक्ता कहते हैं ); वैसे ( सत्यवक्ता ) तुम्हारी प्रिया अन्यथा ( असत्य ) कहनेवाली योग्य नहीं है । [ किन्तु सत्य कहनेवाले आपकी प्रियाको भी सत्य कहनेवाली ही होना चाहिये; अत एव आपकी प्रिया यह दमयन्ती भी हमलोगोंसे सत्य ही कहती है । अथवा—संसार आपको असत्यवक्ता नहीं कहता है ? अर्थात् कहता ही है, ( अत एव ऐसे असत्यवक्ता ) आपकी प्रिया अन्यथा ( असत्यभाषिणी ) नहीं होवे ? अर्थात् असत्यवक्ता तुम्हारी प्रियाको भी असत्यवक्त्री ही होना चाहिये, अतः सम्भोग करके भी 'मैंने सम्भोग नहीं किया' कहते हुए तुम जिस प्रकार असत्य भाषण करते हो, उसी प्रकार तुम्हारे लिए सर्वाङ्गका समर्पण नहीं करके भी दमयन्ती अपने समस्त अङ्गोंका समर्पण कहना जो कहती है, वह 'योग्यं योग्येन युज्यते' न्यायसे उचित ही है । अथवा—संसार तुमको नासत्य ( अश्विनीकुमार ) के समान ( सुन्दर ) मुखवाला कहते हैं, ऐसे तुम्हारी प्रियाको भी अन्यथा ( कुरूप मुखवाली ) नहीं होना चाहिये अर्थात् जैसा तुम्हारा मुख अश्विनीकुमारके समान सुन्दर है, वैसा ही दमयन्तीका मुख भी परम सुन्दर है ] ॥ ४० ॥

मनोभूरस्ति चित्तेऽस्याः किन्तु देव ! त्वमेव सः ।
त्वदवस्थितिभूर्यस्मान्मनः सख्या दिवानिशम् ॥ ४१ ॥

यदुक्तम् 'आह स्म' इत्यादिश्लोके तस्योत्तरं श्लोकत्रयेणाह—मनोभूरित्यादि । देव ! हे राजन् ! 'राजा भट्टारको देवः' इत्यमरः । अस्याः दमयन्त्याः, चित्ते हृदये, मनोभूः चित्तजन्मा, अस्ति विद्यते इति सत्यम्, किन्तु सः मनोभूः, त्वमेव भवानेव । कुतः ? यस्मात् यतः, सख्याः वयस्याया भैम्याः, मनः चित्तम्, दिवानिशं रात्रिन्दिनम्, सदैवेत्यर्थः । त्वदवस्थितिभूः तवैवावस्थानस्य स्थानम् । मनो भूः आश्रयः यस्येति व्युत्पत्त्या त्वमेव मनोभूः, मनसि भवतीति व्युत्पत्तौ त्वदभिलाषिण्या अस्याः कामस्य त्वत्परत्वादुभयथाऽपि न पुरुषान्तरसेवाशङ्कालव इति भावः । अत्र नलेन

कामार्थे प्रयुक्तस्य मनसो भूः उत्पत्तिर्यस्य इति व्युत्पत्तिलभ्यस्य मनोभूपदस्य कलया मन एव भूः वसतिस्थानं यस्येति व्युत्पत्त्या नलार्थे प्रयुज्यमानत्वात् श्लेषवक्रोक्तिरलङ्कारः ॥ ४१ ॥

( अब नलोक्त 'आह स्म……' ( २०।२९ ) का उत्तर तीन श्लोकों ( २०।४१–४३ ) से कला दे रही है— ) इस ( दमयन्ती ) के चित्तमें मनोभू ( काम ) है, किन्तु हे देव ( हे सरकार ) ! वह आप ही है, क्योंकि सखी ( दमयन्ती ) मन रात-दिन तुम्हारी अवस्थिति ( निवास ) की भूमि है। [ नलने पहले ( २०।२९ ) 'मनोभू' शब्दका 'मनसि भवति' ऐसा विग्रह करके दमयन्तीके चित्तमें कामका निवासस्थान कहकर उसे परपुरुषसंसर्गयुक्त कहा था, और 'कला' नामकी सखीने उसी 'मनोभू' शब्दका 'मनः भूः यस्य' ( मन है भूमि=निवास स्थान जिसकी ) ऐसा विग्रह करके नलको ही दमयन्तीके मनमें निवास करनेवाला कहकर दमयन्तीके वचनको सत्य बतलाया है ] ॥ ४१ ॥

**सतस्तेऽथ सखीचित्ते प्रतिच्छाया स मन्मथः।**
**त्वयाऽस्य समरूपत्वमतनोरन्यथा कथम् ? ॥ ४२ ॥**

सत इति। अथ इति पक्षान्तरे, अथवेत्यर्थः। सः भवदुक्तमनोभूपदवाच्यः, मन्मथः कामः, सखीचित्ते दमयन्तीहृदये, सतः वर्तमानस्य, ते तवैव, प्रतिच्छाया प्रतिबिम्बम्, अन्यथा इत्थं न चेत्, अतनोः अनङ्गस्य, अस्य मन्मथस्य, त्वया भवता, समरूपत्वं तुल्याकारत्वम्, कथं? केन प्रकारेण? भवितुमर्हतीति शेषः। अतनोः रूपासम्भवात् तत् न कथमपि सम्भवतीत्यर्थः। धर्म्यभावे धर्मानवकाशात् स्वच्छदर्पणे प्रतिबिम्बितमुखस्य मुखव्यतिरेकेण यथा स्थितिर्नास्ति, तथा अतिस्वच्छे नः सख्याः मनसि त्वद्व्यतिरेकेण त्वत्प्रतिबिम्बभूतस्य कामस्य पृथक् स्थितिरेव नास्ति अतनुत्वात् तस्य, अतो न पुरुषान्तरसेवावसरोऽस्याः इति भावः ॥ ४२ ॥

अथवा वह कामदेव सखी ( दमयन्ती ) के चित्तमें स्थित तुम्हारा प्रतिबिम्ब है, अन्यथा शरीरहीन ( कामदेव ) की तुम्हारे साथ समरूपता किस प्रकार होती ? [ जो वस्तु शरीरवान् है, किसी शरीरवान्के साथमें उसीकी समानता की जा सकती है, शरीरके साथ अशरीरोकी समानता कथमपि नहीं हो सकती; अतः दमयन्तीके हृदयमें नित्य निवास करनेवाले आपका प्रतिबिम्ब ही आपको कामरूपसे प्रतिभासित हो रहा है, वास्तविकमें तो वह काम कोई अन्य व्यक्ति नहीं, किन्तु आपका प्रतिबिम्बमात्र ही है। स्वच्छतम दर्पण आदिमें ही कोई वस्तु प्रतिबिम्बित होती है, अतः दमयन्तीके हृदयमें नित्य निवास करनेवाले आपका प्रतिबिम्ब कामरूपमें दृष्टिगोचर होता है, अत एव दमयन्तीका हृदय अत्यन्त स्वच्छ है, इस कारण आपको उसके हृदयको पुरुषान्तयुक्त होनेसे दूषित बतलाना सर्वथा अनुचित है ] ॥ ४२ ॥

कः स्मरः कस्त्वमत्रेति सन्देहे शोभयोभयोः ।
त्वय्येवार्थितया सेयं धत्ते चित्तेऽथवा युवाम् ॥ ४३ ॥

क इति । अथवा पक्षान्तरे, हे देव ! उभयोः तव कामस्य च द्वयोः, शोभया समानसौन्दर्येण हेतुना, अत्र अनयोः युवयोः मध्ये, स्मरः कामः, कः ? त्वं भवान् वा, कः ? इति एवं, सन्देहे संशये सति, सेयं भैमी, त्वय्येव भवत्येव, अर्थितया प्रार्थितया, त्वामेव लब्धुमिच्छुतया इत्यर्थः । चित्ते मनसि, युवां त्वां कामञ्च द्वावेव । 'त्यदादीनां मिथः सहोक्तौ यत् परं तत् शिष्यते' इति वचनात् त्यदाद्येकशेषः । धत्ते धारयति, त्वन्मन्मथयोः कतरः त्वम् इति सन्देहे कामस्य परित्यागे तवापि परित्यागाशङ्कया त्वं परित्यक्तः मा स्याः इति त्वदर्थित्वेन अनया उभौ एव चित्ते धार्येते, रत्नयोः कृत्रिमाकृत्रिमयोः सन्देहे उभयोरेव धारणवत्, अन्यथा अन्यतरत्यागे मुख्यस्यैवाकृत्रिमस्य त्यागभयादिति त्वदर्थमेव कामं धारयति, न तु कामार्थं त्वामिति भावः ॥ ४३ ॥

अथवा—दोनों ( तुम्हारी तथा कामदेव ) की शोभाओंके विषयमें ( समान होनेसे ) कामदेव कौन है ? और तुम ( नल ) कौन हो ? इस सन्देहके होनेपर यह दमयन्ती तुम्हारे विषयमें ही चाहना होनेसे तुम दोनों ( तुम्हें तथा कामदेव ) को चित्तमें धारण करती है । [ लोकमें भी मणि आदि किसी दो वस्तुके समानरूप होनेसे ( कौन असली है ? और कौन नकली ? ऐसा ) सन्देह होनेपर कोई व्यक्ति निर्णय होनेतक दोनोंको इस भयसे ग्रहण किये रहता है कि किसी एक के त्याग देनेपर कदाचित् मैं मुख्य ( असली ) का ही न त्याग कर दूं, न कि दोनोंको या-नकलीको ग्रहण करनेकी इच्छासे; उसी प्रकार सखीको तुम दोनोंकी समान कान्ति होनेसे 'कौन प्रिय नल हैं ? तथा कौन कामदेव है?' ऐसा सन्देह हुआ और वह तुम्हें ही ग्रहण करना तथा कामदेवका त्याग करना चाहती थी, अत एव 'इन दोनोंमेंसे किसी एकके छोड़नेपर कहीं मैं प्रिय नलको ही नहीं छोड़ दूं' इस भयसे निर्णय होनेतक तुम दोनोंको ही हृदयमें धारण करती है अर्थात् तुम्हारे लिए ही कामदेवको धारण करती है, कामदेवके लिए तुम्हें धारण नहीं करती ] ॥ ४३ ॥

त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् ।
शङ्कया पङ्कजाक्षी त्वां दृगंशेन स्पृशत्यसौ ॥ ४४ ॥

यदुक्तं 'पूर्णया' इत्यादि श्लोकेन तत्रोत्तरमाह—त्वयीति । पङ्कजाक्षी कमलनयना, अत एव अक्षिद्वये अस्या महत्येव ममत्वबुद्धिरिति भावः । असौ दमयन्ती, त्वयि भवति, न्यस्तस्य समर्पितस्य, चित्तस्य मनसः, दुराकर्षत्वदर्शनात् दुःखेनापि पुनः प्रत्यानेतुम् अशक्यत्वज्ञानात्, शङ्कया भयेन, त्वां भवन्तम्, दृगंशेन दृशः एकमात्रस्य चक्षुषः, अंशेन अवयवेन, किञ्चिन्मात्रभागेनेत्यर्थः । अपाङ्गेनेति यावत् ।

१. 'त्वय्यैवा—' इति पाठान्तरम् ।

स्पृशति स्पर्शविषयीकरोति, अवलोकयतीत्यर्थः । यदि पूर्णाभ्यां लोचनाभ्यां पश्येत् तदा पङ्कजवत् सुन्दरं नयनद्वयमपि चित्तवत् अपरावर्त्तनीयतया त्वयि लग्नं भवेदिति संशयेन आकर्णविश्रान्तस्य विशालस्य नेत्रस्य किञ्चिन्मात्रांशस्य त्वत्तः प्रत्याहरणासमर्थेऽपि 'सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः' इति शास्त्रात् न विशेषक्षतिरिति विविच्य त्वां पूर्णाभ्यां लोचनाभ्यामपश्यन्ती सा दृगंशमात्रेण पश्यति, अतो नोपालम्भावकाशः इति भावः ॥ ४४ ॥

( अब नलोक्त 'पूर्णया……' ( २०।३१ ) आक्षेपका 'कला' उत्तर दे रही है— ) कमललोचना (अत एव नेत्रमें विशेषतः ममत्वबुद्धिवाली ) यह (दमयन्ती) तुम्हारेमें समर्पित चित्तका पुनः प्रत्यावर्तन करना अशक्य होनेके कारण ( 'यदि मैं पूर्ण नेत्रोंसे इन्हें देखूंगी अर्थात् इनके लिए नेत्रोंको पूर्णतया समर्पित कर दूंगी तो सम्भव है कि ये नेत्र भी उसी प्रकार पुनः नहीं लौटेंगे, जिस प्रकार इनमें समर्पित चित्त नहीं लौट रहा है, इस ) भयसे तुमको नेत्रप्रान्त ( कटाक्ष ) से ही देखती है । [ 'पङ्कजाक्षी' कहनेसे दमयन्तीके नेत्रोंका अतिशय सौन्दर्यवान् होना तथा सौन्दर्यवान् पदार्थको किसीके लिए समर्पण करनेपर पुनः वापस आनेमें कठिनाई होनेके कारण उसे ( नेत्रोंको ) तुम्हारे लिये समर्पित नहीं करना अर्थात् पूर्ण नेत्रोंसे नहीं देखना सूचित होता है ] ॥ ४४ ॥

विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषोः ।
स्वेनालोकय शङ्का चेत् प्रत्ययः परवाचि कः ? ॥ ४५ ॥

यदुक्तं 'नालोकते' इत्यादि श्लोकेन तत्रोत्तरमाह—विलोकनादिति । विलोकनात् प्रभृति दूत्यकाले प्रथमदर्शनात् आरभ्यैव, 'अपादाने पञ्चमी' इति सूत्रे 'कार्त्तिक्याः प्रभृति इति भाष्यकारप्रयोगात् प्रभृतियोगे पञ्चमी' इति कैयटः । अस्याः दमयन्त्याः, चक्षुषोः लोचनयोः, लग्नः संसक्तः एव, असि वर्त्तसे, त्वमिति शेषः । शङ्का चेत् मदुक्तौ अविश्वासः यदि, तदा स्वेन आत्मना, स्वयमेवेत्यर्थः, आलोकय पश्य, त्वमस्याः चक्षुषोः लग्नो न वा इति परीक्षस्व इत्यर्थः । परवाचि अन्येषामुक्तौ, कः प्रत्ययः ? का श्रद्धा ? नैव श्रद्धा कर्त्तव्या इत्यर्थः । पुरःस्थस्य वस्तुनः प्रतिबिम्बः अक्षिकनीनिकायां साक्षात् अवलोक्यते, एवञ्च नलश्चेत् तथा द्रष्टुं प्रवर्त्तेत तदा स्वप्रतिबिम्बं तत्र प्रतिफलितं दृष्ट्वा स्वलग्नत्वं साक्षादेव पश्येत् इत्यत एव छलात् स्वेनालोकय इत्युक्तमिति मन्तव्यम् ॥ ४५ ॥

( दूतकर्म करते हुए ) देखनेसे लेकर ( आजतक ) तुम इस ( दमयन्ती ) के नेत्रोंमें लगे ही हुए हो अर्थात् तबसे लेकर दमयन्ती सदा तुम्हें ही देखती है, यदि ( मेरे कथनमें ) शङ्का है तो ( दमयन्तीके नेत्रमें ) स्वयं देख लो ( मैं दमयन्तीके नेत्रमें हूं या नहीं ?, क्योंकि ) दूसरेके कहनेमें कौन विश्वास है ? [ प्रत्यक्ष दृश्य वस्तुमें दूसरेके कहनेसे विश्वास करनेकी आवश्यकता नहीं होती, अत एव तुम स्वयमेव देख लो कि इसके नेत्रमें बसते हो या नहीं । यहाँपर 'कला' ने इस अभिप्रायसे नलके प्रति ऐसा वचन कहा है कि 'यदि

ये दमयन्तीके नेत्रोंको देखेंगे तो इनका प्रतिविम्ब दमयन्तीके नेत्रोंकी कनीनिकाओं (पुतलियों) में अवश्य पड़ेगा और उसे देखकर इन्हें विश्वास हो जायेगा कि सचमुच दमयन्ती मुझे अपने नेत्रोंमें रखती है। अथवा—जो तुमने कहा है कि दमयन्ती तुम-लोगोंको पूर्ण नेत्रोंसे सर्वदा तथा मुझे एक नेत्रप्रान्तके स्वल्पतम भागके द्राक् (क्षणमात्र) देखती है' यह तुमने सत्य ही [कहा है, क्योंकि तुम्हें दूतकर्म करते हुए दमयन्तीने देखा था, तबसे ही तुम उसके नेत्रमें ही रहते हो तथा नेत्रमें स्थित कज्जलादिका पूर्ण नेत्रोंसे स्वयं देखना जिस प्रकार अशक्य है, उसी प्रकार स्वनेत्रस्थ तुमको पूर्णनेत्रसे देखना दमयन्तीके लिए अशक्य है, तथा स्वनेत्रस्थ वस्तुको कोई स्वयं ही देख सकता है या नहीं, इस विषयमें तुम्हें शङ्का है तो अपने नेत्रगत गोलकादिको तुम स्वयं देख लो तो ज्ञात हो जायेगा कि दूसरेके कहनेमें क्या विश्वास है ? ] ॥ ४५ ॥

**परीरम्भेऽनयाऽऽरभ्य कुचकुङ्कुमसङ्क्रमम् ।**
**त्वयि मे हृदयस्यैवं[1] राग इत्युदितैव[2] वाक् ॥ ४६ ॥**

अथ यदुक्तं 'रागं दर्शयते' इत्यादिश्लोके तत्रोत्तरमाह—परीरम्भे इति । हे महाराज ! अनया सख्या, परीरम्भे गाढालिङ्गनसमये, कुचकुङ्कुमस्य निजस्तनद्वय-लिप्तस्य काश्मीरजस्य, सङ्क्रमं सङ्क्रान्तिम्, मुद्रणमित्यर्थः । आरभ्य उपक्रम्य, स्वकुचकुङ्कुमरागं तव हृदये संसञ्जनात् प्रभृतीत्यर्थः । त्वयि भवति नले विषये, मे मम, हृदयस्य अन्तःकरणस्य, रागः अनुरक्तिः, रक्तिमा च, एवम् इत्थम्, हृदयस-ङ्क्रामितकुचकुङ्कुमवदेवेत्यर्थः । इति इयम्, वाक् वचः, उदितैव उक्तैव, उक्तिवदेव व्यक्तं सूचितमित्यर्थः । अतः सखीषु अनुरक्ता न मयीति नोपालभ्येयमिति भावः ॥

(अब नलोक्त 'रागं दर्शयते' ......' (२०।३३) आक्षेपका 'कला' उत्तर देती है—) आलिङ्गनमें (तुम्हारे हृदयमें मेरे) स्तनोंके कुङ्कुमके लगनेसे लेकर 'तुम्हारे (नल) में मेरे हृदयका ऐसा अनुराग (पक्षा०—लालिमा) है, यह वचन कथित ही है। [इसी अभिप्रायसे दमयन्ती तुम्हारे प्रति सच्चा अनुराग विना वचनोंको कहे ही व्यक्त करनेसे वचन द्वारा उसे व्यक्त नहीं करती, क्योंकि किसी प्रकार कहे गये वचनका पुनः शब्दान्तरसे कहना कोई बुद्धिमत्ता नहीं है। पाठा०—...तुम्हारेमें ही मेरे 'हृदयका राग (अनुराग, पक्षा०—रक्तिमा) है......। अथवा—......तुम्हारेमें मेरे हृदयका अर्थात् हार्दिक ही राग है, शाब्दिक नहीं (अत एव शाब्दिककी अपेक्षा हार्दिक कार्यका अधिक महत्त्व होनेसे आपको उपालम्भ देना उचित नहीं है। द्वितीय पाठा०—......मानो यह बात तो कही गयी-सी है) अत एव पुनः कथन अनुचित समझकर यह दमयन्ती मुखसे कुछ नहीं बोलती]॥

**मनसाऽयं भवन्नामकामसूक्तजपव्रती ।**
**अक्षसूत्रं सखीकण्ठश्चुम्बत्येकावलिच्छलात् ॥ ४७ ॥**

---

१. 'हृदयस्यैव' इति पाठान्तरम् । २. 'इत्युदितेव' इति पाठान्तरम् ।

'कां नामन्त्रयते' इति श्लोके यदुक्तं तस्योत्तरमाह—मनसेति। अयम् इति हस्तेन पुरोवर्त्तिनिर्देशः, सखीकण्ठः भैमीगलनालः, मनसा अन्तःकरणेन, भवतो नलस्य, नामैव संज्ञा एव, कामसूक्तं कामाविर्भावनाय कामदेवप्रकाशकप्रधानमन्त्रः, तस्य जपः पुनः पुनरुच्चारणमेव, व्रतं नियमः अस्य अस्तीति तद्व्रती सन्, 'साहस्रो मानसो जपः' इति स्मृतेः, सर्वजपानां मानसिकजपस्य सहस्रगुणत्वात्, नारीणां भर्त्तृनामग्रहणनिषेधात् वा मनसा इत्युक्तम्, न तु जिह्वया इति भावः। एकावलिच्छलात् एकयष्टिकमुक्ताहारधारणव्याजात्, अक्षसूत्रं जपसङ्ख्यानार्थम् अक्षमालाम्, चुम्बति स्पृशति, धारयतीत्यर्थः। सखीनामग्रहणस्य कदाचित्कत्वात् त्वन्नामग्रहणस्य च नैरन्तर्यात् जिह्वया त्वन्नामस्पर्शाभावेऽपि नायमुपालम्भो युज्यते इति भावः॥४७॥

मनसे आपके नामरूप कामसूक्त (तुम्हारे नामोच्चारणमात्रसे कामोद्दीपन होनेके कारण कामोद्दीपक मन्त्र-विशेष) के जपका व्रती अर्थात् सर्वदा जपनेवाला यह (पुरोदृश्यमान) सखीका कण्ठ एकावली (एक लड़ीवाले मुक्ताहार) के बहानेसे अक्षमालाको धारण कर रहा है। [शास्त्रमें शाब्दिक जपकी अपेक्षा मानसिक जपका सहस्रगुणित फल होनेसे तथा पतिके नामका उच्चारण करनेका निषेध होनेसे दमयन्तीका कण्ठ मनसे (जिह्वासे नहीं) ही आपके नामका सदा जप करता है, अत एव मानो कण्ठने एक लड़ीवाले हाररूप मालाको ग्रहण किया है। इस प्रकार यह दमयन्ती आपके नामका तो सर्वदा मनसे ही जप करती रहती है और हमलोगोंका नाम तो मनसे नहीं—बाह्य जीभसे ही कभी कभी उच्चारण कर देती है, अत एव आपका उक्त उपालम्भ उचित नहीं है]॥ ४७॥

**अध्यासिते वयस्याया भवता महता हृदि।**
**स्तनावन्तरसम्मान्तौ निष्क्रान्तौ ब्रूमहे वहिः॥ ४८॥**

'अस्याः पीनस्तन' इत्यादिश्लोकोक्तं वैपरीत्यापादनेन परिहरति—अध्यासिते इति। हे महाराज! वयस्यायाः सख्याः, हृदि वक्षसि, वक्षोऽभ्यन्तरे इत्यर्थः। महता गौरववता बृहदाकारेण च, भवता त्वया, अध्यासिते अधिष्ठिते सति, समग्रतया आक्रम्य अवस्थिते सतीत्यर्थः। स्तनौ सख्याः कुचद्वयी, अन्तरसम्मान्तौ अभ्यन्तरे अवस्थातुं स्थानमप्राप्नुवन्तौ सन्तौ, वहिः हृदयस्य उपरिदेशे, निष्क्रान्तौ निर्गतौ, इति ब्रूमहे कथयामः, सम्भावयामः इति यावत्। भवदध्यासात् प्राक् अनिर्गमात् अध्यासादनन्तरञ्च निष्क्रमादिति भावः। अतोऽस्याः हृदयैकशरणः महाराजः एव इति निष्कर्षः॥ ४८॥

'महान् (गौरवयुक्त, पक्षा०—विशालाकार) आपके द्वारा इस (दमयन्ती) के हृदयमें अधिष्ठित होनेपर भीतरमें नहीं समाते (स्थान पाते) हुए दोनों स्तन बाहर निकल आये हैं' ऐसा हम कहती हैं॥ [पहले दमयन्तीके स्तन बाहर नहीं निकलते थे, किन्तु जबसे आपने इसके हृदयमें निवास किया तबसे उसमें रहनेका स्थान नहीं पा सकनेके कारण ही ये स्तन बाहर निकल आये है, ऐसा हम समझती हैं। लोकमें भी किसी बड़े व्यक्तिके द्वारा

किसी स्थानपर अधिकार कर लेनेपर निर्बल व्यक्ति वहाँ स्थान नहीं पानेसे वहांसे बाहर निकल जाता है । इस दमयन्तीके एकमात्र आप ही हृदयमें निवास करते हैं, स्वाङ्गभूत स्तनोंको भी वहाँ ठहरनेका अवकाश नहीं है ] ॥ ४८ ॥

कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया ।
कथं दर्शयतामास्यं बृहन्तावावृतौ ह्रिया ? ॥ ४९ ॥

**'अधिगत्य' इत्यादि श्लोकोक्तकुचवैमुख्योपालम्भस्योत्तरमाह—कुचाविति । बृहन्तौ महान्तौ अतिपीनौ इत्यर्थः, महाशयौ च, तथा दोषोज्झितौ दोषेण शिथिलत्वादिना, उज्झितौ वर्जितौ, कठिनौ इत्यर्थः । अथ च दोषा रात्रौ, उज्झितौ वस्त्रमुक्तौ, निरावरणौ इत्यर्थः । अस्याः सख्याः, कुचौ स्तनद्वयम्, त्वया भवता, पीडितौ पाणिभ्यां मर्दितौ, अहेतुकं दत्तक्लेशौ च, तथा व्रणितौ नखैः क्षतविक्षतीकृतौ, शस्त्राघातेन व्रणवन्तौ कृतौ इति च । व्रणवच्छब्दात् 'तत्करोति—' इति ण्यन्तात् कर्मणि क्तः, णाविष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लोपः । अतः ह्रिया लज्जया हेतुना, इवेति शेषः । आवृतौ आच्छन्नौ, वस्त्रेणेति शेषः । कथं केन प्रकारेण, आस्यं मुखम्, चुचुकमिति यावत्, आननञ्च । दर्शयताम् ? प्रकाशयताम् ? न कथमपीत्यर्थः । महान्तो जनाः परेण अहेतुकं दूषिता अपि लज्जया न मुखं प्रदर्शयन्तीति भावः । अत्र भवान् स्वयमेव कृतापराधः इति निष्कर्षः । दृशेर्ण्यन्तात् लोटि तामादेशः ॥ ४९ ॥**

( अब नलोक्त 'अधिगत्य……' ( २०।२६ ) आक्षेपका 'कला' उत्तर दे रही है— ) दोषरहित ( पक्षा०—रात्रिमें वस्त्रावरणरहित ), बड़े आकारवाले ( पक्षा०—प्रतिष्ठादिसम्पन्न होनेसे बड़े ) तुमसे ( रात्रिमें रतिकालमें ) हाथसे मर्दित ( पक्षा०—पीडित ) तथा ( नखक्षत, पक्षा०—शस्त्रादि ) से व्रणयुक्त किये गये इस ( दमयन्ती ) के दोनों स्तन ( दिनमें ) लज्जासे ( युक्त होनेके कारण वस्त्रसे ) ढके ( पक्षा०—मुख अपनेको छिपाये ) हुए इस ( दमयन्ती ) के स्तनमुख ( चूचुक, पक्षा०—मुंह ) को कैसे दिखलावें ? [ जिस प्रकार प्रतिष्ठित एवं अपराधरहित कोई बड़ा आदमी किसीसे पीडित एवं शस्त्रक्षत होकर लज्जासे अपना मुख छिपा लेता है और किसीको अपना मुख नहीं दिखलाता; उसी प्रकार रात्रिमें वस्त्ररहित, शैथिल्यादिदोष-रहित अर्थात् कठिन दमयन्तीके बड़े-बड़े स्तनोंको आपने हाथसे मर्दित एवं नखसे विक्षत कर दिया, मानो इसी कारण वे दिनमें लज्जावश वस्त्रसे आच्छादित हो अपना मुख नहीं दिखला रहे हैं, अतः इनका ऐसा करना उचित ही है । अथ च—आप यदि बाहर स्थित रहते तो ये स्तन अपना मुख आपको दिखलाते अर्थात् इनका अग्रभाग आपके नेत्रोंके सामने होता, किन्तु आप तो दमयन्तीके हृदयमें रहते हैं और ये स्तन ऊपर मुख किये दमयन्तीके हृदय ( वक्षःस्थल ) से बाहर रहते हैं, अत एव ये अपना मुख आपको कैसे दिखला सकते हैं, क्योंकि दमयन्ती-हृदयस्थ आपका स्तनाग्रके

सामने होना सर्वथा असम्भव है, अत एव स्तनोंके विषयमें भी आपका उपालम्भ देना उचित नहीं है ] ॥ ४९ ॥

इत्यसौ कलया सूक्तैः सिक्तः पीयूषवर्षिभिः।
ईदृगेवेति पप्रच्छ प्रियामुन्नमिताननाम् ॥ ५० ॥

इतीति। इति इत्थम्, कलया प्रियायाः सख्या, पीयूषवर्षिभिः अमृतस्यन्दिभिः, सूक्तैः प्रियवचनैः, सिक्तः आर्द्रीकृतः, सन्तोषित इत्यर्थः। असौ राजा, उन्नमितं स्वपाणिना उन्नतं कृतम्, आननं मुखं यस्याः तादृशीम्, प्रियां दमयन्तीम्, ईदृक् एव ? कलया यदुक्तं तत् किं सत्यमेव ? इत्यर्थः। इति एवम्, पप्रच्छ जिज्ञासयामास ॥ ५० ॥

'कला' के द्वारा इस प्रकार ( २०।३८–४९ ) अमृतवर्षी मधुर वचनोंसे सिक्त ( होनेसे प्रेमरससे परिपूर्ण ) ये नल प्रिया ( दमयन्ती ) के मुखको ऊपर उठाकर '( जैसा 'कला' कहती है ) यह ऐसा ही है ?' इस प्रकार पूछा ॥ ५० ॥

बभौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः।
चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥

बभाविति। प्रेयसीवक्त्रं दमयन्तीमुखम्, उन्नमयन् उत्तोलयन्, पत्युः भर्तुर्नलस्य, करः पाणिः, चिरेण महता कालेन, बहुकालान्तरमित्यर्थः। इन्दुना विधुना, निशाकाले सरसीवक्षःप्रतिविम्बितेनेति भावः। लब्धं प्राप्तं, सन्धानं सहजवैरनिवृत्तौ संयोगः येन तत् तादृशम्, अरविन्दं पद्मम् इव, बभौ शुशुभे। अभूतोपमेति दण्डी, अत्यन्तमसम्भवसम्बन्धोक्तेरतिशयोक्तिभेदः इत्यपरे ॥ ५१ ॥

अतिशय प्रिया ( दमयन्ती ) के मुखको ऊपर उठाता हुआ नलका हाथ बहुत समयके बाद ( सहज वैरको छोड़कर ) चन्द्रमासे सम्मिलित कमलके समान शोभित हुआ। [ इससे नलके हाथका कमलतुल्य तथा दमयन्तीके मुखका चन्द्रतुल्य होना सूचित होता है ] ॥५१॥

ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखम्।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥ ५२ ॥

ह्रीणेति। तदा तत्काले, नलकर्तृकदमयन्तीमुखोत्तोलनकाले इत्यर्थः। ह्रीणा लज्जिता च। 'नुदविद—' इत्यादिना विकल्पात् निष्ठानत्वम्। स्मयमाना मन्दं हसन्ती च, दमयन्ती भैमी, पुनः भूयः, मुखं वदनम्, नमयन्ती अवनमनं कुर्वती सती पत्युः नलस्य, अत्युच्चैः उच्चतरायै, मुदे आनन्दाय, अभवत् अजायत ॥ ५२ ॥

उस समय ( 'कला' की कही हुई बातको लेकर दमयन्तीका मुख उठाकर वैसा प्रश्न करनेपर ) लज्जित तथा स्मितयुक्त एवं नलके द्वारा अधिक ऊपर उठाये गये मुखको ( 'ये मेरा स्मित देख न लें' इस भावनासे ) फिर नीचे करती हुई वह दमयन्ती पतिके हर्षके लिए ( अथवा—पतिके अधिक हर्षके लिए ) हुई अर्थात् वैसा पूछनेपर लज्जित एवं स्मितयुक्त

हो ऊपर उठाये गये मुखको नीचे करती हुई प्रियाको देखकर नल अत्यधिक हर्षित हुए ॥

भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मितम् ।
परिहासविलासाय स्पृहयालुः सहप्रियः ॥ ५३ ॥

भूय इति । प्रियया भैम्या सह वर्त्तते इति सहप्रियः कान्तासंयुक्तः । 'तेन सह–' इत्यादिना बहुव्रीहिः । भूपतिः नलः, परिहासविलासाय नर्मक्रीडार्थम्, दमयन्त्या सहैव नर्मव्यवहारेण चित्तविनोदनायेत्यर्थः । स्पृहयालुः अभिलाषुकः, केलिकामुकः सन् इत्यर्थः । 'स्पृहेरीप्सितः' इति सम्प्रदानत्वाच्चतुर्थी, 'स्पृहिगृहि—' इत्यादिना आलुच् । भूयः पुनरपि, तस्याः प्रियायाः, सखीं कलाम्, सस्मितम् ईषद्धास्यसहितम्, आह स्म उवाच ॥ ५३ ॥

प्रिया ( दमयन्ती ) सहित नल परिहासक्रीड़ाके लिए इच्छुक होते हुए स्मितपूर्वक प्रियाकी सखी 'कला' से बोले ॥ ५३ ॥

क्षन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात्[1] ।
निशीव निसिधात्वर्थं[2] यदाचरति नात्र नः ॥ ५४ ॥

क्षन्तुमिति । इयम् एषा, वयस्या वः सखी, अस्य वर्त्तमानस्य, दिनस्य दिवसस्य, मन्तुम् अपराधम्, क्षन्तुं सोढुम्, व्यवस्यतात् प्रवर्त्तताम् । तातङादेशः । ननु दिनस्य कः खलुः दोषः? इत्याह—यत् यस्मात्, निशि इव रात्रौ इव, अत्र दिने, नः अस्माकम्, निसिधात्वर्थं निसिधातोः 'निसि चुम्बने' इति धातोः, अर्थम् अभिधेयम्, चुम्बनमित्यर्थः । न आचरति न व्यवहरति, न करोतीत्यर्थः, लज्जयेति शेषः । तत्र चुम्बनस्य विघ्नतायां दिनस्य स्वप्रकाश एव अपराधः, नान्यत् किञ्चित् निमित्तं पश्यामः इति भावः ॥ ५४ ॥

इस ( तुम्हारी ) सखी ( दमयन्ती ) को ( वर्तमान ) दिनके अपराधको क्षमा करनेके लिए व्यवसाययुक्त ( कार्यतत्पर अर्थात् तैयार ) करो, क्योंकि इस ( दिन ) में रात्रिके समान अर्थात् रात्रिमें जैसा किया था वैसा 'निश्' धातुके अर्थ ( चुम्बन ) को नहीं करती

---

१. 'व्यवस्यताम्' इति पाठे आत्मनेपदं चिन्त्यम्, इति 'प्रकाशः' । 'इयं वयस्याऽस्य दिनस्य मन्तुं क्षन्तुं त्वया व्यवस्यतां व्यवसायं प्रार्थ्यताम्–इति कर्मण्यात्मनेपदमिति केचित् । तदपीत्वप्राप्तौ व्यवसीयतामिति प्राप्तेरुपेक्ष्यम्, इति सुखावबोधा, इति म० म० शिवदत्तशर्माणः । २. 'निशिधात्वर्थम्' इति 'प्रकाश'कृता व्याख्यातस्य पाठस्य तु 'णिशि चुम्बने' निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु तालव्यान्त इति वभ्राम । सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन स्पष्टमेव दन्त्यान्तस्यैव प्रतिपादनात् 'निसेः प्रतिषेधो वाच्यः । निंस्से । निंस्स्व ।' इति महाभाष्ये भगवत्पतञ्जलिना स्पष्टं दन्त्यान्तस्यैव ध्वनितत्वाच्च दन्त्यान्तस्यैव सम्मतत्वेऽपि 'तालव्यान्तस्याप्यङ्गीकारे न बाधकम् ।' इति 'शब्दरत्न' कृदनुरोधात्कथञ्चिदौचित्यमिति बोध्यम् ।

है। [ इस दमयन्तीने रात्रिमें मेरा चुम्बन किया था, किन्तु इस समय दिन होनेके कारण मेरा चुम्बन नहीं कर रही है, अतः चुम्बन नहीं करनेमें यह दिन जो अपराध कर रहा है, उसे क्षमा करनेके लिए तुम्हारी सखी ( दमयन्ती ) तैयार होवे अर्थात् दिनके अपराधको क्षमा कर दे ] ॥ ५४ ॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः ।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः ॥ ५५ ॥

अथ दिनं किमस्या अनिष्टकारि? इत्यपेक्षायामाह—दिनेनेति । दिनेन अह्ना, अस्याः वः सख्याः, मुखस्य वदनस्य, सखा मित्रम्, सदृशत्वादिति भावः। इन्दुः चन्द्रः, यदि यद्यपि, तिरस्कृतः अवज्ञातः, सूर्योदयेन निष्प्रभीकरणात् तुच्छीकृतः इत्यर्थः। इति हेतोः दिनं अपराधि इति उच्यते यदि इति भावः। तर्हि तस्य मुखस्य, मित्राणां सखीनाम्, सदृशानामित्यर्थः। शतपत्राणां बहूनां पद्मानाम्, श्रियः अपि शोभाः अपि, विकाशनेनेति भावः। तत्कृताः तेन दिनेन सम्पादिताः दिनेन एतन्मुखस्य एकस्य सख्युरिन्दोरपकारे कृतेऽपि अनेकेषां मित्राणां कमलानामुपकारोऽपि कृतः। रात्र्या तु केवलं चन्द्र एव उपकृतः, तत् बहूपकारिणः एकोऽपराधो न गणनीयः, अतः दिनेऽपि चुम्बनमुचितमिति भावः ॥ ५५ ॥

यदि दिनने इस ( दमयन्ती ) के मुखके मित्र ( समानाह्लादक होनेसे सुहृद् ) चन्द्रमाको तिरस्कृत ( पक्षा०—निष्प्रभ ) किया है तो ( दमयन्तीके मुखके समान होनेके कारण ) उस ( मुख ) के मित्र कमलोंकी शोभा ( पक्षा०—सम्पत्ति ) को भी उसी ( दिन ही ) ने किया है। [ अत एव मुखके एक मित्र चन्द्रमाका अहित करनेपर भी उसी मुखके अनेक मित्र कमलोंका हितकरनेके कारण दिनका कोई अपराध नहीं है, अत एव दिनमें भी आप चाहें तो सखी चुम्बन कर सकती है। अथवा—……'तत्कृत्ताः' पाठा०—उस ( दिन ) के मित्र कमलोंकी या—मित्रोंके सैकड़ोंके वाहनोंकी शोभा ( पक्षा०—सम्पत्ति ) का उच्छेद भी तो चन्द्रमाने किया है ( अत एव दिनका किया हुआ अपराध छोटा तथा उसके प्रतिकारमें चन्द्रमाका किया हुआ अपराध बड़ा है, अतः दिनका अपराध नगण्य है। अथवा—……उस ( मुख ) के मित्र कमलोंकी शोभा उस ( दिन ) के द्वारा ही नष्ट हुई है ( क्या )? अर्थात् नहीं, कमलोंकी शोभाको तो चन्द्रने प्रतिकारस्वरूप नष्ट किया है, अत एव दिनका अपराध नगण्य है। अथवा—……उस ( दिन ) के मित्र कमलोंकी शोभाको भी तो ( मुखापेक्षा हीनकान्ति होनेसे ) उस ( दमयन्तीके मुख ) ने ही नष्ट किया है, ( अत एव दमयन्तीके मुख ) ने दिनके द्वारा किये गये अपने मित्र चन्द्रमाके श्रीनाशका प्रतिकार उस दिनके बहुतसे मित्रोंका श्रीनाश करके कर दिया है, इस कारणसे अत्र दिनका उक्तापराध नगण्य है ] ॥ ५५ ॥

लज्जितानि जितान्येव मयि क्रीडितयाऽन्यया ।
प्रत्यावृत्तानि तत्तानि पृच्छ सम्प्रति कं प्रति ? ॥ ५६ ॥

लज्जावशात् दिने नासौ चुम्बतीति चेत्तदप्ययुक्तमित्याह—लज्जितानीति। क्रीडितया रात्रौ स्वयमेव कृतसुरतक्रीडया, कर्त्तरि क्तः। अनया वः सख्या, मयि मम विषये मत्समीपे इति वा, यद्वा—मयि मम वक्षसि उत्थायेत्यर्थः। क्रीडितया कृतविपरीतविहारया इत्यर्थः। अनया लज्जितानि व्रीडितानि, भावे क्तः। जितान्येव निरस्तान्येव, दूरीकृतान्येवेत्यर्थः। सम्प्रति इदानीं पुनः, कं प्रति कम् उद्दिश्य, तानि लज्जितानि, प्रत्यावृत्तानि प्रत्यागतानि, तत् प्रत्यावृत्तेः निमित्तमित्यर्थः। पृच्छ जिज्ञासय। मयि प्रागेव लज्जात्यागात् नाहमस्याः लज्जायाः निमित्तम्, भवतीनां समीपे लज्जायाः जातत्वात् भवत्य एव अस्याः लज्जाकारणमिति तर्कयामीति भावः॥ ५६॥

( सुरतकालमें अनेकविध ) क्रीड़ा की हुई इस ( दमयन्ती ) ने मेरे विषयमें लज्जाको जीत ही लिया ( छोड़ ही दिया ) है, फिर वह लज्जा किसके प्रति लौट आयी ( किसके साथ यह लज्जा करती है ) ? यह पूछो। [ मेरे साथ रात्रिमें अनेक क्रीड़ाओंको इसने सङ्कोचरहित होकर किया, इससे स्पष्ट है कि इसने मुझसे लज्जा करना छोड़ दिया है, किन्तु इस समय तुमलोगोंके सामने पुनः लज्जा कर रही है, अतः ज्ञात होता है कि तुम्हींलोगोंसे यह लज्जित हो रही है ]॥ ५६॥

निशि दष्टाधरायापि सैषा मह्यं न रुष्यति[1]।
क्व फलं दशते बिम्बी-लता कीराय कुप्यति ?॥ ५७॥

सम्प्रति अधरदंशनादिरूपं स्वापराधं चतुर्भिः क्षालयति, निशीति। सा एषा प्रिया, निशि रजन्याम्, दष्टः कृतदंशनः, अधरः रदनच्छदः येन तस्मै तादृशायापि, मह्यं नलाय, न रुष्यति न कुप्यति। 'क्रुधद्रुह—' इत्यादिना सम्प्रदानत्वाच्चतुर्थी। तथा हि—बिम्बीलता रक्तफलाख्यवृक्षस्य व्रततिः, ओष्ठोपमफलस्य वृक्षस्य लता इत्यर्थः। 'तुण्डीकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि' इत्यमरः। फलं प्रसवम्, निजमेव बिम्बफलमित्यर्थः। दशते निजचञ्च्वा छिन्दते, कीराय शुकाय, क्व कुत्र, कुप्यति ? क्रुध्यति ? न क्वापीत्यर्थः। दृष्टान्तालङ्कारः, प्रतिवस्तूपमेति युक्तमिति केचित्॥ ५७॥

रातमें ( दाँतोंसे ) अधरक्षत करनेवाले मुझपर यह क्रोध नहीं करती है (पाठा०—करे), क्योंकि ( बिम्बी ) फलको काटनेवाले तोतेपर बिम्बीलता कहां ( किस देश या समयमें ) क्रोध करती है ? अर्थात् कभी क्रोध नहीं करती, अतः इसे मुझपर क्रोध नहीं करना चाहिये॥

श्रृणीपदसुचिह्ना[2] श्रीश्चोरिता कुम्भिकुम्भयोः।
पश्यैतस्याः कुचाभ्यां तन्नृपस्तौ पीडयामि न ?॥ ५८॥

---

१. 'रुष्यतु' इति पाठान्तरम्। २. 'सृणी—' इति दन्त्यादि पाठः 'प्रकाश'—व्याख्यातः।

यदुक्तं कलया 'कुचौ दोषोज्झितावस्याः पीडितौ व्रणितौ त्वया' इति तत्रोत्तरमाह—शृणीति। एतस्याः दमयन्त्याः, कुचाभ्यां स्तनाभ्याम्, कुम्भिकुम्भयोः गजस्य शिरःस्थपिण्डयोः सम्बन्धि, शृणीपदानि अङ्कुशक्षतानि एव, सुचिह्नानि उत्कृष्टलक्ष्माणि यस्याः सा तादृशी, श्रीः शोभा सम्पत्तिश्च, चोरिता अपहृता, इति पश्य एतत् त्वं स्वयमेवावलोकय। नखपदस्य अङ्कुशपदवदेव परिदृश्यमानत्वादिति भावः। तत् तस्मात्, चौर्यापराधाद्धेतोरित्यर्थः। नृपः दण्डधरः, चौर्योचितदण्डविधाता इत्यर्थः, अहं नलः, तौ कुचौ, न पीडयामि? न दण्डयामि? न मर्दयामि च? अपि तु पीडयाम्येव, दुष्टनिग्रहाधिकारात् राज्ञामिति भावः॥ ५८॥

इसके दोनों स्तनोंने अङ्कुशाघात (नखक्षत) रूप सुन्दर चिह्नवाली हाथीके कुम्भों (मस्तकस्थ मांस-पिण्डों) की शोभाको चुरा लिया है, उस कारण राजा (मैं) उन्हें (उन दोनों स्तनोंको) पीड़ित (दण्डित, पक्षा०—हस्तमर्दित) नहीं करूँ? (पाठा०—पीड़ित करता हूँ)। [चोरको दण्डित करना राजाका धर्म होनेसे नखक्षतसे अङ्कुशक्षत गजकुम्भकी शोभाको चुरानेवाले इसके स्तनोंको करमर्दनरूप दण्ड देना मुझे उचित ही है]॥

अधरामृतपानेन ममास्यमपराध्यतु।
मूद्र्ध्ना किमपराद्धं यः पादौ नाप्नोति चुम्बितुम्?॥ ५९॥

अधरेति। हे कले! मम मे, आस्यं मुखम्, अधरामृतपानेन अधरसुधास्वादनेन हेतुना, अपराध्यतु अनभिमताचरणात् अपराधि अस्तु। अत एव अपराधिनः अस्य एषा दण्डं विदधातु इति भावः। किन्तु मूद्र्ध्ना मम शिरसा, किम् अपराद्धम्? कः अपराधः कृतः? यः मूर्द्धा, पादौ अस्याश्चरणौ, चुम्बितुं स्प्रष्टुमित्यर्थः। न आप्नोति? न लभते? तत् पृच्छ इति शेषः॥ ५९॥

(इस दमयन्तीके) अधरके अमृतका (चुम्बन करते हुए) पान करनेसे (मेरा) मुख भले ही अपराधी हो, (किन्तु मेरे) मस्तकने क्या अपराध किया है जो (दमयन्तीके) चरणोंका चुम्बन (प्रसादनार्थ स्पर्श) भी नहीं पाता है?॥ ५९॥

अपराद्धं भवद्वाणी-श्राविणा पृच्छ किं मया?।
वीणाऽऽह परुषं यन्मां कलकण्ठी च निष्ठुरम्॥ ६०॥

अपराद्धमिति। यत् यस्मात्, वीणा वाद्यविशेषः, मां नलं, परुषं कर्कशम् अप्रियवाक्यञ्च, आह ब्रवीति, कलकण्ठी च कोकिला अपि, मां निष्ठुरं कठोरं सतिरस्कारञ्च, आह, अतः हे कले! पृच्छ जिज्ञासय, त्वं वः सखीम् इति शेषः। भवत्याः तव दमयन्त्याः, वाणीं वाक्यम्, शृणोति आकर्णयतीति तच्छ्राविणा, मया नलेन, किम् अपराद्धम्? कोऽपराधः कृतः? न किञ्चिदप्यपराद्धम् इत्यर्थः। लोकानामयमेव स्वभावो यत् पुरुषनिष्ठुरवाक्यश्रवणसन्तप्तचित्तं प्रशमयितुं सुमधुरं वाक्यं श्रोतुमिच्छा भवतीति तयोः पारुष्यदोषादरुच्या त्वत्सख्याः सुमधुरां वाणीं शुश्रूषुः अहं सम्भाषणेन वः सख्या अनुकम्पनीयः इति भावः॥ ६०॥

तुम्हारे ( दमयन्तीके ) वचनको सुननेवाला मैंने क्या अपराध किया ? जो मुझसे वीणा परुष ( कठोर ) और कोकिल निष्ठुर बोलती है ? ( यह अपनी सखी दमयन्तीसे ) पूछो। [ रात्रिको सुरतकालमें दमयन्तीके वीणाकी ध्वनि तथा कोकिलके कूजनसे भी मधुर वचन मैंने बहुत सुना, अतः इस समय वीणाकी ध्वनि तथा कोकिलका कूजना हमें अप्रिय मालूम होता है, क्योंकि श्रेष्ठ पदार्थका भोग करनेके बाद निष्कृष्ट पदार्थ प्रिय नहीं होता। प्रकृतमें जो जिसके प्रति अपराध करता है, उसीके प्रति उसे अनुचित व्यवहार करना चाहिये, मैंने तो दमयन्तीका वचन सुनकर उसका, वीणका या कोकिलाका कोई अपराध नहीं किया जो तुम्हारी सखी दमयन्तीने इस समय मुझसे बोलना छोड़ दिया और वीणा तथा कोकिल कठोर एवं निष्ठुर वचन कह रही है, इसका क्या कारण है ? यह तुम अपनी सखी से पूछो। अथवा—मुझसे वीणा जो परुष ( कठोर ) तथा कोकिल निष्ठुर बोलती है, सो हे कले ! तुम अपनी सखी दमयन्तीसे पूछो कि तुम्हारी ( वीणा तथा कोकिलसे भी मधुर ) वाणीको सुननेवाले मैंने क्या अपराध किया है ?। यह लोकनियम है कि जो दुःखी होता है, वह सुख चाहता है, अत एव दमयन्तीके वचनकी अपेक्षा कटु वीणाकी ध्वनि तथा कोकिलका कूजना सुनकर उससे भी मधुरतम दमयन्तीके वचनको मैंने पीछेसे चुपचाप आकर जो सुन लिया तो क्या अपराध किया, जो यह अब मेरे सामने नहीं बोलती, अत एव अब इसके सामने मुझे निरपराध कहकर बोलनेके लिये कहो ]॥६०॥

सेयमालिजने स्वस्य त्वयि विश्वस्य भाषताम् ।
ममताऽनुमताऽस्मासु पुनः प्रस्मर्यते कुतः ? ॥ ६१ ॥

सेति। हे कले ! सा इयं प्रिया भैमी, स्वस्य आत्मनः, आलिजने सखीजने, त्वयि भवति, विश्वस्य विस्रभ्य, प्रत्ययं कृत्वा इत्यर्थः। भाषतां वदतु, त्वां सखीं विश्वस्य अवश्यमेव एतत् कथयतु इत्यर्थः। किं भाषताम् ? इत्याह—अस्मासु मयि विषये, अनुमता अङ्गीकृता, ममता आत्मीयता, मम अयम् इत्यभिमानः इत्यर्थः। रजन्यां तदनुकूलाचरणादिति भावः। कुतः कस्मात् हेतोः, पुनः इदानीं, प्रस्मर्यते ? प्रगतस्मरणीक्रियते ? रात्रौ तथा आत्मीयत्वेन आलप्य दिवा युष्मत्समक्षं दृष्टिनिक्षेपमात्रस्यापि अकरणात् तत् कथं विस्मर्यते अनयेति पृच्छेत्यर्थः। मयि अनात्मीयाचरणे कथं जीवेयम् ? इति भावः ॥ ६१ ॥

यह ( दमयन्ती ) सखीजन तुमपर विश्वास करके कहे कि—( रात्रिमें ) हमारे विषयमें स्व-सम्मत आत्मीयताको फिर ( इस समय तुम ) क्यों भूल रही हो ? [ रातमें पूर्णतया मेरे साथ अनुकूल बर्ताव करके दमयन्तीने जो आत्मीयताका परिचय दिया था, उसे इस समय असम्भाषण आदि प्रतिकूलाचरण करके क्यों भूल रही है ? इस बातको प्रिय सखी तुममें विश्वासकर बतलावे ] ॥ ६१ ॥

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात् ।
सन्निधाप्य श्रुतौ तस्या निजास्यं सा जगाद ताम् ॥ ६२ ॥

अथेति । अथ राजवाक्यानन्तरम्, सा कला, भैम्याः दमयन्त्याः, उपवदनं आननसमीपे । सामीप्येऽव्ययीभावः, 'तृतीयासप्तम्योर्बहुलम्' इति विकल्पात् सप्तम्यां नाम्भावः । स्वकर्णस्य निजश्रवणस्य, उपनयच्छलात् समीपनयनव्याजात्, ततः तस्याः भैम्याः, श्रुतौ कर्णे, निजास्यं स्वमुखम् सन्निधाप्य सन्निहितं कृत्वा, तां भैमीम्, जगाद बभाषे ॥ ६२ ॥

इस ( नलके ऐसा ( २०५४-६१ ) कहने ) के बाद उस ( 'कला' नामकी सखी ) ने दमयन्तीके मुखके पास अपना कान करनेके छलसे उस ( दमयन्ती ) के कानों ( के पास ) में अपना मुख लगाकर उस ( दमयन्ती ) से बोली ॥ ६२ ॥

अहो ! मयि रहोवृत्तं धूर्ते ! किमपि नाभ्यधाः ।
आस्स्व सत्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥

अह इति । धूर्ते ! हे वञ्चनपरे ! मयि अस्मत्समीपे, रहोवृत्तं रहस्यचेष्टितम्, चुम्बनालिङ्गनादिरूपं निर्जनवृत्तान्तमित्यर्थः । किम् अपि किञ्चिदपि, न अभ्यधाः न अभिहितवती असि, त्वमिति शेषः, इत्यहो ! आश्चर्यम् ! भवतु, आस्स्व तिष्ठ । इमम् अमुम्, भूपं राजानं नलमेव, ते तव, तत् रात्रिचेष्टितमित्यर्थः । सत्यं यथायथम्, अभिधापये वाचयामि, कौशलेन भूपमेव सर्वं ख्यापयिष्यामि इत्यर्थः । 'गतिबुद्धि-' इत्यादिना शब्दकर्मत्वादणिकर्त्तुः कर्मत्वम् । राजा यथा स्वयमेव तव रहस्यवृत्तान्तं कथयति तथा करोमि इति निष्कर्षः ॥ ६३ ॥

हे धूर्ते ( दमयन्ति ) मुझसे तुमने एकान्तमें हुए कुछ भी ( आलिङ्गन चुम्बनादि ) वृत्तान्त नहीं कहा, अहो ! आश्चर्य है ( कि तुम—जैसी धूर्ता सखीको मैंने कहीं नहीं देखा ) सो ठहरो, उस ( एकान्तके वृत्तान्त ) को मैं सत्य बोलनेवाले राजा ( नल ) से ही कहलाती हूं । ( अथवा—उस सत्य अर्थात् यथार्थ वृत्तान्तको मैं भूप''' पाठा०—मैं राजा नलसे ही उस असभ्य ( सब सभामें अकथनीय होनेसे अश्लील ) वृत्तान्तको शीघ्र कहलवाती हूं ) ॥ ६३ ॥

स्मरशास्त्रमधीयाना शिक्षिताऽसि मयैव यम् ।
अगोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ? ॥ ६४ ॥

स्मरेति । स्मरशास्त्रं वात्स्यायनादिकामतन्त्रम्, अधीयाना पठन्ती, मत्तः अभ्यस्यन्तीत्यर्थः । त्वमिति शेषः । यं दाम्पत्यव्यत्ययमित्यर्थः । मया कलयैव, अध्यापिकया एव इति यावत्, शिक्षिता उपदिष्टा, असि भवसि । 'ब्रुविशासि—' इति शासेरर्थग्रहणात् द्विकर्मकत्वम्, 'अप्रधाने दुहादीनाम्' इति अप्रधाने कर्मणि क्तः । त्वया भवत्या, स मदुपदिष्टः, दाम्पत्यव्यत्ययः दाम्पत्यस्य दम्पतिव्यवहारस्य स्वाभाविकविहारस्य, व्यत्ययः वैपरीत्यम्, अन्यथाचरणमित्यर्थः । विपरीतसम्भोगः इति यावत् । कृत्वाऽपि स्वयं निष्पाद्यापि, किं किमर्थम्, अगोपि ?

मम समीपे गोपितः ? शिक्षयित्रीं मामेव यदा त्वं गोपायितुमिच्छसि, तदा नास्ति तवासाध्यं किञ्चिदिति भावः। एतत्तु 'लज्जितानि जितान्येव' इत्यादिना नलोक्तिमनुसृत्यैव चतुरया सख्या अभिहितमिति मन्तव्यम् । 'नितरां धाष्टर्यमवलम्ब्य मया शिक्षितं विपरीतसुरतं कृत्वाऽपि ममैव पुरस्तात् न कृतमिति कथयसीति नितरां वञ्चनाचतुराऽसीति भावः' इति 'नैषधीयप्रकाशः' ॥ ६४ ॥

( वात्स्यायनादिरचित ) कामशास्त्रको पढ़ती हुई मुझसे ही जिस ( विपरीत रति ) को तुमने सीखा है, उस विपरीत रतिको करके भी तुमने क्यों छिपाया ? ॥ ६४ ॥

मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।
वादं वादं मुहुश्चक्रे हुं हुमित्यन्तराऽन्तरा ॥ ६५ ॥

मौनिन्यामिति। सा कला, तस्यां भैम्याम्, मौनिन्यामेव तूष्णीम्भूतायामेव, किमपि अकथयन्त्यामेवेत्यर्थः। तदुक्तीः तस्याः दमयन्त्याः वाक्यानि, शृण्वती आकर्णयन्तीव, श्रवणभङ्गीं प्रकाशयन्तीवेत्यर्थः। अन्तराऽन्तरा मध्ये मध्ये, वादं वादं तद्वाक्यस्य प्रत्युत्तरम् इव चोदित्वा। आभीक्ष्ण्ये णमुल्। मुहुः पुनः पुनः, हुं हुम् इति हुं हुमित्यनुमोदनसूचकं शब्दम्, चक्रे कृतवती, पुनः पुनः हुं हुमिति करणेन तद्वाक्यानुमोदनं चकार इत्यर्थः। अनेनास्या अतीवपरिहासप्रियत्वं व्यज्यते इति बोद्धव्यम् ॥ ६५ ॥

( दमयन्तीसे इतना कहनेपर भी ) उस ( दमयन्ती ) के चुप रहनेपर ही उसके कथनको सुनती हुई-सी वह ( कला ) वात-वातमें बीच-बीचमें 'हुं-हुं' ऐसा करती थी। [ यद्यपि दमयन्ती उसकी बातोंका कुछ भी उत्तर नहीं देती थी, तथापि वह कला बीच-बीचमें इस प्रकार 'हुं-हुं' कर रही थी, मानो दमयन्तीकी बात सुन रही हो। कलाने परिहास करनेवाले नलसे अधिक परिहास करनेके लिए ही ऐसा किया, अत एव उसकी विशेष परिहासप्रियता सूचित होती है ] ॥ ६५ ॥

अथासावभिसृत्यास्या रतिप्रागल्भ्यशङ्किनी ।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपम् ॥ ६६ ॥

अथेति। अथ उक्तप्रकारभङ्गिकरणानन्तरम्, अस्याः भैम्याः, रतिप्रागल्भ्यं सुरतकाले नैपुण्यम्, शङ्कते तर्कयतीति रतिप्रागल्भ्यशङ्किनी सुरतक्रीडायां दमयन्ती निपुणा जाता इति विवेचयन्तीत्यर्थः। असौ कला, अभिसृत्य दमयन्तीसकाशं गत्वा, सख्याः भैम्याः, लीलाम्बुजानां करस्थितलीलाकमलानाम्, आघातं ताडनम्, अनुभूय प्राप्य, नृपं राजानम्, आलपत् अभाषत ॥ ६६ ॥

इस ( 'कला' के इस प्रकार ( २०।६३-६४ ) विशेष परिहास करने ) के बाद रतिकी प्रगलभताका अनुमान करनेवाली ( 'दमयन्ती रति करनेमें पूर्णतः निष्णात हो गयी' इस

प्रकार समझती हुई ) वह ( कला ) ( दमयन्तीके समीप ) जाकर दमयन्तीद्वारा लीलाकमलसे ताडित होकर नलसे बोली ॥ ६६ ॥

दृष्टं ! दृष्टं !! महाराज ! त्वदर्थाभ्यर्थनाक्रुधा ।
यत्ताडयति मामेवं यद्वा तर्जयति भ्रुवा ? ॥ ६७ ॥

तदेवाह षड्भिः—दृष्टमित्यादि । हे महाराज ! दृष्टं ! दृष्टम् !! अवलोकितम् ! अवलोकितम् !! इति आक्षेपे द्विरुक्तिः । किं दृष्टम् ? तत्राह—त्वदर्थं भवन्निमित्तम्, यत् अभ्यर्थना प्रार्थना, भर्त्तुरभिलाषं पूरयतु इत्येवंरूपा याच्ञा इत्यर्थः । तया क्रुधा रोषेण, यत् माम् एवम् अनेन प्रकारेण, ताडयति प्रहारयति, यत् वा यच्च, भ्रुवा भ्रूभङ्गेण, तर्जयति तिरस्करोति, तत् उभयं दृष्टं खलु ? इत्यर्थः । एतच्च रहस्यवाक्यश्रवणार्थमिति भावः । तर्जतेरनुदात्तेत्त्वेऽपि अनुदात्तेतः चक्षिङः ङित्करणेनानित्यताज्ञापनात् परस्मैपदमपि भवति, अत एव तर्जयते भर्त्सयते तर्जयतीत्यपि च दृश्यते इति भट्टमल्लः[1] ॥ ६७ ॥

'हे महाराज ( नल ) ! आपने देखा, देखा; कि—आपके लिए ( रति-विषयक ) याचना करनेसे क्रुद्ध ( यह दमयन्ती ) मुझे इस प्रकार मार रही है ( कि तुमने ऐसा क्यों किया ? ) और भौंहसे डरवा रही है ( कि—फिर ऐसा कभी मत कहना )' ॥ ६७ ॥

वदत्यचिह्नि चिह्नेन त्वया केनैष नैषधः ? ।
शङ्के शक्रः स्वयं कृत्वा मायामायातवानयम् ॥ ६८ ॥

किं तद्वाक्यम् ? तदाह त्रिभिः, वदतीत्यादि । हे राजन् ? वदति कथयति, भैमी मामिति शेषः । तदेवाह—हे कले ? त्वया भवत्या, एषः अयं जनः, केन चिह्नेन लक्षणेन, नैषधः नलः, इति अचिह्नि ? चिह्नितः ? प्रत्यभिज्ञातः ? इत्यर्थः । शङ्के मन्ये, अहमिति शेषः । अयम् एष जनः, स्वयं साक्षात्, शक्रः इन्द्र एव, मायां छलम्, छलेन नलवेशधारणमित्यर्थः, कृत्वा विधाय, आयातवान् आगतवान् इति॥

( तुम्हारे लिए याचना करनेपर मेरे कानमें ) यह कहती है कि—'तुमने इस नलको किस चिह्नसे निर्धारित किया है ? 'यह माया करके ( मायाद्वारा नलरूप धारणकरके ) स्वयं इन्द्र आया हुआ है' ऐसी शङ्का मैं करती हूं ( अतः मुझसे इस परपुरुषके लिए तुम क्यों रति-याचना करती हो ? ) ॥ ६८ ॥

स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानताम् ।
नयतीयं त्वदिन्द्रत्वे दिवश्चागमनञ्च ते ॥ ६९ ॥

कथं मयि अस्याः शक्रशङ्का ? इत्याह—स्वर्णदीति । किञ्च, हे महाराज ! इयं

---

१. 'भर्त्सयते तर्जयते सन्तर्जति' इत्येवं वचनमुपलभ्यते भट्टमल्लकृतायामाख्यातचन्द्रिकायाम् ( आ० च० १।१०५ ) इति बोध्यम् ।

भैमी, स्वर्णद्यास्त्र आकाशगङ्गायां मन्दाकिन्याम्, या स्वर्णपद्मिनी कनकमयकमलकलता तस्याः, पद्मस्य स्वर्णकमलस्य, दानं स्वस्यै अर्पणम्, तथा ते तव, दिवश्च अन्तरीक्षाच्च, आगमनञ्च उपस्थितिश्च, त्वदिन्द्रत्वे तव वासवत्वसंशये, निदानतां मूलकारणताम्, नयति प्रापयति । मानवे एतदुभयस्यासम्भवत्वादिति भावः ॥ ६९ ॥

आकाशगङ्गाका स्वर्ण-कमल देना तथा स्वर्गसे ( रथद्वारा तुम्हारा यहांपर ) आना तुम्हारे ( नलके ) इन्द्र होनेमें यह ( दमयन्ती ) कारण मानती है । मनुष्यका आकाशगङ्गाका स्वर्णकमल लाना तथा स्वर्गसे आना असम्भव होनेसे यह तुमको मायासे नलका रूप धारणकर इन्द्र होनेमें मूल कारण समझती है, क्योंकि तुम स्वर्गसे रथपर चढ़कर आये हो तथा इसके लिए आकाशगङ्गाका स्वर्णकमल दिये हो ( २०।१-४ ), अत एव इसको ऐसी शङ्का होना उचित प्रतीत होता है । यहांपर 'कला' परिहास करनेमें नलसे भी आगे बढ़ गयी है ] ॥ ६९ ॥

भाषते नैषधच्छाया मायाऽमायि मया हरेः ।
आह चाहमहल्यायां तस्याकर्णितदुर्णया ॥ ७० ॥

भाषते इति । हे महाराज ! भाषते भैमी अन्यदपि वदति । किमिति ? हे कले ! मया नैषधच्छाया नलरूपधरा, हरेः इन्द्रस्य, माया छलना, अमायि अनुमिता, स्वयंवरकाले तथाभूतव्यापारदर्शनादिति भावः । माङः कर्मणि लुङ् चिणि युगागमः । ननु तदानीं ते कौमार्यात् त्वल्लाभार्थं तस्य माया न दूषणीया, इदानीन्तु तव परस्त्रीत्वात् तस्य तथाविधा माया न सम्भवत्येव इत्याह—आह च एतदपि वदतीत्यर्थः । अहं दमयन्ती, अहल्यायां तन्नाम्न्यां गौतमभार्यायाम्, तस्य इन्द्रस्य, आकर्णितः श्रुतः, पुराणादौ इति शेषः । दुर्णयः दुश्चेष्टितम्, मायया गौतमरूपं धृत्वा सतीत्वनाशरूपदुर्व्यवहार इत्यर्थः । यया सा तादृशी, अस्मीति शेषः । सापेक्षत्वेऽपि गमकत्वात् समासः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । पारदार्यात् भीतिरप्यस्य नास्ति, अत इदानीमपि तत्कर्तृकनलरूपधारणं नासम्भवः इति भावः ॥ ७० ॥

( यह दमयन्ती मुझसे यह भी ) कहती है कि—'( मैंने ) इन्द्रके नलकान्ति (को मायासे धारण करने ) के कपटका अनुमान कर लिया । ( 'उससमय तुम्हें कुमारी रहनेसे उक्त मायाद्वारा इन्द्रका तुम्हें प्राप्त करनेकी चेष्टा करना अनुचित नहीं कहा जा सकता, किन्तु अब तो तुम नलकी पत्नी होनेसे परस्त्री हो गयी हो, अतः इन्द्र मायासे नलका रूप धारण कर तुम्हें प्राप्त करनेकी चेष्टा कैसे कर सकते हैं' इस शङ्काके उत्तरमें यह दमयन्ती ) और कहती है कि उस ( इन्द्रकी ) अहल्या ( गौतमपत्नी ) में दुर्नीति ( व्यभिचार ) मैंने सुना है ( अत एव इन्द्रका परस्त्री-सम्भोगसे भी डरकर ऐसा करना असम्भव नहीं है )' ॥ ७० ॥

सम्भावयति वैदर्भी दर्भाग्राभमतिस्तव ।
जम्भारित्वं कराम्भोजादम्भोलिपरिरम्भिणः ॥ ७१ ॥

सम्भावयतीति । किञ्च, दर्भाग्राभा कुशाग्रसदृशी, अतीव तीच्णा इत्यर्थः, मतिः बुद्धिः यस्याः सा तादृशी सूक्ष्मबुद्धिः, वैदर्भी दमयन्ती, दम्भोलिः वज्रायुधं वज्ररेखाञ्च, परिरभते धारयतीति तस्मात् वज्रायुधधरात् वज्रचिह्नविशिष्टाच्च, कराम्भोजात् पाणिकमलात् हेतोः, कराम्भोजं दृष्ट्वा इत्यर्थः । तव ते, जम्भारित्वम् इन्द्रत्वम्, सम्भावयति तर्कयति । 'वज्रहस्तः पुरन्दरः' इति श्रुतेः तथा नलस्य पाणितले वज्रादिविविधसार्वभौमलक्षणस्यावस्थानादिति भावः ॥ ७१ ॥

कुशाग्रके समान ( सूक्ष्म ) बुद्धिवाली दमयन्ती वज्रशस्त्रधारी ( पक्षा०—वज्रचिह्नाङ्कित ) करकमलसे तुम्हें इन्द्र समझती है । [ इन्द्रके हाथमें 'वज्र' नामक शस्त्र रहता है, नलके हाथमें 'वज्र' का चिह्न है, अतः परमचतुरा 'कला' वज्रचिह्नको वज्रायुध मानती हुई नलको इन्द्र होना प्रमाणित कर रही है । नलके हाथमें वज्रचिह्न होनेसे उनका सार्वभौम होना सूचित होता है ] ॥ ७१ ॥

अनन्यसाक्षिकाः साक्षात्तद्व्याख्याय रहःक्रियाः ।
शङ्काऽऽतङ्कं नुदैतस्या यदि त्वं तत्त्वनैषधः ॥ ७२ ॥

अनन्येति । हे राजन् ! त्वं भवान्, यदि चेत्, तत्त्वनैषधः परमार्थनलः, असीति शेषः, तत् तर्हि, अनन्यसाक्षिकाः नास्ति अन्ये स्वेतराः, साक्षिणः प्रत्यक्षदर्शिनः यासां तादृशीः स्वमात्रसंवेद्याः, रहःक्रियाः चुम्बनालिङ्गनादिरूपरहस्यव्यापारान्, साक्षात् अस्याः समक्षं स्वयमेव, व्याख्याय उक्त्वा, एतस्याः वैदर्भ्याः, शङ्कायाः इन्द्रत्वसन्देहस्य, आतङ्कं भयम्, नुद निवर्त्तय । यान् यान् गुप्तव्यापारान् केवलं युवामेव जानीथः, न पुनरन्येषां केषाञ्चिदपि तज्ज्ञानसम्भावना, ईदृशान् व्यापारान् यदि त्वं शक्तुं शक्नोषि, तदैव एषा त्वां नलत्वेन अवधारयिष्यति, नान्यथा इति भावः॥

यदि तुम वास्तविक नल हो तो अनन्यसाक्षिक ( जिसे तुम दोनोंके अतिरक्त किसीने नहीं देखा है ऐसी ) एकान्तकी ( आलिङ्गन, चुम्बन, सम्भाषण एवं रति आदि ) क्रियाओंको विशेषरूपसे अर्थात् स्पष्ट कहकर इस ( दमयन्ती ) के शङ्काजन्य भयको दूर करो, [ 'कला'ने नलके द्वारा ही रहोवृत्त कहलवानेके लिए जो पहले ( २०।६३ ) दमयन्तीसे कहा था, उसे कहनेके लिये नलको वाध्य कर यहां उसने अपने चातुर्यकी पराकाष्ठा प्रदर्शित की है]॥७२॥

इति तत्सुप्रयुक्तार्था[1] निह्नुतीकृतकैतवाम् ।
वाचमाकर्ण्य तद्भावे संशयालुः शशंस सः ॥ ७३ ॥

इतीति । इति इत्थम्, तया कलया, सुप्रयुक्तार्था सुप्रयुक्तः स्वर्गगमनस्वर्णपद्मदानवज्रधारणादिजन्यसन्देहस्य निरसनाय यथाकालं सम्यगुपन्यस्तः, अर्थः अभिधेयः यस्याः तादृशीम्, 'सुप्रयुक्तत्व' इति पाठे—सुप्रयुक्तत्वेन युक्तियुक्तरूपेण प्रयोगेण, निह्नुतीकृतकैतवां निह्नुतीकृतं कैतवद्योतकहास्यादिविकाररहित्येन गोपायितम्,

1. 'क्त्वनिह्नुती-' इति पाठान्तरम् ।

कैतवं छलं यत्र तादृशीम्, अप्रकाशीकृतनिगूढाभिप्रायाम्, वाचं वाक्यम्, आकर्ण्य श्रुत्वा, सः नलः, तस्याः भैम्याः, भावे अभिप्राये; संशयालुः किमियं सत्यमेव मामिन्द्रमाशङ्क्य चुम्बनादिकं न करोति इति सन्दिहानः सन्, शशंस कथयामास। संशयोच्छेदकरहस्यवाक्यसमूहम् उवाच इत्यर्थः। एतेन कलायाः वचनचातुर्येण राज्ञः पराजयः सूचित इति बोद्धव्यम् ॥ ७३ ॥

उस ( कला ) से सुप्रयुक्त अर्थवाला ( पाठा०—अच्छी तरह ( परिहासादि चेष्टारहित होकर कहने ) से ) छिपाया गया है कपट जिसमें ऐसा अर्थात् कपटयुक्त होनेपर भी कपटरहित प्रतीत होनेवाला यह ( २०।६७–७२ ) वचन सुनकर उस ( दमयन्ती ) के अभिप्रायमें सन्देहान्वित ( यह दमयन्ती सचमुच आकाशगङ्गाका स्वर्णकमल अर्पित करने, स्वर्गसे आने तथा हाथमें वज्रग्रहण करनेके कारण मुझे नलवेषधारी इन्द्र मानकर ही मेरा आलिङ्गन-चुम्बनादि नहीं करती है क्या? इस प्रकारके सन्देहसे युक्त ) वे ( नल ) बोले [इस प्रकार 'कला' के चातुर्यपूर्वक वचन कहनेसे नलका पराजय सूचित होता है] ॥७३॥

स्मरसि छद्मनिद्रालुर्मया नाभौ शयार्पणात् ।
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ? ॥ ७४ ॥

अथैतदेव विंशत्याः श्लोकैः प्रपञ्चेनाह, स्मरसीत्यादि । हे प्रिये ! छद्मना कपटेन, निद्रालुः सुप्ता। 'स्पृहिगृहि–' इत्यादिना निपूर्वात् द्रातेरालुच्। त्वमिति शेषः। मया नलेन, नाभौ तव नाभिदेशे, शयस्य पाणेः, अर्पणात् स्थापनात्, नीवीग्रन्थिमोचनार्थमिति भावः। आनन्देन स्पर्शसुखेन, उल्लसल्लोमा प्रहृष्यद्रोमा सती, रोमाञ्चितगात्री सतीत्यर्थः। यत् पद्मं नाभौ यस्याः सा पद्मनाभिः अपद्मनाभिः पद्मनाभिर्भविष्यसीति पद्मनाभीभविष्यसि पद्मनाभितुल्या सञ्जाताऽसि इत्यर्थः। मम पाणेः पद्मतुल्यत्वात् तव रोमाञ्चानाञ्च पद्मस्य कण्टकतुल्यत्वादिति भावः। पद्मनाभः विष्णुश्च सः अपि छद्मनिद्रालुः इति बोध्यम्। 'अच् प्रत्यन्ववपूर्वात्–' इत्यादिसूत्रे 'अच्' इति योगविभागात् उभयत्रापि समासान्तोऽच्प्रत्ययः। अभूततद्भावे च्विः। 'अभिज्ञावचने लृट्' इति भूतार्थे लृट्। तत्तु स्मरसि ? तत् प्रत्यभिजानासि किम् ? इति काकुः॥७४॥

( यहांसे लेकर २२ श्लोकतक ( २०।७४–९५ ) नल रहोवृत्त कहते हैं– ) सकपट सोयी हुई तुम नाभिमें ( नीविमोचनार्थ मेरे ) हाथके रखनेपर जो ( पाठा०—उसके ) आनन्दसे रोमाञ्चित हो कमलनाभिवाली हो गयी, यह स्मरण करती हो ? । [ यहां नीविमोचनार्थ

---

१. 'मूलोक्तपाठे न यदि' इति यच्छब्दयोगेऽभिज्ञावचने प्राप्तस्य लृटो निषेधाभिप्रायेण 'तदानन्द–' इति पाठः सभ्यः इति 'प्रकाश'कार आह। मूलपाठेऽपि यदेति पदच्छेदेन यच्छब्दयोगेऽपि व्याजशयनेन लक्षणेन पद्मनाभीभवनस्य लक्षणतया लक्ष्यलक्षणसम्बन्धे 'विभाषा साकाङ्क्षे' इति परत्वाल्लृटो विधानाद्दोषाभाव इति 'सुखावबोधाकार' स्याभिप्रायः इति शि० द० शर्माणः ।

व्याजसुप्त दमयन्तीकी नाभिपर नलको हाथ रखनेपर रोमाञ्चित होनेसे रोमाञ्चको कण्टक तथा नलके हाथको कमलतुल्य होनेसे दमयन्तीकी नाभिको पद्मनाभि होना कहा गया है। अथवा—रोमाञ्चको कण्टक तथा नाभिको विकसित कमल मानकर दमयन्तीकी नाभिको पद्मनाभि कहा गया है। अथवा—नाभिपर करकमल रखनेसे तुम पद्मनाभि (कमलयुक्त नाभिवाली अर्थात् विष्णु) हुई थी (क्योंकि विष्णुके ही नाभिमें कमल रहता है) ऐसा अर्थ करना चाहिये। वास्तविक शयन में नाभिपर हाथ रखनेसे रोमाञ्च नहीं होनेके कारण यहां दमयन्तीको सकपट सोना कहा गया है] ॥ ७४ ॥

जानासि ह्रीभयव्यग्रा यन्नवे मन्मथोत्सवे।
सामिभुक्तैव मुक्ताऽसि मृद्वि! खेदभयान्मया? ॥ ७५ ॥

जानासीति। मृद्वि! हे कोमलाङ्गि! अत एव अतिपीडाऽसहत्वात् खेदभयमिति भावः। नवे नूतने, मन्मथोत्सवे स्मरोल्लासे, प्रथमरतक्रीडायामित्यर्थः। ह्रीभयाभ्यां लज्जाऽऽतङ्काभ्याम्, व्यग्रा विभ्रान्तचित्ता, त्वमिति शेषः, खेदः सुरतश्रमजनितक्लेशः, तद्भयात् तच्छङ्कातः, मया सामिभुक्तैव अर्द्धभुक्तैव, अर्द्धमात्रकृतसुरतैवेत्यर्थः। 'सामि त्वर्द्धे जुगुप्सिते' इत्यमरः। मुक्ताऽसि परित्यक्ता भवसि, तदन्यथा वैरस्यात् इति भावः। तदुक्तं रतिरहस्ये—'सहसा वाऽप्युपक्रान्ता कन्या खेदमविन्दत। भयाच्चित्तसमुद्वेगं सद्यो द्वेषञ्च गच्छति॥ सा प्रीतियोगमप्राप्य बलोद्वेगेन दूषिता। पुरुषद्वेषिणी वा स्यात् सुप्रीता वा ततोऽन्यथा॥' इति। तत् जानासि? स्मरसि किम्? इत्यर्थः॥ ७५ ॥

हे कोमलशरीरवाली (अत एव पीडा सहनेमें असमर्थ दमयन्ति)! नये कामोत्सव (सुरतक्रीडा) में लज्जा तथा भयसे व्याकुल तुमको मैंने आधा ही सम्भोग करके छोड़ दिया, यह तुम स्मरण करती हो? ॥ ७५ ॥

स्मर जित्वाऽऽजिमेतस्त्वां करे मत्पदधाविनि।
अङ्गुलीयुगयोगेन यदाश्लिक्षं घने जने ॥ ७६ ॥

स्मरेति। हे प्रिये! आजिं युद्धम्, जित्वा विजित्य, त्वां भवतीम्, त्वत्समीपमित्यर्थः। एतः समागतः, अहमिति शेषः। करे पाणौ, तवेति शेषः। मत्पदधाविनि मम चरणप्रक्षालनार्थं प्रवर्त्तमाने सति, मम चरणं स्पृष्टवति सतीत्यर्थः। घने बहुले, जने मद्दर्शनार्थं समागते लोके, बहुजनमध्ये इत्यर्थः। अङ्गुलियुगयोगेन मम पादाङ्गुलीद्वयस्य, योगेन तव कराङ्गुलीद्वयस्य निविडयोजनया, मम पादाङ्गुलीद्वयेन तव कराङ्गुलेः प्रगाढनिपीडनेनेत्यर्थः। यत् आश्लिक्षम् आश्लिष्टवान् अस्मि। 'श्लिष आलिङ्गने' इति लुङि उत्तमैकवचने च्लेः क्सः, 'विभाषा साकाङ्क्षे' इति वैकल्पिकत्वात् लृडभावः। तत् स्मर चिन्तय॥ ७६ ॥

युद्धको जीतकर तुम्हारे पास आये हुए मैंने मेरे चरणके पास दौड़ते (शीघ्र आते)

रहनेपर अर्थात् मेरे चरणोंको धोने या नमस्कार करनेके लिए मेरे चरणोंकी ओर शीघ्रतासे तुम्हारे हाथ बढ़ानेपर ( दर्शनार्थ आये हुए ) बहुत लोगोंके उपस्थित रहनेपर ( साक्षात् आलिङ्गन करना अनुचित जानकर मैंने अपने चरणकी ) दो अङ्गुलियोंसे जो आलिङ्गन किया ( तुम्हारे हाथको दबाया ) उसे तुम स्मरण करो ॥ ७६ ॥

**वेत्थ मानेऽपि मत्त्याग-दूना स्वं माञ्च तन्मिथः ।**
**मद्दृष्टाऽऽलिख्य पश्यन्ती व्यवधा रेखयाऽन्तरा ? ॥ ७७ ॥**

वेत्थेति । हे प्रिये ! माने प्रणयकोपेऽपि, मत्त्यागदूना मद्विरहतप्ता, स्वमिति शेषः । मिथः रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । स्वम् आत्मानम्, मां नलञ्च, आलिख्य चित्रे लिखित्वा, पश्यन्ती अवलोकयन्ती, तदालेख्यमिति शेषः । मद्दृष्टा मया त्वया आलेख्याङ्कितेन मया नलेन वीक्षिता सती, अन्तरा लिखितयोरावयोर्मध्ये, रेखया तुलिकया नूतनरेखाङ्कनेन, मद्दर्शनप्रतिरोधार्थमिति भावः । यद् व्यवधाः व्यवधानं कृतवती असि, व्यवधानं विधाय तत्रापि कोपः प्रकटितः इति भावः । व्यपूर्वाद्धातेर्लुङ् सिपि 'गातिस्था—' इत्यादिना सिचो लुक् । तद् वेत्थ ? स्मरसि किम् ? इति काकुः ॥ ७७ ॥

मान ( प्रणयकलह ) में भी मेरे त्यागसे खिन्न तुम जब अपनेको तथा मुझको चित्रितकर देखती थी, तब मैंने तुम्हें देख लिया उस समय तुमने उस चित्रके बीचमें एक रेखा अङ्कितकर व्यवधान कर दिया, यह तुम जानती ( स्मरण करती ) हो ? । [ जब तुम्हारे मानके कारण तुम्हें मैंने छोड़ दिया तब मेरे वियोगको सहनेमें असमर्थ होकर तुमने अपना तथा मेरा संश्लिष्ट चित्र बनाकर उसे देखती रही थी, उसी समय जब मैंने तुम्हें देख लिया तब तुमने झट उस चित्रित अपने दोनोंके बीचमें एक रेखा बनाकर दोनोंको व्यवहित कर दिया अर्थात् रेखा द्वारा यह अभिव्यक्त किया कि चित्रमें भी मैं तुमसे पृथक् ही हूं, अत एव मेरा प्रणयमान ज्योंका त्यों बना हुआ है ] ॥ ७७ ॥

**प्रस्मृतं तत् त्वया तावद् यन्मोहनविमोहितः ।**
**अतृप्तोऽधरपानेषु[1] रसनामपिबं तव ? ॥ ७८ ॥**

प्रस्मृतमिति । हे प्रिये ! मोहने सुरते, विमोहितः विमुग्धचित्तः, अहमिति शेषः । तव ते सम्बन्धसामान्ये षष्ठी, 'पूरण—' इत्यादिना षष्ठीसमासनिषेधख्यापनात् षष्ठीति केचित्, अधरपानेषु अधरास्वादनेषु, चुम्बनेषु कृतेष्वपि इत्यर्थः । अतृप्तः तावन्मात्रेण अपूर्णाकाङ्क्षः सन्, यत् रसनां जिह्वाम्, अपिबम् आस्वादितवानास्म् । तत्, तावत् साकल्येन, त्वया भवत्या, प्रस्मृतम् ? चिन्तितं किम् ? इति काकुः ॥ ७८ ॥

सुरतमोहित ( अथवा—काममोहित, अत एव ) तुम्हारे अधरपानसे अतृप्त मैंने जो

1. '—पानानाम्' इति पाठान्तरम् ।

तुम्हारी जीभका पान किया, उस सम्पूर्ण वृत्तान्तको तुमने स्मरण किया क्या? [रतिकालमें जिह्वा-पान करनेका भी कामशास्त्रमें विधान है]॥ ७८॥

त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिताम्।
स्मरेः स्वहृदि यत् स्मेरः सखीं शिल्पं तवाब्रुवम्?॥ ७९॥

त्वदिति। हे प्रिये! स्वस्य आत्मनः, मम नलस्य इत्यर्थः। हृदि वक्षसि, आलिङ्गनेन आश्लेषेण, उत्थिताम् उत्पन्नाम्, सङ्क्रान्ताम् इत्यर्थः। त्वत्कुचयोः तव स्तनयोः, आर्द्रनखाङ्कस्य सद्यःकृतनखरक्षतस्य, मत्कर्तृकस्येति भावः। मुद्रां रक्तवर्णचिह्नम्, स्मेरः सस्मितः सन्, सखीं तव वयस्यां प्रति, तव ते, शिल्पं कारुकार्यम्, शिल्पनिर्माणनैपुण्यमित्यर्थः। यत् अब्रुवम् अकथयम्, तत् स्मरेः? चिन्तयेः?॥ ७९॥

मैंने अपने हृदय (छाती) में (मेरे) आलिङ्गनसे उत्पन्न तुम्हारे स्तनोंके (मत्कृत) सरस नखक्षतके चिह्नको हंसता हुआ सखियोंसे तुम्हारा शिल्प बतलाया, इसे तुम स्मरण करो। [मैंने तुम्हारे स्तनोंमें नखक्षत किया था, उसके सूखनेके पहले ही मैंने तुम्हारा आलिङ्गन किया तो आर्द्र होनेसे उस नखक्षतका चिह्न मेरे वक्षःस्थलमें प्रतिबिम्बित हो गया और हँसते हुए मैंने सखियोंसे कहा कि मेरे वक्षस्थलमें यह नखक्षत तुम्हारी सखीने किया है। अथवा—'''प्रतिबिम्बित हो गया तो उसे देखकर स्मित करती हुई सखियोंसे मैंने कहा कि'''। इसे तुम स्मरण करो और मुझे वास्तविक नल जानो]॥ ७९॥

त्वयाऽन्याः क्रीडयन्मध्ये-मधुगोष्ठि रुषेक्षितः।
वेत्सि तासां पुरो मूर्द्ध्ना त्वत्पादे यत् किलास्खलम्?॥ ८०॥

त्वयेति। हे प्रिये! मधुगोष्ठ्या मद्यपानसभायाः मध्ये मध्ये मधुगोष्ठि पानगोष्ठिमध्ये इत्यर्थः। 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। अन्याः अपराः स्त्रियः, क्रीडयन् नर्मव्यवहारेण विनोदयन्, अहमिति शेषः। त्वया भवत्या, रुषा रोषेण, ईक्षितः दृष्टः सन्, तासां स्त्रीणाम्, पुरः अग्रे एव, मूर्द्ध्ना शिरसा, त्वत्पादे तव चरणे, यत् किल अस्खलम् अपतं खलु, मद्यमत्तत्वात् स्खलनच्छलेन तव प्रसादनाय इति भावः। तत् वेत्सि? स्मरसि किम्? इति काकुः॥ ८०॥

(अनेक स्त्रियोंके साथ सम्मिलित होकर) मद्यपान-सभाके बीचमें दूसरी स्त्रियों (तुम्हारी सपत्नियों) को क्रीडा कराता हुआ (तथा उसी समयमें) तुमसे क्रोधपूर्वक देखा गया मैं उनके सामने तुम्हारे चरणोंमें जो स्खलित हो गया, इसे तुम जानती (स्मरण करती) हो? [बहुत स्त्रियोंके साथमें जिसमें तुम भी थी-मद्यपान करके दूसरी स्त्रियोंको क्रीडा कराते हुए मुझे तुमने क्रोधसे देखा तो उन स्त्रियोंके सामने ही मैंने तुम्हारे चरणपर

१. 'स्मेरसखीम्' इति पाठान्तरम्।

इस प्रकार मस्तक रखकर तुम्हें प्रसन्न किया कि मानों मैं मद्यके नशेसे स्खलित होकर तुम्हारे पैर पर गिर पड़ा हूं। यहां पर नलने स्खलित होना इसलिए कहा कि—यदि मैं ऐसा नहीं करता तो वे मुझपर रुष्ट हो जातीं और तुम्हारे चरणोंपर गिरकर क्षमायाचना नहीं करता तो तुम्हीं मुझपर रुष्ट हो जाती, अत एव चातुर्यपूर्वक मैंने अपना काम साध लिया, यह तुम स्मरण करती हो क्या ?] ॥ ८० ॥

**वेत्थ मय्यागते प्रोष्य यत्त्वां पश्यति हार्दिनि ।**
**अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल ? ॥ ८१ ॥**

**वेत्थेति । हे प्रिये ! हृदयस्य कर्म हार्दं प्रेम । 'प्रेमा ना प्रियता हार्दम्' इत्यमरः। हार्दिनि प्रियपात्रे, हार्दिनि ! इति दमयन्त्याः सम्बोधनं वा हार्दिनि ! हे अनुरागिणि ! प्रोष्य प्रवासं गत्वा, आगते प्रत्यावृत्ते, मयि नले, त्वां भवतीम्, पश्यति वीक्षमाणे सति, आलिं सखीम् आलिङ्ग्य आश्लिष्य, केलिमुदा क्रीडाहर्षेण, तस्यां सख्याम्, सख्याः गण्डदेशे इति यावत्, यत् किल इति अलीके, सख्यालिङ्गनचुम्बनव्याजेनेत्यर्थः। अचुम्बीः चुम्बितवती, मामेव त्वमिति शेषः। सख्यालिङ्गनचुम्बनव्याजेन मां प्रति स्वप्रेमभरं यत् सूचितवती असि, तत् वेत्थ ? स्मरसि ? ॥ ८१ ॥**

प्रवासकर प्रियपात्र (अथवा—हे प्रियपात्रभूते दमयन्ति! प्रवासकर) मेरे आनेपर और तुम्हें देखते रहनेपर तुमने सखीका आलिङ्गनकर क्रीडाके हर्षके छलसे जो उसके कपोलका आलिङ्गनकर चुम्बन किया (वास्तविकमें तो उसका आलिङ्गनकर चुम्बनके छलसे तुमने बहुत दिनपर लौटे हुए मेरा आलिङ्गन कर चुम्बन किया, किन्तु वहां उपस्थित सखियोंको यह दिखलाया कि क्रीडावशमें सखीका ही आलिङ्गनकर चुम्बन कर रही हूं), इसे तुम जानती (स्मरण करती) हो ? ॥ ८१ ॥

**जागर्त्ति तत्र संस्कारः स्वमुखाद्भवदानने ।**
**निक्षिप्यायाचिषं यत्त्वां न्यायात्ताम्बूलफालिकाः ? ॥ ८२ ॥**

**जागर्त्तीति । हे प्रिये ! स्वमुखात् निजाननात्, भवदानने तव वदने, ताम्बूलफालिकाः नागवल्लीदलवल्लिकाः, वीटिकाखण्डानीत्यर्थः। चूर्णपूगफलादिसंयुक्तस्य मचर्वितस्य पर्णस्य खण्डानीति यावत्। निक्षिप्य न्यस्य, त्वां भवतीम्। 'ताः' इति पाठे—ताः ताम्बूलफालिकाः, न्यायात् निक्षिप्तद्रव्यप्रत्यर्पणधर्मात्, निक्षिप्तं द्रव्यं निक्षेपकस्यैव प्रत्यर्पयितव्यमिति नीत्यनुसारादित्यर्थः। यत् अयाचिषं प्रार्थितवानास्म, अहमिति शेषः। तत्र याचने, संस्कारः नियतभावनाजनितस्मृतिविशेष इत्यर्थः। जागर्त्ति ? उत्पद्यते ? स्मरसि किम् ? इत्यर्थः, इति काकुः ॥ ८२ ॥**

(मैंने) अपने मुखसे तुम्हारे मुखमें आधा चबाये हुए पानके बीड़ेको डाल (दे) कर ('जिसकी जो वस्तु ली जाती है, उसकी उस वस्तुको वापस करना उचित है' इस) न्यायसे जो याचना की (तुमसे वह चर्वित पानका बीड़ा लौटानेको कहा), उस विषयमें

तुम्हारा संस्कार जागरूक है क्या? अर्थात् उस वृत्तान्तको तुम स्मरण करती हो क्या?॥

चित्ते तदस्ति कच्चित्ते नखजं मयि यत् क्रुधा।
प्राग्भावाधिगमागःस्थे त्वया शम्बाकृतं क्षतम्[1]॥ ८३॥

चित्ते इति। हे प्रिये! मयि नले, प्राग्भावेन प्राक् पूर्वमेव, त्वत्त इति शेषः। भावस्य रेतःपतनकालिकहर्षस्य, अधिगमः लाभ एव, आगः अपराधः, तस्मिन् तिष्ठतीति आगःस्थः तादृशे, तादृशापराधेन अपराधिनि सति, तव सुखावाप्तिप्रतिबन्धकत्वादिति भावः। त्वया भवत्या, क्रुधा क्रोधेन, यत् नखजं नखरेण कृतम्, क्षतं व्रणम्, शम्बाकृतं द्विगुणाकृतम्, आनुलोम्यप्रातिलोम्याभ्यां द्विवारकृष्टं क्षेत्रं शम्बाकृतमुच्यते। 'द्विगुणाकृते तु सर्वं द्विपूर्वं शम्बाकृतमपीह' इत्यमरः। 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' इति डाच्प्रत्ययः। तत् शम्बाकरणम्, ते तव चित्ते मनसि, अस्ति विद्यते कच्चित्? स्मरसि किम्?॥ ८३॥

मेरे पहले भावाधिगमरूप अपराधस्थ होनेपर (रतिकालमें मेरा तुमसे पहले ही वीर्य-स्खलन होनेके कारण पूर्णतः तुम्हारी सम्भोगेच्छा पूरी नहीं होनेसे अपराध करनेपर) तुमने क्रोधसे जो पूर्वकृत नखजन्य क्षतको क्रोधसे दुवारा कर (के बढ़ा) दिया, वह तुम्हारे चित्तमें है क्या? अर्थात् उसे तुम स्मरण करती हो क्या?॥ ८३॥

स्वदिग्विनिमयेनैव निशि पार्श्वविवर्त्तिनोः।
स्वप्नेऽप्यस्तवैमुख्ये सख्ये सौख्यं स्मरावयोः॥ ८४॥

स्वेति। हे प्रिये! निशि रात्रौ, स्वदिशोः निजनिजशयनस्थानयोः, विनिमयेनैव परिवर्त्तनेनैव, मम शयनस्थाने तवागमनेन तव शयनस्थाने मम गमनेन चेत्यर्थः। स्वस्थानपरिवर्त्तनं विना सम्मुखीनयोः शयने पार्श्वपरिवर्त्तने वैमुख्यप्रसङ्गादिति भावः। पार्श्वयोः वामदक्षिणकुक्ष्योः विवर्त्तेते शय्यालग्नपार्श्वपरिवर्त्तनेन शयाते यौ तादृशयोः पार्श्वपरिवर्त्तनकारिणोः, आवयोः तव मम च, स्वप्नेषु स्वापकालेषु अपि, अस्तम् उक्तरीत्या निरस्तम्, वैमुख्यं पराङ्मुख्यं यत्र तादृशे, सख्ये मेलने, सौख्यं सुखम्, स्मर चिन्तय॥ ८४॥

(भ्रमवश) अपनी-अपनी दिशाका परिवर्तन होनेसे ही रात्रिमें करवट बदलते हुए हम दोनोंके सोनेमें भी विमुखताहीन मेलन होनेपर (परस्पर हम दोनोंके सम्मुख ही रहनेपर) या होनेवाले सुख (परस्परावलोकनजन्य हर्ष) को स्मरण करो॥ ८४॥

क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणाम्।
दर्शिताधरमद्दंशा स्मर यन्मामतर्जयः॥ ८५॥

क्षणमिति। हे प्रिये! सदसि एव सभायामेव सखीभिरनुष्ठितनृत्यगीतादिसभा-

---

1. 'यत्क्रुधा क्षतम्' इति पाठान्तरम्।

यामेवेत्यर्थः। नृणां सखीजनानाम् विमनितानि नृत्यगीतादिषु व्यासक्तचित्ततया द्रष्टव्यान्तरदर्शने विमुखीभूतानि इत्यर्थः। विमनांसि कृतानि इति विमनस्शब्दात् 'तत्करोति—' इति ण्यन्तादिष्ठवद्भावे टिलोपः, कर्मणि क्तः। ईक्षणानि लोचनानि यस्मिन् तादृशम्, अन्यत्रासक्तजनदृष्टिप्रसरमित्यर्थः। क्षणम् अवसरम्, प्राप्य लब्ध्वा, अन्यथा सखीनां तत्र दृष्टिपातसम्भवात्, दर्शितः दृष्टिविषयीकारितः, अधरे निजनिम्नोष्ठे, मद्दंशो मत्कृतदशनक्षतं यया सा तादृशी सती, यत् माम् अतर्जयः अङ्गुलीनर्त्तनेन भर्त्सितवती, त्वमिति शेषः। तत् स्मर चिन्तय ॥ ८५ ॥

सभा ( सब सखियोंकी उपस्थिति ) में ही ( सखी ) लोगोंके ( नृत्यादि उत्सव आदि देखनेमें ) अन्यासक्त नेत्रके होनेपर ( इस समय मेरे व्यापारको कार्यान्तरासक्त दृष्टिवाली ये सखियां नहीं देखती हैं ऐसी भावना होनेसे ) अवसर पाकर अपने अधरमें किये गये मेरे दन्तक्षतको दिखानेवाली तुमने जो मुझे ( अङ्गुलिसे ) तर्जित किया, उसका ध्यान ( स्मरण ) करो ॥ ८५ ॥

तथावलोक्य लीलाब्जनालभ्रमणविभ्रमात् ।
करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥

तथेति। हे प्रिये! मया नलेन, तथा पूर्वोक्तरूपं त्वत्कृततर्जनम्, अवलोक्य दृष्ट्वा, लीलाब्जस्य क्रीडापद्मस्य, यत् नालं दण्डम्, तस्य भ्रमणं घूर्णनमेव, विभ्रमः विलासः तस्मात्, तद्व्याजादित्यर्थः। करौ पाणी, योजयता मेलयता, अञ्जलिं बध्नता सता इत्यर्थः। यत् प्रसादिता प्रसन्नीकृता, असि भवसि, तत् अध्येहि स्मर ॥

और उस प्रकार ( २०।८५ ) देखकर, लीला-कमलके नाल ( डण्ठल ) को घुमानेके विलास ( छल ) से हाथोंको जोड़ते हुए मैंने जो तुम्हें प्रसन्न किया, उसे तुम स्मरण करो ॥

ताम्बूलदानं संन्यस्तकरजं करपङ्कजे ।
न मम स्मरसि ? प्रायस्तव नैव स्मरामि तत् ? ॥ ८७ ॥

ताम्बूलेति। हे प्रिये! तव करपङ्कजे त्वत्पाणिपद्मे, प्रायः बाहुल्येन, संन्यस्तकरजं विरचितनखाङ्कम्, नखद्वययोगेन कृतमृद्वाघातमित्यर्थः। मम नलस्य, मत्कर्तृकमित्यर्थः। ताम्बूलदानं वीटिकार्पणम्, न स्मरसि? न मनसि करोषि? तव तेऽपि च, तत् तादृशं करजक्षतपूर्वकं ताम्बूलदानम्, नैव स्मरामि? न ध्यायामि? अपि तु स्मराम्येव, उभयत्र काकुः; उभयमुभावपि स्मराव एवेत्यर्थः ॥ ८७ ॥

जब मैं पानका बीड़ा देता था, तब प्रायः तुम्हारे कर-कमलमें हलका नखक्षत कर देता था, उसे तुम नहीं स्मरण करती ? और मैं भी तुम्हारे उसे ( पानका बीड़ा देते समय मेरे हाथमें किये गये मृदु नखक्षतको ) नहीं स्मरण करता हूं ? अर्थात् जिस प्रकार मुझे उसका स्मरण है, उसी प्रकार तुम्हें भी उसका अवश्य स्मरण होना चाहिये ] ॥ ८७ ॥

तदध्येहि मृषोद्यं मां हित्वा यच्च गता सखीः।
तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणम् ॥ ८८ ॥

तदिति। हे प्रिये! मृषोद्यं मिथ्याभाषिणम्, किमपि तव अप्रियकार्यं कृत्वा नाहमेतत् कृतवानिति कथयन्तमित्यर्थः। मां नलम्, हित्वा विहाय, सखीः वयस्याः, सखीसमीपमित्यर्थः। गता प्रयाता, त्वमिति शेषः। तत्रापि सखीसमीपेऽपि गतस्य उपस्थितस्य, मे मम, अग्रे सम्मुखे, लीलया विनोदेन एव, यत् तृणं शुष्कयवसम्, अच्छिनः खण्डितवती। बाला हि अन्योऽन्यविच्छेदसूचकं तृणच्छेदनं कुर्वन्ति, तृणद्वयं यथा विच्छिन्नं जातं तथा आवामपि चिरं विच्छिन्नौ इति ज्ञापनार्थमिति भावः। तत् तादृशं चेष्टितम्, अध्येहि स्मर। अधिपूर्वस्य इकि स्मरणे इति धातोरदादित्वाच्छोटि ह्यादेशः ॥ ८८ ॥

( किसी तुम्हारे अप्रिय कार्यको करके 'मैंने यह कार्य नहीं किया' ऐसा कहनेसे ) असत्यभाषी मुझको छोड़कर ( क्रोधसे ) सखियोंके पास गयी हुई तुमने वहां भी पहुंचे हुए मेरे सामने अर्थात् मुझे दिखाकर लीलासे ही तृणको जो तोड़ दिया उसे तुम स्मरण करो। [ सखीसमूहने तो 'यह दमयन्ती क्रीडावश ही इस तृणको तोड़ती है, किसी अन्य विशेष अभिप्रायसे नहीं' ऐसा समझा, किन्तु तुमने 'इस तृणके समान हमारा तुम्हारा सम्बन्ध-विच्छेद हो गया' इस आशयसे उस तृणको तोड़ा। परस्परमें विरोध हो जानेपर बालक भी 'आजसे हमारा तुम्हारा कोई सम्बन्ध नहीं रहा' इस प्रकार कहते हुए तृणको तोड़ते हैं, अत एव नववयस्का दमयन्तीका भी वैसा करना उचित ही था ] ॥ ८८ ॥

स्मरसि प्रेयसि! प्रायो तद्द्वितीयरतासहा।
शुचिरात्रीत्युपालब्धा त्वं मया पिकनादिनी? ॥ ८९ ॥

स्मरसीति। प्रेयसि! प्रियतमे! द्वितीयस्य वारद्वयकृतस्य, रतस्य सुरतस्य, असहा दुर्बलत्वात् अक्षमा, अन्यत्र—अल्पपरिमिततया एकवारसम्भोगेनैव अवसितत्वात् अपर्याप्ता, पिकवत् कोकिलवत् मधुरम्, नदति भाषते इति पिकनादिनी, अन्यत्र—पिकनादः कोकिलध्वनिः अस्ति अस्यामिति पिकनादिनी, त्वं भवती, प्रायः बाहुल्येन, मया नलेन, शुचिरात्री ग्रीष्मरात्री, ग्रीष्मकालिकरात्रिस्वरूपा इत्यर्थः। 'कृदिकारादक्तिनः' इति ङीष्। इति एवम् उक्त्वा, यत् उपालब्धा तिरस्कृता, तत्कल्पाऽसि इत्याक्षिप्ता इत्यर्थः। असीति शेषः। तत् स्मरसि? अध्येषि किम्? ॥ ८९ ॥

हे प्रियतमे! ( अल्पवयस्का होनेसे ) द्वितीय वार किये गये सुरतको नहीं सहनेवाली तुमको मैंने कोकिल जिसमें बोलती है ऐसी ( पक्षा०—पिकके समान मधुरभाषिणी ) ग्रीष्मकी रात्रि कहकर उपालम्भ दिया था, यह तुम स्मरण करती हो? [ ग्रीष्मकालकी रात्रिमें भी वसन्तकालके आसन्नकालमें ही समाप्त होनेसे कोकिलका बोलनेका वर्णन करना

असङ्गत नहीं है। अथवा—ग्रीष्मकालमें कोकिलका बोलना सर्वथा असङ्गत माननेपर 'अपिकनादिनी' अर्थात् पिकभिन्न सारिका आदि पक्षी जिस रात्रिमें बोलती हैं ऐसा तथा ( पक्षा०—पिकभिन्न सारिकादिके समान बोलनेवाली ) ऐसा अर्थ करना चाहिये। अथवा—ग्रीष्मके बाद वर्षा ऋतुके आसन्न होनेसे 'मयापिकनादिनी' 'मया+अपि+कनादिनी' ऐसा पदत्रयच्छेद करके 'कनादिनी' शब्दका 'जलका नाद ( ध्वनि ) है जिसमें ऐसी, पक्षा०—जलके समान ध्वनि करने ( बोलने ) वाली अर्थकर क्रमशः ग्रीष्मरात्रि तथा दमयन्तीका विशेषण मानना चाहिये। प्रकृतमें नलका 'जिस प्रकार [ पिकनादिनी या-अपिकनादिनी या-कनादिनी ) ग्रीष्म ऋतुकी रात्रि छोटी होनेसे एक बार रति करनेसे ही समाप्त हो जाती है, उसी प्रकार पिकनादिनी ( या-अपिकनादिनी, या-कनादिनी ) तुम भी अल्पवयस्का होनेसे एक बार ही रति करनेसे थक जाती हो' ऐसा दमयन्तीको उपालम्भ होना समझना चाहिये ] ॥ ८९ ॥

भुञ्जानस्य नवं निम्बं परिवेविषती मधौ ।
सपत्नीष्वपि मे रागं सम्भाव्य स्वरुषः स्मरेः ? ॥ ९० ॥

भुञ्जानस्येति । हे प्रिये ! परिवेविषती परिवेषणं कुर्वती, परिपूर्वात् विषधातोः जुहोत्यादिगणीयात् शतरि रूपम् । त्वमिति शेषः । मधौ वसन्तकाले, नवं प्रत्यग्रम्, अभिनवोत्पन्नत्वात् कोमलमित्यर्थः । निम्बम् अरिष्टपत्रम्, व्यञ्जनीभूतमिति भावः । 'वसन्ते भ्रमणं पथ्यमथवा निम्बभोजनम्' इत्यादि स्मरणात् । भुञ्जानस्य खादतः, मे मम, सपत्नीषु समानपतिकासु अपरासु राज्ञीषु अपि, यद्वा—भुञ्जानस्य अभ्यवहरतः, मे मधौ सीध्रे सत्यपि । 'मस्तु-मधु-सीधु-शीधु-सानु-कण्डलूनि नपुंसके च' इति चकारात् पुंसि चेति पुंलिङ्गता। नवं निम्बं पिचुमर्दम्, 'पिचुमर्दश्च निम्ब' इत्यमरः परिवेविषती ददती, त्वमिति शेषः । सपत्नीषु अपि मे रागम् अनुरागम् , सम्भाव्य कल्पयित्वा, कृता इति शेषः, 'वसन्ते भ्रमणं पथ्यमथवा निम्बभोजनम् । अथवा युवती भार्या अथवा वह्निसेवनम् ॥' इति शास्त्रात् मां वसन्ते निम्बभोजनं कृतवन्तं दृष्ट्वा अन्यास्वपि युवतीभार्यासु अहमुपगता इति सम्भाव्य, अथवा शर्करामोदकादिकं स्वादु द्रव्यं विहाय नितरां तिक्ते यदा अस्य रुचिः, तदा सुरूपामपि मां विहाय अपकृष्टासु मम सपत्नीषु अस्यासक्तिः नासम्भाव्या, लोकानां विभिन्नरुचिमत्त्वादिति भावः । स्वस्य आत्मनः, रुषः रोषान् , स्मरेः ? मनसि कुर्याः किम् ? ॥ ९० ॥

वसन्त ऋतुमें नये नीम ( के व्यजन बने हुए कोमल पत्तों ) को खाते हुए मेरे अनुरागकी सम्भावना सपत्नी स्त्रियोंमें भी करके बार-बार नीमको ही परोसती हुई तुम अपने क्रोधका स्मरण नहीं करती हो ? ( अथवा—परोसती हुई तुम वसन्त ऋतुमें नये नीमको भोजन करते हुए मेरे अनुरागकी सम्भावना सपत्नियोंमें भी करके किये गये अपने क्रोधका स्मरण करती हो क्या ? ) । [ दमयन्तीने वैसी सम्भावना इस कारण की कि—

'यदि ये स्वादिष्ट उत्तमोत्तम भोजनको छोड़कर कटु नीम खा रहे हैं तो सम्भव है अतिशय सुन्दरी मुझको छोड़कर मेरी अपेक्षा कम सुन्दरी सपत्नियोंमें भी ये अनुराग करते हो'। और ऐसी सम्भावना करके ही क्रोधवश उनके लिए भोजनमें नीम ही परोसती थी। किन्तु वसन्त ऋतुमें नीमके नये कोमल पत्तेको घृतमें तलकर खाना रोगविनाशक होनेके कारण ही नल उसे खाते थे, अतः दमयन्तीका अनुपान असत्य एवं भ्रमपूर्ण था ]॥ ९० ॥

**स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन्।**
**स्वनिन्दारोषरक्तात्तु यदभैषं तवाधरात्॥ ९१ ॥**

**स्मरेति। हे प्रिये। त्वया भवत्या, राद्धं पक्कम्, निष्पादितमित्यर्थः। शर्करायाः विकारं शार्करं शर्कराकृतं पानकादिकं शर्करामिश्रितं व्यञ्जनविशेषं वा, आस्वाद्य पीत्वा लीढ्वा वा, स्तुवन् एतत् सर्वस्मात् अधिकं स्वादु इति प्रशंसन्, अहमिति शेषः। स्वनिन्दारोषेणैव स्वस्य अधरस्यैव, निन्दया गर्हणेन, अधरस्यापि सर्वान्तर्भूतत्वात् शार्करस्य प्रशंसया अधरस्य निन्दासूचनेनेत्यर्थः। यो रोषः कोपः, अधरस्येति भावः। तेनैव रक्तात् अरुणात्, अरुणीभूतादित्यर्थः। तव अधरात् निम्नौष्ठात्, यत् अभैषं भीतोऽभूवम्, अहम् इति शेषः। बिभीतेर्लुङ्, मिपि सिचि वृद्धिः मादेशश्च। इति तु तच्च, स्मर चिन्तय॥ ९१॥**

शक्करके बनाये गये भोज्य पदार्थका आस्वादनकर (यह तो सब मधुर रसवाले पदार्थोंसे अधिक मधुर है, इसे) तुमने पकाया है क्या? इस प्रकार प्रशंसा करता हुआ मैं (ये सभी मधुर पदार्थोंसे उत्तम इस शक्करके बने पदार्थको ही बतला रहे हैं, अत एव सब मधुर पदार्थोंके अन्तर्गत ही मेरे अधरको भी होनेसे मेरी (अधरकी) भी ये निन्दा करते हैं, इस भावनासे) अपनी निन्दाके कारण उत्पन्न क्रोधसे लाल हुए तुम्हारे अधरसे जो डर गया, उसे तुम स्मरण करो। [ क्रोधसे दमयन्तीका अधर स्फुरित होना देखकर नलको भयार्त होना समझना चाहिये। क्रोधसे मुखादिका रक्तवर्ण होना सर्वानुभवसिद्ध है ]॥९१॥

**मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बं[1] न तृप्तवान्।**
**न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः॥ ९२॥**

**मुखादिति। हे प्रिये! मुखात् तव वदनात्, आरभ्य उपक्रम्य, नाभ्यन्तं नाभिपर्यन्तं कुचादिकम् अङ्गम्, चुम्बं चुम्बं पुनः पुनः चुम्बित्वा चुम्बित्वा। आभीक्ष्ण्ये णमुल्। न तृप्तवान् अपूर्णाकाङ्क्षः सन्, ते तव, यत् रतिगृहरूपमङ्गमित्यर्थः। चुम्बितुं चुम्बनं कर्तुम्, न प्रापं न अलभिषि, अहमिति शेषः। पाण्यादिना प्रतिबन्धात् लज्जातिशयात् गोपितत्वात् अपापिष्ठनिषेधादिति वा भावः। तत् रतिगृहरूपं तवाङ्गमित्यर्थः। धन्या मया अप्राप्तस्यापि लाभात् भाग्यवती, स्मृतिः तव स्मरणशक्तिः, चुम्बतु स्पृशतु, तव स्मृतिविषयीभवतु इत्यर्थः। अकृतचुम्बनं तदङ्गं**

1. 'चुम्बमतृप्तवान्' इति पाठान्तरम्।

स्मरेति भावः। सार्वभौमस्यापि मे यदङ्गचुम्बने योग्यताभावः, धन्या ते स्मृतिस्तदङ्गं विनैव किञ्चिदपि प्रतिबन्धकं चुम्बितुं समर्था इति स्मृतेर्धन्यत्वं बोद्धव्यमित्याशयः॥ ९२॥

मुखसे लेकर नाभितक (तुम्हारे अङ्गोंका बार-बार) चुम्बनकर (लज्जावश तुम्हारे हाथ या वस्त्रादिसे आच्छादित करनेसे या पुष्पके निषेधसे) जिस अङ्ग (तुम्हारे मदनमन्दिर) को चुम्बन करनेके लिए मैंने नहीं पाया, उसे तुम्हारी धन्य स्मृति चुम्बन करे अर्थात् तुम तात्कालिक उस अवस्थाका स्मरण करो। [सार्वभौम होकर भी जिसे मैं नहीं पा सका, उसे तुम्हारी स्मृति प्राप्त कर रही है, अत एव वह स्मृति धन्य है]॥ ९२॥

कमपि स्मरकेलिं तं स्मर यत्र भवन्निति।
मया विहितसम्बुद्धिर्व्रीडिता स्मितवत्यसि॥ ९३॥

कमिति। हे प्रिये! कमपि अवाच्यम्, तम् अतिशयेनानन्दप्रदम्, स्मरकेलिं कामक्रीडाम्, विपरीतसुरतमिति भावः। स्मर स्मृतिविषयीभूतं कुरु, यत्र यस्मिन् स्मरकेली, यस्मिन् पुरुषायिते त्वयि इति वा, मया हे भवन्! इति एवम्, विहिता पुरुषवत् आचरणात् पुंलिङ्गनिर्देशेन कृता, सम्बुद्धिः आमन्त्रणं यस्याः सा तादृशी, त्वमिति शेषः। व्रीडिता लज्जिता। स्मितवती स्वनैपुण्यप्रदर्शनजनितहर्षात् ईषत् हसितवती च, असि अवसि, पुरुषायितत्वात् व्रीडा हर्षात् स्मितम् इति बोध्यम्॥ ९३॥

तुम उस किसी (अनिर्वचनीय) कामक्रीडा अर्थात् विपरीत रतिका स्मरण करो, जिस (कामक्रीडा—विपरीत रति) में (पुरुषायित होनेसे स्त्रीवाचक 'भवति' पदसे सम्बोधित न करके) मेरे द्वारा (पुरुषवाचक) 'भवन्' इस पदसे सम्बोधित तुमने लज्जित होकर मुस्कुरा दिया॥ ९३॥

नीलदा-चिबुकं[1] यत्र मदाक्तेन श्रमाम्बुना।
स्मर हारमणौ दृष्टं स्वमास्यं तत्क्षणोचितम्॥ ९४॥

नीलदिति। हे प्रिये! यत्र यस्मिन् विपरीतस्मरकेलौ, मदाक्तेन स्वकपोलाङ्कितपत्रभङ्गकस्तूरीचूर्णकलुषितेन। 'मदो रेतसि कस्तूर्याम्' इति विश्वः। श्रमाम्बुना स्वेदोदकेन, आचिबुकम् अधरोष्ठाधःप्रदेशपर्यन्तम्। 'अधस्तात् चिबुकम्' इत्यमरः। नीलत् नीलीभवत्, अत एव सञ्जातश्मश्रुकवत् प्रतीयमानमिति भावः। नील वर्णे इति धातोर्लट् शत्रादेशः[2]। तत्क्षणोचितं तत्कालयोग्यम्, विपरीतकेलौ पुरुषवत् तव उपरि अवस्थानेन कपोलनिर्गलन्मदाक्तघर्मोदकानां द्रवत्वेन निम्नगामित्वाच्च पुरुष-

१. 'नीलज्जातश्मश्रु' इति पाठान्तरं दुर्बोध्यम्।
२. 'नीलद्, आचारक्विबन्ताच्छता' इति 'प्रकाशः'।

**योग्यं श्मश्रुलमिवेति भावः। स्वं निजम्, आस्यं मुखम्, हारमणौ हारस्थितरत्नमध्ये, अधःस्थितस्य ममेति भावः। दृष्टम् अवलोकितम्, स्मर चिन्तय ॥ ९४ ॥**

जिस (अनिर्वचनीय कामक्रीडा—विपरीत रति) में कस्तूरीसे युक्त पसीनेसे ठुड्ढीतक नीला होते हुए (अत एव दाढ़ीके केशयुक्त-सा प्रतीयमान) उस समय (अथवा—उत्सव अर्थात् विपरीत रति) के योग्य (अधःस्थित मेरे) हारके मणिमें (प्रतिबिम्बित होनेसे) स्वयं देखे गये अपने मुखका तुम स्मरण करो। [विपरीत रति करते समय जब तुम्हें पसीना आने लगा, तब तुम्हारे कपोलमें कस्तूरीरचित मकरिकादिचिह्नकी कस्तूरी पसीनेसे आर्द्र होकर ठुड्ढीतक फैल गयी, जो उपरिस्थ होनेसे पुरुषायित तुम्हारे लिये उचित था, क्योंकि पुरुषकी दाढ़ीमें कृष्णवर्ण बाल होता ही है; ऐसे अपने मुखको तुमने अधःस्थित मेरे हाररत्नमें देखा था, उसे स्मरण करो] ॥ ९४ ॥

(स्मर[1] तन्नखमत्रोरो कस्ते धा(दा)दिति तन्मृषा।
ह्रीदैवतमलुम्पं यद्व्रतं रतपरोक्षणम् ॥ १ ॥)

**स्मरेति। अहमत्रास्मिंस्ते तवोरौ को नखमधा(दा) द्दत्तवानिति मृषा असत्यभाषी सन् ह्रीरेव दैवतं यस्य तत्, अत एव रतस्य परोक्षणं परोक्षकरणं ब्रह्मचर्यरूपं सुरतप्रतिबन्धकं व्रतं नियमं यदलुम्पं निवर्तितवान् तत्स्मर। परपुरुषसम्बन्धशङ्कोत्पादनार्थं मृषाभाषणेन रसान्तरमुत्पाद्य लज्जाकृतं सुरतप्रतिबन्धकमनुद्योगं यन्निवर्तितवांस्तत्स्मर। व्रतं सदैवतं भवतीति ह्रीदैवतमित्युक्तम् ॥ १ ॥**

'तुम्हारे इस ऊरुमें किसने नखक्षत किया?' इस प्रकार मिथ्या भाषण करता हुआ मैं लज्जा ही है देवता जिसका ऐसा, रतको परोक्ष करनेवाला अर्थात् ब्रह्मचर्यरूप व्रतको जो तोड़ा, उसे तुम स्मरण करो। [परपुरुषकी शङ्का रतिकालमें ही तुम्हारे मनमें उत्पन्न करनेके लिए मिथ्याभाषणसे जो रसान्तरको पैदाकर लज्जाकृत सुरतबाधक तुम्हारे ब्रह्मचर्य—सुरत नहीं करनेके व्रत (प्रबलेच्छा) को नष्ट किया अर्थात् सुरतकार्यमें प्रवृत्त किया उसे स्मरण करो] ॥ १ ॥

वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति।
देहि मह्यमुदस्येति मद्गिरा व्रीडिताऽसि यत् ॥ ९५ ॥

**वनेति। किञ्च, हे चारुशीले! वनकेलौ प्रमदवनविहारकाले, भूपतितं वृक्षाद् भूतले च्युतम्, अश्वत्थदलम्, अश्वत्थपत्रम्, प्रति उद्दिश्य, उदस्य उद्धृत्य, एतदश्वत्थपत्रमिति शेषः। मह्यं नलाय, देहि अर्पय, इति उक्तरूपया, मद्गिरा ममोक्त्या, यद् व्रीडिता लज्जिता, असि भवसि, रहस्याङ्गस्य अश्वत्थपत्राकृतितुल्यतया तद्याचने रहस्याङ्गयाचनाभिप्रायज्ञानादिति भावः। तत् स्मर चिन्तय। अत्र सामुद्रिकाः—**

---

१. अयं श्लोकः 'प्रकाश' व्याख्यया सहैवात्र मया निहितः।

"अश्वत्थदलसङ्काशं गुह्यं गूढमनिश्रितम् । यस्याः सा सुभगा कन्या पूर्वपुण्यैरवाप्यते ॥' इति ॥ ९५ ॥

उद्यानमें विहारके समय भूमिपर गिरे हुए पीपलके पत्तेको लक्ष्यकर 'इसे उठाकर मुझे दो' ऐसे कहे गये मेरे वचनसे जो तुम लज्जित हुई, उसका स्मरण करो । [ पीपलके पत्तेके समान स्त्रीका मदनमन्दिर होनेके कारण नलके परिहासात्मक अभिप्रायको समझकर दमयन्तीका लज्जित होना उचित ही था ] ॥ ९५ ॥

इति तस्या रहस्यानि प्रिये शंसति साऽन्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी ह्रीवशीकृता ॥ ९६ ॥

**इतीति । प्रिये नले, तस्याः भैम्याः, रहस्यानि गुप्तचेष्टितानि, इति इत्थम्, शंसति कथयति सति, सा भैमी, ह्रीवशीकृता लज्जापरवशा सती, अन्तरा कथामध्ये, तस्याः कलायाः, श्रवसी कर्णौ, पाणिभ्यां स्वकराभ्याम्, पिदधे छादयामास । इतोऽधिकं रहस्यं कथयिष्यति चेत् तदनया न श्रोतव्यमिति बुद्ध्येति भावः ॥ ९६ ॥**

प्रिय ( नल ) के इस प्रकार ( २०।७४-९५ ) उस ( दमयन्ती ) के रहस्यों ( एकान्तमें किये गये सुरतवृत्तों ) को कहते रहनेपर उस ( दमयन्ती ) ने बीचमें ( नलका कहना पूरा होनेके पहले ) ही लज्जाके वशीभूत हो सखी 'कला' के दोनों कानोंको दोनों हाथोंसे बन्द कर दिया । [ अब यह इनके कहे हुए अश्रवणीय अत्यन्त गुप्त रहस्योंको भी सुनेगी, इस आशयसे दमयन्तीने 'कला' के दोनों कानोंको अपने दोनों हाथोंसे बन्द कर दिया ]॥

कर्णौ पीडयती सख्या वीक्ष्य नेत्रासितोत्पले ।
अप्यसादयतां भैमी-करकोकनदे नु तौ ? ॥ ९७ ॥

**कर्णाविति । सख्याः कलायाः, नेत्रे लोचने एव, असितोत्पले नीलसरोजे, कर्णौ कलाया एव श्रवणयुगलम्, पीडयती अभिभवती, आक्रम्य पीडनं कुर्वतीत्यर्थः । आकर्णविश्रान्ते इति भावः । वीक्ष्य दृष्ट्वा, भैम्याः दमयन्त्याः, करावेव पाणियुगलमेव, कोकनदे रक्तोत्पले अपि । कर्त्तृणी । 'अथ रक्तसरोरुहे रक्तोत्पलं कोकनदम्' इत्यमरः । तौ कर्णौ, असादयतां स्वयमपि समत्सरे एव अपीडयताम्, न किम् ? इत्युत्प्रेक्षा ॥**

सखी 'कला' के दोनों कानोंको ( उसीके ) दोनों नेत्ररूपी नीलकमल पीडित कर रहे हैं ( अत एव सजातीय नेत्ररूपी नीलकमलोंके साथ स्पर्द्धा होनेसे या-उनकी सहायता करनेके लिए ) दमयन्तीके दोनों हाथरूपी रक्तकमलोंने भी उन ( कलाके दोनों कानों ) को पीडित किया क्या ? [ कलाके नेत्ररूपी नीलकमलों द्वारा उसीके कानोंको पीडित करना कहनेसे 'कला' के नेत्रद्वय नीलकमलतुल्य एवं कानतक बड़े-बड़े हैं, यह सूचित होता है । सजातीय कलाके नेत्ररूपी नीलकमलोंके साथ दमयन्तीके हस्तद्वयरूपी रक्तकमलोंकी स्पर्द्धा या उनकी सहायता करना उचित ही है ] ॥ ९७ ॥

तत्प्रविष्टं सखीकर्णौ पत्युरालपितं ह्रिया।
पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना ॥ ९८ ॥

कर्णपीडने उत्प्रेक्षान्तरमाह—तदिति। वैदर्भी भैमी, सखीकर्णौ कलायाः श्रवणयुगलम्, प्रविष्टं ढौकितम्, पत्युः नलस्य, तत् पूर्वोक्तम्, आलपितं निजरहस्यभाषितम्, ह्रिया लज्जया, स्वरहस्यस्य निजगुप्तव्यापारस्य, अभिसन्धिना निगूहनाभिप्रायेणेव, बहिर्निर्गमननिरोधाभिप्रायेणेवेत्यर्थः। पिदधौ आच्छादयामास, स्वरहस्य गोपनाय इव कर्णपिधानमकरोदित्युत्प्रेक्षा। यथा कश्चित् निजगोपनीयं द्रव्यं लिप्यादिकं वा पेटिकादौ संस्थाप्य तस्य बहिः प्रकाशनिरोधार्थं पिधानेन सुदृढं पिदधाति तद्वदिति भावः ॥ ९८ ॥

दमयन्तीने ( सखीके कानोंमें ) प्रविष्ट अर्थात् कलासे सुने गये पति ( नल ) के उस कथन ( रहस्य वृत्तान्त ) को मानो अपने रहस्यके अभिप्रायसे ( यह अतिशय रहस्य फिर कानसे बाहर न निकले अर्थात् इसे कोई दूसरा भी सुनकर मालूम न करले, इस आशयसे ) सखी 'कला' के दोनों कानोंको बन्द कर लिया है। [ लोकमें भी किसी गोप्य वस्तुको किसी बर्तनमें रखकर 'दूसरा कोई इसे मालूम न कर सके' इस अभिप्रायसे उसके ऊपरी भाग ( मुख ) को जिस प्रकार बन्द कर दिया जाता है उसी प्रकार मानो दमयन्तीने भी कलाके कानरूपी बर्तनमें प्रविष्ट नलका रहस्यवृत्तान्तरूप गुप्त पदार्थको छिपानेके अभिप्रायसे उसे बन्द कर दिया है ] ॥ ९८ ॥

तमालोक्य प्रियाकेलिं नले सोल्लुण्ठहासिनि[1]।
आरात्तत्त्वमबुद्ध्वाऽपि सख्यः सिस्मियिरेऽपराः ॥ ९९ ॥

तमिति। तं पूर्वोक्तम्, प्रियायाः भैम्याः, केलिं सखीकर्णपिधानरूपं विनोदम्, आलोक्य वीक्ष्य, नले नैषधे, सोल्लुण्ठं सपरिहासम्, हसति हास्यं कुर्वतीति तादृशे सति, आरात् दूरात्, अपराः कलेतराः, सख्यः वयस्याः, तत्त्वं यथार्थव्यापारम्, अबुद्ध्वाऽपि अज्ञात्वाऽपि, सिस्मियिरे जहसुः। नलस्य हास्यमात्रदर्शनात् ता अपि हसितवत्य इत्यर्थः। दृश्यते च लोके ईदृशव्यापारो नियतमेव ॥ ९९ ॥

प्रिया ( दमयन्ती ) की वह केलि ( 'कला' के कानोंको बन्द करना ) देखकर नलके परिहासपूर्वक ( या-उच्चस्वरसे ) हंसनेपर दूरसे अर्थात् दूर स्थित रहनेसे वास्तविकताको नहीं जानकर भी ( नलको हँसता हुआ देखकर ही ) दूसरी सखियोंने भी मुस्कुरा दिया। [ लोकमें भी किसी एकको हंसते देखकर दूसरे लोग हंसनेके कारणको नहीं जानते हुए भी हंस देते हैं, अत एव दमयन्तीकी दूरस्थ अन्य सखियोंका वैसा करना उचित ही था ] ॥

दम्पत्योरुपरि प्रीत्या ता धराप्सरसस्तयोः।
ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥ १०० ॥

---

१. 'सोल्लास—' इति पाठान्तरम्।

दम्पत्योरिति । ताः पूर्वोक्ताः, धराप्सरसः भूलोकसुराङ्गनासदृश्यः सख्यः, दम्पत्योः जायापत्योः, तयोः दमयन्तीनलयोः, उपरि प्रीत्या हर्षेण, तयोर्व्यापारदर्शनजनितानन्देनेत्यर्थः । मुखानिलैः निःश्वासमारुतैः, सुरभीणि सुगन्धीनि, स्मितानि एव ईषद्धसितान्येव, पुष्पाणि सितकुसुमानि, कविभिर्हास्यस्य धवलतया कीर्त्तनादिति भावः । ववृषुः सिषिचुः । सख्यस्तौ सस्मितमवलोकयामासुरिति निष्कर्षः ॥ १०० ॥

पृथ्वीकी अप्सराएँ ( अप्सराओंके समान सुन्दरी ) वे सखियां उन दम्पति ( नल तथा दमयन्ती ) के ऊपर ( उनके व्यापार देखनेसे उत्पन्न ) हर्षसे निःश्वाससे सुगन्धित स्मित-रूप पुष्पोंको वरसाया । [ जिस प्रकार देवाङ्गनाएँ किसी भाग्यवान् दम्पतिके ऊपर प्रसन्न होकर सुगन्धित पुष्पोंको वरसाती हैं, उसी प्रकार सखियोंने किया । सब सखियाँ नल तथा दमयन्तीको स्मित करती हुई देखने लगी ] ॥ १०० ॥

तदास्यहसिताज्जातं स्मितमासामभासत ।
आलोकादिव शीतांशोः कुमुदश्रेणिजृम्भणम् ॥ १०१ ॥

तदिति । तस्य नलस्य, आस्ये वदने, यत् हसितं हास्यं तस्मात् तद्धास्यदर्शनादित्यर्थः । जातम् उत्पन्नम्, आसां सखीनाम्, स्मितं मृदुहास्यम् शीतांशोः चन्द्रस्य, आलोकात् प्रकाशात्, जातमिति शेषः । कुमुदश्रेणीनां कैरवपङ्क्तीनाम्, जृम्भणं विकाश इव, अभासत अशोभत ॥ १०१ ॥

उस ( नल ) के मुखके हाससे उत्पन्न इन ( सखियों ) का स्मित चन्द्रमाके देखनेसे कुमुद–समूहके विकासके समान शोभित हुआ । [ इससे सखियोंकी अपेक्षा नलका अधिक हंसना सूचित होता है ] ॥ १०१ ॥

प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरम् ।
सख्यास्तासु स्वपक्षायाः कला जातबलाऽजनि ॥ १०२ ॥

प्रत्यभिज्ञायेति । अथ सखीनां हासानन्तरम्, विज्ञा अभिज्ञा, सुचतुरेत्यर्थः । कला कलाख्या सखी, तासु स्मितकारिणीषु सखीषु मध्ये, स्वपक्षायाः स्वसहायायाः, निजसुहृद्भूतायाः इत्यर्थः । 'पक्षो मासार्द्धके पार्श्वग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः ॥' इति मेदिनी । सख्याः कस्याश्चित् वयस्यायाः सम्बन्धिनम्, हासेन हास्यशब्देन, विकस्वरं प्रकाशमानम्, स्वरं ध्वनिम्, प्रत्यभिज्ञाय ममैव प्रियसख्याः स्वरोऽयमिति निश्चित्य, जातबला प्राप्तसामर्थ्या, दमयन्तीकरनिरुद्धनिजकर्णमोचने इति भावः । अजनि जाता । जनेः कर्त्तरि लुङ् । 'दीपजन—' इत्यादिना च्ले चिणि तलुकि रूपम् ॥ १०२ ॥

इस ( सखियोंके स्मित करने ) के बाद अतिशय चतुरा कला उन सखियोंमें अपने पक्षवाली सखीके हाससे स्फुट स्वरको पहचानकर ( अब यह मेरा पक्ष लेगी और मैं

दमयन्तीसे अपने वन्द हुए कानोंको छुड़ा सकूंगी इस अभिप्रायसे ) वलयुक्त हो गयी। [ लोकमें भी आपद्ग्रस्त कोई व्यक्ति अपने पक्षके व्यक्तिको देखकर आपत्तिसे छूट जानेकी आशासे सवल हो जाता है। दमयन्तीके कोमल हाथोंसे कलाके कान अच्छी तरह नहीं वन्द हुए थे, अतः उसने सखियोंमें-से स्फुट हंसनेवाली अपने पक्षकी सखीके हासको सुनकर उसे पहचान लिया, अथवा—दमयन्तीके हाथोंसे कानोंको वन्द होनेसे पहले ही सुनकर उसे पहचान लिया, ऐसा समझना चाहिये ] ॥ १०२ ॥

साऽऽहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते ! ।
पिव वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ! ॥ १०३ ॥

सेति। अथ स्वरप्रत्यभिज्ञानानन्तरम्, सा कला, तां सखीम्, उच्चैः तारम्, आहूय आकार्य, हे स्वर्गेण स्वर्गसुखेन, स्वर्गसुखजनकनलवाक्याश्रवणेनेत्यर्थः। वञ्चिते! प्रतारिते! सुन्दरि! हे सौन्दर्यशालिनि! एहि आगच्छ, नृपचन्द्रस्य राजेन्दोः सम्वन्धिनीः, वाणीः वाक्यस्वरूपा, सुधावेणीः अमृतरसप्रवाहान्, पिव स्वद, यथेच्छम् आकर्णय इति यावत्, इति ऊचे कथयामास, स्वर्गे चन्द्रात् निःसृतस्य अमृतस्य तुल्यं राजचन्द्रमुखात् उद्गतं वाक्यसुधाप्रवाहम् अनुभूय स्वर्गसुखमनुभवेत्यर्थः॥ १०३॥

इस ( स्वपक्षीया सखीको पहचानकर साहस आ जाने ) के वाद उस 'कला' ने उसे ( स्वपक्षीया सखीको ) ऊँचे स्वरसे बुलाकर कहा—( दूरस्थ होनेके कारण ) हे स्वर्गसे वञ्चित सुन्दरी ! आओ और नृपचन्द्र ( नल ) के अमृतप्रवाहरूपी वचनोंका पान करो अर्थात् इनके अमृततुल्य कर्णमधुर वचनोंको सुनो ॥ १०३ ॥

साऽशृणोत्तस्य वाग्भागमनत्यासत्तिमत्यपि ।
कल्पग्रामाल्पनिर्घोषं वदरीव कृशोदरी ॥ १०४ ॥

सेति। कृशोदरी क्षीणमध्या, सा आहूता सखी, अनत्यासत्तिमती अपि ईषद्दूरस्था अपि, तस्य नलस्य, वाग्भागं ततः परं कथितं वाक्यांशम्, कल्पग्रामस्य वदरिसमीपवर्त्तिनः कल्पाख्यस्य ग्रामस्य, अल्पनिर्घोषं मन्दध्वनिम्, किञ्चिद्दूरत्वादनुच्चकलरवमित्यर्थः। वदरी इव वदरिकाश्रमस्थलोकसमूह इव, अशृणोत् आकर्णयत्। सन्निकृष्टेषु ग्रामेषु यथा परस्परमालापाः श्रूयन्ते तद्वदश्रौषीदित्यर्थः॥१०४॥

इस ( कलाके पुकारने ) के वाद कुछ दूरपर स्थित भी कृशोदरी उस ( कलाकी सखी ) ने उस ( नल ) के वाक्यांश ( अवशिष्ट वाक्य ) को उस प्रकार सुना, जिस प्रकार थोड़ी दूरपर स्थित स्वल्पजनयुक्त वदरिकाश्रमके लोग 'कल्पग्राम' ( या—कल्पनामक ग्राम ) के जनरवको सुनते हैं। [ 'वदरिकाश्रमवासी लोग थोड़ी दूरपर स्थित 'कल्पग्राम' के मुनियोंकी कलकल ध्वनि सुनते हैं' ऐसा वहाँके तीर्थवासी लोगोंमें प्रसिद्धि है ] ॥ १०४ ॥

अथ स्वपृष्ठनिष्ठायाः शृण्वत्या नैषधाभिधाः ।
नलमौलिमणौ तस्या भावमाकलयत् कला ॥ १०५ ॥

अथेति । अथ सख्याह्वानानन्तरम् , कला तन्नामसखी, स्वपृष्ठनिष्ठायाः निजपश्चाद्भागस्थितायाः, कर्णपिधानार्थं कलाया एव पश्चाद्देशे अवस्थिताया सत्याः इत्यर्थः । नैषधस्य नलस्य, अभिधीयन्ते इत्यभिधाः वचनानि । 'आतश्चोपसर्गे' इति अङ्प्रत्ययः । शृण्वत्याः आकर्णयन्त्याः, तस्याः, भैम्याः, भावं कोपादिचेष्टाम् , नलस्य नैषधस्य, मौलिमणौ मुकुटस्थरत्ने, आकलयत् अपश्यत् । पुरोवर्त्तितया तत्र तस्याः प्रतिफलनादिति भावः ॥ १०५ ॥

इस ( सखीको बुलाने, या—सखीद्वारा नलोक्त शेष वाक्यको सुनने ) के बाद 'कला'ने अपने पीछे स्थित हुई तथा नलके ( अवशिष्ट ) बातको सुनती हुई उस ( दमयन्ती ) की चेष्टा ( नलोक्त अवशिष्ट बात को सुननेसे उत्पन्न हुए क्रोधादि भाव ) को ( अपने सामने बैठे हुए ) नलके मुकुटमें जड़े हुए रत्नोंमें ( प्रतिबिम्बित होनेसे ) देखा, ( किन्तु नलोक्त अवशिष्ट वचनको अपना कान दमयन्तीके हाथोंसे वन्द रहनेके कारण सुना नहीं ) ॥१०५॥

प्रतिबिम्बेक्षितैः सख्या मुखाकूतैः कृतानुमा ।
तद्व्रीडाद्यनुकुर्वाणा शृण्वती चान्वमायि सा ॥ १०६ ॥

प्रतीति । सा कला, प्रतिबिम्बे नलमौलिमणिगतसखीप्रतिच्छायायाम् , ईक्षितैः दृष्टैः, सख्याः भैम्याः, मुखाकूतैः लज्जारोषादिव्यञ्जकवदनभङ्गिभिः लिङ्गैः, कृतानुमा इदमिदमयं वक्तीति विहितानुमाना, दमयन्तीकर्तृककर्णपिधानेन श्रवणासामर्थ्यादिति भावः । अत एव तस्याः दमयन्त्याः, व्रीडादि लज्जास्मितादिभावम् , अनुकुर्वाणा अनुकरणशीला सती, दमयन्त्यनुकरणेन स्वयमपि तादृशभावं प्रकटयन्ती सतीत्यर्थः । 'ताच्छील्यवयोवचनशक्तिषु' इति ताच्छील्ये चानश् , अन्यथा 'अनुपराभ्यां कृञः' इति परस्मैपदप्रसङ्गात् । शृण्वती इव साक्षादाकर्णयन्ती इव, कर्णयोः पिहितयोरपि नलवचनं स्पष्टं शृण्वती इवेत्यर्थः । अन्वमायि अनुमिता, नलदमयन्तीभ्यामिति शेषः ॥ १०६ ॥

( सामने बैठे हुए नलके मुकुटमणिके ) प्रतिबिम्बमें देखे गये उस ( दमयन्ती ) के मुखके भावों ( नलोक्त शेष रहस्यको सुननेसे उत्पन्न हास क्रोधादि चेष्टाओं ) से अनुमान करके उस ( दमयन्ती ) की लज्जा आदिका अनुकरण करती हुई उस ( कला ) को ( नल तथा दमयन्तीने नलोक्त अवशिष्ट वचनको ) सुनती हुई-सी समझा । [ यद्यपि अपने कानोंको वन्द किये जानेसे कलाने नलोक्त शेष बातको नहीं सुना, किन्तु उसको सुनकर की गयी पृष्ठस्थ दमयन्तीकी चेष्टाओंको सम्मुखस्थ नलमुकुट रत्नमें देखकर वैसा ही अनुकरण करने लगी, जिससे नल तथा दमयन्तीने अनुमान किया कि यह कला कान वन्द करनेपर भी नलोक्त वचनको सुन रही है ] ॥ १०६ ॥

कारङ्कारं तथाऽऽकारमूचे साऽश्रृणवन्तमाम्।
मिथ्या वेत्थ गिरश्चेत्तद्व्यर्थाः स्युर्मम देवताः॥ १०७॥

कारङ्कारमिति। सा कला, तथाऽऽकारं पूर्वोक्तरूपमनुकरणमित्यर्थः, कारं कारं कृत्वा कृत्वा। आभीक्ष्ण्ये णमुल्। अश्रृणवन्तमां भवदुक्तं सर्वमतिशयेनाकर्णयम्, अहमिति शेषः। श्रृणोतेर्लङि मिपो मादेशः, 'किमेत्तिङव्ययात्—' इत्यामुप्रत्ययः। इति ऊचे कथयामास, चेत् यदि, गिरः अश्रृणवन्तमाम् इति वाचः, मिथ्या अनृतम्, वेत्थ जानासि, मन्यसे इत्यर्थः। तत् तदा, मम मे, देवताः उपास्यदेवताः, व्यर्थाः विफलाः, विफलोपासनाः इत्यर्थः। विशिष्टार्था इत्यपि निगूढार्थो गम्यते, विशिष्टार्थसाधिका इत्यर्थः। स्युः भवेयुः॥ १०७॥

वैसे अनुकरणको वार-वार करके कलाने कहा कि (मैंने नलके कहे हुए अवशिष्ट रहस्य वृत्तान्तोंको भी) सम्यक् प्रकारसे सुन लिया, यदि (तुम मेरी) वातको असत्य जानती हो तो मेरे देव व्यर्थ (निष्फल, पक्षा०—विशिष्ट अर्थवाले अर्थात् विशेष कार्यसाधक) होवें॥ १०७॥

मत्कर्णभूषणानान्तु राजन्! निबिडपीडनात्।
व्यथिष्यमाणपाणिस्ते निषेद्धुमुचिता प्रिया॥ १०८॥

मदिति। तु किन्तु, राजन्! हे महाराज!, मत्कर्णभूषणानां मम श्रवणालङ्काराणाम्, निबिडपीडनात् दृढभावेन धारणात्, कर्णपिधानार्थमिति भावः। व्यथिष्यमाणपाणिः तोत्स्यमानकरा, ते तव, प्रिया कान्ता भैमी, निषेद्धुं कर्णपिधानात् निवारयितुम्, उचिता कर्त्तव्या, मया युवयोः रहस्यस्य सर्वस्यापि श्रुतत्वात् कर्णपिधानस्य स्वपाणिपीडनादतिरिक्तफलं नास्तीति भावः॥ १०८॥

हे राजन्! मेरे कानके भूषणोंसे (विशेष दवनेके कारण भविष्यमें) व्यथायुक्त होनेवाले हैं हाथ जिसके ऐसी अपनी प्रिया (दमयन्ती) को आप निषेध करें। [आपकी प्रिया दमयन्तीके द्वारा कानोंके बन्द करनेपर भी मैंने जब आपकी अवशिष्ट वातोंको सुन ही लिया, अतः मेरे कानोंको सुकुमार हाथोंसे अधिक विलम्ब तक बन्द करनेके कारण उनमें पीड़ा होने लगेगी, इस वास्ते आपको उचित है कि निष्फल एवं दुःखान्त कार्य करनेवाली अपनी प्रियाको रोकें]॥ १०८॥

इति सा मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात्।
पत्युराश्रवतां यान्त्या मुधाऽऽयासनिषेधिनः॥ १०९॥

इतीति। सा कला, इति इत्थम्, एवंविधवचनकौशलेनेत्यर्थः। मुधाऽऽयासं वृथाक्लेशम्, निषेधति निवारयति, कलया सर्वस्यैव वृत्तान्तस्य यथावत् श्रवणात् मिथ्या कर्णावरणपरिश्रमं मा कुर्विति वारयतीति तादृशस्येत्यर्थः। पत्युः नलस्य, आश्रवतां वाक्यकारित्वम्, 'वचने स्थित आश्रवः' इत्यमरः। यान्त्या प्राप्नुवत्याः,

भर्तुरादेशात् कर्णौ त्यजन्त्या इत्यर्थः। सख्याः भैम्याः, करग्रहात् हस्ताभ्यां धारणात्, कर्णौ निजश्रवणद्वयम्, मोचयाञ्चक्रे मोचितवती ॥ १०९ ॥

उस 'कला' ने ऐसा (२०।१०७-१०८ कहकर) निरर्थक परिश्रमसे निषेध करनेवाले पति (नल) का कहना माननेवाली सखी (दमयन्ती) के करग्रहण (हाथोंसे बन्द करने) से अपने कानोंको छुड़ा लिया। ['जब कान बन्द करनेपर भी यह कला मेरी बातें सुन ही रही है, तब भविष्यमें हस्तपीडाजनक ऐसा काम करना छोड़ दो' ऐसा नलके वचनको मानकर दमयन्तीने कलाके कानोंको छोड़ दिया] ॥ १०९ ॥

श्रुतिसंरोधजध्वानसन्ततिच्छेदतालताम् ।
जगाम झटिति त्यागस्वनस्तत्कर्णयोस्ततः ॥ ११० ॥

श्रुतीति। ततः कर्णमोचनानन्तरम्, तस्याः कलायाः, कर्णयोः श्रवणयोः, झटिति सहसा, त्यागेन मोचनेन, यः स्वनः शब्दः, श्रुतिविवरं प्रविष्टः बाह्यशब्द इत्यर्थः। श्रुतिसंरोधेन कर्णावरणेन, जातायाः उत्पन्नायाः, ध्वानसन्ततेः 'धुम्-धुम्' इत्यादिरूपध्वनिपरम्परायाः छेदे विरामे, तालतां गीतादिक्रियासमापनकालिकमानरूपताम्, जगाम प्राप। बाह्यशब्देन आभ्यन्तरध्वनिर्निवृत्त इत्यर्थः। एतत्तु सर्वेषामेवानुभवसिद्धमिति बोद्धव्यम् ॥ ११० ॥

उस (दमयन्तीसे कानोंको छुड़ाने) के बाद (अथवा—बढ़ा हुआ), उस 'कला' के कानोंको अतिशीघ्र अर्थात् सहसा छोड़नेसे उत्पन्न ध्वनि (कर्णविवरोंमें प्रविष्ट बाह्य शब्द) कानोंके बन्द करनेसे उत्पन्न ध्वनि-समूहके विराम अर्थात् बादमें तालभाव (गीत आदिकी क्रियाके समान प्रमाणता) को प्राप्त किया। [कानोंको बहुत विलम्बतक बन्द रखकर सहसा छोड़नेके बाद उसमें प्रविष्ट हुआ बाह्य ध्वनि गानेके तालके समान कलाको मालूम पड़ा] ॥ ११० ॥

साऽपसृत्य कियद् दूरं मुमुदे सिष्मिये ततः ।
इदञ्च तां सखीमेत्य ययाचे काकुभिः कला ॥ १११ ॥

सेति। ततः मुक्तिप्राप्तेरनन्तरं सा कला तन्नामसखी, कियत् किञ्चित्, दूरं विप्रकृष्टदेशम्, अपसृत्य गत्वा मुमुदे जहर्ष, निजकौशलस्य साफल्यदर्शनादिति भावः। अत एव सिष्मिये च मन्दं जहास च, किञ्च, ताम् आहूतां स्वपक्षीयाम्, सखीं वयस्याम्; एत्य आगत्य, काकुभिः अनुनयसूचकविकृतस्वरैः, इदं वक्ष्यमाणं, ययाचे च प्रार्थयामास च ॥ १११ ॥

इस (कानोंमें सहसा प्रविष्ट ध्वनिको गानेके तालके समान ज्ञात होने) के बाद वह 'कला' (दमयन्तीके पाससे) कुछ दूर हटकर हर्षित हुई तथा मुस्कुरायी और उस (बुलायी गयी स्वपक्षीया सखी) के पास जाकर काकु (दीनतासूचक विकृत स्वर) से यह याचना की ॥

अभिधास्ये रहस्यं तद् यदश्रावि मयाऽनयोः।
वर्णयाऽऽकर्णितं मह्यमेह्याालि[1] विनिमीयताम् ॥ ११२ ॥

किं ययाचे इत्याह—अभीति। आलि! हे सखि!, एहि आगच्छ, अनयोः भैमीनलयोः सम्बन्धि, यद् रहस्यं गोपनीयव्यापारः, मया अश्रावि कर्णरोधात् प्राक् श्रुतम्, तत् अभिधास्ये कथयिष्यामि, तुभ्यमिति शेषः। आकर्णितं त्वया श्रुतञ्च, रहस्यमिति शेषः। मह्यं कलायै, वर्णय कथय, त्वमिति शेषः। विनिमीययां परस्परं श्रुतवृत्तान्तस्य विनिमयः क्रियताम्, आवाभ्यामिति शेषः ॥ ११२ ॥

'हे सखि! मैंने इन दोनों (नल तथा दमयन्ती) के जिस (रहस्य—सुरतकालिक गोप्य वृत्तान्त) को सुना है, वह रहस्य (तुमसे) कहूंगी, (तथा तुमने मेरे कान बन्द होनेके बाद इन दोनोंका जो रहस्य) सुना है उसे (मुझसे) कहो, इस प्रकार हम दोनों मिलकर इनके रहस्योंको परिवर्तित (अदलाबदली) कर लें' ॥ ११२ ॥

वयस्याऽभ्यर्थनेनास्याः प्राक्कूटश्रुतिनाटने।
विस्मितौ कुरुतः स्मैतौ दम्पती कम्पितं शिरः ॥ ११३ ॥

वयस्येति। वयस्यायाः स्वपक्षभूतायाः सख्याः, अभ्यर्थनेन प्रार्थनेन, 'वर्णयाऽऽकर्णितं मह्यम्' इत्युक्तरूपेण श्रुतवृत्तान्तस्य विनिमयप्रार्थनया इत्यर्थः। अस्याः कलायाः, प्राक् पूर्वम्, कर्णपिधानावस्थायामित्यर्थः, कूटे मिथ्यैव कृते, श्रुतिनाटने मया सर्वं श्रुतमिति भावव्यञ्जने, विस्मितौ आश्चर्यान्वितौ, दम्पती जायापती, एतौ भैमीनलौ, शिरः स्वस्वमस्तकम्, कम्पितं चालितम्, कुरुतः स्म मृदु मृदु शिरश्चालनं चक्रतुरिति विस्मयभावोक्तिः ॥ ११३ ॥

सखीसे याचना (२०।११२) करनेसे इस 'कला' के पहले झूठे ही (नलोक्त अवशिष्ट वाक्यांशको) सुननेका अभिनय करनेमें आश्चर्यित ये दम्पति (नल तथा दमयन्ती) शिरःकम्पन करने लगे। ['इस कलाने मैंने नलोक्त शेष वाक्यांशको अच्छी तरह सुन लिया' कहकर हम दोनोंको ही विशेषरूपसे वञ्चित कर दिया, इस आश्चर्यान्वित अभिप्रायसे शिरको कम्पित करने लगे। आश्चर्यित व्यक्तिका शिर कँपाना स्वभाव होता है] ॥ ११३ ॥

तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः।
आस्व तद्वञ्चितौ स्वश्चेन्मिथ्याशपथसाहसात् ॥ ११४ ॥

तथेति। निषधाधिपः नलः, आलिम् आहूतस्वपक्षसखीम्, तथा तेन प्रकारेण 'वर्णयाकर्णितं मह्यम्' इत्युक्तप्रकारेणेत्यर्थः। आलपन्तीं सम्भाषमाणाम्, तां कलाम्, अभ्यधात्, अवोचत्, किम् इति? हे धूर्त्ते! मिथ्याशपथसाहसात् 'व्यर्थाः स्युः मम देवताः' इति कृत्वा अनृतशपनमेव साहसम् अविचारितकारित्वं तस्मात् हेतोः,

1. '—मेह्येहि' इति पाठान्तरम्।

चेत् यदि, वञ्चितौ प्रतारितौ, स्वः भवावः आवामिति शेषः। तत् तर्हि, आस्स्व तिष्ठ, एतदर्थं त्वां यथोचितं दण्डयामि क्व गमिष्यसीति भावः ॥ ११४ ॥

निषधराज ( नल ) ने सखीसे उस प्रकार ( २०।११२ ) कहती हुई उस 'कला' से कहा—'मिथ्या शपथलेनेके साहस ( २०।१०७ ) से यदि हम दोनोंको तुमने वञ्चित किया है तो ठहरो अर्थात् मिथ्या शपथसे वञ्चित करनेसे हम दोनों तुम्हें दण्डित करेंगे' ॥ ११४ ॥

प्रत्यलापीत् कलाऽपीमं कलङ्कः शङ्कितः कुतः ? ।
प्रियापरिजनोक्तस्य[1] त्वयैवाद्य मृषोद्यता ॥ ११५ ॥

प्रत्यलापीदिति । कला अपि तन्नामसखी अपि, इमं नलम्, प्रत्यलापीत् प्रत्यवोचत् । लपेर्लुङि 'अतो हलादेर्लघोः' इति निषेधविकल्पात् सिचि वृद्धिः । हे राजन् ! त्वया भवता, अद्य एव अस्मिन्नेव दिवसे, न तु इतः पूर्वं कदाऽपीति भावः । प्रियायाः भैम्याः परिजनेन सखीजनेन, उक्तस्य कथितस्य वचनस्य, मृषोद्यता मिथ्यावादित्वम् । 'राजसूयसूर्यमृषोद्य—' इत्यादिना मृषापूर्वाद्वदेः क्यबन्तो निपातः । अनृतवादितारूप इत्यर्थः । कलङ्कः अपवादः, कुतः कथम्, शङ्कितः सम्भावितः ? भवत्प्रियायाः सदा सत्यवादित्वात् तत्परिजनानामस्माकमपि मिथ्यावादित्वं न सम्भवति इति भावः । वृत्तस्यापि रात्रिव्यापारस्य न वृत्तमिति अपलापवत् अस्माकमपि तत्परिजनानां तथा व्यवहारः न दूष्यतीति तु निगूढतात्पर्यम् ॥ ११५ ॥

'कला' ने भी उस ( नल ) को प्रत्युत्तर दिया कि—( हे राजन् ! ) आप आज ही ( दूसरे किसी दिन नहीं ) प्रिया ( दमयन्ती ) के परिजनों ( सखी—मुझ 'कला' ) के कथनकी असत्यभाषितारूप कलङ्ककी क्यों शङ्का कर रहे हैं [ सत्यवादिनी दमयन्तीके परिजनोंके भाषणमें असत्य भाषणरूप कलङ्क होनेका सन्देह आपको नहीं करना चाहिये, क्योंकि रात्रिमें किये गये सुरतको आपकी प्रिया एवं हमारी स्वामिनी दमयन्ती नहीं हुआ बतला रही है, अत एव परिजनको स्वाम्यनुकूल बर्ताव करना ही उचित होनेसे मेरा यह व्यवहार भी आपको सदोष नहीं मानना चाहिये ] ॥ ११५ ॥

सत्यं खलु तदाऽश्रौषं परं धुमुधुमारवम्[2] ।
शृणोमीत्येव चावोचं न तु त्वद्वाचमित्यपि ॥ ११६ ॥

सत्यमिति । अथवा तदा पूर्वोक्तशपथात् पूर्वं कर्णरोधसमये, परं केवलम्, धुमुधुमारवं 'धुम् धुम्' इत्येवमाभ्यन्तरिकं शब्दम्, सत्यं खलु सत्यमेव, अश्रौषम् आकर्णितवती, अहमिति शेषः । च किञ्च, शृणोमीत्येव 'अशृणवन्तमाम्' इत्यनेन श्रवणमात्रमेव, अवोचम् अकथयम्, अपि तु परन्तु, त्वद्वाचं भवदीयवाक्यम्, अशृणवन्तमामिति शेषः, इति न, अवोचमित्यनेनान्वयः । यस्मात् शृणोमीत्युक्तं, तस्मान्नात्र मृषोद्यतादोषः, शब्दश्रवणस्य सत्यत्वादिति भावः ॥ ११६ ॥

---

१. 'प्रियापरिजनस्योक्तौ' इति पाठान्तरम् । २. 'गुमुगुमा—' इति पाठान्तरम् ।

(प्रकारान्तरसे कला अपने वचनकी सत्यता प्रमाणित करती है—अथवा—) उस (कान बन्द रहनेके) समय सचमुच ही मैंने सुना था, किन्तु 'धुम्, धुम्' ध्वनिको ही सुना था और मैंने 'सुनती हूं' यही कहा था, (किन्तु) 'तुम्हारे वचनको भी (सुनती हूं)' यह नहीं कहा था। [अत एव ध्वनिमात्रको सुननेके अभिप्रायसे मेरा वैसा कहना सदोष नहीं मानना चाहिये] ॥११६॥

आमन्त्र्य देव ! तेन त्वां तद्वैयर्थ्यं समर्थये।
शपथः कर्कशोदर्कः सत्यं सत्योऽपि दैवतः ॥ ११७ ॥

आमन्त्र्येति। देव ! हे राजन् ! तेन 'व्यर्थाः स्युर्मम देव ! ताः' इत्यादि पूर्वोक्तवाक्येन हेतुना, हे देव ! इति त्वां भवन्तम्, आमन्त्र्य सानुनयं सम्बोध्य, ताः अशृणवन्तमाम् इत्यादि गिरः, व्यर्थाः मिथ्याभूताः इत्युक्त्वा, तस्य अशृणवन्तमामिति शपथवाक्यस्य, वैयर्थ्यं मिथ्यात्वम्, अथवा श्रुतानां धुमुधुमेत्यादीनां ध्वनीनां वैयर्थ्यम् अर्थशून्यत्वम्, 'धुम् धुम्' इति शब्दस्य डित्थडवित्थादिवत् अर्थशून्यतया तच्छ्रवणस्यापि निरर्थकत्वादिति भावः। समर्थये सिद्धान्तत्वेन स्थापयामीत्यर्थः। अहमिति शेषः शपथकरणे मन्वाद्युक्तं दोषं जानत्या मया तु शपथः न कृतः, किन्तु अहं शपथं कृतवतीति देवस्यैव भ्रान्तिर्जाता, तथा हि दैवतः देवताम् उद्दिश्य कृतः, सत्योऽपि यथार्थोऽपि, शपथः शपनम्, सत्यं निश्चितमेव, कर्कशोदर्कः कर्कशः धर्महानिकरत्वेन निदारुणः, उदर्कः उत्तरं फलं यस्य तादृशः, शोचनीयपरिणामः इत्यर्थः। 'उदर्कः फलमुत्तरम्' इत्यमरः। भवतीति शेषः। 'सत्येनापि शपेद् यस्तु देवाग्निगुरुसन्निधौ। तस्य वैवस्वतो राजा धर्मस्यार्द्धं निकृन्तति।' इति मनुस्मरणादिति भावः ॥ ११७ ॥

(अब 'कला' पूर्वोक्त (२०।१०७) शपथका अर्थान्तर करके अपने वचनकी सत्यता प्रमाणित करती है—) हे देव ! उस 'व्यर्थाः स्युर्मम देवताः' (२०।१०७) वचनसे आपको ही आमन्त्रितकर उस (सुने हुए तथा आपके कहे हुए वचन) की असत्यताका समर्थन करती हूं, सत्यके विषयमें भी किया देव-सम्बन्धी शपथ कर्कश (अनिष्ट) परिणामवाला होता है। [इसका भाव यह है—कला कहती है कि—मैंने तो 'हे देव ! मम गिरः मिथा वेत्थ चेद, ता व्यर्था स्युः' अर्थात् 'हे राजन् ! हमारी बातोंको आप असत्य जानते हैं तो वे व्यर्थ (असत्य ही) हों' ऐसा कहा था, किन्तु आपने उसे शपथरूपमें समझ लिया, अत एव मेरे कहे गये अभिप्रायको समझनेमें यदि आपको भ्रम हो गया तो मुझपर असत्यभाषण करने वा शपथ लेनेका दोष नहीं लगाना चाहिये, क्योंकि उक्ताभिप्रायसे कहनेके कारण न तो मैंने असत्यभाषण किया और न शपथ ही लिया] ॥ ११७ ॥

असम्भोगकथारम्भैर्वञ्चयेथे कथं नु माम् ?
हन्त ! सेयमनर्हन्ती[1] यत्तु विप्रलभे युवाम् ॥ ११८ ॥

मिथ्याशपथेन युवयोर्वञ्चनायां न कोऽपि दोषः इत्याह—असम्भोगेति । युवां भवन्ती, असंम्भोगकथानां सम्भोगचिह्ने विद्यमानेऽपि त्वया उच्यते भैमी मां न स्पृशत्यपि, अनयाऽपि नलेन नाहं स्पृष्टा इत्युच्यते एवम्भूतानां सम्भोगाभावोक्तीनाम्, आरम्भैः उपन्यासैः, प्रवर्त्तनैरित्यर्थः । मां कलाम्, कथं नु किमर्थम्, वञ्चयेथे? प्रतारयथः ? तु पुनः, युवां भवन्तौ, यद्विप्रलभे वञ्चयामि, अहमिति शेषः । सा इयं वञ्चना, अनर्हन्ती हन्त ! अयुक्ता किम् !! मद्वञ्चनं युवयोः युक्तमेव, मम तु भवद्वञ्चनमयुक्तम् अहो आश्चर्यं धूर्त्तयोरिति भावः । अनर्हन्ती 'अर्हः प्रशंसायाम्' इति शतरि उगित्वात् ङीपि, ब्राह्मणादित्वात् ष्यञ्प्रत्यये 'अर्हतो नुम् च' इति नुमागमः, 'ष्यञः पित्करणादीकारो बहुलम्' इति वामनः । 'यस्य हलः' इति यकारलोपे चार्हन्ती, ततः नञ्समासः । यत्तु इत्यत्र 'यन्न' इति पाठे—अनर्हन्ती दासीत्वात् अयोग्याऽपि, सा इयं कलानाम्नी अहं, युवां प्रतारकौ भवन्तौ, यत् न विप्रलभे, तत् किं सम्भावयथः ? इति शेषः । 'शठे शाठ्यं समाचरेत्' इति न्यायाद् वञ्चकेन सह प्रतारणापूर्णव्यवहार एव युज्यते इति भावः ॥ ११८ ॥

('आर्जवं हि कुटिलेपु न नीतिः' अर्थात् 'कुटिलोंके विषयमें सरलताका व्यवहार करना नीति नहीं है' इस वचनके अनुसार असत्यभाषण करनेपर मेरा कोई दोष नहीं है, इस आशयसे कला अपने पक्षका समर्थन करती है—) तुम दोनो असम्भोग कथाके कहनेसे (सम्भोग करनेपर भी 'यह दमयन्ती न तो मुझे स्पर्श करती है, न देखती है और न बोलती है' इत्यादि आप तथा ऐसा ही यह दमयन्ती भी कहती है, अतः इस प्रकार सर्वथा असत्य बतलानेसे) मुझे क्यों वञ्चित करते हो ? आश्चर्य है कि यह मत्कृत वञ्चना अनुचित है क्या जो मैं आप दोनोंको वञ्चित करूं ? [ पाठा०—( दासी होनेसे ) अयोग्य भी मैं जो तुम लोगोंको नहीं वञ्चित करूं ? यह समझते हैं क्या ? अर्थात् 'शठे शाठ्यं समाचरेत्' (शठके साथ शठता करनी चाहिये) इस नीतिके विपरीत तुम दोनोंको नहीं समझना चाहिये ] ॥ ११८ ॥

कर्णे कर्णे ततः सख्यौ श्रुतमाचख्यतुर्मिथः ।
मुहुर्विस्मयमाने च स्मयमाने च ते बहुः ॥ ११९ ॥

कर्णे कर्णे इति । ततः अनन्तरम्, ते सख्यौ कला तत्सपत्ना च, मुहुः पुनः पुनः, विस्मयमाने आश्चर्यभावं प्रकाशयन्त्यौ, तथा स्मयमाने मन्दं हसन्त्यौ च सत्यौ, श्रुतम् आकर्णितं पूर्वोक्तरहस्यजातम्, मिथः अन्योऽन्यम्, कर्णे कर्णे कर्णसमीपे

1. '—मनार्हन्ती' इति पाठान्तरम् ।

मुखं संस्थाप्य निःशब्दं यथा तथेत्यर्थः। बहु दीर्घकालं व्याप्येत्यर्थः। आचख्यतुः कथयामासतुः ॥ ११९ ॥

इस ('कला' के इस प्रकार (२०।११५-११८) स्ववञ्चनदोषका परिहार करने) के बाद दोनों सखियों ('कला' तथा उसकी बुलायी हुई दूसरी सखी, दमयन्ती तथा नलके सम्भोग-वृत्तान्तके सुननेसे) बार-बार आश्चर्यित होती हुई तथा स्मित करती हुई सुनी गयी (नलोक्त सम्भोग कथा) को एक दूसरेके कानमें बहुत देरतक कहने लगीं ॥ ११९ ॥

अथाख्यायि कलासख्या कुप्य मे दमयन्ति ! मा।
कर्णाद्द्वितीयतोऽप्यस्याः सङ्गोप्यैव यदब्रुवम् ॥ १२० ॥

अथेति। अथ अन्योऽन्यकथनानन्तरम्, कलासख्या कलायाः वयस्यया, आख्यायि उक्तम्। किमिति ? हे दमयन्ति ! मे [मह्यम्—मा कुप्य न क्रुद्धा भव, त्वमिति शेषः। 'क्रुधद्रुह—' इत्यादिना सम्प्रदानत्वाच्चतुर्थी। यत् यस्मात्, द्वितीयतः द्वितीयात्, कर्णात् श्रवणात् अपि, सङ्गोप्य गोपायित्वा, अस्याः एव कलायाः एव, अब्रुवं रहस्यम् अकथयम् ॥ १२० ॥

इस (परस्परमें कानमें भाषण करने) के बाद कलाकी सखीने बहुत देर तक कहा—'हे दमयन्ति ! मुझपर मत क्रोधित होवो, क्योंकि मैंने इसके दूसरे कानसे भी छिपाकर ही कहा है अर्थात् मैंने इस प्रकार कहा है कि दूसरे व्यक्तिको कौन कहे, इसके दूसरे कान तकने भी नहीं सुना है'। [इस प्रकार दमयन्तीसे कहकर उसने परिहास ही किया है] ॥१२०॥

प्रियः प्रियामथाचष्ट दृष्टं कपटपाटवम् ?।
वयस्ययोरिदं तस्मान्मा सखीष्वेव विश्वसीः ॥ १२१ ॥

प्रिय इति। अथ कलासखीवाक्यानन्तरम्, प्रियः कान्तो नलः प्रियां कान्तां भैमीम्, आचष्ट अवोचत्, किमिति ? हे प्रिये ! वयस्ययोः सख्योः, इदं त्वत्समक्षमेव आचरितम्, कपटपाटवं वञ्चनाचातुर्यम्, दृष्टम् ? अवलोकितम् ? इति, काकुः। तस्मात् एव-व्यवहारदर्शनात्, सखीषु वयस्यासु, मैव नैव, विश्वसीः विश्वासं कुरु, मय्येव विश्वासः कर्त्तव्य इति भावः। श्वसेर्माङि लुङि 'न माङ्योगे' इति अडागमनिषेधः। 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायां 'ह्ययन्तक्षणश्वस—' इत्यादिना निषेधः ॥ १२१ ॥

इस ('कला' की सखीके ऐसा (२०।१२०) कहने) के बाद प्रियने प्रिया (नलने दमयन्ती) से कहा—'(तुमने अपने सामने ही अपनी इन) दोनों सखियोंके कपटचातुर्यको

---

१. 'सङ्गोप्यैवम्' इति पाठान्तरम्। २. अत्र 'कलारूपिण्या सख्या' इत्याशयात्मकं 'कलयैव सख्या वा' इति पक्षान्तरार्थकं 'प्रकाश'व्याख्यानं 'अलापि कलयाऽपीयं……(२०।१२२)' इति वक्ष्यमाणत्वाच्चिन्त्यं सुधीभिः।

देखा ? इस कारणसे ही तुम सखियोंपर ( अथवा—इस कारणसे तुम सखियोंपर ही ) विश्वास मत करो, ( किन्तु एकमात्र मुझपर ही विश्वास करो )' ॥ १२१ ॥

आलापि[1] कलयाऽपीयं पतिर्नालपति क्वचित् ।
वयस्येऽसौ रहस्यं तत् सभ्ये विस्रम्भ्यमीदृशि ॥ १२२ ॥

आलापीति । कलयाऽपि इयं भैमी, आलापि अवादि, किमालापि ? इत्याह—हे दमयन्ति ! असौ अयम्, पतिः तव भर्त्ता नलः, क्वचित् कुत्रापि, न आलपति न कथयति, गोप्यरात्रिवृत्तमिति शेषः । अत एव ईदृशी एवम्भूते, सभ्ये सज्जने, वयस्ये सख्यौ, तत् पूर्वोक्तम्, रहस्यं गोप्यवृत्तान्तः, विस्रम्भ्यं विश्वसनीयम् विश्वस्य वक्तव्यमेवेत्यर्थः । अत्र विपरीतलक्षणया-असौ ते पतिः सर्वत्रैव तव रहस्यमालपति, अत एव ईदृशि असभ्ये वयस्ये न विस्रम्भ्यमेव इति । 'कृत्यलुटो बहुलम्' इति भावे कृत्यप्रत्ययः, तस्याकित्वान्नकारलोपः ॥ १२२ ॥

'कला' ने भी दमयन्तीसे ( मधुर परिहास एवं काकूक्तिके साथ ) कहा कि—'यह पति ( नल ) कहीं पर रहस्य ( तुम्हारी सम्भोगादि वार्ता ) को नहीं कहते हैं, इस कारण ऐसे सभ्य मित्रमें ( तुम्हें ) विश्वास करना चाहिये'। '( विपरीत लक्षणासे—ये तुम्हारे रहस्यको सर्वत्र कह देते हैं, अत एव ऐसे असभ्य साथीपर विश्वास नहीं करना चाहिये )' । [ यहांपर भी 'कला' ने 'नलोक्त पूर्ववचन ( २०।१२१ ) का वैसा ही समुचित उत्तर देकर नलको पुनः पराजित किया है ] ॥ १२२ ॥

इति व्युत्तिष्ठमानायां तस्यामूचे नलः प्रियाम् ।
भण भैमि ! बहिः कुर्वे दुर्विनीते गृहादमू ? ॥ १२३ ॥

इतीति । तस्यां कलायाम्, इति इत्थम्, व्युत्तिष्ठमानायां विरोधम् आचरन्त्याम्, तुल्यभावेनैव विपक्षवत् व्यवहर्त्तुं प्रवर्त्तमानायामित्यर्थः । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् । नलः नैषधः, प्रियां भैमीम्, ऊचे कथयामास । किमिति ? भैमि ! हे दमयन्ति ! दुर्विनीते उद्धते, अमू एते सख्यौ, गृहात् प्रकोष्ठमध्यादित्यर्थः । बहिः कुर्वे ? निर्वासयामि ? इति काकुः, भण ब्रूहि, आदिश इत्यर्थः ॥ १२३ ॥

इस प्रकार उस 'कला' के विरोध करते रहनेपर नलने प्रिया ( दमयन्ती ) से कहा कि—'हे दमयन्ति ! इन दोनों दुर्विनीत सखियोंको घर ( इस प्रकोष्ठ ) से बाहर करता हूं ? कहो [ यहांपर नलने उन सखियोंको बाहर करके सम्भोग करनेके लिए दमयन्तीसे सम्मति चाही है, इसी कारणसे यहां वर्तमानकालिक 'कुर्वे' ( करता हूं ) क्रियाका प्रयोग किया है ] ॥

शिरःकम्पानुमत्याऽथ सुदत्या प्रीणितः प्रियः ।
चुलुकं तुच्छमुत्सर्प्य तस्याः सलिलमक्षिपत् ॥ १२४ ॥

शिर इति । अथ नलवाक्यानन्तरम्, सुदत्या शोभनदन्तया, भैम्या इति शेषः ।

१. 'अलापि' इति पाठान्तरम् ।

शिरःकम्पेनैव, मस्तकस्य ईषच्चालनरूपेणैव, अनुमत्या अनुमोदनेन, सख्याः बहिष्करणविषये सम्मतिज्ञापनेनेत्यर्थः । प्रीणितः तोषितः, प्रियः नलः, तुच्छं रिक्तमेव, जलशून्यमेवेत्यर्थः, चुलुकं प्रसृतम् , निकुब्जपाणिद्वयमित्यर्थः । अञ्जलिमिति यावत् , उत्सर्प्य उत्क्षिप्य, तस्याः कलायाः उपरीत्यर्थः। सलिलं जलम्, अचिक्षिपत् अकिरत् ॥ १२४ ॥

दमयन्तीके द्वारा शिर हिलाकर अनुमति देनेसे सन्तोषित प्रिय ( नल ) ने खाली चुल्लूको ही उठाकर उस सखीके ऊपर पानी फेंका। [ दमयन्तीने दुष्ट उन सखियोंको बाहर करनेकी अनुमति दी, तथा नलने 'सम्भोगार्थं यह मुझे उन्हें बाहर करनेके लिए शिर हिलाकर अनुमति दे रही है' यह समझकर खाली चुल्लूको उन सखियोंके ऊपर फेंका तो वरुणके वरदान (१४।८०)से वह जलपूर्ण हो गया और सखियोंका वस्त्र भींग गया]॥

तच्चित्रदत्तचित्ताभ्यामुच्चैः सिचयसेचनम् ।
ताभ्यामलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः ॥ १२५ ॥

तदिति । तस्मिन् पूर्वोक्तरूपे रिक्तहस्तादपि जलनिःसरणरूपे, चित्रे आश्चर्ये, दत्तचित्ताभ्यां निवेशितमनोभ्याम् , अत एव अपसर्त्तुं विस्मृताभ्यामिति भावः । ताभ्यां सखीभ्याम्, दूरेऽपि विप्रकृष्टदेशे स्थिताभ्यामपि, नलस्य इच्छां पूरयन्तीति तादृशैः नलेच्छापूरिभिः वरुणवरात् नैषधस्य अभिलषितं साधयद्भिः, जलैः सलिलैः, उच्चैः अतिमात्रम् , सिचयसेचनं वस्त्रार्द्रीभवनम् । 'पटोऽस्त्री सिचयो वस्त्रम्' इति यादवः । अलम्भि प्रापि । 'विभाषा चिण्णमुलोः' इति नुमागमः ॥ १२५ ॥

खाली चिल्लू ( के जल फेकने ) से आश्चर्ययुक्त चित्तवाली उन दोनों ( कला तथा उसकी सखी ) का ( वरुणके दिये गये वर (१४।८०) के प्रभावसे ) नलकी इच्छामात्रसे पूर्ण हुए पानीसे दूरस्थ होनेपर भी कपड़ा भींग गया ॥ १२५ ॥

वरेण वरुणस्यायं सुलभैरम्भसां भरैः ।
एतयोः स्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२६ ॥

ननु नलस्य रिक्तहस्तात् कुतो जलसम्भवः इत्यत्राह—वरेणेति । अयं नलः, वरुणस्य जलेशस्य, वरेण वरदानेन, अभीष्टपूरकवाक्यप्रयोगेणेत्यर्थः । सुलभैः अनायासप्राप्यैः, अम्भसां जलानाम्, भरैः ओघैः, तथा विस्मयैरपि रिक्तहस्तात् जलानि निःसृतानीति आश्चर्यरसैश्च, एतयोः सख्योः, हृदयं वक्षःस्थलम् अन्तरञ्च । 'हृदयं वक्षसि स्वान्ते' इति विश्वः । स्तिमितीचक्रे आर्द्रीचकार निश्चलीचक्रे च । अभूततद्भावे च्विः । अत्र स्तिमितहृदयमिति विशेषणविशेष्ययोः द्वयोरपि प्रकृतत्वात् श्लेषः ॥ १२६ ॥

इस ( नल ) ने वरुणके वर ( १४।८० ) के प्रभावसे सुलभजलपूरसे इन दोनों ( कला तथा उसकी सखी ) के हृदय ( बाह्यवक्षःस्थल अर्थात् छाती और आभ्यन्तर अन्तः करण )

को अधिक आश्चर्य पूर्ण कर दिया [ वरुणके वरदानके प्रभावसे नलेच्छामात्रसे उत्पन्न पानीसे वे भींग कर आश्चर्यित हो गयीं ] ॥ १२६ ॥

( युग्मम् )

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः ।
हर्षेणादर्शयत् पश्य नन्विमे तन्वि ! मे पुरः ॥ १२७ ॥
क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते ।
सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥ १२८ ॥

तेनेति । ततः जलसेचनानन्तरम्, अयं नलः, ननु भोः ! तन्वि ! कृशाङ्गि ! प्रिये ! अम्भसा जलेन, वस्त्रं वसनम्, क्लिन्नीकृत्य आर्द्रीकृत्य । अभूततद्भावे च्विः । सक्षौमभावेऽपि क्षौमवस्त्राच्छादने सत्यपि, निर्विघ्नम् अप्रतिबाधनम्, स्तनदर्शनं कुचावलोकनं ययोः ते तादृश्यौ, शुभ्रसूक्ष्मार्द्रवस्त्रेण आच्छादितेऽपि अङ्गे सर्वाङ्गस्य दर्शनविषयीभूतत्वादिति भावः । अत एव जैनप्रव्रजितीकृते बौद्धपरिव्राजिकाप्राये कृते, तासामपि दिगम्बरप्रायत्वादिति भावः । तेन तथाविधकरणेनापि, न अपसर्पन्त्यौ न अपगच्छन्त्यौ, इमे एते, सख्यौ वयस्ये, मे मम, पुरः अग्रतः, स्थिते इति शेषः । पश्य अवलोकय, इति हर्षेण स्तनादिदर्शनजनितानन्देन, दमयन्तीं भैमीम्, दमयन्त्यै इत्यर्थः । अदर्शयत् अङ्गुलिनिर्देशेन दर्शयामास । अत्र 'अभिवादिदृशोरात्मने पदे उपसङ्ख्यानम्' इति पाक्षिककर्मत्वस्य परस्मैपदे अप्राप्ते 'दृशेश्च' इत्यनेन दमयन्तीमित्यणिकर्त्तुः नित्यकर्मत्वम् । ईदृशघटनया लज्जितयोः तयोः गृहात् बहिर्गमनसम्भावनया दमयन्त्युपभोगलिप्सा व्यज्यते ॥ १२७-१२८ ॥

इस ( उन दोनों सखियोंको नलप्रक्षिप्त जलसे भींगकर आश्चर्ययुक्त होने ) के बाद नलने, उससे भी नहीं हटती हुई उन दोनों सखियोंको 'हे तन्वि ( दमयन्ति ) ! पानीसे कपड़ेको भिंगाकर जैन-प्रव्राजिका बनायी गयी महीन रेशमी वस्त्र पहनने पर भी ( उनके भींगनेसे ) अनायास दिखलायी देते हुए स्तनोंवाली इन दोनों ( कला तथा उसकी सखी ) को देखो' यह कहकर हर्षसे दमयन्तीके लिए दिखलाया । [ पतले वस्त्रको भींग जानेसे उनके स्तनादि दृष्टिगोचर हो रहे थे तथा वे नग्नके समान प्रतीत होनेसे दिगम्बर जैन प्रव्राजिका प्रतीत हो रही थीं । यहां पर 'जीवातु' कारने 'जैन' शब्दका 'बौद्ध' अर्थ किया है, किन्तु बौद्धोंके मूल आराध्य देवता 'बुद्ध' भगवान् हैं, न कि 'जिन' भगवान्, अतः 'जैन' शब्दका अर्थ 'जिन' देवताको माननेवाला 'जैन' ही जानना चाहिये । किन्तु जैन सम्प्रदायमें पुरुषोंको ही दिगम्बर ( नग्न ) होनेका विधान है, न कि प्रव्राजिका ( 'अर्जिका' या 'क्षुल्लिका' का व्रतग्रहण करनेवाली स्त्रियोंको भी ) बौद्ध सम्प्रदायमें भी नग्न रहनेका शास्त्रीय विधान नहीं है, अतः 'श्रीहर्ष' महाकविका यह कथन किस आधार पर है ? विद्वानोंको इसका विचार करना चाहिये ] ॥ १२७-१२८ ॥

अम्बुनः शम्बरत्वेन मायैवाविरभूदियम् ।
यत् पटावृतमप्यङ्गमनयोः कथयत्यदः ॥ १२९ ॥

अम्बुन इति । अदः नलनिक्षिप्तम् इदं जलम् , कर्तृ । पटावृतमपि वस्त्राच्छादितमपि अनयोः सख्योः, अङ्गं स्तनादि निगूढावयवम् , यत् कथयति वदति, सुस्पष्टम् आविष्करोतीत्यर्थः । इयं पटावृतस्यापि अङ्गस्य आविष्करणरूपा एषा अवस्था, अम्बुनः जलस्य, शम्बरत्वेन शम्बरापरनामत्वेन शम्बरासुरत्वेन च, 'दैत्ये ना शम्बरोऽम्बुनि' इति वैजयन्ती । माया एव शाम्बरी एव, छलनाः एवेत्यर्थः । 'स्यान्माया शाम्बरी' इत्यमरः । आविरभूत् प्रकटिता आसीत् , अन्यथा कथं अनग्नयोरपि स्तनादिर्दृश्यते इति भावः ॥ १२९ ॥

यह ( जल ) वस्त्राच्छादित भी इन दोनोंके अङ्ग ( स्तन, जघनादि अवयव ) को कहता ( प्रकट दिखलाता ) है, जलको शम्बर ( 'शम्बर' शब्दका पर्याय पक्षा०—'शम्बर' नामक मायावी दैत्य ) होनेसे 'माया' ( शम्बर दैत्यका छल ) ही प्रकट हो गया है । [ शम्बरको महामायावी होनेसे 'शाम्बरी' शब्द 'माया' अर्थमें प्रयुक्त होता है । सो यहां भी शाम्बरी ( जल-सम्बन्धी, पक्षा०—शम्बर दैत्य-सम्बन्धी ) माया ही प्रकट हो गयी है, इसीसे विना जलके भी इन दोनोंके वस्त्र भींग गये हैं ] ॥ १२९ ॥

वाससो वाऽम्बरत्वेन दृश्यतेयमुपागमत् ।
चारुहारमणिश्रेणि-तारवीक्षणलक्षणा ॥ १३० ॥

वासस इति । वा अथवा, चार्व्यः मनोज्ञाः, हारमणिश्रेण्यः एव मौक्तिकसरस्थरत्नराजय एव, ताराः नक्षत्राणि, तासां वीक्षणं दर्शनमेव, लक्षणं लक्ष्म यस्याः सा तादृशी, इयम् एषा, दृश्यता स्तनादिदर्शनयोग्यता, आकाशरूपेण दर्शनविषयता च, वाससः वस्त्रस्य, अम्बरत्वेन वस्त्रत्वेन आकाशत्वेन च । 'अम्बरं व्योम्नि वाससि' इत्यमरः । उपागमत् प्राप्नोत् , जाता इत्यर्थः ॥ १३० ॥

अथवा—हारके सुन्दर मणिसमूहरूप ताराओंका दिखलायी देता है चिह्न जिसका अर्थात् जिसमें हारके सुन्दर मणिसमूहरूप ताराएँ दृष्टिगोचर हो रही हैं ऐसी दृश्यता ( दृष्टिगोचरता ) कपड़ेके 'अम्बर' शब्दवाच्य होनेसे हो गयी है । [ कपड़ेको 'अम्बर' ( आकाश ) भी कहते हैं और 'अम्बर' ( आकाश ) में ताराएँ दृष्टिगोचर होती ही हैं; तथा वह ( 'अम्बर'—आकाश ) शून्य पदार्थ है, इसी कारण इन सखियोंके कपड़ेके भीतरके हारके सुन्दर मणिसमूहरूप सुन्दर ताराएँ दृष्टिगोचर हो रही हैं । भींगे हुए सूक्ष्म कपड़ेके भीतर हारके मणियोंका दिखलायी पड़ना उचित ही है ] ॥ १३० ॥

ते निरीक्ष्य निजावस्थां ह्रीणे निर्ययतुस्ततः ।
तयोर्वीक्षारसात् सख्यः सर्वा निश्चक्रमुः क्रमात् ॥ १३१ ॥

ते इति । ते सख्यौ, निजावस्थां जलसेकात् गोप्याङ्गप्रकाशरूपाम् आत्मनो

दशाम्, निरीक्ष्य अवलोक्य, ह्रीणे लज्जिते सख्यौ, ततः तस्माद् गृहात्, निर्ययतुः निर्जग्मतुः। ततः तयोः कलातत्सख्योः वीक्षारसाद्दर्शनेच्छातः, सर्वा अपराः समस्ताः, सख्यः वयस्याः, क्रमात् एकमेकं कृत्वा, निश्चक्रमुः निष्क्रान्ताः ॥ १३१ ॥

वे दोनों ( 'कला' तथा उसकी सखी ) ( कपड़ेके भींगनेसे समस्त शरीरावयवका स्पष्ट दर्शनरूप ) अपनी अवस्थाको देख लज्जित होकर वहांसे चली गयीं तथा उन्हें देखनेके कौतुकसे दूसरी सब सखियां भी क्रमशः चली गयीं ॥ १३१ ॥

ता बहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि ! ।
उपेक्ष्ये[1] ते पुनः सख्यौ मर्मज्ञे नाधुनाऽप्यमू ॥ १३२ ॥

ता इति । ताः सख्यः, बहिर्भूय बहिर्निर्गत्य, वैदर्भीं दमयन्तीम्, ऊचुः कथयामासुः । किमिति ? नीतावधीतिनि ! हे अधीतनीतिशास्त्रे भैमि ! इष्टादित्वादिनिप्रत्ययः 'क्तस्येन्विषयस्य—' इति कर्मणि सप्तमी । अमू एते, मर्मज्ञे भवत्योः रहस्याभिज्ञे, सख्यौ कलातत्सपत्न्यौ, अधुना पूर्वं यथा भवतु, इदानीमपि, ते तव त्वयेत्यर्थः । 'कृत्यानां कर्त्तरि वा' इति कर्त्तरि षष्ठी । न पुनः नैव, उपेक्ष्ये अवहेलनीये, 'मर्मज्ञं न प्रकोपयेत्' इति न्यायात् सत्वरमेव गत्वा ते प्रसादनीये, अन्यथा सर्वमेव रहस्यं ते प्रकाशयिष्यत इति भावः ॥ १३२ ॥

बाहर निकलकर उन ( कला और उसकी सखी को छोड़कर अन्य ) सखियोंने कहा कि—'हे नीतिशास्त्रको पढ़ी हुई दमयन्ति ! ( तुम्हारे ) मर्मज्ञ ( रहस्य–सम्भोगादि वृत्तान्त ) को जाननेवाली उन दोनों ( 'कला' तथा उसकी सखी ) को इस समय भी तुम्हारे द्वारा उपेक्षा नहीं होनी चाहिये अर्थात् तुम उन दोनोंकी उपेक्षा मत करो; [ क्योंकि उपेक्षित वे दोनों तुम्हारे रहस्यको सबके समक्ष प्रकट कर देगीं ] ॥ १३२ ॥

उच्चैरूचे[2]ऽथ ता राजा सखीयमिदमाह वः ।
श्रुतं मर्म ममैताभ्यां दृष्टं मर्म मयै[3]तयोः ॥ १३३ ॥

उच्चैरिति । अथ सखीनामुक्तवचनश्रवणानन्तरम्, राजा नलः, ताः सखीः, उच्चैः तारस्वरेण, तासां तदा दूरप्रयाणादिति भावः । ऊचे बभाषे । 'उच्चैरुवाचिरे राज्ञा' इति पाठान्तरम् । किमिति ? वः युष्माकम्, इयम् एषा सखी वयस्या दमयन्ती, इदं वक्ष्यमाणम्, आह वक्ति । किमिति ? एताभ्यां कलातत्सखीभ्याम् । मम मे, मर्म रहस्यवृत्तान्तः, श्रुतम् आकर्णितम्, न तु दृष्टम्, मया भैम्या तु, एतयोः कलातत्सपत्न्योः, मर्म रहस्यम्, गोपनीयाङ्गमित्यर्थः । दृष्टं प्रत्यक्षीकृतम्, आर्द्रीभूतवस्त्राभ्यन्तरादिति भावः । श्रवणाद्दर्शनस्य अधिकविश्वास्यतया अहमपि सर्वमेव प्रकाशयितुं शक्यामीति मर्मश्रवणात्तद्दर्शनं दुःसहमिति तात्पर्यम् ॥ १३३ ॥

---

१. 'उपेक्ष्येते' इति पाठान्तरम् । २. उच्चैरुवाचिरे राज्ञा' इति पाठान्तरम् ।
३. 'तत्त मयाऽनयोः' इति पाठान्तरम् ।

इस ( दमयन्तीसे सखियोंके वैसा ( २०।१३२ ) कहने ) के बाद राजा ( नल ) ने उन ( सखियों ) से कहा-तुम्हारी यह सखी ( दमयन्ती ) यह कहती है कि-मेरे मर्म ( रहस्य-सम्भोगवृत्तान्त ) को उन दोनों ( 'कला' तथा उसकी सखी ) ने सुना है अर्थात् लेशमात्र भी देखा नहीं है; ( किन्तु ) मैंने इन दोनोंके मर्म ( गोपनीय अङ्ग—स्तनादि ) को देखा है अर्थात् केवल सुना ही नहीं है; अपि तु देखा भी है। [ अतएव यदि ये सुने हुए मेरे ( दमयन्ती ) के रहस्यको दूसरोंके सामने कहेंगी तो मैं ( दमयन्ती ) इन दोनोंके प्रत्यक्ष देखे हुए रहस्य-गुप्ताङ्गोंका वर्णन दूसरोंके सामने कर दूंगी, क्योंकि सुननेकी अपेक्षा देखने का महत्त्व अधिक होता है, अतएव इनकी उपेक्षा करनेसे भी मेरी कोई हानि नहीं होगी] ॥

मद्विरोधितयोर्वाचि[1] च श्रद्धातव्यमेतयोः[2] ।
अभ्यषिञ्चदिमे माया-मिथ्यासिंहासने विधिः ॥ १३४ ॥

मदिति । किञ्च, हे सख्यः ! मया दमयन्त्या सह, विरोधितयोः सञ्जातवैरयोः, बहिष्करणानुमोदनात् शत्रुभावापन्नयोरित्यर्थः । एतयोः सख्योः, वाचि वचने, न श्रद्धातव्यं न विश्वसितव्यम्, युष्माभिरिति शेषः । तथा हि—विधिः ब्रह्मा, इमे सख्यौ, माया कपटता, मिथ्या अनृतम्, तयोः सिंहासने भद्रासने, अभ्यषिञ्चत् जलवर्षणेन अभिषिक्तवान्, मिथ्याकपटतयोः आकरत्वेन कल्पितवानित्यर्थः। तस्मात् मयि मिथ्याचरणस्य सर्वथा सम्भावनासत्त्वात् एतयोः मिथ्याप्रलापो न श्रद्धेयः इति निष्कर्षः ॥ १३४ ॥

( बाहर निकालनेके कारण ) मुझ ( दमयन्ती ) से विरोध की हुई इन दोनों ( 'कला' तथा उसकी सखी ) की बातोंपर ( तुमलोग ) विश्वास मत करना ( क्योंकि विरोधी प्रायः अवर्तमान दोषोंको ही कहते हैं ), और ब्रह्माने इन दोनोंको माया तथा असत्यके सिंहासन पर अभिषिक्त किया है अर्थात् ये माया करने एवं असत्य बोलनेमें सबसे बढ़ी-चढ़ी हैं ॥

धौतेऽपि कीर्त्तिधाराभिश्चरिते चारुणि द्विषः ।
मृषामषीलवैर्लक्ष्म लेखितुं के न शिल्पिनः ? ॥ १३५ ॥

धौतेऽपीति । कीर्त्तिधाराभिः यशःप्रवाहैः धौते विशुद्धे, अत एव चारुणि मनोहरेऽपि, द्विषः शत्रोः, चरिते स्वभावे, मृषामषीलवैः मृषा मिथ्यादोषारोप एव, मषी 'कालि' इति प्रसिद्धलेखनसाधनद्रव्यविशेषः, तल्लवैः तद्बिन्दुभिः, अल्पत्वात् किञ्चिन्मात्रैरिति भावः । लक्ष्म कलङ्कम्, लेखितुं चित्रितुम्, उत्पादयितुमिति यावत् । के, जना इति शेषः, न शिल्पिनः ? शिल्पकुशलाः न ? अपि तु सर्वेऽपि कुशलाः एवेत्यर्थः । भवन्तीति शेषः । मम शुभ्रे चरित्रेऽपि इमे मिथ्याकलङ्कम् अवश्यमेव आविष्कुर्यातामिति भावः ॥ १३५ ॥

कीर्तिधाराओं ( यशः समूहों ) से धोये गये ( अत एव ) स्वच्छतम शत्रुके चरित ( के

---

१. 'मद्विराधितयोर्वाचि' इति पाठान्तरम् । २. 'श्रद्धास्यध्वम्' इति पाठस्तु समीचीनः ।

विषय ) में असत्यरूपी स्याहीके लेश ( कुछ बूँदों ) से भी कलङ्कको लिखनेके लिए कौन व्यक्ति ( या—कौन शत्रु ) निपुण नहीं होते । [ जिस प्रकार जलादिसे स्वच्छ किये गये पटको स्याहीकी थोड़ी बूंदोंसे भी काला करनेके लिये सभी शत्रु निपुण बन सकते हैं, उसी प्रकार यशः समूह मेरे चरितको थोड़ा असत्य कहकर कौन कलङ्कित नहीं कर सकता ? अर्थात् सभी कर सकते हैं, अत एव सम्भव है कि विरोधिनी होनेसे ये भी मेरे शुभ्र आचरणको असत्यभाषणद्वारा दूषित करना चाहें, किन्तु तुम लोगों को उसपर विश्वास नहीं करना चाहिये ] ॥ १३५ ॥

ते सख्यावाचचक्षाते न किञ्चिद् ब्रूवहे बहु ।
वक्ष्यावस्तत्परं यस्मै सर्वा निर्वासिता वयम् ॥ १३६ ॥

ते इति । ते सख्यौ कला तद्वयस्या च, आचचक्षाते ऊचतुः; किमिति ? बहु भूरि, किञ्चित् किमपि, न ब्रूवहे न कथयावः, आवामिति शेषः । परं केवलम्, तत् तत्प्रयोजनमात्रमेव, वक्ष्यावः कथयिष्यावः, यस्मै यत्प्रयोजनाय, वयं सर्वाः समस्ताः सख्यः, निर्वासिताः निष्कासिताः, गृहादिति शेषः । सुरतार्थम् एव युवाभ्यां वयं सर्वा एव निष्कासिता इत्येवं सर्वत्र वदिष्यावः, नान्यत् किञ्चनेति तात्पर्यम् ॥१३६॥

उन दोनों सखियों ( 'कला' तथा उसकी सखी ) ने कहा—'हम दोनों अधिक कुछ नहीं कहेंगीं, किन्तु उसीको कहेंगीं, जिसके लिए हम सबोंको ( तुमने ) बाहर निकाला है । अर्थात् तुमने हम सबोंको सुरत करनेके लिए बाहर निकाल दिया है, इसी बातको हम सर्वत्र कहेंगी और कुछ नहीं कहेंगी' ॥ १३६ ॥

स्थापत्यैर्न स्म वित्तस्ते वर्षीयस्त्वचलत्करैः ।
कृतामपि तथावाचि करकम्पेन वारणाम् ॥ १३७ ॥

स्थापत्यैरिति । ते कलातत्सख्यौ, वर्षीयस्त्वेन वृद्धत्वेन हेतुना । 'प्रियस्थिर—' इत्यादिना वृद्धशब्दस्य ईयसुनि वर्षादेशः । चलत्करैः स्वभावत एव कम्प्रहस्तैः, स्थानां दाराणां पतयः पालकाः स्थपतयः, ते एव स्थापत्याः कञ्चुकिनः तैः । 'सौविदल्लाः कञ्चुकिनः स्थापत्याः' इत्यमरः । करकम्पेन हस्तचालनेन, कृतामपि विहितामपि, तथावाचि तादृशवाक्यप्रयोगे, वारणां निवारणम्, न वित्तः स्म न बुध्येते स्म । वारणाय कृते करकम्पे जराजन्यकम्पभ्रमादिति भावः ॥ १३७ ॥

उन दोनों ( कला तथा उसकी सखी ) ने बुढ़ापेसे कांपते हुए हाथोंवाले कञ्चुकियोंके हाथ हिलानेसे वैसे वचन कहनेमें किये गये भी निषेधको नहीं समझा । [ यद्यपि बूढे कञ्चुकियोंने वैसी ( सुरतार्थ इन्होंने हम लोगोंको बहिष्कृत कर दिया है ऐसी ) बातको कहनेसे हाथको हिलाकर उन्हें निषेध किया, किन्तु उन दोनों सखियोंने उनका हाथ बुढ़ापेके कारण काँप रहा है, ऐसा मनमें धारणा करनेसे उनके अभिप्रायको नहीं समझा ] ॥ १३७ ॥

अपयातमितो धृष्टे ! धिग् वामश्लीलशीलताम् ।
इत्युक्ते चोक्तवन्तश्च व्यतिद्राते स्म ते भिया ॥ १३८ ॥

अपयातमिति । धृष्टे ! हे प्रगल्भे ! इतः अस्मात् देशात्, अपयातं बहिर्गच्छतम्, युवामिति शेषः । वां युवयोः, अश्लीलशीलतां ग्राम्यभाषणस्वभावम्, धिक् निन्दामः, इति एवम्, उक्ते कथिते, भर्त्सिते इति यावत् । कञ्चुकिभिरिति शेषः। ते कलात-रसख्यौ उभे, भिया भयेन, कञ्चुकिनां प्रहारादिति भावः । तथा इति इत्थम्, उक्तवन्तः कथितवन्तः, भर्त्सितवन्तः इति यावत् । ते कञ्चुकिनः, भिया राजदम्पत्योः क्रोधभयेन, व्यतिद्राते स्म परस्परव्यतिहारेण पलायेते स्म पलायन्ते स्म च, गृहस्य निभृततविधानार्थमिति भावः । द्रा कुत्सायां गताविति धातोर्लटि 'कर्त्तरि कर्म-व्यतिहारे' इत्यात्मनेपदम्,[1] अदादित्वात् शपो लुक् । अत्र प्रथमपुरुषस्य द्विव-चनबहुवचनयोः समानं रूपम्, एवं ते इत्यत्रापि स्त्रियां द्वित्वे पुंसि बहुत्वे च समानरूपम् ॥ १३८ ॥

'हे धृष्ट दोनों सखियां ! यहां से दूर हटो, तुम दोनोंके ग्राम्यत्वभाषणके स्वभावको धिक्कार है, ऐसा कहनेपर ( या—ऐसी कही गयीं ) वे दोनों सखियां भयसे भाग गयीं और ऐसा कहे हुए वे ( कञ्चुकी भी ) उन्हें डरानेके व्याजसे स्वयं चले गये ॥ १३८ ॥

आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः ।
ईदृग्भण्डसखीकाऽपि निस्त्रपा न मनागपि[1] ॥ १३९ ॥

आहेति । अथ नलः नैषधः, तयोः कलातरसख्योः, गिरा 'वदयावः तत्परम्' इत्यादिकया वाचा, ह्रीणां लज्जिताम्, अत एव नतमुखीम् अवनतवदनाम्, प्रियां दमयन्तीम्, आह स्म उवाच । किमित्याकाङ्क्षायां सार्द्धश्लोकेनाह—ईदृशौ एवम्भूते भण्डे निर्लज्जे, सख्यौ वयस्ये यस्याः सा तादृशी अपि ईदृग्भण्डसखीकाऽपि । 'नद्यृतश्च' इति कप् समासान्तः । त्वमिति शेषः । मनाक् अपि ईषदपि, निस्त्रपा निर्लज्जा न, भवसीति शेषः । यस्याः खलु सख्यः एवं निर्लज्जाः, तस्यास्तवापि नैर्लज्ज्यमेव युज्यते, भवती तु न तादृशीति महांस्ते चरित्रोत्कर्षः इति भावः ॥ १३९ ॥

उन ( 'कला' तथा उसकी सखी ) के वचन ( २०।१३६ ) से लज्जित एवं नम्रमुखी प्रिया ( दमयन्ती ) से नलने कहा—ऐसी भण्ड ( अश्लीलभाषिणी ) सखियोंवाली भी ( तुम ) थोड़ा भी निर्लज्ज नहीं हो ( यह आश्चर्य है । अथवा—अत एव तुम आदर्श चरितवाली हो ।

---

१. इतोऽनन्तरमत्र म० म० शिवदत्तशर्माणः—'न गतिहिंसार्थेभ्यश्च' इत्यात्मने-पदनिषेधाच्चिन्त्यमेव । 'बहिर्भावमात्रविवक्षायां गत्यर्थत्वाभावादात्मनेपदमिति यथा-कथञ्चित्समर्थनीयम् । प्रकारान्तरं वा गवेषणीयम् इति सुखावबोधा' इत्याहुः । 'प्रकाश'—कृतश्च 'द्रातेः परस्मैपदित्वादात्मनेपदं चिन्त्य'मित्याहुः ।

१. 'मनागसि' इति पाठान्तरम् ।

अथवा—अत एव तुम्हें भी सम्भोगार्थं लज्जाका त्याग कर देना चाहिये। अथवा—······ ऐसी ( 'कला' तथा उसकी सखीके समान ) अश्लीलभाषिणी एवं निर्लज्ज कोई भी सखी थोड़ी ( कहीं ) भी नहीं है. अर्थात् इन दोनोंके समान अश्लीलभाषिणी एवं निर्लज्ज सखी मैंने कहीं भी नहीं देखा है )॥ ॥ १३९ ॥

अहो ! नापत्रपाकं ते जातरूपमिदं मुखम् ।
नातितापार्जनेऽपि स्यादितो दुर्वर्णनिर्गमः ॥ १४० ॥

अहो इति । जातरूपं जातं सम्भूतम्, रूपं सौन्दर्यं यस्य तादृशम्, सम्पन्नसौन्दर्यम्, स्वर्णसदृशमित्यर्थः । सुवर्णं च । 'सुवर्णञ्चामीकरं जातरूपम्' इत्यमरः । इदं दृश्यमानम्, ते तव, मुखं वदनम्, अपगता दूरीभूता, त्रपा लज्जा यस्मात् तत् अपत्रपम् । शैषिकः कप्रत्ययः । तत् न भवतीति नापत्रपाकं सलज्जमिति यावत् । नञर्थेन न-शब्देन समासः । दृश्यते इति शेषः । 'लज्जा रूपं कुलस्त्रीणाम्' इति नीतिशास्त्रात् सलज्जं ते वदनम् अतीव रमणीयदर्शनं जातमिति निष्कर्षः । अन्यत्र-पत्रस्य पत्रीकृतस्य, कण्टकवेधयोग्यतनूकारितस्येत्यर्थः । यद्वा-पत्रे पात्रविशेषे इत्यर्थः । द्रवीकरणार्थं मृद्भाजनविशेषे इति यावत् । पाकः दग्धीकरणं द्रवीकरणं वा, विशुद्धितासम्पादनाय इति भावः । पत्रपाकः तद्रहितम् अपत्रपाकं न भवतीति नापत्रपाकं पत्रपाकविशुद्धमेवेत्यर्थः । अतितापार्जनेऽपि सखीकृतपरिहासजनितलज्जानिबन्धनपीडाप्राप्तावपि, अत्यन्तदाहकरणेऽपि च, इतः अस्मात्, शोभनवर्णयुक्तात् मुखात्, सुवर्णाच्च, दुर्वर्णनिर्गमः कर्कशवचननिर्गमः, श्यामिकानिर्गमश्च, न स्यादिति विरोधः, अत एव अहो ! आश्चर्यम् !, सखीकृतप्रबलदुःखोत्पातेऽपि मुखात् दुरक्षरनिर्गमनं न स्यादिति चित्रमिति विरोधपरिहारात् विरोधाभासोऽलङ्कारः ॥ १४० ॥

( अब 'कला' नलोक्त 'आलीरियमलीकवाक्' 'आह स्म' तथा 'तन्मृषाऽभूत्' ( क्रमशः २०।२८, २९, २९ ) श्लोकांशोंका उत्तर देती है—) हे देव ! ( तीनों ) लोक जिसको सत्य वक्ता कहते हैं, अत एव उस ( आप ) की प्रिया ( यह दमयन्ती ) सरूप ( आपके समान ) ही है और असत्यभाषिणी नहीं है । पक्षा०—हे देव ! लोक जिसको असत्य वक्ता नहीं कहते हैं ? असत्यवक्ता ही कहते हैं अतः उस ( असत्यवक्ता आपकी ) प्रिया सरूप ही है और असत्य बोलनेवाली नहीं है ( आपने इसके साथ सम्भोग करनेपर भी जिस प्रकार कहते हैं कि मैंने इसके साथ सम्भोग नहीं किया, उसी प्रकार यह दमयन्ती भी आपके लिए आत्मसमर्पण करके हम लोगोंसे कहती है कि मैंने आत्मसमर्पण नहीं किया, अत एव आप दोनों ही असत्यवक्ता है । ठीक है जैसे आप हैं, वैसे ही आपकी प्रिया भी है अर्थात् 'योग्यं योग्येन योजयेत्' इस नीतिके अनुसार आप दोनोंकी अच्छी जोड़ी बनी है, इस प्रकार दोनोंके प्रति व्यङ्ग्य वचन 'कला' ने कहा । ) अथवा—हे देव ! संसार जिस (आप) को अश्विनीकुमारके समान ( अति सुन्दर ) मुखवाला कहते हैं, उस आपकी प्रियासरूप

अन्यथा ( कुरूप ) मुखवाली नहीं है ( किन्तु आप-जैसी ही सुन्दर मुखवाली है ) ॥१४०॥

**तामथैष हृदि न्यस्य ददौ तल्पतले तनुम्।**
**निमील्य च तदीयाङ्ग-सौकुमार्यमसिस्वदत् ॥ १४१ ॥**

**तामिति। अथ उक्तरूपभाषणानन्तरम्, एषः नलः, तां प्रियाम्, हृदि वक्षसि, न्यस्य निधाय, तल्पतले शय्योपरि, तनुं स्वदेहम्, ददौ स्थापितवान्, शयितवान् इत्यर्थः। तथा निमील्य चक्षुषी मुद्रयित्वा, इत्यानन्दानुभवोक्तिः। प्रगाढसुखानुभवकाले चक्षुर्निमीलनस्य लोकदृष्टत्वादिति बोध्यम्। तदीयाङ्गस्य प्रियाशरीरस्य, सौकुमार्यं मार्दवम्, असिस्वदत् अनुबभूव इत्यर्थः। स्वदेर्णौ चङ्युपधाह्रस्वः ॥१४१॥**

इस ( ऐसा ( २०।१४० ) कहने ) के बाद ये ( नल ) उस ( दमयन्ती ) को हृदयपर रखकर अर्थात् आलिङ्गनकर पलङ्गपर लेट गये और ( आलिङ्गनोत्पन्न सुखसे ) नेत्रोंको बन्दकर उसके अङ्गोंकी सुकुमारताका आस्वादन ( अनुभव ) किये ॥ १४१ ॥

**न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च।**
**स पाणेः सफलं चक्रे तत्करग्रहणश्रमम् ॥ १४२ ॥**

**न्यस्येति। स नलः, तस्याः भैम्याः, कुचद्वन्द्वे स्तनयुगे, न्यस्य निधाय, पाणिमिति शेषः। मध्येनीवि नीवीमध्ये, कटीवस्त्रबन्धनमध्ये इत्यर्थः। 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः। निवेश्य प्रवेश्य च, स्वपाणिमिति शेषः। पाणेः स्वकरस्य, तत्करग्रहणश्रमं दमयन्तीपाणिग्रहणायसम्, सफलं सार्थकम्, चक्रे विदधे। तादृग्विधः प्रियास्पर्शस्तस्य महदानन्दफलमित्यर्थः ॥ १४२ ॥**

उस ( नल ) ने हाथको उस ( दमयन्ती ) के दोनों स्तनोंपर रखकर तथा नीविके बीचमें डालकर हाथके उस ( दमयन्ती ) के साथ करग्रहण ( विवाह ) के श्रमको सफल किया [ दमयन्तीके करग्रहणमें जो हाथका श्रम हुआ था, उस हाथको दमयन्तीके स्तनोंका मर्दनकर तथा नीविमें प्रविष्टकर चरितार्थ किया। अथवा—उस कर ( राजग्राह्य भागविशेष ) के ग्रहणके श्रमको सफल किया। अथवा—अपने हाथसे दमयन्तीको रोकनेमें जो श्रम हुआ था, उसे सफल किया ] ॥ १४२ ॥

**स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन्।**
**तदुद्वहनकर्तृत्वमाचष्ट स्पष्टमात्मनः ॥ १४३ ॥**

**स्थापितामिति। मुदा हर्षेण, स्वस्य आत्मनः, उपरि वक्षसि, स्थापितां निहिताम्, तां प्रियाम्, वहन् धारयन्, मुमुदे आननन्द, नलः इति शेषः। तथा आत्मनः स्वस्य, तस्याः भैम्याः, उद्वहने विवाहे, कर्तृत्वम् अधिकारित्वम्, स्पष्टं सुव्यक्तम्, आचष्ट कथयामास। अनुद्वहतः एवमुरसि वहनायोगादिति भावः ॥ १४३ ॥**

हर्षसे अपने ऊपर ( वक्षःस्थलपर ) स्थापित उस ( दमयन्ती ) का वहन करते हुए उस ( नल ) ने स्वकृत उस ( दमयन्ती ) के उद्वहनकर्तृत्वको ( मैंने दमयन्तीका उद्वहन

( उसके साथ विवाह ) पक्षा०—ऊपर रखकर वहन किया है, इस बातको ) स्पष्टरूपसे कह दिया । [ मैंने दमयन्तीको उद्वहन विवाह किया है, पक्षा०—ऊपर लेकर धारण किया है; इस बातको नलने दमयन्तीको अपनी छातीपर लिटाकर धारण करते हुए स्पष्टतः कह दिया ] ॥ १४३ ॥

स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया ।
फूत्कार्यपीडितौ चक्रे स सखीषु प्रियास्तनौ ॥ १४४ ॥

**स्विद्यदिति । सः नलः, प्रियायाः भैम्याः, स्तनौ कुचौ, स्विद्यन्तीभिः सत्त्वोदयात् घर्मोदकार्द्रीभवन्तीभिः, कराङ्गुलीभिः निजकरशाखाभिः, लुप्तः प्रसृष्टः, यः कस्तूरीलेपः मृगमदप्रदेहः, मृगमदकृतपत्रावलीत्यर्थः । सः एव मुद्रा चिह्नम् , स्तनपीडनविषये इति भावः । तया, सखीषु वयस्यासु विषये, फूत्कार्यं फूत्कारेण उच्चैस्तरमुखानिलेन प्रशमनीयम्, पीडितं पीडनम् , पीडनजनितवेदना इत्यर्थः । ययोः तौ तादृशौ फूत्कार्यपीडितौ, चक्रे विदधे । नलः भैमीकुचौ तथा पीडयामास, यथा नलस्य सात्त्विकभावोत्थघर्मोदकक्लिन्नाङ्गुलीभिः कुचयोः पत्रलेखाः प्रोञ्छिता जायन्ते, सख्यश्च तद्दृष्ट्वा प्रगाढपीडनेन कुचयोर्वेदनां तीव्रामनुमाय फूत्कारेण तां प्रशमयितुम् अयतिषत इति निष्कर्षः ॥ १४४ ॥**

उस ( नल ) ने ( सात्त्विक भावके उदय होनेसे ) पसीजती ( स्वेदजलसे आर्द्र होती ) हुई अङ्गुलियोंसे नष्ट हुए ( पोंछे गये ) कस्तूरीलेपके चिह्नसे प्रिया ( दमयन्ती ) के स्तनोंको फूंकने योग्य पीडावाला ( जिसे फूंक-फूंककर दूर किया जाय ऐसी पीडासे युक्त, पाठा०—पुकारकर उच्च स्वरसे कहनेयोग्य पीडावाला ) कर दिया । [ दमयन्ती के स्तनोंको कस्तूरी लेपको नलकी स्वेदार्द्र अङ्गुलियोंसे नष्ट हुआ देखकर 'नलने इन्हें अतिशय पीडित किया है' ऐसा समझकर सखियां मुखसे फूंक-फूंककर उसे पीडारहित करेंगी, ऐसा बना दिया । पाठा०—.............सखियां जोर-जोरसे कहने लगेंगी कि 'नलने इसे अतिशय पीडित किया है' ] ॥ १४४ ॥

तत्कुचे नखमारोप्य चमत्कुर्वंस्तयेक्षितः ।
सोऽवादीत्तां हृदिस्थं ते किं मामभिनदेष न ? ॥ १४५ ॥

तदिति । स नलः, तत्कुचे दमयन्तीस्तने, नखं कररुहम् , आरोप्य निखाय, चमत्कुर्वन् स्वयमेव आश्चर्येण सञ्जातरोमाञ्चो भवन् , तथा तया दमयन्त्या, ईक्षितः सस्मितमवलोकितश्च सन् , एष नखः, ते तव, हृदिस्थं हृदयान्तर्गतम् । 'सुपि स्थः' इति कप्रत्ययः, 'हृद्द्युभ्याञ्च' इत्युपसङ्ख्यानात् सप्तम्याः अलुक् । मां नलम्, न अभिनत् न व्यदारयत्, किम् ? अपि तु अभिनदेव । नो चेत् ममाङ्गेष्वपि कथं चमत्कारनिबन्धना रोमाञ्चाः समुत्पन्ना इति भावः । इति तां दमयन्तीम् , अवादीत्

अकथयत्। अत्र भैमीकुचनिष्ठस्य नखक्षतस्य नलहृदये चमत्कारजननात् असङ्गत्य-लङ्कारः, 'कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः' इति लक्षणात् ॥ १४५ ॥

वे ( नल ) उस ( दमयन्ती ) के स्तनपर नखक्षत करके स्वयं चिहुकते हुए तथा ( नख-क्षत करनेसे ) उस दमयन्तीसे अवलोकित होकर उस ( दमयन्ती ) से बोले कि—'इस नखने तुम्हारे हृदयमें रहनेवाले मुझको नहीं भेदन किया क्या? अर्थात् अवश्य भेदन किया, अन्यथा मैं इस नखक्षतसे सहसा क्यों चिहुक गया? ॥ १४५ ॥

अहो! अनौचितीयं ते हृदि शुद्धेऽप्यशुद्धवत्।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १४६ ॥

अहो इति। हे प्रिये! तीक्ष्णमुखैः निष्ठुरवाग्भिः, खलैरिव असज्जनैरिव, तीक्ष्ण-मुखैः निशिताग्रैः, मम मे, नखैः कररुहैः, शुद्धे अदुष्टेऽपि, ते तव, हृदि हृदये, कुचे इति यावत्, अशुद्धवत् अशुद्धे इव, सदोषे इवेत्यर्थः। 'तत्र तस्येव' इति वति-प्रत्ययः। अङ्कः कलङ्कः, चिह्नञ्च, अकल्पि कल्पितः कृत इत्यर्थः, अहो! इति खेदे, इयं निर्दोषेऽपि दोषकल्पना, अनौचिती अयुक्तम्, अभूदिति शेषः। अहो इति 'ओत्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिसन्धिः ॥ १४६ ॥

तीक्ष्णाग्र इन मेरे नखोंने तुम्हारे निर्दोष स्तनोंपर जो ( नखक्षतके द्वारा ) चिह्न ( पक्षा०—कलङ्क ) कर दिया, वह उस प्रकार अनुचित है, जिस प्रकार कटु भाषण करने-वाले दुष्टोंका दोषरहित व्यक्तिमें भी सदोष होनेका कलङ्क लगाना अनुचित होता है, अहो! यह ( मेरे नखका अनुचित वर्ताव ) करना आश्चर्य है। [ यहांपर नलने स्वकृत नखक्षतका दोषरुष्ट दमयन्तीको प्रसन्न करनेके लिए ही स्वयं कहा है ] ॥ १४६ ॥

यच्चुम्बति नितम्बोरु यदालिङ्गति च स्तनौ।
भुङ्क्ते गुणमयं तत्ते वासः शुभदशोचितम् ॥ १४७ ॥

यदिति। हे प्रिये! गुणमयं सूक्ष्मतन्तुरचितं सौशील्यादिविशिष्टश्च, ते तव, वासः वसनं, कश्चित् सुभगपुरुषश्च। कर्तृ। नितम्बौ ऊरू च नितम्बोरु नितम्बद्वयं सक्थिद्वयञ्च। प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः। यत् चुम्बति स्पृशति, ओष्ठाधरस्पृष्टं करोति च, यच्च स्तनौ कुचौ, आलिङ्गति आश्लिष्यति, तत् शुभदशानां शुभानां शोभनानाम्, दशानां प्रान्तवर्त्तितन्तूनाम्, ज्योतिःशास्त्रप्रसिद्धशुक्रादिशुभग्रहाव-स्थानाञ्च, उचितम् अर्हम्, भुङ्क्ते एकत्र-स्पर्शरूपं भोगं करोति, सुदृश्यदशासम-न्वितवसनस्यैव तव प्रियत्वेन तद्धारणादिति भावः। अन्यत्र-भोगात्मकं सुखमनु-भवति, शुभग्रहाणां दृष्टिं विना तव नितम्बादिस्पर्शरूपभोगासम्भवादिति भावः। 'दशाऽवस्थादीपवर्त्योः वस्त्रान्ते भूम्नि योषिति' इति मेदिनी। 'शुभग्रहदशायां हि भुङ्क्ते जनः शुभं फलम् इति ॥ १४७ ॥

गुणयुक्त ( महीन सूतसे बुना गया, पक्षा०—औदार्य शौर्यादि गुणसहित ) तुम्हारा

वस्त्र (पक्षा०—कोई सौभाग्यशाली पुरुष) तुम्हारे नितम्बों एवं उरुओंका जो स्पर्श (पक्षा०—चुम्बन) करता है तथा स्तनोंका आलिङ्गन करता है; वह शुभ दशा (किनारा-कपड़ेकी धारी अर्थात् कोर, पक्षा०—ज्योतिःशास्त्रप्रसिद्ध पूर्व पुण्यप्राप्त ग्रहावस्था) के योग्य भोगता (स्पर्श करता, पक्षा०—भोगरूप सुख पाता) है। [गुणवान्को ही तुम्हारे नितम्ब तथा ऊरुका स्पर्श एवं स्तनोंका आलिङ्गन प्राप्त होता है; अत एव यह वस्त्र धन्य है, जिसे तुमने पहना है] ॥ १४७ ॥

लीनचीनांशुकं स्वेदि दरालोक्यं विलोकयन् ।
तन्नितम्बं स निःश्वस्य निनिन्द दिनदीर्घताम् ॥ १४८ ॥

**लीनेति । सः नलः, स्वेदि सात्त्विकोदयात् घर्माक्तम्, अत एव लीनं नितम्बेन सह एकीभूतभावेन संलग्नम्, चीनांशुकं सूक्ष्मवस्त्रविशेषो यत्र तादृशम्, अत एव दरालोक्यम् ईषल्लक्ष्यम्, तस्याः भैम्याः, नितम्बं श्रोणीदेशम्, विलोकयन् पश्यन्, निःश्वस्य दीर्घं श्वासवायुं त्यजन्, इति विषादानुभवोक्तिः, दिनस्य दिवसस्य, दीर्घताम् अधिककालं व्याप्य स्थायिताम्, निनिन्द गर्हयामास। दिवा सुरतनिषेधात् तत्करणाक्षमत्वाद् विषादं प्राप दिवावसानमभिललाष च इति भावः ॥ १४८ ॥**

(सात्त्विक भावका उदय होनेसे) स्वेदयुक्त, चिपके हुए महीन वस्त्रवाले तथा कुछ दिखलायी पड़ने योग्य उस (दमयन्ती) के नितम्बको देखकर उस (नल) ने लम्बा श्वास लेकर दिनके बड़े होनेकी निन्दा की। [दिनमें मैथुन करनेका निषेध होनेसे नलने लम्बा श्वास लिया और दिनको बड़े होनेकी निन्दा करते हुए उसका शीघ्र अन्त चाहा] ॥ १४८ ॥

देशमेव ददंशासौ प्रियादन्तच्छदान्तिकम् ।
चकाराधरपानस्य तत्रैवालीकचापलम् ॥ १४९ ॥

**देशमिति । असौ नलः, प्रियादन्तच्छदस्य भैम्याः अधरस्य, अन्तिकं समीपवर्त्तिनम्, देशं स्थानमेव । चिबुकमेवेत्यर्थः । ददंश दष्टवान्, तथा तत्रैव दष्टदेशे एव, अधरपानस्य निम्नौष्ठचुम्बनस्य, अलीकचापलं मिथ्याचपलताम्, निरर्थकप्रयासमित्यर्थः । चुम्बनशब्दतुल्यं शब्दमिति भावः । चकार विदधे । चुम्बनस्य रत्युद्दीपकत्वात् रमणाङ्गत्वाच्च दिवा च रमणनिषेधात् तथा 'रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम्' इति स्मृत्या तस्य कालान्तरे अशुद्धत्वाच्च न तु अधरं चुचुम्ब इति भावः ॥ १४९ ॥**

इस (नल) ने प्रिया (दमयन्ती) के अधरके समीपदेश (चिबुक, कपोल आदि) में ही दन्तक्षत किया और वहींपर (उन्हीं चिबुक कपोलादि स्थानोंमें) चुम्बनका मिथ्या प्रयास किया। [चुम्बनको रत्युद्दीपक होनेसे 'रमणका अङ्ग होनेके कारण नलने रमणकाल (रात्रिमें रमण करते समय) में ही स्त्रियोंका मुख शुद्ध तथा कालान्तर (रमणभिन्न-समय अर्थात् दिन) में अपवित्र होनेसे अतिशय रमणेच्छुक होनेपर भी अधर चुम्बन नहीं किया,

किन्तु चिम्बुकादि देशमें ही 'चुङ्कृति' पूर्वक चुम्बन-सुखका अनुभव कर कथञ्चित् सन्तोष किया; इससे नलका परम धार्मिक होना सूचित होता है। 'प्रकाश' कारके अनुसार— 'अतिशय रमण करनेका इच्छुक होनेसे चिबुकादि स्थानोंमें दन्तक्षत करके 'चिबुकादि देशसे अधर देशतक जानेके अल्पतम विलम्बको भी असहिष्णु होनेसे, अथवा—चिबुकादि स्थानमें ही अधरका भ्रम होनेसे नलने वहींपर (चिबुकादि देशमें ही) चुम्बन-सुखका अनुभव किया' ऐसा अर्थ होता है। इस अर्थको स्वीकार करनेपर भी 'आत्मवित्सह तया''' (१८।२)' के अनुसार आत्मज्ञानी नलको शास्त्रविरुद्धाचरण करनेका दोष नहीं होता, यह समझना चाहिये ]॥ १४९॥

न क्षमे चपलापाङ्गि ! सोढुं स्मरशरव्यथाम्[1] ।
तत् प्रसीद प्रसीदेति स तां प्रीतामकोपयत् ॥ १५० ॥

अथास्य कालक्षेपत्वलक्षणमौत्सुक्यमेव श्लोकद्वयेनाह—नेत्यादि । चपलापाङ्गि ! हे चञ्चलाक्षि ! स्मरशरैः कामबाणैः, या व्यथा वेदना तां तत्कृतां पीडाम्, सोढुं सन्तुम्, न क्षमे न शक्नोमि । तत् तस्मात्, प्रसीद प्रसीद प्रसन्ना भव प्रसन्ना भव, सुरताय सदया भव इति भावः । इत्येवमुक्त्वा, सः नलः, प्रीतां परिहासादिभिः प्रियवाक्यशतेन च मुदिताम् अपि, तां प्रियाम्, अकोपयत् अक्रोधयत्, दिवा मैथुनस्य निषिद्धत्वात् तत्प्रार्थनया कोपः इति बोध्यम्, तादृशभावश्च कालक्षेपायैव इत्यपि मन्तव्यम् ॥ १५० ॥

'हे चपल नेत्रोंवाली (दमयन्ती)! कामबाणकी पीडाको नहीं सह सकता हूं, इस कारणसे प्रसन्न होवो, प्रसन्न होवो अर्थात् अतिशीघ्र प्रसन्न होकर रमण करो' ऐसा कहकर नलने (पूर्वोक्त परिहासादिसे) प्रसन्न की गयी भी उस (प्रिया दमयन्ती) को पुनः क्रुद्ध कर दिया। [ दिनमें रमण करनेका निषेध होनेसे नलके आतुर होकर प्रार्थना करनेपर दमयन्ती क्रुद्ध हो गयी। समय-यापनके लिए ही चतुर नलने प्रसन्न प्रियाको भी पुनः क्रुद्ध कर दिया, यह समझना चाहिये ]॥ १५० ॥

नेत्रे निषधनाथस्य प्रियाया वदनाम्बुजम् ।
ततस्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५१ ॥

नेत्रे इति । निषधनाथस्य नलस्य, नेत्रे दृशौ, प्रियायाः कान्तायाः, वदनाम्बुजं मुखकमलम्, ईयतुः प्रापतुः, ततः वदनाम्बुजात्, स्तनतटौ कुचोत्सङ्गभागौ, ईयतुः, ताभ्यां स्तनतटाभ्यां समीपात्, घनं निविडम्, जघनं नितम्बम्, ईयतुः । अतीव कामपीडितत्वादिति सर्वत्र भावः । अत्र नेत्रयोः क्रमात् अनेकस्थानसंवादात् 'क्रमेणैक-मनेकस्मिन्' इत्याद्युक्तलक्षणपर्यायालङ्कारः ॥ १५१ ॥

नलके दोनों नेत्रोंने (पहले) प्रिया (दमयन्ती) के मुख कमलको प्राप्त किया, तद-

1. '—व्यताम्' इति पाठान्तरम् ।

नन्तर स्तनतटको प्राप्त किया और तदनन्तर सघन जघनको प्राप्त किया अर्थात् नलने पहले दमयन्तीके मुखकमलको, तदनन्तर स्तनतटको तदनन्तर परस्परमें आश्लिष्ट जघनको देखा। [ यहांपर मुखादिके साथ 'अम्बुज, तट तथा घन' शब्दका प्रयोग करनेसे उनकी दर्शनीयता सूचित होती है ] ॥ १५१ ॥

इत्यधीरतया तस्य हठवृत्तिविशङ्किनी ।
झटित्युत्थाय सोत्कण्ठमसावन्वसरत् सखीः ॥ १५२ ॥

**इतीति । इति उक्तप्रकारया, तस्य स्वप्रियस्य नलस्य, अधीरतया कामजचाञ्चल्येन हेतुना, हठवृत्तिं बलात्कारप्रवृत्तिम्, विशङ्कते सम्भावयतीति सा तादृशी, असौ भैमी, झटिति सहसा, उत्थाय उद्गम्य, नलवक्षोदेशादिति भावः । सोत्कण्ठं सोत्कलिकम्, त्वरितप्रस्थानार्थमुत्सुका सतीत्यर्थः । सखीः वयस्याः, अन्वसरत् अन्वगच्छत् ॥ १५२ ॥**

इस प्रकार ( २०।१५०—१५१ ) उस ( नल ) की अधीरतासे ( सुरतार्थ ) बलात्कार करनेकी आशङ्का करती हुई वह ( दमयन्ती ) बहुत शीघ्र ( पर्यङ्क, या—नलके वक्षःस्थल ) से उठकर उत्कण्ठा सहित हो सखियोंके पीछे चली । [ अत्यन्त रसासक्त होना दोषोत्पादक है तथा रसका त्याग भी नायकके नीरसताका उत्पादक है; अत एव यहांपर कविसम्राट् श्रीहर्षने रसान्तरका वर्णनकर सम्भोग शृङ्गारको चरमसीमा तक पहुंचानेके लिए दमयन्ती तथा नलको भिन्न स्थानमें पहुंचानेका उपक्रम किया है ] ॥ १५२ ॥

न्यवारीव यथाशक्ति स्पन्दं मन्दं वितन्वता ।
भैमी कुचनितम्बेन नलसम्भोगलोभिना ॥ १५३ ॥

**न्यवारीवेति । भैमी दमयन्ती, नलस्य नैषधस्य, सम्भोगलोभिना मर्दनस्पर्शनादिरूपसम्भोगलालसेन, कुचनितम्बेन स्तनद्वयेन जघनयुग्मेन च । प्राण्यङ्गत्वादेकवद्भावः । अत एव स्पदं भैम्या एव गमनम्, मन्दं मन्थरम्, स्वल्पीभूतमित्यर्थः । वितन्वता कुर्वता सता, गतिं प्रतिबध्नता इत्यर्थः । आत्मनोरतिपीनत्वेन गुरुभारत्वादिति भावः । यथाशक्ति सामर्थ्यानुसारेण, न्यवारीव निवारिता, सम्भोगप्रतिबन्धात् खिन्नेन सता अलब्धभोगा मा गच्छ इति न्यषेधीव इत्युत्प्रेक्षा ॥ १५३ ॥**

नलके साथ सम्भोग करनेके लिए लोभी ( अत एव अधिक भारयुक्त होनेसे दमयन्तीके ) गतिको मन्द करनेवाले स्तनों तथा नितम्बोंने यथाशक्ति मानो दमयन्तीको ( नलको छोड़कर जानेसे ) निषेध-सा किया । [ स्तनों तथा नितम्बोंके बड़े-बड़े होनेसे दमयन्ती उत्कण्ठान्वित होती हुई भी शीघ्रगतिसे नहीं जा सकी ] १५३ ॥

अपि श्रोणिभरस्वैरां धर्त्तुं तामशकन्न सः ।
तदङ्गसङ्गजस्तम्भो गजस्तम्भोरुदोरपि ॥ १५४ ॥

---

१. '—भरास्वैराम्' इति पाठान्तरम् ।

अपीति । सः नलः, गजस्तम्भौ आलाने इव, हस्तिबन्धनस्थूणे इवेत्यर्थः । उरू महान्तौ, दोषौ भुजौ यस्य सः तादृशोऽपि महाभुजोऽपि । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । तस्याः दमयन्त्याः, अङ्गसङ्गात् देहस्पर्शात्, जायते उत्पद्यते इति तादृशः, स्तम्भः निष्क्रियाङ्गतालक्षणसात्त्विकविकारः यस्य सः तादृशः सन्, श्रोणिभरेण नितम्बभारेण, स्वैरां मन्दाम् मन्दगमनामपि इत्यर्थः । 'मन्दस्वच्छन्दयोः स्वैरम्' इत्यमरः । तां प्रियाम्, धर्तुं गृहीतुम्, निरोद्धुमिति यावत् । न अशकत् न समर्थोऽभूत् । स्वयं निर्व्यापारस्य किं सहकारिसम्पदा ? इति भावः ॥ १५४ ॥

हाथी बाँधनेके खम्भेके समान लम्बे तथा विशाल बाहुवाले होते हुए भी उस (दमयन्ती) के शरीर-स्पर्शजन्य स्तम्भ ('जडता' रूप सात्त्विक भाव) युक्त उस (नल) ने नितम्बोंके भारसे मन्दगामिनी (पाठा०—पराधीन-इच्छानुसार तीव्रगतिसे नहीं चल सकनेवाली) उस (दमयन्ती) को नहीं पकड़ सके। [क्योंकि कर्तव्यशून्य व्यक्तिके सहायक कुछ भी नहीं कर सकते हैं] ॥ १५४ ॥

आलिङ्गालिङ्ग तन्वङ्गि ! मामित्यर्द्धगिरं प्रियम् ।
स्मित्वा निवृत्य पश्यन्ती द्वारपारमगादसौ ॥ १५५ ॥

आलिङ्गेति । असौ भैमी, तन्वङ्गि ! हे कृशाङ्गि ! मां नलम्, आलिङ्ग आलिङ्ग आश्लिष आश्लिष, इति एवम्, अर्द्धा अन्यकर्त्तृकश्रवणभयात् अर्द्धस्फुटा, गीः वाक् यस्य तं तादृशम्, प्रियं पतिम्, स्मित्वा मन्दं हसित्वा, निवृत्य, परावृत्य, पश्यन्ती अवलोकयन्ती सती, द्वारस्य कपाटस्य, पारं चरमभागम्, अगात् गतवती । द्वारम् अतिचक्राम इत्यर्थः ॥ १५५ ॥

'हे तन्वङ्गि ! मेरा आलिङ्गन करो, आलिङ्गन करो' ऐसा आधा (दूसरेके सुननेके भयसे अस्फुट या—वाक्य शेष उच्चारण करनेमें नलके असमर्थ होनेसे अर्द्धोक्त) वचन (कहने) वाले प्रिय (नल) को स्मितकर तथा लौटकर देखती हुई वह (दमयन्ती) दरवाजेसे बाहर चली गयी॥

प्रियस्याप्रियमारभ्य तदन्तर्दूनयाऽनया[1] ।
शेके शालीनयाऽऽलिभ्यो न गन्तुं न निवर्त्तितुम् ॥ १५६ ॥

प्रियस्येति । प्रियस्य पत्युः नलस्य, अप्रियम् अतिक्रमरूपम् अप्रीतिजनकव्यापारम्, तं विहाय गमनरूपव्यापारमित्यर्थः । आरभ्य आचरित्वा, तेन अप्रियाचरणेन, तदित्यत्र 'तम्' इति पाठे—तं पूर्वोक्तरूपमप्रियमित्यर्थः । अन्तः अन्तःकरणे, दूनया परितप्तया । 'ओदितश्च' इति निष्ठा 'न' त्वम् । शालीनया अधृष्टया, स्वभावत एव सलज्जया इत्यर्थः । अनया भैम्या, आलिभ्यः सखीभ्यः, गन्तुम् अपि यातुमपि । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति चातुर्थी । न शेके न शक्तम् । भावे लिट् । अन्तर्दूनत्वादिति भावः । तथा निवर्त्तितं प्रियं प्रत्यागन्तुञ्च, प्रियसन्निधौ

1. 'तमन्त—' इति पाठान्तरम् ।

प्रत्यावर्त्तनं कर्तुमित्यर्थः। न शेके इत्यनेनान्वयः। शालीनतयैवेति भावः। लज्जा-विषादाभ्याम् उभयत आकृष्यमाणत्वादिति तात्पर्यम् ॥ १५६ ॥

प्रिय (नल) का अप्रिय (सम्भोगेच्छातिक्रमणकर गमनरूपकार्य) करके अन्तःकरणमें पश्चात्तापयुक्त यह (दमयन्ती) सखियोंके प्रति नहीं जा सकी और धाष्टर्याभावयुक्त अर्थात् अतिशय लज्जाशीला होनेसे लौट भी नहीं सकी [प्रियका अप्रियाचरणकर, बिना उन्हें प्रसन्न किये चला जाना अनुचित समझकर दमयन्ती द्वारदेशको लाँघकर आगे सखियोंके पास नहीं जासकी तथा 'हमलोगोंके पीछे आकर भी यह दमयन्ती सम्भोग करनेके लिए पुनः नलके पास चली गयी' ऐसा सखियां मनमें कहेंगी इस लज्जासे, अथवा—'यह पहले तो शानमें चली गयी और अब फिर स्वयं चली आयी' ऐसी नलके प्रति ही उत्पन्न लज्जासे वह दमयन्ती द्वारदेशको लाँघकर कुछ देर तक रुक गयी] ॥ १५६ ॥

[1]अकथयदथ बन्दिसुन्दरी द्वाःसविधमुपेत्य नलाय मध्यमह्नः।
जय नृप! दिनयौवनोष्मतप्ता प्लवनजलानि पिपासति क्षितिस्ते ॥१५७॥

अकथयदि। अथ दमयन्तीनिर्गमनानन्तरम्, बन्दिसुन्दरी काचित् वैतालिकस्त्री, शुद्धान्तःपुरे पुरुषप्रवेशनिषेधादिति भावः। द्वाःसविधं द्वारसमीपम्, उपेत्य समागत्य, नृप! हे राजन्! जय सर्वोत्कर्षेण वर्त्तस्व, अह्नः मध्यं मध्याह्नकालः समागत इत्यर्थः। अत एव दिनस्य दिवसस्य, यौवनं तारुण्यम्, पूर्णावस्था इत्यर्थः। मध्याह्नः इति यावत्। तस्य उष्मणा सन्तापेन, तप्ता उष्णीभूता, क्षितिः धरणी, ते तव, प्लवन-जलानि स्नानोदकानि, पिपासति पातुमिच्छति, तापस्य पिपासाहेतुत्वादिति भावः। इति नलाय नैषधाय, अकथयत् अवदत्, माध्याह्निकस्नानकालोऽयमवधार्यतामिति तात्पर्यार्थः ॥ १५७ ॥

इस (दमयन्तीके बाहर चले जाने) के बाद बन्दीकी स्त्रीने द्वारके समीप आकर मध्याह्नकाल होनेकी सूचना दी-'हे राजन्! विजयी होवें, दिनके तारुण्यकी उष्णतासे सन्तप्त पृथ्वी आपके स्नानजलको पीना चाहती है अर्थात् आपके स्नानका समय हो गया है ॥१५७॥

उपहृतमधिगङ्गमम्बु कम्बुच्छवि तव वाञ्छति केशभङ्गिसङ्गात्।
अनुभवितुमनन्तरं तरङ्गासमशमनस्वसृमिश्रभावशोभाम् ॥ १५८ ॥

उपेति। किञ्च, कम्बुच्छवि शङ्खच्छायम्, शङ्खवत् शुभ्रप्रभमित्यर्थः। अधिगङ्गं गङ्गायाः। विभक्त्यर्थेऽव्ययीभावः। उपहृतम् आनीतम्, कलशेन गङ्गातः समानी-तमित्यर्थः। अम्बु गाङ्गं जलम् इत्यर्थः। तव ते, केशभङ्ग्याः कुटिलकृष्णकुन्तलजा-लस्य, सङ्गात् स्पर्शात्, अनन्तरं सङ्गात् परमित्यर्थः। तरङ्गैः ऊर्मिभिः, असमायाः विषमायाः, निम्नोन्नतायाः इत्यर्थः। शमनस्वसुः अतिकृष्णायाः यमुनायाः, मिश्र-भावस्य मेलनस्य, शोभां सौन्दर्यम्, अनुभवितुं प्राप्तुम्, वाञ्छति इच्छति। शुभ्रग-

[1]. 'अचथयदथ' इति पाठान्तरम्।

ङ्गाजलमध्ये कुटिलकृष्णकेशकलापं निमज्ज्य स्नानं कुरु, ततश्च शुभ्रतरस्य गाङ्गजलस्य कृष्णतरकेशपाशसङ्गे प्रयागजलशोभा भविष्यतीति भावः । निदर्शनालङ्कारः ॥१५८॥

शङ्खके समान ( स्वच्छ ) कान्तिवाला, लाया गया गङ्गाजल आपके ( काले एवं ) टेढ़े केशोंके संसर्गसे बादमें तरङ्गोंसे असमान ( गङ्गासे भिन्न अर्थात् कृष्णवर्ण, अथवा—उच्चावच 'निम्नोन्नत' ) यमुनाके मिलनेकी शोभाको चाहता है। [ आप घड़ोंमें लाये गये शुभ्र गङ्गाजलसे स्नान करें, जिससे आपके टेढ़े एवं कृष्णवर्ण केश-समूहके साथ मिलकर उस गङ्गाजलकी शोभा टेढ़े एवं कृष्णवर्ण तरङ्गोंवाली यमुनामें मिलनेके समान हो ] ॥ १५८ ॥

तपति जगत एव मूर्द्धि भूत्वा रविरधुना त्वमिवाद्भुतप्रतापः ।
पुरमथनमुपास्य पश्य पुण्यैरधरितमेनमनन्तरं त्वदीयैः ॥ १५९ ॥

तपतीति । त्वम् इव भवानिव, अद्भुतप्रतापः आश्चर्यतेजः सम्पन्नः, एकत्र—कोषदण्डजप्रभावशाली, अन्यत्र—मध्याह्नकालिकप्रखरकरसम्पन्न इत्यर्थः । रविः सूर्यः, अधुना इदानीम् , जगतः पृथिव्याः, मूर्द्धि एव शिरसि एव, आकाशस्य उपर्य्येवेति यावत् , भूत्वा स्थित्वा, तपति सन्तापं ददाति, एकत्र—दुर्जनान् शास्ति, अन्यत्र—जगन्ति सन्तापयतीत्यर्थः । अनन्तरं ततश्च स्नानोत्तरकालम् , पुरमथनं शिवम् , उपास्य अर्चयित्वा, त्वदीयैः पुण्यैः तव सेवासुकृतैः, इवेति शेषः । अधरितं मस्तकोपरिभागात् च्यावितम् , तदा मध्याह्नपगमात् अधस्तात् गतमित्यर्थः । एनं रविम् , पश्य अवलोकय, प्रणामार्थमिति भावः । पुरहरप्रसादात् सूर्याभ्यधिकप्रतापो भविष्यसि इत्यर्थः ॥ १५९ ॥

आपके समान आश्चर्यजनक प्रताप ( क्षात्र तेज, पक्षा०—किरणोष्णता ) वाला यह सूर्य संसारके ऊपर ( सबके मस्तकपर, पक्षा०—सबसे ऊपर आकाशमें ) होकर तप ( दुष्टोंका शासन, पक्षा०—संसारको सन्तप्तकर ) रहा है, ( आप ) शङ्करजीकी उपासना करके बादमें मानो आपके पुण्योंसे अधोभूत इस सूर्यको देखिये। [ शिव-पूजन करनेके बाद सूर्यको नमस्कार करें और देखें कि इस समय यद्यपि यह सूर्य आपके समान ही प्रतापी है, किन्तु आपके शिव-पूजन करनेके बाद मानो उस पूजनसे उत्पन्न आपके पुण्यके प्रभावसे यह सूर्य नीचा हो गया है। दोपहरके बाद स्वत एव पश्चिम दिशाकी ओर ढले हुए सूर्यको नलके शिवपूजनजन्य पुण्योंसे नीचा होनेकी गम्योत्प्रेक्षाकी गयी है ] ॥ १५९ ॥

आनन्दं हठमाहरन्निव हरध्यानार्चनादिक्षण-
स्यासत्तावपि भूपतिः प्रियतमाविच्छेदखेदालसः ।
पद्मद्वारदिशं प्रति प्रतिमुहुर्द्राङ्निर्गतप्रेयसी-
प्रत्यावृत्तिधिया दिशन् दृशमसौ निर्गन्तुमुत्तस्थिवान् ॥ १६० ॥

आनन्दमिति । हरस्य शिवस्य, ध्यानार्चनादिक्षणस्य मनःसमाधानपूर्वकचिन्ता-पूजादिसमयस्य । आसत्तौ समीपवर्त्तित्वेऽपि, प्रियतमाविच्छेदखेदेन प्रेयसीवियोग-दुःखेन, अलसः जडः, कर्त्तव्यविमुख इत्यर्थः । असौ अयम् , भूपतिः राजा नलः

द्राक् झटिति, निर्गतायाः निष्क्रान्तायाः, प्रेयस्याः, प्रियतमाया भैम्याः, प्रत्यावृत्तिधिया पुनरागमनबुद्ध्या, पक्षद्वारदिशं प्रतिपार्श्ववर्त्तिकपाटप्रदेशमुद्दिश्य, तेनैव द्वारेण प्रत्यागमनसम्भवादिति भावः। प्रतिमुहुः पुनः पुनः, दृशं दृष्टिम्, दिशन् व्यापारयन्, हठं बलपूर्वकं यथा तथा, स्वत एव आनन्दलाभासम्भवादिति भावः। आनन्दं प्रेयसीसमागमहर्षम्, आहरन् इव परावर्त्तयन् इव, निर्गन्तुं गृहात् निर्यातुम् उत्तस्थिवान् शय्यातः उज्जगाम ॥ १६० ॥

शिव-पूजनके समय ( मध्याह्न, अथवा—शिव-पूजनरूपी उत्सव ) के समीप होनेपर भी बलात्कारपूर्वक गये ( बीते ) हुए भी आनन्दको मानो आकृष्ट करते हुए तथा परमप्रिया ( दमयन्ती ) के वियोगजन्य खिन्नतासे आलस और तत्काल निकली ( बाहर गयी ) हुई प्रियतमाके लौटनेके कारण सामीप्य होनेकी बुद्धि ( दमयन्ती लौटकर इधर आ तो नहीं रही है इस विचार ) से द्वारकी ओर दृष्टि डालते हुए ये राजा नल बाहर जानेके लिए पलङ्गसे उठे। [ यहांपर कविसम्राट् श्रीहर्षने चार श्लोकों ( २०।१५७-१६० ) से अग्रिम सर्गकी सङ्गति सूचित कर दी है ] ॥ १६० ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥१६१॥

श्रीहर्षमिति। अन्यैः अपरैः, अक्षुण्णाः अस्पृष्टाः, पूर्वम् अनालोचिता इत्यर्थः। रसाः शृङ्गारादयः, प्रमेयाः वाक्यार्थाश्रयाः, यासु भणितिषु वाक्येषु तस्मिन्। 'तृतीयादिषु भाषितपुंस्कं पुंवत्' इत्यादिना पुंवद्भावः। तदीये श्रीहर्षकृते, महाकाव्ये। विंशतीति पूरणे डटि, 'ति विंशतेः' इति तिशब्दस्य लोपः। गतमन्यत् ॥ १६१ ॥

इति मल्लिनाथसूरिविरचिते 'जीवातु'समाख्याने विंशः सर्गः समाप्तः ॥२०॥

---

कवीश्वर-समूहके..........किया, उसके रचित दूसरे ( श्रीहर्षभिन्न कवियों ) से अनभ्यस्त शृङ्गारादि रसके प्रमेयों ( वक्रोक्ति, समासोक्ति, उत्प्रेक्षा आदि ) के कथन ( वाग्गुम्फन ) वाले सुन्दर 'नल-चरित' अर्थात् 'नैषध चरित' का..........यह बीसवां सर्ग समाप्त हुआ। ( शेष व्याख्या चतुर्थ सर्गवत् समझनी चाहिये ) ॥ १६१ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित'का बीसवां सर्ग समाप्त हुआ ॥ २० ॥

---

१. 'भणितौ, भाषितपुंस्कम्' इति 'प्रकाश' व्याख्यानं चिन्त्यम्, तस्य नित्यस्त्रीत्वात्।

# एकविंशः सर्गः ।

तं विदर्भरमणीमणिसौधादुज्जिहानमनुदर्शितसेवैः ।
अर्पणान्निजकरस्य नरेन्द्रैरात्मनः करदता पुनरूचे ॥ १ ॥

तमिति । विदर्भरमण्या वैदर्भ्या दमयन्त्याः, मणिसौधाद् रत्नमयप्रासादात्, उज्जिहानं निर्गच्छन्तम्, तं नलम्, अनु प्रति, तं लक्ष्यीकृत्य इत्यर्थः । दर्शितसेवैः दर्शिता अन्तःपुरद्वारि प्रणामादिना विज्ञापिता, सेवा आराधना, आनुगत्यमित्यर्थः, यैः तैः। अनोर्लक्षणार्थे कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । नरेन्द्रैः अधीनराजन्यवर्गैः, निजकरस्य स्वस्वहस्तस्य, अर्पणात् दानात्, सोपानावतरणसमये नलाय हस्तावलम्बनदानादित्यर्थः। आत्मनः स्वस्य, करं हस्तं बलिं च ददातीति करदः । 'बलिहस्तांशवः कराः' इत्यमरः । तस्य भावः तत्ता, पुनः भूयोऽपि, बलिदानादेव करदत्वे सिद्धे पुनर्हस्तदानेन करदता इति पुनरुक्तिरिति भावः । ऊचे बभाषे । एतेन नलस्य चक्रवर्त्तित्वं द्योत्यते ॥ १ ॥

विदर्भदेशकी रमणी ( दमयन्ती ) के मणिमय प्रसादसे निकलते हुए उस ( नल ) के प्रति ( प्रणामादिके द्वारा ) सेवा प्रदर्शित किये हुए राजाओंने अपने हाथ ( पक्षा०—राजदेय भाग ) के देनेसे अपने करदातृत्व ( हाथ पक्षा०—कर = राजदेय भागको देनेके भाव ) को पुनः कह दिया । [ सभी राजालोग पहलेसे सार्वभौम नलके लिए कर देते थे, वे इस समय प्रासादसे बाहर जाते हुए नलके सीढ़ियोंसे उतरते समय अपने हाथका सहारा देकर उस करदातृत्वको मानो पुनः कहा ] ॥ १ ॥

तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठिनेति ।
तां न्यधत्त शिरसां खलु माल्यै राजराजिरभितः प्रणमन्ती ॥ २ ॥

तस्येति । राजराजिः सामन्तनृपपङ्क्तिः, अभितः समन्तात्, प्रणमन्ती आभूमि शिरो नमयन्ती सती, चीनसिचयैः चीनदेशीयपट्टवस्त्रैः, बद्धा आच्छादिता अपि, पद्धतिः मार्गः, तस्य नलस्य, पदयुगात् चरणयुगलात्, कठिना कठोरा, इति हेतोः । 'पञ्चमी विभक्तेः' इति पञ्चमी । तां पद्धतिम्, शिरसां मूर्द्धनाम्, माल्यैः मालाभिः साधनैः, न्यधत्त पिहितवती, खलु इति उत्प्रेक्षायाम् । पदयुगलादपि भूमेः कठिनत्वात् तत्र पदविन्यासे वेदनाप्राप्तिसम्भवादिति भावः ॥ २ ॥

चीन देशोत्पन्न मृदु तथा सूक्ष्म वस्त्रसे आच्छादित भी मार्ग उस ( नल ) के चरणद्वयसे कठोर है ( अत एव इनको उस पर चलनेमें सम्भावित कष्टको दूर निवारण न होनेके लिए मार्गके दोनों ओरसे प्रणाम राजश्रेणि–पङ्क्तिबद्ध राज–समूह ) ने मस्तकोंकी मालाओंसे उस ( मार्ग ) को आच्छादित कर दिया । [ कोमल नलके चरणोंको कठिन मार्गमें गमन करनेमें कष्ट होनेकी सम्भावनासे राजाओंका अपनी मस्तकस्थ मुकुटमालाओंसे उस मार्गको

मृदुतम बनाना उचित ही था। मुकुटकी माला गिरने तक अर्थात् बहुत विलम्ब तक राजा-लोग नतमस्तक हो नलको सादर दण्डवत् प्रणाम किया ] ॥ २ ॥

द्रागुपाह्रियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः ।
स्वस्वदिश्यमथ रत्नमपूर्वं यत्नकल्पितगुणाधिकचित्रम् ॥ ३ ॥

द्रागिति । अथ प्रणामानन्तरम्, तस्य नलस्य, दृष्टिदानम् अक्षिनिक्षेप एव, तेषु नृपेषु तदानीतरत्नेषु च इति भावः । बहुमानः समादरः, तेन कृतार्थैः सफलश्रमैरित्यर्थः । नृपैः सामन्तराजभिः, स्वेषां स्वेषां दिशि भवं स्वस्वदिश्यं निजनिजदेशोत्पन्नम् । 'तत्र भवम्' इति यत्-प्रत्ययः । यत्नेन समादरेण, कल्पितैः शाणघर्षणादिना सम्पादितैः, गुणैः औज्ज्वल्यसुदृश्यत्वादिधर्मैः, अधिकं प्रकृष्टम्, श्रेष्ठमित्यर्थः । चित्रम् आश्चर्यम्, अपूर्वं पूर्वं केनाप्यप्राप्तम्, रत्नं मणिः, तस्य नलस्य सम्बन्धे, द्राक् शीघ्रम्, स्वमतिक्रम्य गमनसम्भावनया इति भावः । उपाह्रियत उपायनीकृतम् ॥ ३ ॥

उस ( नल ) द्वारा ( राजाओंको ) देखना ही ( राजाओंका ) बहुत सत्कार हुआ, उससे कृतार्थ अर्थात् नलके दृष्टिदानरूप बहुमानसे कृतकृत्य राजाओंने अपनी-अपनी दिशाओं ( पाठा०—अपनी दिशा ) में उत्पन्न, बड़े यत्नसे किये गये गुणोंसे अधिक आश्चर्यकारक ( पाठा०—जो कल्पित गुणसे अधिक आश्चर्यकारक नहीं है ऐसा अर्थात् स्वभावतः अधिक गुणयुक्त गोलाकार उज्ज्वलतम एवं देदीप्यमान होनेसे ) अपूर्व रत्नको ( ये राजराजेश्वर महाराज नल मेरे सामनेसे आगे न बढ़ जांय, इस भावनासे ) अतिशीघ्र भेंट किया ॥

अङ्गुलीचलनलोचनभङ्गिभ्रूतरङ्गविनिवेदितदानम् ।
रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

अङ्गुलीति । अन्ये अपरे, नृपाः राजानः, अङ्गुलीचलनेन अङ्गुलीकम्पनेन, अङ्गुलीनिर्देशेनेत्यर्थः । लोचनभङ्ग्या नेत्रसङ्केतेन, भ्रूतरङ्गेण भ्रुवोश्चालनेन च, विनिवेदितं विज्ञापितम्, दानं त्यागः यस्य तत् तथोक्तम्, अन्यैः अपरैः, नृपैः राजभिः, ढौकितम् उपहृतम्, तत् पूर्वोक्तं रत्नम्, तस्य नलस्य, प्रसादम् अनुग्रहस्वरूपम्, अलभन्त प्रापुवन् । एकस्मात् लब्धं रत्नजातम् अन्यस्मै प्रदत्तं, न तु कोषागारे निक्षिप्तम् इति अस्य दातृत्वम् अनुजीवितोषणं विवेकित्वञ्चोक्तम् ॥ ४ ॥

दूसरों ( चिरकालसे सेवा करनेवाले, या—तत्काल आये हुए ) राजाओंने अङ्गुलिके हिलाने ( अङ्गुलिसे सङ्केत करने ) से, नेत्रभङ्गीसे तथा भ्रूतरङ्गसे बतलाया गया है दान जिसका ऐसे, दूसरे राजाओंके भेंट किये हुए रत्न को उस ( नल ) के ( द्वारा दिया गया ) प्रसाद ( प्रसन्नताजन्य पारितोषिक ) पाया। [ राजाओंके दिये गये उत्तमोत्तम रत्नको अङ्गुलि, नेत्र या भ्रूका सङ्केतकर नलने दूसरे राजाओंके लिए अपने प्रसादरूपमें दिलवा दिया। इस अमूल्य रत्नको भी स्वयं न लेकर या कोषमें जमा न कराकर दूसरे-दूसरे

---

१. 'स्वस्य दिश्यमथ' इति, 'देश्यम्' इति, 'यत्नकल्पित-' इति च पाठान्तराणि ।

राजाओंको अङ्गुलि आदिका सङ्केतकर पारितोषिकरूपमें दिलवानेसे नलका लोभाभाव अधिक उदारता एवं भृत्योंके प्रति दयालुता सूचित होती है ] ॥ ४ ॥

तानसौ कुशलसूनृतसेकैस्तर्पितानथ पितेव विसृज्य ।
अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपनमितानमितौजाः ॥ ५ ॥

तानिति । अथ उपहारग्रहणदानानन्तरम्, अमितम् अतुलनीयम्, ओजः तेजः यस्य तादृशः, असौ नलः, कुशलस्य कुशलप्रश्नस्य सूनृतस्य सत्यप्रियवचनस्य च, पीयूषरूपस्येति भावः । सेकैः वर्षणैः, उक्तिभिरित्यर्थः । तर्पितान् प्रीणितान्, तान् नृपान्, विसृज्य सम्प्रेष्य, गमनाय अनुमत्य इत्यर्थः । शैष्यकेण शिष्यत्वेन । 'योपधाद्गुरूपोत्तमाद्वुञ्' । उपनमितान् समेतान्, युद्धशिक्षार्थं शिष्यभावेन समागतानित्यर्थः । नृपानिति शेषः । पितेव जनक इव, अस्त्रेषु धनुरादिषु, शस्त्रेषु खड्गादिषु, खुरलीषु भ्रमणविशेषेषु, अस्त्रशस्त्राणां खुरलीषु प्रयोगसंहारविषयेषु इति वा, विनिन्ये शिक्षितवान् ॥ ५ ॥

इस ( उपहार-स्वीकार करने ) के बाद अपरिमित बलशाली इस ( नल ) ने कुशल-प्रश्न तथा सत्यप्रिय भाषणोंसे सन्तुष्ट किये गये उन राजाओंको भेजकर शिष्यभावसे ( शिष्य बनकर ) आये हुए राजाओंको अस्त्र ( धनुष-बाणादि ), शस्त्र ( खड्ग, कुन्त आदि ) तथा खुरली ( भ्रमण—भ्रमण-विशेष; अथवा—अस्त्र-शस्त्रके प्रयोग एवं प्रहार करने ) में पिताके समान शिक्षित किया ॥ ५ ॥

मर्त्यदुष्प्रचरमस्त्रविचारञ्चारु शिष्यजनतामनुशिष्य ।
स्वेदबिन्दुकितगोधिरधीरं स श्वसन्नभवदाप्लवनेच्छुः ॥ ६ ॥

मर्त्येति । सः नलः, मर्त्येषु मनुष्यलोकेषु, दुष्प्रचरम् अविद्यमानप्रसरम्, अस्त्रविचारम् अस्त्रशिक्षाम्, शिष्यजनतां शिष्यभूतनृपसमूहम्, चारु सुष्ठु यथा भवति तथा, अनुशिष्य शिक्षयित्वा, स्वेदेन घर्मोदकेन, बिन्दुकितः सञ्जातबिन्दुकः, गोधिः ललाटं यस्य सः तादृशः सन् । 'ललाटमलिकं गोधिः' इत्यमरः । अधीरम् अस्थिरं यथा भवति तथा, श्वसन् श्रमजनितदीर्घदीर्घश्वासं त्यजन्, आप्लवनं स्नानम्, तदिच्छुः तदभिलाषी, अभवत् अजायत ॥ ६ ॥

( नलेतर ) मनुष्यमात्रसे अविदित अस्त्र-विचार ( आयुधके प्रयोग तथा संहार ) शिष्य-समूहको अच्छी तरह ( अथवा—प्रौढ़ मतिवाले शिष्य-समूहको ) सिखाकर स्वेद-बिन्दुयुक्त ललाटवाले तथा अधिक श्वास लेते ( हाँफते ) हुए उस ( नल ) ने स्नान करना चाहा ॥ ६ ॥

यक्षकर्दममृदून्मृदिताङ्गं प्राङ्कुरङ्गमदमीलितमौलिम् ।
गन्धवारिभिरनुबन्धितभृङ्गैरङ्गनाः सिषिचुरुच्चकुचास्तम् ॥ ७ ॥

---

१. 'शिष्यतोप-' इति पाठान्तरम् ।

यक्षेति । उच्चाः उन्नताः, कुचाः स्तना यासां तादृश्यः, अङ्गनाः स्त्रियः, प्राक् प्रथमम्, यक्षकर्दमेन कर्पूरादियोगजेन सुगन्धिस्नानीयचूर्णेन । 'कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः' इत्यमरः । मृदु कोमलं यथा तथा, उन्मृदितं शोधितम्, अङ्गं शरीरं यस्य तं तादृशम्, तथा कुरङ्गमदेन कस्तूर्या, मीलितः सम्बन्धं प्रापितः, लिप्त इति यावत्, मौलिः मस्तकः यस्य तं तादृशम्, तं नलम्, अनुबन्धिताः अनुबन्धं गमिताः, स्वसौगन्धात् संयोगं प्रापिता इत्यर्थः । भृङ्गाः भ्रमराः येषु तैः तादृशैः, गन्धवार्भिः गन्धोदकैः साधनैः, सिषिचुः सिक्तवत्यः, स्नपयामासुरित्यर्थः ॥ ७ ॥

यक्षकदर्मके उबटन लगाये हुए अङ्गोंवाले तथा पहले कस्तूरीसे लिप्त शिरवाले नलको उन्नत स्तनोंवाली ( युवती ) स्त्रियोंने ( अधिक सुगन्धि होनेसे ) भ्रमर जिसपर आ रहे हैं ऐसे सुगन्धयुक्त पानीसे नहलवाया [ अमरकोषके[1] अनुसार ( 'कपूर, अगरु, कस्तूरी और कक्कोल'से, तथा 'गरुडपुराणके[2] अनुसार उक्त चारो द्रव्य तथा चन्दनसे बनाये गये उबटनको 'यक्षकर्दम' कहते हैं । इसके विषयमें भिन्न-भिन्न मत जाननेके इच्छुकोंको अमरकोषकी मत्कृत 'मणिप्रभा' व्याख्याकी 'अमरकौमुदी' नामक टिप्पणी देखनी चाहिये ] ॥ ७ ॥

भूभृतं पृथुतपोघनमाप्तस्तं शुचिः स्नपयति स्म पुरोधाः ।
सन्दधज्जलधरस्खलदोघास्तीर्थवारिलहरीरुपरिष्टात् ॥ ८ ॥

भूभृतमिति । तदनन्तरं आप्तः विश्वस्तः, शुचिः शुद्धः पुरोधाः पुरोहितः, जलधरात् जलपूर्णघटात्, स्खलन् पतन्, ओघः प्रवाहः यासां ताः तादृशीः, तीर्थवारीणां गङ्गादितीर्थोदकानाम्, लहरीः तरङ्गान्, धारा इति यावत्, उपरिष्टात् मस्तकोपरिभागे । 'उपर्युपरिष्टात्' इति निपातनात् साधुः । सन्दधत् सन्दधानः सन्, वर्षयन् सन् इत्यर्थः । पृथुना महता, तपसा तपस्यया, घनं परिपूर्णम्, भूभृतं राजानम्, तं नलम्, स्नपयति स्म अभिषिञ्चति स्म, स्नापितवान् इत्यर्थः । अन्यत्र— आप्तः प्राप्तः, शुचिः आषाढः । 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोरपि' इति विश्वः । जलधरेभ्यः मेघेभ्यः, स्खलन् पतन्, ओघः प्रवाहो यासां ताः तथोक्ताः, तीर्थवारिलहरीः पूतजलप्रवाहान्, उपरिष्टात् मस्तकोपरि, सन्दधत् सन्दधानः, वर्षयन् सन् इत्यर्थः । पृथोः तदाख्यस्य वेणपुत्रस्य नृपभेदस्य, 'पृथुः स्यात् महति त्रिषु । स्वक्पत्र्यां कृष्णजीरेऽस्त्री पुमानग्नौ नृपान्तरे ॥' इति मेदिनी । तपसा तपस्याप्रभावेण, घनम् अशिथिलम्, दृढमित्यर्थः । तं प्रसिद्धं, भूभृतं भूमिधरं, हिमालयादिपर्वतमित्यर्थः । 'भूभृद् भूमिधरे नृपे' इति विश्वः । स्नपयति स्म । अङ्गनाः सामान्यजलेन

---

१. तद्यथा—'कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।' इति ( अमरः २।६।१३३ ) ।
२. तद्यथा—'तथा कर्पूरमगुरुः कस्तूरी चन्दनन्तथा ।
कक्कोलञ्च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥' इति ।

पुरोधाः समन्त्रकतीर्थोदकेन तं स्नपयन्ति स्म इति वोद्धव्यम्। अत्र द्वितीयार्थस्य प्रकृते अपर्यवसानाद् उपमाध्वनौ पर्यवसानं ज्ञेयम्॥ ८॥

इस ( अङ्गनाओंके अभ्यङ्ग, या-उष्णोदकसे स्नान कराने ) के बाद हितकारक तथा सदाचारपवित्र ( परम्परागत ) पुरोहितने, जलपूर्ण स्वर्णघटसे गिरते हुए प्रवाहवाले तथा ( प्रयागादि ) तीर्थोंके जलके तरङ्गोंको ( नलके ) ऊपरमें धारण कराते हुए; बहुत ( चान्द्रायणादि व्रतरूप ) तपस्याओंसे पूर्ण उस राजा ( नल ) को स्नान कराया। ( पक्षा०—मेघोंसे गिरते हुए प्रवाहवाले तथा पवित्र जल-प्रवाहको ऊपर ( शिखरपर ) धारण करते हुए उपस्थित आषाढ मासने 'पृथु' नामक राजाके प्रभावसे स्थिर उस ( प्रसिद्धतम हिमालयादि ) पर्वतको स्नान कराता था अर्थात् उस पर्वत शिखरपर जल बरसाता था )। [ अङ्गनाओंके सामान्य जलसे स्नान करानेके बाद उक्त पुरोहितने मन्त्रपूर्वक तीर्थोदकसे नलको स्नान कराया ]॥ ८॥

प्रेयसीकुचवियोगहविर्भुग्जन्मधूमविततीरिव बिभ्रत्।
स्नायिनः करसरोरुहयुग्मं तस्य गर्भधृतदर्भमराजत्॥ ९॥

प्रयसीति। स्नायिनः मन्त्रवज्जलेन स्नानं कुर्वतः, तस्य नलस्य, गर्भे अभ्यन्तरे करतले इत्यर्थः, धृतानि गृहीतानि, दर्भाणि कुशाः येन तत् तादृशम्, स्नानकाले कुशग्रहणस्य शास्त्रीयत्वादिति भावः। यद्वा—स्नायिनः कृतस्नानस्य, तस्य नलस्य गर्भे मध्यमाकनिष्ठयोरन्तराले, अनामिकायामित्यर्थः। धृतः परिहितः इत्यर्थः। दर्भः कुशः, कुशाङ्गुरीयको येन तत्तादृशम्, करयोः पाण्योः एव, सरोरुहयोः कमलयोः युग्मं द्वयम्, प्रियस्याः दमयन्त्याः, कुचयोः स्तनयोः, वियोगहविर्भुजः विरहवह्नेः, जन्म सम्भवः यस्य तथाभूतस्य, धूमस्य विततीः सन्ततीः, विभ्रदिव धारयन्निव, अराजत् अशोभत। नूतनदर्भाणां श्यामवर्णत्वात् धूमसाम्यमिति बोध्यम्॥ ९॥

( प्रयागादि तीर्थके जलसे समन्त्रक ) स्नान करते हुए ( या—स्नान किये हुए ) उस ( नल ) के अनामिका अङ्गुलिके बीचमें कुशाको धारण किये हुए दोनों करकमल प्रियतमा ( दमयन्ती ) के स्तनोंकी विरहाग्निसे उत्पन्न धूम-समूहको धारण करते हुएके समान शोभित हुए॥ ९॥

कल्प्यमानममुनाऽऽचमनार्थं गाङ्गमम्बु चुलुकोदरचुम्बि।
निर्मलत्वमिलितप्रतिबिम्बां श्यामयच्छ्रुपत्नीय करे नु?॥ १०॥

कल्प्यमानमिति। अमुना नलेन, आचमनार्थम् उपस्पर्शनार्थम्, कल्प्यमानं गृह्यमाणम्, अत एव चुलुकस्य प्रसृतस्य, निकुब्जपाणेरित्यर्थः। उदरं मध्यम्, चुम्बति स्पृशतीति तादृशम्, गाङ्गं गङ्गासम्बन्धि, अम्बु जलम्। कर्तृ। निर्मलत्वेन स्वच्छत्वेन हेतुना, मिलितः संयुक्तः, तत्र निपतित इत्यर्थः। प्रतिबिम्बः प्रतिच्छाया

१. '—प्रतिबिम्बद्या—' इति पाठान्तरम्।

यस्याः तथोक्ताम्, द्याम् आकाशं स्वर्गञ्च । 'द्यौः स्वर्गसुरवर्त्मनोः' इत्यमरः । करे, हस्ते, उपनीय संस्थाप्य, अयच्छत् नु ? अददात् किम् ? प्रजाभ्य इति शेषः । दानाचैव तद्ग्रहणसम्भवादिति भावः । द्यौःशब्दस्य स्वर्गाकाशवाचित्वाच्छलेनोक्तिः ॥१०॥

इस ( नल ) के द्वारा आचमन करनेके लिए चुल्लूमें लिये हुए गङ्गाजलने स्वच्छतासे प्रतिबिम्बित आकाश ( पक्षा०—स्वर्ग ) को लाकर हाथमें दे दिया है क्या ? [ लोकमें भी दुर्लभ वस्तुको लाकर पुण्यात्मा तथा प्रियतम व्यक्तिके हाथमें दे दिया जाता है ] ॥ १० ॥

मुक्तमाप्य दमनस्य भगिन्या भूमिरात्मदयितं धृतरागा ।
अङ्गमङ्गमनु किं परिरेभे तं मृदो जलमृदु गृहयालुम् ? ॥ ११ ॥

मुक्तामिति । भूमिः तिलकार्थं गृहीता रक्तवर्णा मृत्तिका, अत्र स्मृतिः—'विप्रा गौरमृदः प्रोक्ताः क्षत्रा रक्ताः प्रकीर्त्तिताः' इति । दमनस्य भीमात्मजस्य, भगिन्या सोदरया दमयन्त्या, मुक्तं स्नानार्थं परित्यक्तम्, मृदः तिलकार्था मृत्तिकाः, गृहयालुं ग्रहीतारम्, आत्मनः स्वस्य दयितं प्रियम्, पतिमिति यावत् । राज्ञो भूपतित्वादिति भावः । तं नलम्, आप्य लब्ध्वा, धृतः गृहीतः, बद्ध इत्यर्थः । रागः स्वभावत एव रक्तवर्णः अनुरागश्च यया सा तथोक्ता सती । 'रागोऽनुरागे मात्सर्ये क्लेशे च लोहितादिषु' इति विश्वः । जलेन स्नानोदकेन, मृदु कोमलम्, अङ्गम् अङ्गं ललाटादिकं प्रत्यवयवम्, अनु लक्ष्यीकृत्य, परिरेभे आलिलिङ्ग किम् ? अन्याऽपि सपत्न्या दूरेऽवस्थितं वल्लभं प्राप्य सानुरागा सती यथा प्रत्यङ्गमालिङ्गति तद्वदिति भावः । ललाटादिषु द्वादशाङ्गेषु मृत्तिलकानि चकारेति निष्कर्षः ॥ ११ ॥

दमयन्तीसे मुक्त ( छोड़े गये—पृथक् स्थित, तथा तिलकके लिए ) मिट्टीको लेनेवाले, अपने पति उस ( नल ) को राग ( लालिमा, पक्षा०—अनुराग ) से युक्त पृथ्वी ( मिट्टी ) ने जल ( द्वारा स्नान करने ) से कोमल प्रत्येक अङ्गका आलिङ्गन किया ? । [ जिस प्रकार कोई सपत्नी स्त्री किसी दूसरी सपत्नीसे पृथक् किये गये, उसे चाहते हुए पतिको प्रत्येक अङ्गका आलिङ्गन करती है; उसी प्रकार पृथ्वीने दमयन्तीसे पृथक् स्थित तिलकार्थ मिट्टीको हाथमें ग्रहण करते हुए नलके जलसे कोमल अर्थात् सुख-स्पर्श प्रत्येक अङ्गोंका मानो सानुराग होकर आलिङ्गन किया । नलने प्रत्येक अङ्गमें लालवर्णकी मिट्टीका तिलक लगाया ] ॥

मूलमध्यशिखरश्रितवेधःशौरिशम्भुकरकाङ्घ्रिशिरःस्थैः ।
तस्य मूर्द्ध्नि चकरे शुचि दर्भैर्वारि वान्तमिव गाङ्गतरङ्गैः ॥ १२ ॥

मूलमिति । मूलमध्यशिखराणि दर्भाणाम् आदिमध्याग्राणि, श्रितानां यथाक्रमं आसानास, वेधःशौरिशम्भूनां ब्रह्मविष्णुरुद्राणाम्, अत्र स्मृतिः—'कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः । कुशाग्रे शङ्करं विद्यात् त्रयो देवाः कुशस्थिताः ॥' इति । करकाङ्घ्रिशिरःसु कमण्डलुपादमस्तकेषु, तिष्ठन्ति वर्त्तन्ते इति तथोक्तैः, गाङ्गैः गङ्गासम्बन्धिभिः, तरङ्गैः ऊर्मिभिः, वान्तं निष्ठ्यूतम् इव, स्थितमिति शेषः । शुचि

निर्मलम्, वारि गङ्गोदकम् दर्भैः कुशैः, कर्त्तृभि । तस्य नलस्य, मूर्द्धिन शिरसि, चक्रे कीर्णम्; नलः कुशाग्रजलेन 'आपोहिष्ठा' इत्यादि मन्त्रं पठन् मान्त्रं स्नानं कृतवान् इत्यर्थः। 'कॄ विक्षेपे' इति धातोः कर्मणि लिट् ॥ १२ ॥

( कुशाके ) मूल, मध्य तथा अग्र भागमें निवास करने वाले क्रमशः ब्रह्मा, विष्णु तथा शङ्करके क्रमशः कमण्डलु, चरण तथा मस्तकमें स्थित गङ्गाके तरङ्गोंसे निकले हुए निर्मल ( पक्षा०—पवित्रतम ) जलको कुशाओंसे उस ( नल ) ने मस्तकपर छिड़का अर्थात् मार्जन किया। [ पुराणोंमें प्रसिद्धि है कि ब्रह्माके कमण्डलु, विष्णुके चरण तथा शङ्करके मस्तकमें गङ्गाका सर्वदा निवास रहता है। नलने कुशाओंसे अपने मस्तक पर गङ्गा-जल छिड़ककर मार्जन किया ]॥ १२ ॥

प्राणमायतवतो जलमध्ये मञ्जिमानमभजन्मुखमस्य ।
आपगापरिवृढोदरपूरे पूर्वकालमुषितस्य सुधांशोः ॥ १३ ॥

प्राणमिति। जलस्य उदकस्य, मध्ये अभ्यन्तरे, प्राणमायतवतः प्राणायामं कृतवतः अस्य नलस्य, मुखं वदनम्, कर्त्तृ । पूर्वकालं समुद्रमन्थनात् प्राक्, आपगापरिवृढस्य नदीभर्त्तुः समुद्रस्य, उदरपूरे जलगर्भप्रवाहमध्ये, उषितस्य कृतवासस्य, सुधांशोः चन्द्रस्य, मञ्जिमानं सौन्दर्यम्, अभजत् अलभत, समुद्रोदरमध्यस्थचन्द्रसदृशं दर्शनीयमभूदित्यर्थः ॥ १३ ॥

जलके भीतर प्राणायाम किये हुए इस नलका मुख ( समुद्र-मथनसे ) पहले समुद्रके प्रवाहके भीतर वर्तमान चन्द्रके सौन्दर्यको प्राप्त किया। [ नासिका तथा मुखकी वायुका अङ्गुष्ठ एवं कनिष्ठासे ग्रहण, अवरोध तथा त्याग करते हुए अघमर्षण करनेवाले नलका मुख समुद्रमध्यगत चन्द्रके तुल्य शोभने लगा ]॥ १३ ॥

मर्त्यलोकमदनः सदशत्वं बिभ्रदभ्रविशदद्युति तारम् ।
अम्बरं परिदधे विधुमौलेः स्पर्द्धयेव दशदिग्वसनस्य ॥ १४ ॥

मर्त्यलोकेति। मर्त्यलोकमदनः भूलोककन्दर्पः, नलः इति शेषः। दश दशसङ्ख्यकाः, दिशः ककुभ एव, वसनं वस्त्रं यस्य तस्य दिगम्बरस्य, विधुमौलेः चन्द्रशेखरस्य, शम्भोरित्यर्थः। स्पर्द्धयेव साम्यबोधहेतुकाहमिकयेव, मदनत्वादेव मदनारिणा हरेण सह स्पर्द्धा युज्यते इति भावः। सदशत्वं दशाभिः प्रान्तविलम्बिदीर्घतन्तुभिः सह वर्त्तमानम्, आकाशपक्षे—दशभिः दिग्विभागैः सह युक्तम्; तस्य भावः तत्त्वं सदशत्वम्, बिभ्रत् धारयत्, 'ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम्' इत्यादिस्मृत्या सदशवस्त्रधारणस्य प्रशस्तत्वादिति भावः। तथा अभ्रस्येव शारदमेघस्येव, तदाख्यस्य शुभ्रधातुविशेषस्येव वा, विशदा शुभ्रा, द्युतिः प्रभा यस्य तत् तादृशम्, तारं महत् सूक्ष्मतरं वा, अन्यत्र—अभ्रेषु मेघेषु, विशन्त्यः प्रवेशं कुर्वन्त्यः, अत एव

अद्युतयः दीप्तिरहिताः, ताराः नक्षत्राणि यस्मिन् तत्तादृशम्, अम्बरं वस्त्रम् आकाशञ्च। 'अम्बरं व्योम्नि वाससि' इत्यमरः । परिदधे परिहितवान् ॥ १४ ॥

मृत्युलोकके कामदेव ( नल ) ने दश दिशारूपी वस्त्रवाले अर्थात् दिगम्बर चन्द्रशेखर ( शङ्करजी ) के साथ मानो स्पर्द्धा ( 'मैं भी शङ्करजी बन जाऊँ'—मानो इस भावना ) से किनारीयुक्त ( पक्षा०—दश संख्यायुक्त ) शरत्कालीन मेघ ( या—अभ्रक ) के समान ( शुभ्र ) कान्तिवाले, बड़े ( या—अत्यन्त महीन ) वस्त्र ( पक्षा०—आकाश ) को धारण किया । [ कामदेवका कामदेव-शत्रु शङ्करजीके साथ स्पर्द्धाकर तत्सदृश होनेकी इच्छा करना उचित ही है । नलने पहले आर्द्रवस्त्र पहने ही लालमृत्तिकाका तिलक, कुशमार्जन तथा अघमर्षण किया; तदनन्तर श्वेत किनारीदार एवं महीन वस्त्रको पहना ] ॥ १४ ॥

**भीमजामनु चलत् प्रतिवेलं संयियंसुरिव राजऋषीन्द्रः ।**
**प्राववार हृदयं स समन्तादुत्तरीयपरिवेषमिषेण ॥ १५ ॥**

भीमजामिति । राजऋषीणाम् ऋषिवत् सदाचारसम्पन्ननृपतीनां मध्ये । राजा ऋषिः, 'ऋत्यकः' इति प्रकृतिभावः । इन्द्रः श्रेष्ठः, सः नलः, प्रतिवेलम् अनुक्षणम्, भीमजाम् आत्मप्रियां दमयन्तीम्, अनु लक्ष्यीकृत्य, चलत् गच्छत्, हृदयं वक्षः अन्तःकरणञ्च, संयियंसुरिव संयन्तुमिच्छुरिव, बद्धुमिच्छुः सन्निवेत्यर्थः । स्वहृदयस्य सर्वदा स्वं विहाय अन्यत्र गमनस्य अन्यायत्वात् तस्य बन्धनेच्छा इति भावः । उत्तरीयस्य उत्तरासङ्गस्य, यः परिवेषः परिधिः, हृदयोपरि वेष्टनमित्यर्थः । तस्य मिषेण व्याजेन, समन्तात् सर्वतः, प्राववार प्रावृतवान्, स्वहृदयमेवेति शेषः ॥१५॥

राजर्षिराज ( नल ) ने प्रतिक्षण दमयन्तीको लक्षितकर चलते हुए-से हृदय ( वक्षःस्थल, पक्षा०—अन्तःकरण ) को दुपट्टेसे बांधनेके छलसे रोका । [ एक वस्त्रसे किसी कर्मके अनुष्ठान करनेका निषेध होनेसे नलने दुपट्टेको ओढ़ा ] ॥ १५ ॥

**स्नानवारिघटराजदुरोजा गौरमृत्तिलकबिन्दुमुखेन्दुः ।**
**केशशेषजलमौक्तिकदन्ता तं बभाज सुभगाऽऽप्लवनश्रीः ॥१६॥**

स्नानेति । स्नानवारिघटौ स्नानीयोदककुम्भावेव, राजन्तौ शोभमानौ, उरोजौ कुचौ यस्याः सा तादृशी, गौरः शुभ्रवर्णः, शुष्कत्वादिति भावः । मृत्तिलकबिन्दुः मृत्तिकाकृतवर्त्तुलतिलकमेव, मुखेन्दुः वदनचन्द्रः यस्याः सा तादृशी, केशशेषाणि कुन्तलेषु अवशिष्टानि, जलमौक्तिकानि मुक्तातुल्यवारिबिन्दव एव, दन्ताः दशनाः यस्याः सा तादृशी । 'नासिकोदर—' इत्यादिना पक्षे ङीषो विधानादन्यत्र पक्षे टाप् । सुभगा रम्या, नलाङ्गसङ्गलाभादिति भावः । आप्लवनस्य श्रीः स्नानशोभा, तं नलं, बभाज सिषेवे ॥ १६ ॥

स्नानार्थ जलके घटरूप स्तनोंवाली, गौरवर्ण मिट्टीके गोलाकारबिन्दुरूप मुखचन्द्रवाली, केशमें अवशिष्ट मोतीतुल्य जलबिन्दुरूप दाँतोंवाली सुन्दर ( पक्षा०—सौभाग्यवती ) स्नान-

शोभाने उस ( नल ) का सेवन किया। ['ऊर्ध्ववृत्ततिर्यगर्द्धचन्द्राकारा वर्णानां क्रमात्तिलकाः' अर्थात् 'ऊपर, गोलाकार, तिर्च्छा और अर्द्धचन्द्राकार ब्राह्मणादि वर्णोंका क्रमशः तिलक होता है' इस 'दक्ष-वचनके अनुसार नलके द्वारा लगाया गया गोलाकार मिट्टीका तिलक स्नानलक्ष्मीके मुखचन्द्रतुल्य था और 'हस्तवस्त्रैर्न मार्जयेत्' अर्थात् 'स्नानके बाद हाथ या कपड़ेसे शिरको न पोंछे' इस 'व्यास'—वचनके अनुसार शिर नहीं पोंछनेसे केशमें मुक्तातुल्य जलकी बूँदे स्नानलक्ष्मीके दन्त तुल्य थीं ] ॥ १६ ॥

श्वैत्यशैत्यजलदैवतमन्त्रस्वादुताप्रमुदितां चतुरक्षीम्।
वीक्ष्य मोघधृतसौरभलोभं घ्राणमस्य सलिलघ्रमिवाभूत् ॥१७॥

श्वैत्येति। अस्य नलस्य, घ्राणं घ्राणेन्द्रियम्, नासिकेत्यर्थः। चतुर्णां चतुःसङ्ख्यकानाम्, अक्षाणां नयनत्वक्श्रोत्ररसनाख्यानाम् इन्द्रियाणां समाहारः चतुरक्षी तां चतुरक्षीम्, श्वैत्येन जलस्य श्वेततया, तेन नेत्रं प्रमुदितमित्याशयः। शैत्येन जलस्यैव शीतत्वेन, तेन च त्वक् प्रमुदितेत्याशयः। जलं वारि, दैवतं देवता यस्य तेन तादृशेन मन्त्रेण 'ऋतञ्च सत्यञ्चाभिध्यात्तपसः' इत्यादिमनुना, तच्छ्रवणेन च श्रोत्रेन्द्रियं प्रमुदितमित्याशयः। तथा स्वादुतया जलस्यैव माधुर्येण च, तेन च रसना प्रमुदितेत्याशयः। प्रमुदितां प्रहृष्टाम्, वीक्ष्येव दृष्ट्वेव, मोघं व्यर्थः यथा भवति तथा, धृतः प्राप्तः, सौरभे सौगन्ध्ये, द्रव्यान्तरस्येति शेषः। लोभः लोलुपता येन तत् तादृशं सत् , सलिलं जलम्, जिघ्रति घ्राणविषयीकरोतीति तत् तादृशं सलिलघ्रम्। 'अतोऽनुपसर्गे कः'। अभूत् अजायत, अघमर्षणकाले ऋतञ्च इत्यादि मन्त्रं पठन् जलं जिघ्रति स्मेति निष्कर्षः॥ १७ ॥

( जलकी ) स्वच्छता, शीतलता, जलदेवताक ( अघमर्षण ) मन्त्र तथा स्वादसे हर्षित ( क्रमशः—नेत्र, त्वक् , कान और जीभ—इन ) चार इन्द्रियोंको देखकर इस ( नल ) की नासिका व्यर्थमें ही ( अन्य द्रव्यगत ) सुगन्धके लोभको ग्रहण की हुई-सी अर्थात् अन्य द्रव्यके सुगन्धको चाहती हुई-सी पानीको सूंघती थी। [ पृथ्वीमें गन्धका होना पृथ्वीका असाधारण गुण है तथा जलमें उस गन्ध गुणका सर्वथा अभाव रहता है; द्रव्यान्तरसे सुवासित जलद्वारा देवोंको स्नान करानेका शास्त्रीय निषेध होनेसे औपाधिक सौरभका भी वैसे जलमें सम्भव नहीं है; अत एव द्रव्यान्तरमें सौरभ प्राप्त करनेका लोभ करनेवाली नाकने जो जलको सूंघा वह व्यर्थ ही था, लोभीका विवेकशून्य होकर निष्फल प्रयास करना उचित ही है। नल 'ऋतञ्च सत्यं···' मन्त्रसे अघमर्षण करने लगे ] ॥ १७ ॥

( राशि भानुमदुपस्थितयेऽस्मिन्नात्तमम्बु किरति स्वकरेण।
भ्रान्तयः स्फुरति तेजसि चक्रुस्त्वष्टृतर्कुचलदर्कवितर्कम् ॥१॥ )

---

१. अयं श्लोकः 'प्रकाश' व्याख्यया सहैवात्र निहितः। २. 'स्फुरिततेजसि' इति पाठान्तरम्।

राज्ञीति । अस्मिन् राज्ञि भानुमतः सूर्यस्योपस्थितये उपस्थानार्थमात्तं गृहीतमर्घ्यदानसम्बन्धि अर्घ्यदानानन्तरं वा। 'असावादित्यः—' इत्यादिमन्त्रपूर्वं जलं शिरःपरितः स्वपाणिना स्फुरति प्रकाशमाने तेजसि सौरप्रभाप्रसरे मध्ये गलद्बिन्दुक्रमेण किरति सति भ्रान्तयः क्षिप्तोदकस्यैव प्रादक्षिण्यपरिभ्रमणानि लोकस्य त्वष्टुर्विश्वकर्मणः तर्कुः शाणचक्रं तत्र घर्षणवशाच्चलतो भ्राम्यतो विष्वक्पतनशीलतेजःकणस्यार्कस्य वितर्कं तद्विषयं विशिष्टमूहं चक्रुः । प्रकाशमानसौरप्रभाप्रदक्षिणप्रक्षिप्तगलद्बिन्दुजलभ्रमणदर्शनेन विश्वकर्मणा सूर्यः पुनरपि शाणचक्रे धृतः किम् ?, अत एवैतेऽणवः कणाः पतन्तीति लोकस्य तदानीं बुद्धिरभूदित्यर्थः । भानुमदुपस्थितये गृहीतम्बु स्वकरेण विक्षिपत्यस्मिन् राज्ञि विषये लोकस्य भ्रान्तयो नलाङ्गप्रभासरे प्रकाशमाने सति निशाणचक्रपरिभ्रमत्सूर्यसम्भावनां लोकस्य चक्रुरिति वा । राज्ञा यदम्बु गृहीतं तस्मिन्नुत्क्षिप्ते जले स्फुरति प्रतिफलति रवितेजसि जायमाना भ्रान्तयो भ्रमणानि त्वष्टृतर्कुचलदर्कवितर्कं चक्रुः। उत्क्षिप्ता अपो वियति भ्रमन्त्यः पतन्ति, तत्प्रतिबिम्बिते तेजस्यपि भ्रमणानि जायन्ते । तत्रोत्प्रेक्षेति वा। अर्घ्यदानं सूर्योपस्थानञ्च कृतवानिति भावः । 'स्फुरिततेजसी'ति पाठे नलविशेषणम् ॥ १ ॥

इस राजा ( नल ) के सूर्योपस्थान करनेके लिए स्फुरित होते हुए सूर्य-प्रभा-समूहके मध्यमें ( 'असावादित्यः···' मन्त्रोच्चारणपूर्वक ) अपने हाथसे लिये हुए जलको फेंकनेपर देखनेवालोंको घूमते हुए उस जलके पतनने विश्वकर्माके शाणपर पुनः चढ़ाये गये सूर्यके तर्कको उत्पन्न कर दिया अर्थात् सूर्योपस्थानके समय अपने शिरके चारो ओर घुमाकर फेंके गये जलमें सूर्यकी प्रभा पड़ी तो प्रदक्षिणक्रमसे गिरते हुए उस जलसे ऐसा ज्ञात होता था कि विश्वकर्माने अपने शाणपर सूर्यको पुनः चढ़ाया है ॥ १ ॥

सम्यगस्य जपतः श्रुतिमन्त्राः सन्निधानमभजन्त कराब्जे ।
शुद्धबीजविशदस्फुटवर्णाः स्फाटिकाक्षवलयच्छलभाजः ॥ १८ ॥

सम्यगिति । शुद्धानि आगमोक्तक्रमोच्चारणान्निर्दोषाणि, बीजानि वह्निवारुणादिमूलमन्त्राणि येषु ते च ते विशदाः निर्मलाः, स्फुटाः स्पष्टाश्च, वर्णाः अक्षराणि येषां ते चेति तथोक्ताः। शुद्धबीजाश्च ते विशदस्फुटवर्णाश्चेति विशेषणसमासः। श्रुतिमन्त्राः वेदोक्तमन्त्राः गायत्र्यादयः, शुद्धानि अदुष्टानि, बीजानि गुडकानीत्यर्थः। यस्य तच्च तत्, विशदः शुभ्रः, स्फुटः उज्ज्वलश्च, वर्णः प्रभाविशेषः यस्य तच्चेति तत्, स्फाटिकं स्फटिकमयम्, यत् अक्षवलयं जपमालाः, तस्य छलं व्याजम्, भजन्ति आश्रयन्ति ये ते तादृशाः सन्तः, सम्यक् सुष्ठु यथा तथा, जपतः जपं कुर्वतः, अस्य नलस्य, करः पाणिरेव, अब्जं कमलं तस्मिन्, सन्निधानं सान्निध्यम्, अभजन्त प्राप्ताः, इवेति शेषः ॥ १८ ॥

( आगमोक्त क्रमसहित उच्चारण करनेसे ) निर्दोष ( वह्नि, वरुण आदिके ) बीजोंसे स्फुट

अर्थात् मात्रादिके सम्यक् प्रकार उच्चारण करनेसे सन्देहरहित अक्षरोंवाले (पक्षा०—त्रासादि दोषहीन स्फटिकके मणिरूपी बीजोंमें स्वच्छकान्तिवाले, अथवा—मणिरूपी बीज ही है अक्षर जिनके ऐसे ) तथा स्फटिकाक्षमालाके कपटको प्राप्त अर्थात् नलकी अधिक भक्तिसे स्फटिकाक्ष मालारूपमें परिणत होकर मूर्तिमान् हुए वेदमन्त्र सम्यक् प्रकारसे जप करते हुए इस ( नल ) के सामीप्यको प्राप्त किये अर्थात् समीपमें आकर साक्षात् रूपसे रहने लगे। [ नलने सूर्योपस्थान करनेके बाद स्फटिककी मालासे गायत्रीका जप किया ] ॥ १८ ॥

पाणिपर्वणि यवः पुनराख्यद्देवतर्पणयवार्पणमस्य ।
न्युप्यमानजलयोगितिलौघैः स द्विरुक्तकरकालतिलोऽभूत् ॥ १९ ॥

पाणिरिति । अस्य नलस्य, पाणेः करस्य, पर्वणि ग्रन्थौ, यवः यवकारा स्पष्टरेखा, देवतर्पणे देवसम्बन्धितर्पणक्रियायाम्, यवानाम् अर्पणं दानम् । कर्म । पुनराख्यत् पुनरुक्तम् अकरोत् । पुनः पुनर्दानमभापतेवेत्यर्थः । पाणिपर्वस्थयवैरेव तदर्पणसम्पादनादिति भावः । तथा स नलः, न्युप्यमानेन पितृभ्यः दीयमानेन । 'पितृदानं निवापः स्यात्' इत्यमरः । जलेन उदकेन, युज्यन्ते मिल्यन्ते ये तैः तादृशैः, तिलानां कृष्णतिलानाम्, ओघैः समूहैः करणैः, द्विरुक्तः वारद्वयमुक्तः, पुनरुक्त इत्यर्थः । द्विगुणीभूत इति यावत् । करकालतिलः पाणिस्थकृष्णवर्णतिलाकाररेखा यस्य सः तादृशः, अभूत् अजायत, इवेति शेषः । नलः देवानां पितॄणाञ्च तर्पणं कृतवानिति भावः । भाग्यवतां हस्ते यवाकाराः तिलाकाराश्च रेखाः दृश्यन्ते इति सामुद्रिकाः ॥

इस ( नल ) के हाथ ( की अङ्गुलियों ) के पर्व ( गांठों ) में स्थित यव (सामुद्रिक शास्त्रानुसार शुभसूचक यवाकार चिह्न-विशेष ) ने देवतर्पणमें दिये गये यवको पुनरुक्तकर दिया तथा पितृतर्पणमें जलके साथमें लिये गये तिल-समूह अर्थात् तिलोंसे वे नल ( पहलेसे ही हाथमें स्थित शुभसूचक ) काले तिलके चिह्नसे पुनरुक्त हो गये। [ नलके हाथकी अङ्गुलियोंके पर्वमें यव तथा तलहथीमें काले तिलका चिह्न पहलेसे ही था, अतएव क्रमशः देवतर्पण तथा पितृतर्पणमें नलने यव तथा तिल लेकर तर्पण किया तो वह यव तथा तिलका लेना पुनरुक्त हो गया। यवका हाथकी अङ्गुलियोंके पर्वमें तथा काले तिलका तलहथीमें होना सामुद्रिक शास्त्रके अनुसार शुभसूचक माना जाता है। देव-तर्पण तथा पितृ-तर्पणका यहां वर्णन होनेसे इसके मध्यगत ऋषितर्पणका भी करना सूचित होता है। नलने देवर्षिपितृतर्पण किया ] ॥ १९ ॥

पूतपाणिचरणः शुचिनोच्चैरध्वनाऽनितरपादहतेन ।
ब्रह्मचारिपरिचारिसुरार्चावेश्म राजऋषिरेप विवेश ॥ २० ॥

पूतपाणिरिति । एषः अयम्, राजऋषिः मुनितुल्यनृपतिः, नलः इति शेषः ।

---

१. '—करतालुतिलः' इति,—'करतालतिलः' इति, '—करनालतिलः' इति च पाठान्तराणि ।

'ऋत्यकः' इति प्रकृतिभावः । पूतौ प्रक्षालनेन पवित्रौ, पाणिचरणौ हस्तपादौ यस्य सः तादृशः सन्, इतरेषां ब्रह्मचारिव्यतिरिक्तानाम्, पादैः चरणैः, हतः क्षुण्णः इतरपादहतः, तादृशः न भवतीति अनितरपादहतः तेन जनान्तरपादास्पृष्टेन, अत एव शुचिना शुद्धेन, अध्वना मार्गेण साधनेन, ब्रह्मचारिणः ब्रह्मचर्यव्रतावलम्बिन एव, परिचारिणः परिचारकाः यत्र तत् तादृशम्, उच्चैः उन्नतम्, सुरार्चावेश्म देवपूजागृहम्, विवेश प्रविष्टवान् । पूजार्थमिति भावः ॥ २० ॥

( धोनेसे ) पवित्र हाथ-पैरवाले राजर्षि नलले दूसरेके चरणके स्पर्श नहीं होनेसे अर्थात् उस मार्गसे दूसरेके नहीं जानेसे शुद्ध ( अथवा—अधिक शुद्ध ) मार्गसे ( अथवा—ऊंचे सोपानमार्गसे ) ब्रह्मचारी परिचारक हैं जिसमें ऐसे विशाल देव-पूजा-मन्दिरमें प्रवेश किया ॥ २० ॥

क्वापि यन्नभसि धूपजधूमैर्मेचकागुरुभवैर्भ्रमराणाम् ।
भूयते स्म सुमनःसुमनःस्रग्दामधामपटले पटलेन ॥ २१ ॥

क्वेति । यस्य सुरार्चावेश्मनः, नभसि आकाशे, अभ्यन्तराकाशे इत्यर्थः । क्वापि कस्मिंश्चित् प्रदेशे, सुमनःसुमनसां मालतीपुष्पाणाम् । 'सुमनाः पुष्पमालत्योः' इति मेदिनी । स्रग्दामभिः मालासमूहैः, कल्पितस्येति शेषः । धाम्नः गृहस्य, गृहाकाररचनाविशेषस्येत्यर्थः । पटले प्रान्ते, मेचकागुरुभवैः कृष्णागुरुसम्भवैः, धूपजधूमैः धूपोत्थधूमैः, भ्रमराणां भृङ्गाणाम्, पटलेन समूहेन, भूयते स्म भूतम् । पुष्पाणामुपरि भ्रमरैः भाव्यम्, अत एव धूपजधूमा एव तत्समूहस्वरूपा जाता इत्यर्थः ॥ २१ ॥

जिस ( देव-पूजा-मन्दिर ) के आभ्यन्तराकाशमें मालतीपुष्पोंके माला-समूहके बने ( मालती-पुष्प-रचित ) गृह ( देवोंकी पूजाके लिए लाये गये पुष्पोंकी मालाओंके ( रखनेका स्थान—बांस आदिके बने डलिया, डोलची आदि पात्रविशेष ) अथवा—देव-पूजार्थ लाये गये पुष्पोंकी कण्ठमालाओं तथा शिरोमालाओंके गृह (……पात्रविशेष ) अथवा—देवपूजार्थ लाये गये पुष्पोंकी मालाओंके स्थान ( लटकनेकी जगह अर्थात् पूजामन्दिरके छज्जेके ) ऊपरमें चमकीले एवं काले रंगके अगरुधूपके धूएं ही भ्रमर-समूह हुए । [ उक्तरूप पुष्पमाला गृहके ऊपर अगरके धूंए ही परागग्रहणार्थं आये हुए भ्रमर-समूहके समान ज्ञात होते थे । पुष्पगृहके ऊपर भ्रमर-समूहका होना उचित ही है ] ॥ २१ ॥

साङ्कुरेव रुचिपीततमा यैर्यैः पुराऽस्ति रजनी रजनीव ।
ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥ २२ ॥

साङ्कुरेति । रजनी रात्रिः, यैः दीपैः, रुचिभिः दीप्तिभिः साधनैः, पीतं ग्रस्तम्, विनाशितमित्यर्थः । तमः अन्धकारं यस्यां सा रुचिपीततमा सती, साङ्कुरा तेजोऽङ्कुरसहिता इव, पुरा प्राक्, अस्ति आसीत् 'पुरा लङ् चास्मे' इति भूते लट् । रजनी रात्रिरेव, यैश्च दीपैः, रुचिभिः दीप्तिभिः, पीततमा अत्यर्थं पीतवर्णा सती, साङ्कुरा

समरोहा, दीपरूपाङ्कुरयुक्तेत्यर्थः । रजनी इव हरिद्रेव, पुरा प्राक्, अस्ति आसीत् । 'रजनी पीतिकायां रात्रौ हरिद्रायाम्' इति विश्वः । हेमलतिकाः स्वर्णलता इवाऽस्थिताः, ते पूर्वोक्ताः, दीपाः आलोकवर्त्तयः, यत्र सुरार्चावेश्मनि, त्रिदशेभ्यः, देवेभ्यःवितरितुम् उत्सर्गीकर्त्तुम् , धृताः स्थापिताः, परिचारकैरिति शेषः ॥२२॥

रात्रि, जिन ( दीपकों ) से कान्ति अर्थात् दीपक प्रकाशसे अन्धकारको नष्ट करनेवाली ( तेजके ) अङ्कुरसे युक्तके समान तथा जिन (दीपकों) से अतिशय पीले वर्णवाली अङ्कुरयुक्त हल्दीके समान थी, स्वर्णलताओंके समान उन दीपकोंको जिस ( देव-पूजा-गृह ) में ( परिचारकोंने ) देवोंके लिए रक्खा । [ पुजारियोंने देव-पूजा-गृहमें देवोंके लिए दीपक रक्खा ] ॥ २२ ॥

( यत्र[1] मौक्तिकमणेर्विरहेण [2]प्रीतिकामधृतवह्निपदेन ।
कुङ्कमेन परिपूरितमन्तः शुक्तयः शुशुभिरेऽनुभवन्त्यः ॥२॥ )

यत्रेति । यत्र देवागारे मौक्तिकमणेः प्रियतमस्य विरहेण कर्त्रा कुङ्कमस्य स्वोद्दीपनहेतुतया प्रीतिस्तया कामं दत्तं कामेन कर्त्रा वा दत्तं वह्नेः पदं दाहकत्वादिरूपोऽधिकारस्तद्रूपं चिह्नं वा यस्य तेन कुङ्कमकेसरेण परिपूरितमन्तर्मध्यभागमनुभवन्त्यो बिभ्राणाः शुक्तयः शुशुभिरे । वियोगिन्यो हि विरहाग्नितप्तं हृदयमनुभवन्ति । कुङ्कमपूर्णाः शुक्तयो वियोगिनीरूपेण वर्ण्यन्ते । यद्वा—मौक्तिकमणिविरहेणोपलक्षिताः शुक्तयः कुङ्कमस्य कामोद्दीपनहेतुतया या प्रीतिस्तया युक्तेन कामेन । अन्यत्पूर्ववत् । प्रीतो हि किञ्चित्पदं ददाति शुक्तयो विशिष्टेन कुङ्कमेनोपलक्षिताः सत्यो मौक्तिकमणिविरहेण पूर्णं मध्यमनुभवन्त्य इव शुशुभिरे इति प्रतीयमानोत्प्रेक्षा वा । 'प्रीते'ति पाठे स्वोद्दीपकत्वेन प्रीतात्कामाद्धृतं करेण लब्धं वह्निपदं येनेत्यर्थः । मुक्ताफलोत्पत्तिहेतुभूताः शुक्तयः पुत्रविरहेण मातरो यथा हृदयान्तर्दहन्ति, तथा कुङ्कमरूपमन्तर्दाहं वहन्त्यः शुशुभिरे इति वा ॥ २ ॥

जिस ( देव-पूजा-मन्दिर ) में मोती ( रूपी अत्यन्त प्रिय पुत्र ) के वियोगसे प्रेमसे अच्छी तरह ( या—कामदेवके द्वारा ) दिये गये अग्निस्थानीय कुङ्कमसे परिपूर्ण अन्तःस्तल ( मध्यभाग ) को प्राप्त करती हुई शुक्तियां ( सीपें ) शोभती थीं । ( अथवा—मोती ( रूप अतिप्रिय पुत्र) के विरहसे युक्त शुक्तियां······ ) । [ जिस प्रकार अतिशय प्रियपुत्रके विरह होनेसे उक्त पुत्रमें अतिशय प्रीतिसे माताएं उसकी विरहाग्निसे अन्तःकरणमें अतिशय जलती हुई पीडित होती हैं, उसी प्रकार स्वोत्पन्न पुत्र-स्थानीय मोतीके पृथक् होनेपर अग्नि-स्थानीय कुङ्कमसे परिपूर्ण मध्यभागवाली शुक्तियां अन्तर्दाहको धारण करती हुई-सी शोभती थी । मुक्ताशुक्तियोंमें कुङ्कम रखा गया ] ॥ २ ॥ ]

---

१. अयं श्लोकः 'प्रकाश' व्याख्यासहैवात्र स्थापितः ।
२. 'प्रीतकाम—' इति पाठान्तरम् ।

अङ्कचुम्बिघनचन्दनपङ्कं यत्र गारुडशिलाजममत्रम् ।
प्राप केलिकवलीभवदिन्दोः सिंहिकासुतमुखस्य सुखानि ॥२३॥

अङ्केति । यत्र सुरार्चावेश्मनि, गारुडशिलाजं मरकतमणिनिर्मितम्, अमत्रं पात्रम्, अङ्कं क्रोडम्, अभ्यन्तरभागमित्यर्थः । चुम्बति स्पृशतीति अङ्कचुम्बी, घनः सान्द्रः, चन्दनपङ्कः घृष्टचन्दनं यस्य तत्तादृशं सत्, केलिना क्रीडया, कवलीभवन् ग्रासीभवन् अभ्यन्तरं प्रविशन्निति यावत्, इन्दुः चन्द्रो यस्य तादृशस्य 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पुंवद्भावः । सिंहिकासुतमुखस्य राहुवदनस्य । सिंहिकानन्दनो राहुः' इति साधुः । सुखानि आनन्दान्, सादृश्यमिति भावः । प्राप लब्धवान् । इन्दु-चन्दनपङ्कयोः श्वैत्य-शैत्यसाम्यात् सिंहिकासुत-गारुडमणिपात्रयोश्च गोलत्वकृष्णवर्णत्वसाम्यादिति भावः । यत्र गृहे गारुडमणिपात्राणि चन्दनभरितानि सन्तीति निष्कर्षः ॥ २३ ॥

जिस ( देव-पूजा-गृह ) में मध्यमें रक्खे हुए चन्दन-पङ्क ( घिसे हुए चन्दन ) वाला मरकत मणिका बर्तन लीलापूर्वक ( अनायास ) ग्रस्त करते हुए चन्द्रवाले अर्थात् क्रीडापूर्वक चन्द्रको निगलते हुए राहु-मुखके ( शोभा ) को प्राप्त किया अर्थात् उक्तरूप राहुमुखके समान शोभने लगा । [ मरकत मणिमय पात्रमें चन्दन घिसकर रखा गया ] ॥२३॥

गर्भमैणमदकर्दमसान्द्रं भाजनानि रजतस्य भजन्ति ।
यत्र साम्यमगमन्नमृतांशोरङ्करङ्कुकलुषीकृतकुक्षेः ॥ २४ ॥

गर्भमिति । यत्र सुरार्चावेश्मनि, रजतस्य रौप्यस्य, भाजनानि पात्राणि कर्तृणि एणमदकर्दमेन कस्तूरीपङ्केन, सान्द्रं निबिडम्, परिपूर्णमित्यर्थः । गर्भं मध्यप्रदेशम्, भजन्ति प्राप्नुवन्ति सन्ति, अङ्केन चिह्नेन, कलङ्कात्मकेनेत्यर्थः । रङ्कुणा मृगेण, यद्वा—अङ्के क्रोडे, यो रङ्कुः मृगाकृतिचिह्नम्, तेन कलुषीकृतः मलिनीभूतः, कुक्षिः उदरं यस्य तथोक्तस्य, अमृतांशोः चन्द्रस्य, साम्यं समताम्, अगमन् प्रापन् । रजतभाजनानां शुभ्रत्वगोलाकारत्वसाम्यात् चन्द्रसादृश्यम्, कस्तूरीपङ्कस्य च कृष्णवर्णत्वात् क्रोडस्थहरिणतुल्यत्वं बोद्धव्यम् । यत्र देवपूजार्थं रजतपात्राणि घृष्टकस्तूरीपूर्णानि सन्तीति निष्कर्षः ॥ २४ ॥

जिस ( देव-पूजा-गृह ) में बीचमें कस्तूरी-लेपसे भरे हुए चांदीके बर्तन अङ्कमें ( कलङ्क- ) मृगसे श्यामवर्ण चन्द्रकी समानताको प्राप्त किये अर्थात् घिसे हुए कस्तूरीके लेपको बीचमें रखनेपर चांदीके बर्तन कलङ्कमृग युक्त पूर्णचन्द्रके समान शोभने लगे ॥२४॥

उज्जिहानसुकृताङ्कुरशङ्का यत्र धर्मगहने खलु तेने ।
भूरिशर्करकरम्भबलीनामालिभिः सुगतसौधसखानाम् ॥२५॥

उज्जिहानेति । धर्मेण सुकृतेन, गहने निबिडे धर्मगहने बहुविधधर्मानुष्ठानपूर्णे, अन्यत्र—धर्मारण्ये यत्र सुरार्चावेश्मनि, सुगतस्य बुद्धस्य, सौधानां सुधाधवलित-

प्रासादानाम् , शुभ्रचैत्यानामित्यर्थः । सखायः शुभ्रतया तत्सदृशाः इत्यर्थः, तेषां 'राजाहःसखिभ्यष्टच्' । भूरयः प्रभूताः, शर्कराः सिताः येषु तथोक्ताः, ये करम्भाः दधिसक्तवः 'करम्भा दधिसक्तवः' इत्यमरः। ते एव बलयः उपहाराः, नैवेद्यानीत्यर्थः । तेषाम्, आलिभिः पङ्क्तिभिः कर्त्रीभिः। उज्जिहानेषु उद्गच्छत्सु, सुकृताङ्कुरेषु पुण्यप्ररोहेषु, शङ्का संशयः, तेने विस्तारयामासे, जनयामासे इत्यर्थः । खलु इति निश्चितम् ॥ २५ ॥

धर्मसे परिपूर्ण जिस ( देव-पूजा-गृह, अथवा—जिस धर्मारण्य ) में बौद्ध-देवमन्दिरोंके समान, अधिक शक्करयुक्त दही-मिश्रित सत्तू ( या-भात ) बलि-समूहोंने उत्पन्न हुए पुण्याङ्कुरकी शङ्का पैदा करते थे । [ दधि युक्त सत्तू ( या-भात ) के बलिकी राशियोंको देखकर ये पुण्यके अङ्कुर उत्पन्न हुए हैं, ऐसा ज्ञात होता था । आम्रादिके वनमें आम्रादिके अङ्कुरके समान धर्मारण्यमें पुण्याङ्कुरकी उपत्ति होना उचित ही है । उस देव-पूजा-गृहमें शक्कर युक्त दही, सत्तू ( या-दही-भात ) की बलि देवोंके लिये अनेक स्थलों पर दी गयी थी ] ॥

खर्वमाख्यदमरौघनिवासं पर्वतं क्वचन चम्पकसम्पत् ।
मल्लिका कुसुमराशिरकार्षीत् यत्र च स्फटिकसानुमनुच्चम् ॥ २६ ॥

खर्वमिति । यत्र सुरार्चावेश्मनि, क्वचन क्वचित् प्रदेशे, चम्पकानां स्वर्णवर्णचम्पकपुष्पाणाम् , सम्पत् समृद्धिः, राशिरित्यर्थः । अमरौघस्य देवसमूहस्य, निवासं वासस्थलभूतम् , पर्वतं सुमेरुम् , खर्वं ह्रस्वम् , आख्यत् उक्तवती तथा मल्लिकाकुसुमानां मल्लिपुष्पाणाम्, राशिः समूहः, स्फटिकसानुं शुभ्रकैलासपर्वतम् अनुच्चं ह्रस्वम् , अकार्षीत् विदधे ॥ २६ ॥

जिस ( देव-पूजा-गृह ) में चम्पाके फूलोंकी सम्पत्ति ( ढेर ) ने देव-निवास पर्वत अर्थात् सुमेरु पर्वतको छोटा कह दिया तथा मल्लिका-पुष्पकी राशिने कैलास पर्वतको नीचा ( छोटा ) कर दिया [ चम्पा तथा मल्लिकाके फूलोंके ढेरोंसे क्रमशः सुमेरु तथा कैलास पर्वत भी छोटे जान पड़ते थे । देव-पूजा-गृहमें चम्पा तथा मल्लिकाके फूलोंके ढेर पूजार्थ रखे गये थे ] ॥ २६ ॥

स्वात्मनः प्रियमपि प्रति गुप्तिं कुर्वती कुलवधूमवजज्ञे ।
हृद्यदैवतनिवेद्यनिवेशाद् यत्र भूमिरवकाशदरिद्रा ॥ २७ ॥

स्वात्मन इति । यत्र सुरार्चावेश्मनि, भूमिः पृथिवी, देवगृहाभ्यन्तरप्रदेश इत्यर्थः । हृद्यानां मनोज्ञानाम् , दैवतानां देवतासम्बधिनाम् , निवेद्यानाम् उपहर्त्तव्यानाम् , नैवेद्यानामित्यर्थः । दैवतेभ्यः प्रतिष्ठितदेवताभ्यः, निवेद्यानाम् उत्सर्जनीयानामिति वा, निवेशात् स्थापनात् हेतोः, अवकाशदरिद्रा निरन्तराला सती, सर्वथा दृष्टेरगोचरा सतीत्यर्थः। स्वात्मनः निजायाः, प्रियं दयितं भर्त्तारम् , भूपतिं नलमित्यर्थः । प्रति अपि नलम् उद्दिश्यापीत्यर्थः । गुप्तिं गोपनम् , स्वाङ्गाच्छादनमित्यर्थः । कुर्वती विदधती, कुलवधूं सद्वंश्यामङ्गनाम् , अवजज्ञे अवज्ञातवती ।

कुलवधूरपि स्वभर्त्तारं प्रत्यपि लज्जाधिक्यात् स्वशरीरं गोपयति, अतः सा भूमिः तत्सदृशी जाता इत्यर्थः। बहूनि नैवेद्यानि तत्र गृहे स्थापितानि आसन् इति निष्कर्षः ॥ २७ ॥

जिस ( देव-पूजा-गृह ) में मनोहर देवार्थ नैवेद्य रखनेसे अवकाश-रहित ( तिल भी रखनेके लिए स्थान-शून्य ) भूमिने अपने पति ( नल ) के प्रति भी ( लज्जावश शरीरको छिपाती हुई कुलाङ्गनाको भी तिरस्कृत कर दिया। [ जिस प्रकार कुलाङ्गना लज्जावश अपने शरीरका थोड़ा-सा भी भाग पतिको भी नहीं दिखलाना चाहती, उसी प्रकार उस देवपूजा-गृहमें देवार्पणके लिए रखे गये नैवेद्योंसे पृथ्वीमें तिल रखनेको भी स्थान नहीं बचे रहनेसे मालूम पड़ता था कि पृथ्वीने भी अपने पति ( नल ) से अपने सम्पूर्ण शरीरको छिपा लिया है। उस देव-पूजा-गृहमें देवोंको चढ़ानेके लिए अनेक प्रकारके नैवेद्य रखे थे, जिनसे तिल रखनेके लिए पृथ्वी लेशमात्र भी नहीं दिखलायी पड़ती थी ] ॥ २७ ॥

**यत्र कान्तकरपीडितनीलग्रावरश्मिचिकुरासु विरेजुः ।**
**गातृमूर्द्धविधुतेरनुबिम्बात् कुट्टिमक्षितिषु कुट्टमितानि ॥ २८ ॥**

**यत्रेति । यत्र सुरार्चावेश्मनि, कान्तस्य प्रियस्य चन्द्रकान्तमणेश्च। 'कान्तः प्रिये चन्द्रकान्ते' इति यादवः। करेण हस्तेन अंशुना च। 'बलिहस्तांशवः कराः' इत्यमरः। पीडितानां सुदृढाकर्षणेन व्यथितानाम् स्पर्शेन विकारं प्रापितानाञ्च, वर्णान्तरं प्रापितानामित्यर्थः। नीलग्राव्णाम् इन्द्रनीलमणीनाम्, रश्मयः दीप्तयः एव, चिकुराः केशाः यासां तादृशीषु, कुट्टिमक्षितिषु मणिनिबद्धभूमिषु, गातुः गायकस्य, मूर्द्धविधुतेः शिरःकम्पनस्य, अनुबिम्बात् प्रतिबिम्बपतनात् हेतोः, कुट्टमितानि शिरःकम्पनरूप-श्रृङ्गारचेष्टाविशेषाः, विरेजुः शुशुभिरे। अत्र भरतमुनिः—'केशस्तनाधरादिग्रहणेऽपि हर्षसम्भ्रमोत्पन्नं शिरः-करकम्पनं कुट्टमितमिति विज्ञेयं सुखं विदुः' इति। मणिबद्धा भूमयो गायकाश्च यत्र सन्तीति भावः ॥ २८ ॥**

जिस ( देव-पूजा-गृह ) में पति ( पक्षा०—चन्द्रमा, या सूर्य ) का कर ( हाथ, पक्षा०—किरण ) छूए गये नीलम मणियोंकी किरणरूप केशवाली मणिबद्ध भूमिमें गायकोंके ( गाते समय ) कँपते हुए मस्तकके प्रतिबिम्बित होनेसे ( नायकके द्वारा किये जाते हुए दन्तक्षतका निषेध करनेके लिए ) शिरः कम्पनके समान शोभने लगा। [ गायकलोग गान करते हुए शिर हिलाते थे तो उसका प्रतिबिम्ब मणिमयी भूमिपर पड़कर ऐसा ज्ञात होता था कि पतिके चुम्बन या दन्तक्षत करनेके लिए उद्यत होनेपर नायिका जिस प्रकार शिर हिलाकर निषेध करती है उसी प्रकार चन्द्र ( या सूर्य ) की किरणसे छुई गयी चन्द्रकान्त ( या सूर्यकान्त ) मणिसे जड़ी गयी भूमिरूपिणी नायिका नीलममणिकी किरणरूप केश-समूहवाले शिरको कँपाकर निषेध कर रही हो। देवपूजागृहमें गायक लोग देवोंके भजन शिर हिला-हिलाकर गा रहे थे और वहांकी भूमि मणिमयी थी ] ॥ २८ ॥

नैकवर्णमणिभूषणपूर्णे स क्षितीन्दुरनवद्यनिवेद्ये।
अध्यतिष्ठदमलं मणिपीठं तत्र चित्रसिचयोच्चयचारौ ॥ २९ ॥

नैकेति। क्षितीन्दुः भूतलचन्द्रः, सः नलः, नैकवर्णाः विविधवर्णविशिष्टाः, ये मणयो रत्नानि, तेषां भूषणैः आभरणैः, पूर्णे व्याप्ते, अनवद्यानि निर्दोषाणि, निवेद्यानि उत्सर्जनीयानि द्रव्याणि यत्र तस्मिन्, तथा चित्राणां विविधप्रकाराणाम्, सिचयानां वस्त्राणाम्, उच्चयेन समूहेन, चारौ मनोज्ञे, तत्र सुरार्चावेश्मनि, अमलम् उज्ज्वलम्, मणिपीठं रत्नमयासनम्; अध्यतिष्ठत् अधिष्ठितवान्। सुरार्चनार्थमुपविवेश इत्यर्थः। 'अधिशीङ्स्थासाम्' इति अधिकरणस्य कर्मसंज्ञा ॥ २९ ॥

यह पृथ्वीके चन्द्रमा नल अनेक रंगोंवाले मणियोंके भूषणोंसे पूर्ण, अनिन्दनीय ( दर्शनीय तथा शुद्धतम ) देवार्पणीय पदार्थों वाले तथा चित्र-विचित्र वस्त्र-समूहसे सुन्दर उस ( देव-पूजा-गृह ) में रत्न जड़े ( या-रत्नके बने ) हुए आसन पर बैठे। ( पाठा०—चित्र-विचित्र वस्त्रसमूहसे सुन्दर रत्न जड़े हुए आसन पर बैठे ) ॥ २९ ॥

सम्यगर्चति नलेऽर्कमतूर्णं भक्तिगन्धिरमुनाऽकलि कर्णः।
श्रद्धधानहृदयं[1] प्रति चान्तः साम्बमम्बरमणिर्निरचैषीत् ॥ ३० ॥

सम्यगिति। नले नैषधे, अतूर्णम् अव्यग्रम्, व्यग्रत्वे सम्यक्त्वाऽभावादिति भावः। अत एव सम्यक् सुष्ठु यथा भवति तथा, अर्कं सूर्यम्, अर्चति आराधयति सति, अमुना अर्केण, कर्णः राधेयः, भक्तेः श्रद्धाविशेषस्य, गन्धः लेशः अस्ति यस्य सः तादृशः भक्तिगन्धिः अल्पभक्तिः। 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः। 'अल्पाख्यायाम्' इति समासान्तः इत्। अकलि निरधारि। अम्बरमणिः सूर्यः, साम्बं तदाख्यकृष्णसुतम्, प्रति च उद्दिश्यापि, अन्तः अन्तःकरणे, श्रद्धधानं भक्तिमत्, हृदयं चेतो यस्य तादृशम्, साम्बः केवलं मनसा भक्तः, न तु पूजक इति भावः। निरचैषीत् निश्चितवान्। कर्णापेक्षया तथा साम्बापेक्षया च नल एव मे परमभक्त इति निश्चिकाय इत्यर्थः। 'यावन्न दीयते चार्घ्यं भास्कराय महात्मने' इत्यादिना सूर्यार्घ्यदानमन्तरेण देवतान्तरपूजानिषेधात् नलः प्रथमं सूर्यमेवार्चयामासेति भावः॥

( पञ्चदेव-पूजनमें सर्वप्रथम सूर्यपूजाका वर्णन दो श्लोकों ( २१।३०-३१ ) से करते हैं—) अव्यग्रताके साथ नलके सूर्यकी सम्यक् प्रकारसे पूजा करते रहनेपर इस ( सूर्य ) ने ( कुन्ती-पुत्र ) कर्णको थोड़ी भक्तिवाला माना तथा ( कृष्ण-पुत्र ) साम्बको हृदयमात्रसे ही श्रद्धालु निश्चित किया अर्थात् नलके समान कार्यरूपसे भी पूजा करनेवाला नहीं निश्चित किया, किन्तु केवल मनसे ही श्रद्धालु निश्चित किया। [ पञ्चदेवपूजनमें सूर्यका पूजन सर्वप्रथम करनेका विधान होनेसे यहां पहले सूर्यपूजनका वर्णन किया गया है। सूर्य-भक्त कर्ण तथा साम्बसे भी नलको सूर्यने अधिक भक्तिमान् माना ] ॥ ३० ॥

---

१. 'हृदयप्रति' इति 'प्रकाश'सम्मतं पाठान्तरम्।

तत्तदर्यमरहस्यजपेषु स्रङ्मयः शयममुष्य बभाज ।
रक्तिमानमिव शिक्षितुमुच्चै रक्तचन्दनजबीजसमाजः ॥ ३१ ॥

तदिति । तेषां तेषां श्रौतस्मार्त्तानाम्, अर्यम्णः सूर्यस्य, रहस्यानां मन्त्राणाम्, जपेषु असकृत् गूढोच्चारणकाले, स्रङ्मयः जपमालास्वरूपः, रक्तचन्दनजानां कुचन्दनोद्भवानाम्, बीजानां गुटिकानाम् । 'तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् । कुचन्दनम्' इत्यमरः । समाजः समूहः उच्चैः अधिकम्, रक्तिमानं रक्तत्वम्, शिक्षितुमिव अभ्यसितुमिव, अमुष्य नलस्य, शयं हस्तम्, बभाज सिषेवे । नलपाणितलस्य प्रकृत्या एव रक्तिमातिशयात् शिक्षार्थं यथा शिष्याः उपाध्यायं सेवन्ते, तथा रक्तिमाधिक्यशिक्षार्थं तत्पाणितलम् आश्रयामास इति भावः ॥ ३१ ॥

उन-उन सूर्य-मन्त्रोंके जपोंमें मालारूप रक्तचन्दन-बीज-समूहने मानो अधिकतर लालिमाको सीखनेके लिए इस ( नल ) के हाथ को प्राप्त किया । [ नल जब रक्तचन्दनके बीजोंकी मनियोंवाली मालासे सूर्यके श्रौत तथा स्मार्त मन्त्रोंको जपने लगे तो ऐसा मालूम होता था कि—'मानो यह रक्तचन्दन-बीज-समूह स्वभावतः अत्यधिक लाल नलके हाथसे अधिक लालिमाको सीखनेके लिए इनके हाथके पास आ गया है । शिक्षा लेनेके लिए शिष्यका गुरुके पास जाकर उसकी सेवा करना उचित ही है । सद्यःफलप्रद होनेसे नलने रक्तचन्दनके बीजोंकी मणिवाली मालासे सूर्य-मन्त्रोंका जप किया ] ॥ ३१ ॥

( हेमनामकतरुप्रसवेन त्र्यम्बकस्तदुपकल्पितपूजः ।
आत्तया युधि विजित्य रतीशं राजितः कुसुमकाहलयेव ॥ ३ ॥ )[1]

हेमेति । हेमनामकस्य धत्तूरस्य तरोः प्रसवेन विकसितकुसुमेन कृत्वा तेन [illegible] पूजा यस्य स त्र्यम्बको राजितः शुशुभे । उत्प्रेक्षते—रतीशं युधि विजित्य बलादात्तया गृहीतया कुसुमरूपकाहलया धत्तूरपुष्पाकारवाद्यविशेषेणेव । कुसुमकाहलयोपलक्षित इवेति वा । शराणां कौसुमत्वाद्वादित्राणामपि कौसुमतया युक्तत्वात्कामकाहलायाः कौसुमत्वमुचितमेव । पराभूतात्कामाद्बलाद्गृहीतया कौसुमकाहलयेव धत्तूरपुष्पेण रञ्जित इत्यर्थः । अन्योऽपि शत्रुं जित्वा बलाद्गृहीतेन तच्छत्रवादित्रादिना शोभते । सौन्दर्येण स्वस्पर्धितया स्वस्य शिवभक्तत्वात् कामस्य च शिवविरोधित्वात् स्वविरोधिनं स्वस्वामिविरोधिनं च स्मरं रणे जित्वा तस्माद्बलाच्छलेनैव गृहीतया कुसुमकाहलयेवास्य धत्तूरपुष्पेण कृत्वा नलेन कृतोपदः, अथ च कृतपूजः शुशुभे । सेवको हि स्वविरोधिनं स्वस्वामिविरोधिनं वा रणे जित्वा तच्छत्रवादित्रादि बलाद्गृहीत्वा स्वामिन उपदीकरोति । तेन च स्वामी शोभत इति वा । प्रियतरेण धत्तूरपुष्पेण स नलः शिवमपूपुजदिति भावः । 'धत्तूरः कनकाह्वयः' इत्यमरः । 'वाद्यभाण्डविशेषे तु काहला' इति विश्वः ॥ ३ ॥

---

१. अयं श्लोकः 'प्रकाश' व्याख्यया सहैवात्र स्थापितः ।

( धत्तूरके फूलोंसे नलके द्वारा पूजित शिवजी इस प्रकार शोभित हुए कि—मानो वे युद्धमें कामदेवको जीतकर उसके पुष्पमय काहला ( 'तुरही' नामक बाजा ) को लाकर ग्रहण किये हों। अथवा—युद्धमें कामदेवको जीतकर उससे ( छीने ) गये पुष्पमय काहलाके समान धत्तूर-पुष्पसे नलके द्वारा पूजित शिवजी शोभने लगे। [ प्रथम अर्थमें धत्तूरके पुष्पोंसे नलके द्वारा पूजा करनेपर शिवजी स्वयमेव कामदेवको जीत कर पुष्पमय बाणोंवाले उस कामदेवके पुष्पमय 'काहला' नामक बाजाको भी छीनकर लाये हुए-से शोभते थे, लोकमें भी कोई वीर वैरीको युद्धमें जीतकर उसके अस्त्र-शस्त्र-बाजा आदिको छीनकर लानेपर शोभित होता है। दूसरे अर्थमें—नलने ही स्वाराध्यदेव शिवजीके शत्रु कामदेवको युद्धमें जीतकर उसके पुष्पमय 'काहला' बाजाको लाकर धत्तूर-पुष्परूपमें शिवजीको समर्पित किया है, जिससे वे ( शिवजी ) शोभते ( प्रसन्न होते ) हैं। लोकमें भी कोई वीर अपने स्वामीके शत्रुको युद्धमें जीतकर उसके अस्त्र-शस्त्र-बाजा आदिको लाकर तथा अपने स्वामीके लिए समर्पितकर उसे प्रसन्न करता है। कामदेवके 'काहला' ( तुरही ) बाजाको धत्तूरके फूलके समान एवं पुष्पमय होनेसे शिवजीपर चढ़ाये गये धत्तूरके फूलकी उक्तरूपसे उत्प्रेक्षा की गयी है। नलने धत्तूरके फूलोंसे शिवजीकी पूजा की। यहांसे लेकर आठ श्लोकों(२१। क्षे० तथा मूल श्लोक ३२-३८)द्वारा शिव-पूजनका वर्णन किया गया है]॥३॥

**अर्चयन् हरकरं स्मितभाजा नागकेसरतरोः प्रसवेन।**
**सोऽयमापयदतिर्यगवाग्दिक्-पालपाण्डुरकपालविभूषाम्॥ ३२॥**

**अर्चयन्निति। सः उक्तरूपेण पूजानिरतः, अयम् एषः नलः, स्मितभाजा प्रस्फुटितेनेत्यर्थः। नागकेसरतरोः तदाख्यवृक्षविशेषस्य, प्रसवेन कुसुमेन साधनेन, हरस्य शम्भोः, करं हस्तम्, अर्चयन् पूजयन्, तिरश्च्या दिशः तिर्यग्वर्त्तमानप्राच्यादिदिगष्टकात्, तथा अवाच्या दिशः अधोदिशश्च सकाशात्, अन्या पृथगिति अतिर्यगवाग्दिक् ऊर्द्ध्वा दिक् इत्यर्थः। तस्याः पालः रक्षकः, ब्रह्मा इत्यर्थः। तस्य पाण्डुरं पाण्डुवर्णम्, यत् कपालं शिरोऽस्थिखण्डम्, भिक्षापात्ररूपेण हरकर्त्तृकचिरकालधारणात् गतकृत्ति अत एव पाण्डुवर्णं ब्रह्मणः पञ्चमशिरोऽस्थिखण्डमित्यर्थः। तस्य विभूषामिव विभूषां शोभाम्, आपयत् प्रापितवान्। हरेण स्वदुहितरं सन्ध्यां प्रति कामभावेनानुधावतः ब्रह्मणः पञ्चमं शिरः छिन्नम्, ततः तत्पापस्य प्रायश्चित्तं चिकीर्षुः हरः भिक्षार्थं तत् करे दधार, नागकेसरपुष्पस्यापि तत्सदृशपाण्डुवर्णत्वाद् इयमुक्तिर्बोद्धव्या। नलेन पूजायां दत्तं नागकेसरपुष्पं ब्रह्मकपालसदृशं बभौ इति भावः॥ ३२॥**

विकसित नागकेसर-पुष्पसे सुवर्णादि धातुमयी ( दक्षिणामूर्ति ) शिव ( की प्रतिमा ) के हाथकी पूजा करते हुए उस ( नल ) ने पूर्वादि एवं अधोदिशासे भिन्न दिशा अर्थात् ऊर्ध्व-दिशाके पति (ब्रह्मा) के श्वेतवर्ण,कपालके भूषणको प्राप्त करा दिया। [ शिवप्रतिमाके हाथमें नागकेसरका पुष्प चढ़ानेपर शिव-प्रतिमा हाथमें ब्रह्मकपाल धारण करती हुई-सी ज्ञात होती थी। नलने नागकेसर-पुष्पसे शिवकी पूजा की ]॥ ३२॥

पौराणिक कथा—अपनी कन्या 'सन्ध्या' के पीछे कामवशीभूत होकर अनुगमन करते हुए ब्रह्माके पांचवें शिरको शिवजीनें काट दिया। तदनन्तर ब्रह्मवधजन्य प्रायश्चित्त-विधानार्थ भिक्षाके लिए निरन्तर उसे हाथमें धारण किया।

**नीलनीररुहमाल्यमयीं स न्यस्य तस्य गलनालविभूषाम्।**
**स्फाटिकीमपि तनूं निरमासीन्नीलकण्ठपदसान्वयतायै ॥ ३३ ॥**

**नीलेति। सः नलः, तस्य हरस्य, नीलनीररुहमाल्यमयीम् इन्दीवरमालारूपाम्, गलनालस्य कण्ठदेशस्य, विभूषां भूषणम्, न्यस्य समर्प्य, स्फाटिकीं स्फटिकमयीम् अपि, तनूं शरीरम्, नीलकण्ठः इति पदस्य शिवस्य नीलकण्ठ इति संज्ञावाचकस्य शब्दस्य, सान्वयतायै अन्वर्थत्वाय, नीलः कण्ठो यस्य इति विग्रहस्य सार्थकतासम्पादनायेत्यर्थः। निरमासीत् कल्पितवान्। मा माने इति धातोरदादिकाल्लुङ् ॥३३॥**

उस ( नल ) ने नीलकमलोंकी मालाको शिवजीके कण्ठमें पहनाकर स्फटिकमणिमयी ( अतः श्वेतवर्णवाली ) भी शिवप्रतिमाको 'नीलकण्ठ' ( नीले कण्ठवाले ) शब्दकी सार्थकताके लिए नीलकण्ठरूप विशिष्ट भूषणवाली बना दिया। [ शिवप्रतिमा स्फटिकमणिकी होनेसे पहले श्वेतवर्ण थी, किन्तु शिवको 'नीलकण्ठ' ( नीले कण्ठवाला ) होनेसे उनकी प्रतिमामें भी नीलकण्ठ होनेपर ही शिववाचक 'नीलकण्ठ' शब्दकी सार्थकता होती है, ऐसा समझकर नलने नीलकमलोंकी माला उस स्फटिकमणिमयी श्वेतवर्ण शिवप्रतिमाके कण्ठमें डालकर उस 'नीलकण्ठ' शब्दको सार्थक कर दिया। नलने स्फटिकमयी शिवजीकी प्रतिमामें नीलकमलोंकी माला पहनायी ] ॥ ३३ ॥

**प्रीतिमेष्यति कृतेन ममेदृक्कर्मणा पुररिपुर्मदनारिः।**
**तत्पुरः पुरमतोऽयमधाक्षीद् धूपरूपमथ कामशरञ्च ॥ ३४ ॥**

**प्रीतिमिति। पुररिपुः त्रिपुरारिः, मदनारिः कामशत्रुश्च, शम्भुरिति शेषः। कृतेन विहितेन, मम मे, ईदृक्कर्मणा गुग्गुलुपर्यायकपुरदाहेन कर्पूरपर्यायककामशरदाहेन च कर्मणा, प्रीतिं सन्तोषम्, एष्यति प्राप्स्यति, अतः अस्मादेव कारणात्, अयं नलः, तस्य पुररिपोः मदनारेश्च, पुरः अग्रतः, यथाक्रमं धूपरूपं धूपव्याजम्, पुरं गुग्गुलुम् असुरपुरञ्च। 'गुग्गुलौ कथितः पुरः' इति विश्वः। अथ अनन्तरम्, कामशरं कर्पूरं मदनबाणञ्च, अधाक्षीत् दग्धवान्। नलः धूपदानरूपां पूजां चकारेति निष्कर्षः ॥३४॥**

पुररिपु ( पुरोंके शत्रु ) तथा मदनारि ( कामदेवके शत्रु शिवजी ) मेरे ऐसे कार्यसे प्रसन्न होंगे ( मानों ऐसा मनमें विचारकर ) नलने उन ( शिवजी ) के सामने धूपरूपको ग्रहण किये हुए पुर अर्थात् गुग्गुलु तथा कामबाण अर्थात् कर्पूरको जलाया। [ स्वामी-शिवजीकी प्रसन्नताके लिए उनके भक्त नलका उनके शत्रु 'पुर' ( गुग्गुलु ) तथा 'कामबाण' ( कर्पूर ) को जलाना उचित ही है। लोकमें भी कोई व्यक्ति स्वामीको प्रसन्न करनेके लिए

उसके शत्रुओंको स्वामीके सामने भस्म करता है। नलने गुग्गुल तथा कर्पूर जलाकर शिवजीको धूप समर्पण किया ] ॥ ३४ ॥

तन्मुहूर्त्तमपि भीमतनूजाविप्रयोगमसहिष्णुरिवायम्।
शूलिमौलिशशिभीततयाऽभूद् ध्याननमूर्च्छननिमीलितनेत्रः ॥ ३५ ॥

तदिति। अयं नलः, तन्मुहूर्त्तमपि तस्मिन् मुहूर्त्तेऽपि, 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। शूलिनः अर्च्यमानशम्भोः, मौलिशशिनः शिरोभूषणचन्द्रसकाशात्, भीततया भीतत्वेन हेतुना, शशिनो विरहिपीडकत्वादिति भावः। भीमतनूजाया दमयन्त्याः, विप्रयोगं विरहम्, असहिष्णुरिव सोढुमक्षमः सन् इव, ध्यानेनैव हृदि देवमूर्त्तिचिन्तनरूपेणैव, मूर्च्छनेन मूर्च्छारोगेण, सर्वेन्द्रियार्थोपरमत्वसाम्यात् ध्यानस्य मूर्च्छासाम्यत्वं बोद्धव्यम्। निमीलिते मुद्रिते, नेत्रे लोचने यस्य सः तादृशः, अभूत् अजायत। धूपदानानन्तरं हरध्यानमकरोदिति निष्कर्षः ॥ ३५ ॥

उस ( पूजा ) समयमें भी दमयन्तीके विरहको नहीं सहनेवालेके समान इस ( नल ) ने शूलधारी ( शिवजी ) के मस्तकस्थित चन्द्रमासे डरे हुए-से ध्यानरूप मूर्च्छासे नेत्रोंको बन्द कर लिया। [ चन्द्र विरहियोंको सन्तप्त करता है, अतः उससे मानो डरे हुए नलने ध्यानरूप मूर्च्छासे नेत्रोंको बन्द कर लिया। जिसे शूलको धारण करनेवाला व्यक्ति ( पक्षा०—शिवजी ) भी मस्तक पर धारण करता है, उस चन्द्रसे नलका भययुक्त होना उचित ही है। नलने नेत्रोंको बन्दकर शिवजीका ध्यान किया ॥ ३५ ॥

दण्डवद्भुवि लुठन् स ननाम त्र्यम्बकं शरणभागिव कामः।
आत्मशस्त्रविशिखासनबाणान् न्यस्य तत्पदयुगे कुसुमानि ॥ ३६ ॥

दण्डवदिति। आत्मनः स्वस्य, शस्त्राणि आयुधस्वरूपान्, विशिखासनं धनुः, बाणान् विशिखान् च, कुसुमानि पुष्पाणि, कामस्य धनुर्बाणयोः पुष्पमयत्वादिति भावः। तस्य त्र्यम्बकस्य, पदयोः चरणयोः, युगे द्वये न्यस्य समर्प्य, शरणभाक् आश्रयार्थी, कामः कन्दर्प इव, सः नलः, दण्डवत् दण्डसदृशः, भुवि भूमौ, लुठन् पतन्, त्र्यम्बकं त्रिलोचनम्, ननाम प्रणतवान् ॥ ३६ ॥

शिवजीके चरणद्वयमें पुष्पसमर्पण कर नलने दण्डवत् साष्टाङ्ग प्रणाम किया तो ऐसा मालूम पड़ता था कि कामदेव शिवजीसे पराजित होनेके कारण अपने पुष्पमय धनुषबाणको उन ( शिवजी ) के दोनों चरणोंमें रखकर ( क्षमायाचनार्थ ) साष्टांग प्रणाम कर शरणागत हुआ है। [ इससे नलका साक्षात् कामदेवके समान सुन्दर होना सूचित होता है। लोकमें भी दुर्बल शत्रु बलवान् शत्रुके समक्ष अपने अस्त्र-शस्त्रको समर्पितकर क्षमा-याचना करता हुआ उसके चरणोंमें साष्टाङ्ग प्रणाम कर शरणागत होता है। नलने शिवके चरणोंमें पुष्पाञ्जलि देकर साष्टाङ्ग प्रणाम किया ] ॥ ३६ ॥

त्र्यम्बकस्य[1] पदयोः कुसुमानि न्यस्य सैष निजशस्त्रनिभानि ।
दण्डवद्भुवि लुठन् किसु कामस्तं शरण्यमुपगम्य ननाम ? ॥ ३७ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—त्र्यम्बकस्येति । सः प्रसिद्धः एषः अयम्, कामः मदनः । 'सोऽचि लोपे चेत्पादपूरणम्' इत्यत्र श्लोकपादस्यापि ग्रहणमिष्यते इति सोर्लोपे वृद्धिः । निजशस्त्रनिभानि स्वायुधसदृशानि, कुसुमानि पुष्पाणि, त्र्यम्बकस्य त्रिलोचनस्य, पदयोः चरणयोः, न्यस्य समर्प्य, भुवि भूमौ, दण्डवत् दण्डसदृशम्, लुठन् पतन्, गात्रं पातयन्नित्यर्थः । शरण्यं रक्षितारम्, त्र्यम्बकं त्रिनयनं हरम्, उपगम्य प्राप्य, ननाम किसु ? प्रणतवान् किम् ? ॥ ३७ ॥

नलके शिव-चरणोंमें साष्टाङ्ग प्रणाम करनेपर ऐसा ज्ञात होता था कि—अपने शस्त्र-तुल्य पुष्पोंको शिवजीके दोनों चरणोंमें रखकर शरणागतवत्सल शिवजीके यहां आकर कामदेव दण्डवत् साष्टाङ्ग प्रणाम कर रहा है ॥ ३७ ॥

व्यापृतस्य शतरुद्रियजप्तौ पाणिमस्य नवपल्लवलीलम् ।
भृङ्गभङ्गिरिव रुद्रपराक्ष-श्रेणिराश्रयत रुद्रपरस्य ॥ ३८ ॥

व्यापृतस्येति । रुद्रपरस्य शिवपरायणस्य, अत एव शतरुद्रियस्य शतं रुद्राः देवता अस्य तस्य रुद्रदेवताकमन्त्रविशेषस्य । 'शतरुद्राद् घश्च' इति वक्तव्यात् घप्रत्ययः । जप्तौ जपे । नपुंसके भावे क्तः, 'आदितश्च' इति चकारात् विश्वस्तवत् निष्ठायाम् इडभावे जप्तम्, 'आदितश्चेति चकारस्यानुक्तसमुच्चयार्थत्वात् विश्वस्तवदित्याहुः' इति भट्टक्षीरस्वामी । तथा च 'जपिवमिभ्यां वा' इति महोपाध्याय-वर्द्धमानसूत्रम् । व्यापृतस्य आसक्तस्य, अस्य नलस्य, नवपल्लवस्येव कोमलकिसलयस्येव, लीला विलासः यस्य तं तादृशं, पाणिं करम्, रुद्रात् रुद्रशब्दात्, परेषाम् उपरितनानाम्, पश्चादुच्चार्यमाणानामित्यर्थः । अक्षाणाम् अक्षेत्यक्षराणाम्, रुद्राक्षाणामित्यर्थः । यद्वा—रुद्रपराणां शिवभक्तानाम्, ये अक्षाः जपमालाः, रुद्राक्षमाला इत्यर्थः । तेषां श्रेणिः पङ्क्तिः, भृङ्गाणां भ्रमराणाम्, भङ्गिरिव श्रेणिरिव । मालेव इति यावत् । आश्रयत श्रितवती, प्राप्तवतीत्यर्थः ॥ ३८ ॥

शिवपरायण ( अत एव ) शतरुद्रिय मन्त्रके जपमें संलग्न इस ( नल ) के नवपल्लव-तुल्य हाथका आश्रय ( रुद्रपराक्षश्रेणि—'रुद्र' शब्दसे पर ( अन्तस्थ ) है अक्षश्रेणि ( अक्ष-समूह = अक्षमाला ) जिसकी ऐसी अर्थात् रुद्राक्षमाला, पक्षा०—रुद्रपर ( शिवजीमें परायण अर्थात् शिवभक्त-नल ), से धार्यमाण अक्षश्रेणि ) रुद्राक्षमालाने किया । [ नल हाथमें रुद्राक्षकी माला लेकर शतरुद्रिय मन्त्रका जप करने लगे ] ॥ ३८ ॥

उत्तमं स महति स्म महीभृत्[2] पूरुषं पुरुषसूक्तविधानैः ।
द्वादशापि च स केशवमूर्त्तीर्द्वादशाक्षरमुदीर्य ववन्दे ॥ ३९ ॥

---

१. 'प्रकाश'कारः श्लोकमिमं क्षेपकमाह । २. 'महीयान्' इति पाठान्तरम् ।

उत्तममिति । सः पूजानिरतः, महीभृत् भूपालो नलः, उत्तमं पूरुषं पुरुषोत्तमं विष्णुम्; पुरुषसूक्तस्य 'सहस्रशीर्षा पुरुषः' इत्यादिमन्त्रस्य, विधानैः विधिभिः, महति स्म पूजितवान् । तथा सः नलः, द्वादशाक्षरम् 'ओं नमो भगवते वासुदेवाय' इत्येवं रूपं द्वादशाक्षरात्मकं मन्त्रम्, उदीर्य उच्चार्य, केशवस्य नारायणस्य, द्वादशापि च मूर्त्तीः केशवनारायणादि-द्वादशसङ्ख्यकविग्रहान्, ववन्दे तुष्टाव ॥२९॥

उस राजा (नल) ने ('सहस्रशीर्षाः पुरुषः……' इत्यादि) पुरुषसूक्तके विधानसे पुरुषोत्तम अर्थात् विष्णुका पूजन किया तथा ('ॐ नमो भगवते वासुदेवाय' इस) द्वादशाक्षर मन्त्रका उच्चारण विष्णुके बारहों मूर्तियोंकी वन्दना की। [नलने 'सहस्रशीर्षा—' इत्यादि पुरुषसूक्तके सोलह मन्त्रोंसे विष्णु भगवान्‌के लिए जल या पुष्प चढ़ाया, अथवा—उक्त सोलह मन्त्रोंसे विष्णु भगवान्‌का षोडशोपचार पूजन किया तथा 'ॐ नमो भगवते वासुदेवाय' इस द्वादशाक्षर मन्त्रसे बारह शालग्राम शिलाओंको वन्दना की, अथवा—उक्त द्वादशाक्षर मन्त्रसे बारह सूर्यमूर्तियोंके सहित नारायणकी बारह मूर्तियोंका 'ॐ केशवाय धात्रे नमः ललाटे' इस क्रमसे न्यास (अङ्गन्यास) किया] ॥ २९ ॥

---

१. तदुक्तम्—
'दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुभन्तस्य देवता । पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥'

२. तदुक्तं पद्मपुराणे—
'शिला द्वादश भो वैश्य शालग्रामसमुद्भवाः ।
विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तद्भवेत् ॥' इति ।

३. तदुक्तम्—'द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत् ।
केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः ॥
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः ।
अर्यम्णा हृदि मित्रेण माधवः (वं) कण्ठदेशतः ॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।
अंशुना विष्णुमंसस्थं भगेन मधुसूदनम् ॥
गले विवस्वता सुक्तं त्रिविक्रमसनन्तरम् ।
वामकक्षस्थमिन्द्रेण वामनाख्यमथांसके ॥
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतम् ।
हृषीकेशाह्वयं पृष्ठे पद्मनाभं ततः परम् ॥
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।
द्वादशार्णं महामन्त्रं ततो मूर्ध्नि प्रविन्यसेत् ॥' इति ।

मल्लिकाकुसुमडुण्डुभकेन स भ्रमीवलयितेन कृते तम् ।
आसने निहितमैक्षत साक्षात् कुण्डलीन्द्रतनुकुण्डलभाजम् ॥४०॥

मल्लिकेति। सः नलः, भ्रमीवलयितेन चक्राकारवेष्टनः वलयाकारीकृतेन, मल्लिकाकुसुमानां मल्लिकापुष्पाणाम्, मल्लिकापुष्पग्रथितेनेत्यर्थः। डुण्डुभकेन राजिलसर्पाकारया स्थूलया मालया। 'समौ राजिलडुण्डुभौ' इत्यमरः। 'इवे प्रतिकृतौ' इति कन्। 'मल्लिकाकुसुमडुण्डुभकेन' इत्यत्र पादान्तगुरुत्वं छन्दःशास्त्रेऽभ्युपगम्यते। कृते निर्मिते, आसने पीठे, निहितं स्थापितम्, कुण्डलीन्द्रस्य नागराजस्य, शेषस्य सम्बन्धिन्याः इत्यर्थः। तनोः शरीरस्य, कुण्डलं वलयम्, कुण्डलिततनुमित्यर्थः। भजते आश्रयति, क्षीरोदे शेषशायिरूपेणाधिशेते इत्यर्थः। यः तादृशम्, तं नारायणम्, साक्षाद् ध्यानयोगेन प्रत्यक्षमिव, ऐक्षत अपश्यत् ॥ ४० ॥

उस ( नल ) ने लपेटकर गोलाकार किये हुए, डोंड़ ( निर्विष सर्प-विशेष ) साँपके समान मल्लिकापुष्पोंकी मालासे बनाये गये आसनपर स्थापित उस विष्णुको ( क्षीरसागर में ) साक्षात् कुण्डलित शरीरवाले शेषनागके ऊपर स्थितके समान देखा ॥ ४० ॥

मेचकोत्पलमयी बलिबन्द्धुरस्तद्बलिस्रगुरसि स्फुरति स्म ।
कौस्तुभाख्यमणिकुट्टिमवास्तुश्रीकटाक्षविकटायितकोटिः ॥ ४१ ॥

मेचकेति। बलेः असुरविशेषस्य, बन्द्धुः बन्धकस्य, बलिनामकदैत्यराजबन्धनकारिणो विष्णोरित्यर्थः। उरसि वक्षसि, कौस्तुभाख्यं कौस्तुभरत्नसंज्ञकम्, यत् मणिकुट्टिमं रत्ननिबद्धभूमिः, तदेव वास्तु आवासभूमिः यस्याः तादृश्याः, श्रियः लक्ष्म्याः, कटाक्षेण अपाङ्गदर्शनेन, विकटायिताः विशालीभूताः, वृद्धिं गता इत्यर्थः। कोटयः प्रान्तदेशाः यस्याः सा तादृशी, मेचकोत्पलमयी नीलोत्पलग्रथिता, तस्य नलस्य, तेन नलेन दत्ता इत्यर्थः। बलिस्रक् पूजामाल्यम्। 'बलिः पूजोपहारः स्याद् बलिर्दैत्यो बलिः करः' इति विश्वः। स्फुरति स्म शुशुभे ॥ ४१ ॥

( वामनावतार धारणकर ) बलिनामक दैत्यको बांधनेवाले ( विष्णु ) के हृदयमें उस ( नल ) के द्वारा पूजामें अर्पित नीलकमलकी माला ऐसी शोभती थी कि—(विष्णु भगवान्‌के हृदयस्थ ) कौस्तुभ मणिजटित भूमिवाले निवासस्थान ( घर ) वाली अर्थात् सर्वदा रहनेवाली लक्ष्मीके कटाक्षोंसे उस मालाके प्रान्तभाग वृद्धिगत हो रहे हों ॥ ४१ ॥

स्वर्णकेतकशतानि च हेम्नः पुण्डरीकघटनां रजतस्य ।
मालयाऽरुणमणेः करवीरं तस्य मूर्द्ध्नि पुनरुक्तमकार्षीत् ॥ ४२ ॥

स्वर्णेति। स नलः, तस्य विष्णोः, मूर्द्ध्नि शिरसि, हेम्नः सुवर्णस्य, मालया माल्येन, स्वर्णनिर्मितपुष्पमाल्यार्पणेनेत्यर्थः। स्वर्णकेतकानां स्वर्णवर्णकेतकीपुष्पाणाम्, शतानि बहुसङ्ख्यकानि, स्वर्णकेतकीकुसुममाल्यार्पणमित्यर्थः। रजतस्य रौप्यस्य, मालया स्रजा, रौप्यनिर्मितपुष्पमालाऽर्पणेनेत्यर्थः। पुण्डरीकानां सिताम्भो-

जानाम्, घटनां रचनाम् श्वेतपद्ममाल्यार्पणमित्यर्थः। अरुणमणेः पद्मरागस्य, मालया माल्येन, पद्मरागमणिघटितमाल्यदानेनेत्यर्थः। करवीरं करवीरकुसुमम्, रक्तकरवीरपुष्पमालार्पणमित्यर्थः। पुनरुक्तं द्विरुक्तम्, द्विगुणीकृतमित्यर्थः। पुनरुक्तानि च पुनरुक्ता च पुनरुक्तञ्चेति द्वन्द्वे 'नपुंसकमनपुंसकेन—' इत्यादिना नपुंसकैकशेषे एकवद्भावः। अकार्षीत् कृतवान्। द्विविधेनापि माल्येन स नारायणमर्चयामासेति निष्कर्षः ॥ ४२ ॥

उस (नल) ने उस (विष्णु भगवान्) के मस्तक पर स्वर्णनिर्मित पुष्पमालाके चढ़ानेसे स्वर्णवर्ण (पीले) केतकियोंको, चाँदीकी बनी पुष्पमालाको चढ़ानेसे श्वेतकमलकी रचनाको तथा पद्मरागमणिकी बनी पुष्पमालाको चढ़ानेसे करवीर (लाल कनेर) को पुनरुक्त कर दिया। [ नलने विष्णु भगवान्‌के मस्तकपर पीली केतकी आदि तथा स्वर्णनिर्मित पुष्प आदिकी मालाको चढ़ाया ] ॥ ४२ ॥

नाल्पभक्तबलिरन्ननिवेद्यैस्तस्य हारिणमदेन स कृष्णः।
शङ्खचक्रजलजातवदर्चः शङ्खचक्रजलपूजनयाऽभूत् ॥ ४३ ॥

नेति। स भगवान् नारायणः, तस्य नलस्य, अन्ननिवेद्यैः अन्नान्येव भक्तान्येव, निवेद्यानि उपहाराः तैः, इवेति शेषः। नाल्पः प्रभूतः भक्तबलिः अन्नोपहारः यस्य स तादृशः। 'भक्तमन्धोऽन्नम्' इत्यमरः। अन्यत्र—नाल्पभक्तः अधिकभक्तिसम्पन्नः, बलिः असुरविशेषः यस्य सः तादृशः, तन्नामकः इत्यर्थः। अभूत् अजनि; तस्य हारिणमदेन कस्तूर्या, नलार्पितमृगमदोपहारेणेवेत्यर्थः। कृष्णः कृष्णवर्णः पापकर्षणात् कृष्णनामा च, 'कृष्णो वर्णे हरो ध्वांक्षे पिके व्यासे शुकेऽर्जुने' इत्यजयपालः। अभूत्, तथा शङ्खानां दक्षिणावर्त्तादीनां विविधानां कम्बूनाम्, चक्रे समूहे। 'चक्रं सैन्ये रथाङ्गे च राष्ट्रे दम्भान्तरे चये। आयुधाः सलिलावर्त्ताः' इत्यजयपालः। यत् जलं वारि, तेन या पूजना अर्चना तया, इवेति शेषः। शङ्खं पाञ्चजन्यम्, चक्रं सुदर्शनम्, जलजातं पद्मञ्च अस्या अस्तीति सा तद्वती शङ्खचक्रपद्मविशिष्टेत्यर्थः। अर्चा प्रतिमा पूजा च यस्य सः तादृशश्च। 'अर्चा पूजाप्रतिमयोः' इति विश्वः। अभूत्। नलपूजानिबन्धना खलु भगवतः विष्णोर्नाल्पभक्तबलिरित्यादिशब्दवाच्यता अभूदिति भावः॥

वे विष्णु भगवान् उस (नल) के (चढ़ाये गये) अन्नोपहारोंसे अधिक भातकी बलि (पूजा) वाले (पक्षा०—अतिशय भक्त 'बलि' नामक दैत्यवाले) हुए, कस्तूरीसे कृष्ण वर्णवाले (पक्षा०—'कृष्ण' नामवाले) हुए तथा (स्वर्णादिनिर्मित दक्षिणावर्त) शङ्खोंके समूहोंके जलसे पूजन करनेसे शङ्ख-समूहके जलसे हुई है पूजा जिसकी ऐसे (पक्षा०—शङ्ख, चक्र और कमलसे युक्त प्रतिमावाले) हुए। [ नलने भगवान्‌को अन्नादिकी बलि देकर उनके 'नाल्पभक्तबलि, कृष्ण तथा शङ्खचक्रजलजातवदर्च' विशेषणशब्दोंको सार्थक कर दिया। नलने विष्णु भगवान्‌को अन्न, कस्तूरीका लेप तथा शङ्खसे युक्त जल चढ़ाया ] ॥४३॥

राज्ञि कृष्णलघुधूपजधूमाः पूजयत्यहिरिपुध्वजमस्मिन् ।
निर्ययुर्भवधृता भुजगा भीदुर्यशोमलिनिता इव जालैः ॥ ४४ ॥

राज्ञीति । अस्मिन् राज्ञि नले, अहिरिपुः नागारिः, गरुडः इत्यर्थः । ध्वजः लाञ्छनम्, ध्वजे रथचूडायामित्यर्थो वा, यस्य तं विष्णुम्, पूजयति अर्चयति सति, भिया अहिरिपुभयेन, यत् दुर्यशः भीरुत्वापवादः, तेन मलिनिताः स्वभावतः शुभ्रा अपि मलिनीकृताः, भवेन शम्भुना, तत्रैव प्रतिष्ठितेनेति भावः । धृताः भूषणत्वेन परिगृहीताः, भुजगाः वासुकिप्रमुखाः शुभ्रसर्पा इव, कृष्णाः कृष्णवर्णाः, लघवः अगुरवः । 'शीघ्रे मनोज्ञे निःसारे लघुः स्यादगुरुद्रुमे' इति शाश्वतः । तेषां धूपजाः धूपोत्थाः, धूपदानाय कालागुरुकाष्ठदहनोत्पन्ना इत्यर्थः । धूमाः, जालैः गवाक्षविवरैः, निर्ययुः निर्गताः । भवशरीरे भूषणत्वेन धृताः विशदा अपि भुजगाः पूज्यमाननारायणस्य रथध्वजस्थितस्वशत्रुगरुडदर्शनात् भयेन मलिनाः इव सन्तः धूपजातकृष्णधूमरूपेण बहिर्निर्जग्मुरित्यर्थः ॥ ४४ ॥

इस राजा ( नल ) के गरुडध्वज ( विष्णु ) की पूजा करते रहनेपर खिड़कियोंके छिद्रोंसे काले अगरके धूपके धूएँ ऐसे मालूम पड़ते थे कि ( गरुड़से उत्पन्न ) भयरूपी अयशसे मलिन किये गये, ( उस देव-पूजा-गृहके एक भागमें ही प्रतिष्ठित ) शिवजीके द्वारा ग्रहण किये गये सर्प निकल (भाग) रहे हों । [ सर्प हमारे शत्रु (गरुड) के ध्वजचिह्नवाले विष्णुकी पूजा हो रही है, अतः वह हमारा शत्रु गरुड आकर हमलोगोंको खा जायेगा, इस भयरूपी अपयशसे ( स्वभावतः स्वच्छ होते भी ) मलिन हुये, शिव-शरीर-भूषणभूत सर्पोंके समान काले अगरके धूएँ खिड़कियोंके छिद्रोंसे निकल रहे थे । लोकमें भी शत्रुके भयसे मलिन व्यक्ति मुख्य द्वारको छोड़कर खिड़की आदिके मार्गसे भाग जाता है । नलने विष्णु भगवान्को धूप अर्पण किया ] ॥ ४४ ॥

अर्घनिःस्वमणिमाल्यविमिश्रैः स्मेरजातिमयदामसहस्रैः ।
तं पिधाय विदधे बहुरत्नक्षीरनीरनिधिमग्नमिवैपः ॥ ४५ ॥

अर्घेति । एषः नलः, अर्घेण मूल्येन, निःस्वानां दरिद्राणाम्, अमूल्यानामित्यर्थः । मणीनां रत्नानाम्, माल्यैः स्रग्भिः, विमिश्रैः संयुक्तैः, स्मेराणां विकसितानाम्, जातिमयदाम्नां मालतीकुसुमस्रजाम्, सहस्रैः समूहैः, तं विष्णुम्, पिधाय आच्छाद्य, बहुरत्नक्षीरनीरनिधौ बहूनि, रत्नानि मणयो यस्मिन् तादृशः, यः क्षीरनीरनिधिः क्षीरोदसमुद्रः, तत्र मग्नम् इव, विदधे चकार । अत्र क्षीरस्थानीयाः शुभ्रमालतीकुसुमस्रजः रत्नस्थानीयानि च मणिमाल्यानीति बोध्यम् ॥ ४५ ॥

अमूल्य मणियोंकी मालाओंसे मिश्रित, विकसित जाति-पुष्पोंकी सहस्रों मालाओंसे

---

'—धूपन—' इति पाठान्तरम् ।

आच्छादितकर इस ( नल ) ने उस ( विष्णु भगवान् ) को बहुत रत्नोंवाले क्षीरसमुद्रमें डूबे हुएके समान कर दिया ॥ ४५ ॥

अक्षसूत्रगतपुष्करबीजश्रेणिरस्य करसङ्गमेत्य।
शौरिसूक्तजपितुः पुनरापत् पद्मसद्मचिरवासविलासम् ॥४६॥

अक्षसूत्रेति। अक्षसूत्रगतानां जपमालाग्रथनतन्तुस्थितानाम्, पुष्करबीजानां पद्मगुटिकानाम्, श्रेणिः राजिः माला इत्यर्थः। शौरिसूक्तस्य पुरुषसूक्तस्य, जपितुः जपं कर्त्तुः, अस्य नलस्य, करसङ्गं हस्तसम्बन्धम्, एत्य प्राप्य, पुनः भूयोऽपि, पद्मं कमलम् एव, सद्म गृहम्; तत्र चिरवासस्य बहुकालावस्थितेः, विलासं शोभाम्, आपत् प्राप्तवती। नलकरस्य कमलसदृशत्वादिति भावः ॥ ४६ ॥

अक्षमालामें गूथे गये कमलबीजोंके समूह अर्थात् कमल-बीज-मालाने विष्णुसूक्त जपनेवाले इस ( नल ) के हाथसे सम्बद्ध होकर पुनः कमलरूप गृहमें चिरकालतक निवास करनेके समान शोभने लगा। [ कमल-बीजोंको मालासे नल विष्णुसूक्त जपने लगे तो नलके हाथके कमलतुल्य होनेसे ऐसा मालूम पड़ता था कि वे कमलबीज पुनः कमलमें निवास कर रहे हों। नल कमल-बीज-मालासे विष्णुसूक्तका जप करने लगे ] ॥ ४६ ॥

कैटभारिपदयोर्नतमूर्ध्ना सञ्जिता विचकिलस्रगनेन।
जह्नुजेव भुवनप्रभुणाऽभात् सेविताऽनुनयताऽऽयतमाना ॥४७॥

कैटभारीति। नतः भूसंलग्न इत्यर्थः। मूर्द्धा शिरः यस्य तेन प्रणामार्थं नतमस्तकेन, अनुनयता स्तवेन देवं प्रसादयता, भुवनप्रभुणा भूलोकनाथेन, अनेन नलेन भगीरथेन च, यद्वा—जलेश्वरेण समुद्रेण च। 'भुवनं विपिने तोये' इति विश्वः। कैटभारेः विष्णोः, पादयोः चरणयोः, सञ्जिता संसर्गं प्रापिता, समर्पिता इत्यर्थः। अन्यत्र—आसञ्जिता आसक्तिं गता, भक्तिमतीत्यर्थः। विष्णुपदोद्भूतत्वादिति भावः। आयतं दीर्घम्, मानं प्रमाणं यस्याः सा, अन्यत्र—यतमाना चेष्टमाना, पृथिव्यां गन्तुं यत्नवतीत्यर्थः। यद्वा-आयतः दीर्घः, मानः ईर्ष्या कोपश्च यस्याः सा। 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ गृहे' इति विश्वः। सेविता आराधिता, एकत्र-सुगन्धेन सर्वैः समादृता इत्यर्थः। अन्यत्र—त्रिभुवनजनपूजिता इत्यर्थः। विचकिलस्रक् मल्लिकाकुसुममाला। 'स्मृतो विचकिलो मल्लो प्रभेदे मदनेऽपि च' इति विश्वः। जह्नुजा गङ्गा इव, अभात् बभौ ॥ ४७ ॥

नतमस्तक प्रार्थना करते हुए भूपति इस ( नल ) के द्वारा श्रीविष्णु भगवान्के दोनों चरणोंमें रखी हुई लम्बी मल्लिकामाला नतमस्तक ( गङ्गाप्राप्त्यर्थ ) प्रार्थना करते हुए भूपति इस ( भगीरथ ) के द्वारा श्रीविष्णु भगवान्के चरणद्वयमें संलग्न ( पृथ्वीपर अवतरण करनेके लिए ) तत्पर गङ्गाके समान शोभित हुई। ( पक्षा०—( प्रेयसीके मानको दूर करनेके लिए ) नतमस्तक एवं प्रार्थना करते ( मनाते ) हुए भूपति ( नायक नल ) के द्वारा सेवित अधिक मानवाली नायिकाके समान शोभित हुई )। [ नलने विष्णु भगवान्के दोनों चरणोंपर

विकसित मल्लिका-पुष्पकी मालाको समर्पित किया तो वह भगीरथकी तपस्यासे प्रसन्न होकर विष्णु भगवान्‌के चरणोंसे निकली हुई गङ्गा-जैसी शोभती थी ] ॥ ४७ ॥

( युग्मम् )

स्वानुरागमनघः कमलायां सूचयन्नपि हृदि न्यसनेन ।
गौरवं व्यधित वागधिदेव्याः श्रीगृहोदूर्ध्वनिजकण्ठनिवेशात् ॥४८॥
इत्यवेत्य वसुना बहुनाऽपि प्राप्नुवन्न मुदमर्चनया सः ।
सूक्तिमौक्तिकमयैरथ हारैर्भक्तिमैहत हरेरुपहारैः ॥४९॥

स्वेति । अनघः निष्पापः, विष्णुरिति शेषः । हृदि वक्षसि, न्यसनेन स्थापनेन, कमलाया एवेति भावः । कमलायां लक्ष्म्याम्, स्वानुरागं निजप्रेम, सूचयन् प्रकटयन् अपि, श्रियः तस्याः कमलाया एव, गृहात् निवासभूतात्, निजवक्षसः इति शेषः । ऊर्ध्वं उपरिस्थिते, निजे स्वकीये, कण्ठे गलदेशे, निवेशात् स्थापनात् हेतोः, वागधिदेव्याः वाग्देवतायाः सरस्वत्याः, गौरवं पूजाम्, सम्मानाधिक्यमित्यर्थः । कमलापेक्षया इति भावः । व्यधित कृतवान् । इतीति । सः नलः, इति पूर्वोक्तप्रकारं विष्णोर्मनोभावम्, अवेत्य ज्ञात्वा, बहुना प्रभूतेनापि, वसुना धनेन, लक्ष्मीरूपेण मणिरत्नादिना इति भावः । लक्ष्म्या च इति ध्वन्यते, विहितया इति शेषः । अर्चनया पूजया, अपीति शेषः । मुदं प्रीतम्, न प्राप्नुवन् न लभमानः सन्, अथ अनन्तरम्, सूक्तिमौक्तिकमयैः सूक्तयः [सरसपदनिबद्धानि स्तोत्राण्येव, मौक्तिकानि मुक्तासमूहाः, विशदत्वादिति भावः । तन्मयैः तदात्मकैः, हारैः हाररूपैः, सरस्वत्या इति च ध्वन्यते, उपहारैः उपायनैः, हरेः नारायणस्य, भक्तिम् ऐकान्तिकसेवाविशेषम्, ऐहत अचेष्टत, हरिभक्तिं दर्शयितुमैच्छदिति भावः । हरिणा कमलातः वाण्याः अधिकं गौरवं कृतमतः सरस्वतीकरणकार्चनेनैवास्मिन् अधिका भक्तिः प्रदर्शिता भविष्यतीति मत्वा नलः सरस्वतीमयैः सूक्तैस्तमभजत इति निष्कर्षः ॥४८-४९॥

'निर्दोष विष्णु भगवान् (लक्ष्मीको) हृदयमें रखनेसे लक्ष्मीमें अपने अनुरागको सूचित करते हुए भी लक्ष्मीके निवासस्थान (विष्णुहृदय) के ऊपर कण्ठमें (सरस्वतीको) रखनेसे सरस्वतीका (लक्ष्मीकी अपेक्षा अधिक) गौरव किये हैं' इस बातको जानकर उस (नल) ने बहुत-से स्वर्णकमलादि धनोंके द्वारा पूजा करनेसे भी पूर्णतः हर्षित नहीं होते हुए, सूक्तिरूप मोतियोंके बने समर्पित हारोंसे विष्णुकी भक्ति करने लगे । [ जिस प्रकार कोई पति किसी स्त्रीको सुन्दर स्थानमें रखकर उसमें अपने स्नेहको सूचित करता हुआ भी उस स्त्रीसे अधिक स्नेहपात्र किसी दूसरी स्त्रीको उससे भी अच्छे उच्चतम स्थानमें रखकर उसका गौरव बढ़ा देता है; उसी प्रकार हृदयमें लक्ष्मीको रखनेसे उसमें अपने अनुरागको प्रकट करते हुए भी विष्णु भगवान् लक्ष्मीके निवासस्थान हृदयसे भी ऊपर कण्ठमें

१. 'प्राप्नुवान्न' इति पाठान्तरम् । २. 'सूक्त' इति पाठान्तरम् ।

सरस्वतीको रखनेसे लक्ष्मीकी अपेक्षा सरस्वतीको अधिक गौरव देते हैं ] अत एव विष्णु भगवान्‌की प्रियतमा सरस्वतीके द्वारा ही उनको प्रसन्न करना उचित समझकर सुवर्ण-कमलादि अनेक बहुमूल्य पदार्थोंसे पूजन करनेपर भी सन्तोष नहीं होनेसे वे नल सूक्तिरूप मोतियोंके हाररूप उपहार ( भेंट ) से विष्णु भगवान्‌की स्तुति करने लगे। [ लोकमें भी कोई किसीको सुवर्णादि समर्पण करके उसे शीघ्र प्रसन्न करनेके लिए मोतीके हारोंको उपहारमें देता है। पूजाके बाद नल विष्णुकी स्तुति करने लगे ] ॥ ४८–४९ ॥

दूरतः स्तुतिरवाग्विषयस्ते रूपमस्मद[1]भिधास्तव निन्दा ।
तत् क्षमस्व यदहं प्रलपामीत्युक्तिपूर्वमयमेतदवोचत् ॥५०॥

दूरत इति । हे भगवन् ! ते तव, रूपं स्वरूपम् , अवाग्विषयः वाचामगोचरः, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इत्यादि श्रुतेरिति भावः । स्तुतिः स्तवः, दूरतः दूरे, कर्त्तुमशक्या इत्यर्थः । यस्य तव स्वरूपं वाचामतीतं तस्य तव स्तुतिः कथं कर्त्तुं शक्येत ? कथमपि नेत्याशयः । एवञ्च अस्मदभिधाः अस्माकमुक्तयः, अस्मदीया स्तुतिरित्यर्थः । तव भवतः, निन्दा कदर्थना, भवतीति शेषः । अनन्त-गुणस्य तव अत्यल्पगुणप्रकाशकत्वात् वागविषयस्य च वाचा वर्णनात् तिरस्कार एवेत्यर्थः । अत एव अहं नलः, यत् प्रलपामि अनर्थकं वच्मि, तत् प्रलापवचनम् क्षमस्व सहस्व, मार्जयेत्यर्थः । इत्युक्तिः एवं-वचनम् , पूर्वं प्रथमं यस्मिन् तद् यथा भवति तथा, अयं नलः, एतद् वक्ष्यमाणम् , अवोचत् उक्तवान् ॥ ५० ॥

( हे भगवन् ! ) तुम्हारा स्वरूप वचनातीत है ( अतः तुम्हारी ) स्तुति दूर है, अर्थात् नहीं की जा सकती ( इस अवस्थामें ) हमारा कथन ( आपकी स्तुतिरूपमें भक्तकृत वर्णन, वर्णनातीतका स्वल्प शब्दोंमें वर्णन करनेके कारण ) तुम्हारी निन्दा है। इस कारणसे 'मैं ( तुम्हारी स्तुतिके रूपमें ) जो कुछ प्रलाप करता हूं, उसे आप क्षमा करें' ऐसा कहकर नल यह ( २१।५०–१०३ ) कहने ( विष्णु भगवान्‌की स्तुति करने ) लगे ॥ ५० ॥

स्वप्रकाश ! जड एव जनस्ते वर्णनं यदभिलष्यति कर्त्तुम् ।
नन्वहर्पतिमहः प्रति स स्यान्न प्रकाशनरसस्तमसः किम् ॥५१॥

स्वेति । स्वप्रकाश ! हे स्वयंप्रकाश ! अन्यनिरपेक्षप्रकाशरूप ! विष्णो ! 'एष आत्मा स्वप्रकाशः' इति वेदान्तादिति भावः । जडः मूढः, अविद्याऽऽच्छन्नः इति यावत् । एषः अयम् , जनः लोकः, ते तव, चिन्मयस्येति भावः । वर्णनं गुणकीर्त्त-नम् , कर्त्तुं विधातुम् , यत् अभिलष्यति वाञ्छति, ननु भो विष्णो !, सः तादृश-वर्णनाभिलाषः, अहर्पतेः सूर्यस्य, महः तेजः, प्रति लक्ष्यीकृत्य, तमसः अन्धकारस्य, प्रकाशने प्रकटने, स्वाविर्भावविषये इत्यर्थः । रसः वाञ्छा, न स्यात् किम् ? न भवेत् किम् ? अपि तु स्यादेव इत्यर्थः । स्वप्रकाशस्य तव वर्णने जडस्य ममाभि-

---

१. '—दभिधा तव' इति पाठान्तरम् ।

लाषः प्रकटप्रकाशसूर्यतेजःप्रकाशने तमसः अभिलाप इव अत्यन्तमशोभन एवेति भावः । तेजोनाश्यस्य तमसः तेजः प्रकाशाभिलाषः यथा विफल एव, तथा स्वप्रकाशनाश्याया जडतायाः अपि तं प्रति प्रकाशनात्मकवर्णनोद्यमः विफल एवेति तात्पर्यम् ॥

हे स्वयं प्रकाशमान ! सूर्य ( अविद्यासे आवृत ) यह जन अर्थात् मैं ( या—लोक ) जो तुम्हारा वर्णन करना चाहता है, वह सूर्यतेजको अन्धकारद्वारा प्रकाशित करनेकी इच्छा ( के समान ) नहीं है क्या ? । [ स्वयं प्रकाशमान सूर्यके तेजको जिसप्रकार अन्धकार प्रकाशित करनेकी इच्छा करे तो वह उसकी जड़ता ही होगी, उसी प्रकार स्वयं प्रकाशमान विष्णु भगवान्‌के वर्णनको भी स्तुतिकर प्रकाशित करना मेरी ( या—लोगोंकी ) मूर्खता ही होगी ] ॥ ५१ ॥

मैव वाङ्मनसयोर्विषयो भूस्त्वां पुनर्न कथमुद्दिशतां ते ।
उत्कचातकयुगस्य घनः स्यात् तृप्तये घनमनाप्नुवतोऽपि ॥ ५२ ॥

मेति । हे विष्णो ! वाङ्मनसयोः वाक्यचेतसोः । 'अचतुर—' इत्यादिना साधुः । विषयः गोचरः, मैव भूः मैव भव, त्वमिति शेषः । 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेरिति भावः । पुनः तथाऽपि, ते वाङ्मनसे, त्वां भवन्तम्, कथं केन हेतुना, न उद्दिशताम् ? न लक्षयताम् ? त्वामुद्दिश्य न प्रवर्त्तेतामित्यर्थः । अपि तु उद्दिशतामेवेति भावः । 'दिश अतिसर्जने' इत्यस्माद्धातोर्लोटि रूपम् । तथा हि घनं मेघम्, अनाप्नुवतः अलभमानस्य अपि, दूरावस्थितत्वादिति भावः । उत्कयोः मेघार्थमेव उत्सुकयोः, चातकयोः सारङ्गयोः, युगस्य द्वन्द्वस्य, चातकमिथुनस्येत्यर्थः । तृप्तये जलदानेन प्रीतये, घनः मेघः स्वयमेव, स्यात् भवेत् । चातकयुगस्य अविषयोऽपि मेघो यथा स्वयमेव तत्तृप्तये उदेति तथा वाङ्मनसयोरगोचरोऽपि त्वं स्वयमेव मत्तृप्तये स्याः, अतो न वर्णनोद्यमो मया त्यज्यते इति निष्कर्षः ॥

( यद्यपि ) तुम वचन तथा मनके विषय नहीं हो अर्थात् न तो तुम्हारा वर्णन ही किया जा सकता है और न ध्यान ही; तथापि वे दोनों ( वचन तथा मन ) तुमको लक्ष्यकर क्यों नहीं प्रवृत्त होवें अर्थात् लोग तुम्हारी स्तुति तथा ध्यान क्यों नहीं करें; क्योंकि मेघको नहीं पाते हुए भी उत्कण्ठित चातकके मिथुन ( जोड़ी ) की तृप्तिके लिए मेघ होता है । [ जिस प्रकार चातक-मिथुन मेघको नहीं पाकर भी उसका उद्देश्य कर उससे जल चाहता है तो मेघ उसे जल देकर तृप्त करता ही है, उसी प्रकार यद्यपि आपका वर्णन तथा ध्यान क्रमशः वचन तथा मनके द्वारा नहीं किया जा सकता तथापि आपको लक्ष्यकर प्रवृत्त होनेवाले उनको भक्तवत्सल आप अवश्यमेव तृप्त करते ही हैं, अत एव मैं वचन तथा मनसे आपकी स्तुति तथा ध्यान करता हूँ ] ॥ ५२ ॥

छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धृतमब्धेः ।
स्वैरमेत्य गगनाङ्गणसङ्गादाविरस्ति विबुधालयगङ्गा ॥ ५३ ॥

छद्मेति। हे विष्णो! छद्मना कपटेन, वेदोद्धारव्याजेनेत्यर्थः। मत्स्यः मीनः, वपुः शरीरं यस्य तथोक्तस्य, तव ते, पुच्छस्य लाङ्गूलस्य, आस्फालनात् ताडनात् हेतोः, अब्धेः सागरात्, उच्छूनम् ऊर्ध्वम् उत्क्षिप्तम्, जलं वारि, कर्तृ। गगनाङ्गणेन आकाशात्मकचत्वरेण, सङ्गात् संयोगात् हेतोः, श्वैत्यं श्वेतत्वम्, एत्य प्राप्य, विबुधालयगङ्गा स्वर्णदी, भूत्वा इति शेषः। आविरस्तीव प्रादुर्भवतीव। नीलवर्णा अपि सामुद्रा आपो गगनालोकसंस्पर्शादेव धवला दृश्यन्ते इति भावः॥ ५३॥

( अवतारोंकी स्तुति करते हुए नल सर्वप्रथम मत्स्यावतारकी स्तुति करते हैं—शङ्खासुरके द्वारा अपहृत वेदके उद्धारके लिए ) कपटसे मत्स्यका शरीर धारण किये तुम्हारे पूँछके आस्फालनसे ऊपर उछला हुआ समुद्रजल आकाशाङ्गणके संसर्गसे श्वेतिमाको प्राप्तकर मानो स्वर्गीय नदी ( आकाशगङ्गा ) रूपमें प्रकट हुआ है। [ यद्यपि नलका शिवभक्त होना प्रसिद्ध है, तथापि शिवको विष्णुका भक्त होनेसे विष्णुकी स्तुति द्वारा ही नल शिवको प्रसन्न करना चाहते हैं और 'श्रीहर्ष' कविके परमवैष्णव होनेसे भी विष्णु भगवान्‌की स्तुतिसे ही आरम्भ करनेमें कोई अनुपपत्ति नहीं है, इसी कारण आगे 'श्रेयसा हरिहरौ परिपूज्य' ( २१।१०५ ) के द्वारा शिव-विष्णु दोनोंके ही पूजन करनेका वर्णन कविने किया है ]॥ ५३॥

भूरिसृष्टिधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः।
चुम्बिताऽवतु जगत् क्षितिरक्षाकर्मठस्य कमठस्तव मूर्तिः॥ ५४॥

भूरीति। हे भगवन्! पृष्ठसीमनि पृष्ठप्रदेशे, भूरिषु प्रतिकल्पं नूतनसृष्टिकरणात् बह्वीषु, सृष्टिषु सृजनकार्येषु, धृतानां पृष्ठदेशे एव उदूढानाम्, भूवलयानां पृथ्वीमण्डलानाम्, किणैः पुनः पुनः वहनेन घर्षजनितचिह्नविशेषैरिव, चक्रैः चक्राकारचिह्नराजिभिः, चुम्बिता स्थाने स्थाने स्पृष्टा, क्षितेः पृथिव्याः, रक्षायां पालने जलनिमज्जनात् रक्षणविषये इत्यर्थः। कर्मठस्य कुशलस्य। 'कर्मणि घटोऽठच्'। तव भवतः सम्बन्धिनी, कमठः कूर्मरूपिणी, मूर्तिः तनुः, जगत् भुवनम्, अवतु रक्षतु॥ ५४॥

( अब कच्छपावतारकी स्तुति करते हैं—तुम्हारी ) पीठपर अनेक सृष्टियोंमें धारण किये गये पृथ्वी-मण्डलोंके घट्ठे ( किण ) के समान चक्रचिह्नोंसे स्पृष्ट ( छूई गयी ) पृथ्वीकी रक्षा करनेमें तत्पर आपका कच्छप-शरीर संसारकी रक्षा करे। [ आपके कच्छप-शरीरके पृष्ठभागपर जो चक्राकार चिह्न दृष्टिगोचर होते हैं, वे मानो अनेक सृष्टियोंमें पृथ्वीकी रक्षा करनेके लिए उसको धारण करनेके घट्ठे पड़े हुए हैं, ऐसा आपका कच्छप-शरीर संसारकी रक्षा करे। पीठपर प्रत्येक सृष्टिमें पृथ्वीको धारणकर आप उसकी रक्षा करते हैं। सात पातालोंके नीचे फणाओंपर पृथ्वीको शेषनाग धारण करते हैं, उसके भी नीचे ब्रह्माण्डके नीचे कटाहके भारको ब्रह्माण्ड ( जला- ) वरणरूप जलमें कच्छपरूप विष्णु धारण करते हैं ]॥ ५४॥

दिक्षु यत्खुरचतुष्टयमुद्रामभ्यवैमि चतुरोऽपि समुद्रान् ।
तस्य पौत्रिवपुषस्तव दंष्ट्रा तुष्टयेऽस्तु मम वास्तु जगत्याः ॥ ५५ ॥

दिक्ष्विति। हे विष्णो! दिक्षु चतसृषु आशासु, चतुरः चतुःसङ्ख्यकान् अपि, समुद्रान् सागरान्, यस्य वराहमूर्त्तिधरस्य, खुराणां चतुष्टयस्य चतुःसङ्ख्यकशफस्य, मुद्रां चिह्नम्, खुरेण विदलनजनितखातरूपचिह्नमिति यावत्, अभ्यवैमि जानामि, तस्य उक्तविधस्य, पोत्री वराह एव। 'वराहः शूकरो घृष्टिः कोलः पोत्री किरः किटिः' इत्यमरः। वपुः शरीरं यस्य तादृशस्य, तव भवतः, जगत्याः पृथिव्याः, वास्तु वेश्मस्थानम्, रसातलप्रदेशादुद्धृत्य दंष्ट्रोपरिस्थापनेन आवासभूता; इत्यर्थः। 'वेश्मभूर्वास्तुरस्त्रियाम्' इत्यमरः। दंष्ट्रा विशालदन्तः, मम मे, तुष्टये वाञ्छापूरणजनितप्रीतये, अस्तु भवतु ॥ ५५ ॥

( अब दो श्लोकोंसे वराहावतारकी स्तुति करते हैं— ) मैं ( पूर्वादि चारो ) दिशाओंमें चारों समुद्रोंको जिस ( वराहरूपधारी विष्णु ) के खुरोंका चिह्न ( खुरोंसे उत्पन्न गर्त-विशेष ) समझता हूं, उस वराहरूपधारी तुम्हारी ( विष्णु भगवान्‌की ) पृथ्वीका गृह ( आधारभूत ) वह दंष्ट्रा ( विशालतम दाँत ) मेरे कल्याणके लिए हो ॥ ५५ ॥

उद्धृतिस्खलदिलापरिरम्भाल्लोमभिर्बहिरितैर्बहुहृष्टैः ।
ब्राह्ममण्डमभवद् बलिनीपं केलिकोल ! तव तत्र न मातुः[1] ॥५६॥

उद्धृतीति। केलिकोल! हे क्रीडावराह! लीलाप्रदर्शनार्थं वराहरूपधारिन्! तत्र ब्रह्माण्डे, न मातुः अवकाशम् अलभमानस्य, अतिविपुलदेहतयेति भावः। मा-धातोस्तृचि षष्ठ्येकवचनरूपम्। तव भवतः, उद्धृतौ जलाद् उद्धरणसमये, स्खलन्त्याः दन्तात् पतन्त्याः, इलायाः, पृथिव्याः, परिरम्भात् सयत्नधारणात् आलिङ्गनाच्च हेतोः, बहु अत्यर्थं यथा भवति तथा, हृष्टैः विकसितैः, पुलकितैरित्यर्थः। उद्गतैरिति यावत्, बहिर्ब्रह्माण्डस्य बहिःप्रदेशे, इतैः गतैः, लोमभिः तनुरुहैः साधनैः, ब्राह्मम् अण्डं ब्रह्माण्डम्, बलिनीपं तव पूजार्थं कदम्बकुसुमम्, इवेति शेषः, अभवत् अजायत ॥ ५६ ॥

हे क्रीडासे ( अनायास—विना परिश्रमके ) वराहरूप धारण किये हुए ( विष्णु भगवान् ) ! तुम्हारे ( अतिशय विशाल ) ब्रह्माण्डमें नहीं समाते अर्थात् छोटा पड़ते हुए, ( हिरण्याक्षको मारकर पातालसे ) ऊपर उठाते समय स्खलित होती हुई पृथ्वीके आलिङ्गन ( यत्नपूर्वक धारण ) करनेसे बाहर निकले हुए अत्यन्त हर्षित रोमोंसे ब्रह्माण्ड पूजामें समर्पित कदम्ब-पुष्पके समान हो गया। [ वराहरूप धारणकर हिरण्याक्ष नामके दैत्यको मारकर जब आप पातालसे पृथ्वीको दांतपर रखकर यत्नपूर्वक ऊपर उठाने लगे तो ब्रह्माण्डरूप आपका शरीर रोमाञ्चयुक्त होकर ऐसा मालूम पड़ता था कि ब्रह्माण्डरूप आपके शरीर-

१. 'मातः' इति पाठः 'प्रकाश'सम्मतः। 'मा माने' इत्यस्माच्छतृप्रत्यये सिद्धिः।

पर कदम्बके पुष्प चढ़ाये गये हों, और उस विशालतम दांतपर वह पृथ्वी भी छोटी हो रही थी ]॥ ५६॥

दानवौघगहनप्रभवस्त्वं सिंह। मामव रवैर्घनघोरैः।
वैरिदारिदिविषत्सुकृतास्त्रग्रामसम्भवभवन्मनुजार्द्धः॥ ५७॥

दानवाविति। सिंह! हे नृसिंहमूर्त्तिधर! विष्णो!, दानवानां दनुजानाम्, ओघः समूहः एव, बहुदानवाधिपतिहिरण्यकशिपुसमा एवेति भावः। गहनं वनम्, हिंस्रप्रकृतिदानवौघाधिष्ठितत्वेन दुष्प्रवेशत्वादिति भावः। तत्र प्रभवः उत्पत्तिः यस्य सः तादृशः, अनेन सिंहाकारधारणस्य औचित्यं प्रकटितम्, सिंहस्य वनसम्भवत्वादिति भावः। तथा वैरिणः शत्रून् दानवान्, दारयन्ति नाशयन्तीति तादृशानि, यानि दिविषत्सुकृतानि [देवानां पुण्यानि, तान्येव अस्त्राणि आयुधानि, तेषां ग्रामः समूह एव ग्रामः संवसथः, स्वल्पसङ्ख्यकमनुष्यवसतिस्थानमित्यर्थः। तस्मात् सम्भवः उत्पत्तिः यस्य सः तादृशः, भवन् जायमानः, प्रकटयन्नित्यर्थः। मनुजः मनुष्यः एव, नराकार एव इत्यर्थः। अर्द्धः अधःकायः यस्य स तादृशः, एतेन देवोपकारिनरोत्पत्तेरौचित्यं प्रदर्शितम्, नरस्य ग्रामसम्भवत्वादिति भावः, त्वं भवान्, घनैः अनवरतैः, घोरैः भयङ्करैश्च, रवैः ध्वनिभिः, गर्जनैरिति यावत्, मां नलम्, अव रक्ष॥ ५७॥

( अब दो श्लोकोंसे नृसिंहावतारकी स्तुति करते हैं— ) हे सिंह ( नृसिंह )! दानवसमूहरूपी गहन ( घने जङ्गल ) में उत्पन्न तथा शत्रुविदारक देवोंके पुण्यास्त्रसमूह ( पक्षा०—ग्राम ) में आधे मनुष्य होते हुए तुम मेघके समान ( अथवा—घन अर्थात् भयङ्कर, अपने ) गर्जनोंसे मेरी रक्षा करो। ( पाठा०—दानवोंमें प्रथम ( हिरण्यकशिपु ) के कष्टके निमित्त उत्पन्न अथवा—दानवोंमें ( हरिभक्त होनेसे ) मुख्य ( प्रह्लाद ) के पितृदत्त कष्टके निमित्त ( निवारणार्थ ) उत्पन्न, अथवा—दानवोंसे परिपूर्ण सभा ( हिरण्यकशिपुका समाभवन )रूपी वनमें उत्पन्न, अथवा—दानव हिरण्यकशिपु ) के पापके ( अधिकतासे ) घने जङ्गलमें उत्पन्न, अथवा—दानवरूपी आद्य ( प्राचीन ) गहनमें उत्पन्न )। [ गहनमें अर्थात् घने वनमें सिंहको तथा ग्राममें मनुष्यको उत्पन्न होनेसे आपको 'नृसिंह'रूप होना सर्वथा उचित ही है ]॥ ५७॥

दैत्यभर्त्तुरुदरान्धुनिविष्टां शक्रसम्पदमिवोद्धरतस्ते।
पातु पाणिसृणिपञ्चकमस्मांश्छिन्नरज्जुनिभलग्नतदन्त्रम्॥ ५८॥

दैत्येति। हे नरसिंह! दैत्यभर्त्तुः हिरण्यकशिपोः, उदरमेव जठरमेव, अन्धुः कूपः। 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः। 'अर्जिदृशिकम्यमि—' इत्यादिना औणादिकः कुप्रत्ययः धुगागमश्च। तस्मिन् निविष्टां मग्नत्वेन स्थिताम्, शक्रसम्पदम् इन्द्रैश्वर्यम्, उद्ध-

२. 'दानवाद्य—' इति 'दानवाघ—' इति च पाठान्तरम्।

रतः उत्तोलयत इव, ते तव, छिन्नरज्जुनिभानि खण्डितदामसदृशानि, लग्नानि संसक्तानि, पाणिसृणिपञ्चके एव इति भावः। तस्य दैत्यशत्रुः, अन्त्राणि पुरीतदाख्यनाडीविशेषाः यत्र तादृशम्। 'अन्त्रं पुरीतत्' इत्यमरः। पाणेः करस्य, सृणीनां तीक्ष्णनखरूपाणाम् अङ्कुशानाम्, पञ्चकं पञ्चसङ्ख्या, अस्मान् मत्प्रभृतीन्, पातु रक्षतु, कूपे हि पतितान्घुदञ्चनादीन्यङ्कुशाकारेण रज्जुवेष्टितेन लौहयन्त्रविशेषेण उद्ध्रियन्ते यथा तद्वदिति भावः॥ ५८॥

दैत्यराज (हिरण्यकशिपु) के उदररूपी कूपमें पड़ी (गिरी) हुई इन्द्र-सम्पत्तिको बाहर निकालते हुए-से तुम्हारे टूटी हुई रस्सीके समान फँसी हुई उस (हिरण्यकशिपु) के आँतोंवाला, हाथके (नखरूपी) अङ्कुश (काँटा) पञ्चक हमारी रक्षा करें। [जिस प्रकार कूएमें टूटी हुई रस्सीसहित घट आदि गिर पड़ता है तो उसे अङ्कुशाकार काँटे (झगरे) में टूटी रस्सीको फँसाकर निकाला जाता है, उसी प्रकार इन्द्रकी सम्पत्ति हिरण्यकशिपुके उदररूपी कूपमें गिर गयी थी, और आपने अङ्कुशके समान अपने हाथके नखोंसे उस दैत्यके आँतोंको उदरविदारणपूर्वक फँसाकर अर्थात् उसके पेटको फाड़कर इन्द्रको सम्पत्तिको बाहर निकाला, वे अङ्कुशाकार नख हमारी रक्षा करें] ॥ ५८ ॥

स्वेन पूर्यत इयं सकलाशा भो! बले! न मम किं भवतेति ?।
त्वं वटुः कपटवाचि पटीयान् देहि वामन! मनः प्रमदं नः ॥ ५९ ॥

स्वेनेति। भोः! बले! हे बलिनामदैत्याधिप! भवता त्वया, इयम् एषा, सकलानां सर्वेषामेव लोकानाम्, आशा मनोरथः, स्वेन धनेन, धनवितरणेनेत्यर्थः। पूर्यते परिपूर्णीक्रियते, मम मे, किं न? आशा पूर्यते इति पूर्वेणान्वयः। अपि तु पूर्यते एव। अन्यच्च—भो राजन्! भवता इयं सकला सर्वा, आशा दिक्। 'आशा तृष्णादिशोः प्रोक्ता' इति विश्वः। स्वेन आत्मीयेन, बलेन सामर्थ्येन, पूर्यते व्याप्यते, मम मे, आशा दिक्, किं पूर्यते? अपि तु नेवेत्यर्थः। मम वैकुण्ठलोकव्यापने तव सामर्थ्याभावादिति भावः। यद्वा—मम किम्? तावता मे किं प्रयोजनम्? मया ते त्रिपादभूमिरेव याच्यते, नाधिकेन अस्ति मे प्रयोजनम्, अतस्ते सर्वदिगधिकारे मम लाभक्षती न स्त इति भावः। वामन! हे वामनरूपधर विष्णो! एत्येवंरूपायाम्, कपटवाचि छद्मवचने, भगवतः आशाया एवाभावात् तादृशप्रार्थनायाः कपटत्वमिति बोध्यम्। पटीयान् कुशली, वटुः माणवकः, तरुणब्रह्मचारीत्यर्थः। त्वं भवान्, नः अस्माकम्, मनसः चेतसः, प्रमदं हर्षम्, अभीष्टसाधनादिना इति भावः। देहि कुरु॥

(अब चार श्लोकोंसे वामनावतारकी स्तुति करते हैं—) 'हे बले! तुम यदि सबकी आशा (अभिलाषा) को अपनेसे (या—स्वर्णादि धनसे) पूरा करते हो तो मेरी आशा (तीन पाद परिमित भूमिको याचना) नहीं पूरा करोगे? अर्थात् अवश्यमेव पूरा करोगे (अथवा—तुम अपने बल या सेनासे सब दिशाओंको व्याप्त (आवृत) करते हो, किन्तु

मेरी आशा ( निवासस्थानभूत वैकुण्ठ धाम ) को भी पूरा करते हो क्या ? अर्थात् नहीं। अथवा—तुम अपने दल या सेनासे सब दिशाओंको व्याप्त करते हो, उससे मुझे क्या प्रयोजन है ? अर्थात् उससे मुझे कोई प्रयोजन नहीं, क्योंकि मुझे तो केवल तीनपाद भूमिसे ही प्रयोजन है। अथवा—तुम द्रव्यसे सब आशाओंको पूरा करते हो तो मेरी छोटीसी आशा ( पादत्रयमात्र भूमि ) को नहीं पूरा करोगे क्या ? अर्थात् अवश्य पूरा करोगे। अथवा—सम्पूर्ण दिशाको मैं अपने विशालरूपसे नहीं पूरा करूंगा ? अर्थात् अवश्य पूरा करूंगा, तुमको इससे क्या ? अर्थात् तुम कुछ नहीं कर सकोगे। अथवा—( तीन पाद भूमि देनेका वचन देकर उसे नहीं पूरा होनेपर ) अपने शरीरसे मेरी सब आशाको नहीं पूरा करोगे क्या ? अर्थात् अपने वचनको सत्य करनेके लिए अपने शरीरसे भी मेरी आशाको अवश्य पूरा करोगे ) इस प्रकार ( श्लेषोक्तिद्वारा ) कपटपूर्ण वचनमें अतिशय चतुर ब्रह्मचारीका रूप धारण किये हुए हे वामन ! ( हमारी समस्त कामनाओंको पूरा करनेसे ) हमारे मनके हर्षको दो ॥ ५९ ॥

दानवारिरसिकाय विभूतेर्वश्मि तेऽस्मि सुतरां प्रतिपत्तिम् ।
इत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायम् ॥ ६० ॥

दानवारीति । हे वामन ! अस्मि अहम्, अस्मीत्येतदव्ययमहमर्थे । दानस्य त्यागस्य, वारिणः जलस्य, दानार्थकसङ्कल्पसलिलस्येत्यर्थः । रसिकाय अनुरागिणे, प्रतिग्रहवाञ्छकाय इत्यर्थः । ते तुभ्यम्, विभूतेः सम्पत्तेः, समेति शेषः । सुतराम् अत्यर्थम्, प्रतिपत्तिं दानम्, वश्मि कामये । वश कान्तावित्यस्य लडुत्तमपुरुषैकवचनम् । अन्यच्च—हे वामन ! त्वं दानवानाम् असुराणाम्, अरिः शत्रुः साक्षात् विष्णुः, असि भवसि, अत एव अस्मि अहम् ते तव, कायविभूतेः शरीरसम्पत्तेः, गृहीतत्रिविक्रममूर्तेरिति भावः । सुतराम् अत्यर्थम्, प्रतिपत्तिं ज्ञानम्, तव स्वरूपज्ञानेच्छाम्, दर्शनप्राप्तिं वा इत्यर्थः । वश्मि कामये । इत्यनेन प्रकारेण, उदग्राः उत्कटाः, भक्त्यातिशय्यात् अत्यर्थमुद्गता इत्यर्थः । पुलका रोमाञ्चा यस्मिन् तत् यथा भवति तथा, बलिना दानवेन्द्रेण, उक्तं कथितम्, कृता विहिता, वामनरूपा वामनाकारधारणात्मिका, माया छलं येन तं तादृशम्, त्वां भवन्तम्, नमामि नतोऽस्मि ॥ ६० ॥

'मैं दान-सम्बन्धी जलका रसिक ( प्रतिग्रह लेनेका इच्छुक ) तुम्हारे लिए सम्पत्तिको देनेके लिए अत्यन्त इच्छुक हूं ( अथ च—तुम दानवोंके शत्रु ( विष्णु ) हो, ( अत एव ) तुम्हारे शरीरकी विभूतिके ज्ञानका अत्यन्त इच्छुक हूं अर्थात् तुम्हारे विराट् शरीरको देखना चहता हूं' इस प्रकार अत्यन्त पुलकित हो बलिसे कहे गये वामनरूप धारणकर माया किये हुए तुमको मैं नमस्कार करता हूं' ॥ ६० ॥

भोगिभिः क्षितितले दिवि वासं बन्धमेष्यसि चिरं ध्रियमाणः ।
पाणिरेष भुवनं वितरेति छद्मवाग्भिरव वामन ! विश्वम् ॥ ६१ ॥

भोगिभिरिति । हे बले ! क्षितितले भूलोके, दिवि स्वर्गे वा, चिरं बहुकालं, व्याप्य, ध्रियमाणः अवतिष्ठमानः । धृङ् अवस्थाने इत्यस्य रूपम् । त्वमिति शेषः । भोगं सुखमेषामस्तीति तादृशैः भोगिभिः सुखिभिः, जनैरिति शेषः । सह सार्द्धम्, वासम् अवस्थानम्, तथा बन्धं सख्यबन्धनञ्च, एष्यसि प्राप्स्यसि, मम करे दानवारिप्रदानादिति भावः । अत एव एषः अयम् । पाणिः हस्तः, मया प्रसारित इति शेषः। भुवनं जलम्, दानवारीति यावत् । वितर देहि, अत्र पाणौ इति शेषः । अन्यच्च—हे बले ! दिवि स्वर्गे, स्वर्गतुल्यपरमरमणीये इत्यर्थः । क्षितितले रसातले, चिरं दीर्घकालं व्याप्य, ध्रियमाणः अवतिष्ठमानः, त्वमिति शेषः, भोगिभिः सर्पैः सह, वासम् अवस्थितिम्, बन्धं बन्धनञ्च, एष्यसि प्राप्स्यसि, एषः पाणिः, मया प्रसारितः इति शेषः, भुवनं लोकम्, इन्द्रात् बलपूर्वकं गृहीतम् अत एव तस्यैव माप्यमिति भावः । 'भुवनं विष्टपे तोये' इत्यजयपालः । वितर समर्पय, हे वामन ! इत्यनेन प्रकारेण, छद्मवाग्भिः कपटवचनैः, विश्वं जगत् , अव रक्ष ॥ ६१ ॥

( ऐसा ( २१।६० ) बलिके कहनेपर वामनरूपधारी आपने कहा कि—हे बले ! ) 'भूतलपर या स्वर्गमें रहते हुए तुम भोगयुक्त अर्थात् सुखी लोगोंके साथ चिरकालतक निवास एवं मैत्रीबन्धनको पावोगे, ( दान लेनेके लिए मेरा ) यह हाथ ( फैला अर्थात् आगे की ओर बढ़ा हुआ ) है, ( दान-सम्बन्धी ) जलको दो; ( पक्षा०—सुखकारक होनेसे ) स्वर्गतुल्य ( अथवा—स्वर्गभिन्न ) पातालमें सर्पोंके द्वारा ग्रहण किये गये तुम चिरकालतक बन्धन पावोगे एवं निवास करोगे । अथवा—चिर कालतक जीवित रहते हुए तुम सर्पोंके साथ निवास एवं बन्धनको प्राप्त करोगे ) । ( सुदर्शनको चलानेके लिए तत्पर मेरा ) यह हाथ है, ( इन्द्रसे छिने हुए ) स्वर्गलोकको वापस करो' इस प्रकार कपट-वचनोंसे उपलक्षित हे वामन भगवान् ! आप संसारकी रक्षा करें ॥ ६१ ॥

आशयस्य विवृतिः क्रियते किम् ? दित्सुरस्मि हि भवच्चरणेभ्यः ।
विश्वमित्यभिहितो बलिनाऽस्मान् वामन ! प्रणतपावन ! पायाः ॥ ६२ ॥

आशयस्येति । हे वामन ! आशयस्य अभिप्रायस्य, प्रतिग्रहाभिलाषस्येत्यर्थः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । विवृतिः विवरणम्, प्रकाश इत्यर्थः । किं किमर्थम्, क्रियते ? विधीयते ? हि यतः, भवच्चरणेभ्य इति पूज्यताऽतिशयद्योतनपरम्, भवच्चरणेभ्यः पूज्यतमाय भवते इत्यर्थः । विश्वं सर्वा एव सम्पद इत्यर्थः । दित्सुः स्वयमेव दातुमिच्छुः, अस्मि भवामि । अन्यच्च—हे वामन ! शयस्य हस्तस्य, आ सम्यक्, विवृतिः प्रसारणमित्यर्थः । किं कथम्, क्रियते ? विधीयते ? त्वयेति शेषः । दानग्रहणार्थमिति भावः । हि यतः, भवतः तव, चरणेभ्यः त्रिभ्यः एव पादेभ्यः, न तु पाणौ इति भावः । विश्वं जगत्, दित्सुः अस्मि, प्रणतानां पावन ! हे भक्तजनचित्तशोधक ! वामन ! इत्यनेन प्रकारेण बलिना दानवेन्द्रेण, अभिहितः उक्तः त्वमिति

शेषः। अस्मान् नलादीन्, पायाः रक्षेः। 'पा रक्षणे' इत्यस्य लिङो मध्यमपुरुषैकवचनम् ॥ ६२ ॥

( ऐसा ( २१।६१ ) वामनके कहनेपर परमभक्त बलिने कहा—'हे भगवन् ! अपने ) अभिप्राय ( दान लेनेकी इच्छा ) को क्यों प्रकट करते हो ?, ( अथवा—दान लेनेके लिए हाथको सम्यक् प्रकारसे क्यों फैलाते हो ?, अथवा—आः ! हाथको क्यों फैलाते हो ? ) अर्थात् आपको वैसा करना उचित नहीं; क्योंकि 'मैं आपके चरणोंके लिए सब ( स्वर्णादि सम्पत्ति या—समस्त संसार ) को देना चाहता हूं' इस प्रकार बलिसे कहे गये हे प्रणतपावन ! वामन ! आप हम लोगोंकी रक्षा करें। [ जगत्पूज्य होनेसे चरणोंमें ही सब कुछ समर्पित करनेके लिए इच्छुक भक्तराज बलिको अपने सामने दान लेनेके लिए वामनरूपधारी विष्णुभगवान्‌को हाथ फैलानेसे निषेध करना उचित ही है ] ॥ ६२ ॥

क्षत्रजातिरुदियाय भुजाभ्यां या तवैव भुवनं सृजतः प्राक्।
जामदग्न्यवपुषस्तव तस्यास्तौ लयार्थमुचितौ विजयेताम् ॥ ६३ ॥

क्षत्रेति। हे विष्णो ! प्राक् पुरा, भुवनं जगत्, सृजतः सृष्टिं कुर्वतः, तव भवत एव, भुजाभ्यां दोर्भ्यां सकाशात्, या क्षत्रजातिः क्षत्रियसमूहः, उदियाय उद्भूता, 'बाहू राजन्यः कृतः' इति श्रुतेः, तस्याः क्षत्रजातेः, लयार्थं विनाशार्थम्, उचितौ योग्यौ, 'नाशः कारणलयः' इति साङ्ख्यादिसिद्धान्तात् कार्यं हि कारणे एव लीनं भवतीति सर्वत्र दर्शनाच्च कार्यभूतां क्षत्रजातिं प्रति तव भुजयोरेव कारणत्वात् क्षत्रजातेस्तव भुजयोरेव लीनत्वस्यौचित्यादिति भावः। जामदग्न्यः परशुरामः, वपुः शरीरं यस्य तस्य परशुरामदेहधारिणः, तव ते, तौ भुजौ, विजयेतां सर्वोत्कर्षेण वर्त्तेताम्। विपराभ्यां जेस्तङादेशः ॥ ६३ ॥

( अब तीन श्लोकों ( २१।६३-६५ ) से परशुरामावतारकी स्तुति करते हैं—) पहले सृष्टि करते हुए ( ब्रह्मरूप ) तुम्हारे ही बाहुद्वयसे जो क्षत्रिय जाति उत्पन्न हुई, उस ( क्षत्रिय जाति ) के लय ( नाश ) के लिए योग्य परशुरामशरीरधारी आपके बाहुद्वय विजयी होवें। [ 'ब्राह्मणोऽस्य मुखमासीद्बाहुभ्यां राजन्यः कृतः' इस वेदवचनके अनुसार ब्रह्माके बाहुसे उत्पन्न क्षत्रियका उत्पत्तिकारणभूत उक्त बाहुद्वयमें ही 'नाशः कारणलयः' ( कारणमें कार्यका लय होना ही नाश है ) इस साङ्ख्यसिद्धान्त तथा भरत[1]वचनके अनुसार लीन होना उचित है। जातिको नित्य माननेवालोंके सिद्धान्तमें यहां क्षत्रजातिका आविर्भाव-तिरोभाव समझना चाहिये। [ यहां परशुरामावतार लेकर क्षत्रियजातिका संहार करना अवतारका प्रयोजन कहा गया है ] ॥ ६३ ॥

---

१. तच्च भरतवचनं यथा—

'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
एषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥' इति।

पांशुला बहुपतिर्नियतं या वेधसाऽरचि रुषा नवखण्डा ।
तां भुवं कृतवतो द्विजभुक्तां युक्तकारितरता तव जीयात् ॥ ६४ ॥

पांशुलेति । हे जामदग्न्य ! विष्णो ! पांशुला रजोयुक्ता, स्वैरिणी च । 'सिध्मादिभ्यश्च' इति मत्वर्थीयो लच् । 'स्वैरिणी पांशुला समा' इत्यमरः । बहवः अनेके, पतयः स्वामिनः यस्याः सा बहुपतिश्च अनेकाधिपतिका, अनेकोपपतिका च, या भूः, वेधसा ब्रह्मणा, नियतं निश्चितमेव, रुषा कोपेन हेतुना, नव नवसङ्ख्यकानि, खण्डानि अंशाः, भारतादीनि वर्षाणीत्यर्थः । यस्याः सा, नव नवभागेन विभक्तानि, खण्डानि छेदनेन शकलीकृतानि अङ्गानि यस्याः सा तादृशी च, अरचि रचिता, भारतादिवर्षभेदेन नवधा विभक्तीकृता छेदनेन नवधा विभक्तीकृता चेत्यर्थः । तां पूर्वोक्तरूपाम्, भुवं पृथिवीम्, काञ्चित् स्त्रियञ्च, द्विजैः कश्यपादिभिः ब्राह्मणैः, मांसाशिभिः पक्षिभिश्च । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । भुक्तां प्रतिग्राहणेन भोगविषयीकृतां खादिताञ्च, कृतवतः विहितवतः, ते तव, युक्तकारिषु उचितकर्मकरेषु प्रकृष्ट इति युक्तकारितरः, तस्य भावस्तत्ता, युक्तकारितरता अतिशयेन विवेकिता, जीयात् जयतु । निखिलक्षत्रियविनाशनेन अधिकृतताया भूमेः ब्राह्मणसात्करणस्यैव औचित्यात् बहुजारभुक्ताया हि स्त्रिया भर्त्रा खण्डशः कृत्वा पक्षिभिः खादनाया औचित्याच्चेति भावः ॥ ६४ ॥

धूलियुक्त एव ( मनु आदि ) बहुत पतियोंवाली जिस पृथ्वीको ब्रह्माने मानो क्रोधसे ( 'भारत' आदि ) नव खण्डोंमें विभक्त कर दिया ( पक्षा०—व्यभिचारिणी एवं बहुत जारोंवाली जिस स्त्रीको पतिने क्रोधसे नव टुकड़ोंमें काट दिया ), उस (पृथ्वी, पक्षा०—स्त्री) को ब्राह्मणों ( पक्षा०—गीध आदि पक्षियों ) से भुक्त ( भोग की गयी, पक्षा०—खायी गयी ) बनानेवाले तुम्हारी अधिक उचितकारिता विजयिनी ( सर्वोत्कृष्ट ) होवे । [ व्यभिचारिणी एवं बहुत जारोंवाली स्त्रीको क्रोधसे नव टुकड़ोंमें काटकर गीध आदिको खिलानेके समान धूलियुक्त मन्वादि बहुत पतिवाली 'भारत' आदि नव खण्डोंमें विभक्त पृथ्वीको क्षत्रियोंका संहारकर उनसे छीनकर ब्राह्मणोंके लिये दान करना तुम्हारा अत्यन्त उचित कार्य था ] ॥ ६४ ॥

---

१. भारतादिनवखण्डानां ( वर्षाणां ) नामानि यथा—

'स्याद्भारतं किम्पुरुषं हरिवर्षं च दक्षिणाः ।
रम्यं हिरण्मयकुरू हिमाद्रेरुत्तरास्त्रयः ॥
भद्राश्वकेतुमालौ तु द्वौ वर्षौ पूर्वपश्चिमौ ।
इलावृत्तं तु मध्यस्थं सुमेरुर्यत्र तिष्ठति ॥' इति ।

एषां सीमां ब्रुवन् क्षीरस्वामी त्वष्टावेव वर्षाण्याह तच्च अमरकोषस्य 'लोकोऽयं भारतं वर्षं'''( २।१।६ )' इत्यस्यास्मत्कृतायाम् 'अमरकौमुदी'ख्यटिप्पण्यां द्रष्टव्यम् ।

कार्त्तवीर्यभिदुरेण दशास्ये रैणुकेय ! भवता सुखनाश्ये ।
कालभेदविरहादसमाधिं नौमि रामपुनरुक्तिमहं ते ॥ ६५ ॥

कार्त्तवीर्येति । हे रैणुकेय ! रेणुकापत्य ! परशुराम ! 'स्त्रीभ्यो ढक्' । कार्त्तवीर्यस्य कार्त्तवीर्यार्जुनस्य, भिदुरेण नाशकेन । भिदेः कर्त्तरि कुरच् । भवता त्वया, दशास्ये रावणेऽपि, सुखम् अनायासं यथा भवति तथा, नाश्ये हन्तव्ये सति, रावणं जितवतः कार्त्तवीर्यस्य यः जेता तस्य रावणनाशे आयासाभावादिति भावः । कालभेदस्य युगरूपस्य समयान्तरस्य, विरहात् अभावात्, एकस्मिन्नेव त्रेतायुगे उभयोरेवावतीर्णत्वात् इति भावः । असमाधिं सिद्धान्तहीनाम्, ते तव, रामेण दाशरथिना, पुनरुक्तिं रामनाम्नः पुनः कथनम्, अहं नलः, नौमि स्तौमि । द्विरुक्तेः कालभेदात् कार्यभेदाद्वा परिहारो भवितुमर्हति, अत्र तु एकस्यामेव त्रेतायां दशास्यवधादिरूपस्य कार्यस्य एकेनैव कर्त्तुं शक्यत्वेऽपि पुनः दाशरथिरामरूपेणावतीर्णत्वात् तेन सह तव अशक्यपरिहारा पुनरुक्तिर्जाता, तादृशीम् अतर्क्यरूपां महीयसीं रामरूपां पुनरुक्तिमहं नौमीत्यर्थः । रेणुकापत्यत्वात् मात्रंशे एकस्यामेव क्षत्रियजातौ समुद्भूतेन एकस्मिन्नेव त्रेतायुगे अवतीर्णेन कार्त्तवीर्यविजयिपरशुरामावतारेणैव कार्त्तवीर्यजितस्य रावणस्य वधे सुकरेऽपि पुनः तदर्थं रामावतारग्रहणस्य आनर्थक्यात् पुनरुक्तिमिव प्रतिभाति, अस्याश्च निरसनाय सदुत्तरं नास्तीति भावः ॥ ६५ ॥

हे रेणुकापुत्र ( परशुराम ) ! सहस्रार्जुनको काटने ( मारने ) वाले आपसे सुखपूर्वक विनाशनीय रावणके होनेपर कालभेदके विना अर्थात् एक ही त्रेतायुगमें समाधान रहित रामावतार ग्रहणरूप तुम्हारी पुनरुक्तिको मैं नमस्कार करता हूं । [ त्रेतायुगमें मानव क्षत्रिय परशुरामावतार लेकर रावणके विजेता सहस्रार्जुनको आपने मार दिया तो रावणको मारना भी उसी मानवरूप परशुरामावतारसे सुखसाध्य था, फिर भी उसी त्रेतायुगमें दशरथ-पुत्ररूपमें मानव क्षत्रिय रामावतार धारण करनेका कोई समाधान नहीं होनेसे यह रामावतार धारण पुनरुक्त प्रतीत होती है, क्योंकि कालभेद या कार्यभेदसे परिहार हो सकता है, किन्तु इन दोनों त्रेतायुगके मानव एवं क्षत्रिय ( परशुराम तथा राम ) अवतारोंमें भेद नहीं होनेसे पुनरुक्तिका समाधान नहीं होता । 'स्वतन्त्र' आपसे कोई भी प्रश्न करना किसीको उचित नहीं, क्योंकि उसकी सर्वतोमुखी प्रभुता होती है । यद्यपि परशुराम मनुष्य थे, परन्तु उनमें देवभाव भी था और देवसे रावणको नहीं मारनेका वरदान ब्रह्माने दिया था, अत एव परशुराम रावणको नहीं मार सकते थे । तथा रावणको मारनेके लिये (दाशरथि) रामको देवशान नहीं होनेसे मनुष्यरूप रामके द्वारा ही रावणका वध होना सुकर था, इस कारण एक कालमें भी दो अवतार धारण करना उचित होनेसे यद्यपि उक्त पुनरुक्तिका सूक्ष्मतम समाधान है ही; तथापि स्थूलरूपसे समाधान नहीं होनेसे उक्त पुनरुक्तिको कहा गया समझना चाहिये । परशुरामको 'रेणुकापुत्र' कहनेसे उनमें क्षत्रियत्वकी प्राधान्यता

सूचित की गयी है। इस श्लोकसे नलने परशुरामकी ही स्तुति की है, ऐसा 'प्रकाश'कारका मत है, किन्तु 'सुखावबोधा' व्याख्याकार इस श्लोकसे दशरथापत्य रामकी स्तुति नलनेकी है, ऐसा मानते हैं ]॥ ६५ ॥

हस्तलेखमसृजत् खलु जन्मस्थानरेणुकमसौ भवदर्थम् ।
राम ! राममधरीकृततत्तल्लेखकः प्रथममेव विधाता ॥ ६६ ॥

हस्तेति । राम ! हे दाशरथे ! अधरीकृताः तिरस्कृताः, सुग्रीवादिरूपेण भूतलमवतारिताश्च, ते ते प्रसिद्धाः, लेखकाः लिपिकराः, लेखाः इन्द्रादयः देवाश्च येन सः तादृशः अधरीकृततत्तल्लेखकः । देवपक्षे 'शेषाद्विभाषा' इति कप् समासान्तः । असौ एषः, विधाता स्रष्टा, भवदर्थं भवादृशोत्तम शिल्पनिर्माणार्थम्, प्रथममेव आदावेव, जन्मस्थानम् उत्पत्तिक्षेत्रम्, रेणुका तन्नाम्नी जमदग्निभार्या यस्य तं तादृशम्, रामं परशुरामम्, हस्तलेखं कराभ्यासम्, असृजत् सृष्टवान्, खलु निश्चितम् । अन्योऽपि शिल्पाजीवी शिल्पनिर्माणे नैपुण्यलाभार्थमादौ यत् किञ्चित् द्रव्यं निर्माय निर्माय अभ्यासं कृत्वा अनन्तरं यथा उत्कृष्टं निर्माति, तद्वदिति भावः । एतेन परशुरामाद् दाशरथेः रामचन्द्रस्य औत्कर्ष्यं प्रदर्शितमिति मन्तव्यम् ॥ ६६ ॥

(अब नव ( २१।६६–७४ तथा क्षेपक सहित दश ) श्लोकोंसे रामावतारकी स्तुति करते हैं—) हे रामचन्द्र ! उन–उन ( प्रसिद्धतम ) लेखकों ( चित्रकारों या—इन्द्रादि देवों, या—दक्ष आदि आठ प्रजापतियों ) को तिरस्कृत किये हुए ( पक्षा०—नीचे अर्थात् मृत्युलोकमें सुग्रीवादिरूपमें देवोंको अवतार ग्रहण करानेवाले ) इस ब्रह्माने आपके लिए रेणुका है जन्मस्थान जिसका ऐसे 'राम' अर्थात् परशुरामको पहले ही हाथके अभ्यासार्थ रचा है। [ जिस प्रकार कोई चित्रकार हाथके अभ्यासके लिए पहले साधारण चित्रको बनाकर बादमें उत्तम चित्र बनाता है, उसी प्रकार मानो ब्रह्माने तुम्हें भूलोकमें अवतीर्ण करनेके लिए रेणुकातनय 'परशुराम'को पहले बनाकर हस्तकौशलाभ्यास होनेके बाद दशरथापत्य 'राम' को बनाया है। इससे परशुरामकी अपेक्षा रामका अधिक महत्त्व सूचित होता है ] ॥ ६६ ॥

उद्भवाजतनुजादज[1] ! कामं विश्वभूषण ! न दूषणमत्र ।
दूषणप्रशमनाय समर्थं येन देव ! तव वैभवमेव ॥ ६७ ॥

उद्भवेति । न जायते इति अजः, तत्सम्बोधने हे अज ! हे जन्मरहित विष्णो ! सनातनत्वादिति भावः । अजस्य रघुनन्दनस्य तदाख्यनृपविशेषस्य, तनुजात् आत्मजात् दशरथात्, कामं यथेच्छम्, उद्भव जायस्व, त्वमिति शेषः । भवतेर्लोटि सिपि रूपम् । विश्वभूषण ! हे जगदलङ्कार ! पुरुषोत्तमत्वादिति भावः । अत्र अस्मिन् विषये, अजस्य तव अजतनुजोद्भवने इत्यर्थः । दूषणं दोषः, असङ्गतिरूपदोष

1. 'दनुकामम्' इति पाठान्तरम् ।

इत्यर्थः। न नास्ति। कुत इत्याशयेन हेतुमाह—येन हेतुना, हे देव! तव ते, वैभवमेव ऐश्वर्यमेव, प्रभाव एवेत्यर्थः। दूषणस्य असाङ्गत्यादिदोषस्य तदाख्यराक्षसविशेषस्य च, प्रशमनाय निवारणाय निधनाय च, समर्थं योग्यम्, भवतीति शेषः। स्वयम्। अजस्त्वम् अजस्य पुत्रात् जायसे, अत्र यः अजः स कथं जायते? यस्य पितामहोऽपि न जातः तस्य वा कथं तनुजः? कथं वा तस्मात् तनुजात् तव जन्म सम्भवेत्? इत्यादिरूपं दूषणं नास्ति, यतः दूषणनाशायैव तव उत्पत्तिः, अथ च अजाख्यात् पितामहात् अजपौत्रः जात इत्यत्र दूषणं नास्ति, उभयोः अजाख्यनृपजातत्वात् इति भावः॥ ६७॥

हे अज (उत्पत्तिरहित रामचन्द्र)! अज (रघुतनय) के पुत्र अर्थात् दशरथसे उत्पन्न होवो (या—यथेष्ट उत्पन्न होवो), हे जगदलङ्कार! इस (अजको भी उत्पन्न होने) में दोष (असङ्गति दोष) नहीं है, (क्योंकि जिसका पितामह 'अज' अर्थात् अनुत्पन्न है, उसका पुत्र भी उत्पन्न कैसे कहा जायेगा तथा इसीसे पौत्र भी सुतराम् उत्पन्न नहीं हो सकता, अत एव इस सब उत्पन्न होनेके कथनको स्वेच्छा-विलसितमात्र होनेसे इसमें कोई दोषलेश नहीं है। अथच—'अज' (छाग) के पुत्र एवं पौत्र 'अज' जातीय ही होंगे, इसमें कोई दोषलेश नहीं है। अब उत्तरार्द्धसे भी उक्त दोषलेशाभावका ही समर्थन कर रहे हैं—) जिस तुम्हारा ऐश्वर्य अर्थात् प्रभाव ही दोषों (पक्षा०—'दूषण' नामक राक्षस) के नाशके लिए है (जिस 'राम' नामके स्मरणमात्रके प्रभावसे जन्मजन्मान्तरके दोष नष्ट हो जाते हैं), ऐसे आपमें दोषलेशकी सम्भावना कैसे हो सकती है? (अथच—'आपका अवतार ही दूषण, आदिसे लेकर रावण तक राक्षसोंके नाशके लिए है, इस कारण आप परशुरामके अवतारकाल त्रेतायुगमें ही रामावतारसे प्रकट होवें' इसमें कोई पुनरुक्त दोष नहीं है)॥६७॥

**नो ददासि यदि तत्त्वधियं मे यच्छ मोहमपि तं रघुवत्स[1]!।**
**येन रावणचमूर्युधि मूढा त्वन्मयं जगदपश्यदशेषम्॥ ६८॥**

नो ददासीति। रघुवत्स! हे रघुनन्दन! विष्णो! मे मह्यम्, यदि चेत्, तत्त्वे ब्रह्मणि, धियं बुद्धिम्, मोक्षोपयोगिज्ञानमित्यर्थः। नो न, ददासि यच्छसि, अज्ञानाच्छन्नत्वादिति भावः। तर्हि येन मोहेन, युधि युद्धे, रावणस्य दशाननस्य, चमूः सेना, मूढा भ्रान्ता सती, अशेषं निखिलम्, जगत् विश्वम्, त्वन्मयं भवदात्मकम्, राममयमित्यर्थः। अपश्यत् ऐक्षत, तं मोहमपि मुग्धतामपि, भ्रमज्ञानमपीत्यर्थः। मे मह्यम्, यच्छ देहि, तेनैव कृतार्थो भवेयमिति भावः॥ ६८॥

हे रघुनन्दन! यदि आप मेरे लिए (मोक्षसाधक) तत्त्वज्ञानको नहीं देते हैं तो उस मोहको ही दें; जिस (मोह) से मोहित रावणसेनाने सम्पूर्ण संसारको ही राममय (भयके कारण रामात्मक) देखा॥ ६८॥

---

१. 'रघुवीर' इति प्रकाश'सम्मतः पाठः।

आज्ञया च पितुरज्ञभिया च श्रीरहीयत महीप्रभवा द्विः ।
लङ्घितश्च भवता किमु न द्विर्वारिराशिरुदकाङ्कगलङ्कः ॥ ६९ ॥

आज्ञयेति । हे विष्णो ! राम ! भवता त्वया, पितुः जनकस्य दशरथस्य, आज्ञया च वनं गच्छेत्येवंरूपेण आदेशेन च, अज्ञेभ्यः मूर्खेभ्यः, मिथ्यापवादकरेभ्यः मूढेभ्यः सकाशादित्यर्थः । भिया च भयेन च, मही पृथिवी, प्रभवः उत्पत्तिस्थानं यस्याः सा तादृशी, श्रीः राज्यलक्ष्मीः लक्ष्म्याः अंशभूता पृथ्वीसुता सीता च, द्विः द्विवारम्, अहीयत परित्यक्ता, पितुरादेशपालनाय वनगमनात् राजलक्ष्मीः परित्यक्ता, मूर्खजनापवादभयेन च सीता परित्यक्ता इत्यर्थः, तथा उदकस्य जलस्य, अङ्कं समीपं, गच्छति या सा तादृशी, लङ्का तदाख्या पुरी यस्य सः तादृशः, वारिराशिः जलसमूहात्मकः समुद्रः, अरिराशिर्वा रावणादिशत्रुसमूहश्च, वा-शब्दोऽत्र समुच्चये चार्थे' द्विः वारद्वयं, न लङ्घितः न अतिक्रान्तः न जितश्च, किमु ? किम् ? अपि तु लङ्घितः एवेत्यर्थः, अत एव सत्यसन्धं जितेन्द्रियं महाप्रभावञ्च भवन्तं नमामीति भावः ॥६९॥

पिताकी आज्ञा तथा मूर्खलोगोंके अपवादके भयसे तुमने क्रमशः राजलक्ष्मी तथा पृथ्वीपुत्री ( सीता ) का दोबार नहीं त्याग किया क्या ? ( तुम्हारे-जैसा पिताका आज्ञापालक एवं लोकापवाद भीरु दूसरा कोई नहीं है ) । और जिसके जलमें लङ्का है, ऐसे समुद्र तथा जलमें लङ्का है जिसके ऐसे शत्रु-समूहको तुमने दो वार नहीं उल्लङ्घित ( बांधकर परतीरगमन पक्षा०—पराजित ) किया है क्या ? ( समुद्रको बांधकर पार जानेवाला तथा रावणादि शत्रु-समूहको पराजित करनेवाला आप-जैसा महाप्रतापी एवं शूर कोई नहीं है )॥

कामदेवविशिखैः खलु नेशं माऽर्पयज्जनकजामिति रक्षः ।
दैवतादमरणो वरवाक्यं तथ्ययत् स्वमपुनाद्भवदस्त्रैः ॥ ७० ॥

कामेति । हे राम ! विष्णो ! जनकजां सीताम् , अर्पयत् ददत् , रामाय प्रत्यर्पयदित्यर्थः । रक्षोऽहमिति शेषः । कामदेवस्य देवतात्मकमन्मथस्य, विशिखैः वाणैः, मा खलु नेशं नैम विनष्टं भवेयम् , तथात्वे ब्रह्मणो वरो मृषैव भवेदिति भावः । नशेः पुषादित्वादङि 'नशिमन्योरलिट्येत्वं वक्तव्यम्' इत्येत्वम् , 'न माङ्योगे' इत्यडभावः । इति एवम् , विचिन्त्य इति शेषः । दैवतात् अमरात् , अमरणे मरणाभावे विषये, वरवाक्यं देवात् तव मृत्युर्न भविष्यति इति ब्रह्मा पुरा रावणाय यत् वरमदात् तद् वचनम् , तथ्ययत् तथ्यं सत्यं कुर्वत् सत् , रक्षः रावणः, भवतः तव, नरदेहधारिण इति भावः । अस्त्रैः वाणैः, स्वम् आत्मानम् , अपुनात् पूतवान् , तवास्त्रेण आत्मानं घातयित्वा पवित्रं जातमित्यर्थः । अपुनादित्यनेन कामवाणात् मरणे आत्मनः अपवित्रत्वं सूचितम् । कामवाणात् केवलं मरणमेव भवति, भवतः वाणात् तु पापनाशात् संसारमोक्षोऽपि भवतीति भावः ॥ ७० ॥

'जनकनन्दिनी' ( सीता ) को ( रामके लिए ) लौटाता हुआ मैं ( उसके विरहमें )

कामदेवके बाणोंसे नहीं मरूं, ( अन्यथा कामदेवके भी देव-विशेष होनेसे देवतासे नहीं मरनेका मिला हुआ ब्रह्मासे वरदान असत्य हो जायेगा इस कारण ) देवतासे नहीं मरनेका वरदान-वचनको सत्य करता हुआ रावण अपने ( शरीर ) को आपके शस्त्रोंसे ( आहत कराकर ) पवित्र किया । [ यदि रावण सीताको आपके लिए वापस दे देता तो वह कामबाणोंसे पीडित होकर अवश्य मर जाता और इस अवस्थामें देवतासे नहीं मरनेका दिया हुआ ब्रह्माका वरदान असत्य हो जाता, मानो इसीलिए रावणने सीताको आपके लिए नहीं लौटाकर अपनेको आपके बाणोंसे मरवाया । कामदेवके बाणोंसे मरनेपर तो परस्त्रीकामनासे मरनेके कारण दुःखदायिनी मृत्यु होगी तथा रामके बाणोंसे मरनेपर सद्गति प्राप्ति होगी, यह भी 'अपुनात्' पदसे ध्वनित होता है ] ॥ ७० ॥

तद्यशो हसति कम्बुकदम्बं शम्बुकस्य न किमम्बुधिचुम्बि ? ।
नामशेषितससैन्यदशास्यादस्तमाप यदसौ तव हस्तात् ॥ ७१ ॥

तदिति । हे राम ! विष्णो ! नाम संज्ञामात्रम्, शेषः अवशेषः यस्य स तादृशः कृतः इति नामशेषितः कथामात्रशेषीकृतः, ससैन्यः सैन्यसहितः, दशास्यः रावणः येन तस्मात्, तव भवतः, हस्तात् करात्, असौ शम्बुकः, यत् अस्तम् अदर्शनम्, नाशमित्यर्थः । आप लेभे, शम्बुकस्य तदाख्यशूद्रमुनिविशेषस्य, अम्बुधिचुम्बि सागरपर्यन्तगामि, तत् पूर्वोक्तरूपम्, यशः कीर्त्तिः कर्त्तृ । कम्बूनां शङ्खानाम्, कदम्बं समूहम् कर्म । न हसति किम् ? न परिहसति किम् ? अपि तु हसत्येव इत्यर्थः, स्वशुक्लताऽऽतिशयादिति भावः । यस्य हस्तात् ब्रह्मकुलोद्भवः त्रिभुवनविजयी दशाननो विनाशमाप, तस्यैव हस्तात् नीचशूद्रकुलोद्भूतः दुर्बलः शम्बुकः विनष्ट इति शम्बुकस्य महासौभाग्यमिति भावः ॥ ७१ ॥

सेनासहित रावणको नामशेष करने ( मारने ) वाले, आपके हाथसे जो 'शम्बुक' नामक शूद्रमुनि नष्ट हुआ ( मारा गया ), वह शम्बुक समुद्रतक विस्तृत यश शङ्ख-समूहको नहीं हँसता है क्या ? । अथच—जलशुक्तिका श्वेतत्व समुद्रस्थ शङ्ख-समूहके श्वेतत्वको हँसता ( उनके समान होता ) है, अत एव उसका यश होना उचित ही है । [ जिस रामहस्तने त्रिभुवनविजयी, ब्राह्मणकुलोत्पन्न रावणको सेनाके सहित मारा, उसी रामहस्तने धूपत्रान करनेवाले मुनिरूपधारी शूद्रकुलोत्पन्न 'शम्बुक'को मारा, अत एव उसको महाभाग्यवान् होनेसे उसका स्वच्छ यश समुद्रतक फैल गया है । बड़े वीरोंका विजयी यदि किसी छोटेपर विजय पाता है तो उस विजेताका यश नहीं होता, किन्तु उस छोटे विजित व्यक्तिका ही यश होता है ] ॥ ७१ ॥

( मृत्युभीतिकरपुण्यजनेन्द्रत्रासदानजमुपार्ज्य यशस्तत् ।
ह्रीणवानसि कथन्न विहाय क्षुद्रदुर्जनभिया निजदारान् ॥ ४ ॥[1] )

---

१. अयं श्लोकः 'प्रकाश' व्याख्ययैव सह स्थापितोऽत्र ।

मृत्युभीतीति । यस्मान्मृत्योर्यमादन्येषां भीतिः, मृत्योर्भीतिकरः पुण्यजनेन्द्रो राक्षसेन्द्रो रावणस्तस्यापि मरणपर्यन्तं त्रासदानाद्भयोत्पादनाद्धेतोर्जातं तदतिप्रसिद्धं लोकत्रये गीयमानं यश उपार्ज्य क्षुद्रोऽत्यल्पको दुर्जनस्तस्माद्भिया भयेन पामरलोकापवादभिया निजदारानात्मनः प्रियां सीतां विहाय परित्यज्य कथं न ह्रीणवान् लज्जितवानसि । लज्जितव्यं तावत्त्वयेत्यर्थः । यो रावणाय भयं दत्तवांस्तस्य दुर्जनभीत्या निर्दुष्टजनप्रियापरित्यागे हि लज्जैव युक्ता । अतिमाननिजस्त्रीहर्ता रावणो नाशितो लोकापवादभयाच्च सापि परित्यक्तेति । एतादृशः शूरोऽभिमानी लोकापवादभीरुश्च कोऽपि नास्तीति भावः । 'यातुधानः पुण्यजनः' इत्यमरः । 'भीतिं करोतीति ताच्छील्ये टः ॥ ४ ॥

यमको भी डरानेवाले राक्षसेन्द्र ( रावण ) को त्रस्त करनेसे उत्पन्न उस ( वर्णनातीत ) यशको उपार्जितकर क्षुद्र दुर्जनके भयसे ( अग्निमें सुपरीक्षित एवं प्रेयसी ) अपनी स्त्री ( सीता ) को छोड़कर क्यों लज्जित नहीं हुए ? [ महाबली रावणके विजेता तुमको क्षुद्र दुष्टसे डरनेमें लज्जित होना उचित था । स्तुति पक्षमें—तुम्हारे-जैसा शूरवीर अपनी एवं लोकापवादसे डरनेवाला संसारमें कोई नहीं है ] ॥ ४ ॥

इष्टदारविरहौर्वपयोधिस्त्वं शरण्य ! शरणं स ममैधि ।
लक्ष्मणक्षणवियोगकृशानौ यः स्वजीविततृणाहुतियज्वा ॥ ७२ ॥

इष्टेति । शरण्य ! हे आश्रितरक्षक ! राम !, यः त्वं भवान्, लक्ष्मणस्य अनुजस्य सौमित्रेः, क्षणवियोगः अत्यल्पकालविच्छेद एव, कृशानुः अग्निः तस्मिन्, स्वजीवितस्यैव निजजीवनस्यैव, तृणस्य यवसस्य, आहुत्या आहुतिदानेन, निक्षेपेणेत्यर्थः । यज्वा इष्टवान्, याज्ञिक इत्यर्थः । 'सुयजोः ङ्वनिप्' । आसीरिति शेषः । सरयूसलिले निमज्ज्य देहं त्यक्तवतो लक्ष्मणस्य क्षणकालवियोगमपि असहिष्णुः यस्त्वं स्वजीवनं विसर्जयामासेत्यर्थः । सः तादृशः, इष्टदाराणां प्रियभार्यायाः सीतायाः, विरहः वियोग एव, और्वः वाडवानलः, तस्य पयोधिः आश्रयभूतसागरसदृशः, त्वं भवान्, मम मे, शरणं रक्षिता, एधि भव । प्रेयसीस्नेहेभ्योऽपि भ्रातृस्नेहो गरीयानिति तात्पर्यम् ॥७२॥

हे शरणागतरक्षक ! जो तुमने लक्ष्मणके क्षणिक वियोगरूपी अग्निमें अपने जीवनरूप तृणकी आहुति से ( लक्ष्मणके क्षणिक वियोग में तृणवत् प्राणत्याग रूप ) यज्ञ करनेवाले हो, प्रेयसी सीताके विरहरूप; वडवानलके समुद्र अर्थात् आश्रय वह तुम मेरा रक्षक होवो । [ यहां रामके स्त्रीविरहसे भ्रातृविरहका असह्यतर होना सूचित होता है ] ॥ ७२ ॥

पौराणिक तथा—( १ ) सीतापहरणके बाद लङ्कामें युद्ध करते समय मेघनादके शस्त्रसे लक्ष्मणको मूर्च्छित देख राम भी तत्काल मूर्च्छित हो गये । यह कथा वाल्मीकि रामायणका है । युद्ध ( लङ्का ) काण्डमें आयी है ।

अथवा—( २ ) रामावतारके अवसानके समीप आनेपर उनके पास मुनिरूप धारणकर

काल आया और उनसे एकान्तमें वार्तालाप करने की इच्छा प्रकट की। तदनुसार रामचन्द्रने लक्ष्मणको द्वारपर नियुक्तकर कहा कि 'हम दोनोंके एकान्तमें वार्तालाप करते समय कोई भी भीतर आ जायेगा तो इस महापराधमें तुम्हें प्राणदण्ड दिया जायेगा'। ऐसा अनुशासितकर रामचन्द्र मुनिरूपधारी कालसे वन्द कमरेमें वार्तालाप करने लगे उसी समय महाक्रोधी दुर्वासा मुनि आ गये और तत्काल ही रामचन्द्रसे मिलना चाहा, अन्यथा सवंश समस्त रघुवंशको भी शाप देकर नष्ट करनेकी धमकी उन्होंने दी। लक्ष्मणने सोचा कि यदि मुनिको हम भीतर जानेकी अनुमति नहीं देते हैं तो ये समस्त रघुवंशियों को ही शापसे नष्टकर देंगे, तथा यदि भीतर जानेकी अनुमति देता हूं तो राजा रामचन्द्र केवल मुझे ही प्राणदण्ड देंगे, अतएव अपने प्राण देकर समस्त रघुवंशियोंकी मुनिशापसे रक्षा करना उचित है' ऐसा विचारकर लक्ष्मणने दुर्वासा मुनिको भीतर जानेकी अनुमति दे दी। फिर क्या था ? समय ( शर्त ) के अनुसार रामचन्द्रकी आज्ञासे लक्ष्मणने सरयू-नदीके जलमें प्रवेशकर अपने प्राण त्याग दिये और उनके विरहको नहीं सह सकनेके कारण श्रीरामचन्द्रने भी तत्काल ही परम धामको प्रयाण किया। यह कथाप्रसङ्ग वाल्मीकि रामायणके उत्तरकाण्डमें मिलता है।

**क्रौञ्चदुःखमपि वीक्ष्य शुचा यः श्लोकमेकमसृजत् कविराद्यः।**
**स त्वदुत्थकरुणः खलु काव्यं श्लोकसिन्धुमुचितं प्रबबन्ध ॥ ७३ ॥**

**क्रौञ्चेति। हे राम ! विष्णो ! यः आद्यः प्रथमः, कविः कवयिता वाल्मीकिः, क्रौञ्चस्य पक्षिविशेषस्य, कामविमुग्धयोः क्रौञ्चाख्यपक्षिमिथुनयोर्मध्ये एकस्मिन् व्याधेन हन्यमाने अपरस्य तदाख्यपक्षिणः इति यावत्। दुःखं शोकम्, वीक्ष्यापि दृष्ट्वाऽपि, शुचा शोकेन, एकम् एकसङ्ख्यकम्, श्लोकं—'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥' इति अमुं शोकोद्भवत्वात् श्लोकं पद्यम्, असृजत अरचयत्। सः आद्यः कविः, त्वदुत्था त्वत् त्वत्तः सीताविरहादिदुःखपीडितात् भवतः, उत्था उद्भूता, भवद्विषये समुत्पन्ना इत्यर्थः। करुणा करुणरसो यस्य स तादृशः सन्, उचितं खलु योग्यमेव, अतिक्षुद्रस्य एकस्य पक्षिणः शोकात् एकस्मिन् श्लोके रचिते पुरुषोत्तमस्य भवतः शोकात् वहुतरश्लोकरचनाया एव औचित्यादिति भावः। श्लोकसिन्धुं पद्यसागरम्, चतुर्विंशतिसहस्रश्लोकनिवद्धत्वात् सागरतुल्यमित्यर्थः। काव्यं रामायणं नाम महाकाव्यम्, प्रबबन्ध रचयामास ॥ ७३ ॥**

जिस आदिकवि ( वाल्मीकि ) ने ( कामपरवश ) क्रौञ्च पक्षीके दुःखको देखकर शोकसे ( मा निषाद ! प्रतिष्ठां त्व············ ) एक श्लोकको रचा, ( सीता-परित्यागके कारण ) तुम्हारे विषयमें उत्पन्न करुणावाले उस वाल्मीकिने श्लोक-समुद्र ( २४००० श्लोक होनेसे समुद्रतुल्य महान् 'वाल्मीकि रामायण' नामक ) काव्यको रच दिया। [ साधारणतम

तिर्यग्जातीय क्रौञ्च पक्षीके दुःखसे करुणार्द्र हो एक श्लोक रचनेवाले कविका आप जैसे महापुरुषके दुःखसे अत्यन्त करुणार्द्र होकर २४००० श्लोकवाले महाकाव्यका रचा जाना उचित ही है। अथवा—आपने एक समुद्रको बांधा तो आपमें संलग्नचित्त मुनिने भी श्लोक-सिन्धुको बांधा यह उचित ही है। समस्त सांसारिक सम्बन्धसे रहित मुनिने भी आपके दुःखसे करुणार्द्र हो महाकाव्य बनाकर आपका वर्णन किया, अत एव आपका प्रभाव अचिन्त्य है ] ॥ ७३ ॥

पौराणिक कथा—एक समय वाल्मीकि मुनि स्नान करनेके लिए जब अपने आश्रमके पास बहती हुई तमसा नदीको जा रहे थे, तब कामपरवश क्रौञ्च-मिथुनमेंसे व्याधने नर ( पुरुष पक्षी ) को मारा, उसे देख करुणार्द्र महामुनिने सर्वप्रथम लौकिक अनुष्टुप् छन्दमें 'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥' इस श्लोककी रचना की। इसके पूर्व वेदके अतिरिक्त लोकमें अनुष्टुप् छन्दमें रचना किसीने नहीं की थी, अतएव इसकी रचना करनेसे ही वाल्मीकि मुनि 'आदि कवि' कहलाये।

विश्रवःपितृकयाऽऽप्तुमनर्हं सश्रवस्त्वमनयेत्युचितज्ञः ।
त्वं चकर्त्तिथ न शूर्पणखाया लक्ष्मणेन वपुषा श्रवसी वा ? ॥ ७४ ॥

विश्रव इति। हे राम ! विष्णो ! विश्रवाः तदाख्यमुनिः श्रवणरहितश्च जनः, पिता जनको यस्याः सा विश्रवःपितृका तया। 'नद्यृतश्च' इति कप् समासान्तः। अनया शूर्पणखया, सश्रवस्त्वं श्रोत्रसहितत्वम्, आप्तुम् लब्धुम्, अनर्हम् अयोग्यम्, इत्युचितज्ञः इति एवम्, उचितं योग्यम्, जानाति बुध्यते यः स तादृशः, त्वं भवान्, लक्ष्मणेन वपुषा लक्ष्मणरूपेण निजदेहेन, एक एव नारायणः आत्मानं चतुर्द्धा विभज्य रामादिभ्रातृचतुष्टयरूपेण अवतीर्णत्वात् इति भावः। शूर्पणखायाः तदाख्यायाः रावणभगिन्याः निशाचर्याः, श्रवसी श्रोत्रे, किं वा न चकर्त्तिथ ? किं न कृत्तवान् असि ? अपि तु चकर्त्तिथ एवेत्यर्थः ॥ ७४ ॥

'विश्रवा ( विश्रवा नामक मुनि, पक्षा०—कानरहित व्यक्ति ) की कन्या इस (शूर्पणखा) को कान सहित होना अनुचित है' इस उचित बातको जाननेवाले तथा ( एक विष्णुके ही अंशसे चारो भाइयोंको अवतार ग्रहण करनेके कारण ) लक्ष्मणशरीरधारी तुमने शूर्पणखाके दोनों कानोंको नहीं काटा था क्या ? अर्थात् अवश्य काटा था ॥ ७४ ॥

ते हरन्तु निर्ऋतिव्रततिं मे यैः स कल्पविटपी तव दोर्भिः ।
छद्मयादवतनोरुदपाटि स्पर्द्धमान इव दानमदेन ॥ ७५ ॥

ते इति। हे विष्णो ! कृष्ण ! छद्मयादवतनोः छद्मना कपटेन, यादवी यदुवंशोद्भवकृष्णरूपिणी, तनुः मूर्त्तिर्यस्य तादृशस्य, निराकारत्वस्यैव स्वाभाविकत्वात् लीलास्वीकृतयादवशरीरस्येत्यर्थः। तव ते, यैः दोर्भिः चतुर्भिर्बाहुभिः, दानमदेन लोकेभ्यः

१. 'दुरितव्रततिम्' इति पाठान्तरम्।

अभीष्टवितरणजनितदर्पेण हेतुना, स्पर्द्धमानः इव तव दोर्भिः सह स्पर्द्धां कुर्वन्निव स्थितः, सः प्रसिद्धः, कल्पविटपी कल्पतरुः, उदपाटि उत्पाटितः, तव दोर्भिः सह स्पर्द्धाकरणजन्याहङ्कारदूरीकरणायेति भावः। ते तादृशाः तव दोषः, मे मम सम्बन्धिनीम्, निर्ऋतिम् अलक्ष्मीमेव, व्रततिं लताम्, 'दुरितव्रततिम्' इति पाठ एव साधुः। दुरितव्रततिं पापरूपिणीं लताम्। 'स्यादलक्ष्मीस्तु निर्ऋतिः', 'वल्ली तु व्रततिर्लता' इत्युभयत्राप्यमरः। हरन्तु नाशयन्तु, छिन्दन्तु इत्यर्थः। महातरूत्पाटनशक्तस्य लताच्छेदनमकिञ्चित्करमेवेति भावः। कृष्णकर्तृककल्पवृक्षोत्पाटनकथा हरिवंशेऽनुसन्धेया ॥ ७५ ॥

(अब आठ (२१।७५—८२ और क्षेपकसहित नव) श्लोकोंसे कृष्णावतारकी स्तुति करते हैं—) कपटसे यादवशरीरधारी (अथवा—कपटयुक्त (कंसादिरूपी वनके लिए) दवाग्निशरीरधारी) अर्थात् कृष्णावताररूप तुम्हारे जिन (चारो) बाहुओंने दानके मदसे तुम्हारे (बाहुओंके साथ) स्पर्द्धा करते हुएसे कल्पवृक्षको उखाड़ दिया; वे तुम्हारे (चारो) बाहु मेरे अलक्ष्मी (पाठा०—पाप) रूपी लताको नष्ट करें। [वृक्षको उखाड़नेवाले बाहुओंका तथा वृक्षको नष्ट करनेवाले कपट दवाग्निशरीरधारीका लताको नष्ट करनेमें समर्थ होना उचित ही है] ॥ ७५ ॥

पौराणिक कथा—सत्यभामाके याचना करनेपर श्रीकृष्णने स्वर्गमें इन्द्रको जीता और वहांसे कल्पवृक्षको लाकर सत्यभामाके लिए दिया, यह कथाप्रसङ्ग हरिवंश महापुराणमें है।

बालकेलिषु तदा यदलावीः कर्परीभिरभिहत्य तरङ्गान्।
भाविबाणभुजभेदनलीलासूत्रपात इव पातु तदस्मान् ॥ ७६ ॥

बालेति। हे विष्णो! कृष्ण! तदा तस्मिन् समये, शैशवे इत्यर्थः। बालकेलिषु शिशुसुलभक्रीडासु, कर्परीभिः शर्कराभिः, स्फुटितकलशानां क्षुद्रक्षुद्रखण्डैरित्यर्थः। 'स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यदि' इति कोषात् अपचयविवक्षायां स्त्रीत्वम्। अभिहत्य ताडयित्वा, तरङ्गान् ऊर्मीन्, यमुनाया इति भावः। यत् अलावीः छिन्नवान् असि, शिशवो हि खर्परखण्डताडनैस्तरङ्गान् छिन्दन्ति इति दृश्यते। भाविनी भविष्यन्ती, बाणस्य तदाख्यस्य असुरराजविशेषस्य, भुजानां सहस्रबाहूनाम्, भेदनमेव छेदनमेव, लीला क्रीडा, तस्याः सूत्रपातः इव प्रथमसूचनमिव, स्थितमिति शेषः। तत् तरङ्गलवनम्, कर्तृ अस्मान् सप्रकृतिवर्गं मामित्यर्थः। पातु अवतु। दृश्यते च लोके यथा रथकाराः काष्ठपातनात् पूर्वं तत्र कृष्णसूत्रेण रेखाङ्कनं कुर्वन्ति तद्वदिति भावः ॥ ७६ ॥

तुमने उस समय (कृष्णावतारमें) बालक्रीडाओंमें फूटे हुए झिकड़ों (घड़े आदिके टुकड़ों) से यमुनाके तरङ्गोंको मार-मारकर जो खण्डित किया था, भविष्य (उपाहरणके समय) में बाणासुरके बाहुच्छेदनरूप क्रीडाके विलासके सूत्रपातके समान वह (झिकड़ोंसे यमुनाके तरङ्गोंका खण्डन करना) हमारी रक्षा करे। [जिस प्रकार लकड़ीको बराबर

काटनेके लिए बढ़ई पहले उसपर धागा आदिसे चिह्न बना लेता है, उसी प्रकार भविष्यमें उषाहरणके समय बाणासुरके बाहुओंको काटनेके लिए मानो तुमने झिकड़ोंसे यमुनाके तरङ्गोंको काट-काटकर गेरु आदिका सूत्रपात किया। झिकड़ोंको पानीके तरङ्गोंपर फेंकना बच्चोंका एक क्रीडा-विशेष होता है, जिसे 'छिछली मारना' कहते हैं ] ॥ ७६ ॥

कर्णशक्तिमफलां खलु कर्तुं सज्जितार्जुनरथाय नमस्ते ।
केतनेन कपिनोरसिशक्तिं लक्ष्मणं कृतवता हृतशल्यम् ॥ ७७ ॥

कर्णेति । हे विष्णो ! कृष्ण ! उरसि वक्षसि, शक्तिः रावणनिक्षिप्तशक्तिशेलाख्यः आयुधविशेषः यस्य तं तादृशम्, 'अमूर्द्धमस्तकात् स्वाङ्गादकामे' इति सप्तम्यलुक् । लक्ष्मणं सौमित्रिम्, हृतं निष्काशितम्, गन्धमादनाख्यपर्वतसहानीतेन विशल्यकरण्याख्यौषधविशेषेणेति भावः । शल्यं तत्-शक्तिशेलाख्यास्त्रविशेषः यस्मात् तं तादृशम्, कृतवता विहितवता, कपिना वानरेण, हनूमद्रूपेणेत्यर्थः । केतनेन लाञ्छनेन, रथध्वजभूतेन हनूमता इत्यर्थः । खलु निश्चितमेव, कर्णस्य राधेयस्य, शक्तिः सामर्थ्यमेव शक्तिः कासूनामास्त्रविशेषः तां, 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । अफलां व्यर्थाम्, कर्तुं विधातुम्, सज्जितः कपिना संयोजितः, अर्जुनस्य पार्थस्य, रथः स्यन्दनं येन तस्मै, ते तुभ्यम्, अर्जुनसारथये इत्यर्थः । नमः प्रणतिः, अस्तु भवतु । रामावतारे रावणनिक्षिप्तशक्तिशेलेन मृतप्रायं लक्ष्मणम् उज्जीवयतः हनूमतः शक्तिशेलनिर्हरणे सामर्थ्यं त्वया दृष्टम्, इदनीं कृष्णावतारेऽपि तदेवानुस्मृत्य कर्णनिक्षिप्तां शक्तिमपि विफलीकर्त्तुं स एव हनुमान् भवता अर्जुनस्य रथध्वजे स्थापितः इति रणपण्डिताय तुभ्यं नमः इति निष्कर्षः ॥ ७७ ॥

( मेघनादके द्वारा ) छातीमें लगी हुई शक्तिवाले लक्ष्मणको (गन्धमादनपर्वतसे 'विशल्य' नामक ओषधि लाकर ) शल्यरहित करनेवाले तथा पताकास्थित हनुमान्‌से कर्णकी ( इन्द्रदत्त ) शक्तिको निरर्थक करनेके लिए अर्जुनके रथको सज्जित करनेवाले अर्थात् अर्जुनके सारथि बने हुए तुमको नमस्कार है । [ रामावतारमें लक्ष्मणके हृदयमें लगी हुई मेघनादप्रहृत शक्तिको गन्धमादन पर्वतसे 'विशल्य' नामक ओषधिको लाकर हनुमान्‌ने निष्फल कर दिया था, अत एव इन्द्रने जो कर्णके लिए शक्ति दी है, उसे भी निष्फल करनेके लिए तुमने पूर्वानुभवी हनुमान्‌को अर्जुनके रथ-पताकापर नियुक्तकर अर्जुनका सारथित्व किया, उस रणचतुर आपके लिए नमस्कार है ] ॥ ७७ ॥

नापगेयमनयः सशरीरं द्यां वरेण नितरामपि भक्तम् ।
मा स्म भूत् सुरवधूसुरतज्ञो दिव्यपि व्रतविलोपभियेति ॥ ७८ ॥

नेति । हे विष्णो ! कृष्ण ! व्रतस्य चिरब्रह्मचर्यनियमस्य, भीष्मो हि यावच्छरीरं ब्रह्मचर्यं सङ्कल्पितवानिति महाभारतकाराः । विलोपात् नाशात्, सुरवधूसुरतेनेति

१. 'स' इति 'प्रकाश' सम्मतः पाठः । २. '—सुरताज्ञः' इति पाठान्तरम् ।

भावः । भिया भयेन हेतुना, दिवि स्वर्गेऽपि, सुरवधूनां रम्भादीनां देवाङ्गनानाम्, सुरतस्य मैथुनसुखसम्भोगस्य, ज्ञः अभिज्ञः, मा स्म भूत् न भवतु, भीष्म इति भावः । इति एवम्, विचार्यैव इति शेषः । नितराम् अत्यर्थम्, भक्तम् अनुरागिणं सेवकमपि, आपगायाः नद्या गङ्गाया अपत्यमिति आपगेयं गाङ्गेयम्, भीष्ममित्यर्थः । वरेण त्वं सशरीर एव स्वर्गं गच्छ इति वरप्रदानेन, सशरीरं देहसहितम्, द्यां स्वर्गम्, न अनयः न नीतवान्, त्वमिति शेषः । किन्तु स्वर्गादपि श्रेष्ठं मोक्षं प्रापितवानित्यपूर्वं ते भक्तवात्सल्यमिति भावः ॥ ७८ ॥

( पूर्ण प्रतिज्ञात ब्रह्मचर्य व्रतके नष्ट होनेके भयसे सशरीर स्वर्गप्राप्ति करनेपर ) स्वर्गमें भी देवाङ्गनाओंका सङ्ग न हो, ऐसा विचारकर आपने परमभक्त भी भीष्मपितामहको वरदानसे सशरीर स्वर्गमें नहीं पहुंचाया । [ भीष्मने ब्रह्मचर्य रहनेका व्रत लिया था, अतः एव 'यदि मैं इनको सशरीर स्वर्गमें वरदान देकर भेजता हूं तो वहां पर देवाङ्गनाके सङ्गसे इनका व्रत-भङ्ग हो जायेगा, इसी भयसे आपने परमभक्त भी भीष्मको वरदान देकर सशरीर स्वर्गमें नहीं पहुंचाया, किन्तु उससे भी उत्तम मोक्षपद दिया । अतएव आप-परम भक्तवत्सल हैं ] ॥ ७८ ॥

पौराणिक कथा—सत्यवतीसे विवाह करनेके इच्छुक पिताकी इच्छाको पूर्ण करनेके लिए भीष्मने सत्यवती-पिताके कहनेसे आजन्म ब्रह्मचारी रहनेका व्रत धारण कर लिया था । यह कथा महाभारतमें आयी है ।

घातितार्कसुतकर्णदयालुर्जैत्रितेन्दुकुलपार्थकृतार्थः ।
अर्द्धदुःखसुखमभ्यनयस्त्वं साश्रुभानुविहसद्विधुनेत्रः ॥ ७६ ॥

घातितेति । घातितः विनाशितः, अर्जुनेनेति शेषः । यः अर्कसुतः सूर्यपुत्रः, कर्णः अङ्गराजः, तस्मिन् दयालुः कारुण्यपरः, अत एव अर्करूपदक्षिणनयनस्य साश्रुत्वमिति भावः । तथा जैत्रितः जेता कृतः, इन्दुकुलः चन्द्रवंशजातः, यः पार्थः अर्जुनः, तेन कृतार्थः सफलमनोरथः, भूभारहरणरूपनिजावतरणप्रयोजनस्य साफल्यादिति भावः । एवञ्च चन्द्ररूपवामलोचनस्य हर्षविहसितत्वमिति भावः । एवञ्च यथाक्रमं साश्रुः रोदनजलसहितः, भानुः सूर्यश्च, विहसन् हर्षेण विकासमाप्नुवन्, विधुः चन्द्रश्च, तौ नेत्रे दक्षिणवामलोचनद्वयं यस्य सः तादृशः, सूर्याचन्द्रमसौ नारायणस्य भगवतः नेत्रद्वयमिति श्रुत्युक्तत्वात्, त्वं भवान्, दुःखं सुखञ्च दुःखसुखम् दुःखसुखस्य अर्द्धम् 'अर्द्धं नपुंसकम्' इति अर्द्धशब्दस्य पूर्वनिपातः । पर्यायक्रमेण अर्द्धदुःखम् अर्द्धसुखञ्चेत्यर्थः । अभ्यनयः अभिनीतवानसि । अभ्यनय इत्यनेन निष्क्रियस्य ते न काऽपि वास्तविकी क्रिया विद्यते, यास्तु क्रियाः तव दृश्यन्ते, तत् सर्वमेवाभिनयमात्रमिति सूचितवानिति भावः ॥ ७९ ॥

( कौरव-पाण्डवके युद्धमें ) सूर्य-पुत्र ( कर्ण ) को मरवाने तथा चन्द्रकुलोत्पन्न अर्जुनको

विजयी बनानेसे ( क्रमशः ) अश्रुयुक्त सूर्य तथा विहसित होते हुए चन्द्ररूप ( दक्षिण-वाम ) नेत्रद्वयवाले तुमने एक साथ ही आधे दुःख तथा आधे सुखका अभिनय किया । [ सूर्य-पुत्र कर्णके मरनेपर सूर्यका दुःखी होना रोना तथा चन्द्रवंशोत्पन्न अर्जुनके विजयशील होनेसे चन्द्रका हर्षित होकर हंसना उचित ही है, सूर्य-चन्द्र ही विष्णुके दक्षिण-वाम नेत्र हैं ]॥ ७९ ॥

प्राणवत्प्रणयिराध ! न राधापुत्रशत्रुसखता सदृशी ते ।
श्रीप्रियस्य सदृगेव तव श्रीवत्समात्महृदि धर्त्तुमजस्रम् ॥ ८० ॥

प्राणेति । प्राणवत् जीवनतुल्या, प्रणयिनी प्रेयसी, राधा वृषभानुसुता राधिका यस्य तत्सम्बुद्धिः हे प्राणवत्प्रणयिराध ! हे कृष्ण ! ते तव, राधा अधिरथाख्यसूत-जाया, सैव राधा श्रीराधिका वृन्दावनेश्वरी, तस्याः पुत्रः तनयः, कर्णः इत्यर्थः । अन्यः कश्चिदित्यर्थश्च, तस्य शत्रुः अर्जुनः, तस्य सखा मित्रं राधापुत्रशत्रुसखः तस्य भावः तत्ता सा, न सदृशी न युक्ता, पुत्रशत्रुं प्रति शत्रुताया एवौचित्यादिति भावः । परन्तुः श्रीः लक्ष्मीः, प्रिया प्रीतिदायिनी भार्या यस्य तादृशस्य, तव भवतः, आत्मनः स्वस्य, हृदि वक्षसि, अजस्रं सर्वदा, श्रीवत्सं रोमावर्त्तरूपलाञ्छनविशेषम् , श्रियः लक्ष्म्याः, वत्सं पुत्रञ्च, धर्त्तुं ग्रहीतुम् , सदृक् सदृशमेव, योग्यमेवेत्यर्थः । राधाप्रियस्य राधासुतद्वेषिणि सख्यम् अनुचितम्, श्रीप्रियस्य हृदि श्रीवत्सधारणं युक्तमिति राधा-श्रीवत्सशब्दाभ्यां छद्मनोक्तिः ॥ ८० ॥

प्राणतुल्य प्रणयिनी है राधा जिसकी, ऐसे हे कृष्ण भगवान् ! राधापुत्र ( कर्ण ) के शत्रु ( अर्जुन ) की मित्रता तुम्हारे योग्य नहीं है ( प्राणप्रणयिनी राधावालेको राधापुत्रके वैरी की मित्रता करना उचित नहीं होनेसे विरोध आता है, उसका परिहार 'राधा' नामक गोपकन्या तथा अर्जुनका पालन करनेवाली 'राधा' नामकी कैवर्त्त स्त्री करनेसे होता है )। तथा लक्ष्मीके प्रिय तुम्हें श्रीवत्स ( श्रीका पुत्र, पक्षा०—ब्राह्मण चरणका 'श्रीवत्स' नामक हृदयस्थ चिह्न-विशेष ) को अपने हृदयमें निरन्तर धारण करना उचित ही है ( श्रीप्रियका श्रीपुत्रको हृदयमें धारण करना योग्य है ) । [ तुम्हारे-जैसा स्वपक्षपातकर्ता एवं ब्राह्मणके चरणचिह्नको सदा हृदयमें धारणकर लोगोंको ब्राह्मण-भक्ति-परायण होनेकी शिक्षा देने-वाला दूसरा कोई नहीं है ] ॥ ८० ॥

( तावकापरतनोः[2] सितकेशस्त्वं हली किल स एव च शेषः ।
साध्वसाववतरस्तव धत्ते तज्जर[3]च्चिकुरनालविलासः ॥ ५ ॥ )

( तावकेति । हे कृष्ण ! हली लाङ्गलधरो बलभद्रः स एव च शेषोऽनन्तस्त्वमेव ।

१. '—सखिता' इति पाठान्तरम् ।

२. अयं श्लोको मया 'प्रकाश' व्याख्यासहित एवात्र स्थापितः। अत्र 'तावकीपर-तनोः' इति पाठः उपेक्ष्यः, पुंवद्भावप्रसङ्गात् । ३. 'स्वज्जरत्—' इति पाठान्तरम् ।

शेषावताररूपोऽपि बलभद्रो भवानेव, न तु स त्वत्तो भिन्न इत्यर्थः। त्वं बलभद्रः, स एव शेषः। त्वत्तो हली न भिद्यते, हलिनश्च शेषो न भिद्यत इति वा। यतः कायस्य सम्बन्धाज्जरसा सितकेशो धवलितकचः किलेत्यागमे। विष्णुपुराणादौ च यदुक्तम्—'उज्जहारात्मनः केशौ सितकृष्णौ ततः प्रभुः।' इति। न विद्यते परोत्कृष्टाऽन्या यस्याः सा तावकी अपरा तनुस्त्वत्सम्बन्धिनी सर्वोत्कृष्टा सत्त्वमूर्तिस्तस्याः सितकेशः श्वेतकेशरूपो हली तवावतारोंऽशावताररूपोऽसौ हली त्वं किल। तदवयवभूतकेशरूपत्वात्तस्य। स च हल्येव शेष इति वा। शेषरूपबलदेवलक्षणोऽस्मावतरो मूर्तिः। अत एव तस्या भवदीयापरतनोर्जरतो जरसा धवलीकृतस्य चिकुरनालस्य केशदण्डस्य विलासं वर्णसारूप्यं साधु यथा तथा धत्ते। अतिगौरो बलदेवस्त्वदीयापरतनुर्धवलकेश इव भातीत्यर्थः। शेषस्यापि दीर्घत्वधवलत्वाभ्यां जराधवलदीर्घकेशसारूप्यधारणं युक्तमेव। 'कारणगुणा हि कार्ये गुणानारभन्ते' इति न्यायाच्च युक्तमेव। 'अंशावतारो बलभद्र' इति चोक्तम्। अत्र श्वेतकेशः सहज एव, न तु जरायोगात्, इति वा। यतो हरिर्नित्यतरुण इति पुराणादिप्रसिद्धिः। वस्तुतस्तु—कस्य ब्रह्मसुखस्येशौ सुखरूपावित्यर्थः। प्रकाशकत्वेन सत्त्वस्य सितशब्दवाच्यत्वात्, मोहकत्वेन च तमसः कृष्णशब्दवाच्यत्वात् सितकृष्णौ सत्त्वतमोगुणात्मकावेतावतारौ भूभारोत्तारणार्थं प्रभुरादिनारायणः स्वस्मात्प्रकटीचकारेति विष्णुपुराणस्य 'सित-कृष्ण' पदस्यार्थः। 'कृष्णस्तु भगवान् स्वयम्' इति भागवतवचनेन कृष्णस्तु—लीलाविग्रहधारी परब्रह्मैव। 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।' इति भगवद्वचनात्। बलभद्रस्त्ववतारः 'रामो रामश्च रामश्च' इति वचनात्। अन्यथा बलभद्रस्य सत्त्वमूर्तित्वम्, कृष्णस्य तमोमूर्त्तित्वमापद्येत, न च तथास्तीति बलभद्रस्य तमःप्रधानत्वदर्शनादित्याशयः। 'शितिकेश—' इति पाठे—'शिती धवलमेचकौ' इत्यभिधानात्त्वदीयपुराणतनोः सम्बन्धी शितिकेशः श्यामकेशरूपस्त्वम्, हली च धवलकेशरूपः, स एव च हली शेषो बलभद्रः शेषावतारः इति पुराणादौ। स त्वदीयधवलकेशविलासं धत्ते तत्साधु। कृष्णस्य कृष्णवर्णत्वाद्ध(ह) लिनश्चातिगौरत्वाद्यथाक्रमं श्यामसितकेशत्वमौत्प्रेक्षिकत्वेनैव व्याख्येयमित्यलमतिविस्तरेण। 'तावकापर—' इति पाठः साधीयान्, यतः 'युष्मदस्मदोः—' इत्यणि तवकादेशे वृद्धौ च 'वृद्धिनिमित्तस्य—' इत्यादिना पुंवद्भावप्रतिषेधे प्रसक्तेऽपि कर्मधारयत्वात् 'पुंवत्कर्मधारय—' इति प्रतिप्रसवात्पुंवद्भावः। अवतरः पूर्ववत् ॥५॥ )

तुम्हारी सर्वश्रेष्ठ मूर्तिके श्वेतकेशवाले हलधारी ( बलराम ) हैं, वह शेष ( शेषावतार) तुम्हीं हो, ( जो बलराम हैं, वही शेषनाग हैं और वह तुम्हीं हो अर्थात् बलराम तथा शेषनागमें कोई भेद नहीं है और उक्तरूप तुम्हीं हो। शरीर-सम्बन्धसे बलराम श्वेतकेश हैं)। शेषनागरूप 'बलराम' की यह मूर्ति तुम्हारे सर्वोत्कृष्ट शरीरके वार्द्धक्यके कारण श्वेत किये गये केश-समूहके विलासको जो धारण करती है, यह ठीक ही है। [ अत्यन्त गौरवर्णवाले

बलरामके केशोंको भी स्वत एव श्वेतवर्ण होना उचित ही है। अथवा श्वेत केश सहज ही है, वार्द्धक्यके संसर्गसे नहीं है, क्योंकि पुराणादि शास्त्रोंमें विष्णुको सर्वदा तरुण ही कहा गया है। वस्तुतस्तु—प्रकाशक होनेसे सत्वगुण 'सित' (श्वेत) शब्दका और मोहक होनेसे तमोगुण 'असित' (कृष्ण) शब्दका व्याच्य है और सत्व तथा तमोगुणद्वयात्मक अवतारको पृथ्वीका भार दूर करनेके लिए आदिनारायण भगवान्ने अपनेसे प्रकट किया है, ऐसा विष्णुपुराणस्थ 'सित' शब्दका अर्थ जानना चाहिये और कृष्णजी तो लीला-विग्रहधारी साक्षात् स्वयं परब्रह्म ही हैं, क्योंकि भगवान्का कोई भी शत्रु या मित्र नहीं है, वे तो सबमें समान व्यवहारकर्ता हैं। 'रामो रामश्च रामश्च' इस वचनके अनुसार बलरामजी अवतार-विशेष हैं, अन्यथा बलरामजी श्वेत होनेसे सत्त्वमूर्त्ति तथा कृष्णजी कृष्णवर्ण होनेसे तमोमूर्ति माने जायेंगे, किन्तु ऐसा नहीं है, क्योंकि बलरामजीको तमोगुणप्रधान तथा कृष्णजीको सत्त्वगुणप्रधान होना सर्व-सम्मत सिद्धान्त है।

हृद्यगन्धवह ! भोगवतीशः शेषरूपमपि बिभ्रदशेषः ।
भोगभूतिमदिरारुचिरश्रीरुल्लसत्कुमुदबन्धुरुचिस्त्वम् ॥ ८१ ॥

हृद्येति। हृद्यं मनोहरम्, गन्धं चन्दनादिसौरभम्, वहति धारयतीति हृद्यगन्धवहः तस्य सम्बोधनम्, हे हृद्यगन्धवह !, भोगवत्याः सुखभोगोचितायाः ककुद्मिकन्यायाः रेवत्याः, ईशः भर्त्ता, भोगः स्रक्चन्दनादिधारणम्, भूतिः ऐश्वर्यम्, भूषणादिधारणरूपा समृद्धिरित्यर्थः। मदिरा सुरा च, सुरापानञ्चेत्यर्थः। ताभिः रुचिरा मनोहारिणी, श्रीः सौन्दर्यं यस्य स तादृशः यद्वा—भोगस्य सम्भोगस्य, भूतिः समृद्धिः, भूतिकारिणीत्यर्थः। तया भोगभूत्या भोगसमृद्धिजनिकया, मदिरया सुरया, रुचिरा मनोज्ञा, श्रीः शरीरशोभा यस्य स तादृशः, मदिराया नेत्रलौहित्यादिरूपशोभाजनकत्वादिति भावः। बलभद्रस्य मदिराप्रियत्वादियमुक्तिः। उल्लसन्ती शोभमाना, कुमुदानां कैरवाणाम्, बन्धोः सख्युः, चन्द्रस्येत्यर्थः। रुचिः इव रुचिः शुभ्रशरीरकान्तिः यस्य सः तादृशः, त्वं भवान्, शेषस्य अनन्तनागस्य, रूपं मूर्त्तिम्, बिभ्रदपि धारयन्नपि, बलभद्रस्य शेषावतारत्वादिति भावः। अशेषः शेषो न, शेषात् अनन्तनागात् भिन्नः इत्यर्थः। असि इति शेषः, यो हि शेषः सः कथम् अशेषः इति शब्दतो विरोधः। अन्यच्च—हे विष्णो ! हृद्यः आहारेण हृदयान्तस्थः, गन्धवहः वायुः यस्य स तादृशः, सर्पाणां पवनाशनत्वात् इति भावः। तत्सम्बुद्धौ हे हृद्यगन्धवह ! भोगः फणः विद्यते अस्याः इति भोगवती नागरमणी। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। तस्याः ईशः स्वामी, यद्वा—भोगवत्याः पातालगङ्गायाः, ईशः अधिपतिः, अनन्तस्य पाताळाधिपतित्वादिति भावः। हृद्यगन्धवहभोगवतीशः इत्यस्य समस्तपदत्वे हृद्यगन्धवहश्च असौ भोगवतीशश्चेति विशेषणसमासः। भोगानां फणानाम्, भूतिः सम्पत्,

बाहुल्यमिति यावत् अस्यास्तीति भोगभूतिमान् , सहस्रफणत्वादिति भावः । इरया भुवा, शिरःस्थया पृथिव्या इत्यर्थः । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः । रुचिरा मनोहारिणी, श्रीः शोभा यस्य सः इरारुचिरश्रीः, भोगभूतिमांश्चासौ इरारुचिरश्रीश्चेति स तादृशः । कर्मधारयः तथा उल्लसन्ती शोभमाना, प्रकटयन्तीति यावत् , कुमुदे कुमुदाख्ये सर्पे 'कुमुदः कैरवे रक्त-पङ्कजे कुमुदः कपौ । दैत्यान्तरे च दिङ्नाग-नागयोः परिकीर्त्तितः' इति विश्वः । बन्धौ स्वजने, रुचिः प्रीतिः यस्य स तादृशः, त्वं भवान् , शेषस्य अनन्तस्य, रूपं मूर्त्तिम् , बिभ्रत् धारयन् अपि, अशेषः असीमः, असि भवसि, अतो न पूर्वोक्तिविरोधः । अनन्तनागात्मकबलरामस्यापि दशावतारान्तर्गतत्वे न सोऽपि त्वमेव, सर्वात्मकत्वाद्विष्णोरिति भावः ॥ ८१ ॥

हे हृदयहारी गन्धको धारण करनेवाले श्रीकृष्ण । आप भोगयुक्त गोपिकाओंके पति हैं, बलरामके रूपमें अवतार लेकर भी सम्पूर्ण विश्वरूप ( अनन्त ) हैं, भोगैश्वर्यसे मदिराके तुल्य मादक ( अतिहर्षप्रद ) एवं रुचिर कान्तिवाले हैं तथा आह्लादजनक चन्द्रमाके समान सुन्दर हैं । ( बलरामपक्षमें—आप मनोहर चन्दनादि-गन्धयुक्त भोगवाली रेवतीके स्वामी हैं, शेषरूप होते हुए भी अशेष हैं, यह विरोध हुआ, इसका परिहार यह है कि—बलराम होते हुए भी महान् हैं, भोगके ऐश्वर्यरूप मदिराके पीनेसे आप रुचिर कान्तिवाले हैं तथा गौरवर्ण होनेसे शोभमान चन्द्रमाके समान कान्तिवाले हैं । शेषनागपक्षमें—आप हृदयप्रिय चन्दनादि गन्धयुक्त भोगवती ( नामक पातालस्थ नदी, या—पातालपुरी ) के स्वामी हैं, शेषनागका रूप धारण करते हुए भी विशाल हैं, अपने शरीर की फणाओंके ऐश्वर्य ( समृद्धि—अधिकता ) से हर्षित करनेवाली रुचिर कान्तिवाले हैं तथा उल्लसित होते हुए कुमुदनामक सर्पमें प्रेम करनेवाले हैं ( या—उल्लसित होते हुए चन्द्रमाके समान स्वच्छ कान्तिवाले हैं ) ॥ ८१ ॥

रेवतीश ! सुषमा किल नीलस्याम्बरस्य रुचिरा तनुभासा ।
कामपाल ! भवतः कुमुदाविर्भावभावितरुचेरुचितैव ॥ ८२ ॥

रेवतीति । रेवत्याः ककुद्मिकन्यायाः, ईशः भर्त्ता, तस्य सम्बोधनं रेवतीश ! हे रेवतीरमणबलराम ! कामपाल ! भोः कामपालापराख्यबलराम ! 'रेवतीरमणो रामः कामपालो हलायुधः' इत्यमरः । कोः भूमेः मुदः प्रीतेः, आविर्भावाय उत्पादाय, भूभारहरणेनेति भावः । यद्वा-कुमुदस्य तदाख्यनागस्य, आविर्भावाय उपस्थितये, भाविता कृता, रुचिरिच्छा येन तादृशस्य, बलरामस्य अनन्तनागरूपत्वेन कुमुदस्य च अनन्तसजातीयत्वेन सख्यसम्बन्धादिति भावः, भवतः तव, तनुभासा शुभ्रदेहकान्त्या, नीलस्य नीलवर्णस्य, अम्बरस्य वस्त्रस्य, रुचिं रातीति रुचिरा मनोज्ञा, सुषमा शोभा, उचितैव अनुरूपैव, जातेति शेषः । श्वेतनीलयोर्वर्णयोः मिश्रणे शोभातिशयात् शरीरस्य शुभ्रकान्त्या नीलवसनस्य शोभा नितरामुचितैवेति भावः । अन्यच्च—

रेवतीश ! हे रेवतीनक्षत्रपते ! कामपाल ! हे मदनोद्दीपक ! शशधर ! कुमुदानां कैरवाणाम् , आविर्भावाय प्रकाशनाय, प्रस्फुटनायेत्यर्थः। भाविता सञ्जाता, रुचिः दीप्तिः तस्य तादृशस्य, भवतः तव, तनुभासा देहप्रभया, ज्योत्स्नयेत्यर्थः। नीलस्य नीलवर्णस्य, अम्बरस्य गगनस्य, रुचिरा रमणीया, सुषमा परमा शोभा, उचितैव युक्तैव किल, जातेति शेषः। नीलाकाशे शुभ्रकान्तिशशधरस्य रम्यदर्शनत्वादिति भावः॥ ८२॥

हे रेवतीरमण (बलराम)! हे कामपाल (बलराम, अथवा—भक्तमनोरथपूरक)! (पृथ्वीके भारको हरणकर) पृथ्वीके हर्षके प्रादुर्भावसे रुचिको (अथवा—गौरवर्ण होनेसे चन्द्ररुचिको) उत्पन्न करनेवाले, आपके शरीरकी गौरकान्तिसे नीले कपड़ेकी रुचिर शोभा होना उचित ही है। (पक्षा०—हे रेवती नक्षत्रके स्वामी तथा कामवर्द्धक (चन्द्र)!) कुमुदको विकसित करनेके लिए प्रकटित चाँदनीवाले तुम्हारे शरीरकी कान्तिसे नीले आकाशकी रुचिर (हृद्य) तथा उत्कृष्ट शोभा होना उचित ही है। [गौरवर्ण शरीरमें नीले कपड़ेकी तथा नीले आकाशमें चाँदनीकी हृदयहारिणी उत्कृष्ट शोभाका होना सर्वविदित है]॥ ८२॥

([1]एकचित्ततितिरद्वयवादिन्न त्रयीपरि[2]चितोऽथ बुधस्त्वम् ।
पाहि मां विधुतकोटिचतुष्कः पञ्चबाणविजयी षडभिज्ञः ॥ ६ ॥
तत्र मारजयिनि त्वयि साक्षात्कुर्वति क्षणिकतात्मनिषेधौ ।
पुष्पवृष्टिरपतत्सुरहस्तात्पुष्पशास्त्रशरसन्ततिरेव ॥ ७ ॥
तावके हृदि निपात्य कृतेयं मन्मथेन दृढधैर्यतनुत्रे ।
कुण्ठनादतितमां कुसुमानां छत्रमित्रमुखतैव शराणाम् ॥ ८ ॥
यत्तव स्तवविधौ विधिरास्ये चातुरीं चरति तच्चतुरास्यः ।
त्वय्यशेषविदि जाग्रति शर्वः सर्वविद्ध्रुवतया शितिकण्ठः ॥ ९ ॥
धूमवत्कलयता युधि कालं म्लेच्छकल्पशिखिना करवालम् ।
कल्किना दशतयं मम कल्कं त्वं व्युदस्य दशमावतरेण ॥ १० ॥
देहिनेव यशसा भ्रमतोर्व्यां पाण्डुरेण रणरेणुभिरुच्चैः ।
विष्णुना जनयितुर्भवताऽभून्नाम विष्णुयशसश्च सदर्थम् ॥ ११ ॥
सन्तमद्वयमयेऽध्वनि दत्तात्रेयमर्जुनय[3]शोऽर्जुनवीरम् ।
नौमि योगजनितानघसंज्ञं त्वामलर्कभवमोहतमोऽर्कम् ॥ १२ ॥

---

१. इमे दश श्लोकाः 'प्रकाश' व्याख्ययासहैवात्र स्थापिताः २. 'परिचिताथ बुधस्त्वम्' इति, 'परिचिताध्वबुधस्त्वम्' इति च पाठान्तरम् । ३. '—यशोऽर्जुनबीजम्' इति पाठान्तरम् ।

भानुसूनुमनुगृह्य जय त्वं राममूर्तिहतवृत्रहपुत्रः।
इन्द्रनन्दनसपत्नमपि त्वां नौमि कृष्ण! निहतार्कतनूजम्॥ १३॥
वामनादद्भुतमादनुजीयास्त्वं त्रिविक्रमतनूभृतदिक्कः।
वीतहिंसनकथादथ बुद्धात्कल्किना हतसमस्त! नमस्ते॥ १४॥
मां त्रिविक्रम! पुनीहि पदे ते किं लगन्नजनि राहुरुपानत्।
किं प्रदक्षिणनकृद्भ्रमपाशं जाम्बवानदित ते बलिबन्धे॥ १५॥)

चतुर्भिः श्लोकैर्बुद्धं वर्णयति—एकेति। हे अद्वयवादिन् द्वैतवाह्यघटपटादिसे-ज्ञानामसत्यताप्रतिपादनेनैकस्या ज्ञानाकारताया एव सत्यताङ्गीकारादद्वैतवादिन्! त्वं मां पाहि। किम्भूतः?—एकैव चित्ततिर्ज्ञानसन्ततिर्यस्य दीपकलिकान्यायेन क्षणिकज्ञानप्रवाह एवैको यस्य मते, न तु तदतिरिक्तं किञ्चिदप्यस्ति, तादृशः, अत एव—अद्वयवादिन् इति योजना। तथा—त्रय्या परिचितो ज्ञातस्तादृशो न भवसी-त्यत्रयीपरिचितः। नसमासो वा। नेति पृथग्वा। वेदत्रयीगम्योऽपि न भवसीत्यर्थः। अथच—वेदत्रय्यां परिचितः कृतपरिचयो वेदत्रयी परिचिताऽभ्यस्ता येन तादृशो वा न भवति। सर्वस्य क्षणिकाङ्गीकाराद्धर्माधर्मव्यवस्थाया निरासादनङ्गीकृतवेद-प्रामाण्य इत्यर्थः। अत एव बुधः पण्डितः। न हि पण्डितं विना वेदादिसर्वदूषणस-मर्थाऽन्यस्य बुद्धिः सम्भवति। अथच—अत्रयीपरिचितोऽपि बुध इति विरोधा-भासः। न हि वेदत्रयमजानानस्यापि पण्डितत्वं सम्भवति। अथच—यः पण्डितः 'एकमेवाद्वितीयं ब्रह्म' इति मन्यमानो वेदान्ती स वेदत्रयीं न मन्यत इति विरोधः। वेदान्तिना हि वेदप्रामाण्यस्य स्वीकृतत्वात्। अथच—अद्वयवादाद् द्वित्वसङ्ख्यामपि नाङ्गीकरोति। स द्वित्वसङ्ख्यां न मन्यत इति युक्तमेवेत्यर्थः। तथा—माध्यमिका-नामपि कियन्मात्रमतभेदेन बौद्धसिद्धान्तान्तःपातित्वात्। 'न सन्नासन्न सदसन्न चाप्य-नुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः।' इत्यनिर्वचनीयप्रपञ्च-वादित्वाद्विधुतं निराकृतं सदसत्सदसद्वैलक्षण्यलक्षणं कोटिचतुष्कं प्रकारचतुष्टयं येन, अथच—त्रित्वनिषेधान्निरस्तचतुष्टयः। तथा—विरक्तत्वाद्दिगम्बरत्वात्पञ्चवाणः काम-स्तद्विजयी मारजित्। अथच—'वण शब्दे' इत्यस्माद्धञि वाणशब्दस्तं पञ्चसङ्ख्या-वाचिनं पञ्चशब्दं न सहत इत्यर्थः। यो हि चतुष्टयं न सहते स पञ्चापि न सहत इति युक्तमेवेत्यर्थः। तथा—देशाद्यव्यवहितवस्तुदर्शनम्, देशाद्यव्यवहितशब्दश्रव-णम्, अतीतजन्मस्थितिस्मरणम्, परचित्तज्ञानम्, अविद्याऽस्मितारागद्वेषाभिनिवे-शाख्यपञ्चक्लेशक्षयः, अणिमादिसिद्धिश्चेति षडभिज्ञा ज्ञानप्रकारा यस्य। वेदानुसा-रिभिर्दैत्यैः पराभूता देवा ब्रह्माणं शरणं गताः, ब्रह्मणा प्रसादितो नारायणो बुद्धरूपे-

१. 'बलिबन्ध्रे' इति पाठान्तरम्।

णावतीर्य दैत्यबुद्धिं वेदार्थेभ्यश्च्यावयित्वा बौद्धमतमुपदिदेश, अतस्ते देवानां जय्याः सम्पन्ना इति । अत एव चैतदीयमतपरिभाषयैव स्तुतिरकारि। 'परिचिताथ बुधस्त्वम्' इति पाठे नेति पदं भित्त्वा त्वया वेदत्रयी न परिचिता न स्वीकृतप्रामाण्या । अथ विरोधे । तथापि बुधस्त्वमित्यर्थः । 'परिचिताध्वबुधः—' इति पाठे त्रयीपरिचितानां वदिकानां मार्गे पण्डितो न भवति । अवैदिकमार्गमेव जानान इत्यर्थः ॥ ६ ॥

तत्रेति । तत्र तस्मिन् बुद्धावताररूपे सौन्दर्याज्जितेन्द्रियत्वाच्च मारजयिनि कामस्य जैत्रे त्वयि क्षणिकता सर्वं क्षणिकं सत्त्वात्, तथा—आत्मनिषेधश्च 'समनस्केन्द्रियजन्यनीलपीताद्याकारसविकल्पकनिर्विकल्पकवासनोपबृंहितचित्सन्ततिरेवात्मा, भूतान्येव चेतयन्ते, मनसा संयोगे ज्ञानमुत्पद्यते, तस्मादिह एवात्मा, न तु नित्योऽन्यः कश्चित्' इत्यादिप्रकारेण सर्वभावानां क्षणमात्रावस्थायितानैरात्म्यञ्च स्वदर्शनोक्तं समाधिना साक्षात्कुर्वति सति पुष्पशस्त्रस्य कामस्य शरसन्ततिर्बाणपरम्परारूपा सुरहस्तात्पुष्पवृष्टिरेवापतत् । अतिबले हि शत्रौ करादायुधानि पतन्ति । कामोऽपि त्वत्तो भीतः पुष्पशरश्च । तथा च तस्य करारवन्दद्वयेन पतिता पुष्परूपबाणपरम्परा क्षणिकतात्मनिषेधौ साक्षात्कुर्वति त्वयि विषये सुरमुक्ता पुष्पवृष्टिरिवापतदित्युत्प्रेक्षा । कामेऽपि देवत्वमेव पुष्पवृष्टिमोचनहेतुः । यो हि लोकोत्तरं वस्तु प्रत्यक्षगोचरं करोति, यश्च कञ्चन विजयते, तयोरुपरि देवैः पुष्पवृष्टिः क्रियत इत्यादि ज्ञातव्यम् ॥ ७ ॥

तावक इति । मन्मथेन दृढमभेद्यं धैर्यमेव तनुत्रं कवचं यस्य तस्मिंस्तावके हृदि मनसि, अथच—वक्षसि अर्थाच्छराक्षिपात्य नितरां दृढाघातपूर्वं यथातथा पातयित्वा दृढतनुत्रत्वादेवातितमां कुण्ठनात्तैक्ष्ण्यत्यागाद्धेतोः कुसुमरूपाणां स्वीयशराणां छत्त्रं मित्रं येषां तानि, छत्त्रस्य वा मित्राणि, मुखानि येषां तेषां भावस्तत्ता सूचीमुखतापरित्याजनेन छत्त्रतुल्यवृत्तमुखेनेयं प्रत्यक्षदृशा कृता । दृढतनुत्रे हि पातितो बाणः कुण्ठितत्वाद्वृत्तमुखो भवति । स्मरशराः शरत्वात्पूर्वं सूचीमुखा आसन्, इदानीन्तु धैर्यकञ्चुके त्वदीये हृदि निपत्य नितरां कुण्ठनादिव तेषां पुष्परूपाणां छत्त्राकारमुखता जातेत्युत्प्रेक्षोपमे । विकसितानि पुष्पाणि छत्त्रतुल्यानि भवन्ति । अथच—छत्त्रं छायाकारित्वात्सुखदमेव यथा, न तु दुःखदम्, तथा कामशरा अपि त्वद्धृदयस्यानिर्वापका एव जाता न तु त्वां जेतुमशकन्नित्यर्थः । एतादृशो जितेन्द्रियः कोऽपि नास्तीति भावः । निपात्य, ण्यन्तात् क्त्वो ल्यप् ॥ ८ ॥

यदिति । विधिस्तव स्तुतिविधौ बहुभिर्मुखैश्चातुरी वैदग्ध्यं यद्यदि चरति प्राप्नोति नानाप्रकारैर्यदि तद्वर्णनं करोति तत्तर्ह्येव चतुराणि वर्णननिपुणान्यास्यानि यस्यैतादृशो भवेन्नान्यथा । अथच—तद्वर्णनविधौ यस्माच्चातुरीं प्राप्नोति तस्मादेव हेतोश्चतुराण्यास्यानि यस्येति चतुरास्यो, न तु चत्वार्यास्यानि यस्येति विग्रहेण चतुरास्यः । अस्यानां चतुष्ट्वे सत्यपि तन्नाम्नि गौरवाभावात् अत्र तु गौरवसद्भावात्तथैवोच्यत इत्यर्थः ।

त्वदीयस्तुतिपरत्वाद् ब्रह्मणो लोकत्रयेऽप्येवं कीर्तिरजनीति भावः । तथा—शर्वो हरस्त्वयि बुद्ध एवाशेषविदि सर्वज्ञे जाग्रति सति सर्वविदं सर्वज्ञमात्मानं ब्रूते स सर्वविद्ब्रुवस्तत्तयेव परगुणस्यात्मन्यारोपेण हेतुना कलङ्केन शितिकण्ठो नीलकण्ठः, न तु कालकूटभक्षणेन नीलकण्ठः, त्वत्स्पर्द्धितया लोकत्रयेऽपि महेशस्यैवमयशो जातमित्यर्थः । ब्रह्ममहेशाभ्यामपि सकाशात्त्वमेव परमपुरुषः सर्वज्ञ इति भावः । अन्यस्याप्यात्मस्तुत्या सर्वसन्निधौ लज्जया मालिन्यं भवति । सर्वविद्ब्रुवेति विदुषिब्रुवेतिवत्॥

श्लोकद्वयेन कल्किनं स्तौति—धूमवदिति । त्वं धूमवत् कालं करवालं खड्गं युधि म्लेच्छैः सह युद्धे कलयता धारयता, मृत्युरूपं खड्गं धूममिव धारयता वा । अत एव—म्लेच्छानां कल्पशिखिना प्रलयकालानलरूपेण म्लेच्छा इव म्लेच्छाः पापिनस्तेषां वा, म्लेच्छप्रायाणां वा, एवम्भूतेन कल्किसंज्ञेन दशमावतारेण कृत्वा मम दशतयं दशावयवं कल्कं पापं व्युदस्य निराकुरु । समूलमुन्मूलयेत्यर्थः । अथच—यः स्वयं कल्की सोऽन्यकल्कं विनाशयतीति विरोधः । कल्किशब्दस्य विष्णुनामत्वात्परिहारः । म्लेच्छकल्पशिखिनेत्यवतारप्रयोजनमुक्तम् । अदत्तस्य वस्तुनः स्वयं ग्रहणम्, यागीयातिरिक्ता हिंसा, परस्त्रीगमनश्च ( इति ) त्रिविधं कायिकम् । पारुष्यम्, अनृतम्, पैशुन्यम्, असम्बद्धप्रलापश्चेति चतुर्विधं वाचिकम् । परद्रव्यग्रहणेच्छा, परानिष्टचिन्ता, वृथैव परेषु दोषाभिध्यानञ्चेति त्रिविधं मानसम् । इति दशविधं पापम् । चक्षुस्त्वक्श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थमनोजन्यं वा । दशसु मासेषु भवत्वाद्गर्भवासलक्षणं दुःखमिति वा । 'कल्कः पापाशये पापे' इति विश्वः ॥ १० ॥

देहेनेति । विष्णुयशसस्तन्नामकस्य जनयितुः पितुः विष्णुरिति नाम भवता च त्वयैव कृत्वा सदर्थं सान्वयमभूत् । किम्भूतेन भवता—रणरेणुभिरुच्चैः पाण्डुरेण धवलतरेण, तथा—दुष्टगवेषणार्थमुर्व्यां भ्रमता विष्णुना व्यापकेन विष्णुसंज्ञकेन च पाण्डुरत्वाद्व्यापित्वाच्च देहिना शरीरधारिणा यशसेव यशोरूपेण विष्णु व्यापकं यशो यस्य त्वया पुत्रेणेति यावत् । तस्य तव पितुर्नाम सान्वयमभूत् , जातप्रायमेवेति भाविन्यपि भूतवदुपचारः । अतीतकलियुगान्तापेक्षयाऽभूदिति निर्देशो वा । पूर्वं तु डित्थादिवत्तन्नामाभूत् , त्वय्युत्पन्ने तु तत्सार्थकमभूदित्यर्थः ॥ ११ ॥

दत्तात्रेयं स्तौति—सन्तमिति । अहं दत्तात्रेयनामानं त्वां नौमि । किम्भूतम्—अद्वयमयेऽध्वनि अद्वैतमार्गे ऐकात्म्यवादे सन्तं वर्तमानम्, तथा—अर्जुनस्य कार्तवीर्यार्जुनस्य यशसो यदर्जनं तस्य बीजं मूलम् । कार्तवीर्येणाराधितो दत्तात्रेयस्तव यशो लोकव्यापि भविष्यतीति वरं दत्तवान् । 'दुर्जन—' इति पाठे अर्जुनयश एवार्जुनो वृक्षः, तस्य बीजम् । वृक्षस्योत्पत्तिर्बीजादेव युक्ता । अथच—अर्जुनं धवलं यशो यस्यैवंविधोऽर्जुनः कार्तवीर्यस्तस्य बीजम् । तथा—अष्टाङ्गयोगेन जनितोत्पादिता पापादिराहित्यादनघ इत्यपरा संज्ञा यस्य । तदा हि देवैर्योगबाहुल्यादनघेति संज्ञा कृता । तथा अलर्कनाम्नः शत्रुध्वजमदालसापुत्रस्य राज्ञो भवमोहो ममतादिरूपः संसारमोहः

स एव तमोऽन्धकारस्तस्य विनाशहेतुत्वादर्कस्त्तम्। योगमार्गोपदेशेन तस्य मोहं चिच्छेदेति पुराणकथा ॥ १२ ॥

एवं दशावतारान्निर्वर्ण्य भक्त्यतिशयेन पुनरपि कियतस्तानेवावतारांस्त्रिविक्रमं हरिहरौ बालमुकुन्दञ्च सङ्क्षेपेण चतुर्विंशत्या श्लोकैर्वर्णयति—भानुसूनुमिति। हे विष्णो! भानुसूनं सूर्यपुत्रं सुग्रीवमनुगृह्य वालिहृतां तद्वधूं तारां तस्मै दत्वा राज्याभिषेकद्वारा कृतार्थीकृत्य राममूर्त्या रामावतारेण हतो मारितो वृत्रघ्न इन्द्रस्य पुत्रो वाली येन, स त्वं रामो जय सर्वोत्कर्षेण वर्तस्व। नमस्योऽसीत्यर्थः। तथा भो कृष्णावतार! अहमिन्द्रनन्दनस्यार्जुनस्य सपक्षं मित्रभूतम्, अत एव निहतो मारितोऽर्कतनूजो येनेति वा। यो भानुसूनुमनुगृह्णाति स निहतार्कतनूजः कथम्?। तथा–हतेन्द्रपुत्रः स इन्द्रपुत्रमित्रं कथम्? इति विरोधार्थोऽपिशब्दः। निग्राह्यानुग्राह्ययोस्तत्पुत्रयो रामकृष्णावतारयोश्च भेदात्तु विरोधपरिहारः। एतादृग्विरुद्धचरितत्वाद्दुर्विज्ञेयः परमपुरुषोऽसीति भावः ॥ १३ ॥

वामनादिति। हे विष्णो! अणुतमाद् ह्रस्वतमशरीराद्वामनावतारादनु पश्चात्त्रिविक्रमावतारस्य तन्वा शरीरेण त्रिविक्रमावताररूपया वा तन्वा भृता व्याप्ता दिशो येन स त्वं जीयाः सर्वोत्कर्षेण वर्तस्व। तथा—विता निवृत्ता हिंसनकथा प्राणिवधवार्तापि यस्मादेवम्भूताद्बुद्धावतारात्, अथ पश्चात् कल्किना दशमावतारेण कृत्वा हतं मारितं कलिमलदूषितं समस्तं प्राणिजातं येन तादृश विष्णो! ते तुभ्यं नमः। यो ह्यणुतमः स एव तनूभृतदिक्को व्यापकदेहः कथम्? तथा—यश्च वीतहिंसनकथः स एव हतसमस्त इति विरोधः, अवतारभेदेन परिहारः। दुर्विज्ञेयचरितोऽसीति भावः। वामनत्रिविक्रमौ वर्णितौ ॥ १४ ॥

मामिति। हे त्रिविक्रम! त्वं मां पुनीहि। तथा—गगनव्यापिन्यूर्ध्वीकृते ते पदे विष्णुपदे लगन् नक्षत्रमालामध्यवर्ती श्यामरूपो राहुरुपानद् अजनि किं पादरक्षिकैव जाता किम्?। एतावदतिमहच्छरीरं धृतम्, यस्य चरणस्थाने गगनस्थो राहुरुपानदिव जात इत्यर्थः। सापि हि श्यामा, चरणे च लगति। तथा—प्रदक्षिणनं प्रदक्षिणाख्यं पञ्चदशमुपचारं कुर्वन् जाम्बवान् ऋक्षराजो ब्रह्मावतारो बलिनिबन्धननिमित्तं ते तुभ्यं भ्रमिपाशं परिभ्रमणरूपं वलयाकारवेष्टनमेव पाशं बन्धनरज्जुमेवादिल दत्तवान् किम्?। यो हि कञ्चिद्बन्धुमुपक्रमते तस्मै केनचित्पाशो दीयते। यद्यपि देवेन बलिर्वाग्बन्धमेव प्रापितः, न तु रज्ज्वादिबन्धम् तथापि लोके बद्ध इति प्रसिद्धिवशाद्बन्धनशब्दच्छलेन कविः पाशशब्दं प्रायुङ्क्त। जाम्बवान् किल तदा त्रिविक्रमस्य षोडशोपचारपूजामकृतेति प्रवादः। अत्रापि त्रिविक्रमो वर्णितः। 'बन्धे' इति पाठे तृन्नन्ताद्बन्धेश्चतुर्थी 'ते' इत्यस्य विशेषणम्। 'बन्धः' इति तस्मादेव सम्बुद्धिः ॥ १५ ॥

(हे अद्वयवादिन् घट–पटादि भेदको असत्य मानकर एक ज्ञानाकारको ही माननेसे

अद्वैत सिद्धान्तवाले ) । तुम ( दीपकलिकान्यायसे केवल ) क्षणिक प्रवाहको माननेवाले, त्रयी ( ऋग्यजुःसामवेद ) से परिचित ( उनके ज्ञाता ) नहीं होनेपर भी विद्वान् हो ( यहां वेदज्ञानशून्यको विद्वान् होनेसे विरोध है, उसका परिहार यह है कि- ) ( सबको क्षणिक ही मानने तथा धर्माधर्मभोगव्यवस्थाका खण्डन करनेसे ) वेदत्रयोक्त प्रमाणको नहीं माननेवाले हो तथा विद्वान् हो, ( तथा—जो अद्वयवादी ( 'एकमेवाद्वितीयं ब्रह्म' सिद्धान्तको माननेवाला ) वेदान्ती है वह त्रयीसे अपरिचित ( वेदत्रयानभिज्ञ ) कैसे हो सकता है ? यह दूसरा विरोध है, इसका परिहार उपर्युक्त अर्थसे ही हो जाता है । अथच—जो द्वित्वको स्वीकार नहीं करता उसे त्रित्वका स्वीकार नहीं करना ( उससे अपरिचित रहना ) उचित ही है ।) तथा तुम ( सत्, असत्, सदसत्, न सत् न असत्—इन ) चार कोटियोंको नहीं स्वीकार करनेवाले हो, ( जितेन्द्रिय होनेसे ) काम विजयी हो ( अथवा—जो ( कोटि ) चतुष्टय अर्थात् चार सङ्ख्याको नहीं मानता, उसे पांचका वाचक 'पञ्चन्' शब्दको नहीं मानना न्यायोचित ही है ) । और तुम षडभिज्ञ ( १ दिव्य चक्षुःश्रोत्र, २ परचित्तज्ञान, ३ पूर्वनिवासका अनुसरण, ४ आत्मज्ञान, ५ आकाशगमन और ६ कायव्यूहसिद्धि—इन ६; अथवा—१ ज्ञान, २ शील, ३ क्षमा, ४ वीर्य, ५ ध्यान और ६ प्रज्ञा—इन ६, अथवा—१ देशादिव्यवहित वस्तुको देखना, २ देशादिव्यवहित शब्दको सुनना, ३ पूर्वजन्मकी स्थितिका स्मरण, ४ दूसरेके मनकी बात जानना, ५ अविद्या-अहङ्कार-राग-द्वेष-अभिनिवेशरूप पांच क्लेशोंका नाश और ६ अणिमादि-सिद्धि—इन ६ में ज्ञान रखनेवाले अर्थात् इनके ज्ञाता ) हो; ऐसे तुम मेरी रक्षा करो ॥ ६ ॥

( अतिशय सुन्दर एवं जितन्द्रिय होनेसे ) कामविजयी आप ( बुद्ध ) को क्षणिकता तथा आत्मनिषेधका साक्षात्कार करनेपर देवोंने जो आपके ऊपर पुष्पवृष्टि की, वह मानों आपसे पराजित कामदेवके हाथसे पुष्परूप बाण ही छुटकर गिर पड़ा । [ आपने कामदेवको जीत लिया तो देवोंने आपके ऊपर पुष्पवृष्टि की, वह आपसे भयार्त कामदेवके हाथसे शस्त्र ही गिर पड़े, ऐसा ज्ञात होता था । विजेताके भयसे विजित व्यक्तिका भयार्त होना तथा उसके हाथसे शस्त्रोंका गिर पड़ना उचित है । कामदेवका शस्त्र पुष्प है, अत एव ऐसा रूपक किया गया है । बौद्ध-सिद्धान्तके अनुसार सब कुछ क्षणिक ही है तथा देहसे भिन्न नित्यस्थायी 'आत्मा' नामका कोई भी पदार्थ नहीं है ] ॥ ७ ॥

कामदेवने दृढ धैर्यरूप कवचसे युक्त तुम्हारे हृदय ( वक्षःस्थल, पक्षा०—मन ) में गिराकर पुष्परूप बाणोंके अत्यन्त कुण्ठित होनेसे उन्हें छत्राकार मुखवाला बना दिया । [ जिस प्रकार कोई वीर वैरीके कवचयुक्त छातीपर बाण मारता है तो उस बाणका मुख ( अग्रभाग ) उस दृढ कवचपर कुण्ठित होकर छत्राकार हो जाता है, उसी प्रकार कामदेवने धैर्यरूपी दृढ कवचयुक्त आपके हृदयमें तीक्ष्णाग्र बाण मारा तो उन बाणोंका अग्रभाग अत्यन्त कुण्ठित होकर छत्राकार हो गया । कामदेवके बाणोंके पुष्परूप होनेसे तथा पुष्पोंके विकसित होनेपर छत्राकार होनेसे उक्त उत्प्रेक्षा की गयी है । अथच—पुष्प शरीर स्पर्श करनेपर

जिस प्रकार सुखद होते हैं, उसी प्रकार काम-प्रक्षिप्त पुष्पवाण भी तुम्हें जितेन्द्रिय होनेसे सुखद ही हुए। आपके समान जितेन्द्रिय कोई भी जगतमें नहीं है ] ॥ ८ ॥

यदि ब्रह्मा तुम्हारी स्तुति करनेमें चतुरता करे तो वह चतुरास्य (चतुर मुखवाला, पक्षा०—चार मुखोंवाला) कहलावे, अथवा—जिस कारण ब्रह्मा तुम्हारी स्तुति करनेमें चतुरता करता है, अत एव वह चतुरास्य (चतुर मुखवाला, पक्षा०—चार मुखोंवाला) कहलाता है (तुम्हारी स्तुतिका ही यह सत्परिणाम है कि ब्रह्मा चतुरास्य (चतुरमुखवाला, पक्षा०—चार मुखवाला) कहलाया, अन्यथा वह 'चतुरास्य' कभी नहीं कहलाता)। [ सर्वज्ञ तुम्हारे जागरूक रहनेपर अपनेको सर्वज्ञ कहनेसे शिवजी नीलकण्ठ हो गये यदि शिवजी, तुम्हारे सर्वज्ञ रहनेपर भी अपनेको सर्वज्ञ नहीं कहते तो वे लज्जासे नीले (काले) कण्ठवाले नहीं होते, किन्तु तुम्हारे साथ ऐसी स्पर्द्धा करनेसे ही वे नीलकण्ठ हो गये, विषपानसे नीलकण्ठ नहीं हुए। लोकमें भी कोई व्यक्ति किसी महान् व्यक्तिके साथ स्पर्द्धा करता है तो उसके सामने लज्जासे उसका कण्ठ (मुख) काला हो जाता है। ब्रह्मा तथा शिवसे भी अपका प्रभाव श्रेष्ठतम है। इन चार श्लोकोंसे नलने बुद्धावतारकी स्तुति की है। वेदविरोधी बुद्धकी स्तुति करनेमें यह कारण है कि दैत्योंसे पराजित देवलोग ब्रह्माकी शरणमें गये और उनकी स्तुतिसे प्रसन्न विष्णु भगवान्‌ने बुद्धावतार लेकर दैत्योंको वेदविरोधी उपदेशोंके द्वारा धर्मभ्रष्टकर दिया, इसीसे उन्हें जीतनेमें देवलोग समर्थ हुए ] ॥ ९ ॥

(अब दो श्लोकोंसे दशम (कल्कि) अवतारको स्तुति करते है—) युद्धमें धूमके समान श्यामवर्ण तलवारको (अथवा—कालरूप तलवारको धूमके समान) धारण करते हुए, म्लेच्छोंके लिए प्रलयाग्निरूप 'कल्कि' नामक दशवें अवतारवाले तुम मेरे दशविध पापोंको दूर करो। [ जो स्वयं 'कल्कि' कल्कवाला=पापवाला है, वह दूसरेके कल्कों=पापोंको कैसे दूर कर सकता है ? इस विरोधका परिहार—'कल्कि' शब्दको 'विष्णु' वाचक मानकर करना चाहिये। दशविध पाप ये हैं—विना दिये दूसरेकी वस्तुको लेना, यज्ञातिरिक्त हिंसा करना और परस्त्री सम्भोग—ये ३ कायिक; कटुभाषण, असत्य, चुगलखोरी और असम्बद्ध प्रलाप—ये ४ वाचिक तथा दूसरेकी वस्तु लेनेकी इच्छा, दूसरेके अनिष्ट करनेका विचार होना और दूसरेपर व्यर्थ दोषारोपण—ये ३ मानसिक; इस प्रकार (३+४+३=१०) दश प्रकारके पाप होते हैं। अथवा—दशों इन्द्रियोंके द्वारा किये गये दश पाप हैं। अथवा—गर्भावस्थाके दश मासोंमें होनेवाले कष्ट-विशेषरूप 'दश पाप' यहां अभीष्ट हैं ] ॥ १० ॥

विष्णुयशको उत्पन्न करनेवालेका 'विष्णु' यह नाम (दुष्टोंको ढूढ़नेके लिए) पृथ्वीमें घूमते हुए, विष्णु (व्यापक, पक्षा०—'विष्णु' नामक) और युद्धजन्य धूलियोंसे पाण्डुर (श्वेत) वर्ण शरीरधारी यशके समान आपसे ही सार्थक हुआ है। [ यद्यपि 'विष्णु' नाम पहले हुआ है तथा 'कल्कि' अवतार पीछे हुआ है, तथापि भविष्यकालकी अपेक्षा या कल्पान्तरकी अपेक्षा उक्त विरोधाभाव समझना चाहिये ] ॥ ११ ॥

( अब दत्तात्रेयकी स्तुति करते हैं—) मैं अद्वैतमार्गमें वर्तमान, सहस्रार्जुन ( कार्तवीर्य ) के यशःप्राप्ति ( पाठा०—स्वच्छ यशवाले सहस्रार्जुन ) के कारण, ( अष्टाङ्ग ) योगसे 'अनघ' संज्ञाको प्राप्त करनेवाले और 'अलर्क' राजाके संसारमोहरूपी अन्धकारके सूर्य ( संसारमोहको नष्ट करनेवाले ) दत्तात्रेय तुमको नमस्कार करता हूं ॥ १२ ॥

पौराणिक कथा—१. दत्तात्रेयकी आराधना करनेसे कार्तवीर्यने संसारव्यापि निर्मल यश पाया था। २. दत्तात्रेयके अष्टाङ्ग योगको देखकर अधिक योग होनेसे देवोंने दत्तात्रेयका दूसरा नाम 'अनघ' रखा। ३. अलर्क नामक राजाको सांसारिक मोह हुआ तो दत्तात्रेयने ही उपदेश देकर उसे दूर किया।

( इस प्रकार मत्स्यादि अवतारोंकी स्तुति करनेके बाद अधिक भक्तिमान् नल पुनः उन्हींमें-से कुछ अवतारोंकी स्तुति करते हैं—सूर्य पुत्र ( सुग्रीव ) को ( वालिवध, वालिके द्वारा अपहृत ताराका पुनः प्रत्यर्पण एवं राज्याभिषेकसे ) अनुगृहीतकर रामावतारमें इन्द्रपुत्र ( वालि ) को मारनेवाले तुम विजयी होवो तथा हे कृष्ण ! इन्द्रपुत्र ( अर्जुन ) के मित्र होते हुए भी सूर्यपुत्र ( कर्ण ) को मरवानेवाले तुमको नमस्कार है। [ इन्द्रपुत्रका सपक्ष ( मित्र ) इन्द्रपुत्रको तथा सूर्यपुत्रको अनुगृहीत करनेवाला सूर्यपुत्रको कैसे मारेगा ? इस विरोध-द्वयका परिहार ( निवारण ) राम तथा कृष्णके अवतार भेदसे करना चाहिये। इस प्रकार अद्भुतचरित करनेवाले आपको नमस्कार है ] ॥ १३ ॥

अत्यन्त छोटे वामन शरीरके बाद त्रिविक्रम-शरीरसे दिशाओंको व्याप्त करनेवाले तुम विजयी होवो तथा हिंसाकी चर्चासे भी विरत बुद्धके बाद कल्कि अवतारसे समस्त ( पापी ) प्राणियोंको मारनेवाले तुमको नमस्कार है। [ यहां भी अत्यन्त छोटे शरीरवाले का समस्त दिशाओंको व्याप्त होना, हिंसाकी चर्चासे भी विरत रहनेवालेका समस्त प्राणियोंको मारना अत्यन्त विरुद्ध होनेसे उक्त अवतार-भेदसे परिहार करना चाहिये। इससे भगवान्‌का अतिशय दुर्बोध होना सूचित होता है ] ॥ १४ ॥

हे त्रिविक्रम ! मुझे पवित्र ( पापरहित ) करो, ( आकाशको मापते समय ) तुम्हारे चरणमें लगा हुआ राहु जूता नहीं हो गया था क्या ? ( वलिसे तीनपद भूमिको दानरूपमें प्राप्तकर जब तुम आकाशको एक पादसे मापने लगे, तब तुम्हारे चरणके समीपमें स्थित राहु कृष्णवर्ण होनेसे जूतेके समान मालूम पड़ता था )। और प्रदक्षिणा करता हुआ जाम्ब-वान् नामक ऋक्षराजने तुम्हारे लिये वलिको बाँधनेमें ( पाठा०-वलिको बाँधनेवाले तुम्हारे लिए ) लपेटकर बांधनेवाली रस्सी दे दी क्या ?। [ यद्यपि वामन भगवान्‌ने वलिको केवल वचनबद्ध ही किया था, रज्जु आदिसे बद्ध नहीं किया था; तथापि 'बद्ध हुआ' इस लोकोप-चारसे यहां पाश ( बांधनेकी रस्सी ) का वर्णन समझना चाहिये। वामनावतारमें ब्रह्माके अवतार जाम्बवान्‌ने वामन भगवान्‌का षोडशोपचारसे पूजन किया था, अत एव षोडशोप-चारान्तर्गत प्रदक्षिणका वर्णन यहां किया गया है ] ॥ १५ ॥

अर्द्धचक्रवपुषाऽर्जुनबाहून् योऽलुनात् परशुनाऽथ सहस्रम् ।
तेन किं सकलचक्रविलूने बाणबाहुनिचयेऽञ्चति चित्रम् ? ॥ ८३ ॥

अर्द्धेति । हे विष्णो ! यः भवत एवावतारभूतः यः परशुरामः, चक्रस्य अर्द्धम् अर्द्धचक्रम् अर्द्धचक्राकारम् अर्द्धचक्रमात्रञ्च, वपुः शरीरं यस्य तादृशेन अर्द्धचक्राकारेण, परशुना कुठारेण, सहस्रं सहस्रसङ्ख्यकान् , अर्जुनस्य कार्त्तवीर्यस्य ककुभवृक्षस्य च 'अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूखयोः' इति विश्वः । बाहून् भुजान् , अथशब्दः कार्त्स्न्ये 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । अथ कार्त्स्न्येन, अलुनात् अच्छिनत् , निःशेषेणाच्छिनदित्यर्थः । अथशब्दस्य परेण वा अन्वयः, अथ अनन्तरम् , तेन भवता कृष्णरूपिणेत्यर्थः । सकलेन सम्पूर्णेन, चक्रेण सुदर्शनेन, विलूने छिन्ने, बाणस्य बाणासुरस्य, कुरण्टकवृक्षस्य च 'बाणो दानवभेदे तु शरे दासीकुरण्टके' इत्यजयपालः । बाहूनां भुजानाम् , शाखारूपभुजानाञ्च, निचये समूहे सहस्रसङ्ख्यकबाहुविषये इत्यर्थः । किं चित्रं किमाश्चर्यम् , अञ्चति ? प्राप्नोतीत्यर्थः । जनस्य चित्तमिति शेषः । अत्र चित्रं नास्तीत्यर्थः । ककुभच्छेदिनः कुरण्टकच्छेदो यथा नाश्चर्यं, तथा अर्द्धचक्रेण यो बाहुसहस्रच्छेत्ता, तस्य सम्पूर्णचक्रेण पुनः तच्छेदनं न किमपि वैचित्र्याधायकमिति भावः ॥ ८३ ॥

अर्द्धचक्राकार परशुसे ( परशुरामावतारमें ) जिस ( विष्णु ) ने अर्जुन ( कार्तवीर्य, पक्षा०—अर्जुन नामक पेड़ ) के सहस्र बाहुओं ( सहस्र भुजाओं, पक्षा०—हजारों=अनेकों शाखाओं ) को काट डाला, उस ( विष्णु ) के द्वारा सम्पूर्ण चक्र ( सुदर्शन चक्र ) से काटे गये वाण ( बाणासुर, पक्षा०—'बाण' नामक वृक्ष-विशेष ) के बाहुओं ( भुजाओं, पक्षा०—शाखाओं ) के समूहमें क्या आश्चर्य है ? । [ अर्द्धचक्राकार परशुसे सहस्र बाहुओंको काटनेवालेके लिए सम्पूर्ण चक्रसे कतिपय बाहुसमूहको काटना, तथा अर्जुन वृक्षके सहस्रों शाखाओंको काटनेवालेके लिए वाण वृक्षके कुछ शाखा-समूहोंको काटना कोई आश्चर्यजनक बात नहीं है । इसी प्रकार परशुरामावतारमें सहस्रार्जुन-जैसे महाबलवान्‌को मारनेवाले विष्णुके लिए कृष्णावतारमें वाणासुरको मारना भी आश्चर्यजनक नहीं है ] ॥ ८३ ॥

पाञ्चजन्यमधिगत्य करेणापाञ्चजन्यमसुरानिव वक्षि ।
चेतनाः स्थ किल पश्यत किं नाचेतनोऽपि मयि मुक्तविरोधः ? ॥८४॥

पाञ्चजन्यमिति । हे विष्णो ! करेण पाणिना, वामहस्तेनेति यावत् । पाञ्चजन्यं तदाख्यशङ्खम् । 'बहिर्देवपञ्चजनेभ्यश्च' इति वक्तव्यात् ञ्यः । 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यः' इत्यमरः । दक्षिणेन च करेण अपाञ्च जलानाञ्च, जन्यम् उत्पाद्यम् , जलजं पद्ममित्यर्थः । अधिगत्य प्राप्य, धृत्वा इत्यर्थः । असुरान् दानवान् , वक्षीव इदं ब्रवीषीव । 'वच परिभाषणे' इत्यस्यादादिकस्य लटि सिपि रूपम् । किमित्याह—हे असुराः ! चेतनाः चैतन्यवन्तः, स्थ भवथ, यूयमिति शेषः, अत एव

पश्यत अवलोकयत, अचेतनोऽपि जडोऽपि, पाञ्चजन्यः अपाञ्चजन्यश्च इति शेषः। मयि अस्मद्विषये, मुक्तः पूर्वोक्तप्रकारेण त्यक्तः, विरोधः विद्वेषः येन सः तादृशः, जात इति शेषः। न किम्? विरोधं परित्यज्य मयि अवस्थितो न किम्? इत्यर्थः। किल इति प्रश्ने, अपि तु तयोरुभयोरेव मयि अविरोधेनावस्थानात् त्यक्तविरोध एव जात इति भावः। अत एव सचेतनैः युष्माभिरपि विरोधं परित्यज्य मयि स्थातव्यम्, अन्यथा चेतनशङ्खासुरवत् भवतामपि मरणं भविष्यत्येव इति तात्पर्यम् ॥

( हे विष्णो ! वायें ) हाथसे 'पाञ्चजन्य' नामक शङ्खको तथा ( दहने ) हाथसे जलोत्पन्न अर्थात् कमलको धारणकर असुरोंसे मानो इस प्रकार कहते हो कि—तुमलोग चेतन हो तो क्यों नहीं देखते हो कि—अचेतन ('पाञ्चजन्य' तथा 'अपाञ्च जन्य' अर्थात् क्रमशः शङ्ख तथा कमल ) भी मेरे विषयमें विरोध रहित हैं। [ अथवा—अचेतन भी पाञ्चजन्य शङ्खको मैं नहीं छोड़ता तो सचेतन शङ्खासुर आदि तुम लोगोंको मैं बिना मारे कैसे छोड़ूंगा? अर्थात् कदापि नहीं छोड़ूंगा। अथवा—अचेतन पाञ्चजन्य शङ्ख ही मेरे विषयमें विरोधरहित है, तुमलोग सचेतन हो, अत एव मेरे विषयमें विरोध करो तो तुमलोगोंकी भी वही गति होगी, जो चेतनावस्थामें इस पाञ्चजन्य शङ्ख ( शङ्खासुर ) की हुई थी अर्थात् तुम लोगोंको भी मैं मारूंगा ] ॥ ८४ ॥

तावकोरसि लसद्वनमाले श्रीफलद्विफलशाखिकयेव ।
स्थीयते कमलया त्वदजस्रस्पर्शकण्टकितयोत्कुचया च ॥ ८५ ॥

तावकेति । हे नारायण ! तव भवतः, अजस्रं निरन्तरम्, स्पर्शेन संस्पर्शेन, कण्टकितया सात्त्विकभावोदयेन सञ्जातरोमाञ्चया कण्टकयुक्तया च, तथा उत् उद्गतौ उन्नतौ, कुचौ स्तनौ यस्याः तादृशया च, कमलया लक्ष्म्या, लसन्ती शोभमाना, वनमाला आरण्यकुसुमस्रक् काननश्रेणी च यस्मिन् तादृशे, तावके त्वत्सम्बन्धिनि, उरसि वक्षसि, श्रीफलस्य विल्ववृक्षस्य। 'विल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः। द्वे फले फलद्वयमात्रं यस्यां सा द्विफला, या शाखिका क्षुद्रशाखा तया इव। अल्पार्थे कन्। स्थीयते वृत्यते। भावे लकारः ॥ ८५ ॥

शोभित होती हुई वनमालावाले तुम्हारे वक्षःस्थलपर तुम्हारे निरन्तरस्पर्श (जन्य सुख) से रोमाञ्चयुक्त, उन्नत स्तनोंवाली लक्ष्मी बेलवृक्षके फलद्वयसे युक्त टहनी ( पतली डाली ) के समान रहती है। [ जहांपर वनमाला ( वनोंकी श्रेणि ) रहती है, वहां पर कण्टक एवं फलयुक्त विल्व वृक्षकी शाखा भी रहती है, उसी प्रकार प्रकृतमें भी वनमाला होनेसे लक्ष्मीको भी फलस्थानीय पीवर स्तनद्वय एवं कण्टकस्थानीय रोमाञ्चसे युक्त होकर रहनेकी उत्प्रेक्षा की गयी है ] ॥ ८५ ॥

त्यज्यते न जलजेन करस्ते शिक्षितुं सुभगभूयमिवोच्चैः ।
आननञ्च नयनायितबिम्बः सेवते कुमुदहासकरांशुः ॥ ८६ ॥

त्यज्यत इति । हे विष्णो ! जलजेन पद्मेन, उच्चैः महत्, सुभगभूयं सुभगत्वम्, कोमलत्वरक्तत्वादिरूपसौभाग्यमित्यर्थः ।'भुवो भावे' इति क्यप् । शिक्षितुम् अभ्यसितुम् इव, ते तव, करः हस्तः, न त्यजते न हीयते । तथा नयनायितं वामलोचनवत् आचरितम्, बिम्बं मण्डलं यस्य स ताहशः, चन्द्रो हि विष्णोर्वामाक्षित्वेन वर्त्तते इति श्रुतेरिति भावः । कुमुदानां कैरवाणाम्, हासकराः विकासकारिणः अंशवः किरणा यस्य सः ताहशः चन्द्रश्च, उच्चैः सुभगभूयं शिक्षितुम् इव ते आननं मुखम्, सेवते आश्रयति । कमलं मार्दवादिसौभाग्यं चन्द्रश्च निष्कलङ्कत्वादिसौभाग्यं शिक्षितुमिव तव करं वदनञ्च शुश्रूषते, गुरुसेवाया एव विद्यालाभहेतुत्वादिति भावः ॥

कमल ( अथवा—शङ्ख ) मानो ( अरुणत्व—कोमलत्वादि ) अधिक सौभाग्यकी उच्च शिक्षा ग्रहण करनेके लिए तुम्हारे हाथको नहीं छोड़ता है तथा ( चन्द्रको विष्णुका वामनेत्र होनेसे ) नेत्रके समान आचरण किया है बिम्ब ( मण्डल ) जिसका ऐसा कुमुद-विकासकारी किरणोंवाला चन्द्रमा मानो ( आह्लादकत्व-निष्कलङ्कत्वादि ) अधिक सौभाग्यकी उच्चशिक्षा ग्रहण करनेके लिए तुम्हारे मुखको नहीं छोड़ता है । [ निरन्तर गुरुके समीप रहनेसे उच्चशिक्षाकी प्राप्ति होती है, अत एव पद्म तथा चन्द्रका कृष्णके हाथ तथा मुखका त्याग नहीं करना उचित ही है । 'पाञ्चजन्य-' इत्यादि तीन श्लोकों ( २१।८४-८६ ) से विष्णुके मूल प्रकृतिका वर्णन किया गया है ] ॥ ८६ ॥

ये हिरण्यकशिपुं रिपुमुच्चै रावणञ्च कुरुवीरचयं च ।
हन्त हन्तुमभवंस्तव योगास्ते नरस्य च हरेश्च जयन्ति ॥ ८७ ॥

ये इति । हे विष्णो ! उच्चैः महान्तम्, रिपुं शत्रुम्, हिरण्यकशिपुं तदाख्यदैत्येश्वरम्, रावणञ्च राक्षसाधिपं दशाननञ्च, तथा कुरुवीरचयञ्च दुर्योधनप्रभृतीनां समूहञ्च, हन्तुं विनाशयितुम्, यथाक्रमं क्रमानुसारेण, उत्तरोत्तरमित्यर्थः। नरस्य च मनुष्यस्य च, हरेश्च सिंहस्य च, मनुष्याकारसिंहाकारयोरित्यर्थः । नरस्य च मनुष्यस्य दाशरथेः रामस्य च, हरेश्च कपिराजस्य सुग्रीवस्य च, नरवानरयोरित्यर्थः। तथा नरस्य च अर्जुनस्य च, हरेश्च कृष्णस्य च, नरनारायणयोरित्यर्थः । 'नरोऽर्जुने मनुष्ये च' इति यादवः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इत्यमरः । ये योगाः सम्बन्धविशेषाः, देहेन व्यक्तितया च ये सम्मिश्रणविशेषा इत्यर्थः । तत्र हिरण्यकशिपुहनने नरसिंहयोः शरीरसंयोगः, रावणहनने रामसुग्रीवयोः नरवानरयोः व्यक्त्योः संयोगः, कुरुवीरचयहनने च नरनारायणयोः अर्जुनकृष्णयोर्व्यक्त्योः संयोगो ज्ञातव्यः,अभवन् अजायन्त, हन्तेति हर्षे, तव भवतः, ते योगाः, जयन्ति सर्वोत्कर्षेण वर्त्तन्ते, अतस्तान् प्रणमामीति भावः॥

तुम्हारे जो योग ( दुहरे संयोग ) प्रबल शत्रु हिरण्यकशिपु, रावण तथा ( भीष्म-दुर्योधनादि ) कौरववंशज वीर-समूहको मारनेके लिए हुए; नर तथा हरिके वे योग सर्वोत्कर्षसे विजयी होते हैं आश्चर्य है । [ हिरण्यकशिपु को मारनेके लिए मनुष्य तथा हरि ( सिंह )

का योग=नरसिंहरूप, रावणको मारनेके लिए मनुष्य ( रामचन्द्र ) तथा हरि ( सुग्रीवादि वानर ) का योग=नर वानररूप और कौरववीर-समूहको मारनेके लिए मनुष्य ( अर्जुन ) तथा हरि ( विष्णु ) का योग=नर नारायणरूप सर्वोत्कृष्ट होकर विजयी होते हैं। उक्त तीनों अवतारोंमें भी 'नर-हरि' के योगसे ही प्रबल शत्रुओंका नाश होनेसे आश्चर्य है।]॥

केयमर्द्धभवता भवतोहे मायिना ननु भवः सकलस्त्वम्।
शेषतामपि भजन्तमशेषं वेद वेदनयनो हि जनस्त्वाम् ॥ ८८ ॥

केयमिति। हे विष्णो! मायिना मायाविना। व्रीह्यादित्वादिनिः। भवता त्वया, का कीदृशी, विचित्रैवेत्यर्थः। इयम् एषा, भवस्य शम्भोः संसारस्य च, अर्द्धम् अर्द्धांशः अर्द्धभवः तस्य भावः तत्ता, यद्वा—अर्द्धम् अर्द्धदेहः, भवः शिवः यस्य तस्य भावः तत्ता हरिहरमूर्त्तिता इत्यर्थः। अर्द्धसंसारता च, ऊहे ऊढा, भृता इत्यर्थः। अर्द्धभवता तव न युक्ता इति भावः। हि यतः, ननु भोः! सकलः सम्पूर्णः, भवः महादेवः संसारश्च, त्वं भवानेव, तथा वेदः श्रुतिरेव, नयनं चक्षुःस्वरूपं यस्य सः तादृशः वेदज्ञः इत्यर्थः। जनः लोकः, शेषताम् अनन्तनागताम् उपयुक्तात् अन्यत्वं च। 'शेषः सङ्कर्षणेऽनन्ते उपयुक्तेतरे वधे' इति विश्वः। भजन्तं प्राप्नुवन्तम् अपि, त्वां भवन्तम्, अशेषम् अनन्तात् अन्यं सकलञ्च, वेद जानाति, 'पुरुष एवेदं सर्वम्' इत्यादि श्रुतेरिति भावः॥ ८८॥

( हे विष्णो! ) तुम्हारी यह ( पुण्यादि प्रसिद्ध ) आश्चर्यकारिणी अर्द्धभवता ( आधे शिवका भाव अर्थात् हरिहरमूर्तिता ) आपसे ग्रहण की गयी है ( मुखसे लेकर चरणतक आधे शरीरमें हरिरूप होनेसे श्यामवर्ण तथा आधे शरीरमें शिवरूप होनेसे श्वेतवर्णवाली लोकोत्तर तुम्हारी मूर्ति है। अथवा—यह कैसी अनिर्वचनीय मूर्ति आपने धारण की है ), आप तो सम्पूर्ण शिव हैं, अथवा—कलासहित स्वतन्त्र शिव ( मूर्तिवाले ) हैं, ( इस कारण सम्पूर्ण भववाले आपको अर्द्धभव होना विरुद्ध होनेसे आश्चर्यजनक है। अथवा—तुम्हारी यह अर्द्धभवता ( आधे संसारका भाव ) आश्चर्यजनक है, क्योंकि तुम कलाओं ( अवयवों ) के सहित उत्पत्तिधर्मा तुम्हीं हो। वेदानुसार देखनेवाला ( वेदानुगामी जन ) शेषभाव ( पृथग्भूतता ) को ग्रहण करते हुए भी तुमको अशेष ( सम्पूर्ण चराचररूप ) जानता है, ( अथच—...... शेषता ( शेषनागके भाव ) को धारण करते हुए भी आपको अशेष ( अनन्त विष्णुरूप जानता है। शेषको अशेष होनेमें विरोध आनेका परिहार उक्त अर्थसे समझना चाहिये )॥

प्राग्भवैरुदगुदग्भवगुम्फान्मुक्तियुक्तिविहताविह तावत्।
नापरः स्फुरति कस्यचनापि त्वत्समाधिमवधूय समाधिः॥ ८९॥

प्रागिति। हे विष्णो! प्राग्भवैः पूर्वपूर्वजन्मार्जितकर्मभिः, उदगुदग्भवानाम् उत्तरोत्तरजन्मनाम्, गुम्फात् ग्रथनात्, सम्पादनाद्धेतोरित्यर्थः। जन्मपरम्परोत्पादनात् हेतोरिति यावत्। इह संसारे, मुक्तेः मोक्षस्य, युक्तिः योगः, प्राप्तिरित्यर्थः। तस्या विहतौ विघ्ने विषये, कर्मक्षयाभावेन आत्यन्तिकदुःखनिवृत्तिरूपस्य अविद्या-

स्तमयलक्षणस्य वा मोक्षस्य अनुपपत्तिविषये इत्यर्थः । त्वत्समाधिं तव ध्यानम्, अवधूय परित्यज्य, तव ध्यानं विनेत्यर्थः । कस्यचन कस्यचित् अपि, आचार्यस्येति शेषः । अपरः त्वत्समाधिभिन्नः, समाधिः समर्थनम्, समाधानमित्यर्थः । सिद्धान्त इति यावत्, 'समाधिर्नियमे ध्याने नीवारे च समर्थने' इति विश्वः । न तावत् नैव, स्फुरति प्रकाशते । तथा हि पूर्वपूर्वजन्मार्जितकर्मभिः उत्तरोत्तरजन्मपरिग्रहात् मुक्ते-र्व्याघातः, तत्र च तव ध्यानेन तव साक्षात्कारलाभात् तेनैव च प्राक्तनकर्मक्षयात् मुक्तिर्लभते जीव इति सर्वेषामेव तत्त्वज्ञानिनां सिद्धान्तः, 'भिद्यते हृदयग्रन्थिः' इत्यादिशास्त्रोक्तेरिति भावः ॥ ८९ ॥

पूर्व जन्मोपार्जित कर्मोंसे आगे-आगे जन्मोंके गुम्फन करनेसे अर्थात् अबाधरूपसे उत्तरोत्तर जन्मपरम्परा चालू रहनेसे मुक्तिप्राप्तिके विनाशके विषयमें किसी (आचार्य, या विद्वान् आदि) को तुम्हारे ध्यानके अतिरिक्त दूसरा कोई समाधान नहीं स्फुरित होता है। [ पूर्वजन्मोपार्जित कर्मोंसे उत्तरोत्तर जन्म-परम्परा होते रहनेसे संसारनिवृत्ति नहीं होनेके कारण मुक्तिप्राप्ति किस प्रकार हो सकती है? ऐसा सोचनेवाले किसी आचार्यादिको भी आपके ध्यानके अतिरिक्त कोई दूसरा समाधान नहीं प्रतिभासित होता है। आपका ध्यानसे ही दर्शन होकर कर्मक्षयपूर्वक मुक्तिप्राप्ति होना सब आचार्योंने एक मतसे स्वीकार किया है, अत एव आप ही मुक्तिके कारण हैं ] ॥ ८९ ॥

ऊर्ध्वदिक्कदलनाद् द्विरकार्षीः किं तनुं हरिहरीभवनाय ? ।
किञ्च तिर्यगभिनो नृहरित्वे कः स्वतन्त्रमनु नन्वनुयोगः ? ॥९०॥

ऊर्ध्वेति । हे विष्णो ! हरिहरीभवनाय विष्णुशङ्करीभावाय, हरिहरमूर्त्तिपरिग्रहायेत्यर्थः । ऊर्ध्वा दिक् यस्मिन् तत् तादृशम् ऊर्ध्वदिक्कम् उपरिभागीयमित्यर्थः । वामदक्षिणभावेन चरणात् मूर्द्धपर्यन्तमर्द्धार्द्धांशमिति यावत् । बहुव्रीहिसमासे समासान्तकः । यत् दलनं विभागः तस्मात् हेतोः, एकमेव देहमूर्द्धाधोभावेन द्विधा विभज्येत्यर्थः । किं किमर्थम्, तनुं शरीरम्, द्विः द्विधा, सम्पूर्णदक्षिणार्द्धं हरिरूपां तादृशवामार्द्धं च हररूपामित्यर्थः । अकार्षीः ? कृतवान् असि ? हरिहररूपधारणाय कथं वा पादादारभ्य शिरो यावत् द्विविधरूपेण शरीरं द्विधा विभक्तं कृतवान् असि ? इत्यर्थः । किञ्च किमर्थं वा, नृहरित्वे नरसिंहभावे, नरसिंहरूपधारणे इत्यर्थः । तनुं तिर्यक् वक्रं यथा भवति तथा, अभिनः ? भिन्नवान् असि ? कण्ठात् अधोदेशस्य नररूपेण ऊर्ध्वभागस्य च सिंहरूपेण विभागम् अकरोः ? इत्यर्थः । ननु भो विष्णो ! स्वतन्त्रं स्वाधीनम्, पुरुषवरं भवन्तमिति शेषः, अनु लक्ष्यीकृत्य, कः पूर्वोक्तरूपः को नाम, अनुयोगः ? प्रश्नः ? 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । स्वतन्त्रेच्छे परमेश्वरे कथमेवं कृतं कथं वा नैवमिति प्रश्नो न युज्यते, यतः स हि स्वेच्छया यथेष्टमेव कर्त्तुं शक्यते, तत्र कस्यापि किमपि प्रश्नावसरो नैव स्यातुमर्हति इति भावः ॥ ९० ॥

हरिहर-रूप धारण करनेके लिए नीचेसे ऊपरतक (चरणसे मस्तकतक) विभक्त करनेके कारण शरीरके दो भाग क्यों किये हो (नृसिंहके समान ऊपर-नीचे आधे-आधे शरीरमें हरि तथा हरका रूप क्यों नहीं ग्रहण किये हो)? तथा नृसिंह भावमें अर्थात् नृसिंहरूप धारण करनेमें शरीरको तिर्यग्रूपसे क्यों विभक्त किये हो? (हरिहरमूर्तिके समान ही चरणसे मस्तकतक आधे भागमें मनुष्य तथा आधे भागमें सिंह शरीरको क्यों नहीं धारण किये हो? अर्थात् हरिहर तथा नृसिंह—इन दोनों रूपोंको धारण करनेके लिए एक ही प्रकारसे शरीरको विभक्त न करके भिन्न-भिन्न प्रकारसे क्यों विभक्त किये हो?)। अथवा—स्वतन्त्र व्यक्तिसे क्या प्रश्न हो सकता है अर्थात् स्वतन्त्र व्यक्ति चाहे जो कुछ भी कर सकता है, उससे किसीको कुछ पूछनेका अधिकार नहीं है॥ ९०॥

**आप्तकाम! सृजसि त्रिजगत् किम्? किं भिनत्सि यदि निर्मितमेव?।**
**पासि चेदमवतीर्य मुहुः किं स्वात्मनाऽपि यदवश्यविनाश्यम्?॥ ९१॥**

स्वतन्त्रत्वमेव स्फुटयति-आप्तेति। आप्तकाम! हे कृतकृत्य! निजप्रभावादेव पूर्णसर्वाभिलाप! विष्णो! अत एव नास्ति ते कार्यप्रयोजनं किमपि इति भावः। किं किमर्थम्, त्रयाणां जगतां समाहारः इति त्रिजगत् त्रिभुवनम्, सृजसि? रचयसि? आप्तकामस्य स्वप्रयोजनाभावादेतन्निष्प्रयोजनमिति भावः। यदि चेत्, निर्मितमेव सृष्टमेव, त्रिजगदिति शेषः, तर्हि किं किमर्थम्, भिनत्सि? विदारयसि? निष्प्रयोजनमेव संहरसीत्यर्थः। यत् त्रिजगत्, स्वात्मना अपि स्वयमेव, अवश्यविनाश्यं निश्चितमेव संहार्यम्। 'लुम्पेदवश्यमः कृत्य' इति म-लोपः। इदं तदिदं त्रिजगत्, मुहुः वारं वारम्, अवतीर्य आविर्भूय, मत्स्यादिरूपेणावतीर्णः सन्नित्यर्थः। किं किमर्थं वा, पासि च? रक्षसि च? अवश्यविनाश्यस्य रक्षणमनुपयुक्तमिति भावः। त्वमेव ब्रह्मादिरूपेण जगतः सृष्टिस्थितिसंहारान् करोपि, पर्यनुयोगानर्हश्चेति निष्कर्षः॥ ९१॥

हे पूर्णकाम (विष्णो)! (स्वप्रभावसे ही सम्पूर्ण अभिलाषाके पूर्ण होनेसे निष्काम होनेके कारण) तीनों लोकोंको क्यों रचते हो? तथा यदि रच ही दिया तो उसे नष्ट क्यों करते हो? और यदि यह स्वयं विनाशशील है तो वार-वार (मत्स्य, कूर्म, राम, कृष्णादि रूपमें) अवतार लेकर (जन्मादि नाना क्लेशोंको सहनेके लिए) इसकी क्यों रक्षा करते हो? [इन कार्योंसे तुम्हारी परमस्वतन्त्रता सूचित होती है। तुम्हीं संसारत्रयकी रचना, पालन तथा संहार करनेवाले क्रमशः ब्रह्मा, विष्णु तथा शिव भी हो; अत एव तुम्हारी महिमा वर्णनातीत है]॥ ९१॥

**जाह्नवीजलजकौस्तुभचन्द्रान् पादपाणिहृदयेक्षणवृत्तीन्।**
**उत्थिताऽब्धिसलिलात् त्वयि लोला श्रीः स्थिता परिचितान् परिचिन्त्य?॥**

जाह्नवीति। हे विष्णो! अब्धिसलिलात् सागरोदकात्, उत्थिता उद्भूता,

-लोला चञ्चलाऽपि, श्रीः लक्ष्मीः, पाद-पाणिहृदयेक्षणे चरण-कर-वक्षःस्थल-वाम-नयने, वृत्तिः यथाक्रममवस्थानं येषां तादृशान्, जाह्नवी-जलज-कौस्तुभ-चन्द्रान् गङ्गा-पाञ्चजन्य-शङ्ख-कौस्तुभमणि-शशाङ्कान्, परिचितान् संस्तुतान्, समुद्रे एकत्रावस्थानेन विशेषतया परिज्ञातान् अत एव चिरकालप्रणयिन इति भावः। 'संस्तवः स्यात् परिचयः' इत्यमरः। परिचिन्त्य पर्यालोच्य, इवेति शेषः। त्वयि भवति, स्थिता विद्यमाना, चलाऽपि अचलत्वेन चिरं विद्यमाना इत्यर्थः। किम्? इति शेषः। गङ्गाकमलादीनामपि आश्रयं त्वां प्रणमामीति भावः॥ ९२॥

समुद्र-जलसे निकली हुई चञ्चल लक्ष्मी क्रमशः तुम्हारे चरण, हाथ, हृदय तथा (वाम) नेत्रमें स्थित गङ्गा, पाञ्चजन्य शङ्ख, कौस्तुभ मणि तथा चन्द्रमाको विचारकर आपके यहां स्थित हुई है क्या? [ चञ्चल समुद्रजलसे उत्पन्न लक्ष्मी स्वभावतः चञ्चल होकर भी समुद्र-जलजात होनेसे परिचित गङ्गादिको जानकर ही चञ्चलता छोड़कर तुम्हारे पास नित्य निवास करने लगी है क्या? परिचितोंके पास निवास करना लक्ष्मीको उचित ही है ] ॥९२॥

वस्तु वास्तु घटते न भिदानां यौक्तनैकविधबाधविरोधैः।
त्वदीहितविजृम्भिततत्तद्भेदमेतदिति तत्त्वनिरुक्तिः॥ ९३॥

वस्त्विति। हे विष्णो! यौक्ताः युक्तिसिद्धाः, नैकविधाः अनेकप्रकाराः, बाधाः प्रतिबन्धाः, विरोधाश्च विरुद्धभावाश्च तैः हेतुभिः, वस्तु पदार्थः, घटपटादिरूपद्रव्यजातमित्यर्थः। भिदानां भेदानाम्, वास्तु आश्रयः, न घटते न युज्यते, तत् तस्मात् कारणात्, एतत् घटपटादिरूपं वस्तुजातम्, त्वदीहितेन भवदिच्छयैव, विजृम्भितः विलसितः, प्रकटित इत्यर्थः। सः सः तादृशः तादृशः, भेदः विशेषः, घटपटादिरूपवैषम्यमित्यर्थः। यस्य तत् तादृशम्, इति एवंरूपा, तत्त्वस्य याथार्थ्यस्य, निरुक्तिः निर्वचनम्। मृन्निर्मितघटस्य मृन्मयत्ववत् एकमात्रमूलकारणोत्पन्नं वस्तु एकविधमेव भवितुमर्हति, भेदे तु युक्तिसिद्धा बहवो बाधाः; तथा एकस्मादेव मूलकारणात् पृथक् वस्तु जायते चेत् तदा तेजसो औष्ण्यमिव शैत्यमपि जायेत इत्यादयश्च युक्तिसिद्धाः विविधा विरोधाः, एवञ्च घटपटादीनां यदयमन्योऽन्यभेदोऽनुभूयते, तन्न तात्त्विकः, परन्तु भवदिच्छाप्रेरितया अविद्याख्यया माययैव तत् भासते, अतस्त्वमेवैकः सर्वमिदं वस्तु इति तत्त्वनिर्वचनमिति भावः॥ ९३॥

युक्तियुक्त अनेक प्रकारकी बाधाओं तथा विरोधोंसे पदार्थ भेदाश्रित ( भेदयुक्त-विभिन्न) नहीं होते, किन्तु तुम्हारी चेष्टाके विजृम्भितसे वस्तु भेदाश्रित होते हैं, यही तात्त्विक सिद्धान्त है। [ 'सर्वं विष्णुमयं जगत्' इस श्रुतिवचनके अनुसार घटपटादि पदार्थोंमें वास्तविक विचारसे कोई भेद प्रतीत नहीं होता, किन्तु तुम्हारी इच्छाके विलासमात्र से दो चन्द्रमाके समान भेदप्रतीति होती है, अत एव श्रवण-मननादि क्रमसे आपका साक्षात्कार होनेपर एकमात्र आप ही इस सम्पूर्ण जगत्स्वरूप दीखते हैं, आपसे भिन्न किसी पदार्थका भेदज्ञान नहीं होता यही 'तत्त्वमसि' इत्यादि उपनिषद् वचनोंसे भी निश्चित होता है]॥९३॥

वस्तु विश्वमुदरे तव दृष्ट्वा बाह्यवत् किल मृकण्डतनूजः ।
स्वं विमिश्रमुभयं न विविञ्चन् निर्ययौ स कतरस्त्वमवैषि ॥९४॥

वस्त्विति । हे विष्णो ! मृकण्डतनूजः मार्कण्डेयमुनिः, तव भवतः, उदरे जठरे, बाह्यवत् बहिर्जगदवस्थितं वस्तुजातमिव, विश्वं निखिलम् , वस्तु पदार्थम् , दृष्ट्वा वीक्ष्य, उभयं बाह्यमुदरस्थञ्च द्वयम् , विमिश्रं विशेषेण संयुक्तम् ; एकविधप्रकारत्वेन सम्मिलितमित्यर्थः । एकस्मिन्नेव उदरे बाह्योदराभ्यन्तरस्थितयोः द्वयोरपि स्थितत्वेन प्रतीयमानत्वात् अविविक्तमिति यावत् । स्वम् आत्मानम् , न विविञ्चन् विवेक्तुम् अशक्नुवन् , कोऽहं बहिरासम् ? को वा उदराभ्यन्तरे वर्त्ते ? इत्येवंरूपेण भिन्नतया ज्ञातुमसमर्थः सन् इत्यर्थः । निर्ययौ उदरात् निर्गतवान् , किल इति प्रसिद्धौ वार्त्तायां वा, सः मृकण्डतनूजः, कतरः बहिःस्थितो वा कः ? उदरस्थितो वा कः ? इति त्वं भवानेव, अवैषि जानासि, नान्यः कोऽपि इत्यर्थः सर्वज्ञत्वादिति भावः॥९४॥

( हे विष्णु भगवान् ! ) मार्कण्डेय मुनि तुम्हारे उदरमें, बाहरके समान ( जिस रूपमें बाहर स्थित है उसी प्रकार ) समस्त पदार्थको देखकर विशेषरूपसे मिलित ( एक ही उदरमें स्थित होनेसे अविविक्त ) दोनों अपनेको नहीं निश्चित करते हुए ( बाहर स्थित जो मैं उदरमें प्रविष्ट हुआ, वह कौन है ? तथा जो पहलेसे उदरमें है, वह कौन है ? यह निर्णय नहीं कर सकते हुए ) बाहर निकल गये । ( बाहर तथा उदरमें स्थित उन दोनोंमें वह ( मार्कण्डेय ) कौन है ? यह तुम जानते हो ( दूसरा कोई नहीं जानता । अथवा—जिस तुम्हारे उदरमें बाहरी समस्त वस्तुओंको देखकर मार्कण्डेय मुनि उदरमें स्थित अपनेसे विशेष रूपसे मिश्रित दोनों अपनेको नहीं जानते हुए निकल गये, वह अनेक अवतारोंमें-से कौन-सा तुम्हारा विशिष्ट अवतार है ?, यह तुम्हीं जानते हो, स्वप्रकाश तुमको दूसरा कोई भी नहीं जानता)॥

ब्रह्मणोऽस्तु तव शक्तिलतायां मूर्द्ध्नि विश्वमथ पत्युरहीनाम् ।
बालतां कलयतो जठरे वा सर्वथाऽसि जगतामवलम्बः ॥ ९५ ॥

ब्रह्मण इति । हे विष्णो ! विश्वं जगत् , ब्रह्मणः परब्रह्मरूपिणः, तव भवतः, शक्तिः माया एव, लता वल्ली तस्याम् , अस्तु तिष्ठतु, फलस्वरूपेणेति भावः । अथ किं वा, अहीनां नागानाम् , पत्युः ईशस्य नागराजशेषस्य, अनन्तनागरूपिण इत्यर्थः तव भवतः, मूर्द्ध्नि शिरसि, अस्तु । वा अथवा, बालतां शिशुभावम् , कलयतः दधानस्य, वटपत्रशायिनो बालकभूतस्येत्यर्थः । तव इति शेषः । जठरे उदरे, अस्तु, सर्वप्रकारेणापि, जगतां त्रैलोक्यस्य, अवलम्बः आश्रयः, असि भवसि, त्वमिति शेषः । अत एव तुभ्यं नमोऽस्तु इति भावः ॥ ९५ ॥

( हे विष्णो ! सृष्टिसे पहले स्थावर-जङ्गमात्मक यह ) संसार ब्रह्मरूप तुम्हारी शक्तिरूपिणी लतामें रहा, तदनन्तर ( सृष्टिके बाद तुम्हारे ही अंश ) सर्पराज ( शेषनाग ) के मस्तकपर रहा, अथवा ( प्रलयकालमें ) बालभाव धारण किये हुए आपके उदरमें रहा;

इस प्रकार तुम्हीं सब तरहसे लोकत्रयके आश्रय हो। [ इससे संसारके सृष्टि, पालन तथा संहार करनेवाले एकमात्र तुम्हीं हो, यह ध्वनित होता है ] ॥ ९५ ॥

धर्मबीजसलिला सरिदङ्घ्रावर्थमूलमुरसि स्फुरति श्रीः ।
कामदैवतमपि प्रसवस्ते ब्रह्म मुक्तिदमसि स्वयमेव ॥ ९६ ॥

धर्मेति। हे विष्णो! धर्मस्य चतुर्वर्गेषु प्रथमवर्गस्य, बीजं हेतुभूतम्, सलिलं जलं यस्याः सा तादृशी, सरित् नदी, जाह्नवीत्यर्थः। ते तव, अङ्घ्रौ चरणे, स्फुरति शोभते। अर्थस्य धनरूपस्य द्वितीयवर्गस्य, मूलं बीजभूतम्, श्रीः लक्ष्मीः, तव उरसि वक्षसि, स्फुरति। कामस्य कामनारूपस्य तृतीयवर्गस्य, दैवतम् अधिष्ठाता कामदेवोऽपि, ते यदुवंशावतीर्णस्य श्रीकृष्णरूपस्य तव, प्रसवः पुत्रः, प्रद्युम्न इत्यर्थः मुक्तिदं मुक्तिं मोक्षरूपं चतुर्थवर्गम्, ददाति यच्छतीति तादृशम्, ब्रह्म परमात्मा च, स्वयमेव साक्षात् त्वमेव, असि भवसि। अतः धर्मार्थकाममोक्षरूपं पुरुषार्थचतुष्टयमेकस्मिन् त्वय्येव अविरोधेन वर्त्तते इति पुरुषार्थचतुष्टयाकाङ्क्षिणां त्वमेव सर्वथा सेवनीयोऽसीति भावः ॥ ९६ ॥

धर्म ( प्रथमपुरुषार्थ ) का बीज है जल जिसका ऐसी गङ्गानदी तुम्हारे चरणमें स्फुरित होती है, अर्थ ( द्वितीय पुरुषार्थ ) की जड़ लक्ष्मी तुम्हारे हृदयमें स्फुरित होती है, काम ( तृतीय पुरुषार्थ ) का अधिष्ठाता देव ( कामदेव ) अर्थात् प्रद्युम्न ( यदुवंशी कृष्णरूप ) तुम्हारा पुत्र है और मुक्ति ( चतुर्थ पुरुषार्थ ) को देनेवाले ब्रह्म अर्थात् परमात्मा तुम स्वयं ही हो। [ इस प्रकार धर्मार्थकाममोक्षरूप चारों पुरुषार्थ आप में ही निर्विरोध निवास करते हैं, अत एव आपकी सेवासे चारों पुरुषार्थोंकी प्राप्ति सहज ही में होती है ] ॥ ९६ ॥

लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य ।
तेभ्य एव नरकैरुचिता भीस्ते तु बिभ्यतु कथं नरकेभ्यः ? ॥ ९७ ॥

लीलयेति। हे विष्णो! ये जनाः लोकाः, नरकस्य रौरवादेः निरयस्य असुरविशेषस्य च 'नरको निरये दैत्ये' इति विश्वः। नाशम् उच्छेदं निधनञ्च, करोति विदधाति यः तादृशस्य, तव भवतः, नाम नामधेयम्, लीलयाऽपि क्रीडाच्छलेनापि, अवहेलयाऽपीति यावत्। गृह्णते कीर्त्तयन्ति, तेभ्यः तादृशजनेभ्य एव, नरकैः निरयैः, भीः भयम्, उचिता युक्ता, नरकनाशकरस्य नामग्राहित्वादिति भावः। ते तथाविधजनास्तु, नरकेभ्यः निरयेभ्यः सकाशात्, कथं किमर्थम्, बिभ्यतु ? त्रस्यन्तु ? अपि तु न कथञ्चिदेवेत्यर्थः। 'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघहरं विदुः।' इति श्रीमद्भागवतोक्तेरिति भावः ॥ ९७ ॥

( अब दो श्लोकों ( २१।९७-९८ ) से भगवान्‌के नामकीर्तनका महात्म्य कहते हैं—) जो लोग नरक ( नरकासुर, पक्षा०—नरक=रौरव आदि नरक) के नाशक तुम्हारे नामको परिहासादिमें भी लेते ( उच्चारण करते ) हैं, उनसे ही नरक ( रौरवादि नरक ) को डरना

उचित है, वे नरकसे क्यों डरें ? अर्थात् उनको नरकसे लेशमात्र भी भय नहीं रह जाता। ['लीलामात्रसे भी' शब्दसे जो भक्ति एवं श्रद्धाके साथ बुद्धिपूर्वक नाम ग्रहण करते हैं, उनको नरकसे भय कहांसे हो सकता है ? ] ॥ ९७॥

मृत्युहेतुषु न वज्रनिपाताद् भीतिमर्हति जनस्त्वयि भक्तः।
यत् तदोच्चरति वैष्णवकण्ठान्निष्प्रयत्नमपि नाम तव द्राक् ॥ ९८ ॥

मृत्स्विति। हे विष्णो ! त्वयि भवति, भक्तः सेवानुरक्तः, जनः लोकः, मृत्युहेतुषु मरणकारणेषु मध्ये, प्रधानादिति शेषः। वज्रनिपातात् मृत्युहेतोः कुलिशपतनादपि, भीतिं भयम्, लब्धुमिति शेषः। न अर्हति न योग्यो भवति, कुत इत्याह—यत् यस्मात् कारणात्, तदा वज्रनिपातसमये, वैष्णवस्य विष्णोः तव भक्तस्य, तस्येति शेषः। कण्ठात् गलदेशात्, तव भवतः नाम नामधेयम्, निष्प्रयत्नमपि प्रयत्नं विनाऽपि, सततनामोच्चारणाभ्यासात् चेष्टां विनाऽपीत्यर्थः। द्राक् शीघ्रमेव, उच्चरति निष्क्रामति। तदेव वज्रनिपातभयं निवारयतीति भावः। अनभिसन्धिनाऽपि विष्णुनामोच्चारकस्य मृत्युभयं नास्तीति निष्कर्षः ॥ ९८ ॥

तुम्हारेमें भक्ति करनेवाला मनुष्य मृत्युके कारणोंमें-से (मुख्य) वज्र गिरनेसे भी भयको (पानेके) योग्य नहीं है अर्थात् तुम्हारे भक्तको वज्र गिरनेसे भी भय नहीं होता, क्योंकि उस समय (वज्रपातके अवसरपर) विष्णुभक्तके कण्ठसे विना प्रयासके ही झट तुम्हारा नाम कहा जाता है। [ मरणके मूल हेतु वज्रपात होनेपर सहसा तुम्हारे नामके उच्चारणसे मनुष्य जन्म-मरणदुःखसे सर्वदाके लिए छुटकारा पाकर मुक्तिको पा लेता है, तो साधारण मृत्युकारणों (व्याघ्र-सिंहादि) से उसे किस प्रकार भय हो सकता है ?। लोकका यह नियम है कि सहसा सङ्कट आनेपर लोग अपने इष्टदेवका नामोच्चारण करते हैं] ॥९८॥

सर्वथाऽपि शुचिनि क्रियमाणे मन्दिरोदर इवावकरा ये।
उद्भवन्ति भविचेतसि तेषां शोधनी भवदनुस्मृतिधारा ॥ ९९ ॥

सर्वथेति। हे विष्णो ! सर्वथा सर्वप्रकारेणापि, सम्मार्जनीसाधनेन परिष्कारादिना कामादिरिपुषट्कविजयेन च इति भावः। शुचिनि निर्मले शुद्धे च, क्रियमाणे विधीयमाने, अपीति शेषः। भविनां संसारिणाम्, चेतसि मनसि, मन्दिरोदरे गृहाभ्यन्तरे इव, ये अवकराः सङ्कराः, सम्मार्जनीक्षिप्तधूल्यादय इत्यर्थः। रागादयो मलाश्च। 'सम्मार्जनी शोधनी स्यात्सङ्करोऽवकरस्तथा' इत्यमरः। उद्भवन्ति जायन्ते, भवतः तव कर्मभूतस्य, अनुस्मृतिधारा चिन्तनपरम्परा, तेषाम् अवकाराणाम्, शोधनी सम्मार्जनीस्वरूपा, पवित्रतासम्पादनहेतुश्च, भवतीति शेषः ॥ ९९ ॥

(भगवान्के नामोच्चारणका माहात्म्य कहकर अब स्मरण करनेका माहात्म्य कहते हैं—) सब प्रकार (मन, वचन तथा शरीरके नियमन आदि) पवित्र (दोषहीन, या—फलको ब्रह्मार्पण करनेसे बन्धनकारक कर्मोंसे रहित, पक्षा०—स्वच्छ) किये जाते हुए

मन्दिरके भीतरी भागके समान प्राणियोंके हृदयमें जो अवकर (रागद्वेषादि विकार पक्षा०—कूड़ा-कर्कट आदि) उत्पन्न होते हैं, आपका स्मरण-समूह उसका शोधन (विनाश) करनेवाला (पक्षा०—स्वच्छ करनेवाला अर्थात् झाड़ू) है। [मन्दिर (घर) में उत्पन्न कूड़ेको जिस प्रकार झाड़ू दूर कर मन्दिरको स्वच्छ कर देता है, उसी प्रकार आपका स्मरण प्राणियोंके मनको रागद्वेषादि दूषित भाव दूरकर निष्पाप कर देता है, इस प्रकार आपका स्मरण ही प्राणियोंके चित्तको शुद्धकर मोक्ष देनेवाला है] ॥ ९९ ॥

**अस्मदाद्यविषयेऽपि विशेषे रामनाम तव धाम गुणानाम् ।**
**अन्वबन्धि भवतैव तु कस्मादन्यथा ननु जनुस्त्रितयेऽपि ? ॥ १०० ॥**

**अस्मदिति । हे विष्णो ! विशेषे पार्थक्ये, तव नामसु कस्य उत्कर्षः इत्येवं तारतम्यनिश्चये इत्यर्थः । अस्मदादीनां मद्विधानां मूढानाम्, अविषये ज्ञानागोचरे सत्यपि, तव ते, रामनाम सहस्रनामसु मध्ये रामेति नामैव, गुणानाम् उत्कर्षाणाम्, धाम आश्रयः, इति मन्यते इति शेषः । कुत इत्याह—अन्यथा तु अथैवं नो चेत् पुनः, तव रामनामस्य गुणधामत्वाभावे तु इत्यर्थः । ननु भो नारायण ! जनुषां जन्मनाम्, त्रितयेऽपि त्रयेऽपि, जामदग्न्य-दाशरथि-बलभद्रात्मकजन्मत्रयेऽपीत्यर्थः । भवतैव त्वयैव, कस्मात् कुतः हेतोः, अन्वबन्धि ? अनुबन्धं नीतम् ? राम इति एव तु नाम पुनः पुनरावृत्त्या गृहीतम् ? इत्यर्थः । त्रिष्वेव अवतारेषु त्वया रामनामग्रहणात् एतत्तेऽतीव प्रियमिति ज्ञायते अज्ञैरपि अस्माभिरिति भावः । तव नामसु रामनामैव श्रेष्ठमिति निष्कर्षः ॥ १०० ॥**

(अब पुनः भगवान्के दूसरे नामोंकी अपेक्षा 'राम' नामका माहात्म्य कहते है-भगवान्के सहस्रों नामोंमें-से किस नाममें अधिक गुण है ? इस प्रकारका) विशेष ज्ञान हमलोगोंको नहीं रहनेपर भी 'राम' नाम ही तुम्हारे (विष्णु भगवान्के) गुणोंका स्थान है (अथवा—तुम्हारा 'राम' नाम ही गुणोंका स्थान है)। अन्यथा (यदि ऐसा नहीं होता तो 'परशुराम', दशरथपुत्र 'राम' तथा 'बलराम' रूप) तीनों जन्मोंमें भी किस कारण और क्यों 'राम' नामको आपने ही ग्रहण किया है ? [उक्त तीनों अवतारोंमें विष्णु भगवान्को 'राम' नाम ग्रहण करनेसे यही नाम सब नामोंमें अधिक प्रिय एवं महत्त्वास्पद मालूम पड़ता है, अत एव मैं उसीका बराबर उच्चारण करता हूँ] ॥ १०० ॥

**भक्तिभाजमनुगृह्य दृशा मां भास्करेण कुरु वीततमस्कम् ।**
**अर्पितेन मम नाथ ! न तापं लोचनेन विधुना विधुनासि ? ॥१०१॥**

**भक्तीति । नाथ ! हे प्रभो ! विष्णो ! भक्तिभाजं भक्तिमन्तं सेवकम्, मां नलम्, अनुगृह्य अनुकम्प्य, भास्करेण सूर्येण, दृशा नेत्रेण, सूर्यात्मकदक्षिणनयनेनेत्यर्थः । वीतम् अपगतम्, तमः तमोगुणः, तमोगुणात्मकमूढतेत्यर्थः । ध्वान्तञ्च यस्य तं तादृशम्, 'राहौ ध्वान्ते गुणे तमः' इत्यमरः । कुरु विधेहि । तथा अर्पितेन मां प्रति**

द्दत्तेन, विधुना चन्द्रेण, लोचनेन नेत्रेण, चन्द्रात्मकवामनयनेनेत्यर्थः। मम मे, तापम् आध्यात्मिकादिसन्तापत्रयमित्यर्थः। न विधुनासि? न अपनयसि? इति काकुः, अपि तु विधुनास्येवेत्यर्थः। भास्करेण तमोविधूननस्य विधुना च तापविधूननस्य सम्भवत्वादिति भावः। धूञ् कम्पने इत्यस्मात् क्रैयादिकात् सिपि 'प्वादीनां ह्रस्वः'॥ १०१॥

हे स्वामिन्! भक्तियुक्त मुझको दहने नेत्ररूप सूर्य अनुगृहीतकर अन्धकाररहित (पक्षा०—अज्ञानरहित) करो तथा मुझपर दिये गये वाम नेत्ररूप चन्द्रसे मेरे सन्ताप (पक्षा०—आध्यात्मिक, आधिदैविक तथा आधिभौतिकरूप तापत्रय) को नहीं दूर करते हो क्या? अर्थात् अवश्य करते हो। [सूर्यको दहना नेत्र होनेसे उसके द्वारा अन्धकारको दूर करना तथा चन्द्रको वायाँ नेत्र होनेसे उसके द्वारा सन्तापको दूर करना उचित ही है]॥

लङ्घयन्नहरहर्भवदाज्ञामस्मि हा! विधिनिषेधमयीं यः।
दुर्लभं स तपसाऽपि गिरैव त्वत्प्रसादमहमिच्छुरलज्जः!॥ १०२॥

लङ्घयन्निति। हे विष्णो! यः योऽहं नलः, अहरहः नित्यं, विधिनिषेधमयीं विधिः—'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इत्यादिरूपः, निषेधः—'न सुरां पिबेन्न कलञ्जं भक्षयेत्' इत्यादिरूपश्च, तन्मयीं तदात्मिकाम्, भवदाज्ञां त्वदादेशं, 'श्रुतिस्मृति ममवाज्ञे' इत्यनुस्मरणात्, लङ्घयन् अतिक्रामन् अस्मि वर्त्ते, हा! खेदे, स उक्तरूपाज्ञालङ्घनकारी, अहं नलः, अलज्जः निस्त्रपः सन्, गिरैव वचनेनैव, 'मामनुगृहाय मामनुगृहाण' केवलमित्येवंरूपवाक्प्रयोगेणैवेत्यर्थः। तपसा अपि कठोरतपस्ययाऽपि, दुर्लभं दुष्प्रापम्, त्वत्प्रसादं भवदनुग्रहम्, इच्छुः अभिलाषुकः, अस्मीति शेषः। यस्य खलु तव प्रसादः सर्वदा तपस्यादिक्रियानुष्ठानरूपेण महता प्रयत्नेन लभ्यः, स मया सर्वदा तवाज्ञालङ्घनकारिणा वाङ्मात्रेणैव प्रार्थ्यते इत्यहो मे निर्लज्जता! सर्वथा अनुग्राह्योऽस्मीति भावः॥ १०२॥

जो मैं ('प्रत्येक वसन्त ऋतुमें ज्योतिष्टोम याग करे' इत्यादि) विध्यात्मक तथा ('मद्य पान न करे' इत्यादि) निषेधात्मक आज्ञाको प्रतिदिन लङ्घन करता रहा, हाय! (खेद है कि) वह मैं तपसे भी दुर्लभ आपकी प्रसन्नताको (मुझपर अनुग्रह करें, मुझपर अनुग्रह करें इत्यादि रूप) वाङ्मात्रसे ही चाहता हुआ निर्लज्ज हूँ। [अत एव हे भगवान्! आप मेरी सर्वथा रक्षा करें]॥ १०२॥

विश्वरूप! कृतविश्व! कियत् ते वैभवाद्भुतमणौ हृदि कुर्वे।
हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः?॥ १०३॥

विश्वेति। विश्वरूप! हे सर्वात्मक! 'सर्वं खल्विदं ब्रह्म' इत्यादि श्रुतेरिति भावः। कृतविश्व! हे सम्पादितभुवन! 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतेरिति भावः। अणौ अत्यन्तसूक्ष्मपरिमिते, हृदि हृदये, ममेति शेषः। ते तव,

वैभवस्य सामर्थ्यातिशयस्य, अद्भुतम् आश्चर्यस्वरूपम्, कियत् किम्परिमाणम्, कुर्वे ? गृह्णामि ? इत्यर्थः । हृदयस्य अत्यन्तमल्पपरिमितत्वात् नितान्तमल्पम् एव धारयितुं शक्नोमि इति भावः । तथा हि—दरिद्रः निःस्वः, अत एवातिलोलुपोऽपि इति भावः । काञ्चनाद्रिं सुमेरुपर्वतम्, अधिगत्य प्राप्य, निजे स्वीये, चीरे शतधाच्छिन्नवस्त्रखण्डे, कियत् किम्परिमाणम्, हेम सुवर्णम्, नह्यति ? बध्नाति ? अपि तु अत्यल्पमेव बद्धुं शक्नोति इत्यर्थः । चीरखण्डे बहुसुवर्णबन्धनासामर्थ्यवत् मम सकलगुणवर्णनाभिलाषे सत्यपि असामर्थ्यात् कियन्मात्रं वर्ण्यते इति भावः । 'णह बन्धने' इति धातुः ॥ १०३ ॥

हे विश्वरूप ( स्थावरजङ्गमादि सर्वात्मक ) ! हे संसारके रचयिता ! मैं तुम्हारे सामर्थ्याधिक्यजन्य आश्चर्यको अत्यल्प अपने हृदयमें कितना ग्रहण करूँ ? ( आपके आश्चर्यकारक ऐश्वर्यको अतिमहान् होनेसे मैं स्वल्पतम अपने हृदयमें धारण नहीं कर सकता अर्थात् यद्यपि आपके महान् वैभवको वर्णन करनेकी इच्छा रहती है तथापि मैं उसका वर्णन नहीं कर सकता हूँ ), क्योंकि दरिद्र आदमी सुमेरु पर्वतको पाकर भी ( सहस्रों छिद्रयुक्त अपने ) फटे वस्त्रखण्ड ( चिथड़े ) में कितना सोना बांधता है ? अर्थात् अत्यन्त थोड़ा ही सोना लेता है ॥ १०३ ॥

इत्युदीर्य स हरिं प्रति सम्प्रज्ञातवासिततमः समपादि ।
भावनावशविलोकितविष्णौ प्रीतिभक्तिसदृशानि चरिष्णुः ॥ १०४ ॥

इतीति । सः नलः, इति पूर्वोक्तप्रकारेण, हरिं विष्णुम्, प्रति उद्दिश्य, उदीर्य उक्त्वा, स्तुत्वा इत्यर्थः । सम्प्रज्ञातेन तदाख्येन साकारध्यानेन हेतुना, वासिततमः अतिशयेन सञ्जातभावनः सन्, अत्यर्थं तन्मयः सन्नित्यर्थः । भावनावशेन संस्कारपाटवेन, ध्यानप्रभावेणेत्यर्थो वा, विलोकितः साक्षात्कृतः, यः विष्णुः नारायणः तस्मिन् विषये, प्रीतिभक्त्योः प्रेमानुरागयोः, सदृशानि उचितानि, आनन्दवाष्पमोचननृत्यगीतादीनि कर्माणीति शेषः । चरिष्णुः आचरणशीलः, अनुष्ठाता इत्यर्थः । समपादि सम्पन्नः, जात इत्यर्थः । 'चिण् ते पदः' इति कर्त्तरि चिण् ॥ १०४ ॥

वे नल विष्णुके प्रति ऐसा ( २१।५०—१०३ ) कहकर अर्थात् ऐसी प्रार्थनाकर 'सम्प्रज्ञात' नामक समाधि (साकार भगवद्ध्यान) से तन्मय भावनावाले होते हुए भावनावश देखे ( साक्षात्कार किये ) गये विष्णुमें प्रेम तथा भक्तिके योग्य ( नृत्य-गीत आदि ) का आचरण करने लगे । [ ध्येय तथा ध्यानकर्ताके भावयुक्त साकार ध्यानको 'सम्प्रज्ञात' समाधि और संवित्-संवेद्यके विना निराकार स्वप्रकाश परमानन्दलक्षण साम्राज्य ध्यानको 'असम्प्रज्ञात' समाधि कहते हैं । साकार भगवान्की स्तुति करनेसे यहां नलको 'सम्प्रज्ञात समाधि' द्वारा भावना करनेको कहा गया है ॥ १०४ ॥

---

१. 'भावनावशविलोलित—' इति 'जीवातु'सम्मतः पाठः, इति म० म० शिवदत्तशर्माण आहुः । २. '—विष्णुः' इति, '—विष्णुप्रीति—' इति च पाठान्तरम् ।

विप्रपाणिषु भृशं वसुवर्षी पात्रसात्कृतपितृक्रतुकव्यः ।
श्रेयसा हरिहरौ प्रतिपूज्य प्रह्व एष शरणं प्रविवेश ॥ १०५ ॥

विप्रेति । एषः नलः, विप्राणां ब्राह्मणानाम्, पाणिषु करेषु, भृशम् अत्यर्थम्, वसु धनम्, वर्षति विकिरति, ददातीत्यर्थः, यः सः तादृशः, तथा पात्रसात्कृतं सत्पात्रे दत्तम्, पितृक्रतोः पितृयज्ञस्य, श्राद्धस्य इत्यर्थः । कव्यं पित्र्यम् अन्नं येन सः तादृशश्च सन् । 'हव्यकव्ये दैवपैत्रे ( पित्र्ये )' इत्यमरः । नित्यश्राद्धमनुष्ठाय इति भावः । श्रेयसा उत्कृष्टवस्तुना, हरिहरौ विष्णुशिवौ, परिपूज्य अर्चयित्वा, प्रह्वः हरिहरचरणयोः प्रणतश्च सन्, शरणं गृहम्, भोजनगृहमिति यावत् । 'शरणं गृहरक्षित्रोः' इत्यमरः । प्रविवेश प्रविष्टवान् ॥ १०५ ॥

ब्राह्मणोंके हाथोंमें ( दान-सम्बन्धी गौ, सुवर्ण रत्न आदि ) धनको बरसाने ( दान देने ) वाले, सत्पात्रोंको श्राद्ध-सम्बन्धी द्रव्य दिये हुए वे नल उत्तम द्रव्यों ( अथवा—नित्य स्नान, देवपूजन, श्राद्धादिकर्मजन्य पुण्य ) से विष्णु तथा शिवकी पूजा करके नम्र होते हुए ही भोजन-गृहमें प्रवेश किये ॥ १०५ ॥

माध्यन्दिनादनु विधेर्वसुधाविवस्वानास्वादितामृतमयौदनमोदमानः ।
प्राञ्चं स चित्रमविदूरितवैजयन्तं वेश्माचलं निजरुचीभिरलञ्चकार ॥१०६॥

माध्यन्दिनादिति । वसुधाविवस्वान् भूलोकसूर्यः, सः नलः, मध्यन्दिनस्य मध्याह्नकालस्य अयमिति माध्यन्दिनः तस्मात माध्यन्दिनात् दिनमध्यभागे विधेयात्, विधेः अनुष्ठानात्, देवार्चनादिरूपनित्यकार्यादित्यर्थः । अनु पश्चात्, पञ्चमहायज्ञानुष्ठानादनन्तरमित्यर्थः । आस्वादितेन भुक्तेन, अमृतमयेन पीयूषतुल्येन, सुस्वादुनेत्यर्थः । ओदनेन अन्नेन, मोदमानः हृष्यन्, सानन्दमनाः सन् इत्यर्थः । प्राञ्चं प्राचीनम्, प्रासादात् पूर्वभागस्थमिति वा । 'शयनगृहं प्राच्यां कर्त्तव्यम्' इति शयनशास्त्रादिति भावः । चित्रम् आश्चर्यम्, आश्चर्यदर्शनमित्यर्थः । अविदूरितः निकटीकृतः, अत्युच्चत्वादिति भावः । वैजयन्तः इन्द्रप्रासादः येन तं तादृशम्, वेश्माचलं प्रासादरूपं पर्वतम्, निजाभिः स्वीयाभिः, रुचीभिः कान्तिभिः प्रभाभिश्च, अलञ्चकार भूषयामास, सूर्यस्तु मध्याह्नात् परं पश्चिमदिगवस्थितम् अस्ताचलमेवालङ्करोति, अयं तु भूलोकसूर्यः मध्याह्नात परमपि पूर्वाचलमलङ्करोतीति चित्रम् ! एवञ्च सदोदयभागयमिति भावः ॥ १०६ ॥

पृथ्वीके सूर्य दोपहरके बाद ( शाकादि नानाविध व्यञ्जन पदार्थोंसे ) अमृतमय भातको खाकर हर्षित होते हुए उस नलने पूर्व दिशामें स्थित ( अथवा—जिसमें पहले दमयन्तीके साथ रहे थे उस प्राचीन ), चित्रोंसे युक्त ( अथवा—औन्नत्यादिके द्वारा आश्चर्यकारक ) और ऊँचाईसे इन्द्रप्रासादके निकटवर्ती ( या—इन्द्रप्रासादतुल्य ) पर्वताकार महलको अपनी

१. '—वसुधासुधांशुरास्वा—' इति पाठान्तरम् ।

शोभासे सुशोभित किया अर्थात् वे प्रासादपर गये ( पक्षा०—सूर्य भी भूमिसे अमृत भोजन करके अर्थात् जलको सुखाकर हर्षित होते हुए पूर्व दिशामें इन्द्रप्रासादके निकटस्थ उदयाचलको अपनी कान्तिसे सुशोभित करता है; परन्तु मध्याह्नके बाद पूर्व दिशामें उदयाचलको नहीं, अपितु पश्चिम दिशाके अस्ताचलको सुशोभित करता है और ये पृथ्वीसूर्य ( नल ) पूर्वपर्वतको सुशोभित करते हैं, यह आश्चर्य है। पाठा०—चन्द्र भी देव होनेसे अमृतमय भोजनसे हर्षित होते हुए…… अर्थ-परिवर्तनकर शेष अर्थ पूर्ववत् करना चाहिये )। [ दोपहरके बादमें पूर्वदिशाके उदयाचल पर्वततुल्य उच्चतम प्रासादको अपनी कान्तियोंसे सुशोभित करनेके कारण नलका सर्वदा उदयशील रहना सूचित होता है ] ॥

**भीमात्मजाऽपि कृतदैवतभक्तिपूजा पत्यौ च भुक्तवति भुक्तवती ततोऽनु ।**
**तस्याङ्कमङ्कुरिततत्परिरिप्सम[1]मध्यमध्यास्त भूषणभराति[2]तरालसाङ्गी ॥ १०७ ॥**

**भीमेति । ततः पतिभोजनात् नलस्य वेश्माचलालङ्करणादिति वा, अनु पश्चात्, भूषणभरेण अलङ्कारभारेण, अतितराम् अत्यर्थम्, अलसानि जडानि, विवशानी-त्यर्थः । अङ्गानि अवयवा यस्याः सा तादृशी, भीमात्मजा दमयन्ती अपि, कृता अनुष्ठिता, दैवतानां देवानाम्, भक्त्या श्रद्धया, पूजा अर्चना यया सा तादृशी सती, पत्यौ भर्त्तरि नले, भुक्तवति कृतभोजने सति, भुक्तवती स्वयं च कृतभोजना सती, अङ्कुरिता उद्भूता, तस्याः कर्मभूतायाः दमयन्त्याः, परिरिप्सा आलिङ्गनेच्छा यस्य तादृशः, 'सनि मीमा—' इत्यादिना सनि इसादेशे 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपः । मध्यः मध्यभागः यस्य तं तादृशम्, तस्य नलस्य, अङ्कम् उत्सङ्गम्, क्रोडान्तिकमिति यावत् । अध्यास्त उपाविशत् ॥ १०७ ॥**

तदनन्तर ( गौरी आदि ) देवताओंकी भक्तिपूर्वक पूजन करके तथा नलके भोजन करनेपर भोजनकी हुई, भूषण-भारके अतिशय बोझसे आलसयुक्त अङ्गोंवाली दमयन्ती भी उस ( दमयन्ती ) के आलिङ्गन करनेके लिए इच्छुक नलके अङ्कमध्यमें स्थित हो गयी। [ भोजन करनेके बाद आलस आना स्वाभाविक होनेसे यहां मृदङ्गी दमयन्तीको भूषणके बोझसे आलसयुक्त होना उचित ही है ] ॥ १०७ ॥

**तामन्वगादशितबिम्बविपाकचञ्चोः स्पष्टं शलाटुपरिणत्युचितच्छदस्य ।**
**कीरस्य काऽपि करवारिरुहे वहन्ती सौन्दर्यपुञ्जमिव पञ्जरमेकमाली ॥१०८॥**

**तामिति । अशितस्य भक्षितस्य, बिम्बस्य तदाख्यफलविशेषस्य, विपाकः परिणतिः इव, अत एव अतिरक्तवर्णः इति भावः, चञ्चुः त्रोटिः यस्य तादृशस्य आरक्तचञ्चुविशिष्टस्य इत्यर्थः । तथा स्पष्टं व्यक्तं यथा भवति तथा, शलाटुनः आम-**

---

१. '—परिरिप्सु—' इति पाठान्तरम् । २. '—भरातिभरा—' इत्येव पाठः साधीयान्, इति वदता 'प्रकाश'कृता '—भरातितरा—' इति पाठं लक्ष्यीकृत्य 'पाठान्तरं चिन्त्यम्' इत्युक्तम् ।

फलस्य, अपक्वफलस्य सम्बन्धिन्याः इत्यर्थः। 'आमे फले शलाटुः स्यात्' इत्यमरः। परिणतेः परिणामस्य, उचितौ योग्यौ, नीलौ इति यावत्, छदौ पक्षौ यस्य तादृशस्य, कीरस्य शुकपक्षिणः सौन्दर्यपुञ्जमिव सुघटितत्वेन एकीभूतसौन्दर्यराशिमिव, एकं पञ्जरं पक्षिबन्धनागारम्, करो हस्तः, वारिरुहमिव सरोजमिव तस्मिन्, वहन्ती धारयन्ती, का अपि काचित्, आली सखी, तां दमयन्तीम्, अन्वगात् अनुजगाम॥

पके हुए (लाल रंगके) बिम्बफल खानेके परिणामस्वरूप लाल चोंचवाले तथा कच्चे फल (खानेके) परिणामस्वरूप योग्य (हरे-हरे) पङ्खोंवाले तोतेकी सौन्दर्य-राशिके समान पिंजड़ेको करकमलमें धारण करती हुई कोई (एक) सखी उस दमयन्तीके पीछे चली। [कारणगत गुणको कार्यमें आनेसे लालबिम्बफलको खानेसे उनके परिणामके योग्य चोंचको लाल रंगका तथा हरे कच्चे फलको खानेसे उसके परिणामके योग्य पङ्खोंको हरे रंगका होना उचित ही है। भोजनके उपरान्त विश्राम करते हुए राजादिका शुक-सारिकादि पक्षियोंका मधुर कूजन सुनना प्रायः स्वभाव होता है, अत एव कविसम्राट् इस वर्णनको आरम्भ करते हैं]॥ १०८॥

कूजायुजा बहुलपक्षशितिम्नि सीम्ना स्पष्टं कुहूपदपदार्थमिथोऽन्वयेन।
तिर्यग्धृतस्फटिकदण्डकवर्त्तिनैका तामन्ववर्त्तत पिकेन मदाधिकेन॥१०९॥

कूजेति। कूजायुजा कूजनकारिणा। 'गुरोश्च हलः' इत्यकारप्रत्ययः। बहुलपक्षस्य कृष्णपक्षस्य, या शितिमा कालिमा तस्मिन्, सीम्ना मर्यादाभूतेनेव, अतीव कृष्णवर्णेनेत्यर्थः। अत एव स्पष्टं व्यक्तं यथा भवति तथा, कुहूपदं कुहू इति शब्दः, कोकिलालाप इत्यर्थः। तथा कुहूपदस्य अर्थः कुहूशब्दवाच्या अमावस्या च। 'कुहूः स्यात् कोकिलालापनष्टेन्दुकलयोरपि' इत्यमरः। तयोः मिथः परस्परम्, अन्वयः तादात्म्यम्, सामानाधिकरण्यसम्बन्ध इत्यर्थः। यत्र तेन तादृशेन, 'कुहू कुहू' इति रवकारिणा अमावस्येव गाढकृष्णवर्णेन चेत्यर्थः। अमावस्याऽपि बहुलपक्षस्य सीमा इति प्रसिद्धमेव। तिर्यक् वक्रभावेण, धृतः गृहीतः, यः स्फटिकस्य स्फटिकनिर्मितः इत्यर्थः। दण्डकः क्षुद्रदण्डः, तत्र वर्त्तते तिष्ठतीति तादृशेन, मदाधिकेन अत्यन्तमत्तेन, पिकेन एकेन कोकिलेन उपलक्षिता, कोकिलहस्ता इत्यर्थः। एका काचित्, आलीति शेषः। तां दमयन्तीम्, अन्ववर्त्तत अन्वगच्छत्॥ १०९॥

कूजती (कुहू-कुहू-कुहू करती) हुई, कृष्णपक्षकी सीमाभूत (अत एव मानो) 'कुहू' (अदृष्ट-चन्द्रकलावाली अमावस्या तिथि) के पद ('कुहू' शब्द) तथा पदार्थ (अतिशय कृष्णत्व) का परस्पर समन्वय स्थानभूत, तिर्छे (आड़े) पकड़े गये स्फटिक-दण्डपर बैठी हुई और अधिक मदोन्मत्त कोयलके सहित कोई एक सखी उस (दमयन्ती) के पीछे चली। [अमावस्या तिथि भी कृष्णपक्षकी सीमा (अन्तिम दिन) एवं बहुत काली (अन्धकारयुक्त) होती है]॥ १०९॥

शिष्याः कलाविधिषु भीमभुवो वयस्या वीणामृदुक्वणनकर्मणि याः प्रवीणाः ।
आसीनमेनमुपवीणयितुं ययुस्ता गन्धर्वराजतनुजा मनुजाधिराजम् ॥११०॥

शिष्या इति । वीणायाः वाद्यविशेषस्य, मृदुक्वणनकर्मणि कोमलवादनक्रियायाम् प्रवीणाः निपुणाः, याः गन्धर्वराजतनुजाः गन्धर्वराजकन्याः, कलाविधिषु नृत्यगीतादिकलाविद्याभ्यासेषु, भीमभुवः दमयन्त्याः, शिष्याः अन्तेवासिन्यः सत्यः, वयस्याः सख्यः, अभवन् इति शेषः । ताः गन्धर्वराजतनुजाः, आसीनम् उपविशन्तम्, मनुजाधिराजं नराधिपम्, एनं नलम्, उपवीणयितुं वीणया उपगातुम्, ययुः प्राप्तवत्यः ॥ ११० ॥

जो दमयन्तीकी सखियां कलाकर्मोंमें दमयन्तीकी शिष्या थीं, तथा जो गन्धर्वराजकी कन्याएं वीणाके मधुर शब्द करनेमें निपुणा थीं, ( अथवा—वीणाको मधुर बजानेमें निपुणा जो गन्धर्वराजकन्याएं ( नृत्यगीतादि ) कलाकर्मोंमें दमयन्तीकी शिष्या होकर ( दमयन्तीसे कलाओंको सीखकर ) उसकी सखी हो गयी थीं ) वे ( प्रासादपर दमयन्तीके साथ ) बैठे हुए इस ( नल ) को, वीणासे स्तुति करनेके लिए ( वहांपर ) गयी ॥ ११० ॥

तासामभासत कुरङ्गदृशां विपञ्ची किञ्चित् पुरःकलितनिष्कलकाकलीका ।
भैमीतथामधुरकण्ठलतोपकण्ठे शब्दायितुं प्रथममप्रतिभावतीव ॥१११॥

तासामिति । कुरङ्गदृशां मृगलोचनानाम्, तासां गन्धर्वराजतनुजानाम्, विपञ्ची वीणा, किञ्चित् अल्पम्, पुरः प्रथमम्, कलिता स्वीकृता, निष्कला निर्विशेषा, सामान्येत्यर्थः । काकली मधुरास्फुटध्वनिः यस्याः सा तादृशी सती । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः । 'नद्यृतश्च' इति कप् समासान्तः । भैम्याः दमयन्त्याः, तथा तादृशी, या मधुरा मनोहारिणी, सुश्राव्या इत्यर्थः । कण्ठलता कण्ठस्वरसन्ततिः, तस्याः उपकण्ठे समीपे, शब्दायितुं सङ्गीतात्मकं शब्दं कर्त्तुम् 'शब्दवैर—' इत्यादिना क्यङ् ततः तुमुन् । प्रथमम् आदौ, अप्रतिभावतीव प्रतिभारहिता इव, स्फूर्त्तिमप्राप्तेवेत्यर्थः । अभासत प्रतीयते स्म इत्यर्थः । विद्याधिकानां पुरतोऽल्पविद्यस्य कण्ठो न स्फुरति इत्युचितमेवेति भावः ॥ १११ ॥

उन मृगनयनी ( गन्धर्वराजकन्याओं, या—दमयन्तीकी सखियों ) की पहले कलारहित काकली ( गायनारम्भमें की जानेवाली मधुरास्फुट ध्वनि ) करनेवाली वीणा दमयन्तीके वैसे ( अतिप्रसिद्ध ) मधुर कण्ठलताके समीपमें शब्द करने ( वजने, पक्षा०—बोलने ) के लिए पहले प्रतिभाशून्य-सी शोभित हुई । [ जिस प्रकार किसी विशिष्ट विद्वान्‌के सामने कम पढ़ा हुआ व्यक्ति पहले बोलनेमें बहुत सङ्कुचित होता है, उसी प्रकार अतिशय मधुरभाषिणी दमयन्ती कण्ठके पासमें उनकी मधुरास्फुट काकलीयुक्त वीणा भी हो गयी है, ऐसा ज्ञात होता था ] ॥ १११ ॥

सा यद्धृताऽखिलकलागुणभूमभूमीर्भैमीतुलाऽधिगतये स्वरसङ्गताऽऽसीत्।
तं प्रागसावविनयं परिवादमेत्य लोकेऽधुनाऽपि विहिता परिवादिनीति॥

सेति। सा गन्धर्वराजतनुजानां वीणा, धृतानां प्राप्तानाम्, अखिलानां सर्वासाम्, कलानां नृत्यगीतादिविद्यानाम्, गुणानां सौशील्यसौन्दर्यादीनाञ्च, यः भूमा बाहुल्यम्, तस्य भूमी स्थानम्, आश्रयभूता इत्यर्थः। या भैमी दमयन्ती, तस्याः तुलाऽधिगतये सादृश्यलाभाय, भैमीकण्ठस्वरतुल्यस्वरप्राप्तये इत्यर्थः। यत् स्वरसङ्गता स्वरेण ध्वनिना, सङ्गता संयुता, ध्वनिकारिणीत्यर्थः। अथ च स्वरसं स्वयमेवानुरागम्, गता प्राप्ता, आसीत् अभूत्, असौ वीणा, प्राक् पूर्वम्, तं तादृशम्, दमयन्तीसाम्यलाभेच्छारूपमित्यर्थः। अविनयम् औद्धत्यम्, स्वस्या उत्तमेन सादृश्यलाभाय धृष्टताप्रकाशरूपमित्यर्थः। परिवादं निन्दाम्, एत्य प्राप्य, अधुनाऽपि इदानीमपि, लोके जगति, परिवादिनीति परिवादवती इति अथ च परिवादिनीति आख्या च, विहिता कृता, इव जनैरिति शेषः। 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः॥ ११२॥

*वह वीणा ग्रहण किये गये (नृत्य गीतादि) सम्पूर्ण कलाओं तथा ( सौन्दर्य-सुशीलतादि )* समस्तगुणोंकी अधिकताका आश्रय दमयन्तीकी समानता पानेके लिए ( षड्ज आदि ) स्वरों ( पक्षा०—स्वाच्छन्द्य, या—स्वानुराग ) से जो युक्त हुई; वह वीणा पहले संसारमें उस अविनय ( अत्युत्कृष्ट दमयन्ती-स्वरके साथ समानता करना ) रूप परिवाद ( निन्दा ) को पाकर इस समय ( इतने लम्बे समयके वीत जानेपर ) भी परिवादिनी ( निन्दावाली, पक्षा०—सात तारोंसे बजनेवाली वीणा ) प्रसिद्ध है। [ पहले भी अधिक गुणवतीसे भीत वीणा अपने उक्त प्रगल्भतारूप अविनयका स्मरण करती हुई इस समयतक भी उसी प्रकार भीत-सी मालूम पड़ती है। जैसा महाकवि भारविने कहा है—'अहो दुरन्ता बलवद्विरोधिता ( किरातार्जुनीय १।२३ ) ]॥ ११२॥

नादं निषादमधुरं ततमुज्जगार साऽभ्यासभागवनिभृत्कुलकुञ्जरस्य।
स्तम्बेरमीव कृतसश्रुतिमूर्द्धकम्पा वीणा विचित्रकरचापलमाभजन्ती॥११३॥

नादमिति। सा गन्धर्वराजतनुजाभिः स्वरसङ्गता, वीणा विपञ्ची, अवनिभृत्कुलकुञ्जरस्य राजवंशश्रेष्ठस्य, नलस्य इति शेषः। अन्यत्र—अवनिभृत्कुले भूधरसमूहे, यः कुञ्जरः हस्ती, पार्वत्यहस्तीत्यर्थः, तस्य अभ्यासं समीपम्, भजति आश्रयति या सा तादृशी, तथा कृतः विहितः, सश्रुतीनां द्वाविंशतिश्रुतियुक्तानां षड्जादीनाम्, मूर्द्धनि नादप्रान्ते, कम्पः कम्पितस्वरः यया सा तादृशी, यद्वा—सश्रुतीनां तद्ध्वनिश्रवणकारिणां लोकानाम्, मूर्द्ध्नः शिरसः, कम्पः चालनं यया सा तादृशी, अन्यत्र—कृतः विहितः, सश्रुतेः कर्णद्वयसहितस्य, मूर्द्ध्नः शिरसः, कम्पः चालनं यया सा

१. '—मारभन्ती' इति पाठान्तरम्।

ताद्दशी, तथा विचित्रं नानाविधम्, करस्य पाणेः, चापल्यं चाञ्चल्यम्, कराङ्गुली-चालनेन द्रुतवादनरूपमित्यर्थः। अन्यत्र—विचित्रम् अद्भुतम् मनोहरमित्यर्थः। करस्य शुण्डादण्डस्य, चापलं सञ्चालनचापल्यम्, आभजन्ती सम्यक् प्राप्नुवती सती, स्तम्बेरमी हस्तिनी इव। 'स्तम्बकर्णयो रमिजपोः' इत्यच्, 'हलदन्तात् सप्तम्याः संज्ञायाम्' इत्यलुक्, 'जातेरस्त्रीविषयात्—' इत्यादिना ङीप्। निषादेन तदाख्यस्वरविशेषेण, मधुरं रम्यम्, ततं विस्तृतं तारञ्च, नादं ध्वनिं बृंहणञ्च, उज्जगार उद्गीर्णवती, आविश्चकारेत्यर्थः। एकत्र—वादननैपुण्यात्, अन्यत्र—निषादञ्च गजो ब्रूते' इति पशुशास्त्रादिति भावः॥ ११३॥

राज-समूहमें श्रेष्ठ (नल) के पासमें स्थित, (बाइस[1] प्रकारकी) श्रुतियों (स्वरों के) सहित षड्ज आदिके ऊपर (नादप्रान्तमें) कम्पित-स्वर करनेवाली (अथवा—श्रुतियोंके सहित (वीणाके) ऊपर भागमें (सब अङ्गुलियोंके) कम्पनको करनेवाली (अथवा—बाइस श्रुतियोंके जाननेवालोंके हर्षजन्य मस्तकको कम्पित करनेवाली) विचित्र (आरोहावरोह क्रमवश अनेकविध) हस्ताङ्गुलिकी चञ्चलताको प्राप्त उस वीणाने उस प्रकार 'निषाद' नामक स्वरसे मधुर उच्चस्वरको किया, जिस प्रकार पर्वत-समूहमें हाथीके समीप स्थित, दोनों कानके सहित मस्तकको कम्पित करनेवाली, विचित्र शुण्डादण्डकी चञ्चलताको प्राप्त अर्थात् शुण्डादण्डको विचित्र ढंगसे हिलाती हुई हस्तिनी निषाद स्वरसे मधुर ध्वनिको करती है (हाथीको 'निषाद[2]' स्वरसे बोलनेका स्वभाव होता है)॥ ११३॥

**आकृष्य सारमखिलं किमु वल्लकीनां तस्या मृदुस्वरमसर्जि न कण्ठनालम्?।**
**तेनान्तरं तरलभावमवाप्य वीणा हीणा न कोणमसुचत् किमु वा लयेषु?॥**

आकृष्येति। वल्लकीनां वीणानाम्, अखिलं समग्रम्, सारम् उत्कृष्टांशम्, आकृष्य सङ्गृह्य, मृदुः कोमलः, स्वरः ध्वनिः यस्य तं ताद्दशम्, तस्याः दमयन्त्याः, कण्ठनालं गलनालीम्, न असर्जि किमु? न सृष्टं किम्? ब्रह्मणा इति शेषः। अपि तु ताद्दशमेवासर्जि इत्यर्थः। कथमन्यथा वीणारवादपि दमयन्तीकण्ठरवस्य माधुर्यातिशय इति भावः। तेन कारणेन, आन्तरम् अभ्यन्तरस्थितम्, तरलभावं ध्वनि-

१. षड्जादीनां स्वराणामतिसूक्ष्मांशाः श्रुतयो भवन्ति। तत्र षड्जे ४, ऋषभे ३, गान्धारे २, मध्यमे ४, पञ्चमे ४, धैवते ३ तथा निषादे २ श्रुतयो भवन्ति। एवं सप्तसु स्वरेषु सङ्कलनया (४+३+२+४+४+३+२=२२) द्वाविंशतिः श्रुतयो भवन्तीति बोध्यम्।

२. तदुक्तं नारदेन—'षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम्।
अजाविकौ च गान्धारं क्रौञ्चो वदति मध्यमम्॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्।
अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः॥' इति।

चाञ्चल्यम् , सर्वसाराकर्षणेन शून्याभ्यन्तरत्वादिति भावः । अन्यत्र—आन्तरं तरलभावं मानसचाञ्चल्यम् , अवाप्य प्राप्य, वीणा विपञ्ची, ह्रीणा लज्जिता सती, लयेषु साम्येषु, लयकाले इत्यर्थः । 'लयः साम्यम्' इत्यमरः । अन्यत्र—आलयेषु गृहेषु, कोणं वीणावादनदण्डं गृहैकदेशं च । 'कोणो वाद्यप्रभेदे स्यात् कोणोऽस्त्रौ लगुडेऽपि च । वीणादिवादने चा स्यादेकदेशे गृहस्य च ॥' इति विश्वः । न अमुचत् किमु वा ? न अत्यजत् वा किम् ? अन्योऽपि अपहृतसारो जनः अन्तश्चञ्चलः ह्रीणश्च सन् गृहस्य कोणमाश्रित्य यथा तिष्ठति तथा इति भावः ॥ ११४ ॥

( ब्रह्माने ) वीणाओंके समस्त सार-भागको लेकर उस ( दमयन्ती ) के कण्ठनालको नहीं रचा है क्या ? अर्थात् सब वीणाओंके सार भागसे ही दमयन्तीके कण्ठनालको ब्रह्माने रचा है ( अन्यथा वीणासे भी अधिक मधुर स्वर इस दमयन्तीका कैसे होता ? ), इसी कारण ( भीतर शून्य होनेसे ) भीतरी तरलता ( मन्दशब्दत्व, पक्षा०—मानसिक चञ्चलता ) को छोड़कर लज्जित हुई वीणा लयों ( स्वरविश्रान्तिरूप मूर्च्छनाओं, पक्षा०—आलयों अर्थात् घरों ) में कोण ( धनुषाकार वीणावादन दण्ड, पक्षा०—घरका कोना ) को नहीं छोड़ती है क्या ? । [ लोकमें भी कोई व्यक्ति सम्पत्तिके अपहृत होनेपर चञ्चलताको छोड़कर लज्जित हो घरके कोनेमें बैठा रहता है । वीणाकाष्ठके भीतरी भागको जितना खाली किया जाता है उतना ही अधिक सुन्दर स्वर उस वीणासे निकलता है अतः उत्तम कोटिवाली उस वीणाको भीतरमें अत्यन्त खाली होनेसे तथा धनुषाकार टेढ़े काष्ठ ( धनुही ) से ही बजनेसे श्लेषद्वारा यहां उक्त उत्प्रेक्षा की गयी है ] ॥ ११४ ॥

तद्दम्पतिश्रुतिमधून्यथ चाटुगाथाः वीणास्तथा जगुरतिस्फुटवर्णबन्धम् ।
इत्थं यथा वसुमतीरतिगृह्यकस्ताः कीरः किरन् मुदमुदीरयति स्म विश्वाः ॥

तदिति । अथ अनन्तरम् , पूर्वोक्तरूपकलध्वन्युद्गारानन्तरमित्यर्थः, वीणाः विपञ्चयः, कर्त्र्यः । तयोः दम्पत्योः जायापत्योः दमयन्तीनलयोः, श्रुतौ श्रोत्रे, मधूनि क्षौद्ररूपाः, श्रुतिसुखकरा इत्यर्थः । चाटुगाथाः प्रियगीतानि, अतिस्फुटानां सुस्पष्टानाम् , वर्णानामक्षराणाम् , बन्धः विन्यासः यस्मिन् तत् यथा तथा, तथा तादृशप्रकारेण, जगुः गीतवत्यः, यथा येन प्रकारेण, वसुमतीरतेः भूलोकरतिदेवीस्वरूपायाः दमयन्त्याः, गृह्यकः पञ्जरे स्थापितः । 'पक्षास्वैरि—' इत्यादिना अस्वैरी इत्यर्थे कप् । 'गृहासक्ताः पक्षिमृगाश्छेकाः स्युर्गृह्यकाश्च ते' इत्यमरः । कीरः शुकः, मुदं प्रीतिम् , तत्रत्यजनानामिति भावः । किरन् उत्पादयन् इत्यर्थः । इत्थं वक्ष्यमाणेन प्रकारेण, विश्वाः समस्ताः, ताः चाटुगाथाः, वर्णनश्लोकानित्यर्थः । उदीरयति स्म उच्चारयति स्म ॥ ११५ ॥

इसके बाद वीणाओंने उन दम्पति ( नल-दमयन्ती ) के कानोंके लिए ( सुखकारक

---

२. 'चारुगाथा' इति पाठान्तरम् ।

होनेसे ) मधुररूप प्रियस्तुतिपरक गाथाओं ( श्लोकों ) को उस प्रकार अत्यन्त स्पष्ट अक्षर-रचनाके साथ गाया कि पृथ्वीकी रति ( रूपिणी, दमयन्ती ) का पाला गया तोता सुननेवालोंको हर्षित करता हुआ उन सम्पूर्ण गाथाओंको इस प्रकार ( २१।११५—१२६ ) कहने लगा । [ इससे वीणा बजानेवाली गन्धर्वराज कन्याओंकी वीणा बजानेमें नैपुण्य तथा तोतेकी अतिशय तीव्रबुद्धि होना सूचित होता है, क्योंकि जिस वीणाके स्वरको सुनकर तोता भी अक्षरशः उच्चारण करता है, उसके स्पष्टाक्षर होनेमें सन्देह ही क्या हो सकता है ] ॥ ११५ ॥

**अस्माकमुक्तिभिरवैष्यथ एव बुद्धेर्गाधं युवामतिमती ! स्तुमहे तथाऽपि ।**
**ज्ञानं हि वागवसरावचनाद्भवद्भ्यामेतावदप्यनवधारितमेव न स्यात् ॥११६॥**

**अस्माकमिति । अति अत्यधिका, मतिः बुद्धिः ययोः तयोः सम्बोधनम् अतिमती ! हे महाबुद्धिसम्पन्नौ दमयन्तीनलौ ! अत एव अवैष्यथ इति भावः । युवां भवन्तौ, अस्माकं ममेत्यर्थः । उक्तिभिः वचनैरिव, मत्कृताभिः भवतोः स्तुतिगाथाभिरेवेत्यर्थः । बुद्धः ज्ञानस्य, अस्माकमिति शेषः । गाधम् उत्तानत्वम् , अगभीरत्वमित्यर्थः । स्थूलबुद्धितामिति यावत् । अवैष्यथः ज्ञास्यथः, तथाऽपि स्तुमहे 'स्तवं कुर्मः, वयं युवामिति शेषः । हि यस्मात् भवद्भ्यां युवाभ्याम् , वागवसरे वाङ्यप्रयोगोचितावकाशे, भवदीयगुणोत्कर्षस्य समुचितवर्णनावसरे सत्यपीत्यर्थः । अवचनात् अकथनात् तथावर्णनाऽकरणादित्यर्थः । एतावदपि इयदल्पमपि, ज्ञानम् अस्मदीयबुद्धिम् , अनवधारितमेव अज्ञातमेव, न स्यात् न भवेत् , अपि तु अवधारितमेव स्यादित्यर्थः । भवतोर्गुणौत्कर्ष्यमेव बुद्धिहीनानप्यस्मान् स्तोतुमुत्सहते, अत उत्तानबुद्धयोऽपि वयं भवन्तौ स्तुमहे, ततश्च अनयैव स्तुत्या अस्माकं ज्ञानं कियदिति ज्ञातुं शक्येत भवद्भ्यामिति भावः ॥ ११६ ॥**

हे विशिष्ट बुद्धिवाले ( दमयन्ती तथा नल ) ! तुम दोनों हमलोगोंकी उक्तियों ( तुमलोगोंकी की गयी स्तुति-रचनाओं ) से ( हमलोगोंकी ) बुद्धिके छिछलापनको जान ही जाओगे, तथापि ( हमलोग तुम दोनोंकी ) स्तुति करती हैं, क्योंकि—बोलने ( आप दोनोंकी स्तुति करने ) के अवसरपर भी ( हमलोगोंके ) नहीं बोलनेसे '( इनका ) इतना ही ज्ञान है' यह आप दोनोंसे अज्ञात ही रहेगा ( वैसा न हो, अत एव हमलोग आप दोनोंकी स्तुति कर रही हैं, क्योंकि वर्णनीय विषयके वर्णन करनेपर ही वर्णनकर्ताका ज्ञान थोड़ा है या अधिक ? यह निश्चित होता है । अथवा—आप दोनोंका गुणाधिक्य ही थोड़े ज्ञानवाली भी हमलोगोंको स्तुति करनेके लिए उत्साहित कर रहा है, अत एव हमलोग स्तुति कर रही हैं, इससे हमलोगोंका ज्ञान कितना है ? यह आप दोनों समझ जायेंगे ) । [ इस प्रकार वीणा

---

**१. इदमेकवचनं 'गन्धर्वराजकन्यानां वयस्यानां वा बहुत्वस्य विस्मरणमूलकम्' अग्रेऽपि स्वयं बहुत्वस्यैव प्रतिपादनादिति बोध्यम् ।**

बनाकर स्तुति करती हुई गन्धर्वराजकन्याओं या दमयन्तीकी सखियोंने अपने औद्धत्यको दूर किया है ] ॥ ११६ ॥

**भूभृद्भवाऽङ्कभुवि राजशिखामणेः सा त्वञ्चास्य भोगसुभगस्य समः क्रमोऽयम्।**
**यन्नाकपालकलनाकलितस्य भर्त्तुरत्रापि जन्मनि सती भवती स भेदः॥११७॥**

**भूभृदिति। हे दमयन्ति! भूभृतः हिमालयभूधरात्, भीमनृपतेश्च। 'भूभृद् भूमिधरे नृपे' इत्यमरः। भवति जायते या सा तादृशी, हिमालयाङ्गजा राजतनुजा च, सा पार्वती, त्वं भवती च, भोगैः भूषणीकृतसर्पशरीरैः स्रक्चन्दनादिसम्भोगैश्च। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। सुभगस्य सुन्दरस्य, तथा राजा चन्द्रः, शिखामणिः शिरोरत्नं यस्य तस्य इन्दुमौलेः, राज्ञां नृपाणाम्, शिखामणेः चूडारत्नस्य च, नृपश्रेष्ठस्येत्यर्थः। 'राजा मृगाङ्के क्षत्रिये नृपे' इत्यमरः। अस्य शिवस्य नलस्य च, अङ्कभुवि क्रोडदेशे, वर्त्तते वर्त्तसे च इति शेषः। अयम् एषः, उक्तरूप इत्यर्थः। क्रमः परीपाटी, सादृश्यमिति यावत्। समः तुल्यः, पार्वत्या सह ते इति शेषः। परन्तु, भवती त्वम्, अत्रापि अस्मिन्नपि जन्मनि, न केवलं पूर्वजन्मनि इति भावः। नाकस्य स्वर्गस्य, पालः पालकः इन्द्रः, तस्य कलनया सादृश्येन, अंशतया वा, कलितस्य विदितस्य, वासवतुल्यस्येत्यर्थः। भर्त्तुः पत्युः, नलस्य सम्बन्धिनी सती इत्यर्थः। यत् सती पतिव्रतैव, वर्त्तते इति शेषः। पार्वती तु अत्र जन्मनि कपालस्य ब्रह्मकर्परस्य, कलनया धारणया, कलितः विदितः, स न भवतीति अकपालकलनाकलितः, तादृगपि न भवतीति नाकपालकलनाकलितः तस्य गृहीतब्रह्मकपालत्वेन विख्यातस्य, भर्त्तुः पत्युः शिवस्य, सम्बन्धिनी सती, यत्, असती वर्त्तते इति शेषः। सः उक्तरूप एव, भेदः अन्तरम्, पार्वत्याः तव च इति शेषः। तथा च दुर्गा पूर्वजन्मनि दक्षकन्यापत्ये एव सतीनाम्ना विदिता आसीत्, हिमालयदुहितृत्वेऽधुना तु पार्वतीनाम्ना विदिता सती असती सतीति नामविरहिता, भवती तु अस्मिन्नपि जन्मनि पातिव्रत्येन सतीति प्रसिद्धा, अयमेव तव पार्वत्याश्च भेदः इति भावः॥ ११७॥**

( हे दमयन्ति! ) वह पर्वतकन्या ( पार्वती ) सर्पशरीर ( को शरीरमें भूषणरूपसे धारण करने ) से सुन्दर चन्द्रचूड़ (भगवान् शङ्कर) के अङ्कमें है तथा राजकुमारी तुम (चन्दनादिलेपरूप ) भोगोंसे सुन्दर राजश्रेष्ठ ( नल ) के अङ्कमें हो, यह क्रम ( पार्वती तथा तुम्हारा क्रमशः शिव तथा नलके साथ सम्बन्धपरम्परा अथच—शब्दश्लेष ) समान है; ( किन्तु पार्वतीके साथ इस प्रकार समानता होनेपर भी असमानता इस कारण है कि—) तुम इस जन्ममें भी ( 'अपि' शब्दसे पूर्व जन्ममें भी ) स्वर्गाधीश (इन्द्र) के अंशसे युक्त पति (नल) की सती ( पतिव्रता ) हो और पार्वती ( यद्यपि पूर्व जन्ममें दक्षप्रजापतिकी कन्या होकर सती ( 'सती' नामवाली ) थीं, परन्तु इस जन्ममें ) अ-कपाल धारण करनेसे भिन्न अर्थात् कपालयुक्त ( भिक्षार्थ ब्रह्मकपालको धारण किये हुए ) पति ( शङ्करजी ) की सती ( 'सती'

नामवाली ) नहीं है,( किन्तु 'पार्वती' नामवाली हैं, अत एव तुम्हारी पार्वतीसे भी अधिक महिमा है ) । [ यहांपर नामकी अपेक्षा पार्वतीको इस जन्ममें 'असती' कहनेसे उनकी निन्दा नहीं समझनी चाहिये ] ॥ ११७ ॥

एषा रतिः स्फुरति चेतसि कस्य यस्याः सूते रतिं द्युतिरथ त्वयि वाऽऽतनोति ?।
त्रैयक्षवीक्षणखिलीकृतनिर्जरत्वसिद्धायुरध्वमकरध्वजसंशयं कः ? ॥ ११८ ॥

एषेति । हे नल ! एषा दमयन्ती, कस्य जनस्य, चेतसि मनसि, रतिः मदनवधूः, इति स्फुरति ? प्रकाशते ? अपि तु न कस्यापि इत्यर्थः । कुत इत्याह—यस्याः दमयन्त्याः, द्युतिः अङ्गकान्तिः, एवेति शेषः । रतिम् अनुरागं मदनवधूञ्च इत्यर्थः । 'रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः' इति मेदिनी । सूते जनयति, यस्याः अङ्गकान्तिः रतिं जनयति सा कथमपि रतिर्भवितुं नार्हति इति भावः । अथ प्रश्नार्थकमव्ययम्, कः वा, जनः इति शेषः । त्वयि भवति नले विषये, त्रैयक्षेण शिवसम्बन्धिना । 'न य्वाभ्याम्—' इत्यैजागमः । वीक्षणेन चक्षुषा, तृतीयनयनेनेत्यर्थः । खिलीकृतः प्रतिवद्धीकृतः, विनाशित इति यावत् । निर्जरत्वेन देवत्वेन, सिद्धस्य प्रसिद्धस्य, आयुषः जीवनकालस्य, अमरत्वरूपदीर्घजीवनस्य इत्यर्थः । अध्वा मार्गः यस्य तादृशस्य, मकरध्वजस्य कन्दर्पस्य, संशयं सन्देहम्, मकरध्वज इति भ्रान्तिमित्यर्थः । आतनोति? विस्तारयति ? न कोऽपि इत्यर्थः । देवत्वेन अमरोऽपि कामः कामारिनयनानलेन दग्धः सन् मृतः, मृतस्य च जीवितप्राणिनि सन्देहासम्भवात् भवति अयं कामो न वा इति संशयो न कस्यापि उदेतुमर्हति, तस्य मृतत्वादिति भावः । रतिकामाभ्यामपि भवन्तौ मनोहरश्रीकौ इति तात्पर्यम् ॥ ११८ ॥

यह ( दमयन्ती ) रति ( कामपत्नी ) है, ऐसा किसके मनमें भासित होता है ? अर्थात् किसीके नहीं ( कोई भी व्यक्ति इस दमयन्तीको रति नहीं समझता, क्योंकि ) जिसकी शरीरकान्ति रति ( कामपत्नी, पक्षा०—तुम्हारेमें अनुराग ) को उत्पन्न करती है और तुम्हारे विषयमें भी शिवजीके तृतीयनेत्रसे व्यर्थ ( नष्ट ) किये गये अमरत्व-सिद्ध आयुर्मार्ग ( आयु ) वाले कामदेवका सन्देह कौन करता है ? अर्थात् कोई भी आपको कामदेव नहीं समझता। [ दमयन्तीकी शरीरकान्तिरूपिणी पुत्रीसे उत्पन्न रति दमयन्तीकी धेवती (नातिन) हुई, अत एव दमयन्तीको कोई भी रति नहीं समझता, तथा कामदेवको देव होनेके कारण अमर ( मरणहीन ) होना सिद्ध होनेपर भी शिवजीने तृतीयनेत्रसे कामदेवको नष्ट कर दिया, अतः आपको कोई कामदेव भी नहीं समझता क्योंकि शिवजीके द्वारा उसके नष्ट हो जानेके कारण कामदेवविषयक सन्देहका अवसर ही नहीं रह जाता । आप तथा दमयन्ती— दोनों ही क्रमशः कामदेव तथा रतिसे अधिक सुन्दर हैं ] ॥ ११८ ॥

एतां धरामिव सरिच्छविहारिहारामुल्लासितस्त्वमिदमाननचन्द्रभासा ।
विभ्रद्विभासि पयसामिव राशिरन्तर्वेदिश्रियं जनमनः प्रियमध्यदेशाम् ११९

एतामिति। हे राजन्! त्वं भवान्, सरितः नद्याः इव; छविः शोभा, शुभ्रकान्तिरित्यर्थः। तथा हारी मनोहारी, हारः मुक्तासरः यस्याः तां, पक्षे—सरितः नद्यः एव, छव्या कान्त्या, हारिणो मनोज्ञाः, हारा मौक्तिकसरा यस्यास्ताम्, वेद्याम् अन्तः अन्तर्वेदि वेदिकामध्यम्, तद्वदतिकृशा इत्यर्थः, श्रीः शोभा यस्याः ताम्, यद्वा—अन्तः शरीराभ्यन्तरे, वेदेः कीटविशेषस्य, श्रीरिव श्रीः सौन्दर्यम्, तनुतारूपा इत्यर्थः यस्यास्ताम्, कुमारसम्भवादावपि 'मध्येन सा वेदिविलग्नमध्या' इत्यत्र कीटविशेषार्थे वेदिशब्दः प्रयुक्तः इति दृश्यते। पक्षे—अन्तर्वेदिः तदाख्यगङ्गायमुनासङ्गमस्थानम्, तेन श्रीः शोभा यस्याः तादृशम्; तथा जनमनसां लोकचेतसाम्, प्रियः प्रीतिजनकः, मध्यदेशो नितम्बभागो यस्याः ताम्। पक्षे—जनमनसां लोकचित्तानाम्, प्रियः हर्षजनकः, मध्यदेशः 'हिमवद्विन्ध्ययोरन्तर्यः प्राक्कनखलादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥' इत्युक्तविन्ध्यहिमाचलान्तरभूभागरूपः यस्याः ताम्, एतां दमयन्तीम्, धरामिव पृथिवीमिव, बिभ्रत् अङ्के दधानः, यस्याः दमयन्त्याः धरायाश्च, आननं मुखम्, चन्द्रः शशधर इव, पक्षे—आननसदृशचन्द्रश्च, तस्य भासा प्रभया, उल्लासितः हर्षं प्रापितः उच्छ्वसितश्च सन्, पयसां राशिः समुद्रः इव, विभासि शोभसे। सागरः हि चन्द्रभासा इच्छ्वसितः भवति इति प्रसिद्ध एव॥ ११९॥

(हे राजन्!) नदीकी शोभाको चुरानेवाले (तद्वत् सुन्दर) हारवाली, वेदिमध्यके समान शोभावली अर्थात् पतली कटिवाली तथा लोगोंके मनको प्रिय कटिभागवाली इस (दमयन्ती) को अङ्कमें धारण करते हुए और इस (दमयन्ती) के मुखचन्द्रकी कान्तिसे हर्षित तुम; शोभासे मनोहर नदीरूप हारवाली, गङ्गा-यमुनाके मध्यभागस्थित (अन्तर्वेदि नामकी) भूमिसे शोभित तथा जन-मनके प्रिय मध्यदेश (हिमालय-विन्ध्याचलका मध्यभाग—अर्यावत) वाली पृथ्वीको अङ्क (बीच) में धारण करते हुए तथा चन्दकान्तिसे वर्द्धमान समुद्रके समान शोभते हो॥ ११९॥

दत्ते जयं जनितपत्रनिवेशनेयं साक्षीकृतेन्दुवदना मदनाय तन्वी।
मध्यस्थदुर्बलतमत्वफलं किमेतद् भुक्तिर्यदत्र तव भर्त्सितमत्स्यकेतोः?॥

दत्त इति। हे महाराज! जनितं कृतम्, सखिभिः विचारकेण चेति शेषः। पत्रस्य कस्तूर्यादिकल्पितमकरपत्रवल्ल्याद्याकारतिलकस्य जयसूचकपत्रस्य च, निवेशनं रचनम्, अङ्कनमित्यर्थः, दानमित्यर्थश्च। यस्याः सा तिलकभूषितकपोलादिका विचारकैः विचार्य लिखितजयपत्रा च, तथा अक्षिभ्यां सह वर्त्तमानः साक्षः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्–' इति समासान्तः षच्। असाक्षः साक्षः कृतः साक्षीकृतः सलोचनीकृतः, इन्दुः चन्द्र एव, वदनं मुखं यस्याः सा, इन्दोः सलोचनीकरणाभावे वदने नेत्रस्थितिः कथं युज्यते इति भावः। अन्यत्र—साक्षीकृताः साक्षाद् द्रष्ट्रीकृताः, इन्दुवदनाः चन्द्रमुख्यः सख्यः यस्याः सा, कामजयविषये भैम्याः सख्यः एव साक्षिण्यः वर्त्तन्ते, यतः भैम्यां नलस्य कामवश्यता ताभिरेव साक्षात् दृष्टा इति भावः।

अथवा—साक्षीकृतं साक्षाद् द्रष्टृकृतम्, इन्दुवदनं स्वस्याः चन्द्रसुन्दरमुखं यया सा, नलस्य कामविजितत्वे भैम्याः मुखचन्द्र एव साक्षी इति भावः। इयं पुरतः दृश्यमाना, तन्वी कृशाङ्गी, दमयन्तीति शेषः। अन्यत्र—काचित् सूक्ष्मा विचारप्रणाली च, मदनाय कामाय, जयं विजयम्, दत्ते अर्पयति, मदनेन त्वां विजितं करोतीत्यर्थः। अन्यत्र—स्वविषये नलकामयोः विवादे कामायैव विजयम्, दत्ते अर्पयति, भैमीविषये कामः नलं जितवान् इत्यर्थः। तथाऽपि भर्त्सितः तिरस्कृतः, रूपेण धिक्कृतः इत्यर्थः। अन्यत्र—बलात् सन्तर्जितश्च, मत्स्यकेतुः मीनध्वजः मदनः येन तादृशस्य, तव भवतः, अत्र अस्यां दमयन्त्याम्, पक्षे-भुवि च, यत् भुक्तिः सुरतसम्भोगः, अन्यत्र—प्रतिपक्षात् बलपूर्वकं गृहीत्वा स्वयमुपभोगश्च, तदेतत्, मध्यस्थं कटिदेशस्थम्, यत् दुर्बलतमत्वं कृशतया अत्यन्तहीनबलत्वम्, अत एव सम्भोगक्रियासु सुखकरत्वमिति भावः। तस्य, अन्यत्र—मध्यस्थानां विचारकाणाम्, दुर्बलतमत्वस्य बाधाप्रदाने अक्षमतया चित्तदौर्बल्यस्य, फलं परिणामः, किम् ? दमयन्त्याः मध्यावयवस्य अतिसूक्ष्मत्वेन परमरमणीयत्वमेव अतिसुन्दरस्य तव भोगप्रयोजकम्, अन्यथा पराजितोऽपि भवान् कथमिमां विवादभूमिं भोक्तुं शक्नोति ? इति भावः। अन्यत्र—जयपत्रे साक्षिषु च सत्स्वपि विजयिनः विषये अन्येन बलपूर्वकं विजयिनं तिरस्कृत्य या भुक्तिः तत्र सभ्यानां चित्तदौर्बल्यमेव कारणमिति भावः॥ १२०॥

( हे राजन् )!, सखियोंसे स्तन-कपोलोंपर चन्दनकस्तूर्यादिरचित मकरादि चिह्नोंवाली, सनेत्र किये गये चन्द्ररूप मुखवाली अर्थात् चन्द्रसे अधिक सुन्दर मुखवाली और कृशाङ्गी यह ( दमयन्ती ) कामके लिये विजय देती है अर्थात् 'तुमने नलको जीत लिया है' ऐसा प्रमाणित करती है, परन्तु कामदेवको शरीरकान्तिसे धिक्कृत करनेवाले तुम इसके विषयमें भोग करते हो अर्थात् इस दमयन्तीके साथ रति करते हो यह ( इस दमयन्तीके ) मध्यभाग ( कटिप्रदेश ) के दुर्बल ( कृश, पक्षा०—निर्बल ) होनेका परिणाम है क्या ? अर्थात् दमयन्तीके कटिभागको अत्यन्त कृशताके कारण सुन्दर होनेसे तुम इस दमयन्तीके साथ भोग करते हो क्या ?। ( पक्षा०—जिसने विजयपत्र दे दिया है और चन्द्रमुखियों ( चन्द्रमुखी सखियों ) को साक्षी बनाया है, ऐसी तन्वी दमयन्तीने कामको तुम्हारा विजयी घोषित कर दिया है, किन्तु फिर भी तुम उस ( कामदेव ) को फटकार कर इस ( दमयन्तीशरीर, पक्षा०—विवादस्य भूमि ) का उपभोग कर रहे हो, यह मध्यस्थ ( निर्णायक ) की दुर्बलताका फल है क्या ? ) [ जिस प्रकार दो व्यक्तियोंमें विवाद होनेपर किसीको साक्षी बनाकर निर्णायक व्यक्ति एक पक्षको विजयपत्र दे देता है, तथापि निर्णायक व्यक्तिके दुर्बल होनेका लाभ उठाकर पराजित पक्षवाला व्यक्ति विजयी व्यक्तिको फटकारकर उसके भूमि आदिका उपभोग करने लगता है, उसी प्रकार हे राजन् ! तुम भी भोगविषयमें चन्द्रमुखी सखियोंको साक्षी बनाकर कामदेवको विजयी घोषित करनेपर भी तुम कृशतासे सुन्दरतम इस ( दमयन्ती ) की कटिका कामको शरीर-कान्तिसे भर्त्सितकर भोग रहे हो ]॥

चेतोभवस्य भवती कुचपत्रराजधानीयकेतुमकरा[1] ननु राजधानी।
अस्यां महोदयमहस्पृशि मीनकेतोः के तोरणं तरुणि! न ब्रुवते भ्रुवौ ते?॥

चेत इति। ननु भो दमयन्ति! कुचयोः स्तनयुगयोः, पत्रं तिलकरचनैव, राजधानीयः राजावासीभूतनगरसम्बन्धी, केतुः ध्वजः, पताकास्थानीय इत्यर्थः। मकरः मीनविशेषः यस्याः सा तादृशी, भवती त्वम्, चेतोभवस्य कामस्य, राजधानी राजावासभूता नगरी, नगरीस्वरूपेत्यर्थः। राजधान्यामेव राजभिः निजनिजासाधारणचिह्नयुक्तानां ध्वजानां स्थापनीयत्वात् कामराजस्य मुख्यध्वजः मकरः राजधानीभूतयोः तव कुचयोः चित्रितः राजते इति भावः। तरुणि! हे युवति! के जनाः, मीनकेतोः कामस्य, महोदयः आधिपत्यम्, राज्यप्राप्तिरूपोन्नतिरित्यर्थः। तत्र यः महः उत्सवः, तं स्पृशति स्पर्शं करोतीति तादृश्याम्। 'महोदयः कान्यकुब्जेऽप्याधिपत्यापवर्गयोः' इति विश्वः। 'महस्तूत्सवतेजसोः' इत्यमरः। अस्यां राजधानीस्वरूपायां भवत्याम्, ते तव, भ्रुवौ भ्रयुगलमेव, तोरणं वहिर्द्वारम्, वहिर्द्वारस्थितवक्रकाष्ठस्वरूपमित्यर्थः। न ब्रुवते? न कथयन्ति? अपि तु सर्व एव ब्रुवते इत्यर्थः॥ १२१॥

(हे दमयन्ति!) स्तनद्वयपर (कस्तूर्यादि रचित) पत्ररचनारूप राजधानी-सम्बन्धिनी पताकावाली तुम मानो कामदेवकी राजधानी हो, तथा हे तरुणि! महान् उदयवाले उत्सवोंसे युक्त (स्वरूप) इस राजधानीमें तुम्हारे भ्रूद्वयको कौन लोग तोरण नहीं कहते हैं? अर्थात् सभी कहते हैं। [जिसप्रकार राजा अपने विशिष्ट चिह्नयुक्त पताकावाली राजधानीमें निवास करता है और उसमें (पल्लवादि रचित) नील तोरण रहता है, उसी प्रकार स्तनमें कस्तूरी आदि से बनाये गये मकरपत्ररूपिणी पताकासे युक्त राजधानीरूपिणी तुममें नृपरूप कामदेव निवास करता है और तुम्हारे नीलवर्ण भ्रूद्वय तोरणतुल्य हो रहे हैं। तुममें ही कामदेव सर्वोत्कर्षसे सदा निवास करता है]॥ १२१॥

अस्या भवन्तमनिशं भवतस्तथैनां कामः श्रमं न कथमृच्छतु[2] नाम गच्छन्।
छायैव वामथ गतागतमाचरिष्णोस्तस्याध्वजश्रमहरा मकरध्वजस्य॥१२२॥

अस्या इति। हे महाराज! कामः मीनकेतनः, अस्याः दमयन्त्याः सकाशात्, भवन्तं त्वाम् तथा भवतः त्वत्तः सकाशात्, एनां दमयन्तीम्, अनिशं निरन्तरम्, गच्छन् गतागतं कुर्वन्नित्यर्थः। कथं किमर्थम्, श्रमम् आयासम्, नाम सम्भावनायाम्, न ऋच्छतु? न प्राप्नोतु? अपि तु ऋच्छत्येव इत्यर्थः। निरन्तरं यातायातकरणादिति भावः। अथ किंवा, गतागतं गमनागमनम्, आचरिष्णोः कुर्वतः, तस्य श्रान्तस्य, मकरध्वजस्य कामस्य, वां युवयोः छाया एव कान्तिरेव, सौन्दर्यमिति यावत्, अनातप एव च। 'छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपः' इत्यमरः।

---

१. 'कुचपत्रराजी–' इति पाठान्तरम्। २. 'कथमृच्छति' इति 'प्रकाश'–सम्मतः पाठः।

अध्वजं पथपर्यटनजनितम्, श्रमं क्लान्तिम्, हरति नाशयति या सा तादृशी, भवतीति शेषः। छायाबहुले मार्गे गतागतिं कुर्वाणानां पान्थानां पर्यटनक्लेशाननुभवादिति भावः। दमयन्त्याः कामस्त्वयि तव च दमयन्त्यामेव वर्त्तते, नान्यत्र कुत्रापीति तात्पर्यम् ॥ १२२ ॥

( हे राजन् ! ) इस ( दमयन्ती ) से आपको तथा आपसे इसको जाता ( प्राप्त होता ) हुआ कामदेव ( गमनागमनजन्य ) श्रमको क्यों नहीं पावे ? ( पाठा०—पाता है ? ) अर्थात् तुम दोनोंमेंसे एकके पाससे दूसरेके पास जाता हुआ कामदेव अवश्य थक जाता है। अथवा ( तुम दोनोंमें-से एकके पाससे दूसरेके पास ) गमनागमन करते हुए इस कामदेवके मार्गजन्य श्रमको दूर करनेवाली आप दोनोंकी छाया ( परछाहीं, पक्षा०—शरीरकान्ति ) ही है। [ लोकमें भी छायामें गमनागमन करनेसे थकावट नहीं होती, अतः आप दोनोंकी छाया ही कामदेवके गमनागमनजन्य मार्गश्रमको दूर कर देती है। दमयन्तीमें आपका तथा आपमें दमयन्तीका काम है, ऐसा आपसमें स्नेह अन्यत्र कहीं भी नहीं देखा जाता] ॥१२२॥

**स्वेदप्लवप्रणयिनी तव रोमराजी रत्यै यदाचरति जागरितव्रतानि ।**
**आभासि तेन नरनाथ ! मधूत्थसान्द्रमग्नासमेषुशरकेशरदन्तुराङ्गः ॥१२३॥**

स्वेदेति। नरनाथ ! हे मनुजाधिप ! नल ! स्वेदः घर्मजलम्, तत्र प्लवे स्नाने, प्रणयः प्रीतिः अस्या अस्तीति सा तादृशी, तव भवतः, रोमराजिः रोमसमूहः, रत्यै सुरताय, जागरितानि जागरणाण्येव, उद्गमा एव च, व्रतानि नियमान्, यत् आचरति अनुतिष्ठति, पुष्पवती कामिनी यथा शुद्धस्नाता पतिसन्तोषार्थं जागरितानि आचरति तद्वदिति भावः। तेन व्रताचरणेन हेतुना, मधुनः क्षौद्रस्य, शरात्मककुसुमसारस्य इत्यर्थः। उत्थेन उद्गमेन। 'सुपि स्थः' इत्यत्र योगविभागात् भावे कप्रत्यये ततः समासः। सान्द्राः गाढाः, मिश्रणेन हेतुना घनीभूता इत्यर्थः। तथा मग्नाः भवदङ्गे अन्तःप्रविष्टाश्च, असमेषोः अयुग्मशरस्य कामस्य, शराणां बाणानाम्, कुसुममयानामिति भावः। केशरैः किञ्जल्कैः, दन्तुराणि निम्नोन्नतानि, अङ्गानि अवयवाः यस्य सः तादृशः इव, आभासि प्रतीयसे। भैमीसङ्गात् सात्त्विकभावोदयेन रोमाञ्चितशरीरः स्वेदयुक्तश्चासि इति निष्कर्षः ॥ १२३ ॥

हे नरनाथ ! ( सात्त्विक भावजन्य ) स्वेदजलसे ( या—स्वेदजलमें ) स्नानकरनेवाली तुम्हारी रोमराजि रतिके लिए जो जागरण व्रतोंको करती है अर्थात् तुम्हें जो रोमाञ्च हो जाता है, उससे पुष्परससे पूर्ण सघन मग्न ( शरीरके भीतर घुसे ) हुए कामदेव बाणभूत पुष्पके किञ्जल्क ( पक्षा०—बाणोंके पुच्छस्थ पङ्खरोम ) से दन्तुरित ( उच्चावच ) अङ्गोंवाले तुम शोभते हो। ( पक्षा०—रोमराजीरूपिणी दूती रतिके लिए तीर्थादिमें स्नानकर जो जागरण व्रत करती है, उससे शरीरमें पूर्णतः प्रविष्ट हुए कामबाणोंके पुच्छके पङ्खोंके ऊपर दृश्यमान रोमोंसे युक्त शरीरवालेके समान तुम शोभते हो अथवा—रोमराजीरूपिणी स्त्री

रतिके लिए स्नानकर जो जागरणपूर्वक व्रत करती है, उससे भीतर प्रविष्ट हुए कामवाणोंके वहिर्दृश्यमान पुच्छ-सम्बन्धी रोमोंसे युक्त शरीरवाला पति होता है अर्थात् व्रताचरणके प्रभावसे वह पुरुष कामवाणविद्ध हो जाता है)। [ रतिके पूर्व तुम स्वेद तथा रोमाञ्च युक्त होकर आपुङ्ख मग्न कामवाणोंसे पीडित हो जाते हो ]॥ १२३ ॥

**प्राप्ता तवापि नृप ! जीवितदेवतेयं घर्माम्बुशीकरकरम्बनमम्बुजाक्षी ।**
**ते ते यथा रतिपतेः कुसुमानि बाणाः स्वेदस्तथैव किमु तस्य शरक्षतास्रम् ॥**

**प्राप्तेति । नृप ! हे राजन् ! नल ! तव भवतः, जीवितस्य जीवनस्य, देवता अधिष्ठात्री, जीवनेश्वरीत्यर्थः । अम्बुजाक्षी कमलनयना, इयम् दमयन्ती अपि, घर्माम्बुनः स्वेदजलस्य, शीकरैः कणैः, करम्बनं मिश्रणम्, प्राप्ता अधिगता, सात्त्विकभावोदयात् स्वेदप्लुताङ्गी जाता इत्यर्थः । रतिपतेः कामस्य, ते ते प्रसिद्धाः, बाणाः शोषणसम्मोहनादयः शराः, यथा यद्वत्, कुसुमानि कमलादीनि पुष्पाणि, अभवन्निति शेषः । तथैव तद्वदेव, स्वेदः घर्मोदकम्, तस्य कामस्य, शराणां बाणानाम्, क्षतस्य व्रणस्य, अस्रं रक्तम्, किमु ? तथा हि सुकुमाराणि कुसुमान्यपि यदि कामस्य शराः भवितुमर्हन्ति, तदा स्वेदोदकमलोहितमपि तस्य शराघातनिस्रुतं लोहितं भवितुमर्हत्येव, दैवप्रभावस्य उभयत्रापि तुल्यत्वादिति भावः ॥ १२४ ॥**

हे राजन् ! तुम्हारे जीवनकी देवता कमललोचना यह ( दमयन्ती ) भी घर्मजल ( स्वेद ) के कणोंसे युक्त हो जाती है ( इसे भी सात्त्विक भावजन्य स्वेद हो जाता है, अथ च— देवताको स्वेदोदय नहीं होता, किन्तु आपकी जीवनदेवता ( इस दमयन्ती ) को भी स्वेद हो जाता है, यह आश्चर्य है )। तथा कामदेवके वे-वे ( अतिप्रसिद्ध ) वाण जिस प्रकार पुष्प हैं, उसी प्रकार उस कामदेवका वाणक्षतजन्य रक्त भी वैसे ( श्वेतवर्ण ) हैं क्या ? [ देवताको स्वेद नहीं होनेपर भी जिस प्रकार तुम्हारे जीवित-देवता दमयन्तीको स्वेद होता है, पुष्प-जैसे कोमलतम पदार्थको किसी भी वीरका वाण होना उचित नहीं होनेपर भी जिस प्रकार कामदेवके वाण पुष्प ही हैं; उसीप्रकार वाणक्षतसे उत्पन्न रक्तको श्वेत होना उचित नहीं होनेपर भी कामदेवके वाणक्षतजन्य ( दमयन्ती के शरीरसे वहता हुआ स्वेदरूप ) रक्त यदि श्वेत वर्ण है तो कौन-सा आश्चर्य है ? क्योंकि देवोंका कार्य ही विलक्षण होता है। दमयन्ती भी कामवाण-पीडित हो जाती है, जिससे उत्पन्न सात्त्विक भावजन्य स्वेद वाण-क्षतजन्य श्वेतवर्ण रक्तके समान ज्ञात होता है। अथवा—दमयन्तीके अरुणवर्ण कर चरण, पाणि, मुख आदिके सम्बन्धसे स्वेद भी अरुणवर्ण होकर काम-वाण-क्षतजन्य रक्तके समान ज्ञात होता है ]॥ १२४ ॥

**रागं प्रतीत्य युवयोस्तमिमं प्रतीची भानुश्च किं द्वयमजायत रक्तमेतत् ? ।**
**तद्वीक्ष्य वां किमिह केलिसरित्सरोजैः कामेषुतोचितमुखत्वमधीयमानम् ? ॥**

**रागमिति । हे राजन् ! प्रतीची पश्चिमा दिक्, भानुः सूर्यश्च, एतत् द्वयम् उभ-**

यम् , युवयोः भवतोः, तं पूर्वोक्तस्वेदादिसात्त्विकभावसूचितम् , इमं परिदृश्यमानम् रागम् अनुरागम् , प्रतीत्य ज्ञात्वा, प्रत्यक्षं दृष्ट्वेत्यर्थः। रक्तं रक्तवर्णम् अनुरक्तञ्च, 'रक्तं स्यात् कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि । अनुरक्ते च नील्यादिरञ्जिते लोहितेऽन्यवत् ॥' इति विश्वः। अजायत किम् ? अभवत् किम् ? कयोश्चित् स्त्रीपुंसयोः सम्भोगानुरागदर्शनेन अपरयोरपि स्त्रीपुंसयोः तथाविधानुरागोत्पत्तेः प्रायोदर्शनादिति भावः। दिवाविहारस्य शास्त्रनिषिद्धत्वात् अथच भैमीनलयोरत्युत्कटसम्भोगाभिलाषावलोकनात् कृपया अस्तगमनद्वारा रात्र्यानयनाभिप्रायेण सूर्यः किं रक्तवर्णोऽजायत इति तात्पर्यम् । तथा इह अस्मिन् समये, केलिसरितः तवैव क्रीडानद्याः, सरोजैः कमलैः, तत् प्रतीचीभानुद्वयम् , वां युवाञ्च, वीक्ष्य दृष्ट्वा, अस्तगमनाय सुरतसम्भोगाय च अभिलाषिणमवलोक्येत्यर्थः। कामेषुतायाः कन्दर्पवाणत्वस्य, उचितं योग्यम्, मुखम् अग्रभागः, मुकुलितत्वेन सूक्ष्ममिति भावः। येषां तेषां भावः तत्त्वम् , अधीयमानम् अभ्यस्यमानम् , किम् ? वर्तते इति शेषः। मुखस्य सूक्ष्मताया अभावे वाणत्वासङ्गतेरिति भावः। सायंकालोपस्थितेः प्रतीचीभानू अरुणवर्णौ जातौ, कमलञ्च मुकुलितप्रायम् , अतः सत्वरं रात्रिरागमिष्यति, अलं वाम् उत्कण्ठयेति निष्कर्षः ॥ १२५ ॥

तुम दोनोंके इस राग ( रमणेच्छा ) को देखकर सूर्य तथा पश्चिम दिशा रक्त ( अरुण वर्ण, पक्षा०—परस्परमें अनुरागयुक्त ) हो गये हैं क्या ? तथा इस समय तुम दोनोंकी क्रीडा-नदीके कमलसे वे ( सूर्य तथा पश्चिम दिशा ) तुम दोनोंको देखकर कामवाणत्वके योग्य मुख ( सूक्ष्म—तीक्ष्णाग्रभाग ) होनेका अभ्यास करते हैं क्या ? । [ नल तथा दमयन्ती रमण करना चाहते हैं, किन्तु दिनमें रमणका निषेध होनेसे ये रमण नहीं कर सकते, अतः सायङ्काल होना आवश्यक है, यह विचारकर सूर्य तथा पश्चिम दिशा लाल हो गये हैं, क्योंकि किसी दम्पतिकी इच्छाको पूरा करना दूसरे दम्पतिका कर्तव्य होता है। अथच—दम्पति तुम दोनोंको रमणेच्छुक देखकर सूर्य एवं पश्चिम दिशारूपी दम्पति भी रमण करनेके इच्छुक हो गये हैं क्या ? क्योंकि किन्हीं स्त्री-पुरुषको रमण करते हुए देखकर दूसरे स्त्री-पुरुषको भी कामोत्पत्ति हो जाती है। तथा—इस समय सायंकालके समीप होनेसे कमल मुकुलित हो रहे हैं, वह ऐसा ज्ञात होता है कि—कामवाणके पुष्पवाण होनेसे मुकुलित होकर तीक्ष्णाग्र कामवाण होनेका अभ्यास करते हैं। कमलाग्रभागका मुकुलित होकर तीक्ष्णाग्र हो जाना स्वाभाविक है। अस्तोन्मुख होकर सूर्य तथा पश्चिमदिशा लाल होने लगे, कमल मुकुलित होने लगे, अतः रमणेच्छुक तुम दोनों सायङ्कालके बाद रात्रिको आसन्न जानकर धैर्य धारण करो ] ॥ १२५ ॥

अन्योऽन्यरागवशयोर्युवयोर्विलासस्वच्छन्दताच्छिदपयातु तदालिवर्गः ।
अत्याजयन् सिचयमाजिमकारयन् वा दन्तैर्नखैश्च मदनो मदनः कथं स्यात्

अन्योऽन्येति। हे दमयन्तीनलौ! तत् तस्मात्, युवयोरत्यन्तसुरताभिलाषाद्धेतोरित्यर्थः, अन्योऽन्यस्मिन् परस्परं प्रति, रागस्य अनुरागस्य, रमणाभिलाषस्येत्यर्थः, वशयोः अधीनयोः, युवयोः भवतोः, विलासस्य सुरतक्रीडायाः, स्वच्छन्दतां स्वाभिप्रायानुवर्त्तिताम्, छिनत्ति व्याहन्ति यः सः तादृशः, सुरतव्यापारस्य रहः सम्पाद्यत्वादिति भावः। आलिवर्गः सखीसमूहः, दमयन्त्या इति शेषः। अपयातु निर्गच्छतु, गृहादिति शेषः। तथा हि–मदनः कामः, सिचयं वस्त्रम्, दम्पत्योरिति भावः। अत्याजयन् अमोचयन्, दम्पतीभ्यामेव परस्परं वस्त्रोन्मोचनमकारयन् इत्यर्थः। वा अथवा, दन्तैः दशनैः, नखैश्च कररुहैश्च, आजिं युद्धम्, परस्पराघातरूपमित्यर्थः। अकारयन् अनाचरयन्, दम्पतीभ्यामेव परस्परमिति भावः। कथं केन प्रकारेण, मदनः मदयिता, सुरतव्यापारे मत्ततोत्पादक इत्यर्थः, स्यात्? भवेत्? अपि तु न कथञ्चिदेवेत्यर्थः॥ १२६॥

इस कारणसे परस्परमें अनुरागके वशीभूत (सम्भोगेच्छुक) तुम दोनोंके विलास (सम्भोगकेलि) का बाधक सखी-समूह (घरसे बाहर निकल) जावे। (क्योंकि तुम दोनोंके) वस्त्रोंको नहीं हटवाता हुआ तथा दाँतों एवं नखोंसे (सम्भोगकालिक मल्ल—) युद्ध नहीं करवाता हुआ कामदेव मदोत्पादक (हर्षकर्ता) कैसे होगा?। [सखियोंके रहनेपर तुमलोगोंका वस्त्र त्याग तथा दन्त-नखक्षतादि करते हुए परस्पराघातादि करना नहीं हो सकेगा, अत एव दमयन्तीकी सखियोंका अब यहाँसे हट जाना उचित है]॥१२६॥

इति पठति शुके मृषा ययुस्ता बहुनृपकृत्यमवेत्य सान्धिवेलम्।
कुपितनिजसखीदृशाऽर्द्धदृष्टाः कमलतयेव तदा निकोचवत्यः॥ १२७॥

इतीति। इति पूर्वोक्तप्रकारेण, शुके कीरपक्षिणि, पठति वाचयति सति, गन्धर्वराजतनयानां वीणागानानुवादक्रमेण स्फुटम् उच्चारयति सतीत्यर्थः। तदा तस्मिन् सन्ध्यासमये, कमलतयेव पद्मत्वेनेव हेतुना, निजनिजवदनानामिति भावः। निकोचः सङ्कोचः विद्यते यासां ताः निकोचवत्यः सङ्कोचशालिन्यः, एकत्र—सन्ध्याकालागमनात्, अन्यत्र—सुरतप्रसङ्गोत्थानेन लज्जोदयादिति भावः, ताः आल्यः गन्धर्वराजतनयाश्च, मृषा मिथ्या, कुपितायाः क्रुद्धायाः, सखीनिर्गमनेन क्रोधभावं प्रकाशमानाया इत्यर्थः। निजसख्याः दमयन्त्याः सम्बन्धिन्या, दृशा चक्षुषा, अर्द्धदृष्टाः किञ्चिदीक्षमाणाः, क्रोधव्याजेन ईषदवलोकिताः सत्य इत्यर्थः। सान्धिवेलं सन्धिवेलायां सन्ध्यासमये भवम्। 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'। बहु अनेकम्, नृपस्य नलस्य, कृत्यं कार्यम्, सान्ध्योपासनादिकम् अनुष्ठेयमित्यर्थः। अवेत्य ज्ञात्वा, ययुः प्रतस्थिरे, तस्मात् गृहादिति शेषः॥ १२७॥

इस प्रकार (२१।११६-१२६) तोतेके पढ़ते (गन्धर्वराजकन्याओंके वीणाशब्दको उच्चारण करते) रहनेपर उस समय (सन्ध्याकाल, पक्षा०—रतिकाल) में मानो कमल-

भाव होनेसे ( मुखको ) सङ्कुचित करती हुई अवास्तविक क्रोधित अपनी सखी ( दमयन्ती ) के द्वारा अर्द्धदृष्टिसे देखी गयी वे ( सखियाँ तथा गन्धर्वराजकन्याएं ) राजाके सन्ध्या समयके बहुतसे ( सन्ध्यावन्दनादि ) कार्योंको जानकर वहांसे चली गयीं। [ सन्ध्याकालमें कमल सङ्कुचित होता है, यहाँसे बाहर जानेके लिए शुकके कहनेपर मुझे बाहर जानेके लिए कहा जा रहा है अत एव उनको अपना मुख सङ्कुचित करनेपर कमलत्वके कारण सायङ्कालमें उनके मुखको सङ्कुचित होनेकी उत्प्रेक्षा की गयी है। अथवा—यह शुक हम लोगोंको बाहर जानेको कह रहा है, इसी वास्ते हमलोग यहाँसे जा रही हैं, इस प्रकार मिथ्या ( व्याजपूर्वक ) वे सखियाँ बाहर चली गयीं, किन्तु वास्तविकमें तो 'सम्भोगेच्छुक भी राजा नल सायङ्कालके सन्ध्यावन्दनादि कार्योंको छोड़कर रमण नहीं करेंगे और न दमयन्ती ही सम्भोग करेगी' इस प्रकार नलके बहुत कार्यको ध्यानमें रखकर ही वे वहाँसे बाहर गयीं, उस समय दमयन्ती भी कुछ क्रुद्ध होकर अर्द्धदृष्टिसे उन्हें देखा। कुछ व्यक्तिका अर्द्धदृष्टिसे देखना स्वभाव होता है ]॥ १२७ ॥

**अकृत परभृतः स्तुहि स्तुहीति श्रुतवचनस्रगनूक्तिचुञ्चुचञ्चुम् ।**
**पठितनलनुतिं प्रतीव कीरं तमिव नृपं प्रति जातनेत्ररागः ॥ १२८ ॥**

अकृतेति। परभृतः कोकिलः, सख्या आनीत इति भावः। नृपं राजानम्, नलम्, प्रति उद्दिश्य, जातः उत्पन्नः, नेत्रयोः नयनयोः, रागः रक्तवर्णता अनुरागश्च यस्य सः तादृशः सन् इव, तस्य परमसुन्दराकारत्वादिति भावः। 'रागोऽनुरागे मात्सर्ये क्लेशादौ लोहितादिषु' इति विश्वः। अत एव नृपस्तुतौ कीरस्य प्रवर्त्तनमिति बोद्धव्यम्। श्रुतानाम् आकर्णितानाम्, वचनस्रजां वाक्यमालिकानाम्, अन्यमुखात् श्रुतवाक्यपरम्पराणामित्यर्थः। अनूक्त्या अनुवचनेन, वित्ते विख्याते इति तादृशौ 'तेन वित्तश्चुञ्चुप्चणपौ'। चञ्चू त्रोटिद्वयं यस्य तं तादृशम्, एतेन नलस्तुतौ कीरस्य सामर्थ्यमस्तीति सूचितम्। तथा पठिता अधीता, उच्चरिता इत्यर्थः। नलस्य नैषधस्य, नुतिः स्तुतिः येन तं तादृशम्, कीरं शुकम्, प्रति लक्ष्यीकृत्य इव, स्तुहि स्तुहि स्तवं कुरु स्तवं कुरु, इति एवं ध्वनिम्, अकृत कृतवान्, पिको हि राजनि अनुरागाधिक्यात् नलस्तुतिविषये विरतं शुकं स्तुहि स्तुहि इति सहजरवम् उच्चार्य प्रोत्साहितवानिवेति भावः॥ १२८ ॥

राजा ( नल ) के प्रति स्नेहयुक्त-सा ( अथच-स्वभावतः रक्तवर्ण नेत्रवाला (२१।१०९) में वर्णित सखीके द्वारा लाया गया ) पिकने सुने गये ( गन्धर्व-राजकन्याओंके वीणास्वर-गत ) वचनको अनुवाद करने ( दुहराने ) से युक्त चोंचवाले ( उक्त वचनको दुहराकर कहते हुए तथा नलकी स्तुतिको पढ़े हुए ) उस तोतेसे 'स्तुहि, स्तुहि' ( इस नल राजाकी और भी स्तुति करो, स्तुति करो मानो ) ऐसा कहा। [ पाठा०—गन्धर्वराज कन्याओंके वीणा-स्वरूप वचनको अनुवाद करने ( पुनः कहने ) वाले पिकको मानकर उसे भी तोतेके

कहनेके बाद उक्त वचनको पुनः कहनेवाला जानना चाहिये। पिकके नेत्रको स्वभावतः रक्तवर्ण होनेपर भी यहां राजाके प्रति अनुराग होनेकी श्लेषद्वारा उत्प्रेक्षा की गयी है ]॥

तुङ्गप्रासादवासादथ भृशकृशतामायतीं केलिकुल्या-
मद्राक्षीदर्कबिम्बप्रतिकृतिमणिना भीमजा राजमानाम् ।
वक्रं वक्रं व्रजन्तीं फणियुवतिरिति त्रस्नुभिर्व्यक्तमुक्ता-
न्योऽन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामार्त्तिरुत्या ॥ १२९ ॥

तुङ्गेति । अथ कोकिलवचनान्तरम्, भीमजा दमयन्ती, तुङ्गे अत्युन्नते, प्रासादे सौधे, वासात् अवस्थितेः हेतोः, भृशम् अत्यर्थम्, कृशतां क्षीणताम्, आयतीं गच्छन्तीम्, विस्तृतत्वेऽपि प्रासादस्य अत्युन्नततया दमयन्तीदृशि अतिकृशत्वेन प्रतीयमानामित्यर्थः । दृश्यते हि सुदूरात् स्थूलमपि द्रव्यं कृशत्वेन लोके, अत्र प्रासादस्य तुङ्गतैव कुल्याया दूरत्वे हेतुर्बोद्धव्यः । तथा अर्कबिम्बस्य सूर्यमण्डलस्य, अस्तोन्मुखत्वात् आरक्तस्येति भावः। प्रतिकृतिरेव प्रतिबिम्बमेव, तज्जलपतितेति भावः। मणिः वृहदाकारपद्मरागरत्नमित्यर्थः, तेन, राजमानां शोभमानाम्, वक्रं वक्रं कुटिलं कुटिलं यथा तथा, व्रजन्तीं गच्छन्तीम्, प्रवहन्तीमित्यर्थः। अत एव फणियुवतिः काचित् सर्पस्त्री इयम्, इति एवं विविच्य, त्रस्नुभिः भीरुभिः, रथपदानां चक्रनाम्नाम्, मिथुनैः द्वन्द्वैः। कर्तृभिः । व्यक्तं स्फुटमेव, मुक्तं त्यक्तम्, अन्योऽन्यं परस्परं यस्मिन् तत् यथा भवति तथा, तीरे कुलभागे, कुल्याया एव एकैकस्मिन् तीरे इत्यर्थः। विद्रुत्य पलाय्य, आर्त्तिरुत्या दुःखस्वनेन साधनेन, निशागमनात् भावविरहचिन्तया कातरस्वरेणेति भावः। सूचितां ज्ञापिताम्, ईषदन्धकारागमेन स्पष्टं न दृश्यमानामपि चक्रवाकशब्दैः विदितामित्यर्थः। केलिकुल्यां क्रीड़ार्थं कृत्रिमसरितम्। 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः। अद्राक्षीत् ऐक्षिष्ट ॥ १२९ ॥

इसके बाद दमयन्तीने ऊँचे प्रासादपर रहने ( बैठकर देखने ) से अत्यन्त पतली ज्ञात होती हुई, ( सायङ्कालमें अस्तोन्मुख होनेवाले अरुणवर्ण ) सूर्यबिम्बके प्रतिकृति ( जलमें पड़ती हुई परछाहीं ) रूप मणिसे अरुणवर्ण होती हुई, टेढ़ी-टेढ़ी जाती ( बहती ) हुई तथा 'यह सर्पिणी है' यह जानकर डरते हुए चक्रवाकमिथुनों ( चकवा-चकइयोंकी जोड़ियों ) से परस्पर-सान्निध्यको छोड़कर तीरपर भागकर ( सायङ्काल होनेसे आसन्न ) विरहजन्य रोदनसे सूचित क्रीडानदी ( क्रीडार्थ छोटी नहर ) को देखा। [ दमयन्तीने उस क्रीडार्थ नहरको देखा, जो दमयन्तीके ऊँचे प्रासादसे दूरस्थ होनेके कारण बहुत पतली मालूम पड़ती थी, जिसमें अरुण सूर्यबिम्ब प्रतिबिम्बित होकर उसे भी रक्तवर्ण कर रहा था, जो धीरे-धीरे बहती थी और जो अन्धकार होनेसे स्पष्ट नहीं देखे जानेपर भी भावी विरहके दुःखसे रोते ( बोलते ) हुए चकवा-चकईके शब्दसे यह नदी है ऐसा मालूम पड़ती थी और वह सर्पिणीके समान थी, क्योंकि सर्पिणी भी पतली मस्तकस्थ नागमणिसे रज्यमान,

टेढ़ा चलनेवाली होती है और उसे देखकर डरसे मनुष्य, पशु, पक्षी आदि परस्पर सन्निधि-भावको छोड़ कर ( दूर हटकर ) 'यह सर्पिणी है' ऐसा रो-रोकर चिल्लाते हैं, उससे दूसरे लोग 'यह सर्पिणी है' ऐसा मालूम करते हैं ] ॥ १२९ ॥

**अथ रथचरणौ विलोक्य रक्तावतिविरहासहताऽऽहताविवास्रैः ।**
**अपि नमकृत पद्मसुप्तिकालं श्वसनविकीर्णसरोजसौरभं सा ॥ १३० ॥**

अथेति । अथ क्रीडासरिद्दर्शनान्तरम्, सा दमयन्ती, रथचरणौ चक्रवाकयुगलौ, अतिविरहस्यः समस्तरजनीव्यापितया दीर्घवियोगस्य, असहतया अक्षमतया, आहतौ प्रासाघातौ, कामशरविद्धतया कातरौ इत्यर्थः । द्विधा भूतौ इत्यर्थश्च । अत एव अस्रैरिव रुधिरैरिव, रक्तौ रक्तवर्णौ, अनुरक्तौ च, विलोक्य दृष्ट्वा, तम् आसन्नम्, पद्मानां कमलानाम्, सुप्तिकालमपि सङ्कोचसमयमपि, सायंसमयमपीत्यर्थः । श्वसनेन चक्रवाकदुःखदर्शनेन स्वस्या अपि दुःखसूचकदीर्घनिःश्वासेन, विकीर्णं विक्षिप्तम्, सरोजसौरभं पद्मसौगन्ध्यं यस्मिन् तं तादृशम्, अकृत कृतवती, तदा सन्ध्यासमये पद्मसङ्कोचात् तत्सौरभासम्भवेऽपि स्वस्याः पद्मिनीजातीयत्वात्, पद्मिन्याश्च पद्म-सुगन्धिश्वासवायुत्वात् निःश्वासमोचनेन पद्मसौगन्ध्यं विस्तारयति स्म इति भावः ॥

इस ( क्रीडा नदीको देखने ) के बाद उस ( दमयन्ती ) ने ( रातमें होनेवाले ) विरहकी असह्यतासे आहत हुए ( अत एव ) रुधिरोंसे मानो रक्तवर्ण ( पक्षा०—अनुराग युक्त, या—स्वभावतः रक्तवर्ण ) चकवा तथा चकईको देखकर उस कमलोंके सोने ( मुकुलित होने ) के समय अर्थात् सन्ध्याकालको ( चकवा-चकईके विरहदर्शनजन्य दुःखके कारण उत्पन्न ) श्वास फेंकनेसे कमलकी सुगन्धिसे युक्त कर दिया । [ चकवा-चकईके विरहसे करुणार्द्र दमयन्ती भी जब श्वास छोड़ने लगी, तब मालूम पड़ता था कि यह कमलके मुकुलित होनेसे सायङ्कालका कमल सौरभहीन जानकर स्वयं पद्मिनीजातीया स्त्री होनेसे कमलतुल्य सौरभको छोड़कर उस सायङ्कालको कमल-सौरभसे युक्त कर रही है । विरही चकवा-चकईके दुःखसे सहृदया दमयन्तीका करुणार्द्र होना उचित ही था ] ॥ १३० ॥

**अभिलपति पतिं प्रति स्म भैमी सदय ! विलोकय कोकयोरवस्थाम् ।**
**मम हृदयमिमौ च भिन्दतीं हा ! क इव विलोक्य नरो न रोदितीमाम् ? ॥**

अभिलपतीति । भैमी दमयन्ती, पतिं नलम्, प्रति उद्दिश्य, अभिलपति स्म उवाच, किमित्याह—सदय ! हे दयालो ! कोकयोः चक्रवाकयोः, अवस्थां दुर्दशाम्, वियोगजनितकार्यमिति यावत् । विलोकय पश्य, मम मे, हृदयं वक्षःस्थलम्, इमौ वियोगिनौ कोकौ च, भिन्दन्तीं विदारयन्तीं वियोजयन्तीञ्च, अनयोः कातरतादर्शन-जनितशोकात्, वियोगदुःखदानाच्चेति भावः । इमां वियोगावस्थाम्, विलोक्य दृष्ट्वा, हा ! खेदे, कः इव नरः को वा जनः, न रोदिति ? न क्रन्दति ? अपि तु सर्वं

एव जनः रोदनं करोत्येवेत्यर्थः। सदयत्वात् तवापि रोदनसम्भव इति मन्ये इति भावः॥ १३१॥

दमयन्तीने पति (नल) से कहा—'हे दयालो! चकवा-चकईकी अवस्था देखिये, इन दोनोंको अलग करती हुई तथा (इनके दुःखसे) मेरे हृदयको भी विदीर्ण करती हुई इस अवस्थाको देखकर भला कौन मनुष्य नहीं रोता है [अत एव सहृदयतम होनेसे आप रो देंगे, इसमें क्या आश्चर्य है? अथवा—......आपको भी रो देना सम्भव है, ऐसा मैं समझती हूँ]॥ १३१॥

कुमुदमुदमुदेष्यतीमसोढा रविरविलम्बितुकामतामतानीत्।
प्रतितरु विरुवन्ति किं शकुन्ताः स्वहृदि निवेशितकोककाकुकुन्ताः?॥

कुमुदेति। रविः भानुः, उदेष्यतीम् आविर्भविष्यन्तीम्, कुमुदानां कैरवाणाम्, मुदं चन्द्रोदयात् विकाशरूपं हर्षम्, असोढा असहिष्णुरिव सन्, तेषामुत्फुल्लभावं द्रष्टुमक्षमः सन्नित्यर्थः। सहेः तृणि 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे, 'ष्टुना ष्टुः' इति धस्य ढत्वे, 'ढो ढे लोपः' इति प्रथमढलोपे 'सहिवहोरोदवर्णस्य' इति ओत्वम्। अविलम्बितुं त्वरां कर्तुम्, शीघ्रमस्तं यातुमित्यर्थः। कामः अभिलाषः यस्य तस्य भावः तत्ता ताम्, अतानीत् विस्तारयामास, कृतवान् इत्यर्थः। दृश्यते च लोके, परोत्कर्षमसहमानाः स्वेतरेषामानन्ददर्शनात् तत्स्थानात् शीघ्रमेव प्रतिष्ठन्ते इति। तथा प्रतितरु तरुं तरुं प्रति, प्रत्येकवृक्षोपरि उपविष्टा इत्यर्थः। याथार्थ्येऽव्ययीभावः। शकुन्ताः पक्षिणः, स्वहृदि निजनिजवक्षसि, निवेशितः अर्पितः, दवेन निखात इत्यर्थः, कोकानां चक्रवाकाणाम्, काकुः वियोगजार्त्तस्वरः एव, कुन्तः प्रासाख्यास्त्रविशेषः येषां तादृशाः सन्तः। 'प्रासस्तु कुन्तः' इत्यमरः। विरुवन्ति शब्दायन्ते, किम्? वितर्के किंशब्दः॥ १३२॥

कुमुदोंके भावी हर्षको नहीं सहन करते हुएके समान सूर्य शीघ्र गमन करनेका इच्छुक हो रहा है अर्थात् शीघ्र अस्त होना चाहता है और चकवा-चकईके (विरहार्तिजन्य) दीन वचनरूपी भालेको अपने हृदयमें रखे हुएके समान पक्षिगण प्रत्येक वृक्षपर विशेषरूपसे (अधिक) रो रहे हैं क्या? [लोकमें भी प्रतिपक्षीके भावी हर्षको नहीं देख सकनेवाला व्यक्ति वहाँसे पहले ही चला जाता है तथा भालेके हृदयमें प्रविष्ट होनेपर अधिक रोता भी है]॥ १३२॥

अपि विरहमनिष्टमाचरन्तावधिगमपूर्वकपूर्वसर्वचेष्टौ।
इदमहह! निदर्शनं विहङ्गौ विधिवशचेतनचेष्टितानुमाने॥ १३३॥

अपीति। हे नाथ! अधिगमः ज्ञानम्, वियोगक्लेशानुभव इत्यर्थः। पूर्वम् आदौ यासां तास्तादृश्यः, पूर्वसर्वचेष्टाः स्वयमेवानुष्ठितसकलविरहव्यापाराः ययोस्तौ तादृशौ, अपि प्रागनुभूतविरहदुःखावपीत्यर्थः। अनिष्टम् अनभिमतम्, विरहं

वियोगम्, आचरन्तौ अनुतिष्ठन्तौ, विधातृनियमेन दीर्घकालं पालयन्तौ इत्यर्थः । विहङ्गौ चक्रवाकपक्षिणौ, विधिवशं दैवाधीनम्, चेतनानां प्राणिनाम्, चेष्टितम् आचरणम्, इत्येवंरूपे, अनुमाने कार्यात् कारणविशेषज्ञाने विषये, प्राक्तनकर्मवशादेव अनभिमतेऽपि विषये प्राणिनां प्रवृत्तिदर्शनादिति भावः । इदम् एतदेव, निदर्शनं दृष्टान्तः, अहह इति खेदे अद्भुते वा; तथा हि–सर्वे एव प्राणिनः दैवाधीनतयैव हितमहितं वा सर्वं कार्यम् इच्छया वा अनिच्छया वा कर्त्तुं प्रेरिता भवन्ति, ततश्च विरहस्य अनिष्टत्वं जानन्तावपि चक्रवाकयुगलौ स्वयमेव तमाचरत इति तावेवात्र निदर्शनमिति निष्कर्षः ॥ १३३ ॥

ज्ञानपूर्वक पहली समस्त चेष्टा करनेवाले भी ( इस समय भाग्यवश ) अनिष्ट विरहको भी करते हुए दोनों ( चकवा–चकई ) पक्षी भाग्याधीन प्राणिचेष्टाओंके घटित होनेके अनुमानमें उदाहरण हैं । [ कोई भी ज्ञानयुक्त प्राणी अपने अहितमें प्रवृत्त नहीं होता, किन्तु इन दोनों चकवा–चकईको अपने अहितकारक विरहमें प्रवृत्त होते हुए देखकर यह अनुमान होता है कि प्राणी भाग्येच्छानुसार ही समस्त चेष्टाओंको करता है, स्वेच्छासे कुछ भी वह नहीं कर सकता ] ॥ १३३ ॥

अङ्घ्रिस्थारुणिमेष्टकाविसरणैः शोणो कृपाणः स्फुटं
कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तुमन्विच्छता ।
रश्मिग्राहिगरुत्मदग्रजसमारब्धाविरामभ्रमौ
दण्डभ्राजिनि भानुशाणवलये संसज्य किं तिज्यते ? ॥ १३४ ॥

अङ्घ्रीति । हे प्रियतम ! रथाङ्गयोः चक्रवाकयोः, मिथुनं द्वन्द्वम्, विच्छेत्तुं वियोक्तुम्, विशेषेण विदारयितुञ्च, अन्विच्छता अभिलषता, विधिना ब्रह्मणा अयम् एषः, कालः सायंसमयः, तत्स्वरूप इत्यर्थः, कृष्णवर्णश्च, 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति विश्वः । कृपाणः खड्गः, अङ्घ्रिः किरणः पादश्च, तत्र तिष्ठन्तीति अङ्घ्रिस्थाः, ये अरुणिमानः रक्तिमानः, तान्येव इष्टकाविसरणानि इष्टकाचूर्णनिक्षेपाः, तैः शोणे रक्तवर्णे, रश्मिग्राहिणा अश्वरज्जुधारिणा, शाणयन्त्ररज्जुधारिणा च, गरुत्मदग्रजेन गरुडज्येष्ठेन अरुणेन, केनचित् शाणिकेन च, समारब्धा प्रक्रान्ता, अविरामा अविच्छिन्ना, भ्रमिः भ्रामणं यस्य तस्मिन्, तथा दण्डेन चण्डांशोः भानोः पारिपार्श्विकेन, शाणस्थेन वर्त्तुलेन काष्ठेन च । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः । व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके ॥' इति विश्वः । भ्राजिनि शोभमाने, भानौ सूर्ये एव, शाणवलये शस्त्रोत्तेजनयन्त्रमण्डले, गोलाकारत्वसाधर्म्यादिति भावः । संसज्य आरोप्य, स्फुटं स्पष्टं यथा भवति तथा, तिज्यते तीक्ष्णीक्रियते, किम् ? तिज निशाने

क्षमायाञ्च इत्यस्मात् भौवादिकात् कर्मणि यकि रूपम् । 'निज्यंते'[1] इति पाठे—परिष्क्रियते, उज्ज्वलीक्रियते इत्यर्थः । 'णिजिर शौचे' इत्यस्य रूपम् । शाणिका हि शाणचक्रे इष्टकाचूर्णं दत्त्वा दत्त्वा कृपाणादिकमुत्तेजयन्ति इति लोके दृश्यते ॥ १२४ ॥

चक्रवाक-मिथुन ( चकवा-चकईकी जोड़ी ) को पृथक् ( पक्षा०—विदीर्ण ) करनेकी इच्छा करनेवाला ब्रह्मा ( या-दैव ) काल ( सायं सन्ध्यासमय, पक्षा०—काल=श्यामवर्ण, अथ च—घातक होनेसे कालरूप ) कृपाणको, किरणस्थ ( पक्षा०—चरणद्वयसे दवाये गये ) रक्तवर्ण ईटके धूलिकणोंसे लाल, रश्मि ( सूर्यरथके घोड़ोंकी रास, पक्षा०—शाण खींचनेवाली रस्सी ) को पकड़े हुए 'अरुण' ( नामक सूर्यसारथि ) से घुमाये जाते हुए और दण्ड ( सूर्यके पारिपार्श्विक-विशेष, पक्षा०—शाणकी रस्सी जिसमें बाँधी गयी है, उस डण्डे=लम्बे मोटे काष्ठ-विशेष ) से युक्त सूर्यरूपी शाणचक्रपर रखकर तीक्ष्ण करता है क्या ? । [ लोकमें भी किसी पदार्थको चीरने या काटनेके लिए लौहमय होनेसे श्यामवर्ण तलवारको, पैरोंसे दवायी गयी ईंटके धूलिकणसे लाल, रस्सो पकड़कर किसी व्यक्तिसे खींचे जाते हुए मोटे काष्ठयुक्त शाणपर रखकर तेज किया जाता है । नलसे कहे गये दमयन्तीके इन (२१।१२१–१२४) वचनोंसे कलिप्रयासकृत भावी विरहका आभास होना सूचित होता है] ॥

इति स विधुमुखीमुखेन मुग्धालपितसुधासवमर्पितं निपीय ।
स्मितशबलवलन्मुखोऽवदत् तां स्फुटमिदमीदृशमीदृशं यथाऽत्थ ॥

इतीति । सः नलः, इति अनेन प्रकारेण, विधुमुख्याः चन्द्राननायाः दमयन्त्याः, मुखेन वदनेन, अर्पितं दत्तम् , मुग्धं सुन्दरम् , आलपितमेव भाषितमेव, सुधासवं पीयूषवत् स्वादु मद्यम् , निपीय आस्वाद्य, स्मितेन ईषद्धास्येन, शबलं चित्रम् , रञ्जितमित्यर्थः । वलत् चलच्च, भैमीं प्रतिवक्तुमुपक्रमादिति भावः । मुखं वदनं यस्य सः तादृशः सन् , तां दमयन्तीम् , अवदत् अवोचत् । अन्येऽपि कामिनः यथा कामिनीमुखार्पितासवं सादरं पिबन्ति, ततः वलितमुखाः सहासं किञ्चित् वदन्ति च तद्वदिति भावः । किमित्याह—हे प्रिये ! यथा यादृशम् , यदित्यर्थः । आत्थ ब्रूषे, त्वमिति शेषः, इदम् एतत् , ईदृशम् ईदृशम् एवम्भूतमेवम्भूतम् , स्फुटं व्यक्तमेव, सत्यमेवत्यर्थः ॥ १२५ ॥

चन्द्रमुखी ( दमयन्ती ) के मुखसे समर्पित मनोहर भाषणरूप अमृतवत् मधुर मद्यको अच्छी तरह पीकर ( सुनकर ) स्मितसे युक्त मुखको दमयन्तीकी ओर किये हुए अर्थात् दमयन्तीकी ओर मुखकर मुस्कुराते हुए नल दमयन्तीसे बोले—'जैसा तुम कहती हो' यह ऐसा ही है । [ लोकमें भी कामी लोग प्रियाके उच्छिष्ट मद्यको पीकर नशेमें प्रियाकी ओर मुखकर परिहास करते हैं ] ॥ १२५ ॥

---

१. अनेन व्याख्यानेन 'निज्यते' इति पाठं स्वीकृत्य 'नकारे तकारभ्रान्त्यैव 'तिज्यते' इति पठन्ति, तदसत्' इत्येवं 'प्रकाश' कृदुक्तिरेवासतीति बोध्यम् ।

स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचित्ययो-
र्नम्रां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्भ्रुवौ ।
त्वन्नासाच्छलनिह्नुतां द्विनलिकीं नालीकमुक्त्यैषिणो-
स्त्वन्निःश्वासलते मधुश्वसनजं वायव्यमस्त्रं तयोः ॥ १३६ ॥

स्त्रीपुंसाविति । हे प्रिये ! त्वद्भ्रुवौ तव भ्रूयुगलम् , कुटिलाविति शेषः । अखिलौ समस्तौ, स्त्रीपुंसौ नारीनरौ, प्रविभज्य विभागीकृत्य, रतेरंशे स्त्रियः कामांशे च पुमांस इत्येवं विभागं कृत्वेत्यर्थः । जेतुं वशीकर्त्तुम् , आलोचितं मनसा विवेचितम् , औचित्यं युक्तियुक्तता याभ्यां तादृशयोः, रतिप्रसूनशरयोः कामप्रियाकामयोः नम्रां लक्ष्यं लक्षीकृत्य आकर्षणेन वक्रीभूतामित्यर्थः । चापद्वयीं कार्मुकयुगलम्, उभयोरेव वक्रत्वेन साम्यादिति भावः, वेद्मि जानामि । नालीकमुक्त्यैषिणोः नालीकानां ( 'पिस्तौल' इत्याख्यया प्रसिद्धानाम् ) अस्त्रविशेषाणाम् , नालीकानां गुलिकाविशेषाणामित्यर्थो वा, मुक्तिं मोक्षणम् , निक्षेपमित्यर्थः । इच्छतोः अभिलषतोः, तयोः रतिमदनयोः, त्वन्नासाच्छलेन तव नासिकाद्वयव्याजेन, निह्नुतां गोपिताम् , द्वयोः नलिकयोः समाहारः इति तां द्विनलिकीं नलद्वयविशिष्टगुलिकाक्षेपकलौहमयास्त्रविशेषमित्यर्थः । ( दोनली पिस्तौल ) वेद्मि इति पूर्वेणान्वयः । उभयोरेव तुल्यदर्शनत्वादिति भावः । तथा तव भवत्याः, निःश्वासौ एव लते निश्वासवायुप्रवाहद्वयमित्यर्थः । तयोः रतिस्मरयोः, मधुश्वसनजं वसन्तकालिकमलयजातम् , वायव्यं वायुदेवताकम् , अस्त्रम् आयुधम् , वायुत्वाविशेषादिति भावः, वेद्मि इति पूर्वेणान्वयः । अहमिति शेषः । स्मरोद्दीपने त्वमतीव निपुणेति तात्पर्यम् ॥ १३६ ॥

( हे प्रिये दमयन्ति ! ) सम्पूर्ण स्त्री-पुरुषोंका विभागकर जीतनेके लिए औचित्यको विचारे ( समस्त स्त्रियोंको रति तथा समस्त पुरुषोंको कामदेव जीते ऐसा उचित समझे ) हुए रति तथा कामदेवके तुम्हारे टेढ़े भ्रूद्वयको ( रति-कामदेवके बाण छोड़नेके लिए आकर्ण खींचनेसे ) नम्र दो धनुष जानता हूँ, तथा नालीक अस्त्रको छोड़नेकी इच्छा करनेवाले उन दोनोंके तुम्हारी नाकके व्याज ( कपट ) से गुप्त दो नालियोंसे युक्त अस्त्र-विशेष ( दो नली पिस्तौल ) जानता हूँ और तुम्हारे निःश्वासरूपी लताद्वयको उन दोनों ( रति तथा कामदेव ) का वसन्त-श्वासोत्पन्न वायव्य ( वायु-देवता-सम्बन्धी ) अस्त्र जानता हूँ । [ तुम्हारे भ्रूद्वय, नासिका तथा निःश्वासके द्वारा शीघ्र कामोद्दीपन होनेसे तुम्हीं कामोद्दीपनमें सबसे निपुण हो ] ॥ १३६ ॥

पीतो वर्णगुणस्तवातिमधुरः कायेऽपि सोऽयं यथा
यं बिभ्रत् कनकं सुवर्णमिति कैरादृत्य नोत्कीर्त्यते ? ।
का वर्णान्तरवर्णना धवलिमा राजैव रूपेषु य-
स्तद्योगादपि यावदेति रजतं दुर्वर्णतादुर्यशः ॥ १३७ ॥

पीतो वर्णेति । हे प्रिये ! सः प्रसिद्धः, अयम् एषः, पीतः गौरो नाम, वर्णगुणः वर्णस्वरूपः, अतिमधुरः अतिरमणीयः, यथा येन हेतुना, यं पीतवर्णम् , बिभ्रत् धारयत् , कनकं हिरण्यम् , कैः जनैः, सुवर्णं शोभनः वर्णः यस्य तत् तादृशम् , इति एवंरूपेण, आदृत्य आग्रहेणोल्लिख्य, न उत्कीर्त्यते ? न उच्चैः प्रशस्यते ? अपि तु सर्वैरेव उत्कीर्त्यते इत्यर्थः। तथा तव भवत्याः, काये शरीरे अपि, अस्ति इति शेषः, अत एव अतिमधुर इति मन्ये इति भावः। वर्णान्तराणां पीतशुक्लव्यतिरिक्तानां नीलादीनां वर्णानाम् , वर्णना प्रसङ्गः, का ? कीदृशी ? दूरे आस्तामिति भावः। यः धवलिमा शुक्लत्वम्, शुभ्रवर्ण इत्यर्थः। रूपेषु वर्णेषु, राजा एव उत्कृष्ट एव, अमिश्रवर्णत्वात् वर्णेषु प्रथमोच्चरितत्वाच्चेति भावः। तस्य धवलिम्नः, योगात् सम्बन्धात् अपि, शुभ्रवर्णधारणादपीत्यर्थः। रजतं रौप्यम् , कर्तृ। यावत् साकल्येन, दुर्वर्णताद्वुर्यशः दुष्टः निन्दितः, वर्णः रूपं यस्य तस्य भावः तत्ता, तस्याः दुर्यशः अकीर्त्तिम् , अपकृष्टवर्णतालक्षणनिन्दामित्यर्थः। दुर्वर्णम् इति नामधेयं च। कर्म। 'दुर्वर्णं रजतं रूप्यम्' इत्यमरः। एति प्राप्नोति। तथा हि, स्वर्णस्य पीतत्वादेव लोकाः तं सुवर्णमिति वदन्ति, यतः असौ हि पीतो वर्णः तव देहे विद्यते, ततश्च पीतो वर्णः वर्णेषु मुख्यः एव, नीलरक्तादयश्च हीनाः, यस्तु शुभ्रो वर्णः वर्णेषु प्रथमः कीर्त्यते तद्योगादपि रजतं दुर्वर्णमिति निन्दामाप्नोति, अतः शुभ्रवर्णोऽपि पीतात् हीन एव इति निष्कर्षः॥ १२७॥

(वैशेषिकोंके द्वारा गुणपदार्थसे निर्दिष्ट ) जो पीला वर्ण है, वही अत्यन्त रमणीय है, क्योंकि वह तुम्हारे शरीरमें भी है ( अथवा—जिस कारण यह पीला वर्ण तुम्हारे शरीरमें है, अत एव अत्यन्त रमणीय है। अथवा—वैशेषिकोंके द्वारा गुणपदार्थके निर्देश करनेमें सर्वप्रथम मुख्यतया निर्दिष्ट तथा वर्णान्तरसे अमिश्रित होनेसे अप्रधान भी पीला वर्ण ही अतिशय रमणीय है) क्योंकि वह तुम्हारे शरीरमें है ( बहुत विशिष्टके द्वारा गृहीत साधारण भी उत्तम हो जाता है, अतः नारीरत्न तुमसे गृहीत होनेके कारण ही अप्रधान भी पीले वर्णका प्रधान होना उचित ही है।) अथवा—गुण पीला वर्ण ही है और अत्यन्त रमणीय है ( दूसरे सब वर्ण तो दोष तथा असुन्दर हैं ), क्योंकि वह पीला वर्ण तुम्हारे शरीरमें है। अथवा—तुम्हारे शरीरमें स्थित अतिमधुर ( स्वादुतम रस ) को मैंने पीया ( अधरचुम्बनादि करते समय आस्वादन किया, अथच—पीतवर्णको सादर देखा, इत्यादि प्रकारसे पीले वर्णकी शब्दच्छलसे स्तुतिकर पुनः प्रकारान्तरसे उसीका समर्थन करते हैं—), जिस ( तुम्हारे शरीरमें स्थित ) पीतवर्णको धारण करते हुए चम्पक-पुष्प ( अथवा—सोना ) को सुवर्ण ( सुन्दर वर्णवाला, पक्षा०—सोना ) कौन मनुष्य आदरपूर्वक नहीं कहते हैं ? अर्थात् सभी लोक चम्पक तथा सोनेको सुवर्ण कहते हैं। अथवा—( नीला, लाल आदि ) दूसरे वर्णोंके वर्णन करनेकी क्या बात है ? ( श्वेत, नीला, पीला, हरा, कपिश और चित्ररूप छः ) रूपोंमें जो श्वेत राजा ( प्रधान ) है, उनके भी संसर्गसे समस्त रजत ( चाँदी धातु ) दुर्वर्णत्व

(दुष्ट वर्णवालेका भाव) रूपी आशय (निन्दा) को पाता (अथच दुर्वर्ण—दुष्ट वर्णवाला कहलाना) है। [अत एव तुम्हारे शरीरमें वर्तमान होनेसे पीला (हरिद्राके तुल्य गौर) वर्ण ही सर्वोत्तम एवं रमणीयतम है, क्योंकि उसका संसर्ग करनेवाले चम्पा (या—सोने) का आदरके साथ सबलोग सुवर्ण (सुन्दर वर्णवाला, तथा 'सुवर्ण' नामवाला) कहते हैं और वर्णोंके राजा श्वेत वर्णके संसर्गसे चाँदीको लोग दुर्वर्ण (बुरे वर्णवाला, अथच—'दुर्वर्ण' नामवाला) कहते हैं, इस वास्ते श्वेत भी तुम्हारी समानता नहीं कर पाता दूसरे वर्णोंकी चर्चा ही व्यर्थ है] ॥ १३७ ॥

खण्डक्षोदमृदि स्थले मधुपयःकादम्बिनीतर्पणात्
कृष्टे रोहति दोहदेन पयसा पिण्डेन चेत् पुण्ड्रकः ।
स द्राक्षाद्रवसेचनैर्यदि फलं धत्ते तदा त्वद्गिरा-
मुद्देशाय ततोऽप्युदेति मधुराधारस्तमप्प्रत्ययः ॥ १३८ ॥

खण्डेति। हे प्रिये ! मधूनि क्षौद्राणि एव, पयांसि जलानि यस्याः तादृश्याः, कादम्बिन्याः मेघमालिकायाः, 'कादम्बिनी मेघमाला' इत्यमरः। तर्पणात् आप्यायनात्, तादृशवारिवर्षणेन अभिषिञ्चनादनन्तरमित्यर्थः। कृष्टे हलचालनेन पुनरपि कृतकर्षणे, वर्षणानन्तरं कृषीवलाः पुनरपि क्षेत्रं कर्षन्तीति लोकदर्शनादिति भावः। खण्डस्य शर्कराविशेषस्य, क्षोदः चूर्णमेव, मृत् मृत्तिका यत्र तादृशे, स्थले शस्यक्षेत्रे, पिण्डेन पाकविशेषात् पिण्डीभूतेन, घनीभूतेनेत्यर्थः, पयसा क्षीरेण एव, 'पयसाम्' इति पाठे-पयसां पिण्डेनेत्यन्वयः। दोहदेन वृक्षादिवृद्धिकरेण वस्तुना साधनेन, पुण्ड्रकः इक्षुविशेषः। 'रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः' इत्यमरः। रोहति प्रभवति, चेत् यदि, सः पुण्ड्रकः, द्राक्षाद्रवसेचनैः मृद्वीकारससेकैः, यदि चेत्, फलं शस्यम्, धत्ते धारयति, तदा तर्हि, ततोऽपि तादृशेक्षुफलादपि, त्वद्गिरां भवद्वचनानाम्, उद्देशाय उत्कर्षनिर्देशाय, मधुरः मधुर इति शब्दः, आधारः आश्रयः, प्रकृतिरित्यर्थः। यस्य स तादृशः, तमप्प्रत्ययः मधुरतम इत्यर्थः। उदेति उत्पद्यते। सम्भाव्यमानतादृशेक्षुफलादपि मधुरतमा तव वाणी इति भावः ॥ १३८ ॥

(अब नव श्लोकों (२१।१३८—१४५) से नल दमयन्तीके वचनमाधुर्यका वर्णन करते हैं—हे प्रिये!) अमृत (या—सहद) रूपी जलवाले मेघ-समूहसे सींचनेके कारण दुबारा जोते (दोखारे) गये, चीनी (शक्करका चूर्ण) रूपी मिट्टीवाले खेतमें दूधके पिण्ड (खोये) के खादसे पौंढ़ा (उत्तमजातीय मोटा) गन्ना अङ्कुरित हो तथा बादमें दाखके रसोंसे बार-बार सींचनेपर यदि फलको धारण करे अर्थात् फले तो तुम्हारे वचनोंके उद्देश्य (समानता) के लिए उसके 'मधुर' शब्दसे 'तमप्' प्रत्यय हो अर्थात् वैसे गन्नेके फलसे तुम्हारा वचन मधुरतम (अतिशय मधुर) कहलावे [अन्यथा सामान्य मधुर पदार्थोंकी अपेक्षा तुम्हारे वचनको मधुरतम कहना अतिशय भेद होनेसे असङ्गत है, अत एव उक्तरूप

गन्नेको उत्पन्न होना और उसमें भी फल लगना सर्वथा असम्भव होनेसे तुम्हारा वचन निःसीम मधुर है, यही कहना पड़ेगा ] ॥ १३८ ॥

उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जयन्
दानान्तःश्रुतशर्कराचलमथः स्वेनामृतान्धाः स्मरः।
नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत् सा भव-
जिह्वायाः कृतिमाह्वयेत परमां मत्कर्णयोः पारणाम् ॥ १३९ ॥

उन्मीलदिति। हे प्रियतमे ! अमृतं पीयूषमेव, अन्धः अन्नं यस्य सः तादृशः, अत एव अमृतभोजिनः देवस्य स्मरस्य तदुत्थापनायाः अतीवावश्यकता इति भावः। स्मरः कन्दर्पः, स्वेन आत्मनैव, स्वयमेवेत्यर्थः, न पुनरन्यसाहाय्येन, तथा सति न सर्वथा हर्षोत्पादकता स्यादिति भावः। उन्मीलन्ती प्रकाशयन्ती, जायमाना इत्यर्थः। गुडस्य स्वनामख्यातस्य इक्षुरसविकारस्य, पाकात् अग्निसंयोगेन क्वथनात्, या तन्तुलता सूत्राकारता, सूत्रवदविच्छिन्नसंयोगः इत्यर्थः। यद्वा-तन्तुलता तन्तव इव तन्तवः गुडनिर्गतदोरकाः, त एव लता तया तद्रूपया, रज्ज्वा रश्मिना साधनेन, दानान्तः तुलापुरुषादिमहादानानां मध्ये, श्रुतः शास्त्रे आकर्णितः, यः शर्कराचलः सितापर्वतः, दानार्थं पर्वताकारतया स्थापितशर्कराराशिरित्यर्थः। स एव मन्था मन्थनदण्डः तस्य, 'भस्य टेर्लोपः' इति टिलोपः। भ्रमीः भ्रामणानि, घूर्णनानीत्यर्थः। अर्जयन् सम्पादयन्, आकर्षणेन कुर्वन् सन् इत्यर्थः। इक्षुरसस्य उदधेः इक्षुरससमुद्रात्, नव्याम् अभिनवाम्, देवासुरोत्थापितसुधातोभिन्नरूपामित्यर्थः। सुधाम् अमृतम्, यदि चेत्, उत्थापयेत् उत्तोलयेत्, तदा सा सुधा। कर्त्री। मत्कर्णयोः मम श्रवणयोः, परमाम् उत्कृष्टाम्, पारणां पारणावत् अद्वितीयतृप्तिहेतुम्, भवज्जिह्वायाः तव रसनायाः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। कृतिं कार्य्यं, गिरम् इत्यर्थः। आह्वयेत स्पर्द्धया आकारयेत्, प्रतिभटीकुर्यात् इत्यर्थः। 'स्पर्द्धायामाङः' इति ह्वेञः तङ्। मधुरद्रव्यसाधितं हि द्रव्यं परममधुरमेव भवति, एवञ्च प्रोक्तरूपेणैवोत्थापिता सुधा तव वाचः सादृश्यं लब्धमर्हति, न पुनरन्यः कश्चित् पदार्थ इति भावः ॥ १३९ ॥

प्रकाशमान गुड़पाकके तन्तुलतारूपी रस्सीसे दानके प्रकरणमें सुने गये शर्कराचल ( शक्करका पहाड़ अर्थात् पर्वताकार शक्करकी राशि ) रूप मथनी ( रई ) को घुमाता हुआ अमृतभोजी कामदेव यदि स्वयं गन्नेके रसके समुद्रसे नवीन ( देवोंके द्वारा मन्दराचलको मन्थन दण्ड तथा शेषको रस्सी बनाकर क्षीरसागरसे निकाले गये अमृतसे भिन्न ) अमृतको निकाले तो वह ( नया निकाला हुआ अमृत ) हमारे कर्णद्वयको पारणारूप, तुम्हारी जिह्वाकी कृति अर्थात् वाणीके साथ स्पर्द्धा ( कुछ समानता ) कर सकता है। [ मधुर साधनोंसे उत्पन्न अत्यन्त मधुर वह नया अमृत ही तुम्हारे वचनकी समानता कर सकता है, अन्य कोई पदार्थ नहीं ] ॥ १३९ ॥

आस्ये[1] या तव भारती वसति तल्लीलारविन्दोल्लस-
द्वासे तत्कलवैणनिक्कणमिलद्वाणीविलासामृते ।
तत्केलिभ्रमणार्हगैरिकसुधानिर्माणहर्म्याधरे
तन्मुक्तामणिहार एव किमयं दन्तस्रजौ राजतः ? ॥ १४० ॥

आस्य इति । हे प्रिये ! तस्याः भारत्याः, लीलारविन्दस्य हस्ते स्थितस्य क्रीडाकमलस्य, उल्लसन् प्रसरन्, वासः गन्धः यस्मिन् तादृशे, पद्मिनीत्वात् पद्मतुल्यपरिमले इति भावः । तथा तस्याः भारत्या एव, कलः मधुरास्फुटः, यः वैणः वीणासम्बन्धी, निक्कणः नादः, तद्रूपं मिलत् सम्बध्यमानम्, वाणीविलास एव वक्रोक्त्यादिनानाविधवाग्वैचित्र्यमेवेत्यर्थः । अमृतं पीयूषं यस्मिन् तादृशे, तथा तस्याः भारत्या एव, केलिभ्रमणार्हं लीलया गमनयोग्यम्, गैरिकेण रक्तवर्णधातुविशेषेण, रञ्जितया इति शेषः । सुधया धवलतासाधनचूर्णद्रव्येण, निर्माणं चित्रादिरचना यत्र तादृशम्, यत् हर्म्यं गृहम्, तदेव अधरः रदनच्छदः यस्मिन् तादृशे, तव भवत्याः, आस्ये वदने, या भारती सरस्वती, वसति तिष्ठति, दन्तस्रजौ तव आस्ये पुरो दृश्यमाने ये द्वे दन्तमाले, राजतः शोभेते, तद्रूपः अयं पुरः दृश्यमानः, तस्याः भारत्याः, मुक्तामणिहारः मुक्तामणिखचितः हारः मुक्तामणिखचितः हारः एव, किम् ? तद्वत्ते रेजाते इत्यर्थः । सरस्वतीवीणाक्कणिततुल्या तव वाणी इति भावः । अत्र वाणीवर्णनं प्रस्तुतम्, अन्यत् प्रासङ्गिकम् । पद्मगन्धादिभिः मुखे भारतीवासः अनुमीयते ॥

उस ( सरस्वती ) के लीलाकमल—सम्बन्धी फैलते हुए सौरभसे युक्त, उस ( सरस्वती ) मधुरास्फुट वीणा—सम्बन्धी स्वरसे सम्बद्ध होते हुए वाणी—विलासरूप अमृतवाले ( अर्थात् सरस्वतीका ही मधुर स्वर तथा अस्फुट वीणास्वर वक्रोक्त्यादिरूपसे अनेकविध वाणीके विलासरूप अमृत हो रहा है ऐसा ), और उस ( सरस्वती ) के क्रीड़ाभ्रमणके योग्य गेरुरूपी चूना ( अथवा—गेरुमिश्रित चूना- ) से पोते ( लीपे ) गये महलरूप अधरवाले तुम्हारे मुखमें जो सरस्वती ( वाणी ) रहती है; उसीके मोतियोंके हारके समान ये दोनों दन्तश्रेणियां शोभती हैं क्या ? । [ दमयन्तीको 'पद्मिनी' जातीया स्त्री होनेसे उसके मुखके गन्धको कमलगन्धतुल्य होना उचित ही है । सरस्वतीकी वीणाध्वनिके समान तुम्हारी वाणी मधुर है ] ॥ १४० ॥

वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्वती[3] काऽपि ते
खण्डः खण्ड इतीदमीयपुलिनस्यालप्यते[4] वालुका ।

---

१. 'इतः प्रभृति सप्त श्लोका 'जीवातौ' नोपलब्धाः' इति म० म० शिवदत्तशर्माणः आहुः । २. 'स्या'—'इति मूलपुस्तकपाठः' इति म० म० शिवदत्तशर्माणः । ३. 'स्रोतस्विनी' इति पाठान्तरम् । ४. 'इतीदमुत्थपुलिनस्या' इति पाठान्तरम् ।

एतत्तीरमृदैव किं विरचिताः पूताः सिताश्चक्रिकाः?
किं पीयूषमिदम्पयांसि? किमिदन्तीरे तवैवाधरौ? ॥ १४१ ॥

वाणीति। हे प्रिये! ते तव, वाणी वाक्, का अपि वर्णयितुम् अशक्यत्वात् लोकोत्तरा इत्यर्थः। अथच अनिर्दिष्टनामा, उज्ज्वलरसस्रोतस्वती शृङ्गाररससम्बन्धिनी नदी, अथच निर्मलजला नदी, अत एव मन्मथस्य कामस्य, तीर्थं योनिः, कारणमित्यर्थः। कामोद्दीपिका इति यावत्, अथ च, तीर्थं जलावतारः, नद्यामवतरणार्थं सोपानश्रेणीत्यर्थः। 'तीर्थं योनौ जलावतारे च' इति हैमः। तथा खण्डः खण्ड इक्षुविकारविशेषः, इदमीयस्य अस्याः नद्याः सम्बन्धिनः, पुलिनस्य तोयोत्थिततटभागस्य। 'तोयोत्थितं तत् पुलिनम्' इत्यमरः। वालुका सिकता, इति आलप्यते गीयते, तथा पूताः निर्मलाः, सिताः शुभ्राः, चक्रिकाः शर्कराकृतचक्राणि, एतस्याः नद्याः, तीरस्य तटस्य, मृदा एव धवलमृत्तिकया एव, विरचिताः कल्पिता किम्? तथा पीयूषम् अमृतम्, अस्याः सम्बन्धीनि पयांसि इदम्पयांसि अस्या नद्याः जलानि, किम्? अस्याः जलानि एव अमृतत्वेन आलप्यन्ते किम्? तथा तव भवत्याः, अधरौ ओष्ठौ एव, इदन्तीरे अस्याः नद्याः उभौ तटौ, किम्?। शृङ्गाररसप्रधाना कामोद्दीपिका भवद्वाणी मधुरतमा इति भावः ॥ १४१ ॥

(हे प्रिये!) तुम्हारी वाणी कोई अनिर्वचनीय गुणवाली लोकत्तर (अथच—अकथित नामवाली) उज्वलरस (शृङ्गार, अथच—निर्मल जल) की नदी है, (अत एव) कामदेवका तीर्थ (उत्पत्तिस्थान, पक्षा०—नदीमें प्रवेश करनेके लिए सीढ़ी) है, उक्तस्वरूपा इस नदीके तटका वालू (रेत) ही 'शक्कर, शक्कर' ऐसा कहा जाता है, इस (उक्तस्वरूपा) नदीके किनारेकी मिट्टी ही मिश्रीको (थालीमें जमाई गयी) राशि है क्या? और इस (उक्तस्वरूपा) नदीके जल ही अमृत है क्या? तथा इस (उक्तस्वरूपा) नदीके दोनों तीर ही तुम्हारे दोनों ओष्ठ हैं क्या?। [तुम्हारी वाणी शृङ्गाररसप्रधान कामोद्दीपक तथा अतिशय मधुर है] ॥ १४१ ॥

परभृतयुवतीनां सम्यगायाति गातुं
न तव तरुणि! वाणीयं सुधासिन्धुवेणी।
कति न रसिककण्ठे कर्त्तुमभ्यस्यतेऽसौ
भवदुपविपिनाम्रे ताभिराम्रेडितेन? ॥ १४२ ॥

परेति। तरुणि! हे प्रादुर्भूतयौवने! सुधासिन्धोः अमृतसागरस्य, वेणी प्रवाहरूपा, तव भवत्याः, इयम् उच्चार्यमाणा, वाणी वाक्, परभृतयुवतीनां कोकिलवधूनाम्, सम्यक् उत्तमं यथा तथा, गातुं भाषितुम्, न आयाति न आगच्छति, कोकिलाऽपि ईदृशसुमधुरस्वराभावात् तवाग्रे गातुं लज्जते इति भावः। अतः ताभिः कोकिलाभिः, भवत्याः तव, उपविपिने उपवने, यः आम्रः आम्रवृक्षः तस्मिन्,

स्थित्वा इति शेषः । असौ त्वद्वाणी, रसिके अतिमधुरे, रसालाङ्कुरास्वादेन इति भावः । अथ च ममापि ईदृशी वाणी भवतु एवं साभिलाषे, कण्ठे गलदेशे, कण्ठध्वनौ इत्यर्थः । कर्तुं विधातुम्, कण्ठस्थां कर्तुमित्यर्थः । आम्रेडितेन द्वित्रिवारमुक्तेन, पुनः पुनर्घोषणेन इत्यर्थः । 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः । कति कियत् वारान्, न अभ्यस्यते ? न शिक्ष्यते ? अपि तु बहुवारम् अभ्यस्यते एव, तथाऽपि अद्यापि तासां भवद्वाणी सम्यक् न आयाति इति ज्ञायते इति भावः । कोकिलालापात् अपि त्वद्वाणी मधुरतमा इति निष्कर्षः । गुरुगृहे ब्रह्मचर्यावलम्बनपूर्वकं विद्याभ्यासस्य शास्त्रीयत्वात् परभृतपदम्, तथा पुमपेक्षया स्त्रीणां विशेषतः तरुणीनां कण्ठस्वरं मधुरम् इति सूचनार्थं युवतीपदं प्रयुक्तमिति बोध्यम् ॥ १४२ ॥

हे तरुणि ( दमयन्ति ) ! पिकयुवतियोंको भी अमृत-समुद्रकी प्रवाहरूपा तुम्हारी वाणीको अच्छी तरह गाने नहीं आता है, अत एव वे तुम्हारे क्रीड़ावनके आम्रवृक्षपर (बैठकर) रसिक ( हमारी वाणी भी दमयन्तीके समान हो जाय इस प्रकारके अभिलाषयुक्त, पक्षा०—आम्रमञ्जरी तथा आम्रकिसलयके आस्वादनसे कषायरसयुक्त ) कण्ठमें करनेके लिए बार-बार कहनेसे कितनी बार अभ्यास नहीं करती हैं, अर्थात् बहुत बार अभ्यास करती हैं । [ आजतक भी तुम्हारी वाणीको यथावत् पिकयुवतियां अभ्यासकर नहीं गा सकीं, अत एव तुम्हारी वाणी अत्यन्त मधुर है । पुरुषकी अपेक्षा स्त्रियोंका, उनमें भी युवतियोंका और उनमें भी पिकयुवतियोंके स्वरको अत्यन्त मधुर स्वर होनेसे यहां 'पिकयुवतियों'को दमयन्ती-वाणीका अभ्यास करना कहा गया है । अन्य भी कोई व्यक्ति वनमें गुरुके आश्रयमें रहते हुए भिक्षाशनपूर्वक विद्याभ्यास करता है ] ॥ १४२ ॥

ऊर्ध्वस्ते रदनच्छदः स्मरधनुर्बन्धूकमालामयं
मौर्वी तत्र तवाधराधरतटाधःसीमलेखालता ।
एषा वागपि तावकी ननु धनुर्वेदः प्रिये ! मान्मथः
सोऽयं कोणधनुष्मतीभिरुचितं वीणाभिरारभ्यते ॥ १४३ ॥

ऊर्ध्व इति । हे प्रिये ! ते तव, ऊर्ध्वः उपरिस्थितः, रदनच्छदः ओष्ठः उत्तरोष्ठ एवेत्यर्थः । बन्धूकमालामयं बन्धुजीवपुष्पमालात्मकम्, स्मरधनुः कामकार्मुकम्, ईषद्वक्राकारत्वादिति भावः । तथा तत्र कामचापे, तव भवत्याः, अधराधरतटस्य निम्नोष्ठदेशस्य, अधःसीमायां निम्नस्थमर्यादायाम्, प्रान्तदेशे इत्यर्थः । या लेखालता वीरुदाकाररेखाविशेष इत्यर्थः । दैर्घ्यादिति भावः । सा एव मौर्वी ज्या; एषा श्रूयमाणा, तावकी तव सम्बन्धिनी, वाक् वाणी अपि, ननु निश्चये । मान्मथः कामसम्बन्धी, कामाद्वैतप्रतिपादक इत्यर्थः, धनुर्वेदः, सः विशिष्टः, अयं त्वद्वाणीरूपः मान्मथधनुर्वेदः, कोणधनुष्मतीभिः वीणावादनसाधनधनुर्युक्ताभिः । 'कोणो

१. 'रभ्यस्यते' इति पाठान्तरम् ।

वीणादिवादनम्' इत्यमरः । वीणाभिः वल्लकीभिः, आरभ्यते अभ्यस्यते, इति उचितं युक्तम्, परम् अद्यापि न आयाति इति भावः । त्वद्वाणी वीणाक्वणितात् अपि मधुरतमा इति निष्कर्षः । धनुर्वेदश्च धनुर्धरैः एव अभ्यस्यते इति एतत् उचितं, परन्तु यत् स्वत एव न आयाति तदागमनार्थम् अभ्यासःउचित एव इति तात्पर्यम्॥

हे प्रिये! तुम्हारा ऊपरी ओष्ठ वन्धूकों (दुपहरियाका फूलों) की मालासे बनाया गया कामदेवका धनुष है, उस (कामधनुष) पर तुम्हारे निचले ओष्ठकी अधःसीमारेखा लता डोरी (धनुषकी तांत) है, यह तुम्हारी वाणी मानो कामदेव-सम्बन्धी धनुर्वेद है; उस (अतिप्रसिद्ध) इस (कामदेव-सम्बन्धी धनुर्वेद) को कोण (वीणा बजानेका धनुषाकार वक्र काष्ठ-विशेष) रूप धनुषको धारणकी हुई वीणाएँ आरम्भ (पाठा०—अभ्यास) कर रही हैं, यह उचित है। (परन्तु तुम्हारी वाणीको वे वीणाएँ अबतक नहीं सीख सकीं) [धनुष धारण करनेवाले ही धनुर्वेदको सीखते हैं, और जो स्वयं नहीं आता उसका आरम्भ (पाठा०—अभ्यास) करना उचित ही है। तुम्हारी वाणी वीणाओंसे भी अत्यधिक मधुर है]॥ १४३॥

स ग्राम्यः स विदग्धसंसदि सदा गच्छत्यपाङ्क्तेयतां
तञ्च स्प्रष्टुमपि स्मरस्य विशिखा मुग्धे! विगानोन्मुखाः।
यः किं माध्वीति नाधरं तव कथं हेमेति न त्वद्वपुः
कीदृङ्नाम सुधेति पृच्छति न ते दत्ते गिरं चोत्तरम्॥ १४४॥

स इति । मुग्धे! हे सुन्दरि! यः पुरुषः, मधु क्षौद्रम्, मद्यं वा, किम्? कीदृशम्? इति एवम्, पृच्छति प्रश्नं कुर्वाणे जने विषये, तव ते, अधरम् निम्नोष्ठम् एव, उत्तरं मधु इति प्रतिवचनम्, न दत्ते न विदधाति, सः ग्राम्यः पामरः, अचतुरः इत्यर्थः । न तु तव नगरनिवासयोग्यः इति भावः । 'ग्रामात् यखञौ' इति भवार्थे यः। तथा हेम कनकम्, कथम्? किं प्रकारकम्? इति पृच्छति जने यः त्वद्वपुः तव शरीरम्, इति उत्तरं न दत्ते, सः जनः, विदग्धानां चतुराणाम्, संसदि सभायाम्, सदा सर्वकालम्, अपाङ्क्तेयतां पङ्क्तिवहिर्भूतत्वम्, याति गच्छति, तेषां पङ्क्तौ न उपवेष्टुमर्हति अचतुरत्वात् इति भावः । पाङ्क्तेयः इति नद्यादित्वात् ढक्। तथा सुधा नाम पीयूषाख्यं द्रव्यम्, कीदृक्? कीदृशम्? इति पृच्छति जने, यश्च ते तव, गिरं वाचम्, इति उत्तरं न दत्ते, स्मरस्य कामस्य, विशिखाः वाणाः, तञ्च पुरुषम्, स्प्रष्टुम् अपि स्पर्शं कर्त्तुमपि, विगानोन्मुखाः विरुद्धभाषण-प्रवणाः, 'नीरसः अयम्' इति घृणया तं स्प्रष्टुमपि न कृतोद्यमाः इत्यर्थः । त्वद्वाणी सुधायाः अपि मधुरतमा इति भावः। अधरादिवर्णनं तु प्रासङ्गिकम्॥ १४४॥

जो पुरुष 'मधु (सहद, या—मद्य) कैसा होता है?' यह प्रश्न करनेपर 'तुम्हारा अधर (मधु) है' ऐसा उत्तर नहीं देता है, वह पुरुष ग्राम्य (देहाती) है अर्थात् नगरनिवासी

सभ्य नहीं है; जो पुरुष 'सोना कैसा है ?' यह प्रश्न करनेपर 'तुम्हारा शरीर (सोना) है' ऐसा उत्तर नहीं देता है, वह सदा चतुरोंकी सभामें पङ्क्तिसे बाहर बैठने योग्य अर्थात् अचतुर है और जो पुरुष 'अमृत कैसा होता है ?' यह प्रश्न करनेपर 'तुम्हारी वाणी (ही अमृत) है' ऐसा उत्तर नहीं देता है, उसको निन्दा करने (या-विपरीत भाषण करने) के लिए उन्मुख कामबाण स्पर्श करना भी नहीं चाहते अर्थात् 'वह अत्यन्त नीरस है'। [ तुम्हारी वाणी अमृतरूप ही है यहां अधरादिका वर्णन तो गौण है ] ॥ १४४ ॥

मध्ये बद्धाणिमा यत् सगरिमसमहिमश्रोणिवक्षोजयुग्मा
जाग्रच्चेतोवशित्वा स्मितधृतलघिमा मां प्रतीशित्वमेषि ।
सूक्तौ प्राकाम्यरम्या दिशि विदिशि यशोलब्धकामावसाया
भूतीरष्टावपीशस्तददित मुदितः स्वस्य शिल्पाय तुभ्यम् ॥ १४५ ॥

मध्य इति । हे प्रिये ! त्वं यत् यस्मात् हेतोः, मध्ये उदरप्रदेशे, बद्धः धृतः, अणिमा सौक्ष्म्यातिशयो यया सा तादृशी कृशोदरी । तथा गरिममहिमभ्यां गुरुत्व-महत्त्वाभ्यां सह वर्त्तमानम्, श्रोणिः नितम्बः, वक्षोजयुग्मं स्तनयुगलञ्च यस्याः सा तादृशी गुरुस्थूलनितम्बा पीनोन्नतकुचा च । तथा जाग्रत् स्फुरत्, उद्बुध्यमान-मित्यर्थः । चेतसि मनसि, वशः इन्द्रियाणां स्वाधीनत्वम्, तदस्यास्तीति वशी तद्भावो वशित्वं जितेन्द्रियता यस्याः सा तादृशी पतिव्रता । तथा स्मिते ईषद्धा-स्येऽपि, धृतः आश्रितः, लघिमा अल्पत्वं यया सा तादृशी अल्पहासेत्यर्थः । अणिमादौ गुणवचनत्वादिमनिच् । तथा मां नलम्, प्रति उद्दिश्य, ईशनमीशः ऐश्वर्यम्, तद-स्यास्तीति ऐशी तद्भावः ईशित्वं स्वामिताम्, एषि गच्छसि, मम प्राणानामीश्वरी भवसीत्यर्थः । तथा सूक्तौ वचनचातुर्यविषये, प्राकाम्येण प्रकारबाहुल्येन, रम्या रमणीया, वक्रोक्त्यादिनानाप्रकारां वाणीं वक्तुं त्वमेव जानासि नान्या इति भावः । तथा दिशि प्राच्यादौ, विदिशि आग्नेयादौ च, यशसः सौन्दर्यादिविषयककीर्त्तेः, यशसा वा कृत्वा, लब्धः प्राप्तः, कामं यथेष्टं यथा तथा, अवसायः अप्रतिहतप्रसरा गतिर्यया सा तादृशी त्रैलोक्यप्रसरकीर्त्तिः, असीति शेषः । तत् तस्मात् कारणात्, मुदितो हृष्टः, त्वां निर्माय सौन्दर्यादिना परितुष्टः इत्यर्थः । ईशः, ईश्वरः, अष्टावपि अष्टसङ्ख्यका अपि, भूतीः ऐश्वर्याणि, स्वकीयाः अणिमादीः महासिद्धीरित्यर्थः । स्वस्य आत्मनः, शिल्पाय कारवे, तुभ्यं भवत्यै, त्वद्रूपाय निजनिर्माणाय इत्यर्थः । अदित प्रायच्छत् । यथा सन्तुष्टो हि पित्रादिः अपत्यादिभ्यः स्वकीयमैश्वर्यादिकं प्रददाति, तथेश्वरेण सन्तुष्टेन स्वकीयम् 'अणिमा महिमा गरिमा लघिमा वशित्व-मीशित्वं प्रकाम्यं कामावसायिता च' इत्येवमष्टविधमैश्वर्यं तुभ्यं दत्तम्, अन्यथा एतत् सर्वं त्वयि कथं स्यादिति भावः । अत्र वाणीवर्णनम् एव प्रस्तुतं मध्यादिवर्णनं प्रासङ्गिकम् ॥ १४५ ॥

(हे प्रिये दमयन्ति!) जिस कारणसे तुम कटिभागमें अणिमा (अत्यन्त कृशता, पक्षा०—'अणिमा' नामकी सिद्धि) वाली हो, गरिमा तथा महिमा (गुरुता = भारीपन तथा विशालता, पक्षा०—'गरिमा तथा महिमा' नामकी दो सिद्धियों) से युक्त दोनों नितम्ब तथा दोनों स्तनोंवाली हो अर्थात् तुम्हारे दोनों नितम्ब भारी एवं बड़े हैं तथा स्तनद्वय पीन तथा उन्नत हैं; चित्तमें जागरूक (निरन्तर उद्यत) वशित्व (पक्षा०—'वशित्व' नामकी सिद्धि) वाली हो अर्थात् सर्वदा चित्तको वशमें रखती (जितेन्द्रिया, या— पतिव्रता) हो; मुस्कानमें लघिमा (लाघवता, पक्षा०—'लघिमा' नामकी सिद्धि) धारण करती अर्थात् थोड़ा मुस्काती हो; मेरे (नल) के प्रति ईशित्व (स्वामित्व, पक्षा०—'ईशित्व' नामकी सिद्धि) प्राप्त करती हो अर्थात् मेरी प्राणेश्वरी हो; सूक्तिमें प्राकाम्य (अत्यधिकता पक्षा०—'प्राकाम्य' नामकी सिद्धि) से रमणीय हो अर्थात् श्लेष, वक्रोक्ति, माधुर्यादि युक्त भाषण करनेसे रमणीय हो; और (पूर्वादि चारों) दिशाओं तथा (आग्नेयादि चारो) विदिशाओंमें यश (सौन्दर्यादि प्रसिद्धि) से इच्छानुसार अनवरुद्ध प्रखर गति (पक्षा०—'कामावसाय' नामकी सिद्धि) को प्राप्त की हो; इस कारणसे तुम्हारी रचना करके हर्षयुक्त ईश्वरने अपनी शिल्पिभूत तुम्हारे लिये आठो भूतियों (सिद्धियों) को दे दिया है। [लोकमें भी कोई व्यक्ति जिस प्रकार सत्पुत्रको उत्पन्न कर उसके लिए अपने सम्पूर्ण ऐश्वर्यको दे देता है, वैसे ईश्वर (तुम्हारे रचयिता शिवजी, पक्षा०—ऐश्वर्यवान् पिता) ने भी उक्त-गुणोंवाली सर्वश्रेष्ठ तुम्हारे लिये अपनी आठों विभूतियोंको दे दिया है, इसीसे तुममें वे वर्तमान हैं। प्रकृतमें तुम्हारी वाणी पर्याप्त रमणीय है, यह प्रकरणका विषय है, अन्य वर्णन प्रासङ्गिक है]॥ १४५॥

त्वद्वाचः स्तुतये वयं न पटवः पीयूषमेव स्तुम-
स्तस्यार्थे गरुडामरेन्द्रसमरः स्थाने स जानेऽजनि।
द्राक्षापानकमानमर्दनसृजा क्षीरे दृढावज्ञया
यस्मिन्नाम धृतोऽनया निजपदप्रक्षालनानुग्रहः॥ १४६॥

त्वदिति। हे प्रिये! वयं नलादयः, त्वद्वाचः तव सुमधुरवाण्याः, स्तुतये प्रशंसायै, न पटवः न समर्थाः, तस्मात् पीयूषम् अमृतमेव, स्तुमः प्रशंसां कुर्मः, तस्य पीयूषस्य, अर्थे निमित्तम्, सः पुराणादिप्रसिद्धः, गरुडस्य वैनतेयस्य, अमरेन्द्रस्य देवेन्द्रस्य च, समरः युद्धम्, अजनि जातः, तत् स्थाने युक्तम्, जाने इत्यहं मन्ये। द्राक्षापानकस्य पक्वद्राक्षासम्बन्धिनः संस्कृतपानीयविशेषस्य, मानोऽहङ्कारः, माधुर्यातिशयरूप इति भावः। तस्य मर्दनं खण्डनम्, सृजति विदधातीति तादृशया, तथा क्षीरे दुग्धे विषये, दृढा निश्चला, अन्येन त्याजयितुम् अशक्या इत्यर्थः। अवज्ञा अनादरः यस्याः तादृशया, अनया तव वाण्या, यस्मिन्नमृते, निजपदयोः स्वचरणयोः, प्रक्षालनेनैव शोधनेनैव, अनुग्रहः प्रसादः, धृतः कृतः,

नाम सम्भावनायाम्, इति सम्भावयामीत्यर्थः । अथ च यस्मिन् पीयूषे भवद्वाक्यभूतया वाण्या, स्वीयसुप्तिङन्तरूपाणां पदानां प्रक्षालनात् अनु पश्चात्, ग्रहणं ग्रहः, कृतोऽस्त्येव, अमृतक्षालिततयैव निर्दोषं मधुरञ्च वदसीत्यर्थः । द्राक्षापानकक्षीरपीयूषादपि त्वद्वाणी मधुरतमा इति भावः । प्रभोर्यस्मिन्ननुग्रहातिशयः स एव प्रभोः चरणक्षालनादिकं यथा करोति तद्वत् इति बोध्यम् ॥ १४६ ॥

( हे प्रिये ! ) तुम्हारी वाणीकी स्तुतिके लिए हम लोग ( मैं = नल तथा अन्यान्य जनता ) चतुर ( समर्थ ) नहीं है, अत एव अमृतकी स्तुति करते हैं ( जिस प्रकार किसी बहुत बड़े व्यक्तिके पास नहीं पहुंच सकनेवाला मनुष्य उससे छोटेके पास जाकर ही सन्तोष कर लेता है, उसी प्रकार तुम्हारी उत्कृष्टतया वाणीकी स्तुति करनेमें असमर्थ हमलोग अमृतकी स्तुतिसे ही सन्तोष करते हैं ), उस अमृतके लिए गरुड़ तथा इन्द्रमें युद्ध हुआ था, उसे मैं उचित मानता हूं, क्योंकि दाखके पना ( पेय द्रव्य विशेष, या—शर्वत ) का मानमर्दन करनेवाली तथा गन्नेके विषयमें स्थिरतम निन्दावाली ( दाखके पने तथा गन्नेसे बहुत ही उत्तम ) यह तुम्हारी वाणी जिस ( अमृत ) में अपने पदों ( सुप्-तिङन्तरूपपदों, पक्षा०—चरणों ) को धोनेके बाद ग्रहण ( पक्षा०—धोनेका अनुग्रह ) किया है [ अमृतमें भी अपने सुप्-तिङन्तरूप पदोंको धोकर जो तुम्हारी वाणी उच्चरित होती है, उसके माधुर्यके विषयमें क्या कहना है पक्षा०—जिस वाणीने अमृतमें अपने पैरोंको धोनेकी कृपा की है, उसके समान अमृत भला कैसे हो सकता है ? और दाख तथा गन्नेके विषयमें तो कुछ कहना ही निरर्थक है, क्योंकि तुम्हारी वाणीने दाखके पनेका मान-मर्दन तथा गन्नेको अत्यन्त अवज्ञात कर दिया है ] ॥ १४६ ॥

शोकश्चेत् कोकयोस्त्वां सुदति ! तुदति तद्व्याहराज्ञाकरस्ते
गत्वा कुल्यामनस्तं व्रजितुमनुनये भानुमेतज्जलस्थम् ।
बद्धे यद्यञ्जलावप्यतुनयविमुखः स्यान्मयैकग्रहोऽयं
दत्त्वैवाभ्यां तदम्भोऽञ्जलिमिह भवतीं पश्य मामेष्यमाणम् ॥१४७॥

शोक इति । सुदति ! हे शोभनदन्ते दमयन्ति ! कोकयोः चक्रवाकयोः, शोकः विरहजनितशुक्, त्वां भवतीम्, तुदति पीडयति, चेत् यदि, तत् तदा, व्याहर ब्रूहि, ते तव, आज्ञाकरः आदेशपालकः, अहमिति शेषः । कुल्यां क्षुद्रकृत्रिमसरितम्, गत्वा प्राप्य, एतस्याः कुल्यायाः, जलस्थं जले प्रतिबिम्बितम्, भानुं सूर्यम्, अनस्तम् अस्तगमनाभावम्, व्रजितुं प्राप्तुम्, अस्ताचलगमनाभिप्रायं परित्यक्तुमित्यर्थः । अनुनये विनयेन अभ्यर्थये, त्वयि अस्तमिते कोकयोरन्योऽन्यं वियोगः अवश्यम्भावी, अतो नास्तं व्रज इति सविनयं प्रार्थये इत्यर्थः । यदि चेत्, मया नलेन, अञ्जलौ करद्वयसंयोगे, बद्धे कृतेऽपि, एकः एकमात्रः, ग्रहः अभिनिवेशः यस्य सः तादृशः एकग्रहः एकमात्रविषये दृढनिर्बन्धपरः, निजनिर्बन्धापरित्यागीत्यर्थः । चन्द्रा-

दिपु मुख्यग्रहश्च। 'निर्बन्धोपरागार्कादयो ग्रहाः' इत्यमरः। अयं भानुः, अनुनय-विमुखः विनीतप्रार्थनायामपि पराङ्मुखः, स्यात् भवेत्, एकग्रहत्वात् मम प्रार्थनामगणयित्वा यदि अस्तमेव व्रजेदित्यर्थः। तत् तर्हि, इह अस्मिन् सायंकाले, अम्भसः जलस्य, अञ्जलिं गण्डूषम्, आभ्यां कोकाभ्यामेव, दत्त्वा प्रदाय, अनुनयाग्राहिणे सूर्याय न दत्त्वा कोकभ्यामेव क्षिप्त्वा इत्यर्थः। भवतीं त्वां प्रति, एष्यमाणं पुनः प्रत्यागमिष्यन्तम्। ईङ् गतावित्युस्य लृटः शानचि रूपम्। मां नलम्, पश्य अवलोकय। सायंसन्ध्योपासनानिमित्तं भङ्ग्या बहिर्गमनाभ्यनुज्ञां याचितवान् इति भावः॥ १४७॥

हे सुदति! यदि चकवा-चकईका (भावी विरहसे उत्पन्न) शोक तुम्हें पीडित करता है, तो कहो, तुम्हारा आज्ञाकारी मैं क्रीडानदी (नहर) को जाकर इसके जलमें स्थित (प्रतिविम्बित) सूर्यको अस्त नहीं होनेके लिए प्रार्थना करूं (कि आपके अस्त होनेसे चकवा-चकईको विरहजन्य दुःख होगा और उससे मेरी प्रिया दमयन्ती भी दुखित होगी, अत एव आप अस्त न होवें, या पुनः उदयाचलकी ओर लौट चलें); और यदि मेरे हाथ जोड़ने पर भी एक ग्रह (अत्यन्त आग्रही-महाहठी, पक्षा०—मुख्य चन्द्रादि नवग्रहोंमें प्रधान ये सूर्य) मेरी प्रार्थनाके विमुख होते हैं अर्थात् महाहठी होनेसे मेरी प्रार्थना पर ध्यान नहीं देकर यदि अस्त ही होते हैं तो उस (सूर्यके लिए दी जानेवाली) जलाञ्जलिको इन दोनों (चकवा-चकई) के लिए ही देकर तुम्हारे पास आनेवाले मुझे तुम देखो। [इस व्याजसे नल सन्ध्योपासनके लिए जानेकी अनुमति दमयन्तीसे मांगते हैं। 'सुदति' कहनेसे जब तुम बोलोगी, तब तुम्हारे सुन्दर दांतोंको देखनेसे मुझे अतिशय हर्ष होगा, यह भी नलने सूचित किया है]॥ १४७॥

तदानन्दाय त्वत्परिहसितकन्दाय भवती
निजालीनां लीनां स्थितिमिह मुहूर्त्तं मृगयताम्।
इति व्याजात् कृत्वाऽऽलिषु वलितचित्तां सहचरीं
स्वयं सोऽयं सायन्तनविधिविधित्सुर्बहिरभूत्॥ १४८॥

तदिति। हे दमयन्ति! तत् तस्मात्, तथा सूर्यानुनयस्य प्रयोजनीयत्वादित्यर्थः। भवती त्वम्, त्वत्परिहसितं तव परिहास एव, कन्दः मूलं यस्य तादृशाय, आनन्दाय प्रीत्यै, परिहासानन्दं कर्त्तुमित्यर्थः। इह प्रासादे एव, निजानाम् आत्मीयानाम्, आलीनां सखीनाम्, लीनां क्वचित् गूढाम्, स्थितिम् अवस्थानम्, मुहूर्त्तं कञ्चित् कालम्, मृगयताम् अन्विष्यतु, इति एवम्, व्याजात् छलात्, सहचरीं दमयन्तीम्, आलिषु विषये, वलितचित्ताम् आसक्तमनस्कम्, कृत्वा विधाय, सः अयं नलः, स्वयम् आत्मना, सायन्तनं विधिं सायंसन्ध्याऽग्निहोत्रादिकृत्यम्, विधित्सुः विधातुमिच्छुः सन्, बहिः तस्मात् प्रासादात् निर्गतः, अभूत्॥ १४८॥

'इस ( सूर्यकी प्रार्थना किये जाने ) कारणसे तुम्हारे परिहासके मूल ( अथवा—तुम्हारे परिहासके मूल उन ( सखियों ) के ) आनन्दके लिए तुम यहीं पर छिपी हुई अपनी सखियोंको मुहूर्त्ततक खोजो' इस प्रकार व्याज ( छल ) से दमयन्तीको अपनी सखियोंके विषयमें आसक्त ( या—चञ्चल ) चित्तवाली करके सायङ्कालकी विधि ( सन्ध्योपासनादि कर्म ) करनेके इच्छुक नल ( प्रासादसे ) बाहर हो गये ॥ १४८ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्यागादयमेकविंशगणनः काव्येऽति नव्ये कृतौ
भैमीभर्तृचरित्रवर्णनमये सर्गो निसर्गोज्ज्वलः ॥ १४९ ॥

श्रीहर्षमिति । भैमीभर्तुः नलस्य, यत् चरित्रं शीलम्, तद्वर्णनमये तत्कथनात्मके, काव्ये नव्ये नूतने, अत्र अस्मिन्, श्रीहर्षस्य कृतौ, एकविंशतिः गणना यस्य सः तादृशः अयं सर्गः अगात् समाप्तिं गतः । गतमन्यत् ॥ १४९ ॥

इति मल्लिनाथकृते 'जीवातु' समाख्यान एकविंशः सर्गः समाप्तः ॥ २१ ॥

---

कवीश्वर-समूहके"'"किया, उसके, दमयन्ती-पति ( नल ) के प्रचुर चरित्रवाले अत्यन्त नवीन रचनावाले काव्य ('नैषधचरित' नामक महाकाव्य ) में स्वभावतः"'यह इक्कीसवां सर्ग समाप्त हुआ । ( शेष व्याख्या चतुर्थसर्गवत् समझनी चाहिये ) ॥ १४९ ॥

यह 'मणिप्रभा' टीकामें 'नैषधचरित' का इक्कीसवां सर्ग समाप्त हुआ ॥ २१ ॥

---

# द्वाविंशः सर्गः।

इदानीं पूर्वसर्गान्तरप्रस्तावितं सायंकालं वर्णयिष्यन् कविर्द्वाविंशं सर्गमुपक्रमते—

उपास्य सांध्यं विधिमन्तिमाशारागेण कान्ताधरचुम्बिचेताः।
अवाप्तवान् सप्तमभूमिभागे भैमीधरं सौधमसौ धरेन्द्रः ॥ १ ॥

उपास्येति। असौ धरेन्द्रो नलः सायंसंध्याप्रान्तभवेनान्तिमाशायाः प्रतीच्या आशाया दिशो रागेण रक्तवर्णेन हेतुना कान्ताया अधरचुम्बि अधरोष्ठस्मारि चेतो यस्य तादृशः संध्यारागसदृशभैम्यधरस्मारी सन् तद्विरहासहिष्णुतया वहिरवस्थातुमशक्तो यत्र सा विद्यते तं सप्तमे भूमिभागे कक्षायां स्थितं भैम्याः धरं पर्वतरूपं सौधं हर्म्यं प्रासादस्य सप्तमीमुपकारिकामवाप्तवान्। किं कृत्वा? सांध्यं संध्यासंवन्धिनं संध्याजपादिविधिमुपास्य कृत्वा ॥ १ ॥

इस राजा (नल) ने सन्ध्याकालिक विधिको पूर्णकर पश्चिम दिशाकी लालिमासे प्रिया (दमयन्ती) के अधरका स्मरण करते हुए, दमयन्तीके प्रासादके सातवें तल (सतमहला) को प्राप्त किया ॥ १ ॥

प्रत्युद्व्रजन्त्या प्रियया विमुक्तं पर्यङ्कमङ्कस्थितसज्जशय्यम्।
अध्यास्य तामप्यधिवास्य सोऽयं संध्यामुपश्लोकयति स्म सायम् ॥ २ ॥

प्रतीति। सोऽयं नलः सायंकालसंवन्धिनीं संध्यां रात्रिदिनसंवन्धिनं मुहूर्त्तं भैम्याः पुर उपश्लोकयति स्म श्लोकैः स्तौति स्म। किं कृत्वा? प्रत्युद्व्रजन्त्या सम्मुखमागच्छन्त्या प्रियया विमुक्तम्। अङ्के मध्ये स्थिता सज्जा आस्तृता शय्या तूलिका यत्र तं पर्यङ्कमध्यास्य स्वयमधिष्ठायतां भैमीमप्यधिवास्य तत्रोपवेश्य। पर्यङ्कम्, 'अधिशीङ्—' इति कर्मत्वम्। अधिवास्य, ण्यन्ताद्वसतेर्ल्यप्। तस्य धात्वन्तरत्वात् 'उपान्वध्याङ्वसः' इति कर्मत्वाप्राप्तेस्तामधिवास्येत्यत्र सामर्थ्यात्तत्रैवेति ज्ञेयम्। उपश्लोकयति, 'सत्यापपाश—' इति णिच्। स्मयोगे भूते लट् ॥ २ ॥

ये (नल) अगवानी करती हुई प्रिया (दमयन्ती) से छोड़े गये तथा गद्दा विछाये हुए पलँगपर स्वयं बैठकर और उस (दमयन्ती) को भी बैठाकर सायङ्कालकी सन्ध्याका वर्णन श्लोकोंद्वारा करने लगे ॥ २ ॥

विलोकनेनानुगृहाण तावद्दिशं जलानामधिपस्य दारान्।
अकालि लाक्षापयसेव येयमपूरि पङ्कैरिव कुङ्कुमस्य ॥ ३ ॥

विलोकनेनेति। हे प्रिये! त्वं जलानामधिपस्य वरुणस्य दारान् भार्यां पश्चिमां दिशं विलोकनेनानुगृहाण कृतार्थीकुरु, तावदादौ विलोकनेनानुगृहाण, वर्णनया तु पश्चादित्यर्थः। यावच्चन्द्रोदयादिना प्राच्यां रामणीयकं भवति तावत्संध्यारागेण कृतरामणीयकां पश्चिमां दिशं विलोकयेति वा 'तावत्'शब्दार्थः। जडाधिपस्य च भार्या

दुःखिता विलोकनादिनाऽनुग्रहीतुमर्हा भवतीत्युक्तिः । येयं पश्चिमा दिक् लाक्षापयसालक्तकरसेन कृत्वा केनाप्यक्षालीव क्षालितेव। तथा-कुङ्कुमस्य पङ्कैः कृत्वा केनाप्यपूरीव पूरितेव । एवंविधा रक्ता दृश्यते, यतस्तस्माद्रमणीयामेतां विलोकयेत्यर्थः ॥ ३ ॥

'( हे प्रिये ! ) जलाधिप ( वरुण ) की स्त्रीरूपिणी दिशा अर्थात् पश्चिम दिशाको अच्छी तरह देखनेसे अनुगृहीत करो ( अथवा—पहले देखनेसे और बादमें वर्णन करनेसे अनुगृहीत करो, अथवा—तबतक देखनेसे अनुगृहीत करो, जब तक चन्द्रोदय होनेसे इसको अरुणिमाका सौन्दर्य नष्ट नहीं होता ); जिस (पश्चिम दिशा ) को ( किसीने ) लाक्षारससे मानो धो दिया है तथा कुङ्कुमके पङ्कोंसे परिपूर्ण कर दिया है। ( पक्षा०—'ड' तथा 'ल' का अभेद मानकर 'जडाधिप' अर्थात् अतिशय जडकी स्त्रीको देखनेसे अनुगृहीत करो, क्योंकि अतिशय जडकी स्त्रीको देखकर अनुगृहीत करना उचित है ) ॥ ३ ॥

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य संध्यारजोराजिरिहोज्जिहीते ॥ ४ ॥

उच्चैरिति । हे प्रिये ! रविरेव गैरिकाख्यधातुविशेषसंबन्धी गण्डशैलः उच्चतरादत्युन्नतादम्बरशैलस्य गगनगिरेर्मौलेः शिखरात्सकाशाच्च्युतः पतितः स्थूलपाषाण एवाधः पतितः; अथ च,—संनिहितः, पातेनोच्चतरगिरिशिखरादधःपतनेन हेतुना विचूर्णितस्य विशेषेण सूक्ष्मचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य संबन्धिनी संध्यैव रजोराजिः, संध्यासंबन्धी राग इत्यर्थः। इह सायंकाले पश्चिमदिशि वा उज्जिहीते उपरिष्टात्प्रसरति। अस्तसमये सूर्यस्य रक्तत्वाद्गगनगिरिशिखराच्च्युतत्वाच्च गैरिकगण्डशैलत्वम् । उच्चतरात्प्रदेशात्पतितो गण्डशैलश्चूर्णीभवति, चूर्णीभूतस्य च रजोराजिरूर्ध्वं प्रसरति, तद्रजोराजिरेव संध्यारागः प्रायेणोर्ध्वं प्रसरतीत्यर्थः ॥ ४ ॥

गेरूका चट्टानरूपी यह सूर्य अत्यन्त ऊँचे आकाशरूपी पर्वतके शिखरसे गिर पड़ा है और गिरनेसे अत्यन्त चूर्ण ( चकनाचूर ) हुए उसीका सन्ध्यारूपी धूलि-समूह यहां ( पश्चिम दिशामें ) उड़ रहा है । [ सायङ्कालमें सूर्यको रक्तवर्ण होनेसे गेरुके चट्टानकी तथा आकाशको अत्युन्नत पर्वतकी कल्पना की गयी है । ऊँचे स्थानसे गिरे हुए चट्टानका चकनाचूर होना और उसके धूलि-समूहका ऊपरको उड़ना उचित ही है ] ॥ ४ ॥

अस्ताद्रिचूडालयपक्कणालिच्छेकस्य किं कुक्कुटपेटकस्य ।
यामान्तकूजोल्लसितैः शिखौघैर्दिग्वारुणी द्रागरुणीकृतेयम् ॥ ५ ॥

अस्तेति । हे प्रिये ! कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दितं तद्वशादुल्लसितैः प्रकाशमानैः किंचिदुच्चीभूतैरुत्फुल्लजपाकुसुमतुल्यैः शिखानां शिरसि रक्तचर्ममयकेसराणामोघैर्वृन्दैः किमियं वारुणी दिक् द्राक् अकस्मादरुणीकृता रक्तीकृता । उत्प्रेक्षा । किंभूतस्य ? अस्ताद्रेश्चूडा शिखरं सैवालयः स्थानं यस्य स पक्कणः शबरगृहं तस्यालिः समूहस्तत्र च्छेकस्यासक्तस्य शबरैर्गृहेषु संगृहीतस्य। कुक्कु-

टानां कूजनेनोन्नमितशिखरत्वं जातिः। ते च यामान्ते कूजन्ति। सायंसमये कूजनादु-त्फुल्लशिखावृन्दसंबन्धादरुणीभवनसंभवार्थं यामान्तेत्याद्युक्तम्। 'पक्कणः शबरालयः', 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृहकाश्च ते' इत्यमरः। 'पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके' इति विश्वः॥ ५॥

अस्ताचलके शिखरपर स्थित शबर-गृहसमूहोंमें पाले गये मुर्गोंके समूहोंके सायङ्कालमें कूजने ( शब्द करने ) से ऊपर उठे हुए ( चर्ममय रक्तवर्ण ) शिखा-समूहोंने इस पश्चिम दिशाको एकाएक लाल कर दिया है क्या? [ बोलते समय मुर्गोंका ऊपर शिर उठाना स्वभाव होता है ]॥ ५॥

पश्य द्रुतास्तंगतसूर्यनिर्यत्करावलीहैङ्गुलवेत्रयात्र।
निषिध्यमानाहनि संध्ययापि रात्रिप्रतीहारपदेऽधिकारम्॥ ६॥

पश्येति। संध्यया अत्र सायंसमये चन्द्रस्य नायिकाया रात्रेः संबन्धिनः प्रतीहारस्य दौवारिकस्य पदे अधिकारमास्पदमपि पश्य विलोकय। किंभूतया? द्रुतं शीघ्रमस्तंगतस्य सूर्यस्य निर्यती बहिर्निर्गच्छन्ती करावली किरणपरम्परैव हैङ्गुलं हिङ्गुलाख्येन रञ्जकरक्तद्रव्यविशेषेण रक्तं वेत्रं दण्डविशेषो यस्यास्तया। किंभूते पदे? निषिध्यमानं निवार्यमाणप्रवेशमहो दिनं यस्मिन्। स्त्रिया हि दौवारिकी स्त्र्येव युक्तेति संध्यैव रात्रेर्दौवारिकी जातेत्यर्थः। सूर्योऽस्तमितः, दिनं गतम्; रात्रिरागता, इति सायंसंध्यया ज्ञाप्यत इति भावः। दौवारिक्यपि हैङ्गुलवेत्रपाणिः सती प्रविशन्तं कमपि प्रतिषेधयति। 'तिर्यक्करा—' इति तिर्यञ्चस्तिरःप्रसारिणश्च ते कराश्चेति। अहनीत्यत्र तत्पुरुषत्वाभावाट्टजभावः॥ ६॥

शीघ्र ( अभी ) अस्त हुए सूर्यसे निकलते हुए किरण-समूहरूपी हिङ्गुलसे रंगे हुए बेंत ( की छड़ी ) वाली सन्ध्याके द्वारा रोका जा रहा है दिन जिसमें, ऐसे रात्रिके द्वारपालके पदपर अधिकारको देखो। [ स्त्रीका द्वारपाल स्त्रीको ही होना उचित होनेसे रात्रिने सन्ध्याको द्वारपाल बनाया है, तथा लालरंगकी छड़ीवाली वह सन्ध्या दिनरूप परपुरुषको चन्द्रमाकी नायिका रात्रिके पास आनेसे निषेध करती हुई अपना अधिकार पालन कर रही है। सूर्यास्त हो गया, दिन बीत गया, रात आ गयी, यह सब सायङ्कालकी सन्ध्यासे ज्ञात हो रहा है ]॥ ६॥

इदानीं संध्यानक्षत्रसंयोगं वर्णयति—

महानटः किं नु सभानुरागे संध्याय संध्यां कुनटीमपीशाम्।
तनोति तन्वा वियतापि तारश्रेणिस्रजा सांप्रतमङ्ग!-हारम्॥ ७॥

महानट इति। अङ्ग! हे भैमि! महान् संध्योपासनादिविषयेऽतिप्रशस्तः, तथा,—अटति गच्छतीत्येवंभूतः कालः स प्रकृतः सायंतनः, यद्वा,—महान्परमेश्वरो नटो नर्तको यस्मिन्। संध्याकाले हीश्वरो नृत्यति। स प्रकृतः सायंसंध्यासमयो भानोः

सूर्यस्य रागे लोहितिमनि सति अस्तमयानन्तरं सूर्यस्य रागमात्रेऽवशिष्टे सति संध्याकान्ति किंचित्पीतरक्तवर्णत्वात्कुनटीं 'नेपाली कुनटी गोला' इत्याद्यभिधानात् मनःशिलारूपाम्, तथा,—ईशामपि स्वकालस्वामिनीं च, अथ च,—पितृप्रसूरूपत्वाद्ब्रह्मतनुत्वाद्देवतारूपाम्, अथ च,—समृद्धिमतीं संध्याय सम्यग्विचिन्त्य सांप्रतमिदानीं तन्वा किंचिदुद्गततया संध्यारागतिरोहितकान्तितया वा कृशया किंचिद्दृश्यया। तथा,—वियतापि गगनरूपया लक्षणया यावद्गगनं विस्तीर्णया, यद्वा,—आ सामस्त्येन व्याप्तं वियद्यया गगनव्यापिन्या च, तारश्रेण्या नक्षत्रपरम्परारूपया स्रजा पुष्पादिमालया हारं तनोति विरचयति किं नु। यद्वा,—ताराणां शुद्धमौक्तिकानां श्रेणिर्यत्र तादृश्या ग्रथितमौक्तिकया मालया हारविरचनं युक्तमिति संध्याकालः संध्यामेवंविधां संचिन्त्य नक्षत्रपरम्परामेव हारं विरचयति किमित्यर्थः। संध्यारागः कियानवशिष्टोऽस्ति, मुक्तातुल्यानि नक्षत्राणि च किंचिद्दृश्यानि जातानीति भावः। तन्दा तारश्रेणिस्रजोपलक्षितेन तद्युक्तेन वियता गगनेनैव हारं तनोतीति वा। संध्यामेवंविधां विज्ञाय तूष्णींभूत इति न किंत्वौचित्याद्विशिष्टया तारश्रेणिस्रजा हारमपि विरचयतीत्यर्थ इति वा 'अपि' शब्दार्थः। अथ च,—स प्रसिद्धो महानद्स्ताण्डवनृत्तकर्ता शिवो भानोः सूर्यस्य रागे सति, अस्तमितार्धे सूर्ये सतीति यावत्। तत्र संध्यासमये मनःशिलातुल्यवर्णामचिरस्थास्नुत्वात्कुत्सितनर्तकीरूपां वा ईशां देवीं संध्यां सम्यध्यात्वा सायंसंध्यावन्दनं कृत्वाऽष्टासु मूर्तिषु मध्ये तारापरम्परैव माला यस्यां तया गगनरूपयापि अमूर्तयापि मूर्त्या कृत्वा इदानीं संध्यावन्दनानन्तरमङ्गहारं सुखकरपार्श्वाद्यङ्गानां समतालमानं विक्षेपं करोति किंन्विति वितर्कः। अमूर्तस्याङ्गहारकरणं चित्रमिति विरोधार्थः 'अपि'शब्दः। न केवलं चन्द्रसर्पभोगादिभूषितयैव तन्वाङ्गहारं करोति, किन्तु वियतापि तन्वेति समुच्चयार्थो वा। ईश्वरो हि सायंसमये नृत्यति। भानुरागे मनःशिलातुल्यवर्णां संध्यामपीशां स्वसहचरीं पार्वतीं विचिन्त्य विशिष्टया वियद्रूपयापि तन्वाङ्गहारं तनोति। पार्वतीसमीपेऽपीश्वरो नृत्यति॥ अथ च,—महानतिप्रवीणो नटः कुत्सितां नटीं नृत्तेऽनतिचतुरामपि संध्यां वयःसंधौ वर्तमानां तरुणीं रसभावसंधौ वर्तमानां वा रसभावज्ञाम्, अत एव—सभाया अनुरागे ईशां सभ्यानुरागजनेन समर्थां संचिन्त्य वियत्तत्यया अतिविशालया शुद्धमौक्तिकपरम्परारूपया मालयोपलक्षितया तन्वाङ्गहारं तनोति तदसांप्रतं किम्? अपि तु—रसभावादि जनयन्त्या तया सभ्यानुरागे समुत्पादितेऽपि नृत्तकर्मकौशलेनापि सभ्यानुरागार्थं स्वयमङ्गहारं तनोतीति युक्तमेवेत्यर्थः॥ अथ च,—महान्नर्तको वयःसंधौ रसादिसंधौ वा वर्तमानां तथा समृद्धिमतीमपि स्त्रियं कुत्सितां नटीं नृत्तानभिज्ञां ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहारं तनोति तदसांप्रतं किं नु, अपि तु तस्या नृत्यकौशलाभावान्नृत्तेन सभानुरञ्जने सामर्थ्याभावात्सभानुरञ्जनार्थं स्वयमेव निपुणं नृत्यतीति युक्तमेवेत्यर्थः॥ अथ च,—अन्योऽपि महानतिसमृ-

द्धोऽटति सर्वत्र गच्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो विटः कुनटीमपि नृत्तविद्यायामचतुरामपि भया कायकान्त्या कृत्वा योऽनुरागस्तद्विषये ईशां सौन्दर्यातिशयेनैव रागमुत्पादयन्तीम्, तथा,-शैशवतारुण्ययोः संधौ वर्तमानां प्रादुर्भूतयौवनां रसभावसंधिस्थत्वाद्रसभावज्ञां वा संचिन्त्य कायकान्त्यानुरागे सति कुनटीमपि तरुणीं रसभावज्ञां वा तथेशां संपन्नां च विचिन्त्य तदीयशरीरस्यातिविस्तृततया शुद्धमौक्तिकमालया हारं विरचयति, तत्रानुरक्तः संस्तस्यै मुक्ताहारं वितरतीत्यर्थः। एवमन्या अपि योजनाः सुधियोहनीयाः। 'सभानुरागैः संधाय' इति पाठो वहुषु पुस्तकेष्वदृष्टत्वादुपेक्ष्यः। अटः, पचाद्यच्। संध्याम्, दिगादित्वाद्यत्। 'तार'शब्दस्य नक्षत्रकनीनिकाभिधायित्वं दशमसर्ग एवोक्तम् ॥ ७ ॥

( इस समय सन्ध्या तथा नक्षत्रोंके योगका वर्णन करते हैं— ) वे महानट ( नृत्य करनेमें सुप्रसिद्ध शिवजी ) मैनशिलरूपिणी अर्थात् मैनसिलके समान लाल सन्ध्या ( सायङ्काल ) को सूर्यकी लालिमा ( उत्पन्न करने ) में समर्थ जानकर अर्थात् सूर्यको लाल करनेवाली यह सन्ध्याकाल ही आ गया है ऐसा निश्चितकर तारासमूह ही है माला जिसमें ऐसे आकाशात्मक शरीरसे इस समय ( नृत्त-कालमें ) अङ्गहार ( शरीरका सञ्चालनादि ) करते हैं क्या ? [ यहां आठ मूर्तियोंवाले शिवजीकी 'आकाश' को भी अन्यतम मूर्त्ति होनेसे उसका अङ्गहार करना कहा गया है। यद्यपि 'आकाश' अमूर्तपदार्थ है, तथापि शिवजीकी आठ मूर्तियोंके अन्तर्गत होनेसे उससे अङ्गहार करनेमें कोई विरोध नहीं समझना चाहिये ]। अथ च—नृत्यमें चतुर कोई व्यक्ति वाल्य-तरुण्यरूप अवस्थाके सन्धि ( मध्य ) में वर्तमान कुनटी ( नृत्यकलामें अनभिज्ञ ) को भी सभा ( में उपस्थित दर्शकों ) के अनुराग ( उत्पन्न करने ) में समर्थ मानकर विशाल मुक्तासमूहकी मालावाले आकाशवत् विशाल शरीरसे इस समय अङ्गहार ( नृत्य-विशेषमें शरीरका सञ्चालन ) करता है क्या ? अथच—महान् अर्थात् सन्ध्योपासनादि कर्ममें श्रेष्ठतम तथा गमनशील ( अथवा—( सायङ्कालमें शिवजीको नृत्य करनेका नियम होनेसे ) महान् अर्थात् शिवजी हैं नट (नृत्यकर्त्ता) जिसमें ऐसा ) वह सन्ध्याकाल सूर्यकी लालिमा होनेपर अर्थात् सूर्यकी लालिमाके कुछ-कुछ अवशिष्ट रहनेपर सन्ध्याशोभाको मैनशिलरूपिणी, अपने समयकी स्वामिनी ( या—देवतारूपिणी, या—समृद्धिशालिनी ) निश्चितकर थोड़ी-थोड़ी दृश्यमान, आकाशतक फैली हुई ( अथवा—सब ओर आकाशमें विस्तीर्ण ) नक्षत्र-श्रेणिरूपिणी मालासे हार वनता है क्या ? ( अथवा—गुथे गये शुद्ध मोतियोंकी मालासे हार वनाना युक्त समझकर सन्ध्याकाल नक्षत्र-समूहरूपी हार वना रहा है क्या ?, अर्थात् सन्ध्याकालकी लालिमा कुछ-कुछ अवशिष्ट रह गयी है और नक्षत्र-समूह मोतियोंके तुल्य कुछ-कुछ दृष्टिगोचर होने लगे )। अथच—वह ( प्रसिद्धतम ) महानट ( शिवजी ) सूर्यकी लालिमा रहनेपर मैनसिलके समान अरुणवर्ण ( अथवा—( अस्थिर कान्ति होनेसे तुच्छ नर्तकीके समान ) सन्ध्याका सम्यक् ध्यानकर अर्थात् सन्ध्योपासन कर्म समाप्तकर ( अपनी आठ मूर्तियोंमेंसे ) तारा-समूहरूप

मालावाली आकाशरूपिणी ( अमूर्त भी ) मूर्तिसे इस समय ( सन्ध्योपासन कर्म समाप्त करनेके बाद ) अङ्गहार ( मुख, हाथ आदि अङ्गोंका सञ्चालन ) करते हैं क्या ? । ( अथवा— केवल चन्द्र, सर्प तथा चर्मादिसे भूषित शरीरसे ही अङ्गहार नहीं करते हैं ? अपितु अपनी आठ मूर्तियोंमेंसे आकाशमूर्तिसे भी अङ्गहार करते हैं ) । अथच—चतुर नट बाल्य-तारुण्यरूप वयः-सन्धि ( या—रसादि-सन्धि ) में स्थित, समृद्धियुक्त भी स्त्रीको नृत्यकलामें अनभिज्ञ जानकर सभाके अनुरागमें विशिष्ट ( अपने ) शरीरसे अङ्गहार करता है, यह असाम्प्रत ( अयोग्य ) है क्या ? अर्थात् नहीं, ( क्योंकि नृत्यकलाको नहीं जाननेवाली वैसे कुनटीसे सभानुरञ्जन होना असम्भव जानकर उसका स्वयमेव अङ्गहार करना सर्वथा उचित ही है ) । अथच—अतिशय चञ्चल ( कोई विट ) नृत्यकलामें अचतुर भी किसी स्त्रीको शरीर-सौन्दर्यसे अनुरागोत्पादनमें समर्थ तथा बाल्य-तारुण्यरूप वयः-सन्धिमें वर्तमान अर्थात् युवावस्थामें प्रवेश करती हुई जानकर उसके शरीरके अतिशय विस्तृत होनेसे श्रेष्ठ मुक्ता-समूहकी मालासे हार बनाता है अर्थात् उसमें अनुरक्त होकर उसे हार देता है । अथच—चतुर नर्तक, बाल्य-तारुण्यरूप वयः-सन्धिमें वर्तमान कुनटी ( पृथ्वीमें प्रसिद्ध नटी ) अर्थात् लोकप्रसिद्ध नर्तकीको सभाके अनुराग उत्पन्न करनेमें समर्थ जानकर भी अतिशय बड़े श्रेष्ठमुक्तासमूहकी मालाको पहने हुए स्वशरीरसे जो अङ्गहार करता है, वह उचित है क्या ? अर्थात् नहीं उचित है, ( क्योंकि नर्तकीके नृत्यके अवसरमें उसका नृत्य करना सभासदोंको यथायोग्य अनुरञ्जन नहीं करनेसे अनुचित ही है ) ॥ ७ ॥

**भूषास्थिदाम्नस्त्रुटितस्य नाट्यात्पश्योडुकोटीकपटं वहद्भिः ।**
**दिङ्मण्डलं मण्डयतीह खण्डैः सायंनटस्तारकराट्किरीटः ॥ ८ ॥**

**भूषेति । हे भैमि ! तारकराट् चन्द्रः किरीटो यस्य स शंभुः सायं नटतीति सायंनटो नर्तक उद्धतान्नाट्यनृत्ताद्धेतोस्त्रुटितस्य भूषास्थ्नां दाम्नो मालाया उच्छलितैः खण्डैः शकलैस्तैरेव उडुकोटीकपटं कोटिसंख्यनक्षत्रव्याजं वहद्भिर्धारयद्भिः सद्भिरिह सायंसमये दिङ्मण्डलं मण्डयति पश्य । एतानि नक्षत्राणि न, किंतु ताण्डवत्रुटितास्थिमालोच्छलच्छकलान्येव दिक्षु शोभन्त इत्यर्थः । अन्योऽपि चन्द्रतुल्यकिरीटो नृत्यंस्त्रुटितहारखण्डैः स्त्रीवृन्दं मण्डयति । 'मण्डयतीव' इति पाठे—उत्प्रेक्षा ॥ ८ ॥**

( हे प्रिये दमयन्ति ! ) चन्द्रमुकुट एवं सायङ्कालके नट शिवजी ( अत्युद्धत ) नृत्य करनेसे टूटे हुए तथा करोड़ों ताराओंके कपटको धारण करनेवाले भूषणभूत अस्थिमालाके टुकड़ोंसे इस सायङ्कालमें दिक्समूहको अलङ्कृत करते हैं, देखो । [ ये करोड़ों नक्षत्र नहीं है, किन्तु उद्धृत ताण्डव नृत्यमें टूटी हुई शिवजीकी भूषणभूत अस्थिमालाके टुकड़े हैं । लोकमें भी चन्द्रतुल्य मुकुट पहनकर नाचता हुआ कोई व्यक्ति टूटे हुए हारके टुकड़ोंसे स्त्री-समूहको अलंकृत करता है ] ॥ ८ ॥

कालः किरातः स्फुटपद्मकस्य वधं व्यधाद्यस्य दिनद्विपस्य।
तस्यैव संध्या रुचिरास्रधारा ताराश्च कुम्भस्थलमौक्तिकानि ॥ ९ ॥

काल इति। हे प्रिये! कालः संध्यासमय एव किरातः, अथ च,—कृष्णवर्णो हिंसकत्वान्मृत्युरूपो वा कालो गिरिमहारण्यसंचारी शबरः स्फुटानि विकसितानि पद्मानि यस्मिन्। यद्वा,—विकसितकमलं कं जलं यस्मिन्, अथ च,—प्रकटीभूतं शुण्डादण्डाग्रे प्रकाशमानं पद्मकं रक्तबिन्दुवृन्दं यस्मिंस्तादृशस्य दिनरूपस्य द्विपस्य वधं व्यधादकरोत्। तस्यैव हतस्य करिणो रुचिरा रम्या संध्यास्रधारा रुचिरधारा। ताराश्च नक्षत्राणि विदारिततदीयकुम्भस्थलमौक्तिकानि। संध्यारागो रक्तधारा ताराश्च स्थूलमुक्ता इव शोभन्त इत्यर्थः। स्फुटपद्मकस्येति बहुव्रीहौ कप् ॥ ९ ॥

सन्ध्यासमय (पक्षा०—मृत्युरूप, या-कृष्णवर्ण) किरात विकसित कमलवाले (जिसमें कमल-पुष्प विकसित हो रहे थे ऐसे, या—जिसमें कमल-पुष्प विकसित हो रहे थे ऐसा जल है जिसमें ऐसे; पक्षा०—(शुण्डादण्डपर) स्पष्ट दृष्टिगोचर हो रहे थे पद्माकार चिह्न-विशेष जिसके ऐसे) जिस दिनरूपी हाथीका वध किया (दिनका अपसारण किया तथा हाथीको मारा); सन्ध्या (अरुणवर्ण यह सायङ्काल) उसी दिनरूपी हाथीकी रमणीय रक्त-धारा है तथा नक्षत्र (उस दिनरूपी हाथीके कुम्भस्थ) गजमुक्ताएं हैं ॥ ९ ॥

संध्यासरागः ककुभो विभागः शिवाविवाहे विभुनायमेव।
दिग्वाससा पूर्वमवैमि पुष्पसिन्दूरिकापर्वणि पर्यधायि ॥ १० ॥

संध्येति। विभुना प्रभुणा हरेण पूर्वं शिवायाः पार्वत्या विवाहावसरे संध्यया सरागो रक्तवर्णोऽयमेव ककुभः पश्चिमाशाया विभागः प्रदेशः पुष्पवर्णयुक्ता सिन्दूरिका रक्तवस्त्रं तत्संबन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्वण्युत्सवे पर्यधायि परिहितः। यतो दिग्वलयमेव वासो यस्य तेन रक्तवस्त्रपरिधानावसरेऽपि दिग्वाससा औचित्याद्रक्तदिग्भाग एव परिहित इत्यवैमि शङ्के। विवाहस्य चतुर्थे दिने प्रथमदिन-परिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्वणि कौसुम्भादिरक्त-वस्त्राणि वधूवरेण परिधीयन्त इति वृद्धाचारः। तत्रेशस्य दिग्वसनत्वाद्रक्तपश्चिमभाग एवानेन परिहित इत्यर्थः। वर्णकभूतपुष्पस्थाने ताराः, सिन्दूरिकास्थाने संध्या-सरागः पश्चिमदिग्भाग इति भावः ॥ १० ॥

स्वामी दिगम्बर (भगवान् शङ्करजी) ने पहले पार्वतीके विवाहमें 'पुष्पसिन्दूरिका' नामक उत्सवके दिन सन्ध्यासे रक्तवर्ण इसी दिशाके हिस्से (पश्चिम दिशा) को पहना था, ऐसा मैं जानता हुं। [कुसुम्भादिके पुष्प तथा सिन्दूरसे रंगे हुए वस्त्रको वधू-वर विवाहसे चौथे दिन पहनते तथा विवाह-समयमें पहने गये वस्त्रको धोनेके लिए उतार देते हैं, उसीको 'पुष्पसिन्दूरिका' पर्व कहते हैं। प्रकृतमें भगवान् शङ्करजीने पार्वतीके साथ विवाह होनेके चौथे दिन उक्त पर्वके आनेपर स्वयं दिगम्बर होनेसे मानो पुष्पसिन्दूरसे रंगनेसे

रक्तवर्ण इसी पश्चिम दिशाको वस्त्ररूपमें धारण किया। ताराओंको रंगनेवाला पुष्प, सन्ध्या की लालिमाको सिन्दूर तथा पश्चिम दिशाके हिस्सेको वस्त्र समझना चाहिये ]॥ १०॥

प्रातःसायंसंध्ययोः प्राचीप्रतीच्योर्द्वयोरपि तुल्यवर्णत्वात्सायंसंध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकात्वं कथं वर्ण्यत इत्याक्षेपे तत्परिहारार्थं प्राच्या अपि तद्भावमाह—

सतीमुमाद्वहता च पुष्पसिन्दूरिकार्थं वसने सुनेत्रे!।
दिशौ द्विसंधीमभि रागशोभे दिग्वाससोभे किमलम्भिषाताम्॥ ११॥

सतीमिति। हे सुनेत्रे! सतीं दाक्षायणीमुमां पार्वतीं चोद्वहता परिणयता दिग्वाससा हरेण पूर्वोक्तपुष्पसिन्दूरिकार्थं द्विसंधीं अभि द्वे अपि प्रातःसायंसंध्ये लक्षीकृत्य द्वे प्राचीप्रतीच्यौ दिशावेव रागेण रक्तवर्णेन शोभा ययोस्ते, रक्तवर्णेन शोभेत इति वा, तादृशे रक्ते उभे द्वे वसने अलम्भिषातां प्राप्ते किम्? 'विवाहद्वये संध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वाद्रक्तवस्त्रद्वयं शिवेन लब्धम्' इत्यहं मन्य इत्यर्थः। शिवेन द्वे दिशावेव वस्त्रे द्वे संध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्मभूते ते प्रापिते किम्? विवाहे वस्त्रं रञ्जनाय कस्यचित्करे समर्प्यते तस्माच्छिवेन दिग्वलयरूपे मम द्वे वस्त्रे भवतीभ्यां रक्तशोभे प्रापणीये इति संध्याद्वयमाज्ञप्तं सदिग्द्वयं रक्तशोभं चकारेत्यर्थ इति वा। 'सुनेत्रि' इति पाठे—'असंयोगोपधात्' इति निषेधान्ङीप् चिन्त्यः। द्विसंधीम्, समाहारद्विगोरेकत्वे 'अबान्तो वा' इति स्त्रीत्वे च 'द्विगोः' इति ङीपि 'संध्या' शब्दस्य तद्धितयदन्तत्वात् 'हलस्तद्धितस्य' इति यलोपः। 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। गत्यर्थत्वादणौ कर्तुर्णौ कर्मत्वं पक्षे॥ ११॥

हे सुलोचने (दमयन्ती)! सती (दक्षकन्या) तथा पार्वतीके साथ विवाह करते हुए दिगम्बर (शङ्करजी) ने दोनों (प्रातःकाल तथा सायङ्कालकी) सन्ध्याओंको लक्षितकर लाल शोभावाले (पूर्व तथा पश्चिम दिशारूप) दो वस्त्रोंको 'पुष्पसिन्दूरिका' नामक व्रतके लिये (श्वशुर दक्षप्रजापति तथा हिमालयसे) प्राप्त किया था क्या? (अथवा—········ शङ्करजीने 'पुष्पसिन्दूरिका' व्रतके लिये पूर्व-पश्चिम दिशारूप दो वस्त्रोंको (रंगनेके लिए) दोनों (प्रातःकाल तथा सायंकालकी) सन्ध्याओंको प्राप्त कराया (दिया) था क्या?)। [प्रथम अर्थमें—शङ्करजीको दिगम्बर होनेसे उनके लिये दिशारूप वस्त्र ही देना उचित समझकर श्वसुरने भी 'पुष्पसिन्दूरिका' व्रतके लिए दोनों सन्ध्याओंको लक्ष्यकर पूर्व-पश्चिमरूप दो दिशाओंको ही वस्त्ररूपमें दिया था। द्वितीय अर्थमें—जिस प्रकार किसीको कोई वस्त्र रंगनेके लिए कोई व्यक्ति देता है, उसी प्रकार शङ्करजीने भी 'पुष्पसिन्दूरिका' व्रतमें रंगे हुए लाल वस्त्रोंको पहननेका नियम होनेसे पूर्व-पश्चिम दिशारूप दो वस्त्रोंको लाल रंगनेके लिए दोनों सन्ध्याओंको दिया था ]॥ ११॥

आदाय दण्डं सकलासु दिक्षु योऽयं परिभ्राम्यति भानुभिक्षुः ।
अब्धौ निमज्जन्निव तापसोऽयं संध्याभ्रकाषायमधत्त सायम् ॥ १२ ॥

आदायेति । योऽयं भानुरेव भिक्षुः परिव्राट् दण्डं पारिपार्श्विकमेव वैणवयष्टिमादाय सकलासु दिक्षु परिभ्राम्यति सोऽयं तापसः परिव्राट् सायंकाले अब्धौ निमज्जन् पातालं प्रविशन्, अथ च—बहुजले जलाशये स्नानं कुर्वन् संध्यायामभ्रं गगनं तदेव कषायरक्तं वस्त्रमधत्तेव उपरि स्वस्योर्ध्वभागे, अथ च,—उच्चतटस्योपरि दण्डस्योपरि वा निजमस्तकोपरि वा धृतवानिव । एवं यतिरपि बहुकालावस्थानस्य निषिद्धत्वादुक्तलक्षणः सन् परिभ्रमणे कषायं वस्त्रं धारयति, काषायमिव संध्या शोभते इत्यर्थः । 'माठरः पिङ्गलो दण्डश्चाण्डांशोः पारिपार्श्विकाः', 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः । काषायम्, 'तेन रक्तम्—' इत्यण् ॥ १२ ॥

जो यह सूर्यरूपी भिक्षु अर्थात् संन्यासी दण्ड (बांसका दण्ड, पक्षा०—'दण्ड' नामक पारिपार्श्विक) को लेकर सम्पूर्ण दिशाओंमें घूमता है, वह (सूर्यरूप) यह तपस्वी अर्थात् संन्यासी सायङ्कालमें समुद्र (पक्षा०—समुद्रवत् अगाध जलवाले जलाशयादि) में डूबता (अस्त होता, पक्षा०—स्नान करता) हुआ-सा सन्ध्याके (रक्तवर्ण) आकाशरूप काषाय (गेरुआ) वस्त्र धारण करता है ॥ १२ ॥

अस्ताचलेऽस्मिन्निकषोपलाभे संध्याकषोल्लेखपरीक्षितो यः ।
विक्रीय तं हेलिहिरण्यपिण्डं तारावराटानियमादित द्यौः ॥ १३ ॥

अस्तेति । यः सूर्यः अस्मिन्प्रतीच्यां वर्तमाने निकषोपलाभे सुवर्णपरीक्षापाषाणतुल्येऽस्ताचले संध्याराग एव कषोल्लेखः घर्षणोल्लेखस्तेन परीक्षितः । इयं द्यौस्तं हेलिं सूर्यमेव हिरण्यपिण्डं विक्रीय विनिमयेन कस्मैचिद्दत्त्वा तारारूपान्वराटान् कपर्दकानादित जग्राह । उत्तमं सुवर्णं रक्तपीतं भवति । तथा च रक्तपीतसुवर्णगोलकस्य निकषपरीक्षितसुवर्णरेखेव संध्या दृश्यते, ताराश्च वराटा इव दृश्यन्त इत्यर्थः । 'द्यौः' इति लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीलिङ्गनिर्देशः । स्त्री हि सुवर्णं दत्वा मूर्खतया वराटकान्गृह्णाति, धूर्तेन वञ्च्यते च । वराटकव्यवहारे देशे सुवर्णमपि दत्वा वराटका एव गृह्यन्ते ॥ १३ ॥

कसौटीके पत्थरके समान इस अस्ताचलपर सन्ध्या (सायंकालकी लालिमा) रूप घर्षणरेखासे जिस (सूर्यरूप सुवर्णपिण्ड) की परीक्षा की गयी, उस सूर्यरूपी सुवर्णपिण्डको बेचकर यह द्यौ अर्थात् आकाश तारारूपी कौड़ियोंको लिया । [जिस प्रकार कोई मूर्खा स्त्री कसौटीके पत्थरपर घिसकर परीक्षित सुवर्णपिण्डको कौड़ियोंको लेकर किसी चतुर व्यक्तिके लिए बेच देती है, उसी प्रकार आकाशने तारारूप कौड़ियोंको लेकर निकषरूप अस्ताचलपर सुपरिक्षित सूर्यरूप सुवर्णपिण्डको किसीके हाथ बेच दिया है। अथवा—जहांपर रुपयेके स्थानमें कौड़ियोंका व्यवहार होता है, वहांपर सुवर्णको बेचकर कौड़ियोंका

लेना उचित ही है। रक्तवर्ण सूर्य अस्त हो गया, कसौटीपर घिसे गये सुवर्णपिण्डकी रेखाके समान सन्ध्या पीतारुणवर्ण हो गयी। आकाशमें ताराएं कौड़ियोंके समान दिखलाई पड़ने लगीं ] ॥ १३ ॥

पचेलिमं दाडिममर्कबिम्बमुत्तार्य संध्या त्वगिवोज्झितास्य ।
तारामयं बीजभुजादसीयं कालेन निष्ठ्यूतमिवास्थियूथम् ॥ १४ ॥

पचेलिममिति । दाडिमबीजभुजा कालेन रक्तमर्कबिम्बमेव पचेलिमं तरोः पर्येव स्वयं पक्कं दाडिमं फलमुत्तार्य गगनतरोस्त्रोटयित्वा बीजग्रहणार्थं भित्वा वा संध्यारुचिस्त्वगिव अस्य दाडिमस्य पक्कत्वाद्रक्तकृत्तिरिवोज्झिता परित्यक्ता। तद्बीजभक्षणार्थमुपरितनबीजकोशवत्संध्या पृथक्कृता। तथा,—बीजभक्षणानन्तरं तारामयं तारारूपमदसीयममुष्य दाडिमस्य अमीषां बीजानां वा, संबन्धि अस्थ्नां बीजमध्यस्थश्वेतकणानां यूथं वृन्दं निष्ठ्यूतमिवोद्गीर्णमिव बीजानि भक्षयित्वा गृहीतरसं तदन्तर्गतश्वेतकणवृन्दं पुनस्थूत्कृतमिव। न हि कालादन्य सूर्यदाडिमं भक्षितुं समर्थः। अन्योऽपि दाडिममुत्तार्य तत्त्वचं परित्यज्य बीजान्यास्वाद्य गृहीतरसान्बीजकणांस्थूत्कृत्य त्यजति ॥ १४ ॥

( अनारके ) बीजको खानेवाले सायङ्कालने सूर्यबिम्बरूप पके हुए अनारके फलको ( पेड़से ) तोड़कर अरुणवर्णवाले सन्ध्यारूपी इस ( अनारके फल ) के छिलकेको फेंक दिया है और ( इस अनारके फलके दानोंके रसको सम्यक् प्रकारसे चूसकर ) इस ( अनार ) के तारारूप निःसारबीजोंको थूक दिया है। [ लोकमें भी कोई व्यक्ति पकनेसे लाल अनारके फलके छिलकेको फेंककर उसके दानोंके रसको चूसनेके बाद उन नीरस बीजोंको थूक देता है। प्रकृतमें—कालकृत नियमसे ही सूर्यास्त आदि होनेसे सायङ्कालने सूर्यको अस्तकर दिया, सन्ध्या अनारके छिलके समान अरुण वर्ण हो रही है तथा तारासमूह अनारके नीरस बीजोंके समान श्वेतवर्ण दीखता है ] ॥ १४ ॥

( ताराततिर्बीजमिवादमादमियं निरष्ठेवि यदस्थियूथम् ।
तन्निष्कुलाकृत्य रविं त्वगेषा संध्योज्झिता पाकिमदाडिमं वा ॥ )

तारेति । सामर्थ्यात्कालेन कर्त्रा रविमेव तत् पक्किमं दाडिमं निष्कुलाकृत्य निर्गतबीजकुलं कृत्वा बीजरूपं सारं गृहीत्वा तदीया त्वगेवैषा संध्या उज्झिता। 'वा'शब्दः संभावनायाम्। उज्झिता किमित्याशङ्क्याह—बीजानि आदमादं भक्षयित्वा भक्षयित्वा यस्य सूर्यरूपस्य पक्कदाडिमस्य संबन्धि अस्थियूथमिवेयं तारातर्तिनिरष्ठेवि निष्ठ्यूता। जग्ध्वा इत्यादमादम्, अदेराभीक्ष्ण्ये णमुल् द्विर्वचनं च। निरष्ठेवि, कर्मणि चिण्। निष्कुलाकृत्य, 'निष्कुलान्निष्कोषणे' इति डाच्। क्षेपकोऽयं श्लोकः॥

( सायङ्कालने ) सूर्य ( रूपी पके हुए अनारके फल ) को छीलकर अर्थात् उसके बीजको निकालकर सन्ध्यारूपी छिलकेको फेंक दिया है तथा बीजको खा-खाकर अर्थात् उसके

रसको अच्छी तरह चूसकर तारासमूहरूप नीरस बीजको मानो थूक दिया है। [ पूर्व श्लोकका अर्थ होनेसे नारायणभट्टने इसे क्षेपक माना है ] ॥

संध्यावशेषे धृतताण्डवस्य चण्डीपतेः पत्पतनाभिघातात् ।
कैलासशैलस्फटिकाश्मखण्डैरमण्डि पश्योत्पतयालुभिर्द्यौः ॥ १५ ॥

संध्येति । हे प्रिये ! संध्यावशेषे संध्यावन्दनान्ते धृतं ताण्डवनृत्यं येन तस्य चण्डीपतेः पदोश्चरणयोर्द्वंद्वं यत्पतनं तेनाभिघाताद्धेतोरुत्पतयालुभिरुत्पतनशीलैरुच्छलितैः कैलासशैलसंबन्धिस्फटिकाश्मनां खण्डैः शकलैर्द्यौरमण्डि अलंकृता पश्य। कैलासस्फटिकखण्डा एव गगने तारारूपेण शोभन्ते । उत्पतयालुभिः, 'स्पृहि-गृहि-' इत्यालुच् ॥ १५ ॥

सन्ध्योपासनके बाद ताण्डव नृत्य करते हुए शिवजीके चरणोंके आघातसे ( चूर्ण-चूर्ण होकर ) ऊपर उछलनेवाले, कैलासपर्वतके स्फटिक पत्थरके टुकड़ोंने इस आकाशको अलंकृत कर दिया है, यह तुम देखो ॥ १५॥

इत्थं ह्रिया वर्णनजन्मनेव संध्यामपक्रान्तवतीं प्रतीत्य ।
तारातमोदन्तुरमन्तरिक्षं निरीक्षमाणः स पुनर्बभाषे ॥ १६ ॥

इत्थमिति । स नलः पुनर्भैमीं बभाषे । किंभूतः ? इत्थमुक्तप्रकारेण वर्णनजन्मना स्तुतिजातया ह्रियेवापक्रान्तवतीं निर्गतां संध्यां प्रतीत्य निश्चित्यान्तरिक्षं गगनं तारातमोभ्यां दन्तुरितं मिश्रितं निरीक्षमाणः । अन्योऽप्युत्तमो निजवर्णनजातलज्जयापक्रामति ॥ १६ ॥

इस प्रकार ( २२।३—१५ ) वर्णनसे उत्पन्न लज्जासे मानो भगी ( पक्षा०—नष्ट ) हुई सन्ध्याको जानकर ताराओं एवं अन्धकारसे संयुक्त आकाशको देखते हुए वे ( नल, दमयन्तीसे ) पुनः बोले ॥ १६ ॥

रामेषुमर्मव्रणनार्तिवेगाद्रत्नाकरः प्रागयमुत्पपात ।
ग्राहौघकिर्मीरितमीनकम्बु नभो न भोः कामशरासनभ्रु ! ॥ १७ ॥

रामेति । हे कामशरासनमेव भ्रुवौ यस्याः, भ्रूदर्शनमात्रेण कामोदयकारिणि भैमि ! रामस्य जामदग्न्यस्य वा इषुणा मर्मणो व्रणनाच्छेदनाद्धेतोरुत्पन्ना आर्तिः पीडा तस्या वेगादाधिक्याद्धेतोर्निजस्थाने स्थातुमशक्तः सन् भीत्या रत्नाकर एवायं प्राक् तस्मिन्नवसरे उत्पपातोर्ध्वमगात् । नेदं नभः, यः पूर्वमुत्पतितः स श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः । कीदृशः ? ग्राहाणां जलचारिणां जन्तूनां वा ओघस्तेन किर्मीरिता मिश्रिता मीनाः कम्बवः शङ्खाश्च यस्मिन् । नभस्तु ग्रहसंबन्धी ओघः शुक्रबृहस्पत्याख्यताराग्रहसमूहः ध्रुवमण्डलग्रहसंबन्धी समूहो वा तेन मिश्रितो मीनाख्यो राशिः कम्बुः शङ्खाकारविशाखानक्षत्रं च यस्मिन् । रघुनाथेन किल सेतुबन्धसमये शरेण समुद्रो भेत्तुमारब्ध इति तावन्मात्रेण पीडातिशयादुत्पतित इत्यु-

च्यते । परशुरामेणापि निजवसत्यर्थं समुद्रो बाणेन परास्तः सन्नुत्पतितः। समुद्रजल-स्यैवायं कालिमा, न तु गगनस्य । उत्पतितस्य समुद्रस्याधोदेशे स्थितानि रत्नग्राहा-दीनि अधःस्थितेन जनेन सुखेन द्रष्टुं शक्यन्ते । मकरकर्कटादयः साक्षान्मीनादय एव, नतु राश्यादिभूताः; शिष्टाश्च ताराः सामुद्रिकमौक्तिकान्येव, नतु तारा इत्यादि ज्ञातव्यम् । 'शरासनभ्रूः' इति उवङ्स्थानत्वान्नदीत्वाभावाद्ध्रस्वत्वाभावः । ह्रस्व-पाठस्तु 'सहैकवंशप्रभवभ्रु' इतिवत्समर्थनीयः । यद्वा, शिष्टकविप्रयोगदर्शनाज्ज्ञातव्यः॥

हे कामबाणतुल्य भ्रूवाली ( दमयन्ति ) ! राम ( रामचन्द्र, या—परशुराम ) के बाणोंसे मर्मभेदन होनेकी पीडाके वेगसे पहले यह समुद्र ऊपर उछल गया, ( अत एव ) ग्राह-समूहसे मिश्रित मछलियों तथा शङ्खोंवाला यह आकाश नहीं है, ( किन्तु समुद्र ही है ) । [ ऊपरमें ये तारा-समूह नहीं दीख रहे हैं किन्तु समुद्रस्थ मकर, मत्स्य एवं शङ्ख दीख रहे हैं, अत एव यह आकाश नहीं है, किन्तु रामबाणके मर्मभेदनजन्य पीडासे ऊपरकी ओर उछला हुआ यह समुद्र है । यद्यपि नल पहले सत्ययुगमें हुए थे, तथा रामचन्द्र और परशुराम उनके बाद त्रेता युगमें हुए थे; अतएव उनके बाणोंसे मर्माहत समुद्रके ऊपर जानेका वर्णन नलको करना असङ्गत है; तथापि कवि श्रीहर्षके कल्पान्तरके भेदसे इसे सुसङ्गत मानना चाहिये ] ॥ १७ ॥

पौराणिक कथा—सीताहरण होनेपर रावणसे लड़नेके लिए लङ्काको जाते हुए रामचन्द्रने मार्ग पानेके लिए समुद्रपर बाण उठाया था । तथा परशुरामने भी अपने रहनेके लिए बाणसे मारकर समुद्रको दूर हटा दिया था ।

मोहाय देवाप्सरसां विमुक्तास्ताराः शराः पुष्पशरेण शङ्के ।
पञ्चास्यवत्पञ्चशरस्य नाम्नि प्रपञ्चवाची खलु पञ्चशब्दः ॥ १८ ॥

मोहायेति । हे भैमि ! पुष्पशरेण कामेन देवानामप्सरसां च मोहायान्योन्य-मनुरागसंजननार्थं देवादीनामुपरि वर्तमानत्वाद्विमुक्ता ऊर्ध्वं क्षिप्ताः शुभ्रपुष्परूपाः शरा एव तारा इत्यहं शङ्के । ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात्ताराणां बहुतरत्वा-त्कथं कामबाणत्वमित्याशङ्क्य समर्थयते—खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्तमानः 'पञ्च'शब्दः प्रपञ्चवाची, प्रकृष्टः पञ्चो विस्तारस्तद्वाचकः, नतु संख्यावाचकः। 'पचि विस्तारवचने' इति स्वार्थणिजन्ताद्धातोः। पचाद्यचि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शरा यस्येति विग्रहः, नतु पञ्चसंख्याकाः शरा यस्येति । तस्मात्पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः। कस्येव ? पञ्चास्यवत् 'सिंहो मृगेन्द्रः पञ्चास्यः' इति सिंहाभि-धायिनि 'पञ्चास्य'शब्दे सिंहस्य पञ्चसंख्यमुखत्वाभावात् पञ्चयति विस्तृतं भवति पञ्चं

१. तदुक्तं कविकुलभूषणेन कालिदासेन रघुवंशे—
'रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ।' इति ( रघु० ४।५३ ) ।

विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या 'पञ्च'शब्दो यथा विस्तारवाची तथेति। 'व्यासः प्रपञ्चो विस्तारः' इति हलायुधः॥ १८॥

देवों तथा अप्सराओंको मोहित करनेके लिए ये ताराएँ कामदेवके द्वारा छोड़े गये बाण हैं, ऐसा मैं समझता हूँ। (कामदेवके बाण पांच ही हैं तथा ये ताराएँ असंख्य हैं अत इन्हें कामबाण समझना किस प्रकार सङ्गत है? इस शङ्काका उत्तर दे रहे हैं—) 'पञ्चास्य'के समान पञ्चशर (कामदेव) के नाममें 'पञ्चन्' शब्द विस्तारार्थक है [जिसप्रकार सिंहको पांच मुखवाला नहीं होनेसे सिंहार्थक 'पञ्चास्य' शब्दके आदिवाला 'पञ्चन्' शब्द विस्तारार्थक है, अत एव 'पञ्च अर्थात् विस्तृत है मुख जिसका' वह सिंह 'पञ्चास्य' कहलाता है; उसीप्रकार कामदेवार्थक 'पञ्चबाण' शब्दके आदिवाला 'पञ्चन्' शब्द भी विस्तारार्थक ही है, अत एव 'पञ्च अर्थात् विस्तृत (असङ्ख्यात, या विशाल) हैं बाण जिसके', वह 'पञ्चबाण' कहलाता है। इसप्रकार पांच मुखवाला नहीं होनेपर भी 'पञ्चास्य' कहे जानेवाले सिंहके समान पांच ही बाणोंवाला नहीं होनेपर भी कामदेवको 'पञ्चबाण' कहा जाता है। 'पचि विस्तारे' धातुसे सिद्ध 'पञ्च' शब्दका विस्तार अर्थ होता है]॥ १८॥

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकुलस्य।
दृशोरपां सन्ति पृषन्ति ताराः पतन्ति तत्संक्रमणानि धाराः॥ १९॥

नभ इति। नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशोर्नेत्रयोरपामश्रुजलानां पृषन्ति ये बिन्दवः सन्ति त एव तारका अधःस्थितैर्जनैर्दृश्यन्ते। तथा,—तासां ताराणां संक्रमणानि पुण्यक्षयवशाद्भूमिं प्रत्यागमनानि गलद्बाष्पजलानां धारा एव पतन्ति। दृशोः सन्ति चिरस्थितिमन्ति यानि बाष्पपृषन्ति तानि तारा इति वा। तत्संक्रमणानि स्थितताराप्रतिबिम्बभूतानि तत्तुल्यानि पतन्ति अधःपातीनि यानि पृषन्ति तानि धारा अश्रुप्रवाहाः। तासां ताराणां संक्रमणानि वीथयो मेषादिसंक्रान्तयो वा धारा अश्रूणां प्रवाहा इति वा। स्त्रियो हि विरहमसहमाना रुदन्ति। सन्ति, पतन्तीति च तिङन्तम्, पृषद्विशेषणं वा॥ १९॥

रात्रिमें विरहसे व्याकुल, आकाशगङ्गाके तीरपर रहनेवाली चक्रवाकियोंके समूहके नेत्रोंके अश्रुजलके वहींपर स्थित (नीचे नहीं गिरी हुई) बूँदे ही ये ताराएँ हैं, तथा उनसे संक्रान्त अश्रु-बिन्दुधाराएँ (वर्षाजल-प्रवाह) हैं। [पतिविरहके असह्य होनेपर रोती हुई आकाशगङ्गा तीरनिवासिनी चक्रवाकियोंके उपरिस्थ अश्रुबिन्द तारारूपमें दीखते हैं, तथा पुण्यक्षयसे अधःपतित वे अश्रुबिन्दु वर्षाकी जलधारारूपमें दीखते हैं]॥ १९॥

अमूनि मन्येऽमरनिर्झरिण्या यादांसि गोधा मकरः कुलीरः।
तत्पूरखेलत्सुरभीतिदूरमग्नान्यधः स्पष्टमितः प्रतीमः॥ २०॥

अमूनीति। हे प्रिये! गोधाख्यास्तारा गोधा, मकरराशिसंबन्धिन्यस्तारा

मकरः, कुलीरः कर्कराशिस्तत्संबन्धिन्यस्ताराः कुलीरः, अमूनि प्रत्यक्षदृश्यान्यमरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव एव इत्यहं मन्ये। गोधा मत्स्याः कर्कटका अपि जले वर्तन्ते उपरि च दृश्यन्ते । तस्माद्देवनद्या यादांस्येवैतानीत्यर्थः । तर्ह्युपरिवर्तमानेन द्रष्टुं योग्याः, नत्वधःस्थितेनेत्यत आह—तस्या नाकनद्याः पूरे खेलन्तः क्रीडन्तः सुरास्तेभ्यः सकाशाद्भीत्या दूरं तलपर्यन्तं मग्नानि अत एव जलतलगामित्वादधोभागे इतो भूदेशादपि स्पष्टं सुखेन जानीमः । भूभागे स्थिता अपि जलतलगामित्वाद्गोधादियादांसि व्यक्तं पश्याम इत्यर्थः । गोधाकारं भुवमण्डलं, गोधा ज्येष्ठा वा ॥

गोधा (गोधाकृति भुवमण्डल, या—गोधा नक्षत्र; पक्षा०—'गोह' नामक जलचर जीव), मकर ( दशम राशि-सम्बन्धी तारा-विशेष, पक्षा०—'मगर' नामक जलचर जीव ) और कर्कट ( चतुर्थ राशि-सम्बन्धी तारा-विशेष, पक्षा०—'केकड़ा' नामक जलचर जीव )—ये ( प्रत्यक्ष दृष्टिगोचर होते हुए ये सब ) देवनदी ( आकाशगङ्गा ) के जलचर जीव हैं, ऐसा मैं मानता हूँ और उस ( आकाशगङ्गा ) के प्रवाहमें क्रीड़ा करते हुए देवोंके भयसे दूर ( जलके नीचे अन्तिम तलतक ) डूबे हुए इनको हमलोग यहां ( इस भूलोक ) से स्पष्ट देखते हैं । [ अन्यथा आकाशगङ्गाके जलके 'गोधा, मकर तथा कर्कट' नामक जलजन्तुओंको पानीके ऊपर रहनेसे उस आकाशगङ्गाके जलके ऊपर लोकमें निवास करनेवाले ही लोग देख सकते हैं, आकाशगङ्गाके नीचे भूलोकमें निवास करनेवाले हमलोग नहीं देख पाते; किन्तु वहां जलक्रीड़ा करते हुए देवोंके भयसे जब वे जीव पानीके निचले सतहपर आ जाते हैं तब हमलोग भी उन्हें देख लेते हैं । जलमें क्रीड़ा करनेवालोंके भयसे जलचर जीवोंका जलके भीतर डूबकर छिप जाना स्वभाव होता है ] ॥ २० ॥

**स्मरस्य कम्बुः किमयं चकास्ति दिवि त्रिलोकीजयवादनीयः ।**
**कस्यापरस्योडुमयैः प्रसूनैर्वादित्रशक्तिर्घटते भटस्य ॥ २१ ॥**

स्मरस्येति । त्रिलोकीजये वादनीयो वादनार्हः स्मरस्य संबन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किम् ? उच्चतरप्रदेशे वदितं वाद्यं सर्वत्राकर्ण्यत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य भटस्योडुमयैस्ताराऋपैः प्रसूनैः कृत्वा वादित्रशक्तिर्वाद्यनिर्माणं घटतेऽपि स्मरस्यैव धनुर्बाणानां पुष्परूपत्वदर्शनात्तदीयस्यैव वाद्यस्य पुष्परूपत्वसंभावनाया युक्तत्वात् ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते, न त्वन्यदीय इत्यर्थः ॥ २१ ॥

तीनों लोकके विजयके लिये बजाने योग्य, कामदेवका यह (दृश्यमान विशाखानक्षत्ररूप) शङ्ख आकाशमें शोभ रहा है क्या ?, (क्योंकि तारारूपी पुष्पोंसे) वाजा बनाना ( पाठा०—बनानेकी शक्ति ) दूसरे किस शूरवीरमें घटित होती है ? अर्थात् किसीमें नहीं । [ अधिक ऊँचे स्थानसे बजाया गया बाजा बहुत दूरतक सुनायी पड़ता है, अत एव तीनों लोकपर

विजय पानेके लिए कामदेव भी अधिक ऊँचे स्थान—आकाशमें चढ़कर बजानेवाले शङ्खको लिया है, ( अथच—कामदेवको देव होनेसे उसके शङ्खको भी स्वर्गमें दृष्टिगोचर होना उचित ही है ) क्योंकि दूसरा कोई ऐसा शूरवीर नहीं है, जो पुष्पोंको बाजा ( शङ्ख ) बनाकर उसके बजानेसे तीनों लोकोंको जीत ले। कामदेवके धनुष-बाणको पुष्पमय होनेसे उसके शङ्खको भी पुष्पमय होना उचित ही है ] ॥ २१ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत्पद्मममूमुहच्च ।
योगर्द्धिमस्या महतीमलग्नमिदं वदत्यम्बरचुम्बि कम्बु ॥ २२ ॥

किमिति। येयं रजनी योगिनी स्त्रीपुंसयोगवर्ती, अथ च,—शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किम् ? या रतीशं दिवा निर्जीवमिव निजसंनिधेः अजीजिवत् सजीवं चक्रे। पद्मममूमुहत् पद्मानि च समकोचयत्। रात्रौ हि स्त्रीपुंसयोगे काम उद्दीप्तो भवति, पद्मानि च संकुचन्ति। अलग्नं निराधारमम्बरचुम्बि आकाशवर्ति तारामात्रात्मकत्वादलग्नमराशिभूतं वा इदं प्रत्यक्षदृश्यं कम्बु तारारूपः शङ्खोऽस्या रात्रियोगिन्या महतीं योगर्द्धिं योगसमृद्धिं वदति। दिवादर्शनाभावादिदानीं दृश्यमानः शङ्खो रात्रिर्जातेति कथयति। योगशक्तिं विना निराधारं वस्तु कथं स्थापयेत् ? योगिन्यपि हि मृतमपि कंचिज्जीवयति। कंचिच्च मोहयति मूर्छां प्रापयति भ्रान्तं करोति वा। तस्माद्योगिनी किमित्युत्प्रेक्षा। 'कम्बु'शब्दस्य नपुंसकत्वमप्यस्तीति पूर्वमेवोक्तं स्मर्तव्यम्। अजीजिवत्, अमूमुहदिति, 'णौ चङि—' इत्युपधाह्रस्वः ॥ २२ ॥

यह रात्रि योगिनी ( स्त्री-पुरुषके योगवाली कोई स्त्री, पक्षा०—शाक्त मन्त्रके प्रभावसे योगसिद्धिको प्राप्त कोई स्त्री ) है क्या ?, जिसने कामदेवको जीवित कर दिया तथा कमलको मोहित ( निमीलित, पक्षा०—मूर्च्छित ) कर दिया। आधाररहित ( विशाखा नक्षत्ररूप ) यह शङ्ख आकाशमें स्थित है, ( इसके द्वारा ) इस ( योगिनी ) की श्रेष्ठ योगसिद्धिको देखो। [ दिनमें प्रायः कामोद्दीपन नहीं होनेसे कामदेव मरा-सा रहता है और वह स्त्री-पुरुषके संयोगसे रात्रिमें बढ़ जाता है तथा कमल रात्रिमें बन्द हो जाते हैं, अत एव जिस प्रकार कोई योगिनी किसी मृत व्यक्तिको जीवित कर देती है तथा किसी सजीवको भी मूर्च्छित कर देती है, तथा अपने योगबलके द्वारा शङ्खको आकाशमें निराधार रखती है; उसी प्रकार रात्रिमें कामदेवके पुनरुज्जीवित तथा कमलको निमीलित करनेसे और तारारूप विशाखानक्षत्ररूप शङ्खको निराधार आकाशमें रखनेसे यह रात्रि भी योगिनी ( योगबलसे सिद्धिप्राप्त स्त्री, पक्षा०—स्त्री-पुरुषके संयोगवाली कुट्टिनी ) है क्या ? ऐसा ज्ञात होता है ] ॥ २२ ॥

प्रबोधकालेऽहनि बाधितानि ताराः खपुष्पाणि निदर्शयन्ती ।
निशाह शून्याध्वनि योगिनीयं मृषा जगद्दृष्टमपि स्फुटाभम् ॥ २३ ॥

प्रबोधेति। हे प्रिये ! प्रबोधकाले जागरणसमये, अथ च,—सम्यग्ज्ञानोत्पत्ति-

समये, अहनि दिने बाधितानि सूर्यदीप्तिध्वस्तकान्तीनि, अथ च,—भ्रान्तिकारणनाशान्निरुपपत्तीनि, तारा नक्षत्ररूपाणि खपुष्पाणि गगनसंबन्धीनि कुसुमानि नितरां दर्शयन्ती, अथ च,—दृष्टान्तीकुर्वन्ती, शून्याध्वनि बौद्धादिशून्यवादिदर्शने विषये योगिनी तद्दर्शनरहस्यं जानती काचित्प्रव्रजितैवेयं निशा स्फुटिमाभाति ताहशं दृष्टमपि प्रत्यक्षेण प्रतीयमानमपि स्थावरजङ्गमात्मकं सकलं जगन्मृषाऽसत्यमाह ब्रूते। बौद्धादिदर्शने हि ज्ञानस्यैव वहिर्घटाद्याकारत्वाज्ज्ञानातिरिक्तं सर्वं मिथ्येति तज्ज्ञा योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति, तथेयमपि रात्रिरहन्यदृश्यान्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगाद्गगने दर्शयतीति भावः। निदर्शनं करोतीवेति प्रतीयमानोत्प्रेक्षा॥२३॥

जागरण-समयात्मक दिनमें (सूर्यप्रकाशसे) अदृष्ट ताराओंको आकशपुष्प (ये कुछ नहीं है ऐसा) दिखलाती हुई यह रात्रि शून्य मार्गमें स्पष्ट दिखलायी पड़ते हुए भी आकाशको (अन्धकाराच्छन्न होनेसे) जिस प्रकार असत्य बतलाती है; उसी प्रकार सम्यग्ज्ञान होनेके समयमें बाधित (भ्रान्तिकारणनाश होनेसे उपपत्तिशून्य) नक्षत्ररूपी आकाश-पुष्पोंका दृष्टान्त देती हुई यह योगिनी (योगद्वारा सिद्धिको प्राप्त की हुई स्त्री) ज्ञानभिन्न सब पदार्थको शून्य कहनेवाले बौद्धोंके रहस्यको जानती हुई स्पष्ट दृश्यमान संसारको भी असत्य कहती है। [जिस प्रकार भ्रान्तिके कारण आकाश पुष्पोंका होना प्रतिभासित होता है, परन्तु उस भ्रान्तिके नाश होनेपर वे आकाशपुष्प नहीं प्रतिभासित होते, (क्योंकि वास्तविकसे वे हैं ही नहीं); उसी प्रकार भ्रान्ति रहनेपर ही स्थावर-जङ्गमरूप यह संसार प्रतीत होता है, तत्वज्ञानके द्वारा उस भ्रान्तिका नाश होने पर वह संसार असत्य प्रतीत होने लगता है (क्योंकि आकाश-पुष्पके समान वह संसार भी वास्तविकमें है ही नहीं) ऐसा बौद्ध कहते हैं; उनका सिद्धान्त है कि ज्ञान ही बाहरमें घटपटादिरूपसे प्रतीत होता है, ज्ञानसे भिन्न घटपटादिरूप कोई भी पदार्थ नहीं है, सब कुछ असत्य है। इसी बातको बौद्ध सिद्धान्तको माननेवाली योगिनी संसारको मिथ्या कहती हुई बतलाती है, रात्रिको भी वैसा करनेसे यहां योगिनी होनेकी उत्प्रेक्षा की गयी है] ॥ २३ ॥

**एणः स्मरेणाङ्कमयः सपत्राकृतो भवद्भ्रूयुगधन्वना यः ।**
**मुखे तवेन्दौ लसता स तारापुष्पालिबाणानुगतो गतोऽयम् ॥ २४ ॥**

एण इति। हे भैमि! तव मुख एवेन्दावाह्लादकत्वादिगुणयोगाच्चन्द्रे लसता प्रकाशमानेन, तथा,—भवद्भ्रूयुगमेव धनुर्यस्य तेन स्मरेण तव मुखेन्दौ 'विमतो मृगवान्, चन्द्रत्वात्, संप्रतिपन्नवत्' इत्यनुमानप्रसिद्धो योऽङ्कमयः कलङ्करूप एणो मृगः सपत्राकृतः। मुखे तच्चापदर्शनाज्जठरावस्थितपत्रस्यैव बाणस्यापरपार्श्वे निर्गमनं यथा भवति तथा व्यथितः स एव मृगस्तारापुष्पालिर्नक्षत्ररूपपुष्पपङ्क्तिस्तल्लक्षणो बाणस्तेनानुगतः सन् सहित एव पलाय्य गतोऽयं गगने दृश्यते किम्? चन्द्रे मृगेण भाव्यम्, स चात्र नास्ति, सचापः कामश्च मुखे लसति, गगने मृगशिरो नक्षत्रं मृगाख्यं

चाणाकारपुष्पतुल्यतारानुगतं दृश्यते। तर्हि कामेन विद्धोऽन्तर्गतपत्रपार्श्वंबहिर्निर्गत-बाणसहितो व्यथितः पलाय्य गतः, स एवायं मृगो दृश्यते किमिति प्रतीयमानोत्प्रेक्षा। 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्॥ २४॥

(हे प्रिये!) तुम्हारे मुखरूपी चन्द्रमें शोभमान तथा तुम्हारे भ्रूद्वयरूपी धनुषवाले कामदेवसे (जिसमें इस प्रकार बाण मारा गया है कि बाण शरीरको छेदकर शरीरके दूसरे भागमें बाहर दृष्टिगोचर हो रहा है और उस बाणका पङ्ख शरीरके भीतर ही रह गया हो, ऐसा) व्यथित वह (पहले) तुम्हारे मुखचन्द्रमें स्थित ('मृगशिर' नक्षत्र नामक) तारारूपी पुष्प-समूहरूप बाणसे अनुगत अर्थात् उक्तरूप बाणसहित शरीरवाला यह मृग (भागकर आकाशमें) गया हुआ दिखलायी पड़ता है क्या?। [तुम्हारा मुख आह्लादक आदि गुणोंसे युक्त होनेसे चन्द्ररूप है, चन्द्रमामें कलङ्क-मृगको रहना चाहिये, किन्तु वह कलङ्क-मृग तुम्हारे मुखचन्द्रमें नहीं दृष्टिगोचर होता है और धनुषके सहित कामदेव तुम्हारे मुखमें शोभ रहा है तथा आकाशमें बाणाकार पुष्पतुल्य तारासे युक्त 'मृग' ('मृगशिरा' नामक नक्षत्र) दृष्टिगोचर हो रहा है; अत एव ज्ञात होता है कि कामदेवने तुम्हारे मुखचन्द्रमें रहनेवाले कलङ्कमृगको ऐसा बाणविद्ध किया कि उसके शरीरको छेदकर बाण शरीरके दूसरे भागकी ओर निकल गया और उसका पङ्ख शरीरके भीतर ही रह गया तथा कामदेवसे उस प्रकार व्यथित वह कलङ्कमृग आकाशमें—कामदेवसे बहुत दूर देशमें—भागकर चला गया जो तारारूप पुष्प-समूहरूप बाणसे युक्त शरीरवाला वहां स्पष्ट दीख रहा है, जिसे हम मृगशिरा नक्षत्र कहते हैं, परन्तु वास्तविकमें वह मृगशिरा नक्षत्र नहीं, अपितु पहले तुम्हारे मुखचन्द्रमें स्थित कामबाण व्यथित होनेसे भागकर आकाशमें गया हुआ कलङ्कमृग ही है]॥ २४॥

लोकाश्रयो मण्डपमादिसृष्टि ब्रह्माण्डमाभात्यनुकाष्ठमस्य।
स्वकान्तिरेणूत्करवान्तिमन्ति घुणव्रणद्वारनिभानि भानि॥ २५॥

लोकेति। हे भैमि! ब्रह्माण्डमादौ सर्वस्मादपि पूर्वं सृष्टिर्निर्माणं यस्य, अथ च,—चिरकालनिर्मितं पुराणम्, मण्डपमिति आभाति तदिव शोभते इत्यर्थः। यतः—लोकानां त्रयाणामपि आश्रयः ब्रह्माण्डाधारत्वाज्जगताम्। मण्डपोऽपि लोकानामाश्रयः, तच्छायानिवासित्वाल्लोकानाम्, आश्रयनामत्वाच्च। अत एव—अस्य ब्रह्माण्डमण्डपस्य अनुकाष्ठं दिशि दिशि एतत्संबन्धिनीषु सर्वासु दिक्षु; अथ च,—एतत्संबन्धीनि काष्ठानि दारूणि लक्षीकृत्य तेषु भानि नक्षत्राणि स्वकान्तिरूपस्योत्खा-तरेणूत्करस्य संबन्धिनी वान्तिरुद्गारस्तद्वन्ति घुणाख्यकीटनिर्मितो व्रणश्छिद्रं तस्य द्वारं मुखं तन्निभानि तत्तुल्यानि घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्रमुखानीव दृश्यन्त इत्यर्थः। जनाश्रयनामा मण्डपोऽप्यतिजीर्णो यदा भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति घुणोत्कीर्णगलद्रजोयुक्तानि घुणकृतच्छिद्रमुखानि वृत्तानि श्वेतानि च

दृश्यन्ते, तानीव भानि भान्तीति भावः । 'मण्डपोऽस्त्री जनाश्रयः' इत्यमरः । अनुकाष्ठम्, वीप्सायामव्ययीभावः, पक्षान्तरे विभक्त्यर्थे ॥ २५ ॥

सबसे पहले रचा गया ( पक्षा०—अत्यन्त पुराना ), लोकों ( तीनों या सातों लोकोंमें रहनेवाले प्राणियों, पक्षा०—गृहवासी लोगों ) का आश्रय ब्रह्माण्डरूप मण्डप (गृह-विशेष) शोभ रहा है ( अथवा—""ब्रह्माण्ड मण्डपके समान शोभ रहा है )। इस ( ब्रह्माण्ड, या—मण्डप ) के प्रत्येक दिशाओंमें अर्थात् चारों ओर ( पक्षा०—काष्ठमें ) अपनी कान्तिरूप धूलि-समूहको उगलते ( गिराते ) हुए तथा 'घुन' ( काष्ठको जर्जर करनेवाला कीट-विशेष ) के छिद्रके द्वारके समान ये नक्षत्र दृष्टिगोचर हो रहे हैं। [ जिस प्रकार अत्यन्त पुराने घरकी लकड़ियोंमें घुन लगनेसे गोलाकार उसके छिद्रद्वार दिखलायी पड़ते हैं तथा उनमेंसे घुनी हुई लकड़ीकी चूनके समान धूलि गिरती रहती है, उसी प्रकार अतिशय प्राचीन एवं लोकाश्रय ब्रह्माण्डके प्रत्येक दिशाओंमें घुनी हुई लकड़ीकी धूलिके समान अपनी कान्तिको नीचेकी ओर फैलाते हुए घुनके छिद्रद्वारके समान गोलाकार ये नक्षत्र जान पड़ते हैं ] ॥ २५ ॥

इदानीं सर्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते—

शचीसपत्न्यां दिशि पश्य भैमि ! शक्रेभदानद्रवनिर्झरस्य ।
पोप्लूयते वासरसेतुनाशादुच्छृङ्खलः पूर इवान्धकारः ॥ २६ ॥

शचीति । हे भैमि ! अन्धकारः शच्याः सपत्नी दिक् प्राची तस्या वासररूपस्य सेतोः सूर्यप्रभामर्यादाया नाशात् उच्छृङ्खलो निरर्गलः शक्रेभस्य दानद्रवो दानोदकं तस्य निर्झरः प्रवाहस्तस्य श्यामः पूर इव पोप्लूयते भृशं प्रसरति, प्राच्यां व्याप्नोतीत्यर्थः । त्वं पश्य । प्राच्यामेव चैरावतदानप्रवाहपूरसंभवः । जलपूरोऽपि बन्धापगमादप्रतिहतप्रसरः सन्नतितरां प्रसरति, 'प्लुङ् सर्पणे' इत्यस्माद्भृशार्थे यङ्द्विर्वचनम् ॥ २६ ॥

( अन्धकार-वर्णनके प्रसङ्गमें पूर्वदिशाके अन्धकारका पहले वर्णन करते हैं ) हे दमयन्ति ! सूर्यरूपी बांधके नष्ट होने ( टूट जाने ) से ऐरावतके दान ( मद ) जलरूप झरनेके प्रवाहके समान निर्बाध अन्धकार फैल रहा है, यह तुम देखो। [ जिस प्रकार बांधके टूटनेसे जलाशयका प्रवाह निर्बाध होकर फैलता ( बहता ) है, उसी प्रकार सूर्यप्रभाके नष्ट होनेसे ऐरावतके मदजलके झरने ( जलाशय ) के प्रवाहके समान बढ़ा हुआ अन्धकार पूर्वदिशाकी ओर फैल रहा है ] ॥ २६ ॥

दक्षिणदिग्व्यापि तमो वर्णयति—

रामालिरोमावलिदिग्विगाहि ध्वान्तायते वाहनमन्तकस्य ।
यद्वीक्ष्य दूरादिव बिभ्यतः स्वानश्वान्गृहीत्वापसृतो विवस्वान् ॥ २७ ॥

रामेति । श्रीरामस्यालिः सेतुः सेतुबन्ध एव श्यामत्वाद्रोमावलिर्यस्यास्तस्या

दक्षिणस्या दिशो विगाहि नितरां व्यापकम् अन्तकस्य दिक्पतित्वाद्दक्षिणदिक्स्थं तद्वाहनं महिष एव ध्वान्तायते कज्जलनीलोऽन्धकार इवाचरति। विवस्वान् सूर्यः यमवाहनं दूराद्वीक्ष्य सहजाश्वमहिषवैरस्मरणाद्बिभ्यतः सभयान् स्वानश्वान् गृहीत्वाऽपसृतः पलायित इव दक्षिणदिशि तिमिरं यममहिषवच्छोभत इत्यर्थः। 'अन्तक'पदेन तद्वाहनस्य दारुणत्वं सूचितम्, अत एव ततोऽप्यश्वानां भयं युक्तम्। ध्वान्तायते, 'उपमानादाचारे' 'कर्तुः क्यङ्—' इति क्यङन्तात्तङ्। 'सेतुरालौ स्त्रियां पुमान्' इत्यमरः॥ २७॥

(अब क्रमप्राप्त दक्षिण दिशाके अन्धकारका वर्णन करते हैं—) रामचन्द्रके पुलरूपी रोमावलिवाली (दक्षिण) दिशामें रहनेवाला यमवाहन (भैंसा) अन्धकारके समान आचरण कर रहा है, जिसे देखकर डरते हुए अपने (सात) घोड़ोंको लेकर सूर्य (उस दक्षिण दिशासे) मानो दूर चले गये हैं। ['अन्तक' (सबका अन्त करने (मारने) वाला) पदसे उसके वाहन भैंसेका भी वैसा ही क्रूर होना सूचित होता है। स्वाभाविक वैर होनेसे उक्तरूप भैंसेसे घोड़ोंको डरना और उन्हें लेकर सूर्यका दूर हट जाना उचित ही है। भैंसेका रंग काला एवं स्वभाव क्रूर होनेसे उसे काले एवं भयानक रात्रि-सम्बन्धी अन्धकारके समान आचरण करनेको कहा गया है]॥ २७॥

प्रतीच्यामपि तमो वर्णयति—

पक्वं महाकालफलं किलासीत्प्रत्यग्गिरेः सानुनि भानुबिम्बम्।
भिन्नस्य तस्यैव दृषन्निपाताद्बीजानि जानामितमां तमांसि॥ २८॥

पक्वमिति। भानुबिम्बं प्रत्यग्गिरेः प्रतीच्यां वर्तमानस्यास्ताचलस्य सानुनि कालवशात्पक्वं महाकालस्यैन्द्रवारुण्याः फलमासीत् किल, अहं मन्य इत्यर्थः। तथा,—अहमतिपक्वत्वाद् वृन्तश्लथत्वादुच्चतरप्रदेशादधस्ताद् दृषदि शिलायां निपातात्तदभिघाताद्धेतोर्भिन्नस्य विदीर्णस्य तस्य भानुबिम्बरूपस्य महाकालफलस्य कृष्णतमानि बीजान्येव तमांसीति जानामितमां नितरां मन्ये। पर्वतादिकठिनभूसमुद्भवं जम्बीरवर्तुलं पक्वं सदतिरक्तं कृष्णबीजं महाकालफलं ग्रहोपसर्गनिवारणार्थं गृहद्वारे वृद्धैर्बध्यते। अस्तमयसमयसंबन्धात्परिणतकालं रक्तं महतः कालस्य फलभूतं च भानुबिम्बं महाकालफलमिव, तमांसि च विदीर्णस्य तस्य कृष्णतमानि बीजानीव प्रसरन्तीत्यर्थः। अन्यदिगपेक्षया प्रतीच्यां सायंसमये सूर्यसंध्यासंबन्धिनः प्रकाशस्यासन्नत्वादल्पान्धकारसूचनार्थं तमसां बीजत्वेन निरूपणम्॥ २८॥

(अब क्रमागत पश्चिम दिशाके अन्धकारका वर्णन करते हैं—) पश्चिम दिशामें स्थित पर्वत अर्थात् अस्ताचलके शिखरपर सूर्यबिम्बरूप (कालवश) पका हुआ 'किम्पाक' नामक फल था, ऐसा मैं मानता हूं और इन अन्धकारोंको (ऊँचेसे) पत्थरपर गिरनेसे (पकनेके कारण शीघ्र) फूटे हुए उसी फलके कृष्णवर्ण बीजरूप मैं सम्यक् प्रकारसे मानता हूं।

[ पर्वतसे पत्थरपर गिरे हुए पके फलको टूटने और उसके बीजोंको सर्वत्र फैल जानेके समान पके फलके तुल्य अरुणवर्ण सूर्यबिम्बका अस्ताचलके शिखरसे गिरनेसे चूर-चूर होकर उसके कृष्णवर्ण बीजोंको फैलाना उचित ही है। पकनेपर लाल एवं नीबूके समान गोलाकार 'किम्पाक' ( महाकाल ) के फलको लोग द्वारपर ग्रहबाधाके निवारणार्थ बांधते है, ऐसा वृद्धोंका कथन है। दिनकालके परिणत होनेसे अस्त होनेके समय रक्तवर्ण सूर्यको पके हुए 'किम्पाक' फलके सदृश तथा अन्धकारको पके एवं पत्थरपर गिरनेसे फूटे हुए उस 'किम्पाक' फलके कृष्णवर्ण बीजोंके सदृश कहा गया है। दूसरी दिशाओंकी अपेक्षा पश्चिम दिशामें सायङ्कालके समय सूर्य सन्ध्यासम्बन्धी प्रकाशके निकटस्थ रहनेसे थोड़े अन्धकारको सूचित करनेके लिए अन्धकारके बीजरूपमें निरूपित किया है ] ॥ २८ ॥

**उदीचीव्यापि तमो वर्णयति—**

पत्युर्गिरीणामयशः सुमेरुप्रदक्षिणाद्भास्वदनादृतस्य ।
दिशस्तमश्चैत्ररथान्यनामपत्रच्छटाया मृगनाभिशोभि ॥ २९ ॥

**पत्युरिति । चैत्ररथं कुबेरवनं तदेवान्यन्नाम यस्यास्तादृशी पत्रच्छटा पत्रवल्ली यस्याश्चैत्ररथाख्यवनरूपपत्रवल्लीकाया उत्तरस्या दिशो मृगनाभिः पत्रवल्लीरचनासाधनभूता कस्तूरी तद्वच्छोभते एवंशीलं कृष्णतमं तमो गिरीणां पत्युर्हिमाचलस्यायश एव । यतः—सुमेरोः प्रदक्षिणीकरणाद्भास्वता सूर्येणानादृतस्यावज्ञातस्य । हिमाद्रिर्यद्यपि गिरीणां पतिः, तथापि सूर्यानादृतत्वाद्धीन एव, मेरुरेव महान् । 'अस्योद्यानं चैत्ररथम्' इत्यमरः ॥ २९ ॥**

( अब क्रमागत उत्तरदिशाके अन्धकारका वर्णन करते हैं— ) 'चैत्ररथ' नामक वनरूप पत्ररचनावाली दिश (उत्तर दिशा) के ( पत्ररचनासाधनभूत ) कस्तूरीके समान शोभनेवाला अन्धकार, सुमेरुकी प्रदक्षिणा करनेसे सूर्यके द्वारा अनादृत गिरिराज ( हिमालय ) का अयश ही है (या-अयशके समान है)। [ यद्यपि पर्वतोंका राजा होनेसे हिमालय पर्वतकी प्रदक्षिणा ही सूर्यको करनी चाहिये थी, किन्तु वे सूर्य हिमालयकी प्रदक्षिणा नहीं करके सुमेरुकी प्रदक्षिणा करते हैं, यह हिमालयका महान् अयश है, जो 'चैत्ररथ' नामक कुबेरोद्यानरूप पत्ररचना ( पत्तियोंकी रचना; पक्षा०—चन्दन, कस्तूरी आदिसे स्तनादिपर बनायी गयी पत्राकार चिह्न विशेष ) वाली उत्तरदिशा रूपिणी नायिकाके पत्ररचनाके साधनभूत कृष्णवर्ण कस्तूरीके समान शोभता है। उत्तर दिशामें 'चैत्ररथ' नामक कुबेरोद्यान, कस्तूरी एवं पर्वतराज हिमालयका होना तथा सूर्यका हिमालयको त्यागकर सुमेरुकी ही प्रदक्षिणा करना सर्वविदित है ] ॥ २९ ॥

**ऊर्ध्वदिग्व्यापि तमो वर्णयति—**

ऊर्ध्वं धृतं व्योम सहस्ररश्मेर्दिवा सहस्रेण करैरिवासीत् ।
पतत्तदेवांशुमता विनेदं नेदिष्ठतामेति कुतस्तमिस्रम् ॥ ३० ॥

ऊर्ध्वमिति । तमालश्यामलं यद्व्योम दिवा सहस्ररश्मेः सहस्रसंख्यैः करैः किरणैः, अथ च,—हस्तैः ऊर्ध्वं दूरोच्चप्रदेशे धृतमिवासीत्, तन्नभ एवेदं तमालश्यामलमंशुमता विना सायंसमये सूर्यविनाशाद् धारकेण तेन विनाधःपतत्सत् नेदिष्ठतामतितमां नैकट्यमेति। तमिस्रं कुतः कस्मादागतम्? अपि तु तिमिरं नाम किमपि नास्ति, किंतु निकटीभवद्गगनमेव तमिस्रमित्यर्थः। [एतद्व्योमैव तमिस्रं कुतो भूमौ निकटतामेति? नतु तदतिरिक्तं तमोऽस्तीति वा, अन्यदपि प(त)त्कस्यचित्कराभ्यामूर्ध्वं धार्यते, तदभावेऽधः पतत्येव । नेदिष्ठताम्, अतिशायने इष्ठनि 'अन्तिकबाढयोः—' इति नेदादेशः । कुतः; पञ्चे सार्वविभक्तिकस्तसिः ॥ ३० ॥

( चारों दिशाओंके अन्धकारका वर्णन करनेके उपरान्त अब ऊपरके अन्धकारका वर्णन करते हैं— ) दिनने ( कृष्णवर्ण ) जिस आकाशको सहस्र रश्मि ( सूर्य ) की सहस्रों ( किरणों, पक्षा०—हाथोंसे ) ऊपरमें मानो धारणकर रक्खा था, वही यह आकाश सूर्यके बिना मानो समीपमें ( नीचेकी ओर ) आ रहा है, अन्धकार कहांसे आया ? अर्थात् यह अन्धकार नहीं, सूर्याभावमें नीचेकी ओर गिरता हुआ कृष्णवर्ण यह आकाश ही है ॥ ३० ॥

अधोदिग्व्यापि तमो वर्णयति—

ऊर्ध्वार्पितन्युब्जकटाहकल्पे यद्व्योम्नि दीपेन दिनाधिपेन ।
न्यधायि तद्भूममिलद्गुरुत्वं भूमौ तमः कज्जलमस्खलत्किम् ॥ ३१ ॥

ऊर्ध्वेति । सामर्थ्याद्विधिना ऊर्ध्वं सूर्यदीपस्यैवोपरि भागे अर्पितो न्युब्जः कज्जलधारणार्थमधोमुखो महान् कटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशकारिणा कज्जलधारणार्थेन दिनाधिपेनैव दीपेन करणेन यत्कज्जलं न्यधायि न्यस्तम्, तत्कज्जलमेव तमो भूम्ना क्रमसंजातबाहुल्येन कृत्वा मिलद् युक्तं पतनाख्यकर्मकारणं गुरुत्वं यस्य तादृशं सद्भूमावस्खलत् किम्, अतिभारेण पतितं किम्? गुरुत्वाद्धि पतनं युक्तं, तत्कज्जलमेव भूमौ पतितं किम्? अपि तु तमो नाम न किंचिदित्यर्थ इति वा। कज्जलमपि कर्परे धृतं क्रमेण बहु भवद्गुरुत्वादधः पतति । 'कटाहः कर्परे तथा' इति निघण्टुः । ईषदसमाप्तौ कल्पप् ॥ ३१ ॥

( अब नीचेके अन्धकारका वर्णन करते हैं—) सूर्यरूपी दीपने अधोमुखकर ऊपर रखे गये कटाह ( विशालतम कड़ाह ) के समान आकाशमें जिस अन्धकाररूप काजलको छोड़ा, क्रमशः सञ्चित होते रहनेसे अधिक भारी हुआ वही अन्धकाररूप काजल पृथ्वीपर गिर पड़ा है क्या ? । [ जिस प्रकार दीपके ऊपरमें उलटकर रखे हुए ढक्कनमें कज्जल एकत्रित होते-होते बहुत होनेपर भारीपनसे एकाएक नीचे गिर पड़ता है, उसी प्रकार सूर्यरूपी दीपकके ऊपर आकाशरूपी विशाल ढक्कनको ब्रह्माने उलटकर रख दिया था और उसमें बहुत एकत्रित कज्जल भारी होनेसे पृथ्वीपर गिर पड़ा है क्या ? ऐसी श्रद्धा होती है ]॥३१॥

ध्वान्तैणनाभ्या शितिनाम्बरेण दिशः शरैः सूनशरस्य तारैः ।
मन्दाक्षलक्ष्या निशि सामनिन्दौ सेर्ष्या भवायान्त्यभिसारिकाभाः ॥ ३२ ॥

ध्वान्तेति। ध्वान्तेनैवैणनाभ्या कस्तूर्या तथा,—शितिना नीलेनाम्बरेण गगनेन, अथ च,—वस्त्रेण; यद्वा,—ध्वान्तैणनाभ्या कृत्वा नीलेन गगनेनोपलक्षिताः। तथा,-निशितत्वात्पुष्पतुल्यरूपत्वाच्चोज्ज्वलैः तारैर्नक्षत्रैरेव सूनशरस्य कामस्य शैरुपलक्षिताः, अथ च,—तारैरुज्ज्वलैः पुष्पैरुपलक्षिताः। तथा,—प्रकाशाभावान्मन्दाक्षैर्मन्दनयनैर्नरैर्लक्ष्या लक्षणीयाः, अथ च,-मन्दाक्षस्य लज्जाया विभूयभूताः सलज्जाः। अत एवाभिसारिकाभाः स्वैरिणीतुल्या दिशोऽनिन्दौ चन्द्ररहितायामनुदितचन्द्रत्वाच्छ्यासायां निशि मामायान्ति प्रत्यागच्छन्ति। तस्मात्सपत्नीभ्रान्त्या त्वं सेर्ष्या भव। अभिसारिका अपि शुभ्रायां रात्रौ शुभ्रवस्त्राद्याभरणाः, कृष्णायां च रात्रौ कृष्णवस्त्राद्याभरणाः समायान्ति, ता अपि कस्तूरीकृताङ्गरागा नीलवसनाः प्रच्छन्नधृतपुष्पाः कामबाणपीडिताः सलज्जाः सत्यः कामुकं प्रति समायान्ति, तदीयनायिका च सेर्ष्या भवति, तथा दिशोऽपीत्यर्थः। सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः। तिर्यग्व्यापि तमो वर्णितमनेन। 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इति। 'मन्दाक्षमन्दाः' इति पाठे मन्दनयनानामल्पदृश्यास्तमोबाहुल्यात्। अथ च,—तमोबाहुल्यान्मन्दाक्ष्यः, अत एव मन्दगमना इत्यर्थः। 'तार'शब्दः पूर्ववत्। मन्दाक्षेति पुंवद्भावः ॥ ३२ ॥

(हे प्रिये दमयन्ति!) अन्धकाररूप कस्तूरी (पक्षा०—कस्तूरीतुल्य अन्धकार) से युक्त, काले कपड़े (पक्षा०—आकाश) से उपलक्षित कामबाणोंसे पीडित (पक्षा०—कामबाण = पुष्पोंके समान श्वेतवर्ण ताराओंसे युक्त), लज्जायुक्त (पक्षा०—नेत्रको सङ्कुचित किये हुए लोगोंसे देखी जानेवाली) अभिसाराभिलाषिणी दिशारूपिणी नायिकाएँ चन्द्ररहित अर्थात् अन्धकारयुक्त रात्रिमें मेरे पास आ रही है (अत एव तुम) ईर्ष्यायुक्त होवो। [जिस प्रकार कृष्णपक्षकी अँधेरी रातमें कस्तूरीसे सुगन्धित काला कपड़ा पहनी हुई, कामपीडित लजाती हुई नायिका नायकके पास जाती हैं, तब नायकके समीपस्थित उसकी स्त्री उस अभिसार करनेवाली स्त्रीके प्रति ईर्ष्या करती है; उसी प्रकार उक्तरूपा दिशारूपा ये अभिसारिकाएँ मेरे पास आ रही हैं, अत एव तुम इनके प्रति ईर्ष्या करो। जब एक अभिसारिकाके भी नायकके पास आनेपर उसकी पत्नी उस अभिसारिकाके प्रति ईर्ष्या करती है, तब बहुत दिशारूपिणी अभिसारिणी नायिकाओंके आनेपर उनके प्रति तुम्हें अतिशय ईर्ष्यायुक्त होना उचित है] ॥ ३२ ॥

भास्वन्मयीं मीलयतो दृशं द्राङ्मिथोमिलद्व्यञ्जलमादिपुंसः।
आचक्ष्महे तन्वि! तमांसि पक्ष्म श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३३ ॥

भास्वदिति। हे तन्वि कृशाङ्गि! भास्वन्मयीं रविरूपां दक्षिणां दृशमस्तमय-

व्याजेन द्राक् शीघ्रं मीलयतः संकोचयत आदिपुंसः श्रीविष्णोर्मिथोऽन्योन्यं मिलन्तौ द्वावप्यञ्चलावूर्ध्वाधःपुटे यस्य निमीलनवशादन्योन्यसंलग्नपुटत्वान्निविडरोमकम्, अत एव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतमिन्दुलक्ष्म येन तादृशं पक्ष्म नेत्रसंबन्ध्यूर्ध्वाधःपुटपङ्क्तीभूतरोमाण्येव तमांसि वयमाचक्ष्महे ब्रूमः, नतु ततोऽन्यानि तमांसीत्यर्थः। तिमिरव्याप्तत्वात्किमपि न दृश्यत इति भावः। 'पक्ष्म' इति जात्येकवचनम् ॥

सूर्यरूप ( दहने ) नेत्रको शीघ्र बन्द करते हुए आदिपुरुष ( श्रीविष्णु भगवान् ) के परस्परमें मिलते हुए दोनों प्रान्त ( नेत्रप्रान्त ) वाला तथा कालिमासे चन्द्रकलङ्कको जीतनेवाला अर्थात् उससे अधिक काले पक्ष्म ( पलकके बालों ) को ही हम अन्धकार कहते हैं। [ इससे भिन्न 'अन्धकार' नामक कोई पदार्थ नहीं है। विष्णु भगवान्‌के दक्षिण तथा वाम नेत्ररूप सूर्य तथा चन्द्रमाके होनेसे सूर्यास्त होनेपर दहने नेत्रको बन्द करने और नेत्रको बन्द करनेपर उसके प्रान्तद्वय ( दोनों पलकों ) को भी बन्द होना तथा बाहरमें घनीभूत कृष्णवर्ण रोम-समूहका घनीभूत होकर अन्धकार मालूम पड़नेकी उत्प्रेक्षा की गयी है ]॥३३॥

विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥ ३४ ॥

विवस्वतेति। विवस्वता नेत्रमित्यपरं नामधेयं यासां ताश्चक्षूरूपा जनानां गावोऽपि स्वस्य गवां किरणानां सहस्रेण समं सह मिश्रा दिने मिलिताः सत्योऽनायिषतेव नीता इव। यस्मात्तेन खलु तेनैवेदमान्ध्यं प्रकाशाभावान्नेत्रापगमाच्च रूपाग्रहणं, नत्वन्धकारैः कृत्वेदमान्ध्यम्। तमोवशात्किमपि न दृश्यत इति भावः। अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिताः परेषामपि गावो नीयन्त इति ॥ ३४ ॥

सूर्य नेत्र ( आँख ) रूप नामान्तरवाले, लोगोंके गौओं ( पक्षा०—नेत्रों ) को अपने सहस्र गौओं ( किरणों, पक्षा०—नेत्रों, या-गौओं ) के साथ मानो लेकर चले ( अस्त हो ) गये हैं, इसीसे यह प्रकाश भाव है, अन्धकारोंसे नहीं। [ लोकमें भी कोई गोपाल अपनी सहस्रों गौओंके साथ दूसरे लोगोंकी गौओंको भी मिलाकर जिस प्रकार चला जाता है, उसी प्रकार सूर्य भी अपनी सहस्रों गौओं ( किरणों, पक्षा०—गौओं ) के साथ अन्य लोगोंके गौओं ( पक्षा०—नेत्रों ) को लेकर अस्त होनेके बाद चले गये हैं, अत एव सूर्यकी किरणों ( नेत्रों ) एवं लोगोंके नेत्रोंके नहीं रहनेसे ही यह अन्धकारभाव ( पदार्थदर्शन-शक्त्यभाव ) है, अन्धकारके कारणसे नहीं। यहाँ 'गो' शब्द सूर्यपक्षमें किरणार्थक तथा जनसमूहके पक्षमें नेत्रार्थक तथा गवार्थक है ] ॥ ३४ ॥

ध्वान्तस्य वामोरु ! विचारणायां वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं तत्क्षमं तमस्तत्त्वनिरूपणाय ॥ ३५ ॥

ध्वान्तस्येति। हे वामोरु अतिसुन्दरोरु! ध्वान्तस्य विचारणायां तमःस्वरूपनिरूपणविषये वैशेषिकं मतं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं काणादं दर्शनं चारु

सदुपपत्तिकं, नत्वन्यदिति मे मतं संमतम् । खलु यस्मात्कारणात् (संप्रदायविदः) तद्दर्शनं वैशेषिकं शास्त्रं औलूकमाहुर्वदन्ति । अत एव तमसस्तत्त्वनिरूपणायानारोपित- स्वरूपनिरूपणाय क्षमं समर्थम् । उलूकस्य घूकस्य संबन्धि दृश्यतेऽनेनेति दर्शनं नेत्रं हि तमस्यपि घटपटादिस्वरूपाणां याथात्म्यदर्शने समर्थं भवति । वैशेषिकम- प्युलूकापरनाम्ना कणादमुनिना प्रोक्तमित्यौलूकं दर्शनम् । ततश्चैतदपि तमस्तत्त्व- निरूपणाय समर्थमिति युक्तमीत्यर्थ इति शब्दच्छलम् । वैशेषिकदर्शने च 'किमिदं' तमो भावरूपं अभावरूपं वा ? इति संदेहे 'भासामभाव एव तमः' इति सूत्राविरो- धेन व्योमशिवाचार्यादयः षट्पदार्थवैधर्म्येणाभावरूपमेव तमो न्यरूपयन् । श्रीधरा- चार्यास्तु-'आरोपितं भूरूपमेव तमः' इति निर्वर्ण्य 'भासामभावे सत्येव तमःप्रतीते- र्भाभाव एव तमः' इत्युक्तमिति सूत्रविरोधं पर्यहार्षुः । एतदसहमानाः श्रीमदुदयना- चार्यादयः पुनर्भासामभावमेव तमस्त्वेन निरणैषुः । यस्मात्तदौलूकं दर्शनं वैशेषि- कादिशास्त्रं तमस्तत्त्वनिरूपणायां क्षमं समर्थमाहुरिति वान्वयः । महत्यन्धकारे सत्यपि घटादिपदार्थजातं को वा पश्यतीति ध्वान्तनिरूपणायां क्रियमाणायां घूकनेत्रमेव चारु सर्वेभ्योऽप्यधिकमिति मम मतं मतं पुनः पुनः संमतमित्यर्थः । उलूकनेत्रमेव महान्धकारे घटादि विलोकयितुं समर्थम् । अन्यदीयनेत्राणां त्वान्ध्य- मेव जातमिति भावः । यतो वैशेषिकं घटादीन्विशेषान्वेत्ति तादृशम् । महान्धकारे घूकनेत्रमेव घटादीन्भेदेन जानाति, नत्वन्यदीयं नेत्रम्, तस्मात्तदेव चार्विति । तत्र वृद्धसंमत्यर्थमुत्तरार्धम् । उलूकवृत्त्या कणानत्तीति कणादः, तस्य कणादस्यैवोलूक इति नाम, तेन प्रोक्तत्वादौलूकम् । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' इति विश्वः । वामोरु, 'संहितशफ—' इत्यादिनोङि नदीत्वाद्ध्रस्वः । औलूकम्, 'तेन प्रोक्तम्' इत्यण् । पक्षे 'तस्येदम्' इति ॥ ३५ ॥

हे वामोरु ! अन्धकारके स्वरूप-निरूपणके विषयमें वैशेषिक मत (कणादोक्त दर्शन- शास्त्र) युक्तियुक्त है, ऐसा मेरा सिद्धान्त है, क्योंकि (सम्प्रदायको जाननेवाले लोग) उस वैशेषिक मतको औलूक दर्शन (कणादोक्त शास्त्र-विशेष, पक्षा०—उल्लूका नेत्र) कहते हैं, अत एव अन्धकारकी वास्तविकताका निरूपण करनेके लिए वही (औलूक दर्शन ही) समर्थ है । [ उल्लूका नेत्र अन्धकारमें घट-पटादि समस्त पदार्थोंको वास्तविक- रूपमें देखता है, इस वास्ते उल्लूके समान कणको खानेवाले 'कणाद' नामसे प्रसिद्ध ग्रन्थ- कर्ताका शास्त्र भी 'औलूक' कहलाता है और उस 'औलूक' दर्शन (शास्त्र) को उल्लू पक्षीके नेत्रके समान अन्धकारमें पदार्थको वास्तविकरूपमें निर्णय करना उचित ही है । अथवा—उल्लू ही अन्धकारमें पदार्थोंको यथार्थरूपमें देखता है, इस विषयको योगबलसे उल्लूका रूप धारणकर साक्षात् स्वयमेव समझनेके बाद 'कणाद' का बनाये गये उस शास्त्रको अन्धकारके विषयमें यथार्थतः निर्णय करना उचित ही है । उक्त वैशेषिक दर्शनमें- 'तम भावस्वरूप है ? या अभावस्वरूप ?' ऐसा सन्देह होनेपर 'तेजोंका अभाव ही तम है'

एतदर्थक 'भासामभाव एव तमः' इस सूत्रके अविरोधके लिए व्योमशिवाचार्यादिने छः पदार्थोंके वैधर्म्यसे अभावरूप तमको युक्तियुक्त माना है, किन्तु श्रीधराचार्यने 'आरोपित भूरूप ही अन्धकार है' ऐसा निश्चयकर 'तेजोंके अभावमें वास्तविक रूपसे अन्धकारका ज्ञान होनेसे तेजोभाव ही तम है' ऐसा कहकर सूत्रके विरोधका परिहार किया है। परन्तु उदयनाचार्यने 'तेजोंके अभावको ही अन्धकार मानकर उदयनाचार्यके मतका खण्डन कर दिया है ] ॥ ३५ ॥

**ग्लानिस्पृशः स्पर्शनिषेधभूमेः सेयं त्रिशङ्कोरिव संपदस्य।**
**न किंचिदन्यत्प्रति कौशिकीये दृशौ विहाय प्रियमातनोति ॥ ३६ ॥**

ग्लानीति। ग्लानिस्पृशः कालिमस्पर्शिनः श्यामस्य, अथ च,—चण्डालत्वान्मालिन्ययुक्तस्य निःश्रीकस्य। तथा,—अभावरूपत्वात्स्पर्शगुणनिषेधस्य भूमेः स्थानस्य, अथ च,—चण्डालत्वादेवास्पृश्यस्यास्य तमसः राज्ञस्त्रिशङ्कोरिव सेयं प्रसिद्धा प्रत्यक्षेण गृह्यमाणा च संपद् बाहुल्येन स्वरूपलाभः, अथ च,—राज्यसमृद्धिः कौशिकीये औलूके, अथ च,—वैश्वामित्रे दृशौ नेत्रे विहायान्यत्किंचित्प्रति अपरं किमपि वस्तु लक्ष्यीकृत्य प्रियं हितं नातनोति करोति, किंतु तदीये एव नेत्रे लक्ष्यीकृत्य हितं करोति। अन्यत्प्रति किंचिदल्पमपि प्रियं नातनोतीति वा, अन्धकारे ह्युलूकनेत्रे एव पदार्थान्पश्यत इति तत्संपत्तयोः प्रिया। त्रिशङ्कोश्च संपद्विश्वामित्रस्यैव नेत्रयोः प्रिया, नान्यस्य। एतदुपाख्यानं रामायणादौ प्रसिद्धम्। कौशिकीये, 'वृद्धाच्छः' ॥

मालिन्ययुक्त, अभावरूप होनेसे अस्पर्शार्ह इस अन्धकारकी प्रत्यक्ष दृश्यमान बहुलता उल्लूके नेत्रोंके अतिरिक्त दूसरे किसीके प्रति उस प्रकार हित नहीं करती है, (किन्तु अन्य किसीको इस अन्धकारबाहुल्यमें कोई पदार्थ दिखलाई नहीं पड़नेसे यह इस अन्धकारबाहुल्यसे उल्लूके नेत्रोंको ही हित होता है), जिस प्रकार (वसिष्ट मुनिके शापसे) चण्डाल होनेके कारण मलिनतायुक्त तथा स्पर्शके अयोग्य इस प्रसिद्ध त्रिशङ्कु नामक राजाकी राज-सम्पति विश्वामित्र मुनिके नेत्रोंके अतिरिक्त दूसरे किसीके प्रति प्रियकारिणी नहीं थी अर्थात् उस त्रिशङ्कुकी राज-सम्पत्तिको देखकर विश्वामित्र ही प्रसन्न हुए दूसरा कोई प्रसन्न नहीं हुआ ] ॥ ३६ ॥

पौराणिक कथा—जब महर्षि वसिष्ठजीके शापसे राजा त्रिशङ्कु चाण्डाल हो गये, तब उन्होंने यज्ञ करके सशरीर स्वर्ग जाना चाहा, किन्तु जब उनको यज्ञ करानेके लिए कोई ऋत्विज नहीं मिला तब वे वसिष्ठजीके परम वैरी विश्वामित्रजीके पास जाकर अपनी इच्छा प्रकट किये और विश्वामित्रजी भी यज्ञ कराकर उन्हें सशरीर स्वर्गमें भेजनेकी प्रतिज्ञाकर यज्ञ कराने लगे। इसके अनन्तर स्वर्गमें जाते हुए राजा त्रिशङ्कुको चण्डाल होनेसे देवोंके द्वारा अधोन्मुखकर नीचेकी ओर गिराये जाते हुए देखकर विश्वामित्रजी स्वर्ग तथा भूलोकके बीचमें ही दूसरा स्वर्ग बनाने लगे, जिसे ब्रह्माजीने स्वयं आकर विश्वामित्रको वैसा करनेसे रोका और 'त्रिशङ्कु' को वहीं रहनेका स्थान दिया, जो अब तक तारारूपमें वहीं विद्यमान है।

मूर्धाभिषिक्तः खलु यो ग्रहाणां तद्भासमास्कन्दितऋक्षशोभम् ।
दिवान्धकारं स्फुटलब्धरूपमालोकतालोकमुलूकलोकः ॥ ३७ ॥

मूर्धेति । यो रविः नवानां ग्रहाणां मध्ये खलु निश्चितं मूर्धाभिषिक्तो राजा। उलूकानां लोकः सङ्घस्तस्य रवेर्भया दीप्त्या समास्कन्दिता नितरां पराभूता ऋक्षशोभा नक्षत्रकान्तिर्यस्मिंस्तत् । तथा,—स्फुटमुपलब्धानि अन्येन जनेन दृष्टानि घटादिस्वरूपाणि यस्मिंस्तादृशमपि दिवा कर्मीभूतं दिनमन्धकारमेवालोकत । दिने तस्य दर्शनाशक्तेर्दिनमन्धकाररूपत्वेनैव मेने इत्यर्थः । तथा,—व्यक्तं लब्धानि घटादिरूपाणि यत्र तादृशमन्धकारमेवालोकमपश्यद्दर्शनसहकारिप्रकाशरूपत्वेनैव मेने । ( अर्थाद्रात्रावित्यर्थः । ) अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योज्यम् । तेन तमसा विपरीतदृश एव भवन्तीति व्यज्यते । एवंविधमन्धकारं च स्फुटमतिप्रसिद्धं शुक्लभास्वरात्मकं लब्धं रूपं येन तादृशमालोकमेवापश्यत् । कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेनापश्यदिति विरुद्धमित्यर्थः । अथ च,—यो ग्रहराजः सूर्यः, आक्रान्तनक्षत्रलक्ष्मीकां तद्भासं सूर्यदीप्तिमेवायमुलूकलोको दिवा दिनेऽन्धकारमपश्यत् । रात्रौ चान्धकारमालोकमपश्यत्; दिने सूर्यालोक एव तमः, रात्रौ च तम एव सूर्यालोक इति ददर्शेत्यर्थः । कीदृशीं तद्भासम् ? कीदृशमन्धकारम् ? स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीम्, स्फुटं संजातस्वरूपलाभं चेत्यन्धकारस्य नपुंसकत्वान्नपुंसकैकशेषैकवद्भावेन वा व्याख्येयम् । सूर्यदीप्त्याऽसमास्कन्दिताऽपराभूता नक्षत्रलक्ष्मीर्यत्र तम्, अन्धकारविशेषणं वा । रात्रौ सूर्यदीप्तेरभावादतिरस्कृतनक्षत्रशोभामित्यर्थः । सूर्यदीप्तेरेव समास्कन्दनसामर्थ्यात्तमसैव रात्रौ यत्तिरस्करणं तेन नक्षत्रशोभा यस्मिन्निति वा इत्यादिव्याख्यानानि ज्ञातव्यानि । 'लक्ष्मीम्' इति पाठे—नदीत्वेऽपि समासान्तविधेरनित्यत्वात्कबभावः । 'मूर्धाभिषिक्तो राजन्यः' 'अन्धकारोऽस्त्रियाम्' इत्यमरः ॥ ३७ ॥

जो सूर्य ग्रहोंमें मूर्धाभिषिक्त राजा है, उल्लूओंके समुदायने उस सूर्यकी प्रभासे पराभूत नक्षत्र-प्रकाशवाले तथा ( उल्लूसे अतिरिक्त दूसरे लोगोंके द्वारा ) स्पष्ट दिखलायी देता है ( घट-पटादिका ) स्वरूप जिसमें ऐसे दिनको अन्धकार रूपमें देखा ( जिसमें सूर्यकान्तिने नक्षत्र-शोभाको नष्ट कर दिया है तथा सब घटपदादि पदार्थोंको लोग स्पष्टतः देख रहे हैं, उस दिनको भी उल्लुओंने अन्धकार माना ) तथा ( रात्रिमें ) उस सूर्यके प्रभासे अपराभूत नक्षत्र-प्रकाशवाले तथा ( उल्लुओंके द्वारा ) स्पष्ट दिखालायी देता है ( घटपदादिका ) स्वरूप जिसमें ऐसे अन्धकारको प्रकाशरूपमें देखा अर्थात् उक्तरूप दिनको अन्धकार तथा अन्धकारको प्रकाश समझा । अथ च—जो सूर्य ग्रहराज है, उल्लूओंके समूहने दिनमें उस सूर्य-प्रकाशके द्वारा नष्ट किये गये नक्षत्र-प्रकाशवाले एवं दूसरोंको दृश्यमान घटपदादिस्वरूपवाले प्रकाशको अन्धकार माना तथा रात्रिमें उस सूर्य-प्रकाशके

द्वारा नहीं नष्ट किये गये नक्षत्र-प्रकाशवाले एवं अपनेको दृश्यमान घटपटादिस्थरूपवाले अन्धकारको प्रकाश माना; ( ऐसा यह अन्धकार है ) ॥ ३७ ॥

दिने मम द्वेषिणि कीदृगेषां प्रचार इत्याकलनाय चारीः ।
छाया विधाय प्रतिवस्तुलग्नाः प्रावेशयत्प्रष्टुमिवान्धकारः ॥ ३८ ॥

दिन इति । अन्धकार इत्याकलनाय सामस्त्येन ज्ञानार्थं प्रतिवस्तुलग्नाः पदार्थमात्रसंबद्धाः प्रतिच्छाया एव चारीर्गूढार्थवेदिकाश्चारनारीः विधाय चारपदं ताभ्यो दत्त्वा दिनं प्रति संप्रेष्य समागतास्तास्तत्रत्यवृत्तान्तं प्रष्टुमिव पुनः प्रावेशयत् । निजनैकट्यमित्यर्थात् । इति किम् ? ममान्धकारस्य द्वेषिणि मामसहमाने दिने विषये एषां वस्तूनां कीदृक् प्रचारो विहरणं स्नेहादिव्यवहारश्चेति । दिवा प्रतिपदार्थसंबद्धाच्छाया एव रात्रौ समागत्य मिलिता निजस्वामिनमन्धकारं प्राविशन् । रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सहैकीभवतीति तत्संबन्धादेव महानन्धकारः प्रतीयत इति भावः । एतेन प्रतिच्छायापि तम एवेति वर्णितम् । अन्योऽपि रात्रौ लोकस्थितिं ज्ञातुकामः स्त्रीणां सर्वत्र प्रवेष्टुं शक्यत्वाच्चारनारीः संप्रेष्य तत्रत्यं वृत्तान्तं विचार्य समागतास्ताः प्रष्टुमात्मसविधं प्रवेशयति । छाया एव चारीः प्रविवस्तुलग्ना विधायेति वा । चारपदं दत्त्वा पदिनः प्रत्येकं प्रेषयामास । अत एव ता दिने प्रविस्तुलग्ना दृश्यन्त इति वा । चारीः, पुंयोगान्ङीप् ॥ ३८ ॥

'मेरे शत्रु दिनमें इन ( प्रकाशादि पदार्थों ) का कैसी स्थिति ( पक्षा०—लोकादिविषयक स्नेह ) है, इस बातको अच्छी तरह जाननेके लिए अन्धकारने प्रत्येक पदार्थोंके साथ संलग्न छाया ( परछाहीं ) को दूती बनाकर ( इस समय रात्रिमें उक्त कार्यको पूराकर लौटी हुई ) उन दूतीरूपिणी छायाओंको मानो उनसे उक्त बात पूछनेके लिए प्रवेश कराया है।' [ लोकमें भी कोई राजा आदि अपने शत्रुओंके यहां रहनेवाले अमात्यादिकी स्थिति जाननेके लिए सर्वत्र सरलतासे पहुंचनेवाली स्त्रियोंको दूती बनाकर भेज देता है, और जब वे वहांकी बातोंको जानकर लौटती हैं तब उनसे सब बातोंको पूछनेके लिए अपने पास बुलाता ( प्रविष्ट कराता ) है । इससे दिनमें प्रत्येक पदार्थसे सम्बन्ध रखनेवाली छाया ही रात्रिमें एकत्रित होकर अन्धकाररूप हो रही है, अत एव छाया भी अन्धकारका ही अंश है, अन्धकारसे भिन्न 'छाया' नामक कोई वस्तु नहीं है ]' ॥ ३८ ॥

इदानीं चन्द्रोदयं वर्णयितुमुपक्रमते—

ध्वान्तस्य तेन क्रियमाणयेत्थं द्विषः शशी वर्णनयाऽथ रुष्टः ।
उद्यन्नुपाश्लोकि जपारुणश्रीर्नराधिपेनानुनयेच्छयेव ॥ ३९ ॥

ध्वान्तस्येति । तेन नराधिपेन नलेन इत्थं क्रियमाणया द्विषः शत्रुभूतस्य ध्वान्तस्य वर्णनया रुष्टः क्रुद्ध इव जपाकुसुमवदरुणा श्रीर्यस्य स उद्यन्नुदयं प्राप्नुवन् शशी तेनैव राज्ञाथानन्तरमनुनयेच्छयेव प्रसादनवाञ्छयेवोपाश्लोकि श्लोकैः स्तोतुमा-

स्मि । अन्योऽपि वैरिवर्णनया रुष्टः सन्नरुणो भवति, तत्परिहारार्थमुदितः सन् वर्णकेन प्रसादनार्थं स्तूयते । प्रतीयमानोत्प्रेक्षा । 'इव'शब्दस्योभय योजना वा । उपश्लोकि, 'सत्या-' इति णिजन्तात्कर्मणि चिण् ॥ ३९ ॥

अनन्तर उस राजा ( नल ) के द्वारा किये गये इस प्रकार ( २२।२६—३८ ) के वर्णनसे क्रुद्ध-से ( अत एव ) ओढउलके पुष्पके समान लाल और उदय होते ( पक्षा०—आगे बढ़ते हुए ) चन्द्रमाका मानो अनुनय करने ( मनाने ) की इच्छासे श्लोकों द्वारा स्तुति करने लगे । [ लोकमें भी कोई व्यक्ति शत्रुके वर्णन करनेसे, रुष्ट होनेसे रक्तवर्ण होकर आगे बढ़ते हुए व्यक्तिको प्रसन्न करनेके लिए स्तुति करता है । अन्धकारके बाद उदित होते हुए अरुणवर्ण चन्द्रमाको देखकर राजा नल अन्धकारका वर्णन करने लगे ] ॥ ३९ ॥

पश्यावृतोऽप्येष निमेषमद्रेरधित्यकाभूमितिरस्करिण्या ।
प्रवर्षति प्रेयसि ! चन्द्रिकाभिश्चकोरचञ्चूचुलुकप्रमिन्दुः ॥ ४० ॥

पश्येति । हे प्रेयसि प्राणप्रिये ! एष इन्दुश्चन्द्रिकाभिश्चकोराणां चन्द्रिकात्मवदमृतपायिनां पक्षिणां चञ्चव एव चुलुकास्तान्पूरयित्वा प्रकर्षेण वर्षति सुधामित्यर्थात् । यावता चकोरचञ्चूपूरणं भवति तावत्प्रमाणं वर्षतीत्यर्थः । त्वं पश्य । किंभूतः ? अद्रेरुदयाचलस्याधित्यकाभूम्योर्ध्वशिखरेणैव तिरस्करिण्या जवनिकया निमेषलक्षणमत्यल्पकालमावृतोऽपि सन् । संपूर्णानुदितोऽपि प्रथमचन्द्रिकाभिरेव चकोराणामानन्दं करोति, किं पुनरुदितः सन्निति भावः । अन्योऽप्युपकारी दूरस्थोऽप्युदयोन्मुखोऽन्येषामुपकरोति । चुलुकप्रम्, 'वर्षप्रमाणे—' इत्यादिना पूरेर्णमुल्, ऊकारलोपश्च ॥ ४० ॥

हे परमप्रिये ( दमयन्ति ) ! उदयाचलके ऊर्ध्व शिखररूप पर्देसे क्षणमात्र ढका हुआ भी यह ( उदीयमान ) चन्द्रमा चाँदनीसे चकोरके चोंचरूपी चुल्लूको भरकर अच्छी तरह वृष्टिकर रहा है, यह तुम देखो । [ जब यह अपूर्ण उदयको प्राप्त होनेके पहले ही चकोरोंके च्चोंचरूपी चुल्लूको चन्द्रिकाओंसे भरकर अतिशय बरस रहा है, तब पूर्णोदय हो जानेपर और भी अधिक बरसेगा, इसमें सन्देह नहीं है । लोकमें भी कोई उपकारी व्यक्ति अभ्युदयोन्मुख होकर दूरस्थ रहते हुए भी उपकार करता है ] ॥ ४० ॥

ध्वान्ते द्रुमान्तानभिसारिकास्त्वं शङ्कस्व सङ्केतनिकेतमाप्ताः ।
छायाच्छलादुज्झितनीलचेला ज्योत्स्नाऽनुकूलैश्चलिता दुकूलैः ॥ ४१ ॥

ध्वान्त इति । हे प्रिये ! त्वं चन्द्रोदयात्पूर्वं ध्वान्ते सति द्रुमान्तान् तरुनिकटदेशानेव वृक्षाधोभागानेव संभोगार्थं कामुकदत्तं संकेतनिकेतमाप्ताः प्राप्ता अभिसारिकाः स्वैरिणीः शङ्कस्व संभावय । तथा,-इदानीं चन्द्रोदये सति वृक्षाधोभागवर्तिछायाच्छलादुज्झितं पूर्वं धृतं तमोनुकूलं नीलं चेलं वस्त्रं याभिस्तादृशीः सतीः सवर्णत्वाज्ज्योत्स्नानुकूलैश्चन्द्रिकानुगुणैर्धवलतरैर्दुकूलैरुपलक्षिताः सतीश्चलिताः संभोगं

कृत्वा स्वगृहं प्रति पुनः परावृत्तास्त्वं संभावय । तमसि सत्येव केनापि न ज्ञातव्यमिति बुद्ध्या नीलं वस्त्रं परिधाय संकेतस्थानमागताः, चन्द्रोदये पुनर्नीलवस्त्रपरिधाने पूर्ववद्भीत्या तत्रैव विहाय श्वेतं दुकूलं सवर्णत्वात्परिधाय परावृत्ताः केनापि न ज्ञाताः। 'नीलचोलाः–' इति पाठे–चोलः कूर्पासः ॥ ४१ ॥

( हे प्रिये ! ) अन्धकारमें अर्थात् चन्द्रोदयके पहले तुम वृक्षोंके नीचे भागरूप ( प्रियकथित ) सङ्केत स्थानको पहुंची हुई अभिसारिकाओंको जानो ( तथा प्रियके साथ सम्भोग करके इस समय—चन्द्रोदय हो जानेपर, वृक्षोंकी ) परछाहीके कपटसे नीले कपड़ोंको छोड़ ( उतार ) कर चाँदनीके अनुकूल ( श्वेत ) वस्त्रोंको धारणकर चली ( वापस लौटी ) हुई समझो । [ चन्द्रोदय होनेके पहले अन्धकार रहनेपर ये अभिसारिकाएँ दूसरोंके द्वारा देखे जानेके भयसे काले वस्त्र पहनकर प्रियसङ्केतित वृक्षके अधोभागको पहुंच गयीं तथा उन प्रियोंके साथ सम्भोग करके अब चन्द्रोदय होनेपर इन काले वस्त्रोंको पहनकर चाँदनीमें लौटते समय कोई देख लेगा इस भयसे वृक्षोंकी परछाहीके कपटसे उन काले वस्त्रोंको छोड़कर चांदनीके अनुकूल श्वेत वस्त्र पहनकर लौट रही हैं, ऐसा तुम जानो । ये वृक्षोंकी परछाही नहीं हैं, किन्तु उन अभिसारिकाओंको छोड़े हुए काले वस्त्र हैं । अभिसारिकाओंका अँधेरेमें काला वस्त्र तथा उजेलेमें श्वेत वस्त्र पहनकर प्रियके पास जाने या वहांसे लौटनेका स्वभाव होता है ] ॥ ४१ ॥

त्वदास्यलक्ष्मीमुकुरं चकोरैः स्वकौमुदीमादयमानमिन्दुम् ।
दृशा निशेन्दीवरचारुभासा पिबोरु रम्भातरुपीवरोरु ! ॥ ४२ ॥

तदिति । हे रम्भातरुवदतिपीवरावूरू यस्यास्तत्संबुद्धिः, त्वं निशायामिन्दीवरं नीलोत्पलं तद्वच्चार्वी भा यस्यास्तया दृशा उरु सादरमिन्दुबिम्बं विलोकय । किंभूतम् ? तवास्यलक्ष्म्या मुखशोभाया अवलोकनार्थं मुकुरं दर्पणमिव । तथा,–चकोरैः प्रयोज्यैः कौमुदीमादयमानं निजकौमुदीं चकोरान् पाययमानम् । उदिते चन्द्रे चकोराः सानन्दा जाताः, नीलोत्पलानि च विकसितानीति भावः । [एतेनेन्दोः परोपकारित्वं सूचितम् । विकसितेन्दीवरतुल्यया दृशा पिबेत्यनेन चन्द्रोदये हीन्दीवरं विकसति, त्वं चैवंभूतया दृशा यदा चन्द्रमवलोकयिष्यसि, (तदा) जनस्त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवैतदिति ज्ञास्यतीति सूचितम् । दिवा संकोचादसादृश्यमितीन्दीवरस्य विकसितत्वद्योतनार्थं 'निशा' पदम् । चकोरैः, 'गतिबुद्धि–' इति कर्मत्वप्राप्तावपि 'आदिखाद्योर्न' इति प्रतिषेधात्कर्तरि तृतीया । आदयमानं, निगरणार्थत्वात्परस्मैपदप्राप्तावपि 'अदेः प्रतिषेधो वक्तव्यः' इति निषेधात् 'णिचश्च' इति तङ् ॥ ४२ ॥

हे केलेके खम्भेके समान स्थूल ऊरुओंवाली ( प्रिये दमयन्ति ) ! तुम रात्रिके ( विकसित ) नीलकमलके समान सुन्दर शोभावाले नेत्रसे, तुम्हारे मुखशोभाका दर्पणरूप तथा चकोरोंसे अपनी चाँदनीका पान कराते हुए चन्द्रमाको बहुत पीवो अर्थात् अच्छी तरह

देखो । ( पाठा०—हे मोटे केलेके खम्भेके समान ऊरुओं वाली ! इस पाठमें 'पिव+उरुर-म्भातरु''''''=पीवोरुरम्भातरु''' ऐसा पद समझना चाहिये ) । [ तुम रात्रिमें विकसित हुए नीलकमलतुल्य कान्तिवाले नेत्रसे चन्द्रमाको सम्यक् प्रकारसे देखोगी जो तुम्हारे नेत्रको लोग नीलकमल समझेंगे । चन्द्रोदय हो गया नीलकमल विकसित हो गये तथा चकोर चन्द्रिका-पान करने लगे ] ॥ ४२ ॥

**असंशयं सागरभागुदस्थात् पृथ्वीधरादेव मथः पुराऽयम् ।**
**अमुष्य यस्मादधुनाऽपि सिन्धौ स्थितस्य शैलादुदयं प्रतीमः ॥ ४३ ॥**

**असंशयमिति । पुरा पूर्वं सागरभाक् समुद्रगर्भस्थोऽयं चन्द्रः मथो दण्डभूतात्पृथ्वीधरात्पर्वतान्मन्दराद्रेरेव हेतोरुदस्थादुत्पन्न इति असंशयं निश्चितम् । पुराणादौ यदेवं श्रूयते तत्सत्यमित्यर्थः । पुरा उदस्थात्प्रथमसंभवावसरे तस्मादेव समुत्थित इति वा । तत्र हेतुमाह–यस्माद्धेतोरधुनापि संभवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्तस्याप्यमुष्य चन्द्रस्य शैलादुदयाचलादेवोदयमुत्पत्तिं प्रतीमो जानीमः । प्रत्यहं सागरस्थस्याप्यस्याचलोत्पत्तिशीलत्वरूपलिङ्गदर्शनात्समुद्रमथने प्रथमसंभवावसरेऽप्ययमचलादेवोत्पन्न इति निश्चिनुम इत्यर्थः । उदयाचलशिखरं चन्द्रोऽतिक्रामतीति भावः ॥ ४३ ॥**

पहले ( समुद्रमथनके समय ) समुद्रस्थ यह चन्द्रमा निश्चय मथनदण्डरूप ( सुमेरु ) पर्वतसे अवश्यमेव उत्पन्न हुआ है, क्योंकि इस समय भी समुद्रमें स्थित इस चन्द्रमाके उदयको पर्वत ( उदयाचल ) से ही उत्पन्न हमलोग देखते हैं । [ इस समय प्रतिदिन उदयाचलसे ही समुद्रस्थ चन्द्रमाका उदय देखकर पूर्वकालमें भी इस चन्द्रमाका मन्थनदण्डभूत मन्दराचलसे ही उदय होना प्रतीत होता है ] ॥ ४३ ॥

**निजानुजेनातिथितामुपेतः प्राचीपतेर्वाहनवारणेन ।**
**सिन्दूरसान्द्रे किमकारि मूर्ध्नि तेनारुणश्रीरयमुज्जिहीते ? ॥ ४४ ॥**

**निजेति ॥ निजानुजेन एकस्मात्सिन्धोरुत्पन्नतयाऽस्माच्चन्द्रात् पश्चाज्जातेन कनीयसा भ्रात्रा प्राचीपतेरिन्द्रस्य वाहनवारणेन प्राच्यां स्थितेनैरावतेनातिथितामुपेतः प्राप्तः । प्राच्यामुदितत्वात्तत्सविधं प्राप्तः सन्नयं चन्द्रोऽग्रजत्वात्सिन्दूरेण सान्द्रे मूर्ध्नि अकारि कृतः किम् ? गौरवान्नमस्कारपूर्वं शिरस्यारोपितः किमित्यर्थः । तेन सान्द्रसिन्दूरशिरःस्थापनेन हेतुना लग्नसिन्दूरवशादयमरुणश्रीरारक्तशोभः उज्जिहीते उदेति, उज्जिहीते किमिति वा । उदितश्चन्द्रः सिन्दूररक्तो दृश्यत इत्यर्थः ॥ ४४ ॥**

( एक समुद्रमें निवास करने तथा समुद्रमथनके अवसरपर चन्द्रमाके बाद उत्पन्न होनेसे ) अपने छोटे भाई इन्द्रके वाहन भूत ऐरावतने ( पूर्व दिशामें जानेसे ) अतिथित्वको प्राप्त चन्द्रमाके मस्तकको सिन्दूरसे लिप्त कर दिया है क्या ? जिससे यह ( चन्द्रमा ) अरुण शोभावाला उदित हो रहा है । [ गृहपर आये हुए पूज्य अतिथिके मस्तकमें सिन्दूरादिका

तिलक लगाकर उस अतिथिका सत्कार करना कर्तव्य होता है, अत एव अतिथिरूपमें आये हुए बड़े भाई चन्द्रके मस्तकमें सिन्दूर-तिलका लगाकर सत्कार करना सदा पूर्व दिशामें निवास करनेवाले ऐरावतको उचित ही है ]॥ ४४ ॥

यत्प्रीतिमद्भिर्वदनैः स्वसाम्यादचुम्बि नाकाधिपनायिकानाम्।
ततस्तदीयाधरयावयोगादुदेति बिम्बारुणबिम्ब एषः ॥ ४५ ॥

यदिति ॥ वृत्तत्वादिगुणयोगेन स्वसाम्यात्प्रीतिमद्भिर्नाकाधिपस्येन्द्रस्य नायिकानां वदनैर्यद्यस्मात्स्वसविधमागत एष चन्द्रोऽचुम्बि चुम्बितः, तस्माद्धेतोस्तस्माच्चुम्बनाद्वा तदीयानां देवेन्द्रनायिकानामधरेषु न्यस्तो यावोऽलक्तकस्तस्य योगात्संबन्धाद्धेतोर्बिम्बवत्पक्वबिम्बीफलवदरुणं बिम्बं मण्डलं यस्य तादृश उदेति। अन्योऽपि समानः सखा सविधमागतः सन् सख्या प्रीत्या चुम्ब्यसे। 'मुखैः' इति बहुवचनेन तत्र प्रदेशे युगपदेव चुम्बनाद्बहुलयावकयोगात्सकलस्यापि चन्द्रबिम्बस्य रक्तत्वं युक्तमिति सूचितम् ॥ ४५ ॥

आह्लादक तथा गोलाकारादि गुणोंसे अपनी समानता होनेके कारण इन्द्रकी नायिकाओंके मुखोंने जिस कारण ( पूर्व दिशामें उदयोन्मुख होते समय समीपस्थ होनेपर ) चन्द्रमाका चुम्बन किया, उस कारण ( या-उस चुम्बनके करने ) से उन ( इन्द्रकी नायिकाओं ) के अधरोंके यावक ( अधर रंगनेके अलक्तक ) के संसर्गसे बिम्ब फलके समान लाल मण्डलवाला यह चन्द्रमा उदित हो रहा है। [ इन्द्रकी नायिकाएँ सदा पूर्व दिशामें रहती हैं, और इस चन्द्रमाको उसी दिशामें उदित होते हुए देखकर चन्द्रमामें आह्लादक एवं गोलाकार आदि गुणोंको अपने मुखके समान देखकर स्नेहपूर्वक वे नायिकाएँ चन्द्रमाका चुम्बन करती हैं और उसके बाद शीघ्र ही उदय होनेसे कुछ क्षण पहले लगे हुए उन इन्द्रनायिकाओंके अधरके रागसे यह चन्द्रबिम्ब अरुण दृष्टिगोचर होता है। लोकमें भी कोई व्यक्ति अपने समान गुणवाले व्यक्तिके आनेपर उसका स्नेहपूर्वक चुम्बनादि करता है। उदयको प्राप्त यह चन्द्रमण्डल रक्तवर्ण दृष्टिगोचर हो रहा है ]॥ ४५ ॥

विलोमिताङ्कोत्किरणाद्दुरूहदृगादिना दृश्यविलोचनादि।
विधिर्विधत्ते विधुना वधूनां किमाननं काञ्चनसञ्चकेन ? ॥ ४६ ॥

विलोमितेति ॥ विधिर्ब्रह्मा विधुना चन्द्रेणैव काञ्चनस्य सञ्चकेन बिम्बकेन कृत्वा वधूनामतिरमणीयमाननं विधत्ते किम्। यतः किंभूतेन ? विलोमितः पराङ्मुखः कृतः स्वप्रभया जितः अङ्कः कलङ्को येन तादृशादुत्कृष्टादतितेजस्विनः किरणाद्धेतोर्दुरूहो दुस्तर्क्यो दृगादिर्नेत्राद्यवयवो यस्य, अथ च,-विपरीतीकृतानामङ्कानां नेत्रादिनिर्माणार्थं निम्नोन्नतांशचिह्नस्थानानामुत्किरणं संघटनं तस्माद्धेतोः साक्षादलक्ष्यनेत्रकर्णनासिकाद्यवयवेन। आननं तु साक्षाद्दृश्या विलोचननासाकर्णाद्यवयवा यस्य तादृशम्। तस्माद्ब्रह्मा स्त्रीमुखं चन्द्ररूपेण स्वर्णस्य सञ्चकेन निर्ममे। सञ्चके हि

निष्पाद्यस्य वस्तुनो निम्नोन्नतभागा विपरीता एवोत्कीर्यन्ते । तत्र च नेत्राद्यवयवा दुर्ज्ञेया भवन्ति, तन्निर्मिते मुखादौ च दृश्या भवन्ति, तस्मादेवं तर्क्यत इत्यर्थः । उदितमात्रश्चन्द्रोऽत्युत्तमसुवर्णसञ्चकवद्रक्तो दृश्यत इति भावः । उत्तमं सुवर्णं रक्तवर्णं भवति । 'आननम्' इति जात्येकवचनम् ॥ ४६ ॥

ब्रह्मा अपनी प्रभासे तिरस्कृत कलङ्कवाले अतिशय उत्कृष्ट किरणों ( पक्षा०—उलटा बनाये गये चिह्नोंकी रचना ) से स्पष्ट नहीं दिखलायी पड़ते हैं, नेत्र आदि ( नासिका, अधर…… ) जिसके ऐसे चन्द्रमारूप सोनेके साँचेसे स्त्रियोंके मुखको रचते हैं क्या ? । [ जिस प्रकार नेत्र नासिका आदि उलटा खोदनेसे स्पष्ट नहीं मालूम पड़ते हुए नेत्रादि वाले सांचेसे कोई मूर्ति ढाली जाती है तो उस ढाली गयी मूर्ति आदिमें नेत्रादि स्पष्ट दिखलायी पड़ने लगते हैं, उसी प्रकार गोलाकार उदयकालीन होनेसे सुवर्णवत रक्त-पीतवर्ण तथा कलङ्कको पराभूत करनेवाली किरणकी उत्कृष्टतासे ( पक्षा०—उलटे खोदे गये चिह्नों ) से स्पष्ट नहीं दिखलायी पड़नेवाले नेत्रादिवाले चन्द्ररूपी सोनेके सांचेसे स्त्रियोंके मुखको ब्रह्मा ढालते हैं क्या ? । उदयकालीन चन्द्र सोनेके समान रक्त-पीतवर्ण होता है । चन्द्रको स्त्रियोंके मुखका सुवर्णमय सांचा होनेसे उसमें उलटा खोदे गये नेत्रादिको स्पष्ट नहीं दिखलायी पड़नेकी उत्प्रेक्षा की गयी है ] ॥ ४६ ॥

अनेन वेधा विपरीतरूपविनिर्मिताङ्कोत्किरणाङ्कितेन ।
त्वदाननं दृश्यदृगाद्यलक्ष्यदृगादिनैवाकृत सञ्चकेन ॥

अनेनेति ॥ वेधाः विपरीतरूपं यथा तथा विनिर्मितमुक्तविधमङ्कोत्किरणं यत्र तादृशमङ्कं यस्य तेन । तथा,—अलक्ष्यदृगादिनानेन चन्द्रेणैव सञ्चकेन दृश्यं सुन्दरतरम्, अथ च,—प्रत्यक्षदर्शनयोग्यं दृगादि यस्य तादृशं त्वदाननमकृत । त्वदाननमेवाकृत न त्वन्याननमिति वा । अयमेवात्र श्लोके विशेषः । अयं श्लोकः क्षेपकः ॥

ब्रह्माने, उलटा बनाये गये चिह्नोंकी रचनावाले अङ्ग हैं जिसमें ऐसे तथा ( उलटा चिह्न करनेके कारण ही ) स्पष्ट नहीं दिखलायी देते हुए नेत्रादिवाले इस ( चन्द्ररूपी ) सांचेसे ही स्पष्ट देखने योग्य ( या-मनोहर ) नेत्रादिवाले तुम्हारे मुखको बनाया है । [ इस श्लोकका आशय पूर्व श्लोकके समान ही है, केवल विशेष इतना ही है कि पूर्व श्लोकमें स्त्रियोंके मुख की रचना करने को कहा गया है तथा इस श्लोकमें केवल दमयन्तीके ही मुखकी रचना करनेको कहा गया है । इससे अन्य स्त्रियोंका मुख उक्त चन्द्ररूपी सांचेमें नहीं ढाले जानेसे सामान्य सौन्दर्य युक्त तथा तुम्हारा मुख उक्तरूप चन्द्ररूपी सांचेमें ढाले जानेसे अन्य स्त्रियोंके मुखसे अधिक सौन्दर्य युक्त है, यह भी सूचित होता है । पूर्व श्लोकके समान ही अर्थ होनेसे टीकाकार इसे क्षेपक मानते हैं ] ॥

अस्याः सुराधीशदिशः पुराऽसीत् यदम्बरं पीतमिदं रजन्या ।
चन्द्रांशुचूर्णव्यतिचुम्बितेन तेनाधुना नूनमलोहितायि ॥ ४७ ॥

अस्या इति ॥ हे भैमि ! अस्याः सुराधीशस्येन्द्रस्य दिशः यदिद्मम्बरं गगनं वस्त्रं च पुरा चन्द्रोदयात् पूर्वं रजन्या राध्या हरिद्रया च पीतं तमोऽग्रासत्वाददृश्यं पीतवर्णं चासीत्, तेनाम्बरेण गगनेन वस्त्रेण चाधुना चन्द्रोदये चन्द्रांशूनां चूर्णैः श्लक्ष्णसूक्ष्मतेजोलेशैः कर्तृभिर्व्यतिचुम्बितेनातितरां स्पृष्टेन सता चन्द्रांशुवच्छुभ्रतरेण चूर्णेन ताम्बूलसाधनचूर्णद्रव्येण स्पृष्टेन सता नूनमलोहितायि आरक्तीभूतम्। यत्तमसा पूर्वं नीलमभूत्तदेवेदानीमुद्यच्चन्द्रालोहितकरसंस्पर्शाद्रक्तं जातमित्यर्थः। हरिद्रया पीतवर्णं वस्त्रं चूर्णेन युक्तं सद्रक्तं भवति। देवेन्द्रस्त्रियाश्च वस्त्राणि नानावर्णानि युक्तानि। चन्द्रांशव एव चूर्णमिति वा। अलोहितायि, लोहितादिड्यपन्ताद्भावे चिण् ॥ ४७ ॥

इस सुराधीशकी दिशा अर्थात् पूर्व दिशाका जो आकाश (पक्षा०-कपड़ा, चन्द्रोदयसे) पहले रात्रि (पक्षा०—हल्दी) से पीत (अन्धकारसे पीया गया = अदृश्य, पक्षा०—पीले रंगवाला) था, इस समय (चन्द्रोदय होनेपर) चन्द्र-किरणके समान (या—चन्द्र-किरणरूप) चूनेसे संस्पृष्ट वह (आकाश, पक्षा०-कपड़ा) लाल हो गया। [ हल्दीसे रंगे गये पीले कपड़ेमें चूनेका संसर्ग होनेसे लाल होना लोक प्रसिद्ध है; जो देवताओंके राजा (इन्द्र) की (पत्नीरूपिणी पूर्व) दिशा है, उसके कपड़े (पक्षा०—आकाश) को पीला, लाल अर्थात् अनेक वर्ण होना उचित ही है ] ॥ ४७ ॥

तानीव गत्वा पितृलोकमेनमरञ्जयन् यानि स जामदग्न्यः।
छित्त्वा शिरोऽस्राणि सहस्रबाहोर्विस्राणि विश्राणितवान् पितृभ्यः ॥४८॥

तानीति ॥ सोऽतिवीरो जामदग्न्यः सहस्रबाहोः शिरश्छित्त्वा विस्राण्यामगन्धीनि यान्यस्राणि रक्तानि पितृभ्यो जमदग्न्यादिभ्यो विश्राणितवान्दत्तवान्। यै रक्तैः प्रतिज्ञातं पितृतर्पणं कृतवान्। तान्येव रक्तानि मन्त्रबलात्पितृलोकं गत्वा प्राप्य पितृलोकाधीन(श)मेनं चन्द्रमरञ्जयन् रक्तं चक्रुरिव। 'चन्द्रो वै पितृलोकः' इति श्रुतेः। चन्द्रो रक्तवर्णो दृश्यत इति भावः। परशुरामः सहस्रार्जुनं हत्वा तदीयै रक्तैः पितृतर्पणं कृतवानितीतिहासः। 'विस्रं स्यादामगन्धि यत्' इत्यमरः ॥ ४८ ॥

परशुरामजीने सहस्रार्जुनके शिरको काटकर जिन कच्चे गन्धवाले रक्तोंको (जमदग्नि आदि) पितरोंके लिए दिया, वे ही (रक्त) मानो (मन्त्र बलसे) पितृलोकमें जाकर इस (चन्द्रमा) को रक्तवर्ण कर दिये हैं। [ चन्द्रको पितृलोकमें निवास करनेसे वहां पहुंचे हुए रक्तोंसे उस चन्द्रका लाल होना युक्तियुक्त ही है ] ॥ ४८ ॥

पौराणिक कथा—परशुरामजीके आश्रमसे बाहर जानेपर सहस्रार्जुनने जमदग्निके शिरको काट लिया, पुनः परशुरामजीने बाहरसे लौटकर जब पिताके मारे जानेका समाचार सुना, तब प्रतिज्ञा की कि सहस्रार्जुन (एवं उसके वंशवाले समस्त क्षत्रियों) के रक्तसे पितृतर्पण करूंगा। तदनुसार ही उन्होंने सहस्रार्जुन (को तथा २१ बार अन्य समस्त क्षत्रियों) को मारकर उस रक्तसे पितृतर्पणकर अपनी प्रतिज्ञा पूर्ण की।

अकर्णनासस्त्रपते मुखं ते पश्यन्न सीतास्यमिवाभिरामम् ।
रक्तोस्रवर्षी बत लक्ष्मणाभिभूतः शशी शूर्पणखामुखाभः ? ॥ ४९ ॥

अकर्णेति ॥ हे प्रिये ! शशी सितास्यमिवाभिरामं कर्णादिकृतशोभं ते मुखं पश्यन्सन्न त्रपते न लज्जते बत चित्रम् । किंभूतः ? न विद्यते कर्णनासं स्वभावादेव यस्य सः । तथा रक्ता आरक्ता उस्राः किरणास्तद्वर्षणशीलः, शोणश्चासौ किरणवर्षी च तादृशो वा । तथा,–लक्ष्मणा कलङ्केनाभिभूत आक्रान्तमध्यः, अत एव शूर्पणखाया रावणभगिन्या मुखवदाभा यस्य स तद्वदनतुल्यः; एषु लज्जाकारणेषु सत्स्वपि न लज्जते तच्चित्रमित्यर्थः । त्वन्मुखं पश्यन्नप्युदयत्येव, स्वं प्रकाशयति च, तस्मादेव न लज्जते, इति ज्ञायते । अन्यो ह्यकर्णनासो लज्जते, अयं तु तादृशोऽपि न लज्जत इत्यपि चित्रमेव । शूर्पणखामुखमपि लक्ष्मणेन पराभूतं छिन्नकर्णनासत्वाद्रुधिरवर्षि सद्रामसभि लक्ष्यीकृत्य वर्तमानम् , अत एवाभि भयरहितं च, सीतामुखं पश्यदपि न लज्जते, तदनन्तरमपि प्रौढिवादप्रकटनात् 'अभि'शब्दस्यावृत्तिः कार्या । 'लक्ष्म'-शब्दो नान्तः, पक्षेऽकारान्तः ॥ ४९ ॥

( हे प्रिये !, स्वभावतः ) नाक-कानसे हीन, रक्तवर्णवाली ( अथवा—उदयकालीन होनेसे स्वयं रक्तवर्ण, तथा ), किरणोंको वरसाता हुआ और कलङ्क ( मृगाकार काले चिह्न ) से आक्रान्त यह चन्द्रमा सीताके मुखके समान सुन्दर तुम्हारे मुखको देखता हुआ उस प्रकार लज्जित नहीं हो रहा है; जिस प्रकार ( लक्ष्मणजीके द्वारा काटे जानेसे ) नाक-कानसे रहित, लाल तथा रक्तको वरसाता ( वहाता ) हुआ तथा लक्ष्मणजीसे पराभूत शूर्पणखाका मुख रामचन्द्रको लक्ष्यकर स्थित तथा निर्भय सीताजीके मुखको देखता हुआ नहीं लज्जित हुआ, यह आश्चर्य है । [ अपनेसे श्रेष्ठ उक्तरूप तुम्हारे मुखको देखकर हीन चन्द्रमाको लज्जित होना चाहिये था, किन्तु वह नहीं लज्जित होता यह उस प्रकार आश्चर्य है, जिस प्रकार उक्त रूप होनेसे हीनतम शूर्पणखाका मुख श्रेष्ठ सीताके मुखको देखकर भी नहीं लज्जित हुआ । सत्ययुगमें स्थित नलका अपनेसे वाद त्रेता युगमें होनेवाले सीता, राम, लक्ष्मण तथा शूर्पणखा आदिका वर्णन कवि का कल्पान्तरकी अपेक्षा समझना चाहिये ] ॥ ४९ ॥

पौराणिक कथा—सीताकी आज्ञासे १४ वर्षके लिये वनवास करते हुए अभिराम रामचन्द्रके साथ विवाहकी इच्छा करती हुई रावणकी वहन शूर्पणखाके नाक कानको लक्ष्मणजीने काट लिया था । यह कथा वाल्मीकि रामायण आदि अनेक ग्रन्थोंमें मिलती है ।

आदत्त दीप्रं मणिमम्बरस्य दत्त्वा यदस्मै खलु सायधूर्त्तः ।
रज्यत्तुषारद्युतिकूटहेम तत्पाण्डु जातं रजतं क्षणेन ॥ ५० ॥

आदत्तेति ॥ हे भैमि ! सायंकालरूपो धूर्तो यद् रज्यन्नुदयकाले रक्तीभवंस्तुषारद्युतिश्चन्द्र एव लेपवशाद्रज्यत् कूटहेम कृत्रिमं सुवर्णमस्मै गगनाय मूल्यरूपेण दत्त्वा

दीप्तं प्रकाशमानमम्बरस्य मणिं सूर्यमादत्त जग्राह। तदलीकं हेम क्षणमात्रेण पाण्डु शुभ्रं रजतं खलु रूप्यमिव जातम्। धूर्तो हि रूप्यं लेपादिभिरुपलिप्तं सुवर्णीकृत्य ददाति, वस्त्रान्तरस्थमपि प्रसरद्दीप्तिकं रत्नं च गृह्णाति। उदयानन्तरमतिक्रान्तकियत्कालत्वाद्रक्तिमानं परित्यज्य चन्द्रो रूप्यवद्धवलो जात इति भावः। ग्रजन्तोऽत्र 'साय' शब्दः 'सायं' शब्दसमानार्थः॥ ५०॥

सायङ्कालरूप धूर्तने इस (आकाश) के लिए ऊपरमें लेप (कलई) करने अर्थात् सुनहला पानी चढ़ानेसे लाल चन्द्ररूप नकली सोनेको देकर चमकते हुए आकाशके रत्न (रूप सूर्य) को ले लिया, तथा वह (रंगा गया चन्द्ररूप नकली सोना) क्षण (थोड़ी देर) में श्वेत वर्ण चांदी हो गया। [लोकमें भी कोई धूर्त चांदीके ऊपर सोनेका पानी चढ़ाकर किसी अजानके लिए देकर चमकते हुए रत्नको ले लेता है और वह पानी चढ़ाया हुआ चांदीरूप नकली सोना थोड़ी देर वाद श्वेत हो जाता है। सायङ्कालको धूर्त व्यक्ति, उदयकालके रक्तवर्ण चन्द्रको पानी चढ़ाया हुआ नकली सोना तथा सूर्यको वहुमूल्य रत्न, तथा कुछ समय वाद श्वेत वर्ण हुए चन्द्रमाको प्रकृतावस्थापन्न चांदी होनेकी कल्पना की गयी है]॥ ५०॥

**वालेन नक्तंसमयेन मुक्तं रौप्यं लसड्डिम्बमिवेन्दुबिम्बम्।**
**भ्रमिक्रमादुज्झितपट्टसूत्रनेत्रावृतिं मुञ्चति शोणिमानम्॥ ५१॥**

वालेनेति॥ हे प्रिये! रौप्यं राजतं रजतमयं लसद्विलसमानं डिम्वं वालक्रीडासाधनं भ्रमरकमिवेन्दुविम्वं कर्तृ भ्रमिक्रमाद्भ्रमणपरिपाट्या, अथ च,-ऊर्ध्वदेशगमनक्रमेणोज्झिता त्यक्ता या पट्टसूत्रस्य नेत्रं दोरकस्तत्कृता आवृतिर्वेष्टनं तद्रूपम्, अथ च,—पट्टसूत्रजालिकावत् चन्द्रावरणं येन तं शोणिमानं रक्तिमानं मुञ्चति। किंभूतमुभयम्? नक्तंसमयरूपेण वालेन, अथ च,—वालेन प्रदोषरूपेण, रात्रिसमयेन मुक्तं भ्रमणार्थं करात् कृतमोचनम्, अथ च—उद्गीर्णं जनितोदयम्। शिशुक्रीडासाधनं हि भ्रमरकं काष्ठमयं भवति। ईश्वराणां च डिम्वं समृद्ध्यतिशयाद्राजतं पट्टसूत्रवलितदोरकस्रंसनात्तत्संवन्धजातं रक्तिमानं मुञ्चति। तथेदं चन्द्रविम्वमपीत्यर्थः। इदानीं चन्द्रो धवलो जात इति भावः। 'नेत्रावृतेः—' इति पाठे—भ्रमिक्रमाद्धेतोरुज्झिता या पट्टसूत्रनेत्रावृतिस्तस्या हेतोः शोणिमानं मुञ्चति। उज्झिता डिम्वेनैव पट्टसूत्रनेत्रावृतिर्यत्र तादृशाद्भ्रमिक्रमाद्धेतोरिति वा डिम्वं लट्टू इति वा राष्ट्रभाषायां भ्रमरकस्य संज्ञा। राष्ट्रभाषायां च 'भँवरा' इति संज्ञा। रौप्यं, संवन्धे विकारे वाण्। 'नेत्रं मन्थगुणे वस्त्रे' इत्यभिधानात् 'नेत्र' शब्दो यद्यपि मन्थवेष्टनगुणे मुख्यः तथाप्यत्र गुणमात्रपर इति ज्ञेयम्॥ ५१॥

वालक रात्रिसमय अर्थात् प्रदोपकाल (पक्षा०—रात्रि-समयरूप, धनिकके) वालकके द्वारा छोड़े (नचाये) गये चांदीके वने हुए शोभमान लट्टू (नचानेका भँवरा) नामक खिलौनेके समान चन्द्रविम्व घुमनेके क्रमसे छोड़े गये रेशमी डोरीके लिपटाव (लपेटनेके

भाव ) वाली ( पक्षा०—रेशमी डोरेके समान चन्द्रावरणवाली ) लालिमाको छोड़ रहा है। [ जिस प्रकार बालक लट्टूको डोरेमें लपेटकर फेंकता है तो वह नाचते समय क्रमशः लाल डोरेके लिपटावको छोड़ते-छोड़ते अपने प्राकृत श्वेत आदिके रूपमें दीखने लगता है, उसी प्रकार मानो प्रदोषकालरूप बालकसे रेशमी डोरेमें लपेटकर फेंका (नचाया) गया। चांदीके बने लट्टूके समान यह चन्द्रबिम्ब अपने आप रूप ( लालिमा ) को क्रमशः छोड़ रहा है। सामान्य वर्गके लड़कोंका लट्टू काष्ठका तथा डोरा सामान्य सूतका होता है, किन्तु प्रदोषकालरूप धनिक बालकके चन्द्ररूप लट्टूको चांदीका तथा चन्द्रावरणरूप डोरेको रेशमी सूतका होना उचित ही है ]॥ ५१ ॥

ताराक्षरैर्यामसिते कठिन्या निशाऽलिखद्व्योम्नि तमःप्रशस्तिम्।
विलुप्य तामल्पयतोऽरुणोऽपि जातः करे पाण्डुरिमा हिमांशोः ॥५२॥

तारेति। निशाऽसिते श्यामे व्योम्नि गगन एव कज्जलादिलिप्तश्यामलपट्टिकायां कठिन्याः शुभ्रधातुविशेषस्य संबन्धिभिस्ताराक्षरैः शुभ्रैरक्षरैरिव नक्षत्ररूपैरक्षरैः कृत्वा यां तमःप्रशस्तिं तमोवर्णनश्लोकादिलिपिमलिखत्। ताराक्षरैरुपलक्षितां यां तमः-प्रशस्तिं रात्रिः कठिन्यालिखदिति वा। तां लिपिं विलुप्य प्रोञ्छ्याल्पयतः परिमेय-ताराक्षरां कुर्वतो हिमांशोररुणेऽपि करे किरणे, अथ च—पाणौ, पाण्डुरिमा जातः। प्ररूढकिरणे हि चन्द्रे नक्षत्राणामल्पता भवतीति खटिकालिखिताक्षराणि मार्जयतश्चा-रक्तोऽपि करः खटिकासङ्गाद्धवलो भवतीति। तमसि नक्षत्राणि बहून्युज्ज्वलतराणि च दृष्टानि, चन्द्रे तूदितेऽल्पानि निष्प्रभाणि च जातानि, चन्द्रश्च धवलो जात इति भावः ॥ ५२ ॥

रात्रिने कृष्णवर्ण आकाश ( पक्षा०—कज्जली आदिसे काली पाटी या स्लेट ) पर नक्षत्ररूपी ( पक्षा०—बड़े-बड़े ) अक्षरोंसे उपलक्षित अन्धकारके जिस प्रशस्तिको खड़िया ( चॉक ) से लिखा था, उसे मिटाकर थोड़ा ( परिमिताक्षर ) करते हुए चन्द्रमाकी रक्तवर्ण किरणों ( पक्षा०—हाथ ) में भी सफेदी हो गयी है। [ जिस प्रकार काली पाटीपर खड़ियासे लिखे गये अक्षरोंको मिटानेवाले लाल हाथ श्वेत हो जाता है, उसी प्रकार रात्रि-द्वारा काले आकाशरूप पाटीपर खड़ियेसे लिखी गयी नक्षत्ररूप अक्षरवाली अन्धकारप्रशस्तिको लाल किरणोंसे मिटाकर थोड़ी करती हुई चन्द्र किरण भी श्वेत हो गयी है। चन्द्रोदयके पहले बहुत ताराएँ थीं, वे चन्द्रोदय होनेपर कम हो गयी हैं ]॥ ५२ ॥

सितो यदाऽत्रैष तदाऽन्यदेशे चकास्ति रज्यच्छविरुज्जिहानः।
तदित्थमेतस्य निधेः कलानां को वेद वा रागविरागतत्त्वम् ? ॥५३॥

सित इति। एष चन्द्रो यदा यस्मिन्काले अत्र देशे सितो धवलश्चकास्ति, तदा तस्मिन्नेव काले अन्यदेशे रज्यच्छवी रक्तकान्तिरुज्जिहान उदयन् शोभते। एवमत्रो-दयत्रक्तः, अन्यत्र च श्वेत इत्यपि सामर्थ्याल्लभ्यम्। एतद्देशस्थं प्रतीदानीं सितो

दृश्यते, द्वीपान्तरस्थं प्रति तूदयन्निदानीमेव दृश्यते यस्मात्, तस्मात्कलानां निधेः पूर्णस्य चन्द्रस्य रागविरागयोर्लोहितत्वालोहितत्वयोस्तत्त्वं याथात्म्यमित्थममुना प्रकारेण को वा वेद, अपि तु—कोऽपि निश्चेतुं न शक्नोतीत्यर्थः। उदयास्तमययोरक्तात्वितत्वाद्व्यवहितस्य यत्र यदा प्रथमदर्शनं तदा तत्रोदय इति दूरस्थस्य प्रथमं रक्तत्वप्रत्ययः, क्रमसामीप्यात्तु धावल्यप्रत्यय इति तत्त्वम्। अन्यस्यापि चतुःषष्टिकलाभिज्ञस्यानुरागाननुरागयोर्याथात्म्यं कुत्रानुरक्तः कुत्र वा नेति कोऽपि न जानाति ॥५३॥

यह (चन्द्र) जब (कुछ अधिक रात्रि व्यतीत होनेपर) श्वेतवर्ण शोभता है, तब (इसी समय) दूसरे (यहांसे पश्चिमवाले) देशमें उदय होता हुआ (अत एव) अरुणवर्ण शोभता है; इस कारणसे इस प्रकार (इस देशमें श्वेतवर्ण तथा यहांसे सुदूर पश्चिम देशमें उदय होते रहनेके कारण रक्तवर्ण, एवं यहांसे अतिसुदूर पूर्व दिशामें अस्त होते रहनेके कारण कान्तिहीन, सोलह, पक्षा०—चौंसठ कलाओं) के निधान इस चन्द्रमाके राग तथा विराग (लालिमा तथा श्वेतत्व, पक्षा०—अनुराग तथा वैराग्य) के तत्त्वको कौन जानता है? अर्थात् कोई नहीं जानता ॥ ५३ ॥

काश्मीरजैः रश्मिभिरौपसन्ध्यैर्मृष्टं धृतध्वान्तकुरङ्गनाभि।
चन्द्रांशुना चन्दनचारुणाऽङ्गं क्रमात् समालम्भि दिगङ्गनाभिः ॥५४॥

कश्मिरजैरिति। दिग्भिरेवाङ्गनाभिः संध्यायाः समीपमुपसंध्यं तत्र जातैररुणै रश्मिभिरेव कश्मीरजैः कुङ्कुमैः कृत्वा मृष्टं पूर्वं कृतोद्वर्तनं ततः संध्यायामपगतायां धृता ध्वान्तरूपा मृगनाभिः कस्तूरी येन तादृशमङ्गं क्रमात्कस्तूरीलेपानन्तरं चन्द्रांशुनैव चन्दनेषु मध्ये चारुगोत्तमेन चन्दनेन कृत्वा समालम्भि अलेपि। अन्या अपि ह्यङ्गनाः कुङ्कुमादिभिः क्रमेणाङ्गमनुलिम्पन्ति। चन्दनधवलैश्चन्द्रकरैः सर्वा अपि दिशो वितमस्काः कृता इति भावः। औपसंध्यैः सामीप्येऽव्ययीभावाद्भवार्थेऽण् ॥ ५४ ॥

दिशारूपिणी स्त्रियोंने सन्ध्याकालके समीपवर्ती किरणरूप कुङ्कुमोंसे लिप्त (तदनन्तर) अन्धकाररूपी कस्तूरी लगाये हुए शरीरको चन्द्रकिरणरूप श्रेष्ठ श्वेत चन्दनसे क्रमशः संलिप्त किया है। [लोकमें भी कोई स्त्रियां शरीरमें क्रमशः कुङ्कुम, कस्तूरी तथा श्वेतचन्दनका लेपकर शरीरका संस्कार करती हैं। चन्द्रकिरणसे इस समय सब दिशाएँ व्याप्त हो गयी हैं] ॥ ५४ ॥

विधिस्तुषारर्तुदिनानि कर्तं कर्तं विनिर्माति तदन्तभित्तैः।
ज्योत्स्नीर्न चेत्तत्प्रतिमा इमा वा कथं कथं तानि च वामनानि ?॥५५॥

विधिरिति। विधिस्तुषारर्तोः शिशिरर्तोर्दिनानि कर्तं कर्तं छित्त्वा छित्त्वा तेषां दिनानामन्तभित्तैर्मध्यसंबन्धिभिः सारभूतैः शकलैः शुभ्रैः खण्डैः कृत्वा ज्यौत्स्नीर्निशा विनिर्माति। न चेदेवं यदि नाङ्गीक्रियते, तदेमा रात्रयश्चन्द्रिकायुक्तास्तत्प्रतिमास्तैर्दिनैस्तुल्याः शीतलत्वप्रकाशवत्त्वाभ्यां तत्सदृश्यः कथम्? तानि च दिनानि वाम-

जानि न्यूनपरिमाणानि न्यूनशीतत्वादिगुणानि कथं वा? अपि तु—दिनवामनता रात्रिदीर्घतान्यथानुपपत्तेः शिशिरर्तुदिनापेक्षया च ज्यौत्स्नीनामतितमां शीतत्वप्रकाशवत्त्वानुपपत्तेश्च शिशिरर्तुदिनानि छित्त्वा छित्त्वैव तत्सारभूतैश्च शकलैश्चन्द्रिकान्विता रात्रयो ब्रह्मणा वर्धिता इत्यर्थः। चन्द्रचन्द्रिकया रात्रिः शीतला धवलतरा च कृतेति भावः। कर्तं कर्तम् 'कृती छेदने' इत्यस्मादाभीक्ष्ण्ये णमुल् द्विर्वचनं च। ज्यौत्स्नीः, ज्योतिरस्यामस्तीत्यर्थे 'ज्योत्स्नातमिस्रा—' इति साधुकृतात् 'ज्योत्स्ना'-शब्दाद् अण्प्रकरणे 'ज्योत्स्नादिभ्य उपसंख्यानम्' इत्यस्त्यर्थेऽणि ङीप् ॥ ५५ ॥

ब्रह्मा शिशिर ऋतुके दिनोंको काट-काटकर उनके मध्यवर्ती सारभूत श्वेत टुकड़ोंसे चांदनीकी रात्रियोंकी रचना करते हैं, अन्यथा ये (चांदनीयुक्त रात्रियां) उन (शिशिर ऋतुके दिनों) के समान (शीतल) क्यों हैं और वे (शिशिर ऋतुके दिन) छोटे क्य हैं? [इस चांदनीकी रात्रियों को शीतल तथा शिशिर ऋतुके दिनोंको छोट होनेसे अनुमान होता है कि ब्रह्मा शिशिर ऋतुके दिनोंको काट-काटकर उनके सारभू श्वेत खण्डोंसे चांदनीकी रात्रियोंको रचते हैं। चांदनीसे रात्रि शीतल एवं प्रकाश युत हो गयी]॥ ५५ ॥

इत्युक्तिशेषे स वधूं बभाषे सूक्तिश्रुतासक्तिनिबद्धमौनाम्।
मुखाभ्यसूयानुशयादिवेन्दौ केयं तव प्रेयसि! मूकमुद्रा?॥ ५६ ॥

इतीति। स नलः इत्युक्तिशेषे एवं चन्द्रवर्णनावसाने सूक्तीनां प्रसादादिगुणयुक्तानां शोभनवचनानां श्रुते श्रवणे विषये आसक्त्या रसातिशयात्तदेकतानतया बद्ध स्वीकृतं मौनं यया तां तूष्णींभावमास्थितां वधूं भैमीं प्रतीदं बभाषे। इति किम्? हे प्रेयसि! इन्दौ विषये तवेयं मूकस्येव मुद्रा वाग्निरोधरीतिः किंकारणिका? त्वमपि किमिति न चन्द्रं वर्णयसीत्यर्थः। मौने स्वयमेव हेतुमुत्प्रेक्षते—मुखस्य चन्द्रकृतवदनसाम्यस्याभ्यसूया स्पर्धा तज्जन्यान्महतोऽनुशयान्मनोद्वेषादिव। स्वस्पर्धाकारिणो हि वर्णनेऽन्येन क्रियमाणेऽन्योऽपि कोपात्तूष्णीं तिष्ठति, नानुमोदते, स्वयं च न तं वर्णयति। तथा—त्वन्मुखस्पर्धाकरणसंजातकोपादिवेन्दुं न वर्णयसि नानुमोदसे च किमिति प्रश्नः। नलसूक्तिश्रवणादरकृतं मौनं कोपादिवेत्युत्प्रेक्षितम् ॥ ५६ ॥

इस प्रकार (२२।३९-५५, चन्द्रवर्णनरूप) सद्भाषणके अन्तमें वे (नल) उक्त सद्वर्णन सुननेमें आसक्त (तल्लीनता) होनेसे मौन दमयन्तीसे बोले—'हे प्रियतमे!' मानों (तुम्हारे) मुखके साथ (चन्द्रके द्वारा स्पर्द्धारूप) असूया करनेके पश्चात्तापके समान तुम मौन हो क्या?। [ऐसे सुन्दर चन्द्रको देखकर तुम चुप क्यों? तुम्हें भी इसका वर्णन करना चाहिये, परन्तु वर्णन नहीं करती हो इससे ज्ञात होता है कि सुन्दरतम तुम्हारे मुखके साथ चन्द्रमा स्पर्द्धा करता है और उसका मैं सराहना करता हूं, इसी द्वेषसे तुम चुप हो। दूसरा भी कोई व्यक्ति अपने साथ असूया करनेवालेके वर्णनको सुनकर पश्चात्ताप या द्वेषसे चुप रहता है]॥ ५६ ॥

श्रृङ्गारभृङ्गारसुधाकरेण वर्णस्रजाऽनूपय कर्णकूपौ।
त्वच्चारुवाणीरसवेणितीरतृणानुकारः खलु कोपकारः॥ ५७॥

श्रृङ्गारेति। हे प्रिये! त्वं श्रृङ्गाररससंबन्धी भृङ्गारः स्वर्णकलशस्तद्रूपेण सुधाकरेण चन्द्रेण हेतुना वर्णस्रजा कृत्वा मम कर्णकूपौ अनूपय जलपूर्णौ कुरु। वर्णस्रजः सरसत्वात्कर्णकूपयोर्जलपूर्णत्वकरणं युक्तम्। अथ च—श्रृङ्गाररससंबन्धिस्वर्णकलशस्य भवन्मुखस्य संबन्धि यत्पीयूषं तस्याकरेण खनिभूतया सरसया वर्णस्रजा कर्णकूपावनूपय। खलु यस्मात् कोपकार इक्षुविशेषस्तव चारुवाण्या वक्रोक्त्यादिरूपाया वाचः संबन्धिनः श्रृङ्गारादयो रसास्तेषां वेणिः प्रवाहस्तस्यास्तीरे समुद्यत्तृणं तस्यानुकारस्तत्सदृशः। अतिस्वादुरसोऽपीक्षुविशेषो यदीयसरसवाणीतीरतृणमनुकरोति, नतु समो जातः। तां वाणीं श्रावय, चन्द्रं वर्णयेति भावः। 'कोपकाराद्या इक्षुविशेषाः' इति क्षीरस्वामी। अनूपय, 'अनूप' शब्दात्, 'तत्करोति—' इति णिचि लोट्॥५७॥

(हे प्रियतमे!) श्रृङ्गारकी झारी (कलस-विशेष) तथा अमृतका आकर वर्णमाला (चन्द्रवर्णनके अक्षरसमूह) से मेरे कानरूपी कूपोंको (अमृतजलसे) पूर्ण करो, क्योंकि कोपकार (इक्षु-विशेष—एक प्रकारका उत्तम जातीय गन्ना) तुम्हारी सुन्दर वाणीरूपी अमृतरसके प्रवाहके तीरपर (उत्पन्न होनेवाले) तृणके समान है। [अत्यन्त मधुरतम जो गन्ना तुम्हारे वचनामृतरसके प्रवाहके तीरपर उत्पन्न तृणके समान है (उस तृणके समान है न कि उक्तरूप तृण है अर्थात् उस तृणसे भी हीन है), अतः उस गन्नेको तुम्हारे वचनामृतकी समानता करना तो बहुत-बहुत दूरकी कल्पना है। तुम भी चन्द्रका वर्णनकर मेरे कानोंको तृप्त करो]॥ ५७॥

अत्रैव वाणीमधुना तवापि श्रोतुं समीहे मधुनः सनाभिम्।
इति प्रियप्रेरितया तयाऽथ प्रस्तोतुमारम्भि शशिप्रशस्तिः॥ ५८॥

अत्रैवेति। इति प्रियेण प्रेरितया तया भैम्याथानन्तरं शशिनः प्रशस्तिर्माहात्म्यं प्रस्तोतुमारम्भि प्रारब्धा। इति किम्? हे भैमि! अहमत्रैव चन्द्रवर्णन एव विषये मधुनोऽमृतस्य सनाभिं तुल्यां तवापि वाणीमधुना श्रोतुं समीहे इच्छामीति॥ ५८॥

इस समय मैं इस चन्द्रके विषयमें ही मधुतुल्य तुम्हारे वचनको सुनना चाहता हूं। इस प्रकार (२०।५६-५८) प्रियसे प्रेरित उस दमयन्तीने चन्द्रप्रशस्तिका वर्णन करना आरम्भ किया॥ ५८॥

पूरं विधुर्वर्द्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति।
पयांसि दोग्धि प्रियविप्रयोगसशोककोकीनयने कियन्ति॥ ५९॥

पूरमिति। हे प्रिय! अयं विधुः पयोधेः पूरमागन्तुकजलप्रवाहं वर्द्धयितुमेणाङ्कमणिं चन्द्रकान्तं कियन्ति पयांसि दोग्धि तस्माद्गृह्णाति तथा,—प्रियस्य चक्रवाकस्य विप्रयोगेन सशोकायाः कोक्या नयने अपि कियन्ति जलानि दोग्धि, ताभ्यामपि

सकाशाज्जलं कियद् गृह्णातीत्यहं शङ्के मन्ये—इति भैमी प्रियमवदत्। उदिते चन्द्रे सागरपुरो वृद्धिं प्राप्तः, चन्द्रकान्ताः स्रवन्ति, चक्रवाकी भृशं रोदितीति भावः। दुहिर्द्विकर्मा ॥ ५९ ॥

यह ( चन्द्रमा ) समुद्रके जलप्रवाहको बढ़ानेके लिए कुछ जल चन्द्रकान्तमणिसे और कुछ जल प्रिय ( चकवे ) के विरहसे शोकार्त चकईके नेत्रद्वयसे दुहता ( प्राप्त करता-लेता ) है, यह मैं शङ्का करती हूं। [ समुद्रका जल-प्रवाह बढ़ने लगा, चन्द्रकान्तमणि पिघलने लगा तथा चकवाके विरहसे चकई रोने लगी ] ॥ ५९ ॥

ज्योत्स्नामयं रात्रिकलिन्दकन्यापूरानुकारेऽपसृतेऽन्धकारे।
परिस्फुरन्निर्मलदीप्तिदीपं व्यक्तायते सैकतमन्तरीपम् ॥ ६० ॥

ज्योत्स्नेति। हे प्राणेश ! तमोवसरेऽतिश्यामा रात्रिरेव कलिन्दकन्या यमुना तस्याः पूर आगन्तुकातिनीलजलप्रवाहस्तदनुकारे तत्सदृशे तद्वदतिकृष्णेऽन्धकारेऽपसृते गते सति परिस्फुरन्ती निर्मला दीप्तिर्यस्य। प्रकाशमानश्चासौ धवलद्युतिश्च तादृशो वा यश्चन्द्रः स एव दीपो यत्र तादृशं चन्द्रिकारूपं सैकतं धवलतरवालुकामयं रात्रियमुनाया एव जलमध्यस्थितमन्तरीपं द्वीपं व्यक्तायते स्फुटमिव भवति प्रकटं दृश्यते। पूर्वावसरेऽस्फुटमपीदानीं स्फुटीभवतीति शङ्के। चन्द्रचन्द्रिकया सकलं धवलीकृतमिति भावः। व्यक्तायते व्यक्तमिव भवति, 'कर्तुः क्यङ्—' इति क्यङ्। अव्यक्तं व्यक्तं भवतीत्यर्थः। सैकतम्, 'सिकताशर्कराभ्यां च' इत्यस्यर्थेऽण् ॥ ६० ॥

रात्रिरूपिणी यमुनाके प्रवाहके समान ( कृष्णवर्ण ) अन्धकारके ( चन्द्रोदय होनेके कारण ) दूर होनेपर प्रकाशमान निर्मल कान्तिवाला ( चन्द्ररूप ) दीप है जिसका ऐसा ( यमुना-सम्बन्धी ) वालुका अन्तरीप ( जलमध्यगत शुष्क स्थान—टापू ) स्पष्ट-सा हो रहा है। [ यमुनाके जलके बीचमें स्थित जो बालुकामय भूभाग अन्धकारके कारण नहीं ज्ञात होता था, वह अब चांदनीके प्रकाशसे ज्ञात होने लगा है ] ॥ ६० ॥

हासत्विषैवाखिलकैरवाणां विश्वं विशङ्केऽजनि दुग्धमुग्धम्।
यतो दिवा बद्धमुखेषु तेषु स्थितेऽपि चन्द्रे न तथा चकास्ति ॥ ६१ ॥

हासेति। अखिलकैरवाणां सकलकुमुदानां हासत्विषैव विकासदीप्त्यैव विश्वं सकलं जगत् दुग्धवद् मुग्धं धवलं शीतलं चाजनि जातम्, न तु चन्द्रेणेत्यहं विशङ्के विशेषेण मन्ये। यतो हेतोर्दिवा तेषु सकलकैरवेषु बद्धमुखेषु संकुचितेष्वविकस्वरेषु च सत्सु चन्द्रे स्थिते विद्यमानेऽपि सकलकुमुदविकासाभावात्सकलं जगत्तथा रात्राविव शीतलधवलतया न चकास्ति। तस्मादिदं जगत् कुमुदहासत्विषैव शीतलं धवलं च कृतम्, न तु चन्द्रेणेत्यर्थः। कुमुदवद्दुग्धवच्च शीतला धवला चन्द्रचन्द्रिकास्तीति भावः ॥ ६१ ॥

सम्पूर्ण कुमुदोंके हास ( विकसित होने ) की कान्तिसे ही संसार दूधके समान मनोहर

( शीतल तथा श्वेतवर्ण ) हो गया है ऐसा मैं विशेषरूपसे मानती हूं, क्योंकि दिनमें चन्द्रमा विद्यमान रहनेपर भी उन ( कैरवों ) के मुखको बन्द किये ( अविकसित ) रहनेपर यह संसार वैसा ( दुधके समान शीतल एवं श्वेत ) नहीं शोभता है। ( इस कारण कुमुदोंकी विकास दीप्तिसे ही यह संसार दुग्धवत् शीतल एवं श्वेतवर्ण हो रहा है )। [ दूधके समान ठण्डी तथा स्वच्छ यह चांदनी है ] ॥ ६१ ॥

मृत्युञ्जयस्यैष वसञ्जटायां न क्षीयते तद्भयदूरमृत्युः।
न वर्द्धते च स्वसुधाप्तजीवस्रग्मुण्डराहूद्भवभीरतीव ॥ ६२ ॥

मृत्युमिति। मृत्युंजयस्य मृत्युं जितवतः शिवस्य जटायां वसन्नेष चन्द्रः षोडशांशभूतो न क्षीयते नाल्पपरिमाणो भवति, कलामात्रस्वरूपेणैव तत्र सदा वसंस्ततोऽपि न्यूनपरिमाणो न भवतीत्यर्थः। अथ च,—न क्षीयते न म्रियते यस्मात्, तस्मान्मृत्युंजयात्सकाशाद्भयेन दूरो मृत्युर्मरणहेतुर्देवता यस्य सः मृत्युंजयजटाजूटनिवासान्मृत्युना स्प्रष्टुमपि न शक्यते तस्मान्न क्षीयतेऽयमित्यर्थः; तर्हि तत्र वसन्वर्द्धते किमिति नेत्याशङ्कयाह—वर्द्धते च न, उपचितोऽपि न भवतीत्यर्थः। यतः—स्वस्य सुधया आप्तो जीवश्चैतन्यं यैस्तानि स्रजो मुण्डानि शिरोमालायाः शिरःकपालानि तान्येव राहवस्तेभ्य उद्भवा समुत्पन्ना भीर्यस्य। कथम्? अतीव, नितरां भीत इत्यर्थः। सजीवमुण्डेषु बहवो राहव एवैते इति धिया भिया न वर्द्धते। भीतो हि सौख्याभावात्कृशतर एव भवति। अथ च,—पूर्णस्य राहोः सकाशाद्भयम्। अतः कारणद्वयान्न क्षीयते, न च वर्द्धते इत्येककल एव शिवशिरश्चन्द्र इत्यर्थः। एतेन चन्द्रस्य षोडशी कला वर्णिता। शिवशिरसि वर्तमानत्वादस्य माहात्म्यमपि वर्णितम्। मृत्युंजयेति, 'संज्ञायां भृतॄवृजि—' इति खश्, 'अरुर्द्विषद्—' इति मुम् ॥ ६२ ॥

मृत्युञ्जय ( मृत्युको जीतनेवाला, पक्षा०—शिवजी ) की जटामें निवास करता हुआ ( अतः ) उस ( मृत्युञ्जय ) से दूर मृत्युवाला ( मृत्युञ्जयके भयसे मृत्यु जिससे दूर ही रहती है, ऐसा ) यह चन्द्रमा क्षीण नहीं होता अर्थात् मरता नहीं है ( पक्षा०—सोलहवीं कलासे सदा वर्तमान रहता है ), और अपनी ( चन्द्र-सम्बन्धी ) अमृतसे जीवित हुए ( शिवजीकी ) मालाके मुण्डरूप राहुओंसे अत्यन्त डरा हुआ यह चन्द्रमा ( सोलहवीं कलासे अधिक ) बढ़ता भी नहीं है। [ शिवजीकी जटामें चन्द्रमा षोडशांश ( एक ) कलासे सर्वदा निवास करता है, वह उक्त कारण द्वयसे न तो घटता है और न बढ़ता ही है। लोकमें भी अपने विजेताके भयसे पराजित व्यक्ति दूर ही रहता है, अत एव मृत्युञ्जय शिवजीके भयसे मृत्युका दूर रहना और उससे चन्द्रमाका निर्भय होकर क्षीण नहीं होना उचित ही है। जब सम्पूर्ण चन्द्रको यह ही राहु निगल जाता ( नष्ट कर देता ) है, तब षोडशांश होनेसे अतिशय क्षीण शिवजटास्थित चन्द्रका शिवमाला स्थित अनेक मुण्डरूप राहुसे अतिशय

भयोत होना और इसी कारण नहीं बढ़ना भी उचित ही है, क्योंकि लोकमें भी कोई व्यक्ति प्रबल शत्रुओंके भयसे सर्वदा क्षीण रहता एवं उन्नत नहीं होता है ] ॥ ६२ ॥

त्विषं चकोराय सुधां सुराय कलामपि स्वावयवं हराय ।
ददज्जयत्येष समस्तमस्य कल्पद्रुमभ्रातुरथाल्पमेतत् ॥ ६३ ॥

त्विषमिति । एष चन्द्रो जयति सर्वोत्कर्षेण प्रकाशते । यतः किंभूतः ? चकोराय स्वावयवं त्विषं निजांशभूतां चन्द्रिकां ददत् । तथा,—सुराय अग्न्यादिदेवेभ्यो निजांशभूतां सुधां ददत् । तथा,—हराय निजांशभूतां कलां ददत् । अथापि अस्य चन्द्रस्यैतत्समस्तं परोपकारकरणकल्पमेव, अतिचमत्कारकारि न भवतीत्यर्थः । यतः—समुद्रोत्पन्नत्वात्कल्पद्रुमस्य भ्रातुः । कल्पद्रुमस्तु कल्पितं सर्वं सर्वेभ्यो ददाति, अयं तु न तथेत्यल्पमेवेत्यर्थः । एवंविधः परोपकारी कोऽपि नास्तीति भावः । 'चकोराय' इति 'सुराय' इति च जात्येकवचनम् ॥ ६३ ॥

अपना अवयव ( चन्द्रिकारूप ) कान्तिको चकोरके लिए, अमृतको देवोंके लिए और ( षोडशांश ) कलाको भी शिवजीके लिए देता हुआ यह ( चन्द्र ) सर्वोत्कर्षसे प्रकाशमान है, ( किन्तु ) कल्पवृक्षके भाई इस ( चन्द्र ) का यह सब भी परिपूर्ण नहीं है, ( क्योंकि कल्पवृक्ष कल्पना करनेपर सबके लिए सब कुछ देता है और यह चन्द्रमा केवल चकोर, देव तथा शिवजीके लिए ही देता है ) । [ कल्पवृक्ष तथा चन्द्रको भी समुद्रसे ही उत्पन्न होनेके कारण चन्द्रको कल्पवृक्षका भाई कहा गया है ] ॥ ६३ ॥

अङ्केणनाभेर्विषकृष्णकण्ठः सुधाऽऽप्तशुद्धेः कटभस्मपाण्डुः ।
अर्हन्नपीन्दोर्निजमौलिधानान्मृडः कलामर्हति षोडशीं न ॥ ६४ ॥

अङ्केति । मृडः शिवो निजमौलौ धानात्स्थापनाद्धेतोरिन्दोः षोडशीं कलामर्हन्प्राप्नुवत्, अथ च— पूजयन् अपि षोडशीं कलां नार्हति न प्राप्नोति, न पूजयति च । निजशिरसि धारणादेव तस्याः प्राप्तिः पूजा च संभविनी । यो ह्यतितरां पूज्यते स शिरसि धार्यते । तथा चैतस्य षोडशीं कलां मृडः प्राप्नुवन्पूजयन्नपि च तां प्राप्नोतीति विरोधपरिहारः । यतः—किंभूतस्येन्दोः, किंभूतश्च मृडः ? अङ्कभूतो य एणो हरिणस्तद्युक्ता नाभिर्मध्यभागो यस्य; अथ च—अङ्करूपा कलङ्करूपा एणनाभिः कस्तूरी यत्र । मृडस्तु—विषेण कृष्णकण्ठः । तथा—सुधयामृतेनाप्ता शुद्धिर्धावल्यं येन; मृडस्तु—कटभस्मना चिताभस्मना पाण्डुः । तस्माच्चन्द्रस्याल्पमपि साम्यं शिवो न प्राप्नोति । किंच चन्द्रादधिकः शिवश्चेदभविष्यत् तर्हि तदीयकलां मौलौ नाधारयिष्यत्, सा मौलौ धृता, तेन तस्माच्चन्द्र एव तदधिक इत्यर्थः । शुभस्याशुभस्य च महदन्तरमिति भावः । 'षोडशीमपि कलां नार्हति' इत्यनेन पूर्णचन्द्रं नार्हतीति किं वाच्यमित्यपि सूचितम् । हरस्यापकर्षे विषं, चिताभस्म च हेतुः, चन्द्रोत्कर्षे मृगमदोऽमृतं च ॥ ६४ ॥

हलाहल विषके पीनेसे कृष्णवर्ण कण्ठवाले तथा चिता-भस्मसे श्वेतवर्ण शिवजी अपने मस्तक ( सर्वोच्च स्थान ) पर चन्द्रमाको धारण करनेसे, चिह्न ( कलङ्क-चिह्न ) भूत हरिण-युक्त मध्यभागवाले ( अथच—चिह्नभूत कस्तूरीवाले ) तथा अमृतसे निर्मलताको प्राप्त चन्द्रमाके षोडशी कलाके भी योग्य नहीं है। [ चन्द्रमा कस्तूरीका लेप शरीरमध्यमें धारण करता है और शिवजी हलाहल विषसे कृष्णवर्ण कण्ठ धारण करते हैं तथा चन्द्रमा अमृतसे निर्मल है और शिवजी चिताभस्मसे निर्मल ( श्वेतवर्ण ) हैं; अत एव चन्द्रमाकी षोडशांश कलाको मस्तकपर धारण ( पक्षा०—अपने सर्वोच्च स्थानपर विराजमानकर पूजा ) करते हुए भी वे चन्द्रकी षोडशांशकलाके भी योग्य नहीं हैं, क्योंकि उक्त कारणद्वयसे शुभ चन्द्र-माकी अपेक्षा शिवजी अधिक अशुभ हैं और जब वे चन्द्रमाके षोडशांश कल्प ( रूपयेमें एक आना ) भी योग्य नहीं हैं, तब पूर्ण चन्द्रके योग्य ( समान ) होना तो सर्वथा असम्भव ही है। शुभ चन्द्र तथा अशुभ शिवजीमें बहुत बड़ा अन्तर है ]॥ ६४॥

पुष्पायुधस्यास्थिभिरर्धदग्धैः सितासितश्रीरघटि द्विजेन्द्रः।
स्मरारिणा मूर्धनि यद्धृतोऽपि तनोति तत्तौष्टिकपौष्टिकानि॥ ६५॥

पुष्पेति। ब्रह्मणा द्विजेन्द्रश्चन्द्रः पुष्पायुधस्य कामस्यार्धदग्धैरस्थिभिः कृत्वाऽघटि निर्मितः। अत एव सितासितश्रीरुपान्तधवलमध्यामलकान्तिः। स्मरास्थि-भिरेव निर्मित इत्यत्र हेतुमाह—स्मरारिणा मूर्धनि धृतोऽपि, अथ च—कृतसंमा-नोऽपि, तस्य स्मरस्यैव तौष्टिकानि हर्षकारीणि, पौष्टिकानि अभिवृद्धिकारीणि च यद्य-स्मात्तनोति। कामारिणा पूज्यमानोऽपि कामहितमेव यस्मात्करोति, तस्मात्तदस्थिभि-रेव घटित इत्यर्थः। एतादृक्कामोद्दीपकं किमपि नास्तीति भावः। अस्थिभिरिवेति प्रतीयमानोत्प्रेक्षा। अन्याश्रितोऽपि तदीयशत्रुहितं यः करोति स तदस्थिभिर्घटित इति लौकिकयुक्तिः। तौष्टिकपौष्टिकानि, 'प्रयोजनम्' इति ठक्॥ ६५॥

( ब्रह्माने मानो शिवजीके तृतीय नेत्रकी अग्निसे ) अधजली कामदेवकी हड्डियोंसे ( बिना जली हड्डियोंसे प्रान्तभागमें ) श्वेत तथा ( जली हड्डियोंसे मध्यभागमें ) कृष्ण इस चन्द्रमाको रचा है, क्योंकि कामशत्रु ( शिवजी ) से मस्तकपर रखा गया ( पक्षा०—सम्मानको पाया हुआ ) भी यह चन्द्र उस ( कामदेव ) के ही तुष्टिकारक तथा पुष्टि ( वृद्धि ) कारक कार्योंको करता है। [ लोकमें भी जो कोई दूसरेके आश्रयमें रहता हुआ भी उसके शत्रुकी हितकामना करता है, वह व्यक्ति उस शत्रुकी हड्डियोंसे रचा गया है ऐसा कहा जाता है। चन्द्रमा सर्वाधिक कामोद्दीपक है ]॥ ६५॥

मृगस्य लोभात्खलु सिंहिकायाः सूनुर्मृगाङ्कं कवलीकरोति।
स्वस्यापि दानादमुमङ्कसुप्तं नोज्झन्मुदा तेन च मुच्यतेऽयम्॥ ६६॥

मृगस्येति। सिंहिकायाः सुतो राहुर्मृगाङ्कं चन्द्रं यत्कवलीकरोति तदङ्कमृगस्य लोभात् खलु ग्रासाभिलाषादिव। सिंहिकासुतः सिंहो मृगैरक्षितं स्थलं मृगग्रासाभि-

लापादेव स्वाधीनं करोति । तर्हि किमर्थं मुञ्चतीत्यत आह—अङ्कसुप्तं मध्यवर्तिनम्, अथ च—उत्सङ्गे विश्वासात्सुखेन निद्रितम्, अमुं मृगं स्वस्यापि दानाद्राहुदन्तकृतखण्डनादपि नोज्झन्न त्यजन्, अथ च—स्वशरीरस्यापि वितरणादत्यजन्, अयं चन्द्रस्तेन राहुणा तेन पुण्येन च हेतुना मुदा शरणागतरक्षणनिमित्तहर्षेण कृत्वा मुच्यते त्यज्यते। अन्योऽपि शरणागतं मृगं जिघांसोः सिंहाद्रक्षितुमात्मानमपि ददानो हि तेन पुण्येन सिंहान्मुच्यत एव। 'नोज्झत्' इति पाठे-स्वस्यापि दानाङ्कसुप्तममुं यतो नामुञ्चत्तेन हेतुनाऽयं विमुच्यते, अर्थाद्राहुणेत्यर्थः ॥ ६६ ॥

राहु मृगके लोभसे चन्द्रमाको ग्रासमें लेता (खाता) है, किन्तु (शरणागत होनेसे निर्भय होकर) अङ्कमें सोये हुए इस (मृग) को अपने शरीरके राहुद्वारा (चर्वित) होने (पक्षा०—देने) से भी नहीं जोड़ते चन्द्रमाको वह राहु हर्षके साथ उस (शरणागतरक्षणरूप) पुण्यसे छोड़ देता है। [लोकमें भी शरणागतकी रक्षा करनेवाला व्यक्ति उस पुण्यसे छूट जाता है, अथच—वह व्यक्ति भी उसके इस सत्कार्यसे प्रसन्न होकर उसे छोड़ देता है] ॥ ६६ ॥

सुधाभुजो यत्परिपीय तुच्छमेतं वितन्वन्ति तदर्हमेव ।
पुरा निपीयास्य पिताऽपि सिन्धुरकारि तुच्छः कलशोद्भवेन ॥६७॥

सुधेति। सुधाभुजो देवा एनं चन्द्रं परिपीय साकल्येन पीत्वा तुच्छं रिक्तं यद्वितन्वन्ति कुर्वन्ति तदर्हमुचितमेव, यतोऽस्य पिता सिन्धुरपि कलशोद्भवेनागस्त्येन पुरा निपीय तुच्छो रिक्तः अकारि, तस्मात्कुलक्रमागतं तुच्छत्वमित्यर्थः। एतस्य पूर्वेऽपि परोपकारनिरताः, तस्मादयमपि तथैवेति भावः। कलशादुत्पन्नेनापि सागरस्य पानमित्याश्चर्यम् ॥ ६७ ॥

अमृतभोजन करनेवाले देवलोग जो इस चन्द्रका अच्छी तरह पानकर इसे खालीकर छोड़ देते हैं, यह उचित ही है; क्योंकि पहले कलशसे उत्पन्न (अगस्त्य मुनि) ने भी इसके पिता (समुद्र) को भी अच्छी तरह पीकर खाली छोड़ दिया था। [यह चन्द्र अपने पिताके समान ही परोपकार परायण है, अथच—कलशसे उत्पन्न अगस्त्यजीका समुद्रको अच्छी तरह पी जाना महान् आश्चर्य है] ॥ ६७ ॥

पौराणिक कथा—असुरलोग देवोंको युद्धमें मार-पीटकर समुद्रमें छिप जाते थे और वहां जलके भीतर स्वयं नहीं जा सकनेके कारण देव उनका कुछ प्रतिकार नहीं कर पाते थे। इसप्रकार अनेक बार होनेपर अतिशय पीड़ित देव अगस्त्य मुनिके पास आकर अपना करुणगाथा सुनाये, यह सुनकर अगस्त्यजीने समुद्रजलको गण्डूषमें लेकर पी लिया और देवोंने असुरोंको निर्जल समुद्रमें युद्धसे पराजित किया और बादमें अगस्त्यजीने भी समुद्रको पुनः जलसे पूर्ण कर दिया।

चतुर्दिगन्तीं परिपूरयन्ती ज्योत्स्नैव कृत्स्ना सुरसिन्धुबन्धुः।
क्षीरोदपूरोदरवासहानवैरस्यमेतस्य निरस्यतीयम् ॥ ६८ ॥

चतुरिति। चतुर्णां दिगन्तानां समाहारस्ताम्। चतुर्दिक्प्रान्तानित्यर्थः। (तां) परिपूरयन्ती सामस्त्येन व्याप्नुवती, तथा—श्वैत्यात्सुरसिन्धोर्मन्दाकिन्या बन्धुः सदृशी। तथा कृत्स्ना पूर्णा इयं ज्योत्स्नैवैका क्षीरोदपूरोदरे वासः स्थितिस्तस्य हानाद्बहुकालपरित्यागाद्धेतोरेतस्य चन्द्रस्य वैरस्यं क्षीरसागरविरहजनितं दुःखं निरस्यति नाशयति। असौ चन्द्रिकायामेव क्षीरसागरबुद्ध्या पितृवियोगदुःखं परित्यजतीत्यर्थः। सकलदिगन्तव्यापिधवलचन्द्रिकामध्यवर्ती चन्द्रः क्षीरसागरमध्यस्थ इव शोभत इति भावः। गङ्गावद्दुग्धवच्चेयं कौमुदीति। चतुर्दिगन्तीम्, समाहारे द्विगोर्ङीप्॥

चारो दिशाओंको परिपूर्ण करती (उनमें व्याप्त होती) हुई तथा (श्वेत होनेसे) गङ्गाके समान चांदनी ही इस चन्द्रका क्षीरसमुद्रके प्रवाहके मध्यमें निवास करनेके अभावजन्य विरसता ((क्षीरसमुद्रके विरह दुःख) को नष्ट करती है। [चन्द्रमा पहले सर्वदा क्षीर-समुद्रमें निवास करता था, परन्तु वहांसे निकलकर सर्वदा आकाशमें रहनेके कारण पिता (क्षीरसागर) के विरहजन्य दुःखसे दुखी हुआ तो उसे गङ्गाके समान शुभ्र चांदनी ही सादृश्य होनेसे दूर करती है। सब दिशाओंमें व्याप्त स्वच्छ चांदनीके मध्यमें क्षीरसमुद्रके मध्यमें स्थितके समान यह चन्द्रमा शोभता है]॥ ६८॥

पुत्री विधोस्ताण्डविकाऽस्तु सिन्धोरश्या चकोरस्य दृशोर्वयस्या।
तथाऽपि सेयं कुमुदस्य काऽपि ब्रवीति नामैव हि कौमुदीति ॥ ६९ ॥

पुत्रीति। इयं चन्द्रिका यद्यपि चन्द्रात्प्रसूतत्वाद्विधोः पुत्री अस्तु। सिन्धोः समुद्रस्य ताण्डविका नृत्तोपदेशिका नाटयित्री अस्तु। चन्द्रिकया हि सिन्धुरुल्लास्यते, सा च तस्य नर्त्री भवति। यद्वा—इयं विधोः पुत्री सिन्धोस्ताण्डविका भवतु। तथा—चकोरस्य अश्या पेया भवतु। तथा—सकललोकस्य दृशोः प्रेमपात्रतया वयस्या सखी भवतु। तथापि सेयं चन्द्रिका कुमुदस्य कापि अनिर्वचनीया संबन्धिनी भवतु। पूर्वनिर्दिष्टसर्वापेक्षया कुमुदस्यैव निरतिशयानन्दकारित्वात्केनाप्यनिर्वचनीयेन संबन्धिनी भवत्वित्यर्थः। हि यस्मात्कौमुदीति नामैव कर्तृ ब्रवीति। सर्वेषां तत्तत्संबन्धसंभवेऽपि कुमुदानामियं कौमुदीति, 'तस्येदम्' इति संबन्धेऽण्। कुमुदानामेव प्रीत्यतिशयेन संबन्धं वदतीत्यर्थः। कौमुदीति नामैव हि स्पष्टं ब्रवीतीति वा। चन्द्रिकया सर्वेषामप्यानन्दः कृतः, कुमुदानां तु विशेषत इति भावः। कार्येण कारणानुमानम्। ताण्डविका, अर्शआद्यजन्तान्मतुबन्ताद्वा 'ताण्डव'शब्दात् 'तत्करोति—' इति ण्यन्ताण्ण्वुल्। अशनमशिः, 'इक्कृष्यादिभ्यः' इतीकि अशिमर्हतीति दण्डादित्वाद्यत्। 'आश्या' इति च पाठः॥ ६९॥

यद्यपि चाँदनी (चन्द्रमासे उत्पन्न होनेसे) चन्द्रमाकी पुत्री हो, (चन्द्रोदय होनेपर

समुद्रके उल्लसित होनेसे ) समुद्रको नचानेवाली ( नृत्योपदेशकारिणी ) हो तथा ( कौमुदीको देखकर चकोरको आह्लादित करनेसे ) चकोरके नेत्रद्वयकी सखी हो-( अथवा—चन्द्रमाकी पुत्री यह चाँदनी समुद्रको नृत्योपदेशकारिणी हो और चकोरका पेय द्रव्य हो तथा ( इस संसारके नेत्रोंके आह्लादक होनेसे ) इस संसारके नेत्रोंकी सखी हो ), तथापि कुमुदको भी कोई ( अनिर्वचनीया—लोकोत्तर ) है, क्योंकि कौमुदी ( कुमुद-सम्बधिनी ) यह नाम ही ( कुमुदके साथ लोकोत्तर अनिर्वचीय सम्बन्धको ) कह रहा है। [ यद्यपि चाँदनी समुद्र, चकोर तथा इस संसारको आनन्द देनेवाली है; तथापि कुमुदको अतिशय आनन्द देनेवाली है ] ॥ ६९ ॥

ज्योत्स्नापयःक्ष्मातटवास्तुवस्तुच्छायाच्छलच्छिद्रधरा धरायाम् ।
शुभ्रांशुशुभ्रांशकराः कलङ्कनीलप्रभामिश्रविभा विभान्ति ॥ ७० ॥

ज्योत्स्नेति । शुभ्रांशोश्चन्द्रस्य शुभ्रांशा धवलभागाश्च ते कराश्च किरणास्ते धरायां भूम्यां कलङ्कस्य नीलीभिः प्रभाभिर्मिश्रा विभा कान्तिर्येषां ते कलङ्कनीलकान्तिच्छुरिता इव विभान्ति । यतः कीदृशाः ? ज्योत्स्नैव पयो जलं दुग्धं वा यस्मिंस्तादृशं क्ष्मातटं दुग्धधवलचन्द्रिकाधवलीकृतं भूतलं तदेव वास्तु वसतिगृहं येषां तानि वस्तूनि वृक्षादिपदार्थास्तेषां छाया छलं येषां तादृशानि छिद्राणि प्रकाशेन रिक्तत्वाद्बिलानि पदार्थप्रतिच्छायारूपाणि तानि धारन्तीति तादृशाः । चन्द्रिकाधवलिताः पदार्थाश्चन्द्ररश्मय एव, वृक्षादिप्रतिच्छायाश्चन्द्रकलङ्कनीलरश्मय एवेति धारायामपि निपतिताश्चन्द्रकिरणा नीलधवला एव शोभन्त इत्यर्थः । अन्यस्य करा हस्ता कलङ्कवन्नीलस्य नीलमणेः प्रभया मिश्रकान्तयो नीलमणियुक्ताङ्गुलीयकप्रभामिश्रा विभान्ति । 'शुभ्रांशुशुभ्रांशु—' इति पाठेऽपि 'अंशुर्लेशे रवे रश्मौ' इत्यभिधानात् 'अंशु' शब्दस्य लेशवाचित्वात्स एवार्थः । ज्योत्स्नैव पयो जलं तस्य क्ष्मा भूमिस्तस्यास्तटं तदेव वास्तु निवासस्थानं येषां तेषां वस्तूनां छायाया व्याजेन छिद्राणि धरन्तीति वा ॥ ७० ॥

चाँदनीरूप जल ( या—दूध ) वाला भूतलपर निवास करनेवाले ( वृक्षादि ) पदार्थोंकी छाया ( परछाहीं ) के छलवाले छिद्रोंको धारण करती हुई, चन्द्रमाके श्वेतवर्णांशवाली किरणें ( पक्षा०—हाथ ) कलङ्क ( रूप मृग ) की नीली कान्तिसे मिश्रितके समान पृथ्वीपर शोभ रही है । [ चन्द्रमाकी श्वेतांश किरणें चाँदनीसे श्वेतवर्ण वृक्षादि पदार्थ होकर तथा कलङ्क-सम्बन्धी कृष्णांश किरणें भूतलस्थ वृक्षादिकी छायारूप होकर शोभती हुई-सी मालूम पड़ती हैं । लोकमें भी किसी व्यक्तिका स्वच्छ हाथ कङ्कणादि भूषणोंकी कान्तिसे मिश्रित होनेसे श्वेत-कृष्णवर्ण होकर शोभते हैं ] ॥ ७० ॥

कियान्यथाऽनेन वियद्विभागस्तमोनिरासाद्विशदीकृतोऽयम् ।
अद्भिस्तथा लावणसैन्धवीभिरुल्लासिताभिः शशिनाप्यकारि ॥ ७१ ॥

कियानिति । उदितमात्रेणानेन चन्द्रेण तमोनिरासाद्धेतोः कियान् किंचिन्मात्रोऽयं वियद्विभागः पूर्वाकाशदेशो यथा विशदीकृतः तथा चन्द्रकिरणैरुल्लासिताभिर्वृद्धिं प्रापिताभिर्लावणसैन्धवीभिरद्भिः क्रियानयं वियद्विभागः शितिः श्यामोऽप्यकारि । अप्रौढप्रभे चन्द्रे पूर्वाकाशदेशस्तिमिरनिरासाद्धवलो भवति, ततो निरतस्य च तमसः प्रतीच्यां घनीभूतत्वात्पश्चिमाकाशदेशः श्यामलो भवतीति तत्रेयमुत्प्रेक्षा । समुद्रजलं च नीलं, पूर्वाकाशदेश एव नीलैः समुद्रजलैः पुनर्नीलोऽप्यकारीति वा । लावणसैन्धवीभिः, लवणसिन्धोरिमाः 'तस्येदम्' इत्यणि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः ॥ ७१ ॥

( उदित होनेमात्रसे ) इस चन्द्रमाने अन्धकार दूर करनेसे जिस प्रकार आकाशके कुछ भागको ( पूर्व दिशामें ) श्वेत कर दिया है ( चन्द्रोदय होनेसे ) बढ़े हुए, क्षारसमुद्रके जलने उसी प्रकार आकाशके कुछ भागको ( पश्चिम दिशामें ) काला कर दिया है । [ पहले चन्द्रोदय होतेही पूर्वदिशामें अन्धकाराच्छन्न आकाश अन्धकार दूर होनेसे स्वच्छ हो जाता है और पश्चिम दिशामें अन्धार अधिक रहता है, इसीपर उक्त उत्प्रेक्षा की गयी है ] ॥ ७१ ॥

गुणौ पयोधेर्निजकारणस्य न हानिवृद्धी कथमेतु चन्द्रः ? ।
चिरेण सोऽयं भजते तु यत् ते न नित्यमम्भोधिरिवात्र चित्रम् ॥७२॥

गुणाविति । चन्द्रो निजकारणस्य पयोधेर्हानिवृद्धिरूपौ गुणौ कथं नैतु प्राप्नोतु ? अपि तु 'कार्यगुणानां कारणगुणपूर्वकत्वनियमादवश्यमपचयोपचयौ चन्द्रं प्राप्नुत इति युक्तमेवेत्यत्र न किंचिच्चित्रमित्यर्थः । तर्हि कुत्र चित्रमित्याशङ्कयाह—सोऽयं चन्द्रस्ते हानिवृद्धी यच्चिरेण पक्षान्तपरिमितेन बहुना कालेन भजते, नतु अम्भोधिरिव नित्यं प्रत्यहं भजते, अत्र विषये चित्रमित्याश्चर्यम् । समुद्रो यथा प्रत्यहं हानिवृद्धी भजते, तथा पुत्रोऽपि चन्द्रो नेत्याश्चर्यमित्यर्थः ॥ ७२ ॥

अपने कारण ( उत्पत्ति-स्थान ) भूत समुद्रके क्षीण होना तथा बढ़ना—इन दो गुणोंको चन्द्रमा क्यों नहीं प्राप्त करे ? ( इसमें कोई आश्चर्य नहीं है, किन्तु ) यह चन्द्रमा उन दो गुणोंको विलम्बसे ( १५-१५ दिन बीतनेपर ) तथा समुद्र सदा ( प्रतिदिन ) प्राप्त करता है, यह आश्चर्य है । [ चन्द्रमाके उत्पत्तिकारणभूत समुद्रके क्षय-वृद्धिरूप गुणोंको कार्यभूत चन्द्रमामें होना उचित होनेसे कोई आश्चर्य नहीं है, किन्तु उक्त दोनों ( समुद्र तथा चन्द्रमा ) में उक्त गुणद्वयको क्रमशः नित्य एवं विलम्बसे होनेमें आश्चर्य है ] ॥ ७२ ॥

आदर्शदृश्यत्वमपि श्रितोऽयमादर्शदृश्यां न विभर्त्ति मूर्त्तिम् ।
त्रिनेत्रभूरप्ययमत्रिनेत्रादुत्पादमासादयति स्म चित्रम् ॥ ७३ ॥

आदर्शेति । अयं चन्द्र आदर्शवद्दृश्यत्ववृत्तत्वादिना रमणीयत्वं श्रितो भजमानोऽप्यादर्शवद्दृश्यां ( रमणीयां ) मूर्त्तिं न विभर्ति चित्रम् । यो ह्यादर्शवद्दृश्यो भवति स एवादर्शवद्दृश्यां मूर्तिं न विभर्ति तद्वद्दृश्यो न भवतीति विरोधाश्चर्यमित्यर्थः ।

अथ च—दर्पणवद्दृश्यत्वं श्रितोऽप्यादर्शं दर्शमभिव्याप्य दृश्याममावास्यायां दर्शनयोग्यां मूर्तिं न बिभर्ति । इदानीं पूर्णत्वेन दृश्यमानोऽपि दर्शे लेशेनापि न दृश्यते इत्यर्थ इति विरोधपरिहारः । दर्पणवद्दृश्यत्वं श्रितोऽपि आदर्शं दर्शं मर्यादीकृत्य कृष्णचतुर्दशीमभिव्याप्य दृश्यां मूर्तिं न बिभर्ति, अपि तु तावत्पर्यन्तं दृश्यो भवत्येवेति वा । तथा—अयं चन्द्रस्त्रिनेत्राद्भवति तादृशस्त्रिनेत्रादुत्पन्नोऽपि न त्रिनेत्रोऽत्रिनेत्रः । तस्मात्त्रिनेत्रव्यतिरिक्तात्सकाशादुत्पादमुत्पत्तिमासादयति स्म प्रापेत्येतदपि चित्रम् । त्रिनेत्रादुत्पन्नोऽपि त्रिनेत्रादुत्पन्नो न भवतीत्याश्चर्यमित्यर्थः । अथ च—त्रिनेत्रादुत्पन्नोऽप्यत्रेर्नेत्रादुत्पत्तिमापेत्येतदपि विरुद्धम् । अथ च—त्रिनेत्रो भूर्वसतिस्थानं यस्य तादृशः, तथा—अत्रेर्मुनेर्नेत्राच्चित्रमाश्चर्यरूपमुत्पादं प्रापेति विरोधपरिहारः । सहजसौन्दर्यमाश्रयमाहात्म्यं कुलस्य माहात्म्यं चानेन चन्द्रस्य वर्णितम् । चन्द्रस्यात्रिनेत्रसमुद्भूतत्वं पुराणप्रसिद्धम् ॥ ७३ ॥

यह चन्द्रमा आदर्श ( दर्पण ) के समान ( स्वच्छ एवं वृत्ताकार होनेसे दर्शनीयताको प्राप्त होता हुआ भी आदर्शमें ( या—आदर्शतुल्य ) दर्शनीय मूर्तिको नहीं धारण करता है, यह आश्चर्य है ( जो आदर्शवत् दृश्य है, उसका आदर्शवत् दृश्य मूर्तिको नहीं धारण करना विरोध है, उसका परिहार यह है कि—आदर्श ( दर्पण ) के समान दर्शनीय मूर्तिको धारण करता हुआ भी यह चन्द्रमा अमावस्यातक दर्शनीय ( देखने योग्य ) मूर्तिको नहीं धारण करता अर्थात् अमावस्याको इसकी मूर्ति नहीं दिखलायी पड़ती, तथा त्रिनेत्र ( तीन नेत्रोंवाले ) से उत्पन्न भी यह चन्द्रमा अत्रिनेत्रसे उत्पत्तिको पाता है ( विना तीन नेत्रोंवालेसे उत्पन्न होता है; अथच—त्रिनेत्र ( शिव ) जी से उत्पन्न होता हुआ भी अत्रिमुनि ( शिव-भिन्न ) के नेत्रसे उत्पन्न होता है, यह आश्चर्य है । इस विरोधका भी परिहार यह है कि—त्रिनेत्र ( शिवजी ) हैं भू=निवास स्थान जिसके ऐसा चन्द्रमा भी अत्रि मुनिके नेत्रसे उत्पन्न होता है ) । [ चन्द्रमाको अत्रिमुनिके नेत्रसे उत्पन्न होना कविश्रेष्ठ कालिदासने भी रघुवंशके द्वितीय[1] सर्गमें कहा है ] ॥ ७३ ॥

इज्येव देवव्रजभोज्यऋद्धिः शुद्धा सुधादीधितिमण्डलीयम् ।
हिंसां यथा सैव तथाऽङ्गमेषा कलङ्कमेकं मलिनं बिभर्त्ति ॥ ७४ ॥

इज्येति । देवानां व्रजैः समूहैर्भोज्या पेया ऋद्धिः समृद्धिर्यस्याः सा शुद्धा धवला इयं सुधादीधितेरमृतकरस्य चन्द्रस्य मण्डली इज्येव याग इव, शोभत इति शेषः । इज्यापि देवव्रजभोज्यपुरोडाशादिसमृद्धिः शुद्धा पवित्रा च भवति । तथैषा चन्द्रमण्डली कलङ्काख्यमेकं मध्यवर्तिनमङ्गमवयवं मलिनाकारं तथा बिभर्ति, यथा सैव इज्यैव पूर्वोक्तगुणविशिष्टा सत्यप्येकं पशुहिंसात्मकमङ्गं कर्मसाधनं मलिनं पापहेतुं

1. तद्यथा—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः······'(रघु० २।७५) अत्र अत्रिमुनिनेत्रोत्पन्नं ज्योतिश्चन्द्र एव गृह्यत इति बोध्यम् ।

बिमर्ति। परोपकारशीलायाः सर्वात्मना शुद्धाया अपि चन्द्रमण्डल्या दैवादेकमङ्गं मलिनं जातमित्यर्थः। यागे हि हिंसामात्रमेव मालिन्यम्। 'मुधाङ्कम्—' इति पाठे—कङ्कलरूपमेकमङ्गं मलिनं वृथैव विभर्ति। शुद्धाया मालिन्ययोगस्यानौचित्यादित्यर्थः। शुद्धस्यापि श्रौतधर्मस्य सांख्यैर्दोषारोपणान्मालिन्यं सुधैवेत्यर्थः। इज्या, 'व्रजयजोः—' इति क्यप्॥ ७४॥

देव-समूहसे भोज्य समृद्धि (कलावृद्धि, पक्षा०—हविष्यादि सम्पत्ति) वाली तथा स्वच्छ वर्ण (पक्षा०—पवित्र) यह चन्द्रमण्डली यज्ञके समान (शोभती) है, तथा यह (उक्तरूपा चन्द्रमण्डली) कलङ्करूप एक (मध्यभागस्थ) मलिनता (कृष्णवर्ण) को उस प्रकार धारण करती है, जिस प्रकार उक्तरूपा इज्या (याग-) पशुकी हिंसारूप मलिन (दोषयुक्त) एक अङ्ग (कर्म-विशेष) को धारण करती है। [सर्वथा परोपकारशील स्वच्छ चन्द्रमामें यज्ञमें हिंसाके समान एक मलिन कलङ्क (दोष) लगा हुआ है]॥ ७४॥

एकः पिपासुः प्रवहानिलस्य च्युतो रथाद्वाहनरङ्कुरेषः।
अस्त्यम्बरेऽनम्बुनि लेलिहास्यः पिबन्नमुष्यामृतविन्दुवृन्दम्॥ ७५॥

एक इति। एष मृगाङ्के दृश्यमानः प्रसिद्धः एकः पिपासुस्तृषाक्रान्तः सप्तवायुस्कन्धमध्यवर्तिनः प्रवहाख्यस्यानिलस्य मृगवाहनस्य गगनचारिणो रथाच्च्युतो वाहनभूतो रङ्कुर्मृगोऽनम्बुनि निर्जलेऽम्बरे लेलिहास्यो नितरां पौनःपुन्येन वास्वादनकारि मुखं यस्य तादृशो भवन्नमुष्य चन्द्रस्यामृतविन्दुवृन्दं पिबन्सन्नस्ति। तृषाक्रान्तो रथं परित्यज्य पतितो निर्जलेऽपि गगने चन्द्रामृतविन्दुवृन्दमास्वादयन् वायुवाहनमृग एवायम्, नतु कश्चित्कलङ्कमृगो नामेत्यर्थः। अस्तीति वर्तमानप्रत्ययेनामृतास्वादनेन चन्द्रं परित्यज्य गन्तुमशक्तोऽद्यापि वर्तत इति सूचितम्। एवमन्योऽपि तृषाक्रान्तो निर्जले देशे प्रस्रवणादेः पतज्जलविन्दुवृन्दं पिबन्ननुपशान्तपिपासो लेलिहास्यः सन् तत्रैव चिरं तिष्ठति। सप्तवायुस्कन्धाः पुराणप्रसिद्धाः। लेलिहेति, नितरां पुनःपुनर्वा लेढीत्यर्थे यङि पचाद्यचि 'यङोऽचि च' इति यङो लुक्॥७५॥

प्यासा हुआ (अत एव सात वायुओंके स्कन्धके मध्यवर्ती) 'प्रवह' नामक वायुके रथसे पृथक् हुआ यह (प्रत्यक्ष दृश्यमान) वाहन ('प्रवह' नामक वायुका वाहनभूत) मृग निर्जल आकाशमें (प्याससे व्याकुल होनेके कारण ओष्ठप्रान्तको चाटने वाला) इस चन्द्रमाके अमृत-विन्दु-समूहको पी रहा है। [यह चन्द्रमामें दृश्यमान कलङ्क 'प्रवह' वायुके रथसे प्यासके कारण अलग होकर जल-रहित आकाशमें प्याससे ओठको चाटनेवाला और चन्द्रमाके अमृत विन्दुको पीता हुआ 'प्रवह' वायुका वाहनभूत मृग ही है। लोकमें भी कोई प्याससे व्याकुल व्यक्ति निर्जल स्थानमें ओठोंको चाटता तथा झरने आदिके जल-विन्दुको पीता रहता है, वहांसे लौटता नहीं है। 'अस्ति' (है) इस वर्तमान कालिक क्रियासे बहुत दिन पूर्व उक्त रथसे पृथक् हुए मृगका आजतक स्थित रहना सूचित होता है। सात वायु-

स्कन्ध, 'प्रवह' वायुमें मेषादि राशि-समूह और उस मेषादि राशि-समूहमें चन्द्रमाका रहना पुराणोंमें देखना चाहिये ] ॥ ७५ ॥

अस्मिञ्छिशौ न स्थित एव रङ्कुर्यूनि प्रियाभिर्विहितोपदाऽयम् ।
आरण्यसन्देश इवौषधीभिरङ्के स शङ्के विधुना न्यधायि ॥ ७६ ॥

अस्मिन्निति । शिशौ बाले एककलात्मकेऽस्मिंश्चन्द्रे रङ्कुर्मृगो न स्थितो नासीदेव तस्यां दशायामदर्शनात् । किंतु प्रियाभिरोषधीभिर्यूनि तरुणे पूर्णावयवेऽस्मिंश्चन्द्रेऽयं रङ्कुरुपदेव विहिता प्रेषिता । कीदृशी ? अरण्ये भवः संदिश्यते प्रस्थाप्यते संदेशस्तद्रूपा । अरण्यभवानां संदेशरूपा वा । 'वयं भवत्प्रिया निर्जने वने मृगैः सह वसामः, त्वं तु स्वर्गे विजयी सुखेन वर्तसे' इति गूढार्थोप(पा)लम्भसूचिकेति यावत् । अनन्तरं विधुना प्रेयसीसंदेशरूपः स रङ्कुरङ्के मध्ये, अथ च—उत्सङ्गे, प्रियाप्रेमभरेण न्यधायि स्थापित इत्यहं शङ्के । अन्यापि प्रिया तरुणं प्रियं प्रति कंचित्संदेशमुपदारूपेण प्रेषयति, स च तं हृदयादौ धारयति । ओषध्यो हि वनवासिन्यस्तदनुरूपमेव संदेशं मृगं स्वप्रिये चन्द्रे प्रेषितवत्यः । आरण्यसंदेश इवायमुपदा प्रहितेति वा । 'यदा—' इति पाठे—यदाप्रभृति प्रेषितः, तदाप्रभृति तारुण्यदशायां चन्द्रेणायमङ्के न्यधायि, नतु पूर्वमित्यर्थः । आरण्यः, भवार्थेऽण् ॥ ७६ ॥

बाल ( एक कलात्मक ) इस चन्द्रमामें मृग ( कलङ्कहिरण ) था ही नहीं, ( किन्तु ) इसके युवक ( पूर्णावयव ) होनेपर ( इस चन्द्रमाको ) प्रिया ओषधियोंने वनके सन्देशके समान इस मृगको उपहार ( भेंट ) बनाकर भेजा ( 'तुम स्वर्गका आनन्द लूट रहे हो और तुम्हारी प्रिया हम ओषधियां तुम्हारे विरहसे वनमें मृगोंके साथ वसती हुई कष्ट सहन कर रही हैं' इस प्रकारके सन्देशरूपमें वनमें सुलभ इस मृगको युवक ( पूर्ण ) चन्द्रमाके पास ओषधियोंने भेजा ) और उस प्रियाप्रेषित उपदाभूत मृग को चन्द्रमाने अपने बीच ( पक्षा०—क्रोड ) में रख लिया ऐसा मैं जानती हूं । [वनवासिनी चन्द्रप्रियाभूता ओषधियोंका वहांके अनुरूप मृगको सन्देशरूपमें उपहार भेजना तथा प्रियाओंके भेजे हुए उपहारको अपने क्रोड़ में चन्द्रमा का रखना उचित ही है ] ॥ ७६ ॥

अस्यैव सेवार्थमुपागतानामास्वादयन् पल्लवमोषधीनाम् ।
धयन्नमुष्यैव सुधाजलानि सुखं वसत्येष कलङ्करङ्कुः ॥ ७७ ॥

अस्येति । एष कलङ्करङ्कुर्विरहपीडितत्वादस्यैव चन्द्रस्य सेवार्थमुपागतानामोषधीनां पल्लवमास्वादयन् । तथा—अमुष्यैव सुधारूपाणि जलानि धयन् पिबन् सुखमनायासलब्धावृत्तिरिव वसति, आहारलोभादत्रैव वसतीत्यर्थः । अन्योऽपि मृगो जलकिसलययुते देशे सुखेन वसति कदाचिदपि न त्यजति । पल्लवम् , जात्येकवचनम् ॥ ७७ ॥

( चन्द्रमध्यस्थ ) यह कलङ्कमृग ( ओषधियोंके विरहसे पीडित ) इसी ( चन्द्रमा ) की

सेवाके लिए आयी हुई ओषधियोंके पल्लवोंको खाता हुआ तथा इसी ( चन्द्रमा ) के अमृतरूप ( पक्षा०—अमृततुल्य मधुर ) जलको पीता हुआ सुखपूर्वक रहता है। [ यही कारण है कि ओषधिरूप चन्द्रप्रियाओंका भेजा हुआ यह मृग चन्द्रमाके क्रोडमें ही सदा रहने लगा, वहां से पुनः वापस नहीं गया। कोमल पल्लव तथा मधुर जल मिलनेवाले स्थानमें मृगका सुख पूर्वक रहना और उसे छोडकर अन्यत्र कहीं नहीं जाना उचित ही है ]॥ ७७ ॥

रुद्रेषुविद्रावितमार्त्तमारात्तारामृगं व्योमनि वीक्ष्य बिभ्यत्।
मन्येऽयमन्यः शरणं विवेश मत्वेशचूडामणिमिन्दुमेणः ॥ ७८ ॥

रुद्रेति। दक्षयज्ञे वीरभद्रावतारस्य रुद्रस्येषुणा विद्रावितम्। अत एव आर्त्तं तारारूपं मृगं व्योमनि आरात्समीपे दूरे वा वीक्ष्य बिभ्यत् त्रस्यन् अयमन्योऽपर एण इन्दुमीशस्य चूडामणिं ज्ञात्वा शरणं विवेश। शिवेन शिरसि स्थापितत्वादयं मान्य इत्येतदाश्रयेण रुद्रान्मामयं रक्षिष्यत्येवेत्याशयेनान्यो मृगश्चन्द्रं शरणं प्रविष्ट इत्यर्थं इत्यहं मन्ये। अन्योऽपि सजातीयं कस्माच्चिद्भीतं दृष्ट्वा स्वयमपि भीतः सन्कमपि शरणं याति। 'गत्वा—' इत्यपि पाठः। तारामृगस्य रुद्रेषुविद्रावणं काशीखण्डादौ ज्ञातव्यम् ॥ ७८ ॥

रुद्र ( क्रुद्ध शिवजी ) के बाणसे विदीर्ण ( अत एव ) दुःखित तारा ( नक्षत्र ) रूप मृगको समीप ( या—दूर ) से ही देखकर डरता हुआ यह दूसरा ही मृग ईश ( सर्व समर्थ शिवजी ) के मस्तकस्थ मणिभूत चन्द्रमाको शरण ( अपना रक्षास्थान ) मानकर इसके मध्यमें प्रविष्ट हो गया है, ऐसा मैं मानती हूं। [ लोकमें भी कोई व्यक्ति किसी सजातीय व्यक्तिको किसीके द्वारा पीडित देखकर भयार्त होता हुआ सुरक्षित स्थानमें प्रवेश करता है, अत एव शिवके बाणसे पीडित 'नक्षत्र' रूप मृगको पीडित देखकर शिवजीके मस्तकपर रहनेवाले चन्द्रमाको ( अपने मस्तकपर रखे हुए स्नेहपात्र चन्द्रमाके मध्यसे प्रविष्ट होनेपर वे मुझे नहीं मारेंगे, इस भावनासे ) अपना सुरक्षित स्थान समझकर दूसरा मृग चन्द्रमामें स्थित हो गया, जो कलङ्करूपसे भासित होता है ]॥ ७८ ॥

पौराणिक कथा—कामपीडित ब्रह्माने अपनी कन्या सरस्वतीके साथ सम्भोग करना चाहा तो वह मृगीका रूप धारणकर भाग चली और ब्रह्मा भी मृगका रूप धारणकर उसके पीछे दौड़े, यह ब्रह्माका अनुचित व्यवहार देखकर महाक्रोधी शिवजीने मृगरूपधारी ब्रह्माके मस्तक जब बाणसे काट लिया तब वह मृगरूपधारी ब्रह्ममस्तक 'मृगशिरा' नामक तथा शिवजीबाण 'आर्द्रा' नामक नक्षत्रोंके रूपमें आकाशमें स्थित हुए और उस ब्रह्मकपालको शिवजीने ब्रह्महत्या दूर करनेके लिए प्रायश्चित्तरूपमें भिक्षापात्र बनाकर ग्रहण किया। यह कथा स्कन्दपुराणके काशीखण्डमें आयी है। शिवमहिम्नस्तोत्रमें[१] यह वर्णन आता है।

---

१. 'प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा। धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥'

पृष्ठेऽपि किं तिष्ठति नाथ ! नाथ रङ्कुर्विधोरङ्क इवेति शङ्का ।
तत्त्वाय तिष्ठस्व मुखे स्व एवं यद्द्वैरथे पृष्ठमपश्यदस्य ॥ ७९ ॥

पृष्ठ इति । हे नाथ ! विधोरङ्क इव यथा चन्द्रस्योत्सङ्गे कलङ्कमृगो वर्तते, तथा रङ्कुः पृष्ठेऽपि पश्चाद्भागे किं तिष्ठति ? अथ न तिष्ठति इति तवाशङ्का चेद्वर्तते इति शेषः । तर्हि त्वं तत्त्वाय याथात्म्यज्ञानार्थं स्वे निजे मुखे विषये तिष्ठस्व, निजमुखमेव निर्णयं पृच्छेत्यर्थः । यत्त्वन्मुखं द्वैरथे समानशोभाभिलाषाद्द्विरथसंबन्धिनि द्वन्द्वयुद्धेऽस्य त्वन्मुखाद्भज्यमानत्वात्पलायमानस्य चन्द्रस्य पृष्ठं पश्चाद्भागमपश्यत् । तस्मात्तत्स्वमुखमेव निर्णेतृत्वेन पृच्छेत्यर्थः । त्वन्मुखं चन्द्रादधिकमिति भङ्ग्या नलमुखवर्णनं मे कृतम् । तत्त्वाय तत्त्वं ज्ञातुं, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी, तादर्थ्यमात्रे वा । तिष्ठस्व, स्थेयाख्यायां तङ् । स्वे, वैकल्पिकत्वात्स्मिन्नभावः ॥ ७९ ॥

हे नाथ ! ( इस चन्द्रमाके ) अङ्कमें-के समान ( जिस प्रकार इसके सम्मुखस्थ अङ्कमें मृग रहता है, उसी प्रकार ) पृष्ठभागमें भी मृग है क्या ? ऐसी यदि आपको शङ्का हो तो निर्णयार्थ अपने मुखसे ही पूछिये, जिसने ( समान शोभा चाहनेके कारण चन्द्रमा तथा आपके मुखके साथ ) दो रथों ( लक्षणासे रथस्थ वीरों ) का युद्ध होनेपर इस ( चन्द्रमा ) के पृष्ठभागको देखा है । [ चन्द्रमाने जब आपके मुखकी समानता करना चाहा, तब आपके मुखके साथ युद्ध होने लगा और चन्द्रमा पराजित होकर भाग चला, उस समय आपके मुखने चन्द्रमाकी पीठको देखा, इस कारण 'चन्द्रमाकी पीठमें भी कलङ्कमृग है या नहीं' इस शङ्काको 'अपने मुखसे ही पूछकर आप अपनी शङ्का दूर कर लें ।' इस प्रकार चन्द्रमाका वर्णन करती हुई दमयन्तीने अपने प्रियतम नलके मुखको चन्द्राधिक सुन्दर बतलाया] ॥७९॥

उत्तानमेवास्य वलक्षकुक्षिं देवस्य युक्तिः शशमङ्कमाह ।
तेनाधिकं देवगवेष्वपि स्यां श्रद्धालुरुत्तानगतौ श्रुतायाम् ॥ ८० ॥

उत्तानमिति । युक्तिरर्थापत्तिरनुमानं वास्य देवस्य चन्द्रस्य मध्यवर्तिनमङ्कं कलङ्करूपं शशमुत्तानं स्वर्गसंमुखमस्मदादिदृश्यमानपृष्ठभागमाह ब्रूते । यतो वलक्षकुक्षिं धवलोदरम् । यद्ययं शशकोऽस्मत्संमुखोदरोऽनुत्तानोऽभविष्यत्, तर्हि मध्यवर्तिशशकोदरस्य धवलत्वाच्चन्द्रमध्यभागोऽपि धवलोऽभविष्यत्, न च तथा दृश्यते, किंतु मलिनः । तस्मादुत्तान एव शशकश्चन्द्रेऽस्तीति युक्तिराहेत्यर्थः तेन चन्द्रशशकनिश्चितोत्तानत्वेनैव हेतुनाहं देवगवेष्वपि सुरभीप्रभृतिषु विषये वेदे श्रुतायामुत्तानगतौ सुरलोकसंमुखचरणतया गमने विषये पूर्वापेक्षयाधिकमतितरां श्रद्धालुरास्तिक्ययुक्ता स्याम् । 'उत्ताना वै देवगवाश्चरन्ति' इति श्रुतिर्न्यायोपपन्नार्थतया सत्यैवेत्यहमिदानीमधिकं मन्य इत्यर्थः । देवगवेषु 'गोरतद्धितलुकि' इति टच् । 'देवगवीषु' इति पाठे टित्वान्ङीप ॥ ८० ॥

अनुमान कह रहा है कि—(चन्द्रमा) का अङ्कगत शशक श्वेत कुक्षिवाला होनेसे उत्तान (ऊपर—स्वर्गकी ओर मुख किया हुआ) ही है, इस कारण देवोंकी गौ (कामधेनु) स्वर्गमें उत्तान होकर (स्वर्गकी ओर मुख करनेसे भूलोकवासियोंके लिये पृष्ठभागको दिखलाती हुई) चलती है इस विषयमें मैं अधिक श्रद्धालु हूं। [शशकका उदर भाग श्वेत होता है, अतः यदि यह हम लोगोंकी ओर मुख किया होता तो चन्द्रकलङ्क भी स्वच्छ ही दृष्टिगोचर होता, परन्तु भूपृष्ठवर्ती हम लोगोंको वह काला दृष्टिगोचर होता है, अतः ज्ञात होता है कि चन्द्रकलङ्कगत शशक ऊपर—स्वर्गकी ओर मुख तथा भूलोककी ओर पीठ किया है और जिस कारण यह स्वर्गस्थ शशक उक्तरूपसे स्थित है, इस कारण 'उत्तान (भूलोककी ओर पीठ तथा स्वर्गकी ओर) मुख करके देवोंकी गायें चरती हैं' एतदर्थिका 'उत्ताना वै देवगवाश्चरन्ति' इस श्रुतिमें अब मुझे विशेष श्रद्धा हो गयी है] ॥ ८० ॥

उक्तरीत्योत्तानगतौ सिद्धायामपि शशकस्य रक्तपृष्ठत्वान्नीलत्वेन प्रतीतिः कथमित्यत आह—

दूरस्थितैर्वस्तुनि रक्तनीले विलोक्यते केवलनीलिमा यत्।
शशस्य तिष्ठन्नपि पृष्ठलोम्नां तन्नः परोक्षः खलु रागभागः ॥ ८१ ॥

दूरेति। दूरस्थितैर्द्रष्टृभी रक्तनीले मिश्रितोभयवर्णे वस्तुनि केवलस्त्यक्तरागभागो नीलिमैव यद्यस्माद्विलोक्यते तत्तस्मात्कारणाच्छशस्य पृष्ठवर्तिरोम्णां तिष्ठन्नपि रागभागो रक्तिमांशः नोऽस्माकमतिदूरस्थितानां खलु निश्चितं परोक्षे दृग्गोचरो न भवति, किन्तु नीलिमैव दृश्यत इत्यर्थः। तिष्ठन्वर्तमानोऽपि परोक्ष इति विरोधाभासः। दूरस्थत्वान्न दृश्यत इति तत्परिहारः। 'खलु' उत्प्रेक्षायां वा ॥ ८१ ॥

दूरस्थ लोग जिस कारणसे लालिमायुक्त नीलवर्णवाली वस्तुके केवल नीलवर्णको ही देखते हैं, इस कारण (चन्द्र-कलङ्कगत) शशकपीठकी लालिमा होते हुए भी वह दूरस्थ हम लोगोंको परोक्ष (अदृश्य) ही रहती है। (यही कारण है कि चन्द्रकलङ्कस्थ इस शशकके पीठकी नीलिमा ही हम लोगोंको दृष्टिगोचर होती है, लालिमा दृष्टिगोचर नहीं होती) ॥ ८१ ॥

भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥८२॥

भङ्क्तुमिति। एष कविर्लोकः पदानां सुप्तिङन्तानां प्रयोगाध्वनि विषये व्याकरणस्य प्रकृतिप्रत्ययविभागपूर्वं शब्दव्युत्पादनकारिणः शास्त्रस्य मदधीन एव सकलशब्दप्रयोग इति दर्पं गर्वं, यद्वा—लक्षणया वैयाकरणस्य व्याकरणाधीन एव 'सकल' शब्दप्रयोग इति गर्वं भङ्क्तुं त्याजयितुं प्रभुः समर्थः। यद्यस्माद्धेतोरयं चन्द्रः शशोऽस्यास्ति ततो हेतोः शशी यथोक्तः, लोकेनेति शेषः। एवममुनैव प्रकारेण मृगोऽस्यास्ति मृगीति नोक्तः। शशोऽस्यातीति मतुबर्थे 'अत इनिठनौ' इतीनौ यथायं

शशीत्युच्यते, तथा तेनैव सूत्रेण मृगोऽस्यास्तीत्यत्रेनेः प्राप्तौ सत्यामपि मृगीति नोक्तः । तस्मादतिव्याप्त्यादिदोषाद्व्याकरणमूल एव लोकप्रयोग इति नियमो न युक्तः, किंतु कृत्तद्धितसमासानामभिधानं नियामकम् । लक्ष्यमुद्दिश्य लक्षणप्रवृत्तिः नतु लक्षणमुद्दिश्य लक्ष्यप्रवृत्तिरिति । तस्मात् 'प्रयोगमूलं व्याकरणम्' इति व्याकरणाल्लोक एव प्रयोगे बलीयानीति भावः । अप्रस्तुतप्रशंसा ॥ ८२ ॥

यह ( शब्दव्यवहार करनेवाला ) लोक व्याकरण (अथवा—लक्षणासे व्याकरणज्ञाताओं) के ( प्रकृति-प्रत्ययके विभाजनपूर्वक शब्द विवेचन में ही करता हूं, दूसरा नहीं, ऐसे ) अभिमानको नष्ट करनेके लिए समर्थ है, क्योंकि यह चन्द्रमा 'शश' है इसका वह 'शशी' कहलाता है, परन्तु 'मृग' है इसका वह 'मृगी' नहीं कहलाता है। जिस प्रकार चन्द्रमाको शशवाला होनेसे 'शशी' कहा जाता है, उसी प्रकार मृगवाला होनेपर भी 'मृगी' नहीं कहा जाता अत एव अतिव्याप्ति—अव्याप्ति दोष आनेसे व्याकरणमूलक लोकप्रयोग होनेका नियम नहीं है, किन्तु कृत-तद्धित-समास भी उसमें नियामक हैं अर्थात् लोकप्रयोगका अनुगामी व्याकरण होता है, व्याकरणका अनुगामी लोकप्रयोग नहीं होता ] ॥ ८२ ॥

यावन्तमिन्दुं प्रतिपत्प्रसूते प्रासावि तावानयमब्धिनाऽपि ।
तत्कालमीशेन धृतस्य मूर्ध्नि विधोरणीयस्त्वमिहास्ति लिङ्गम् ॥ ८३ ॥

यावन्तमिति । शुक्लप्रतिपद्यावन्तं यत्प्रमाणमेककलमिन्दुं प्रसूते, अब्धिनापि तावांस्तत्प्रमाण एककल एवायं प्रासावि, नतु पूर्ण इत्यर्थः । एतत्कथं ज्ञातमित्यत आह—तत्कालं तस्मिन्काले समुद्रादुत्पत्तेरवसर इव ईशेन मूर्ध्नि धृतस्य विधोरणीयस्त्वं नितरां कार्श्यमेवेहैककलत्वे लिङ्गं ज्ञापकमनुमापको हेतुरस्ति । यदि समुद्रेण संपूर्णोऽयमजनिष्यत, तर्हि शिवेनापि तदानीमेव शिरसि तावानेवाधास्यत, नतु तथा; तस्मात्प्रतिपदैककलः प्रसूत; तावान्समुद्रेणापीति प्रतिपदुत्पन्नोऽप्ययमेककलत्वादेव न दृश्यत इति भाव ॥ ८३ ॥

( शुक्लपक्षीय ) प्रतिपदातिथि जितने बड़े अर्थात् एक कलावाले चन्द्रमाको उत्पन्न करती है, समुद्रने भी उतने ही बड़े ( एक कलावाले ही ) चन्द्रमाको उत्पन्न किया था, उस ( चन्द्रोत्पत्तिके ) समयमें शिवजीके द्वारा मस्तकपर धारण किया गया ( एक कलावाला चन्द्रमा ही ) इस विषय ( समुद्रसे एक कलावाले ही चन्द्रमाको उत्पन्न होने ) में चन्द्रमाका सूक्ष्मतमत्व ( एक कलात्मक होना ) ही प्रमाण है। [ यदि समुद्रने पूर्ण चन्द्रको उत्पन्न किया होता तो उस समय शिवजी एक कलात्मक चन्द्रको मस्तकपर धारण नहीं करते,

१. 'अलक्ष्ये लक्षणागमनमतिव्याप्तिः' 'लक्ष्ये लक्षणागमनमव्याप्तिः' इति ज्ञेयम् ।

२. तदुक्तं भगवत्पतञ्जलिना महाभाष्ये—'न हि लक्षणेन पदकारा अनुवर्तनीयाः, पदकारैर्नाम लक्षणमनुवर्तनीयम् ।' इति । अत्र लक्षणं व्याकरणसूत्रादिकम्, पदकारा लोके पदप्रयोक्तारो जना इति बोध्यम् ।

किन्तु वे एक कलात्मक चन्द्रमाको ही सर्वदा शिरपर धारण करते हैं, इससे प्रतीत होता है कि समुद्रने एक कलात्मक चन्द्रमाको ही उत्पन्न किया था, पूर्णचन्द्रमाको नहीं ]॥ ८३ ॥

आरोप्यते चेदिह केतकत्वमिन्दौ दलाकारकलाकलापे ।
तत् संवदत्यङ्कमृगस्य नाभिकस्तूरिका सौरभवासनाभिः ॥ ८४ ॥

आरोप्यत इति । केतकत्वमिहेन्दौ चेद्यदि आरोप्यते यतो दलाकारः केतकीपत्रसदृशः धवलः कलानां कलापः समूहो यस्य तस्मिन् । तत्तस्मात्केतकदलवच्छुभ्रकलाकलापत्वाच्चन्द्रः केतकमेवेति रूप्यत इत्यर्थः । तर्हि अङ्कमृगस्य मृगत्वेन नाभिकस्तूरिका कर्त्री आरोपितं तत्केतकत्वं कर्मीभूतं सौरभवासनाभिः कृत्वा संवदति, चन्द्रे केतकत्वं युक्तमित्यनुमन्यत इत्यर्थः । 'नाभिः' इति पाठे—अङ्कमृगस्य नाभिः कर्त्री कस्तूरिकासंबन्धिसौरभवासनाभिः कृत्वा संवदतीति वा । केतक्यां कस्तूरीपरिमलो वर्तते, चन्द्रे कलङ्कमृगनाभिरूपा कस्तूरी वर्तते । तस्माच्चन्द्रे केतकत्वमारोपयितुं युक्तमित्यर्थः । तत्केतकत्वमङ्कमृगस्य नाभिकस्तूरिकायाः परिमलस्य वासनाभिः संक्रमणैः कृत्वा संवदति युक्त्या संवादं प्राप्नोत्येवेति वा । 'ताभिः' इति पाठे—अतिप्रसिद्धाभिर्वासनाभिः ॥ ८४ ॥

( केतकी पुष्पके ) पत्तेके समान कला-समूहवाले इस चन्द्रमामें यदि केतकी का आरोप किया जाता है तो ( इसके ) कलङ्कमृगकी नाभिगत कस्तूरी सुगन्धिके संस्कारोंसे उस ( आरोपित केतकी पुष्परूप चन्द्रमा ) के साथ सङ्गत होती है । ( प्रथम पाठा०—कलङ्कमृगकी नाभि कस्तूरिकाकी सुगन्धिके संस्कारोंसे उस आरोपित । द्वितीय पाठा०—कलङ्क मृगकी कस्तूरी उन ( अति प्रसिद्ध ) सुगन्धिके संस्कारोंसे उस आरोपित'') । [ चन्द्रकलाके केतकी-पुष्प-दलके समान स्वच्छ एवं लम्बा तथा कलङ्कमृगकी नाभिमें स्थित कस्तूरीके सुगन्धिसे परिपूर्ण होनेके कारण स्वच्छ एवं कस्तूरीके समान सुगन्धि परागवाले केतकी-पुष्प-दलका चन्द्रमामें आरोप करना युक्तियुक्त होता है ]॥ ८४ ॥

आसीद्यथाज्यौतिषमेष गोलः शशी समक्षं चिपिटस्ततोऽभूत् ।
स्वर्भानुदंष्ट्रायुगयन्त्रकृष्टपीयूषपिण्याकदशावशेषः ॥ ८५ ॥

आसीदिति । एष शशी यथाज्यौतिषं गर्गादिमुनिप्रणीतग्रहगणितशास्त्रानतिक्रमेण गोलः कपित्थफलवद्वर्तुलोपरितनभाग एव पूर्वमासीत् । तर्हीदानीं कथमन्यथा दृश्यत इत्याशङ्क्याह-ततोऽनन्तरं कालक्रमेण स्वर्भानो राहोरूर्ध्वाधोभागस्थितदंष्ट्रायुगमेव यन्त्रं निष्पीडनचक्रं तेन कृष्टं निष्कृष्य गृहीतं पीयूषममृतं यस्य, तस्माद्वा, स चासौ पिण्याकश्च तस्य दशा गृहीतरसनीरसतिलादिपिण्डीमात्ररूपतावशेष उद्धृतो भागो यस्यैवंभूतः सन् चिपिटः पर्पटप्रायोऽभूदिति समक्षमिदानीं प्रत्यक्षेणानुभूयत एवेत्यर्थः । ज्योतिरधिकृत्य कृतो ग्रन्थो ज्यौतिषम्, 'अधिकृत्य कृते ग्रन्थे' इत्यण् । ततो यथार्थेऽव्ययीभावः । ज्योतिःशास्त्रादौ त्रयोदशाङ्गुलश्चन्द्रः षोडशाङ्गुलस्य सूर्य-

स्याधोभागस्थो जलपूर्णकाचकूपिकाप्रायो यथोदितः, तथैव पूर्वमासीदित्युक्तम् ॥८५॥

यह चन्द्र ( गर्गाचार्यादिप्रणीत ) ज्योतिषशास्त्रके अनुसार ( कपित्थफलके समान ) गोलाकार था, तदनन्तर राहुके दाँतोंकी दोनों पङ्क्तिरूप ( दबानेके ) यन्त्रसे निचोड़े गये अमृतरसवाले ( तिल आदिकी ) खलीके समान चिपटा हो गया है, यह सबको प्रत्यक्ष अनुभव होता है। [ गोलाकार पदार्थको दबाकर रस निकाल लेनेपर चिपटा होना उचित ही है ] ॥ ८५ ॥

असावसाम्याद्वितनोः सखा नो कर्पूरमिन्दुः खलु तस्य मित्रम् ।
दग्धौ हि तौ द्वावपि पूर्वरूपाद्यद्वीर्यवत्तामधिकां दधाते ॥ ८६ ॥

असाविति । असौ चन्द्रो वितनोरनङ्गस्य सखा नो भवति । कुतः ? असाम्यादसादृश्यात् । 'विवाहमैत्रीवैराणि भवन्ति समशीलयोः' इति शास्त्रादनयोः साङ्गानङ्गयोः सादृश्याभावान्मैत्री न संगच्छत इत्यर्थः । तर्ह्यनयोर्लोकप्रसिद्धा मैत्री कथमित्यत आह—खलु निश्चितं कर्पूरापरनामैवेन्दुस्तस्यानङ्गस्य मित्रम्, तावतैव लोकप्रसिद्धिरिति विरोधाभाव इत्यर्थः । तत्र हेतुमाह—यद्यस्मात्तौ द्वावपि कामकर्पूरौ दग्धौ सन्तौ पूर्वरूपाददग्धदशायाः सकाशादधिकां वीर्यवत्तां हि स्पष्टं दधाते । पक्वो हि कर्पूरो वीर्यवत्तरो भवति, कामोऽपि दाहानन्तरमधिकं वीर्यवाननुभूयते । तदुक्तम्—'कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने । नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥' इति । तस्मात्कामकर्पूरयोर्मैत्री युक्ता । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसंज्ञः' इत्यमरः । 'अस्त्रियाम्' इत्यमरवचनात् 'कर्पूर'शब्दो नपुंसकोऽपि ॥

( अङ्गसहित तथा अङ्गरहितरूप ) असमानता होनेसे यह ( अङ्गसहित ) चन्द्रमा ( अङ्गरहित ) कामदेवका मित्र नहीं है, किन्तु ( 'चन्द्रमा' का पर्यायवाचक ) 'कर्पूर' उस कामदेवका मित्र है, क्योंकि जले हुए वे दोनों ( कामदेव तथा कर्पूर ) ही पहले ( जलनेके पूर्व ) अधिक वीर्यवत्ताको धारण करते हैं। [ जला हुआ कर्पूर भी कच्चे कर्पूरकी अपेक्षा अधिक वीर्यवत्तर होता है। शिवजीकी नेत्राग्निसे जला हुआ कामदेव पहलेकी अपेक्षा अधिक वीर्यवान् हो गया है, इससे कामदेवका मित्र चन्द्रमा नहीं, किन्तु 'चन्द्रमा' का वाचक 'कर्पूर' ही चन्द्रमाका मित्र है, इस शब्दभ्रमसे ही लोकमें कामदेवका मित्र चन्द्रमा समझा जाता है ] ॥ ८६ ॥

स्थाने विधोर्वा मदनस्य सख्यं सः शम्भुनेत्रे ज्वलति प्रलीनः ।
अयं लयं गच्छति दर्शभाजि भास्वन्मये चक्षुषि चादिपुंसः ॥८७॥

स्थान इति । वाऽथवा विधोर्मदनस्य सख्यं स्थाने, युक्तमेवेत्यर्थः । तत्र हेतुः—स कामः ज्वलति देदीप्यमाने शंभुनेत्रे प्रलीनः प्रकर्षेण लीन एकतां प्रलयं गतः, विनष्ट इत्यर्थः । अयं चन्द्रश्च दर्शभाजि दर्शनं दर्शस्तद्व्यापारयुक्त, अथ च—अमावस्यां गते, भास्वन्मये सूर्यरूपे आदिपुंसो विष्णोश्चक्षुषि लयमेकतां गच्छति । दर्शे

हि चन्द्रः सूर्यं गच्छति, अत एव दर्शस्य सूर्येन्दुसंगम इति नाम। सूर्यो विष्णोर्दक्षिणं चक्षुः। तथा च तुल्ययोर्हरिहरयोर्नेत्रयोर्द्वयोरपि चन्द्रकामयोः प्रलीनत्वाद्दर्शे चन्द्रस्याप्यनङ्गतया च समशीलत्वादुचितैव मैत्रीत्यर्थः। तथा च कामस्य चन्द्रसखिताप्रसिद्धिर्मुख्यैव युक्तेति भावः॥ ८७॥

अथवा चन्द्रमा तथा कामदेवकी मित्रता उचित है, क्योंकि वह कामदेव दीप्यमान शिव-नेत्रमें सम्यक् प्रकारसे लीन (नष्ट) हो गया और यह चन्द्रमा देखनेवाले (पक्षा०—अमावस्या तिथिको प्राप्त) आदि पुरुष (विष्णु) के सूर्यरूप (दक्षिण) नेत्रमें लीन (नष्ट) होता है। [विष्णु भगवान्‌का दक्षिण नेत्र सूर्य है, अत एव हरिहररूपधारी भगवान्‌के शिवजीके नेत्रमें कामदेव नष्ट हो गया तथा विष्णुजीके सूर्यरूप नेत्रमें अमावस्या आनेपर यह चन्द्रमा नष्ट होता रहता है; इस कारणसे चन्द्रमा तथा कामदेवकी मित्रता होना युक्तियुक्त ही है]॥ ८७॥

नेत्रारविन्दत्वमगान्मृगाङ्कः पुरा पुराणस्य यदेष पुंसः।
अस्याङ्क एवायमगात्तदानीं कनीनिकेन्दिन्दिरसुन्दरत्वम्॥ ८८॥

नेत्रेति। पुरा पूर्वं यदा यस्मिन्काले एष मृगाङ्कः पुराणस्य पुंसः श्रीविष्णोर्नेत्रारविन्दत्वं नयनकमलत्वमगात्। तदा तस्मिन्काले अस्य विष्णुनेत्रारविन्दभूतस्यास्य चन्द्रस्यायमङ्कः कलङ्क एव कनीनिकाया इन्दिन्दिरस्य भ्रमरस्य सुन्दरत्वमगात्प्रापत्। 'अदात्' इति पाठे—अयं श्रीविष्णुरस्य चन्द्रस्याङ्के विषये कनीनिकेन्दिन्दिरसुन्दरत्वमदात्। नेत्रे हि कनीनिकया भाव्यम्, अरविन्दे च भ्रमरेण। तथा चास्य नेत्रारविन्दरूपत्वादङ्कमेवोभयं श्रीविष्णुः कृतवानित्यर्थः। अङ्क एव कनीनिका कर्त्री भ्रमरेण सुन्दरत्वमस्यादादिति वा। 'इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः' इति हलायुधः॥ ८८॥

पहले जिस समय यह चन्द्रमा पुराणपुरुष (विष्णु भगवान्) का नेत्रकमल बना, उसी समय यह कलङ्करूप मृग कनीनिका (नेत्रतारा—आँखकी पुतली) रूप भ्रमरकी सुन्दरताको प्राप्त किया। [नेत्रमें कनीनिकाका तथा अरविन्दमें भ्रमरका होना उचित होनेसे चन्द्रमा जब विष्णुका नेत्ररूप कमल हुआ, तब चन्द्रमण्डलस्थ कलङ्कमृग कनीनिकारूप भ्रमर हो गया]॥ ८८॥

देवेन तेनैष च काश्यपिश्च साम्यं समीक्ष्योभयपक्षभाजौ।
द्विजाधिराजौ हरिणाश्रितौ च युक्तं नियुक्तौ नयनक्रियायाम्॥ ८९॥

देवेनेति। तेन देवेन श्रीविष्णुना एष चन्द्रः काश्यपिर्गरुडश्चैतौ द्वावपि साम्यं समानधर्मतां समीक्ष्य तुल्यायां नयनक्रियायां क्रमेण नेत्रव्यापारे वाहनव्यापारे च यन्नियुक्तौ, तद्युक्तमुचितमित्यर्थः। 'चौ' अन्योन्यसमुच्चये। साम्यमेवाह—उभयपक्षौ शुक्लपक्षकृष्णपक्षौ भजति चन्द्रः, गरुडस्तु द्वौ छदौ भजति, तादृशौ द्वावपि।

तथा—द्विजानां ब्राह्मणानां राजा चन्द्रः। गरुडस्तु पक्षिणां राजा, तादृशौ। तथा—हरिणेन कलङ्कमृगेणाश्रितश्चन्द्रः, गरुडस्तु हरिणा विष्णुना वाहनार्थेनाश्रितः, तादृशौ। एवमुभयोः साम्यात्सम एव व्यापारे यन्नियुक्तौ तदुचितं कृतमिति भावः। काश्यपिः, बाह्वादित्वादिञ्॥ ८९॥

उस देव (पुराणपुरुष—श्रीविष्णु भगवान्) ने इस चन्द्रमा तथा गरुड़की समानता देखकर दो पक्ष (शुक्लपक्ष तथा कृष्णपक्ष, पक्षा०—दो पङ्ख) धारण करनेवाले, द्विजों (ब्राह्मणों, पक्षा०—पक्षियों) के स्वामी, हरिणसे आश्रित अर्थात् मृगयुक्त (पक्षा०—विष्णुसे आश्रित) उन दोनोंको जो नेत्रके कार्य (देखने, पक्षा०—ढोनेके कार्य अर्थात् वाहन बनने) में नियुक्त किया, यह उचित है॥ ८९॥

यैरन्वमायि ज्वलनस्तुषारे सरोजिनीदाहविकारहेतोः।
तदीयधूमौघतया हिमांशौ शङ्के कलङ्कोऽपि समर्थितस्तैः॥ ९०॥

यैरिति। यैः पण्डितैः सरोजिन्याः दाहरूपाद्विकाराद्धेतोस्तुषारे ज्वलनोऽग्निरन्वमायि। तुषारः साग्निर्भवितुमर्हति, संबन्धे सति दाहकारित्वात्, साग्निभूदेशवत्, तप्तोदकवद्वेति हिमे विषये वह्निरनुमित इत्यर्थः। तैः पण्डितैर्हिमांशौ तुषारमये चन्द्रे वर्तमानः कलङ्कोऽपि तदीयधूमौघतया हिमाग्निसंम्बन्धिधूमसमूहरूपत्वेन समर्थित इत्यहं शङ्के। वह्नौ हि धूमेन भाव्यम्, चन्द्रश्च तुषारमयत्वादुक्तरीत्या वह्निमान्, तथा च कलङ्को धूमसमूह एवेति तैः समर्थितमित्यहं संभावयामीत्यर्थः॥ ९०॥

जिन (विद्वानों) ने कमलिनीका दाहक होनेसे तुषारमें अग्नि होनेका अनुमान किया, उन (विद्वानों) ने (तुषारमय) चन्द्रमामें कलङ्कको भी उस (तुषार) का धूम-समूह होनेका समर्थन कर दिया, ऐसा मैं जानती हूं। [जहां अग्नि रहती है, वहां धूम भी संभव है, अत एव तुषारमें अग्निका समर्थन करनेवालोंने उसमें धूमका भी समर्थन कर दिया, इस प्रकार तुषारमय चन्द्रमें अग्निके साहचर्यसे कृष्णवर्ण कलङ्क भी धूम-समूह ही है ऐसा कहना चाहिये]॥ ९०॥

स्वेदस्य धाराभिरिवापगाभिर्व्याप्ता जगद्भारपरिश्रमार्ता।
छायापदेशाद्वसुधा निमज्ज्य सुधाम्बुधावुज्झति खेदमत्र॥ ९१॥

स्वेदस्येति। वसुधा छायापदेशात्स्वीयप्रतिबिम्बव्याजेन सुधाम्बुधावत्र चन्द्रे निमज्ज्यान्तः प्रविश्य खेदं जगद्भारपरिश्रमपीडामुज्झतीव। किंभूता? जगद्भारवहननिमित्तः परिश्रमस्तेनार्ता नितरां पीडिता। अत एव—स्वेदस्य धाराभिरिवापगाभिर्व्याप्ता समन्तात्पूरिता। अमृतसमुद्रनिमज्जने हि खेदो गच्छत्येव। यस्याश्च तत्तन्नदीरूपः स्वेदः, तस्याः श्रमहरणे सुधासमुद्र एवोचितः। एतेन कलङ्कस्य मृगशशभूच्छायाप्रभृति मद्भेदा वर्णिताः॥ ९१॥

संसारके भार (धारण करने) के परिश्रमसे थकी हुई (अत एव) पसीनेके प्रवाहके

समान नदियोंसे व्याप्त पृथ्वी (कलङ्कात्मक अपनी) छायाके छलसे इस अमृतसमुद्र (चन्द्रमा) में गोता लगाकर थकावटको दूर कर रही है। [लोकमें भी परिश्रमसे थका हुआ तथा बहते हुए पसीनेकी धाराओंसे व्याप्त कोई व्यक्ति जलाशयमें गोता लगाकर (नहाकर) थकावटको दूर करता है। कोई-कोई आचार्य चन्द्रमामें दृश्यमान कलङ्कको पृथ्वीकी छाया मानते हैं]॥ ९१ ॥

**ममानुमैवं बहुकालनीलीनिपातनीलः खलु हेमशैलः।**
**इन्दोर्जगच्छायमये प्रतीके पीतोऽपि भागः प्रतिबिम्बितः स्यात् ॥**

**ममेति। हेमशैलो मेरुः खलु निश्चितं सर्गमारभ्याद्ययावदतिक्रान्तेन बहुना कालेन कृत्वा नीलीनिपातः श्यामिकालगनं तेन कृत्वा वा नीलः बहुकालीनत्वान्नील-मलसंबन्धान्नीलवर्णः संजातोऽस्तीति, एवंप्रकारा ममानुमाऽनुमानम्, एवमहं संभाव-यामीत्यर्थः। अन्यथा यदि स्वर्णाचलः कालभूयस्त्वेन न नीलीभूतः किंतु हेममय-त्वात्पीत एव स्यात्, तर्हि इन्दोर्जगच्छायमये जगत्प्रतिबिम्बभूते कलङ्करूपे प्रतीके-ऽवयवे मेरोः पीतोऽपि भागः प्रतिबिम्बितः स्यात्पीतोंऽशोऽपि दृश्येत, तस्मात्स्वर्णा-चलो नील एव जातः। तथा च सकलाया अपि भूमेर्नीलवर्णत्वात्तत्प्रतिबिम्बरूपः कलङ्कोऽपि नील एव युक्त इत्यर्थः। जगच्छाये, 'विभाषा सेना—' इति षण्ढत्वम् ॥**

सुमेरु पर्वत (सृष्टिके आरम्भसे आजतकके) बहुत अधिक समय व्यतीत होनेके कारण नीलिमाके लगनेसे नीला हो गया है, यह मेरा अनुमान है। अन्यथा (यदि उक्त कारणसे सुमेरु पर्वत नीला नहीं हुआ होता, किन्तु सुवर्णमय होनेसे पीला ही रहता तो) संसारकी छायाभूत चन्द्रमाके कलङ्कमें (पीले सुमेरुका) पीला भाग भी प्रतिबिम्बित होता। [चन्द्रमामें पृथ्वीकी छाया ही कलङ्करूपमें दृष्टिगोचर होती है, यदि सुमेरु पीला होता तो इस कलङ्कमें प्रतिबिम्बित सुमेरुका पीला वर्ण भी दृष्टिगोचर होता, किन्तु सम्पूर्ण कलङ्क काला ही दृष्टिगोचर होता है, अतः अनुमान होता है कि बहुत समय बीतनेसे सुमेरु भी कृष्णवर्ण हो गया है, जिसका प्रतिबिम्ब काला ही दृष्टिगोचर होता है]॥ ९२ ॥

**माऽऽपदुन्निद्रसरोजपूजाश्रियं शशी पद्मनिमीलितेजाः।**
**अक्षिद्वयेनैव निजाङ्करङ्कोरलङ्कृतस्तामयमेति मन्ये ॥ ९३ ॥**

**मेति। शशी उन्निद्रैर्विकसितैः सरोजैः कृत्वा या पूजा तज्जनितां श्रियं मा अवा-पत् मा स्म लभत। यतः—पद्मनिमीलि कमलसंकोचकं तेजो यस्य सः। विकसितानाम-पि कमलानां पूजार्थं चन्द्रसविधे क्रियमाणानां चन्द्रतेजसां संकोचस्यैव संभवादु-न्निद्रसरोजपूजाश्रियं कथं प्राप्नोति ?। प्रकारान्तरेण प्राप्नोतीत्याह—निजाङ्कभूतस्य रङ्कोर्मृगस्याक्षिद्वयेनैवालंकृतोऽयं चन्द्रस्तामुन्निद्रसरोजपूजाश्रियमेति प्राप्नोति तन्न-यनयोरुन्निद्रकमलरूपत्वादित्यर्थ इत्यहं मन्ये। अङ्कमृगनेत्राभ्यां कृत्वाऽयं चन्द्रो विकसितकमलाभ्यां पूजामिव शोभां प्राप्नोतीति भावः। एत्येवेति वा ॥ ९३ ॥**

कमल-सङ्कोचकारक तेजवाला चन्द्रमा विकसित कमलोंकी पूजा ( आदर ) की श्रीको भले नहीं पावे, किन्तु यह ( चन्द्रमा ) अपने कलङ्कभूत हिरणके ( कमलतुल्य ) दोनों नेत्रोंमें ही उस ( विकसित कमलोंकी पूजा ) की शोभाको पाता है, ऐसा मैं मानती हूँ। [ स्वभावतः कमलसङ्कोचक प्रवृत्ति होनेसे यद्यपि चन्द्रमा विकसित कमलशोभाको नहीं देखता, तथापि कलङ्क-मृगके विकसित कमलके समान नेत्रोंसे उक्त शोभाको देख ही लेता है ]॥ ९३ ॥

य एष जागर्त्ति शशः शशाङ्के बुधो विधत्ते क इवात्र चित्रम् ? ।
अन्तः किलैतत्पितुरम्बुराशेरासीत् तुरङ्गोऽपि मतङ्गजोऽपि ॥ ९४ ॥

**य इति । य एष प्रत्यक्षदृश्यः शशः शशाङ्के जागर्ति स्फुरति, अत्र विषये क इव बुधश्चित्रमाश्चर्यं विधत्ते ? अपि तु न कोऽपि । किल यस्मादेतत्पितुरम्बुराशेरन्तर्मध्ये उच्चैःश्रवःसंज्ञकस्तुरङ्गोऽप्यासीत् । ऐरावताख्यो मतङ्गजोऽप्यासीत्। यदीयपितुर्मध्येऽश्वगजादिकं भवति, तदीय( पुत्र )मध्ये शशमात्रसंभवे किमाश्चर्यमित्यर्थः ॥ ९४ ॥**

जो यह ( प्रत्यक्ष दृश्यमान ) शशक चन्द्रमामें स्फुरित होता है, इस विषयमें कौन विद्वान् आश्चर्य करते हैं ? ( पदार्थ-विशेषके मध्यमें जीव-विशेषके रहनेसे किसी विद्वान्को आश्चर्य नहीं होता ), क्योंकि इस ( चन्द्रमा) के पिता समुद्रके मध्यमें ('उच्चैःश्रवा' नामका) घोड़ा तथा ('ऐरावत' नामका ) हाथी भी था। [ जिसके पिताके मध्यमें बड़े-बड़े घोड़ा-हाथी-जैसे जीव रहते थे, उसके पुत्र ( चन्द्रमा ) के मध्यमें शशक-जैसे छोटे जीवके रहनेमें किसी विद्वान्को कोई आश्चर्य होना उचित नहीं है ]॥ ९४॥

गौरे प्रिये भातितमां तमिस्रा ज्योत्स्नी च नीले दयिता यदस्मिन् ।
शोभाभिलोभादुभयोस्तयोर्वा सितासितां मूर्त्तिमयं बिभर्त्ति ॥ ९५ ॥

**गौर इति । तमिस्रा तमोबहुलाऽस्य दयिता रात्रिर्गौरे प्रिये चन्द्रे विषये भातितमाम् । तथा—ज्यौत्स्नी च चन्द्रिकायुक्ता धवलाऽस्य दयिता रात्रिर्नीले प्राणेशेऽस्मिंश्चन्द्रे नितरां शोभते, भिन्नवर्णे हि शोभते इत्यर्थः। तस्माद्धेतोस्तयोस्तमिस्रा-ज्यौत्स्न्योरुभयोरपि विषये स्वस्य शोभाप्राप्तेर्लोभादभिलाषात्तयोरेव वा पत्न्योर्या शोभाप्राप्तिस्तदभिलाषाद्धवलश्यामलवत्संबन्धात्तमिस्राज्यौत्स्न्योः शोभया भवितव्यमिति । अयं चन्द्रः सितासितां धवलां श्यामलां च मूर्तिं बिभर्ति । 'वा' इवार्थः । शोभाभिलोभादिवेत्यन्वयः । नीलभागे ज्यौत्स्नीं प्रियां धारयितुं धवले च तामसीमिति यथासंख्यम् ॥ ९५ ॥**

अन्धकार ( युक्त रात्रि ) रूपा प्रिया गौरवर्ण प्रियतम ( चन्द्र ) में तथा चन्द्रिका ( युक्त रात्रि ) रूपा प्रिया कृष्णवर्ण प्रियतम ( चन्द्र ) में विशेषतः शोभती है, अत एव मानो यह चन्द्रमा उक्त दोनोंकी शोभाको पानेके लोभसे ( प्रान्तभागमें ) श्वेत तथा ( कलङ्कमें ) कृष्णवर्णकी मूर्तिको ग्रहण करता है ॥ ९५ ॥

वर्षातपानावरणं चिराय काष्ठौघमालम्ब्य समुत्थितेषु ।
बालेषु ताराकवकेष्विहैकं विकस्वरीभूतमवैमि चन्द्रम् ॥ ९६ ॥

वर्षेति । अहं बालेषु तनुषु सूक्ष्मरूपेष्वविकसितेषु चेह प्रत्यक्षदृश्येषु तारासु नक्षत्रेष्वेव कवकेषु छत्राकेषु मध्ये चिरकालोत्पन्नत्वाद्विकस्वरीभूतं विकसितमेकं छत्राकमेव चन्द्रमवैमि मन्ये । किंभूतेषु ताराकवकेषु ? चिराय बहुकालं वर्षास्वृतौ तपे ग्रीष्मर्तौ च वर्षेषु जलवृष्टिषु आतपेषूष्णेषु च सत्सु अनावरणमनाच्छादितं काष्ठौघं दिक्समूहमेव दारुसमूहमालम्ब्य समुत्थितेषूत्पन्नेषु । वर्षाकाले ह्यनावृतेषु जलस्तिमितेषु पश्चादुष्णतप्तेषु च काष्ठेषु सूक्ष्मस्थूलानि छत्राकाणि भवन्ति । तथा च तारा अल्पकवकानि, चन्द्रस्तु स्थूलकवकमिवेत्युत्प्रेक्षा ॥ ९६ ॥

वरसात तथा धूप ( ग्रीष्म ) ऋतुमें चिरकालतक विना ढके हुए दिक्समूह ( पक्षा०—काष्ठ-समूह ) का आलम्बनकर पैदा हुए तारारूपी छत्राकोंमें-से विकसित ( फैला ) हुआ एक छत्राक चन्द्रमाको मानती हूँ । [ वरसात तथा धूप लगनेसे लकड़ीमें तारा-जैसे छोटे-छोटे छत्राक ( जिसे—बच्चे 'सांपका छत्ता' कहते हैं ) उत्पन्न होते हैं और वे कुछ समयके बाद विकसित होकर चन्द्रमा-जैसे गोलाकार हो जाते हैं, अत एव मैं उन्हीं तारारूप छोटे-छोटे छत्राकोंमें-से विकसित छत्राकको चन्द्रमा मानती हूँ ] ॥ ९६ ॥

दिनावसाने तरणेरकस्मान्निमज्जनाद्विश्वविलोचनानि ।
अस्य प्रसादादुडुपस्य नक्तं तमोविपद्द्वीपवतीं तरन्ति ॥ ९७ ॥

दिनेति । विश्वस्य जगतो विलोचनानि दिनावसाने तरणेः सूर्यस्याकस्मादसंभावितहेतोर्निमज्जनात्प्रतीचीसागरनीरप्रवेशाद्धेतोर्नक्तं रात्रौ तमोनिमित्तां स्खलनादिरूपां विपदमेव द्वीपवतीं महानदीमस्योडुपस्य चन्द्रस्य प्रकाशरूपात्प्रसादात्तरन्ति । चन्द्रेण तमो निरस्य सर्वं प्रकाशितमिति भावः । अन्येऽपि रात्रौ तरणेर्नौकाया अकस्मान्मज्जनाद्धेतोर्मुण्डनरूपामापन्नदीमुडुपस्याकस्मादागतस्याल्पयानपात्रस्य प्रसादात्तरन्ति ॥ ९७ ॥

संसारके नेत्र, सायङ्कालमें सूर्य ( पक्षा०—नाव ) के सहसा डूब जानेसे रात्रिमें इस उडुप ( तारापति चन्द्रमा, पक्षा०—छोटी नाव ) के प्रसाद ( चाँदनी, पक्षा०—कृपा ) से अन्धकारके कारण स्खलन आदिरूप विपत्तिरूपा नदीको तैरते हैं । [ लोकमें भी कोई व्यक्ति सयङ्कालमें नावके सहसा डूब जानेपर छोटीनावकी कृपासे रात्रिमें नदीको पार करता है ] ॥ ९७ ॥

किं नाक्ष्णि नोऽपि क्षणिकोऽणुकोऽयं भानस्ति तेजोमयबिन्दुरिन्दुः ।
अत्रेस्तु नेत्रे घटते यदासीन्मासेन नाशी महतो महीयान् ॥ ९८ ॥

किमिति । नोऽस्माकममहतां पामराणामपि अक्ष्णि नेत्रविषये तेजोमयस्तेजोरूपो बिन्दुरेवायमिन्दुरङ्गुल्या नयनप्रान्तचिपिटीकरणे धवलवर्तुलाकारेण भान् शोभ-

मानः किं नास्ति ? अपि त्वस्मदादिनेत्रेऽपीन्दुर्वर्तत एव; परम्—अणुकोऽल्पीयान्, तथा क्षणिकः क्षणमात्रावस्थायी, यावच्चिपिटीकरणमेव दृश्यत इत्यर्थः। तर्ह्यस्मात्व- न्मात्तस्य वैलक्षण्यं कथमत आह—अत्रेर्मुनेर्नेत्रे तु पुनस्तेजोमयबिन्दुरयमिन्दुर्मही- यानितरापेक्षया नितरां महापरिमाण आसीत्। तथा मासेन कृत्वा नाशी प्राप्तविना- शश्चाभूदिति यत्, तद्धटते, एतद्युज्यत इत्यर्थः। यतः-कीदृशस्यात्रेः ? महतो महानु- भावस्य। 'सर्वं हि महतां महत्' इति न्यायेन महतोऽत्रेस्तेजोमयबिन्दुरप्ययमिन्दु- र्महापरिमाणश्चिरकालस्थायी चेत्यस्मन्नेत्रवर्तितेजोमयबिन्दोरिन्दोर्वैलक्षण्यं युक्तमेवेति भावः। अणुकः, 'अल्पे' इति कन्। नाशीति, अस्त्यर्थे इनिः॥ ९८॥

अतिशय लघु हमलोगोंके भी नेत्रमें क्षणमात्र ( जबतक अङ्गुल्यग्र भागसे नेत्रको दबाते हैं तभी तक ) रहनेवाला छोटा-सा तेजोमय-बिन्दुरूप शोभता हुआ चन्द्रमा नहीं है क्या ? अर्थात् अवश्य है, किन्तु महानुभाव, अत्रिमुनिके नेत्रमें एक मासतक ( प्रत्येक अमावास्याको ) नष्ट होनेवाला तथा अत्यधिक बड़ा जो चन्द्रमा था, वह घटित होता है। [ 'सर्वं हि महतां महत्'—'बड़ोंका सब कुछ बड़ा ही होता है' इस नीतिके अनुसार अत्रिमुनिके नेत्रमें एक मासतक रहनेवाला विशालतम चन्द्र था और लघुतम हमलोगोंके नेत्रमें क्षणस्थायी तेजोबिन्दुरूप लघुतम चन्द्र है—जो अङ्गुलिके अग्रभागसे नेत्रको दबानेपर दिखलायी पड़ता है ] ॥ ९८ ॥

त्रातुं पतिं नौषधयः स्वशक्त्या मन्त्रेण विप्राः क्षयिणं न शेकुः।
एनं पयोधिर्मणिभिर्न पुत्रं सुधा प्रभावैर्न निजाश्रयं वा ॥ ९९ ॥

त्रातुमिति। मृतसंजीविन्यादय ओषधयः स्वशक्त्या स्वसामर्थ्येन निजरसवीर्य- विपाकाभ्यां कृत्वा ओषधीशत्वात् पतिमेनं चन्द्रं क्षयिणं प्रतिदिनं कलाक्षयवन्तम्, अथ च—क्षयरोगिणं सन्तं त्रातुं न शेकुः। तथा—विप्रा द्विजराजत्वान्निजस्वामिनं क्षयिणं मन्त्रेण श्रुतिसामर्थ्येन कृत्वा रक्षितुं न शेकुः। तथा—पयोधिरपि पुत्रं क्षयिण- मेनं मणिभिरनेकप्रकारैरन्तःस्थै रत्नैः कृत्वा रक्षितुं न शशाकेति वचनविपरिणामः। तथा—सुधापि स्वधारभूतं क्षयिणमेनमजरामरत्वजनकैः प्रभावैः कृत्वा त्रातुं न शशाक। 'वा' समुच्चये। ओषध्यादयः स्वशक्त्यादिरक्षणसाधने सत्यपि पतित्वात्पु- त्रत्वान्निजाश्रयत्वाच्च क्षयाद्रक्षितुं समर्था न बभूवुरिति विशेषोक्त्या पूर्वकर्मजो रागो महानुभावैरप्यपनेतुं न शक्यत इति व्यज्यते। 'अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव' इत्योषध्यादीनां सामर्थ्यं प्रसिद्धम् ॥ ९९ ॥

क्षयी ( प्रतिदिन क्षीण होनेवाले, पक्षा०—क्षयरोगसे युक्त ) अपने पति ( ओषधिपति ) चन्द्रमाको ( सञ्जीवनी आदि ) ओषधियां अपनी शक्तिसे नहीं बचा सकीं, ब्राह्मणलोक ( द्विजराज—ब्राह्मणोंके राजा ) चन्द्रमाको मन्त्रसे नहीं बचा सके, समुद्र ( अपनेसे उत्पन्न होनेके कारण) पुत्र चन्द्रमाको मणियोंसे नहीं बचा सका और अमृत भी स्वाश्रय चन्द्रमाको अपने प्रभावोंसे नहीं बचा सका। [ 'क्षयी' शब्दका प्रत्येक चन्द्रके साथ सम्बन्ध करना

चाहिये । सामर्थ्ययुक्त सञ्जीवनी आदि ओषधियाँ, ब्राह्मण-समूह, समुद्र और अमृत भी क्रमशः क्षयशील अपने पति राजा, पुत्र और स्वाश्रय चन्द्रमाको नहीं बचा सके; इससे 'पूर्वकृत भोगको कोई भी नहीं टाल सकता' यह सिद्धान्त अटल है ] ॥ ९९ ॥

मृषा निशानाथमहः सुधा वा हरेदसौ वा न जराविनाशौ ।
पीत्वा कथं नापरथा चकोरा विधोर्मरीचीनजरामराः स्युः ? ॥ १०० ॥

मृषेति । निशानाथस्य चन्द्रस्य महस्तेजः सुधा वा पीयूषमेवेति लोकवादो मृषा असत्य एव वा भवेत् । वा अथवा, यदि चन्द्रतेजः सुधैवेति लौकिकप्रवादः सत्य एव, तर्ह्यसौ चन्द्रतेजोरूपा सुधा जराविनाशौ जरामरणे न हरेद्विनाशयेदित्यङ्गी कार्यम् । चन्द्रतेजः सुधा नैवेति वाऽङ्गीकार्यम्, अथ चैतद्रूपा सुधापि जरामरणे न नाशयतीत्यङ्गीकार्यमित्यर्थः । अपरथान्यथा यदि चन्द्रतेजः सुधेति प्रवादः सत्यः, तद्रूपा सुधा जरामरणे विनाशयेत्, तर्हि चकोराख्याः पक्षिणो विधोर्मरीचीन्पीत्वापि कथं किमिति न अजरामराः स्युर्जरामरणरहिता भवेयुः ? । चन्द्रतेजसः सुधात्वे, एतस्याश्च सुधाया जरामरणविनाशे सामर्थ्यसद्भावे, तत्पाने चकोरैरप्यजरामरैर्भाव्यम्, न च ते तथा, तस्मात्तत्तेजसः सुधात्वं वा मृषा भवेत्, सुधाभूतस्यापि वा जरामरणापहारे सामर्थ्यं नास्तीत्यन्तरदङ्गीकार्यम् । तथा—'सुधा प्रभावैर्न निजाश्रयं वा' इति पूर्वश्लोकांशसमाधानमित्याशयः । 'अजरामरीस्युः'—इति पाठे च्विः ॥१००॥

'चन्द्रमाका तेज अमृत है' यह ( लोकप्रसिद्ध बात ) असत्य है, अथवा ( यदि वह सत्य है तो ) अमृत बुढ़ापा तथा मृत्युको दूर नहीं करता है ( ऐसा मानना चाहिये ), अन्यथा ( यदि अमृत बुढ़ापा तथा मरणको दूर करनेवाला है तो ) चकोर चन्द्रमाके ( अमृतरूप ) किरणोंको पीकर अजर अमर क्यों नहीं होते ? ( या तो 'अमृत जरा-मरणको दूर करनेवाला है' लोककथनको असत्य मानना पड़ेगा, अथवा 'चन्द्रतेज अमृत है' इस लोककथनको असत्य मानना पड़ेगा )' ॥ १०० ॥

वाणीभिराभिः परिपक्त्रिमाभिर्नरेन्द्रमानन्दजडञ्चकार ।
मुहूर्त्तमाश्चर्यरसेन भैमि हैमीव वृष्टिस्तिमितञ्च तं सा ॥ १०१ ॥

वाणीभिरिति । सा भैमो आभिः पूर्वोक्ताभिः परिपाकेन निर्वृत्ताभिः परिणतकवित्वशक्तितया प्रसादादिगुणयुताभिर्वाणीभिः कृत्वा तां नरेन्द्रमानन्दजडं हर्षपरवशं चकार । तथा—मुहूर्तमद्भुतापरनाम्नाश्चर्येण रसेन, अथ च—तद्रूपेण जलेन हैमी तुषारसंवन्धिनी वृष्टिरिव भैमी स्तिमितमतिस्नेहात्प्राप्तस्तम्भं च, अथ च—आर्द्रं चकार । हिमवृष्टिर्यथाऽन्यं जडमार्द्रं च करोति, तथेयमप्यानन्दजडं सातिस्नेहं च चकारेत्यर्थः । परिपक्त्रिमाभिः, ड्वित्त्वान्निर्वृत्तेऽर्थे क्त्रिः, क्त्रेर्मप् ॥ १०१ ॥

कवित्वशक्तिके परिपाकसे रचित इन ( २२।९९—१०० ) वचनोंसे दमयन्तीने राजा ( नल ) को आनन्दजड ( हर्षपरश ) कर दिया, तथा ( अतिशीतल होनेसे ) अद्भुत जलसे

तुषारवृष्टिके समान अद्भुत रससे सुवर्णवत् गौरवर्णा दमयन्तीने उस राजा—नलको जड ( आनन्दविभोर, आर्द्र ) बना दिया । [ दमयन्तीकृत चन्द्रवर्णनको सुनकर नल आश्चर्य-चकित हो गये ] ॥ १०१ ॥

इतो मुखाद्वागियमाविरासीत्पीयूषधारामधुरेति जल्पन् ।
अचुम्बदस्याः स मुखेन्दुबिम्बं संवावदूकश्रियमम्बुजानाम् ॥ १०२ ॥

इत इति । इत्येवं जल्पन् वदन् स नलोऽम्बुजानां संवावदूका नितरां संवादिनी श्रीः शोभा यस्य तादृशं कमलतुल्यशोभमस्या मुखेन्दुबिम्बमचुम्बत्, चन्द्रकमल-तुल्यं भैमीमुखं प्रीत्यतिशयादचुम्बदित्यर्थः । इति किम् ? हे भैमि ! इयमुक्तप्रकारा पीयूषधारावन्मधुरा वाक् इतः प्रत्यक्षदृश्याद्भवन्मुखादाविरासीत् निःसृतेति । इत इत्यनेन सामीप्याभिनयकारिणा करेण भैमीमुखं चिबुके धृतमिति ध्वन्यते । मुख-स्येन्दुबिम्बत्वेन च पीयूषधारासंबन्धौचिती सूच्यते । तथा च पीयूषधारया मधुरे-त्यपि व्याख्येयम् । 'संवावदूक—' इत्यादिना च भैम्याः पद्मिनीत्वं प्रसिद्धम् । चन्द्रबिम्बस्य कमलैः सह विसंवादो विरोधित्वात्, एतन्मुखचन्द्रबिम्बस्य तु कमलैः सह संवादः कमलसौभाग्यभाक्त्वादिति प्रसिद्धचन्द्रबिम्बादेतन्मुखबिम्बमधिकमिति सूच्यते । अत्यर्थं संवदति संवावदूका, संपूर्वोऽयं वदतिर्मैत्र्यां वर्तते ॥ १०२ ॥

'इस मुखसे अमृतधारासे भी मधुर यह वाणी ( २२। ५९—१०० ) निकली है' यह कहते हुए नलने कमलके समान शोभनेवाले इसके मुखरूप चन्द्रबिम्बका चुम्बन कर लिया । [ चन्द्रबिम्बमें कमलकी शोभासे संवाद नहीं होता, परन्तु दमयन्तीके मुखरूप चन्द्रबिम्ब कमलके समान शोभासे संवाद ( मेल—सङ्गति ) होता है, अतः इसका मुखका चन्द्रसे भी विशिष्ट गुणयुक्त होना सूचित होता है ] ॥ १०२ ॥

प्रियेण साऽथ प्रियमेवमुक्ता विदर्भभूमीपतिवंशमुक्ता ।
स्मितांशुजालं विततार तारा दिवः स्फुरन्तीव कृतावतारा ॥ १०३ ॥

प्रियेणेति । प्रियेण एवं 'इतो मुखात्—' इत्यादिरूपं प्रियं वचनमुक्ता भाषिता विदर्भभूमीपतेर्वंशेन कुलेन मुक्ता जनिता । तथा—स्फुरन्ति दीप्यमानकान्तिः सोल्लासा सा भैमी अथ नलवचनानन्तरं स्मितांशुजालं विततार, तदेव नलाय प्रीतिदानमिव ददावित्यर्थः । केव ? दिवः सकाशात् क्षीणपुण्यतया स्वेच्छया वा कृतावतारा भूलोकमागता रोहिणी तारेव स्फुरन्ती किरणजालं विततारेवेति उत्प्रेक्षोपमा वा । वंशः कुलमेव वंशो वेणुस्तत्र जाता देवधार्या मुक्ता मौक्तिकरूपा । 'कृतावतारा' इत्यत्र तरणं तरः, 'ऋदोरप्' तदन्तात्प्रज्ञादित्वात्स्वार्थेऽणि पश्चात् 'अव'शब्देन सह 'सह सुपा' इति समासः ॥ १०३ ॥

प्रिय ( नल ) से इस प्रकार ( २२।१०२ ) कथित, विदर्भराज ( भीम ) के वंश ( कुल, पक्षा०—बांस ) का मोती उस दमयन्तीने ( पुण्यक्षय, या स्वेच्छासे ) आकाशसे नीचे

छायी हुई ( रोहिणी ) ताराके समान स्मितके किरण-समूहको फैला दिया। [ नलके वैसा कहनेपर दमयन्तीने मुस्कुरा दिया। वांससे मोती उत्पन्न होनेका कारण 'भास्वद्वंशकरीरतां……( २२।१० )' की टिप्पणीमें देखें ] ॥ १०३ ॥

स्ववर्णना न स्वयमर्हतीति नियुज्य मां त्वन्मुखमिन्दुरूपम् ।
स्थानेऽत्युदास्ते शशिनः प्रशस्तौ धरातुरासाहमिति स्म साऽऽह ॥१०४॥

स्वेति । सा धरातुरासाहं भूमीन्द्रमित्याह स्म । इति किम् ? हे प्रिय ! इन्दुरूपं त्वन्मुखमिति हेतोश्चन्द्ररूपात्मस्तुतौ मां नियुज्याज्ञाप्य शशिनः प्रशस्तौ वर्णनविषयेऽत्युदास्तेऽतितरामुदासीनं भवति । एतत्स्थाने युक्तम् । हेतुमेवाह—इति किम् ? 'सतामेतदकर्तव्यं परनिन्दाऽऽत्मनः स्तुतिः' इत्यादिवचनात्स्वयमात्मनैव स्वस्य वर्णना स्तुतिर्नार्हति न युक्तेति । इयत्पर्यन्तं मया चन्द्रो वर्णितः, इदानीं त्वया वर्णनीयः, तूष्णींभावो वा युक्त इत्याशयेन भैमी चन्द्रस्तुतौ तं सोत्प्रासं प्रावर्तयदिति भावः । 'तुरासाहम्' इत्यत्र तृतीयसर्गे 'धरातुरासाहि—' इत्येतच्छ्लोकस्था शङ्का ज्ञातव्या, तत्रोत्तरम्—इन्दुरूपं त्वन्मुखं, चन्द्ररूपात्मस्तुतौ मां नियुज्य शशिनः प्रशस्तौ अत्युदास्ते । साहं धरावदतुराऽनुत्तालाऽवेगा वा, पृथ्वीवद्गम्भीरेत्यर्थः । अर्थात्तमाह स्मेति ज्ञातव्यम् ॥ १०४ ॥

'अपनी प्रशंसा स्वयं करना उचित नहीं है' इस कारणसे चन्द्ररूप आपका मुख मुझे नियुक्तकर ( २२।५८—६० ) चन्द्रमाके वर्णन करनेसे स्वयं उदासीन हो रहा है', ऐसा उस ( दमयन्ती ) ने राजा नलसे कहा। ( अथवा—'……उदासीन हो रहा है, वह मैं पृथ्वीके समान गम्भीर हूँ' ऐसा उसने कहा ) ॥ १०४ ॥

तयेरितः प्राणसमः सुमुख्या गिरं परीहासरसोत्किरां सः ।
भूलोकसारः स्मितवाक् तुषारभानुं भणिष्यन् सुभगां बभाण ॥१०५॥

तयेति । स भूलोके सारः श्रेष्ठतमो नलः स्मितवाक् तुषारभानुं चन्द्रं भणिष्यन् वर्णयिष्यन् सन् सुभगां सौभाग्यवतीं भैमीं बभाण । किंभूत ? तथा सुमुख्या भैम्या परिहासरसस्योत्किरामुद्भावयित्रीं गिरमीरित उक्तः । तथा—प्राणसमोऽतिप्रेयान् । तया चन्द्रवर्णने ईरितः सन् परिहासरसोत्किरां गिरं सुभगां यथा तथा बभाणेति वा । उत्किराम्, 'इगुपध—'इति कः । पूर्वेण षष्ठीसमासः । भणिष्यन्, हेतौ लृटः शता ॥ १०५ ॥

भूलोकश्रेष्ठ तथा ( दमयन्तीके ) प्राणतुल्य वे ( नल ) सुमुखी ( दमयन्ती ) के ऐसा ( २२।१०४ ) कहनेपर हँसते तथा आगे चन्द्रका वर्णन करते हुए सुन्दरी ( दमयन्ती ) से बोले ॥ १०५ ॥

तवानने जातचरीं निपीय गीतिं तदाकर्णनलोलुपोऽयम् ।
हातुं न जातु स्पृहयत्यवैमि विधुं मृगस्त्वद्वदनभ्रमेण ॥ १०६ ॥

तवेति। हे प्रिये ! अयं मृगः तवानने जातचरीं भूतपूर्वां गीतिं स्वरमाधुरीं निपीय सादरमाकर्ण्यैदानीमपि तस्या भवद्गीतेराकर्णनलोलुपोऽतितरां लुब्धोऽतिसादृश्यत्वद्वदनभ्रमेण विधुं हातुं जातु कदाचिदपि न स्पृहयतीत्यहमवैमि; 'मृगा हि गानप्रिया भवन्ति' इति चन्द्रं त्वन्मुखभ्रान्त्या त्यक्तुं नेच्छतीत्यहं शङ्के इत्यर्थः। जातचरीं, 'भूतपूर्वे चरट्'। लोलुपः, यङन्तात्पचाद्यचि 'यङोऽचि च' इति यङो लुक् ॥१०६

'तुम्हारे मुखमें भूतपूर्व (अमृतरसप्रवाहवत् कर्णप्रिय) गीति (गाने) को अच्छी तरह पीकर अर्थात् सुनकर उस (गीति) को सुननेके लिए लोभी यह (चन्द्रमामें दृश्यमान कलङ्कात्मक) मृग भ्रमसे तुम्हारे मुखसे कभी भी चन्द्रमाको नहीं छोड़ना चाहता है, ऐसा मैं मानता हूँ। [ गानप्रिय होनेसे यह मृग चन्द्रमाको हो तुम्हारा वह मुख समझकर उसे कभी नहीं छोड़ता है, जिस तुम्हारे मुखसे पहले इसने कर्णप्रिय मधुर स्वरवाली गीतको सुन चुका है ]॥ १०६ ॥

इन्दोर्भ्रमेणोपगमाय योग्ये जिह्वा तवास्ये विधुवास्तुमन्तम् ।
गीत्वा मृगं कर्षति भन्त्स्यता किं पाशीबभूवे श्रवणद्वयेन ? ॥ १०७ ॥

इन्दोरिति। अतिसादृश्यादिन्दुरेवेदमितीन्दोर्भ्रमेण मृगस्योपगमाय योग्ये प्राप्तुमर्हे तवास्ये वर्तमाना जिह्वा कर्त्री गीत्या वर्णस्वरमाधुर्या कृत्वा विधुरूपं वास्तु वसतिगृहं तद्विद्यते यस्य तं विधुवास्तुमन्तं चन्द्रमध्यस्थायिनमपि मृगं कर्षतु। गीतेर्मधुरतमत्वान्मृगस्य च प्रियगानत्वात्स्वसमीपमानयत्वित्यर्थः। तदाकर्षणसाधनमुत्प्रेक्षते—भन्त्स्यता आगमिष्यतो मृगस्यात्रैव निवासार्थं बन्धनं करिष्यता श्रवणद्वयेन पाशीबभूवे किम् ? तद्रूपया बन्धनरज्ज्वा समाकर्षत्वित्यर्थः। अन्यापि शबरी गीत्या मृगमाकृष्य पाशेन बध्नाति। भवन्मुखं निष्कलङ्कममृताधिकगीतियुक्तं च; चन्द्रस्तु सकलङ्क इति भावः। चन्द्रवर्णनावसरेऽपि मध्ये मध्ये भैमीमुखवर्णनानुरागातिशयसूचनार्था। अयं श्लोकः क्षेपक इति केचित् ॥ १०७ ॥

चन्द्रमाके भ्रम (अत्यन्त समानता होनेके कारण तुम्हारे मुखको ही चन्द्रमा जानने) से (मृगको) आनेके लिए योग्य तुम्हारे मुखमें (स्थित) जीभ गानेसे चन्द्रमें निवास करनेवाले मृगको खींचता है और (उस मृगको) भविष्यमें बाँधनेवाले (आकर्षणके समानभूत) दोनों नेत्र रस्सी हो गये हैं क्या ? । [ मधुरगीतसे आकृष्ट होना मृगका स्वभाव होता है। दूसरी कोई भी शबरी गानेके वशीभूत मृगको रस्सीसे बाँधकर खींचती है ]॥१०७॥

गगनस्थोऽपि मृगो भैमीमुखगीतिं कथमशृणोदित्याशङ्क्याह—

आप्यायनाद्वा रुचिभिः सुधांशोः शैत्यात्तमःकाननजन्मनो वा ।
यावन्निशायामथ घर्मदुःस्थस्तावद्व्रजत्यह्नि न शब्दपान्थः ॥ १०८ ॥

आप्यायनादिति। शब्दरूपः पान्थो नित्यपथिको निशायां यावद्व्रजति तावदद्य पश्चात्साकल्येन वा अह्नि न गच्छति, यस्माद्दिने घर्मेणातपेन दुःस्थः संतप्तः,

तस्माद्दिनेऽल्पमेव गच्छतीत्यर्थः। रात्रौ दूरागमने हेतुमाह—सुधांशोरमृतरूपाभी रुचिभिराप्यायनादुज्जीवितबलत्वाद्वा तम एव काननं वनं तस्माज्जन्म यस्य गाढान्धकारजाताच्छैत्याद्वा तेजसोऽभावे तमसः संभवादौष्ण्याभावाच्छैत्यम्। अत एव रात्रौ बहु गच्छति, दिने चोष्णेन श्रान्त इव बहु न गच्छति। शब्दो हि रात्रौ स्वभावादतिदूरेऽपि श्रूयते; दिवा तु न तथा। पथिकोऽपि रात्रौ शैत्याद्दूरं गच्छति, दिने त्वाल्पम्। दूरश्रवणप्रतिपादकोऽयं श्लोकः॥ १०८॥

चन्द्र-किरणोंसे शक्तिके विशेष उज्जीवित होनेसे या—अन्धकाररूपी वनमें उत्पन्न ठण्डकसे, नित्यगमनशील शब्दरूपी पथिक ( दिनमें ) धूपसे सन्तप्त होनेके कारण रात्रिमें जितना ( अधिक दूर ) जाता है, उतना ( अधिक दूर ) दिनमें नहीं जाता। [ जिस प्रकार सर्वदा चलनेवाला पथिक दिनमें धूपसे सन्तप्त होनेके कारण रात्रिमें जितना अधिक दूरतक जाता है, उतना दिनमें नहीं जाता; उसी प्रकार शब्द भी रात्रिके बराबर दिनमें नहीं जाता। शब्दका दिनकी अपेक्षा रात्रिमें बहुत दूरतक सुनायी पड़ना स्वभाव होनेसे तुम्हारे मुखसे गायी गयी गीत आकाशमें चन्द्रमध्यस्थ मृग भी सुनकर आकृष्ट हो जाता है ]॥१०८॥

दूरेऽपि तत्तावकगानपानाल्लब्धावधिः स्वादुरसोपभोगे।
अवज्ञयैव क्षिपति क्षपायाः पतिः खलु स्वान्यमृतानि भासः॥ १०९॥

दूरेऽपीति। हे प्रिये! खलु निश्चितं क्षपायाः पतिश्चन्द्रो भासश्चन्द्रिका एव स्वान्यमृतानि क्षिपति अधो मुञ्चति। किंभूतः? दूरेऽप्यतितरां देशव्यवधानेऽपि तत्प्रसिद्धं मधुतरं तावकं गानं तस्य पानात्सादरश्रवणाद्धेतोः स्वादुरसोपभोगे माधुर्यातिशयानुभवे विषये लब्धावधिः प्राप्तमर्यादः। उत्प्रेक्षते—अवज्ञयेव अनुभूतभवद्गीतमाधुर्यापेक्षयाल्पमाधुर्यतयावमाननयेवेत्यर्थः। अयं श्लोको भिन्न एव, नतु युग्मम्॥ १०९॥

उस कारण ( नित्यगामी शब्दरूप पथिकके रात्रिमें दूरतक जाने ) से ( अथवा—उस प्रसिद्धतम ) तुम्हारे गानेको पीने अर्थात् सुननेसे स्वादिष्ट रसके उपभोगके विषयमें सीमातक पहुँचा हुआ चन्द्रमा तिरस्कारसे ही अमृतमय अपनी किरणोंको ( नीचे ) फेंकता है। [ तुम्हारे गानेको सुनकर चन्द्रमा माधुर्य रसकी चरमसीमा तक पहुँच गया, और अपने अमृतमय किरणोंको तुम्हारे मुखसे गानेसे हीन स्वादवाली मानकर नीचे फेंकने लगा। लोकमें भी कोई व्यक्ति उत्तम पदार्थ मिलनेपर उससे हीन पदार्थको नीचे फेंक देता है ]॥

अस्मिन्न विस्मापयतेऽयमस्मांश्चक्षुर्बभूवैष यदादिपुंसः।
तदत्रिनेत्रादुदितस्य तन्वि! कुलानुरूपं किल रूपमस्य॥ ११०॥

अस्मिन्निति। हे तन्वि! एष चन्द्रः आदिपुंसः श्रीविष्णोर्वामं चक्षुर्बभूवेति यत्। अस्मिन्नेत्रभवनविषयेऽयं नेत्रभूतश्चन्द्रोऽस्मान्न विस्मापयते आश्चर्यं न प्रापयति, अत्रार्थेऽस्माकमाश्चर्यं न भवतीत्यर्थः। किल यस्माद्धेतोरत्रिनेत्रादुदितस्योत्पन्न-

स्यास्य तच्चक्षुर्भवनं कुलानुरूपं कुलोचितं स्वरूपम्। नेत्ररूपात्कारणाज्जातस्य नेत्री भवनमुचितमेव। तस्मादस्य पुराणपुरुषनेत्रभवने न किंचिदस्माकं चित्रमित्यर्थः। विस्मापयते, 'नित्यं स्मयतेः' इत्यात्वम्, 'भीस्म्योर्हेतुभये' इति तङ्। अस्मान्, जनान्तरापेक्षया बहुत्वम् ॥ ११० ॥

हे तन्वि! यह चन्द्रमा जो आदिपुरुष ( विष्णु भगवान् ) का ( दहना ) नेत्र हुआ, इस विषयमें हमलोगोंको आश्चर्य नहीं होता, क्योंकि 'अत्रि' मुनिके नेत्रसे उत्पन्न इस ( चन्द्रमा ) का रूप ( विष्णु भगवान्‌का नेत्र होना ) कुलके योग्य ही है। [ 'अत्रि'के नेत्रसे उत्पन्न होनेवाले चन्द्रमाका विष्णु भगवान्‌का नेत्र होना सर्वथा उचित ही है ] ॥ ११० ॥

आभिर्मृगेन्द्रोदरि! कौमुदीभिः क्षीरस्य धाराभिरिव क्षणेन।
अक्षालि नीली रुचिरम्बरस्था तमोमयीयं रजनीरजक्या ॥ १११ ॥

आभिरिति। हे मृगेन्द्रोदरवत्कृशमुदरं यस्यास्तादृशि! रजन्येव रजकी तया क्षीरस्य दुग्धस्य धाराभिरिव दृश्यमानाभिर्धवलतराभिराभिः कौमुदीभिः कृत्वाऽम्बरस्था गगनस्था तमोमयीयं नीली कज्जलवत्काली रुचिः क्षणमात्रेणाक्षालि निरस्ता। यथा रजक्या वसनस्था काली कान्तिर्दुग्धधाराभिः क्षणेन क्षाल्यते। तदुक्तं कलाकोषे—'तैलं घृतेन, तच्चोष्णजलैर्दुग्धेन कज्जलम्। नाशयेदम्बरस्थं तु मलं क्षारेण सोष्मणा।' इति। चन्द्रिकाभिर्गगनं निर्मलीकृतमिति भावः। मृगेन्द्रोदरि, 'नासिकोदर—' इति ङीप्। ओषधिप्राणिवाचित्वाभावान्नीलीव नीलीति ङीप् समर्थनीयः। रजकी, ष्वुनः षित्वान्ङीष् ॥ १११ ॥

हे सिंहके समान कृश कटिवाली ( प्रिये दमयन्ति )! रात्रिरूपिणी रजकी ( कपड़ा धोनेवाली—धोबिन ) ने दूधकी धाराके समान ( स्वच्छतम ) इन किरणोंसे, अन्धकारमयी तथा आकाशस्थ (पक्षा०—वस्त्रस्थ) कालिमाको क्षणमात्रमें (अतिशीघ्र) धो दिया है ॥१११॥

पयोमुचां मेचकिमानमुच्चैरुच्चाटयामास ऋतुः शरद्या।
अपारि वामोरु! तयाऽपि किञ्चिन्न प्रोञ्छितुं लाञ्छनकालिमाऽस्य ॥

पय इति। हे वामोरु! या शरदृतुः पयोमुचां मेघानां वर्षाकालीनमुच्चकैरतिशयितमपि मेचकिमानं कालिमानमुच्चाटयामास। तया कालिमापनयने दृष्टसामर्थ्यया शरदाप्यस्य चन्द्रस्य लाञ्छनरूपः कालिमा किंचिदल्पमपि प्रोञ्छितुं स्फोटयितुं नापारि। शरदच्छे चन्द्रे मलिनः कलङ्कोऽतितरां शोभत इति भावः। मेचकिमानं, वर्णवाचित्वादिमनिच् ॥ ११२ ॥

हे वामोरु! जिस शरद् ऋतुने मेघोंकी अत्यधिक कालिमाको दूर कर दिया, वह शरद् ऋतु भी इस ( चन्द्रमा ) के थोड़े लाञ्छनको दूर नहीं कर सका। [ जो वर्षा ऋतुमें उत्पन्न मेघरूपी विशाल चन्द्रकलङ्कको नष्ट कर दिया, उसका थोड़े-से चन्द्रकलङ्कको नष्ट नहीं कर सकना आश्चर्य है ] ॥ ११२ ॥

एकादशैकादशरुद्रमौलीनस्तं यतो यान्ति कलाः किमस्य ? ।
प्रविश्य शेषास्तु भवन्ति पञ्चपञ्चेषुतूणीमिषवोऽर्द्धचन्द्राः ? ॥११३॥

एकेति । अस्तं यतो गच्छतोऽस्य चन्द्रस्यैकादश कला एकादशानां रुद्राणां मौलीन् प्रति यान्ति किल गच्छन्तीव । शेषाः पञ्च कलास्तु पुनः पञ्चेषोः कामस्य तूणीमल्पमिषुधिं प्रविश्यार्द्धचन्द्राकारत्वादर्द्धचन्द्राख्या इषवो भवन्ति । विनाशसमयेऽप्ययं परापकारनिरत इति ध्वन्यते । तूणीम्, अल्पत्वविवक्षया स्त्रीत्वे गौरादित्वान्ङीप्, 'अर्धचन्द्र'शब्दो रूढः ॥ ११३ ॥

अस्त होते हुए इस ( चन्द्रमा ) की ग्यारह कलाएँ ग्यारह शिवजीके मस्तकोंमें प्रविष्ट होती हैं क्या ? तथा ( सोलह चन्द्र-कलाओंमें-से ) शेष पांच चन्द्र-कलाएँ पञ्चबाण ( पांच बाणवाले—कामदेव ) के छोटे तरकसमें घुसकर अर्द्धचन्द्ररूप बाण होती हैं । [ इस प्रकार यह चन्द्रमा सर्वदा परापकारमें ही निरत रहता है । रुद्रके ११ नाम ये हैं—'अज १, एकपाद् २, अहिब्रध्न ३, पिनाकी ४, अपराजित ५, त्र्यम्बक ६, महेश्वर ७, वृषाकपि ८, शम्भु ९, हरण १० और ईश्वर ११' । रुद्रके अन्य ११ नामोंके भेद अमरकोषके मत्कृत 'मणिप्रभा' नामक अनुवादके 'रुद्र (१।१।१०)' शब्दके परिशिष्टमें देखना चाहिये ] ॥११३॥

निरन्तरत्वेन विधाय तन्वि ! तारासहस्राणि यदि क्रियेत ।
सुधांशुरन्यः स कलङ्कमुक्तस्तदा त्वदास्यश्रियमाश्रयेत ॥ ११४ ॥

निरन्तरेति । हे तन्वि ! ताराणां नक्षत्राणां सहस्राणि निरन्तरत्वेनान्योन्यसंबन्धितया विधायैकीकृत्य यदि अन्यः सुधांशुः क्रियेत निर्मीयेत तदा तर्हि स चन्द्रस्ताराणामकलङ्कत्वात्तन्मयत्वात्कलङ्केन मुक्तः सन् त्वदास्यस्य श्रियं शोभामाश्रयेत । क्रियातिपत्तेरविवक्षितत्वाल्लृङभावः ॥ ११४ ॥

हे तन्वि ! यदि हजारों ताराओंको एकत्र रखकर सम्मिलित कर दें तो कलङ्करहित वह दूसरा चन्द्रमा तुम्हारे मुखकी शोभाको प्राप्त करे । [ ऐसा करना अशक्य होनेसे तुम्हारे मुखकी शोभाको यह वर्तमान चन्द्रमा कदापि नहीं पा सकता ] ॥ ११४ ॥

यत्पद्ममादित्सु तवाननीयां कुरङ्गलक्ष्मा च मृगाक्षि ! लक्ष्मीम् ।
एकार्थलिप्साकृत एष शङ्के शशाङ्कपङ्केरुहयोर्विरोधः ॥ ११५ ॥

यदिति । हे मृगाक्षि ! यत्पद्मं तवाननीयां मुखसंबन्धिनीं लक्ष्मीमादित्सु ग्रहीतुकामम्, कुरङ्गलक्ष्मा चन्द्रश्च तव मुखशोभां ग्रहीतुकामः, तयोः शशाङ्कपङ्केरुहयोरेष विरोधस्त्वन्मुखशोभालक्षण एकोऽर्थस्तस्य लिप्साकृतः प्राप्तिवाञ्छानिमित्त एवेत्यहं शङ्के । एकद्रव्याभिलाषित्वेन विरोधः सुप्रसिद्धः । चन्द्रपद्मयोरपि विरोधः प्रसिद्ध एव । चन्द्रपद्माभ्यां सकाशात्ते मुखमधिकमिति भावः । आदित्सु, चन्द्रपक्षे लिङ्गविपरिणामः । लक्ष्मीं, 'न लोका—' इति षष्ठीनिषेधः ॥ ११५ ॥

हे मृगनयनि ! जिस कारणसे कमल तथा चन्द्रमा तुम्हारे मुखकी शोभाको पाना

चाहते है, उस कारणसे चन्द्रमा तथा कमलका विरोध एक वस्तु ( तुम्हारे मुखकी शोभा ) को पानेकी इच्छासे ही है, ऐसी मैं सम्भावना करता हूं। [ लोकमें भी एक वस्तुको ही पानेकी इच्छा करनेवाले दो व्यक्तियोंमें निरन्तर विरोध रहता है। तुम्हारे मुखकी शोभा चन्द्रमा तथा कमल—दोनोंसे अधिक है ] ॥ ११५ ॥

**लब्धं न लेखप्रभुणाऽपि पातुं पीत्वा मुखेन्दोरधरामृतं ते ।**
**निपीय देवैर्विघसीकृतायां घृणां विधोरस्य दधे सुधायाम् ॥ ११६ ॥**

लब्धमिति । हे प्रिये ! अहं सर्वैरपि देवैर्विघसीकृतायां निःशेषं पीत्वा भुक्तशेषीकृतायाम्, अस्य विधोः सुधायां घृणां जुगुप्सां दधे धारयामि । किं कृत्वा ? लेखानां देवानां प्रभुणेन्द्रेणापि पातुं न लब्धं, कृतप्रयत्नस्यापि तस्यावरणात्तेन दुष्प्रापं केनाप्यनुच्छिष्टं ते मुखेन्दोरधररूपममृतं निपीय पीत्वा । चन्द्रसुधायाः सकाशात्त्वदधरामृतं स्वादुतरमिति भावः । अन्योऽप्युच्छिष्टभोजने जुगुप्सां धारयति ॥११६॥

( हे प्रिये ! ) देवोंके स्वामी ( इन्द्र ) को भी तुम्हारे जो अधरामृतपीनेको नहीं मिला, उस अधरामृतको पीकर मैं देवोंके द्वारा पीकर जूठा किये गये इस चन्द्रमा के अमृतमें घृणा करता हूं। [ लोकमें भी कोई भला व्यक्ति दूसरोंका जूठा खानेमें घृणा करता है। चन्द्रामृतकी अपेक्षा तुम्हारा अधरामृत अधिक स्वादिष्ट है ] ॥ ११६ ॥

**एनं स बिभ्रद्विधुमुत्तमाङ्गे गिरीन्द्रपुत्रीपतिरोषधीशम् ।**
**अश्नाति घोरं विषमब्धिजन्म धत्ते भुजङ्गञ्च विमुक्तशङ्कः ॥११७॥**

एनमिति । स गिरीन्द्रपुत्रीपतिः शंभुरेनमोषधीशं विधुमुत्तमाङ्गे शिरसि बिभ्रद्धारयन् सन्नब्धिजन्म समुद्रोत्पन्नं घोरं दारुणमपि विषमश्नाति, विमुक्तशङ्को भुजङ्गं सर्पराजं वासुकिं च धत्ते । शंभोरप्युपकारकत्वेन पूज्यः श्रेष्ठोऽयमिति भावः । ओषधिस्वामिनोऽस्य शिरसि धारणादिव निःशङ्कं विषं भक्षयति, सर्पांश्च धारयतीत्युत्प्रेक्षा । भुजङ्गम्, जात्यभिप्रायेणैकवचनं वा ॥ ११७ ॥

वे ( प्रसिद्धतम ) पार्वतीपति ( शिवजी ) ओषधिपति ( ओषधियोंके स्वामी होनेसे सर्वश्रेष्ठ ओषधिरूप ) इस चन्द्रमाको मस्तकपर धारणकर निर्भय होकर समुद्रसे उत्पन्न भयङ्कर ( 'हलाहल' नामक ) विषको पीते हैं और सर्पको धारण करते हैं। [ इसीसे शिवजीको हलाहल तथा सर्पका विष कोई क्षति नहीं पहुँचाते। लोकमें भी विष नाशक औषधादि धारण करनेसे लोग सर्पादिके द्वारा नहीं मरते हैं। अत एव यह चन्द्रमा शिवजीका भी उपकारी है ] ॥ ११७ ॥

**नास्य द्विजेन्द्रस्य बभूव पश्य दारान् गुरोर्यातवतोऽपि पातः ।**
**प्रवृत्तयोऽप्यात्ममयप्रकाशान् नघ्नन्ति न घ्नन्तिमदेहमात्रान् ॥११८॥**

नेति । हे प्रिये ! द्विजेन्द्रस्य अस्य चन्द्रस्यास्य गुरोर्बृहस्पतेर्दारान् भार्यां यातवतो गच्छतोऽपि गुरुतल्पगामिनोऽपि पातः स्वर्गाद्भ्रंशः, अथ च—पातित्यम्, न बभूव

पश्य, चित्रमेतद्विलोकयेत्यर्थः। अथवा युक्तमेतत्—प्रवृत्तयो धर्माधर्महेतुकर्मारम्भा अपि आत्ममय आत्मस्वरूपमेव प्रकाशो येषां तान्प्रकाशान्तरनिरपेक्षान्प्रकाशरूपान्, अथ च—परमात्मैव प्रकाशो येषां तान् परमात्मस्वरूपातिरिक्तप्रकाशानभिज्ञान्स्वप्रकाशात्मवादिनो ब्रह्मज्ञानिनोऽन्तिमदेहं तेजोरूपशरीरं पूर्णतां वा प्राप्तान्, अथ च—अनन्तरभाविमोक्षत्वात्प्राचीनशरीरप्रवाहापेक्षया शेषं शरीरं प्राप्तान् जीवनमुक्तान्पुरुषान्हि यस्मान्न नह्यन्ति, शुभाशुभफलबन्धेन न संबध्नन्तीत्यर्थः। 'तेषां तेजो विशेषेण प्रत्यवायो न विद्यते' इति प्रमाणिकवचनात्तेजोरूपस्यास्य चन्द्रस्य पातो नाभूदिति युक्तमेव, नात्र चित्रमिति भावः। चन्द्रोऽप्यात्ममयप्रकाशः अन्तिमदेहं संपूर्णतां प्राप्तश्च ॥ ११८ ॥

गुरु (बृहस्पति, पक्षा०—गुरु=दीक्षागुरु या अध्ययनगुरु) की स्त्रीके साथ सम्भोग करते हुए भी यह चन्द्रमा (पक्षा०—ब्राह्मण) पतित नहीं हुआ अर्थात् स्वर्गसे नीचे भ्रष्ट नहीं हुआ (पक्षा०—गुरुपत्नीसम्भोगजन्य पातकसे युक्त नहीं हुआ यह आश्चर्य है, अथवा इसमें कोई आश्चर्य नहीं है), क्योंकि स्वयं प्रकाशमान (पक्षा०—परमात्मरूप प्रकाशको प्राप्त आत्मवादी ब्रह्मज्ञानी) तथा तेजोरूप शरीर या पूर्णता (अथवा—इसी देहके बाद मोक्ष जानेवाले होनेसे अन्तिम शरीर) को पाये हुए (जीवन्मुक्त) लोगोंको धर्माधर्मके कारणभूत कार्यारम्भके बन्धनमें नहीं डालते हैं। [परमात्मप्रकाशवाले एवं अन्तिम देहधारी जीवन्मुक्त ब्राह्मण—जैसे उच्च वर्णवाले लोगोंको भी जिस प्रकार धर्माधर्ममूलक कार्यारम्भका कोई बन्धन नहीं होता, उसी प्रकार गुरुपत्नीसम्भोग करनेवाले भी स्वयं प्रकाशमान इस चन्द्रमाको दोष नहीं लगना उचित ही है]॥ ११८ ॥

**स्वधाकृतं तत्तनयैः पितृभ्यः श्रद्धापवित्रं तिलचित्रमम्भः।**
**चन्द्रं पितृस्थानतयोपतस्थे तदङ्करोचिःखचिता सुधैव ॥ ११९ ॥**

स्वधेति। तनयैः पुत्रैः श्रद्धया परलोकास्तित्वबुद्ध्या वितीर्णत्वात्पवित्रं कृष्णतिलैश्चित्रं मिश्रितं पितृभ्यः स्वधाकृतं यदम्भः पितृस्थानतया 'चन्द्रो वै पितृलोकः' इति श्रुतेः, पितृलोकतया चन्द्रमुपतस्थे चन्द्रेण संगतमभूत्। तत्कृष्णतिलमिश्रं जलमेवाङ्कस्य कलङ्कस्य यद्रोचिः कान्तिस्तया खचिता मिश्रिता सुधा पीयूषम्। कृष्णतिला एव कलङ्कः, तत्संलग्नं जलमेव पीयूषम्, नत्वन्यः कलङ्को न नान्यत्पीयूषमित्यर्थः। श्रद्धेति, पितृलोकप्राप्तौ हेतुगर्भम्। उपतस्थे, संगतकरणे तङ्॥ ११९ ॥

पुत्रोंने पितरोंके लिये श्रद्धासे पवित्र जिस तिलमिश्रित जलको समर्पण किया, वह (तिलमिश्रित होनेसे कृष्णवर्ण युक्त जल) पितरोंके निवासस्थान होनेसे चन्द्रमाके पास पहुंच गया और वह (कृष्णतिलयुक्त जल) ही कलङ्ककी कान्तिसे मिश्रित अमृत है। [कृष्णवर्णवाले तिल ही कलङ्क हैं तथा उनसे संयुक्त जल ही अमृत है, उनसे भिन्न न तो कोई कलङ्क मृग और न तो कोई अमृत ही है]॥ ११९ ॥

पश्योच्चसौधस्थितिसौख्यलक्ष्ये त्वत्केलिकुल्याम्बुनि बिम्बमिन्दोः ।
चिरं निमज्ज्येह सतः प्रियस्य भ्रमेण यच्चुम्बति राजहंसी ॥ १२० ॥

पश्येति । हे प्रिये ! त्वमुच्चसौधे स्थित्या कृत्वा सौख्येन निरन्तरायं लक्ष्ये दृश्ये त्वत्केलिकुल्याया अम्बुनि तदिन्दोर्बिम्बं पश्य । तत्किम् ? राजहंसी इह कुल्याजले निमज्ज्य चिरं सतोऽन्तर्वर्तमानस्य प्रियस्य राजहंसस्य भ्रमेण यच्चन्द्रबिम्बं चुम्बति । सौख्यम्, स्वार्थे सुखिनो भाव इति भावे वा ष्यञ् । 'सौक्ष्म्य—' इति पाठे—सूक्ष्मत्वेन लक्ष्ये । उच्चतरप्रदेशस्थितं प्रति ह्यधोदेशस्थितं वस्तु सूक्ष्मं प्रतिभाति ॥

( हे प्रियतमे ! ) ऊँचे प्रासादपर बैठनेसे सुखपूर्वक ( पाठा०—पतला ) दिखलाई पड़ते हुए तुम्हारे क्रीडार्थ रचित नहरके जलमें ( प्रतिबिम्बित ) चन्द्रमाके बिम्बको देखो, जिसे गोता लगाकर बहुत देरतक रुके हुए प्रिय (राजहंस) के भ्रमसे राजहंसी चूम रही है ॥

सौवर्गवर्गैरमृतं निपीय कृतोऽह्नि तुच्छः शशलाञ्छनोऽयम् ।
पूर्णोऽमृतानां निशि तेऽत्र नद्यां मग्नः पुनः स्यात्प्रतिमाच्छलेन ॥१२१॥

सौवर्गेति । स्वर्गे भवाः सौवर्गा देवास्तेषां वर्गैर्वृन्दैरमृतं निपीयाह्नि तुच्छो रिक्तः कृतोऽयं शशलाञ्छनो निशि ते तवात्र क्रीडानद्यां प्रतिमाच्छलेन प्रतिबिम्बव्याजेन मग्नः सन्पुनरमृतानां जलैः, अथ च—पीयूषैः पूर्णः स्याद्भवेदित्यहं संभावयामीत्यर्थः । एतेन नदीजलस्यामृतत्वं सूचितम् । अह्नि तुच्छः कृतोऽपि पुनः क्रमेणामृतैः पूर्णः सन् रात्रौ तव क्रीडानद्यां प्रतिमाव्याजेन मग्नः स्यात् पुनः पानभयादिव पलाय्य निलीनः स्यादित्यहं शङ्के इत्यर्थ इति वा । पूर्णोऽमृतानाम्, तृप्त्यर्थत्वात्करणे षष्ठी ॥ १२१ ॥

स्वर्गवासियों ( देवों ) के समूहोंसे अमृतको सम्यक् प्रकारसे पीकर रिक्त ( खाली, या–लघु ) किया गया यह चन्द्रमा रात्रिमें तुम्हारी इस क्रीडानदीमें प्रतिबिम्बके कपटसे मग्न होकर अमृतसे पूर्ण होगा ( या–हो रहा है, ऐसी मैं सम्भावना करता हूं ) अथवा—……यह चन्द्रमा ( क्रमशः ) अमृतसे पूर्ण होकर रात्रिमें तुम्हारी क्रीडानदीमें प्रतिबिम्बके छलसे ( उन देव–समूहोंके द्वारा पुनः पीये जानेके भयसे ) मग्न होगा अर्थात् छिप जायेगा ऐसी मैं सम्भावना करता हूं ॥ १२१ ॥

समं समेते शशिनः करेण प्रसूनपाणाविह कैरविण्याः ।
विवाहलीलामनयोरिवाह मधुच्छलत्यागजलाभिषेकः ॥ १२२ ॥

सममिति । इह तव क्रीडानद्यां कैरविण्याः कुमुदिन्याः प्रसूनरूपे पाणौ शशिनः करेण रश्मिना, अथ च,—पाणिना, समं सह समेते संगते सति मधु पुष्परस एव छलं यस्य स तद्व्याजस्त्यागजलस्य कन्यादानसंकल्पोदकस्याभिषेकः कर्ता, अनयोश्चन्द्रकुमुदिन्योर्विवाहलीलामाहेव सूचतीव । चन्द्रकरस्पर्शमात्रेण कुमुदानि विक-

सितानि, मकरन्दपूर्णानि च जातानीति भावः। विवाहे उभयोः पाणिमेलनं, पाणौ दानजलाभिषेकोऽपि भवति ॥ १२२ ॥

तुम्हारी इस क्रीडानदीमें कुमुदिनीके पुष्परूपी हाथको चन्द्रमाकी किरण ( पक्षा०—हाथ ) के साथ मिलने ( संयुक्त होने ) पर मधु ( पुष्प मकरन्द ) के छलवाले अर्थात् पुष्प-मकरन्दरूप दानजलका त्याग इन दोनों ( चन्द्रमा तथा कुमुदिनी ) की मानो विवाह-लीलाको कह रहा है। [ वधू-वरके हाथोंके संयुक्त होनेपर कन्यादानके जलका अभिषेक होना शास्त्रीय विधि है। कुमुदिनी चन्द्रकिरण-स्पर्शसे विकसित तथा मकरन्दसे पूर्ण हो गयी ] ॥ १२२ ॥

विकासिनीलायतपुष्पनेत्रा मृगीयमिन्दीवरिणी वनस्था।
विलोकते कान्तमिहोपरिष्टान्मृगं तवैषाऽऽननचन्द्रभाजम् ॥ १२३ ॥

विकासीति। हे प्रिये! इह तव केलिनद्यां वनस्था जलनिवासिनी; अथ च—काननस्था, तथा—विकासि नीलमायतं विस्तृतं पुष्पमेव नेत्रं यस्यास्तत्तुल्यनेत्रा चेयं प्रत्यक्षदृश्या इन्दीवरिणी, यस्मान्मृगी वनस्थत्वाद्विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणी, तत्तस्मादिन्दीवरिणीरूपा मृगी, आननमिव यश्चन्द्रः सामर्थ्यात्त्वदानन-तुल्यो यश्चन्द्रस्तद्भाजं तत्स्थं कान्तं सुन्दरम्, अथ च—तुल्यजातीयं स्वप्रियं, मृगमुपरिष्टाद्विलोकते। विकसितकुसुमनेत्राणि ऊर्ध्वं प्रसारितानि दृश्यन्ते तर्हि प्रायेण चन्द्रस्थमुपरिवर्तमानं निजभर्तारं मृगं ( मृगी ) पश्यतीत्यर्थः। त्वदाननमेव यश्चन्द्रस्तत्रस्थं चन्द्रत्वादनुमेयं मृगमुपरिष्टात्पश्यति। त्वं प्रासादोपरि वर्तसे, इयं चाधोदेशे वर्तते। 'न न' इति पदच्छेदं कृत्वा चन्द्रभाजं निजप्राणेशं मृगमुपरिष्टान्न पश्यतीति न, किन्तु पश्यत्येवेति वा व्याख्येयम्। वनस्था मृगी हि प्रसारितनीला-यतनेत्रा सती स्वकान्तं मृगमितस्ततो विलोकयति। 'शशम्' इत्यपपाठः। मृगपर एव वा व्याख्येयः ॥ १२३ ॥

( हे प्रिये! तुम्हारी ) इस क्रीडानदीमें जल ( पक्षा०—जङ्गल ) में रहनेवाली तथा विकसित नीलवर्ण पुष्परूपी ( पक्षा०—पुष्पतुल्य ) विशाल नेत्रोंवाली यह नीलकमललता ( जिस कारणसे ) मृगी है, उस कारणसे यह ( नीलकमललतारूपिणी मृगी ) ऊपरमें ( आकाशमें, पक्षा०—तुम्हारे उच्चतम सौधपर, तुम्हारे ) मुखके समान ( पक्षा०—मुख-रूपी ) चन्द्रमामें रहनेवाले पति ( पक्षा०—सुन्दर, कलङ्कात्मक ) मृगको मानो देख रही है। [ यहां विकसित नीलकमलपुष्पको विशाल तथा नीलवर्ण नेत्र, नीलकमललताको मृगी, क्रीडानदीके जलको जङ्गल, आकाशको सौध और दमयन्तीके मुखको मृग होनेकी कल्पना की गयी है। लोकमें भी अत्युन्नत स्थानपर स्थित व्यक्तिको नीचेवाला व्यक्ति ऊर्ध्वमुख होकर जैसे देखता है, वैसे ही नीलकमलरूपिणी मृगी तुम्हारे मुखतुल्य चन्द्रमामें स्थित अपने पति मृगको मानो देख रही है ] ॥ १२३ ॥

तपस्यतामम्बुनि कैरवाणां समाधिभङ्गे विबुधाङ्गनायाः ।
अवैमि रात्रेरमृताधरोष्ठं मुखं मयूखस्मितचारु चन्द्रम् ॥ १२४ ॥

तपस्यतामिति । हे प्रिये ! अम्बुनि सदा निवासात्तत्र तपस्यतां कैरवाणां कुमुदानां समाधेर्दिवा संकोचस्यैव ध्यानस्य भङ्गे त्याजने विषये निमित्ते वा विबुधाङ्गनाया अप्सरोरूपाया रात्रेश्चन्द्रं मुखमेवाहमवैमि मन्ये । किंभूतं मुखम् ? अमृतमेवाधरोऽनूर्ध्वं ओष्ठो यस्य; अथ च—अमृततुल्योऽधरोष्ठो यस्य; यद्वा—अमृतमधरं यस्मात्पीयूषादधिकरस ओष्ठो यस्य । तथा—मयूखाः किरणा एव स्मितम्, अथ च—तत्समाधिभङ्गादेव चन्द्रकरवदुज्ज्वलं यत्स्मितं, तेन चारु । चन्द्रविशेषणे लिङ्गविपरिणामः देवाङ्गनानामप्येवंविधं मुखं रात्रौ जले तपस्यतां दुश्चरं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति । तपस्यतामिति, तपश्चरतीत्यर्थे 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यष्, 'तपसः परस्मैपदं च' इति शता ॥ १२४ ॥

जलमें ( सर्वदा निवास करनेसे ) तपस्या करते हुए-से कुमुदोंके ( दिनमें सङ्कोचरूपी ) समाधिके भङ्ग होनेपर रात्रिरूपिणी देवाङ्गनाओं ( अप्सराओं ) के चन्द्रमाको अमृतके समान ( अथवा—अमृतरूप, अथवा—अमृत है तुच्छ जिससे ऐसे अर्थात् अमृतसे श्रेष्ठतम ) अधरोष्ठवाला तथा किरणरूपी ( पक्षा०—किरणके समान ) मुख मानता हूँ । [ जिस प्रकार ध्यानभङ्ग होनेपर तपस्वियोंको अमृतपूर्ण अधरवाला तथा स्मितसे सुन्दर देवाङ्गनाओंका मुख चुम्बनके लिए प्राप्त होता है, उसी प्रकार जलमें सर्वदा निवास करनेसे तपस्या करते हुए-से कुमुदोंको दिवासङ्कोचरूप समाधिके भङ्ग होनेपर अमृताधर तथा किरणात्मक स्मितयुक्त चन्द्ररूप मुख मानो चुम्बनादिके लिए प्राप्त हुआ है ] ॥ १२४ ॥

अल्पाङ्कपङ्का विधुमण्डलीयं पीयूषनीरा सरसी स्मरस्य ।
पानात्सुधानामजलेऽप्यमृत्युं चिह्नं बिभर्त्यत्र भवं स मीनम् ॥१२५॥

अल्पेति । अल्पोऽङ्क एव पङ्को यस्यां, तथा—पीयूषमेव नीरं यस्यां सेयं विधुमण्डली स्मरस्य सरसी विशालं सर एव । अत एव स स्मरः अत्रभवमस्यां चन्द्रसरस्यां समुत्पन्नं सुधानामेतदीयामृतानां पानादजले जलरहितेऽपि स्थले जलाभावेऽपि वाऽमृत्युं मरणरहितं मीनं चिह्नम् । अथ च—सुधासरोजातत्वानुमापकं लिङ्गं बिभर्ति । मीना हि जलाद्बहिर्भूता म्रियन्त एव, अयं तु न म्रियते, तस्माच्चन्द्रामृतसरसीभवत्वात्सदामृतपानाज्जलाभावेऽपि मृत्युरहित इति सर्वं युक्तमित्यर्थः ॥१२५॥

अल्प ( थोड़े स्थानमें स्थित ) कलङ्करूपी पङ्कवाली तथा अमृतरूपी ( पक्षा०—अमृततुल्य, स्वच्छ तथा मधुर ) जलवाली यह चन्द्रमण्डली अर्थात् चन्द्रबिम्ब कामदेवकी क्रीडानदी है, ( क्योंकि इसमें स्नान करते समय कामशरीरके अवश्य स्पृष्ट इस चन्द्रमण्डलीके देखने मात्रसे होता है ), अत एव वह कामदेव इस ( क्रीडानदी ) में उत्पन्न तथा अमृत पीनेसे निर्जल स्थानमें ( या—जलभाव होनेपर ) भी नहीं मरनेवाले मीनरूप अपने ध्वज

(चिह्न) को धारण करता है। [ सामान्य मीन ( मछलियां ) जलके अभावमें मर जाते हैं, किन्तु अमृतपान करनेसे अजर-अमर हुआ यह भी मीन नहीं मरता है ] ॥ १२५ ॥

ताराऽस्थिभूषा शशिजह्नुजाभृच्चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः।
छायापथच्छद्मफणीन्द्रहारा स्वं मूर्त्तिमाह स्फुटमष्टमूर्त्तेः ॥ १२६ ॥

तारेति। द्यौः स्वमात्मानमष्टमूर्तेर्हरस्य मूर्तिं शरीरं स्फुटं व्यक्तमाह ब्रवीति। यतः—किंभूता? तारा एवास्थीनि भूषा यस्याः। तथा—शशिनमेव जह्नुजां, चन्द्रं गङ्गां च, बिभर्तीति भृत्। तथा—चन्द्रांशव एव पांसवो भस्मानि तैश्छुरिता कृताङ्गरागा द्युतिर्यस्याः। तथा—छायापथो 'गगने दण्डाकारा दक्षिणोत्तरस्था धवला रेखा छद्म यस्य छायापथच्छद्मरूपः फणीन्द्रो वासुकिः स एव मुक्ताहारो यस्याः सा। हरमूर्तिरप्युक्तविशेषणविशिष्टा। द्यौरप्येतादृशीति मूर्त्यन्तरापेक्षया व्यक्तमेव महेशस्य मूर्तिं गगनं कथयतीवेत्यर्थः ॥ १२६ ॥

तारारूप अस्थि ( हड्डियों ) के भूषणवाली, चन्द्ररूपिणी गङ्गाको धारण करती हुई, चन्द्र-किरणरूप धूलि ( भस्म ) से व्याप्त शरीर-कान्तिवाली छायापथ ( अँधेरी रातको आकाशमें दण्डाकार दिखलायी पड़नेवाली स्वच्छ रेखा ) रूप और वासुकिरूप हारवाली यह 'दिव्' ( आकाश ) अपनेको स्पष्ट ही शिव-मूर्ति व्यक्त कर रही है ॥ १२६ ॥

एकैव तारा मुनिलोचनस्य जाता किलैतज्जनकस्य तस्य।
ताताधिका सम्पदभूदियं तु सप्तान्विता विंशतिरस्य यत्ताः ॥१२७॥

एकेति ॥ एतस्य चन्द्रस्य जनकस्य तस्य प्रसिद्धस्यात्रिमुनिलोचनस्य तारा कनीनिका किलैकैव जाताभूत् किल पुराणादौ। अस्य तत्पुत्रस्य तु पुनरीयं दृश्यमाना संपत् ताता न्निजपितुरत्रिनेत्रात्सकाशादधिका। यद्यस्मादस्य चन्द्रस्य तास्ताः कनीनिकाः, अथ च—नक्षत्राणि, सप्तभिरन्विता विंशतिरभूदिति छलम्। पितुः सकाशादधिसंपत्तित्वात्सभाग्योऽयमिति भावः। 'सप्तविंशतिमिन्दवे' इति दक्षः सप्तविंशतिकन्याः अश्विन्यादिकाश्चन्द्राय ददाविति पुराणम् ॥ १२७ ॥

इस ( चन्द्रमा ) के पिता उस ( प्रसिद्धतम, 'अत्रि' नामक ) मुनिके नेत्रकी एक तारा ( चन्द्ररूप नक्षत्र, पक्षा०—कनीनिका=आँखकी पुतली ) हुई, किन्तु उसके पुत्र (चन्द्रमा) की सम्पत्ति तो पिता ( नेत्रसे चन्द्रमाको उत्पन्न करनेसे चन्द्रमाके पितृस्थानीय अत्रि-मुनि ) से भी अधिक हुई क्योंकि इस ( चन्द्रमा ) की वे ( ताराएँ नक्षत्र, पक्षा०—कनीनिकाएँ ) सत्ताइस हुई। [ चन्द्रमा अपने पिता 'अत्रि' मुनिसे भी अधिक भाग्यवान् है। दक्षप्रजापतिने अश्विनी आदि तारारूपिणी अपनी सत्ताइस पुत्रियोंको चन्द्रमाके लिए दिया था, यह कथा पुराणोंमें मिलती है ] ॥ १२७ ॥

मृगाक्षि! यन्मण्डलमेतदिन्दोः स्मरस्य तत्पाण्डुरमातपत्रम्।
यः पूर्णिमानन्तरमस्य भङ्गः स च्छत्रभङ्गः खलु मन्मथस्य ॥ १२८ ॥

मृगाचीति । हे मृगाक्षि हरिणीनेत्रे ! यदेतत्प्रत्यक्षदृश्यमिन्दोर्मण्डलं तत्स्मरस्य पाण्डुरं श्वेतं साम्राज्यसूचकमातपत्रमेव । श्वेतच्छत्रदर्शने सति सम्राजो वश्या भवन्ति । पूर्णधवलचन्द्रमण्डलस्य चोद्दीपकत्वात्तद्दर्शने सर्वेऽपि कामस्य वश्या भवन्ति । तस्मादेतत्कामस्य श्वेतातपत्रमेवेति भावः । यश्च पूर्णिमानन्तरमस्य च्छत्रभूतस्येन्दुमण्डलस्य भङ्गो मोटनं कलाक्षयश्च स मन्मथस्य च्छत्रभङ्गः खलु । छत्रस्य मोटनं राजक्षयं सूचयति । कृष्णपक्षे चोद्दीपकमित्रचन्द्रक्षये कामः क्षीण एव भवति, तस्मात्कृष्णपक्षे योऽस्य भङ्गः स कामस्य छत्रभङ्ग इव स एव वेति भावः । 'खलु' उत्प्रेक्षायां निश्चये वा ॥ १२८ ॥

हे मृगनयनि ( दमयन्ति ) ! जो यह चन्द्रमण्डल है, वह कामदेवरूप राजाका श्वेत छत्र है और पूर्णिमाके बाद जो इस चन्द्रमण्डलका भङ्ग ( क्रमशः कलाक्षय ) होता है, वह कामदेवका छत्रभङ्ग ( राज्यनाश ) है । [ जिस प्रकार श्वेतच्छत्रधारी राजाकी आज्ञाको सभी मानते हैं और उस श्वेतच्छत्रके भङ्ग ( राज्यनाश ) होनेपर उसकी आज्ञाको कोई नहीं मानता, उसी प्रकार पूर्णचन्द्र होनेपर सभी कामदेवरूप राजाकी आज्ञाको मानते ( पूर्ण चन्द्रके उदय होनेपर कामोद्दीपन होनेसे कामवशीभूत रहते ) हैं और पूर्णिमाके बाद क्रमशः चन्द्रमाके क्षीण होनेपर कामोद्दीपन नहीं होनेसे कोई भी कामदेवकी आज्ञाको नहीं मानता (कामोद्दीपन न होनेसे कामवशीभूत नहीं होता) । चन्द्रमाको देखनेसे कामवृद्धि तथा नहीं देखनेसे कामक्षीणता होना लोकप्रसिद्ध है ] ॥ १२८ ॥

दशाननेनापि जगन्ति जित्वा योऽयं पुराऽपारि न जातु जेतुम् ।
म्लानिर्विधोर्मानिनि! सङ्गतेयं तस्य त्वदेकाननर्निजितस्य ॥ १२९ ॥

दशेति । दिग्विजयोद्यतेन दशाननेनापि जगन्ति जित्वापि योऽयं चन्द्रः पुरा पूर्वं जातु कदाचिदपि जेतुं नापारि । हे मानिनि स्वमुखस्पर्धिनं चन्द्रमसहमाने भैमि ! तस्य विधोरियं प्रत्यक्षदृश्या कलङ्करूपा म्लानिर्लज्जा संगता लभ्या, अथ च युक्तैव । यतस्तवैकेनाननेन नितरां जितस्य । यो हि दशाननेन दशभिर्मुखैर्जेतुं नाशकि, तस्य स्त्रियास्तवैकेन मुखेन विजितत्वेन लज्जया मालिन्यमुचितमेवेत्यर्थः । त्वन्मुखमेतस्मादधिकमिति भावः । प्रतीयमानोत्प्रेक्षा । लज्जयापि म्लानिर्भवति । रावणश्चन्द्रं जेतुं प्रवृत्तस्तत्तुषाराग्निना दह्यमानः कम्पमानतनुस्तमजित्वैव परावृत्त इत्युत्तरकाण्डे कथा ॥ १२९ ॥

( दिग्विजयके लिए तत्पर ) दशानन ( दशमुखवाला = रावण ) भी लोकत्रयको जीतकर पहले जिस ( चन्द्रमा ) को नहीं जीत सका, हे मानिनि ( तुम्हारे मुखके साथ स्पर्द्धा करनेसे चन्द्रमाके प्रति मान करनेवाली हे दमयन्ति ) ! तुम्हारे एक ही मुखसे पराजित उस चन्द्रमामें यह ( प्रत्यक्ष दृश्यमान कलङ्करूप ) मालिन्य लग गया है । [ दश मुखवालेसे भी नहीं पराजित होनेवाले चन्द्रमामें एक मुखवाली ( अथच—उसमें भी

पुरुष नहीं, अपितु स्त्री ) तुमसे पराजित होनेपर मलिन होना उचित ही है। यहां भी कल्पान्तरकी अपेक्षासे ही रावणको नलका पूर्ववर्ती होना समझना चाहिये ] ॥ १२९ ॥

पौराणिक कथा—दिग्विजयोद्यत रावण जब चन्द्रमाको पराजित करने गया, तब तुषाराग्निसे जलता तथा ठण्डकसे काँपता हुआ वह चन्द्रमाको विना पराजित किये ही वापस लौट आया। यह कथा वाल्मीकीय रामायणके उत्तरकाण्डमें है।

दृष्टो निजां तावदियन्त्यहानि जयन्नयं पूर्वदशां शशाङ्कः।
पूर्णस्त्वदास्येन तुलां गतश्चेदनन्तरं द्रक्ष्यसि भङ्गमस्य ॥ १३० ॥

दृष्ट इति। अयं शशाङ्क इयन्त्येतावन्ति अहानि शुक्लपक्षदिनानि तावदवधीकृत्य निजां पूर्वदशां पूर्वपूर्वदिनावस्थां जयन् निकाममुत्तरोत्तरदिनेषु कलावृद्ध्याधिकीभवंस्त्वया दृष्टः। इयन्ति दिनानि जयंस्तावत् जयन्नेव दृष्ट इत्यवधारणार्थो वा 'तावत्'शब्दः। अनयैव परिपाट्या पूर्णबिम्बोऽयं त्वदास्येन सह तुलां साम्यम्, अथ च—तोलकार्धं, प्राप्त आरूढश्चेत्, तदनन्तरं निकटं त्वमेव श्वःप्रभृत्येवास्य भङ्गं पराजयं कलाक्षयं च द्रक्ष्यसि। उत्तमेन सह स्पर्धमानो हि भङ्गं प्राप्नोत्येव। तुलादिव्ये हि हीनस्य पराजयः सर्वैर्दृश्यते। अहानि अत्यन्तसंयोगे द्वितीया। त्वदास्येन, '-अतुलोपमाभ्याम्—' इति निषेधेऽपि सहयोगे तृतीया। तथा च कालिदासः 'तुलां यदारोहति दन्तवाससा' इत्यादि ॥ १३० ॥

इतने दिनों ( शुक्लपक्षके दिनों अर्थात् पूर्णिमा ) तक जीतता ( १-१ कलाके क्रमशः बढ़नेसे उत्तरोत्तर वृद्धिको प्राप्त होता ) हुआ तथा ( तुमसे ) देखा गया यह चन्द्रमा यद्यपि तुम्हारे मुखकी समानताको प्राप्त कर लिया अर्थात् इस समय कथञ्चित् तुम्हारे मुखके समान हो गया, तथापि ( तुम ) इसके बाद ( कृष्णपक्षके दिनों ) में इसके भङ्ग ( पराजय, पक्षा०—कलाक्षय ) को देखोगी। [ प्रबलके साथ विरोधकर्ताका पराजय अवश्य होता है; यह बात महाकवि 'भारवि'ने भी 'किरातार्जुनीय' काव्यमें कही है—यथा—'अहो दुरन्ता बलवद्विरोधिता' ( १।२३ ) ] ॥ १३० ॥

क्षत्राणि रामः परिभूय रामात्क्षत्राद्यथाभज्यत स द्विजेन्द्रः।
तथैष पद्मानभिभूय सर्वास्त्वद्वक्त्रपद्मात्परिभूतिमेति ॥ १३१ ॥

क्षत्राणीति। द्विजेन्द्रो जमदग्न्यपत्यत्वात्सोऽतिप्रसिद्धपराक्रमो रामः परशुरामः सर्वाणि क्षत्राणि परिभूयापि क्षत्रादेव रामाद्दाशरथेः सकाशाद्यथाभज्यत पराभवं प्राप, तथा तेनैव प्रकारेणायमपि द्विजराजः सर्वान्पद्मानभिभूय संकोचकरणात्पराभूयापि त्वद्वक्त्रपद्मात्सकाशात्परिभूतिं पराभवमेति। सकलक्षत्रियाधिक्यं यथा श्रीरामस्य तथा सर्वपद्माधिक्यं त्वन्मुखपद्मस्येति भावः। 'वा पुंसि पद्मम्' इत्यमरः ॥ १३१ ॥

( जमदग्नि-पुत्र होनेसे ) द्विजेन्द्र ( ब्राह्मण ) परशुरामजी जिस प्रकार क्षत्रियोंको पराजितकर क्षत्रिय रामचन्द्रजीसे पराजित हुए, उसी प्रकार यह द्विजेन्द्र ( द्विजराज=

चन्द्रमा, सङ्कुचित करनेसे ) कमलोंको पराजितकर तुम्हारे मुखरूप कमलसे पराजित हो रहा है । [ इससे सब क्षत्रियोंकी अपेक्षा रामचन्द्रजीको प्रबलतम होनेके समान सब कमलोंकी अपेक्षा दमयन्तीके मुखका श्रेष्ठ होना सूचित होता है ] ॥ १३१ ॥

पौराणिक कथा—जनकपुरीमें सीतास्वयंवरमें शिवजीके धनुषको तोड़नेसे रामचन्द्रजी-पर क्रुद्ध हुए परशुरामजीको रामचन्द्रजीने पराजित किया था । यह कथा वाल्मीकीय रामायणके अयोध्याकाण्डमें है ।

**अन्तः सलक्ष्मीक्रियते सुधांशो रूपेण पश्ये ! हरिणेन पश्य ।**
**इत्येष भैमीमदर्शदस्य कदाचिदन्तं स कदाचिदन्तः ॥ १३२ ॥**

अन्तरिति । हे पश्ये चन्द्रदर्शनप्रवृत्ते भैमि ! हरिणेन पाण्डुरेण रूपेण वर्णेन कर्त्रा सुधांशोरन्तः प्रान्तभागः पूर्वमश्रीकोऽपीदानीं सलक्ष्मीक्रियते सश्रीः क्रियते एवं पश्य । अथ च—चन्द्रस्य मध्यं हरिणेन मृगेण कर्त्रा रूपेण स्वीयनीलवर्णेन कृत्वा असलक्ष्म सलक्ष्म क्रियते सलक्ष्मीक्रियते । सकलङ्कं क्रियत इत्यर्थः । पश्य । एष स नल इत्यमुना प्रकारेणास्य चन्द्रस्यान्तं पर्यन्तभागं कदाचित्क्षणमात्रं भैमीमदर्शत् दर्शयामास, कदाचिच्चान्तर्मध्यभागं दर्शयामास । अङ्गुल्यादिना चन्द्रश्वेत-नीलप्रान्तमध्यभागप्रदर्शनपूर्वं श्लिष्टपदैस्तया सह क्रीडां चकारेति भाव इति मध्ये कवेरुक्तिः । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः । 'अन्तः' इत्यकारान्तमेकत्र, 'अन्तः' इत्यव्ययमपरत्र मध्यवाचि । 'लक्ष्मी'शब्दस्य समासान्तविधेरनित्यत्वात्कबभावे 'सलक्ष्मी'शब्दाच्च्विः । पक्षे 'सलक्ष्म'शब्दाच्च्विः । पश्ये, 'पाघ्रा-' इत्यादिना कर्तर्येव शः । दृशेर्बुद्ध्यर्थत्वात् 'गतिबुद्धि-' इत्यणौ कर्तुर्णौ कर्मत्वाद्भैमीमिति द्वितीया ॥

'हे पश्ये ( चन्द्रमाको देखनेमें संलग्न, दमयन्ति ) ! श्वेत वर्ण ( सफेद रंग ) चन्द्रमा-के प्रान्त भागको शोभान्वितकर रहा है ( पक्षा०—कलङ्कात्मक मृग चन्द्रमाके मध्यभागको कलङ्कान्वित ( कृष्णवर्ण ) कर रहा है ) देखो, ऐसा कहकर उस नलने कभी चन्द्रमाका प्रान्तभाग और कभी मध्यभाग दमयन्तीको दिखलाया । [ श्लेषयुक्त, 'अन्तः, हरिणेन, सलक्ष्मीक्रियते' पदोंसे चन्द्रवर्णन करके उस ( चन्द्रमा ) के प्रान्तभागस्थ श्वेत वर्ण तथा मध्यभागस्थ कृष्णवर्णको दमयन्तीके लिए दिखला-दिखलाकर उसके साथ नल क्रीडा करने लगे ] ॥ १३२ ॥

**सागरान्मुनिविलोचनोदराद्यद्द्वयादजनि तेन किं द्विजः ? ।**
**एवमेव च भवन्नयं च द्विजः पर्यवस्यति विधुः किमत्रिजः ? ॥ १३३ ॥**

सागरादिति । अयं चन्द्रः सागरात् मुनिविलोचनोदराच्चैतद्रूपाद्द्वयात्सकाशाद्य-स्मादजनि उत्पन्नः, तेन कारणेन द्वाभ्यां जातत्वाद्द्विजः किम् ? एवमेव चानयैव रीत्या द्वाभ्यां जातत्वादेव द्विजो भवन्नप्ययं विधुरत्रेर्मुनेर्जातः किं कथं पर्यवस्यति ? द्वाभ्यां जातत्वे सत्यपि अत्रिमुनेरेव जात इति तात्पर्यवृत्त्या कथमुच्यत इत्यर्थः ।

अथ च—एवमेव यथानेन प्रकारेण द्विजत्वं, तथैवात्रिमुनिजो भवन्नयं द्विजः पर्यवस्यति किम् ? द्वाभ्यां जातत्वाद्यया द्विज उच्यते, तथा द्विजादत्रिमुनेर्जातत्वादपि द्विज उच्यते किम् ? द्विजोत्पन्नो हि द्विज एव भवतीत्यर्थः। अथ च—द्वाभ्यां जातत्वाद्द्विजो भवन्नेव न त्रिभ्यो जायत इत्यत्रिज इत्येवं तात्पर्यवृत्त्या कथ्यते किम् ? यो हि द्वाभ्यां जायते स त्रिजो न भवति, एवमेवायमत्रिजः कथ्यते किमित्यर्थः। अन्योऽपि द्विजस्त्रिजो न भवत्येव ॥ १३३ ॥

जिस कारण यह चन्द्रमा समुद्रसे तथा अत्रिमुनिके नेत्रमध्यसे उत्पन्न हुआ है, उसी कारण यह 'द्विज' (दोसे उत्पन्न) है क्या ? और यदि इस प्रकार (समुद्र तथा अत्रिमुनिके नेत्रमध्यसे उत्पन्न) है, तो 'अत्रि' मुनिके नेत्रमध्यसे उत्पन्न होता हुआ यह चन्द्रमा 'द्विज' (दोसे उत्पन्न) सिद्ध होता है क्या ? (दो अर्थात् समुद्र तथा 'अत्रि' मुनिके नेत्रमध्यसे उत्पन्न होनेसे जिस प्रकार यह चन्द्र 'द्विज' कहलाता है, उसी प्रकार 'अत्रि' मुनिके नेत्रमध्यसे उत्पन्न होकर भी 'द्विज' कहलाता है क्या ?) अर्थात् एक अत्रिमुनिके नेत्रमध्यभागसे उत्पन्न होनेपर 'दोसे उत्पन्न' नहीं होनेके कारण यह चन्द्रमा 'द्विज' नहीं कहला सकता। अथच—दोसे उत्पन्न होनेके कारण जिस प्रकार 'द्विज' कहलाता है, उसी प्रकार द्विज (ब्राह्मण) 'अत्रि'मुनिके नेत्रमध्यसे उत्पन्न होकर 'द्विज' कहलाता है क्या ? अर्थात् 'हाँ' द्विजपुत्रको द्विज कहलाना उचित ही है। अथच—दोसे उत्पन्न होनेके कारण 'द्विज' होता हुआ अत्रिज (अ+त्रिज=तीनसे अनुत्पन्न अर्थात् दोसे उत्पन्न) होनेसे 'द्विज' कहलाता है क्या ? ॥ १३३ ॥

**ताराविहारभुवि चन्द्रमयीं चकार यन्मण्डलीं हिमभुवं मृगनाभिवासम्।**
**तेनैव तन्वि! सुकृतेन मते जिनस्य स्वर्लोकलोकतिलकत्वमवाप धाता ॥१३४॥**

तारेति। हे तन्वि कृशाङ्गि! धाता ताराणां नक्षत्राणां विहारभुवि गगने चन्द्रमयीं मण्डलीं विम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोर्मतेऽनुमतौ सत्यां तदादिष्टः सन् यच्चकार निर्ममे तेनैव सुकृतेन शोभनेन लोकोत्तरव्यापारेण कृत्वा स्वर्लोकः स्वर्गभुवनं तत्संवन्धिनां लोकानां सुराणां मध्ये तिलकत्वं श्रैष्ठ्यमवाप। किंभूतां मण्डलीम् ? हिमस्य तुषारस्य भुवं स्थानभूतामतिशीतलाम्। तथा—मृगस्य नाभौ मध्ये वासो यस्यास्तां, यस्या मध्ये मृगोऽस्तीति यावत्, तादृशीम्। अन्येषां सुराणामेतादृग्व्यापारकरणे सामर्थ्याभावद्ब्रह्मैव श्रेष्ठोऽभूदित्यर्थः। अथ च—ताराया बुद्धदेव्या विहारस्थाने पूजास्थाने हिमभुवं शीतलां, शुभ्रत्वाद्धिमाचलरूपां वा, तथा—मृगनाभेः कस्तूर्या वासः परिमलोऽवस्थानं वा यस्यां तां कस्तूरीमिश्रितां चन्द्रमयीं कर्पूरमयीं मण्डलीं राशिं यच्चकार तेनैव पुण्येन जिनस्य मते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्वमधत्त। बौद्धा हि बुद्धदेवप्रासादे यस्तत्पूजार्थं कर्पूरकस्तूरीराशिं करोति स सर्वलोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यपादयन्; ब्रह्मा चैमवकृत तस्मा-

देव सर्वश्रेष्ठो जात इत्यर्थः। 'तेनेव' इति पाठे-उत्प्रेक्षा। 'बुद्धदेव्यां मता तारा' ॥१३४॥

हे तन्वि ! ब्रह्माने जो 'जिन' ( आदि पुरुष विष्णु भगवान् ) की आज्ञासे ताराओंके विहार करनेका स्थान अर्थात् आकाश ( अतिशय शीतल मध्यभागमें मृगसे युक्त चन्द्र-मण्डलको किया अर्थात् उक्तरूप चन्द्रमाको आकाशमें स्थापित किया, उसी पुण्यसे वे देवोंमें श्रेष्ठ हुए ( पक्षा०—ब्रह्माने जो बुद्धके सिद्धान्तको मानकर तारा ( बुद्धदेवकी पत्नी ) की विहारभूमि ( पूजास्थान ) में अतिशय शीतल ( या—स्वच्छतम होनेसे हिमाचल-स्वरूप ), कस्तूरीके सौरभसे युक्त कर्पूरमय राशिको स्थापित किया, उसी पुण्यसे...... )। [ बौद्धसिद्धान्तानुसार बुद्धदेवके प्रासाद ( पूजास्थान ) में कर्पूर तथा कस्तूरीकी राशि रखनेवाला व्यक्ति स्वर्गमें देवोंमें श्रेष्ठ होता है ] ॥ १३४ ॥

**इन्दुं मुखाद्बहुतृणं तव यद्गृणन्ति नैनं मृगस्त्यजति तन्मृगतृष्णयेव ।**
**अत्येति मोहमहिमा न हिमांशुबिम्बलक्ष्मीविडम्बिमुखि! वित्तिषु पाशवीषु ॥**

इन्दुमिति । हे हिमांशुबिम्बस्य लक्ष्म्याः शोभाया विडम्बि स्वस्मान्न्यूनत्वात्परिहासकारि ततोऽप्यधिकशोभं मुखं यस्यास्तादृशि भैमि! पण्डिता इन्दुं तव मुखात्सकाशात्त्वन्मुखमपेक्ष्य वा बहुतृणमीषदसमाप्तं तृणं, तृणत्वमपि यस्य पूर्णं न संपन्नं, तृणादपि निःसारमिति यावत्, अथ च—बह्वधिकं तृणं यस्मात् तृणादपि निःसारं यद्यस्माद्गृणन्ति, तत्तस्माद्धेतोर्मृग एनं चन्द्रं मृगसंबन्धिन्या तृष्णया कोमलतृणकवलनाभिलाषेणैव, अथवा—चन्द्रे प्रयुक्तस्य 'बहुतृण'शब्दस्य बहु च तत्तृणं च, बहूनि तृणानि यस्मिंस्तादृशमिति वेत्येवंरूपार्थग्रहणरूपया भ्रान्त्येव न त्यजति । मृगो हि बहु यत्तृणं बहुतृणं देशं वा न मुञ्चति । नन्वनुभवे सत्यप्यासंसारं कथं भ्रान्तिरित्याशङ्क्यार्थान्तरन्यासमाह—पाशवीषु पशुसंबन्धिनीषु वित्तिषु ज्ञानेषु विषये मोहमहिमा भ्रान्तिबाहुल्यं नात्येति बहुकालातिक्रमेऽपि नापयाति । पशवो हि सर्वदा मूढा एवेत्यद्यापि मृगस्य भ्रान्तिर्नापयाति, तस्मादेनं न त्यजतीति युक्तमित्यर्थः । 'वृत्तिषु' इति पाठे—व्यापारेषु । मुखात्, ल्यब्लोपे पञ्चमी । बहुतृणं, पक्षे ईषदसमाप्तौ 'विभाषा सुपो बहुच्-' इति बहुच् ॥ १३५ ॥

हे चन्द्रबिम्बकी शोभाको तिरस्कृत करनेवाले मुखवाली ( दमयन्ती )! विद्वान् लोग जिस कारण तुम्हारे मुखकी अपेक्षा तृणतुल्य ( निःसार—अत्यन्त तुच्छ, पक्षा०—बहुत तृणोंसे युक्त ) चन्द्रमाको कहते हैं, उस कारण मानो मृगतृष्णा, पक्षा०—मृग-सम्बन्धी लोभ ) से वह मृग इसे ( चन्द्रमा ) को नहीं छोड़ता है, क्योंकि पशुवृत्तिमें मोह दूर नहीं होता है । [ दूसरे लोगोंका भ्रम दो-चार वार वञ्चित होनेपर दूर हो जाता है, किन्तु पशुवृत्तिवालेका भ्रम वार-वार वञ्चित होनेपर भी दूर नहीं होता, फिर मृग तो साक्षात् पशु है अत एव वह भ्रम नहीं होनेसे चिरकालसे चन्द्रमामें ही तृण पानेके लोभसे निवास करता है ] ॥ १३५ ॥

स्वर्भानुना प्रसभपानविभीषिकाभिर्दुःखाकृतैनमवधूय सुधा सुधांशुम्।
स्वं निह्नुते सितिमचिह्नममुष्य रागैस्ताम्बूलताम्रमवलम्ब्य तवाधरोष्ठम्॥

स्वर्भानुनेति। हे प्रिये! सुधा एनं सुधांशुमवधूय त्यक्त्वा तवाधरोष्ठमवलम्ब्यामुष्य रक्तस्यौष्ठस्य रागै रक्तवर्णैः कृत्वा सितस्य भावः सितिमा धावल्यमेव चिह्नं यस्य तादृशं धवलरूपमपि स्वमात्मानं निह्नुते पुनः पुनः स्वर्भानुपानभिया तिरोदधाति। यतः—स्वर्भानुना वारंवारं प्रसभपानेन विभीषिकाभिर्भयोत्पादनैः कृत्वा दुःखाकृता प्रातिलोम्याचरणेनोत्पादितदुःखा। किंभूतमधरोष्ठम्? प्रसिद्धस्य ताम्बूलस्येव ताम्रो वर्णो यस्य, ताम्बूलेनैव वा ताम्रं रक्तवर्णम्। पुना राहुपानभिया त्वदधरमेव स्थानान्तरमाश्रित्य रूपान्तरेणात्मानं गोपायतीत्यर्थः। अन्योऽपि सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं धृत्वा स्वं निह्नुते। सुधया चन्द्रस्य परित्यागात्त्वन्मुखाश्रयणात्त्वन्मुखं चन्द्रादधिकमिति भावः। ताम्बूलताम्रमित्युक्तरीत्योपमोत्प्रेक्षा वा। दुःखाकृता, 'दुःखात्प्रातिलोम्ये' इति डाच्॥ १३६॥

(हे प्रियतमे)! राहुद्वारा बलात्कारपूर्वक अपने (सुधाके) पान करनेकी विभीषिकाओंसे दुःखित की गयी सुधा (अपने चिरकालके आश्रयस्थान) इस चन्द्रमाको छोड़कर पान (के चबाने)से लाल तुम्हारे अधरोष्ठका आश्रयकर (पुनः राहु द्वारा पान किये जानेके भयसे) इस अधरोष्ठकी लालिमासे अपने श्वेत चिह्नको छिपा रही है। [लोकमें भी कोई व्यक्ति किसी प्रबल शत्रुसे बार-बार पीड़ित होकर अपने चिरकालीन निवासस्थानको छोड़कर किसी दूसरे सुरक्षित स्थानमें चला जाता है और वहां भी उस शत्रुके पुनराक्रमणके भयसे दूसरा रूप धारणकर अपने को छिपाये रहता है। सुधापूर्ण होनेसे तुम्हारा मुख चन्द्रमाकी अपेक्षा श्रेष्ठ है]॥ १३६॥

हर्यक्षीभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता सूतस्य पत्न्या हरेः।
भङ्गस्त्वद्वदनाम्बुजादजनि यत्पद्मात्तदेकाकिनः
स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः॥१३७॥

हर्यक्षीति। हे प्रिये! मतभेदेन कलङ्करूपं कुरङ्गं, यद्वा—शशमुदरे मध्ये प्रक्षिप्य जाता स्फीता पूर्णा तनुर्यस्य, हरेरिन्द्रस्य पत्न्या हरिता प्राच्या दिशा सूतस्य तत्रोदितस्य पूर्णस्य, अत एव हरेः श्रीविष्णोर्वामाक्षीभवतः, यद्वा—सञ्जातपूर्णशरीरस्य मृगं यद्वा—शशं, कलङ्कं मध्ये निक्षिप्य मध्यस्थितकलङ्कस्य कनीनिकातुल्यत्वाच्छ्रीविष्णोर्वामनेत्रीभवतोऽमुष्य चन्द्रस्य त्वद्वदनाम्बुजात्सकाशाद्यद्भङ्गः पराजयोऽजनि तदेकाकिनः सर्वदाऽसहायादेकस्मात्पद्मात्, नत्वन्यस्मात्कमलात्, न ह्यन्यैः पद्मैरयं पराजीयते, यत्पुनरयमेव पद्मान्पराभवतीत्यर्थः। अथवा—अम्बुजतुल्यत्वाद्वदनादेव पद्माद्, अथ च—पद्मसंख्याकात्त्वद्वदनरूपदम्बुजाद्यदस्य भङ्गो जातः,

तदेकाकिनोऽसहायस्य स्याद्भवेत्; बहुभिरेकः पराजीयत इति युक्तमेवेत्यर्थः। यः सिंहिकायाः सुतो राहुः स पुनरेकोऽन्योऽस्य प्रतिभटः प्रतिमल्लः पराभावुको राहुरेव नत्वन्य इति। 'संप्रति' इति पाठे—अद्य पुनरस्यैकः प्रतिभटः, यः सिंहिकायाः सुतः स्यात् एकाकिनोऽस्य त्वन्मुखपद्मः प्रतिद्वन्द्वी न भवति, अतुल्यत्वात्, किं त्वेकाकी राहुरेवास्य प्रतिभटो युक्त इत्यर्थः। किंच स्वशत्रुभूताद्राहोरप्यस्यान्यः पराजय इति महदस्य कष्टं प्राप्तमित्यर्थः। अथ च—हरिद्वर्णया हरेः सिंहस्य पत्न्या सिंहिकया प्रसूतस्य, तथा—मृगं शशं वा यं कञ्चन पशुं जठरे निक्षिप्य भक्षयित्वा स्थितस्य, अत एव संजातपुष्टशरीरस्य, अत एव हर्यक्षीभवतः सिंहतां प्राप्नुवतोऽस्य त्वन्मुखाद्यः पराजयोऽजनि स एकाकिनः केवलात्पद्माद्गजादेव पराजयः, सिंहस्य गजाद्भङ्गो यथा तद्वदेवतन्महच्चित्रमित्यर्थः। अथ च—पद्मसंख्याकादेकस्य पराजयः, सिंहोऽप्येको बहुसंख्यैः पराजीयत एवेत्यर्थः। अथ च—पद्माच्छरभादष्टापदादेव भङ्गः सिंहस्य केवलमष्टापदादेव भङ्गः। पद्मचन्द्राभ्यां सकाशात्वन्मुखमधिकमिति भावः। 'हर्यक्षः केसरी हरिः' इत्यमरः। 'गजाब्जशरभाः पद्मा' इत्यनेकार्थे भोजः। प्रथमपक्षे 'हर्यक्षि'शब्दाच्च्विः, द्वितीयपक्षे 'हर्यक्ष'शब्दादेव ॥ १२७ ॥

(हे प्रिये!) मृग या (मतान्तरसे) शशकको पेट (पक्षा०—मध्यभाग) में रखकर स्थूल-शरीर बने हुए, इन्द्रपत्नी दिशा (पूर्वदिशा) से उत्पादित अर्थात् पूर्वदिशामें उदयको प्राप्त तथा विष्णु भगवान्का (वाम) नेत्र होते हुए इस चन्द्रमाका तुम्हारे मुख-कमलसे जो पराजय हुआ, वह एक (असहाय) कमलसे ही हुआ (यह चन्द्रमा अन्य पद्मोंसे पराजित नहीं होता था, किन्तु उन्हें ही पराजित करता था, अतः एक तुम्हारे मुखकमलरूप एक पद्मसे इसका पराजित होना आश्चर्यजनक है। अथवा—कमलतुल्य तुम्हारे मुखरूप एक पद्मसे ही हुआ, अथवा—'पद्म' सङ्ख्यक तुम्हारे मुख-कमलसे ही हुआ—एक व्यक्तिका बहुत व्यक्तियोंसे पराजित होना उचित ही है)। जो राहु है, वह इस चन्द्रमाका एक प्रतिभट (विजेता प्रतिमल्ल) है। (पाठा०—इस समय इस चन्द्रमाका एक प्रतिभट है, जो राहु है। एकाकी इस चन्द्रमाका प्रतिभट असमान होनेसे तुम्हारा मुख-पद्म नहीं है, किन्तु एकमात्र राहु (इसका प्रतिभट=प्रतिद्वन्द्वी) है। अथच—अपने शत्रुभूत राहुसे भी इस चन्द्रमाका पराजय होना महाकष्टजनक है। पक्षा०—हरिद्वर्णवाली सिंहिनीसे उत्पन्न मृग या शशकको उदरमें रखकर स्थूल शरीर बने हुए अत एव सिंहरूप (सिंह नहीं होते हुए भी सिंह) बनते हुए इस चन्द्रमाका जो तुम्हारे मुखकमलसे पराजय हुआ, वह एक 'पद्म' ('पद्म' जातीय) हाथीसे हुआ (अत एव) सिंहका एक हाथीसे पराजय होना आश्चर्यकारक है। अथच—एक चन्द्रमाका पराजय 'पद्म' सङ्ख्यावालोंसे हुआ—अत एव एक व्यक्तिका पद्मसङ्ख्यावालोंसे पराजय होना उचित ही है, अथच—उक्त प्रकारसे सिंह बनते हुए इसका पराजय 'पद्म' ('अष्टापद' नामक जन्तु-विशेष) से हुआ—अत एव 'अष्टापद'से सिंहका पराजय होना उचित ही है। तथा उक्तरूप इस सिंह

का प्रतिभट जो एक है वह सिंहनीका पुत्र अर्थात् सिंह है—सिंह नहीं होते हुए भी सिंह बननेवालेका प्रतिभट सिंहको होना उचित ही है। पद्म तथा चन्द्रमा—दोनोंसे भी तुम्हारा मुख श्रेष्ठ है ]॥ १३७॥

यत्पूजां नयनद्वयोत्पलमयीं वेधा व्यधात्पद्मभू-
वाक्पारीणरुचिः स चेन्मुखमयं पद्मः प्रिये! तावकम्।
कः शीतांशुरसौ तदा? मखमृगव्याधोत्तमाङ्गस्थल-
स्थास्नुस्वस्तटिनीतटावनिवनीवानीरवासी बकः॥ १३८॥

यदिति। हे प्रिये! वेधा नयनद्वयमेवोत्पलं तन्मयीं तद्रूपां तद्रचितां यस्य पद्मस्य पूजां व्यधाद्व्यरचयत्। यतः श्रीविष्णोर्नाभौ वर्तमानात्पद्माद्भवतीति पद्मभूः। स्वजनकस्य यस्य पद्मस्य पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन महतीं पूजामकृत। वाक्पारीणा वाचः परतीरे भवा वाचा वर्णयितुमशक्या रुचिर्यस्य सोऽयं पद्मश्चेत्तावकं मुखं स एव भवन्मुखरूपो जातः, अनन्तरं ब्रह्मणा स्वपितृबुद्ध्या नेत्रनीलोत्पलाभ्यां कृतपूजत्वादत्र तव मुखे नेत्रनीलोत्पले दृश्येते इत्यर्थ इति चेत्, तदा तर्हि असौ शीतांशुः को नाम, अपि तु न कश्चित्। त्वन्मुखस्य पुरस्तादयं, स्मरणार्होऽपि नेत्यर्थः। तर्ह्यसौ क इति चेत्तत्राह—अयं बकः। किंभूतः? दक्षमख एव मृगस्तस्य व्याधो हरस्तस्योत्तमाङ्गं शिरस्तल्लक्षणे स्थले स्थास्नुः स्थितिशीला स्वस्तटिनी गङ्गा तस्यास्तटावन्यां तीरभूम्यां या वनी महदल्पं वा यत्काननं तत्र ये वानीरा वेतसास्तन्मध्यवासी। चन्द्रश्च हरजटाजूटवासीति प्रसिद्धम्। 'वाक्पारीणरुचिः' इति ब्रह्मविशेषणं वा। अत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्यं वागगोचरः, तत्पितुः पद्मस्य सौन्दर्यं मनसोऽपि गोचरो न भवतीत्यर्थः। त्वन्मुखस्य चन्द्रस्य च महदन्तरम्, साम्यसंभावनापि नास्तीति भावः। एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टम्, भवदीयमुखपद्मं तु ब्रह्मणोऽपि स्रष्टृत्वात्सर्वाधिकमिति सूचितम्। 'मखमृग—' इत्यादिना चन्द्रस्यातिदैन्यं सूचितम्, त्वन्मुखसाम्यप्राप्त्यर्थं तपश्चरणं च सूचितम्। अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्थानयुक्तनदीतीरवानीरवासी तपस्यति। नदीतीरवानीरवासित्वं बकजातिः। वाक्पारीणा, भवार्थे 'राष्ट्रावारपाराद्घखौ' इत्यत्र 'अवारपाराद्विपरीतादपि विगृहीतादपि' इति वचनात्खः॥ १३८॥

हे प्रिये! (विष्णु भगवान्‌की नाभिके) कमलसे उत्पन्न ब्रह्माने (कमलको अपना पिता=उत्पादक होनेसे) नेत्रद्वयरूप कमलमयी जिस (कमल) की पूजा की, कहनेसे अवर्जनीय कान्तिवाला वह कमल यदि तुम्हारा मुख है तो यह चन्द्रमा कौन है? (जगत्स्रष्टा ब्रह्माके भी पिता कमलरूप तुम्हारे मुखके सामने चन्द्रमा कुछ नहीं है। तब इस आकाशमें दृश्यमान यह श्वेतवर्ण क्या है? ऐसी शङ्का होनेपर यह दक्षप्रजापतिके)

यशरूपी मृगके व्याधा (शिवजी) के मस्तकमें रहनेवाली गङ्गाजीकी तीरभूमिके वन-सम्बन्धी वेंतोंमें रहनेवाला बगुला है। [अथवा—कहनेसे अवर्णनीय कान्तिवाले, तथा (विष्णु भगवान्की नाभिस्थ) कमलसे उत्पन्न ब्रह्माने नेत्रद्वयरूप कमलमयी जिस (पितृ-स्थानीय) कमलकी पूजा की……। जिस ब्रह्माकी कान्ति वचनानीत है, उसके पिता कमलकी कान्तिका उससे भी उत्तम होना स्वभाव सिद्ध है और वह कमल तुम्हारा मुख ही है, अतः तुम्हारे मुखकी कान्तिकी अपेक्षा चन्द्रमा कुछ नहीं है। हां, यदि वह है तो उक्तरूप बक है, जो तुम्हारे मुखकी शोभा पानेके लिए गङ्गाजीके तीरके वनमें निवास करता (हुआ मानो तपस्या करता) है। लोकमें भी कोई व्यक्ति इष्ट सिद्ध्यर्थ शिवजीकी प्रतिमाके समक्ष गङ्गाके तीरस्थ वनमें निवास करता हुआ तपस्या करता हैं। बगुलेका जलाशयतीरस्थ वेंतोंमें रहना स्वभाव होता है] ॥ १३८ ॥

पौराणिक कथा—दक्षप्रजापतिके यज्ञको मृगरूप धारणकर भागनेपर शिवजीने व्याध-रूप होकर उसका अनुसरण किया था।

जातं शातक्रतव्यां हरिति विहरतः काकतालीयमस्या-
मश्यामत्वैकमत्यस्थितसकलकलानिर्मितेर्निर्मलस्य ।
इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-
द्वन्द्वापादानदानद्रवलवलगनादङ्कमङ्के विशङ्के ॥ १३९ ॥

जातमिति। अहमिन्दोरङ्के बलविजयिन इन्द्रस्य गजग्रामणीर्हस्तिषु मध्ये प्रधानं प्राच्यामेव वर्तमानो य ऐरावतस्तस्य गण्डयोः कपोलयोः पिण्डयोः शिरःस्थित-कुम्भस्थलयोश्च ये द्वन्द्वे गण्डद्वन्द्वं पिण्डद्वन्द्वं च त एवापादानं निर्गमनस्थानं येषां ते च ते दानद्रवलवा मदजललेशास्तेषां लग्नात्संपर्कात् काकतालीयमाकस्मिकं दैवा-त्सिद्धमिन्दीवराभं नीलोत्पलतुल्यं जातमङ्कं कलङ्कं विशङ्केमन्ये। किंभूतस्येन्दोः? अस्या-मङ्गुलीनिर्दिष्टायां पुरोदृश्यायां शतक्रतोरियं शातक्रतवी तस्यां हरिति दिशि विहरत उद्गच्छतः। तथा—अश्यामत्वे विषये ऐकमत्यं सर्वसंवादस्तेन तत्र वा स्थिताभि-र्वर्तमानाभिः सकलाभिः पञ्चदशभिरपि कलाभिः कृत्वा निर्मितिर्यस्य। अश्यामत्वै-कमत्येन स्थिता सकलकलानिर्मितिर्यस्य तादृशस्य। अत एव—निर्मलस्य प्रत्येकं कलानां धावल्यस्य दृष्टत्वाद्धवलसकलकलानिर्मितत्वात्कारणधावल्याद्धवलस्य, अश्या-मत्वैकमत्ये स्थिता याः सकलाः कलास्ताभिर्या निर्मितिस्तस्या वा हेतोर्धवलस्य। पूर्वं कारणधावल्यात्सकलोऽप्ययं धवल एवाभूत्, पश्चात्तु पूर्वदिग्भ्रमणवशात्तत्रैव भ्रमत ऐरावतस्य कपोलकुम्भस्थलगलन्मदजलं दैववशाल्लग्नं तेनायं मध्ये कालः प्रतिभातीत्यर्थः। तालतरुतले यदैव काकस्योपवेशनम्, तदैव दैवात्काकस्योपरि तालफलपात इति काकतालमिव, 'समासाच्च तद्विषयात्' इति छः। निर्मितेः, पक्षे हेतौ पञ्चमी ॥ १३९ ॥

इस इन्द्र-सम्बन्धिनी ( पूर्व ) दिशामें विहार करते हुए तथा सर्व सम्मतिसे स्वच्छ सम्पूर्ण कलाओंसे रचे गये ( अथवा—·········रचनेके कारण ) निर्मल चन्द्रमाके नील-कमलके समान कान्तिवाले कलङ्कको वलविजयी ( इन्द्र ) के हस्तिप्रधान ऐरावतके दोनों कपोल तथा दोनों कुम्भसे निकले हुए दानजलके लगनेसे काकतालीय न्यायसे उत्पन्न हुआ मानता हूं । [ तालवृक्षके नीचे बैठे हुए कौवेके ऊपर सहसा तालफलके गिरने-जैसा सहसा अतर्कित कोई कार्य होनेपर काकतालीय न्यायका प्रयोग होता है । पूर्व दिशामें उदित चन्द्रमा पहले सर्वसम्मत स्वच्छ-स्वच्छ सब कलाओंसे रचे जानेसे निर्मल था, किन्तु वहांपर पूर्वदिशामें विहार करते हुए चन्द्रमाके मध्यमें सहसा पूर्वदिशामें स्थित ऐरावतका कृष्णवर्ण मदजल लग गया, नीलकमलके समान कृष्णवर्ण वह मदजल ही कलङ्करूपमें प्रतीत होता है, ऐसा मैं मानता हूं ] ॥ १३९ ॥

अंशं षोडशमामनन्ति रजनीभर्त्तुः कलां वृत्तय-
न्त्येनं पञ्चदशैव ताः प्रतिपदाद्याराकवर्द्धिष्णवः ।
या शेषा पुनरुद्धृता तिथिमृते सा किं हरालंकृति-
स्तस्याः स्थानबिलं कलङ्कमिह किं पश्यामि सश्यामिकम् ? ॥१४०॥

अंशमिति । हे प्रिये ! लोका रजनीभर्तुः षोडशमंशं कलामामनन्ति सत्यं कथयन्ति, ताश्च षोडशांशरूपाः प्रतिपदादिर्यस्मिन्कर्मणि राकां पूर्णिमामभिव्याप्य वर्द्धिष्णवः प्रतितिथि एकैकलाभिवृद्ध्या वर्धमानाः पञ्चदशसंख्याका एव कला एनं चन्द्रं वृत्तयन्ति वर्तुलं कुर्वन्ति, तिथिसंख्यासाम्यात्पूर्णमण्डलं कुर्वन्तीत्यर्थः । या पुनः कला षोडशी तिथिमृते उद्धृता प्रयोजनाभावाच्चन्द्राद्बहिः कृता सा षोडशी कला शेषा पञ्चदशकलाभ्योऽवशिष्टा सती; यद्वा-षोडशीं तिथिं विना प्रयोजनाभावा-द्यावशिष्टा सा निष्प्रयोजनत्वादुद्धृता चन्द्राद्बहिर्निष्कासिता सती हरालंकृतिः शिव-शिरोभूषणं जाता किम् ? चन्द्रे प्रयोजनाभावाद्धरालंकृतिरिवाभूत्किमित्यर्थः । अहं तस्याश्चोद्धृतायाः षोडश्याः कलायाः सश्यामिकं नभो नीलिम्ना सह वर्तमानं स्थानस्य पूर्वावस्थितेः संबंधि बिलं विवरं तत्कालनवस्थित्या कृत्वा शून्यं नीलं नभोभागमेवेह चन्द्रमण्डलमध्ये कलङ्कं पश्यामि किम्? मध्यवर्तिनीलं तत्स्थानं बिलमेवाहं कलङ्कत्वेन शङ्के इत्यर्थः । 'शेष'शब्दस्याभिधेयलिङ्गत्वं पूर्वमेव दर्शितम् । 'पूर्णे राका निशाकरे' इत्यमरः । वृत्तयन्ति, 'तत्करोति-' इति णिच् । वर्द्धिष्णवः, 'अलंकृञ्-' इतीष्णुच् । तिथिमृते, 'ऋते नलाशाम्' इतीवत् । श्यामिका, मनोज्ञादेराकृतिगणत्वाद्भावे वुञ् ॥

( विद्वान् लोग ) निशापति ( चन्द्रमा ) के सोलहवें भागको 'कला' कहते हैं अर्थात् चन्द्रमाको सोलह कला बतलाते हैं, ( शुक्लपक्षकी ) प्रतिपदा तिथिसे पूर्णिमातक बढ़नेवाली वे पन्द्रह ही कलाएँ इसे ( चन्द्रमाको ) वर्तुलाकार बनाती हैं, तिथिके बिना बाकी बची हुई जो कला चन्द्रमासे निकाली गयी, वही शिवजीका अलङ्कार ( शिरोभूषण ) है क्या ?

और चन्द्रमासे अलग की गयी उस एक कलाके कृष्णवर्णवाले स्थानके बिल ( रिक्त = शून्य -स्थान ) को इस चन्द्रमामें कलङ्क देखता हूं । [ चन्द्रमाकी सोलह कलाएँ हैं, और एक-एक तिथियोंमें एक-एक कला ही वढ़ती है, इस प्रकार शुक्लपक्षकी प्रतिपदा तिथिसे पूर्णिमातक पन्द्रह कलाएँ ही चन्द्रमा गोलाकार ( पूर्ण ) बना देती हैं, किन्तु कलाओंको सोलह तथा तिथिओंके पन्द्रह होनेसे एक चन्द्रकला बच जाती है, जो शिवजीका नित्य शिरोभूषण बनकर रहती है और उस एक कलाका स्थान पूर्णचन्द्रमें खाली रहता है और नीलाकाशसे मिश्रित उसी रिक्त स्थानको हम चन्द्रमाके मध्यमें कृष्णवर्ण कलङ्करूपमें देखते हैं ] ॥ १४० ॥

ज्योत्स्नामादयते चकोरशिशुना द्राघीयसी लोचने
लिप्सुर्मूलमिवोपजीवितुमितः सन्तर्पणात्मीकृतात् ।
अङ्के रङ्कुमयं करोति च परिस्प्रष्टुं तदेवादृत-
स्त्वद्वक्त्रं नयनश्रियाऽप्यनधिकं मुग्धे ! विधित्सुर्विधुः ॥ १४१ ॥

ज्योत्स्नामिति । हे मुग्धे सुन्दरी ! त्वद्वक्त्रं वृत्तत्वादिगुणैः समानमपि नयनश्रियापि कृत्स्नमनधिकं समानमेव विधित्सुः, अत एव स्वस्य द्राघीयसी अतिदीर्घे लोचने लिप्सुर्लब्धुमिच्छुर्विधुश्चकोरशिशुना प्रयोज्येन स्वीयां ज्योत्स्नामादयते भक्षयति । तत्रोत्प्रेक्षते—चन्द्रिकामृतपायनकृतसम्यक्तर्पणेनात्मीकृतात्स्ववशीकृतादितश्चकोरबालकात्सकाशान्मूलं स्वचन्द्रिकापायनहेतुभूतमेतदीयातिदीर्घनेत्रद्वयमुपजीवितुमादातुमिव । यद्वा—यत्किंचित्स्वस्य चन्द्रिकां पाययित्वा ततो नेत्रद्वयलक्ष्मीप्राप्त्या मूलं चन्द्रिकारूपधनं वर्धयितुमिव । अन्योऽप्युत्तमर्णोऽधमर्णस्य किंचिद्दत्त्वा तं वशीकृत्योत्तममिष्टं वस्तु ततो गृह्णाति । तथा—अयं चन्द्र आदृत आदरयुक्तः सन्नङ्के मध्ये, अथ च—उत्सङ्गे, रङ्कुं च करोति । उत्सङ्गधारणेन लालयतीत्यर्थः । किमर्थमित्याशङ्क्याह—तन्मूलभूतमतिविशालं तदीयनयनयुगलं परिस्प्रष्टुमिव स्वलग्नं कर्तुमिव, त्वन्मुखसाम्यनिमित्तरमणीयनेत्रद्वयसंपादनायायं चन्द्रश्चकोरहरिणौ वञ्चयतीत्यर्थः । चन्द्रादुत्कृष्टं त्वन्मुखमिति भावः । 'परिप्रष्टुम्' इति पाठे एतन्नेत्ररामणीयकप्राप्त्युपायं प्रष्टुमिवेत्यर्थः । शिशुः सुप्रतार्य इति सूचयितुं 'शिशु'पदम् । आदयते, अदेर्निगरणार्थत्वेऽपि 'अदेःप्रतिषेधो वक्तव्यः' इति वक्तव्यात् 'निगरण-' आदि ( सूत्रेण ) परस्मैपदाभावे, 'णिचश्च' इति तङ् । शिशुना, 'आदिखाद्योर्न' इत्यणौ कर्तुर्णौ कर्मत्वाभावः । द्राघीयसी अतिशायने ईयसुनि 'प्रियस्थिर-' इति द्राघादेशः । लिप्सुः, विधित्सुरिति च, 'न लोका-' इति षष्ठीनिषेधः ॥ १४१ ॥

हे सुन्दरि ! ( आह्लादकत्व वृत्तत्व एवं सौन्दर्यादि गुणोंसे समान भी ) तुम्हारे मुखको नेत्रशोभासे समान करना चाहता हुआ ( अत एव अपने ) बड़े-बड़े नेत्रद्वयको पानेका इच्छुक तथा आग्रहवान् ( तत्पर ) यह चन्द्रमा ( अपनी चन्द्रिकाको खिलाकर ) अत्यन्त

सन्तुष्ट होकर वशीभूत हुए इस चकोर-शिशुसे मूल ( अपनी चन्द्रिका खिलानेके हेतुभूत इस चकोर-शिशुके नेत्रद्वय ) को मानो लेनेके लिए ( अथवा—अपनी साधारण चन्द्रिका देकर उससे श्रेष्ठ ( चकोर-शिशुके ) नेत्रद्वयको लेनेसे साधारण चन्द्रिकारूप मूल धनको मानो बढ़ानेके लिए—लोकमें भी ऋणदाता ऋण लेनेवालेको धन देकर उससे अपने मूल धनको बढ़ाता है ) इस चकोर शिशुको अपनी चन्द्रिका खिलाता है, और उसी ( मृग-सम्बन्धी नेत्रद्वय ) को पानेके लिए मृगको अपने अङ्क ( मध्यभाग, पक्षा०—क्रोड ) में करता है। ( पाठा०—विशाल नेत्रद्वयको ( पानेका उपाय ) पूछनेके लिए……… )। [ लोकमें भी कोई व्यक्ति किसीकी बच्चेकी बहुमूल्य वस्तु लेनेके लिए जिस प्रकार उस बच्चेको कोई मधुर वस्तु मिठाई आदि खिलाता है और उससे उसे वशीभूतकर उसकी बहुमूल्य वस्तुको ले लेता है, उसी प्रकार यह चन्द्रमा तुम्हारे मुखके समान तो है, परन्तु नेत्राभाव होनेसे उसे भी पाकर नेत्रके भी समान बननेके लिए चकोर शिशुको चन्द्रिका खिलाकर उसके बड़े-बड़े नेत्रद्वयको पाना चाहता है तथा मृगको अपनी गोदमें रखकर उसके भी बड़े-बड़े नेत्रद्वयको अपनेमें संलग्न करना ( पाना ) चाहता है ] ॥ १४१ ॥

लावण्येन तवास्यमेव बहुना तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धताऽर्द्धमलिनेनारम्भि शेषेण तु ।
निर्माय द्वयमेतदप्सु विधिना पाणी खलु क्षालितौ
तल्लेशैरधुनाऽपि नीरनिलयैरम्भोजमारभ्यते ॥ १४२ ॥

लावण्येनेति । हे प्रिये ! बहुना क्वचित्पात्रे संचितेनाखिलेन लावण्येन कृत्वा तवास्यमेवारम्भि निर्मितम् । चन्द्रस्तु पुनस्तस्य लावण्यस्याधारपात्रं स्पृशतीति स्पृक् तेन लावण्यस्थापनपात्रमात्रलग्नेन, अत एव प्रोञ्छनेन पात्रनिघर्षणेन कृत्वा या लब्धतोपार्जित्वं तेनार्धं कियत्खण्डं मलिनं यस्य तेन किंचन्मलिनेन शेषेण भवन्मुखनिर्माणावशिष्टेनांशेन कृत्वारम्भि निर्मितः, अत एव शबलमण्डलोऽयं शोभत इत्यर्थः। शेषेण तु निर्मित इति वा । विधिना एतत्त्वन्मुखमृगाङ्कलक्षणं द्वयं निर्माय सृष्ट्वाऽप्सु पाणी क्षालितौ खलु लावण्यलेपकृतजलक्षालनाविव । तस्मात्तस्य क्षालनरजोमिलितलावण्यलेपस्य लेशैरल्पैरंशैरेवं कर्तृभिरधुनापि नीरनिलयैर्जलस्थायिभिः सद्भिरम्भोजमारभ्यते निर्मीयते; कमलनिर्माणे ब्रह्मणः कोऽपि प्रयासो नेत्यर्थः। कमलाच्चन्द्रोऽधिकः, तस्मादपि त्वन्मुखं लावण्यसाकल्येन निर्मितत्वादधिकमिति भावः। अम्भोजम्, जात्येकत्वम् ॥ १४२ ॥

( हे प्रिये ! ) ब्रह्माने बहुत ( किसी पात्रमें रखे गये सम्पूर्ण ) सौन्दर्यसे तुम्हारे मुखको तथा उस पात्रमें लगे हुए और पात्रको पोंछनेसे आधी मलिनतासे युक्त ( पात्र लग्न ) शेष सौन्दर्यसे चन्द्रमाको बनाया और इन दोनों—तुम्हारे मुख तथा चन्द्रमाको बनाकर अवश्यमेव पानीमें दोनों हाथोंको धोया, ( हाथ धोनेसे ) पानीमें गिरे हुए उसी ( सौन्दर्य )

के लेश ( मलिनतम क्षुद्र भाग ) इस समय ( बहुत दिनोंके व्यतीत हो जानेपर ) भी कमलोंको बना ( उत्पन्न कर ) रहे हैं। [ लोकमें भी कोई शिल्पी किसी बर्तनमें रखी हुई सामग्रीसे प्रधान वस्तुको बनाकर उस बर्तनमें लगी हुई शेष सामग्रीको पोंछ लेता है और पोंछनेसे बर्तनके संसर्गसे मलिन उस सामग्रीसे दूसरी वस्तुको बनाकर पानीमें हाथोंको धो लेता है। कमलसे चन्द्रमा श्रेष्ठ है और चन्द्रमासे भी तुम्हारा मुख श्रेष्ठ है ] ॥१४२॥

लावण्येन तवाखिलेन वदनं तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्द्धमलिनेनारम्भि शेषेण यः।
तल्लेखाऽपि शिखामणिः सुषमयाऽहङ्कृत्य शम्भोरभू-
दब्जं तस्य पदं यदस्पृशदतः पद्मञ्च सद्म श्रियः॥ १४३॥

लावण्येनेति। अखिलेन लावण्येन तव वदनमारम्भि। ततो भवद्वदनकामनीयकवर्णनातिचिन्तापि दूरे तिष्ठतु, अशक्यकरणत्वादित्यर्थः। उक्तरीत्या तत्पात्रमात्रस्पृशा प्रोञ्छनलब्धतार्धमलिनेन शेषेण तु यश्चन्द्र विधिना निरमायि तस्य लेखापि लावण्यपात्रमात्रस्थलावण्यनिर्मितस्य चन्द्रस्य षोडशांशरूपा कलापि कलामात्रत्वादेव निष्कलङ्कत्वात् सुषमया परमया शोभया कृत्वा अहंकृत्य अस्यापेक्षयाऽहमेव रमणीयेति दर्पमवलम्ब्य शंभोः शिखामणिः शिरोभूषणमभूच्छिवशिरोऽध्यरोहत्। अन्यदपि सदर्पमुत्तमशिरोऽधिरोहति। अब्जं कुमुदं कर्तृ यद्यस्मात्तस्य चन्द्रस्य पदं प्रतिबिम्बस्थानं जलमस्पृशत्। अतः श्रियः सद्माभूत्। चन्द्रकरस्पर्शादेव हि कुमुदं सश्रीकं भवति पद्मं च श्रियः सद्माभूत्। जलस्य चन्द्रकिरणसंस्पर्शात् पद्मस्य च तत्रोत्पन्नत्वाद्वर्तमानत्वात्कुमुदसाहचर्याच्च पद्ममपि लक्ष्म्याः स्थानमभूत्। यद्वा—पद्मं चातः कुमुदाद्धेतोः श्रियः सद्माभूत्। अब्जत्वजातियोगात्कुमुदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः। यद्वा—या तल्लेखा शम्भोः शिखामणिरभूत, तस्य शिखामणेश्चन्द्रस्य पदं स्थानं शिवमस्तकं पूजासमये यस्मात्कुमुदं पद्मं चास्पृशत्, अतस्तदुभयं श्रियः सद्माभूत्। चन्द्रसंबद्धशिरःसंबन्धादुभयं श्रीगृहमभूदित्यर्थः; यद्वा—तस्य शंभोः पदं चरणं पूजावशाद्यस्मात्कुमुदं पद्मं चास्पृशत् तस्मादुभयं श्रीसद्माभूत्, तस्य लावण्यस्य स्थानं विधिहस्तलेपक्षालनजलं यस्मात्कुमुदं पद्मं चास्पृशत्। यद्वा—पद्ममेवास्पृशत्। यतोऽब्जं तस्मात्कुमुदम्, पद्मं च पद्ममेव वा श्रीसद्माभूदिति वा। त्वन्मुखलावण्यलेशपरम्परासंस्पर्शप्राप्तशोभानि चन्द्रादीनीति त्वन्मुखलावण्यं वाङ्मनसगोचरो न भवतीति भावः। अर्थान्तरस्य स्पष्टत्वात्, पूर्वार्धस्य त्वर्थान्तरप्रतिपादनार्थमनुवादरूपत्वान्नायं श्लोकः पुनरुक्तः। 'अहम्' इति विभक्तिप्रतिरूपकमव्ययं, तस्य क्रान्तेन 'सह सुपा' इति समासे क्त्वो ल्यप्॥ १४३॥

( उसी बातको कुछ भिन्नकर प्रकारान्तरसे कहते हैं—हे प्रिये! ब्रह्माने ) सम्पूर्ण

सौन्दर्यसे तुम्हारे मुखको तथा वर्तनमें लगे हुए पोंछनेसे मलिन शेष सौन्दर्यसे जिस चन्द्रमाको रचा, उस ( चन्द्रमा ) की रेखा ( सोलहवां भाग अर्थात् एक कला ) अपनी उत्कृष्ट शोभासे ( इस शङ्करजीके मस्तकसे मैं ही श्रेष्ठ हूं ऐसा ) अहङ्कारकर शङ्करजीकी शिरोमणि बन गयी और कुमद तथा कमलने जो उस चन्द्रमाका चरण ( पक्षा०—किरण पड़नेसे चरणस्थानीय जल ) का स्पर्श किया ( उस पुण्यसे ) लक्ष्मीका निवास-स्थान ( कुमुद शोभायुक्त तथा पद्म लक्ष्मीको कमलालया होनेसे लक्ष्मीके रहनेका स्थान ) हो गये। [ अथवा—कुमुदने जो चन्द्रमाका चरण ( प्रतिविम्बस्पृष्ट जल ) का स्पर्श किया और कमल उस कुमुदके संसर्ग मात्रसे लक्ष्मीका निवासस्थान हो गया। अथवा—उक्तरूप चन्द्रमाके स्थान ( शिवमस्तक ) को पूजाकालमें कुमुद तथा कमलने जो स्पर्श किया, उससे वे लक्ष्मीका निवास-स्थान हो गये। अथवा—उक्तरूप चन्द्रमासे शोभित उस ( शिवजी ) के चरणका स्पर्श कुमुद तथा कमलने पूजाकालमें किया अर्थात् उक्तरूप शिवजीके चरणोंपर जो वे पूजामें चढ़ाये गये, अतः वे लक्ष्मीका निवासस्थान हो गये। भाव यह है कि—सम्पूर्ण सौन्दर्यसे रचे गये तुम्हारे मुखका वर्णन करना तो सर्वथा अशक्य ही है, क्योंकि वर्तनमें लगे मलयुक्त सौन्दर्य-शेषसे बनाये गये चन्द्रमाका निष्कलङ्क सोलहवां भाग भी शिवजीके मस्तककी अपेक्षा अपनेको श्रेष्ठ मानकर उनके शिरपर चढ़ गया, और उस चन्द्रमाके प्रतिविम्बस्थान जलरूप चरण, या—उक्त चन्द्रमासे युक्त शिवजीके चरणके स्पर्शमात्रसे कुमुद तथा कमल लक्ष्मीके निवासस्थान बन गये। लोकमें भी कोई श्रेष्ठ व्यक्ति हीनके ऊपर अहङ्कारपूर्वक निवास करता है, तथा श्रेष्ठ व्यक्तिके चरणस्पर्शसे हीनतम व्यक्ति भी लक्ष्मीपात्र ( अतिशय धनवान् , या-शोभान्वित ) बन जाता है। इस कारण तुम्हारे मुखके सौन्दर्यका वर्णन भला कौन कर सकता है ? ] ॥ १४३ ॥

सपीतेः सम्प्रीतेरजनि रजनीशः परिषदा
परीतस्ताराणां दिनमणिमणिग्रावमणिकः ।
प्रिये ! पश्योत्प्रेक्षाकविभिरभिधानाय सुशकः
सुधामभ्युद्धर्त्तुं धृतशशकनीलाश्मचपकः ॥ १४४ ॥

सपीतेरिति । हे प्रिये संप्रीतेस्ताराणामेवान्योन्यं सम्यग्या प्रीतिः सौहार्दं तस्माद्धेतोर्या सपीतिः सह पानं, सुहृदो हि सह पानं कुर्वन्ति तस्माद्धेतोः, यद्वा सहपानाद्धेतोर्या सम्यक् प्रीती रुच्यभिवृद्धिः, तस्माद्धेतोस्ताराणां परिषदा सङ्घेन परीतः समन्ताद्व्याप्तोऽयं रजनीशो दिनमणिमणिः सूर्यकान्तमणिस्तस्य ग्रावा शिला तया घटितऽतिधवलः स्थूलः पेयद्रव्याधारभूतो मणिकोऽलिञ्जर एवाजनि संभूतः विधिना तारापरिषदा वा व्यरचीति पश्य। कीदृशः? सादृश्येन वस्त्वन्तरसंभावनारूपायामुत्प्रेक्षायां विषये कविभिर्विशिष्टसंभावनाचतुरैः श्रीहर्षादिभिर्महाकविभिस्तारापरिषदैव सुधामभ्युद्धर्तुं धृतो यो मध्यस्थितः शशकः कलङ्कः स एव नीलाश्मा नीलमणिस्तेन घटितं

चषकं पानपात्रं यस्मिन्नेवंभूत इवायमिति अभिधानाय वर्णनाय वर्णयितुं सुशकः सुखेन शक्यः। चन्द्रो धावल्याद्वृत्तत्वाच्च पीयूषपूर्णः सूर्यकान्तमणिक इव, कलङ्कश्च नीलमणिघटितं चषकमिव दृश्यते पश्येत्यर्थः। यथा मणिकस्थोदकाद्युद्धरणाय मणिक-मुखे चषकः स्थाप्यते, तथा ताराभिः परस्परं मिलित्वा सुधापानं कर्तुं परिवेष्टितस्य सुधापूरितस्यास्यापि चन्द्रमणिकस्य मुखे सुधोद्धरणाय शशनामा नीलमणिचषको निहित इत्युत्प्रेक्षितुं शक्यत इत्यर्थः। 'चषकोऽस्त्री पानपात्रम्' इत्यमरः। सप्रीतेः, 'वोपसर्जनस्य' इति वा 'सहस्य सः संज्ञायाम्' इत्यत्र 'सहस्य सः' इति योगविभागाद्वा सहस्य सः। कविभिः, खलर्थयोगान्न षष्ठी, सुशक इति खल् ॥ १४४ ॥

हे प्रिये! 'सम्यक् प्रकारकी प्रीति होनेके कारण साथमें पान करनेसे (अथवा—साथमें पान करनेसे सम्यक् प्रकारकी प्रीति होनेसे) तारा-समूहसे युक्त चन्द्रमा सूर्यकान्तमणिके पत्थरसे बनाया गया (सुधा रखनेका) कलश है और शशक उससे सुधा निकालनेके लिए नीलमणि (नीलम) से बनाया गया प्याला है' ऐसा वर्णन करना उत्प्रेक्षा करनेवाले श्रीहर्षादि कवियोंके लिए बहुत सरल (एवं समुचित) है। [स्वच्छवर्ण चन्द्रमा सूर्यकान्त-मणिके बने हुए सुधापात्रके समान तथा उसके मध्यस्थ कृष्णवर्ण शशकाकार कलङ्क सुधा निकालनेके लिए छोटे प्यालेके समान प्रतीत होता है; कवियोंको ऐसी उत्प्रेक्षा करनी चाहिये] ॥ १४४ ॥

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्मितं
शङ्के सुन्दरि! शर्वरीपरिवृढस्तेनैष दोषाकरः।
आदायेन्दुमृगादपीह निहिते पश्यामि सारं दृशौ
त्वद्वक्त्रे सति वा विधौ धृतिमयं दध्यादनन्धः कुतः? ॥१४५॥

आस्यमिति। हे सुन्दरि! विधिना शीतमयूखस्य मण्डलं बिम्बं तस्य वृत्तत्वाह्लादकत्वादिगुणानाकृष्य गृहीत्वा ते आस्यं यतो निर्मितं तेन गुणगणोत्कर्षेण हेतुना शर्वर्याः परिवृढः प्रभुश्चन्द्रो दोषाणामाकर उत्पत्तिस्थानं; न तु दोषा रात्रिस्तत्कारित्वा-द्दोषाकर इत्यर्थ इत्यहं शङ्के। तथा—इन्दोर्मृगात्सकाशात्सारं दृशावादाय अतिश्रेष्ठे नेत्रे गृहीत्वा इह भवन्मुखे निहिते इत्यहं जाने। कुतो ज्ञातमित्यत आह—सुन्दरतरे त्वद्वक्त्रे जागरूके सति अनन्धश्चक्षुष्मानुभयतारतम्यविचारचतुरोऽयं मृगो विधौ चन्द्रे धृतिं स्थितिम्, अथ च—समीचीनाधारपरितोषं, कुतो वा दध्याद्धारयेत, अपि तु न कथंचित्; तस्मान्नेत्रोद्धरणादन्धत्वेनेव त्वन्मुखरामणीयकादर्शनादन्यत्र गन्तुमशक्तेश्च त्वन्मुखं त्यक्त्वात्रैवायं स्थित इत्यर्थः। त्वन्मुखं चन्द्रादधिकम्, नेत्रे च मृग-नेत्राभ्यामधिके इति भावः। 'सारे' इति क्वचित्पाठः ॥ १४५ ॥

हे सुन्दरि! (ब्रह्माने) चन्द्रमण्डलसे (आह्लादकत्वादि) गुणोंको निकालकर तुम्हारे मुखको बनाया, इसी कारणसे निशानाथ यह चन्द्रमा दोषाकर (दोषोंका खजाना, पक्षा०—

रात्रिको करनेवाला ) हुआ और चन्द्रमाके मृगसे ( कृष्णत्व, चापल्य तथा उन्मादकत्वादि गुणोंको लेकर सारभूत अर्थात् श्रेष्ठतम ) तुम्हारे नेत्रद्वयको बनाया, अन्यथा यदि यह मृग नेत्रहीन होनेसे अन्धा नहीं हो गया होता तो ( चन्द्राधिक सुन्दर ) तुम्हारे मुखके विद्यमान रहनेपर इस चन्द्रमामें ही धैर्यको कैसे धारण करता ? अर्थात् चन्द्रमाको छोड़कर चन्द्राधिक सुन्दर तुम्हारे मुखमें आकर रहने लगता [ परन्तु उसके वैसा नहीं करनेसे ज्ञात होता है कि सारभूत मृगनेत्रको तुम्हारे मुखमें रखनेके कारण यह चन्द्रमा अन्धा हो गया है। लोकमें भी कोई अन्धा व्यक्ति उत्तम स्थानको जानेमें असामर्थ्य होनेसे हीन स्थानमें ही सन्तोषपूर्वक रहता है। तुम्हारा मुख चन्द्रमासे तथा नेत्र मृगनेत्रसे अधिक सुन्दर हैं] ॥१४५॥

**शुचिरुचिमुडुगणमगणनममुमतिकलयसि कृशतनु ! न गगनतटमनु।**
**प्रतिनिशशशितलविगलदमृतभृतरविरथहयचयखुरबिलकुलमिव ॥ १४६ ॥**

**शुचीति। हे कृशतनु ! त्वं गगनतटं नभःस्थलमनु लक्षीकृत्य शुचिरुचिं श्वेतकान्तिं, तथा—बहुत्वादगणनं संख्यातुमशक्यममुमङ्गुल्या निर्देश्यं प्रत्यक्षगम्यमुडुगणं प्रतिनिशं रात्रौ रात्रौ शशितलाच्चन्द्राधोभागाद्विगलता स्रवताऽमृतेन भृतं पूर्णं रविरथस्य हयचयस्य खुराणां यानि बिलानि न्यासस्थानविवराणि तेषां कुलं वृन्दमिव नातिशयेन कलयसि, अपि तु तदिवातितरां जानीहीत्यर्थः। प्रतिनिशं चन्द्राद्गलता धवलेनामृतेन पूर्णाः सूर्याश्वखुरगर्ता इव तारकाः शोभन्त इति भावः। गगनतटम्, कर्मप्रवचनीययोगाद्द्वितीया। प्रतिनिशम्, वीप्सायामव्ययीभावः। सर्वलघुः ॥ १४६ ॥**

हे कृशाङ्गी ! ( तुम ) आकाशतटको लक्ष्यकर स्वच्छ कान्तिवाले अगणित तारा-समूहको प्रत्येक रात्रिमें चन्द्रमाके अधोभागसे बहते हुए अमृतसे परिपूर्ण, सूर्यरथके घोड़ोंके खुरोंसे बने बिल-समूहके समान सम्यक् प्रकारसे नहीं जानती हो क्या ? [ दिनमें चलते हुए सूर्यरथके घोड़ोंके खुरोंसे उस अमृतपूर्ण स्थानमें बिलें हो गयी हैं, जो प्रत्येक रात्रिको चन्द्रतलसे होते हुए अमृतस्रावसे पूर्ण होकर तारा-समूह ज्ञात होती हैं ] ॥ १४६ ॥

**उपनतमुडुपुष्पजातमास्ते भवतु जनः परिचारकस्तवायम्।**
**तिलतिलकितपर्पटाभमिन्दुं वितर निवेद्यमुपास्स्व पञ्चबाणम् ॥१४७॥**

उपनतमिति ॥ हे प्रिये ! 'रक्तो भौमः, शनिः कृष्णः, गुरुः पीतः, सितः कविः' इत्यादिज्योतिःशास्त्रादिप्रमाण्यान्नानावर्णाकृतीन्युडूनि नक्षत्राण्येव पुष्पजातमुपनतमुपसंपन्नमास्ते अयं सलक्षणो जनः प्रारब्धकामदेवपूजायास्तव परिचारकश्चन्दनाद्युपचारोपनायकः, अथ च—संभोगकारी भवतु। त्वं तिलैः संजाततिलकः, तिलैरेव तिलकवान्कृतो वा यः पर्पटः शालितण्डुलपिष्टरचितश्चिपिटस्तिलसंकुलीसंज्ञ उपदंशविशेषस्तद्वदाभा यस्य तत्तुल्यं सकलङ्कमध्यत्वाद्विशिष्टपर्पटसदृशमिन्दुमेव निवेद्यं कामाय वितर, एवं पञ्चबाणं कामदेवमुपास्स्व पूजय। अन्योऽपि देवपूजकः

पुष्पादिसामग्र्या देवं पूजयति, कश्चित्परिचारकोऽपि तस्य भवति, एवमत्रापि। सर्वाणि नक्षत्राण्युदितानि, कामोद्दीपकश्चन्द्रोऽप्युदितः, सुरतान्तरायकारी निषिद्धः संध्यासमयोऽतिक्रान्तः, तस्मात्काममुपास्स्व, सुरतेच्छुरस्मीति भावः। 'पञ्चबाणम्' इत्यनेन कामस्यातिपीडाकारित्वं सूच्यते। 'जातिर्जातं च सामान्यम्' इत्यभिधानात् 'जात' शब्दः सामान्यवाची पुष्पमात्रे पर्यवस्यति। तिलकितेति तारकादिः, मतुबन्तात् 'तत्करोति—' ( ग० सू० २०४ ) इति ण्यन्तान्निष्ठा ॥ १४७ ॥

( हे प्रियतमे दमयन्ती !, लाल, पीला, श्वेत, कृष्ण आदि अनेक वर्णोंवाले ) तारारूप पुष्प-समूह उपस्थित है ( लाकर रखा हुआ है ), यह व्यक्ति तुम्हारा परिचारक (दास) बने ( देवपूजा करनेवाली तुम्हारी पूजासामग्रियोंको लाने आदिमें मैं सहायक बनूं ), तिलोंके तिलकसे युक्त पर्पट (चावलके चूनका बना हुआ मध्यमें तिलयुक्त गोलाकार भोज्य-पदार्थ-विशेष, जिसे 'तिलकुट' कहते हैं ) के समान कान्तिवाले इस चन्द्रमाको ( कामदेवके लिए ) नैवेद्य समर्पण करो और इस प्रकार कामदेवकी पूजा करो। [ पूजामें पुष्प, नैवेद्य तथा एक सहायक की आवश्यकता होती है, अत एव तारारूप पुष्पसमूह, चन्द्ररूप नैवेद्य मैं सहायक परिचारकरूपमें उपस्थित हूं, इस प्रकार पूजाकी सब सामग्रियोंके उपस्थित होनेसे तुम मुझ परिचारकको आदेश दो, जिससे मैं पञ्चबाण अर्थात् कामदेवकी पूजामें सहायक बनूं। चुके कामदेव 'पञ्चबाण' है, अतः उसकी यथावसर पूजा नहीं करनेसे वह उन बाणोंद्वारा दण्ड भी देगा, यह 'पञ्चबाण' पदसे ध्वनित होता है। उद्दीपक चन्द्रमाका वर्णन करनेसे रमणेच्छुक नलने रमण करनेके लिए दमयन्तीसे ऐसा कहा ] ॥ १४७ ॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेनाशिषमाशास्ते—

स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः।
पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ १४८ ॥

स्वर्भानुरिति। हे प्रिये ! देवः प्रकाशमानस्तुषारद्युतिर्हिमकरः, अथ च—हिमकर एव देवः, वर्णनां पूजां च कुर्वतां नोऽस्मदादीनाम्, आवयोर्वा तुष्टये परमानन्दायास्तु। किंभूतः ? स्वर्भानो राहोः प्रतिवारं पौनःपुन्येन यत्पारणं चन्द्रस्यैव गिलनं तेन तत्र वा मिलन् संलग्नो यो दन्तौघस्तद्रूपं यन्त्रं छिद्रकरणसाधनं तस्मादुद्भवो यस्याः सा श्वभ्रालीदन्तदशनकृतविवरपरम्परा तया तस्याः सकाशाद्वा पतयालुः पतनशीला दीधितिसुधा किरणामृतं तद्रूपः, दीधितिसुधाया वा सारः श्रेष्ठभागो यस्य, दीधितिसुधाया आसारो धारासंपातो दीधितिसुधारूपो वा आसारो यस्य सः। अत एव—पुष्पमेवेष्वासनं धनुर्यस्य तस्य कामस्य तत्प्रियाया रत्याश्चानयोर्यः परिणयो विवाहो लक्षणया परस्परसंमेलनं तद्रूपो य आनन्दः संतोषस्तत्सं-

वन्धिनि 'समुद्रज्येष्ठा–' इत्यादिश्रौतेऽभिषेकाख्ये उत्सवे महाभिषेकार्थं सहस्रसंख्या धारा लोहशलाकानिर्मितजलप्रवाहमार्गा यस्य स तादृशो यः कलशस्तस्य श्रीः, प्राप्ता सहस्रच्छिद्रगलज्जलधारकलशस्येव श्रीः शोभा येन सः। महोत्सवे हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते। तथा च राहुदन्तक्षतच्छिद्रपरम्परागलदमृतधारश्चन्द्रो गलज्जलधारसहस्रच्छिद्रसुवर्णकलश इव शोभमानः पूर्वोक्तवर्णनश्लोकविधत्वत्कृतपूजया च सुरतप्रवृत्तयोरावयोरुद्दीपकतया परमानन्दं कुर्यादिति भावः। एतेन तत्समयोचितरतिकामविवाहोत्सवाभिधानेन 'चन्द्रोऽस्तु नस्तुष्टये' इत्यनेन च विलासिना नलेन स्वनिर्वर्त्यतृतीयपुरुषार्थपयोधिपीयूषरसास्वादनलालसाभिव्यज्यते। 'सुधाधार–' इत्यपि पाठे–दीधितिसुधाया धारा यस्य सुधाया आधार इति वा। 'आनन्द' पदेन 'तुष्टयेऽस्तु' इत्याशिषा च ग्रन्थसमाप्तिं द्योतयति। महाभारतादौ वर्णितस्याप्युत्तरनलचरित्रस्य नीरसत्वान्नायकानुदयवर्णनेन रसभङ्गसद्भावाच्च काव्यस्य च सहृदयाह्लादनफलत्वाच्चात्रोत्तरचरित्रं श्रीहर्षेण न वर्णितमित्यादि ज्ञातव्यम्। न इति पद्ये 'अस्मदो द्वयोश्च' इति द्वित्वेऽपि बहुवचनम् ॥ १४८ ॥

( हे प्रिये ! ) राहुके प्रत्येक वार निगलनेसे संलग्न ( परस्परमें सम्मिलित ) होते हुए दन्त-समूह अर्थात् ऊपर नीचेकी दन्तपङ्क्तिद्वयरूप ( छेद करनेके ) यन्त्रसे उत्पन्न हुए छिद्र-समूहसे गिरता हुआ ( चन्द्रमाकी ) किरणरूपी अमृतरूपसार ( श्रेष्ठभाग, या—आसार-धारासे होनेवाली वृष्टि ) वाला, और कामदेव तथा रतिके विवाह ( सम्मिलन ) रूप आनन्दकारक अभिषेकोत्सवमें सहस्र-धाराओंसे युक्त कलसकी शोभाको प्राप्त शीतद्युति (चन्द्रमा) यह देव हमलोगों ( चन्द्रस्तुति या चन्द्रपूजा करनेवाले हम सबों, या—हम दोनों ) के परमानन्दके लिए होवे। [ स्त्री-पुरुषके विवाहके बाद सहस्र छिद्रयुक्त कलससे अभिषेक कराया जाता है, चन्द्रमा भी वार-वार ग्रहणकालमें राहुके दोनों दन्तपङ्क्तिरूप यन्त्रके बीचमें पकड़कर सहस्र छिद्रोंसे युक्त होकर अमृतस्राव करता हुआ उक्त अभिषेक-कलसके समान होता हुआ काम-मित्र होनेसे काम-पूजन ( या—कामस्तुति = उक्तरूप ( २२।२९-१४७ ) से कामवर्णन करनेवाले हमलोगोंके परमानन्दके लिए हो। यहां नलने तृतीय पुरुषार्थ 'काम' का प्रसङ्ग होनेसे उसीकी आशंसा की है। महाभारत आदि पुराणोंमें वर्णित नलका अवशिष्ट चरित दुःखप्रद एवं नीरस प्राय होनेसे महाकवि श्रीहर्षने शृङ्गारपूर्ण सरस नलचरितका वर्णन करनेके बाद ही इस महाकाव्यको समाप्त करनेके उद्देश्यसे प्रधान नायक नलके मुखसे 'आशीर्वादात्मक' होनेसे मङ्गलकारक आशंसा कराकर ग्रन्थको समाप्त किया है। अत एव कुछ समालोचकोंका यह कथन ठीक नहीं है कि—'कविसम्राट् श्रीहर्षने आगे भी नलके चरितका वर्णन किया होगा' ] ॥ १४८ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।

द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥१४९॥

श्रीहर्षमिति । द्वाविंशतेः पूरणः सर्गो गतः समाप्तिं प्राप । किंभूतस्य श्रीहर्षस्य ? नवो यः साहसाङ्को नाम राजा तस्य चरिते विषये चम्पूं गद्यपद्यमयीं कथां करोतीति क्विप् तस्य निर्मितवतः । सोऽपि ग्रन्थो येन कृत इति सूच्यते । 'नृपसाहसाङ्क-' इति पाठे-नृपश्चासौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये चम्पूकृतः भोजराजस्य विक्रमार्कस्य वेति केचित् । द्वाविंश इति पूरणे डटि 'ति विंशतेर्डिति' इति तिलोपः॥

कवीश्वर-समूहके.....किया, नये (पाठा०—राजा) 'साहसाङ्क' नामक गौडदेशाधीशके चरितमें 'चम्पू' काव्यकी रचना करनेवाले उस (श्रीहर्ष) के रचित, 'नलचरित' अर्थात् 'नैषधचरित' नामक महाकाव्यमें स्वभावतः सुन्दर यह बाइसवां सर्ग समाप्त हुआ। (शेष व्याख्या चतुर्थ सर्गके समान जाननी चाहिये) ॥ १४९ ॥

## अथ कविप्रशस्तिः ।

यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ? ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ १ ॥

यथेति । यथा परमरमणीयापि रमणी यूनस्तरुणस्य कामिनोऽन्तःकरणहरणं कुरुते, तद्वत्तथा कुमाराणां बालिशानां स्त्रीरत्नलाभमात्रेण परमपुरुषार्थप्राप्तिमभिमन्यमानानामनुभूतकामसुखानां चित्तं स्ववशं नैव कुरुते ? अपि तु—न कापि । तथेयं काव्यरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात्सुधीभूयामृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेद्यदि मदयति आनन्दयति, तर्ह्यस्याः सुधियाऽस्यादृताया मदुक्तेररसानां नीरसानां सर्वथैवासंस्पृष्टरसशब्दार्थानामपि चलदुपलप्रायाणामतृणादापुच्छपशूनामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपि तु न किंचिदप्यस्यास्तैरपकर्तुं शक्यते । सुधीभिरादृते सति नीरसैरकृते कृते वाप्यादरे न किंचिदित्यर्थः । सुधीभिरादृतत्वात्सकलगुणपूर्णातिसरसेयं मदुक्तिरिति भावः । मदुक्तेः सुधारूपत्वाभावात्खेदानन्तरं च सरसत्वप्रतीतेः सुधात्वात्सुधीभूयेति चित्रः । सुधिय इति जात्यभिप्रायेण । एकेनापि सुधियादरे कृते महद्गौरवम्, बहुभिरप्यज्ञैरनादरेषु कृतेष्वपि न किंचिल्लाघवमित्यभिप्रायेण वा । 'यूनः' इति प्रतियोगिन एकवचनान्तत्वाच्चैकवचनम् । कवेः स्वग्रन्थमुद्दिश्येयमुक्तिः ॥

अत्यधिक सुन्दरी भी नायिका जैसा युवकोंके अन्तःकरणको आकृष्ट करती है, वैसा कुमारोंके अन्तःकरणको कौन आकृष्ट करती है ? अर्थात् कोई नहीं (इस कारण) मेरी

उक्ति अर्थात् मेरा रचा हुआ यह 'नैषधचरित' नामक महाकाव्य यदि अमृत होकर विद्वानोंके चित्तको आनन्दित करती है तो इस मदुक्तिको नीरस लोगोंके अधिक अनादरसे क्या ( हानि ) है ?। [ जिस प्रकार युवकोंके समान कुमारोंके अन्तःकरणको आकृष्ट नहीं करनेपर भी युवतीका सौन्दर्य दोषयुक्त नहीं माना जाता, उसी प्रकार विद्वानोंके चित्तको आनन्दित करनेवाला मेरा यह महाकाव्य नीरस ( मूर्ख या-असहृदय ) लोगोंके अतिशय अनादर करनेपर भी दोषयुक्त नहीं कहा जा सकता ] ॥ १ ॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति—

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।
स परमपरः क्षीरोदन्वान् यदीयमुदीर्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम् ॥ २ ॥

दिशीति । गिरिग्रावाणोऽद्रिपाषाणा दिशि दिशि स्वां निजां सरस्वतीं नदीसन्तर्गतजलप्रस्रवणं वमन्तु मुञ्चन्तु । आपातः सामस्त्येन पतनं स्फुरन्प्रकाशमानो ध्वनिडम्बरः शब्दाडम्बरो यस्यां तां च नदीं मिथस्तुलयतु मिथोऽन्यनद्या समीकरोतु। अविसर्गान्तपाठे—आपातेन समन्तादूर्ध्वदेशादधःपतनेन प्रकाशमानः शब्दाडम्बरो यस्यां तामन्यनद्या समं समीकरोतु, जन इत्यर्थः। अथ च—आपाते प्रथमारम्भ एव स्फुरत्प्रपातघोषां तां जनो मिथस्तुलयतु। उभयव्याख्यानेऽपि परिणामे तु न नदी न च तस्या शब्दाडम्बरश्चिरंतन इत्यर्थः। स क्षीरोदन्वात् परं केवलं, अपरः न विद्यते पर उत्कृष्टो यस्मादत्युत्कृष्टः। अथ च—अन्य एव। यतो यस्य क्षीरोदस्येदं यदीयममृतमेतादृशमुदीयते उत्पद्यते। कीदृशम्? मथितुर्देवादेः खेदच्छेदि मथनजनितक्लेशापहम्। तथा-प्रमोदनं नितरामानन्ददायि। तथा—ओदनं भक्तमास्वाद्यं सिद्धान्नरूपम्। अथ च—एवंभूतं परमुत्कृष्टममृतं यदीयमुदीयते स क्षीरोदन्वानपरः परोऽन्यो नास्ति, किंत्वेक एव। अथ च—प्रतिदिशं सर्वदेशेषु गिरि वाण्यां विषये पाषाणतुल्या जडा अन्ये कवयः स्वीयां वाणीमुद्गिरन्तु। आपातेन प्रतिभामात्रेण स्फुरन् ध्वन्याख्यकाव्यविशेषस्याडम्बरो यस्यां, प्रथमारम्भ एव स्फुरन् शब्दाडम्बरोऽनुप्रासो यत्र तां वा, वाणीमन्योन्यं जनः समीकरोतु यस्य कवेरुक्तिरस्येव, अस्य च तस्येव इत्येवं तुलयतु। 'आपातः' इति विसर्जनीयान्तपाठे—आपातः प्रतिभासस्तां तुल्ययत्वित्यर्थः। एवंविधं परं काव्यामृतं यदीयमुत्पद्यते स क्षीरसमुद्रतुल्यः श्रीहर्षकविरपरो(ऽन्यो) नास्ति, किं त्वेक एव। अन्ये कवयः पर्वतग्रावतुल्याः, अहं श्रीहर्षस्तु क्षारसमुद्रतुल्य इत्यर्थः। यथा क्षीरसागरो नीरार्थिनोऽपि तीरमात्रस्थान्क्षीरेण तर्पयति। लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, ( तथा ) मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनं वचनामृतमुत्पद्यते,

नान्यकाव्यविचारकस्येति, अन्ये ग्रावतुल्याः, क्षीरोदतुल्यश्चाहमिति भावः ॥ २ ॥

पर्वत-पाषाण प्रत्येक दिशाओंमें अपनी ( अपनेसे निकली हुई ) नदीको बहावें, और उसका सर्वतोभावसे गिरना प्रकाश्यमान शब्दाडम्बरवाली उस नदीकी परस्परमें ( एक नदीको दूसरी नदीके साथ ) समानता करे ( पाठा०—लोक आपात ( ऊपरसे नीचेकी ओर सर्वथा गिरने ) से प्रकाशमान······ ) । किन्तु वह श्रेष्ठ क्षीरसमुद्र दूसरा ही है ( अथवा—वह क्षीरसमुद्र ही परमश्रेष्ठ है ), जिसका अमृत मथन करनेवालों ( देवों ) का श्रमनाशक तथा अतिशय आनन्ददायक ( अथवा—हर्षकारक ओदनभात अर्थात् भक्ष्य पदार्थ ) कहा जाता है । ( पक्षा०—पर्वतपाषाणतुल्य अन्य कविलोग अपनी वाणी ( काव्य ) को प्रत्येक दिशाओंमें अर्थात् सर्वत्र प्रकाशित करें, सामान्य विचारसे प्रकाशमान शब्दाडम्बरवाली उस वाणी ( काव्य ) की परस्परमें ( एक दूसरेके रचे गये काव्य ) में तुलना ( 'इसकी अपेक्षा यह उत्तम है और यह हीन है' ऐसा विचार ) करें ( अथवा—दूसरा व्यक्ति थोड़ा विचार करनेसे प्रकाशमान······ ) । किन्तु क्षीरसमुद्रके समान अतिशय श्रेष्ठ वह ( सुप्रसिद्ध 'श्रीहर्ष' नामक महाकवि मैं ) है, जिसको अमृततुल्य महाकाव्य पढ़नेवालोंके परिश्रमका नाशक तथा परमानन्ददायक कहा जाता है ) । [ अन्य कविलोगोंकी उक्ति पर्वतीय नदीके समान केवल शब्दाडम्बर करनेवाली, गाम्भीर्यहीन अचिरस्थायिनी तथा तीरस्थ लोगोंको जलमात्र देनेवाली है और मेरी ( 'श्रीहर्ष' महाकविकी ) उक्ति क्षीरसमुद्रके समान शब्दाडम्बर रहित, गाम्भीर्ययुक्त, चिरस्थायिनी तथा तीरस्थ लोगोंको भी दूधकी धारासे सन्तुष्ट करनेवाली तथा लक्ष्मी, कौस्तुभ आदि रूप सुभाषितरत्नोंको देनेवाली है । इस प्रकार अन्य कवि पर्वतपाषाणतुल्य तथा मैं क्षीरसमुद्र हूं, अतः मेरे इस महाकाव्यका ही पठन-पाठन-श्रवण, मनन निदिध्यासन तथा आचरण करना चाहिये ] ॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति, तच्छङ्कामपनुदन् खलदर्पदलनार्थं गुरुसंप्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह—

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ ३ ॥

ग्रन्थेति । आत्मानं प्राज्ञं मन्यन्तं प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन्काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदंकाव्यस्य पाठकः खलो मा खेलतु 'किमत्रास्ति अश्रुतमेव व्याकर्तुं शक्यते' इत्यवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीदित्येवमर्थमिह काव्ये क्वचित्क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद्बुद्धिपूर्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिका न्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्वमेवेदं काव्यं मया दुर्बोधं

व्यरचि, नतु प्रसन्नकाव्यकरणाशक्त्येत्यर्थः । 'क्वचित्क्वचिदपि' इत्यनेन तत्र तत्र प्रसन्नताप्यस्तीति न काव्यत्वहानिरिति सूच्यते । सज्जनस्य तु ग्रन्थविवेचनोपायमाह—श्रद्धेति । श्रद्धया गुरौ दैवतैकबुद्धया आराद्धेन पूजितेन गुरुणा पूर्वमश्लथा अपि श्लथाः कृता व्याख्यया सुबोधाः कृता दृढाः स्वरूपतो दुर्बोधा ग्रन्थयो यस्मै स गुरुसंप्रदायावगतार्थः, अत एव दर्पराहित्यात्सज्जनः साधुरेतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनमवस्थानं समासादयतु प्राप्नोतु । गुरुपरम्परया विनैकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते, तस्माद्गुरुपरम्पराया एवाध्येयमिदं काव्यमित्यर्थः । 'यश्चेदं गुरुपरम्पराया अधीते स सततं सुखी भवतु' इति महाकविस्तस्मा आशिषं ददाति । अस्मिन्पठिती, 'क्तस्येन्विषयस्य–' इति कर्मणि सप्तमी । आराद्धेति राधेरनुदात्तत्वादिडभावः ॥ ३ ॥

'अपनेको विद्वान् माननेवाला ( किन्तु वास्तविकमें अविद्वान् ) तथा हठसे ( केवल अपनी बुद्धिसे गुरुपरम्परासे नहीं ) इस ( महाकाव्य ) को पढ़नेवाला खल ( वास्तविक भाव नहीं समझनेसे दूसरेकी उक्तिको दोषयुक्त बतलानेवाला असज्जन ) क्रीडा ( 'इस काव्यमें क्या रखा है ?' इत्यादि अपमानपूर्वक अपने दर्पको प्रकट ) मत करे ।' इसी उद्देश्यसे मैंने इस ग्रन्थमें कहीं-कहीं प्रयत्नसे ( जान-बूझकर, अज्ञानपूर्वक नहीं ) ग्रन्थकी गांठों ( दुरुह विषयों ) को रख दिया है, ( जिससे स्वबुद्धिसे ही इस ग्रन्थका वास्तविक तत्त्व जाननेका इच्छुक असज्जन इसे नहीं समझ सके, और ) श्रद्धाले साथ सेवित गुरुके द्वारा शिथिल की गयी है दृढ ग्रन्थि जिसके लिए ऐसा सज्जन इस महाकाव्यकी रस-लहरीमें गोता लगाकर आनन्दको प्राप्त करे अर्थात् श्रद्धापूर्वक देवबुद्धिसे गुरुकी पूजा-भक्ति करनेसे उसके द्वारा की गयी व्याख्या आदिसे ग्रन्थके दुरूह विषयको सज्जन सम्यक् प्रकारसे समझे । [ ऐसा कहकर 'श्रीहर्ष कविका यह महाकाव्य प्रसाद गुणसे रहित होनेके 'काव्य है ही नहीं' ऐसा आक्षेप करनेवालोंका श्रीहर्ष महाकविने उचित समाधान कर दिया है तथा यह भी स्पष्ट कह दिया है कि गुरुपरम्परासे ही इस महाकाव्यके दुरूह स्थलोंका यथार्थ ज्ञान हो सकता है, अन्यथा नहीं; अत एव सज्जनोंको श्रद्धापूर्वक गुरुकी सेवा करके ही इस ग्रन्थका गभीराशय जानना चाहिये ] ॥ ३ ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते—

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरा-
द्यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥ ४ ॥

ताम्बूलेति । यः कान्यकुब्जेश्वरात्सकाशात्सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनं च लभते । न केवलं राजपूज्य एव, किंतु यः समाधिषु

अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते । न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव, किंतु यदीयं काव्यं मधुवर्षि अतिसरसत्वादमृतवर्षि । न परं पूर्वविशेषणविशिष्टोऽतिसरसो महाकविरेव, किंतु तर्कशास्त्रेष्वपि यस्योक्तयो धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः । तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः कृतीनां सुधियां मुदे आनन्दायाभ्युदीयात, कृतिनामानन्दं कुर्वती सत्याकल्पमतिवृद्धिं प्राप्नुयादित्याशीः । सर्वत्र 'यत्' शब्दनिर्वाहो गुण एव । अभ्युदीयादिति, 'ई गतौ' इत्यस्य रूपम् ॥४॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
स्वस्मिन्नेव पथि प्रवर्तनपराः सत्कीर्तयश्चापरे ।
अन्ये निस्पृहणाः श्रितश्रुतिपथा दीव्यन्तु भव्याशया
काकन्तः कलहप्रियाः खलजना जायन्तु जीवन्तु वा ॥
वासनामस्य रामस्य किंकरस्य जगत्पतेः ।
नो चेत्पूरय कल्पेशंकल्पस्य तव किंकरः ॥

इति श्रीवेदरूरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते
नैषधीयप्रकाशे द्वाविंशः सर्गः समाप्तः ॥

समाप्तश्चेदं नारायणीटीकया परिपूरितं द्वाविंशत्सर्गसमन्वितं
मल्लिनाथीटीकोपेतं नैषधमहाकाव्यम् ।



जो ( 'श्री हर्ष' नामक महाकवि ) कान्यकुब्ज-नरेश ( कन्नौजके राजा ) से ( समस्त विद्वानोंसे श्रेष्ठतासूचक दो बीड़ा पान तथा आसनको पाते ) हैं, ( केवल राजमान्य ही नहीं, अपितु ) जो समाधियों ( अष्टाङ्गयोगों ) में परमानन्दसागर ब्रह्मका साक्षात्कार करते हैं, जिनका महाकाव्य ( अतिशय सरस होनेसे ) अमृत बरसानेवाला है और तर्कविषयक जिसकी उक्तियां प्रतिवादियोंको पराजित करनेवाली हैं; उस श्रीसे उपलक्षित 'श्रीहर्ष कवि' की यह रचना ( 'नैषधचरित' नामक महाकाव्य ) विद्वानोंके हर्षके लिए होवे ॥ ४ ॥

द्विसहस्राधिके वर्षे दिङ्मिते मार्गशीर्षके ।
अमायां भास्करे वारे परिपूर्णा 'मणिप्रभा' ॥ १ ॥

यह 'मणिप्रभा' टीकामें नैषधचरितका बाइसवां सर्ग समाप्त हुआ ॥ २२ ॥

व्याकरण-साहित्याचार्य, साहित्यरत्न, रिसर्चस्कालर, मिश्रोपाह्व श्री पं० हरगोविन्द शास्त्रिरचित 'मणिप्रभा' नामक राष्ट्रभाषानुवाद समाप्त हुआ ।

# श्लोकानामकाराद्यनुक्रमणिका

आ

इति श्लोकानामकाराद्यनुक्रमणिका सम्पूर्णा।

## अथ क्षेपकश्लोकानामकाराद्यनुक्रमणिका ।



इति क्षेपकश्लोकानामकाराद्यनुक्रमणिका समाप्ता ।


प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-सीरिज

पो० बा० नं० ८, बनारस—१